बौद्धभारतीग्रन्थमाला-५, ६,७, ९

Bauddha Bharati Series-5, 6,7, 9

# अभिधर्मकोशम्

( सम्पूर्णम् )

सम्पादकः

स्वामी द्वारिकादासशास्त्री

*Bauddha Bharati Series-5,6,7,9*

# ABHIDHARMAKOSA

&

# BHĀṢYA

OF

ĀCARYA VASUBANDHU

WITH

# SPHUṬĀRTHĀ COMMENTARY

OF

ĀCĀRYA YAŚOMITTRA

*Critically edited by*

SWĀMĪ DWĀRIKĀDĀS ŚASTRI

*Ācārya (Vyākaraṇa Pāli & Bauddha Darśana)*

BAUDDHA BHARATI

P. B. 49, VARANASI-I (INDIA)

1987

बौद्धभारतीग्रन्थमालाप्रकाशनम्-५, ६,७, ९

आचार्ययशोमित्रकृत-

स्फुटार्थव्याख्योपेतम्

## आचार्यवसुबन्धुविरचितम्

स्वोपज्ञभाष्यसहितम्

# अभिधर्मकोशम्

सम्पादकः

स्वामी द्वारिकादासशास्त्री

व्याकरणपालि-साहित्यबौद्धदर्शनाचार्यः




१९८७ ख्रिष्टाब्दः ] वाराणसी [ २५३० बुद्धाब्दः

प्रकाशक:
मन्त्री
© बौद्धभारती
पो० बॉ० १०४९
वाराणसी-१ (उ० प्र०)

*Published by*
The Secretary
© Baudddha Bharati
Post-Box No. 1049
Varanasi-1 (U.P.)

तृतीय संस्करण
१९८७

Third Edition :
1987

मूल्यम् : १५० ) रू०
( पञ्चाशदधिकैकशतरूप्यकाणि )

Price : Rs. 150/-
(One Hundred fifty)

मुद्रक,
ओरियन्ट आफसैट
199/5, चौधरी ब्रह्मसिंह
मौज पुर, दिल्ली-11005

*Printed at :*
ORIENT OFFSET
Mauzpur Delhi-53.

# प्रकाशकीयम्

**ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।**
**तेषां च यो निरोध एवंवादी महाश्रमणः ।।**

मान्या विद्वत्तल्लजाः !

इदं खलु विमृशतामस्माकं मानसं भृशमुल्लासमासादयति यदस्माभिः बौद्धभारतीस्थापनातष्षष्ठे वर्षे (१९७४तमे खिष्टाब्दे) इदं महत्त्वशालि, अभिधर्मशास्त्रस्य मुकुटालङ्कारभूतम् आचार्यवसुबन्धुविरचितं सभाष्यम् यशोमित्रकृतस्फुटार्थव्याख्यासहितं सम्पूर्णम् अभिधर्मकोशाख्यं ग्रन्थरत्नं श्रीमतां करकमलेषु सादरं समुपाहृतम् । तत्संस्करणमापणे निःशेषतां गतमिति कृत्वा इदानीमस्येदं द्वितीयं संस्करणं ग्राहकाणामाग्रहवशाच्चित्रप्रतिकृतिमुद्रणेन पुनर्मुद्राप्यते ।

अत्रास्माभिः पाटलिपुत्रीयकाशीप्रसादजायसवालशोधसंस्थानतः प्रकाशमापन्नं भाष्यम् ('का०' संकेतेन), तथा कलिकातानगरतः प्रकाशितं श्रीलाहासम्पादितं चतुर्थकोशस्थानपर्यन्तं स्फुटार्थव्याख्यापुस्तकं ('स्फु०' मुद्रितपा०संकेतेन) आदर्शपुस्तकत्वेन स्वीकृतम । ततश्च जापानदेशीयटोकियोनगरतः 'अभिधर्मकोशव्याख्याप्रकाशनसमित्या' प्रकाशितं श्रीवोगिहारामहोदयसम्पादितं स्फुटार्थव्याख्यापुस्तकं च (जा० संकेतेन) आदर्शत्वेन स्वीकृतम् । आचार्यवसुबन्धुविरचितः पुद्गलविनिश्चयोऽपि अत्राष्टमकोशस्थानस्य क्रोडे स्थापितः ।

इत्येवं भारतवर्षे सपादैकसहस्रवर्षानन्तरं विगतदशके पुनः प्रकाशमाप्तस्यास्य साङ्गोपाङ्गस्य समग्रस्याभिधर्मकोशस्य तृतीयसंस्करणरूपेणादितोऽष्टमकोशपर्यन्तं सम्पूर्णो ग्रन्थो विदुषां मनस्तोषमावक्ष्यतीत्याशास्ते ।

दि० १५-३-८५ — मन्त्री

वाराणसी — बौद्धभारतीपरिषदः

# FOREWORD

It is a matter of great satisfaction that interest in higher study and research in Buddhist learning has been increasing in the country since our independence. Many institutions, devoted to Buddhist Studies have come into existence in different parts of the country and are engaged in doing useful work in this direction. Pāli and Buddhist Studies have become the subjects of interest at the under-graduate and post-graduate levels in many Universities. Efforts are also being made to bring the original materials to light and make them accessible to the Scholars and interested people in general.

The Nava Nālandā Mahāvihāra, Nālandā has done commendable work in bringing out the critical edition of the Pali Tipitaka into Devanāgari script for the first time after the *Mahāparinibbāna* of the Buddha. Many Sanskrit texts of the *Mahāyāna* tradition were critically edited and published by the Sanskrit Institute, Darbhangā. The K.P. Jayaswāl Institute, Patna brought out the critical edition of the *Vasubandhu's Abhidharmakośa* with its auto-commentary. The book was immensely liked by the Scholars and it soon became out of stock

Swāmī Dwārikā Dās Śāstri, an erudite scholar of ancient Indian lore, took the task of bringing out the Buddhist texts by establishing an institution named *Bauddha Bhāratī* at *Vārānasi*. He prepared the critical edition of many Buddhist texts both in Sanskrit and Pali and published them through this institution. In series of the publication of the Bauddha Bharati, he critically edited and published the *Abhidharmakośa*, the magnum opus of the Sarvāstivādin tradition with its commentary by Acarya Vasubandhu and sub-commentary by Acarya Yaśo-

mittra; It was the first attempt to bring the three texts in sizeable volumes with easy access to the hands of Scholars and Students. It was found very useful to the Scholars and in no time, it became out of stock.

Swāmi Dwārikā Das Śastrī, with his untiring zeal and strong devotion again took the task of bringing out its Second edition. It is his most commendable work in the field of Scholarship, specially in preservation of Buddhist tradition and helping the foster growth of research activities in the subject. I am proud of his achievement and wish him every success in his such scholarly persuits.

Delhi University
Delhi
12.3.87

Mahesh Tiwary
Prof. and Head of the
Department of Buddhist Studies

# विषय-क्रमः

स्फुटार्थासहितस्यास्य वासुबन्धवकर्मणः ।
आद्यकोशचतुष्कस्य वस्तुजातमिदं खलु ॥

## प्रथमं कोशस्थानम्

### १. धातुनिर्देशः

## द्वितीयं कोशस्थानम्

### २. इन्द्रियनिर्देशः

## तृतीयं कोशस्थानम्

### (लोकनिर्देशः)

## चतुर्थकोशस्थानम्

(कर्मनिर्देशः)



( इतोऽग्रे १६ पृष्ठे द्रष्टव्यम् )

## द्वितीयभागस्य

# विषयक्रमः

स्फुटार्थासहितस्यास्य वासुबन्धवकर्मणः ।
अन्त्यकोशचतुष्कस्य ज्ञेयोऽयं विषयक्रमः ॥

## षष्ठं कोशस्थानम्
### (मार्गपुद्गलनिर्देशः)

**सप्तम कोशस्थानम्**

**(ज्ञाननिर्देशः)**



**अष्टमं कोशस्थानम्**

**(समापत्तिनिर्देशः)**

* ॐ नमो बुद्धाय *

# अभिधर्मकोशम्

## [ भाष्यसहितम् ]

## प्रथमं कोशस्थानम्

### ( धातुनिर्देशः )

शास्त्रं प्रणेतुकामः स्वस्य शास्तुर्माहात्म्यज्ञापनार्थं गुणाख्यानपूर्वकं तस्मै नमस्कारमारभते—

---

* नमो मा बलप्रमथनाय[1] *

## स्फुटार्था व्याख्या

महाबलो ज्ञानसमाधिदन्तो यः पञ्जरं जन्ममयं विदार्य।
विवेश निर्वृत्यटवीं प्रशान्तां तं शास्तृनागं शिरसा नमामि ॥
परमार्थशास्त्रकृत्या कुर्वाणं शास्तृकृत्यमिव लोके।
यं बुद्धिमतामग्र्यं द्वितीयमिव बुद्धमित्याहुः ॥
तेन वसुबन्धुनाम्ना भविष्य-परमार्थबन्धुना जगतः।
अभिधर्मप्रत्यासः कृतोऽयमभिधर्मकोशाख्यः ॥
अभिधर्मभाष्यसागरसमुद्धृतस्यास्य शास्त्ररत्नस्य।
व्याख्या मया कृतेयं यथार्थनामा स्फुटार्थेति ॥
*गुणमति-वसुमित्राद्यै*र्व्याख्याकारैः पदार्थविवृतिर्या।
सुकृता साभिमता मे लिखिता च तथायमर्थ इति ॥
सिद्धान्तार्थापसृता क्वचित् क्वचिद् या तु तैः कृता व्याख्या।
तामुद्भाव्य यथावद् विहितेह मयान्यथा व्याख्या ॥
*अभिधर्मविभाषायां* कृतश्रमा ये*ऽभिधर्मकोशे* च।
प्रविचार्यतामियं तैर्व्याख्या युक्ता न वा युक्ता ॥

---

1. नमो रत्नत्रयाय—पाठा०।

**यः सर्वथा सर्वहतान्धकारः**
**संसारपङ्काज् जगदुज्जहार ।**
**तस्मै नमस्कृत्य यथार्थशास्त्रे**
**शास्त्रं प्रवक्ष्याम्यभिधर्मकोशम् ॥ १ ॥**

---

युक्ता चेद् ग्राह्येयम्, न चेदपोह्यान्यथा विधातव्या ।
न हि विषमेऽर्थे स्खलितुं न सम्भवेन्मादृशां बुद्धिः ॥

*"यः सर्वथासर्वहतान्धकारः संसारपङ्काज्जगदुज्जहार ।*
*तस्मै नमस्कृत्य यथार्थशास्त्रे शास्त्रं प्रवक्ष्याम्यभिधर्मकोशम् ॥"*

इत्यस्य श्लोकस्यार्थं विवृण्वान आचार्य आह—*शास्त्रं प्रणेतुकामः स्वस्य शास्तुर्माहात्म्यज्ञापनार्थं गुणाख्यानपूर्वकं तस्मै नमस्कारमारभत* इति । शास्त्रम् = अभिधर्मकोशम् । प्रणेतुकामः = कर्तुकामः । स्वस्य शास्तुः = आत्मीयस्य शास्तुः । स हि भगवानाचार्यस्यात्मीयः शास्ता; तच्छासनप्रतिपन्नत्वात् । तेन वा शास्त्रा महाकरुणापरतन्त्रेण सकलो लोकः स्वत्वेन परिगृहीतः, तस्मादाचार्यस्यापि स्वत्वेन गृहीतस्य स भगवान् स्वः शास्ता भवति । माहात्म्यज्ञापनार्थमिति । महात्मत्वं माहात्म्यम्=स्वपरार्थप्रतिपत्तिसम्पत्, तज्ज्ञापनार्थम् = तदवबोधार्थम् । गुणाख्यानपूर्वकम्=गुणकथनपूर्वकम् । तस्मै नमस्कारमारभते=तस्मै प्रणामं करोतीत्यर्थः ।

अतीतकालत्वाद् 'आरब्धवान्' इति वक्तव्ये वर्तमानकाले पदप्रयोगः; अद्यापि नमस्कारारम्भाभिप्रायात्, शिष्यपरम्परया वा नमस्कारारम्भाविरामात् । शब्दशास्त्रेऽपीदृश एव शब्दप्रयोगो दृश्यते—"अथ शब्दानुशासनम् । 'अथ' इत्ययं शब्दोऽधिकारार्थः प्रयुज्यते" ( पा० म० भा० १.१.१. ) इति ।

गुणाख्यानमात्रेण माहात्म्यावबोधः, न नमस्कारेणेति चेत्, न; तस्य तत्सूचकत्वात् । नमस्कारेण हि माहात्म्यं सूच्यते । अथ वा—गुणाख्यानेनैव माहात्म्यं ज्ञाप्यते, न नमस्कारेण; नमस्कारारम्भस्तु स्वपुण्यप्रसवार्थम्, सदाचारानुवृत्तिप्रदर्शनार्थं वा; 'कृताभिमतदेवतापूजास्तुतिनमस्कारा हि सन्तः क्रियामारभन्ते' इति सतामाचारात् । तत्र माहात्म्यज्ञापनं किमर्थमिति ? आचक्ष्महे—तद्गौरवोत्पादनार्थम् । गौरवोत्पादनं पुनस्तत्प्रवचनसत्कृत्यश्रवणार्थम् । सत्कृत्यश्रवणं क्रमेण श्रुत-चिन्ता-भावनामयप्रज्ञोत्पादनार्थम् । तदुत्पादनं क्लेशप्रहाणार्थम् । तत् पुनः सर्वदुःखोपशमलक्षणनिर्वाणप्रापणार्थमिति प्रयोजननिष्ठा ।

माहात्म्यज्ञापनं त्वेकमाचार्येण प्रयोजनमुक्तम: साक्षात् प्रयोजनत्वात् । तदितराणि त्वभ्यूहितुं शक्यानीति नोक्तानि ।

**य इति बुद्धं भगवन्तमधिकृत्याह । हतमस्यान्धकारमनेन वेति हतान्धकारः, सर्वेण प्रकारेण सर्वस्मिन् हतान्धकारः सर्वथासर्वहतान्धकारः । अज्ञानं हि**

---

*य इति बुद्धं भगवन्तमधिकृत्याह* इति । सामान्यशब्दोऽपि यच्छब्दो विहित-विशेषणत्वाद् विशेषवृत्तिर्भवति, तद्यथा—य एषां ब्राह्मणानां गौरः शुक्लवासाः स देवशर्मेति, तद्वदिहापि *"य. सर्वथासर्वहतान्धकारः संसारपङ्काज्जगदुज्जहार, तस्मै नमस्कृत्य"* इति बुद्ध एव भगवति यच्छब्दो वर्तते । न हि बुद्धादन्य एवं-गुणविशिष्टः सम्भवतीत्यतो व्याचष्टे—'य इति बुद्धं भगवन्तमधिकृत्याह' इति ।

बुद्ध इति कर्तरि क्तविधानम् । बुद्धेर्विकसनाद् बुद्धः, विबुद्ध इत्यर्थः । विबुद्धं पद्ममिति यथा । अथ वा–अविद्या-निद्राद्वयापगमाद् बुद्धः, प्रबुद्ध इत्यर्थः । प्रबुद्धपुरुष इति यथा ।

कर्मकर्तरि क्तविधानमित्यपरे । स्वयं बुध्यत इति बुद्ध इत्यर्थः ।

कर्मण्यपि क्तविधानमप्यदोषं पश्यामः । सर्वगुणसम्पत्सम्पन्नतया सर्वदोष-विनिर्मुक्ततया च बुद्धैरन्यैर्वा बुद्धो ज्ञात इत्यर्थः ।

'भगवन्तम्' इति द्वितीयपदोपादानमनादरसम्भावनानिवृत्त्यर्थम् । निरुप-पदानामभिधानानां हि लोकेऽनादरो दृश्यते—देवदत्तः, दत्त इति । *विनय-विभाषाकारास्तु* चतुष्कोटिकं कुर्वन्ति—१. अस्ति बुद्धो न भगवान्; प्रत्येक-बुद्ध. स्वयम्भूत्वाद् बुद्ध इति शक्यते वक्तुम्, न तु भगवान्, अपरिपूर्णदानादि-सम्भारत्वात्; यो हि माहात्म्यवान् स भगवानुच्यते। २. अस्ति भगवान्न बुद्धश्चरमभविको बोधिसत्त्वः; परिपूर्णदानादिपारमितत्वाद्, अनभिसम्बुद्धत्वाच्च, ३. अस्त्युभयथा बुद्धो भगवान्; ४. अस्ति नोभयथा—एतानाकारान् स्थाप-यित्वेति । अतो बुद्धं भगवन्तमित्युभयविशेषणम् ।

*हतमस्यान्धकारमनेन वेति हतान्धकारः* । षष्ठीबहुव्रीहौ मार्गेण हतमिति कर्तृभूतो मार्गोऽध्याहार्यः । तृतीयाबहुव्रीहौ तु मार्गेणेति करणमध्याहार्यम् ।

अपर आह—विग्रहद्वयप्रदर्शनम् "हन हिंसागत्योः" ( द्र०–मा० धा० २.२ ) इति हन्त्यर्थद्वयपरिग्रहार्थम् । यदा हतमस्यान्धकारमिति विग्रहस्तदा गत्यर्थो हन्तिर्गृह्यते, गतमस्यान्धकारमित्यर्थः । यदा पुनस्तृतीयाबहुव्रीहिस्तदा हिंसार्थो हन्तिर्गृह्यते, हिंसितमनेनान्धकारमित्यर्थः । एवमुत्तरयोः पदयोरैक-पद्यं कृत्वा पश्चात् सप्तमीतत्पुरुषं करोति—सर्वस्मिन् हतान्धकारः सर्वहतान्ध-कार इति । तथा च सति हतशब्दोऽत्र न पूर्वं निपतति ।

सप्तमीसमासस्त्विह केन लक्षणेन भवतीति चिन्त्यम् । "सप्तमी शौण्डैः" ( पा० सू० २.१.४० ) इति समासः । हतान्धकारशब्दः शौण्डादिषु पठ्यते ।

भूतार्थदर्शनप्रतिबन्धादन्धकारम्, तच्च भगवतो बुद्धस्य प्रतिपक्षलाभेनात्यन्तं सर्वथा सर्वत्र ज्ञेये पुनरनुत्पत्तिधर्मत्वाद्धतम्; अतोऽसौ सर्वथासर्वहतान्धकारः। प्रत्येकबुद्धश्रावका अपि कामं सर्वत्र हतान्धकाराः, क्लिष्टसम्मोहात्यन्तविगमात्, न

---

शौण्डादीनामाकृतीकृतत्वात् तत्रास्यानुप्रवेशोऽवगन्तव्यः। "सप्तमी" इति योगविभागाद् वा। उत्सर्गेण वा समासः। "सह सुपा" (पा० सू० २.१.४) इति सुबिति वर्तमाने सुबन्तं सुबन्तेन सह समस्यते यत्रेष्टमिति। "अकृतलक्षणो वा तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः" (पा० सू० २.१.७२) इत्यनेन वा। कथमुपसर्जनीभूतमन्धकारं सर्वस्मिन्नित्यनेनाभिसम्बध्यते? सत्यम्; नान्धकारमनेनाभिसम्बध्यते, अन्धकारघातस्त्वनेनाभिसम्बध्यते। येन ह्यन्धकारघातेन योगाद् भगवान् हतान्धकारः, स तस्यान्धकारघातः सर्वाधारोऽवगन्तव्यः, यथा—अक्षेषु धूर्त इति, येन धौर्त्यलक्षणेन गुणेन योगादसौ धूर्तः सोऽक्षाधारः; एवमिहाप्यवगन्तव्यम्।

अन्यथापि चेह सम्भवन्तं समासं पश्यामः। सर्वस्मिन् हतं सर्वहतम्, सर्वेण प्रकारेण सर्वहतं सर्वथासर्वहतम्, सर्वथासर्वहतम[illegible] अनेन वेति *सर्वथासर्वहतान्धकारः*। एवं हतशब्दस्यान्धकारेण सामानाधिकरण्यम्, न च पूर्वनिपात इति। *सर्वेण प्रकारेणेति*। क्लिष्टाक्लिष्टान्धकारविगमतः। *सर्वस्मिन् ज्ञेये* द्वादशायतनलक्षणे। "सर्वं सर्वमिति ब्राह्मण यावदेव द्वादशायतनानि" (      ) इति *सूत्रे* वचनात्।

किमत्र शार्वरं तमोऽन्धकारशब्देनोच्यते? नेत्याह—*अज्ञानं हि भूतार्थदर्शनप्रतिबन्धादन्धकारम्* इत्यवगन्तव्यम्। अन्धकारशब्दो हि नैशे तमसि प्रसिद्धः। अन्धमिव जनं करोतीत्यन्धकारः; सद्[illegible]प्रति-बन्धात् तत्साधर्म्यादज्ञानमप्यन्धकाराख्यां लभते; भूतार्थदुःखादिसत्यदर्शनप्रतिबन्धात्। *तच्च* इति तदज्ञानम्। *प्रतिपक्षलाभेनेत्यार्यमार्गलाभेन*। विपक्षः= क्लेशः, विपक्षप्रतिघाताय पक्षः प्रतिपक्ष इति कृत्वा। अथ वा—ज्ञानमनास्रवमज्ञानप्रतिपक्षः, तस्य लाभेन। *अत्यन्तं* सर्वथा। *सर्वत्र ज्ञेये पुनरनुत्पत्तिधर्मत्वाद्धतम्*, असमुदाचारप्रहाणीकृतमित्यर्थः। *अतोऽसौ* इति, भगवान्। *प्रत्येकबुद्धश्रावका अपि*। अभ्यर्हितत्वात् प्रत्येकबुद्धशब्दस्य पूर्वनिपातः। *कामम्* इत्यनुज्ञायाम्। *न तु सर्वथा* इति अक्लिष्टसम्मोहानत्यन्तविगमात्।

ननु च सर्वं सास्रववस्तु श्रावकप्रत्येकबुद्ध[illegible] बुद्धवत् प्रहीणम्, किमिदमुच्यते— *तेषामत्यन्तविगम* इति, तथा ह्युक्तम्—"नाहमेकधर्ममप्यनभिज्ञायापरिज्ञाय दुःखस्यान्तक्रियां वदामि" (      ) इति तथा

तु सर्वथा; तथा हि एषां बुद्धधर्मेष्वतिविप्रकृष्टदेशकालेषु चार्थेषु[1] अनन्तप्रभेदेषु च[1] भवत्येवाक्लिष्टमज्ञानम् ।

---

"नाहमेकधर्ममप्यपरिज्ञायाप्रहाय दुःखस्यान्तक्रियां वदामि" ( इति, तस्माच्छ्रावकप्रत्येकबुद्धानामपि तदक्लिष्टमज्ञानं चक्षुरादिवच्छन्दराग-प्रहाणात् प्रहीणमेव, अन्यथा हि श्रावकप्रत्येकबुद्धानां दुःखान्तक्रिया न भवेत् ? सत्यम्; अस्त्येतदेवम्, प्रहीणमेव तेषां क्लिष्टवदक्लिष्टमप्यज्ञानम् । तत्तु तेषां चक्षुरादिवत् प्रहीणमपि समुदाचरति । बुद्धस्य तु प्रहीणं सन्न समुदाचरति । अत एव च विशेषितम्—'पुनरनुत्पत्तिधर्मत्वाद्धतम्' इति । अन्यथा 'तत् सर्वथा सर्वत्र ज्ञेये प्रहीणम्' इत्येवावक्ष्यत् ।

ये तु व्याचक्षते—'श्रावकप्रत्येकबुद्धानां क्लिष्टसम्मोहमात्रविगमात् संक्लेश-विनिवृत्तिः' इति, तदपव्याख्यानमेषां यथोक्तमिति प्रत्याचक्ष्यते ।

*तथा ह्येषामिति*[2] विस्तरः—तथा हीति, यस्मादित्यर्थः । अथ वा—तथेति यथा न सर्वथा तथेति । हिशब्दो हेतौ । एषामिति श्रावकप्रत्येकबुद्धानाम् । बुद्धधर्मेषु आवेणिकादिषु । *अतिविप्रकृष्टदेशकालेषु चार्थेषु* । अतिविप्रकृष्टदेशेषु, अतिविप्रकृष्टकालेषु च । *अनन्तप्रभेदेषु च* अबुद्धधर्मस्वभावेष्वपि रूपादिष्वर्थेषु । *भवत्येवाक्लिष्टमज्ञानम्* । समुदाचरत्येव तदित्यर्थः । तत्र ये बुद्धधर्मा आवेणि-कादयस्तेषु स्वभावपरमसूक्ष्मगम्भीरत्वाद् बुद्धादन्येषामज्ञानम् । यथोक्तम्— "जानीषे त्वं शारिपुत्र, तथागतस्य शीलस्कन्धं समाधिस्कन्धं प्रज्ञास्कन्धं विमुक्ति-ज्ञानदर्शनस्कन्धम् ?" इति भगवता पृष्टेन स्थविर*शारद्वतीपुत्रे*णोक्तम्—"नो हीदं भगवन्" ( •) इति । ये त्वन्येऽर्था रूपिणः परमाणुसञ्चितास्तेऽतिविप्र-कृष्टदेशा यदि भवन्ति, येऽप्यविज्ञप्त्यरूपिणस्तेऽपि यद्यतिविप्रकृष्टदेशाधारत्वादति-विप्रकृष्टदेशा भवन्ति, तेष्वपि तेषामज्ञानम्; अनेकलोकधात्वन्तरितदेशत्वात् । श्रूयते हि स्थविर*मौद्गल्यायन*स्यातिविप्रकृष्टदेशमरीचिलोकधातुजातस्वमातृदेशा-परिज्ञानम् । अतिविप्रकृष्टकालेष्वप्यतीतेष्वनागतेषु वा तेष्वर्थेष्वतिबहुकल्पान्त-रान्तरितविनाशप्रादुर्भावत्वात् तेषां भवत्येवाज्ञानम् । श्रूयते हि स्थविर*शारिपुत्रे*ण मोक्षभागीयकुशलमूलादर्शनात् प्रव्रज्यापेक्ष्यपुरुषप्रत्याख्यानम् । भगवता तु तस्य मोक्षभागीयं दृष्टम् । उक्तं च—

"मोक्षबीजमहं ह्यस्य सुसूक्ष्ममुपलक्षये ।
धातुपाषाणविवरे निलीनमिव काञ्चनम्" ॥ ( ) इति ।

---

१–१. अर्थेषु चानन्तप्रभेदेषु—का० ।

२. इतिशब्दोऽत्र 'इत्यस्य प्रकरणस्य' इत्यर्थे ज्ञेयः । एवमुपर्यपि एतादृक्षु स्थलेषु ।

इत्यात्महितप्रतिपत्तिसम्पदा संस्तुत्य पुनस्तमेव भगवन्तं परहितप्रतिपत्तिसम्पदा संस्तौति—**संसारपङ्काज्जगदुज्जहारेति**। संसारो हि जगदासङ्गस्थानत्वाद् दुरुत्तरत्वाच्च पङ्कभूतः, तत्रावमग्नं जगदत्राणमनुकम्पमानो भगवान् सद्धर्मदेशनाहस्तप्रदानैर्यथाभव्यमभ्युद्धृतवान् इति य एवमात्मपरहितप्रतिपत्तिसम्पदा

---

स च पुरुषः प्रव्राजित इति। 'अनन्तप्रभेदेषु' इति, चातुर्गतियोन्युपपत्त्यादिप्रभेदेन दुर्बोधेष्वर्थेषु, तेषामज्ञानं भवत्येव। तथा ह्याह—

"सर्वाकारं कारणमेकस्य मयूरचन्द्रकस्यापि।
नासर्वज्ञैर्ज्ञेयं सर्वज्ञज्ञानबलं हि तज्ज्ञानम्" ॥ (          ) इति।

तान्येतानि चत्वार्यज्ञानकारणानि भवन्ति। तेषां क्वचिदेकम्, क्वचिद् द्वे, क्वचित् त्रीणि, क्वचिच्चत्वारीति सम्भवतो योज्यानि।

*इत्यात्महितप्रतिपत्तिसम्पद्* इति विस्तरः—आत्महिताय प्रतिपत्तिरात्मप्रतिपत्तिः, आत्महितप्रतिपत्तेः सम्पदात्महितप्रतिपत्तिसम्पत्, फलनिष्पत्तिरित्यर्थः। सा चेयं सम्पद् ज्ञानप्रहाणसम्पत्स्वभावा वेदितव्या। *परहितप्रतिपत्तिसम्पद्* अपि तथैव वचनीया।

अपरे व्याचक्षते—आत्महितप्रतिपत्तिः=आत्महितप्रतिपादनम्, आत्महितोपग्रह इत्यर्थः, तस्याः सम्पद् आत्महितप्रतिपत्तिसम्पत्। एवं परहितप्रतिपत्तिसम्पदपि व्याख्येया।

सा पुनः सर्वदुःखोपशमनिर्वाणपरिप्रापणस्वभावा; "*संसारपङ्काज्जगदुज्जहार*" इति वचनात्। संसरणं संसारः=आजवञ्जवीभावः, जन्ममरणपरम्परेत्यर्थः। अथ वा—संसरन्त्यस्मिन् सत्त्वा इति संसारः=त्रैधातुकम्। संसारः पङ्क इव संसारपङ्कः; पङ्कसाधर्म्यात्। अत आह—*संसारो हि जगदासङ्गस्थानत्वाद् दुरुत्तरत्वाच्च पङ्कभूत* इति। पङ्को हि लोकेऽवसादात्मकत्वादासङ्गस्य स्थानम्, अत एव च दुरुत्तरः। चञ्चलत्वाद् वा पराश्रयोत्तरणीयत्वाद् वा दुरुत्तरः। संसारोऽपि हि तृष्णाभिष्यन्दितत्वादासङ्गस्थानम्, दुरुत्तरश्च दृष्टिविचिकित्साविष्पन्दितेन। बुद्धापाश्रयोत्तरणीयत्वेन वा दुरुत्तरः। *तत्रावमग्नं* तादात्म्यानुप्रवेशतः, समुदायावयवरूपतो वा। *जगत्* सत्त्वलोकः। *अत्राणम्* अनाक्रन्दम्। *अनुकम्पमानः* करुणायमानो *भगवान्*। *सद्धर्मदेशनाहस्तप्रदानैः*। सद्धर्मदेशनैव हस्ताः, तेषां प्रदानानि, उत्तारणीयबहुत्वाद् बहुवचनम्, तैः। *यथाभव्यमभ्युद्धृतवान्*। यथाभव्यमित्यनुच्यमानमपि गम्यते; लोके तथा दृष्टत्वात्। तद्यथा—'ब्राह्मणानानीय भोजयामास' इत्युक्ते, ये तत्र भोजयितुं शक्या ग्रामे नगरे वा सन्निहितास्तानेव भोजयामासेति गम्यते; सर्वलोकब्राह्मणानां भोज-

**युक्तस्तस्मै नमस्कृत्येति** शिरसा प्रणिपत्य । **यथार्थम्**=अविपरीतं **शास्तीति**

यितुमशक्यत्वात् । एवमिहापि यो जनो भव्योऽभ्युद्धर्तुम्, तमेवाभ्युद्धृतवानिति । अतो यथाभव्यमिति व्याचष्टे ।

*"तस्मै नमस्कृत्य"* इति *शिरसा प्रणिपत्य* । क्रियास्पदीभूतत्वान्नमःशब्दस्य प्रणिपत्यार्थो नमस्कृत्यशब्दो भवति । प्रणिपातश्च लोके शिरसा प्रतीत इति 'शिरसा' इत्याह । वाङ्मनोनमस्कारोऽप्यत्रानुक्तसिद्धो गुणाख्यानपूर्वकत्वान्मनस्कर्मपूर्वकत्वाच्च कायकर्मणः ।

'तस्मै' इति किंलक्षणेयं चतुर्थी ? अत्र बहवो व्याख्यानकारा मुह्यन्ति ।

आचार्य*गुणमतिः*, *तच्छिष्यश्चाचार्यवसुमित्र* आहतुः—"नमःशब्दयोगे चतुर्थी—'नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च'" ( पा० सू० २.३.१६ ) इति, तदेतदयुक्तम्; स्वतन्त्रस्य नमःशब्दस्य योगे सा चतुर्थी भवति, अस्वतन्त्रश्चायं नमःशब्दः; क्रियास्पदीभूतत्वात् । अत एव चानेनैवाचार्येण *व्याख्यायुक्तौ* "नमस्कृत्य मुनिं मूर्ध्ना" इति कर्मलक्षणा द्वितीया प्रयुक्ता । तस्मान्न नमःशब्दयोगे चतुर्थीति ।

द्वितीयायाः स्थाने चतुर्थी प्रयुक्तेत्यपरे; तदिदमेषामिच्छामात्रम्, न हि लक्षणमस्यास्तीति ।

केन तर्हीयं चतुर्थी ? सम्प्रदानलक्षणेयं चतुर्थीति व्याचक्ष्महे । कथं सम्प्रदानसंज्ञा ? "कर्मणा यमभिप्रैति स सम्प्रदानम्" ( पा० सू० १.४.३२ ) इति *चूर्णि*कारेण कर्मशब्द उभयथा वर्ण्यते—पारिभाषिकं कर्म, लौकिकं चेति । तत्र यदा "कर्तुरीप्सिततमं कर्म" ( पा० सू० १.४.४९ ) इति पारिभाषिकं कर्माश्रीयते, तदा कर्तुरीप्सिततमेन यमभिप्रैति स सम्प्रदानसंज्ञो भवति—ब्राह्मणाय गां प्रयच्छतीत्येतत् सिद्धं भवति । यदा तु कर्म क्रियेति लौकिकं कर्माश्रीयते, तदा क्रियया यमभिप्रैति स सम्प्रदानसंज्ञो भवतीति, तदेतत् सिद्धं भवति—युद्धाय सन्नह्यति, पत्ये शेत इति । सन्नहनक्रियया युद्धमभिप्रैति कर्ता, शयनक्रियया पतिमिति युद्धादीनां सम्प्रदानसंज्ञा सिद्धा भवति । तथेहापि नमस्कारक्रियया शास्तारमभिप्रैत्याचार्यः, तस्माच्छास्तरि सम्प्रदानसंज्ञा । सम्प्रदानसंज्ञायां सत्यां "सम्प्रदाने चतुर्थी" (पा० सू० २.३.१३) इति चतुर्थी भवति । एवं च कृत्वा—

"पूर्वं प्रणम्य वदतां प्रवराय शास्त्रे" (　　　)

"प्रमाणभूताय जगद्धितैषिणे
प्रणम्य शास्त्रे सुगताय तायिने" ( प्र० समु० १.१. )

इत्यात्महितप्रतिपत्तिसम्पदा संस्तुत्य पुनस्तमेव भगवन्तं परहितप्रतिपत्तिसम्पदा संस्तौति—**संसारपङ्काज्जगदुज्जहारेति**। संसारो हि जगदासङ्गस्थानत्वाद् दुरुत्तरत्वाच्च पङ्कभूतः, तत्रावमग्नं जगदत्राणमनुकम्पमानो भगवान् सद्धर्मदेशनाहस्तप्रदानैर्यथाभव्यमभ्युद्धृतवान् इति य एवमात्मपरहितप्रतिपत्तिसम्पदा

---

स च पुरुषः प्रव्राजित इति। 'अनन्तप्रभेदेषु' इति, चातुर्गतियोन्युपपत्त्यादिप्रभेदेन दुर्बोधेष्वर्थेषु, तेषामज्ञानं भवत्येव। तथा ह्याह—

"सर्वाकारं कारणमेकस्य मयूरचन्द्रकस्यापि।
नासर्वज्ञैर्ज्ञेयं सर्वज्ञज्ञानबलं हि तज्ज्ञानम्"॥ (        ) इति।

तान्येतानि चत्वार्यज्ञानकारणानि भवन्ति। तेषां क्वचिदेकम्, क्वचिद् द्वे, क्वचित् त्रीणि, क्वचिच्चत्वारीति सम्भवतो योज्यानि।

*इत्यात्महितप्रतिपत्तिसम्पद्* इति विस्तरः—आत्महिताय प्रतिपत्तिरात्मप्रतिपत्तिः, आत्महितप्रतिपत्तेः सम्पदात्महितप्रतिपत्तिसम्पत्, फलनिष्पत्तिरित्यर्थः। सा चेयं सम्पद् ज्ञानप्रहाणसम्पत्स्वभावा वेदितव्या। *परहितप्रतिपत्तिसम्पद्* अपि तथैव वचनीया।

अपरे व्याचक्षते—आत्महितप्रतिपत्तिः=आत्महितप्रतिपादनम्, आत्महितोपग्रह इत्यर्थः, तस्याः सम्पद् आत्महितप्रतिपत्तिसम्पत्। एवं परहितप्रतिपत्तिसम्पदपि व्याख्येया।

सा पुनः सर्वदुःखोपशमनिर्वाणपरिप्रापणस्वभावा; *"संसारपङ्काज्जगदुज्जहार"* इति वचनात्। संसरणं संसारः = आजवञ्जवीभावः, जन्ममरणपरम्परेत्यर्थः। अथ वा—संसरन्त्यस्मिन् सत्त्वा इति संसारः=त्रैधातुकम्। संसारः पङ्क इव संसारपङ्कः; पङ्कसाधर्म्यात्। अत आह—*संसारो हि जगदासङ्गस्थानत्वाद् दुरुत्तरत्वाच्च पङ्कभूत* इति। पङ्को हि लोकेऽवसादात्मकत्वादासङ्गस्य स्थानम्, अत एव च दुरुत्तरः। चञ्चलत्वाद् वा पराश्रयोत्तरणीयत्वाद् वा दुरुत्तरः। संसारोऽपि हि तृष्णाभिष्यन्दितत्वादासङ्गस्थानम्, दुरुत्तरश्च दृष्टिविचिकित्साविष्पन्दितेन। बुद्धापाश्रयोत्तरणीयत्वेन वा दुरुत्तरः। *तत्रावमग्नं* तादात्म्यानुप्रवेशतः, समुदायावयवरूपतो वा। *जगत्* सत्त्वलोकः। *अत्राणम्* अनाक्रन्दम्। *अनुकम्पमानः* करुणायमानो *भगवान्*। *सद्धर्मदेशनाहस्तप्रदानैः*। सद्धर्मदेशनैव हस्ताः, तेषां प्रदानानि, उत्तारणीयबहुत्वाद् बहुवचनम्, तैः। *यथाभव्यमभ्युद्धृतवान्*। यथाभव्यमित्यनुच्यमानमपि गम्यते; लोके तथा दृष्टत्वात्। तद्यथा—'ब्राह्मणानानीय भोजयामास' इत्युक्ते, ये तत्र भोजयितुं शक्या ग्रामे नगरे वा सन्निहितास्तानेव भोजयामासेति गम्यते; सर्वलोकब्राह्मणानां भोज-

**युक्तस्तस्मै नमस्कृत्येति** शिरसा प्रणिपत्य । **यथार्थम्** = अविपरीतं **शास्तीति**

---

यितुमशक्यत्वात् । एवमिहापि यो जनो भव्योऽभ्युद्धर्तुम्, तमेवाभ्युद्धृतवानिति । अतो यथाभव्यमिति व्याचष्टे ।

*"तस्मै नमस्कृत्य"* इति *शिरसा प्रणिपत्य* । क्रियास्पदीभूतत्वान्नमःशब्दस्य प्रणिपत्यार्थो नमस्कृत्यशब्दो भवति । प्रणिपातश्च लोके शिरसा प्रतीत इति 'शिरसा' इत्याह । वाङ्मनोनमस्कारोऽप्यत्रानुक्तसिद्धो गुणाख्यानपूर्वकत्वान्मनस्कर्मपूर्वकत्वाच्च कायकर्मणः ।

'तस्मै' इति किंलक्षणेयं चतुर्थी ? अत्र बहवो व्याख्यानकारा मुह्यन्ति ।

आचार्यगुणमति, तच्छिष्यश्चाचार्यवसुमित्र आहतुः—"नमःशब्दयोगे चतुर्थी—'नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च'" ( पा० सू० २.३.१६ ) इति, तदेतदयुक्तम्; स्वतन्त्रस्य नमःशब्दस्य योगे सा चतुर्थी भवति, अस्वतन्त्रश्चायं नमःशब्दः; क्रियास्पदीभूतत्वात् । अत एव चानेनैवाचार्येण *व्याख्यायुक्तौ* "नमस्कृत्य मुनिं मूर्ध्ना" इति कर्मलक्षणा द्वितीया प्रयुक्ता । तस्मान्न नमःशब्दयोगे चतुर्थीति ।

द्वितीयायाः स्थाने चतुर्थी प्रयुक्तेत्यपरे; तदिदमेषामिच्छामात्रम्, न हि लक्षणमस्यास्तीति ।

केन तर्हीयं चतुर्थी ? सम्प्रदानलक्षणेयं चतुर्थीति व्याचक्ष्महे । कथं सम्प्रदानसंज्ञा ? "कर्मणा यमभिप्रैति स सम्प्रदानम्" ( पा० सू० १.४.३२ ) इति चूर्णिकारेण कर्मशब्द उभयथा वर्ण्यते—पारिभाषिकं कर्म, लौकिकं चेति । तत्र यदा "कर्तुरीप्सिततमं कर्म" ( पा० सू० १.४.४९ ) इति पारिभाषिकं कर्माश्रीयते, तदा कर्तुरीप्सिततमेन यमभिप्रैति स सम्प्रदानसंज्ञो भवति—ब्राह्मणाय गां प्रयच्छतीत्येतत् सिद्धं भवति । यदा तु कर्म क्रियेति लौकिकं कर्माश्रीयते, तदा क्रियया यमभिप्रैति स सम्प्रदानसंज्ञो भवतीति, तदेतत् सिद्धं भवति—युद्धाय सन्नह्यति, पत्ये शेत इति । सन्नहनक्रियया युद्धमभिप्रैति कर्ता, शयनक्रियया पतिमिति युद्धादीनां सम्प्रदानसंज्ञा सिद्धा भवति । तथेहापि नमस्कारक्रियया शास्तारमभिप्रैत्याचार्यः, तस्माच्छास्तरि सम्प्रदानसंज्ञा । सम्प्रदानसंज्ञायां सत्यां "सम्प्रदाने चतुर्थी" (पा० सू० २.३.१३) इति चतुर्थी भवति । एवं च कृत्वा—

"पूर्वं प्रणम्य वदतां प्रवराय शास्त्रे" (          )

"प्रमाणभूताय जगद्धितैषिणे
प्रणम्य शास्त्रे सुगताय तायिने" ( प्र० समु० १.१. )

**यथार्थशास्ता ।** अनेन परहितप्रतिपत्त्युपायमस्याविष्करोति । यथाभूतशासनाच्छास्ता भवन्नसौ संसारपङ्काज्जगदुज्जहार, न त्वृद्धिवरप्रदानप्रभावेणेति ।

तस्मै नमस्कृत्य किं करिष्यति[1] ? इत्याह—**शास्त्रं प्रवक्ष्यामि ।** शिष्यशासनाच्छास्त्रम् ।

---

इत्येवमादीनि काव्यशास्त्रान्तरोक्तानि शब्दरूपाणि सुनीतानि भवन्ति ।

यदि तर्हि सम्प्रदानसंज्ञैवेष्यते, 'नमस्कृत्य मुनिं मूर्ध्ना' इत्यत्र द्वितीया न प्राप्नोति ? नैष दोषः; विवक्षातः कारकाणि भवन्ति । यदा कर्मविवक्षा तदा द्वितीया, यदा सम्प्रदानविवक्षा तदा चतुर्थी—इत्युभयमपि सिद्धं भवति ।

*"यथार्थशास्त्रे"* इति शास्त्रित्यौणादिकः शब्दः "तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ" ( उ० २.९३ ) इति तृन्प्रत्ययान्तोऽनिट् शास्तेति भवति । ननु च संज्ञायां शास्तेति भवति, न चेयं संज्ञा ? संज्ञैवेयम् । द्विविधा हि संज्ञा—विशेषसंज्ञा, सामान्यसंज्ञा च । विशेषसंज्ञा—देवदत्तः, यज्ञदत्त इति । सामान्यसंज्ञा—माता, पितेत्येवमादिका । मात्रादयोऽपि हि तत्र संज्ञायामेव निपात्यन्ते–"नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ" (उ० २.९४) इति । तेन यथा सर्वासां मातृणामियं संज्ञा मातेति, सर्वेषा च पितृणां पितेति, एवं सर्वेषां च शास्तृणामियं संज्ञा—शास्तेति । स तु शास्ता द्विविधो भवति—अयथार्थः, यथार्थश्च । अयथार्थश्च पूरणादिः, यथार्थश्च *तथागत* इति । अतो विशिनष्टि—*यथार्थमविपरीतं शास्तीति यथार्थशास्ता* । एतच्च विशेषणं परहितप्रतिपत्त्युपायसूचनार्थम् । अत एवाह-
वमादि । *न त्वृद्धिवरप्रदानप्रभावेण* इति । प्रभावशब्दः प्रत्येकमभिसम्बध्यते—ऋद्धिप्रभावेण, वरप्रदानप्रभावेणेति । ऋद्धिप्रभावस्तद्यथा—विष्णोर्विश्वरूपसन्दर्शनम् । वरप्रदानप्रभावस्तद्यथा—महेश्वरो वरं प्रयच्छतीति प्रवादः । अथ वा त्रिपदो द्वन्द्वः—ऋद्धिश्च वरप्रदानं च प्रभावश्चेति । प्रभावः=शक्तिविशेषः । ननु च बुद्धा अपि कदाचिद् ऋद्धिप्रातिहार्यं विनेयानामुपदर्शयन्ति ? अस्त्येतदेवम्, अपि त्वावर्जनमात्रं तु तेषाम् । अनुशासनीप्रातिहार्येण तु रागादिप्रतिपक्षभावनाक्रमेण संसारोत्तरणं भवति ।

*किं करिष्यतीति* प्रश्नः । नमस्कृत्येति क्त्वाविधेः क्रियान्तरापेक्षत्वात् । समानकर्तृकयोर्हि पूर्वकाले क्त्वाविधिर्भवति[2] ।

*"शास्त्रं प्रवक्ष्यामि"* इति । अर्थविशेषाभिद्योतको नामसमूहः=शास्त्रम् ।

---

१. करिष्यामि—का० ।　　२. द्र०—पा० सू० ७.१.३७ ।

किं[1] शास्त्रम् ? इत्याह—**अभिधर्मकोशम्** ॥ १ ॥

कोऽयमभिधर्मो नाम ?

**प्रज्ञाऽमला सानुचराऽभिधर्मः**

तत्र **प्रज्ञा** धर्मप्रविचयः । **अमलेति** अनास्रवा । **सानुचरेति** सपरिवारा । एवमनास्रवः पञ्चस्कन्धकोऽभिधर्म इत्युक्तं भवति । एष तावत् पारमार्थिकोऽभिधर्मः ।

सांकेतिकस्तु—

---

क्षणिकत्वात् समूहानुपपत्तिरिति चेत्, न; तद्ग्राहकबुद्धिरूपसमूहकल्पनात् । *शिष्यशासनाच्छास्त्रम्* इति । *किं शास्त्रम्* इति । किं नामधेयमित्यभिप्रायः ।

*अभिधर्मकोशम्* इति । अस्य निर्वचनं वक्ष्यते । आस्तां तावदेतत् ॥ १ ॥

अवयवार्थावबोधपूर्वकः समुदायार्थावबोध इत्यवयवार्थं तावत् पृच्छति—*कोऽयमभिधर्मो नाम* इति ?

*"प्रज्ञामला सानुचराभिधर्मः"* इति । धर्मप्रविचयकाले प्रज्ञा प्रधानमिति मुख्यवृत्त्या प्रज्ञाग्रहणम् । *अमलेत्यनास्रवा;* मलानामास्रवपर्यायत्वात् । *सानुचरेति सपरिवारा* । राज्ञा समं चरन्नपि भृत्यो राजानुचर इत्युच्यते, तदनुवृत्तिकारित्वात्; तथेहापि समकालं चरन्तोऽपि तत्सहभुवो धर्मा अनुचरा एवोच्यन्ते । के पुनस्ते ? चित्तचैत्ता अनास्रवसंवरा जात्यादयश्च चित्तविप्रयुक्ता इति । ननु च चित्तं चैत्तेभ्यः प्रधानम्, तथा हि—चित्तस्येमे चित्ते वा भवाश्चैत्ता इति, तेन प्रज्ञैव चित्तस्य परिवारोऽर्हति, न तु चित्तं प्रज्ञायाः, चैतसिकत्वात् ? अस्त्येतत्; अपि तु धर्मप्रविचयकाले प्रज्ञा चैत्तस्यापि सर्वस्य कलापस्य राजायते । क्वचित् कश्चिद् धर्मः प्राधान्यमास्कन्दति, तद्यथा—अभिसम्प्रत्ययकाले श्रद्धेत्येवमादि ।

*अनास्रवः पञ्चस्कन्धक* इति । अनास्रवसंवरस्तस्मिन् कलापे रूपस्कन्धः, या वेदना स वेदनास्कन्धः, या संज्ञा स संज्ञास्कन्धः, चेतनादिजात्यादयः संस्कारस्कन्धः, विज्ञानं चात्र विज्ञानस्कन्धः ।

*एष तावत्* इति । तावच्छब्दः क्रमार्थः । *पारमार्थिक* इति । परमार्थ एव पारमार्थिकः । परमार्थे वा भवः पारमार्थिकः । परमार्थेन वा दीव्यति चरतीति वा पारमार्थिकः । *सांकेतिकस्तु* सांव्यवहारिकः ।

---

1. कतमत्—का० ।

**तत्प्राप्तये यापि च यच्च शास्त्रम् ।**

**यापि च** श्रुत-चिन्ता-भावनामयी सास्रवा प्रज्ञा, उपपत्तिप्रतिलम्भिका च सानुचरा । **यच्च शास्त्रम्** अस्याः प्राप्त्यर्थमनास्रवायाः प्रज्ञायाः, तदपि तत्सम्भारभावाद् 'अभिधर्मः' इत्युच्यते । निर्वचनं तु—स्वलक्षणधारणाद् धर्मः । तदयं परमार्थधर्मं वा निर्वाणं धर्मलक्षणं वा प्रत्यभिमुखो धर्म इत्यभिधर्मः ।

उक्तो[1] ह्यभिधर्मः[1] ॥

"*तत्प्राप्तये यापि च*" इति । प्रज्ञा सानुचरा सोऽभिधर्म इति चात्राधिकृतम् । तस्या अनास्रवायाः प्रज्ञायाः प्राप्त्यर्थं साक्षात् पारम्पर्येण वा या *श्रुतमयी चिन्तामयी च भावनामयी च प्रज्ञा सास्रवा, या चोपपत्तिप्रतिलम्भिका सानुचरा* सापि सांकेतिकोऽभिधर्मः । तत्र श्रुतप्रयोगजा श्रुतमयी, युक्तिनिध्यानप्रयोगजा चिन्तामयी, भावनाप्रयोगजा भावनामयी, उपपत्तिप्रतिलम्भजा उपपत्ति-प्रतिलम्भिका । उपपत्तिप्रतिलम्भोऽस्यास्तीति "अत इनिठनौ" ( पा० सू० ५.२.११५ ) इति ठन्विधानान्न वृद्धिः । श्रुतचिन्तामयी उपपत्तिप्रतिलम्भिका भावनामयी चारूप्यावचरी चतुस्कन्धकोऽभिधर्मः अनुपरिवर्तकरूपाभावात् । रूपावचरी तु ध्यानसंवरसद्भावात् पञ्चस्कन्धकोऽभिधर्मः ।

"*यच्च शास्त्रम्*" इति । अभिधर्मशास्त्रमभिप्रेतम् । तत्तु सानुचरम्, न सानुचर-मिति व्याख्याभेदः । केचित् तावदचित्तचैतसिककलापरूपत्वात् सानुचरमिति नानुवर्तयन्ति । जात्यादिसम्भवात् केचिदनुवर्तयन्ति—"एकस्कन्धको ह्यसा-वभिधर्मः, द्विस्कन्धको वा, तस्य च जात्यादयः सन्ति" इति ।

*अन्ये* व्याचक्षते—शास्त्रमिति ज्ञानप्रस्थानम् । तस्य शरीरभूतस्य षट् पादाः—प्रकरणपादः, विज्ञानकायः, धर्मस्कन्धः, प्रज्ञप्तिशास्त्रम्, धातुकायः, सङ्गीतिपर्याय इति । अतस्तदपि शास्त्रं सानुचरमेव पारम्पर्येण पारमार्थिकाभि-धर्मप्राप्तये सांकेतिकोऽभिधर्म इत्युच्यते । उपपत्तिप्रतिलम्भिका हि प्रज्ञा शास्त्रश्रवणात् तदर्थमनुसरति, तस्याः श्रुतमयी, श्रुतमय्याश्चिन्तामयी, चिन्तामय्याः सास्रवा भावनामयी, तस्या अनास्रवा प्रज्ञा जायत इत्यनुक्रमः ।

*तदयम्* इति । तदिति वाक्योपन्यासः । अयं स्वलक्षणधारणत्वेन निरुक्तः पारमार्थिकसांकेतिकाभिधर्मः । *परमार्थधर्मम्* इति । परमस्य ज्ञानस्यार्थः परमार्थः, परमो वा अर्थः परमार्थः, सर्वधर्माग्रत्वात् परमार्थः; परमार्थश्चासौ धर्मश्च परमार्थधर्मः । *धर्मलक्षणं* वेति । स्वसामान्यलक्षणम्—'खक्खटलक्षणः पृथिवीधातुः', 'अनित्यं दुःखम्' इत्येवमादि । *तत्प्रत्यभिमुखः* प्रतिलम्भाय प्रतिषेधाय अवबोधाय वा प्रतिबोधाय वाभिमुखो धर्मः *अभिधर्मः* । "कुगति-

१. उक्तोऽभिधर्मः—का० ।

इद तु शास्त्रं कथमभिधर्मकोशम् ?

**तस्यार्थतोऽस्मिन् समनुप्रवेशात्**

**स चाश्रयोऽस्येत्यभिधर्मकोशम् ॥ २ ॥**

**स** हि शास्त्रसंज्ञकोऽभिधर्म **एतस्मिन्नर्थतो** यथाप्रधानमन्तर्भूत इत्येतच्छास्त्रं तस्य कोशस्थानीयं भवति ।

अथ वा—**सो**ऽभिधर्म एतस्याश्रयभूतः शास्त्रस्य, ततो ह्येतन्निराकृष्टम्, अतः स एवास्याभिधर्मः कोश इत्येतच्छास्त्रम**भिधर्मकोशम्** ॥ २ ॥

---

प्रादयः' ( पा० सू० २. २.१८ ) इति तत्पुरुषसमासः । ननु च "लक्षणेनाभिप्रती आभिमुख्ये" ( पा० सू० २.१.१४ ) इत्यव्ययीभावः प्राप्नोति ? यदा ह्यभिर्लक्षणेन सह समस्यते तदाव्ययीभावः, तद्यथा—अभ्यग्नि शलभाः पतन्ति, शलभपतनमग्निना लक्ष्यते, सोऽग्निरस्य लक्षणम् । न त्वयं धर्मोऽन्यस्य लक्षणम्, किं तर्हि ? लक्ष्यः; स्वयमेवाभिमुख्यात् । शास्त्राख्योऽपि सांकेतिकोऽभिधर्मः प्रापणाय अभिद्योतनाय वा निर्वाणं धर्मलक्षणं वा प्रत्युपनिपद्भावेनाभिमुखः, किमङ्ग पारमार्थिक इति ! [illegible] इति सिद्धं भवति ।

*उक्तो ह्यभिधर्म* इति । स्वभावप्रभेदनिर्वचनतोऽवयवार्थोऽवबुद्धः । समुदायार्थस्तु न तावदित्यतः समुदायार्थं पृच्छति—*इदं तु शास्त्रं कथमभिधर्मकोशम्* इति ।

"*तस्यार्थतोऽस्मिन्*" इति । तस्याभिधर्मसंज्ञकस्य शास्त्रस्यानन्तरोक्तत्वाद् ग्रहणम् । *अर्थत* इति । न व्यञ्जनत इति । अर्थतोऽयमनुप्रवेशो न साकल्येन, तस्माद् । *यथाप्रधान*मित्यव्ययीभावः । *अन्तर्भूतः* प्रविष्टः । *इति एतच्छास्त्रं* मदीयं *तस्य अर्थस्य कोशस्थानीयं भवति* कोशसदृशम् । एतस्मिन्नर्थे षष्ठीतत्पुरुषसमासः—अभिधर्मस्य कोशोऽभिधर्मकोश इति । यत्र ह्यसिः प्रविशति स तस्य कोशः ।

अथ वा—*सः अभिधर्मो* ज्ञानप्रस्थानादिरे*तस्य* मदीयस्य शास्त्रस्य *आश्रयभूतः* । ततो ह्यार्षादभिधर्मादेतन्मदीयं शास्त्रं निराकृष्टम् । अर्थत इत्यधिकृतम् । *अतः स एवास्य* अभिधर्मः **कोश** इत्येतस्मिन्नर्थे बहुव्रीहिसमासः—अभिधर्मः कोशोऽस्येत्यभिधर्मकोशम् । यतो ह्यसिर्निराकृष्यते स तस्य कोश इति *एतच्छास्त्रमभिधर्मकोश*मिति । समुदायार्थोऽप्यस्यावगमित इति सूचयति ॥ २ ॥

किमर्थं पुनरभिधर्मोपदेशः, केन चायं प्रथमत उपदिष्टो यत **आचार्यो-ऽभिधर्मकोशं** वक्तुमाद्रियत इति ? आह—

**धर्माणां प्रविचयमन्तरेण नास्ति**
**क्लेशानां यत उपशान्तयेऽभ्युपायः ।**
**क्लेशैश्च भ्रमति भवार्णवेऽत्र लोक-**
**स्तद्धेतोरत उदितः किलैष शास्त्रा ॥ ३ ॥**

---

*किमर्थं पुनरभिधर्मोपदेशः* । किं प्रयोजनमित्यर्थः । सप्रयोजनस्य हि शास्त्रस्य प्रत्यासः साधुर्भवति, न निष्प्रयोजनस्य । *केन चायं प्रथमत उपदिष्टः* । केन चायमभिधर्म आदितो देशितः । आप्तोपदिष्टस्य हि शास्त्रस्य प्रत्यासोऽर्हरूपः स्यादित्यभिप्रायः । 'प्रथमतः' इति विशेषणम् । भदन्त*कात्यायनीपुत्रा*दीनां पिण्डीकरणेन पश्चादुपदेशस्य सिद्धत्वात् । प्रथमत उपदेशे हि विवादः । *यत* इति विस्तरः—*यतः* कारणात्, *आचार्यः* शास्त्रकारः, *अभिधर्मकोशं* प्रत्यासशास्त्रम्, *वक्तुं* प्रणेतुम्, *आद्रियते* आदरं करोतीत्यर्थः ।

एवं कृते प्रश्नद्वयेऽभिधर्मशास्त्रस्य सप्रयोजनताम्, आप्तोपदेशतां च प्रदर्शयन्नाह—

*"धर्माणां प्रविचयम्"* इति । विस्तरः—*यतो विना धर्मप्रविचयेन* । 'रूपं वेदनानित्यं दुःखम्' इत्येवमाकारेण । *नास्ति क्लेशोपशमाभ्युपायः* । अन्य इति वाक्यशेषः । स एव तु क्लेशोपशमाभ्युपाय इत्यर्थादपन्नं भवति । तद्यथा—'नाहारेण विना प्राणसन्धारणोपायः' इत्युक्ते 'स एवाहारः प्राणसन्धारणोपायः' इत्यर्थादापन्नं भवति, तद्वदेतत् ।

यदि क्लेशोपशमो न स्यात्, किं स्याद् ? इत्यत आह—*"क्लेशैश्च भ्रमति भवार्णवेऽत्र लोकः"*इति । अनेन क्लेशोपशमस्यावश्यकर्तव्यतां दर्शयति । भवः = संसार इत्येकोऽर्थः । भव एवार्णवो भवार्णवः, मज्जनस्थानसाधर्म्यात् समुद्रकल्पो भवः, एतस्मिन् भवार्णवे । अत्र प्रत्यक्षीकृतपञ्चोपादानस्कन्धलक्षणव्यतिरिक्तभवप्रतिषेधार्थम् अत्र-ग्रहणम् । अत्र लोको भ्रमति; तादात्म्यावस्थानात् । तादात्म्यावस्थानतोऽपि ह्यधिकरणनिर्देशो दृश्यते, तद्यथा—अन्यपादपानुपयोगेन पलाशेष्वारामः स्थित इति । *वृत्तौ* तु हेत्वर्थतां तृतीयायाः सूचयता हेतुमण्णिचा हेत्वर्थ उक्तः । क्लेशाश्च लोकं भ्रमयन्तीति । *अत* इति । उद्दिष्टहेतुप्रत्याम्नायः । यत एवम्, अत उद्दिष्टोऽभिधर्म इत्यर्थः । धर्मप्रविचयः क्लेशोपशमोपायो नान्यो धर्म इत्यभिधर्मोपदेशकः सम्बन्ध इति । अत उक्तम्—*"तद्धेतोः"* इति । स एव हेतुस्तद्धेतुः, तस्य तस्माद्वा तद्धेतोरिति । तस्य धर्मप्रविचयस्यार्थे

'यतो विना[1] धर्मप्रविचयेन नास्ति[1] क्लेशोपशमाभ्युपायः, क्लेशाश्च लोकं भ्रमयन्ति संसारमहार्णवेऽस्मिन्, **अतस्तद्धेतोस्तस्य** धर्मप्रविचयस्यार्थे **शास्त्रा** किल बुद्धेनाभिधर्म उक्तः; न हि विना अभिधर्मोपदेशेन शिष्यः शक्तो धर्मान् प्रविचेतुमिति । स तु प्रकीर्ण उक्तो **भगवता,** भदन्तकात्यायनीपुत्र-प्रभृतिभिः पिण्डीकृत्य स्थापितः [2]स्थविरधर्मत्रातोदानवर्गीयकरणवदित्याहु-**र्वैभाषिकाः** ॥ ३ ॥

---

हि धर्मोपदेशहेतुको धर्मप्रविचयः । कथं नाम धर्मप्रविचयः स्यादिति ? *अभिधर्म उपदिष्टः शास्त्रा बुद्धेनात* एव । *न हि विनाभिधर्मोपदेशेन शिष्यः शक्तो धर्मान् प्रविचेतुम्* इति ।

*"उदितः"* इति वदेर्निष्ठायां कृतसम्प्रसारणस्यैतद् रूपम्, न त्विण उत्पूर्वस्य; अर्थायोगात् । उदित इत्युक्तः, उपदिष्ट इत्येकोऽर्थः ।

*"किल"* इति किलशब्दः पराभिप्रायं द्योतयति । *आभिधर्मिका*णामेतन्मतम्, न त्वस्माकं *सौत्रान्तिका*नामिति भावः । श्रूयन्ते ह्यभिधर्मशास्त्राणां कर्तारः, तद्यथा—ज्ञानप्रस्थानस्य आर्य*कात्यायनीपुत्रः* कर्ता, प्रकरणपादस्य स्थविर*वसुमित्रः*, विज्ञानकायस्य स्थविर*देवशर्मा*, धर्मस्कन्धस्य आर्य*शारिपुत्रः*, प्रज्ञप्तिशास्त्रस्य आर्य*मौद्गल्यायनः*, धातुकायस्य *पूर्णः*, सङ्गीतिपर्यायस्य *महाकौष्ठिलः* ।

कः सौत्रान्तिकार्थः ? ये सूत्रप्रामाणिकाः, न तु शास्त्रप्रामाणिकास्ते सौत्रान्तिकाः । यदि न शास्त्रप्रामाणिकाः, कथं तेषां पिटकत्रयव्यवस्था—सूत्रपिटकः, विनयपिटकः, अभिधर्मपिटक इति, सूत्रेऽपि ह्यभिधर्मपिटकः पठ्यते—त्रैपिटको भिक्षुरिति ? नैष दोषः; सूत्रविशेषा एव हि *अर्थविनिश्चया*दयोऽभिधर्मसंज्ञाः, येषु धर्मलक्षणं वर्ण्यते, एतदाशङ्कानिवृत्त्यर्थमाहुः । *स तु प्रकीर्ण उक्तो भगवतेति* । विस्तरः—यथा *स्थविरधर्मत्रातेन उदानाः 'अनित्या बत संस्काराः'* (          ) इत्येवमादिका विनेयवशात् तत्र तत्र सूत्र उक्ता *वर्गीकृता* एकस्थीकृताः; एवमभिधर्मोऽपि धर्मलक्षणोपदेशस्वरूपो विनेयवशात् तत्र तत्र *भगवतोक्तः* । स्थविर*कात्यायनीपुत्र*प्रभृतिभिर्ज्ञानप्रस्थानादिषु *पिण्डीकृत्य स्थापित* इति । *आहुर्वैभाषिकाः* । विभाषया दीव्यन्ति चरन्ति वा वैभाषिकाः, विभाषां वा विदन्ति वैभाषिकाः । उक्थादिप्रक्षेपाट्[3] ठक् ॥ ३ ॥

---

१-१. न विना धर्मप्रविचयेनास्ति—का० ।

२. भदन्त०—का० ।    ३. द्र०—पा० सू० ४.२.६० ।

कतमे पुनस्ते धर्मा येषां प्रविचयार्थमभिधर्मोपदेशः ? इत्याह—

**सास्रवाऽनास्रवा धर्माः**

एष सर्वधर्माणां समासनिर्देशः ॥

तत्र कतमे सास्रवा धर्माः ? इत्याह—

**संस्कृता मार्गवर्जिताः ।**

**सास्रवाः**

मार्गसत्यं वर्जयित्वाऽन्ये सर्वे[1] संस्कृताः[1] सास्रवाः ।

किं कारणम् ?

**आस्रवास्तेषु यस्मात् समनुशेरते ॥ ४ ॥**

---

*"सास्रवानास्रवा धर्माः"* इति । सहास्रवैः सास्रवाः, न सन्त्यास्रवा एष्वित्यनास्रवाः, सास्रवाश्चानास्रवाश्चेति समासः । स्वसामान्यलक्षणधारणाद् धर्माः ।

*एष सर्वधर्माणां समासनिर्देश* इति । एतावन्तो धर्मा यदुत सास्रवाश्चानास्रवाश्च, नैतद्व्यतिरिक्ता धर्माः सन्ति, तस्मादाह—सर्वधर्माणामिति । समासनिर्देश इति संक्षेपनिर्देशः । विस्तरनिर्देशस्तु पश्चादा शास्त्रपरिसमाप्तेर्भविष्यति । अन्येऽपि समासनिर्देशाः सन्ति—संस्कृतासंस्कृताः, रूप्यरूपिणः, सनिदर्शनानिदर्शना इत्येवमादयः, किमर्थमयमेव समासनिर्देश उक्तः ? यस्मिन्नुक्ते न पर्यनुयोगः । अथ वा—सांक्लेशिकव्यावदानिकपक्षप्रदर्शनार्थम्; तदर्थत्वाच्छास्त्रस्य । तत्पक्षद्वयावबोधे हि संक्लेशपक्षमपहाय व्यवदानपक्षासेवनान्निःश्रेयसावाप्तिर्भवेत् ।

*"संस्कृता मार्गवर्जिताः सास्रवाः"* इति । संस्कृता एव, नासंस्कृताः । हेतुप्रत्ययजनिता रूपादयः संस्कृताः । किं सर्वे ? नेत्याह—मार्गवर्जिताः । मार्गसत्येन वर्जिताः । मार्गसत्यस्य संस्कृतत्वात् प्रसङ्ग इत्यत एवं विशिनष्टि । एतदुक्तं भवति—मार्गसत्यं वर्जयित्वा सर्वे संस्कृताः सास्रवा इति ।

कथं पुनस्ते सास्रवाः ? यद्यास्रवसम्प्रयोगात् ? क्लिष्टा एव चित्तचैत्ताः सास्रवाः स्युर्नान्ये; अथास्रवसहोत्पादात् ? एकस्यां सन्ततौ समुदाचरत्क्लेशस्य सत्त्वस्य यथासम्भवं पञ्चोपादानस्कन्धाः सास्रवाः स्युः, नासमुदाचरत्क्लेशस्य, नापि बाह्या धर्माः; अथास्रवाणां य आश्रयास्ते सास्रवा इति ? षडेवायतनान्याध्यात्मिकानि सास्रवाणि स्युः; अथास्रवाणामालम्बनानि सास्रवाणि ? निरोधमार्गसत्यमपि सास्रवं प्राप्नोति; ऊर्ध्वा च भूमिरूर्ध्वभूम्यालम्बनैरास्रवैः

---

1-1. संस्कृता धर्माः—का० ।

कामं निरोधमार्गसत्यालम्बना अपि आस्रवा उपजायन्ते, न त्वनुशेरते तत्रेति न तयोः सास्रवत्वप्रसङ्गः। यथा तत्र[1] नानुशेरते, तत् पश्चादनुशयनिर्देश ( अभि० को० ५.१८ ) एव ज्ञापयिष्यामः ॥ ४ ॥

उक्ताः सास्रवाः ॥

---

सास्रवा स्यादिति ? अत आह—"*आस्रवास्तेषु यस्मात् समनुशेरते*" इति। तस्मात् [illegible]स्रवा इति पूर्वमेवाध्याहार्यस्तस्माच्छब्दः। अनुशेरत इति पुष्टिं लभन्त [illegible]र्थः। प्रतिष्ठां लभन्त इत्यर्थो वा। पुष्टिलाभे प्रतिष्ठालाभे वा ते रागादयः सन्तायन्ते।

अन्ये व्याचक्षते—यथा 'अनुशेते मनागमाहारः' इति पथ्योऽनुगुणीभवतीत्यर्थः, तथा रागादयोऽपि तेषु धर्मेष्वनुशेरते, अनुगुणीभवन्तीत्यर्थः। रागाद्यभिष्यन्दितकर्मनिर्वर्तिता हि सास्रवा धर्माः; "कर्मजं लोकवैचित्र्यम्" ( अभि० को० ४.१ ) इति वचनात्। [illegible] पुष्टिं लभन्त इत्यनुशयाः। अनुशेरते अनुगुणा [illegible]। अनुशयनं चैषामालम्बनतः सम्प्रयोगतो वा द्रष्टव्यम्।

*गुणमतिस्त्वाचार्य* इह व्याचष्टे—"किं कारणं यत् सर्वधर्मेष्वास्रवाणामालम्बनीभवत्सु संस्कृता एव मार्गवर्जिताः सास्रवा उच्यन्त इति ? सर्वे धर्मा आस्रवाणामालम्बनम्" इति। अनाभिधर्मिकीयमेतत्; आकाशप्रतिसंख्यानिरोधयोरास्रवानालम्बनत्वात्। षडेव ह्यनुशया अनास्रवालम्बनाः पठ्यन्ते, ते च निरोधमार्गालम्बना एव;

"मिथ्यादृग्विमती ताभ्यां युक्ताविद्याथ केवला।
निरोधमार्गदृग्घेयाः षडनास्रवगोचराः" ॥

( अभि० को० ५. १४ )

इति वचनात्। तस्मान्न सुलिखितमेतदिति पश्यामः।

*काममिति* यद्यपीत्यर्थः। अथ वा—काममिति निपातोऽभ्युपगमार्थः। अभ्युपगम्यत एव *निरोधमार्गसत्यालम्बना अपि आस्रवा उपजायन्त* इत्यर्थः। *तत्र* निरोधमार्गसत्ययोः। *अनुशयनिर्देश एव ज्ञापयिष्याम* इति। "नानासवोर्ध्वविषया अस्वीकाराद् विपक्षतः" ( अभि० को० ५. १८ ) इत्यत्र।

यद्धि वस्त्वात्मदृष्टितृष्णाभ्यां स्वीकृतं भवति, तत्रान्येऽप्यनुशया अनुशयितुमुत्सहन्ते; आर्द्रे इव पटे रजांसि संस्थातुम्। न चैवमनास्रवम्, नाप्यूर्ध्वा भूमिः; अतो न तदालम्बनास्तेष्वनुशेरते। विपक्षभूतौ च निर्वाणमार्गौ तदालम्बनानां

---

[1] अत्र—का०

अनास्रवाः कतमे ?

**अनास्रवा मार्गसत्यं त्रिविधं चाप्यसंस्कृतम् ।**

क्लेशानाम्, ऊर्ध्वा च भूमिरधराणाम्, अतोऽपि न तेषु प्रतिष्ठां लभन्ते; तप्त इवोपले तलानि पादानामिति ॥ ४ ॥

*"अनास्रवा मार्गसत्यं त्रिविधं चाप्यसंस्कृतम्"* इति । अर्थापत्तिसिद्धत्वान्न सूत्रयितव्यमेतद् ?—इत्येवं चोद्ये —"वक्तव्यमेवेदम्, किं कारणम् ? द्विविधो हि मार्गः—लौकिकः, लोकोत्तरश्च । अतो विशेषार्थं पुनरभिधीयते । अत एव चात्र मार्गसत्यग्रहणम् । प्रसिद्धं चार्थापत्त्या गम्यते, नाप्रसिद्धम् । अप्रसिद्धं चासंस्कृतमिति ।

रुच्यते । यथा हि तिस्रो वेदना भवन्ति—सुखा, दुःखा, अदुःखासुखा चेति; एवं धर्मा अपि सम्भाव्येरन्—सास्रवाः, अनास्रवाः, सास्रवानास्रवाश्चेति । अथ वा—नैव सास्रवा नानास्रवाश्चेति । तेन येऽर्थापत्त्या निरस्ताः किं तेऽनास्रवा एव ? उताहो सास्रवानास्रवा एव ? आहोस्विन्नोभयथा ? इति सन्दिह्येत । अस्ति हि सास्रवानास्रवत्वविकल्पावकाशः । कथमिति ? *वैभाषिक*प्रक्रियया तावत् "द्विधा सानुशयं क्लिष्टमक्लिष्टमनुशायकैः" ( अभि० को० ५.३२ ) इति वचनाद् ये चक्षुरादयो बाह्या वा रूपादयोऽक्लिष्टास्तेऽनुशयानैरेवास्रवैः सास्रवाः, नाननुशयानैः । प्रहीणैस्तैरननुशयानैरास्रवैर्न सास्रवाः । अप्रहीणैस्त्वन्ततः परसन्तानगतैरपि सास्रवा एवेति दार्ष्टान्तिकप्रक्रिययापि च चक्षुरादयोऽर्हत्सन्तानगता बाह्याश्च रूपादयोऽनास्रवाः, आस्रवाणामनाश्रयत्वात्; सास्रवाश्च ते, आस्रवाणामप्रतिपक्षत्वात् इति पार्यायिकं सास्रवानास्रवत्वं चक्षुरादीनां कल्प्यत इति सन्देहः । तत्सन्देहनिवृत्त्यर्थमिदमुच्यते—*"अनास्रवा मार्गसत्यं त्रिविधं चाप्यसंस्कृतम्"* इति । निष्पर्यायमनास्रवा एवामी, न सास्रवा यथोक्तमिति पुनर्वचनम् । ते तर्हि अर्हच्चक्षुरादयो *वैभाषिकैः* क्व पक्षे निक्षेप्तव्याः—किं सास्रवपक्षे, अथानास्रवपक्ष इति ? सास्रवपक्ष इति त आहुः ।

कथं प्रहीणैरास्रवैस्ते सास्रवा व्यवस्थाप्यन्ते ? येष्वास्रवा अनुशेरते, अनुशयितवन्तः, अनुशयिष्यन्ते वा, ते सास्रवाः । त्रैकालिकार्थविवक्षयापि हि लोके वर्तमानकालप्रयोगो दृश्यते—यः प्रजा रक्षति स राजेति, योऽपि रक्षितवान् योऽपि रक्षिष्यति स चापि राजेति गम्यत एवेति अत एवं व्याख्यायते । अथ वा—यद्यपि ते प्रहीणैरास्रवैर्न सास्रवाः, अप्रहीणैस्त्वपरिमितैरास्रवैरन्ततः परसन्तानगतैरपि सास्रवा एव भवन्ति ।

कतमत् त्रिविधमसंस्कृतम् ?

**आकाशं द्वौ निरोधौ च;**

कतमौ द्वौ ? प्रतिसंख्यानिरोधः, अप्रतिसंख्यानिरोधश्चेति । एतदाकाशादि त्रिविधमसंस्कृतं मार्गसत्यं चानास्रवा धर्माः ।

किं कारणम् ? न हि तेष्वास्रवा अनुशेरत इति ।

यदेतत् त्रिविधमसंस्कृतमुद्दिष्टम्,

**तत्राकाशमनावृतिः ॥ ५ ॥**

अनावरणस्वभावमाकाशम्, यत्र रूपस्य गतिः ॥ ५ ॥

---

ननु च समासनिर्देशादेव "सास्रवानास्रवा धर्माः" ( अभि० को० १. ४ ) इति तृतीयराश्यप्रसङ्गः ? न; तत्रैकशेषनिर्देशसम्भवात् । सास्रवाश्चानास्रवाश्च सास्रवानास्रवाश्चेति सास्रवानास्रवा इत्येकशेषः । असरूपाणामप्येकशेष इष्यते, "गुणो यङ्लुकोः" ( पा० सू० ७. ४. ८३ ) इति यथा ।

अपरे पुनराहुः—अर्थापत्त्या सिद्धमेवैतत्, स्पष्टीकरणार्थं तु प्रपञ्च उच्यते । तद्यथा—"विशेषणं विशेष्येण बहुलम्" ( पा० सू० २. १. ५७ ) इत्यनेनैव सर्वं सिद्धम् "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" ( पा० सू० २. १. ४९ ) इत्येवमादिप्रपञ्च उच्यते, तद्वदेतत् ।

कतमत् *त्रिविधमसंस्कृतम्* इति । अप्रतीतत्वात् पृच्छति । त्रिविधग्रहणमियत्तावधारणार्थम् । सन्ति हि केचिद् 'एकमेवासंस्कृतं निर्वाणम्' इत्याहुः, यथा *वात्सीपुत्रीयाः* । 'परमाण्वादयो बहवोऽसंस्कृताः' इति *वैशेषिकाः* । तन्मतप्रतिषेधार्थमियत्तावधारणम् ।

*कतमौ द्वौ* इति प्रतिसंख्याऽप्रतिसंख्यानिरोधावेव पृच्छति, नाकाशम्; आकाशस्य लोके प्रसिद्धत्वात् ।

*"तत्राकाशमनावृतिः"* इति । 'तत्र' इति निर्धारणे, वाक्योपन्यासे वा । अवकाशं ददातीत्याकाशमिति निर्वचनम् । भृशमस्यान्तः काशन्ते भावा इत्याकाशमित्यपरे । अनावृतिः=अनावरणम्, कर्तृसाधनं कर्मसाधनं वा ।

यो धर्मान्यान् धर्मान्नावृणोति, अन्यैर्वा नाव्रियते तत् *अनावरणस्वभावमाकाशम्* । तदप्रत्यक्षविषयत्वादन्यधर्मानावृत्यानुमीयते, न त्वावरणाभावमात्रम् । अत एव च व्याख्यायते—*यत्र रूपस्य गतिरिति* ।

**प्रतिसंख्यानिरोधो यो विसंयोगः**

यः सास्रवैर्धर्मैर्विसंयोगः स प्रतिसंख्यानिरोधः। दुःखादीनामार्यसत्यानां प्रति[1] प्रतिसंख्यानं[1] प्रतिसंख्या = प्रज्ञाविशेषस्तेन प्राप्यो निरोधः **प्रतिसंख्यानिरोधः,**

---

यदि यन्नावृणोति नाव्रियते वा तदाकाशम्, अप्रतिघा अपि चिदादयः संस्कारास्तथैवेत्याकाशं प्राप्नुवन्ति ? न प्राप्नुवन्ति; परेषामावरणभावात्। ऋद्धिमन्तो हि चित्तचैत्तबलेन परेषां गतिं चित्तादीन् वा विबध्नन्ति। प्रतिसंख्याऽप्रतिसंख्यानिरोधौ तर्ह्यविबन्धकत्वादाकाशं प्राप्नुतः ? न; तयोः संयोगद्रव्यानुत्पत्तिधर्माणां संयोगप्राप्तिनियतनिरोधभूतत्वेन, उत्पत्तिविघ्नरोधभूतत्वेन चावरणभूतत्वात्।

अथ वा—यस्यानावरणमेव लक्षणं नान्यल्लक्षणं तदाकाशम्। तयोश्चान्यलक्षणमस्तीति न तौ निरोधावाकाशं प्राप्नुतः। असर्वगतं तर्ह्याकाशमनित्यं वा प्राप्नोति, आवरणाभावे भावात् तद्भावे चाभावात् ? कुड्यादिषु ह्यन्यस्वरूपस्यावरणं भवतीति अत्राकाशलक्षणाभावप्रसङ्गः। कुड्याद्यपगमे च पुनस्तद्भवतीत्यनित्यं प्राप्नोति ? नानित्यं प्राप्नोति; तत्रापि कुड्याद्यवकाशदानादाकाशमस्त्येव। यदि हि तत्राकाशं न स्यात्, तस्यैव कुड्यादेरनवकाशत्वादवस्थानं न स्यात्। यत्तु तत्र रूपान्तरस्यानवस्थानम्, तत् कुड्याद्यावरणात्, नाकाशाभावात्। उक्तं हि भगवता—"पृथिवी भो गौतम, कुत्र प्रतिष्ठिता ? पृथिवी, ब्राह्मण, अब्मण्डले प्रतिष्ठिता। अब्मण्डलं भो गौतम क्व प्रतिष्ठितम् ? वायौ प्रतिष्ठितम्। वायुर्भो गौतम, क्व प्रतिष्ठितः ? आकाशे प्रतिष्ठितः। आकाशं भो गौतम कुत्र प्रतिष्ठितम् ? अतिसरसि महाब्राह्मण, अतिसरसि महाब्राह्मण! आकाशं ब्राह्मण अप्रतिष्ठितमनालम्बनम्" (          ) इति विस्तरः। तस्मादस्त्याकाशमिति *वैभाषिकाः* ॥ ५ ॥

*"यो विसंयोगः"* इति। विशेषणेनानित्यतानिरोधोऽप्रतिसंख्यानिरोधश्च व्युदस्तौ भवतः। न हि विसंयोगलक्षणौ तौ निरोधौ। विसंयुक्तिः=विसंयोगः, क्लेशविसंयुक्तिलक्षणः, संयोगप्राप्तिनियतरोधभूतो वा यो धर्मः *स प्रतिसंख्यानिरोधः*। *दुःखादीनामार्यसत्यानामि*ति विशेषणपरिग्रहात् *प्रतिसंख्यानम्* अनास्रवैव प्रज्ञा गृह्यते। न हि लौकिकी प्रज्ञा दुःखसत्याद्याकारा, किं तर्हि ? उत्तराधरभूमिशान्ताद्युदाराद्याकारा। *प्रज्ञाविशेष* इति विशेषग्रहणं क्लेशप्रहाणानन्तर्यमार्गप्रज्ञाग्रहणार्थम्। *तेन* प्रज्ञाविशेषेण *प्राप्यो निरोध* इति

१-१. प्रतिसंख्यानं—का०।

मध्यपदलोपं[1] कृत्वा[1] गोरथवत् ।

किं पुनरेक एव सर्वेषां सास्रवाणां धर्माणां प्रतिसंख्यानिरोधः ? नेत्याह । किं तर्हि ?

**पृथक् पृथक् ।**

यावन्ति हि संयोगद्रव्याणि तावन्ति विसंयोगद्रव्याणि । अन्यथा हि दुःखदर्शनहेयक्लेशनिरोधसाक्षात्करणात् सर्वक्लेशनिरोधसाक्षात्क्रिया प्रसज्येत । सति चैवं शेषप्रतिपक्षभावनावैयर्थ्यं स्यात् ।

यत्तर्ह्युक्तम्—"असभागो निरोधः" इति, अस्य कोऽर्थः ?

---

*प्रतिसंख्यानिरोधः* । *मध्यपदलोपं कृत्वा* इति । "शाकपार्थिवादीनामुपसंख्यानम्, शाकप्रियाः पार्थिवाः शाकपार्थिवाः" (पा० सू० २. १. ६०) इतीष्ट्या मध्यपदलोपः । यदि प्रतिसंख्ययानास्रवैव प्रज्ञा गृह्येत, लौकिकमार्गप्राप्यो निरोधो न गृहीत इत्यव्यापि लक्षणं प्राप्नोति ? नाव्यापि; सर्वो हि त्रैधातुकसास्रववस्तुनिरोधोऽनास्रवया प्रज्ञया प्राप्यते । न स निरोधोऽस्ति यो लौकिक्यैव प्रज्ञया प्राप्यते नानास्रवयेति किं लौकिक्या प्रज्ञया प्रयोजनम् ! यो हि लौकिकेन मार्गेण कश्चिन्निरोधः प्राप्यते, स एव पुनर्लोकोत्तरेण प्राप्यत एवेति लोकोत्तरैव प्रज्ञा तत्र, न लौकिकी । द्रव्यसन् प्रतिसंख्यानिरोधः; सत्यचतुष्टयनिर्देशनिर्दिष्टत्वाद्, मार्गसत्यवदिति *वैभाषिकाः* ।

"*पृथक् पृथक्*" इति नानेत्यर्थः । *यावन्ति हि संयोगद्रव्याणीति* । संयुक्तिः= संयोगः, संयोगाय द्रव्याणि संयोगद्रव्याणि । सम्प्रयुज्यते तेष्विति वा संयोगाः, संयोगाश्च ते द्रव्याणि चेति संयोगद्रव्याणि, सास्रवद्रव्याणीति यावदुक्तं भवति । "सास्रवं हि द्रव्यं स्तम्भस्थानीयम्, सम्प्रयोजनं रज्जुस्थानीयम्, पुद्गलस्तु बलीवर्दस्थानीयः" (     ) इति भगवतोक्तम् । *अन्यथेति* । यद्येक इत्यर्थः । *सर्वक्लेशनिरोधसाक्षात्क्रियेति* समुदयादिदर्शनभावनाहेयक्लेशनिरोधप्राप्तिरित्यर्थः । *शेषप्रतिपक्षभावनावैयर्थ्यमिति* । शेषक्लेशसमुदयादिदर्शनभावनाप्रहातव्यात्मकप्रतिपक्षमार्गोत्पादनं निष्प्रयोजनमित्यर्थः ।

*यत्तर्ह्युक्तमसभागो निरोध* इति । क्वोक्तम् ? सूत्रे । पूर्वभर्त्रा *विशाखेन* गृहपतिना पृष्टया *धर्मदिन्नया* भिक्षुण्योक्तम्—"किं सभाग आर्ये निरोधः ? असभाग आयुष्मन् विशाख" (म० नि० १.४४) इति । 'अप्रतिसदृशो निरोधः' इत्यर्थमभिसमीक्ष्य पृच्छति—*अस्य कोऽर्थ* इति । बहुत्वे हि सति प्रतिसदृशोऽन्यतमं

---

1—1. मध्यपदलोपात्—का० ।

'नास्य कश्चित् सभागहेतुरस्ति नासौ कस्यचित्' इत्ययमस्य वाक्यस्यार्थः, न तु नास्य कश्चित् सभागोऽस्तीति ॥

उक्तः प्रतिसंख्यानिरोधः ॥

**उत्पादात्यन्तविघ्नोऽन्यो निरोधोऽप्रतिसंख्यया ॥ ६ ॥**

अनागतानां धर्माणामुत्पादस्यात्यन्तं विघ्नभूतो विसंयोगाद् योऽन्यो निरोधः **सोऽप्रतिसंख्यानिरोधः** । न ह्यसौ प्रतिसंख्यया लभ्यते, किं तर्हि ? प्रत्ययवैकल्यात् ।

---

भवेदिति परस्याभिप्रायः । *नास्य कश्चित् सभागहेतुरि*ति । सभागहेतुः सभाग इत्येकोऽर्थः, हेतुशब्दलोपात् । दृश्यन्ते हि पदेषु पदैकदेशान् प्रयुञ्जानाः, वाक्येषु च वाक्यैकदेशान् । तद्यथा—सत्यभामा, भामा; देवदत्तः, दत्तः; प्रविश पिण्डीम्, प्रविश तर्पणमिति । नित्यः खलु प्रतिसंख्यानिरोधः, तस्य किं सभागहेतुना प्रयोजनमित्यसभागहेतुः, असभागः । नास्ति सभागोऽस्येत्यसभागः, बहुव्रीहिसमासः । *नासौ कस्यचि*दिति । नासौ प्रतिसंख्यानिरोधः कस्यचिदन्यस्य धर्मस्य सभागहेतुरित्यधिकृतम् । किं कारणम् ? संस्कृत एवेति सभागहेतुरिष्यते । तत्र न सभागोऽसभाग इति तत्पुरुषः । *न तु नास्य कश्चित् सभागोऽस्ती*ति । न त्वस्य निरोधस्य कश्चिदन्यो निरोधः सदृशो न भवतीत्यर्थः ॥

*अनागतानां धर्माणामुत्पादस्यात्यन्तं विघ्नो*ऽत्यन्तविघ्नः=अत्यन्तनियतरोधः । *अन्य* इति । अप्रतिसंख्यानिरोधः । स हि प्रतिसंख्यानिरोधादनन्तरोक्तादन्यः । *अप्रतिसंख्यये*ति । प्रसज्यप्रतिषेधेऽयमकारः, न प्रतिसंख्यया प्राप्य इत्यर्थः । अथ वा पर्युदासे—प्रतिसंख्याया यदन्यत् प्रत्ययवैकल्यं सा प्रतिसंख्या, तया प्राप्यो निरोधोऽप्रतिसंख्यानिरोधः, मध्यपदलोपात् । अयुक्तमेतत्; प्रत्ययवैकल्यं ह्यभावः, कथमभावेन स निरोधः प्राप्यत इति ? औपचारिकत्वाददोषः ।

अथ वा—अप्रतिसंख्यानिरोध इति न प्रतिसंख्यानिरोधोऽप्रतिसंख्यानिरोधः । प्रतिसंख्यानिरोधादन्यत्वमात्रमेवोच्यते, न तु प्रत्ययवैकल्यस्य व्यापार इति । *उत्पाद*ग्रहणमनित्यतानिरोधव्युदासार्थम् । अनित्यतानिरोधो हि धर्मस्थितेरत्यन्तविघ्नः, न धर्मोत्पादस्य । *अत्यन्त*ग्रहणमसंज्ञिनिरोधसमापत्त्यसंज्ञिकव्युदासार्थम् । तानि ह्यनागतानां चित्तचैत्तानामुत्पादविघ्नः, न त्वत्यन्तम्; तावत्कालिकत्वात् तद्विघ्नभावस्य ।

यथैकरूपव्यासक्तचक्षुर्मनसो यानि रूपान्तराणि[1] शब्दगन्धरसस्प्रष्टव्यानि चात्ययन्ते तदालम्बनैः पञ्चभिर्विज्ञानकायैर्न शक्यमुत्पत्तुम्[2], न हि ते समर्था[3] अतीतं विषयमालम्बयितुमिति । अतः स तेषामप्रतिसंख्यानिरोधः प्रत्ययवैकल्यात् प्राप्यते ।

---

*यथैकरूपव्यासक्तचक्षुर्मनस* इति । विस्तरः—यथेत्युदाहरणकथनम् । यथैकस्मिन्नीले रूपे व्यासक्तं चक्षुर्मनश्च यस्य स एकरूपव्यासक्तचक्षुर्मनाः,[1] तस्य यानि *रूपान्तराणि* गृह्यमाणान्नीलादन्यानि नीलान्तरपीतलोहितावदातादीनि वर्णरूपाणि संस्थानरूपाणि च *शब्दगन्धरसस्प्रष्टव्यानि* च सर्वाणि *अत्ययन्ते* प्रत्युत्पन्नमध्वानमतिक्रामन्ति । अतीतमध्वानं प्रतिपद्यन्त इत्यर्थः । *तदालम्बनैरि*ति । तानि नीलान्तरादीन्यनन्तरोक्तान्यालम्बनान्तराणि येषां ते तदालम्बनाः । के ? पञ्च विज्ञानकायाः, तैः *न शक्यमुत्पत्तु*मिति भावसाधनमेतत् । *न हि ते समर्था* इति । विस्तरः—न हि ते पञ्च विज्ञानकाया *अतीतं विषयं* स्वालम्बनमपि शक्ता ग्रहीतुम्; वर्तमानालम्बनत्वात् पञ्चानां विज्ञानकायानाम् । अथान्यदि दानीं नीलान्तरादिकं वर्तमानमालम्ब्य कस्मान्नोत्पद्यन्ते ? न शक्यमेवं भवितुम्; सर्वधर्माणां चतुष्के नियतत्वात्—हेतौ, फले, आश्रये, आलम्बने चेति । यस्य विज्ञानस्य यदालम्बनं तदेव तस्यालम्बनं भवेत्, भवेन्नान्यदिति आलम्बनप्रत्ययवैकल्यात् ते पञ्च विज्ञानकाया न पुनरुत्पद्यन्ते । अत आह—*स तेषामप्रतिसंख्यानिरोध* इति । विस्तरः—तेषां पञ्चानां विज्ञानकायानां *प्रत्ययवैकल्यात् प्राप्यत* आलम्बनप्रत्ययवैकल्यात् । चतुर्भिरेव हि प्रत्ययैर्हेतुसमनन्तरालम्बनाधिपतिप्रत्ययैश्चित्तचैत्ता उत्पद्यमाना उत्पद्यन्ते । तेषामन्यतरवैकल्येऽप्यनुत्पत्तिः; समनन्तरप्रत्ययवैकल्यादित्यपरे । समनन्तरप्रत्ययो हि तदानीं चित्तचैत्तलक्षण एकस्यैव तस्य नीलविज्ञानस्योत्पत्ताववकाशं ददाति, नेतरेषां नीलान्तरादिविज्ञानानाम्; युगपद्विज्ञानोत्पत्त्यसम्भवात् । उदाहरणमात्रं चैतत् । एवं क्षान्तिलाभ्यादीनां पञ्चानामप्यापायिकानामनागतानां स्कन्धानां तदुत्पत्तिविरुद्धप्रत्ययसम्मुखीभावेन प्रत्ययवैकल्यादप्रतिसंख्यानिरोधः प्राप्यत इत्युदाहार्यम् । अप्रतिसंख्यानिरोधमेव वाभिसन्धाय स्रोतआपन्नं पुद्गलमधिकृत्योक्तं *भगवता*—"निरुद्धा अस्य नरकास्तिर्यञ्चः प्रेताः" (　　　　) इति । तदेवञ्जातीयकानामनागतानां धर्माणां प्रत्ययवैकल्यात्प्रतिसंख्यामन्तरेणोत्पादस्य नियतरोधभूतो यो धर्मः सोऽप्रतिसंख्यानिरोध इत्युच्यते । न हि प्रत्ययवैकल्य-

१. रूपाणि—का० ।　　　　२. पुनरुत्पत्तुम्—का० ।
३. शक्या—का० ।

चतुष्कोटिकं चात्र भवति—१. सन्ति ते धर्मा येषां प्रतिसंख्यानिरोध एव लभ्यते, तद्यथा अतीतप्रत्युत्पन्नोत्पत्तिधर्माणां सास्रवाणाम्। २. सन्ति येषामप्रतिसंख्यानिरोध एव, तद्यथा अनुत्पत्तिधर्माणामनास्रवसंस्कृतानाम्। ३. सन्ति[1] येषामुभयम्, तद्यथा सास्रवाणामनुत्पत्तिधर्माणाम्। ४. सन्ति येषां नोभयम्,

---

मात्रादत्यन्तं तदनुत्पत्तिरुपपद्यते; पुनस्तज्जातीयप्रत्ययसान्निध्ये तदुत्पत्तिप्रसङ्गात्, को हि तदा तदुत्पत्तौ विबन्धः स्यादिति *वैभाषिकाः*।

*चतुष्कोटिकं चात्रेति*। विस्तरः—अत्र प्रतिसंख्याऽप्रतिसंख्यानिरोधलक्षणनिर्देशे चतुष्कोटिकं चतुष्प्रकारं प्रश्नविसर्जनम्। किमर्थम्? व्युत्पादनार्थम्। *तद्यथातीतप्रत्युत्पन्नोत्पत्तिधर्माणां सास्रवणा*मिति सास्रवत्वात् प्रतिसंख्यानिरोध एव लभ्यते। अतीतप्रत्युत्पन्नानामुत्पादस्य कृतत्वादुत्पत्तिधर्माणां वावश्यम्भावान्नाप्रतिसंख्यानिरोधो लभ्यते। उत्पादात्यन्तविघ्नलक्षणो ह्यप्रतिसंख्यानिरोधः। *तद्यथानुत्पत्तिधर्माणामनास्रवसंस्कृतानामि*ति। अत्यन्तविघ्नितोत्पादत्वादेषामनुत्पत्तिधर्मत्वम्। अतश्च तेषामप्रतिसंख्यानिरोधो लभ्यते। तद्यथा षड्भूमिकानामनागम्यध्यानान्तरध्यानभूमिकानां श्रद्धानुसारिमार्गाणामेकस्मिन् सम्मुखीभूते शेषाणां पञ्चानामप्रतिसंख्यानिरोधो लभ्यते, न तु प्रतिसंख्यानिरोधः; अनास्रवत्वात्। न हि निर्दोषं प्रहाणार्हं भवति। अनुत्पत्तिधर्मग्रहणमतीतप्रत्युत्पन्नोत्पत्तिधर्मनिरासार्थम्, अनास्रवग्रहणं सास्रवनिरासार्थम्। संस्कृतग्रहणमसंस्कृतनिरासार्थम्। असंस्कृतमपि हि स्वभावतोऽनुत्पत्तिधर्मकम्। अतस्तत्प्रसङ्गो मा भूदिति तद्विशेषणम्।

केषाञ्चिदेवं पाठः—*तद्यथानुत्पत्तिधर्माणामनास्रवाणामि*ति। तेषां कथमसंस्कृतानां ग्रहणाप्रसङ्गः? न भवति। येषां धर्माणां प्रतिसंख्यानिरोधोऽप्रतिसंख्यानिरोधो वा सम्भवति तेषामधिकारः, न चासंस्कृतानां तौ निरोधौ सम्भवतः। उत्पादात्यन्तविघ्नो ह्यप्रतिसंख्यानिरोधः। न चासंस्कृतानामुत्पादोऽस्ति। किञ्च—अनुत्पत्तिधर्माणामिति पर्युदासेन नञ्समासः। उत्पत्तिधर्मेभ्यो येऽन्ये तत्सदृशाश्च धर्मास्तेऽनुत्पत्तिधर्माणः। के च तादृशाः? संस्कृता एव नासंस्कृता इत्यप्रसङ्गोऽसंस्कृतानामिति ब्रुवते।

*सन्ति येषामुभय*मिति प्रतिसंख्यानिरोधश्च, अप्रतिसंख्यानिरोधश्च। *तद्यथा सास्रवाणा*मिति। विस्तरः—सास्रवत्वात् तेषां प्रतिसंख्यानिरोधः प्राप्यते। अनुत्पत्तिधर्मत्वादप्रतिसंख्यानिरोधोऽपि प्राप्यते यदा, तदानयोः प्राप्तिरभिप्रेयते। नावश्यमनयोर्युगपत् प्राप्तिर्भवति। केषाञ्चिद्धि पूर्वं प्रतिसंख्यानिरोधः

---

१. सन्ति ते—का०।

तद्यथा अतीतप्रत्युत्पन्नोत्पत्तिधर्माणामनास्रवाणामिति ॥ ६ ॥

उक्तं त्रिविधमसंस्कृतम् ॥

यदुक्तम्[1]—"संस्कृता मार्गवर्जिताः सास्रवाः" इति (अभि० को० १.४), कतमे ते संस्कृताः ?

**ते पुनः संस्कृता धर्मा रूपादिस्कन्धपञ्चकम् ।**

रूपस्कन्धः, वेदनास्कन्धः, संज्ञास्कन्धः, संस्कारस्कन्धः, विज्ञानस्कन्धश्चेति,

---

प्राप्यते, पश्चादप्रतिसंख्यानिरोधः, तद्यथा–अर्हत एकरूपव्यासक्तचक्षुर्मनसस्तदन्यरूपाद्यालम्बनानां पञ्चानां विज्ञानकायानाम् । केषाञ्चित् पूर्वमप्रतिसंख्यानिरोधः प्राप्यते, पश्चात् प्रतिसंख्यानिरोधः, तद्यथा—क्षान्तिलाभिनोऽपायगतीनाम् । केषाञ्चिद् युगपत्, तद्यथा—दृष्टिप्राप्तस्याधिमात्राधिमात्रक्लेशप्रतिपक्षोदये तेषामधिमात्राणामनागतानां क्लेशानां प्रतिसंख्यानिरोधश्चाप्रतिसंख्यानिरोधश्च युगपत् प्राप्यते । एवमन्येषामपि सम्भवतो योज्यम् ।

*तद्यथातीतप्रत्युत्पन्नोत्पत्तिधर्माणामनास्रवणा*मिति । अतीतादीनामेषामुत्पादस्य विघ्नयितुमशक्यत्वादप्रतिसंख्यानिरोधो न लभ्यते । अनास्रवत्वाच्चैषां प्रतिसंख्यानिरोधोऽपि न लभ्यते । असंस्कृतानां तूत्पादाभावान्नाप्रतिसंख्यानिरोधोऽस्ति । 'उत्पादात्यन्तविघ्नो ह्यप्रतिसंख्यानिरोधः' इत्युक्तं प्राक् । अनास्रवत्वाच्च प्रतिसंख्यानिरोधोऽपि नास्ति ॥ ६ ॥

एवमसंस्कृतस्याल्पवक्तव्यत्वात् पुरस्तात् तत्प्रश्नान् परिसमापय्य संस्कृतान्निर्देष्टुकाम उपोद्घातमुत्थापयति—यदुक्तम् *"संस्कृता मार्गवर्जिताः सास्रवाः"* ( अभि० १.४ ) *इति, कतमे ते संस्कृता* इति ।

*"ते पुनः संस्कृता धर्माः"* इति । पुनःशब्दः प्रभेदान्तरप्रदर्शनार्थः । उक्तः पूर्वप्रभेदः—"सास्रवानास्रवाः" इति । अयं तु पुनःप्रभेद इति । असंस्कृतनिर्देशेन व्यवहितत्वात् पुनः संस्कृतग्रहणमसंस्कृतनिरासार्थम् । 'ते' इति तच्छब्दः पूर्वप्रकृतापेक्षः । के च पूर्वप्रकृताः ? अवर्जिताश्च ये सास्रवाः, वर्जिताश्च ये मार्गसत्यस्वभावाः, उभये ह्यपेक्षिताः । कथं गम्यते ? "ये सास्रवा उपादानस्कन्धास्ते" ( अभि० १.८ ) इत्यनास्रवेभ्यः सास्रवनिष्कर्षवचनात् । यत् *"रूपादिस्कन्धपञ्चकम्"* वक्ष्यमाणलक्षणम्, तेऽमी संस्कृता द्रष्टव्याः । अन्योन्यमेषां संग्रहः ।

रूपादिग्रहणं शीलादिस्कन्धनिरासार्थम् । अन्येऽपि हि पञ्च स्कन्धाः सन्ति—शीलस्कन्धः, समाधिस्कन्धः, प्रज्ञास्कन्धः, विमुक्तिस्कन्धः, विमुक्तिज्ञानदर्शन-

---

1. यत्तूक्तं—का० ।

**एते संस्कृता धर्माः**। समेत्य = सम्भूय प्रत्ययैः कृता इति संस्कृताः। न ह्येक-प्रत्ययजनितं किञ्चिदस्तीति तज्जातीयत्वादनागतेष्वविरोधः, दुग्धवत्[1]।

**त एवाध्वा कथावस्तु सनिःसाराः सवस्तुकाः ॥ ७ ॥**

त एव संस्कृता गतगच्छद्गमिष्यद्भावाद् **ध्वानः**, अद्यन्तेऽनित्यतयेति वा। **कथा** = वाक्यम्, तस्या **वस्तु** नाम। सार्थकवस्तुग्रहणात् तु संस्कृतं **कथा-वस्तू**च्यते। अन्यथा हि **प्रकरणग्रन्थो** विरुध्येत—"कथावस्तून्यष्टादश-

---

स्कन्धश्चेति। स्कन्धग्रहणं रूपादिविषयनिरासार्थम्। *समेत्य सम्भूयेति* पर्याया-वेतौ। अथ वा—समेत्य = समागम्य, अन्योन्यमपेक्ष्येत्यर्थः। सम्भूय, सञ्जन्येत्येवं संशब्दस्यार्थं दर्शयति। न *ह्येकप्रत्ययजनित*मिति सर्वाल्पप्रत्ययत्वेऽप्यवश्यं द्वौ प्रत्ययौ स्तः।

"चतुर्भिश्चित्तचैत्ता हि समापत्तिद्वयं त्रिभिः।
द्वाभ्यामन्ये तु जायन्ते" (अभि० ४.६५)

इति वचनात्। *दुग्धवदि*ति। संस्कृतशब्दस्य निष्ठान्तत्वान्निष्ठान्तशब्देनैव दृष्टान्तं दर्शयति। दुग्धवदिति दुग्धं नाम क्षीरम्। यत् स्तनान्निष्कासितं तद् दुग्धमिति न्याय्यम्, यत्तु निष्कासिष्यते यच्च नैव निष्कासिष्यते धेनुस्थमेव वर्तते तद् दुग्धमिति न प्राप्तम्, उच्यते च लोके। एवमिहापि ये संस्करिष्यन्त उत्पत्तिधर्माणोऽनागताः, येऽपि न संस्करिष्यन्तेऽनुत्पत्तिधर्माणस्तेऽपि संस्कृता इत्युच्यन्ते; *तज्जातीयत्वात्* स्वलक्षणसादृश्यात्।

*"त एवाध्वा"* इति। विस्तरः—सर्वाभिधर्मः सूत्रार्थः=सूत्रनिकषः, सूत्रव्या-ख्यानमिति। सूत्रोक्तानामप्यध्वादीनां स्कन्धपर्यायरूपाणामिह वचनम्। *गतगच्छद्गमिष्यद्भावा*दिति। लोके प्रसिद्धमध्वानमपेक्ष्यायमध्वा व्याख्यातः। तथा हि लोके कथ्यते—अयमध्वा ग्रामं गतः, अयमध्वा गच्छति, अयमध्वा गमिष्यतीति। एवमिहापि गतोऽध्वा योऽतीतः, गच्छति यो वर्तमानः, गमिष्यति योऽनागत इति। *अद्यन्तेऽनित्यतयेति वा* वा। अध्वान इत्यधिकृतम्। नैरुक्तं विधानमपेक्ष्यायमर्थो दर्शितः। अद्यन्ते:=नित्यतया भक्ष्यन्त इत्यध्वान इति संस्कृता एवाध्वशब्देन *भगवता* देशिताः।

*"कथावस्तु"*—शब्देनापि त एव संस्कृता *भगवता* देशिताः। "त्रीणीमानि भिक्षवः कथावस्तून्यचतुर्थान्यपञ्चमानि, यान्याश्रित्यार्याः कथाः कथयन्तः कथयन्ति। कतमानि त्रीणि? अतीतं कथावस्तु, अनागतं कथावस्तु, प्रत्युत्पन्नं

---

1. दुग्धेन्धनवत्—का०।

भिर्धातुभिः संगृहीतानि" (　　　　)। निःसरणं निःसारः = सर्वस्य संस्कृतस्य निर्वाणम्, तदेषामस्तीति **सनिःसाराः**। सहेतुकत्वात् **सवस्तुकाः**। हेतुवचनः किल वस्तुशब्द इति **वैभाषिकाः**। इत्येते संस्कृतधर्मपर्यायाः।

त एव पुनः संस्कृता धर्माः—

---

कथावस्तु" (अं० नि० ३.७.७) इति। *कथा वाक्यमिति*। विस्तरः—कथा = वाक्यम्, वर्णात्मकः शब्द इत्यर्थः। *तस्या वस्तु नाम* विषय इत्यर्थः। नाम्नः पुनरर्थोऽभिधेयः। तथा हि वक्ष्यति—"वाङ् नाम्नि प्रवर्तते नामार्थं द्योतयति" इति। यदि नामैव कथावस्तु, नामैव संस्कारस्कन्धैकदेश एवेति, कथं कृत्वा कथावस्तुशब्देन संस्कृता एवोक्ताः? इत्यत आह—*सार्थकवस्तुग्रहणात् तु संस्कृतं कथावस्तूच्यत* इति। *अन्यथा हीति*। विस्तरः—यदि सार्थकं वस्तु न गृह्येत, *प्रकरणग्रन्थो विरुध्येत—कथावस्तून्यष्टादशभिर्धातुभिः संगृहीतानी*ति। कया पुनर्युक्त्या सार्थकं वस्तु गृह्यते? द्विविधः कथाया विषयः—साक्षात्, पारम्पर्येण च। साक्षाद्विषयो नाम, पारम्पर्येणार्थः। स हि स्वविषयभूतस्य नाम्नो विषय इति। अतस्तस्यापि विषयो व्यवस्थाप्यते। असंस्कृतं कस्मान्न कथावस्तुत्वेनोक्तम्? अध्वपतितस्य नाम्नोऽनध्वपतितेन सहार्थायोगात्। विषयो हेतुरिति वा। अर्थद्वयवाचकवस्तुशब्दपरिग्रहाद् वा। यदि कथाया विषयो हेतुः प्रत्ययश्च भवति, तत् कथावस्तु। असंस्कृतं तु न हेतुप्रत्ययः कथाया इति न कथावस्तु। अथ वा—अतीतादीनां संस्कृतानामतिबहुरूपत्वेनाख्यातकरणयोग्यत्वात्—'एवं चैवं च *दीपंकर*स्तथागतोऽभूत्', 'एवं चैवं च *मैत्रेय*स्तथागतो भविष्यति', 'एवं चैवं च राजा *कप्फिणो* भवति' इति। अतः संस्कृता एव कथावस्तुत्वेनोक्ताः, नासंस्कृताः।

*सर्वस्य संस्कृतस्य निर्वाण*मिति निरुपधिशेषनिर्वाणम्। यद्येवम्, सास्रवस्य तदस्तीति भवति सास्रवस्य सनिःसारत्वयोगः, मार्गसत्यस्य तु कथम्? "कोलोपमं धर्मपर्यायमाजानद्भिर्धर्मा अपि प्रहातव्याः प्रागेवाधर्माः" (वज्र० प्र०) इति मार्गसत्यस्यापि निःसरणं कल्पत एवेति सर्वं एव संस्कृता सनिःसारा भवन्ति।

"*सवस्तुकाः*" इति। वसन्त्यस्मिन् प्राक् कार्याणि पश्चात्तत उत्पत्तिरिति वस्तुहेतुरित्यर्थः, स एषामस्तीति सवस्तुकाः। प्रवचने हि वस्तुशब्दः पञ्चस्वर्थेषु दृश्यते—स्वभावे, आलम्बने, संयोजनीये, हेतौ, परिग्रहे च। स्वभावे तावत्—यद् वस्तु प्रतिलब्धं समन्वागतः स तेन वस्तुनेति तेन स्वभावेनेति गम्यते। आलम्बने—ज्ञेया धर्माः। कतमे? आह—सर्वे धर्मा ज्ञानेन ज्ञेया यथावस्तु, यथालम्बनमित्यर्थः। संयोजनीये—यस्मिन् वस्तुन्यनुनयसंयोजनेन संयुक्ताः प्रतिघ-

**ये सास्रवा उपादानस्कन्धास्ते,**

अतः किं सिद्धम्? 'य उपादानस्कन्धाः स्कन्धा अपि ते स्युः स्कन्धा एव, नोपादानस्कन्धाः, अनास्रवाः संस्काराः' इति। तत्र उपादानानि = क्लेशाः, तत्सम्भूतत्वादुपादानस्कन्धाः, तृणतुषाग्निवत्। तद्विधेयत्वाद्वा, राजपुरुषवत्। उपादानानि वा तेभ्यः सम्भवन्तीति उपादानस्कन्धाः पुष्पफलवृक्षवत्।

त एव सास्रवा धर्मा उच्यन्ते—

---

संयोजनेनापि तस्मिन्निति। हेतौ—सवस्तुका धर्माः। कतमे? सर्वे संस्कृता धर्मा इति। परिग्रहे—क्षेत्रवस्तु, गृहवस्तु, आपणवस्तु, धनवस्तु। परिग्रहं प्रहाय ततः प्रतिविरतो भवतीति। इह हेतौ वस्तुशब्दो वेदितव्यो हेतुवचनः। *किलेति* किलशब्दः परमतं[1] दर्शयति। स्वमतं त्वस्य लक्ष्यते। सवस्तुकाः सस्वभावाः संस्कृताः। असंस्कृतास्त्ववस्तुकाः; प्रज्ञप्तिसत्त्वादिति ॥ ७ ॥

*त एव पुनः संस्कृता* इति ये सास्रवा अनास्रवाः पूर्वमुक्ता इति दर्शयति—"*ये सास्रवा उपादानस्कन्धास्ते*" इति। 'तेषाम्' इत्यत्राध्याहार्यम्। *किं सिद्धमिति*। यदर्थापन्नं तद्विचारयति। उपादानस्कन्धादयः सूत्रेषूक्ताः, तेनेह ते न व्याख्यायन्ते। सर्वोऽभिधर्मः सूत्रार्थ इति विस्तरेणोक्तमेतत्। *तत्सम्भूतत्वादुपादानस्कन्धा* इति। उपादानसम्भूताः स्कन्धा उपादानस्कन्धाः; मध्यपदलोपात्। *यथा* तृणसम्भूतोऽग्निस्तृणाग्निः. । उपादानानां स्कन्धा उपादानस्कन्धा इति षष्ठीसमासेनैव मध्यपदलोपमकृत्वान्ये साधयन्ति, एवं च निदर्शयन्ति—यथा तृणानामग्निस्तृणाग्निरिति। युक्तम् ये सत्त्वसंख्यातास्त उपादानस्कन्धाः. क्लेशाभिष्यन्दितकर्महेतुकत्वात्; बाह्यास्तु भावाः कथमुपादानस्कन्धाः? तेऽप्युपादाननिर्वृत्ताः: "कर्मजं लोकवैचित्र्यम्" ( अभि० को० ४. १ ) इति सिद्धान्तात्।

*तद्विधेयत्वाद्वा राजपुरुषवदिति*। यथा राज्ञो विधेयः पुरुषः, एवमुपादानानां विधेयाः स्कन्धाः; तद्दर्शनालम्बनगत्यन्तरप्रवृत्तेः। *उपादानानि वा तेभ्यः सम्भवन्तीति*। अर्थकथनमात्रमेतत्। पदानि त्वेवं वक्तव्यानि—उपादानानां सम्भवा हेतवो वा स्कन्धा उपादानस्कन्धाः। *पुष्पफलवृक्षवत्*। यथा पुष्पाणां फलानां वा सम्भवो हेतुर्वृक्षः, पुष्पवृक्ष इति वा, तद्वत्। अर्हत्स्कन्धा अपि पारसान्तानिकोपादानविधेयाः; विक्रियापादनात्। तेभ्योऽपि पारसान्तानिकान्युपादानानि सम्भवन्तीत्यविरुद्धमेषामुपादानस्कन्धत्वम्।

---

१. वैभाषिकमतमित्यर्थः।

**सरणा अपि ।**

रणा हि क्लेशाः; आत्मपरव्याबाधनात् । तदनुशयितत्वात् **सरणाः**, सास्रववत् । पुनः—

**दुःखं समुदयो लोको दृष्टिस्थानं भवश्च ते ॥ ८ ॥**

आर्याणां प्रतिकूलत्वाद् **दुःखम्** समुदेत्यस्माद् दुःखमिति **समुदयः** । लुज्यत[1] इति **लोकः** । दृष्टिरस्मिंस्तिष्ठत्यनुशयनादिति **दृष्टिस्थानम्** । भवतीति **भवः** । इत्येते सास्रवाणां धर्माणामन्वर्थपर्यायाः ॥ ८ ॥

---

*रणा हि क्लेशा आत्मपरव्याबाधनादिति* । ये ह्यात्मानं परांश्च व्याबाधन्ते ते रणाः, युद्धानीत्यर्थः । तथैव च क्लेशा रणा उच्यन्ते । *तदनुशयितत्वा-दिति* । तैरनुशयिता उपसेविता इत्यर्थः । अथ वा—अनुशयिनः कृतास्तैरनु-शयिनाः, तद्भावस्तदनुशयितत्वम्, तस्मात् = तदनुशयितत्वात् । अथ वा— तेषामनुशयितत्वम्, तस्मात् । *सरणाः सास्रववत्* । सास्रवत्वे यद्व्याख्यानं तदेवास्य वक्तव्यम् । *आर्याणां प्रतिकूलत्वात् दुःखम्* इति । संस्कारदुःखतयार्याणां तत् प्रतिकूलम् । *समुदेत्यस्मात् दुःखमिति समुदय* इति । हेतुभूताः स्कन्धाः समुदयः, फलभूताः स्कन्धा दुःखमिति वर्णयन्ति । *लुज्यत इति लोकः* इति । "अस्मिन्नेव रोहिताश्व व्याममात्रे कलेवरे लोकं प्रज्ञपयामि लोकसमुदयं च" ( अं० नि० २. ४८ ) इति सूत्रम्, "लुज्यते प्रलुज्यते तस्माल्लोकः" ( सं० नि० ४. ५२ ) इति च भगवतैवोक्तम् । लुज्यते विनश्यतीत्यर्थः । लुजिरिह गृहीतः, न लोकिः । नैरुक्तेन तु विधानेन गकारस्य स्थाने ककारः कृतः, तस्माल्लोक इति भवति । *दृष्टिरस्मिंस्तिष्ठतीति* । "ये केचिद् भिक्षव आत्मत आत्मीयतश्च समनुपश्यन्ति त इमानेव पञ्चोपादानस्कन्धानात्मत आत्मीय-तश्च समनुपश्यन्ति" ( ) इति वचनादुपादानस्कन्धाः *दृष्टिस्थानम्* ।

*भवतीति भवः* इति । सास्रवा एव धर्मा भवशब्देनोक्ताः; "भवः कतमः ? पञ्चोपादानस्कन्धाः" ( ) इति वचनात् । एते च दुःखादयः शब्दा मार्गसत्येऽपि प्रसज्यन्ते, मार्गसत्यमपि हि संस्कारदुःखतया दुःखम्, समनन्तर-प्रत्ययादिभावेन चास्मात् सास्रवं वस्तु समुदेति, लुज्यते च, दृष्टिश्च तदालम्बते, भवति च तदुत्पद्यत इत्यर्थः ? नैष दोषः; रूढि ह्यपेक्षते शब्दप्रवृत्तिः । ये धर्माः

1. लक्ष्यत—का० ।

"पञ्च रूपादयः स्कन्धाः" ( अभि० को० १.७ ) इत्युक्तम्, तत्र—

**रूपं पञ्चेन्द्रियाण्यर्थाः पञ्चाविज्ञप्तिरेव च ।**

**पञ्चेन्द्रियाणि** चक्षुः-श्रोत्र-घ्राण-जिह्वा-कायेन्द्रियाणि, **पञ्चार्थास्तेषामेव** चक्षुरादीनामिन्द्रियाणां यथास्वं ये पञ्च विषयाः रूपशब्दगन्धरसस्प्रष्टव्याख्याः, **अविज्ञप्तिश्च**—इति एतावान रूपस्कन्धः ।

तत्र य एते पञ्च रूपादयोऽर्था उक्ताः,

**तद्विज्ञानाश्रया रूपप्रसादाश्चक्षुरादयः ॥ ९ ॥**

संस्कारदुःखतया आर्याणां प्रतिकूला दुःखानिरोधिनः तदुत्पादकाः प्रसिद्धा दृष्टिपुष्टिजनका अनादिमति च संसारे विनश्यन्ति, भवन्ति तेष्वेवामी दुःखादय आर्यैः सङ्केतिताः, न मार्गसत्ये । तस्मात् सास्रवा एव धर्मा दुःखशब्दाद्यभिधेया भवन्ति, नानास्रवाः । न हि 'गच्छतीति गौः' इत्युक्ते सर्वो गन्ता गौरित्युच्यते । तस्मात् सूक्तम्—"दुःखं समुदयः" इत्येवमादि ॥ ८ ॥

*"रूपम्"* इति रूपस्कन्धः । *"पञ्च"* इति मनइन्द्रियव्युदासार्थम् । *"अर्थाः"* विषयाः । अर्थ्यन्ते ज्ञायन्त इत्यर्थः । पुनः *"पञ्च"* इति ग्रहणं धर्मायतनविषयनिरासार्थम् ।

*"तद्विज्ञानाश्रयाः"* इति । तच्छब्दोऽर्थानपेक्षते । तेष्वर्थेषु तेषां वा विज्ञानानि तद्विज्ञानानि, तेषामाश्रयास्तद्विज्ञानाश्रयाः ।

*"रूपप्रसादाः"* इति । रूपाणि च तानि प्रसादाश्च त इति रूपप्रसादाः । अनेन विशेषणेन मनइन्द्रियं निरस्तं भवति । मनोऽपि हि तद्विज्ञानाश्रयः, "पञ्चानां सहजाश्च तैः" ( अभि० १. ४३ ) इति सिद्धान्तात् अनुशयितास्ते, न तु मनो रूपस्वभावमित्यतो निरस्तम् ।

रूपग्रहणं त्विह श्रद्धाप्रसादनिरासार्थम् । 'तद्विज्ञानाश्रयाः' इत्यनेन विशेषणेन च श्रद्धाया अप्रसङ्ग इति चेत् ? न; बहुव्रीहिकल्पनायां तत्प्रसङ्गसम्भवात् । रूपग्रहणे तु बहुव्रीहिकल्पना निवर्तते । न हि रूपमयोऽस्ति प्रसादो यस्य तद्विज्ञानान्याश्रयत्वेन कल्पेरन् । प्रसादग्रहणं पुनरिन्द्रियग्राह्यवस्तुव्यतिरिक्तरूपप्रसादविशेषज्ञापनार्थम् ।

*वैभाषिका* हि ब्रुवते—भूतविकारविशेषा एवेन्द्रियाणीति । प्रवचने तु नैवम्, किं तर्हि ? रूपादिविषयव्यतिरिक्तान्यच्छान्यतीन्द्रियाणि स्वविज्ञानानुमेयानीन्द्रियाणि येषां चक्षुरादीन्यधिष्ठानानि दृश्यन्ते ।

*तद्विज्ञानाश्रयाः* इति च विशेषणमन्योन्यलक्षणसाङ्कर्यनिवृत्त्यर्थम् । यदि हि रूपप्रसादाश्चक्षुरादय इत्येतावदवक्ष्यत्, चक्षुरपि श्रोत्रादि प्रासंक्ष्यत, श्रोत्रादि

रूपशब्दगन्धरसस्प्रष्टव्यविज्ञानानामाश्रयभूता ये पञ्च **रूपात्मकाः प्रसादास्ते** यथाक्रमं **चक्षुः**श्रोत्रघ्राणजिह्वाकाया वेदितव्याः। यथोक्तं **भगवता**—"चक्षुर्भिक्षो आध्यात्मिकमायतनं चत्वारि महाभूतान्युपादाय रूपप्रसादः" ( विभ० ) इति विस्तरः।

अथ[1] वा[1]—यान्येतानि चक्षुरादीन्युक्तानि, **तद्विज्ञानाश्रया रूपप्रसादाश्चक्षुरादयः**। चक्षुर्विज्ञानाद्याश्रया इत्यर्थः। एवं कृत्वा **प्रकरणग्रन्थो**ऽप्यनुवृत्तो भवति—"चक्षुः कतमत्? चक्षुर्विज्ञानाश्रयो रूपप्रसादः" ( ) इति विस्तरः॥ ९॥

निर्दिष्टानि पञ्चेन्द्रियाणि॥

अर्थाः पञ्च निर्देश्याः, तत्र तावत्—

---

वा चक्षुः। यतस्त्वेवं विशेष्यते—रूपविज्ञानाश्रयो यो रूपप्रसादस्तच्चक्षुरिति, अतो लक्षणसाङ्कर्यं न भवति। न हि श्रोत्रमन्यद् वेन्द्रियं रूपविज्ञानस्याश्रयः। एवं यावत् कायविज्ञानाश्रयो यो रूपप्रसादस्तत् कायेन्द्रियमिति वक्तव्यम्। *यथोक्तं भगवतेति*। एतद्व्याख्यानं सूत्रानुगतमित्यभिप्रायः। कथमिति? *आध्यात्मिक*मिति। विज्ञानाश्रय इत्यर्थः। आत्मशब्दो हि चित्तम्, आत्मा इत्युपचर्यत इति वक्ष्यते। आत्मन्यधि अध्यात्मम्। अध्यात्ममेव आध्यात्मिकम्। आत्मनि चित्तलक्षणे कर्तव्ये हेतुरित्ययमर्थं आध्यात्मिकशब्देनोच्यते। विज्ञानाश्रय इति यावदुक्तं भवति।

*अथ वा यानीति*। विस्तरः—अथ वा तच्छब्देनेन्द्रियाण्यभिसम्बध्यन्ते। चक्षुर्विज्ञानम्, श्रोत्रविज्ञानमित्येवमादि। प्रवचने प्रसिद्धमेतद्। न तु रूपविज्ञानम्, शब्दविज्ञानमिति। लोके तु कदाचिदेवं भवेत्। तस्मादिदं व्याख्यानान्तरमाश्रीयते। तस्मादाह—*एवं च कृत्वा प्रकरणग्रन्थोऽप्यनुवृत्त* इति। विस्तरः—कथमिहासिद्धमसिद्धेन साध्यते, चक्षुरेव ह्यसिद्धम्, तदसिद्धौ चक्षुर्विज्ञानमप्यसिद्धम्, कथं तत् तेन तदाश्रयतया साध्यते? सिद्धा एव ते पञ्च विशेषाः, परस्परविशेषोपलक्षणार्थं तु वयमेतैश्चक्षुरादिभिस्तान् विशेषयन्तो दर्शयामः। एतदुक्तं भवति—एतस्यान्यस्यैकस्य स्वसंवेद्यस्य विज्ञानविशेषस्य य आश्रयो रूपप्रसादस्तच्चक्षुरिन्द्रियम्। एवं यावदेतस्य पञ्चमस्य स्वसंवेद्यस्य विज्ञानविशेषस्य य आश्रयो रूपप्रसादस्तत् कायेन्द्रियमिति नासिद्धेनासिद्धस्य साधनम्॥ ९॥

---

१–१. का० पुस्तके नास्ति।

**रूपं द्विधा,**

वर्णः, संस्थानं च। तत्र वर्णश्चतुर्विधो नीलादिः। तद्भेदा अन्ये। संस्थानमष्टविधं दीर्घादि विसातान्तम्।

तदेव रूपायतनं पुनरुच्यते—

**विंशतिधा,**

तद्यथा—नीलम्, पीतम्, लोहितम्, अवदातम्, दीर्घम्, ह्रस्वम्, वृत्तम्, परिमण्डलम्, उन्नतम्, अवनतम्, सातम्, विसातम्, अभ्रम्, धूमः, रजः, महिका, च्छाया, आतपः, आलोकः, अन्धकारमिति। **केचित्** नभश्चैकवर्णमिति एकविंशतिं सम्पठन्ति। तत्र सातम् = समस्थानम्। विसातम् = विषमस्थानम्। महिका = नीहारः। आतपः = सूर्यप्रभा। आलोकः = चन्द्रतारकाग्न्योषधिमणीनां प्रभा। छाया = यत्र रूपाणां दर्शनम्। विपर्ययादन्धकारम्। शेषं सुगमत्वान्न विपञ्चितम्। अस्ति रूपायतनम् — वर्णतो विद्यते न संस्थानतः, नीलपीतलोहितावदातच्छायातपालोकान्धकाराख्यम्; अस्ति संस्थानतो न वर्णतः,

---

"*रूपं द्विधा*" इति। चक्षुषोऽर्थो वर्णसंस्थानभेदाद् द्विप्रकारः। लोकप्रतीतत्वात् तस्य स्वलक्षणमनुक्त्वा प्रभेद एव कथ्यते। *वर्णश्चतुर्विधो नीलादि*रिति। नीललोहितपीतावदाता वर्णाः। *तद्भेदा नान्य* इत्यभ्रादयः।

अपरे व्याचक्षते—*तद्भेदा अन्य* इति नीलादिवर्णचतुष्टयसम्पर्कविशेषात् काकाण्डवर्णादयोऽपि जायन्ते, न केवलमभ्रादय इति। *संस्थान*माकृतिविशेषः।

पुनस्तदेवान्तर्गणिकेन भेदेन भिद्यते—"*विंशतिधा*" इति। तद्यथा[1]—संस्थानमष्टविधं दीर्घादिविसातान्तम्, शेषो द्वादशविधो वर्ण इति विंशतिधा। *नभश्चैकवर्ण*मिति। यद् दूरतो वैदूर्यमित्याकारं दृश्यते। *वृत्तं* वर्तुलम्। *परिमण्डलं* चक्रलम्। *उन्नतं* स्थूलादिरूपम्। *अवनतं* निम्नरूपम्। *यत्र रूपाणां दर्शन*मिति वचनं छायान्धकारयोर्नानाकरणप्रदर्शनार्थम्। *न विपञ्चितं* न विभक्तमित्यर्थः।

इदमिह विचार्यते—यदि नीलादिवर्णचतुष्टयभेदा एवाभ्रादयो न तद्व्यतिरिक्ता भवन्ति, यथेह काकाण्डादिवर्णा नोक्तास्तथाभ्रादयोऽपि न वक्तव्या इति? नैतद् *व्याख्यानकारै*र्विचारितम्। शक्यं त्वेवं भणितुम्—मायारूपसदृशत्वान्नीलादिभेदभूता अपि तेऽभ्रादयः पृथगुक्ताः। तथा हि ते दूरतो भित्तय इव लक्ष्यन्ते, अभ्याशगमने तु न दृश्यन्ते। मा कस्यचिदेवं भूत्—नैतत्

---

1. नीलपीतादि—इत्यधिकः पाठो मुद्रितपुस्तके।

**दीर्घादीनां प्रदेशः कायविज्ञप्तिस्वभावः; अस्त्युभयथा, परिशिष्टं रूपायतनम्।**

**आतपालोकावेव वर्णतो विद्येते इत्यपरे; दृश्यते हि नीलादीनां दीर्घादिपरिच्छेद इति।**

**कथं पुनरेकं द्रव्यमुभयथा विद्यते? अस्त्युभयस्य तत्र प्रज्ञानात्। ज्ञानार्थो ह्येष विदिः, न सत्तार्थः। कायविज्ञप्तावपि तर्हि प्रसङ्गः।**

**उक्तं रूपायतनम्॥**

---

किञ्चिदस्ति, विमतिर्वा—किमस्त्येतत्, उत भ्रान्तिमात्रमिति। तद्विपर्याससंशयनिवृत्त्यर्थमिमेऽभ्रादय उक्ताः। सन्त्येवामी रूपायतनस्वभावा इति। *दीर्घादीनां प्रदेश* इति। दीर्घादिविसातान्तप्रदेश इत्यर्थः। कतरोऽसौ प्रदेशः? इत्याह—*कायविज्ञप्तिस्वभाव* इति। कायविज्ञप्तिर्हि कदाचिद्दीर्घा, कदाचिद्ध्रस्वा, कदाचिद् यावद्विसातेति कीदृशी पुनः सावगन्तव्या? तदालम्बनचित्तसमुत्थापितं यत् कायकर्म। अकायकर्मस्वभावं तु दीर्घादिविसातान्तं निरस्तं बोद्धव्यम्। *अस्त्युभयथा, परिशिष्ट*मिति। यन्निरस्तं दीर्घादि, अभ्रधूमरजोमहिकाश्च।

*दृश्यते हि नीलादीनां दीर्घादिपरिच्छेद* इति। नीलपीतलोहितावदातच्छायान्धकाराणां दीर्घादिसंस्थानग्रहणम्। तस्मादेषामपि तृतीयायां कोट्यामन्तर्भाव इत्यभिप्रायः।

*कथं पुनरेकं द्रव्यमुभयथा विद्यत* इति। कथमेकं द्रव्यं वर्णसंस्थानात्मकं भवति, वर्णरूपाद्धि संस्थानरूपं द्रव्यान्तरमिति वः सिद्धान्तः। *उभयस्य तत्र प्रज्ञानात्*। वर्णसंस्थानस्य तत्र ग्रहणात्। *ज्ञानार्थो ह्येष विदिर्न सत्तार्थ* इति। "विद ज्ञाने" (मा० धा० २.५५) इत्येतस्य धातोर्लुग्विकरणस्यैतद्रूपं विद्यत इति, न तु "विद सत्तायाम्" (मा० धा० ४.६२) इत्येतस्य धातोः श्यन्विकरणस्यैतद्रूपमित्यर्थः। ज्ञानं तत्रोभयाकारं प्रवर्तते, न तु द्रव्यमेकमुभयलक्षणमिति वैभाषिकपरिहारः। *कायविज्ञप्तावपि तर्हि प्रसङ्ग* इत्याचार्यः। न हि कायविज्ञप्तौ गृह्यमाणायां वर्णग्रहणं न प्रवर्तते।

*वैभाषिका*णामयमभिप्रायः—नीलादिग्रहणमातपालोकग्रहणं वा संस्थाननिरपेक्षं प्रवर्तते, कायविज्ञप्तिग्रहणं तु वर्णनिरपेक्षम्; परिशिष्टरूपायतनग्रहणं तु वर्णसंस्थानापेक्षं प्रवर्तत इति। *सौत्रान्तिक*पाक्षिकस्त्वयमा*चार्यो* नैनमर्थं प्रयच्छतीति। न हि चाक्षुषमेतत् संस्थानग्रहणम्, मानसं त्वेतत् परिकल्पितम्। वर्णसन्निवेशविशेष एव हि संस्थानम्। न संस्थानं नाम द्रव्यं किञ्चिदस्ति; वर्णाग्रहणे संस्थानग्रहणाभावात्। एतच्च *कर्मकोशस्थाने* परीक्षिष्यते।

**शब्दस्त्वष्टविधः,**

उपात्तानुपात्तमहाभूतहेतुकः सत्त्वासत्त्वाख्यश्चेति[1] चतुर्विधः। स पुनर्मनोज्ञामनोज्ञभेदादष्टविधो भवति। तत्रोपात्तमहाभूतहेतुको यथा—हस्तवाक्छब्दः, अनुपात्तमहाभूतहेतुको यथा—वायुवनस्पतिनदीशब्दः, सत्त्वाख्यो वाग्विज्ञप्तिशब्दः, असत्त्वाख्योऽन्यः। उपात्तानुपात्तमहाभूतहेतुकोऽप्यस्ति शब्द इत्यपरे, तद्यथा—हस्तमृदङ्गसंयोगज इति। स तु यथैको वर्णपरमाणुर्न भूतचतुष्कद्वयमुपादाय[2] वर्तते[2], तथा नैवेष्टव्य इति।

**उक्तः शब्दः॥**

---

*सत्त्वासत्त्वाख्यश्चेति* वाग्विज्ञप्तिशब्दः, तद्व्यतिरिक्तश्चेत्यर्थः। सत्त्वासत्त्वसंख्यातश्चेति केचित् पठन्ति। अयमेव चेहार्थोऽभिप्रेतः। यदि हि 'सत्त्वासत्त्वसन्तानजः' इत्ययमर्थोऽभिप्रेतो भवेत्, सत्त्वाख्यो वाग्विज्ञप्तिशब्दोऽसत्त्वाख्योऽन्य इत्येवं वक्ष्यमाणकं विवरणं निःप्रयोजनमेव। तस्मात् 'सत्त्वासत्त्वाख्यश्च' इति पाठः स्फुटः पठितव्यः। *उपात्तमहाभूतहेतुक* इति। प्रत्युत्पन्नानीन्द्रियाविनिर्भागानि भूतान्युपात्तानि, अन्यान्यनुपात्तानि। उपात्तानि महाभूतानि हेतुरस्येत्युपात्तमहाभूतहेतुकः। *यथा हस्तवाक्छब्द* इति। यदि सत्त्वसन्तानज इत्यभिप्रेतः, बाह्योऽपि हि निर्मितो मानुषाकारो हस्तवाक्छब्दं कुर्यात्। स चानुपात्तमहाभूतहेतुकस्वभावोऽवगन्तव्यः; इन्द्रियविनिर्भागवर्तित्वात्। स च मानुषीमपि वाचं निर्मातृवशाद् भाषेत। वक्ष्यति हि—

"एकस्य भाषमाणस्य भाषन्ते सर्वनिर्मिताः।
एकस्य तूष्णीम्भूतस्य सर्वे तूष्णीम्भवन्ति ते॥"

तस्य च बाह्यनिर्मितशब्दस्यानुपात्तमहाभूतहेतुक इत्यत्र ग्रहणम्। *यथा वायुवनस्पतिनदीशब्द* इति। यथाशब्दस्योदाहरणार्थत्वात्। *सत्त्वाख्यो वाग्विज्ञप्तिशब्दोऽसत्त्वाख्योऽन्य* इति। सत्त्वमाचष्टे सत्वाख्यः। वाग्विज्ञप्तिशब्देन हि 'सत्त्वोऽयम्' इति विज्ञायते, तं वाग्विज्ञप्तिशब्दं वर्जयित्वान्यः शब्दो हस्तशब्दोऽपि यावदसत्त्वाख्य एव, किमङ्ग असत्त्वसन्तानज इति व्याख्यातं भवति। तदेवमुपात्तमहाभूतहेतुकः सत्त्वाख्यश्चासत्त्वाख्यश्च भवति; अनुपात्तमहाभूतहेतुकोऽपि निर्मितशब्दो वाग्विज्ञप्तिस्वभावः सत्त्वाख्यः, तत्रैव हस्तशब्दो वायुवनस्पत्यादिशब्दश्चासत्त्वाख्य इति चतुर्विधः शब्दो *मनोज्ञामनोज्ञभेदात् पुनरष्टविधो भवति*। *यथैको वर्णपरमाणुरिति न भूतचतुष्कद्वयमुपादाय वर्तते शब्दः;*

---

१. सत्त्वासत्त्वसंख्यातश्चेति—का०। २–२. ॰मुपादायेष्यते—का०।

रसः ।

**षोढा,**

मधुराम्ललवणकटुकतिक्तकषायभेदात् ॥

**चतुर्विधो गन्धः,**

सुगन्धदुर्गन्धयोः समविषमगन्धत्वात् । त्रिविधस्तु शास्त्रे— सुगन्धः, दुर्गन्धः, समगन्ध इति ।

**स्पृश्यमेकादशात्मकम् । १० ॥**

स्प्रष्टव्यमेकादशद्रव्यस्वभावम्—चत्वारि महाभूतानि, श्लक्ष्णत्वम्, कर्कशत्वम्, गुरुत्वम्, लघुत्वम्, शीतम्, जिघत्सा, पिपासा चेति। तत्र भूतानि पश्चाद् ( १. १२ ) वक्ष्यामः । श्लक्ष्णत्वम् = मृदुता । कर्कशत्वम् = परुषता । गुरुत्वम् = येन भावास्तुल्यन्ते । लघुत्वं विपर्ययात् । शीतम् = उष्णाभिलाषकृत् । जिघत्सा = भोजनाभिलाषकृत् । कारणे कार्योपचारात् । यथा—

"बुद्धानां सुख उत्पादः सुखा धर्मस्य देशना ।
सुखा सङ्घस्य सामग्री समग्राणां तपः सुखम्" ॥ ( ध० प० १९४ ) इति ।

---

उपादायरूपत्वाद्, वर्णपरमाणुवदिति भावः ।

*"रसः षोढा"* इति। षण्मूलजातिमधिकृत्यैवमुक्तम्। रसषट्कस्यान्योन्यसम्पर्कविशेषात् त्वतिबहुप्रकारा रसाः सम्भवन्ति। एककद्विकत्रिकचतुष्कपञ्चकषट्कसम्पर्कयोगाद्धि चरके त्रिषष्टी रसा उपदिष्टाः ।

*सुगन्धदुर्गन्धयोः समविषमगन्धत्वादिति* । अनुत्कटोत्कटगन्धत्वादित्यर्थः । अस्मिन् पक्षे द्विविधो गन्ध इष्टः । *त्रिविधस्तु शास्त्र* इति । समगन्धोऽन्यस्तृतीय इत्यर्थः ।

अपरे पुनर्व्याचक्षते—'समगन्ध इति तयोरेवैकदेशः' इति। स एवार्थो भवति, शब्दमात्रं तु भिद्यते ।

*शीतमुष्णाभिलाषकृदिति* । सम्भवं प्रत्येवमुच्यते। यो धर्म उष्णाभिलाषं कुर्यात् तच्छीतं नामोपादायरूपम् । ग्रीष्मे यद्यपि तन्न कुर्यात्, तज्जातीयत्वात्तु शीतमेव तदवगन्तव्यम्। *कारणे कार्योपचारादिति*। *अत्तुमिच्छा जिघत्सा* चैतसिको धर्मः, तस्य कारणम्। अन्तरुदरे कायेन्द्रियेण यः स्पृश्यते सा जिघत्सा नामोपादायरूपम्। *यथा—"बुद्धानां सुखमुत्पादः"* इत्यादि। अभ्युदयनिःश्रेयससुखकारणत्वाद् बुद्धोत्पादस्य स सुखमित्युच्यते, तद्वत्। एवं पिपासापि वक्तव्या ।

तत्र रूपधातौ जिघत्सापिपासे न स्तः, शेषमस्ति। यद्यपि तत्र वस्त्राण्येकशो न तुल्यन्ते, सञ्चितानि पुनस्तुल्यन्ते। शीतमुपघातकं नास्ति, अनुग्राहकं किलास्ति।

यदेतद् बहुविधं रूपमुक्तम्, तत्र कदाचिदेकेन द्रव्येण चक्षुर्विज्ञानमुत्पद्यते यदा तत्प्रकारव्यवच्छेदो भवति। कदाचिद् बहुभिर्यदा न व्यवच्छेदः, तद्यथा-सेनाव्यूहमनेकवर्णसंस्थानं मणिसमूहं च दूरात् पश्यतः।

एवं श्रोत्रादिविज्ञानं वेदितव्यम्।

कायविज्ञानं तु परं पञ्चभिः स्प्रष्टव्यैरुत्पद्यत इत्येके। चतुर्भिर्महाभूतैरेकेन च श्लक्ष्णत्वादिना सर्वैरेकादशभिरित्यपरे।

ननु चैवं समस्तालम्बनत्वात् सामान्यविषयाः पञ्च विज्ञानकायाः प्राप्नुवन्ति,

---

*सञ्चितानि पुनस्तुल्यन्त* इति सूक्ष्मगुरुत्वसद्भावादित्यभिप्रायः। अत्रानुमानम्—'सगुरुत्वं रूपावचरं वस्त्रादि; आधाराधेयभावात्, कुण्डबदरवद्' इति।

*अनुग्राहकं किलास्तीति*। किलशब्दो *वैभाषिक*मतद्योतनार्थम्। स्वमतं तु—'समाधिरेवात्रानुग्राहकः, किमत्र शीतेन परिकल्पितेन' इति। *यदा तत्प्रकारव्यवच्छेद* इति। यदा नीलादिप्रकारनिमित्ताभोगः। *'एवं श्रोत्रादिविज्ञान*मिति। य एष बहुविधः शब्द उक्तः, तत्र कदाचिदेकेन द्रव्येण श्रोत्रविज्ञानमुत्पद्यते, यदा तत्प्रकारव्यवच्छेदो भवति; कदाचिद् बहुभिर्यदा न व्यवच्छेदः, तद्यथा तूर्यशब्दसमूहमनेकाकारतारमन्द्रतादिशब्दरूपं शृण्वतः।

एवं घ्राणजिह्वाविज्ञाने अपि स्वविषये योज्ये।

*कायविज्ञानं तु परं पञ्चभिरि*ति। कथम्? कदाचिदेकेन द्रव्येणोत्पद्यते यदा तत्प्रकारव्यवच्छेदो भवति; कदाचिद् द्वाभ्यां यावत्पञ्चभिर्यदा न व्यवच्छेदः। *एकेन च श्लक्ष्णत्वादिने*ति। किमत्र कारणम्? कर्कशत्वादीनामन्यभूतचतुष्काश्रितत्वात्।

ननु चैवमिति। विस्तरः—यथा चक्षुःश्रोत्रघ्राणजिह्वाकायविज्ञानालम्बनान्यभिसमस्य मनोविज्ञानं गृह्णातीति कृत्वा सामान्यलक्षणविषयं तद् व्यवस्थाप्यते, तथा नीलपीतलोहितावदातालम्बनानां चतुर्णां चक्षुर्विज्ञानानां तानि चत्वारि बहुतराणि चालम्बनान्यभिसमस्य चक्षुर्विज्ञानमेकं गृह्णातीति सामान्यलक्षणविषयं तत् प्राप्नोति, रूपायतनसामान्यलक्षणमस्यालम्बनमिति कृत्वा।

न स्वलक्षणविषयाः ? आयतनस्वलक्षणं प्रत्येते स्वलक्षणविषया इष्यन्ते, न द्रव्यस्वलक्षणमित्यदोषः ।

इदं विचार्यते—कायजिह्वेन्द्रिययोर्युगपद् विषयप्राप्तौ सत्यां कतरद् विज्ञानं पूर्वमुत्पद्यते ? यस्य विषयः पटीयान् । समप्राप्ते तु विषये जिह्वाविज्ञानं पूर्वमुत्पद्यते; भोक्तुकामतावर्जितत्वात् सन्ततेः ॥ १० ॥

उक्ताः पञ्चेन्द्रियार्थाः, यथा च तेषां ग्रहणम् ॥

अविज्ञप्तिरिदानीं वक्तव्या । सेयमुच्यते—

---

तथा [illegible] स्वविषयेषु योज्यानि । *आयतनस्वलक्षणं प्रतीति* । स्वं लक्षणं स्वलक्षणम्, आयतानां स्वलक्षणम् आयतनस्वलक्षणम् चक्षुर्विज्ञानविज्ञेयत्वादि, रूपायतनत्वादि वा; तत् प्रति *एते* पञ्च विज्ञानकायाः *स्वलक्षणविषया इष्यन्ते* प्रवचने । *न द्रव्यस्वलक्षणं प्रति* । स्वलक्षणविषया इष्यन्त इति प्रकृतम् । द्रव्याणां नीलादिकानां स्वलक्षणं नीलाद्याकारचक्षुर्विज्ञानादिविज्ञेयत्वम्, नीलाकारादि वा । न तत् प्रत्येते पञ्च विज्ञानकायाः स्वलक्षणविषया इष्यन्त *इत्यदोषः* । *युगपद्विषयसम्प्राप्ताविति* । कायजिह्वेन्द्रिययोर्युगपद्विषयसम्प्राप्तिः सम्भवति । द्वयोश्च विज्ञानयोर्युगपत् प्रवृत्तिर्न सम्भवति ।

अतः पृच्छति—*कतरद् विज्ञानं पूर्वमुत्पद्यत* इति । *यस्य विषयः पटीयान्* । यदि कायेन्द्रियस्य विषयः पटुतरः, कायविज्ञानं पूर्वमुत्पद्यते । अथ जिह्वेन्द्रियस्य विषयः पटीयान्, जिह्वाविज्ञानं पूर्वमुत्पद्यते । *समे प्राप्ते तु विषये* । तुल्य इत्यर्थः । *जिह्वाविज्ञानं पूर्वमुत्पद्यते* । कस्मात् ? *भोक्तुकामतावर्जितत्वात् सन्ततेः* । भोजनेच्छाप्रवणत्वादात्मभावस्येत्यर्थः । 'पूर्वं जिह्वाविज्ञानमुत्पद्यते' इति वचनात् 'पश्चात् कायविज्ञानमुत्पत्स्यते' इत्यर्थादुक्तं भवति । तेनात्र विचार्यते—किं योऽसौ जिह्वाविषयक्षणेन सह प्राप्तः कायविषयक्षण आसीत्, तत्र तत्कायविज्ञानमुत्पद्यते ? आहोस्विदन्यस्मिन् कायविज्ञानविषयक्षण इति ? अन्यस्मिन्नित्याह । कथमालम्बननियमो न भिद्यते ? नैष दोषः; यत्तद्विषयालम्बनं विज्ञानं तदप्रतिसंख्यानिरोधनिरुद्धम्, अन्यत्तु तत्सदृशं कायविज्ञानमुत्पद्यत इत्यतः पश्चात् तदुत्पद्यत इत्युच्यते; जातिसामान्येनैकत्वोपचारात् ॥ १० ॥

अनेककथाप्रपञ्चव्यवहितत्वान्नष्ट इवाविज्ञप्तेरुद्देशाधिकार इत्यत इदमुपन्यस्यति—*उक्ताः पञ्चेन्द्रियार्था यथा च तेषां ग्रहणमि*ति । 'कदाचिदेकेन द्रव्येण चक्षुर्विज्ञानमुत्पद्यते' इत्येवमादिना । तेषां तु ग्रहणमिति कर्मणि षष्ठी ।

*अविज्ञप्तिरिदानीं वक्तव्येति* । "रूपं पञ्चेन्द्रियाण्यर्थाः पञ्चाविज्ञप्तिरेव च"

**विक्षिप्ताचित्तकस्यापि योऽनुबन्धः शुभाशुभः ।**
**महाभूतान्युपादाय स ह्यविज्ञप्तिरुच्यते[1] ॥ ११ ॥**

**विक्षिप्ताचित्तकस्येति** तदन्यचित्तस्यापि । **अचित्तकस्यापी**त्यसंज्ञिनिरोधसमापत्तिसमापन्नस्यापि । अपिशब्देनाविक्षिप्तसचित्तकस्यापीति[2] विज्ञायते । **योऽनुबन्ध** इति । यः प्रवाहः । **शुभाशुभ** इति कुशलाकुशलः ।

कुशलाकुशले प्राप्तिप्रवाहोऽप्यस्तीदृश इति तद्विशेषणार्थमुच्यते—**महा-**

---

( अभि० को० १.९ ) इत्यविज्ञप्तिरेवावशिष्यते, तस्या लक्षणनिर्देशावसर इति वक्तव्या ।

*"विक्षिप्ताचित्तकस्य"* इति केचिदेवं वृत्तिं पठन्ति । अस्मिन् पाठ एवं सूत्रविग्रहः—विक्षिप्तं नास्ति वा चित्तमस्येति विक्षिप्ताचित्तकः । अथ वा—विक्षिप्तं चित्तं नास्ति वा चित्तमस्येति विक्षिप्ताचित्तकः । एकस्य चित्तशब्दस्य लोपः ।

केचिदेवं पठन्ति—*विक्षिप्तस्येति* । अस्मिन् पाठ उत्तरपदद्वयस्य बहुव्रीहिं कृत्वा पश्चादेवं विग्रहः—विक्षिप्तश्चाचित्तकश्च विक्षिप्ताचित्तकः । विक्षिप्तः पुद्गलो विक्षिप्तचित्त इत्यर्थः । *विक्षिप्ताचित्तस्येति तदन्यचित्तस्यापी*ति । अविक्षिप्तचित्तादन्यचित्तस्येत्यर्थः । तद्यथा—कुशलाया अविज्ञप्तेः समुत्थापकं चित्तं कुशलम्, तदन्यचित्तोऽकुशलाव्याकृतचित्तः, स इह विक्षिप्तचित्तोऽभिप्रेतः । अकुशलायास्त्वविज्ञप्तेरकुशलं चित्तं समुत्थापकम्, तदन्यचित्तः कुशलाव्याकृतचित्तः, स चापि विक्षिप्तचित्तो वेदितव्यः । तस्य तदन्यचित्तस्यापि । *अचित्तकस्यापीत्यसंज्ञिनिरोधसमापत्तिसमापन्नस्यापि* । *अपिशब्देनाविक्षिप्तसचित्तकस्यापीति विज्ञायत* इति । एतत्पुद्गलद्वयव्यतिरिक्तवृतीयस्याप्यर्थः ।

*योऽनुबन्ध इति* । *प्रवाह* इति । यो धर्मो नित्यप्रवाहयुक्त इत्यर्थः । प्रवाहेण प्रवाही निर्दिश्यते; प्रवाहोपलक्ष्यत्वात् । अथ वा—अनुबध्नातीत्यनुबन्धः । प्रवाह इति च व्याख्यापदं कृतबहुव्रीहिकम्—प्रवृत्तः प्रकृष्टो वा वाहोऽस्येति प्रवाहो धर्मः । स एव निर्दिश्यते, न तत्स्रोतः ।

*कुशलाकुशल* इति । कुशलाकुशल एवेत्यवधारणम् । अव्याकृतो नास्तीत्यर्थः । एतेन चक्षुरादयो व्युदस्ता वेदितव्याः । *प्राप्तिप्रवाहोऽप्यस्तीदृश* इति । तत्प्राप्तिरपि विक्षिप्ताविक्षिप्ताचित्तस्यापि प्रवाहिणी कुशलाकुशलैव चेति *तद्विशेषणार्थ-*

---

१. ॰रिष्यते—पाठा॰ ।
२. ॰सुचित्तस्यापीति—का॰ ।

**भूतान्युपादायेति** । हेत्वर्थ उपादायार्थ इति **वैभाषिकाः;** जननादिहेतुभावात् । **स ह्यविज्ञप्तिरिति** । हिशब्दस्तन्नामकरणविज्ञापनार्थः । रूपक्रियास्वभावापि सती विज्ञप्तिवत् परं न विज्ञापयतीत्यविज्ञप्तिः[1] । **उच्यत** इति **आचार्य**वचनं दर्शयति।

समासतस्तु विज्ञप्तिसमाधिसम्भूतं कुशलाकुशलं रूपमविज्ञप्तिः ॥ ११ ॥

---

*गुच्यते । महाभूतान्युपादायेति* । महाभूतहेतुक इत्यर्थः । यथा इन्धनमुपादायाग्निर्भवतीत्युक्ते इन्धनहेतुकोऽग्निरिति गम्यते । *जननादिहेतुभावादिति* । "जननान्निश्रयात् स्थानादुपस्तम्भोपबृंहणात्" ( ) । जननहेतुस्तेभ्य उत्पत्तेः । निश्रयहेतुर्जातस्य भूतानुविधायित्वादाचार्यादिनिश्रयवत्, प्रतिष्टाहेतुराधारभावाच्चित्रकुड्यवत्, उपस्तम्भहेतुरनुच्छेदहेतुत्वात्, उपबृंहणहेतुर्वृद्धिहेतुत्वात् । कतमानि महाभूतान्युपादाय ? किमाश्रयमहाभूतानि ? उताहो नाश्रयमहाभूतानि ? आश्रयमहाभूतानीत्याहुः । *तन्नामकरणज्ञापनार्थ* इति । यस्माद् *रूपक्रियास्वभावापि सती विज्ञप्तिवत् परं न विज्ञापयति तस्मादविज्ञप्ति*रित्यर्थः । 'रूपक्रियास्वभावापि' इत्युभयविशेषणं किमर्थम् ? यद्धि वस्तु रूपस्वभावमेव न क्रियास्वभावं तन्न परं गमयति, तद्यथा चक्षुरादयः । यदपि क्रियास्वभावमेव न रूपस्वभावं तदपि परं न गमयति, तद्यथा चेतना । यत्तु उभयस्वभावं तत् परं गमयति, तद्यथा विज्ञप्तिः । विज्ञप्तिर्हि स्वसमुत्थापकं चित्तं कुशलाकुशलाव्याकृतं सौम्यं क्रूरमनुभयमिति वा परं विज्ञापयति । तेन विज्ञप्तिवदिति विपरीतदृष्टान्तप्रयोगः ।

*समासतस्त्विति* । विस्तरः—शिष्यसुखावबोधार्थं संक्षेपतो वाक्येन तदविज्ञप्तिरूपं दर्शयत्याचार्यः । *विज्ञप्तिसमाधिसम्भूतं कुशलाकुशलं रूपमविज्ञप्तिरिति* । यथासम्भवमेतद् योज्यम् । कायवाग्विज्ञप्तिसम्भूतं कुशलं प्रातिमोक्षसंवरसंगृहीतं नैवसंवरनासंवरसंगृहीतं च । अकुशलं पुनरसंवरसंगृहीतं नैवसंवरनासंवरसंगृहीतं च । समाधिसम्भूतं तु कुशलमेव । तद् द्विविधम्—सास्रवसमाधिसम्भूतं ध्यानसंवरस्वभावम्, अनास्रवसमाधिसम्भूतमनास्रवसंवरस्वभावम् । उपादायरूपस्वभावं च न चित्तचैतसिकादिस्वभावमित्यवगन्तव्यम् ।

ननु चैवं विज्ञप्तिरप्यविज्ञप्तिः प्राप्नोति, साप्युत्तरा सभागहेतुभूतपूर्वविज्ञप्तिसम्भूता ? कुशलाकुशलमेवेत्यवधारणाद् विज्ञप्त्यभावप्रसङ्गः । विज्ञप्तिर्ह्यव्याकृतापि सम्भवति । अत एव दिव्यं चक्षुः श्रोत्रं च समाधिसम्भूतमपि सद् विज्ञप्तिविपाकजं च रूपं नाविज्ञप्तिः प्रसजति इति ।

---

१. विज्ञपयती०—का० ।

अत्राचार्यः *सङ्घभद्र* इदमविज्ञप्तिलक्षणं सूत्रं दूषयति—

"न्यूनं शास्त्रापेतं हानिरतस्याः प्रसज्यते तत्त्वम् ।
अपिशब्दाधिकवचनं विशेष्यमविशेषितं चात्र ॥

अनुबन्धो हि प्रवाहस्तेनैव व्याख्यातः । न चाद्यः क्षणः प्रवाहः, मा भूदतिप्रसङ्गः । तस्मात् तस्यात्र लक्षणे नास्त्यवरोध इति *न्यूनम्* । प्रवाहस्य चाद्रव्यत्वादद्रव्यमविज्ञप्तिरिति *शास्त्रापेतम्* । समाहितायाश्च नास्ति विक्षिप्तचित्ताचित्तकस्यानुबन्ध इति सा चाविज्ञप्तिर्न प्रसज्यत इति *हानिः* । अविक्षिप्तचित्तकस्य तदनुबन्धान्नैष दोष इति चेत् ? शुभाशुभाया विज्ञप्तेरविज्ञप्तिलक्षणप्रसङ्ग इत्य*तस्याः प्रसज्यते तत्त्वम्* । अचित्तकस्यापीति च अ[illegible] पूर्वेणैव कृतत्वात् । विक्षिप्तचित्तकस्यापीत्यनेन हि सर्वसचित्तकावस्थाग्रहणम् । का पुनरन्यावस्था ? या द्वितीयेनापिशब्देन संगृह्येतेत्य*पिशब्दाधिकवचनम्* । अचित्तकं चाधिकृत्य शुभोऽविज्ञप्त्यनुबन्धो विशेषणीयः, न च व्याख्यानेऽपि विशेषित इति *विशेष्यमविशेषितम्* । इदं चापरं विशेष्यमविशेषितम्—अप्रतिघं रूपमिति । एवमनेकदोषदुष्टत्वान्न सम्बद्धमेतल्लक्षणम्" इति ।

अत्र ब्रूमः—यत्तावदुक्तम् 'न्यूनम्, प्रवाहस्याविज्ञप्त्युपदेशादाद्य क्षणो नाविज्ञप्तिः स्याद्' इति । इदं तावदसौ प्रष्टव्यः—कोऽयं प्रवाहो नाम ? बहुषु क्षणेषु प्रवाह इत्याख्या । यद्येवम्, आद्योऽपि क्षणः प्रवाहः सिध्यति, प्रथमक्षणप्रभृति बहुषु क्षणेषु प्रवाह इति कृत्वा । तथा हि उत्सात् तडागाद्वा निर्गच्छतामुदकानामाद्योदकावयवप्रभृतिषु प्रवाहसंज्ञेति नास्त्यव्यापिता लक्षणस्य । यदा चानुबध्नातीत्यनुबन्ध इत्यच्प्रत्ययान्तेन पदेन द्रव्यमेव निर्दिश्यते, तदा न्यूनताशङ्कापि नास्ति । अत एव शास्त्रापेनतादोषोऽपि परिहृतो भवति । अथाप्यनुबन्धनमनुबन्ध इति स्रोतोऽभिधीयते, तथाप्यदोषः; रूपाधिकारात् । प्रवाहवर्तित्वात्तु प्रवाहशब्देन प्रदर्श्यते । समाहिताया अप्यविज्ञप्तेरग्रहणं न भवति । सापि हि यद्यपि विक्षिप्तचित्ताचित्तकसन्तानं नानुबध्नातीति, अविक्षिप्तचित्तकसचित्तसन्तानं त्वनुबध्नात्येव । अविज्ञप्तिजातिसामान्येन तु विक्षिप्ताचित्तकस्यापि योऽनुबन्धः साविज्ञप्तिरित्युच्यते ।

यत् पुनरनेनोक्तम्—'अविक्षिप्तचित्तकस्य तदनुबन्धान्नैष दोष इति चेद्' इति । यद्यविक्षिप्तचित्तकस्य केवलस्य योऽनुबन्धः साप्यविज्ञप्तिरिति समाहिताया अविज्ञप्तेस्त्यागो न भवतीति ब्रवीषि, विज्ञप्तिरपि कुशलाकुशला तथैव भवतीत्यविज्ञप्तिस्ते प्राप्नोतीति ? स चाप्यदोषः; शुभाशुभ एवेत्यवधारणात् । विज्ञप्तिर्ह्यव्याकृतापि सम्भवतीति न विज्ञप्तिरविज्ञप्तिः प्रसज्यते । अथ वा—प्रकर्षगतेरेष प्रसङ्गो न भविष्यति । प्रकर्षेण हि योऽनुबन्धः सैवाविज्ञप्तिः । न च विज्ञप्तिरविज्ञप्तिवत् प्रकर्षेणानुबध्नाति; अविज्ञप्त्यनिरोधेऽपि तन्निरोधदर्शनात् ।

यदप्युक्तम्—'अपिशब्दाधिकवचनम्' इति, तदप्ययुक्तमुक्तम्। तथा हि—एक एवेह सूत्रे पठितोऽपि-शब्दः। वृत्तौ तु तेन पुद्गलद्वयेन तदर्थः सम्बध्यत इति द्विः पुनः पठितः। तेनैकेन सूत्रपठितेनापि-शब्देन विक्षिप्तविपरीतमविक्षिप्तम्, अचित्तकविपरीतं च तमेव सचित्तकं तृतीयं पुद्गलमविज्ञप्त्याश्रयं ब्रुवन्नाचार्यः स्वमतञ्च विक्षिप्ताचित्तकपुद्गलद्वयं जातिसामान्येनाविज्ञप्त्याश्रयं प्रदर्शयन् विज्ञप्तिचित्तचैत्तेभ्योऽर्थान्तरभूतामविज्ञप्तिमाचष्टे। त्रय एव हि पुद्गला भवन्ति—विज्ञप्तिचित्तविसभागचित्तः, विज्ञप्तिचित्तसभागचित्तः, अचित्तकश्च। तत्र विज्ञप्तिचित्तविसभागचित्तो विक्षिप्तचित्त इहाभिप्रेतः, तस्य सा वाक्कायविज्ञप्तिर्निरुद्धा भवति। अचित्तकस्य तु चित्तचैत्ता अपि निरुद्धा इति तत्र विज्ञप्तेश्चित्तचैतसिककलापाच्चार्थान्तरभूतेयमविज्ञप्तिः; यत एभ्योऽनुबन्धिनीत्वेन विशिष्यते। तमेवार्थं दर्शयन्नाह—*विक्षिप्ताचित्तकस्यापि* इति। अविक्षिप्तचित्तकस्याविज्ञप्तिर्वर्तत इति नातिशयः, विज्ञप्तिरपि हि तस्य वर्तते। विक्षिप्तचित्तस्यापि तु वर्तत इत्यतिशयः, विज्ञप्तिर्हि तस्य नास्ति। अविज्ञप्तिस्त्वनुबन्धिनीति विज्ञप्तेर्विशिष्यते। तथा अविक्षिप्तचित्तकस्याविज्ञप्तिर्वर्तत इति नातिशयः, चित्तचैत्ता अपि हि तस्य वर्तन्त एव। अचित्तकस्यापि तु वर्तत इत्यतिशयः, तस्य हि चित्तचैत्ता निरुद्धाः। अविज्ञप्तिस्त्वनुबन्धिनीति चित्तचैत्तेभ्यो विशिष्यते। तदेवं धर्मान्तरविशेषणार्थमविक्षिप्तचित्तो विक्षिप्ताचित्तकतृतीयभूतस्तेनैकेन अपि-शब्देनाभिधीयते। अत एव चापिशब्देन 'अविक्षिप्तसचित्तकस्यापि' इत्युक्तमाचार्येण; तृतीयभूतत्वात्। इतरथा ह्यपिशब्देनाविक्षिप्तचित्तकस्यापि इत्येवावक्ष्यत्, सचित्तकस्यापीति वा। तद्यथा—त्रयो लोके मनुष्याः, एको धनवान्, इतरावपि धनमात्रवन्तौ; तावभिसमीक्ष्य विष्णुमित्रस्य धनमस्तीत्येकेनोक्तो द्वितीयो वक्ता भवेद्-देवदत्तयज्ञदत्तयोरपि धनमस्तीति, अपिशब्देन विष्णुमित्रस्याप्यस्तीति देवदत्त यज्ञदत्तगतेन द्वैतमिवापन्नेनापिशब्देन स एव विष्णुमित्रो लक्ष्यते, न त्ववसृज्यत इत्यर्थः; तेन नात्रापिशब्दोऽधिक एव। तद्विदिहापि द्रष्टव्यम्।

यत् पुनरेतदुक्तम्—'अचित्तकं चाधिकृत्य शुभोऽविज्ञप्त्यनुबन्धो विशेषणीयः' इति, तदपि न किञ्चित्। अविज्ञप्तिजातिमधिकृत्यैतल्लक्षणं प्रणीतम्। सा चाविज्ञप्तिजातिरचित्तकस्य भवतीत्येतावद् विवक्षितम्, किमनेन विशेषितेन! त्वदीयेऽप्यविज्ञप्तिलक्षणे शुभोऽविज्ञप्त्यनुबन्धोऽचित्तकमधिकृत्य न विशेषितः—

"कृतेऽपि विसभागेऽपि चित्ते चित्तात्यये च यत्।
व्याकृताप्रतिघं रूपं सा ह्यविज्ञप्तिरिष्यते" ॥ ( )

इति। एषा च विज्ञप्तिसम्भूता कुशलैवाविज्ञप्तिरचित्तकस्य सम्भवतीति *चतुर्थे कोशस्थाने* ज्ञापयिष्यते।

महाभूतान्युपादायेत्युक्तानि कतमानि भूतानि ?

**भूतानि पृथिवीधातुरप्तेजोवायुधातवः ।**

इत्येते चत्वारः स्वलक्षणोपादायरूपधारणाद् धातवश्चत्वारि महाभूतान्युच्यन्ते । महत्त्वमेषां सर्वान्यरूपाश्रयत्वेनौदारिकत्वात्, अथ वा—तदुद्भूतवृत्तिषु पृथिव्यप्तेजोवायुस्कन्धेष्वेषां महासन्निवेशत्वात् ।

ते पुनरेते धातवः कस्मिन् कर्मणि संसिद्धाः, किंस्वभावाश्च ? इत्याह—

**धृत्यादिकर्मसंसिद्धाः,**

धृतिसंग्रहपक्तिव्यूहनकर्मस्वेते यथाक्रमं **संसिद्धाः** पृथिव्यप्तेजोवायुधातवः । व्यूहनं पुनः वृद्धिः प्रसर्पणं च वेदितव्यम् । इदमेषां कर्म ।

---

यच्च—'अप्रतिघमित्यविशेषितम्' इति, तदपि पश्चाद् दर्शयिष्यामः । "सप्रतिघा दश रूपिणः" ( अभि० को० १.२९ ) इत्यत्र दशैव धातवः सप्रतिघा इत्यवधारणादविज्ञप्तिर्धर्मधातुपरिपठिता, सा त्वप्रतिघेति सेत्स्यति । तस्मादिदमास्माकीनमेवमदोषदुष्टमविज्ञप्तिलक्षणमिति तदेवास्तु ॥ ११ ॥

*"भूतानि पृथिवीधातुः"* इति । विस्तरः—धातुग्रहणं वर्णसंस्थानात्मकपृथिव्यादिनिरासार्थम् । *स्वलक्षणोपादायरूपधारणाद् वा धातव* इति । काठिन्यादिस्वलक्षणं चक्षुराद्युपादायस्वरूपं च दधतीति धातवः । अष्टादश धातवस्तु स्वसामान्यलक्षणधारणात् । गोत्रार्थो वा धात्वर्थो धारणार्थमनपेक्ष्य षड्धातुदेशनायाम् । पुनर्भवबीजार्थो वा धात्वर्थः, भवं पुष्णन्तीति कृत्वा ।

*महत्त्वमेषां सर्वान्यरूपाश्रयत्वेनौदारिकत्वा*दिति । सर्वोपादायरूपाश्रयत्वेन महत्त्वादित्यर्थः । *तदुद्भूतवृत्तिष्वि*ति । तैर्महाभूतैरुद्भूता व्यक्ता वृत्तिर्धृत्यादिका येषु त इमे तदुद्भूतवृत्तयः=पृथिव्यप्तेजोवायुस्कन्धाः, तेषु । *एषां* महाभूतानां *महासन्निवेशत्वात्* महारचनत्वात् । भूतं तन्वन्तीति भूतानि ॥

*"धृत्यादिकर्मसंसिद्धाः"* इति । धृत्यादिकर्मनिर्देशः पृथिव्यादिषु शेषानुमानार्थम् । उपलादिके हि पृथिवीद्रव्ये संग्रहपंक्तिव्यूहनदर्शनाच्छेषाणां जलतेजोवायूनामस्तित्वमनुमीयते । अप्सु नौसन्धारणोष्णतेरणकर्मदर्शनात् पृथिवीतेजोवायूनामस्तित्वम् । अग्निज्वालायां स्थैर्यसम्पिण्डनचलनदर्शनात् पृथिव्युदकवायूनामस्तित्वम् । वायौ सन्धारणशीतोष्णस्पर्शदर्शनात् पृथिव्यप्तेजसामस्तित्वमिति *वैभाषिकाः । व्यूहनं पुनर्वृद्धिः प्रसर्पणं* वेति । वृद्धिः=सम्बन्धाधिका शरीराङ्कुराद्यवयवोत्पत्तिः । प्रसर्पणम्=शरीरादीनां प्रबन्धेन देशान्तरोत्पत्तिः ॥

स्वभावस्तु यथाक्रमं

**खरस्नेहोष्णतेरणाः ॥ १२ ॥**

**खरः** पृथिवीधातुः । **स्नेहो**ऽब्धातुः । **उष्णता** तेजोधातुः । **ईरणा** वायुधातुः । ईर्यतेऽनया भूतस्रोतो देशान्तरोत्पादनात् प्रदीपेरणवदितीरणा । "वायुधातुः कतमः ? लघुसमुदीरणत्वम्" (　　　　) इति **प्रकरणेषु** निर्दिष्टं **सूत्रे** च । तत्तु लघुत्वमुपादाय रूपमप्युक्तं **प्रकरणेषु** । अतो य ईरणा-स्वभावो धर्मः स वायुरिति कर्मणास्य स्वभावोऽभिव्यक्तः ॥ १२ ॥

कः पुनः पृथिव्यादिनां पृथिवीधात्वादीनां च विशेषः ?

**पृथिवी वर्णसंस्थानमुच्यते लोकसंज्ञया ।**

तथा हि—पृथिवीं दर्शयन्तो वर्णं संस्थानं च दर्शयन्ति ।

यथा पृथिवी, एवम्

**आपस्तेजश्च,**

वर्णसंस्थानमेवोच्यते लोकसंज्ञया ।

**वायुस्तु धातुरेव,**

य एव तु वायुधातुः स एव लोके वायुरित्युच्यते ।

**तथापि च ॥ १३ ॥**

यथा पृथिवी वर्णसंस्थानमुच्यते लोकसंज्ञया, **तथा** वायुरपि—नीलिका वात्या, मण्डलिका वात्येति ।

---

*"उष्णता"* इति । स्वभावाभिधानेऽपि भावप्रत्ययः—उष्ण एवोष्णतेति । देशान्तरोत्पादनात् *प्रदीपेरणवदिति* । क्षणिकानां नास्ति देशान्तरगमनम्, यत्रै-वोत्पत्तिस्तत्रैव विनाशः । तेनैवमुच्यते—देशान्तरोत्पादानस्वभावा भूतस्रोतस ईरणा; क्षणिकत्वात्, प्रदीपवत् । क्षणिकानि च भूतानि; रूपत्वात्, प्रदीपवत् । प्रदीपश्च क्षणिकः प्रसिद्ध इत्युदाहरणम् । *कर्मणास्य स्वभावोऽभिव्यक्त* इति । ईरणाकर्मणा लघुत्वं विशिष्यते—प्रदीरणात्मकं लघुत्वं स वायुधातुरिति । लघुसमुदीरणो वायुधातुः लघ्वेव तु यत्तदुपादायरूपम् ॥ १२ ॥

*प्रवचने* पृथिवीधात्वादयः पृथिव्यादयश्चोक्ता इति । अतः पृच्छति—*कः पुनरेषां विशेष* इति ?

*"लोकसंज्ञया"* इति । लोकसंव्यवहारेण । *वात्येति* । वातानां समूहो

कस्मात् पुनरयमविज्ञप्तिपर्यन्तः 'रूपस्कन्धः' इत्युच्यते ? रूपणात् । उक्तं **भगवता**—"रूप्यते रूप्यत इति भिक्षवः, तस्माद्रूपोपादानस्कन्ध इत्युच्यते । केन रूप्यते ? पाणिस्पर्शेनापि स्पृष्टो रूप्यते" इति ( अ० व० सं० नि० २२. ७९. ८५ ) विस्तरः । **रूप्यते** बाध्यत इत्यर्थः । तथा **ह्यर्थवर्गीयेषूक्तम्**—

"तस्य चेत् कामयानस्य च्छन्दजातस्य देहिनः ।
ते कामा न सम्‌ध्यन्ते[1] शल्यविद्ध इव रूप्यते ॥" ( सु० नि० अ० २)

रूपस्य पुनः का बाधना ? विपरिणामोत्पादना । प्रतिघातो रूपेणेत्यपरे ।

परमाणुरूपं तर्हि रूपं न प्राप्नोति, अरूपणात् ? न वै परमाणुरूपमेकं पृथग्भूतमस्ति । सङ्घातस्थं तु तद् रूप्यत एव ।

---

वात्या, ब्राह्मणादिभ्यो यन्[2] ( पा० सू० ४.२.४२ ) इति समूहार्थे यन्प्रत्ययः । स्त्रीत्वाट्टाप्प्रत्ययः ।

*तथा ह्यर्थवर्गीयेषूक्त*मिति । *अर्थवर्गीयाणि* सूत्राणि, यानि क्षुद्रके पठ्यन्ते । तषूक्तम्—"*तस्य चेत् कामयानस्य*" (सु० नि० अ० व० २) इति । विस्तरः—*तस्य* देहिनः *कामयानस्य छन्दजातस्य* यदि *कामा* विषया *न समृध्यन्ते* न सम्पद्यन्ते । *शल्यविद्ध* इव असौ *रूप्यते* बाध्यत इत्यर्थः । बाधनार्थपरिच्छिन्नेनानेन रूप्यतेशब्देन "रूप्यते रूप्यत इति भिक्षवः" ( सं० नि० २२. ७९ ८५ ) इत्यत्र सूत्रे रूप्यतेशब्दो बाधनार्थ एव परिच्छिद्यते । शल्यविद्धः कामयानश्च दुःखवेदयितृत्वाद् बाध्यत इति युक्तम् । *रूपं तु कथं बाध्यते ?* अत आह—*विपरिणामोत्पादने*ति । विक्रियोत्पादनेत्यर्थः । तथा च इहार्थे सति 'शल्यविद्ध इव रूप्यते' इत्यत्रापि यदि विक्रियत इत्यर्थो गृह्यते सुतरामर्थो युज्यते । *प्रतिघात* इति । स्वदेशे परस्योत्पत्तिप्रतिबन्धः । *परमाणुरूपं तर्हो*ति । द्रव्यपरमाणुरूपं न रूपं प्राप्नोति । कस्मात् ? *अरूपणात्* । निरवयवत्वे सत्यरूपणादित्यभिप्रायः । पक्षद्वयेऽप्येतच्चोद्यमुपन्यस्तम्—बाधनरूपणे प्रतिघातरूपणे च द्रव्यपरमाणुर्निरवयवत्वान्न शक्यते रूपयितुमिति । *न वै परमाणुरूपमेकं पृथग्भूतमस्ती*ति । एकमिति ग्रहणं द्रव्यपरमाणुसन्दर्शनार्थम् । [illegible] । तदीदृग्नास्ति । सङ्घातस्थं नित्यं भवति; "कामेऽष्टद्रव्यकोऽशब्दः" ( अभि० को० २.२३ ) इत्यादिवचनात् । *सङ्घातस्थं तद्रूप्यत* एवेत्यर्थादेतदभीष्टं भवति । तद् द्रव्यपरमाणुरूपं सङ्घातस्थं रूप्यते, बाध्यते प्रतिहन्यते च ।

---

१. समृध्यन्ति—का० । २ वस्तुतस्तु वातशब्दस्य पाशादिगणे पाठात् "पाशादिभ्यो यः" ( ४. २. ४९ ) इति सूत्रेण यः प्रत्ययो भवति ।

अतीतानागतं तर्हि रूपं न प्राप्नोति ? तदपि रूपितं रूपयिष्यमाणं तज्जातीयं चेति रूपम्, इन्धनवत् ।

अविज्ञप्तिस्तर्हि न रूपं[1] प्राप्नोति ? सापि विज्ञप्तिरूपणाद् रूपिता भवति, वृक्षप्रचलने च्छायाप्रचलनवत्, नाविकारात् । विज्ञप्तिनिवृत्तौ चाविज्ञप्तिनिवृत्तिः[2] स्याद्, वृक्षाभावे च्छायाऽभाववत् ।

आश्रयभूतरूपणादित्यपरे ।

---

*अतीतानागतं तर्ही*ति । विस्तरः—अतीतानागतमदेशत्वान्न रूप्यते, न बाध्यते, नापि प्रतिहन्यते । *तदपी*ति । विस्तरः—तदपि *रूपित*मित्यतीतबाधन-प्रतिघातनार्थेन । *रूपयिष्यमाण*मित्युत्पत्तिधर्मकमनागतम् । तेनैवार्थद्वयेन—*तज्जातीयं चे*त्युत्पत्तिधर्मकजातीयमनुत्पत्तिधर्मकमनागतम् । *इन्धनवत्* । यदपीद्धं यदपीन्धिष्यमाणं तज्जातीयं च तदपीन्धनम् । तज्जातीयं पुनरिन्धनं यदिन्धनार्थे कल्पितमप्राप्यैवाग्निमन्तरा नङ्क्ष्यति ।

*अविज्ञप्तिस्तर्हि न रूपं प्राप्नोति* । कस्मात् ? अप्रतिघत्वात् । अप्रतिघत्वेन हि सा न बाध्यते, नापि प्रतिहन्यते । *सापि विज्ञप्तिरूपणा*दिति । विस्तरः—विज्ञप्तिरविज्ञप्तिसमुत्थापिका । तस्याः सप्रतिघाया रूपणाद*विज्ञप्तिरपि रूप्यते । यथा* छायासमुत्थापकस्य *वृक्षस्य प्रचलनाच्छाया प्रचलति* तद्वत् । न *अविकारा*दिति । अनेन प्रतिज्ञादोष उद्ग्राह्यते । परेण ह्येवं प्रतिज्ञातम्—स्वसमुत्थापक-विकारानुविधायिनी अविज्ञप्तिः; समुत्थाप्यत्वात्, वृक्षच्छायावदिति । सेयं पूर्वाभ्युपगमविरोधिनी प्रतिज्ञा, अभ्युपगतो हि विज्ञप्तेर्विकारेऽप्यविज्ञप्तेर-विकारः । तथा हि—अञ्जलिं भङ्क्त्वा कपोतं कुर्वतः कायविज्ञप्तिर्विक्रियत इत्य-भ्युपगम्यते, न त्वविज्ञप्तिः । तस्मादसाधनमेतत् । *विज्ञप्तिनिवृत्तौ चाविज्ञप्तिनिवृत्तिः स्या*दिति । अनेन धर्मिविशेषविपर्ययोऽप्यस्याः प्रतिज्ञाया उद्ग्राह्यते, यदि वृक्ष-च्छायाधर्म इष्यते । *वृक्षनिवृत्तौ छायानिवृत्तिर्दृष्टे*ति तद्वत् *स्यात्* ।

अत्र कश्चिद् 'न अविकारात्' इति न सम्यगेतदुक्तमिति दूषयति—'विक्रियत एवाविज्ञप्तिर्विज्ञप्तिविकारे सति, मृदुमध्याधिमात्रत्वे हि विज्ञप्तेर्मृदु-मध्याधिमात्रता भवत्यविज्ञप्तेः' इति, तदेतदयुक्तम्, कस्मात् ? उत्पत्तिरेवा-विज्ञप्तेरेवं भवति मृदुर्मध्याधिमात्रा वा, न तु विकारः । उत्पन्नस्य हि धर्मस्य पुनरन्यथोत्पादनं विकारः, तच्च रूपणमभिप्रेतम् ।

*आश्रयभूतरूपणादित्यपर* इति । *वृद्धाचार्यवसुबन्धुः* । भूतग्रहणमाश्रयभूतप्रदर्श-

---

१. का० पुस्तके नास्ति । २. वा०—पाठा० ।

एवं तर्हि चक्षुर्विज्ञानादीनामप्याश्रयरूपणात् रूपत्वप्रसङ्गः ?

विषमोऽयमुपन्यासः; अविज्ञप्तिर्हि च्छायेव वृक्षं प्रभेव मणिं भूतान्याश्रित्य वर्त्तते, न त्वेवं चक्षुरादीन्याश्रित्य वर्त्तन्ते चक्षुर्विज्ञानादीनि। केवलं तूत्पत्तिनिमित्तमात्रं तानि तेषां भवन्तीति।

इदं तावदवैभाषिकीयम्—वृक्षमाश्रित्य च्छाया वर्त्तते, मणिं चाश्रित्य प्रभेति। छायादिवर्णपरमाणूनां प्रत्येकम्,

सत्यपि च तदाश्रितत्वे च्छायाप्रभयोर्नाविज्ञप्तिस्तथैवाश्रिता युज्यते। निरुद्धेष्वपि अविज्ञप्त्याश्रयेषु महाभूतेषु तस्या अनिरोधाभ्युपगमात्[1]। तस्मात्[2] न भवत्येष परिहारः।

अन्ये पुनरत्र परिहारमाहुः—चक्षुर्विज्ञानादीनामाश्रयो भेदं गतः।

---

नार्थम्। अतश्चेतरः प्रसञ्जयति—*एवं तर्हि* चक्षुराद्याश्रयरूपणात् तद्विज्ञानानामपि *रूपत्वप्रसङ्गः*।

*विषमोऽयमुपन्यास* इति। *वृद्धाचार्यवसुबन्धुदेशीयः* कश्चित् परिहरति। *अविज्ञप्तिर्ही*ति। विस्तरः—*छाया वृक्षमुपश्लिष्टाश्रित्य* वर्तते, *प्रभापि मणिं तथैव*। *उत्पत्तिनिमित्तमात्रं तानि तेषा*मिति नोपश्लिष्टानीति भावः।

तमितरः प्रत्याह—*इदं तावदवैभाषिकीय*मिति। विस्तरः—नैतद् *वैभाषिक*मतम्। *वैभाषिकमतं तु छायावर्णपरमाणुः स्वभूतचतुष्कमाश्रित्य* वर्तते, न वृक्षम्। तथा प्रभावर्णपरमाणुः स्वभूतचतुष्कमाश्रित्य वर्तते, न मणिम्; पृथग्द्रव्यत्वादिति। एवमनाश्रयकारणत्वान्मणिवृक्षयोर्न तथाभूताविज्ञप्तिवदुपश्लिष्टे छायाप्रभे इत्यसामान्यं दृष्टान्तदार्ष्टान्तिकयोः। *सत्यपि च तदाश्रितत्व* इति विस्तरः। अथापि पारम्पर्येण तदाश्रितत्वमभ्युपगम्यते—छाया स्वभूताश्रिता, तानि तु भूतानि वृक्षमाश्रितानि; प्रभापि स्वभूताश्रिता, तानि च भूतानि मणिमाश्रितानि; तदनुविधायित्वात्। तथाप्यसामान्यम्; *निरुद्धेष्वप्यविज्ञप्त्याश्रयेषु महाभूतेषु तस्या अनिरोधाभ्युपगमा*दिति। "कामाप्तातीतभूतजा" (अभि० को० ४.६) इति सिद्धान्तात्। *तस्मान्न भवत्येष परिहार* इति। य उक्तोऽभूत्—अविज्ञप्तिर्हि छायेव वृक्षमिति विस्तरेण।

*अन्ये पुनरत्र परिहारमाहु*रिति। अयमेवाचार्यस्तन्मतं समर्थयन्नाह। *आश्रयो भेदं गत* इति। द्विविध इत्यर्थः। *कश्चिद् रूप्यते चक्षुरादिः* सप्रतिघत्वात्,

१. अनिरोधोऽभ्युपगम्यते—का०।

२. अतो—का०।

कश्चिद् रूप्यते चक्षुरादिः, कश्चिन्न रूप्यते; यथा—मनः। न त्वेवमविज्ञप्तिः। तस्मादसमानः प्रसङ्ग इति। अत उपपन्नमेतद्—रूपणाद्[1] रूपमिति ॥१३॥

य एव रूपस्कन्धस्वभावा उक्ताः,

**इन्द्रियार्थास्त एवेष्टा दशायतनधातवः।**

आयतनव्यवस्थायां **दशायतनानि**—चक्षुरायतनम्, रूपायतनम्, यावत् कायायतनम्, स्प्रष्टव्यायतनमिति। धातुव्यवस्थायां त एव **दश धातवश्**चक्षुर्धातू रूपधातुर्यावत् कायधातुः, स्प्रष्टव्यधातुरिति।

उक्तो रूपस्कन्धः, तस्य चायतनव्यवस्थानम् ॥

---

*कश्चिन्न रूप्यते मनो* विपर्ययात्। *तस्मादसमानः प्रसङ्ग* इति। चक्षुर्विज्ञानादीनामप्याश्रयभूतरूपणाद् रूपत्वप्रसङ्ग इति। *रूपणाद्रूपमि*ति। आश्रयरूपादित्यर्थः।

अत्र चोदयन्ति—विज्ञप्तिसम्भूताया अविज्ञप्तेरेवं परिकरेण रूपत्वं भवद् भवेत्, समाधिसम्भूतायास्तु कथं रूपत्वमिति ? तज्जातीयत्वात् तदपि रूपम्। किं पुनस्तज्जातीयत्वम् ? महाभूतान्युपादायेति भावः। तेषामुपादायरूपजननादिहेतुभूतत्वादिति ॥ १३ ॥

*"इन्द्रियार्थास्त एव"* इति। भगवतो विनेयवशात् तिस्रो देशनाः—स्कन्धायतनधातुदेशनाः। तासु च ये स्कन्धेषु देशिता धर्मास्त एवायतनधातुषु देशिताः। असंस्कृतास्त्वत्र केवलमतिरिक्ताः। सर्वश्चा*भिधर्मः* सूत्रव्याख्यानम्। अत इदमुक्तम्—'इन्द्रियार्थास्त एव' इति विस्तरेण। लाघविकश्चायमा*चार्यः* वेदनादिस्कन्धलक्षणमनुक्त्वैव लाघवेन रूपस्कन्धस्वभावान् धर्मानायतनधातुषु दर्शयति। इन्द्रियाणि च इन्द्रियार्थाश्च इन्द्रियार्थाः। 'त एव' इति विशेषणमन्येन्द्रियनिरासार्थम्, अन्यार्थनिरासार्थं च। *आयतनव्यवस्थायां तु यथासंख्येन दशायतनानि चक्षुरायतनं रूपायतनं यावत्कायायतनं स्प्रष्टव्यायतनमि*ति। *धातुव्यवस्थायां* त एव *दश धातवः चक्षुर्धातू रूपधातुर्यावत्कायधातुः स्प्रष्टव्यधातु*रिति।

*उक्तो रूपस्कन्धस्तस्य चायतनधातुव्यवस्थान*मिति। न सकलस्य रूपस्कन्धस्यायतनधातुव्यवस्थानमुक्तम्; अविज्ञप्तिरूपस्य वक्ष्यमाणत्वात्, कथमिदमुच्यते—उक्तमिति। बाहुलिको निर्देशः। बाहुल्येन रूपस्कन्धस्यायतनधातुव्यवस्थानमुक्तमित्यर्थः। कतिपयमुद्गगुलिकासम्भवेऽपि माषराशिव्यपदेशवत्।

---

1. आश्रयरूपणाद्—का०

वेदनादयो वक्तव्याः । तत्र—

**वेदनाऽनुभवः**

त्रिविधोऽनुभवो **वेदना**स्कन्धः—सुखः, दुःखः, अदुःखासुखश्च । स पुनर्भिद्यमानः षड् वेदनाकायाः चक्षुःसंस्पर्शजा वेदना यावन्मनःसंस्पर्शजा वेदनेति ।

**संज्ञा निमित्तोद्ग्रहणात्मिका ॥ १४ ॥**

यावन्नीलपीतदीर्घह्रस्वस्त्रीपुरुषमित्रामित्रसुखदुःखादि**निमित्तोद्ग्रहणमसौ संज्ञा**स्कन्धः । स पुनर्भिद्यमानः षट् संज्ञाकाया वेदनावत् ॥ १४ ॥

**चतुर्भ्योऽन्ये तु संस्कारस्कन्धः**

रूप-वेदना-संज्ञा-विज्ञानेभ्यश्च**तुर्भ्योऽन्ये तु** संस्काराः **संस्कारस्कन्धः** । **भगवता** तु सूत्रे "षट् चेतनाकायाः" ( सं० नि०     ) इत्युक्तम्; प्राधान्यात् । सा हि कर्मस्वरूपत्वादभिसंस्करणे प्रधाना । अत एवोक्तं **भगवता**—"संस्कृत-

---

*त्रिविधोऽनुभव* इति । अनुभूतिरनुभवः=उपभोगः । कस्य ? चित्तस्य, पुद्गलस्य वा । स च त्रिविधः—*सुखो दुःखोऽदुःखासुखश्च* । वस्तुनो ह्लाद-परिताप-तदुभय-विनिर्मुक्तस्वरूपसाक्षात्करणस्वभावः । अनुभूयते वानेन विषय इत्यनुभवः । अनुभवतीति वानुभवः । [illegible]तदुभयविनिर्मुक्त[illegible]-श्चैतसिकविशेषस्पर्शानुभव इत्यपरे । "अनुर्लक्षणे" ( पा० सू० १. ४. ८४ ) । स्पर्शचिह्नः, स्पर्शनिमित्तोऽनुभव इत्यर्थः । स वेदनास्कन्धः ।

"*निमित्तोद्ग्रहणात्मिका*" इति । निमित्तं वस्तुनोऽवस्थाविशेषो नीलत्वादि, तस्योद्ग्रहणम् = परिच्छेदः, तदात्मिका तत्स्वभावा । *दुःखादी*त्यादिशब्देन लोहितादीनां ग्रहणम् । *असौ संज्ञास्कन्धः* । यदि परिच्छेदात्मिका संज्ञा, तत्सम्प्रयोगे निमित्तमुद्गृह्णन्तीति पञ्चापि विज्ञानकाया विकल्पकाः स्युः ? न स्युः; न हि पञ्चविज्ञानसम्प्रयोगिणी संज्ञा पट्वी । मनोविज्ञानकायसम्प्रयोगिणी तु पट्वीति तदेव विकल्पकमुक्तम् । *षट् संज्ञाकाया वेदनावदि*ति । यथा चक्षुःसंस्पर्शजा वेदनेति विस्तरेणोक्तम्, तथा चक्षुःस्पर्शजा संज्ञेति विस्तरेण वक्तव्यम् ॥ १४ ॥

"*चतुर्भ्योऽन्ये*" इति । चतुर्भ्यः स्कन्धेभ्यः, स्कन्धाधिकारात् । रूपस्कन्धादिभ्यस्त्रिभ्य उक्तेभ्यो विज्ञानस्कन्धाच्चोद्दिष्टवक्ष्यमाणकाच्चतुर्भ्योऽन्ये संस्काराः "*संस्कारस्कन्धः*" । *सूत्रे षट् चेतनाकाया इत्युक्त*मिति । "संस्कारस्कन्धः कतमः ? षट् चेतनाकायाः" (              ) इति । *अभिसंस्करणे प्रधाना* इति ।

मभिसंस्करोति तस्मात् संस्कारा उपादानस्कन्ध इत्युच्यते" ( सं० नि० २२. ७८. ८५ ) इति । अन्यथा हि शेषाणां चैतसिकानां विप्रयुक्तानां च संस्काराणां स्कन्धासंग्रहाद् दुःखसमुदयसत्यत्वं न स्यादिति परिज्ञापरिहाणे[1] न[1] स्याताम् । उक्तं च **भगवता**—"नाहमेकधर्ममपि अनभिज्ञायापरिज्ञाय दुःखस्यान्तक्रियां वदामि" इति । एवम् "अप्रहाय" (            ) इत्युक्तम् ।

तस्मादवश्यमेषां संस्कारस्कन्धसंग्रहोऽभ्युपगन्तव्यः ॥

**एते पुनस्त्रयः ।**

---

इति । 'एवं चैवं च स्याम्' इत्यभिसंस्करणे प्रधानाः; "कर्महेतूपपत्तयः" इति वचनात् । छन्दप्राप्त्यादयस्तु चेतनानुविधायित्वात् तदाकारहेतुभावानुविधानतः संस्कारस्कन्ध एव वेदितव्याः । तदेवं सति संस्करणे प्रवृत्तो धर्मराशिः संस्कार इत्युक्तं भवति ।

*अपरे* पुनराहुः—संस्कृताभिसंस्करणे चेतनायाः प्राधान्यमुक्तम्, अतः सूत्रे चेतनाग्रहणम् । सम्प्रयुक्तविप्रयुक्तसंस्कृतधर्मसंग्रहेण तु प्राधान्यादयमेव स्कन्धः संस्कारस्कन्धः उक्तः, संस्कृतराशिरिति कृत्वा । *संस्कृतमभिसंस्करोती*ति भाविन्या संज्ञयानागतं स्कन्धपञ्चकं संस्कृतमित्युक्तम् । *अन्यथा ही*ति । विस्तरः—यदि यथासूत्रनिर्देशम्, चेतनैव केवला संस्कारस्कन्ध इष्यते, नान्ये । *शेषाणां* छन्दादीनां *चैतसिकानां* प्राप्त्यादीनां च *चित्तविप्रयुक्तानां स्कन्धासंग्रहात्* । रूपादिषु स्कन्धेषु रूपणादिलक्षणाभावेनासंग्रहात्, संस्कारस्कन्धे चैवं सूत्रे यथारुतग्रहणेनासंग्रहादिति स्कन्धेष्वसंग्रहात् । *दुःखसमुदयसत्यत्वं न स्या*दिति *परिज्ञाप्रहाणे न स्याताम्* । परिज्ञा दुःखस्य, प्रहाणं समुदयस्य । अनभिज्ञाय लौकिकेन मार्गेण, अपरिज्ञाय लोकोत्तरेण । अथ वा—अनभिज्ञाय दर्शनमार्गेण, अपरिज्ञाय भावनामार्गेण । *एवमप्रहायेत्युक्त*मिति सूत्रान्तरम् । [illegible] *दुःखस्यान्तक्रियां वदामी*ति । दुःखनिरोधं वदामीत्यर्थः । ननु चाकाशाप्रतिसंख्यानिरोधौ लोकोत्तरेण मार्गेण न परिज्ञायेते, अथ च दुःखस्यान्तक्रियेष्यते; संक्लेशवस्त्वभिसन्धिवचनात् ? *सौत्रान्तिक*दर्शनेन च प्रज्ञप्तिसत्त्वाददोषः । न हि तौ संक्लेशवस्तू, किमनयोः परिज्ञेयत्वेन । निरोधमार्गसत्ये अपि तर्हि न संक्लेशवस्तू इति न परिज्ञेये स्याताम् ? दुःखसमुदयसत्यसम्बन्धसद्भावात् तयोः परिज्ञेयत्वं व्यवस्थाप्यते । तथा हि योगिन एवं विचारयन्ति—अस्य सहेतुकस्य दुःखस्य को निरोधः ? केन चोपायेन स निरोधः प्राप्यते ?, इति निरोधमार्ग-

---

१–१. ०प्रहाणे अपि—का० ।

वेदना-संज्ञा-संस्कारस्कन्धाः आयतनधातुव्यवस्थायाम्—

**धर्मायतनधात्वाख्याः सहाविज्ञप्त्यसंस्कृतैः ॥ १५ ॥**

इत्येतानि सप्त द्रव्याणि **धर्मायतनं धर्मधातुश्चे**त्याख्यायन्ते ॥ १५ ॥

**विज्ञानं प्रतिविज्ञप्तिः,**

विषयं विषयं **प्रति विज्ञप्ति**रुपलब्धि**र्विज्ञान**स्कन्ध इत्युच्यते। स पुनः षड् विज्ञानकायाः चक्षुर्विज्ञानं यावन्मनोविज्ञानमिति।

य एष विज्ञानस्कन्ध उक्त आयतनव्यवस्थायाम्,

**मनआयतनं च तद्।**

धातुव्यवस्थायां स एव—

**धातवः सप्त च मताः,**

कतमे सप्त ?

**षड् विज्ञानान्यथो मनः ॥ १६ ॥**

चक्षुर्विज्ञानधातुर्यावन्मनोविज्ञानधातुर्मनोधातुश्च। एवमत्र पञ्च स्कन्धाः,

---

सत्ये अपि परिजानन्ति। न त्वाकाशाप्रतिसंख्यानिरोधयोर्दुःखेन सम्बन्ध इति न तौ परिजानन्ति। प्रयोगावस्थायां तु लौकिकेन ज्ञानेन तावपि सामान्यरूपेण 'सर्वधर्मा अनात्मानः' इति भावयन्ति।

*"धर्मायतनधात्वाख्याः"* इति। आयतनं च धातुश्चायतनधातुः, धर्मश्चासावायतनधातुश्च धर्मायतनधातुः, तदाख्यैषां त इमे धर्मायनधात्वाख्याः। के ? *वेदनासंज्ञासंस्कारस्कन्धाः*।

*"सहाविज्ञप्त्यसंस्कृतैः"* इति। सहाविज्ञप्त्या, सहासंस्कृतैश्चाकाशादिभिः। आयतनदेशनायां धर्मायतनमिति, धातुदेशनायां च धर्मधातुरिति। *सप्त द्रव्याणी*ति। अविज्ञप्तिः, वेदनास्कन्धः, संज्ञास्कन्धः, संस्कारस्कन्धः, आकाशम् प्रतिसंख्यानिरोधः, अप्रतिसंख्यानिरोधश्चेति ॥ १५ ॥

*"विज्ञानं प्रतिविज्ञप्तिः"* इति। विज्ञानस्कन्धः प्रतिविज्ञप्तिरित्यर्थः, स्कन्धाधिकारात्। प्रतिर्वीप्सार्थः, विषयं विषयं प्रतीत्यर्थः। *उपलब्धिर्व*स्तुमात्रग्रहणम्। वेदनादयस्तु चैतसा विशेषग्रहणरूपाः। *षड् विज्ञानकाया* इति। षड् विज्ञानसमूहाः।

*"षड् विज्ञानान्यथो मनः"* इति। षड् विज्ञानधातवो यथासंख्येन, यच्चक्षु-

द्वादशायतनानि, अष्टादश धातवो निर्दिष्टा भवन्ति। अविज्ञप्तिवर्ज्यो रूपस्कन्धो दशायतनानि दश धातवः। वेदनादयः स्कन्धास्त्रयोऽविज्ञप्तिरसंस्कृतानि च धर्मायतनं धर्मधातुश्च विज्ञानस्कन्धो मनआयतनं षड् विज्ञानधातवो मनोधातुश्चेति ॥ १६ ॥

ननु च षड् विज्ञानकाया विज्ञानस्कन्ध इत्युक्तम्। अथ कोऽयं पुनस्तेभ्योऽन्यो मनोधातुः? न खलु कश्चिदन्यः, किं तर्हि? तेषामेव

**षण्णामनन्तरातीतं विज्ञानं यद्धि तन्मनः।**

यद्यत् समनन्तरनिरुद्धं विज्ञानं तन्मनोधातुरित्युच्यते। तद्यथा स एव पुत्रोऽन्यस्य पित्राख्यां[1] लभते[1], तदेव फलमन्यस्य बीजाख्याम्[2], तथेहापि स एव मनोधात्वाख्यां लभते[2]।

एवं तर्हि द्रव्यतः सप्तदश धातवो भवन्ति, द्वादश वा; षड्विज्ञानधातुमनोधातूनामितरेतरान्तर्भावादिति कस्मादष्टादश व्यवस्थाप्यन्ते? यद्यप्येवम्, तथापि

---

विज्ञानं स चक्षुर्विज्ञानधातुः। एवं यावद्यन्मनोविज्ञानं स मनोविज्ञानधातुः, समस्तानि त्वेतानि षण्मनोधातुरिति वेदितव्यम् ॥ १६ ॥

*"षण्णामनन्तरातीतं विज्ञानं यद्धि तन्मनः"* इति। 'षण्णाम्' इति निर्धारणे षष्ठी। तेषामेव मध्ये, नान्यदित्यर्थः। अनन्तरग्रहणमन्यविज्ञानव्यवहितनिवृत्त्यर्थम्। यद्धि यस्यानन्तरमन्यविज्ञानाव्यवहितं तत्तस्याश्रयः। अन्यस्यासावाश्रयो यस्य तदव्यवहितम्। अत एवाचित्तिकावस्थायां चिरातीतमपि समापत्तिप्रवेशचित्तं व्युत्थानचित्तस्याश्रयो भवति; विज्ञानान्तराव्यवधानात्।

अतीतग्रहणं प्रत्युत्पन्ननिरासार्थम्। मनोविज्ञानं ह्याश्रयि तस्यामवस्थायां प्रत्युत्पन्नम्, अतस्तदतीतमिष्यते। तदेव चैतदुच्यते—षष्ठाश्रयप्रसिद्ध्यर्थमिति।

विज्ञानग्रहणं वेदनाद्यनन्तरातीतनिवृत्त्यर्थम्। 'यद्धि तन्मनः' इति जातिनिर्देशान्न वीप्साप्रयोगः। वृत्तौ तु द्रव्यपदार्थाभिधित्सया वीप्साप्रयोगः।

*यद्यत् समनन्तरनिरुद्धं विज्ञानं तत्तन्मनोधातुरिति। तद्यथा स एवेति।* विस्तरः—तद्यथा स एव *पुत्रोऽन्यस्य पित्राख्यां लभते तदेव फलमन्यस्य बीजाख्याम्।* *तथेहापि स एव* चक्षुरादिविज्ञानधातुरन्यस्याश्रय इति *मनोधात्वाख्यां लभते।*

*सप्तदश धातवो भवन्ति द्वादश वेति।* य एव षड्विज्ञानधातवः स एव मनोधातुः, य एव च मनोधातुस्त एव च षड् विज्ञानधातव इतीतरेतरान्त-

---

१-१ पिता भवति—का०। २-२. बीजमिति—का०।

**षष्ठाश्रयप्रसिद्ध्यर्थं धातवोऽष्टादश स्मृताः ॥ १७ ॥**

पञ्चानां विज्ञानधातूनां चक्षुर्धात्वायतनादयः पञ्चाश्रयाः । **षष्ठस्य** मनोविज्ञानधातोराश्रयोऽन्यो नास्ति । अतस्तदाश्रय**प्रसिद्ध्यर्थं** मनोधातुरुपदिष्टः । एवमाश्रयाश्रितालम्बनषट्कव्यवस्थानेना**ष्टादश**[1] धातवो भवन्तीति ।

अर्हतस्तर्हि चरमं चित्तं न मनो भविष्यति, नहि तदस्ति यस्य तत् समनन्तरातीतं स्यादिति ? न; तस्यापि मनोभावेनावस्थितत्वात् । अन्यकारणवैकल्यात्तु नोत्तरविज्ञानसम्भूतिः ॥ १७ ॥

---

र्भावः । यदि षड् विज्ञानधातवो गृह्येरन्, नार्थो मनोधातुनेति सप्तदश धातवो भवन्ति । यदि मनोधातुर्गृह्येत, नार्थः षड्विज्ञानधातुभिरिति द्वादश धातवो भवन्ति ।

*"षष्ठाश्रयप्रसिद्ध्यर्थम्"* इति । पञ्चानां विज्ञानधातूनामाश्रयप्रसिद्धिर्नाङ्गीक्रियते; चक्षुरादिष्वाश्रयसम्भवात् । *मनोविज्ञानाश्रयो नास्तीति तदाश्रयप्रसिद्ध्यर्थं मनोधातुर्व्यवस्थाप्यते* । आश्रयादि-षट्कव्यवस्थानेन *अष्टादश धातवो भवन्ति* । आश्रयषट्कं चक्षुरादि मनोऽन्तकम्, आश्रितषट्कं चक्षुर्विज्ञानादि मनोविज्ञानान्तम्, आलम्बनषट्कं रूपादिधर्मान्तमिति । *योगाचारदर्शनेन* तु षड्विज्ञानव्यतिरिक्तोऽप्यस्ति मनोधातुः । *ताम्रपर्णीया* अपि हृदयवस्तु मनोविज्ञानधातोराश्रयं कल्पयन्ति, तच्चारूप्यधातावपि विद्यत इति वर्णयन्ति । आरूप्यधातावपि हि तेषां रूपमभिप्रेतम् । आरूप्य इति च ईषदर्थे आङ्, आपिङ्गलवदिति ।

*चरमं चित्तमिति* । निरुपधिशेषनिर्वाणकाले । *न मनो भविष्यतीति* । न मनोधातुर्भविष्यतीत्यर्थः । *न हि तदस्तीति* । नोत्पद्यत इत्यर्थः । *न; तस्यापि मनोभावेनेति* । विस्तरः—नैतदेवम्, कस्मात् ? तस्यापि चरमचित्तस्य मनोभावेनाश्रयत्वेनावस्थितत्वात् । *अन्यकारणवैकल्यादिति* । पौनर्भविककर्मक्लेशकारणवैकल्यात् । *नोत्तरविज्ञानसम्भूतिरिति* । न पुनर्भवप्रतिसन्धिविज्ञानमित्यभिप्रायः ।

इदमिह विचार्यते—उक्तमेतत् 'आश्रयाश्रितालम्बनषट्कव्यवस्थानादष्टादश धातवो भवन्ति' इति । आश्रितषट्कं तावद् व्यवस्थाप्यते—चक्षुर्विज्ञानधातुर्यावन्मनोविज्ञानधातुरिति । किमस्याश्रितषट्कस्य यथासंख्यमाश्रयषट्कं व्यवस्थाप्यते—चक्षुर्विज्ञानधातोराश्रयश्चक्षुर्धातुर्यावन्मनोविज्ञानधातोर्मनोधातु-

---

1. ०व्यवस्थानादष्टादश—का० ।

तत्र स्कन्धैः सर्वसंस्कृतसंग्रहः—उपादानस्कन्धैः सर्वसास्रवाणाम्, आयतनधातुभिः सर्वधर्माणाम्।

---

राश्रय इति? ओमित्याह। यदा चाह—चक्षुस्तत्सभागं भवति, तत् कस्याश्रयः? न कस्यचित्। कथं तर्हीदमुक्तम्—चक्षुर्विज्ञानधातोश्चक्षुर्धातुराश्रय इत्यादि? आश्रय एव चक्षुः, यस्तु किञ्चिदनाश्रयस्तत्सभागं चक्षुस्तदपि तज्जातीयत्वाच्चक्षुर्धातुत्वेन व्यवस्थाप्यत एव। एवं यावत्कायधातुर्वक्तव्यः। मनोधातुरपि किं मनोविज्ञानधातोरेवाश्रयः? नेत्याह। चक्षुर्विज्ञानधात्वादीनामपि हि स आश्रय इष्यते। तथा हि वक्ष्यति—

"चरमस्याश्रयोऽतीतः पञ्चानां सहजश्च तैः"

( अभि० को० १. ४४ ) इति।

किं तर्हीदमुक्तम्—

"षष्ठाश्रयप्रसिद्ध्यर्थं धातवोऽष्टादश स्मृताः"

( अभि० को० १. १७ ) इति?

नान्येषामाश्रयः स इति कृत्वा षष्ठाश्रयप्रसिद्धिर्न भवति। षष्ठस्याप्ययमाश्रयो भवति, सम्भवतः। आलम्बनषट्कमपि, चक्षुर्विज्ञानधातोरालम्बनं रूपधातुर्यावन्मनोविज्ञानधातोर्धर्मधातुरालम्बनमिति।

तदिदं विचार्यते—किं यथा चक्षुर्विज्ञानधातोर्यावन्ति रूपाण्यालम्बनं स रूपधातुः, एवं यावत्कायविज्ञानधातोर्यावन्ति स्प्रष्टव्यान्यालम्बनं स स्प्रष्टव्यधातुः, एवं मनोविज्ञानधातोर्यावन्तो धर्मा आलम्बनं स धर्मधातुरिति? अत्र *स्थविर* आह—सर्वधर्मस्वभावो धर्मधातुः। अष्टादशधातुस्वभाव इत्यर्थः। कथमस्याध्यात्मिकबाह्यधातुव्यवस्था सिध्यति, चक्षुरादयो हि द्वादशाध्यात्मिका इष्यन्ते, षड् बाह्या इति, यदि हि तेऽपि धर्मधातावन्तर्भाव्येरन्, साङ्कर्यं प्राप्नोति? *स्थविर* आह—'पार्यायिकमेषामाध्यात्मिकबाह्यत्वम्। विज्ञानानामाश्रयास्ते चक्षुरादय इत्याध्यात्मिकाः, मनोविज्ञानविषयत्वात्तु बाह्याः' (          ) इति।

तदेवं नेच्छन्ति *वैभाषिकाः*, सूत्रविरोधात्। एवं हि *सूत्र* उक्तम्—'धर्मा भिक्षो बाह्यमायतनमेकादशभिरायतनैरसंगृहीतमनिदर्शनमप्रतिघम्' (          ) इति। तस्मात् सप्तद्रव्यको धर्मधातुरेष्टव्यः; अविज्ञप्तिवेदनासंज्ञासंस्कारस्कन्धाकाशप्रतिसंख्यानिरोधाप्रतिसंख्यानिरोधस्वभावत्वात्। अपरिपूर्णस्तर्हि मनोविज्ञानधातोरालम्बननिर्देशः, न च चक्षुर्विज्ञानादीनामपरिपूर्ण आलम्बननिर्देश इष्यते? अस्त्वेतदेवम्; किन्तु चक्षुरादीनां षण्णामाश्रयत्वेन निर्देशात् चक्षुर्विज्ञानादीनां चाश्रितत्वेन रूपादीनां च पञ्चानां पञ्चविज्ञानकायालम्बनत्वेन निर्देशात् न तेषां मनोविज्ञानविषयत्वेऽपि धर्मधातौ प्रक्षेप इति वर्णयन्ति ॥१७॥

समासतस्तु ज्ञातव्यः—

**सर्वसंग्रह एकेन स्कन्धेनायतनेन च ।**

**धातुना च,**

रूपस्कन्धेन मनआयतनेन धर्मधातुना च सर्वधर्माणां संग्रहो बोद्धव्यः । स खल्वेष संग्रहो यत्र क्वचिदुच्यमानो वेदितव्यः—

**स्वभावेन,**

न परभावेन । किं कारणम् ?

**परभावावियोगतः ॥ १८ ॥**

वियुक्तो हि परभावेन धर्मः । तस्मान्न येन वियुक्तस्तेनैव संगृहीतो युज्यते । तद्यथा—चक्षुरिन्द्रियं रूपस्कन्धेन चक्षुरायतनधातुभ्यां[1] दुःखसमुदयसत्याभ्यां च संगृहीतम्; तत्स्वभावत्वात् । नान्यैः स्कन्धादिभिः; तद्भावावियुक्तत्वात् ।

*समासतस्तु ज्ञातव्यः सर्वसंग्रह* इति । आयतनादिभिरपि सर्वसंग्रहः, न तु समासतः, किं तर्हि ? विस्तरतः । अयं तु देशनात्रयान्निष्कृष्य समासत उक्तः । *रूपस्कन्धेन* रूपस्कन्धः संगृहीतः, दश चेन्द्रियार्थस्वभावान्यायतनानि धातवश्च, धर्मायतनधात्वेकदेशश्चाविज्ञप्तिः । *मनआयतनेन* विज्ञानस्कन्धः, तदेव च मनआयतनम्, सप्त चित्तधातवश्च संगृहीताः । *धर्मधातुना* वेदनासंज्ञासंस्कारस्कन्धाः संगृहीता धर्मायतनं धर्मधातुश्च । अविज्ञप्तिरिह द्विः संगृहीता ।

*तद्यथा चक्षुरिन्द्रियमि*ति । चक्षुरिन्द्रियं वेदनादिस्कन्धश्रोत्राद्यायतनधातुनिरोधसत्यमार्गसत्यस्वभावेन वियुक्तम् । अत एतदुक्तम्—*चक्षुरिन्द्रियं रूपस्कन्धेन चक्षुरायतनधातुभ्यां दुःखसमुदयसत्याभ्यां च संगृहीतम्, तत्स्वभावत्वात्; नान्यैः स्कन्धादिभिः, तद्भावावियुक्तत्वा*दिति । महतात्राल्पकं संगृहीतम्, न तु महदल्पकेन । कथमिति ? रूपस्कन्धो महान् सर्वरूपसंग्राहकत्वात् । चक्षुरिन्द्रियमल्पकं रूपस्कन्धैकदेशत्वात् । रूपस्कन्धेन चक्षुरिन्द्रियं संगृहीतम्, न तु चक्षुरिन्द्रियेण रूपस्कन्धः; चक्षुरिन्द्रियव्यतिरिक्तरूपस्कन्धसद्भावात् । तद्यथा—हस्तिपदेन पक्षिपदं संगृहीतम्, न तु पक्षिपदेन हस्तिपदं संगृहीतम्, तद्वत् । समेन तु सममन्योन्यं संगृहीतम् । तद्यथा चक्षुरिन्द्रियं चक्षुरायतनेन, चक्षुरायतनमपि चक्षुरिन्द्रियेणेत्ययम*भिधर्मनयो* वेदितव्यः ।

१. चक्षुरायतनधातुभ्यां च—का० ।

यस्त्वन्येनान्यस्य संग्रह उच्यते, यथा सग्रहवस्तुभि. पर्षदाम्; स हि कादाचित्कः[1] साङ्केतिको वेदितव्यः ॥ १८ ॥

ननु चैकविंशत्या धातुभिर्भवितव्यम्, चक्षुषो द्वित्वात् श्रोत्रघ्राणयोश्च ? न भवितव्यम्। यस्मात्—

**जातिगोचरविज्ञानसामान्याद् एकधातुता।**
**द्वित्वेऽपि चक्षुरादीनाम्,**

तत्र **जातिसामान्यम्**; उभयोश्चक्षुःस्वभावत्वात्। **गोचरसामान्यम्**; उभयोः रूपविषयत्वात्। **विज्ञानसामान्यम्**; उभयोरेकचक्षुर्विज्ञानाश्रयत्वात्। तस्मादेक एव चक्षुर्धातु.। एवं श्रोत्रघ्राणयोरपि योज्यम्।

**शोभार्थं तु द्वयोद्भवः ॥ १९ ॥**

एकधातुत्वेऽपि तु चक्षुरादीनां द्वयोः सम्भवः, आश्रयस्य **शोभार्थम्**। अन्यथा हि एकचक्षु श्रोत्राधिष्ठानैकनासिकाबिलसम्भवात् महद् वैरूप्यं स्यादिति ॥ १९ ॥

उक्ताः स्कन्धायतनधातवः ॥

---

*यथा सग्रहवस्तुभिः पर्षदामिति*। चत्वारि संग्रहवस्तूनि—दानम्, प्रियवादिता, अर्थचर्या, समानार्थता च। चतस्र. पर्षद —भिक्षुभिक्षुण्युपासकोपासिका। तैस्तासा संगह्। *स तु कादाचित्कः*। कदाचिद्भव कादाचित्कः। कदाचिदासा दीयते, प्रियं चोच्यते। न च संग्रह इति। *सांकेतिकः* साव्यवहारिक.। स्वभावसंग्रहस्तु पारमार्थिक इत्युक्तम् ॥ १८ ॥

*"जातिगोचरविज्ञानसामान्यादेकधातुता, द्वित्वेऽपि चक्षुरादीनाम्"* इति। अर्थादेतदुक्तम्—जात्यादिभेदाद् यथासम्भवं धातुभेदव्यवस्थानम्, न त्वधिष्ठानभेदादिति। तत्र चक्षुर्धात्वादीनामन्योन्यं जातिगोचरविज्ञानभेदो भवति। रूपधात्वादीना जातिविज्ञानभेद', विज्ञानधातूना जातिगोचरभेदः। मनोविज्ञानस्यापि हि धर्मधातुरसाधारणा गोचर। *एवं श्रोत्रघ्राणयोरपि योज्यमिति*। जातिसामान्यमुभयो श्रोत्रस्वभावत्वात्, गोचरसामान्यमुभयो शब्दविषयत्वात्, विज्ञानसामान्यमुभयोरेकश्रोत्रविज्ञानाश्रयत्वात्। तस्मादेक एव श्रोत्रधातुः। एवं घ्राणस्यापि योज्यम्।

कार्यान्तराभावात् तर्हि द्वयानुत्पत्तिप्रसङ्ग. स्याद् ? इत्यत आह—"*शोभार्थं तु द्वयोद्भवः*" इति। *एकचक्षुःश्रोत्राधिष्ठानैकनासिकाबिलसम्भवान्महद् वैरूप्यं*

---

१ कादाचित्कत्वात्—का०।

इदं तु वक्तव्यम्—कः स्कन्धायतनधात्वर्थ इति ?

**राश्यायद्वारगोत्रार्थाः स्कन्धायतनधातवः ।**

"यत् किञ्चिद्रूपमतीतानागतप्रत्युत्पन्नमाध्यात्मिकबाह्यम्, औदारिक वा सूक्ष्मं वा हीनं वा प्रणीतं वा यद्वा दूरे यद्वा अन्तिके, तत् सर्वमैकध्यमभिसंक्षिप्य रूपस्कन्ध इति संख्यां गच्छति" ( विभ० १.१.१.२ ) इति सूत्रे[1] वचनात् सूत्रे

स्यादिति। एकस्य चक्षुःश्रोत्राधिष्ठानस्य एकस्य च नासिकाबिलस्य सम्भवात् महद् वैरूप्यं स्यात्। ननु, चोष्ट्रमार्जारोलूकप्रभृतीनां चक्षुरादिद्वयोद्भवेऽपि न भवत्याश्रयशोभा ? जात्यन्तरापेक्षया न तेषामाश्रयशोभा, स्वजात्यपेक्षया तु यस्य चक्षुरादिद्वयमस्ति तस्य तस्यां स्वजातावाश्रयशोभा, यस्य नास्ति तस्य वैरूप्यमिति अदूष्यमेतत्।

आचार्यसङ्घभद्रस्त्वस्य सूत्रस्यार्थं विवव्रे—"शोभार्थमित्याधिपत्यार्थमित्यर्थः। आधिपत्यसम्पन्नो हि लोके शोभत इत्यपदिश्यते। येषां चेन्द्रियाणामभून्यधिष्ठानानि तेषां परिशुद्धदर्शनश्रवणघ्राणाद्याधिपत्यं स्यात्। न हि यथा द्वाभ्यां चक्षुर्भ्यां परिशुद्धं दर्शनं भवति, तथैकेन। एवमितरयोरपि। एवं चैषामिन्द्रियत्वं हीयेत तदर्थमेतदुक्तं स्याद्" इति। स्फुटोपलब्ध्यर्थमित्यर्थः। इहापि शक्यमेवं वक्तुम्—एकमेव परिस्फुटोपलब्ध्याश्रयभूतं विस्तीर्णं कर्मणोत्पाद्यताम्, किमाश्रयविच्छेदेनेति।

*विभाषायां* तु लिखितमेतत् पक्षद्वयम्—शोभार्थं द्वयोद्भव इत्येके, व्यक्त्यर्थमित्यपर इत्यलं प्रसङ्गेन।

ननु च कर्मवशादिन्द्रियद्वयोत्पत्तिः, किमन्यदेवोच्यते—शोभार्थं व्यक्त्यर्थं चेति ? कर्मवशादेवात्रेन्द्रियद्वयोद्भव उक्तः। कथमिति ? एवं विभक्तावयवाश्रयेणानादिकालाभ्यस्तः शोभाभिमानः सत्त्वानां प्रवर्तते। अतस्तदभिलापपूर्वकेण स्फुटोलब्ध्यभिलाषपूर्वकेण च कर्मणा तदिन्द्रियद्वयमभिनिर्वर्त्यमानं शोभार्थं व्यक्त्यर्थं चोद्भवतीत्युच्यते ॥ १९ ॥

*"राश्यायद्वारगोत्रार्थाः स्कन्धायतनधातवः"* इति। यथाक्रमं राशिरायद्वारं गोत्रं चार्थ एषां त इमे राश्यायद्वारगोत्रार्थाः। के ? स्कन्धायतनधातुशब्दाः। अथ वा—राश्यायद्वारगोत्रशब्दानामर्थाः के ? स्कन्धायतनधातवः। *सूत्रे वचनात्* सूत्रे *राश्यर्थः स्कन्धार्थ* इति। राशेर्योऽर्थः स स्कन्धस्यार्थः। तं सूत्रेण दर्शयति—*यत्किञ्चिद् रूपमतीतानागतप्रत्युत्पन्न*मिति विस्तरः। *ऐकध्य*मिति। एक-

1. का० पुस्तके नास्ति।

**राश्यर्थः स्कन्धार्थ** इति सिद्धम्। तत्रातीतं रूपमनित्यतानिरुद्धम्। अनागतमनुत्पन्नम्। प्रत्युत्पन्नमुत्पन्नानिरुद्धम्। आध्यात्मिकं स्वासान्तानिकम्, बाह्यमन्यदायतनतो वा। औदारिकं सप्रतिघं सूक्ष्मम्, अप्रतिघमापेक्षिकं वा। आपेक्षिकत्वादसिद्धमिति चेत्? न, अपेक्षाभेदात्। यदेवापेक्ष्यौदारिक[1] न जातु तदपेक्ष्य सूक्ष्मम्, पितृपुत्रवत्[2]।

---

षैवैकध्यम्। *अनित्यतानिरुद्धमिति*। अनित्यतया संस्कृतलक्षणेन निरुद्धमित्यर्थः। अनित्यताग्रहणमन्यनिरोधनिरासार्थम्। पञ्चविधो हि निरोध—लक्षणनिरोधः, समापत्तिनिरोधः, उपपत्तिनिरोधः, प्रतिसंख्यानिरोधः, अप्रतिसंख्यानिरोधश्च। तद्यद्यतीतं रूपं निरुद्धमित्येवं ब्रूयात्, अविशेषितत्वात् समापत्तिनिरोधादीनामपि प्रसङ्गः स्यात्। न च तैरतीतार्थतेष्यते। समापत्तिनिरोधो ह्यनागतानामेव चित्तचैत्तानाम्, उपपत्तिनिरोधोऽप्येषामेव, प्रतिसंख्यानिरोधः सास्रवाणामेव, अप्रतिसंख्यानिरोधो ह्यनुत्पत्तिधर्माणामेवानागतानाम्। तस्माल्लक्षणनिरोधग्रहणार्थमिदमनित्यताग्रहणम्।

*अनागतमनुत्पन्नमिति*। प्रत्युत्पन्नतामसम्प्राप्तम्। *प्रत्युत्पन्नमुत्पन्नानिरुद्धमिति*। उत्पन्नग्रहणमनागतविशेषणार्थम्। अनिरुद्धग्रहणमतीतविशेषणार्थम्। अनागतं यद्यप्यनिरुद्धं न तूत्पन्नम्। अतीतमपि यद्यप्युत्पन्नं न त्वनिरुद्धमिति। *आध्यात्मिकं स्वासान्तानिकमिति*। चक्षुरादिकं रूपादिकं च। *बाह्यमन्यदिति*। तदेव पारसान्तानिकम्, असत्त्वसंख्यातं च। *आयतनतो वेति*। आध्यात्मिकं चक्षुरादिपञ्चकं स्वपरसन्ततिपतितम्, "द्वादशाध्यात्मिका" (अभि० को० १ ३९) इति वचनात्। बाह्यमन्यद् रूपादिकं विषयपञ्चकं स्वपरसन्ततिपतितम् असत्त्वसंख्यातं चाविज्ञप्तिश्च, बाह्यायतनस्वभावमिति कृत्वा। *औदारिकं सप्रतिघमिति*। परमाणुसञ्चयस्वभावम्। *सूक्ष्ममप्रतिघम्*। अविज्ञप्तिरूपम्। *आपेक्षिकं वेति*। अपेक्षया वौदारिकं सूक्ष्मं च भवति, तद्यथा—लिक्षामपेक्ष्यौदारिकी यूका, यूकामपेक्ष्य सूक्ष्मा लिक्षेति। तदेवं सति सप्रतिघमेवौदारिकं च सूक्ष्मं भवति। अप्रतिघं तु सूक्ष्ममेव, असञ्चितत्वात्। *आपेक्षिकत्वादसिद्धमिति*। सैव सूक्ष्मा लिक्षा वातायनरजोऽपेक्ष्यौदारिकी, सैव चौदारिकी यूकामपेक्ष्य सूक्ष्मेत्यव्यवस्थितमौदारिकसूक्ष्मत्वं पारापारवत्। कथं हि नामौदारिकं सूक्ष्मं भवति, सूक्ष्मं चौदारिकमिति? *न; अपेक्षाभेदादिति*। अपेक्षया भेदोऽपेक्षाभेदः, तस्मान्नासिद्धम्। *यदेवापेक्ष्यौदारिक न जातु तदपेक्ष्य सूक्ष्मम्*। न कदाचित् तदेवापेक्ष्यमित्यर्थः। *पितृपुत्रवदिति*।

---

१. यदपेक्ष्यौदारिक—का०।

२. पितापुत्रवद्—का०।

हीनम् = क्लिष्टम् । प्रणीतम् - अक्लिष्टम् । दूरम् = अतीतानागतम् । अन्तिकम् = प्रत्युत्पन्नम् । एवं यावद् विज्ञानम् ।

अयं तु विशेषः—औदारिकं पञ्चेन्द्रियाश्रयं सूक्ष्मं मानसम् । भूमितो वेति **वैभाषिकाः** । **भदन्त** आह—"औदारिकरूप पञ्चेन्द्रियग्राह्यम् । सूक्ष्ममन्यत् । हीनममनापम् । प्रणीतं मनापम् । दूरमदृश्यदेशम् । अन्तिकं दृश्यदेशम्;

---

तद्यथा—देवदत्तस्य पुत्रो यज्ञदत्त, यज्ञदत्तस्य पुत्रो विष्णुमित्र., स यज्ञदत्तो विष्णुमित्रमपेक्ष्य पिता, देवदत्तमपेक्ष्य पुत्र । न चापेक्षिकत्वादस्य पितृपुत्रभावो न सिध्यति, अपेक्षाभेदात् । न हि स यज्ञदत्तस्तमेव विष्णुमित्रमपेक्ष्य पुत्र , नापि तमेव देवदत्तमपेक्ष्य पितेति, तद्वत् । *हीनं क्लिष्टम्;* सद्भिस्त्यक्तमिति कृत्वा । *प्रणीतमक्लिष्टम्;* क्लेशादूषितत्वात् । *दूरमतीतानागतम्;* सन्तानप्रच्युतत्वात् । तदसम्प्राप्तत्वाच्च । *अन्तिकं प्रत्युत्पन्नम्;* सन्तानसन्निहितत्वात् । *एवं यावद्विज्ञान*मिति । या काचिद् वेदना अतीतानागतप्रत्युत्पन्ना आध्यात्मिकी वा बाह्या वा औदारिकी वा सूक्ष्मा वा या वा दूरे या वा अन्तिके ता सर्वामैकध्यमभिसंक्षिप्य वेदनास्कन्ध इति संख्या गच्छति । एवं यावद्विज्ञानं वक्तव्यम्, यावत् सर्वमैकध्यमभिसंक्षिप्य विज्ञानस्कन्ध इति संख्या गच्छतीति । अतीतादित्वमेषा वेदनादीनां यथा रूपस्य । *अयं तु विशेषो* वेदनादीनाम् । *औदारिकं पञ्चेन्द्रियाश्रयं* वेदनादिचतुष्कम् । अमूर्तत्वात् स्वगतमौदारिकत्वं नास्ति । *सूक्ष्म मानसम् । भूमितो वेति ।* *औदारिकं* सूक्ष्मं च वेदनादिकम् । औदारिकी कामावचरी वेदना, सूक्ष्मा प्रथमध्यानभूमिका । औदारिकी प्रथमध्यानभूमिका, सूक्ष्मा द्वितीयध्यानभूमिका । एवं यावदौदारिक्याकिञ्चन्यायतनभूमिका, सूक्ष्मा भवाग्रभूमिकेति । यथा वेदना एवं यावद्विज्ञानं वक्तव्यम् ।

भदन्त इति स्थविर. । कश्चित् सौत्रान्तिक', तन्नामा वा । *भगवद्विशेषस्त्वाह—स्थविरधर्मत्रातोऽसा*विति । अत्र वयं ब्रूम —यदि *धर्मत्रातोऽ*तीतानागतास्तित्ववादी स इति न सौत्रान्तिक' । न दार्ष्टान्तिक इत्यर्थ. । तथा हि वक्ष्यति—"भावान्यथिको भदन्त*धर्मत्रातः* । स किलाह—धर्मस्याध्वसु प्रवर्तमानस्य भावान्यथात्वं भवति, न द्रव्यस्यान्यथात्वम्" इति । *सौत्रान्तिक*दर्शनावलम्बी चायं **भदन्तो** *विभाषाया* लिखित —भदन्त आहेत्येवमादि । भदन्त*धर्मत्रातो*ऽपि **स्वनाम्नैव** *विभाषाया* लिखित —भदन्तधर्मत्रात आहेत्येवमादि । तेन लक्ष्यते—भदन्त*धर्मत्राता*दन्योऽयं सौत्रान्तिक. कश्चित् स्थविरो भिक्षुरिति ।

*पञ्चेन्द्रियग्राह्य*मिति । रूपादिपञ्चकम् । *सूक्ष्ममन्यच्चक्षुरा*दिपञ्चकम्, अविज्ञप्तिश्च । *मनाप*मिति । मन आप्नोतीति मनआपं मनोज्ञमित्यर्थः । पुन. सन्धिकरणं

अतीतादीनां स्वशब्देनाभिहितत्वात्। एवं वेदनादयोऽपि वेदितव्याः। दूरान्तिकत्वं तु तेषामाश्रयवशात्। औदारिकसूक्ष्मत्वं[1] पूर्ववद्" (　　　　) इति।

चित्तचैत्तायद्वारार्थ **आयतनार्थः**। निर्वचनं तु—चित्तचैत्तानामायं तन्वन्तीति आयतनानि। विस्तृण्वन्तीत्यर्थः। **गोत्रार्थो धात्वर्थः**। यथैकस्मिन् पर्वते बहून्ययस्ताम्ररूप्यसुवर्णादिगोत्राणि धातव उच्यन्ते, एवमेकस्मिन्नाश्रये सन्ताने वा अष्टादश गोत्राणि अष्टादश धातव उच्यन्ते। आकरास्तत्र गोत्राण्युच्यन्ते।

त इमे चक्षुरादयः कस्याकराः? स्वस्या जातेः; सभागहेतुत्वात्। असंस्कृतं न[2] धातुः स्यात्। चित्तचैत्तानां तर्हि जातिवाचकोऽयं धातुशब्द

---

चात्र द्रष्टव्यम्—"पूर्वत्रासिद्धम्" (पा० सू० ७.२ १) इति ईषदर्थे नञ्परिग्रहात् किञ्चित्सिद्धमित्येकसवर्णदीर्घत्वम्। *दूरमदृश्यदेशमिति*। आधारदेशमाश्रयाधारदेशं चाधिकृत्य। द्रष्टुं शक्यो दृश्य, दृश्यो देशोऽस्येति दृश्यदेशं दृश्याधारदेशम्, दृश्याश्रयाधारदेशं वा। तद्यथा—कुण्डे बदरम्, चक्षुरादि वा। *तदन्तिकम्*। अदृश्यदेशं तु तद्विपरीतं दूरम्। दूरमदृश्यमिति नोक्तम्, आसन्नमपि हि किञ्चिदतिसूक्ष्मत्वान्न दृश्यते। न च तद् दूरमिष्यते, दृश्यदेशत्वात्।

किमर्थं पुनरेवं भदन्तेन व्याख्यायते? *अतीतादीना स्वशब्देनाभिहितत्वात्*। अन्यथा हि पुनरुक्तदोष. स्यात्। *दूरान्तिकत्वं तु तेषामाश्रयवशादिति*। तेषा वेदनादीनाम्, अमूर्तत्वेनादेशस्थत्वात्। तस्मादेवं वक्तव्यम्—दूरेऽदृश्यमानाश्रया वेदनादय., अन्तिके दृश्यमानाश्रया इति। *औदारिकसूक्ष्मत्वं पूर्ववदिति*। औदारिकं पञ्चेन्द्रियाश्रयम्, सूक्ष्मं मानसमिति।

*चित्तचैत्तानामायम्* उत्पत्ति *तन्वन्तीत्यायतनानि*। द्वयं प्रतीत्य विज्ञानस्योत्पत्तिरिति सर्वेषामायतनत्वसिद्धिः। *एकस्मिन्नाश्रये संताने वेति*। आश्रये=समुदायलक्षणे शरीरे, सन्ताने वा चित्तादीना प्रवाहलक्षणे।

*स्वस्या जातेः*। किम्? आकरा इति प्रकृतम्। *सभागहेतुत्वात्*। पूर्वोत्पन्नं चक्षुः पश्चिमस्य सभागहेतुरित्याकरो *धातुः*। यतो हि सुवर्णाद्युत्पत्तिस्ते तेषामाकरा.। *असंस्कृतं न धातुः स्यात्*। न ह्यसंस्कृतस्यान्यस्य वा सभागहेतु.।

*चित्तचैत्तानां तर्हीति*। किम्? आकरा इति प्रकृतम्। द्वयं प्रतीत्य विज्ञान-

---

१. ०सूक्ष्मत्व तु—का०।

२. तर्हि न—का०।

इत्यपरे। अष्टादशधर्माणां जातयः स्वभावा अष्टादश धातव इति।

यदि राश्यर्थः स्कन्धार्थः, प्रज्ञप्तिसन्तः स्कन्धाः प्राप्नुवन्ति, अनेकद्रव्यसमूहत्वात् राशिपुद्गलवत्? न; एकस्यापि द्रव्यपरमाणोः स्कन्धत्वात्।

न तर्हि 'राश्यर्थः स्कन्धार्थः' इति वक्तव्यम्, न ह्येकस्यास्ति राशित्वमिति? कार्यभारोद्वहनार्थः स्कन्धार्थ इत्यपरे। प्रच्छेदार्थो वा। तथा हि वक्तारो भवन्ति–त्रिभिः स्कन्धकैर्देयं दास्याम इति।

तदेतदुत्सूत्रम्। सूत्रे हि राश्यर्थमेव ब्रवीति—"यत्किञ्चिद्रूपमतीतानागतप्रत्युत्पन्नम्" (विभ० १.१.१.२) इति। विस्तरः—प्रत्येकमतीतादिरूपस्य स्कन्धत्वं तत्र विज्ञाप्यते—सर्वमेतदतीतादि रूपमेकशो रूपस्कन्ध इति? न शक्यमेवं विज्ञातुम्, "तत् सर्वमैकध्यमभिसंक्षिप्य" इति वचनातिरेकात्[1]।

---

स्योत्पत्तिरिति सर्वे धातवो विज्ञानस्य ससम्प्रयोगस्य प्रत्ययोऽवश्यमालम्बनमधिपतिश्चेत्याकरा.।

*राशिपुद्गलवदिति*। प्रज्ञप्तिसन्त. स्कन्धा, राशिशब्दवाच्यत्वात्, धान्यराशिवत्, पुद्गलवद्वा। स हि प्रज्ञप्तिसन्पुद्गल. रूपादिप्रज्ञप्तिसन्पुद्गल, रूपादिप्रज्ञप्तिकारणनिरपेक्ष्यागृह्यमाणस्वभावत्वात्, धान्यराशिवत्।

*कार्यभारोद्वहनार्थ* इति। कार्यमेव भार: कार्यभार तदुह्यते तेनेत्युद्वहनम्, कार्यभारस्योद्वहनं कार्यभारोद्वहनम्=शरीरप्रदेश., स लोके स्कन्ध इत्युच्यते। अनेनापि कार्यभार उह्यते, "नामरूपप्रत्ययं षडायतनम्" ( ) इत्यादिवचनात्। तस्मात् स्कन्ध इव स्कन्ध इत्यौपचारिकशब्द.। *प्रच्छेदार्थो वा*। अवध्यर्थो वेत्यर्थ.। रूपप्रच्छेद., यावद्विज्ञानप्रच्छेद इति।

*तदेतदुत्सूत्रमिति*। तदेतदुभयं कार्यभारोद्वहनार्थं, प्रच्छेदार्थश्चेति। उत्क्रान्तं सूत्रादुत्सूत्रम्। *सूत्रे हीति*। विस्तरेण तत्प्रतिपादयति। *प्रत्येकमिति विस्तरः*। कथम्? इत्याह—*सर्वमेतदतीतादिरूपमेकश* एकैकं *रूपस्कन्ध* इति। समुदायेन समुदायिद्रव्यमुक्तम्। तेषा ह्यतीतादीना रूपाणा स राशिरित्यभिप्राय। सूत्रेऽप्येवमेवोक्तम्—"पृथिवीधातु कतम? केशा रोमाणि" (विभ० ३ १ १ २) इति। विस्तर.–एकैकं केशादिद्रव्यं पृथिवीधातुरिति विज्ञायते। अयं च परिहार: कार्यभारोद्वहनार्थपक्षयोरपि शक्यते वक्तुम्। *न शक्यमेवमिति विस्तर.*। *एकध्यमभिसंक्षिप्येति वचनातिरेकाद्* एकैकं रूपस्कन्ध इति न शक्यते विज्ञातुम्।

---

१. वचनात्—का०।

तस्माद् राशिवदेव स्कन्धाः प्रज्ञप्तिसन्तः ।

रूपीण्यपि तर्ह्यायतनानि प्रज्ञप्तिसन्ति प्राप्नुवन्ति, बहूनां चक्षुरादिपरमाणूनामायद्वारभावात् ? न; एकशः समग्राणा कारणभावात् विषयसहकारित्वाद् वा नेन्द्रियं पृथगायतनं स्यात् । विभाषायां तूच्यते—"यद्याभिधर्मिकः स्कन्धप्रज्ञप्तिमपेक्षते, स आह—परमाणुरेकस्य धातोरेकस्यायतनस्यैकस्य स्कन्धस्य

---

यदि ह्येवमर्थोऽभविष्यत्, तत् सर्वं रूपस्कन्ध इत्येवावक्ष्यत्, नार्थम् 'ऐकध्यमभिसंक्षिप्य' इति वचनेन ।

*तस्माद्राशिवदेव स्कन्धाः प्रज्ञप्तिसन्त* इति स्थापनापक्ष *आचार्यस्य* । द्रव्यसद्रूपप्रतिपत्तिस्तु स्कन्धनिर्देशे तत्समुदायित्वादित्यवगन्तव्यम् ।

*रूपीण्यपी*ति । विस्तर.—रूपिग्रहणमरूपिविशेषणार्थम् । अरूपि हि मनआयतनमसंहतमपि कारणभावं बिभर्ति । रूपीण्यपि चक्षुरादीन्यायतानि समुदितान्येव चित्तचैत्तायद्वारता गच्छन्ति नासमुदितानीति समुदायलक्षणत्वात् स्कन्धवत्प्रज्ञप्तिसन्ति स्यु । सञ्चिताश्रयालम्बना हि पञ्च विज्ञानकाया इति ? *न; एकशः समग्राणा कारणभावा*दिति । नैतदेवम् । कस्मात् ? एकश. प्रत्येकं समग्राणा समुदिताना कारणत्वात्। यस्माद् बहूनामेषा चक्षुरादिपरमाणूना परस्परमपेक्षमाणानामेकैकश कारणभाव, न त्वसंहतानाम् । तद्यथा दार्वाकर्षणे बहूनामकर्ष्टॄणा प्रत्येकमसामर्थ्यम्, समुदिताना तु परस्परमपेक्ष्यमाणाना सामर्थ्यम् । यथा वा केशा पृथग्पृथगवस्थिता न समर्थास्तैमिरिकचक्षुर्विज्ञानकरणे, समुदितास्त्वसंयुक्ता अपि समर्था । तद्वच्चक्षुरादीन्द्रियपरमाणवो रूपादिविषयपरमाणवश्च चक्षुरादिविज्ञानोत्पादने प्रत्येकमसमर्था., समुदितास्तु समर्था । शक्तिर्हि भावाना तादृश्यवगन्तव्या ।

*विषयसहकारित्वाद्वे*ति । यदि बहूनामायद्वारभाव इति समुदायायतनत्वं स्यात्, न द्रव्यायतनत्वम् । इन्द्रियविषयपरमाणूना समुदितानामायद्वारभाव इति तत्समुदायायतनत्वं स्यात्, न पृथगायतनत्वं स्यात् । इष्यते च पृथगायतनत्वम्, "द्वादशायतनानि" इति सूत्रात् । साधनं चात्रोपतिष्ठते—'ये सहकारिणो न ते सह समुदायात्मकायतनभूताश्चक्षुरायतनसमुदायद्रव्यपरमाणव ; चक्षुर्विज्ञानकारणत्वात्, चक्षुरायतनरूपायतनसमुदायद्रव्यपरमाणुवत्, यथा चक्षुरायतनसमुदायद्रव्यपरमाणव.' । एवं यावत्कायायतनसमुदायद्रव्यपरमाणवो योज्या ।

*विभाषाया तूच्यत* इति । अनेनापि "प्रज्ञप्तिसन्त स्कन्धा" इति व्याचष्टे । अयं तु विशेष—अद्रव्यसन्तोऽपि ते तत्रोपचारेण प्रदर्श्यन्त इति विशेषार्थस्तुशब्द. । *स्कन्धप्रज्ञप्तिमपेक्षत* इति । स्कन्ध इति प्रज्ञप्तिमपेक्षते इत्यर्थ. । *परमाणु-*

प्रदेशः; अथ नापेक्षते, स आह—परमाणुरेको धातुरेकमायतनमेकः स्कन्धः" इति। भवति हि प्रदेशेऽपि प्रदेशिवदुपचारः, यथा–पटैकदेशे दग्धे पटो दग्ध इति।

किमर्थं भगवान् स्कन्धादिमुखेन त्रिविधां देशनामारभते? आह—विनेयानाम्

**मोहेन्द्रियरुचित्रैधात् तिस्रः स्कन्धादिदेशनाः ॥ २० ॥**

त्रयः प्रकारास्त्रैधम्। त्रिप्रकारः किल सत्त्वानां **मोहः**—केचिच्चैतेषु

---

रेकस्य धातोरिति। दशाना चक्षुरादीनां रूपिणा धातूनामन्यतमस्य प्रदेश। एवमायतनानामेषामेवान्यतमस्य रूपस्कन्धस्य च प्रदेश.। कस्मात्? न हि प्रज्ञप्तावपेक्षिताया प्रदेशिनि वृत्त शब्द. प्रदेशे व्यवस्थाप्यते। *अथ नापेक्षते।* किम्? स्कन्धप्रज्ञप्तिमित्यधिकृतम्। *स आह परमाणुरेको धातुरिति*। विस्तरः—स एकैकस्तेषामायतनधातूना योऽन्यतम उक्तो रूपस्कन्धश्च। *भवति हि प्रदेशेऽपि प्रदेशिवदुपचार* इति। प्रदेशोऽपि परमाणावन्यतमरूपायतनधातुवद् रूपस्कन्धवच्चोपचार। "तत्र तस्येव" ( पा० सू० ५.१ ११६ ) इति वति.। *यथा पटैकदेशे दग्धे पटो दग्ध* इति। यथा पटशब्द समुदाये प्रवृत्त. प्रदेशेऽप्युपचर्यते पटैकदेशे, तद्वत्स्कन्धशब्दोऽतीतादिरूपसमुदाये वृत्त. प्रदेशेऽपि परमाणावुपचर्यंत इति। स्कन्धा एव प्रज्ञप्तिसन्तो नायतनधातव इति, रूपादीना स्कन्धा इति कृत्वा। यदा तु रूपाण्येव स्कन्धा इति समासस्तदा द्रव्यसन्त. स्कन्धा इत्यभिप्राय.।

इदमिह विचार्यते—किमत्र कारणं यदिन्द्रियपरमाणूना विषयपरमाणूना च विज्ञानोत्पत्तये तुल्येऽप्यन्योन्यसापेक्षत्वे न द्वयानामेषा केवलेन्द्रियपरमाणुवदेकायतनत्वं व्यवस्थाप्यते? यस्माच्चक्षुरिन्द्रियादिपरमाणव· सर्वे स्वविज्ञानोत्पत्तौ साधारणानि कारणानि भवन्ति, न तु तथा विषयपरमाणव.। तथा हि—चक्षुरिन्द्रियपरमाणवो नीलविषयविज्ञानोत्पत्तावपि कारणं भवन्ति, पीतादिविज्ञानोत्पत्तावपि। नीलविषयपरमाणवस्तु स्वविज्ञानोत्पत्तावेव कारणं भवन्ति, न पीतादिविज्ञानोत्पत्तौ। इत्यतश्चक्षुरिन्द्रियपरमाणुभिस्तद्विषयपरमाणूनामतुल्यवर्तित्वात् पृथक्स्थानावस्थितत्वात् न चक्षूरूपपरमाणूनामेकायतनत्वव्यवस्थानत्वं युज्यते। एवं यावत्कायेन्द्रियस्प्रष्टव्यपरमाणूनामेकायतनत्वव्यवस्थान न युज्यत इति वक्तव्यम्।

*"मोहेन्द्रियरुचित्रैधात्"* इति। सम्मोहप्रज्ञाधिमोक्षत्रैधादित्यर्थ.।

*त्रयः प्रकारास्त्रैधमिति*। त्रिधैव त्रैधमिति स्वार्थेऽण्प्रत्यय इत्येके। त्रिधा-

**सम्मूढाः पिण्डात्मग्रहणतः, केचिद् रूप एव, केचिद् रूपचित्तयो**[1] ।

**इन्द्रियाण्यपि त्रिविधानि—तीक्ष्णमध्यमृद्विन्द्रियत्वात् ।**

**रुचिरपि त्रिविधा—संक्षिप्तमध्यविस्तरग्रन्थरुचित्वात् । तेषां यथाक्रमं तिस्रः स्कन्धायतनधातुदेशना इति ॥ २० ॥**

---

भावस्त्रैधमिति भावेऽण्प्रत्यय इत्यपरे। मोहेन्द्रियरुचीना त्रैधम्, तस्मादिति। *पिण्डात्मग्रहणत* इति। केचिच्चैत्तान् पिण्डतो गृहीत्वा तानेवात्मतो गृह्णन्ति, पिण्डग्राहे सत्यात्मग्राहप्रवृत्ते। तेपा स्कन्धदेशना। तस्या हि वेदनासंज्ञासंस्कारभेदेन त्रिधा चैत्ता देशिता। 'नायमेक पिण्ड, चैत्तविशेषा इह' इत्यात्मग्राहः प्रतिपक्षितो भवति। अथ वा—पिण्डरूपोऽयमात्मभाव., स चात्मा वेदयिता, संज्ञाता, चेतयितेति केचित् सम्मूढा, तेषा स्कन्धदेशना। 'नायमात्मरूप पिण्ड., चैत्ता इमे वेदनासंज्ञासंस्कारा प्रवर्तन्ते' इत्यात्मग्राह प्रतिपक्षितो भवति। केचिद् रूप एवेति। 'पिण्डात्मग्रहणत सम्मूढा' इत्यधिकृतम्, तेषामायतनदेशना। तस्या हि रूपं चक्षुरादिभेदेन बहुधा विभक्तम्। चैत्तास्त्वेकधैव धर्मायतनत्वेन, चित्तं च मनआयतनत्वेनेति। केचिद् *रूपचित्तयो*रिति। 'सम्मूढा पिण्डात्मग्रहणत.' इत्यधिकृतमेव। तेषा धातुदेशना। तस्या हि रूपं चक्षुरादिभेदेन बहुधा विभक्तम्। चित्तं चक्षुर्विज्ञानादिधातुभेदेन। न तु चैत्ता, धर्मधातुत्वेनैव देशितत्वादिति। तया[1] रूपचित्तपिण्डग्राहसम्मोह प्रतिपक्षितो भवति।

*इन्द्रियाण्यपी*ति। विस्तर—त्रिविध पुद्गलस्तीक्ष्णमध्यमृद्विन्द्रियत्वात्। अथ वा त्रिविध पुद्गल—उद्घटितज्ञ, अविपञ्चितज्ञ., पदपरम इति। तत्र १ तीक्ष्णेन्द्रियाणा स्कन्धदेशना। ते हि तीक्ष्णेन्द्रियत्वात् स्कन्धभेदेनैवायतनधातुभेदं प्रतिपत्तुं शक्नुवन्ति। यथोक्तम्—"यद्भिक्षो न त्वं स ते धर्म प्रहातव्य इति। आज्ञातं भगवन्नित्याह। यथा कथमस्य भिक्षो संक्षिप्तेनोक्तस्यार्थमाजानासि? रूपं भदन्त नाहम्। स मे धर्म. प्रहातव्य" इति विस्तर.। २. मध्येन्द्रियाणामायतनदेशना। ते हि मध्येन्द्रियत्वान्मध्येनैव नातिविस्तीर्णेनायतनप्रभेदेन धातुप्रभेदं प्रतिपत्तुं शक्नुवन्ति। न तु संक्षिप्तेन स्कन्धप्रभेदेन। ३. मृद्विन्द्रियाणा धातुदेशना। ते हि मृद्विन्द्रियत्वान्नाविभक्तं स्वबुद्धिसामर्थ्येन प्रतिपत्तुं शक्नुवन्ति। *रुचिरपि त्रिविधे*ति। पूर्वाभ्यासयोगाद् रुचेस्त्रैविध्यम्। अथवा शमथचरिताना संक्षिप्ता रुचि, शमथविपश्यनाचरितानां मध्या रुचि, विपश्यनाचरिताना विस्तीर्णा रुचिरिति ॥ २० ॥

1. धातुदेशनयेत्यर्थः ।

किं पुनः कारणं चैतसिका एकत्र संस्कारस्कन्धनिक्षिप्ताः, वेदनासंज्ञे तु पृथक् स्कन्धीकृते ? इत्याह—

**विवादमूलसंसारहेतुत्वात् क्रमकारणात् ।**
**चैत्तेभ्यो वेदनासंज्ञे पृथक्स्कन्धौ निवेशितौ ।। २१ ।।**

द्वे **विवादमूले**—कामाध्यवसानम्, दृष्ट्यध्यवसानं च । तयोर्वेदनासंज्ञे यथाक्रमं प्रधानहेतू । वेदनास्वादवशाद्धि कामानभिष्वजन्ते, विपरीतसंज्ञावशाच्च दृष्टीरिति । **संसारस्यापि** ते प्रधानहेतू । वेदनागृद्धो[1] हि विपर्यस्तसंज्ञः संसरति ।

यच्च स्कन्धक्रमे कारणमुपदेक्ष्यमाणम्, ततोऽपि **क्रमकारणाद्**नयोः पृथक् स्कन्धीकरणं वेदितव्यम् । एतच्च त्रेधोपपादयिष्यामः ।। २१ ।।

---

*किं पुनः कारण*मिति विस्तर । ननु च कारणमुक्तम्—पिण्डात्मग्रहणतश्चैत्तसम्मूढाना स्कन्धदेशनेति ? सत्यमुक्तम्: चैत्तास्तेषा विभक्ता इति ।

*वेदनासंज्ञे* एव तु संस्कारस्कन्धात् । *पृथक् स्कन्धीकृते* । न पुनरन्य इति किमत्र कारणम् । *कामाध्यवसान*मिति विस्तर । कामेषु च दृष्टिषु चाभिष्वङ्ग. । *तयो*र्विवादमूलयोरध्यवसानयोर्*वेदनासंज्ञे यथाक्रमं प्रधानहेतू* इति । प्रधानग्रहणादविद्यादयोऽप्रधानहेतव इत्यर्थत उक्तं भवति । *वेदनास्वादवशाद्धि कामानभिष्वजन्ते* गृहिणः । *विपरीतसंज्ञावशाच्च दृष्टीः* । किम् ? अभिष्वजन्त इत्यधिकृतम् । अधर्मे धर्मसंज्ञिन., धर्मे चाधर्मसंज्ञिनोऽनात्मादिषु चात्मसंज्ञिनस्तास्ता दृष्टी. शीलव्रतपरामर्शादीरभिष्वजन्ते । के ते ? प्रायेण प्रव्रजिता. । *वेदनागृद्धो हीति* । विस्तर—वेदनासक्तश्चतुर्भिर्विपर्यासैर्विपर्यस्त. संसारे जन्मपरम्परा करोति ।

*क्रमकारणात्* इति । चत्वारि कारणानि स्कन्धानुक्रमे वक्ष्यन्ते–"यथौदारिकसंक्लेशभाजनाद्यर्थधातुत." ( अभि० को० १ २२ ) इति । रूपं हि सप्रतिघत्वात् सर्वौदारिकम् । अरूपिणा वेदना । प्रचारौदारिकतया । तथा हि व्यपदिशन्ति–हस्ते मे वेदना, पादे मे वेदनेति । द्वाभ्यामौदारिकतरा संज्ञा । विज्ञानात् संस्कारा इत्यतो यथौदारिकं तत् पूर्वमुक्तमिति प्रथमं कारणम् । अथ वा—अनादिमति संसारे स्त्रीपुरुषा अन्योन्यं रूपाभिरामा., ते च वेदनास्वादगर्धात्, तद्गर्ध. संज्ञाविपर्यासात्, तद्विपर्यास. क्लेशै, चित्तं च तत्संक्लिष्टमिति यथासंक्लेशं क्रम इति द्वितीयम् । भाजनाद्यर्थेन वा भाजनभोजनव्यञ्जनपक्तृ-

---

१. वेदनास्वाद०—का० ।

अथ कस्मादसंस्कृतं धातुष्वायतनेषु चोक्तम्, न तु स्कन्धेषु ?

**स्कन्धेष्वसंस्कृत नोक्तम्; अर्थायोगात्**

तद्धि **स्कन्धेषू**च्यमान न तावदेतेष्वेवान्तर्णेतुं शक्यते, **अर्थायोगात्**। न हि तद्रूपम्, नापि यावद्विज्ञानमिति, न चापि षष्ठस्कन्धो वक्तुं शक्यते, कुतः ? अर्थायोगात्। "राश्यर्थो हि स्कन्धार्थः" इत्युक्तम्। न चासंस्कृतमतीतादिभेदभिन्नं रूपादिवद्, यतस्तत् सर्वमैकध्यमभिसंक्षिप्य 'असंस्कृतस्कन्धः' इति संख्यां गच्छेत्।

संक्लेशवस्तुज्ञापनार्थं खलूपादानस्कन्धवचनम्, संक्लेशव्यवदानवस्तुज्ञापनार्थं स्कन्धवचनम्; न चोभयथाऽप्यसंस्कृतमित्यर्थायोगान्न तेषु व्यवस्थापितम्। यथा घटोपरमो न घटः, एवं स्कन्धोपरमो न स्कन्धो भवितुमर्हतीत्यपरे। तेषां धात्वायतनेष्वप्येष प्रसङ्गः।

उक्तः स्कन्धानामन्यः प्रकारः ॥

---

भोक्तृभूता हि रूपादयः स्कन्धा इति तृतीयम्। धातुतो वा—कामगुणरूपप्रभावितो हि कामधातुः, वेदनाप्रभावितानि ध्यानानि, संज्ञाप्रभाविताश्च आरूप्याः, संस्कारमात्रप्रभावितं भवाग्रम्—एता विज्ञानस्थितयः, तासु च प्रतिष्ठितं विज्ञानमिति क्षेत्रबीजसंदर्शनार्थं स्कन्धानुक्रम इति चतुर्थं कारणम्। अत एव च क्रमकारणाद् वेदनासंज्ञे पृथक् स्कन्धीकृते, यत एते औदारिकतरे संक्लेशानुक्रमहेतू भोजनव्यञ्जनभूते तत्प्रभावितं च धातुद्वयमिति ॥ २१ ॥

*न तावदेष्वेवान्तर्णेतुं शक्यते; अर्थायोगात्* इति। रूपणादेरर्थस्यायोगादसम्भवात्। रूपस्वभावं यावद्विज्ञानस्वभावमिति वा न शक्यमेष्वेव पञ्चस्कन्धेष्वन्तर्णेतुम्, अतत्स्वाभाव्यात्। *न चापि षष्ठस्कन्धो वक्तुं शक्यते, कुतः ? अर्थायोगात्*। अतीताद्यर्थायोगादित्यर्थः। ननु च बहुत्वादसंस्कृतानामसंस्कृतस्कन्धोऽन्यो योक्ष्यते, किमतीताद्यर्थेनेति ? एतच्चायुक्तम्, असंस्कृताना देशसन्निकर्षाभावेनाभिसंक्षेपायोगात्।

*संक्लेशवस्तुज्ञापनार्थ*मिति। विस्तरः—न संक्लेशवस्तु, अनास्रवत्वात्। न व्यवदानवस्तु; असंस्कृतत्वात्। व्यवदानहेतुर्हि व्यवदानवस्त्वित्यभिप्रायः। अथ वा—रूपस्कन्ध इत्युक्ते यावद्विज्ञानस्कन्ध इत्युक्ते संक्लेशवस्तु व्यवदानवस्तु च रूपस्कन्धो यावद्विज्ञानस्कन्ध इति विज्ञायते। न त्वसंस्कृतस्कन्ध इत्युक्ते संक्लेशव्यवदानवस्तु विज्ञायते इति न सम्भवति असंस्कृतस्कन्ध इति। *तेषा धात्वायतनेष्वप्येष प्रसङ्ग* इति। तेषामेवंवादिनाम्। *यथा घटोपरमो न घटः;*

**क्रमः पुनः ।**

**यथौदारिकसंक्लेशभाजनाद्यर्थधातुतः ॥ २२ ॥**

रूपं हि सप्रतिघत्वात् सर्वौदारिकम् । अरूपिणां वेदना प्रचारौदारिकतया । तथा हि व्यपदिशन्ति—हस्ते मे वेदना, पादे मे वेदनेति । द्वाभ्यामौदारिकी[1] संज्ञा । विज्ञानात् संस्कारः[2] इति । अतो **यदौदारिकतरं** तत् पूर्वमुक्तम् ।

अथ वा—अनादिमति संसारे स्त्रीपुरुषा अन्योन्यं रूपाभिरामाः, ते च वेदनास्वादगर्द्धात्, तद्गर्द्धः संज्ञाविपर्यासात्, तद्विपर्यासः क्लेशैः, चित्तं च तत्संक्लिष्टमिति **यथासंक्लेशं** च **क्रमः** ।

**भाजनाद्यर्थेन** वा । भाजनभोजनव्यञ्जनकर्तृभोक्तृभूता हि रूपादयः स्कन्धाः ।

---

एवं धातूपरमो न धातुः, आयतनोपरमो नायतनमिति धर्मधात्वायतनयोरप्यसंस्कृतं न व्यवस्थापितं स्यात् । सर्वधर्मसंग्रहश्च धात्वायतनेष्वभिप्रेत इत्ययुक्तमेतत् । *उक्तः स्कन्धानामन्यः प्रकारः ॥*

*"क्रमः पुनः"* इति । अन्यप्रकारवचनापेक्ष पुनःशब्दोपन्यास इति दर्शयति । *सर्वौदारिकमिति* । सर्वेभ्यो वेदनादिभ्य औदारिकं रूपम्, सनिदर्शनप्रतिघत्वादियोगात् । *अरूपिणा* वेदनादीनाम् । निर्धारणे षष्ठी । *वेदना* औदारिकी । *प्रचारौदारिकतया* समुदाचारौदारिकतयेत्यर्थः । *द्वाभ्या* संस्कारविज्ञानाभ्यामौ*दारिकी संज्ञा;* निमित्तपरिच्छेदेन सुज्ञातत्वात् । *विज्ञानात्संस्कार* औदारिकः; 'सुखी स्याम्, न दुःखी स्याम्' इत्यभिसंस्कारलक्षणत्वात् । विज्ञानं तु सर्वसूक्ष्मम्, उपलब्धिमात्रलक्षणत्वात् । यथौदारिकं च विनेयानामर्थप्रतिपादनं न्याय्यमित्येवं स्कन्धानुक्रम ।

*ते च वेदनास्वादगर्धात्* । ते च स्त्रीपुरुषा वेदनास्वादसक्तेरन्योन्यं रूपाभिरामा भवन्ति । *तद्गर्ध* इति । वेदनागर्धः । *संज्ञाविपर्यासा*दिति । नित्यादिकान्निमित्तोद्ग्रहणात् । सुखापि हि वेदना संस्कारविपरिणामदुःखतया दुःखा ।

*भाजनभोजन*मिति विस्तरः । रूपं भाजनभूतम्, वेदनाश्रयत्वात् । वेदना भोजनभूता, आस्वाद्यत्वात् । संज्ञा व्यञ्जनभूता, वेदना तन्निमित्तोद्ग्रहणेन व्यञ्जयतीति कृत्वा । संज्ञावशेन वा वेदना रोचत इति कृत्वा व्यञ्जनभूता संज्ञा। वेदना कर्तृभूता, विपाकवेदनामभिसंस्कृत्योपनयनात् । विज्ञानं भोक्तृभूतम्, तदनुग्रहादिति भाजनाद्यर्थेन वानुक्रमः ।

---

१. द्वाभ्या चौदारिकतरा—का० । २. संस्काराः—का० ।

**धातुतो** वा । कामगुणरूपप्रभावितो हि कामधातुः, वेदनाप्रभावितानि ध्यानानि, संज्ञाप्रभाविताः त्रय आरूप्याः, संस्कारमात्रप्रभावितं भवाग्रम्—एता[1] विज्ञानस्थितयः, तासु चतसृषु[2] प्रतिष्ठितं विज्ञानमित्येवं[3] क्षेत्रबीजसंदर्शनार्थः स्कन्धानुक्रमः । अत एव च पञ्च स्कन्धाः, नाल्पीयांसः, न भूयांसः । अत एव च क्रमकारणाद् वेदनासंज्ञे संस्कारेभ्यः पृथक् स्कन्धीकृते, यत एते औदारिकतरे संक्लेशानुक्रमहेतू भाजनव्यञ्जनभूते, तत्प्रभावितं च धातुद्वयमिति ॥२२॥

आयतनधातूनां षण्णां चक्षुरादीनामनुक्रमो वक्तव्यः । तद्वशेनैव हि तद्विषयविज्ञानानां क्रमः । तेषां च पुनः षण्णाम्

**प्राक् पञ्च वार्त्तमानार्थ्यात्,**

चक्षुरादीनि पञ्च वर्तमानविषयत्वात् पूर्वमुक्तानि । मनस्त्वनियतविषयम्—

---

धातुतो वेति विस्तरः । *कामगुणा एव रूपाणि* । तैः *प्रभावितः* प्रकर्षित *कामधातुः* । *वेदनाप्रभावितानि ध्यानानि* । सौमनस्यसुखेन्द्रियप्रभावितं प्रथमं ध्यानम्, सौमनस्येन्द्रियप्रभावितं द्वितीयम्, सुखेन्द्रियप्रभावितं तृतीयम्, उपेक्षेन्द्रियपरिशुद्धिप्रभावितं चतुर्थं ध्यानम् । *संज्ञाप्रभावितास्त्रय आरूप्याः* । आकाशसंज्ञाप्रभावितमाकाशानन्त्यायतनम्, विज्ञानसंज्ञाप्रभावितं विज्ञानानन्त्यायतनम्, आकिञ्चन्यसंज्ञाप्रभावितमाकिञ्चन्यायतनम् । *संस्कारमात्रप्रभावितं भवाग्रम्* । तत्र हि चेतना अशीतिं कल्पसहस्राण्यायुराक्षिपति ।

विज्ञानं कस्मात् सर्वेषां पश्चादुक्तम् ? इत्यत आह—*एता विज्ञानस्थितय* इति । विस्तरः—चतस्रो विज्ञानस्थितयः । रूपोपगा विज्ञानस्थितिः कामधातुः, वेदनोपगा चत्वारि ध्यानानि, संज्ञोपगा त्रय आरूप्याः, संस्कारोपगा भवाग्रम् । *तासु चतसृषु* विज्ञानस्थितिषु *प्रतिष्ठितं विज्ञानम्* । तदाश्रितत्वात् सर्वपश्चादुक्तम् । *इत्येवं क्षेत्रबीजसंदर्शनार्थः स्कन्धानुक्रमः* उक्तो भवति । *अत एव च पञ्च स्कन्धा नाल्पीयांसो न भूयांसः* इति । यथौदारिकादिभिः कारणैर्नाल्पीयांसो न भूयांस इत्यर्थः ॥ २२ ॥

*पञ्च वर्तमानविषयत्वात् पूर्वमुक्तानीति* । यानि वर्तमानविषयाणि तानि परिस्फुटविषयाणि । परिस्फुटविषयाणि च सुगमानीति पूर्वमुक्तानि । वर्तमानविषयाणि च पूर्ववृत्तीनि भवन्ति, एवं च पूर्वमुक्तानि । *मनस्त्वनियतविषयमिति* ।

---

१ एता एव—का० ।  २. च—का० ।

३ विज्ञानमिति—का० ।

किञ्चिद् वर्त्तमानविषयम्, किञ्चिद् यावत्[1] त्र्यध्वानध्वविषयम्।

**भौतिकार्थ्याचतुष्टयम्।**

प्रागिति वर्त्तते। पञ्चाना पुनश्चत्वारि पूर्वमुक्तानि, भौतिकविषयत्वात्। कायस्य त्वनियतो विषयः—कदाचिद् भूतानि, कदाचिद् भौतिकम्, कदाचिदुभयम्।

**दूराशुतरवृत्त्याऽन्यत्,**

शेषं पुनरितरस्माद् यथायोगं **दूराशुतरवृत्त्या** पूर्वमुक्तम्। चक्षुःश्रोत्रं हि दूरविषयम्, तन् पूर्वमुक्तं द्वयात्। तयोरपि चक्षुषो दूरतरे वृत्तिः, पश्यतोऽपि दूरान्नदीं तच्छब्दाश्रवणात्, अतस्तत् पूर्वमुक्तम्। घ्राणस्य तु नास्ति दूरे वृत्ति, जिह्वायाश्च तयोराशुतरवृत्तित्वात् घ्राण पूर्वमुक्तम्, अप्राप्तस्यैव जिह्वा भोज्यस्य[2] गन्धग्रहणात्।

**यथास्थानं क्रमोऽथ वा॥ २३॥**

---

आकुलविषयत्वादसुगमं पश्चाद्वृत्ति च प्रायेण। कथम्? इत्याह—*किञ्चिद् वर्तमानविषयं किञ्चिद् यावत् त्र्यध्वानध्वविषय*मिति। यावच्छब्देन किञ्चिदतीतविषयम्, किञ्चिदनागतविषयम्, किञ्चित् त्र्यध्वविषयम्, "सर्वधर्मा अनात्मान." इति यथा। किञ्चिदनध्वविषयमसंस्कृतविषयमित्यर्थः। एवमनियतविषयं मन, तथा च न तत्सुगममिति पश्चादुक्तम्। सुगमं हि लोके पूर्वमुपदिश्यमानं दृश्यते।

"*भौतिकार्थ्याचतुष्टयम्*" इति। चक्षुरादिचतुष्टयं रूपाद्युपादायरूपविषयम्, तस्मात् तत् कायात् पूर्वमुक्तम्। *कायस्य त्वनियतो विषयः। कदाचिद् भूतानि, कदाचिद् भौतिकं* यदि व्यवच्छेदग्रहणम्। *कदाचिदुभयं* यद्यव्यवच्छेदग्रहणम्।

*शेषं पुनरितरस्माद् यथायोगम् दूराशुतरवृत्त्या पूर्वमुक्त*मिति। शेषं चक्षुरादि। तदितरस्मात् सम्भवतो दूराशुतरवृत्त्या—दूरवृत्त्या, दूरतरवृत्त्या, आशुतरवृत्त्येति विभज्य—द्वयं द्वयात्, एकं चैकस्मात्, पुनरेकं चैकस्मादिति योज्यमित्यर्थः। कथम्? इत्याह—*चक्षुःश्रोत्रं हि दूरविषयम्। तन् पूर्वमुक्तं द्वयाद्* घ्राणजिह्वात्। *तयोरपि* चक्षुःश्रोत्रयोश्चक्षुषो *दूरतरे वृत्तिः; पश्यतोऽपि दूरान्नदीं तच्छब्दाश्रवणात्। अतस्तत् पूर्वमुक्त*मिति वर्तते। तच्चक्षुः श्रोत्रात् पूर्वमुक्तम्। *तयोराशुतरवृत्तित्वा*दिति। तयोर्घ्राणजिह्वयोर्घ्राणं पूर्वमुक्तं जिह्वाया। कथम्? इत्याह—*अप्राप्तस्यैव जिह्वां भोज्यस्य गन्धग्रहणा*दिति।

---

१. का० पुस्तके नास्ति। २—२ जिह्वाभोज्यस्य—का०।

**अथ वा** अस्मिन् शरीरे चक्षुषोऽधिष्ठानमुपरिष्टात् निविष्टम्, तस्मादधः श्रोत्रस्य, तस्मादधो घ्राणस्य, तस्मात् जिह्वायाः, तस्याः कायस्य बाहुल्येन। मनः पुनस्तान्येव निश्रितमदेशस्थं चेति **यथास्थानमेषां क्रमः** स्यात् ॥ २३ ॥

किं पुन कारणं दशस्वायतनेषु रूपस्कन्धसंगृहीतेष्वेकं रूपायतनमुच्यते, सर्वेषु च धर्मस्वभावेष्वेकं धर्मायतनम् ? इत्याह—

**विशेषणार्थं प्राधान्याद् बहुधर्माग्रसंग्रहात्।**
**एकमायतन रूपमेक धर्माख्यमुच्यते ॥ २४ ॥**

कथम् **विशेषणार्थम्** ? यथा गम्येत प्रत्येकमेषां दशानामायतनत्वं विषयिविषयत्वेन[1] व्यवस्थानम्, न समस्तानामिति।

चक्षुरादिभिश्च विशेषितैर्यत्र चक्षुरादिसंज्ञकं रूपं च तद् रूपायतनं ज्ञास्यत इत्यस्य नामान्तरं[2] नोच्यते।

---

इदमिह विचार्यते—घ्राणजिह्वे प्राप्तविषयग्राहिण्यौ, कथम् ? भोज्यस्थो गन्धस्तेन घ्राणेन गृह्यते, न त्वभोज्यस्थो गृह्यते, वायोस्तु गन्धान्तरमुद्भवति, भोज्यावयवेन वा सूक्ष्मेण सहागतो गन्धो गृह्यते, निरुच्छ्वासस्य गन्धाग्रहणात्; न तर्हीदं वक्तव्यम्—अप्राप्तस्यैव जिह्वा भोज्यस्य गन्धग्रहणादिति ? यत्तत् पिण्डरूपं भोज्यं तज्जिह्वामप्राप्तमित्यभिसन्धायवचनाददोषः। एवं ह्याशुतरवृत्ति घ्राणं यद्भोज्यावयवसहागतमपि गन्धं जिघ्रति, जिह्वा तु भोज्यावयवसहागतं रसं नास्वादयति, पिण्डभोज्यसहागतमेव तु रसमास्वादयतीति न साशुतरवृत्तिरित्यवगन्तव्यम् ॥ २३ ॥

*कथं विशेषणार्थम्* इति प्रतिपादयन्नाह—*यथा गम्येत प्रत्येकमिति*। विस्तरः—*यथा* विज्ञायेत एकैकश *एषा दशानामायतनत्वम्*। चक्षुरादीनां पञ्चानां *विषयित्वेन*, रूपादीना च पञ्चाना *विषयत्वेन व्यवस्थानात् न समस्तानामायतनत्वम्*। रूपायतनमित्येकमेवेति। तथा च परस्परतो विशेषणं न स्यात्।

यदि विशेषणार्थं नामान्तराण्युच्यन्ते नवानाम्—चक्षुरायतनस्य यावत्कायायतनस्य शब्दायतनस्य यावत्स्प्रष्टव्यायतनस्येति, रूपायतनस्यापि कस्मान्नामान्तरं नोच्यते ? अत आह—*चक्षुरादिभिश्च विशेषितैर्यत्र चक्षुरादिसंज्ञकं रूपं च तद् रूपायतनं ज्ञास्यत इत्यस्य नामान्तरं नोच्यते*। तद्यथा सर्वासु गोष्वङ्कितासु या गौरनङ्किता तस्या अनङ्कनमेवाङ्कनं भवति तद्वत्।

---

1. विषयविषयित्वेन—का०। 2. पुनर्नामा०—का०।

अथ वा रूपायतनस्य **प्राधान्यात्** । तद्धि सप्रतिघत्वाच्च पाण्यादिसंस्पर्शैः स्पृष्टं रूप्यते । सनिदर्शनत्वाच्च—'इदमिह, अमुत्र' इति देशनिदर्शनरूपणात्[1] । लोकेऽपि च तद्रूपमिति प्रतीतम्, नान्यानि । विशेषणार्थमेकैकं[2] धर्मायतनमुक्तम्, न सर्वाणि ।

अपि च—अत्र बहूनां **धर्माणां संग्रहो** वेदनादीनाम् । अतः सामान्येनाभिधानं क्रियते धर्मशब्देन । अग्रस्य च निर्वाणधर्मस्यात्र संग्रह, नान्येष्विति । विंशतिप्रकारत्वेनौदारिकत्वान्मासदिव्यार्यप्रज्ञाचक्षुष्टयगोचरत्वाच्चैकं[3] रूपायतनमित्यपरे ॥ २४ ॥

अन्यान्यपि स्कन्धायतनधातुसंशब्दितान्युपलभ्यन्ते सूत्रेषु, तेषां किमेभिरेव संग्रहो वेदितव्यः, आहोस्विद् व्यतिरेकः ? एभिरेव संग्रहो न व्यतिरेकः । तत्र तावत्—

**धर्मस्कन्धसहस्राणि यान्यशीतिं जगौ मुनिः ।**
**तानि वाङ्नाम वेत्येषां रूपसंस्कारसंग्रहः ॥ २५ ॥**

---

"*प्राधान्यात्*" इति । त्रिभि कारणै. रूपायतनस्य प्राधान्यम्—*पाण्यादिसंस्पर्शैर्बाधनालक्षणाद् रूपणात्, इदमिहामुत्रेति देशनिदर्शनरूपणात्, इदमेव रूपमिति लोकप्रतीतत्वाच्च । विशेषणार्थमेकैकं धर्मायतनमुक्तमिति* । कथं विशेषणार्थम् ? यथा गम्येत प्रत्येकमेषा द्वादशानामायतनत्वम्, विषयिविषयत्वेन व्यवस्थानाद्, न समस्तानामिति । चक्षुरादिभिश्च विशेषितैर्यन्न चक्षुरादिसंज्ञकं धर्मैश्च तद्धर्मायतनं ज्ञास्यत इति तस्य नामान्तरं नोच्यते ।

*वेदनादीनामिति* । आदिशब्देन संज्ञासंस्काराविज्ञप्त्यसंस्कृताना ग्रहणम् ।

*विंशतिप्रकारत्वेनेति* । "रूपं द्विधा विंशतिधा" ( अभि० को० १ १० ) इति वचनात् । *चक्षुष्टयगोचरत्वाच्च* । मासचक्षुरस्मदादीनाम्, दिव्यं चक्षुर्देवानाम्, आर्यं प्रज्ञाचक्षुरार्याणाम् । अनास्रवं ज्ञानं सत्यचतुष्टयालम्बनम् । अतो रूपमेव चक्षुष्टयगोचरम्, न चक्षुरादय । तस्मात् तदेव रूपायतनमुक्तम्, नान्यानि ॥ २४ ॥

---

१ निरूपणात्—का० । २ विशेषणार्थमेव चैकं—का० ।
३. ०चक्षुस्त्रय०—का० ।

येषा वाक्-स्वभावं बुद्धवचनम्, तेषां तानि रूपस्कन्धसंगृहीतानि । येषा नामस्वभावम्, तेषा संस्कारस्कन्धेन संगृहीतानि[1] ॥ २५ ॥

किं पुनर्धर्मस्कन्धस्य प्रमाणम् ?

**शास्त्रप्रमाण इत्येके,**

**एके** तावत् आहु —धर्मस्कन्धसंज्ञकस्यैवाभिधर्म**शास्त्र**स्यास्य **प्रमाण**मिति। तच्च षट्सहस्राणि । **अपरे**[2]—

**स्कन्धादीनां कथैकशः ।**

---

*येषा वाक्स्वभावं* बुद्धवचनमिति । येषा *सौत्रान्तिका*ना वाग्विज्ञप्तिस्वभावं *तेषा तानि रूपस्कन्धसंगृहीतानि* । शब्दायतनस्य रूपस्कन्धसंगृहीतत्वात् । *येषा नामस्वभाव*मिति । येषा *निकायान्तरीया*णा चित्तविप्रयुक्तं नामास्ति *तेषा संस्कारस्कन्धेन संगृहीतानि* । संस्कारस्कन्धसंगृहीतत्वान्नाम्न ।

*आभिधार्मिकाणा* तूभयस्वभाव बुद्धवचनमिष्टम् । तथा हि *ज्ञानप्रस्थान* उक्तम्—"कतमद् बुद्धवचनम् ? तथागतस्य या वाग् वचनं व्याहारो[3] गीर्निरुक्तिर्वाक्पथो वाग्घोषो वाक्कर्म वाग्विज्ञप्ति । बुद्धवचनं कुशल वक्तव्यम् ? अव्याकृतं वक्तव्यम् ? स्यात् कुशलम्, स्यादव्याकृतम् । कतरत् कुशलम् ? कुशलचित्तस्य तथागतस्य वाच भाषमाणस्य या वाग् यावद्वाग्विज्ञप्ति । कतरदव्याकृतम् ? अव्याकृतचित्तस्य तथागतस्य इति पूर्ववत् ।" पुनस्तत्रैवानन्तरमुक्तम्—"बुद्धवचनं नाम क एष धर्म ? नामकाय-पदकाय-व्यञ्जनकायाना या अनुपूर्वरचना, अनुपूर्वस्थापना, अनुपूर्वसमायोग " इति। तेषा*माभिधार्मिका*णा रूपस्कन्धेन संस्कारस्कन्धेन च तान्यशीतिर्धर्मस्कन्धसहस्राणि संगृहीतानि । "सातिरेकाणि मेऽशीतिर्धर्मस्कन्धसहस्राणि भगवतोऽन्तिकात् सम्मुखमुद्गृहीतानि" (        ) इति *सूत्र*वचनम् । "चतुरशीतिर्धर्मस्कन्धसहस्राणि" (        ) इति *निकायान्त*रे सूत्रपाठ ॥ २५ ॥

"*शास्त्रप्रमाण इत्येके*" इति । शास्त्रस्य प्रमाणं शास्त्रप्रमाणम्, शास्त्रप्रमाण प्रमाणमस्य सोऽय धर्मस्कन्ध शास्त्रप्रमाण इत्येके तावदाहु । *तच्च षट्सहस्राणी*ति । तच्च शास्त्र धर्मस्कन्धसंज्ञकं ग्रन्थप्रामाण्येन षट्सहस्राणीति । तानि त्वशीतिर्धर्मस्कन्धसहस्राण्यन्तर्हितानि, एकं त्वेतदवशिष्यत इति कथयन्ति ।

"*स्कन्धादीना कथैकशः*" । *अपर आहु*रिति वाक्याध्याहार । स्कन्धादीनामेकैका कथा धर्मस्कन्ध । ते च धर्मस्कन्धा अशीतिसहस्रसंख्या व्याख्यायन्ते ।

---

१. का० पुस्तके नास्ति । २. ०पुनराहु —का० । ३ व्यवहारो—मुद्रितः पाठः ।

स्कन्धायतनधातुप्रतीत्यसमुत्पादसत्याहारध्यानाप्रमाणारूप्यविमोक्षाभिभ्वायत-नकृत्स्नायतनबोधिपाक्षिकाभिज्ञाप्रतिसंवित्प्रणिधिज्ञानारणादीना **कथा** प्रत्येकं धर्म-स्कन्ध इति ।

**चरितप्रतिपक्षस्तु धर्मस्कन्धोऽनुवर्णितः ॥ २६ ॥**

एवं तु वर्णयन्ति—अशीतिश्चरितसहस्राणि सत्त्वानाम् रागद्वेषमोहमानादि-चरितभेदेन, तेषां प्रतिपक्षेण भगवताऽशीतिर्धर्मस्कन्धसहस्राण्युक्तानि ॥२६॥

यथैतान्यशीतिर्धर्मस्कन्धसहस्राण्येष्वेव पञ्चस्कन्धेषु प्रतिपादितानि,

**तथान्येऽपि यथायोगं स्कन्धायतनधातवः ।**
**प्रतिपाद्या यथोक्तेषु सम्प्रधार्य स्वलक्षणम् ॥ २७ ॥**

येऽप्यन्ये स्कन्धायतनधातवः सूत्रान्तरेषूक्ता, तेऽप्येष्वेव यथोक्तेषु स्कन्धादिषु प्रतिपाद्याः स्वं स्वं स्वभावमेषा[1] यथाव्यवस्थापितमस्मिञ्छास्त्रे[2] विमृश्य[3] । तत्र तावत् पञ्चाना शीलसमाधिप्रज्ञाविमुक्तिज्ञानदर्शनस्कन्धाना शीलस्कन्धो रूपस्कन्धेन सगृहीत, शेषाः संस्कारस्कन्धेन । दशानां कृत्स्ना-

---

प्रतीत्यसमुत्पादादीनि चेह व्याख्यास्यन्ते । *प्रणिधिज्ञानारणादीना*मिति । आदि-ग्रहणेन संग्रहवस्तुकर्मपथाशुभानापानस्मृत्यादीनि गृह्यन्ते ।

*"चरितप्रतिपक्षस्तु धर्मस्कन्धोऽनुवर्णितः"* इति । तुशब्द. पूर्वोक्तपक्षनिरा-करणार्थः, अवधारणार्थो वा । *रागद्वेषमोहमानादिचरितभेदेने*ति । आदिशब्देन दृष्टिविचिकित्सादीना ग्रहणम् । केचित् सत्त्वा रागचरिता., केचिद् द्वेषचरिता, केचिन्मोहचरिताः, केचिन्मानचरिता., केचिद् दृष्टिचरिता., केचिद् विचिकित्सा-चरिताः, केचिद् रागद्वेषचरिता , केचिद् रागद्वेषमोहचरिता., केचिद् रागाशया द्वेषप्रयोगा., केचिद् द्वेषाशया रागप्रयोगा., केचित् कृत्रिमरागा निगृह्यद्वेषा. केचित् कृत्रिमद्वेषा निगृह्यरागा इति । *तेषां प्रतिपक्षेण भगवता तान्युक्तानी*ति ॥२६॥

*येऽप्यन्ये स्कन्धायतनधातव* इति । विस्तर.—येऽपि स्कन्धायतनधात वस्तेऽप्येष्वेव *स्कन्धायतनधातुषु प्रतिपाद्याः* प्रवेशयितव्या., *स्वं स्वं स्वभावमेषा यथाव्यवस्थापितमस्मिन् शास्त्रे विमृश्य*—स्कन्धा स्कन्धेषु प्रतिपादयितव्याः, आयतनान्यायतनेषु, धातवो धातुषु ।

*शीलस्कन्धो रूपस्कन्धसंगृहीत* इति । कायवाग्विरतिरूपस्वभावत्वाच्छील-

---

१. लक्षणमेषां—का० । २. यथाविहित०—का० ।
३. सम्प्रधार्य—का० ।

यतनानामष्टावलोभस्वभावत्वाद् धर्मायतनेन । सपरिवाराणि तु पञ्चस्कन्धस्वभावत्वात् मनोधर्मायतनाभ्याम् । तथाभिभ्वायतनानि। आकाशविज्ञानानन्त्यायतनकृत्स्ने चत्वारि चाकाशानन्त्यायतनादीनि चतुःस्कन्धस्वभावत्वात् मनोधर्मायतनाभ्याम्। पञ्च

---

स्कन्धस्य। *शेषाः संस्कारस्कन्धेनेति*। समाध्यादीना चैतसिकत्वात्। विमुक्तिरिहाधिमोक्षोऽभिप्रेत'। विमुक्तिज्ञानदर्शनं च प्रज्ञाविशेष एवेति।

*अष्टावलोभस्वभावत्वाद् धर्मायतनेनेति*। कतमान्यष्टौ ? पृथिव्यप्तेजोवायुनीलपीतलोहितावदातकृत्स्नायतनानि । तानि चालोभस्वभावान्यपदेक्ष्यन्ते—"अलोभोऽष्टौ" ( अभि० को० ८ ३६ ) इति। अलोभश्च धर्मायतनेऽन्तर्भवति, तेन तत्संग्रह । *सपरिवाराणि तु पञ्चस्कन्धस्वभावत्वान्मनोधर्मायतनाभ्याम्*। किम् ? संगृहीतानि। तस्यालोभस्य परिवारोऽनुपरिवर्ति रूपं रूपस्कन्धः, वेदनासंज्ञे वेदनासंज्ञास्कन्धौ, चेतनादय सम्प्रयुक्ता जात्यादयश्च विप्रयुक्ताः संस्कारस्कन्ध, विज्ञानं चात्र कलापे विज्ञानस्कन्ध इति पञ्चस्कन्धस्वभावानि तानि भवन्ति। नवमदशमे त्वाकाशनन्त्यायतनविज्ञानानन्त्यायतनकृत्स्ने पश्चाद् वक्ष्येते।

*तथाभिभ्वायतनानीति*। तान्यलोभस्वभावत्वाद् धर्मायतनेन, सपरिवाराणि तु पञ्चस्कन्धस्वभावत्वान्मनोधर्मायतनेन पूर्ववद् व्याख्यातव्यानि।

*आकाशविज्ञानानन्त्यायतनकृत्स्ने चत्वारि चाकाशानन्त्यायतनादीनि*, आकाशविज्ञानाकिञ्चन्य-नैवसंज्ञानासंज्ञायतनानि, *चतुःस्कन्धस्वभावत्वान्मनोधर्माभ्या संगृहीतानि*। न हि तत्र रूपस्कन्धोऽस्ति।

*पञ्च विमुक्त्यायतनानीति*। विस्तर.—*सूत्र* उक्तम्—"पञ्चेमानि विमुक्त्यायतनानि। कतमानि पञ्च ? १. इह भिक्षो शास्ता धर्मं देशयति अन्यतरान्यतरा वा विज्ञो गुरुस्थानीय. सब्रह्मचारी। यथा यथास्य शास्ता अन्यतरान्यतरो वा विज्ञो गुरुस्थानीय. सब्रह्मचारी धर्मं देशयति तथा तथा तेषु धर्मेष्वर्थप्रतिसंवेदी भवति, धर्मप्रतिसंवेदी च। तस्यार्थप्रतिसंवेदिनो धर्मप्रतिसंवेदिनश्चोत्पद्यते प्रामोद्यम्, प्रमुदितस्य प्रीतिर्जायते, प्रीतमनस' काय. प्रस्रभ्यते, प्रस्रब्धकायः सुखं वेदयते, सुखितस्य चित्तं समाधीयते, समाहितचित्तो यथाभूतं प्रजानाति यथाभूतं पश्यति, यथाभूतं प्रजानन् यथाभूतं पश्यन्निर्विद्यते, निर्विण्णो विरज्यते, विरक्तो विमुच्यते—इदं प्रथमं विमुक्त्यायतनम्। यत्र स्थितस्य भिक्षोर्वा भिक्षुण्या वा अनुपस्थिता स्मृतिरुपतिष्ठते, असमाहितं चित्तं समाधीयते, अपरिक्षीणाश्चास्रवा' परिक्षीयन्ते, अननुप्राप्तं चानुत्तरं योगक्षेमं निर्वाणमनुप्राप्नोति।

विमुक्त्यायतनानि प्रज्ञास्वभावत्वाद् धर्मायतनेन। सपरिवाराणि शब्दमनोधर्मायतनै.[1]।

२ "पुनरपरं न हैव भिक्षो शास्ता धर्मं देशयति अन्यतरान्यतरो वा विज्ञो गुरुस्थानीय सब्रह्मचारी। अपि तु यथाश्रुतान् धर्मान् यथोपदिष्टान् यथा-पर्यवाप्तान् विस्तरेण स्वरेण स्वाध्यायं करोति। यथा यथा तान् यथाश्रुतान् यथोपदिष्टान् यथापर्यवाप्तान् विस्तरेण स्वरेण स्वाध्यायं करोति, तथा तथा तेषु धर्मेषु अर्थप्रतिसंवेदो भवति पूर्ववत्—इदं द्वितीयं विमुक्त्यायतनम्। यत्र स्थितस्य इति पूर्ववत्।

३ "पुनरपरं न हैव भिक्षो शास्ता धर्मं देशयति अन्यतरान्यतरो वा विज्ञो गुरुस्थानीय सब्रह्मचारी, नापि यथाश्रुतान् धर्मान् यथोपदिष्टान् यथापर्य वाप्तान् विस्तरेण स्वाध्यायं करोति। अपि तु यथाश्रुतान् धर्मान् यथोपदिष्टान् यथापर्यवाप्तान् विस्तरेण परेभ्य. सम्प्रकाशयति। यथा यथा यथाश्रुतान् धर्मान् यथोपदिष्टान् यथापर्यवाप्तान् विस्तरेण परेभ्य' सम्प्रकाशयति, तथा तथा तेषु धर्मेष्वर्थप्रतिसंवेदी भवतीति पूर्ववत्—इदं तृतीयं विमुक्त्या-यतनम्। यत्र स्थितस्य इति पूर्ववत्।

४ "पुनरपरं न हैव भिक्षो शास्ता पूर्ववत् नापि स्वाध्यायम्, नापि परेभ्य सम्प्रकाशयति। अपि तु यथाश्रुतान् यावद्यथापर्यवाप्तांश्चिन्तयति तुल-यति उपपरीक्षते। यथा यथा यथाश्रुतान् यावद्यथापर्यवाप्तांश्चिन्तयति यावत्-दुपपरीक्षते, तथा तथा तेषु धर्मेष्वर्थप्रतिसंवेदी पूर्ववत्—इदं चतुर्थं विमु-क्त्यायतनम्। यत्र स्थितस्य इति पूर्ववत्।

५ "पुनरपरं न हैव भिक्षो शास्तेति पूर्ववत्, नापि स्वाध्यायं करोति नापि परेभ्य. सम्प्रकाशयति, नापि चिन्तयति। अपि त्वनेनान्यतमं भद्रकं समाधिनिमित्तं साधु च सुष्ठु च सुदगृहीतं भवति सुमनसिकृतं सुभावितं सुजुष्टं सुप्रतिविद्धम्, तद्यथा विनीलकं वा विपूयकं वा व्याध्मातकं वा विपदुमकं वा विलोहितकं वा विखादितकं वा विक्षिप्तकं वा अस्थि वा अस्थिसंकलिका वा। यथा यथा खल्वनेनान्यतमान्यतमं भद्रकं समाधिनिमित्तं पूर्ववद् यावत्सुप्रति-विद्धम् तथा तथा तेषु धर्मेष्वर्थप्रतिसंवेदी भवति पूर्ववत्—इदं पञ्चमं विमुक्त्यायतनम्। यत्र स्थितस्य इति पूर्ववत्।"

विमुक्तेरायद्वारं प्रज्ञाविशेष.। *प्रज्ञा च धर्मायतनेन संगृहीता। सपरिवाराणि शब्दमनोधर्मायतनैः*। देशनास्वाध्यायपरसम्प्रकाशनेषु शब्दग्रहणाच्छब्दायतन-मस्ति, मनोधर्मायतने तु प्रज्ञापरिवारभूते सर्वत्रस्थे—इति त्रिभि संग्रह.।

---

1. तु शब्दो मनो०—का०।

द्वयोरायतनयोरसंज्ञिसत्त्वा दशभिरायतनैः, गन्धरसायतनयोरेवाभावात्[1]। नैवसंज्ञानासंज्ञायतनोपगा मनोधर्मायतनाभ्याम्।

**एवं बहुधातुकेऽपि द्वाषष्टिर्धातवो देशिताः।**

---

*द्वयोरायतनयोरिति*। सूत्र उक्तम्—"रूपिणः सन्ति सत्त्वा असंज्ञिनोऽप्रतिसंज्ञिनः, तद्यथा—देवा असंज्ञिसत्त्वाः। इदं प्रथममायतनम्। अरूपिणः सन्ति सत्त्वाः, सर्वश आकिञ्चन्यायतनं समतिक्रम्य नैवसंज्ञानासंज्ञायतनमुपसम्पद्य विहरन्ति, तद्यथा—देवा नैवसंज्ञानासंज्ञायतनोपगाः। इदं द्वितीयमायतनम्" (                ) इति। अनयो*र्द्वयोरायतनयोरसंज्ञिसत्त्वा दशभिरायतनैः संगृहीताः; गन्धरसायतनयोरेव* तत्राभावात्। भवति हि च्युत्युपपत्तिकालयोस्तेषां मनआयतनमिति। *नैवसंज्ञानासंज्ञायतनोपगा मनोधर्मायतनाभ्याम्।* संगृहीता इत्यधिकृतम्, तेषामरूपित्वात्।

*बहुधातुकेऽपि द्वाषष्टिर्धातव* इति। *सूत्र* उक्तम्—"आयुष्मानानन्दो भगवन्तमेतदवोचत्—'कियता भदन्त पण्डितो धातुकुशलो भवति?' भगवानाह—"पण्डित आनन्द अष्टादश धातूञ्जानाति पश्यति यथाभूतम्—चक्षुर्धातुम्, रूपधातुम्, चक्षुर्विज्ञानधातुम् एवं यावन्मनोधातुं धर्मधातुं मनोविज्ञानधातुमिति। इतीमानानन्द अष्टादश धातूञ्जानाति पश्यति यथाभूतम्।

"षडपि धातून् जानाति पश्यति यथाभूतम्—पृथिवीधातुमब्धातुं तेजोधातुं वायुधातुमाकाशधातुं विज्ञानधातुमिति।

"अपरानपि षड् धातून् जानाति पश्यति यथाभूतम्—कामधातुं व्यापादधातुं विहिंसाधातुं नैष्क्रम्यधातुमव्यापादधातुमविहिंसाधातुमिति।

"अपरानपि षड् धातून् जानाति पश्यति यथाभूतम्—सुखधातुं दुःखधातुं सौमनस्यधातुं दौर्मनस्यधातुमुपेक्षाधातुमविद्याधातुमिति।

"चतुरोऽपि धातून् जानाति पश्यति यथाभूतम्—वेदनाधातुं संज्ञाधातुं संस्कारधातुं विज्ञानधातुमिति।

"त्रीनपि धातून् जानाति पश्यति यथाभूतम्—कामधातुं रूपधातुमारूप्यधातुमिति।

"अपरानपि त्रीन् धातून् जानाति पश्यति यथाभूतम्—रूपधातुमारूप्यधातुं निरोधधातुमिति।

"अपरानपि त्रीन् धातून् जानाति पश्यति यथाभूतम्—अतीतं धातुमनागतं धातुं प्रत्युत्पन्नं धातुम्।

1. गन्धरसायतनाभावात्—का०।

तेषां यथायोगं संग्रहो वेदितव्यः ॥ २७ ॥

"अपरानपि त्रीन् धातून् जानाति पश्यति यथाभूतम्—हीनं धातुं मध्यमं धातुं प्रणीतं धातुमिति ।

"अपरानपि त्रीन् धातून् जानाति पश्यति यथाभूतम्—कुशलं धातुमकुशलं धातुमव्याकृतं धातुमिति ।

"अपरानपि त्रीन् धातून् जानाति पश्यति यथाभूतम्—शैक्षं धातुमशैक्षं धातुं नैवशैक्षंनाशैक्षं धातुमिति ।

"द्वावपि धातू जानाति पश्यति यथाभूतम्—सास्रवं धातुमनास्रवं धातुमिति ।

"अपरावपि द्वौ धातू जानाति पश्यति यथाभूतम्—संस्कृतं धातुमसंस्कृतं धातुमिति । इमौ द्वौ धातू जानाति पश्यति यथाभूतम् । इयता चानन्द पण्डितो धातुकुशलो भवति" ( ) इति ।

इतीमान्यत्र हि निर्भेदीनि वाक्यानि प्रत्येकं मध्येऽपि पठितव्यानि । विस्तरभयात्तु मया न लिखितानीति बोद्धव्यम् ।

*यथायोगं संग्रहो वेदितव्य* इति । अष्टादश तावद्धातवः । त एव त इत्येभिस्ते *संगृहीता एव अष्टादशसु धातुषु* । ये तु पृथिवीधात्वादयः षट्, तेषामाद्यानां चतुर्णां स्प्रष्टव्यधातौ संग्रहः । आकाशधातो रूपधातौ, आलोकतमःस्वभावत्वात् । विज्ञानधातोः सप्तसु चित्तधातुषु संग्रहः । कामधात्वादीनां तु षण्णाम् । कामधातुः कामराग इहाभिप्रेतः । स च चैतसिकः । व्यापादधात्वादयोऽपि चैतसिका एवेति तेषां धर्मधातौ संग्रहः । सुखधात्वादीनामपि षण्णां तस्मिन्नेव संग्रहः । वेदनाधात्वादीनां चतुर्णां त्रयाणां धर्मधातौ । विज्ञानधातोः सप्तसु विज्ञानधातुषु । कामधात्वादीनां त्रयाणां कामधातोरष्टादशसु धातुषु । रूपधातोश्चतुर्दशसु विना गन्धरसघ्राणजिह्वाविज्ञानधातुभिः । आरूप्यधातोर्मनोधर्ममनोविज्ञानधातुषु । रूपधात्वादीनां तु त्रयाणां द्वयोरुक्तः संग्रहः । निरोधधातोर्धर्मधातौ । अतीतधात्वादीनां त्रयाणां प्रत्येकमष्टादशसु धातुषु संग्रहः । हीनादयस्त्रयो धातवः कामधात्वादय एव—इत्येषामुक्तः संग्रहः । कुशलादीनां त्रयाणां कुशलाकुशलधात्वो रूपशब्दधर्मधातुषु सप्तसु च चित्तधातुषु । अव्याकृतधातोरष्टादशसु धातुषु, शैक्षाशैक्षधात्वादीनां त्रयाणां द्वयोर्मनोधर्ममनोविज्ञानधातुषु, तृतीयस्याष्टादशसु धातुषु । सास्रवानास्रवधात्वोराद्यस्याष्टादशसु धातुषु । द्वितीयस्य मनोधर्ममनोविज्ञानधातुषु । संस्कृतासंस्कृतधात्वोराद्यस्याष्टादशसु धातुषु, द्वितीयस्य धर्मधातौ संग्रहः । त एते द्वाषष्टिर्धातवः ॥ २७ ॥

य इमे तत्र षड् धातवः उक्ताः—पृथिवीधातुः, अब्धातुः, तेजोधातुः, वायुधातुः, आकाशधातुः, विज्ञानधातुरिति, एतेषां[1] द्वयोर्लक्षणमनुक्तम्। तत् किमाकाशमेवाकाशधातुर्वेदितव्यः, सर्वं च विज्ञानं विज्ञानधातुः? नेत्याह। किं तर्हि? द्वारवातायनमुखनासिकादिषु—

**छिद्रमाकाशधात्वाख्यम्,**

छिद्रमित्युच्यमानं किं वेदितव्यम्?

**आलोकतमसी किल।**

नहि छिद्रमालोकतमोभ्यामन्यद् गृह्यते। तस्मात् किलाकाशधातुरालोकतमःस्वभावो रात्रिन्दिवस्वभावो वेदितव्यः। स एव चाघसामन्तकं रूपमित्युच्यते। अघं किल चित्तस्थं रूपम्; अत्यर्थं घाताद् तस्य तत् सामन्तक-

---

*य इमे तत्रेति* बहुधातुके। *एतेषां द्वयोर्लक्षणमनुक्तमिति*। पृथिवीधात्वादीनामुक्तं लक्षणम्। अमी "धृत्यादिकर्मसंसिद्धाः खरस्नेहोष्णतेरणाः" (अभि० को० १.१२) इति। ननु च विज्ञानधातोरप्युक्तं लक्षणम्—"विज्ञानं प्रतिविज्ञप्तिः" (अभि० को० १.१२) इति वचनात्? सत्यम्, उक्तं सर्वेषां विज्ञानानां लक्षणम्; विज्ञानधातुस्तु किमिह किञ्चिदेव विज्ञानमित्यभिप्रेतम्, उताहो सर्वमिति न विवेचितम्। असंस्कृतं चाकाशमुक्तलक्षणम्, न त्वाकाशधातुः, अवश्यं ह्ययमन्य आकाशात्। तथा हि—"षड्धातुरयं भिक्षो पुरुषः" (　　　) इति *सूत्रान्तरमुक्तम्*। इत्यनया बुद्ध्याभिहितम्—द्वयोर्लक्षणमनुक्तमिति। अत एवमाह—*तत्किमाकाशमेवाकाशधातुर्वेदितव्यः, सर्वं च विज्ञानं विज्ञानधातुरिति*। *मुखनासिकादिष्विति*। आदिशब्देन श्रोत्रादीनां ग्रहणम्।

*"आलोकतमसी किल"* इति। किलशब्दः परमतद्योतनार्थः। स्वमतं तु सप्रतिघद्रव्याभावमात्रमाकाशमित्यभिप्रायो लक्ष्यते। *रात्रिन्दिवस्वभाव* इति। रात्रिर्वर्तिनस्तमसः, भास्करातपलक्षणस्य चालोकस्याभिप्रेतत्वात्। बाहुलिको वायं निर्देशः। *अघं किल चित्तस्थं रूपमिति*। चित्तस्थं सङ्घातस्थम्। अत्यर्थं हन्ति हन्यते वेत्यघम्। नैरुक्तेन विधिना अत्यर्थशब्दस्य अकारादेशः कृतः, हन्तेश्च घादेशः। *तस्य तत् सामन्तकमिति*। तस्याघस्य कुड्यादिकस्य सामन्तकम्=समीपस्थम्। तदपेक्ष्य व्यवस्थापितमित्यर्थः। अत्रापि व्याख्याने किलशब्दो वैभाषिकव्याख्यानप्रदर्शनार्थः। स्वमतं तु यत्, तत् पश्चादुच्यते। तदाह—

---

1. एषां—का०।

मिति। अघं च तदन्यस्य रूपस्य तत्राप्रतिघातात्, सामन्तकं चान्यस्य रूपस्येत्यपरे।

**विज्ञानधातुर्विज्ञानं सास्रवं,**

कस्मादनास्रवं नोच्यते ? यस्मादिमे षड् धातव इष्टाः

**जन्मनिश्रयाः ॥ २८ ।**

एते हि **जन्मनः** प्रतिसन्धिचित्ताद् यावत् च्युतिचित्तसाधारणभूताः। अनास्रवास्तु धर्मा नैवमिति। तदेवं सत्येषां चत्वारो धातवः स्प्रष्टव्यधातावन्तर्भूताः, पञ्चमो रूपधातौ, षष्ठः सप्तसु विज्ञानधातुष्विति ॥ २८ ॥

ये पुनरिमे अष्टादश धातव उक्तास्तेषां कति सनिदर्शनाः, कत्यनिदर्शनाः ?

**सनिदर्शन एकोऽत्र रूपम्;**

स हि शक्यते निदर्शयितुम्- इदमिह, अमुत्रेति। उक्तं भवति—अनिदर्शनाः शेषा इति ॥

---

*अघं च तत्*। *अन्यस्य रूपस्य तत्राप्रतिघातात्*। न प्रतिहन्यतेऽन्यद् रूपमस्मिन्निति कृत्वा। *सामन्तकं चान्यस्य रूपस्येति* चित्तस्थस्य। अस्मिन् पक्षे कर्मधारय समासः—अघं च तत् सामन्तकं च तदित्यघसामन्तकम्।

*"विज्ञानं सास्रवम्"* इति। जन्मनो हेतोर्विज्ञानस्याभिप्रेतत्वात्। कुत इति चेत् ? अत आह—*यस्मादिमे षड् धातव इष्टाः "जन्मनिश्रयाः"*। "षड्धातुरयं भिक्षो पुरुषः" ( ) इति, "षट् खलु धातून् प्रतीत्य मातुः कुक्षौ गर्भस्यावक्रान्तिः" ( , इति वचनात्। *एते हि जन्मन* इति। विस्तरः—एते हि जन्मनो जनकपोषकसंवर्धकत्वादा*धारभूताः*। जनको ह्यत्र विज्ञानधातुः, प्रतिसन्धिबीजत्वात्। पोषकाणि भूतानि, तत्सन्निश्रयभावात्। संवर्धकमाकाशधातुः, अवकाशदानात्। अत एवैषां धातुत्ववचनम्। प्रतिसन्धिं दधत इति धातवः। *अनास्रवास्तु धर्मा नैवमिति*। न जन्मनिश्रयाः, जन्मनिरोधित्वात् ॥ २८ ॥

*"सनिदर्शन एकोऽत्र रूपम्"* इति। किमिदं निदर्शनं नाम ? येन विशेषेण योगात् तद्वस्तु तथा निदर्शयितुं शक्यते स विशेषो निदर्शनमित्युच्यते। वचनेन परस्य चक्षुर्विज्ञानमुत्पन्नं वा निदर्शनम्, तेन सह वर्तते सनिदर्शन एको रूपधातुरत्राष्टादशसु धातुषु। रूपधातुरेवैकः सनिदर्शन इत्यवधारणादुक्तं भवति।

कति सप्रतिघाः, कत्यप्रतिघाः ?

सप्रतिघा दश ।

**रूपिणः,**

य एते रूपस्कन्धसंगृहीता दश धातव उक्तास्ते सप्रतिघाः । प्रतिघो नाम प्रतिघातः । स च त्रिविधः—आवरण-विषय-आलम्बनप्रतिघातः ।

१. तत्रावरणप्रतिघातः = स्वदेशे परस्योत्पत्तिप्रतिबन्धः । यथा हस्तो हस्तेनाहतः[1] उपले वा । उपलोऽपि तयो ।

*अनिदर्शनाः शेषा* इति । अनेन चास्य सनिदर्शनत्वेन प्राधान्यमुक्तमिति । न पुनरुक्तदोषप्रसङ्ग इति तत्सिद्धे ।

एते च सनिदर्शनत्वादय प्रभेदा. प्रायेण सूत्रोक्ता एव प्रदर्श्यन्ते । तथा हि सूत्र उक्तम्—"चक्षुर्भिक्षो आध्यात्मिकमायतनम्, चत्वारि महाभूतान्युपादायरूपप्रसादो रूप्यनिदर्शनं सप्रतिघम् । यावत्कायो भिक्षो आध्यात्मिकमायतनं पूर्ववत् । मनो भिक्षो आध्यात्मिकमायतनमरूप्यनिदर्शनमप्रतिघम् । रूपाणि भिक्षो बाह्यमायतनं चत्वारि महाभूतान्युपादायरूपि सनिदर्शनं सप्रतिघम् । शब्दा हि भिक्षो बाह्यमायतनं चत्वारि महाभूतान्युपादायरूप्यनिदर्शनं सप्रतिघम् । यावत्स्प्रष्टव्यानि भिक्षो बाह्यमायतनं चत्वारि महाभूतानि चत्वारि च महाभूतान्युपादायरूप्यनिदर्शनं सप्रतिघम् । धर्मा भिक्षो बाह्यमायतनमेकादशभिरायतनैरसंगृहीतमरूप्यनिदर्शनमप्रतिघम्" (          ) इति ।

एते च प्रभेदा धातूनामेवा *प्रथमकोशस्थान*परिसमाप्ते. कथ्यन्ते, रूपविज्ञानविभागत्वात् ।

*"सप्रतिघा दश रूपिणः"* इति । रूपिग्रहणमरूपिनिरासार्थम् । रूपणं रूपम्, तदेषामस्तीति रूपिण । *दशेति* चक्षुर्धात्वादय पञ्च, तद्विषयधातवश्च पञ्चेति । धर्मधातोर्निरास कथं कृत , स चापि हि रूपीति शक्यते वक्तुम्, तत्राविज्ञप्तिरूपसद्भावात् ? रूपिण एवेत्यवधारणात् तन्निरास. कृतो भवति । ये हि धातव., रूपिस्वभावा एव ते ग्रहीतव्या । धर्मधातुस्तु रूप्यरूपिस्वभाव इति । *स्वदेशे परस्योत्पत्तिप्रतिबन्ध* इति । विस्तर —यत्रैकं सप्रतिघं वस्तु तत्र द्वितीयस्योत्पत्तिर्न भवति । *यथा हस्तो हस्तेनाहतः* प्रतिहन्यत *उपले वा* । हस्तो हस्तस्थान उपलस्थाने वा नोत्पद्यते । *उपलोऽपि* तयो । हस्तोपलयो स्थान उपलोऽपि नोत्पद्यते ।

१, हस्ते—का० । हस्तेऽभ्याहतः—जा० ।

२. विषयप्रतिघातश्चक्षुरादीनां विषयिणां रूपादिषु विषयेषु। यथोक्तं प्रज्ञप्तौ—"अस्ति चक्षुर्जले प्रतिहन्यते न स्थले, यथा मत्स्यानाम्; अस्ति स्थले न जले, प्रायेण मनुष्याणाम्; अस्त्युभयत्र, शिशुमार-मण्डूक-पिशाच-कैवर्त्तादीनाम्; अस्ति नोभयत्र, एतानाकारान् स्थापयित्वा। अस्ति चक्षुर्यद्रात्रौ प्रतिहन्यते न दिवा, तद्यथा तितीलोलूकादीनाम्, दिवा न रात्रौ, प्रायेण मनुष्याणाम्; रात्रौ दिवा च, श्व-शृगाल-तुरग-द्वीपि-मार्जारादीनाम्; नोभयत्र, एतानाकारान् स्थापयित्वा" (          ) इत्ययं विषयप्रतिघातः।

३. आलम्बनप्रतिघातश्चित्तचैत्ताना स्वेष्वालम्बनेषु।

कः पुनर्विषयालम्बनयोर्विशेष.[१] यस्मिन् यस्य कारित्रं स तस्य विषयः। यच्चित्तचैत्तैर्गृह्यते तदालम्बनम्। कुतः[१] पुनः स्वस्मिन् विषये प्रवर्त्तमानमालम्बने वा प्रतिहन्यत इत्युच्यते? तस्मात् परेणाप्रवृत्तेः।

निपातो वाऽत्र प्रतिघातो या स्वविषये प्रवृत्तिः।

तदिहावरणप्रतिघातेन दशानां सप्रतिघत्वं वेदितव्यम्, अन्योन्यावरणात्।

---

*जले प्रतिहन्यत* इति। जले स्वविषये प्रवर्तत इत्यर्थः। *प्रायेण मनुष्याणा*मिति। प्रायग्रहणं कैवर्तादिनिवृत्त्यर्थम्। *अस्ति नोभयत्रे*ति। गर्भे नियतमृत्यूनाम्। *एतानाकारानि*ति। एतान् प्रकारानित्यर्थः। *तितीला* बद्दुलय। *मार्जारादीना*मिति। आदिग्रहणेन चौरमनुष्यादीना व्याघ्रादीना च ग्रहणम्।

*यस्मिन् यस्य कारित्रं स तस्य विषय* इति। कारित्रम्=पुरुषकार.। चक्षु-श्रोत्रादीना रूपशब्दादिष्वालोचनश्रवणादि कारित्रम्। तच्च स्वचित्तचैत्तान् प्रत्याश्रयभावशक्तिविशेषलक्षणं वेदितव्यम्। *यच्चित्तचैत्तैर्गृह्यते* दण्डावस्तम्भनयोगेन *तदालम्बनं* रूपादि। तदेवं सति चित्तचैत्तानामेवालम्बनम्। विषयः पुनश्चक्षुरादीनामपि, न केवलं चित्तचैत्तानाम्। *तस्मात् परेणाप्रवृत्ते*रिति। यो हि लोके यत परेण न प्रवर्तते स तत्र प्रतिहन्यते—काष्ठे, कुड्ये वा। तथा चक्षुरादि विषयात् परेण न कारित्रं करोति। विषय एव तु करोति। तस्मात् तत्र प्रतिहन्यत इत्युच्यते।

*निपातो वात्र प्रतिघात* इति। विस्तर—अत्र विषये निपतनं *निपातः* *या स्वविषये प्रवृत्तिः*। कारित्रमित्यर्थः।

*तदिहावरणप्रतिघातेने*ति। विस्तर—'सप्रतिघा दश' इत्यत्रावरणप्रतिघातेन ते दश धातव सप्रतिघा अभिप्रेता.। तत्र विषयालम्बनप्रतिघाताभ्या

---

१. कः—का०।

ये धर्मा विषयप्रतिघातेन सप्रतिघा आवरणप्रतिघातेनापि त इति चतुः-कोटिकः। प्रथमा कोटिः—सप्त चित्तधातवो धर्मधातुप्रदेशश्च यः सम्प्रयुक्तः। द्वितीया—पञ्च विषयाः। तृतीया—पञ्चेन्द्रियाणि। चतुर्थी—धर्मधातुप्रदेशः सम्प्रयुक्तकवर्ज्यः।

ये धर्मा विषयप्रतिघातेन सप्रतिघा आलम्बनप्रतिघातेनापि त इति पश्चात्पादकः।

ये तावदालम्बनप्रतिघातेनापि ते स्युर्विषयप्रतिघातेनैव, नालम्बनप्रतिघातेन; पञ्चेन्द्रियाणि।

"यत्रोत्पित्सोर्मनसः प्रतिघातः शक्यतेऽन्यैः[1] कर्तुम्।
तत् सप्रतिघं ज्ञेयम्, विपर्ययादप्रतिघमिष्टम्"॥

इति भदन्तकुमारलातः।

उक्ताः सप्रतिघाः, अप्रतिघाश्च॥

एषामष्टादशधातूनां कति कुशलाः? कत्यकुशलाः? कत्यव्याकृताः?

**अव्याकृता अष्टौ,**

---

चित्तचैत्तानामपि सप्रतिघत्वप्रसङ्गात् *चतुःकोटिकः* प्रश्न.। चतुष्कोण., चतु.प्रकार इत्यर्थ.।

*पश्चात्पादक* इति। यदि प्रश्नस्य पश्चाद्भागं गृहीत्वा विसर्जनायोत्तिष्ठते स पश्चात्पादक। यदि पूर्वं भाग गृहीत्वा स पूर्वपादकः। *विषयप्रतिघातेनापि त* इति। चित्तचैत्ता। ते हि विषयप्रतिघातेनालम्बनप्रतिघातेन च सप्रतिघाः। *पञ्चेन्द्रियाणि* नालम्बनप्रतिघातेन सप्रतिघानि, अनालम्बनत्वात्।

*यत्रोत्पित्सोर्मनस* इति। विस्तरः—यत्राश्रय आलम्बने वा उत्पत्तुकामस्य मनस. *प्रतिघातोऽनुत्पत्तिः शक्यतेऽन्यैः कर्तु*मन्तरावरणेन, *तदेव सप्रतिघम्*; तेनान्तरावरणलक्षणेन प्रतिघेन सप्रतिघत्वात्। स्वदेशे परस्योत्पत्तिप्रतिबन्धलक्षणेन प्रतिघातेन सप्रतिघत्वादित्यपरे। किं पुनस्तत्? पञ्चेन्द्रियपञ्चविषयधातुस्वभावम्। *विपर्ययादप्रतिघमिष्टम्*। यत्रोत्पित्सोर्मनसः प्रतिघातो न शक्यते परै कर्तुम्। यथा मनोधातोर्धर्मधातोश्च मनोविज्ञानोत्पत्तावन्तरावरणं न शक्यते परै. कर्तुम्। अत सप्तचित्तधातुधर्मधातुस्वभावमप्रतिघमिति सिद्धम्।

*"अव्याकृता अष्टौ"* इति। अव्याकृता एवाष्टावित्यवधारणम्।

---

१. शक्यते परैः—का०।

कतमे अष्टौ ? य एते सप्रतिघा दशोक्ताः,

**त एवारूपशब्दकाः ॥ २९ ॥**

पञ्चेन्द्रियाणि गन्धरसस्प्रष्टव्या धातवश्च—एतेऽष्टौ कुशलाकुशलभावेनाव्याकरणादव्याकृताः ;

विपाकं प्रत्यव्याकरणादित्यपरे । एवमनास्रवेऽपि प्रसङ्गः ॥ २९ ॥

**त्रिधाऽन्ये,**

अन्ये दश धातवः कुशलाकुशलाव्याकृताः ।

तत्र सप्त धातवोऽलोभादिसम्प्रयुक्ताः कुशलाः, लोभादिसम्प्रयुक्ता अकुशलाः, अन्ये अव्याकृताः ।

धर्मधातुरलोभादिस्वभावसम्प्रयुक्तसमुत्थः प्रतिसंख्यानिरोधश्च कुशलः, लोभादिस्वभावसम्प्रयुक्तसमुत्थोऽकुशलः, अन्योऽव्याकृतः ।

---

*कुशलाकुशलभावेनाव्याकरणादव्याकृताः* । ये कुशलाकुशलव्यतिरिक्तास्त एवाव्याकृता इहाभिप्रेता । न तु कुशला, अकुशलाव्याकृताव्याकरणात् । नाप्यकुशला, कुशलाव्याकृताव्याकरणात् । कुशलाकुशलाना कुशलाकुशलभावेन व्याकृतत्वात् । संकेतरूढ्यपेक्षा हि शब्दप्रवृत्ति ॥ २९ ॥

*"त्रिधान्ये"* इति । धातव इत्यधिकृतम् । त्रेधैवान्ये, नैकधा, न द्विधेत्यवधारणम् । *अलोभादिसम्प्रयुक्ताः कुशला* इति । विस्तर —अलोभाद्वेषामोहह्र्यपत्रपासम्प्रयुक्ता सप्त चित्तधातव कुशला । *लोभद्वेषमोहाह्र्यनपत्राप्यसम्प्रयुक्ता अकुशलाः* । कुत्सिताश्छलिता गता अपक्रान्ता इति कुशला । प्रज्ञा वा कुश इव तीक्ष्णेति कुश, तं लान्ति आददत इति कुशला । तद्विपरीता अकुशला । *अन्ये* त्वलोभादिलोभाद्यसम्प्रयुक्ता *अव्याकृताः* ।

*धर्मधातुरि*ति । विस्तर —*अलोभादिस्वभावो* योऽयमुक्त । अलोभादि*सम्प्रयुक्तो* वेदनादि. । अलोभादि*समुत्थो* विप्रयुक्त प्राप्तिजात्यादि, अविज्ञप्तिश्च । *प्रतिसंख्यानिरोधश्चा*पर इति चतुर्विध *कुशलो* धर्मधातु । *लोभादिस्वभावसम्प्रयुक्तसमुत्थोऽकुशलः* । *अन्योऽव्याकृतः* । यो नालोभादिस्वभावसम्प्रयुक्तसमुत्थ, नापि लोभादिस्वभावसम्प्रयुक्तसमुत्थ, आकाशमप्रतिसंख्यानिरोध, तेषा च यथासम्भवं प्राप्तिजात्यादय —एषोऽव्याकृतो धर्मधातु ।

पशब्दधातू कुशलाकुशलचित्तसमुत्थौ कुशलाकुशलौ कायवाग्विज्ञप्ति-तदन्याव्याकृतौ ।

उक्तः कुशलादिभाव. ॥

षामष्टादशधातूनां कति कामधात्वाप्ताः ? कति रूपधात्वाप्ताः ?

**कामधात्वाप्ताः सर्वे**

**आप्ता** अवियुक्ताः । **कामधातु**प्रतिसंयुक्ता इत्यर्थः ।

**रूपे चतुर्दश ।**

**रूपधातौ चतुर्दश** धातवः ।

**विना गन्धरसघ्राणजिह्वाविज्ञानधातुभिः ॥ ३० ॥**

हि **गन्धरसौ** न स्तः; तयोः [1]कवलीकाराहारत्वात्, तद्वीतरागाणां च ।

ततो **घ्राणजिह्वाविज्ञाने** अपि न स्तः; आलम्बनाभावात् ।

एवं तर्हि स्प्रष्टव्यधातोरपि तत्राभावप्रसङ्गः ? कवलीकाराहारत्वात् ।

गन्धरसयोरप्येष प्रसङ्गः ? नास्ति विनाऽभ्यवहारेण गन्धरसयोः परिभोगः ।

स्प्रष्टव्यस्येन्द्रियाश्रयाधारप्रावरणभावेन ।

---

दन्यावव्याकृताविति । ताभ्यां *कुशलाकुशलचित्तसमुत्थाभ्यां* रूपशब्दधातु-
रूपशब्दधातू अव्याकृतचित्तसमुत्थौ कायवाग्विज्ञप्तिसंगृहीतौ विज्ञ-
हीतौ चाव्याकृतौ ।

*कामधात्वाप्ताः सर्वे"* इति । कामधात्वाप्ता. सर्व एवेत्यवधार्यते, अष्टादश-
मात्रसंग्रहात् । न तु प्रत्येकम्; साकल्यत ।

त आह—*"रूपे चतुर्दश"* इति । *तयोः कवलीकाराहारत्वा*दिति । तयो-
रयो. । गन्धोऽपि हि कवलीकाराहार· सूक्ष्म. । तत्राभावप्रसङ्ग
तत्र रूपधातौ स्प्रष्टव्यधातोरभावप्रसङ्गः, कवलीकाराहारत्वात् ।
आहार. कामे त्र्यायतनात्मक" ( अभि० को० ३.३९ )
द्धान्तात् । *गन्धरसयोरप्येष प्रसङ्ग* इति । यौ नाहारस्वभावौ तौ तत्र
मित्यर्थ. । *अस्ति तु स्प्रष्टव्यस्ये*ति । किम् ? परिभोगः । इन्द्रियाश्रया-
*आधारभावेन, प्रावरणभावेन* च ।

---

[1] कवडीकारा०—का० ।

तस्मादभ्यवहारवीतरागाणां गन्धरसौ तत्र निष्प्रयोजनौ, न तु स्प्रष्टव्यम् ।

अन्ये पुनराहुः—ध्यानसमापत्तिसन्निश्रयेणेह रूपाणि सन्दृश्यन्ते, शब्दाश्च श्रूयन्ते । प्रस्रब्धिसहगतेन स्प्रष्टव्यविशेषेण च कायोऽनुगृह्यते । अत एषामेव त्रयाणां ध्यानोपपत्तौ सम्भवः, न गन्धरसयोरिति ।

एवं तर्हि घ्राणजिह्वेन्द्रिययोरभावप्रसङ्गः; निष्प्रयोजनत्वात् ? अस्ति प्रयोजनम्, ताभ्यां हि विनाऽऽश्रयशोभैव न स्यादिति व्यवहारश्च ? यद्येतत् प्रयोजनम्, अधिष्ठानमेवास्तु शोभार्थं वचनार्थं च, मा भूदिन्द्रियम् ।

नानिन्द्रियमधिष्ठानं सम्भवति, पुरुषेन्द्रियाधिष्ठानवत् ?

---

*अन्ये पुनराहुरिति* भदन्तश्रीलातः[1] । *प्रस्रब्धिसहगतेनेति* । प्रस्रब्धिसहोत्पन्नेन कायकर्मण्यतासहगतेनेत्यर्थः ।

अत्राचार्यो भदन्तश्रीलातमतमनादृत्य वैभाषिकमतं सावकाशं दृष्ट्वा विनिश्चयमारभते—*एवं तर्हीति* । विस्तरः—*वैभाषिकैरर्थत* एतत् प्रतिज्ञातम्—'न स्तो रूपधातौ गन्धरसौ; निःप्रयोजनत्वात्, स्त्रीपुरुषेन्द्रियविषयवत्' इति । तं पक्षमाचार्यो दूषयति—दुष्टोऽयं पक्षः, धर्मिविशेषविपर्ययापक्षालत्वात् । रूपधातौ गन्धरसाख्यो हि धर्मी विद्यमानस्वग्राहकोऽभिप्रेतः । तस्याविद्यमानस्वग्राहकत्वं प्राप्नोति, यथा हि स्त्रीपुरुषेन्द्रियविषयो निःप्रयोजनत्वेनाविद्यमानस्वग्राहको भवति तथा गन्धरसाख्योऽपि विषयः प्राप्नोति । स्फुटमप्यनुमानमस्ति येनैष धर्मिविशेषविपर्ययो व्यज्यते—'न स्तो रूपधातौ घ्राणजिह्वेन्द्रिये, निःप्रयोजनविषयत्वात्, स्त्रीपुरुषेन्द्रियविषयवदिति ।

*वैभाषिकदेशीयः* कश्चित् प्रतिविधत्ते—*अस्ति प्रयोजनमिति* । विस्तरः—*ताभ्यां* घ्राणजिह्वेन्द्रियाभ्यां *विना शरीरशोभैव न स्यात्* । वाग्विज्ञप्तिश्च । अनेन दृष्टबाधेन प्रसङ्गं निवर्तयति । अनुमानं ह्यत्र दृष्टं बाधते । किं तदिति ? उच्यते—'स्तो रूपधातौ घ्राणजिह्वेन्द्रिये सप्रयोजनत्वाच्चक्षुरिन्द्रियवद्' इति । *आचार्य* आह—*यद्येतत्प्रयोजनमिति* । विस्तरः—*अधिष्ठानेनैवाश्रयशोभावचनं च भवति नेन्द्रियेणेति* सप्रयोजनत्वस्य हेतोरसिद्धता दर्शयति ।

*वैभाषिकदेशीय* आह—*नानिन्द्रियमधिष्ठानमिति* । विस्तरः—न रूपधातौ सम्भवत्यनिन्द्रियं घ्राणजिह्वेन्द्रियाधिष्ठानम्, इन्द्रियाधिष्ठानत्वात्, पुरुषेन्द्रियाधिष्ठानवदिति । एतेन सप्रयोजनत्वस्य सिद्धता स्थापयति । आचार्य आह—

---

1. भदन्तश्रीलाभः—पाठा० ।

युक्तस्तदसम्भवः; निष्प्रयोजनत्वात्। घ्राणजिह्वाधिष्ठानं तु सप्रयोजनम्। अतोऽस्य विनाऽपीन्द्रियेण युक्तः सम्भवः।

निष्प्रयोजनापीन्द्रियाभिनिर्वृत्तिर्भवति, यथा गर्भे नियतमृत्यूनाम्।

स्यान्नाम निःप्रयोजना, न तु निर्हेतुका। कश्च हेतुरिन्द्रियोत्पत्तेः? इन्द्रियसतृष्णस्य कर्मविशेषः। यश्च विषयाद् वितृष्णः, स नियतमिन्द्रियादपीति न तद्विषयवीतरागाणा घ्राणजिह्वेन्द्रिये सम्भवितुमर्हतः।

पुरुषेन्द्रियमपि वा किं न निर्वर्तते? अशोभाकरत्वात्।

---

*युक्तस्तदसम्भव* इति। विस्तरः—युक्तस्तत्र पुरुषेन्द्रियाधिष्ठानस्यासम्भवः, निःप्रयोजनत्वात्। *घ्राणजिह्वेन्द्रियाधिष्ठानं* त्वाश्रयशोभाभिव्याहारप्रयोजनत्वात् *सप्रयोजनम्। अतोऽस्य विनापीन्द्रियेण युक्तः सम्भवः।* साधनं त्वत्रोच्यते—'सम्भवति रूपधातावनिन्द्रियं घ्राणजिह्वेन्द्रियाधिष्ठानम्, सप्रयोजनत्वात्, चक्षुरिन्द्रियाधिष्ठानवद्' इति। अनेन तामेव सप्रयोजनत्वस्यासिद्धता व्यवस्थापयति।

एवमत्र सप्रयोजनत्ववादिनि *वैभाषिकदेशीये* कस्मिंश्चिन्निषिद्धे यदेतदादावुक्तम्—'एवं तर्हि घ्राणजिह्वेन्द्रिययोरप्यभावप्रसङ्गः; निःप्रयोजनत्वात्' इति, तद्दूषणाभासता दर्शयन्तो *वैभाषिका* आहुः—*निष्प्रयोजनापीति*। विस्तरः—*यथा गर्भे नियतमृत्यूनाम्* निष्प्रयोजनाभिनिर्वृत्तिः। न हि तेषा रूपदर्शनादिर्भवति। एवं रूपधातौ घ्राणजिह्वेन्द्रियाभिनिर्वृत्तिर्निष्प्रयोजनापि भविष्यतीति। तेन 'न स्तो रूपधातौ घ्राणजिह्वेन्द्रिये, निःप्रयोजनत्वात् पुरुषेन्द्रियवद्' इति निःप्रयोजनत्वमनैकान्तिकं प्रदर्श्यते।

*आचार्य* आह—*स्यान्नाम निःप्रयोजनेति*। विस्तरः—भवेन्निःप्रयोजनेन्द्रियाभिनिर्वृत्तिः, *न तु निर्हेतुका*; संस्कृताना सहेतुकत्वात्। *यश्च विषयाद्वितृष्णः स नियतमिन्द्रियादपीत्यनेन* हेत्वभावः प्रदर्श्यते। ततश्चैवं साधनमुच्यते—'न स्तो रूपधातौ घ्राणजिह्वेन्द्रिये, निर्हेतुकत्वात्, निर्हेतुकाङ्कुरवत्, पुरुषेन्द्रियवद्वा'। *पुरुषेन्द्रियमपि वा किं न निर्वर्तत* इत्याचार्य एव विकल्पं वाहयति। कोऽभिप्रायः? यदि निःप्रयोजना हेतुमन्तरेणापि वा घ्राणजिह्वेन्द्रिययोरुत्पत्तिः पुरुषेन्द्रियमपि वा किं न निर्वर्तते। *वैभाषिकाणा* ह्ययं पक्षः—'सघ्राणजिह्वेन्द्रियो रूपधातुसत्त्वसन्तानः, रूपिप्राणित्वात्, कामावचरसत्त्वसन्तानवद्' इति। *आचार्यस्तु* 'पुरुषेन्द्रियमपि किं न निर्वर्तते' इत्यनेन तस्य पक्षस्य धर्मिविशेषविपर्ययं दर्शयति—अविद्यमानपुरुषेन्द्रियो रूपधातुसत्त्वसन्तानो धर्मी, तस्य विपर्ययो विद्यमानपुरुषेन्द्रियत्वमिति। *वैभाषिकाः* परिहरन्ति—*अशोभाकरत्वादिति*।

कोशगतवस्तिगुह्यानां किं न शोभते[1] ।

न च प्रयोजनवशादुत्पत्तिः, किं तर्हि ? स्वकारणोत्पद्यत्वाद्[2] । इत्यशोभाकरस्यापि स्यादेव सति हेतावुत्पत्तिः ।

सूत्रं तर्हि विरुध्यते—"अविकला अहीनेन्द्रियाः" इति ? यानि तत्रेन्द्रियाणि तैरविकला अहीनेन्द्रिया इति कोऽत्र विरोधः । इतरथा हि पुरुषेन्द्रियस्यापि स्यात् प्रसङ्गः ।

एवं तु वर्णयन्ति—स्त एव तत्र घ्राणजिह्वेन्द्रिये, न तु गन्धरसौ । आत्मभावमुखेन हि षडायतने तृष्णासमुदाचारः, न विषयमुखेन ।

---

कथमिति न रूपधातौ पुरुषेन्द्रियमस्ति ? अशोभाकरत्वात्, काणकुण्ठत्ववत् । तदनुमानबाधनान्न विपर्येत्यस्माकमेषा प्रतिज्ञा, 'यदि दृष्टं न बाधते' इति नैयायिकसिद्धान्तादित्यभिप्राय । *आचार्य* आह—*कोशगतवस्तिगुह्याना किं न शोभते* । वस्तौ गुह्यं वस्तिगुह्यम् । वस्तिर्येन तत्पुरुषेन्द्रियं वेष्टितम् । गुह्यम्= पुरुषेन्द्रियम् । कोशो यत्र तद्वस्तिगुह्यं तिष्ठति । कोशगतं वस्तिगुह्यं येषा त इमे कोशगतवस्तिगुह्या. । तेषा किं न शोभते । शोभत एवेत्यर्थ । अनेनाशोभाकरत्वमसिद्धं दर्शयति ।

*न च प्रयोजनवशादुत्पत्तिरिति* । विस्तरः—*वैभाषिकै*रशोभाकरत्वादिति ब्रुवद्भिरर्थापत्त्यैतत् प्रतिज्ञातं भवति—प्रयोजनवशोत्पाद्यं पुरुषेन्द्रियमिति । स च पक्षोऽनुमानबाधित, धर्मिस्वरूपविपर्ययापक्षालत्वात् । कथमिति ? उच्यते—न प्रयोजनवशोत्पाद्यं पुरुषेन्द्रियम्, *स्वकारणोत्पाद्यत्वात्*, काणकुण्ठत्ववत् ।

वैभाषिका आहु.—*सूत्रं तर्हि विरुध्यत* इति । विस्तरः—योऽयम् 'अविद्यमानघ्राणजिह्वेन्द्रियो रूपधातुसत्त्वसन्तान.' इति पक्षः स सापक्षाल', प्राक्पक्षविरोधात् । तथा हि *भगवता* रूपावचरा. सत्त्वा.—*"अविकला अहीनेन्द्रियाः"* इत्युक्ताः; काणकुण्ठत्वाभावत्वात् । अहीनेन्द्रिया., चक्षुरादिभिरहीनत्वात् । आचार्य आह—*यानि तत्रेति* । विस्तर—यानि तत्र रूपधातौ घ्राणेन्द्रियादिरहितानि चक्षुरादीनि *तैरहीनेन्द्रिया* इति सूत्रार्थपरिग्रहादविरोध. ।

*एवं तु वर्णयन्ति* वैभाषिका—*स्त एवेति* । विस्तर—भवत एव *तत्र* रूपधातौ *घ्राणजिह्वेन्द्रिये, न तु गन्धरसौ । आत्मभावमुखेन हि* स्वसन्तानमुखेन *षडायतने* चक्षुरादिके *तृष्णासमुदाचारः* प्राणिना प्रवर्तते । तदभिष्यन्दितं च कर्मेति सहेतुके रूपधातौ घ्राणजिह्वेन्द्रिये । ततश्च सहेतुकत्वात् स्त एव ते

---

१. शोभेत—का० । २. कारणवशाद्—का० ।

पुरुषेन्द्रिये तु मैथुनस्पर्शमुखेनेति ।

तस्मात् सिद्धमेतद्—रूपधात्वाप्ताश्चतुर्दश धातव इति ॥ ३० ॥

**आरूप्याप्ता मनोधर्ममनोविज्ञानधातवः ।**

रूपवीतरागाणां तत्रोपपत्तिः, अतोऽत्र दश रूपस्वभावा धातवस्तदाश्रयालम्बनाश्च पञ्च विज्ञानधातवो न सम्भवन्ति ॥

कति सास्रवाः ? कत्यनास्रवाः ? य एते मनोधर्ममनोविज्ञानधातव उक्ताः

**सास्रवानास्रवा एते त्रयः;**

ये मार्गसत्यासंस्कृतसंगृहीतास्तेऽनास्रवाः, अन्ये सास्रवाः ।

**शेषास्तु सास्रवाः ॥ ३१ ॥**

पञ्चदश धातव **शेषास्त्वेकान्तसास्रवाः** ॥ ३१ ॥

---

रूपधातौ, सहेतुकाङ्कुरादिवदिति । अनेन च—'न स्तो रूपधातौ घ्राणजिह्वेन्द्रिये निर्हेतुकत्वाद्' इति यत्साधनमुक्तं तदसिद्धमिति प्रतिपादयन्ति । पुरुषेन्द्रिये *तु मैथुनस्पर्शमुखेन* । किम् ? *तृष्णासमुदाचार* इति प्रकृतम् । मैथुनस्पर्शवीतरागाश्च रूपावचरा सत्त्वा । तस्मात् तत्र न तृष्णापूर्वकं कर्म भवति । तस्मादहेतुकत्वात् तत्र पुरुषेन्द्रियं नास्ति, निर्हेतुकाङ्कुरादिवदिति *सिद्ध' रूपधातौ चतुर्दशैव धातव* इति ॥ ३० ॥

"*आरूप्याप्ताः*" इति । विस्तर —"*मनोधर्ममनोविज्ञानधातवः*" एवारूप्याप्ता इत्यवधारणादन्ये धातवो न सन्तीत्युक्तं भवति । यस्माद् *रूपवीतरागाणा तत्रोपपत्तिरतो दश रूपस्वभावा धातवः ।* चक्षुरादय पञ्च रूपादयश्चापि पञ्च न सन्ति । *तदाश्रयालम्बनाश्च पञ्च विज्ञानधातवो न सन्तीति* । ते चक्षुरादयो रूपादयश्च यथाक्रममाश्रया आलम्बनानि च येषा त इमे तदाश्रयालम्बना । आश्रयाणा चक्षुरादीनामालम्बनाना च रूपादीनामभावात् तेऽपि चक्षुर्विज्ञानादिधातवस्तत्र न सन्ति ।

"*सास्रवानास्रवा एते त्रयः*" इति । एत एव त्रय सास्रवानास्रवा इत्यवधारणम् ।

"*शेषास्तु सास्रवाः*" इति । किमर्थमिदमुच्यते, नन्वेत एव त्रय. सास्रवानास्रवा इत्यवधारणाच्छेषा' सास्रवा इति सिद्धम् ? न सिद्धम्, कथम् ? शेषाः सास्रवा एव नास्रवा एव वा स्युरित्याशङ्का, तन्निवृत्त्यर्थमिदमुच्यते—शेषा. सास्रवा एवेति ॥ ३१ ॥

कति सवितर्काः सविचाराः ? कत्यवितर्का विचारमात्राः ? कत्यवितर्का अविचाराः ?

**सवितर्कविचारा हि पञ्च विज्ञानधातवः ।**

नित्यमेते वितर्कविचाराभ्यां संयुक्ताः । अवधारणार्थो हि-शब्दः ।

**अन्त्यास्त्रयस्त्रिप्रकाराः,**

मनोधातुः, धर्मधातुः, मनोविज्ञानधातुश्चान्त्याः । एते **त्रयस्त्रिप्रकाराः** । तत्र मनोधातुः, मनोविज्ञानधातुः, सम्प्रयुक्तश्च धर्मधातुरन्यत्र वितर्कविचाराभ्यां कामधातौ प्रथमे च ध्याने सवितर्काः सविचाराः । ध्यानान्तरेऽवितर्का विचारमात्राः । द्वितीयाद् ध्यानात् प्रभृत्याभवाग्रादवितर्का अविचाराः ।

सर्वश्चासम्प्रयुक्तो धर्मधातुर्ध्यानान्तरे च विचारः । वितर्कस्तु नित्यमवितर्को विचारमात्रः; द्वितीयवितर्काभावात्, विचारसम्प्रयोगाच्च ।

कामधातौ प्रथमे ध्याने विचार एषु त्रिप्रकारेषु नान्तर्भवति, स कथं

---

*"सवितर्कविचारा हि पञ्च विज्ञानधातवः"* इति । सवितर्कसविचारा एवेति हिशब्दोऽवधारणे ।

*"अन्त्यास्त्रयस्त्रिप्रकाराः"* इति । अन्त्या एव त्रिप्रकारा इत्यवधारणम् ।

*अन्यत्र वितर्कविचाराभ्यामिति* । वितर्कविचारौ सम्प्रयुक्तकधर्मधातुस्वभावौ, तयोरत्र ग्रहणप्रसङ्ग इति परिवर्ज्येते । वितर्को हि द्वितीयप्रकारान्तरेऽन्तर्भविष्यति । विचारोऽपि ध्यानान्तरजस्तृतीये प्रकारेऽन्तर्भवति । तदन्यस्तु त्रिष्वपि प्रकारेषु नान्तर्भवतीति वक्ष्यति । त एते मनोधात्वादयः सम्प्रयुक्तकधर्मधातुपर्यन्ताः *कामधातौ प्रथमे च ध्याने* ससामन्तके मौले *सवितर्काः सविचाराः*, वितर्कविचारसम्प्रयोगात् । अत एव *ध्यानान्तरेऽवितर्काः* वितर्काभावात् । *विचारमात्राः*, विचारसम्प्रयोगात् । अत एव *द्वितीयात् प्रभृति यावद्भवाग्रं* तयोरभावाद*वितर्का अविचाराः* । *सर्वश्चासम्प्रयुक्तो धर्मधातुरि*ति यथासम्भवं त्रैधातुकरूपचित्तविप्रयुक्ता असंस्कृताश्च । *ध्यानान्तरे च विचारोऽ*वितर्को वितर्काभावात् । *अविचारो* द्वितीयविचाराभावात् ।

*विचार एषु त्रिषु प्रकारेषु नान्तर्भवतीति* । कामधातुप्रथमध्यानभूमिको विचारः प्रथमे तावत् प्रकारे नान्तर्भवति—सवितर्कः सविचार इति । स हि सवितर्कः सम्भवति, न तु सविचारः, विचारासम्प्रयोगात् । द्वितीयेऽपि नान्त-

वक्तव्य. ? अविचारो वितर्कमात्र; द्वितीयविचाराभावात्, वितर्कसम्प्रयोगाच्च। अत एवोच्यते—"स्युः सवितर्कसविचाराया भूमौ धर्माश्चतुःप्रकाराः—सवितर्काः सविचारा विचारवितर्कवर्ज्याः सम्प्रयुक्ता', अवितर्को विचारमात्रो वितर्कः; अवितर्का अविचारा असम्प्रयुक्ताः, अविचारो वितर्कमात्रो विचारः" इति।

**शेषा उभयवर्जिताः ॥ ३२ ॥**

दश रूपिणो धातवः शेषा नित्यमवितर्का अविचाराः; असम्प्रयोगित्वात्।३२॥

यदि पञ्च विज्ञानकायाः सवितर्काः सविचाराः, कथमविकल्पका इत्युच्यन्ते ?

**निरूपणानुस्मरणविकल्पेनाविकल्पकाः ।**

त्रिविध' किल विकल्पः—स्वभाव-अभिनिरूपण-अनुस्मरणविकल्पः। तदेषां स्वभावविकल्पोऽस्ति, नेतरौ। तस्मादविकल्पका इत्युच्यन्ते। यथा—

---

भवति—अवितर्को विचारमात्र इति, वितर्कसंप्रयोगाद् द्वितीयविचाराभावाच्च। तृतीयेऽपि नान्तर्भवति—अवितर्कोऽविचार इति। स हि यद्यप्यविचारो द्वितीयविचाराभावात्, न त्ववितर्को वितर्कसंप्रयोगात्। *स कथं वक्तव्यः?* इत्यत आह—*अविचारो वितर्कमात्र* इति। *द्वितीयविचाराभावादविचार.*। *वितर्कसंप्रयोगाद्* वितर्कमात्र.। *अत एवे*ति। यस्मात् सवितर्कसविचाराणां भूमौ विचार एव चतुर्थप्रकारो भवति। *अविचारो वितर्कमात्र* इति।

*शेषा उभयवर्जिताः* इति। *शेषा दशरूपिणो धातव* उक्ताः। तेऽवितर्का विचारमात्रा वा अवितर्का अविचाराः स्युरित्याशङ्कायामवधार्य तदुभयवर्जिता एव, शेषा अवितर्का अविचारा एवेत्यर्थः ॥ ३२ ॥

*कथम् अविकल्पका इत्युच्यन्त* इति। "चक्षुर्विज्ञानसंसर्गी नीलं विजानाति नो तु नीलम्" इति वचनात्। *त्रिविधः किल विकल्प* इति। किलशब्द. परमतद्योतनार्थः। स्वाभिप्रायस्तु—चेतनाप्रज्ञाविशेष एव वितर्क इति, न स्वभावविकल्पोऽन्यो धर्मोऽस्तीति। तथा ह्यनेन पञ्चस्कन्धके उक्तम्—"वितर्क. कतमः? पर्येषको मनोजल्पश्चेतनाप्रज्ञाविशेषो या चित्तस्यौदारिकता। विचार. कतम. ? प्रत्यवेक्षको मनोजल्प, तथैव या चित्तस्य सूक्ष्मता अनभ्यूहावस्थाया चेतना, अभ्यूहावस्थाया प्रज्ञेति व्यवस्थाप्यते"। *तदेषां स्वभावविकल्पोऽस्ती*ति। तदिति वाक्योपन्यासे निपात, तस्मादर्थे वा। स्वभावेनैव विकल्प औदारिकलक्षणत्वात्। *स्वभावविकल्पो वितर्कः*। स एषां पञ्चाना विज्ञानकायाना सम्प्रयोगतोऽस्ति। तस्मात् सविकल्पा उक्ता.। *नेतरावभिनिरूपणानुस्मरणविकल्पावेषां*

एकपादकोऽश्वोऽपादक इति। तत्र स्वभावविकल्पो वितर्कः। स चैत्तेषु पश्चान्निर्देक्ष्यते।

इतरौ पुनः किंस्वभावौ? यथाक्रमम्—

**तौ प्रज्ञा मानसी व्यग्रा स्मृतिः सर्वैव मानसी ॥ ३३ ॥**

मनोविज्ञानसम्प्रयुक्ता **प्रज्ञा मानसी**त्युच्यते। असमाहिता **व्यग्रे**त्युच्यते। सा ह्यभिनिरूपणाविकल्पः। **मानस्यैव सर्वा स्मृतिः**—समाहिता चासमाहिता च अनुस्मरणविकल्पः ॥ ३३ ॥

कति सालम्बनाः, कत्यनालम्बनाः?

**सप्त सालम्बनाश्चित्तधातवः,**

चक्षुःश्रोत्रघ्राणजिह्वाकायमनोविज्ञानधातवः, मनोधातुश्च—एते **सप्त चित्तधातवः सालम्बनाः**; विषयग्रहणात्।

**अर्धं च धर्मतः।**

सालम्बनं यच्चैतसिकस्वभावम्। शेषा दश रूपिणो धातवो धर्मधातुप्रदेशश्चासम्प्रयुक्तकोऽनालम्बना इति सिद्धम्।

---

स्तः। तस्मादविकल्पा उच्यन्ते। *यथैकपादकोऽश्वोऽपादक* इति। पादत्रये छिन्न एकस्मिन्नपि पादे सत्यपादक इत्युच्यते। तद्वदेकविकल्पा अविकल्पका इति।

*सा ह्यभिनिरूपणाविकल्प* इति। सा मानस्यसमाहिता *प्रज्ञा* श्रुत-चिन्तामयी, उपपत्तिप्रतिलम्भिका च। सा हि मनसि भवा *मानसी*। *व्यग्रा* विविधाग्रा व्यग्रा, विविधालम्बनेत्यर्थं। विगतप्रधाना वा। मुहुर्मुहुरालम्बनान्तराश्रयणाद् व्यग्रा। कस्मादभिनिरूपणाविकल्प इत्युच्यते? तत्र तत्रालम्बने नामापेक्षयाभिप्रवृत्तेः, रूपं वेदना अनित्यं दुःखमित्याद्यभिनिरूपणाच्च। समाहिता तु भावनामयी नामानपेक्षयालम्बने प्रवर्तत इति नैषाभिनिरूपणाविकल्प इत्युच्यते। *मानस्यैव सर्वा स्मृति*रिति। समाहिता च, असमाहिता च। सा किल नामानपेक्षानुभूतार्थमात्रालम्बना प्रवर्तते, "स्मृतिः कतमा? चेतसोऽभिलाषः" इति लक्षणात्। पञ्चविज्ञानकायसम्प्रयुक्ता तु नानुभूतार्थाभिलाषप्रवृत्तेति नानुस्मरणविकल्प इतीष्यते ॥ ३३ ॥

*"सप्त सालम्बनाः"* इति। उभयावधारणम्। सप्तैव सालम्बनाः, सालम्बना एव च सप्तेति।

*"अर्धं च धर्मतः" सालम्बन*मिति। उक्तव्यतिरेकेणेदमुच्यते। अत्राप्युभया-

कत्युपात्ताः ? कत्यनुपात्ताः ?

**नवानुपात्ताः,**

कतमे नव ? ये सप्त सालम्बना उक्ताः अष्टमस्यार्धेन सार्धम् ।

**ते चाष्टौ शब्दश्च,**

इमे ते नवानुपात्ताः—सप्त चित्तधातवः, धर्मधातुः, शब्दधातुश्च ।

**अन्ये नव द्विधा ॥ ३४ ॥**

उपात्ताः, अनुपात्ताश्च । तत्र चक्षुःश्रोत्रघ्राणजिह्वाकायाः प्रत्युत्पन्नाः उपात्ताः; अतीतानागताः अनुपात्ताः । रूपगन्धरसस्प्रष्टव्यधातवः प्रत्युत्पन्ना इन्द्रियाविनिर्भागिणः उपात्ताः; अन्येऽनुपात्ताः । तद्यथा—मूलवर्जेषु केशरोमनखदन्तेषु विण्मूत्रखेटसिङ्घाणकशोणितादिषु भूम्युदकादिषु च ।

उपात्तमिति कोऽर्थः ? यच्चित्तचैत्तैरधिष्ठानभावेनोपगृहीतम्; अनुग्रहोपघाताभ्यामन्योन्यानुविधानात् । यल्लोके 'सचेतनम्' इत्युच्यते ॥ ३४ ॥

---

वधारणम्—धर्मार्धमेव सालम्बनम्, सालम्बनमेव च धर्मार्धमिति । यस्माच्च सप्तैव सालम्बना धर्मार्धं चैव सालम्बनमित्यवधारणमस्ति, तस्माच्छेषा दश रूपिणो धातवो धर्मधातुप्रदेशश्चासम्प्रयुक्तोऽनालम्बना इति सिद्धमित्युक्तम् । तथा ह्यनवधारण ह्ययमर्थो न सिध्येत् ।

*"नवानुपात्ताः"* इति । नवानुपात्ता एवेत्यवधारणम् ।

*"ते चाष्टौ"* इति । ते च सप्त चित्तधातवो धर्मधातुश्च यस्यार्धं सालम्बनमुक्तम् । *अष्टमस्यार्धेन सार्धमिति* । सहेति यावत् । अष्टग्रहणं सकलधर्मधातुग्रहणार्थम् । मा धर्मधात्वर्धग्रहणं विज्ञायीति । ते चाष्टौ शब्दश्चापर इति नवानुपात्ता इत्युक्ता ।

*"अन्ये नव द्विधा"* इति । चक्षुरादयः पञ्च, शब्दवर्ज्याश्च रूपादयश्चत्वार इति नव ते द्विधैव । उपात्तानुपात्ता इत्यर्थं । न तूपात्ता एवेति । एतदर्थं च 'अन्ये नव द्विधा' इति पुन सूत्रितम् ।

*अनुग्रहोपघाताभ्यामन्योन्यानुविधानादिति* । चक्षुर्धात्वादीनामनुग्रहोपघाताभ्यामञ्जनादिपाणिघातादिलक्षणाभ्या चित्तचैत्तानामनुग्रहोपघातौ भवतः । चित्तचैत्ताना चानुग्रहोपघाताभ्या सौमनस्यदौर्मनस्यलक्षणाभ्या चक्षुर्धात्वादीनामनुग्रहोपघातौ भवतः । अतस्ते *चित्तचैत्तैरधिष्ठानभावेनोपगृहीता* उच्यन्ते । स्वीकृता इत्यर्थ. । *यल्लोके सचेतनमिति* । सजीवमित्यर्थः ॥ ३४ ॥

कति धातवो भूतस्वभावाः ? कति भौतिकाः ?

**स्प्रष्टव्यं द्विविधं,**

भूतानि, भौतिकं च । तत्र भूतानि चत्वारि । भौतिकं श्लक्ष्णत्वादि सप्तविधम्; भूतेषु भवत्वात् ।

**शेषा रूपिणो नव भौतिकाः ।**

पञ्चेन्द्रियधातवश्च, चत्वारो विषयाः—एते नव धातवो भौतिका एव ।

**धर्मधात्वेकदेशश्च**

अविज्ञप्तिसंज्ञको भौतिकः, शेषाः सप्त चित्तधातवो धर्मधातुश्चाविज्ञप्तिवर्ज्यो नोभयथा । "भूतमात्रं दशायतनानि" ( ) इति भदन्तबुद्धदेवः । तच्च नैवम्; भूतानां चतुष्कखक्खटादिलक्षणावधारणात्[1] सूत्रे तेषां स्प्रष्टव्यत्वात् । न हि काठिन्यादीनि चक्षुरादिभिर्गृह्यन्ते, नापि वर्णादयः कायेन्द्रियेण ।

---

*"स्प्रष्टव्यं द्विविधम्"* इति । उभयावधारणम्—स्प्रष्टव्यमेव द्विविधम्, द्विविधमेव स्प्रष्टव्यमिति ।

*"शेषा रूपिणो नव भौतिकाः"* भौतिक इत्यत्राप्युभयावधारणम् । *"धर्मधात्वेकदेशश्च"* भौतिक इत्यत्राप्युभयावधारणम् । यस्माच्चैत उभयावधारितास्तस्माच्छेषाः *सप्त चित्तधातवो धर्मधातुश्चाविज्ञप्तिवर्ज्यो नोभयथे*ति सिद्धम् ।

*भूतानां चतुष्कखक्खटादिलक्षणावधारणा*दिति । चतुष्कावधारणात् पृथिव्यप्तेजोवायुधातवः स्प्रष्टव्यधातौ चत्वारि भूतानि । श्लक्ष्णत्वादयस्तत्र चक्षुरादयश्च न भूतानि । खक्खटादिलक्षणावधारणाच्च पृथिव्यप्तेजोवायुधातुष्वन्ये धर्माश्चक्षुरादयो नान्तर्भावं गच्छन्ति । कथम् ? चत्वारि महाभूतानि—पृथिवीधातुः, अब्धातुः, तेजोधातुः, वायुधातुः । पृथिवीधातुः कतमः ? खक्खटत्वमिति विस्तरः । *तेषां च स्प्रष्टव्यत्वा*दिति । तेषां च खक्खटत्वादीनां स्प्रष्टव्यत्वात् । यस्मात् तानि स्प्रष्टव्यानि; वर्णादयस्तु द्रष्टव्याः, श्रोतव्याः, घ्रातव्याः, स्वादयितव्याः । कथं गम्यते स्प्रष्टव्यानि तानि ? इत्यत आह—*न हि काठिन्यादीनि चक्षुरादिभिर्गृह्यन्ते* । किं तर्हि ? कायेन्द्रियेणैवेत्यतोऽवगम्यते—स्प्रष्टव्यानि तानीति । स्यान्मतम्—तेऽपि वर्णादयः स्प्रष्टव्याः ? इत्यत आह—*नापि वर्णादयः कायेन्द्रियेण* । किम् ? गृह्यन्त इति प्रकृतम् ।

---

१. चतुष्क०—का० ।

उक्तं च सूत्रे "चक्षुर्भिक्षो आध्यात्मिकमायतनं चत्वारि महाभूतान्युपादाय-रूपप्रसादो रूप्यनिदर्शनं सप्रतिघम्। एवं यावत् कायः। रूपाणि भिक्षो बाह्यमायतनं चत्वारि महाभूतान्युपादायरूपि सनिदर्शनं सप्रतिघम्। शब्दो भिक्षो बाह्यमायतनं चत्वारि महाभूतान्युपादायरूप्यनिदर्शनं सप्रतिघम्। एवं गन्धरसाः। स्प्रष्टव्यानि भिक्षो बाह्यमायतनं चत्वारि महाभूतानि चत्वारि महाभूतान्युपादाय-रूप्यनिदर्शनं सप्रतिघम्" (          ) इति। स्प्रष्टव्यायतनैकदेशेनैव भूतानां संग्रहाच्छेषं न भूतानीति स्पष्टमादर्शितम्।

यत् तर्हि सूत्रे उक्तम्—"यच्चक्षुषि मांसपिण्डे खक्खटं खरगतम्" (          ) इति ? तेनाविनिर्भागवर्तिनो मांसपिण्डस्यैष उपदेशः।

"षड्धातुरय भिक्षो पुरुषः" इति गर्भावक्रान्तौ मौलसत्त्वद्रव्यसन्दर्शनार्थम्; पुनः षट्स्पर्शायतनवचनात्। चैत्ताभावप्रसङ्गाच्च।

---

उक्तं च सूत्र इति विस्तर। अपरस्मिन्नपि सूत्रे स्पष्टमादर्शितम्। कथमिति *विस्तरेण* यावदिदमुक्तम्। *स्प्रष्टव्यानि भिक्षो बाह्यमायतनम्। चत्वारि महाभूतानि चत्वारि महाभूतान्युपादायरूप्यनिदर्शनं सप्रतिघमिति। शेषं* चक्षुराद्यायतनं न *भूतानी*ति स्पष्टमादर्शितम्।

*यत्तर्हि* सूत्र उक्तमिति। विस्तर.—*यच्चक्षुषि मासपिण्डे खक्खटं खरगतम्,* खरप्रकार इत्यर्थ.। चक्षुरिन्द्रियं खक्खटस्वभावमिति मत्वा चोदयन्ति—*तेनाविनिर्भागवतिनो मांसपिण्डस्यैष उपदेश* इति। तेन चक्षुरिन्द्रियेणाविनिर्भाग-वर्तिनोऽधिष्ठानस्यैतद् वचनम्। भवति हि चक्षुरधिष्ठानेऽपि चक्षुरुपचार.। अत एव मासपिण्ड इति ग्रहणम्। अन्यथा चक्षुषीत्येवावक्ष्यत् यदीन्द्रियमेवेष्यते।

षड्धातुरयं *भिक्षो* पुरुष इति विस्तरः। *गर्भावक्रान्ति*सूत्रे कललाद्यवस्थायामिति भूतमात्रोपदेशान्न भौतिकमस्तीति चोद्यमाशङ्क्याह—*मूलसत्त्वद्रव्यसन्दर्शनार्थ*मिति। मूलस्य सत्त्वद्रव्यस्य सन्दर्शनार्थमेव। पृथिवीधात्वादयश्चत्वारो मूलसत्त्वम्; पञ्चाना चक्षुरादीना स्पर्शायतनाना तत उत्पत्ते। मनोधातुरपि मूलसत्त्वम्; मन.स्पर्शायतनस्य तत उत्पत्ते। अथ वा—चतुर्णां पृथिवीधात्वादीनामुपादायरूपाश्रयत्वात्, विज्ञानधातोश्च चैतसिकानामाश्रयत्वात् त एव मूलसत्त्वम्।

कथं गम्यते ? *पुनः षट्स्पर्शायतनवचनात्।* तत्रैव सूत्रे पश्चादुक्तम्—"षट् स्पर्शायतनानि' इति। चक्षु.स्पर्शायतनं यावन्मनःस्पर्शायतनमिति। अतो

न च युक्त—'चित्तमेव चैत्ता.' इत्यभ्युपपत्तुम्[1]; "संज्ञा च वेदना च चैतसिक एष धर्मश्चित्तान्वयाच्चित्तनिश्रित:" (                ) इति सूत्रवचनात्[2], सरागचित्तादिवचनाच्च। तस्माद् यथोक्तं धातूनां भूतभौतिकत्वम् ॥

कति सञ्चिता: ? कत्यसञ्चिता: ?

**सञ्चिता दश रूपिणः ॥ ३५ ॥**

---

विज्ञायते—मूलसत्त्वद्रव्यसन्दर्शनार्थत्वात् 'षड्धातुरयं भिक्षो पुरुष.' इति वचनम्, न तु भूतमात्रत्वादिति। ननु च यथा विज्ञानधातोरव्यतिरिक्तमपि मन:स्पर्शायतनं पुनरुच्यते, एवं चक्षुरादीन्यपि चतुर्धात्वव्यतिरिक्तानि पुनरुच्येरन्निति, अतो न पुन. षट्स्पर्शायतनवचनेन तद्व्यतिरिक्तभौतिकास्तित्वसिद्धि. ? नैतदेवम्, यदि हि पृथिवीधात्वादय एव स्पर्शायतनान्यभविष्यन्, भूतान्येव स्पर्शायतनानीत्येवावक्ष्यत्। न त्वेवम्, किं तर्हि ? चक्षु स्पर्शायतनं यावन्मन.स्पर्शायतनमिति। अतोऽवगम्यते—पृथिवीधात्वादिव्यतिरिक्तानि चक्षुरादीनीति। विज्ञानधातुस्तु चक्षुरादिस्पर्शायतनवचनानुषङ्गेण पुनरुच्यते। स्पर्शायतनमिति कोऽर्थ. ? स्पर्शस्य चैतसिकस्याश्रय इत्यर्थ।

*चैत्ताभावप्रसङ्गाच्चेति*। यदि "षड्धातुरयं भिक्षो पुरुष" इति यथाभूतमेव द्रव्याणि गृह्येरन्, नान्यानि तदाश्रितानि द्रव्याणि, तेनैतत् प्राप्तम्। विज्ञानधातुमात्रग्रहणादत्र चैतसिकाना तदाश्रितानामग्रहणप्रसङ्ग। इष्टत्वाददोष इति चेत् ? न, सापक्षालत्वादस्य पक्षस्य। सापक्षालो ह्ययं पक्ष—'चित्तविशेषा एव चैतसिका.' इति, स्वसिद्धान्तविरोधात्।

तेनाह—*न च युक्तं चित्तमेव चैत्ता इत्यभ्युपगन्तुम्*। कस्मात् ? *संज्ञा च वेदना च चैतसिक एष धर्मश्चित्तनिश्रित* इति सूत्रवचनात्। साधनं चात्रोपतिष्ठते—'चित्तादर्थान्तरभूते संज्ञावेदने, स्कन्धदेशनाया पृथग्देशितत्वात्, रूपस्कन्धवद्' इति। अथ वा—'स्वाश्रयादर्थान्तरभूते संज्ञावेदने, तदाश्रितत्वात्, यत् स्वाश्रयाश्रितं तत् स्वाश्रयादर्थान्तरभूतम्, तद्यथा कुड्याश्रितं चित्रम्'।

*सरागादिचित्तवचनाच्चेति*। "सरागं चित्तं सरागं चित्तमिति यथाभूतं प्रजानाति। विगतरागं चित्तं विगतरागं चित्तमिति यथाभूतं प्रजानाति। सद्वेषं चित्तं सद्वेषं चित्तमिति यथाभूतं प्रजानाति" इति (                ) विस्तर:। अत्र साधनम्—'सरागं चित्तमिति चित्तरागयो: परस्परतोऽर्थान्तरत्वम्; सहयोगनिर्दिष्टत्वात्, सपुत्रश्चैत्र इति सहयोगनिर्दिष्टचैत्रपुत्रवद्' इति ॥

---

१. ०भ्युपेतुम्—का०। २. सूत्रे वचनात्—का०।

पञ्चेन्द्रियधातवः, पञ्च विषयाः—सञ्चिताः। परमाणुसङ्घातत्वात्। शेषा न सञ्चिता इति सिद्धं भवति ॥ ३५ ॥

अष्टादशानां धातूनां कश्छिनत्ति, कश्छिद्यते, को दहति, को दह्यते, कस्तुल्यति, कस्तुल्यते ?

**छिनत्ति च्छिद्यते चैव बाह्यं धातुचतुष्टयम्।**

**रूपगन्धरसस्प्रष्टव्याख्यं परशुदार्वादिसंज्ञकम्।**

छेदो नाम क एष धर्मः ? सम्बन्धोत्पादिनः सङ्घातस्रोतसो विभक्तोत्पादनम्। न कायेन्द्रियादीनि छिद्यन्ते; निरवशेषाङ्गच्छेदे तदद्वैधीकरणात्। न हीन्द्रियाणि द्विधा भवन्ति; छिन्नस्याङ्गस्य निरिन्द्रियत्वात्।

---

*"सञ्चिता दश"* इति। परमाणुसञ्चयस्वभावा दशैवेत्यर्थः। अन्ये तु धातवोऽस्मादवधारणान्न सञ्चिता इति सिद्धम् ॥ ३५ ॥

*तुल्यतीति* कस्य धातोरेतद्रूपम्, तथा हि "तुल उन्माने" (मा० धा० चु० ५४) इत्यस्य धातोस्तोलयतीति रूपं भवति ? नैष दोष, तुला करोति तुलयतीति प्रातिपदिकधातोरेतद्रूपमिष्यते। कर्मणि च तुल्य इति रूपं भवति।

*"बाह्यं धातुचतुष्टयम्"* इति। रूपादिकं शब्दवर्ज्यम्। *परशुदार्वादिसंज्ञक*मिति। परश्वादिसंज्ञकम्।

*"छिनत्ति"* दार्वादिसंज्ञकम्। *"छिद्यते"* सम्भवं प्रत्येवमुच्यते। कदाचित् परश्वादिसंज्ञकं छिद्यते, दार्वादिसंज्ञकमपि छिनत्ति।

*सम्बन्धोत्पादिन* इति विस्तरः। सम्बन्धेनाविभागेनोत्पत्तुं शीलमस्येति सम्बन्धोत्पादि। *सङ्घातस्रोतः।* रूपादिसङ्घातसन्तान इत्यर्थः। तस्य *विभक्तोत्पादनं* विभक्तजननं *यत् स छेदः।* क्षणिकानां हि भावाना विनापि परश्वादिना छेदो भवत्येव। सन्ताननिरोधस्तु परश्वादिनेति परश्वादिकं छिनत्तीत्युच्यते। कारणसामग्रीविशेषवशाद्धि कार्यविशेषोत्पत्तिर्भवति। तत्र धातुचतुष्टयमेव छिनत्ति छिद्यते चेत्यवधार्यते। तथावधारणाच्चान्ये धातवो नोभयथेति सिद्धम्। अत एव चाह—*न कायेन्द्रियादीनि छिद्यन्त* इति। विस्तर.—अत्र न चक्षुरिन्द्रियादीनीति वक्तव्ये कस्मात् कायेन्द्रियादीनीति वचनम् ? यस्मात् कायेन्द्रिये परिस्फुटश्छेदो भवति, यदि भवेदित्यतः कायेन्द्रियपुरःसराणीन्द्रियाणि कथ्यन्ते। *निरवशेषाङ्गच्छेदे* सर्वाङ्गप्रत्यङ्गच्छेदे। *तदद्वैधीकरणात्* तेषां कायेन्द्रियादीनामद्वैधीकरणात्। कथं पुनर्गम्यते तदद्वैधीकरणमिति ? अतः पुनराह—*न हीन्द्रियाणि द्विधा भवन्ति। छिन्नस्याङ्गस्य* कायादपगतस्य *निरिन्द्रियत्वात्।* इदमपि कथं गम्यते—निरिन्द्रियं तदङ्गं यच्छिन्नं कायादपगत

न चापि च्छिन्दन्ति, मणिप्रभावदच्छत्वात् ।

यथा च्छिनत्ति च्छिद्यते चैव बाह्यं धातुचतुष्टयम्,

**दह्यते तुलयत्येवं,**

तदेव **दह्यते,** तदेव **तुलयति** । नेन्द्रियाणि; अच्छत्वात्, मणिप्रभावत् । न शब्दः; उच्छेदित्वात् ।

**विवादो दग्धृतुल्ययोः ॥ ३६ ॥**

**केचिदाहुः**—तदेव धातुचतुष्टयं दाहकं तुल्यं च । **केचिदाहुः**—तेजोधातुरेव दग्धा गुरुत्वमेव च तुल्यमिति ॥ ३६ ॥

---

मिति ? यस्मात् तत्प्रतीत्य स्प्रष्टव्यादिकं च कायादिविज्ञानानुपपत्तिः । कथं तर्हि छिन्नेन पुनर्लग्नेन नासिकाग्रेण कायविज्ञानोत्पत्तिः ? नासिकामूलसम्बन्धेन पुनः कायेन्द्रियोत्पत्तेरदोषः । कथमिह गृहगोधिकादीनां पुच्छानि छिन्नानि स्पन्दन्ते, यदि तत्र कायेन्द्रियं नास्ति ? वायुधातोरेष विकारः, नैतत् कायेन्द्रियस्य कर्मेत्यवगन्तव्यम् । *न चापि छिन्दन्ति मणिप्रभावदच्छत्वात् ।* यथा मणिप्रभा न छिनत्ति, अच्छत्वात्, तद्वदिन्द्रियाणि ।

"*दह्यते तुलयत्येवम्*" इति । एवम्—शब्देन तदेव बाह्यं धातुचतुष्टयं तथात्वेन प्रदर्श्यते । काष्ठादीनामग्निकृतो विकारः=दाहः । स चेन्द्रियाणां न भवति; मणिप्रभावदच्छत्वात् । न हि तानि काष्ठादिवच्चर्मादिवद्वा विक्रियन्ते । किं तर्हि ? तत्सम्बन्धात् प्रवाहच्छेदो भवति । तुलादिभूतं च तदेव धातुचतुष्टयं तुलयति, नेन्द्रियाणि, तथैवाच्छत्वात् । अमूर्तानां तु धातूनाममूर्तत्वादेव छेदाद्यसम्भव इति तेषां छेदादि न चिन्त्यते । *न शब्द उच्छेदित्वा*दिति । किम् ? छिनत्ति छिद्यते, दह्यते तुलयति वा, अप्रवाहवर्तित्वात् ।

"*विवादो दग्धृतुल्ययोः*" इति । उत्तरत्रापीदमनुवर्तते—न शब्द उच्छेदित्वादिति । तदेव *धातुचतुष्टयं दाहकं तुल्य* चेति । अग्निक्षारादि दाहकम्, समस्तस्यात्र धातुचतुष्टयस्य भस्मादिविकारहेतुत्वात् । लवणादि तुल्यम् । तत्रापि समस्तस्य तुलावनतिहेतुत्वादित्येकेषामभिप्रायः ।

*तेजोधातुरेव दग्धा गुरुत्वमेव च तुल्यमिति* । तेजोधातुरेवाग्निज्वालादिगत उद्भूतवृत्तिर्दहति, पृथिवीधात्वादीनामुद्भूतस्ववृत्तित्वेऽप्यदाहकत्वदर्शनात् । गुरुत्वमेव चोपादायरूपमुद्भूतवृत्ति तुल्यते; आतपादिषु लघुद्रव्येषु रूपादीनामुद्भूतवृत्तित्वेऽप्यतुल्यत्वदर्शनात् ॥ ३६ ॥

कति विपाकजाः धातवः ? कत्यौपचयिकाः ? कति नैःष्यन्दिका ? कति द्रव्ययुक्ताः ? कति क्षणिका ? आह—

**विपाकजौपचयिकाः पञ्चाध्यात्मम्,**

**अध्यात्मं** तावत् **पञ्च** धातवः चक्षुरादयो **विपाकजाश्चौपचयिकाश्च** । नैःष्यन्दिका न सन्ति, तद्व्यतिरिक्तनिष्यन्दाभावात् ।

तत्र विपाकहेतोर्जाता विपाकजाः । मध्यपदलोपात् गोरथवत् । फलकालप्राप्तं वा कर्म 'विपाक.' इत्युच्यते, विपच्यत इति कृत्वा, तस्माज्जाता विपाकजाः । फलं तु विपक्तिरेवेति विपाकः । भवतु वा [1] हेतौ [1] फलोपचार, यथा फले हेतूपचार.—"षडिमानि स्पर्शायतनानि पौराणं कर्म वेदितव्यम्" (
) इति ।

---

*"पञ्चाध्यात्मम्"* इति । पञ्च-ग्रहणं मनोनिवृत्त्यर्थम् । अध्यात्मग्रहणं रूपादिनिवृत्त्यर्थम् ।

*विपाकजौपचयिकाः* एव पञ्चाध्यात्मिका न *नैष्यन्दिका* इत्यवधारणम् । कस्मात् ? *तद्व्यतिरिक्तनिष्यन्दाभावात्* । विपाकजा औपचयिकाश्च यद्यपि नैष्यन्दिका भवन्ति, "निष्यन्दो हेतुसदृशः" ( अभि० को २ ५८ ) इति कृत्वा ; ते तु विपाकजौपचयिकत्वेनैव संगृहीतत्वान्न नैष्यन्दिका इति गृह्यन्ते । ये तु स्वहेतुसदृशा न च विपाकजा न चौपचयिका., त इह नैष्यन्दिका अभिप्रेता । न चैवंविधाश्चक्षुरादयो भवन्ति, किं तर्हि ? विपाकजा वा औपचयिका वा भवन्तीत्यत एवमुच्यते—तद्व्यतिरिक्तनिष्यन्दाभावादिति । कथं पुनर्ज्ञायते—नैष्यन्दिकास्ते न सन्तीति ? मृतस्याननुवृत्ते । न हि रूपादिवन्मृतस्य चक्षुर्धात्वादयोऽनुवर्तन्ते ।

*विपाकहेतोर्जाता* इति । विपाकस्य फलस्य हेतुर्विपाकहेतु., विपाकहेतोर्जाता विपाकजा । *मध्यपदलोपा*द्धेतुशब्दलोपात् । *गोरथवत्* । यथा गोभिर्युक्तो रथो गोरथ इति । *फलकालप्राप्तं वा कर्मे*ति । विपाकफलोत्पत्त्यनन्तरक्षणावस्थमित्यर्थः । *विपच्यत इति विपाकः* । कर्मकर्तरि घञ् । विपाकाज्जाता विपाकजा । फल तु *विपक्तिरेवेति विपाक* इति भावे घञ् । *भवतु वा हेतौ फलोपचार* इति । विस्तर.—अविपाकस्वभावोऽपि कर्मलक्षणो हेतुर्विपाक इत्युच्यते, तदुत्पादकत्वात् । *यथा* फले हेतूपचार इति । विस्तर —*षडिमानि स्पर्शायतनानि* चक्षुरादीनि *पौराणं कर्म* । पुराणे जन्मनि भवं पुराणमेव वा पौराणं कर्म । तानि

---

१-१. फलहेतौ—का० ।

आहारसंस्कारस्वप्नसमाधिविशेषैरुपचिता औपचयिकाः। ब्रह्मचर्येण चेत्येके। अनुपघातमात्रं तु तेन स्यात्, नोपचयः। विपाकसन्तानस्योपचयसन्तानः प्रतिप्राकार इवारक्षा।

शब्द औपचयिको नैःष्यन्दिकश्चास्ति।

विपाकजः।

न शब्दः,

किं कारणम्? इच्छातः[1] प्रवृत्तेः।

यत्तर्हि प्रज्ञप्तिशास्त्रे उक्तम्—"पारुष्यविरतेः सुभावितत्वाद् ब्रह्मस्वरता

---

स्पर्शायतनान्यपौराणकर्मस्वभावान्यपि पौराणं कर्मेत्युच्यन्ते, तज्जातत्वात्। एवमिह विपर्ययोपचारो द्रष्टव्यः।

*आहारसंस्कारस्वप्नसमाधिविशेषैरुपचिता औपचायिका* इति। विशेषशब्दः प्रत्येकमभिसम्बध्यते। तत्राहारस्वप्नौ लोके प्रतीतौ, संस्कारोऽभ्यङ्गस्नानानुवासनादिस्वभावः, समाधिश्चित्तैकाग्रतालक्षणः। समीपे चय उपचयः, उपचये भवा औपचयिकाः, सैनिकवत्। उपचया एव वा औपचयिकाः, वैनयिकवत्, स्वार्थे तद्धितविधानात्। *ब्रह्मचर्येण चेत्येके* इति। ब्रह्मचारिणामुपशान्तेन्द्रियाणां शरीरोपचयदर्शनात्। *अनुपघातमात्रं तु तेन स्यादि*ति। अब्रह्मचर्येण शरीरापचयः। ब्रह्मचर्येण तु शरीरापचयो न भवति। तस्मादाह—अनुपघातमात्रं तु तेन ब्रह्मचर्येण स्यात्, *नोपचयः*। उपचयस्त्वाहारादिभिरेव। कस्मात् तर्हि प्रव्रजितानां केषाञ्चिच्छरीरापचयो भवति? कामपरिदाहादियोगादसौ भवेत्। *प्रतिप्राकार इवारक्षे*ति। उपचयसन्तानो विपाकसन्तानस्य परिवार्यावस्थानेनारक्षा।

*शब्द औपचयिक* इति। अनुपचितकायस्य शब्दसौष्ठवादर्शनात्।

*इच्छातः प्रवृत्तेरि*ति। 'शब्दो मे स्यात्' इतीच्छया शब्दः प्रवर्तते, अनिच्छया न प्रवर्तते। विपाकजश्च धर्मोऽनिच्छतोऽपि प्रवर्तते। तस्मान्न विपाकजः शब्दः। साधनं चात्रोच्यते—'न विपाकजः शब्दः, इच्छातः प्रवृत्तेः, योनिशो मनसिकारचैतसिकवत्। यत्तु विपाकजं न तस्येच्छया प्रवृत्तिः, तद्यथा—चक्षुरिन्द्रियस्य' इति।

*यत्तर्ही*ति विस्तरः। अनेन स्वसिद्धान्तविरुद्धतां प्रतिज्ञाया उद्ग्राहयति।

---

१. ईहातः—का०।

महापुरुषलक्षणं निर्वर्त्तते" (                ) इति ? तृतीयाऽसौ परम्परेत्येके—कर्मभ्यो हि भूतानि, भूतेभ्यः शब्दः इति। पञ्चम्यसौ परम्परेत्यपरे—कर्मभ्यो[1] विपाकजानि भूतानि[2], तेभ्यश्चौपचयिकानि, तेभ्यो नैःष्यन्दिकानि, तेभ्यः शब्द इति।

एवं तर्हि शारीरिक्यपि वेदना कर्मजभूतसम्भूतत्वान्न विपाकजा[3] स्यात[3] ? यदि शब्दवद् युक्तिविरोधः स्यात्।

**अप्रतिघा अष्टौ नैःष्यन्दिकविपाकजाः ॥ ३७ ॥**

कतमेऽष्टौ ? सप्त चित्तधातवः, धर्मधातुश्च। **नैःष्यन्दिकाः** सभागसर्वत्रगहेतुजनिताः।

**विपाकजा** विपाकहेतुजनिताः। नहि[4] ते औपचयिकाः, सञ्चयभावात्[4] ३७

---

*तृतीयासौ परम्परेत्येक* इति विस्तर.। *भूतानि* पारुष्यविरतेः कर्मपथस्य कण्ठे विपाकस्वभावानि *निर्वर्तन्ते*, तेभ्यः शब्दः।

द्वितीयेऽपि पक्षे—*कर्मभ्यो विपाकजानि भूतानि* । *तेभ्य_औपचयिकानि*। आहारोपचयतः समाध्युपचयतो वा भूतान्तराणि । *तेभ्यो नैष्यन्दिकानि*। पूर्वभूतव्यतिरिक्तान्यागन्तुकानि भूतानि। *तेभ्यः शब्द* इति। अतो न विपाकजः शब्द इति । परम्पराभिनिर्वर्तनं त्वभिसन्धाय "पारुष्यविरतेर्ब्रह्मस्वरता निर्वर्तते" इत्युक्तम्। अनेन स्वसिद्धान्तविरुद्धता तस्या. प्रतिज्ञायाः परिह्रियते।

*यदि शब्दवद् युक्तिविरोधः स्यादि*ति। 'शब्द इच्छात' प्रवर्तते' इति विपाकयुक्तिविरोधान्न विपाकज उक्तः। *तद्* यदि *तद्वच्छारीरिक्यपि वेदना* इच्छातः प्रवर्तते, *न विपाकजा स्यात्*। न त्विच्छात. सा प्रवर्तते, किं तर्हि ? अनिच्छयापि सा प्रवर्तते चक्षुरादिवत्। तस्माद् विपाकजेति युज्यत इत्यभिप्राय.। कीदृशी पुनः सा ? या सुखदुःखप्रत्ययोपसंहारमन्तरेणापि प्रवर्तते।

*नैष्यन्दिकाः सभागसर्वत्रगहेतुजनिता* इति। सभागसर्वत्रगहेतुभिरेव जनिता, न विपाकहेतुनेत्यवधारणम्। *विपाकजा विपाकहेतुजनिता* इति। विपाकहेतुना जनिता एव। न तु विपाकहेतुनैव जनिता इत्यवधारणम्। सभागहेतुनापि जनिता विपाकजा भवन्ति। तत्र चाष्टावप्रतिघा नैष्यन्दिका विपाकजा एवेत्यवधार्यते । *न हि त औपचयिकाः सञ्चयाभावात्*। अपरमाणुसञ्चयस्वभावत्वादित्यर्थः ॥ ३७ ॥

---

१. कर्मभ्यो हि—का० । २. महाभूतानि—का० । ३–३. विपाकः प्राप्नोति—का० । ४–४. औपचयिका न सन्त्यप्रतिघानां सञ्चयाभावात्—का० ।

**त्रिधाऽन्ये,**

**अन्ये** चत्वारः शेषा रूपरसगन्धस्प्रष्टव्यधातवः । ते विपाकजा अपि, औपचयिका अपि, नैःष्यन्दिका अपि ।

**द्रव्यवानेकः,**

असंस्कृतं हि सारत्वाद् द्रव्यम् । तच्च धर्मधातावस्ति, अतो धर्मधातुरेको द्रव्ययुक्तः ।

**क्षणिकाः पश्चिमास्त्रयः ।**

मनोधातुर्धर्मधातुर्मनोविज्ञानधातुश्च पाठक्रमेण **पश्चिमाः** । ते प्रथमानास्रवे दुःखे धर्मज्ञानक्षान्तिकलापे क्षणमेकमनैःष्यन्दिका भवन्ति, अतः **क्षणिका** इत्युच्यन्ते । अन्यसम्भूतसंस्कृतो नास्ति कश्चिदनैःष्यन्दिकः । तत्र दुःखे धर्मज्ञानक्षान्तिसम्प्रयुक्तं चित्तं मनोधातुः, मनोविज्ञानधातुश्च । शेषास्तत्सहभुवो धर्मधातुः ॥

---

*त्रिधान्ये* इति । त्रिधैवान्य अन्य एव त्रिधेत्यवधार्यते । तत्र विपाकजा इन्द्रियाविनिर्भागिण एव । "विपाकोऽव्याकृतो धर्मः सत्त्वाख्य" ( अभि० को० २५१ ) इति वचनात् । नैष्यन्दिकौपचयिकास्त्विन्द्रियविनिर्भागिणोऽपि । कथं पुनर्गम्यते—इन्द्रियविनिर्भागिणोऽपि नैष्यन्दिका. सन्तीति ? मृतस्यापि तदनुवृत्तिदर्शनात् । न ह्यसत्त्वसंख्याता विपाकजा इष्यन्ते ।

*"द्रव्यवानेकः"* इति । एक एव द्रव्यवानित्यवधारणम् । *सारत्वाद् द्रव्यमिति* । अविनाशात् ।

*क्षणमेकमनैष्यन्दिका भवन्तीति* । क्षणमेकमसभागहेतुनिर्वर्तिताः । पूर्वक्षणानास्रवाभावात् क्षणिका , न तु क्षणान्तरविनाशिन इत्ययमर्थोऽभिप्रेतः । अन्यथा हि 'पश्चिमा एव धातवः क्षणिका' इत्यवधारणात् तदितरेषा धातूनामक्षणिकत्वप्रसङ्गः । कथं पुनर्दुःखधर्मज्ञानक्षान्तिकलापे मनोधातुर्मनोविज्ञानधातुश्च युगपद्भवतः, न हि विज्ञानद्वयसमवधानमिष्यते ? नोच्यते—युगपत्तौ भवत इति. किं तर्हि ? एकमत्र विज्ञानं धातुद्वयत्वेन व्यवस्थाप्यते । नामद्वयेन कथ्यत इत्यर्थः तेन व्याचष्टे—*दुःखधर्मज्ञानक्षान्तिसम्प्रयुक्तं चित्तं मनोधातुर्मनोविज्ञानधातुश्चेति* । *शेषास्तत्सहभुवो धर्मधातुरिति* । तत्र क्षान्तिकलापे चित्तादन्ये धर्माः शेषाः । तत्सहभुवः तया क्षान्त्या सहभुवः । तद्यथा—अनास्रवसंवरो रूपम् । वेदनासंज्ञाचेतनादयः सम्प्रयुक्ताः । तेषां च प्राप्तिजात्यादयो धर्मधातुरिति ।

इदं विचार्यते—यश्चक्षुर्धातुनाऽसमन्वागतः समन्वागमं प्रतिलभते चक्षुर्विज्ञानधातुनापि सः ? यो वा चक्षुर्विज्ञानधातुना चक्षुर्धातुनापि सः ? आह—

**चक्षुर्विज्ञानधात्वोः स्यात् पृथग् लाभः सहापि च ॥ ३८ ॥**

पृथक् तावत् स्याच्चक्षुर्धातुना, न चक्षुर्विज्ञानधातुना। कामधातौ क्रमेण चक्षुरिन्द्रियं प्रतिलभमानः। आरूप्यधातुच्युतश्च द्वितीयादिषु ध्यानेषूपपद्यमान.।

स्याच्चक्षुर्विज्ञानधातुना, न चक्षुर्धातुना। द्वितीयादिध्यानोपपन्नश्चक्षुर्विज्ञानं सम्मुखीकुर्वाणस्तत्प्रच्युतश्चाधस्तादुपपद्यमानः।

---

*समन्वागमं प्रतिलभत* इति। प्राप्तिमलब्धपूर्वां लभत इत्यर्थः। *चक्षुर्विज्ञानधातुनापि स* इति। किम् ? समन्वागमं प्रतिलभत इत्यधिकृतम्।

*"पृथग्लाभः"* इत्यनेन प्रथमद्वितीये कोट्यौ दर्शिते। *"सहापि च"* इत्यनेन तृतीया कोटिर्दर्शिता। चतुर्थी तूभयनिर्मुक्तेति सुगमत्वान्न दर्शिता। चशब्देन वा साप्युक्ता—अपृथगसह चेति।

*कामधातौ क्रमेण चक्षुरिन्द्रियं प्रतिलभमान* इति। कामधातौ स्थित पुद्गल क्रमेण कललादिक्रमेण मृत्युक्रमेण वा चक्षुरिन्द्रियं लभते। किंप्रतिसंयुक्तं किं कामधातावेव ? नेत्युच्यते, अविशेषेण कामप्रतिसंयुक्तं वा रूपप्रतिसंयुक्तं वा प्रतिलभमानः। कललाद्यवस्थाया तथा क्रमेण मरणस्याचक्षुष्मन्मरणस्य च काले चक्षुर्धातुनाऽसमन्वागत; कललाद्यवस्थाया तथा मरणावस्थाया वा तदभावात्। षडायतनोत्पत्त्यवस्थाया भवस्यान्तराले वा तेनेदानी समन्वागमं प्रतिलभते। न तु चक्षुर्विज्ञानधातुनाऽसमन्वागत समन्वागमं प्रतिलभते, यस्मादसौ कुशलक्लिष्टेन तेनातीतानागतेन समन्वागत एव पूर्वमन्तराभवप्रतिसन्धिकाले। विप्रकृतावस्था ह्येषाधिक्रियते, न प्रतिलब्धवत्प्रतिलप्स्यमानावस्था।

चक्षुर्विज्ञानधातुनेति विस्तरः। *द्वितीयादिध्यानोपपन्नः*। तत्र तस्य चक्षुर्विज्ञानधातोरभावात् तेन पूर्वमसमन्वागत इदानी *चक्षुर्विज्ञानं* प्रथमध्यानभूमिकमनिवृताव्याकृतस्वभावं *सम्मुखीकुर्वाणः*। *तेन चक्षुर्विज्ञानधातुना* समन्वागमं प्रतिलभते। न तु चक्षुर्धातुनाऽसमन्वागत. समन्वागमं प्रतिलभते; प्रतिलब्धवत्समन्वागतत्वात्। *तत्प्रच्युतश्चाधस्तादुपपद्यमान* इति। द्वितीयादिध्यानप्रच्युतोऽधस्तात्प्रथमे ध्याने कामधातौ चोपपद्यमानश्चक्षुर्विज्ञानधातुनाऽसमन्वा-

**सहापि स्यादुभयेन समन्वागमं प्रतिलभते । आरूप्यधातुच्युतः कामधातौ ब्रह्मलोके चोपपद्यमानः ।**

नोभयेन एतानाकारान् स्थापयित्वा । **यश्चक्षुर्धातुना समन्वागतश्चक्षुर्विज्ञान-धातुनाऽपि सः । चतुष्कोटिकः ।**

प्रथमा **कोटिर्द्वितीयादिषु ध्यानेषूपपन्नश्चक्षुर्विज्ञानासम्मुखीकुर्वाण** ।

द्वितीया कामधातावलब्धविहीनचक्षुः ।

---

गत *समन्वागमं प्रतिलभते*ऽन्तराभवप्रतिसन्धाने कुशलक्लिष्टेन अतीतानागतेन, न तु चक्षुर्धातुनाऽसमन्वागत. समन्वागमं प्रतिलभते, प्रतिलब्धवत्समन्वा-गतत्वात् ।

*स्यादुभयेनेति* विस्तर । *आरूप्यधातुच्युतः* उभाभ्या चक्षुर्धातुचक्षुर्विज्ञान-धातुभ्या पूर्वमसमन्वागत अन्तराभवप्रतिसन्ध्यवस्थायामेव चक्षुर्धातुनोत्पादा-भिमुखेन चक्षुर्विज्ञानधातुना च कुशलक्लिष्टेनातीतानागतेन समन्वागमं प्रति-लभते । अविकलेन्द्रिया ह्यन्तराभविका: ।

*नोभयेन एतानाकारान् स्थापयित्वेति* । कोटित्रयोक्तान् धर्मप्रकारान् त्यक्त्वे-त्यर्थं । आरूप्यधातुच्युतस्तत्रैवोत्पद्यमानो नोभाभ्यामसमन्वागत. समन्वागमं प्रतिलभते । असमन्वागतत्वं तत्रास्ति, न तु समन्वागमप्रतिलम्भ. । द्वितीया-दिध्यानोपपन्नश्च चक्षुर्विज्ञानमसम्मुखीकुर्वाणो नोभाभ्यामसमन्वागत. समन्वा-गमं प्रतिलभते । कथम् ? चक्षुर्धातुना यद्यपि समन्वागमं प्रतिलभते न तु चक्षु-र्धातुना असावसमन्वागत , चक्षुर्विज्ञानधातुना यद्यप्यसावसमन्वागतो न तु समन्वागमं प्रतिलभते, तदसम्मुखीकुर्वाणत्वात् । चक्षुष्मान् कामधातुस्थ सकृन्मरणादन्तराभवप्रतिसन्धौ नोभाभ्यामसमन्वागत. समन्वागमं प्रतिलभते; ताभ्या समन्वागतत्वात् । *यश्च चक्षुर्धातुना समन्वागतश्चक्षुर्विज्ञानधातुनापि स* इति । "पृथग्लाभ: सहापि च" इत्यनेनैव सूत्रेणेदमपि चतु.कोटिकं वर्तयति । लाभो हि प्रतिलम्भ. प्राप्तिमात्रेऽपि विवक्षया कदाचिद्भवति । प्रथमे चतु.-कोटिके प्रतिलम्भोऽधिकृत:, द्वितीये तु प्राप्तिमात्रम् ।

*प्रथमा कोटिरिति* । विस्तर —*द्वितीयादिध्यानोपपन्नो*ऽवश्यं चक्षुर्धातुना समन्वागत ; इन्द्रियैरविकलत्वात् । चक्षुर्विज्ञानधातुनात्रासमन्वागत; तत्रा-भावात् । प्रथमध्यानभूमिकस्य चक्षुर्विज्ञानस्यासम्मुखीक्रियमाणत्वात् ।

*कामधातावलब्धविहीनचक्षुरिति* । अलब्धं विहीनं वा चक्षुरस्यालब्धविहीन-चक्षु: । अलब्धचक्षु. कललाद्यवस्थ, विहीनचक्षु. विनष्टचक्षु । स कामधातौ

तृतीया कामधातौ लब्धाविहीनचक्षुः प्रथमध्यानोपपन्नश्च[1] द्वितीयादिध्यानोपपन्नश्च पश्यन् ।

चतुर्थी एतानाकारान् स्थापयित्वा ।

एवं चक्षुर्धातुरूपधात्वोश्चक्षुर्विज्ञानरूपधात्वोश्च प्रतिलम्भसमन्वागमौ यथायोगमभ्यूहितव्यौ । एतस्य प्रसङ्गस्य समुच्चयार्थश्चशब्दः सहापि च इति ॥ ३८ ॥

---

चक्षुर्विज्ञानधातुनान्तराभवप्रतिसन्धौ प्रतिलब्धेन कुशलक्लिष्टेन समन्वागत. । न चक्षुर्धातुना, तस्याभावात् ।

*लब्धाविहीन*चक्षुरिति । लब्धमविहीनं चक्षुरस्य लब्धाविहीनचक्षु । स कामधातौ चक्षुर्धातुना चक्षुर्विज्ञानधातुना च । तथा पूर्वं प्रतिलब्धेनेदानीं त्वनेन चाव्याकृतेन समन्वागत । *प्रथमध्यानोपपन्नश्च* तेनोभयेन समन्वागत, स्वभूमिकस्य तस्यावश्यमस्तित्वात्, परभूमिकस्य चक्षुष सम्भवात् । *द्वितीयादिध्यानोपपन्नश्च पश्यन् ।* प्रथमध्यानभूमिकं चक्षुर्विज्ञानं सम्मुखीकुर्वाण इत्यर्थ. । स चाप्यवश्यमनेनोभयेन समन्वागत ।

*चतुर्थ्येतानाकारान् स्थापयित्वेति* । आरूप्योपपन्न ।

*यथायोगमभ्यूहितव्याविति* । यश्चक्षुर्धातुनाऽसमन्वागत समन्वागमं प्रतिलभते रूपधातुनापि स, यो वा रूपधातुना चक्षुर्धातुनापि स. ? चक्षुर्धातुरूपधात्वोः स्यात् पृथग्लाभः सहापि च । पृथक् तावत् स्याच्चक्षुर्धातुना समन्वागतो न रूपधातुना । कामधातौ क्रमेण चक्षुरिन्द्रियं प्रतिलभमान । 'स्याद् रूपधातुना न चक्षुर्धातुना' इति इयं कोटिर्नास्ति । सहापि स्यात् । उभयेनासमन्वागतः समन्वागमं प्रतिलभते, आरूप्यधातोश्च्युतो रूपधातौ कामधातौ चोपपद्यमान । नोभयेनेतानाकारान् स्थापयित्वा । यश्चक्षुर्धातुना समन्वागतो रूपधातुनापि स—इति पूर्वपादक. । यस्तावच्चक्षुर्धातुना समन्वागतो रूपधातुनापि सः । स्याद् रूपधातुना न चक्षुर्धातुना कललाद्यवस्थास्वलब्धचक्षुर्लब्धविहीनचक्षुश्च । यश्चक्षुर्विज्ञानधातुनाऽसमन्वागत. समन्वागमं प्रतिलभते रूपधातुनापि सः ? यो वा रूपधातुनाऽसमन्वागत. समन्वागमं प्रतिलभते चक्षुर्विज्ञानधातुनापि सः ? तथैव तयोः स्यात्पृथग्लाभ सहापि च । पृथक् तावत्—स्याच्चक्षुर्विज्ञानधातुना न रूपधातुना, द्वितीयादिध्यानोपपन्नश्चक्षुर्विज्ञानं सम्मुखीकुर्वाणः । स्याद्रूपधातुना न चक्षुर्विज्ञानधातुना, आरूप्यधातोश्च्युतो

---

१. प्रथमध्यानोपपन्नो—का० ।

कत्याध्यात्मिका धातवः ? कति बाह्याः ?

**द्वादशाध्यात्मिकाः,**

कतमे द्वादश ?

**हित्वा रूपादीन्,**

षड् विज्ञानानि षडाश्रयाः—इत्येते द्वादश धातव आध्यात्मिकाः। रूपादयस्तु षड् विषयधातवो बाह्याः।

आत्मन्यसति कथमाध्यात्मिकम् ? बाह्यं वा ? अहङ्कारसन्निश्रयत्वाच्चित्तम् 'आत्मा' इत्युपचर्यते।

"आत्मना हि सुदान्तेन स्वर्गं प्राप्नोति पण्डित" ( )

इत्युक्तम्। चित्तस्य चान्यत्र दमनमुक्तं भगवता—

"चित्तस्य दमनं साधु चित्तं दान्तं सुखावहम्" इति।

---

द्वितीयादिषु ध्यानेषूपपद्यमान.। सहापि स्यात्–उभयेनासमन्वागत समन्वागमं प्रतिलभते, आरूप्यधातुच्युत. कामधातौ ब्रह्मलोके चोत्पद्यमानः। नोभयेन एतानाकारान् स्थापयित्वा—यश्चक्षुर्विज्ञानधातुना समन्वागतो रूपधातुनापि सः। यो वा रूपधातुना चक्षुर्विज्ञानधातुनापि स' पूर्वपादक। यस्तावच्चक्षुर्विज्ञानधातुना समन्वागतो रूपधातुनापि स। स्याद् रूपधातुना न चक्षुर्विज्ञानधातुनापि। द्वितीयादिध्यानोपपन्नश्चक्षुर्विज्ञानमसंमुखीकुर्वाण.।

यथा चेयं चक्षुर्विज्ञानरूपधातूना प्रतिलम्भसमन्वागमचिन्ता, तथा श्रोत्रविज्ञानशब्दधात्वादीनामपि प्रतिलम्भसमन्वागमचिन्ता कर्तव्या—श्रोत्रविज्ञानधात्वोः स्यात्पृथग्लाभ. सहापि चेत्यादि ॥ ३८ ॥

*"द्वादशाध्यात्मिकाः"* इति। उभयावधारणम्। अवधारणादेव चान्ये *रूपादयो बाह्या* इति सिद्धम्। आत्मनि अधि अध्यात्मम्। अधि आत्मानमिति वा अध्यात्मम्। अध्यात्ममेवाध्यात्मिका। अध्यात्मं वा भवा आध्यात्मिका.। *अहङ्कारसन्निश्रयत्वाच्चित्तमात्मेत्युपचर्यत* इति। "अहङ्कारसन्निश्रय आत्मा' इत्यात्मवादिनः सङ्कल्पयन्ति। चित्तं चाहङ्कारनिश्रय इति 'आत्मा' अप्युपचर्यते। कथम् ? इत्याह—*आत्मना हि सुदान्तेन स्वर्गं प्राप्नोति पण्डितः* ( ) इत्युक्तं गाथायाम्। कथं पुनर्गम्यते—*'चित्तमात्मशब्देनोच्यते'* इति ? तत आह—*चित्तस्य चान्यत्र दमनमुक्तं भगवतेति*। अन्यत्र गाथायामुक्तम्—

अत आत्मभूतस्य चित्तस्याश्रयभावेन प्रत्यासन्नत्वात् चक्षुरादीनामाध्यात्मिकत्वम्, रूपादीनां विषयभावाद् बाह्यत्वम्।

एवं तर्हि षड् विज्ञानधातव आध्यात्मिका न प्राप्नुवन्ति, न ह्येते मनोधातुत्वमप्राप्ताश्चित्तस्याश्रयीभवन्ति ? यदा तदा त एव ते भवन्तीति लक्षणं नातिवर्त्तन्ते। अन्यथा हि मनोधातुरतीत एव स्यान्नानागतप्रत्युत्पन्नः। इष्यन्ते चाष्टादश धातवस्त्र्यध्विकाः।

यदि वानागतप्रत्युत्पन्नस्य[1] विज्ञानस्य मनोधातुलक्षणं न स्यात्, अतीतेऽप्यध्वनि मनोधातुर्न व्यवस्थाप्येत। नहि लक्षणस्याध्वसु व्यभिचारोऽस्तीति ॥

कति धातवः सभागाः ? कति तत्सभागाः ? एकान्तेन तावत्—

---

"चित्तस्य दमनं साधु चित्तं दान्तं सुखावहम्" (ध० प० ३६) इति। तेनायमर्थः—आत्मनि चित्तीकार्ये। आत्मानं वा चित्तमधिकृत्य ये धर्माः *प्रत्यासन्नभावादाश्रयभावेन* वर्तन्ते त *आध्यात्मिकाः*। ये तु *विषयभावेन वर्तन्ते* ते *बाह्या* इति। कः पुनः प्रत्यासन्नभाव, येन विज्ञानं तद्विकारमनुविधत्ते। चक्षुरादिष्वेव हि विज्ञानं लक्ष्यते, न रूपादिष्विति। तथा हि चित्तमिन्द्रियसम्बद्धे शरीरदेशे परिच्छिद्यते, न विषयदेश इति।

*एवं तर्हि षड्विज्ञानधातव* इति। विस्तरः—इह पञ्च तावद्विज्ञानधातवो वर्तमाना एव गृह्यन्ते; इन्द्रियविषयसमानकालत्वात। वर्तमानविषया हि पञ्च विज्ञानकायाः। मनोविज्ञानधातुरपि वर्तमान एवेह व्यवस्थाप्यते; यस्मान्मनोधातुरस्याश्रयोऽनन्तरातीतो व्यवस्थाप्यते। अथ भेदादेव हि मनोधातुमनोविज्ञानधात्वोः पृथव्यवस्थानम्। तस्मात्त *आध्यात्मिका न प्राप्नुवन्ति*। *न ह्येते मनोधातुत्वमप्राप्ता* अतीतत्वमप्राप्ता. *चित्तस्याश्रयीभवन्ति यदा तदा त एव ते भवन्तीति लक्षणं नातिवर्तन्त* इति। किमनेन वाक्येन साधितम् ? इदमनेन साधितम्—वर्तमानानामप्येषामाश्रयभावो भविष्यतीति, भविष्यदाश्रयभावेनाध्यात्मिकत्वं भवतीति।

*यदि वानागतप्रत्युत्पन्नस्येति* विस्तर। अतीतेऽध्वनि यन्मनोधातुलक्षणं तदनागतप्रत्युत्पन्नयोरप्यध्वनोरस्त्येवेत्यभिप्रायः। *न हि लक्षणस्याध्वसु व्यभिचारोऽस्ति*। न हि स्वभावपरित्यागोऽस्तीत्यर्थः।

---

1. चा०—का०।

**धर्मसंज्ञकः ।**

**सभागः,**

यो हि विषयो यस्य विज्ञानस्य नियतः, यदि तत्र तद्विज्ञानमुत्पन्नं भवत्युत्पत्तिधर्मि वा, एवं स विषय सभाग इत्युच्यते। न च सोऽस्ति कश्चिद्धर्मधातुर्यत्र नानन्तं मनोविज्ञानमुत्पन्नम्, उत्पत्स्यते वा । तथा हि सर्वार्यपुद्गलानामिदं चित्तमवश्यमुत्पद्यते—"सर्वधर्मा अनात्मानः" इति ।

तस्य च स्वभावसहभूनिर्मुक्ताः सर्वधर्मा आलम्बनम्, स पुनश्चित्तक्षणोऽन्यस्य चित्तक्षणस्यालम्बनम्—इति द्वयोः क्षणयोः सर्वधर्मा आलम्बनं भवन्ति । तस्माद् धर्मधातुर्नित्यं सभागः ।

**तत्सभागाश्च शेषाः,**

सभागश्चेति चशब्दः । कोऽयं तत्सभागो नाम ?

---

*"धर्मसंज्ञकः सभागः"* इति । धर्मसंज्ञकः सभाग एवेत्यवधार्यते । *यो हि विषयो यस्य विज्ञानस्य नियत* इति । तद्यथा चक्षुर्विज्ञानस्य रूपं नियतो विषयः, यावन्मनोविज्ञानस्य धर्मा । *यदि तत्र तच्चक्षुर्विज्ञानमुत्पन्नमुत्पत्तिधर्मि वा* । यावद् यदि तत्र मनोविज्ञानमुत्पन्नम्, उत्पत्तिधर्मि वा । *स विषयः सभाग इत्युच्यते* ।

*तस्य च स्वभावसहभूनिर्मुक्ता* इति । स्वभावेन सहभूभिश्च निर्मुक्ताः स्वभावसहभूनिर्मुक्ताः । *सर्वधर्मास्तस्य* विज्ञानस्यालम्बनम्, न स्वभाव., स्वात्मनि वृत्तिविरोधात् । न हि तदेवाङ्गुल्यग्रं तेनैवाङ्गुल्यग्रेण स्पृश्यते, न सैवासिधारा तयैवासिधारया छिद्यते । न सहभुवः सम्प्रयुक्ता विप्रयुक्ता वा, अतिसन्निकृष्टत्वात् । न ह्यक्षिस्थमञ्जनं तेन गृह्यते । *स पुनश्चित्तक्षणोऽन्यस्य चित्तक्षणस्यालम्बन*मिति । ये पूर्वस्मिन् क्षणे स्वभावसहभुवो धर्मा नालम्बिता अभूवंस्तेऽप्यालम्बिता इति *द्वयोः क्षणयोः सर्वधर्मा आलम्बनं भवन्ति* । *तस्माद्धर्मधातुर्नित्यं सभागः* । धर्मधातुर्हि नियतो मनस एव ।

*"तत्सभागाश्च शेषाः"* । चशब्देन सभागाश्चेति शेषा एव सभागतत्सभागा इत्यवधार्यते । ननु च धर्मधातुरेव सभाग एवेत्यवधारणे शेषा न सभागा इति सभागतत्सभागा. सेत्स्यन्ति ? न सेत्स्यन्ति । यद्यपि न सभागा एव हि भवेयुः, तत्सभागा एवेति तु सम्भवेयु । तन्निवृत्त्यर्थमिदमारभ्यते—सभागतत्सभागा एव शेषा., न तु सभागा एव, नापि तत्सभागा एवेति ।

**यो न स्वकर्मकृत् ॥ ३९ ॥**

उक्तं भवति—यः **स्वकर्मकृत्** स सभाग इति। तत्र येन चक्षुषा रूपाण्यपश्यत् पश्यति द्रक्ष्यति वा तदुच्यते—सभागं चक्षुः। एवं यावन्मनः स्वेन विषयकारित्रेण वक्तव्यम्।

तत्सभागं चक्षुः **काश्मीराणां** चतुर्विधम्—यद् दृष्ट्वा रूपाणि निरुद्धम्, निरुध्यते, निरोत्स्यते वा, यच्चानुत्पत्तिधर्मि।

**पाश्चात्यानां** पुनः पञ्चविधम्—तदेवानुत्पत्तिधर्मि द्विधा कृत्वा विज्ञानसमायुक्तं च, असमायुक्तं च। एवं यावत् कायो वेदितव्यः। मनस्त्वनुत्पत्तिधर्मकमेव तत्सभागम्।

रूपाणि च यानि चक्षुषाऽपश्यत्, पश्यति, द्रक्ष्यति वा, तानि सभागानि। तत्सभागानि चतुर्विधानि—यान्यदृष्टान्येव निरुद्धानि, निरुध्यन्ते, निरोत्स्यन्ते वा, यानि चानुत्पत्तिधर्मीणि। एवं यावत् स्प्रष्टव्यानि। स्वेन्द्रियकारित्रेण सभाग-तत्सभागानि वेदितव्यानि। यदेकस्य चक्षुः सभागं तत् सर्वेषाम्। एवं तत्सभागमपि। तथा यावन्मनः। रूपं तु यः पश्यति तस्य सभागं यो न पश्यति तस्य तत्सभागम्। किं कारणम्? अस्ति हि सम्भवो यद् रूपमेकः पश्यति तद्बहवोऽपि पश्येयुः, यथा—चन्द्रनटमल्लप्रेक्षासु। नतु सम्भवोऽस्ति यदेकेन चक्षुषा द्वौ पश्येताम्। अतोऽस्यासाधारणत्वादेकसन्तानवशेन व्यवस्थानम्। रूपस्य तु

---

"*यो न स्वकर्मकृत्*" स तत्सभाग इति सम्बन्धनीयम्, 'तत्सभागाश्च' इत्यनन्तरोक्तत्वात्। उक्तं *भवति—यः स्वकर्मकृत् स सभाग* इति। अस्वकर्मकृदेव तत्सभाग, तत्सभाग एव चास्वकर्मकृदित्यवधारणेऽर्थापत्त्या स्वकर्मकृत्सभाग इति। *रूपाण्यपश्यदि*ति। अद्राक्षीदिति वक्तव्यम्। एवं ह्यद्यतनातीतं ह्यस्तनातीतं च परिगृहीतं भवति, अन्यथा ह्यव्यापि लक्षणं स्यात्। अथैवमेव पाठ.। उदाहरणमात्रं तद् द्रष्टव्यम्। अद्यतनातीतमपि वक्तव्यम्। *एवं यावन्मनः स्वेन विषयकारित्रेण वक्तव्यमि*ति। स्वेन विषयपुरुषकारेण वक्तव्यम्। कथमिति? येन श्रोत्रेण शब्दानशृणोत्, शृणोति, श्रोष्यति वा, तदुच्यते सभागं श्रोत्रमिति सर्वम्। *विज्ञानसमायुक्तमसमायुक्तं* चेति विज्ञानसम्बद्धम्, असम्बद्धं चेत्यर्थः। *यदेकस्य चक्षुः सभागं तत्सर्वेषाम्*। किम्? सभागमिति वर्तते। *एवं तत्सभागमपी*ति। यदेकस्य चक्षुस्तत्सभागं तत्सर्वेषां तत्सभागमित्यर्थः।

साधारणत्वाद् अनेकसन्तानवशेन। यथा रूपम्, एवं शब्दगन्धरसस्प्रष्टव्यधातवो वेदितव्याः।

भवतु शब्द एवम्, गन्धादयस्तु य एकेन गृह्यन्ते न तेऽन्येन प्राप्तग्रहणादित्यसाधारणत्वादेषां चक्षुरादिवदतिदेशो न्याय्यः? अस्त्येतदेवम्, अपि त्वेषामपि सम्भवं प्रति साधारणत्वम्। अस्ति ह्येष सम्भवो य एव गन्धादय एकस्य घ्राणादिविज्ञानमुत्पादयेयुस्त एवान्येषामपि, न त्वेवं चक्षुरादयः। तस्मादेषां रूपादिवदतिदेशः।

चक्षुर्विज्ञानादीना सभागतत्सभागत्वमुत्पत्त्यनुत्पत्तिधर्मित्वाद्, यथा मनोधातोः।

सभाग इति कोऽर्थः? इन्द्रियविषयविज्ञानानामन्योन्यभजनम्।

कारित्रभजनं वा भागः, स एषामस्तीति सभागः।

---

*प्राप्तग्रहणादिति* गन्धादयो ये देवदत्तेन घ्राणादीन्द्रियप्राप्ता गृह्यन्ते न ते यज्ञदत्तेन गृह्यन्ते, स्वघ्राणादिकप्रविष्टत्वात्। *इत्यसाधारणत्वादेषां चक्षुरादिवदतिदेशो न्याय्यः*। य एकस्य गन्धः सभागः स सर्वेषाम्। एवं तत्सभागोऽपीति वक्तव्यम्। यथा रूपमेवं गन्धादय इति। *अस्ति ह्येष सम्भवः, य एव गन्धादय एकस्य घ्राणादिविज्ञानमुत्पादयेयुस्त एवान्येषामपीति*। यदि ते देवदत्तघ्राणादीन्द्रियप्राप्ता भवेयुर्देवदत्तस्य विज्ञानमुत्पादयेयुः। अथ यज्ञदत्तघ्राणादीन्द्रियप्राप्ता यज्ञदत्तस्य विज्ञानमुत्पादयेयुरित्यर्थः। अथ वा त एवान्येषामपीति तत्रान्तर्गतसूक्ष्मक्रिमिप्रभृतीनामपि विज्ञानमुत्पादयेयुः। न तस्यैव देवदत्तस्य यस्य घ्राणादीन्द्रियप्राप्तास्ते गन्धादय इति।

*इन्द्रियविषयविज्ञानानामन्योन्यभजनमिति*। आश्रयविषयाश्रयिभावेनान्योन्याभिमुख्येन प्रवृत्तिः। तथाहि—इन्द्रियधातवो विज्ञानधातूनाश्रयभावेन यथायोगं भजन्ते। सेवन्त इत्यर्थः। विषयधातूंश्च विषयिभावेन। तथा विषयधातवः स्वेन्द्रियधातून् विषयभावेन भजन्ते, विज्ञानधातूंस्तु विषयभावेनालम्बनभावेन वा भजन्ते। तथा विज्ञानधातवः स्वेन्द्रियधातूनामाश्रयिभावेन भजन्ते, विषयधातूंश्च विषयिभावेनालम्बकभावेन वा भजन्ते इति। अन्योन्यभजनं भागः। भावे घञ्।

*कारित्रभजनं वा भागः*। कारित्रं चक्षुरादीनां दर्शनादि, विज्ञानधातूनां विज्ञातृत्वम्, विषयधातूनां तद्विषयालम्बनभावः। तस्य कारित्रस्य भजनं

स्पर्शसमानकार्यत्वाद् वा ।

ये पुनरसभागाः, तेषां[1] सभागानां जातिसामान्येन सभागत्वात् तत्सभागाः ॥ ३९ ॥

कति धातवो दर्शनहेयाः? कति भावनाहेयाः? कत्यहेयाः? रूपिणस्तावत्—

**दश भावनया हेयाः, पञ्च च**

विज्ञानधातवः ।

**अन्त्यास्त्रयस्त्रिधा ।**

मनोधातुः, धर्मधातुः, मनोविज्ञानधातुश्च—एते त्रयो धातवः पाठानुपूर्व्याऽन्त्यास्त्रिप्रकाराः ।

---

कारित्रभजनम् । स एषामस्तीत्यर्थः । प्रदर्शनमात्रमेतत् । विग्रहस्त्वेवं कर्तव्यः—सह भागेन वर्तन्ते सभागा इति । समानो वा भाग एषां त इमे सभागाः । समानार्थस्य सहशब्दस्य स-भाव आदिष्टः[2] ।

*स्पर्शसमानकार्यत्वाद्वा* । किम्? सभागा इति प्रकृतम् । अत्र कर्मणि घञ् । भज्यत इति भागः । विग्रहस्तु पूर्ववत् । स्पर्शश्चैतस्त्रिक एषामिन्द्रियविषयविज्ञानानां समानं कार्यम् । "चक्षुः प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानम् । त्रयाणां सन्निपातः स्पर्शः" ( ) इत्यादिवचनात् ।

*ये पुनरसभागा* इति । विस्तरः—ये पुनरन्ये चक्षुरादय इत्थमसभागास्तेषां *सभागानामुक्तलक्षणानां सभागाः* सदृशास्ते *तत्सभागाः* । तेषां तैर्वा सभागास्ते तत्सभागाः । तुल्यार्थो ह्यत्र सभागशब्दो गृह्यते ॥ ३९ ॥

*दर्शनहेया* इति । दर्शनं प्रथमतः सत्यदर्शनम् । अनास्रवं पञ्चदशचित्तक्षणसंगृहीतम् । *भावना* तदेव पुनः पुनर्दर्शनम् । लौकिकं वा समाहितं ज्ञानं भावना ।

*"दश भावनया हेयाः पञ्च च"* इति । रूपिणो धातवो दश, पञ्च च तद्विज्ञानधातव इति ।

कथं पुनरेतद्गम्यते—एत एव त इति? *"अन्त्यास्त्रयस्त्रिधा"* इति वचनात् । अन्त्यत्रयादन्ये पञ्चदश धातव एव त उच्यन्त इति । *ते भावनाहेया* एवेत्यवधार्यन्ते । *त्रिप्रकारा* इति । दर्शनहेयाः, भावनाहेयाः, अहेयाश्चेत्यर्थः । एत एव

---

१ ये तेषां०—का० ।

२. 'समानस्य छन्दस्य०' (६.३.८४ पा० सू०) इत्यादिनेत्यर्थः ।

अष्टाशीत्यनुशयाः तत्सहभुवस्तत्प्राप्तयश्च सानुचरा दर्शनहेयाः । शेषाः सास्रवा भावनाहेयाः । अनास्रवा अहेयाः ।

ननु चान्यदपि दर्शनप्रहातव्यमस्ति पृथग्जनत्वमापायिकं च कायवाक्कर्म ! आर्यमार्गविरोधित्वात् न तद् दर्शनप्रहातव्यम् । एष हि संक्षेपः ।

**न दृष्टिहेयमक्लिष्टं न रूपं नाप्यषष्ठजम् ॥ ४० ॥**

**नास्ति किञ्चिदक्लिष्टं दर्शनप्रहातव्यम् नापि रूपम् ।** अक्लिष्टाव्याकृतं च पृथग्जनत्वम्; समुच्छिन्नकुशलमूलवीतरागाणामपि तत्समन्वागमाद् । रूपं

---

त्रिधा । *अष्टाशीत्यनुशयास्तत्सहभुव* इति । धातुप्रकाराकारभिन्नाः ,सत्कायदृष्ट्यादयोऽनुशया. । तत्सहभुवो विज्ञानवेदनादय. सम्प्रयुक्ता. । असम्प्रयुक्तानि च तल्लक्षणानुलक्षणानि । *तत्प्राप्तयश्च सानुचरा* इति । तच्छब्देनानुशयादय· सम्बध्यन्ते । तेषामनुशयाना तत्सहभुवा च प्राप्तयस्तत्प्राप्तयो यद्यप्यनुशयसहभुवो भवन्ति, न तु सर्वाः । काश्चिद्धि प्राप्तयोऽनुशयादिसहभुवो भवन्ति या. सहजा. । काश्चित् तु पूर्वं पश्चाच्च तेभ्यो भवन्ति । अत पृथक् प्राप्तिग्रहणम् । सानुचरा इति ग्रहणेनानुप्राप्तयस्तल्लक्षणानि च संगृह्यन्ते । *शेषाः सास्रवा भावनाहेया* इति । एत एव त्रयोऽन्त्या धातवो ये शेषा दर्शनहेयेभ्योऽन्ये सास्रवास्ते भावनाहेया. । के पुनस्ते ? दशानुशयास्तत्सहभुवस्तत्प्राप्तयश्च सानुचरा कुशलसास्रवाः, अनिवृताव्याकृताश्च संस्कारा । अविज्ञप्तिरूपं च सास्रवं सानुचरम् । *अनास्रवा अहेया* इति । मार्गसत्यासंस्कृतस्वभावाः ।

*ननु चान्यदपीति* । विस्तर.—*पृथग्जनत्वमनिवृताव्याकृतसंस्कारस्वभावत्वाद् भावनाहेयमध्यगतम्* । *अपायसंवर्तनीयं च कायवाक्कर्म* रूपस्वभावत्वाद् भावनाहेयमुक्तमिति । अतश्चोदयन्ति *वात्सीपुत्रीयाः*—*आर्यमार्गविरोधित्वादिति* । पृथग्जनत्वमार्यमार्गोत्पादे न भवति । नियते चापायिके कर्मणि सत्यार्यमार्गो नोत्पद्यते । आर्यमार्गोत्पादे च सत्यापायिकं कर्म नोत्पद्यते । तस्मात् सत्कायदृष्ट्यादिवत् तदुभयं दर्शनहेयमिति वर्णयन्ति । तत्प्रतिषेधार्थमुक्तमप्येतद*भिसंक्षेपेण* ।

सुखप्रतिपत्त्यर्थं पुनरुच्यते—"*न दृष्टिहेयमक्लिष्टं न रूपं नाप्यषष्ठजम्* ।" दृष्टिः=दर्शनम् । अक्लिष्टमनिवृताव्याकृतं कुशलं वा न दर्शनहेयम् । रूपं तु क्लिष्टमपि न दर्शनहेयम् । अषष्ठजं *पञ्चेन्द्रियजं* पञ्चविज्ञानम्, तदरूपं क्लिष्टमपि सन्न दर्शनहेयम् । अतोऽन्यत्तु दर्शनहेयं सम्भवति यथोक्तम् ।

*अक्लिष्टाव्याकृतं च पृथग्जनत्वम् । समुच्छिन्नकुशलमूलवीतरागाणामपि तत्समन्वागमादिति* । समुच्छिन्नकुशलमूलाः कुशलैर्धर्मैरसमन्वागता इष्टाः । पृथग्-

कायवाक्कर्म । तस्मान्न दर्शनप्रहातव्यम् । किं[1] पुनः कारणम्[1] ? सत्येष्वविप्रतिपत्तेः, अनालम्बकत्वाच्च[2] । दुःखे धर्मज्ञानक्षान्तौ पृथग्जनत्वप्रसङ्गाच्च ।

षष्ठमुच्यते मनआयतनम्, तस्मादन्यत्र जातमषष्ठजं पञ्चेन्द्रियजं च यत् तदपि नास्ति दर्शनप्रहातव्यम् ॥ ४० ॥

---

जनत्वेन तु समन्वागता. । यस्मात्ते पृथग्जना इष्यन्ते, तस्मान्न कुशलं पृथग्जनत्वम् । क्लिष्टमपि तन्न भवति, वीतरागाणामपि तेन समन्वागमात् । क्लिष्टस्य हि वस्तुन. स्वभावप्रहाणमिष्यते । प्राप्तिच्छेद प्रहाणमित्यर्थः । तद्यदि पृथग्जनत्वं क्लिष्टं स्यात्, लौकिकवीतरागाणा तस्य प्राप्तिच्छेद इति तेनासमन्वागम स्यात्, इष्यते च तेषा तेन समन्वागम । तथा हि ते लौकिकवीतरागा पृथग्जना एवेष्यन्ते । अक्लिष्टाव्याकृतत्वैकत्वेऽदोष । छन्दरागप्रहाणं ह्यक्लिष्टस्येष्यते । तदालम्बनक्लेशप्राप्तिच्छेद इत्यर्थः । न तु तदात्मीयप्राप्तिच्छेद इष्यते । तथा ह्युक्तं भगवता—"यो भिक्षवो रूपे छन्दरागस्तं प्रजहीत । एवं वस्तद्रूपं प्रहीणं भवति" ( ) इति विस्तर. । तस्मादक्लिष्टाव्याकृतं पृथग्जनत्वं तेषा प्रहीणमपि चक्षुरादिवत् समुदाचरति । अतस्तेन समन्वागमो भवति ।

*किं पुनः कारणम् ?* अक्लिष्टाव्याकृतत्वात् पृथग्जनत्वं च दर्शनप्रहातव्यम् । रूपत्वाच्च कायवाक्कर्म । इत्याह—*सत्येष्वविप्रतिपत्तेः* । अक्लेशदुष्टत्वात् पृथग्जनत्वं न दु.खादिषु सत्येषु विप्रतिपद्यते । न विपरीतरूपेण प्रवर्तत इत्यर्थ । *अनालम्बकत्वाच्च* । कायवाक्कर्माप्यनालम्बकत्वादेव न विप्रतिपद्यते । तस्मात् तदुभयं न दर्शनहेयम् । अयं च 'सत्येष्वविप्रतिपत्ते' इति हेतुरषष्ठजेऽप्यनुवर्तयितव्यः । *दुःखे धर्मज्ञानक्षान्तौ पृथग्जनत्वप्रसङ्गाच्चेति* । अयमुपचयहेतुः । पृथग्जनत्वस्यैव दर्शनहेयत्वनिवृत्त्यर्थमुच्यते, कायवाक्कर्मणोऽनभिसम्बन्धात् । दु:खे धर्मज्ञानक्षान्तौ पृथग्जनत्वप्राप्तिश्छिद्यते, न तु छिन्ना, तत्प्रहेयक्लेशप्राप्तिवत्; "निरुध्यमानो मार्गस्तु प्रजहाति तदावृतिम्" ( अभि० को० ६ ८१ ) इति वचनात् । दु खे धर्मज्ञाने तु तत्प्राप्तिश्छिन्ना । तेन तत्प्राप्तिसद्भावाद् दु खे धर्मज्ञानक्षान्त्यवस्थाया स पुद्गल पृथग्जन स्यात् । न चासौ तस्यामवस्थाया पृथग्जन इति शक्यते व्यवस्थापयितुम्, अधिगतार्यमार्गत्वात् । तथा हि—"पृथग्जनत्वं कतमत् ? आर्यधर्माणामलाभ " इति पृथग्जनत्वलक्षणम् । स चार्यधर्माणा लाभेनालाभो व्यावर्त्यते । तस्मादार्य एवासाविति ।

---

१—१. का० पुस्तके नास्ति । २. का० पुस्तके नास्ति ।

अष्टादशानां धातूनां कति दृष्टि: ? कति न दृष्टि: ?

**चक्षुश्च धर्मधातोश्च प्रदेशो दृष्टिः,**

कतमः सः ? इत्याह—

**अष्टधा ।**

पञ्च सत्कायदृष्ट्यादिका दृष्टयः, लौकिकी सम्यग् दृष्टिः, शैक्षी दृष्टिः, अशैक्षी दृष्टिः—इत्ययमष्टप्रकारो धर्मधातुर्दृष्टिः, अवशिष्टो न दृष्टिः ।

तत्र सत्कायदृष्ट्यादीनामनुशयनिर्देशे निर्देशः प्राप्तकालो भविष्यति ।

लौकिकी पुनः सम्यग्दृष्टिर्मनोविज्ञानसम्प्रयुक्ता कुशलसास्रवा प्रज्ञा । शैक्षस्यानास्रवा दृष्टि: शैक्षी, अशैक्षस्य अशैक्षी । समेघामेघरात्रिन्दिवरूपदर्शनवत् क्लिष्टाक्लिष्टलौकिकीशैक्ष्यशैक्षीभिर्दृष्टिभिर्धर्मदर्शनम् ।

---

इदं तावद्ब्रुवन्तो *वैभाषिकाः* प्रष्टव्याः—तत्पृथग्जनत्वं किं भावनामार्गप्रतिलम्भादेव प्रहीयते ? नेत्युच्यते । तत्पृथग्जनत्वं नवभौमिकम् । कामावचरं यावद् भावाग्रिकम् । तच्चाक्लिष्टम् । तेन प्रतिभूमिनवमक्लेशप्रकारप्रहाणावस्थाया प्रहीयते । सर्वं ह्यक्लिष्टं सास्रवं नवम एव विमुक्तिमार्गे प्रहीयते । यद्येवम्, अवीतरागावस्थायामार्यः पृथग्जनः स्यात् ? न, पृथग्जनत्वस्य विहीनत्वात् । दुःखे धर्मज्ञानक्षान्तेः प्रभृति हि तद्विहीनमेव, न तु प्रहीणम् । कः पुनर्विहानप्रहाणयोर्विशेष इति ? विहानं प्राप्तिछेदे व्यवस्थापितम्, प्रहाणं तु प्रतिपक्षलाभे व्यवस्थापितम् । तस्मात् प्राप्तिच्छेदात्तेन पृथग्जनत्वेनासमन्वागमात् तस्यामवस्थायामार्य एव भवति, न पृथग्जन इत्यदोष एष ॥ ४० ॥

"*चक्षुश्च धर्मधातोश्च प्रदेशो दृष्टिः*" इति । चक्षुरेव धर्मधातुप्रदेश एव च दृष्टिरित्यवधार्यते । *सत्कायदृष्ट्यादिका* इति । सत्कायदृष्टिः, अन्तग्राहदृष्टिः, मिथ्यादृष्टिः, दृष्टिपरामर्शः, शीलव्रतपरामर्शश्चेति ।

*शैक्षस्यानास्रवेति* । प्रज्ञेत्यधिकृतम् । *अशैक्षस्याशैक्षीति* । अशैक्षस्यानास्रवा प्रज्ञाऽशैक्षी । क्षयानुत्पादज्ञानवर्ज्येति वक्तव्यम् । वक्ष्यति हि—"क्षयानुत्पादधीर्न दृक्" ( अभि० को० ७१ ) इति । *समेघामेघेति* विस्तरेण यावत् *क्लिष्टाक्लिष्टलौकिकीशैक्ष्यशैक्षीभिर्दृष्टिभिर्धर्मदर्शनमिति* । लोके भवा लौकिकी । क्लिष्टा चाक्लिष्टा च क्लिष्टाक्लिष्टा, क्लिष्टाक्लिष्टा चासौ लौकिकी च क्लिष्टाक्लिष्टलौकिकी, क्लिष्टाक्लिष्टलौकिकी च शैक्षी चाशैक्षी च क्लिष्टाक्लिष्टलौकिकीशैक्ष्यशैक्ष्यः, ताभिर्धर्मदर्शनम् । कीदृशम् ? इत्याह—*समेघामेघरात्रिन्दिवरूपदर्शनवदिति* । यथा समेघानां रात्रौ रूपदर्शनम्, एवं क्लिष्टया लौकिक्या

अथ कस्माल्लौकिकी सम्यग्दृष्टिर्मनोविज्ञानसम्प्रयुक्तैवोच्यते ? यस्मात्—

**पञ्चविज्ञानसहजा धीर्न दृष्टिरतीरणात् ॥ ४१ ॥**

सन्तीरिका हि दृष्टिः, उपध्यानप्रवृत्तत्वात् । न चैवं **पञ्चविज्ञानसहजा प्रज्ञा;** तस्मादसौ **न दृष्टिः** । अत एव चान्यापि क्लिष्टाऽक्लिष्टा वा प्रज्ञा न दृष्टिः ॥

चक्षुरिदानीमसन्तीरकत्वे कथं दृष्टिः ? रूपालोचनार्थेन । यस्मात्—

**चक्षुः पश्यति रूपाणि,**

यदि **चक्षुः** पश्येद्, अन्यविज्ञानसमङ्गिनोऽपि पश्येत् । न वै सर्वं **चक्षुः पश्यति,** किं तर्हि ?

**सभागं,**

सविज्ञानकं यदा भवति तदा पश्यति, अन्यदा नेति ।

एवं तर्हि 'तदेव चक्षुराश्रितं विज्ञानं पश्यति' इत्यस्तु ?

**न तदाश्रितम् ।**

**विज्ञानं,**

पश्यतीति शक्यमविज्ञातुम् ।

---

सत्कायदृष्ट्यादिकया दृष्ट्या धर्मदर्शनम् । अव्यक्ततरमित्यर्थः । यथा तस्यामेव रात्रावमेघायां रूपदर्शनम्, एवमक्लिष्टया लौकिक्या दृष्ट्या धर्मदर्शनम् । अव्यक्तमित्यर्थः । यथा समेघे दिवसे रूपदर्शनम्, एवं शैक्ष्या दृष्ट्या धर्मदर्शनम् । व्यक्तम्, न त्वत्यर्थम् । यथा पुनरमेघे दिवसे रूपदर्शनम्, एवमशैक्ष्या दृष्ट्या धर्मदर्शनम् । अत्यर्थं व्यक्तमित्यर्थः ।

*"अतीरणात्"* इति । अयसन्तीरणात् । सन्तीरणं पुनर्विषयोपनिध्यानपूर्वकं निश्चयाकर्षणम् । *अत एव चान्यापीति* । विस्तर —अत एवासन्तीरणादन्यापि मानसी *क्लिष्टा* रागादिसम्प्रयुक्ता । *अक्लिष्टा वा* क्षयानुत्पादज्ञानानिवृताव्याकृता प्रज्ञा *न दृष्टिः । रूपालोचनार्थेनेति* । चक्षुर्न सन्तीरकत्वेन दृष्टिः, किं तर्हि ? रूपालोचनार्थेन । प्रज्ञा तु सन्तीरकत्वेनेति दर्शितं भवति ॥ ४१ ॥

*अन्यविज्ञानसमङ्गिन* इति । अन्यविज्ञानसम्मुखीभाविन पुद्गलस्यान्यविज्ञानव्यासक्तस्येत्यर्थः । *पश्येच्चक्षुरिन्द्रियम्,* विषयादिसान्निध्यात् । यस्य तु 'चक्षुर्विज्ञानं पश्यति' इति पक्षः, तस्य तद्विज्ञानासम्भवाददोषः ।

*तदेव चक्षुराश्रितं विज्ञानं पश्यतीत्यस्तीति* । दर्शनस्य तद्भावे भावात्, तदभावे चाभावात् ।

किं कारणम् ?

**दृश्यते रूपं न किलान्तरितं यतः ॥ ४२ ॥**

यस्मात् किल रूपं कुड्यादिव्यवहितं न दृश्यते ।

यदि हि विज्ञानं पश्येत्, तस्याप्रतिघत्वात् कुड्यादिषु प्रतिघातो नास्ति इत्यावृतमपि रूपं पश्येत्। नैव ह्यावृते चक्षुर्विज्ञानमुत्पद्यत इत्यनुत्पन्नं कथं द्रक्ष्यति !

किं खलु नोत्पद्यते ? यस्य तु चक्षुः पश्यति तस्य चक्षुषः सप्रतिघत्वाद् व्यवहिते वृत्त्यभाव इति विज्ञानस्याप्यनुत्पत्तिराश्रयेण[1] सहैकविषयप्रवृत्तत्वात्[1] युज्यते ।

किं नु वै चक्षुः प्राप्तविषयं कायेन्द्रियवत् यत आवृतं न पश्येत् ? सप्रति-

---

"*दृश्यते रूपं न किलान्तरितं यतः*" इति । किलशब्दः परमतौ । *तस्या प्रतिघत्वादिति* । विज्ञानममूर्तं कुड्यादीन्यतिक्रम्यापि पश्येत् । *विज्ञानवाद्याह*—*नैव ह्यावृते चक्षुर्विज्ञानमुत्पद्यत* इति । अनाभासगतत्वाद् विषयस्येत्यभिप्रायः । *किं खलु नोत्पद्यत* इति । अप्रतिघत्वात् कुड्यादीनि व्यतिभिद्य कुड्याद्यव्यवहित इव विषये विज्ञानमुत्पत्स्यत इति भावः । *यस्य त्विति* । यस्य मम *वैभाषिकस्य* पक्षः—*चक्षुः पश्यतीति*, *तस्य* मम *चक्षुषः सप्रतिघत्वाद् व्यवहिते कुड्यादिभिर्वृत्त्यभावः* । तस्य चक्षुष आलोचनवृत्त्यभावः ।

विज्ञानं तर्हि *वैभाषिकस्य* व्यवहितेऽपि प्राप्नोति—इति चोद्यमन्तर्नीतमाशङ्क्य स एव *वैभाषिकः* पुनराह—*विज्ञानस्याप्यनुत्पत्तिरिति* । यथैव चक्षुषो व्यवहिते वृत्त्यभावो युज्यते, विज्ञानस्याप्यनुत्पत्तिर्विज्ञानवृत्त्यभावः । *आश्रयेण सहैकविषयप्रवृत्तत्वाद् युज्यते* । य एव हि चक्षुषो व्यवहितोऽर्थो विषयः स्यात्, स एव विज्ञानस्येति युक्ता विज्ञानस्याप्यनुत्पत्तिः । तव तु *विज्ञानवादिनो*ऽप्रतिघत्वाद् विज्ञानस्य व्यवहिते विज्ञानमुत्पद्येत, न तूत्पद्यते । तस्मात् 'चक्षुः पश्यति न विज्ञानम्' इति सिद्धम् ।

एवं *विज्ञानवादिनि* प्रतिषिद्धे तत्पक्षमाचार्यो गृहीत्वाह—*किं नु वै चक्षुः प्राप्तविषयमिति* । विस्तरः—*यथा कायेन्द्रियं* प्राप्तविषयं कुड्यादिव्यवहितं विषयं न गृह्णाति, कुड्यादिप्रतिघातात् ततः परेण प्रवर्तितुमलभमानत्वात्, किमेवं चक्षुः प्राप्तविषयं कुड्यादिप्रतिघातेन प्रतिहतं सत् ततः परेण गन्तुमलभमानं तं कुड्यादिव्यवहितं विषयं न गृह्णातीति ? नैतद्युज्यते । तस्मात् सप्रतिघत्वा-

---

१-१. ०स्यानुत्पत्तिराश्रयेणैक०—का० ।

घत्वात् । काचाभ्रपटलस्फटिकाम्बुभिश्चान्तरितं कथं दृश्यते ? तस्मान्न सप्रतिघत्वाच्चक्षुष आवृतस्य रूपस्यादर्शनम्, किं तर्हि ? यत्रालोकस्याप्रतिबन्ध आवृते[1] रूपे, तत्रोपपद्यत एव चक्षुर्विज्ञानम् । यत्र तु प्रतिबन्धस्तत्र नोत्पद्यत इत्यनुत्पन्नत्वादावृतं नेक्ष्यते[2] ।

यत्तर्हि सूत्र उक्तम्—"चक्षुषा रूपाणि दृष्ट्वा" ( ) इति ? तेनाश्रयेणेत्ययमत्राभिसन्धिः । यथा "मनसा धर्मान् विज्ञाय" इत्याह, न हि[3] मनो धर्मान् विजानाति; अतीतत्वात् । किं तर्हि ? मनोविज्ञानम् ।

आश्रितकर्म वा आश्रयस्योपचर्यते, यथा 'मञ्चाः क्रोशन्ति' इति । यथा च

---

दावृतं चक्षुर्न पश्येदिति न वक्तव्यम् । *काचाभ्रपटलस्फटिकाम्बुभिश्चान्तरितं कथं दृश्यत* इति । काचेनाभ्रपटलेन स्फटिकेनाम्बुना चान्तरितं व्यवहितं रूपं कथं दृश्यते । सप्रतिघत्वाद्धि कुड्यादिव्यवहितवत् काचादिव्यवहितं *चक्षुर्न पश्येत्* । तच्च पश्यतीति सिद्धान्त । *यत्रालोकस्याप्रतिबन्ध* इति । आलोके हि सति विषय आभासगतो भवतीति विज्ञानोत्पत्तिसम्भव । एवं हि विज्ञानकारणं पठ्यते—चक्षुरिन्द्रियमनुपहतं भवति, विषय आभासगतो भवति, तज्जश्च मनस्कार प्रत्युपस्थितो भवतीत्यत *आवृते रूपे* काचादिभिस्तत्रोत्पद्यत *एव चक्षुर्विज्ञानम् । यत्र तु प्रतिबन्धो*ऽकाचादिस्वभावैः कुड्यादिभिस्तमस्विद्भिः, *(आ)वृते नोत्पद्यते* । किम् ? चक्षुर्विज्ञानमिति । *अनुत्पन्नत्वादावृत नेक्ष्यत* इति । यत् त्वया 'किं खलु नोत्पद्यते' इत्यनुत्पत्तौ कारणं पृष्टम्, इदं तत्कारणमिति ब्रूम ।

*यत्तर्हि सूत्र* उक्तमिति विस्तर. । *चक्षुषा रूपाणि दृष्ट्वा* न निमित्तग्राही भवति नानुव्यञ्जनग्राहीति विस्तर । यस्माच्चक्षु. पश्यति तस्मात् पुद्गलश्चक्षुषा पश्यतीत्यभिप्राय । *आचार्यः* प्राह—*तेनाश्रयेणेत्ययमत्राभिसन्धिः* । चक्षुराश्रितयेत्येवात्राभिसन्धि । चक्षुषा आश्रयेण विज्ञानेन दृष्ट्वेत्यर्थ । कथं ज्ञायते ? इत्याह—*यथा मनसा धर्मान् विज्ञायेति* । मनसा आश्रयेण विज्ञानेन विज्ञायेति भवति । *न* ह्यनन्तरातीतं *मनो धर्मान् विजानाति* । वर्तमानावस्थाया हि विज्ञानं कारित्रं करोति ।

*आश्रितकर्म वा आश्रयस्योपचर्यत* इति । आश्रितस्य विज्ञानस्य कर्म दर्शनमाश्रयस्य चक्षुष उपचर्यते । विज्ञाने पश्यति सति चक्षु पश्यतीत्युपचार । *यथा मञ्चाः क्रोशन्तीति* । यथा मञ्चस्थेषु पुरुषेषु क्रोशत्सु मञ्चा क्रोशन्तीत्युप-

---

१. आवृतेऽपि—का० । २. नेक्ष्यते—का० । ३ च—का० ।

सूत्रे उक्तम्—"चक्षुर्विज्ञेयानि रूपाणि[1] कान्तानि" ( ) इति। न च तानि चक्षुषा विज्ञायन्ते।

उक्तं च सूत्रे—"चक्षुर्ब्राह्मण द्वारं यावदेव रूपाणां दर्शनाय" ( ) इति, अतो गम्यते—तेन चक्षुषा द्वारेण विज्ञानं पश्यतीति। दर्शने तत्र द्वाराख्या। न ह्येतद् युज्यते—दर्शनं[2] रूपाणा दर्शनायेति।

यदि विज्ञानं पश्यति को विजानाति? कश्चानयोर्विशेषः? यदेव हि रूपस्य विज्ञान तदेवास्य दर्शनमिति। तद्यथा काचित् प्रज्ञा पश्यत्यप्युच्यते[3], प्रजानाऽतीत्यपि। एवं किञ्चिद् विज्ञानं पश्यतीत्यप्युच्यते, विजानातीत्यपि।

---

चार, तद्वत्। *यथा च सूत्र* उक्तमिति विस्तरः। *वैभाषिकाणामप्ययं पक्ष.*—न चक्षुर्विजानाति, किं तर्हि? विज्ञानं विजानातीति। अथ चोक्तम्—*चक्षुर्विज्ञेयानि रूपाणि कान्तानी*ति? तत्राश्रितकर्म आश्रयस्योपचर्यत इत्यवश्यं प्रतिपत्तव्यम्। *द्वारं यावदेव रूपाणा दर्शनाये*ति। द्वारमिव द्वारम्। हेतुराश्रय इत्यभिप्राय। *अनेनागमेन तेनाश्रयेणे*ति योऽर्थ उक्तस्तमेव *समर्थयति—तेन चक्षुषा द्वारेण विज्ञानं पश्यती*ति। *दर्शने तत्र द्वाराख्ये*ति। चक्षुर्ब्राह्मण द्वारं दर्शनं यावदेव रूपाणा दर्शनायेत्यर्थः। *न ह्येतद्युज्यते—दर्शनं रूपाणा दर्शनाये*ति। अत्रावाचकत्वान्नैतद् युज्यत इत्यभिप्राय। यदि दर्शनं करणम्—दृश्यतेऽनेनेति दर्शनमिति, कर्तरि वा ल्युट्—पश्यतीति दर्शनमिति, दर्शनायेति वा भावसाधनम्। दृष्टिर्दर्शनं तस्मै दर्शनायेति कथमेतन्न युज्यते? यस्माच्चक्षुर्व्यतिरिक्तं दर्शनं नास्ति। आलोचनमिति चेत्? न; विज्ञानाव्यतिरिक्तत्वात्। विज्ञानमेव ह्यालोचनम्, नातोऽन्यन् पश्याम। यदि तु चक्षुर्द्वारं विवरं रूपाणा दर्शनाय विज्ञानायेत्यर्थो गृह्येत, तद्युज्यते।

*तद्यथा काचित्प्रज्ञा पश्यत्यप्युच्यत* इति। पश्यतीत्यप्युच्यते इति इतिशब्दोऽत्राध्याहार्य। अनेनोपन्यासेन दर्शनविज्ञानयोरनर्थान्तरभाव इति दर्शयति। का पुनरसौ या प्रज्ञैवमुच्यते? या दर्शनात्मिकोक्ता—"तदन्योभयथार्या धी" (अभि० को० ७ १) इति, "तस्यैवं जानत एवं पश्यत." ( ) इति सूत्रे वचनात्। *किञ्चिदि*ति वचनान्न सर्वं विज्ञानं पश्यतीत्युक्तं भवति। चक्षुर्विज्ञानं हि पश्यतीत्युच्यते, न तु श्रोत्रादिविज्ञानमिति।

---

१ रूपाणीष्टानि—का०। २ चक्षुर्दर्शन—का०।

३ पश्यतीत्य०—का०।

अन्ये[1] पुनराहु —"यदि चक्षुः पश्यति कर्तृभूतस्य चक्षुष काऽन्या दृशिक्रिया इति वक्तव्यम्"? तदेतदचोद्यम्; यदि[2] 'विज्ञानं विजानाति' इतीष्यते, न च तत्र कर्तृक्रियाभेद, एवमत्रापि ।

अपरे[3] पुनर्ब्रुवते —"चक्षुर्विज्ञानं दर्शनम्, तस्याश्रयभावात् 'चक्षु पश्यति' इत्युच्यते । यथा नादस्याश्रयभावात् 'घण्टा नदति' इत्युच्यते" इति ।

ननु चैवं विज्ञानस्याश्रयभावाच्चक्षुर्विजानातीति प्राप्नोति ? न प्राप्नोति, तद्विज्ञानं दर्शनमिति रूढ लोके । तथा हि तस्मिन्नुत्पन्ने 'रूपं दृष्टम्' इत्युच्यते, न विज्ञातम् ।

विभाषायामप्युच्यते[4]—"चक्षु सम्प्राप्तं चक्षुर्विज्ञानानुभूत दृष्टमित्युच्यते इति । तस्माच्चक्षु' पश्यतीत्येवोच्यते, न विजानातीति । विज्ञान तु सान्निध्य-मात्रेण रूपं विजानातीत्युच्यते । यथा—सूर्यो दिवसकर" इति ।

---

*कान्या दृशिक्रियेति* । यस्योपलम्भकत्वं तस्य दर्शनं युज्यत इत्यभिप्राय. । *तदेतदचोद्यमिति* विस्तर । यदि *विज्ञान विजानाति* । कर्तृभूतस्य विज्ञानस्य कान्या विज्ञानक्रियेति वक्तव्यमिति तुल्यं चोद्यमापद्यते । *न च तत्र कर्तृक्रिया-भेदः* । न कर्तुर्विज्ञानस्य क्रियायाश्च विज्ञानलक्षणाया भेदोऽन्यत्वमस्ति । भवति च कर्तृक्रियासम्बन्धव्यपदेश.—विज्ञानं विजानातीति, *तद्वदिहापि भवेत्*— चक्षु. पश्यतीत्यचोद्यमेतत् ।

*चक्षुर्विज्ञानं दर्शनमित्यपरे । तस्याश्रयभावाच्चक्षुः पश्यतीत्युच्यते । यथा नाद-स्याश्रयभावाद् घण्टा नदतीत्युच्यते ।*

विज्ञानं तर्हि कस्याश्रयभावाद् रूपं विजानाति ? इत्याह—*विज्ञानस्या-श्रयभावादिति* । चक्षुर्विज्ञानस्याश्रयभावादित्यर्थ । *तद्विज्ञानं दर्शनमिति रूढं लोक इति* । दर्शनमिति लोके रूढम्, न तु विज्ञानमिति रूढम् । कथ गम्यते ?, इत्याह—*तथा हि तस्मिन्नुत्पन्ने रूप दृष्टमित्युच्यते न विज्ञातमिति* ।

*विभाषायामप्युच्यत* इति । स एवार्थोऽभिधीयत इत्यभिप्रा । चक्षुःसम्प्राप्तं चक्षुराभासगतम् । *विज्ञानं तु सान्निध्यमात्रेणेति* । नाश्रयभावतो [illegible] दर्शनमिति । *यथा सूर्यो दिवसकर इति* । यथा सान्निध्यमात्रेण सूर्यो दिवसं [illegible]त्युच्यते तथा विज्ञानं विजानातीत्युच्यते । कस्मात् ? लोके तथा सिद्धत्वात् ।

---

१ वात्सीपुत्रीया इत्यर्थः ।  २ यदि हि—का० ।

३. 'अपरे' शब्देन धर्मगुप्तमतानुयायिनो वेदितव्याः ।  ४ ०मप्युक्तम्—का० ।

अत्र सौत्रान्तिका आहुः—किमिदमाकाशं खाद्यते ? चक्षुर्हि प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानम्। तत्र कः पश्यति को वा दृश्यते ! निर्व्यापारं हीदं धर्ममात्रम्, हेतुफलमात्रं च। तत्र च्छन्दत[1] उपचारा. क्रियन्ते—चक्षुः पश्यति, विज्ञानं विजानातीति नात्राभिनिवेष्टव्यम्। उक्त हि भगवता—"जनपदनिरुक्ति नाभिनिविशेत सज्ञां च लोकस्य नाभिधावेद्" (          ) इति।

एप तु काश्मीरवैभाषिकाणां सिद्धान्तः—चक्षु· पश्यति, श्रोत्रं शृणोति, घ्राणं जिघ्रति, जिह्वा आस्वादयति, काय स्पृशति, मनो विजानातीति ॥ ४२ ॥

तद्यदि चक्षु· पश्यति, किमेकेन चक्षुषा रूपाणि पश्यति ? आहोस्विद् उभाभ्याम् ? नात्र नियम।

**उभाभ्यामपि चक्षुर्भ्यां पश्यति व्यक्तदर्शनात्।**

**उभाभ्यामपि चक्षुर्भ्यां पश्यतीत्याभिधार्मिकाः।** तथा हि—द्वयोर्विवृतयोः परिशुद्धतरं दर्शनं भवति। एकस्मिंश्चोन्मीलिते चक्षुषि द्वितीये चार्धनिमीलिते द्विचन्द्रादिग्रहणं भवति; नैकतरान्यथीभावात्।

---

*निर्व्यापारं हीदमिति* विस्तर.। निर्व्यापारमिति निरीहम्। अनेन हि कर्तुरर्थान्तरभूता क्रिया प्रतिषेधति। *धर्ममात्रमिति* स्वतन्त्रस्य कर्तु. प्रतिषेधं करोति। *हेतुफलमात्रं चेति*। असत्यपि कर्तरि हेतुफलयो. कार्यकारणमर्थत्वं दर्शयति। *तत्र च्छन्दत उपचाराः क्रियन्ते*। यदि वस्तु व्यवहाराङ्गम्। तेनेह व्यवहारार्थसंसिद्धयर्थमसदपि सद्रूपेण परिकल्प्य कर्तृक्रियादिव्यवस्थानं क्रियते—चक्षु· पश्यति, विज्ञानं विजानातीत्येवमादि। *नात्राभिनिवेष्टव्यम्*। भावो भवित्रपेक्षोऽन्य इत्यादि। *जनपदनिरुक्ति नाभिनिविशेतेति*। जनपदस्तत्र नियता निश्चिता चोक्तिर्जनपदनिरुक्तिः, ता नाभिनिविशेत। कस्मात् ? अत्रेयं निरुक्तिरिति, न वा सर्वामिवार्थवती निरुक्ति कल्पयेत्। *संज्ञा च लोकस्य नाभिधावेदिति*। 'आत्मा', 'जीव' इत्येवमादिका संज्ञा लोकस्य नाध्यारोपयेत्। अभूतसमारोपेण अस्त्यात्मा शरीरादिव्यतिरिक्त इति नातीव गच्छेदित्यर्थ.। अथ वा—संज्ञा च लोकस्य नाभिधावेन्नातिसरेत्। अर्थाभावात् संज्ञापि नास्तीति न कल्पयेदित्यर्थ। अतिसरणम्=अतिक्रमणमित्येकोऽर्थ ॥ ४२ ॥

*उभाभ्यामपि* इति। अपिशब्दादेकेनापि नात्र नियम.। *द्वयोर्विवृतयोः परिशुद्धतरं दर्शनमित्युक्तं* भवति। *नैकतरान्यथीभावादिति*। उन्मीलितार्धनिमी-

---

1 व्यवहारार्थ०—का०।

न चाश्रयविच्छेदाद् विच्छेदप्रसङ्ग[1], विज्ञानस्य देशाप्रतिष्ठितत्वाद् रूपवदिति ॥

यदि चक्षु पश्यति श्रोत्रं शृणोति यावन्मनो विजानाति, किमेषां प्राप्तो विषयः ? आहोस्विदप्राप्त ?

**चक्षुःश्रोत्रमनोऽप्राप्तविषय,**

तथा हि—दूराद् रूपं पश्यति, अक्षिस्थमञ्जनं न पश्यति। दूराच्छब्द शृणोति, सति च प्राप्तविषयत्वे दिव्यं चक्षु·श्रोत्रमिह मनुष्येषु[1] ध्यायिना नोपजायेत, घ्राणादिवत्।

---

लितयोरक्ष्णोरेकतरस्यान्यथीभावात्। द्वयोरेकतरद् यद्यन्यथीभवति। यदि यदुन्मीलितं तदर्धनिमीलितं क्रियेत, सर्वनिमीलितं वा, यच्चार्धनिमीलित यदि तत् सर्वनिमीलितं क्रियेत सर्वोन्मीलितं वा, तदा द्विचन्द्रदर्शनं न भवति। अतोऽवगम्यते—द्वयोरपि चक्षुषोरत्र विज्ञानोत्पत्तौ व्यापारोऽस्तीति। *देशाप्रतिष्ठितत्वाद् रूपवदिति*। विपरीतदृष्टान्त। यथा रूपस्य देशप्रतिष्ठितत्वादाश्रय*विच्छेदाद्* विच्छेदो भवति, नैवं विज्ञानस्य। न हि विज्ञानं देशप्रतिष्ठितम्, किं तर्हि ? देशाप्रतिष्ठितम्, अमूर्तत्वात्। देशाप्रतिष्ठितत्वाच्च नाश्रयविच्छेदाद्विच्छेदो भवति।

*तथाहि दूराद्रूपं पश्यतीति*। यत्र रूपं दृश्यते, न तत्र तद्ग्राहकं चक्षुरिन्द्रियमस्ति, तत्र प्रमाणानुपलभ्यमानत्वात्, तत्राविद्यमानदेवदत्तादिवत्। यथा चक्षु, एवं श्रोत्रमपि वक्तव्यम्। इतर आह—'स्वविषयदेशप्रापि चक्षु श्रोत्रम्, इन्द्रियत्वात्, घ्राणेन्द्रियादिवत्।' अनेनानुमानेन तत्र प्रमाणानुपलभ्यमानत्वं हेतुमसिद्धं दर्शयति। *आचार्य* आह—*सति च प्राप्तविषयत्व* इति। विस्तर—यदि प्राप्तविषयं चक्षु श्रोत्रं कल्प्येत, *दिव्यं चक्षुःश्रोत्रमिह मनुष्येषु ध्यायिना नोपजायेत*। यदि हि चक्षु.श्रोत्रमतिविप्रकृष्टदेशस्थं व्यवहितं च कुड्यादिभिर्यथायोगं रूपं शब्दं गृह्णीयाद्, एवमस्य दिव्यत्वं सम्भवेत्, तच्च प्राप्तविषयत्वे न स्यात्। *घ्राणादिवत्*। यथा घ्राणजिह्वाकाया प्राप्तविषयत्वाद् दिव्या ध्यायिना नोपजायेरन्, तद्वत्। अनेन स्वविषयदेशप्रापित्वपक्षस्य धर्मिविशेषविपर्ययापक्षालत्वं दर्शयति। सम्भवद्दिव्यत्वे हि चक्षु.श्रोत्रे धर्मी। असम्भवद्दिव्यत्वभावो विशेषविपर्यय। स प्राप्नोतीति दोष। अनेन दोषेणाननुमानत्वात् तत्प्रमाणानुपलभ्यमानत्वं सिद्धं व्यवस्थापयति। तस्मादप्राप्तविषयं चक्षु श्रोत्रम्।

---

१. का० पुस्तके नास्ति।

यद्यप्राप्तविषयं चक्षुः, कस्मान्न सर्वमप्राप्तं पश्यति दूरं तिरस्कृतं च ।
कथं तावदयस्कान्तो न सर्वमप्राप्तमयः कर्षति । प्राप्तविषयत्वेऽपि चैतत् समानम् ।
कस्मान्न सर्वं प्राप्तं पश्यत्यञ्जनं शलाकां वा । यथा च घ्राणादीनां हि प्राप्तो विषयो
सहभूगन्धाद्यग्रहणात्, एवं चक्षुषोऽप्यप्राप्तः स्यात्, न तु सर्वं ।
मनस्त्वरूपित्वात् प्राप्तुमेवाशक्तम् ।

पुनः श्रोत्रं प्राप्ताप्राप्तविषयं मन्यन्ते; कर्णाभ्यन्तरेऽपि शब्द-
शेषं तु घ्राणजिह्वाकायाख्यम् ।

**त्रयमन्यथा ॥ ४३ ॥**

प्राप्तविषयमित्यर्थः । घ्राणं कथं प्राप्तविषयम् ? निरुच्छ्वासस्य गन्धाग्रहणात् ।

---

*अप्राप्तविषयं* चक्षुरिति विस्तरः । आसन्नेनातिदूरस्थेन तिरस्कृतेन वा यथा तदप्राप्तिरिति तत्र दर्शनं प्रसञ्जयति । किमिदं परस्य साधनम्, उत दूषण-मिति ? यदि तावदेवं साधनम्—'अतिदूरं तिरस्कृतं चक्षुःश्रोत्रेण गृह्यते, अप्राप्तत्वात्, आसन्नविषयवत्' इति, तदसाधनम्, हेतो स्वयमनिश्चितत्वात्, पूर्वाभ्युपगमविरोधाद्वा । अथ दूषणम्—'सर्वाप्राप्तग्राहकत्वं चक्षुःश्रोत्रलक्षणस्य धर्मिणः प्रसज्यते', तददूषणम्, अनुमानबाधनात् । कथम् ? इत्याह—*कथं तावदयस्कान्तो न सर्वमप्राप्तमयः कर्षतीति* । प्रश्नमुखेनायस्कान्तनिदर्शनमुपन्यस्य सर्वाप्राप्तग्राहकत्वं चक्षुःश्रोत्रस्य बाधयति—न सर्वाप्राप्तग्राहकं चक्षुःश्रोत्रम्, सर्वाप्राप्तग्रहणशक्तिहीनत्वात्, अयस्कान्तवत् । अयस्कान्तो ह्यप्राप्तमयो गृह्णाति, कर्षतीत्यर्थः, न च सर्वमप्राप्तं गृह्णाति, तद्वच्चक्षुःश्रोत्रम् । *प्राप्तविषयत्वेऽपि चैतत् समानमिति* । नातिदूरतिरस्कृतो विषयश्चक्षुःश्रोत्रेण गृह्यते, ग्रहणायोग्यत्वात्, सम्प्राप्ताञ्जनशलाकावत् । अथ वा—न सर्वस्वग्राह्यग्राहि चक्षुःश्रोत्रम्, इन्द्रियस्वाभाव्यात्, घ्राणेन्द्रियादिवत् । *घ्राणादीनां हि प्राप्तो विषयो न तु सर्वः, सहभूगन्धाद्यग्रहणात्* । घ्राणादिसहभूनि हि गन्धरसस्प्रष्टव्यानि घ्राणादिभिर्न गृह्यन्ते, शक्तिर्हीन्द्रियाणामीदृशीति । *मनस्त्वरूपित्वादिति* । प्राप्तत्वं मूर्तानामेव व्यवस्थाप्येत, नामूर्तानामिति । मनोऽप्राप्तविषयमिति न विचारः क्रियते ।

*"त्रयमन्यथा"* इति । प्राप्तविषयमेव त्रयमिति इष्टावधारणार्थमारम्भः । अन्यथा हि प्राप्ताप्राप्तविषयमित्यपि सम्भाव्येत । *निरुच्छ्वासस्य गन्धाग्रहणा-दिति* । यदुच्छ्वासेन सार्धं सूक्ष्मं भूतचतुष्कं घ्राणमागतं तस्य गन्धो घ्राणेन

केयं प्राप्तिर्नाम ? निरन्तरोत्पत्ति ।

किं पुनः परमाणव स्पृशन्त्यन्योन्यम ? आहोस्विन्न ? न स्पृशन्तीति काश्मीरकाः। किं कारणम् ? यदि तावत सर्वात्मना स्पृशेयुर्मिश्रीभवेयुर्द्रव्याणि । अथैकदेशेन, सावयवा. प्रसज्येरन् । निरवयवाश्च परमाणव ।

कथ शब्दाभिनिष्पत्तिर्भवति ? अत एव यदि हि स्पृशेयुर्हस्तो हस्तेऽभ्याहत सज्येत, उपलश्चोपले ।

कथ[1] चितं प्रत्याहतं न विशीर्यते ? वायुधातुसन्धारितत्वात् । कश्चिद्वायुधातुर्विकिरणाय प्रवृत्तो यथा संवर्त्तन्याम्, कश्चित् सन्धारणाय यथा विवर्त्तन्यामिति। कथमिदानीं निरन्तरप्राप्त्या प्राप्तविषयं त्रयमुच्यते ? तदेवैषा निरन्तरत्वं[2] यन्मध्ये नास्ति किञ्चित् । अपि खलु सङ्घाता. सावयवत्वात् स्पृशन्तीत्यदोष ।

एवं च कृत्वा अयमपि ग्रन्थ उपपन्नो भवति विभाषायाम्—"किं नु स्पृष्टहेतुकं स्पृष्टमुत्पद्यते आहोस्विदस्पृष्टहेतुकम्" इति प्रश्नयित्वा आह—"कारणं प्रति । कदाचित् स्पृष्टहेतुकमस्पृष्टमुत्पद्यते, यदा विशीर्यते । कदाचिदस्पृष्टहेतुकं

---

घ्रायते । वायौ गन्धान्तरमुत्पन्नमित्यपरे । *मिश्रीभवेयुरे*कदेशीभवेयु । *अथैकदेशेन* । किम् ? स्पृशेयुरिति वर्तते

*कथं शब्दाभिनिष्पत्ति*रिति । यदि न स्पृशन्ति, अनभिघाते शब्दाभिनिष्पत्तिर्न प्राप्नोतीत्यभिप्राय. । *अत एवेति काश्मीराः । यदि हि स्पृशेयुर्हस्तो हस्तेऽभ्याहतः सज्जेत* । जतुनीव जत्वन्तरम् । *कथं चितं प्रत्याहतं न विशीर्येत* इति । अन्योन्यमस्पृशता परमाणूना सङ्घात प्रत्याहत. पाण्यादिभि. कथं न विशीर्यते । *तदेवैषा निरन्तरत्वं यन्मध्ये नास्ति किञ्चिदि*ति । आलोकादि मध्ये नास्तीति निरन्तरत्वमेषा व्यवस्थाप्यते । तदेव च प्राप्तत्वम्, नान्यथेति । *अपि खल्विति* । अपि चेत्यर्थ. । *सङ्घाता· सावयवत्वात् स्पृशन्तीत्यदोषः* । योऽसौ दोष उक्त.—यदि सर्वात्मना स्पृशेयुर्मिश्रीभवेयुर्द्रव्याणि, अथैकदेशेन सावयवा. प्रसज्येरन्निति ।

*कारणं प्रती*ति । यस्य यादृशं कारणं तस्य तत्कारणं स्पृष्टमस्पृष्टं वा प्रति । आह—*कदाचिदि*ति । विस्तर —*स्पृष्टहेतुकमि*ति । स्पृष्टमन्योन्यं हेतुरस्य स्पृष्टहेतुकम् । एवम*स्पृष्टहेतुकम् । यदा विशीर्येत* इति । तद्यथा शुष्का मृच्चूर्णी-

---

१. कथ तर्हि—का० । २. निरन्तरत्व—का० ।

स्पृष्टम्, यदा चयं गच्छति। कदाचित् स्पृष्टहेतुकं स्पृष्टम्, यदा चयवतां चयः। कदाचिदस्पृष्टहेतुकमस्पृष्टम्, यदा वातायनरजः" इति।

यदि परमाणवः स्पृशेयुरुत्तरक्षणावस्थानं स्यादिति भदन्तवसुमित्रः।

न स्पृशन्ति, निरन्तरे तु स्पृष्टसंज्ञेति भदन्तः।

भदन्तमतं चैष्टव्यम्। अन्यथा हि सान्तराणां परमाणूनां शून्येष्वन्तरेषु गतिः केन प्रतिबध्येत, यतः सप्रतिघा इष्यन्ते।

नच परमाणुभ्योऽन्ये सघाता इति। त एव ते संघाता. परमाणवः[1] स्पृश्यन्ते यथा रूप्यन्ते।

यदि च परमाणोर्दिग्भागभेदः कल्प्येत[2], स्पृष्टस्यास्पृष्टस्य वा सावयवत्वप्रसङ्गः। न[3] चेत्, स्पृष्टस्याप्यप्रसङ्गः॥ ४३॥

---

क्रियमाणा। *यदा चय गच्छतीति*। तद्यथा हिमम्। तद्धि पूर्वं सूक्ष्मं पश्चान्महद् भवति। *चयवता चय* इति। तद्यथा मृत्पिण्डद्वयसन्निपाते।

*उत्तरक्षणावस्थानं स्यादिति*। उत्पद्य स्पृष्टियोगात्। *निरन्तरे तु स्पृष्टसंज्ञेति भदन्तः। भदन्तमतं चैष्टव्यमिति*। वैभाषिकमतं कस्मान्नेष्टव्यम्, ननु वैभाषिकैरप्येवमुक्तम्—'तदेवैषां निरन्तरत्वं यन्मध्ये नास्ति किञ्चिद्' इति? अस्त्येवम्, सावकाशं तु तद्वचनम्, यत् 'मध्ये नास्ति किञ्चिद्' इति ब्रुवाणा वैभाषिका मध्य आलोकादि नेच्छन्ति, अन्यपरमाणुप्रवेशानवकाशं तु न ब्रुवते। *अन्यथा हि सान्तराणा परमाणूना शून्येष्वन्तरषु गतिः केन प्रतिबध्येत*। गतिमत इति वाक्यशेषः।

अयं चापरो दोष.। *न च परमाणुभ्योऽन्ये सङ्घाताः*। यथा *वैभाषिकाः* कल्पयन्ति। *त एव ते सङ्घाताः परमाणवः स्पृश्यन्ते यथा रूप्यन्त* इति। सङ्घाता एव, नैक इत्यर्थः।

*यदि च परमाणोरिति* विस्तर। परमाण्वपरिनिष्पत्ति वक्तुकाम *आचार्यो* विचारयति—यदि परमाणोरेकस्य पूर्वादिदिग्भागभेद कल्प्येत *स्पृष्टस्यान्योन्यमस्पृष्टस्य वा सावयवत्वप्रसङ्गः। न चेत्*। किम्? दिग्भागभेद इति वर्तते। *स्पृष्टस्याप्यप्रसङ्गः*। कस्य? सावयवत्वस्य। अत्र साधनम्—'न निरवयव. परमाणुर्दिग्भागभेदवत्त्वात्, माषराशिवद्' इति। तदेनद्दिग्भागभेदवत्त्वं नेच्छन्ति

---

१. सघाते—पाठा०। २. कल्प्यते—का०।
३. नो—का०।

किं पुनरेभिश्चक्षुरादिभिरात्मपरिमाणतुल्यस्यार्थस्य ग्रहणं भवत्याशुवृत्त्या च पर्वतादीनामलातचक्रादिवद् ? आहोस्वित् तुल्यातुल्यस्य ? यानि तावदेतानि प्राप्तविषयाण्युक्तानि, एभिः

**त्रिभिर्घ्राणादिभिस्तुल्यविषयग्रहणं मतम् ।**

यावन्तो हीन्द्रियपरमाणवस्तावन्तो हि विषयपरमाणवः समेत्य विज्ञानं जनयन्ति । चक्षुःश्रोत्राभ्यां त्वनियमः । कदाचिदल्पीयांसो यदा वालाग्रं पश्यति, कदाचित् समा यदा द्राक्षाफलं पश्यति, कदाचित् भूयांसो यदा महान्तं पर्वतं पश्यत्युन्मिषितमात्रेण । एवं श्रोत्रेण मशकमेघादिशब्दश्रवणे योज्यम् ।

मनस्त्वमूर्तिवदेवेति नास्य परिमाणपरिच्छेदः सम्प्रधार्यते ।

**कथं पुनरेषां चक्षुरादीन्द्रियपरमाणूनां सन्निवेशः ?**

चक्षुरिन्द्रियपरमाणवस्तावदक्षितारकायामजाजीपुष्पवदवस्थिताः । अच्छचर्मावच्छादितास्तु न विकीर्यन्ते । अधरौत्तर्येण पिण्डवदवस्थिता इत्यपरे । न चान्योऽन्यमावृण्वन्ति, स्फटिकवदच्छत्वात् ।

---

वैभाषिकाः । दिग्भागभेदो हि सङ्घातरूपाणामेव कल्प्यते । एवं च वर्णयन्ति—"धर्मतैवेयं यत्सप्रतिघानां भिन्नदेशत्वम्, तेषां नैरन्तर्येणावस्थानादभिन्नदेशत्वं मा भूदिति सान्तराणामपि सप्रतिघत्वेन गतिः प्रतिबध्यते" इति ॥ ४३ ॥

*आशुवृत्त्या च पर्वतादीनामलातचक्रादिवदिति* । आत्मपरिमाणतुल्यस्यैवार्थस्य ग्रहणे इष्यमाणे कथं पर्वतादीनां महतां सकृदिव ग्रहणं लक्ष्यते, न क्रमेण ? इत्याशङ्क्य युक्तिं तथा ग्रहणे कथयति—आशुवृत्त्या चेत्यादि । यथालातचक्रादिग्रहणं क्रमेण वर्तमानं सकृदिव लक्ष्यते, तथा पर्वतनदीशब्दादिग्रहणमाशुवृत्त्या भवतीति । *आहोस्वित्तुल्यातुल्यस्येति* । द्राक्षाफलादिदर्शने तुल्यस्य, वालाग्रपर्वतादिदर्शनेऽतुल्यस्येत्यभिप्रायः । *उन्मिषितमात्रेणेति* । न क्रमदर्शनन्यायेन । *एवं श्रोत्रेणेति* विस्तरः । कदाचिदल्पीयांसः, यदा *मशकशब्दं शृणोति* । कदाचित् समाः, यदा श्रोत्रपरमाणुसमप्रमाणं कस्यचिच्छब्दं शृणोति । *कदाचिद्* भूयांसः, यदा *मेघशब्दं शृणोतीति* ।

*अजाजीपुष्पवदवस्थिताः* कालजीरकपुष्पवदवस्थिताः । एकतलावस्थिता इत्यर्थः ।

श्रोत्रेन्द्रियपरमाणवो भूर्जाभ्यन्तरावस्थिताः ।

घ्राणेन्द्रियपरमाणवो घाटाभ्यन्तरे[1] शलाकावत् ।

आद्यानि त्रीणीन्द्रियाणि मालावदवस्थितानि ।

जिह्वेन्द्रियपरमाणवोऽर्धचन्द्रवत्। वालाग्रमात्रं किल मध्यजिह्वाया जिह्वेन्द्रियपरमाणुभिरस्फुटम् ।

कायेन्द्रियपरमाणवः कायवदवस्थिता ।

स्त्रीन्द्रियपरमाणवो भेरीकटाहवत् ।

पुरुषेन्द्रियपरमाणवोऽङ्गुष्ठवत् ।

तत्र चक्षुरिन्द्रियपरमाणवः कदाचित् सर्वे सभागा भवन्ति, कदाचित् तत्सभागाः । कदाचिदेके सभागाः, एके तत्सभागाः । एवं यावज्जिह्वेन्द्रियपरमाणवः । कायेन्द्रियपरमाणवस्तु सर्वे सभागा न भवन्ति । प्रदीप्तनरकाभ्यन्तरावरुद्धानामपि ह्यपरिमाणाः कायेन्द्रियपरमाणवस्तत्सभागा भवन्ति । स[2] किल विज्ञानोत्पत्तावाश्रयो विशीर्येत ।

न चैक इन्द्रियपरमाणुर्विषयपरमाणुर्वा विज्ञानं जनयति, सञ्चिताश्रयालम्बनत्वात् पञ्चानां विज्ञानकायानाम् । अत एवानिदर्शनः परमाणुः; अदृश्यत्वात् ॥

य इमे षड्विज्ञानधातव उक्ताश्चक्षुर्विज्ञानं यावन्मनोविज्ञानम्, किमेषां यथा विषयो वर्तमानः पञ्चानां चरमस्य त्रिकालः, एवमाश्रयोऽपि ? नेत्याह । किं तर्हि ?

---

*भूर्जाभ्यन्तरावस्थिता* इति । कर्णाभ्यन्तरे यद् भूर्जपत्रवर्णाकारं तद् भूर्जमिवेति भूर्जम् । तदभ्यन्तरेऽवस्थिताः *श्रोत्रेन्द्रियपरमाणवः । घाटाभ्यन्तरे ।* घाटा=नासापुटी । *मालावदवस्थितानीति* । मण्डलेन समपङ्क्त्यावस्थितानीति ।

*वालाग्रमात्रं किलेति* । आगमसूचनार्थः किलशब्दः । *अस्फुटमव्याप्तम्* ।

*स किलेति* । कर्मसामर्थ्यादेवाविशरणं स्यादिति किलशब्देन अरुचिं सूचयति ।

*सञ्चिताश्रयालम्बनत्वादिति* । सञ्चिताश्रयत्वात्, सञ्चितालम्बनत्वाच्च ।

---

१ घटाभ्यन्तरेण—का० ।

२. सर्वैः -का० ।

**चरमस्याश्रयोऽतीतः पञ्चानां सहजश्च तैः ॥ ४४ ॥**

मनोविज्ञानधातोः समनन्तरनिरुद्ध मन आश्रयः ।

**अतीतश्चेति** चशब्दः । तत्र चक्षुर्विज्ञानस्य चक्षुः सहज आश्रयो यावत् कायविज्ञानस्य काय. । अतीतः पुनरेषामाश्रयो मन इत्यप्येते पञ्च विज्ञानकाया इन्द्रियद्वयाश्रया. । अत एवोच्यते—"यश्चक्षुर्विज्ञानस्याश्रयभावेन समनन्तर-प्रत्ययभावेनापि स तस्य"—इति चतुष्कोटिक । प्रथमा कोटिश्चक्षुः, द्वितीया समनन्तरातीतश्चैतसिको धर्मधातु, तृतीया समन्तरातीतं मन, चतुर्थी उक्त-निर्मुक्ता[1] धर्मा. । एवं यावत् कायविज्ञानस्य स्वमिन्द्रियं वक्तव्यम् ।

मनोविज्ञानस्य पूर्वपादक'—यस्तावदाश्रयभावेन समनन्तरप्रत्ययभावेनापि स. । स्यात् समनन्तरप्रत्ययभावेन नाश्रयभावेन । [2]समनन्तरातीतश्चैतसिको धर्म-धातुरिति ॥ ४४ ॥

---

*"चरमस्याश्रयोऽतीतः"* इति । अतीत एवेत्यवधारणम् । *अत एवोच्यत* इति । यस्मात् *पञ्चविज्ञानकाया इन्द्रियद्वयाश्रयाः* । चक्षुरादीन्द्रियाश्रया, मनइन्द्रिया-श्रयाश्च । तस्माच्चतुष्कोटिक उत्तिष्ठते । *प्रथमा कोटिश्चक्षुरि*ति । चक्षुर्विज्ञानस्य चक्षुराश्रयभावेन न समनन्तरप्रत्ययभावेन । न हि चक्षुश्चित्तचैत्तस्वभावम् । "चित्तचैत्ता अचरमा उत्पन्ना समनन्तर" ( अभि० को० २.६३ ) इति च समनन्तरप्रत्ययलक्षणम् । *द्वितीया कोटि'—समनन्तरातीतश्चैतसिको धर्मधातुः* । तस्य समनन्तरभावेन नाश्रयभावेन । षडेव ह्याश्रया विज्ञानस्ये-ष्यन्ते चक्षुरादयो मन.पर्यन्ता , नान्ये । *तृतीया समनन्तरातीतं मनः* । उभय-लक्षणयुक्तत्वात् । *चतुर्थी उक्तनिर्मुक्ता धर्माः* । कोटित्रयमुक्ता विप्रयुक्ता असंस्कृता-दय । *एवं यावत्कायविज्ञानस्य स्वमिन्द्रियं वक्तव्य*मिति । य श्रोत्रविज्ञानस्या-श्रयभावेन समनन्तरप्रत्ययभावेनापि स तस्येति चतुष्कोटिक.—प्रथमा कोटि श्रोत्रम्, द्वितीया समनन्तरातीतश्चैतसिको धर्मधातु , तृतीया समनन्तरातीतं मन., चतुर्थी कोटिरुक्तनिर्मुक्ता धर्मा इति । एवमन्यदपि वक्तव्यम् ।

*मनोविज्ञानस्य पूर्वपादक* इति । यो मनोविज्ञानस्याश्रयभावेन समनन्तर-प्रत्ययभावेनापि स तस्येति पूर्वपादक । *यस्तावदाश्रयभावेन समनन्तरप्रत्यय-भावेनापि स* इति । मनस्तावदवश्यमसौ समनन्तरप्रत्यय स्यात् । समनन्तर-

---

१. कोटिरुक्त०—का० ।

२ समनन्तराभ्यतीत०—का० ।

किं पुन कारणमुभयाधीनाया विज्ञानोत्पत्तौ चक्षुरादय एवाश्रया उच्यन्ते, न रूपादय ?

**तद्विकारविकारित्वादाश्रयाश्चक्षुरादयः**

धातव इत्यधिकार । चक्षुरादीना हि विकारेण तद्विज्ञानानां विकारो भवति, अनुग्रहोपघातपटुमन्दतानुविधानात्, न तु रूपादीना विकारेण तद्विकारः । तस्मात् साधीय - -तदधीनत्वात् त एवाश्रया , न रूपादय' ।

किं पुनः कारणम् रूपादयश्च तैर्विज्ञायन्ते चक्षुर्विज्ञानं चोच्यते यावन्मनोविज्ञानम्, न पुना रूपविज्ञानं यावद्धर्मविज्ञानमिति ? य एते चक्षुरादय आश्रयाः, एषाम्—

---

प्रत्ययभावेन, नाश्रयभावेन । समनन्तरातीतश्चैतसिको धर्मधातु., अचक्षुराद्याश्रयपट्स्वभावत्वात् ॥ ४४ ॥

"*तद्विकारविकारित्वात्*" इति । विस्तर—तेषा चक्षुरादीना विकारस्तद्विकार., तद्विकारेण विकार तद्विकारविकार, स एषामस्तीति तद्विकारविकारीणि विज्ञानानि, तद्भाव तद्विकारविकारित्वम् । तस्माच्चक्षुरादय एवैषामाश्रया इत्यवधार्यते। *अनुग्रहोपघातपटुमन्दतानुविधानादिति* । चक्षुरादीनामञ्जनादिभिरनुग्रहम्, रेण्वादिभिश्चोपघातं चक्षुरादिविज्ञानान्यनुविदधते, ससुखोत्पादात्, सदु खोत्पादाच्च यथाक्रमम् । पटुमन्दता च तेषामनुविदधते, पटुमन्दतोत्पादात् । अतोऽवगम्यते—चक्षुरादिविकारेण विज्ञानविकारो भवतीति । ननु च पटुनि रूपे पटु चक्षुर्विज्ञानमुत्पद्यमानं दृश्यते, मन्दे मन्दमिति तेषा चक्षुरादीनाम् ? यद्यपि रूपस्य पटुमन्दते चक्षुर्विज्ञानमनुविदधीत विधुरावस्थयोस्तु चक्षुरूपयोश्चक्षुरवस्थामेव चक्षुर्विज्ञानमनुविधत्ते, न रूपावस्थाम् । तथा हि चक्षुष्यनुगृहीते रूपे चोपहते तद्दीनरागाणा मध्यस्थाना च चक्षुर्विज्ञानमविकारमुत्पद्यते, न तु सदु खमुत्पद्यते । रूपे पुनरनुगृहीते=परित्यक्ते, चक्षुषि चोपहते—कामलव्याधिना, तिमिरोपघातेन वा, पीतदर्शनं भ्रान्तं केशोण्डुकादिदर्शनं वा प्रवर्तते । तथा पटुनि रूपे जरया मन्दे चक्षुषि मन्दं चक्षुर्विज्ञानमुत्पद्यते । एवं मन्दे रूपे चक्षुर्यद्यतिपटु भवेत् पटु चक्षुर्विज्ञानमुत्पद्यते । तथा हि जातिस्वभावेन पटुनि गृध्रचक्षुषि मन्देऽपि शवरूपेऽनेकयोजनविप्रकृष्टेऽपि चक्षुर्विज्ञानमुत्पद्यते । इत्येवं श्रोत्रादीन्यपि योज्यानि ।

**अतोऽसाधारणत्वाच्च[1] विज्ञानं तैर्निरुच्यते ॥ ४५ ॥**

कथमसाधारणत्वम्? न हि चक्षुरन्यस्य विज्ञानस्याश्रयीभवितुमुत्सहते। रूपं तु मनोविज्ञानस्यालम्बनीभवत्यन्यचक्षुर्विज्ञानस्यापीति। एव यावत् काय वेदितव्य। तस्मादाश्रयभावादसाधारणत्वाच्च विज्ञान तैरेव[2] निर्दिश्यते, न रूपादिभिः। यथा भेरीशब्दो यवाङ्कुर इति॥

अथ यत्र काये स्थितश्चक्षुषा रूपाणि पश्यति, किं तानि कायचक्षूरूपविज्ञानान्येकभूमिकान्येव भवन्ति? आहोस्विदन्यभूमिकान्यपि?

आह—सर्वेषां भेद.। कामधातूपपन्नस्य स्वेन चक्षुषा स्वानि रूपाणि पश्यतः सर्वं स्वभूमिकं भवति। तस्यैव स्वानि रूपाणि प्रथमध्यानचक्षुषा पश्यतः

---

*"अतोऽसाधारणत्वाच्च"* इति। अत आश्रयभावात्, असाधारणत्वाच्च। आश्रयभावो व्याख्यात इति न तं प्रत्याद्रियते। असाधारणत्वमेव तु व्याचक्षाण आह—*कथमसाधारणत्व*मित्यादि। *अन्यचक्षुर्विज्ञानस्यापी*ति। अन्यसन्तानविज्ञानस्यापीत्यर्थ। *तैरेव निर्दिश्यत* इति चक्षुरादिभि। चक्षुर्विज्ञानं यावन्मनोविज्ञानम्। *न रूपादिभिः।* रूपविज्ञानं यावद्धर्मविज्ञानम्। *यथा भेरीशब्दो यवाङ्कुर* इति। असाधारणत्वात् ताभ्या भेरीयवाभ्याम्। यथा निर्देशो लोके भेरीशब्दो यवाङ्कुर इति। न तु दण्डशब्द क्षेत्राङ्कुर इति वा। दण्डो हि पटहादिशब्दस्यापि कारणीभवेत, क्षेत्रं च शालिगोधूमाङ्कुरस्यापि—इति साधारणत्वान्न ताभ्या निदेश क्रियते। असाधारणाभ्या तु भेरीयवाभ्या निर्देश.। तद्वदिहापि द्रष्टव्यम्।

अपि खलु चक्षुरिव विज्ञानम्, उभयो सत्त्वसंख्याातत्वात्, रूपं त्वसत्त्वसंख्यातमपि। चक्षुषा विज्ञानम् चक्षुर्विज्ञानम्, तस्य कारणभावात्। चक्षुषे विज्ञानं चक्षुर्विज्ञानम्, सुखदु खवेदनासम्प्रयुक्तस्य विज्ञानस्य चक्षुरनुग्रहोपघातप्रवृत्तत्वात्। चक्षुषो विज्ञानं चक्षुर्विज्ञानम्; असाधारणत्वेन तत प्रवृत्ते। चक्षुषो विज्ञानं चक्षुर्विज्ञानम्, सत्त्वसंख्यातस्यैव स्वामिभावात्। चक्षुषि विज्ञानं चक्षुर्विज्ञानम्, तत्सम्प्रयोगिन्या सुखाया दु.खाया वा वेदनाया चक्षुष्येव परिच्छिद्यमानत्वात्। एवं श्रोत्रादिषु योज्यम्। तदेवं चक्षुरादिभिरेव विज्ञाननिर्देशो युज्यते, न रूपादिभि।

---

१ ०धारणत्वाद्धि—का०।

२. तेनैव—का०।

कायरूपे स्वभूमिके विज्ञानचक्षुषि तद्भूमिके। प्रथमध्यानभूमीनि पश्यतो रूपाणि त्रीण्यपि तद्भूमिकानि। द्वितीयध्यानचक्षुषा स्वानि रूपाणि पश्यतः कायरूपे स्वभूमिके चक्षुस्तद्भूमिकं विज्ञानं प्रथमध्यानभूमिकम्। प्रथमध्यानभूमीनि पश्यतो विज्ञानरूपे तद्भूमिके काय· कामावचारश्चक्षुर्द्वितीयध्यानभूमिकम्। द्वितीयध्यानभूमीनि पश्यतश्चक्षूरूपे तद्भूमिके काय. कामावचरो विज्ञानं प्रथमभूमिकम्। एवं तृतीयचतुर्थध्यानभूमिकेन चक्षुषा तद्भूमिकाधरभूमिकानि रूपाणि पश्यतो योजयितव्यम्।

प्रथमध्यानोपपन्नस्य स्वेन चक्षुषा स्वानि रूपाणि पश्यतः सर्वं स्वभूमिकमधराणि पश्यतः त्रय स्वभूमिकम्। द्वितीयध्यानचक्षुषा स्वानि रूपाणि पश्यतस्त्रयं स्वभूमिकं चक्षुस्तद्भूमिकम्। कामावचराणि पश्यत· कायविज्ञाने स्वभूमिके रूपाण्यधराणि चक्षुस्तद्भूमिकम्। द्वितीयध्यानभूमीनि पश्यतश्चक्षूरूपे तद्भूमिके। शेषं स्वभूमिकम्।

एव तृतीयादिध्यानचक्षुषा[1] योज्यम्। द्वितीयादिध्यानोपपन्नस्य स्वपरचक्षुर्भ्यां स्वपरभूमिकानि रूपाणि पश्यतो यथायोगं योजयितव्यम् ॥ ४५ ॥

अयं तु नियम·—

**न कायस्याधर चक्षुः,**

पञ्चभूमिकानि हि कायचक्षूरूपाणि कामावचराणि यावच्चतुर्थध्यानभूमिकानि। द्विभूमिकं चक्षुर्विज्ञानम्—कामावचरम्, प्रथमध्यानभूमिकं च। तत्र यद्भूमिक.

---

*एवं तृतीयचतुर्थध्यानभूमिकेन* चक्षुषा *तद्भूमिकाधरभूमिकानि* रूपाणि *पश्यतो योजयितव्य*मिति। तस्यैव कामधातूपपन्नस्य योजयितव्यम्। *एवं तृतीयादिध्यानचक्षुषा योज्य*मिति। तस्यैव *प्रथमध्यानोपपन्नस्य* तृतीयचतुर्थध्यानचक्षुषा पश्यतो योज्यम् ॥ ४५ ॥

"*न कायस्याधरं चक्षुः*" इति। अधरभूमिकमित्यर्थ.। स्वभूमिकमूर्ध्वभूमिकं चाभ्यनुज्ञातं भवति। *पञ्चभूमिकानि हि कायचक्षूरूपाणि*। काय. = शरीरम्। एतानि कायादीनि पञ्चभूमिकानि। *कामावचराणि* प्रथमध्यानभूमिकानि *यावच्चतुर्थध्यानभूमिकानि*। आरूप्यधातावभावात्। *द्विभूमिकं चक्षुर्विज्ञान*मिति। *कामावचरं प्रथमध्यानभूमिकं च*। तयोर्वितर्कविचारसद्भावात्, चक्षुर्विज्ञानस्य चावश्यं सवितर्कविचारत्वात्।

---

१ तृतीयध्यान०—का०।

कायस्तद्भूमिकं **चक्षुः**, ऊर्ध्वभूमिक वा चक्षुर्भवति **न** त्वधरभूमिकम् । यद्भूमिक चक्षुस्तद्भूमिकम्, अधरभूमिक वा रूपं विषयो भवति ।

**ऊर्ध्वं रूपं न चक्षुषः ।**

**न** हि कदाचिदूर्ध्वभूमिक **रूप**मधोभूमिकेन चक्षुषा द्रष्टुं शक्यते ।

**विज्ञानं च,**

ऊर्ध्वं न चक्षुषो रूपवत् ।

**अस्य रूपं तु कायस्योभे च सर्वत. ॥ ४६ ॥**

**अस्ये**त्यनन्तरोक्तस्य चक्षुर्विज्ञानस्य **रूपं सर्वतो** विषयः—ऊर्ध्वम्, अधः, स्वभूमौ च । **कायस्य चोभे** रूपविज्ञाने सर्वतो भवतः ॥ ४६ ॥

---

*"ऊर्ध्वं रूपं न चक्षुषः"* इति । नोर्ध्वभूमिकं रूपं चक्षुषो विषयो भवति, ऊर्ध्वभूमिकस्य रूपस्य सूक्ष्मत्वात् । स्वभूमिकमधरभूमिकं चाभ्यनुज्ञातं भवति ।

*"विज्ञानं च"* । किम् ? ऊर्ध्वं न चक्षुष इति प्रकृतम् । कामावचरस्य चक्षुषो-ऽधरभूमिकस्य प्रथमध्यानभूमिकं चक्षुर्विज्ञानं न भवति । स्वभूमिकमधरभूमिकं वाभ्यनुज्ञातं भवति । कामावचरस्य चक्षुष स्वभूमिकं कामावचरमेव चक्षु-र्विज्ञानं भवति । प्रथमध्यानभूमिकस्य चक्षुष. प्रथमध्यानभूमिकमेव चक्षुर्विज्ञानं भवति, कामावचरं तु चक्षुर्विज्ञानमस्य न भवति । ननु चोक्तम्—अधरभूमि-कमभ्यनुज्ञातमिति ? सत्यमुक्तमेतत्, किन्तु असत्यात्मीयेऽधरभूमिकमिष्यते, न सतीति । द्वितीयतृतीयचतुर्थध्यानचक्षुषो ह्यसति आत्मीये प्रथमध्यान-भूमिकमेवाधरं चक्षुर्विज्ञानं भवति, न तु कामावचरम्, परमनिहीनत्वात् । सम्भवतस्त्वेवमुक्तम्—अधरभूमिकमभ्यनुज्ञातमिति ।

*अस्येत्यनन्तरोक्तस्य चक्षुर्विज्ञानस्येति* । चक्षुर्विज्ञानजाते. । *रूपं सर्वतो विषयः* । सम्भवतस्तु योज्यम् । कामावचरस्य चक्षुर्विज्ञानस्य स्वभूमिकमेव रूपम्, प्रथमध्यानभूमिकस्य तु प्रथमध्यानभूमिकचक्षुराश्रयस्य चक्षुर्विज्ञानस्य स्वभूमि-कमधरभूमिकमूर्ध्वभूमिकं च रूपं विषय., चतुर्थध्यानभूमिकचक्षुराश्रयस्य तु चतुर्थध्यानभूमिकं रूपम्, ततश्चाधरभूमिकं सर्वं विषय. । एवं यावद् द्वितीय-ध्यानभूमिकचक्षुराश्रयस्य द्वितीयध्यानभूमिकम्, ततश्चाधरभूमिकं रूपं विषय । एवं चक्षुर्विज्ञानजातेरूर्ध्वमध. स्वभूमौ च रूपं विषयो भवति । *कायस्य चोभे रूपविज्ञाने सर्वतो भवत* इति । कामावचरस्य कायस्य शरीरस्य स्वभूमिकोर्ध्व-भूमिके रूपविज्ञाने भवत. । प्रथमध्यानभूमिकस्य कायस्य प्रथमध्यानभूमिकमेव विज्ञानम् । रूपं तु स्वोर्ध्वाधरभूमिकम्, यथा—स्वाश्रयं चक्षु. । द्वितीयादि-

यथा चेदं चक्षुरुक्तं विस्तरेण वेदितव्यम्,

तथा श्रोत्रं

"न कायस्याधरं श्रोत्रमूर्ध्वं शब्दो न च श्रुतेः ।
विज्ञानं चास्य शब्दस्तु कायस्योभे च सर्वतः ॥"

इति विस्तरेण योज्यम् ।

**त्रयाणां तु सर्वमेव स्वभूमिकम् ।**

घ्राणजिह्वाकायधातूनां कायविषयविज्ञानानि **स्वभूमिकान्येव**—इत्युत्सर्गविशेषेण कृत्वा पुनर्विशेषणार्थमपवाद आरभ्यते—

**कायविज्ञानमधरस्वभूमि,**

कायः, कायधातुः, स्प्रष्टव्यं च स्वभूमिकान्येव नित्यं भवन्ति । **कायविज्ञानं तु केषाञ्चित् स्वभूमिकम्**, यथा कामधातुप्रथमध्यानोपपन्नानाम् । **केषाञ्चिदधरभूमिकम्**, यथा द्वितीयादिध्यानोपपन्नानामिति ।

---

ध्यानभूमिकस्य कायस्य विज्ञानमधरभूमिकमेव । प्रथमध्यानभूमिकमेवेत्यर्थः । रूपं तु द्वितीयतृतीयध्यानभूमिकस्य कायस्य स्वोर्ध्वाधरभूमिकम्, यथा—स्वाश्रयं चक्षुः । चतुर्थध्यानभूमिकस्य कायस्य रूपं स्वाधरभूमिकम्; तत ऊर्ध्वं रूपाभावात् ॥ ४६ ॥

*"तथा श्रोत्रम्"* इति । यथा चक्षुरुक्तं तथा श्रोत्रं व्याख्यातव्यम् । कथमिति ? अथ यत्र काये स्थितः श्रोत्रेण शब्दान् शृणोति, किं तानि कायश्रोत्रशब्दविज्ञानान्येकभूमिकान्येव भवन्ति ? आहोस्विदन्यभूमिकान्यपि ? आह—सर्वेषां भेदः । कामधातूपपन्नस्य स्वेन श्रोत्रेण स्वान् शब्दान् शृण्वतः सर्वं स्वभूमिकं भवतीति विस्तरेणानया दिशा ग्रन्थो वक्तव्यो यावदयं तु नियमः—

*न कायस्याधरं श्रोत्रमूर्ध्वं शब्दो न च श्रुतेः ।*
*विज्ञानं चास्य शब्दस्तु कायस्योभे च सर्वतः ॥*

*इति विस्तरेण योज्यम् ।* कथमिति ? न कायस्याधरं श्रोत्रम् । पञ्चभूमिका हि कायश्रोत्रशब्दाः कामावचरा यावच्चतुर्थध्यानभूमिकाः । द्विभूमिकं श्रोत्रविज्ञानम्—कामावचरम्, प्रथमध्यानभूमिकं च । तत्र यद्भूमिकः कायस्तद्भूमिकमूर्ध्वभूमिकं वा श्रोत्रं तद्भूमिकोऽधरभूमिको वास्य शब्दो विषयो भवति । ऊर्ध्वं शब्दो न च श्रुतेः । न हि कदाचिदूर्ध्वभूमिकः शब्दोऽधरभूमिकेन श्रोत्रेण श्रोतुं शक्यते । विज्ञानं च । ऊर्ध्वं न श्रोत्रस्य शब्दवत् । अस्य शब्दस्तु

**अनियतं मनः ॥ ४७ ॥**

कदाचित् कायमनोविज्ञानधर्मैः समानभूमिकं **मनो** भवति, कदाचिदूर्ध्वाधोभूमिकम् । पञ्चभूमिकेऽपि काये[1] सर्वभूमिकानि मनआदीनि भवन्ति उपपत्तिकाले[2] समापत्तिकाले[2] यथायोगमिति विस्तरेण **समापत्तिनिर्देशे कोशस्थान** एतदाख्यायिष्यते । अतिबहुग्रन्थभारपरिहारार्थं तु नेदानीं पुनराख्यायते, अल्पं च प्रयोजनम्, महांश्च श्रम इति ॥ ४७ ॥

समाप्त आनुषङ्गिकः प्रसङ्गः ॥

इदमिदानीं विचार्यते—अष्टादशानां धातूनां षण्णां च विज्ञानानां कः केन विज्ञेयः ? आह—

**पञ्च बाह्या द्विविज्ञेयाः,**

रूपशब्दगन्धरसस्प्रष्टव्यधातवो यथासंख्यं चक्षुःश्रोत्रघ्राणजिह्वाकायविज्ञानैर-

---

कायस्योभे च सर्वतः । अस्येत्यनन्तरोक्तस्य श्रोत्रविज्ञानस्य शब्दः सर्वतो विषयः—ऊर्ध्वम्, अधः, स्वभूमौ च । कायस्य चोभे शब्दविज्ञाने सर्वतो भवत इति ।

*"अनियतं मनः"* इति । यथा चक्षुः श्रोत्रं वा नियमितम्—'न कायस्याधरं चक्षुः श्रोत्रं वा' इत्येवमादिना, नैवं नियमितं मनः । अत एवाह—*पञ्चभूमिकेऽपि काये सर्वभूमिकानि मनआदीनि भवन्तीति* । मनोधर्ममनोविज्ञानानि सर्वभूमिकानि कामावचराणि यावद्भवाग्रिकाणि । तद्यथा—कामधातूपपन्नो यदि कामावचरान्मनसोऽनन्तरं कामावचरमेव कामावचरधर्मालम्बनं मनोविज्ञानमुत्पादयति, सर्वाणि कामावचराणि । यदि प्रथमध्यानभूमिकाद् यावद्भवाग्रभूमिकादुपपत्तिकाले *समापत्तिकाले वा* सम्भवतः कामावचरं तथैव मनोविज्ञानमुत्पादयति, मनस्ततस्त्यम्, शेषाणि कामावचराणि । अथ तत्र तद्विज्ञानमुत्पादयति धर्मास्त्वालम्बनं प्रथमध्यानभूमिका यावद्भवाग्रभूमिकाः, धर्मास्ततस्त्याः । शेषाणि पूर्ववत् । एवं प्रथमध्यानोपपन्नो यावद्भवाग्रोपपन्नो यथायोगं वक्तव्यः ।

*समाप्त आनुषङ्गिकः प्रसङ्ग* इति । "चक्षुश्च धर्मधातोश्च प्रदेशो दृष्टिः" अभि० को० १.४१ ) इत्येतदाधिकारिकम् । अथ "यत्र काये स्थितश्चक्षुषा रूपाणि पश्यति" इत्येवमादिरयमानुषङ्गिकः प्रसङ्गः; दर्शनसम्बन्धादागतत्वात् ॥ ४७ ॥

*"पञ्च बाह्या द्विविज्ञेयाः"* इति । पञ्चग्रहणं धर्मधातुनिराकरणार्थम् । बाह्यग्रहणं चक्षुरादिनिरासार्थम् । बाह्या एव पञ्च द्विविज्ञेया इत्यवधारणादन्ये

---

१. हि काये—का० ।　　　　२—२. समापत्त्युपपत्तिकाले—का० ।

नुभूता मनोविज्ञानेन विज्ञायन्ते । एवमेते प्रत्येकं द्वाभ्या विज्ञानाभ्यां विज्ञेया भवन्ति ।

शेषास्त्रयोदश धातव पञ्चानां विज्ञानकायानामविषयत्वादेकेन मनोविज्ञानेन विज्ञेया इत्याख्यातं भवति ॥

एषामष्टादशानां धातूनां मध्ये कति नित्या ? कत्यनित्या ? न कश्चित् सकलोऽस्ति नित्यो धातु, अपि तु—

**नित्या धर्मा असस्कृताः ।**

तेन धर्मधात्वेकदेशो नित्यः, शेषा अनित्याः ॥

कतीन्द्रियम्, कति नेन्द्रियम् ?

**धर्मार्धं[1] इन्द्रियं ये च द्वादशाध्यात्मिकाः स्मृता. ॥ ४८ ॥**

द्वाविंशतिरिन्द्रियाण्युक्तानि सूत्रे—चक्षुरिन्द्रियम्, श्रोत्रेन्द्रियम्, घ्राणेन्द्रियम्, जिह्वेन्द्रियम्, कायेन्द्रियम्, मनइन्द्रियम्, स्त्रीन्द्रियम्, पुरुषेन्द्रियम्, जीवितेन्द्रियम्, सुखेन्द्रियम्, दु.खेन्द्रियम्, सौमनस्येन्द्रियम्, दौर्मनस्येन्द्रियम्, उपेक्षेन्द्रियम्, श्रद्धेन्द्रियम्, वीर्येन्द्रियम्, स्मृतीन्द्रियम्, समाधीन्द्रियम्, प्रज्ञेन्द्रियम्, अनाज्ञातमाज्ञास्यामीन्द्रियम्, आज्ञेन्द्रियम्, आज्ञातावीन्द्रियमिति ।

---

त्रयोदश धातव *एकविज्ञानविज्ञेया* इति सिद्धम्, *पञ्चविज्ञानकायानामविषयत्वा*त् ।

"*नित्या धर्मा असंस्कृता.*" इति । असंस्कृता एव नित्या इत्यवधारणम् । अध्वसञ्चाराभावान्नित्या. ।

"*धर्मार्धं इन्द्रियं ये च द्वादशाध्यात्मिकाः स्मृताः*" इति । धातव इत्यधिकार. । *द्वाविंशतिरिन्द्रियाण्युक्तानि*[2] सूत्र इति । "अथ जातिश्रोणो ब्राह्मणो येन भगवांस्तेनोपसंक्रान्त.। उपसंक्रम्य भगवता सार्धं संमुखं संमोदनी संरञ्जनी विविधा कथा व्यतिसार्यैकान्ते न्यषीदत् । एकान्तनिषण्णो जातिश्रोणो ब्राह्मणो भगवन्तमिदमवोचत्–इन्द्रियाणीन्द्रियाणीति भो गौतम उच्यन्ते, कति भो गौतम इन्द्रियाणि ? कियता चेन्द्रियाणा संग्रहो भवति ? द्वाविंशतिरिमानि ब्राह्मण इन्द्रियाणि । कतमानि द्वाविंशति ? *चक्षुरिन्द्रियम्, श्रोत्रेन्द्रियम्, घ्राणेन्द्रियम्, जिह्वेन्द्रियम्, कायेन्द्रियम्, मनइन्द्रियम्, स्त्रीन्द्रियम्, पुरुषेन्द्रियम्, जीवितेन्द्रियम्, सुखेन्द्रियम्, दुःखेन्द्रियम्, सौमनस्येन्द्रियम्, दौर्मनस्येन्द्रियम्, उपेक्षेन्द्रियम्, श्रद्धेन्द्रियम्, वीर्येन्द्रियम्, स्मृतीन्द्रियम्, समाधीन्द्रियम्, प्रज्ञेन्द्रियम्, अनाज्ञातमाज्ञास्या*-

---

१ धर्मार्धम—का० ।

**आभिधार्मिकास्तु** षडायतनव्यवस्थानमाहृत्य जीवितेन्द्रियानन्तरं मन-इन्द्रिय पठन्ति; सालम्बनत्वात् । तत्र **धर्मार्धं** जीवितेन्द्रियादीन्येकादशेन्द्रियाणि त्रयाणां च भाग., धर्मधातुप्रदेशत्वात् । **द्वादशानामाध्यात्मिकाना** चक्षुरादय. पञ्च स्वनामोक्ताः, सप्त चित्तधातवो मनइन्द्रियं स्त्रीपुरुषेन्द्रिये कायधातुप्रदेश इति पश्चाद् वक्ष्यति । शेषा. पञ्च धातवो धर्मधातुप्रदेशश्च नेन्द्रियमिति सिद्धम् ॥

**अभिधर्मकोशभाष्ये धातुनिर्देशो नाम**
**प्रथमं कोशस्थान समाप्तमिति**

---

*मीन्द्रियम्, आज्ञेन्द्रियम्, आज्ञातावीन्द्रियम्*—इतीमानि ब्राह्मण द्वाविंशतिरिन्द्रियाणि । इयता इन्द्रियाणामिन्द्रियसंग्रहो भवति । अथ जातिश्रोणो ब्राह्मणो भगवतो भाषितमभिनन्द्यानुमोद्य भगवतोऽन्तिकात् प्रक्रान्त" (   ) इति ।

धर्मार्धं इति धर्मधात्वेकदेश इत्यर्थं । धर्मार्धमिति नपुंसकनिर्देशेन केचित् पठन्ति । तेषा पाठे अर्धधर्म इति समप्रविभाग प्राप्नोति, "अर्धं नपुंसकम्" ( पा० सू० २ २ २ ) इति लक्षणात्, अर्धपिप्पलीति यथा । अथ नपुंसकलिङ्गोऽप्यर्धशब्द एकदेशार्थे वर्तते, तदेवं समास क्रियते—धर्मश्चासावर्धं च धर्मार्धम्, धर्मे वार्धं धर्मार्धमिति ।

*आभिधर्मिकास्तु षडायतनव्यवस्थामनाहृत्येति* । चक्षुरायतनं यावत्कायायतनं मनआयतनमिति षडायतनमिति षडायतनव्यवस्था युक्तरूपामनादृत्य । *जीवितेन्द्रियानन्तरं मनइन्द्रियम् पठन्ति, सालम्बनत्वात्* । वेदनेन्द्रियादीनि हि सालम्बनानि अनन्तरं पठन्ति । *जीवितेन्द्रियादीन्येकादशेति* । जीवितेन्द्रियम्, वेदनेन्द्रियाणि पञ्च, श्रद्धादीनि चेति । *त्रयाणा च भाग* इति । आज्ञास्यामीन्द्रियादीना नवद्रव्यात्मकाना मनइन्द्रियं मुक्त्वान्यान्यष्टौ द्रव्याणि *धर्मधात्वेकदेशः* । *चक्षुरादय पञ्च स्वनामोक्ता* इति । पञ्च चक्षुरादयो धातव. पञ्चेन्द्रियाणि । चक्षुरिन्द्रियं यावत् कायेन्द्रियम् । *स्त्रीपुरुषेन्द्रिये च कायेन्द्रियैकदेश एवेति* पञ्च चक्षुरादिधातव. सप्तेन्द्रियाणि भवन्ति । *सप्त चित्तधातवो मनइन्द्रियमिति* । एवं द्वादशाध्यात्मिका धातवोऽष्टाविन्द्रियाणि भवन्तीति । द्वादशाध्यात्मिका धातव एव धर्मार्धं एव चेन्द्रियमित्यवधारणात् । *पञ्च धातवो* रूपादयः । *तदन्यधर्मधातुप्रदेशो नेन्द्रियमिति सिद्धम्* ॥ ४८ ॥

*आचार्ययशोमित्रकृता स्फुटार्थायामभिधर्मकोशव्याख्यायां*
*धातुनिर्देशो नाम प्रथमं कोशस्थानम्*

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवंवादी महाश्रमणः ।'

❀ ॐ नमो बुद्धाय ❀

# द्वितीयं कोशस्थानम्

## ( इन्द्रियनिर्देश )

उक्तानीन्द्रियाणि । कः पुनरिन्द्रियार्थः ? "इदि परमैश्वर्ये" ( मा० धा० १.६४ ) । तस्य इन्दन्तीति इन्द्रियाणि । अत आधिपत्यार्थ इन्द्रियार्थः ।

कस्य चैषा क्वाधिपत्यम् ?

**चतुर्ष्वर्थेषु पञ्चानामाधिपत्य,**

चक्षुःश्रोत्रयोस्तावत् प्रत्येकं **चतुर्ष्वर्थेष्वाधिपत्यम्** ; आत्मभावशोभायाम-

---

## स्फुटार्थाव्याख्यायां

## द्वितीयं कोशस्थानम्

*उक्तानीन्द्रियाणी*ति । प्रथमस्य द्वितीयस्य च कोशस्थानस्य सम्बन्धोपनिपातता दर्शयन्नाह—उक्तानीन्द्रियाणीति । प्रथमकोशस्थानावसाने यस्मात् 'धर्मार्धं इन्द्रियम्' ( अभि० १. ४८ ) इत्युक्तम्, तस्मादिदमायातमिति सम्बन्ध.।

*कः पुनरिन्द्रियार्थ* इति। वैयाकरणैरन्यथा इन्द्रियशब्दार्थव्युत्पत्ति. कृतेत्यत. प्रश्नयति—क. पुनरिन्द्रियार्थ इति । "इदि परमैश्वर्ये" ( मा० धा० १.६४ ) इति पठ्यते, तस्य धातोरिन्दन्तीतीन्द्रियाणीति रूपं द्रष्टव्यम् । कथं कृत्वा ? इन्दन्तीति इन्द्राणि, रप्रत्यय औणादिक., इन्द्राण्येवेन्द्रियाणीति स्वार्थे घस्तद्धित. । अथ वा—इन्दतीतीन्द्रियम् । बहुत्वात्तु बहुवचनेन कृतो निर्देश.- इन्दन्तीतीन्द्रियाणीति । तस्मात् इन्दतीत्यस्य शब्दस्य इन्द्रियमित्यादेश. । कथम् ? अवर्णस्य रभाव', तिशब्दस्य चेयादेशः । तेन नैरुक्तेन विधानेनेन्द्रियम्' इति भवति । तद् यथा—कुञ्जर इति । वैयाकरणैर्हि कुञ्जोऽस्यास्तीति कुञ्जर इति मत्वर्थीयेन कुञ्जरशब्दो व्युत्पाद्यते । नैरुक्तैस्तु तदनादृत्य "कुञ्जर. कुञ्जचारित्वात्" (            ) इति नैरुक्तेन न्यायेन साध्यते । तद्वदिहापि द्रष्टव्यम् । यदि वैयाकरणनयेन ( पा० ५.२.९३ ) 'इन्द्रियस्य लिङ्गमिन्द्रियमिति व्युत्पाद्येत, आधिपत्यार्थ इन्द्रियार्थो हीयेत । आधिपत्यार्थश्चेष्यते । तस्मादित्थमिन्द्रियशब्दस्य व्युत्पत्तिर्नैष्टव्येति ।

न्धबधिरयोरकान्तरूपत्वात् । आत्मभावपरिकर्षणे दृष्ट्वा श्रुत्वा च विषमपरिवर्जनात् । चक्षुःश्रोत्रविज्ञानयोः ससम्प्रयोगयोरुत्पत्तौ । रूपदर्शनशब्दश्रवणयोश्चासाधारणकारणत्वे ।

घ्राणजिह्वाकायानामात्मभावशोभायां पूर्ववत्, आत्मभावपरिकर्षणे तैः कवडीकाराहारपरिभोगात् । घ्राणादिविज्ञानानां ससम्प्रयोगाणामुत्पत्तौ । गन्धघ्राणरसास्वादनस्प्रष्टव्यस्पर्शनानां चासाधारणकारणत्व इति ।

**द्वयोः किल ।**

**चतुर्णां,**

स्त्री-पुरुष-जीवित-मनइन्द्रियाणां **द्वयोरर्थयोः** प्रत्येकमाधिपत्यम् । स्त्रीपुरुषेन्द्रिययोस्तावत् सत्त्वभेदविकल्पयोः । तत्र सत्त्वभेदः—स्त्री, पुरुष इति । सत्त्वविकल्पः स्तनादिसंस्थानस्वराचारान्यथात्वम् ।

---

*दृष्ट्वा श्रुत्वा च विषमपरिवर्जनादिति* । दृष्ट्वा श्वभ्रादि, श्रुत्वा च व्याघ्रादि रुतं श्वभ्रादि-व्याघ्रादिरुतविषमपरिवर्जनात् । *ससम्प्रयोगयोरिति* सचैतसिकयोः । *रूपदर्शन-शब्दश्रवणयोश्चेति* । "चक्षुः पश्यति, श्रोत्रं शृणोति" (  ) इति *वैभाषिकाणां* सिद्धान्तः । [1]नेनालोचनविशेषलक्षणयोर्दर्शनश्रवणयोरसाधारणकारणत्वे चक्षुःश्रोत्रयोराधिपत्यम् ।

*आत्मभावशोभायां पूर्ववदिति* । अघ्राणादीनां सत्त्वानामकान्तरूपत्वाद्, अकान्तात्मभावत्वादित्यर्थः । *तैः कवडीकाराहारपरिभोगादिति* । तैः घ्राणादिभिस्तत्परिभोगादिति । कथं गन्धस्य कवडीकाराहारत्वम् ? नासिकया गन्धग्रासव्यवच्छेदेन कवडीकरणात् । कथं स्प्रष्टव्यस्य कवडीकाराहारत्वम् ? कायेन स्नानाभ्यङ्गादिकस्प्रष्टव्यस्य रोमकूपमुखग्रासव्यवच्छेदेन कवडीकरणात् ।

*"द्वयोः किल"* इति । किलशब्दः परमतद्योतने । स्वमतमस्य पश्चाद् वक्ष्यते । 'द्वयोः' इति प्रत्येकमभिसम्बन्धः ।

*सत्त्वभेदः स्त्री पुरुष इति* । 'स्त्री' इत्येको निकायसभागः, 'पुरुषः' इत्यपरः, तयोर्भेदः । *सत्त्वविकल्प* इति । स्तनादेः संस्थानस्य स्वरस्याचारस्य चान्यथात्वं विशेष इत्यर्थः ।

---

१. नेनालम्बन०—इत्यपि पाठः ।

संक्लेशव्यवदानयोरित्यपरे । तथा हि—तद्वियुक्तविकलानां[1] षण्ढपण्डकोभयव्यञ्जनानामसंवरानन्तर्यकुशलमूलसमुच्छेदा न भवन्ति, संवरफलप्राप्तिवैराग्याणि चेति ।

---

संक्लेशव्यवदानयोरित्यपर इति पूर्वाचार्याः, न सत्त्वभेदविकल्पयोः, अन्तरेणापि पुरुषेन्द्रियं रूपावचराणां विकल्पसिद्धेः । विकल्पकृतश्च सत्त्वभेद इत्यभिप्रायः । तद्वियुक्तविकलानामिति । वियुक्ताश्च ते विकलाश्च वियुक्तविकला, ताभ्यां स्त्रीपुरुषेन्द्रियाभ्यां वियुक्तविकलाः तद्वियुक्तविकलाः । के ? षण्ढपण्डकोभयव्यञ्जनाः[2] । तद्वियुक्ताः षण्ढपण्डकाः, तेषां स्त्रीपुरुषेन्द्रियाभावात् । षण्ढपण्डकानां पुनः को विशेषः ? षण्ढकाः स्वभावतो निःस्त्रीपुरुषेन्द्रियाः, पण्डका उपक्रमेणोपहतेन्द्रियाः । विनये तु पण्डका एव पञ्च पठ्यन्ते—१ प्रकृतिपण्डकः, २ ईर्ष्यापण्डकः, ३ पक्षपण्डकः, ४ आसेकपण्डकः, ५ लूनपण्डकश्चेति । तत्र प्रकृतिपण्डकः षण्ढ इहाभिप्रेतः । यस्य हि प्रकृत्या व्यञ्जनं नास्ति स प्रकृतिपण्डकः । शेषा इह पण्डका इष्यन्ते । लूनपण्डको हि तावदिन्द्रियच्छेदादिन्द्रियविकल इति स्फुट एषः । पक्षपण्डकादयस्त्विन्द्रियाकर्मण्यत्वेन तद्विकला एव । इन्द्रियकर्मण्यत्वकालेऽपि तद्विकला इति व्यवस्थाप्यन्त एव, तदिन्द्रियकर्मण्यत्वस्य पुरुषसुखविशेषाजनकत्वात्, प्रसवाजनकत्वाच्च । इन्द्रियसद्भावाशङ्कानिवृत्त्यर्थमेव चेह षण्ढपण्डका इति पृथक् पाठः, अन्यथा हि विनयवदिहाप्यभिधर्मे 'पण्डका' इत्येव[3] पठ्येरन् । उभयव्यञ्जनास्तद्विकलाः, स्थानभ्रंशवैकल्याद्, अल्पसुखहेतुत्ववैकल्याच्च ।

अपरे व्याचक्षते—'तद्वियुक्ताः षण्ढाः, तद्विकलाः पण्डकाः, उपक्रमवैकल्यात् । उभयव्यञ्जनाश्च तद्विकलाः, स्थानभ्रंशवैकल्याद्, अल्पसुखहेतुत्ववैकल्याच्च' इति ।

तेषामसंवरादीनि न भवन्ति, "नृणामसंवरो हित्वा षण्ढपण्डद्विधाकृतीन्" (अभि० ४४४) । आनन्तर्यं षण्ढादीनां तु नेष्यते, "अल्पोपकारालज्जित्वात्" (अभि. ४.९८), "छिनत्ति स्त्रीपुमान् दृष्टिचरितः" (अभि० ४८१) इति वचनात् । स्त्रीपुरुषाणां तु तानि भवन्ति । अतः संक्लेशे आधिपत्यं स्त्रीपुरुषेन्द्रिययोः । संवरफलप्राप्तिवैराग्याणि चेति । संवरस्त्रिविधः—प्रातिमोक्षसंवरः, ध्यानसंवरः, अनास्रवसंवरश्चेति । तेषामेकोऽपि संवरो न भवति, किमङ्ग सर्वे, "संवरोऽप्येवम्" (४४४) इति वचनात् । अत एव च स्रोतआपत्त्यादिफल-

---

१ तद्विप्रयुक्तविकल्पानां—का० । २. ०शण्ठ०—इति मुद्रितः पाठः सर्वत्र । ३. इत्येव—मुद्रितः पाठः ।

जीवितेन्द्रियस्य निकायसभागसम्बन्धसाधारणयोः ।

मनइन्द्रियस्य पुनर्भवसम्बन्धवशिभावानुवर्त्तनयोः ।

तत्र पुनर्भवसम्बन्धे यथोक्तम्—"गन्धर्वस्य तस्मिन् समये द्वयोश्चित्त-योरन्यतरान्यतरच्चित्तं सम्मुखीभूत भवति—अनुनयसहगतं वा, प्रतिघसहगतं वा" (                ) इति ।

वशिभावानुवर्त्तने यथोक्तम्—"चित्तेनायं लोको नीयते" (                ) इति विस्तरः ।

यत् पुनः सुखादीन्द्रियपञ्चकम्, यानि चाष्टौ श्रद्धादीनि, तेषां

**पञ्चकाष्टानां संक्लेशव्यवदानयोः । १ ॥**

आधिपत्यं यथाक्रमं **पञ्चाना** सुखादीना **संक्लेशे;** रागादीनां तदनुशा-यित्वात् । श्रद्धादीना **व्यवदाने** । तर्हि[1] व्यवदायते[1] । व्यवदानेऽपि सुखा-

---

प्राप्तिः । कामादिवैराग्यं च तेषा न सम्भवति । स्त्रीपुरुषाणा तु भवतीति, अतो व्यवदानेऽपि स्त्रीपुरुषेन्द्रिययोराधिपत्यमिति ।

*निकायसभागसम्बन्धसन्धारणयो*रिति । जीवितेन्द्रियस्य निकायसभागोत्पत्तौ निकायसभागसम्बन्धे तस्याधिपत्यं व्यवस्थाप्यते, निकायसभागसन्धारणे चाधिपत्यम्, जीवितेन्द्रियवशेन तदूर्ध्वमवस्थानात् । *मनइन्द्रियस्य पुनर्भवसम्बन्ध* इति । क्लिष्टेन पुनर्भवसम्बन्धात् । जीवितेन्द्रियादस्य को विशेष ? जीविते-न्द्रियस्य अन्तराभव एव सम्बन्धनम्, मन इन्द्रियस्य तूपपत्तिभवेऽपि । समानकालं च जीवितेन्द्रियं निकायसभागेन तत्सम्बन्धनं करोति, मनइन्द्रियं तु भिन्नकालमपि पुनर्भवे तत्सम्बन्धनं करोति । *वशिभावानुवर्तन* इति । चित्तस्य वशिभावमनुवर्तते लोको धर्मो वा । *यथोक्तम्—'चित्तेनायं लोको नीयते' इति विस्तरः* । गाथायामप्युक्तम्—

"चित्तेन नीयते लोकः, चित्तेन परिकृष्यते ।
एकधर्मस्य चित्तस्य सर्वधर्मा वशानुगाः ॥"

( सं० नि० १.२.७ ) इति ।

*रागादीनां तदनुशायित्वादिति* । तेषु सुखादिषु अनुशयितुं शीलमेषाम्—आलम्बनतः, सम्प्रयोगतो वा । त इमे तदनुशायिनो रागादय., तद्भावस्तदनु शायित्वम्, तस्मादिति । यथोक्तम्—"सुखाया वेदनाया रागोऽनुशेते, दुःखाया

---

१–१. तर्ह्यव्यवदायत—का० ।

दीनामाधिपत्यमित्यपरे । "यस्मात् सुखितस्य चित्तं समाधीयते" (
) इत्युक्तं[1] सूत्रे[1] ।

दुःखोपनिषच्छ्रद्धाषण्णैष्क्रम्याश्रिताः सौमनस्यादय इति **वैभाषिकाः** ।

**अपरे** पुनराहुः—नैवम्; चक्षुःश्रोत्राभ्यामात्मभावपरिकर्षण विज्ञाय विषमपरिहारात् । विज्ञाने तु तयोराधिपत्यम् । नापि विज्ञानादन्यद्रूपदर्शनं शब्दश्रवणं वाऽस्ति; यतस्तयोरसाधारणकारणत्वे पृथगाधिपत्यं युज्येत । तस्मान्नैवमेषामिन्द्रियत्वम् ॥ १ ॥

---

द्वेषः, अदुःखासुखाया मोहः." ( ) इति । *तैर्हि व्यवदायत* इति । तैर्विशुध्यतामित्यर्थः । तदेवं क्लेशविशुद्धावेषां श्रद्धादीनामाधिपत्यमुक्तं भवति । *व्यवदानेऽपि सुखादीनामाधिपत्यमित्यपरे* इति । न केवलं संक्लेशे सुखादीनामाधिपत्यम्, किं तर्हि ? व्यवदानेऽपि—इति अपिशब्दस्यार्थः । *आभिधार्मिकाः* केचिदेवमाहुः । "व्यवदानेऽपि तेषामाधिपत्यमस्ति" ( ) इत्यागममानयन्ति । *यस्मात् 'सुखितस्य चित्तं समाधीयते'* इत्युक्तं सूत्रे । *दुःखोपनिषच्छ्रद्धा* । दुःखमुपनिषदस्याः । सेयं श्रद्धा दुःखोपनिषद्, दुःखहेतुकेत्यर्थः । दुःखे सति कस्यचिद् धर्मे रत्नत्रये वा श्रद्धा जायते, प्रव्रज्यां वाभिलषति । *षण्णैष्क्रम्याश्रिताः सौमनस्यादय* इति । षण्णैष्क्रम्याश्रितानि सौमनस्यानि, षण्णैष्क्रम्याश्रितानि दौर्मनस्यानि, षण्णैष्क्रम्याश्रिता उपेक्षाः । नैष्क्रम्यम्=सास्रवः, अनास्रवो मार्गः । धातोः संसाराद् वा निष्क्रमणं वैराग्यमित्यपरे । यथोक्तं सूत्रे—"चक्षुर्विज्ञेयानि रूपाणि प्रतीत्योत्पद्यते सौमनस्यं नैष्क्रम्याश्रितम्" ( ) । नैष्क्रम्यालम्बनमित्यर्थः । नैष्क्रम्यानुकूलमिति वा । एवं "यावन्मनः प्रतीत्य धर्मांश्चोत्पद्यते सौमनस्यं नैष्क्रम्याश्रितम्" ( ) इति । तथा "चक्षुर्विज्ञेयानि रूपाणि प्रतीत्योत्पद्यते दौर्मनस्यं नैष्क्रम्याश्रितम्" । एवं यावन्मनः । तथा "चक्षुर्विज्ञेयानि रूपाणि प्रतीत्योत्पद्यते उपेक्षा नैष्क्रम्याश्रिता ।" एवं यावन्मनः । 'नैष्क्रम्यं प्राप्स्यामि' इति कस्यचित् सौमनस्यम्, 'न नैष्क्रम्याय मया यत्नः क्रियते' इति कस्यचिद् दौर्मनस्यम् । कस्यचित् प्रतिसंख्यायोपेक्षा तेषु रूपादिषु भवति ।

*अपरे पुनराहुरिति* सौत्रान्तिकाः । *विज्ञाय विषमपरिहारादिति* । विज्ञानेन विषमपरिहारः क्रियते, न चक्षुःश्रोत्रेणेत्यभिप्रायः । *नापि विज्ञानादन्यद् रूपदर्शनं शब्दश्रवणं वास्तीति* । न रूपदर्शनं ग्रहणव्यतिरिक्तं विचार्यमाणं लभ्यते ।

---

१–१. का० पुस्तके नास्ति ।

कथं तर्हि ?

**स्वार्थोपलब्ध्याधिपत्यात् सर्वस्य च षडिन्द्रियम् ।**

चक्षुरादीना पञ्चानां स्वस्य स्वस्यार्थस्योपलब्धावाधिपत्यम् । मनस· पुन सर्वार्थोपलब्धावाधिपत्यम् । अत एतानि षट् प्रत्येकमिन्द्रियम् । ननु चार्थानामप्यत्राधिपत्यम् ? नाधिपत्यम् । अधिकं हि प्रभुत्वम् = आधिपत्यम् । चक्षुषश्चक्षूरूपोपलब्धावधिकमैश्वर्यम्, सर्वरूपोपलब्धौ सामान्यकारणत्वात् तत्पटुमन्दताद्यनुविधानाच्चोपलब्धे· । न रूपस्य; तद्विपर्ययात् । एवं यावत् मनसो धर्मेषु योज्यम् ।

**स्त्रीत्वपुंस्त्वाधिपत्यात्तु कायात् स्त्रीपुरुषेन्द्रिये ॥ २ ॥**

कायेन्द्रियादेव स्त्रीपुरुषेन्द्रिये पृथक् व्यवस्थाप्येते; नार्थान्तरभूते । कश्चिदसौ कायेन्द्रियभाग उपस्थप्रदेशो यः स्त्रीपुरुषेन्द्रियाख्यां प्रतिलभते;

---

ग्रहणं च विज्ञानमेवेति नान्यद् भवति । तस्माच्चक्षु श्रोत्रविज्ञानयो. ससम्प्रयोगयोरुत्पत्तौ यदाधिपत्यमुक्तं तदेव तद् भवति, नान्यत्राधिपत्यमेतदित्यभिप्राय. ॥ १ ॥

*मनसः पुनः सर्वार्थोपलब्धा*विति । 'स्वार्थोपलब्ध्याधिपत्यात्' इत्येव सिद्धे 'मनसः सर्वार्थोपलब्धौ' इति वचनं धर्मधातोरसर्वधर्मस्वभावत्वात् । व्याख्यातं चैतत् पुरस्तात् । *ननु चार्थानामप्यत्राधिपत्यमि*ति । "द्वयं प्रतीत्य विज्ञानस्योत्पत्तिः" (          ) इति वचनात् । *अधिकं हि प्रभुत्वमाधिपत्य*मिति । अधिक· प्रभु.=अधिपति·, तद्भाव आधिपत्यमिति । *सर्वरूपोपलब्धौ सामान्यकारणत्वा*दिति । नीलपीतादिसर्वरूपोपलब्धौ एकरूपस्य चक्षुष कारणत्वात् । न तु रूपस्यैकरूपस्य नीलपीतादिसर्वरूपोपलब्धौ कारणत्वम् । न हि नीलरूपं पीतरूपोपलब्धौ कारणं भवति । *तत्पटुमन्दताद्यनुविधानाच्चोपलब्धे*रिति । यस्मादुपलब्धिश्चक्षुरादिपटुमन्दतामनुविधत्ते । तद्यथा—पटुनि चक्षुषि पट्वी तदुपलब्धि., मन्दे मन्देति । आदिशब्देन अकुशल-कुशल-संवेदना-वेदनानुविधानम् । अकुशले मनसि अकुशलोपलब्धि, कुशले कुशला, सवेदने सवेदना, अवदेने चावेदनेति । *न रूपस्य* पटुमन्दताद्यनुविधत्ते उपलब्धि. । तेनाह—*तद्विपर्यया*दिति । तस्माच्चक्षुरादीनामधिकमैश्वर्यम्, न रूपादीनाम् ।

*"कायात् स्त्रीपुरुषेन्द्रिये"* इति । अत्र साधनम्—'कायेन्द्रियस्वभावं स्त्रीपुरुषेन्द्रियम्, स्प्रष्टव्यविज्ञानजनकत्वात्, अस्त्रीपुरुषेन्द्रियस्वभावकायेन्द्रियवत्,

यथाक्रमं स्त्रीत्वपुंस्त्वयोराधिपत्यात् । तत्र स्त्रीभावः—स्त्र्याकृतिस्वरचेष्टाभिप्रायाः[1], एतद्धि स्त्रियाः स्त्रीत्वम् । पुंभावः—पुरुषाकृति. स्वरचेष्टा अभिप्राया., एतद्धि पुंसः पुंस्त्वम् ।

**निकायस्थितिसंक्लेशव्यवदानाधिपत्यतः ।**
**जीवितं वेदनाः पञ्च श्रद्धाद्याश्चेन्द्रियं मताः ॥ ३ ॥**

**निकायसभागस्थितौ जीवितेन्द्रियस्याधिपत्यं संक्लेशे वेदनानाम् ।** तथा हि—"सुखायां वेदनायां रागोऽनुशेते, दु.खायां प्रतिघः, अदुःखादुखायामविद्या" (     ) इत्युक्तं सूत्रे । **व्यवदाने श्रद्धादीनां पञ्चानाम् ।** तथा हि तैः क्लेशाश्च विष्कम्भ्यन्ते[2], मार्गश्चावाह्यते . अत एतेऽपि प्रत्येकमिन्द्रियमिष्टाः ।

**आज्ञास्याम्याख्यमाज्ञाख्यमाज्ञातावीन्द्रिय तथा ।**
**उत्तरोत्तरसम्प्राप्तिनिर्वाणाद्याधिपत्यतः ॥ ४ ॥**

प्रत्येकमिन्द्रियमित्युपदर्शनार्थं **तथाशब्दः** । तत्राज्ञास्यामीन्द्रियस्याज्ञेन्द्रियस्य प्राप्तावाधिपत्यम् । आज्ञेन्द्रियस्याज्ञातावीन्द्रियप्राप्तौ **आज्ञातावीन्द्रियस्य परिनिर्वाणे** । न ह्यविमुक्तचित्तस्यास्ति परिनिर्वाणमिति ।

---

वैधर्म्येण चक्षुरिन्द्रियवत् । *स्त्र्याकृतिस्वरचेष्टाभिप्रायाः* इति । स्त्र्यभिप्रायः पुरुषाभिप्रायो विपर्ययेण । तदेवं सति सत्त्वविकल्प एव स्त्रीपुरुषेन्द्रिययोराधिपत्यम् ॥ २ ॥

*निकायसभागस्थितौ जीवतेन्द्रियस्याधिपत्यम्* । ननु वैभाषिकवत् । निकायसभागसम्बन्धे तत्र मनस एवाधिपत्यात् । *संक्लेशे वेदनानामिति* । अत्र वैभाषिकै. सार्धमैकमत्यम् । *तथा हि तैरिति* । तथा हि—तै. श्रद्धादिभि *क्लेशाश्च विष्कम्भ्यन्ते* लौकिकमार्गगतै*र्मार्गश्चावाह्यते* निर्वेधभागीयादिगतै. । तदेवं व्यवदानसम्भारे श्रद्धादीनां प्रत्येकमाधिपत्यमुक्तं भवति ॥ ३ ॥

*न ह्यविमुक्तचित्तस्यास्ति परिनिर्वाणमिति* । आज्ञातावीन्द्रियं क्षयज्ञानाद्यनास्रवमिन्द्रियम् । तदेव च विमुक्तं क्लेशविमुक्त्या, सन्तानविमुत्या च । तत्प्राप्तस्य निरुपधिशेषनिर्वाणं भवति । तस्मादाज्ञातावीन्द्रियस्य निरुपधिशेषनिर्वाण आधिपत्यं व्यवस्थाप्यते ।

---

१. स्त्र्याकृति स्वरचेष्टा अभिप्राया.—का० । २. विष्कम्यन्ते—का० ।

आदिशब्दोऽन्यपर्यायद्योतनार्थः । कतमोऽन्यः पर्यायः ? दर्शनहेयक्लेश-परिहाणं प्रत्याज्ञास्यामीन्द्रियस्याधिपत्यम् । भावनाहेयक्लेशप्रहाणं प्रत्याज्ञेन्द्रियस्य । दृष्टधर्मसुखविहारं प्रत्याज्ञातावीन्द्रियस्य, विमुक्तिप्रीतिसुखप्रतिसंवेदनादिति[1] ॥

आधिपत्यादिन्द्रियत्वेऽविद्यादीनामुपसंख्यानं कर्त्तव्यम् ? अविद्यादीनामपि हि संस्कारादिष्वाधिपत्यम्, अत एषामपीन्द्रियत्वमुपसंख्यातव्यम् । वागादीनां च, वाक्पाणिपादपायूपस्थानामपि चेन्द्रियत्वमुपसंख्यातव्यम्; वचनादानविहरणोत्सर्गानन्देष्वाधिपत्यात् ? न खलूपसंख्यातव्यम्; यस्मादिहेष्टम्—

**चित्ताश्रयस्तद्विकल्पः स्थितिः संक्लेश एव च ।**
**संभारो व्यवदानं च यावता, तावदिन्द्रियम् ॥ ५ ॥**

तत्र चित्ताश्रयः षडिन्द्रियाणि । एतच्च षडायतनं मौलं सत्त्वद्रव्यम् । तस्य स्त्रीपुरुषविकल्पः स्त्रीपुरुषेन्द्रियाभ्यां स्थितिर्जीवितेन्द्रियेण, संक्लेशो

---

*दृष्टधर्मसुखविहारं* प्रतीति विस्तरः । दृष्टो धर्मः दृष्टधर्मः दृष्टजन्मेत्यर्थः, सुखो विहारः सुखविहारः; दृष्टधर्मे सुखविहारः दृष्टधर्मसुखविहारः । तं प्रत्या-*ज्ञातावीन्द्रियस्याधिपत्यं विमुक्तप्रीतिसुखप्रतिसंवेदनादिति* । विमुक्तिः = क्लेश-प्रहाणम्, प्रीतिः =सौमनस्यम्, सुखम्=प्रस्रब्धिसुखम् । विमुक्त्या प्रीतिसुखस्य प्रतिसंवेदनं विमुक्तिप्रीतिसुखप्रतिसंवेदनम्, तस्मादिति; तदुक्तं भवति— विमुक्तिप्रीतिसुखप्रतिसंवेदनमेव दृष्टधर्मसुखविहार इति ॥ ४ ॥

*वाक्पाणिपादपायूपस्थानामपि चेन्द्रियत्वमुपसंख्यातव्यमिति* । *सांख्याः* चक्षु-रिन्द्रियादिव्यतिरिक्तानि वागिन्द्रियादीनि कल्पयन्ति - वागिन्द्रियं येन वचनं क्रियते, पाणीन्द्रियं येन किञ्चिद् द्रव्यमादीयते, पादेन्द्रियं येन विहरणं क्रियते, चंक्रमणमित्यर्थः, पाय्विन्द्रियं येन पुरीषोत्सर्गः क्रियते, उपस्थेन्द्रियं कायेन्द्रियैक-देशाव्यतिरिक्तं येनानन्दः सुखविशेषः प्राप्यते । न *खलूपसंख्यातव्यम*विद्यादीना-मिन्द्रियत्वम्, येनार्थेन *भगवता* द्वाविंशतिरिन्द्रियाण्युक्तानि, तत्राविद्यादीना-मयोगात् ।

कोऽसावर्थः ? इत्याह—"*चित्ताश्रयस्तद्विकल्पः*" इति । विस्तरः— चित्तस्याश्रयः, तदाश्रयस्य विकल्पः स्थितिः संक्लेशः व्यवदानसम्भारो व्यव-दानं चेति । *एतच्च षडायतनं मौलं सत्त्वद्रव्यमिति* । तदितरेषां तदाश्रितत्वात् । तथा हि—षोडन्द्रियाधिपत्यसम्भूतमिन्द्रियाधिष्ठानम्, षड् वा विषया विज्ञान-

---

1. °सुखसंवेदनादिति—का० ।

वेदनाभिः । व्यवदानसम्भरणं पञ्चभि', व्यवदानं त्रिभि' । अतो नाविद्यादीना-मिन्द्रियत्वमिष्टम् ।

**प्रवृत्तेराश्रयोत्पत्तिस्थितिप्रत्युपभोगतः ।**
**चतुर्दश तथान्यानि निवृत्तेरिन्द्रियाणि वा ॥ ६ ॥**

मतविकल्पार्थो **वाशब्दः**। अपरे पुनराहु'—**प्रवृत्तेराश्रयः** षडिन्द्रियाणि । **उत्पत्तिः** स्त्रीपुरुषेन्द्रिये; तत उत्पत्ते. । **स्थितिर्जीवितेन्द्रियम्**; तेनावस्थानात् । **उपभोगो** वेदनादिभिः । अत एतानि **चतुर्दशेन्द्रियाणि** । तेनैव प्रकारेण **निवृत्तेरन्यानि** । श्रद्धादयो[1] हि निवृत्तेराश्रया । आज्ञास्यामीन्द्रियं प्रभवः, स्थितिराज्ञेन्द्रियम्, उपभोग आज्ञातावीन्द्रियेणेत्यत एतावन्त्येवेन्द्रियाणि । अत एव चैषामेषोऽनुक्रम ।

---

कायाश्च—तदेतदपि सत्त्वद्रव्यमिष्यते, न तु मौलम् । न ह्यधिष्ठानाद्याधिपत्य-सम्भूतं षडायतनमिति । *व्यवदानसम्भरण पञ्चभि*रिति । श्रद्धादिभि । *व्यवदानं त्रिभि*रिति । अनाज्ञातमाज्ञास्यामीन्द्रियादिभि ॥ ५ ॥

अपर कल्प —"*प्रवृत्तेराश्रयोत्पत्ति.*" इति । विस्तर.—प्रवृत्तिपक्षं निवृत्ति-पक्षं चाधिकृत्योच्यते । प्रवृत्ते =संसारस्याश्रय , उत्पत्ति., स्थिति , उपभोगश्च । निवृत्तेरपि निर्वाणस्याश्रय , उत्पत्ति', स्थिति , उपभोगश्च । एतावता च पुरुषार्थ-परिसमाप्तिरिति । निरर्थिका तदन्येन्द्रियप्रज्ञप्ति , भवतामपि पुरुषार्थपरिसमाप्ति पठ्यते, तस्य शब्दाद्युपलब्धिरादिर्गुप्तपुरुषान्तरोपलब्धिरन्त इति ? तत्र षडा-यतनं मूलसत्त्वद्रव्यभूतं संसरतीति *प्रवृत्तेराश्रयः* । *उत्पत्तिः स्त्रीपुरुषेन्द्रिय* इति । उत्पद्यतेऽस्या इत्युत्पत्ति । कस्माद् ? इत्याह—*तत उत्पत्ते* । कस्य ? षडायत-नस्य। मन कायेन्द्रिययो. साक्षात् ताभ्यामुत्पत्तेश्चक्षुरादीना चतुर्णा क्रमेणोत्पत्ते. । *स्थितिर्जीवितेन्द्रियेण* षडायतनावस्थानात् । *उपभोगो वेदनादिभि'* । सुखादिभि' । *श्रद्धादयो हि निवृत्तेराश्रया* इति । श्रद्धादीना प्रतिष्ठाभूतत्वात् । आज्ञास्यामीन्द्रियं *प्रभव* इति । आदिभव , प्रथमतोऽनास्रवोत्पत्ते । *स्थिति*राज्ञेन्द्रियम्, प्राबन्धिक-त्वात् । *उपभोग* आज्ञातावीन्द्रियेणेति, तेन विमुक्तिप्रीतिसुखप्रतिसंवेदनात् । *अत एतावन्त्येवेन्द्रियाणीति* । नाविद्यादीनामिन्द्रियत्वमिष्टमित्यर्थं । *अत एव चैषा-मेषोऽनुक्रम* इति। चक्षुरिन्द्रियं यावदाज्ञातावीन्द्रियमिति प्रवृत्तिनिवृत्त्योराश्र-यादिभावात् ।

---

१ श्रद्धादीनि—का० ।

वाचस्तु नेन्द्रियत्वम्; वचने शिक्षाविशेषापेक्षत्वात् । पाणिपादस्य चादान-विहरणादनन्यत्वात् । तदेव हि तदन्यथा अन्यत्र चोत्पन्नमादानं विहरण चोच्यते; विनापि च पाणिपादेनादानविहरणादुरगप्रभृतीनाम् ।

पायोरपि नेन्द्रियत्वम्; उत्सर्गे गुरुद्रव्यस्याकाशे सर्वत्र पतनात् । वायुना च तत्प्रेरणात् ।

उपस्थस्यापि नेन्द्रियत्वम्; आनन्दे स्त्रीपुरुषेन्द्रियकृतं हि तत् सौख्यमिति ।

कण्ठदन्ताक्षिवर्त्माङ्गुलिपर्वणामपि चाभ्यवहरणचर्वणोन्मेषनिमेषाकुञ्चनवि-काशक्रियास्विन्द्रियत्वं प्रसज्येत, सर्वस्य वा कारणभूतस्य स्वस्या क्रियायाम् । इत्ययुक्तं वागादीनामिन्द्रियत्वम् ॥ ६ ॥

---

*वाचस्तु नेन्द्रियत्व वचने शिक्षाविशेषापेक्षत्वात्* । जातमात्रो हि बालको विनैव शिक्षया चक्षुषा रूपाणि पश्यति, न त्वेवं वचनं करोति । तस्मादि-न्द्रियधर्मातिक्रान्तत्वान्न वाक् इन्द्रियं भवितुमर्हति । जिह्वेन्द्रियाधिष्ठानस्यैव त्वेतत् कर्मवचनमिति । *पाणिपादस्य चादानविहरणादनन्यत्वादिति* । पाणिरेव *हि अन्यथान्यत्र चोत्पन्न आदानमुच्यते* । पाद एव चान्यथान्यत्र चोत्पन्नो *विहरण*-मिति, कर्माभावात् । स्वात्मनि च वृत्तिविरोधात् न पाणिपादस्येन्द्रियत्वम् । *उरगप्रभृतीनामिति* । सर्पादीना पाणिपादं नास्ति, अथ च तेषामादानविहरणं भवति । ( इति ) न पाणिपादस्येन्द्रियत्वम् । तेपामप्यस्ति सूक्ष्ममिति चेत् ? न, साध्यत्वात् ।

*पायोरपि नेन्द्रियत्वमुत्सर्गे* इति । अशुच्युत्सर्गे । *गुरुद्रव्यस्य* यस्य कस्यचिद् *आकाशे* छिद्रे सर्वत्र पायुस्थानादन्यत्रापि पतनात् । गुरुद्रव्यस्य गुरुत्वादेव स्वयं पतनम्, नेन्द्रियकर्म । *वायुना च तत्प्रेरणादि*ति । वायुना तस्य गुरोरशुचिद्रव्यस्य प्रेरणा । वायोरेव तत् कर्म स्यात्, न पाय्विन्द्रियस्य, तदनुपलब्धे ।

*उपस्थस्यापि नेन्द्रियत्वमानन्द* इति । कायेन्द्रियैकदेशस्त्रीपुरुषेन्द्रियव्यतिरिक्त-कल्पितस्य उपस्थस्य नेन्द्रियत्वमानन्दे । कायेन्द्रियैकदेशभूतस्त्रीपुरुषेन्द्रियकृतं हि तत् क्लिष्टं सौख्यमिति वाक्यार्थ ।

*कण्ठदन्ताक्षिवर्त्माङ्गुलिपर्वणामपी*ति । विस्तर.—यदि यथोक्तात् कारणादे-तावन्त्येवेन्द्रियाणीति नेष्यते, कण्ठस्याभ्यवहरणे, दन्तस्य चर्वणे, अक्षिवर्त्मन उन्मेषनिमेषे, पर्वणोऽस्थिसन्धिसङ्कोचविकाशक्रियायामिन्द्रियत्वं प्रसज्येत । *सर्वस्य वा कारणभूतस्येति* । विस्तर—सर्वस्य वा कारणभूतस्य बीजादे स्वस्या क्रियाया स्वकार्यक्रियायामङ्कुरादिलक्षणायामिन्द्रियत्वं प्रसज्येतेत्यधि-

तत्र चक्षुरादीनां पुरुषेन्द्रियपर्यन्तानां कृतो निर्देशः। जीवितेन्द्रियस्य विप्रयुक्तत्वाद् विप्रयुक्तेष्वेव ( अ० को० २.४५ ) करिष्यते निर्देशः। श्रद्धादीनां चैत्तेषु ( अ० को० २.२४ ) करिष्यते। सुखादीनामाज्ञास्यामीन्द्रियादीनां च कर्तव्यः। सोऽयं क्रियते—

**दुःखेन्द्रियमसाता या कायिकी वेदना**

अमातेत्युपघातिका, दुःखेत्यर्थः।

---

कृतम्। यदि यस्य यत्र पुरुषकारोऽस्ति, तस्य तत्रेन्द्रियत्वमिष्यते, स च नियमहेतुः पूर्वोक्तो नेष्यते। तस्मादयुक्तं वागादीनामिन्द्रियत्वम् ॥ ६ ॥

*तत्र चक्षुरादीनामि*ति। विस्तरः—तत्रेति वाक्योपन्यासे। *कृतो निर्देश* इति। "तद्विज्ञानाश्रया रूपप्रसादाश्चक्षुरादयः" ( अभि० को० १.९ ), "कायात् स्त्रीपुरुषेन्द्रिये" ( अभि० को० २.२ ), "विज्ञानं प्रतिविज्ञप्तिः" ( अभि० को० १.१६ ) इति। *जीवितेन्द्रियस्ये*ति। "आयुर्जीवितमाधारः ऊष्मविज्ञानयोर्हि यः" ( अभि० को० २.४५ ) इत्यत्र। *श्रद्धादीनां चैत्तेष्विति*। "श्रद्धा-प्रमादः प्रश्रब्धिः" ( अभि० को० २.२५ ) इत्यत्र प्रदेशे। ननु च वेदनाया अपि कृतो निर्देशः, चैत्तेष्वपि करिष्यते—"वेदनानुभवः" ( अभि०को० १.१४ ) इति, "वेदना चेतना संज्ञा" ( अभि० को० २.२४ ) इति वचनात्? सत्यम्, सामान्यं रूपं वेदनाया उक्तम्, वक्ष्यते च, विशेषविभागरूपं त्विह विवक्षितमिति 'सुखादीनां कर्तव्यो निर्देशः' इत्याह। आज्ञास्यामीन्द्रियादीनां तर्हि न कर्तव्यः, यस्मान्मनसो लक्षणमुक्तम्, श्रद्धादीनां चैत्तेषु करिष्यते, सुखसौमनस्योपेक्षाणामिह क्रियते? एषामपि कर्तव्य एव, यस्मान्नवद्रव्यस्वभावत्वमेषां दर्शयितव्यम्। एतस्यां चावस्थायामेतानि नव द्रव्याण्यनाज्ञातमाज्ञास्यामीन्द्रियाख्यां लभन्ते, एतस्यामवस्थायामाज्ञेन्द्रियाख्याम्, एतस्यामाज्ञातावीन्द्रियाख्यां लभन्ते—इति स एषामवस्थाविशेषो दर्शयितव्य इत्यतः सूक्तमेतत्—*सुखादीनामाज्ञास्यामीन्द्रियादीनां च कर्तव्य* इति।

"*असाता या कायिकी वेदना*" इति। 'असाता' इति सातानिवृत्त्यर्थम्। 'कायिकी' इति मानसीनिवृत्त्यर्थम्। तत्र कायाः चक्षुरादयः पञ्च, परमाणुसञ्चयात्मकत्वात्। तत्र काये भवा, कायेन वा आश्रयेण सह चरतीति कायिकी। या *उपघातिका* पञ्चेन्द्रियाश्रया वेदना, तद् "*दुःखेन्द्रियम्*" इत्यवगन्तव्यम्।

**सुखम् ।**

**साता**

**सुखेन्द्रियं** कायिकी **साता** वेदना । शातेत्यनुग्राहिका, सुखेत्यर्थः ।

**ध्याने तृतीये तु चैतसी सा सुखेन्द्रियम् ॥ ७ ॥**

**तृतीये तु ध्याने सैव** साता वेदना **चैतसी सुखेन्द्रियम्** । नहि तत्र कायिकी वेदनास्ति, पञ्चविज्ञानकायाभावात् ॥ ७ ॥

**अन्यत्र सा सौमनस्य**

तृतीयाद् ध्यानादन्यत्र कामधातौ प्रथमे द्वितीये च ध्याने **सा** चैतसिकी साता वेदना **सौमनस्येन्द्रियम्** । तृतीये तु ध्याने प्रीतिवीतरागत्वात् सुखेन्द्रियमेव सा, न सौमनस्येन्द्रियम् । प्रीतिर्हि सौमनस्यम् ।

**असाता चैतसी पुनः ।**

**दौर्मनस्यम्, उपेक्षा तु मध्या**

---

"*सुखम् साता*" इति । अत्र 'इन्द्रियम्' इत्यनुवर्तते, 'कायिकी' इति च । 'साता' इति ग्रहणमसातानिवृत्त्यर्थम् । तदेतदुक्तं भवति—तत् सुखेन्द्रियम्, या *अनुग्राहिका* पञ्चेन्द्रियाश्रया वेदनेति ।

"*ध्याने तृतीये तु चैतसी सा सुखेन्द्रियम्*" इति । तृतीये तु ध्याने चैतस्यपि साता वेदना सुखेन्द्रियमिति व्यवस्थाप्यते । कस्मात् चैतस्येव साता तत्र गृह्यते, न कायिकी ? इत्यत आह—*न हि तत्र कायिकी वेदनास्ति, पञ्चविज्ञानकायाभावाद्* इति ॥ ७ ॥

तृतीये ध्याने कस्मात् सा न सौमनस्येन्द्रियम् ? अत आह—*तृतीये तु ध्याने प्रीतिविरागत्वात् सुखेन्द्रियमेव सा*, न सौमनस्येन्द्रियम् । सातत्वाद्धि सुखमुच्यते, न प्रीतिः, सम्प्रहर्षाकारत्वात् । तथा हि सूत्रे उक्तम्—"प्रीतेर्विरागादुपेक्षको विहरति" इति विस्तरेण यावत् "स्मृतिमान् सुखविहारी तृतीयं ध्यानमुपसम्पद्य विहरति" ( ) इति । सौमनस्यादन्या प्रीतिरिति चेद् ? अत आह—*प्रीतिर्हि सौमनस्यमिति* ।

"*असाता चैतसी पुनः दौर्मनस्यम्*" इति । उपघातिका चैतसिकी वेदना दौर्मनस्यम् ।

"*उपेक्षा तु मध्या*" इति । उपेक्षेन्द्रियं तु या मध्या वेदना ( सा ) नैव साता नासातेत्यर्थः ।

नैवसातानासाता अदु:खसुखा वेदना मध्येत्युच्यते । सोपेक्षेन्द्रियम् ।

किं कायिकी चैतसिकी ? इत्याह—

**उभयी**

किं पुनः कारणम्—इयमभिसमस्यैकमिन्द्रियं क्रियते ?

**अविकल्पनात् ॥ ८ ॥**

चैतसिकं हि सुखदुःखं प्रायेण विकल्पनादुत्पद्यते, न तु कायिकम्; विषयवशादर्हतामप्युत्पत्ते । अतस्तयोरिन्द्रियत्वेन भेदः । उपेक्षा तु स्वरसेनैवाविकल्पयत[1] एवोत्पद्यते कायिकी चैतसिकी [2]वेत्येकमिन्द्रियं क्रियते । अन्यथा च कायिकं सुखमनुगृह्णाति, अन्यथा चैतसिकम् । एवं दुःखमन्यथा कायिकमुपहन्त्यन्यथा चैतसिकम् । उपेक्षायां नैष[3] विकल्पोऽस्ति, अत उपेक्षणं प्रत्यविकल्पनादभेदः ।

**दृग्भावनाऽशैक्षपथे नव त्रीणि**

---

*"उभयी"* इति । उभयावयवावस्था[4] *उभयी* । कायिकी, चैतसिकीत्यर्थः ।

*"अविकल्पनात्"* इति । अभिनिरूपणविकल्पाभावादित्यर्थः । *प्रायेणेति* ग्रहणं समाधिजविपाकजप्रीतिसुखपरिवर्जनार्थम् । न तु *कायिकमिति* । न कायिकं सुखदुःखं विकल्पनादुत्पद्यते, किं कारणम् ? इत्याह—*विषयवशादर्हतामप्युत्पत्तेरिति* । प्रहीणप्रियाप्रियविकल्पानामप्यर्हतां विषयवशेनैव कायिकसुखदुःखोत्पादात् । *अतस्तयोरिन्द्रियत्वेन भेद* इति । तयोः कायिकचैतसिकयोः सुखयोः, दुःखयोश्च इन्द्रियत्वेन भेदः = पृथक्त्वम्—सुखेन्द्रियम्, सौमनस्येन्द्रियम्; दुःखेन्द्रियम्, दौर्मनस्येन्द्रियमिति । *उपेक्षा तु स्वरसेनैव* अनभिसंस्कारेणा*विकल्पयत एव* अनभिरूपयत *एवोत्पद्यते कायिकी चैतसिकी वा* विपाकजा नैष्यन्दिकी वा । तस्माद् *एकमिन्द्रियं क्रियते* इन्द्रियत्वेनाभेद उपेक्षेन्द्रियमिति । *अन्यथा च कायिकमिति* । विस्तरः—अन्येनानुभवरूपविशेषेण *कायिकमुपहन्ति*, अन्येन *चैतसिकमिति* । *उपेक्षाया नैष विकल्प* इति । एष स्वरूपविशेषलक्षणो विकल्पो नास्ति । अत *उपेक्षणं प्रति* उपेक्षाक्रिया प्रति *अविकल्पनाद्* अस्वभानविशेषादभेदः ॥ ८ ॥

*"दृग्भावनाऽशैक्षपथे"* इति । दृग्=दर्शनम् । दृशो भावनाया अशैक्षस्य च पन्था दृग्भावनाशैक्षपथः, तस्मिन्नेव मार्गत्रये यानि मनःसुखसौमनस्योपेक्षा-

---

१ स्वरसेनाविकल्पयत—का० ।  २ चेत्ये०—का० ।  ३. त्वेष—का० ।

४ उभयावयवावस्था—इति मुद्रित पाठः ।

मन सुखसौमनस्योपेक्षा, श्रद्धादीनि च पञ्च—तानि **नवेन्द्रियाणि** त्रिषु मार्गेषु **त्रीणीन्द्रियाण्युच्यन्ते**—दर्शनमार्गे अनाज्ञातमाज्ञास्यामीन्द्रियम्, **भावना-मार्गे** आज्ञेन्द्रियम्, **अशैक्षमार्गे** आज्ञातावीन्द्रियमिति।

किं कारणम्? दर्शनमार्गे ह्यनाज्ञातमाज्ञातुं प्रवृत्त। भावनामार्गे नास्त्यपूर्व-माज्ञेयं तदेव त्वाजानाति शेषानुशयप्रहाणार्थम्। अशैक्षमार्गे त्वाज्ञातमित्यवगम आज्ञाताव., सोऽस्यास्तीति आज्ञातावी। आज्ञातमवितुं शीलमस्येति वा; क्षयानुत्पादिज्ञानलाभात्। "दुखं मे परिज्ञात न पुनः परिज्ञातव्यम्" (          ) इति तथाभूतस्येन्द्रियमाज्ञातावीन्द्रियम्॥

स्वभावनिर्देश कृत्वा प्रकारभेदो वक्तव्यः—कति सास्रवाणि, कत्यना-स्रवाणि इन्द्रियाणीत्येवमादि। तत्र तावद् यदेतदनन्तरोक्तमाज्ञास्यामीन्द्रियादि-कम्, एतत्—

---

श्रद्धावीर्यस्मृतिसमाधिप्रज्ञाख्यानि नव द्रव्याणि, तानि *दर्शनमार्गे अनाज्ञात-माज्ञास्यामीन्द्रियम्, भावनामार्गे आज्ञेन्द्रियम्, अशैक्षमार्गे आज्ञातावीन्द्रिय*मिति व्यवस्थाप्यन्ते, अन्योन्यमपेक्षमाणानि तानि नव द्रव्याणि तत्तन्नाम लभन्ते। "*नव*" इति च कलापान्तरापेक्षयैवमुक्तम्। न त्वेकस्मिन् चित्तकलापे नव द्रव्याणि भवन्ति, सुखसौमनस्योपेक्षेन्द्रियाणामेकतरस्यैव भावात्। यदि हि स मार्गोऽनागम्यध्यानान्तरचतुर्थध्यानाकाशविज्ञानाकिञ्चन्यायतनभूमिक, तत्रो-पेक्षेन्द्रियमेव, न सुखसौमनस्येन्द्रिये। यदि प्रथमद्वितीयध्यानभूमिक., तत्र सौमनस्येन्द्रियमेव। यदि तृतीयध्यानभूमिक, तत्र सुखेन्द्रियमेव, नान्यदिति।

*अनाज्ञातमाज्ञातुं प्रवृत्त* इति। अनाज्ञातं सत्यचतुष्टयम्, आज्ञातुम् = वेदितुम्, प्रवृत्त.=आज्ञास्यामीति प्रारब्ध। तस्येन्द्रियमनाज्ञातमाज्ञास्यामीन्द्रियम्। अलुक्समास: (पा० सू० ६.३ १४)। आख्यातप्रतिरूपकश्चायम् 'आज्ञास्यामि' इति शब्द। भावनामार्गे नास्त्यपूर्वमाज्ञेयम्, *तदेव तु सत्यचतुष्टयमाजानाति*। *शेषानुशयप्रहाणार्थं* भावनाहेयक्लेशप्रहाणार्थम्। तस्याज्ञस्य पुद्गलस्येन्द्रियम् आज्ञेन्द्रियम्। आज्ञमेवेन्द्रियमिति वा। *अशैक्षमार्गे त्वाज्ञातमित्यवगम आज्ञा-ताव* इति। अर्थकथनमात्रमेतत्। शब्दविग्रहस्त्वेवं कर्तव्य—आज्ञातमित्याव आज्ञाताव.। अवतेर्घञि रूपमेतद्—आव इति। सोऽस्यास्तीति मत्वर्थीय आज्ञा-तावी। आज्ञातमवितुं शीलमस्येति वेति ताच्छीलिको णिनिः। *तथाभूतस्ये-न्द्रियमि*ति। तथाभूतस्य पुद्गलस्येन्द्रियम्, आज्ञाताविन इत्यर्थः॥

**अमलं त्रयम् ।**

अनास्रवमित्यर्थः । मलनामास्रवपर्यायत्वात् ।

**रूपीणि जीवितं दु:खे सास्रवाणि**

**रूपीणि** सप्तेन्द्रियाणि जीवितेन्द्रियं दु:खदौर्मनस्येन्द्रिये चैकान्तसास्रवाणि । **रूपीणि** पुनः सप्त चक्षुश्रोत्रघ्राणजिह्वाकायस्त्रीपुरुषेन्द्रियाणि रूपस्कन्धसंग्रहात् ।

**द्विधा नव ॥ ९ ॥**

मनःसुखसौमनस्यापेक्षाः श्रद्धादीनि च पञ्च एतानि नवेन्द्रियाणि सास्रवाणि, अनास्रवाण्यपि । अनास्रवाण्येव श्रद्धादीनि—इत्येके । उक्तं हि भगवता—"यस्येमानि पञ्चेन्द्रियाणि सर्वेण सर्वाणि न सन्ति तमहं बाह्यं पृथग्जनपक्षावस्थितं वदामि" (　　　　) इति । नेदं ज्ञापकम्; तेषामनास्रवत्वमधिकृत्य वचनात् । तथा ह्यार्यपुद्गलव्यवस्थानं कृत्वा 'यस्येमानि' इत्याह ।

---

"*अमलं त्रयम्*" इति । अमलमेव त्रयमित्यवधार्यते । ननु चायमनास्रवसास्रवप्रकारभेद उक्तो *धातुनिर्देशे*—"अनास्रवा मार्गसत्यम्" ( अभि० को० १ ५ ) इति, तथा "सास्रवानास्रवा एते त्रय., शेषास्तु सास्रवा." ( अभि० को० १ ३१ ) इत्यादिवचनात् ? सत्यमुक्तोऽयमेवमादिः प्रकारभेद, स तु सामान्यरूपेणोक्त, न भेदरूपेण । अत शिष्यसुखप्रतिपत्त्यर्थमयमेवमादिप्रकारभेद प्रतिपदरूपेण पुनरभिधीयत इत्येवमवगन्तव्यम् ।

"द्विधा नव" इति न सूत्रयितव्यम्, एकान्तानास्रवसास्रवनिर्धारणादेव द्विधा नवेति सिद्धे. ? यदि ह्येतानि नवैकान्तेनानास्रवाणि स्यु, एकान्तानास्रवेष्वाज्ञास्यामीन्द्रियादिषु पठ्येरन्, तथैकान्तसास्रवाणि स्यु., एकान्तसास्रवेषु रूपीन्द्रियजीवितदु:खदौर्मनस्येषु पठ्येरन्, न चैवम्, अतो नव द्विधेति सिद्धम् ? अस्त्येतदेवम्, मतान्तरनिवृत्त्यर्थं तु पुनिरदमुच्यते—"*नव द्विधा*" इति । द्विधैव नव नानास्रवाणि यथैके कथयन्ति, तन्निद्धये चागममानयन्ति—*यस्येमानीति* । विस्तर·—*सर्वेण सर्वाणि न सन्तीति* । सर्वेण प्रकारेण मृदुमध्याधिमात्रभेदेन । सर्वाणीति पञ्चापि न सन्तीत्यर्थ । *पृथग्जनपक्षावस्थितं वदामीति* वचनात् । अर्थादेतदुक्तं भवति—यस्येमानि सन्ति स आर्य इति । *नेदं ज्ञापकं तेषामनास्रवत्वमधिकृत्येत्याचार्यः* । तथा हि *आर्यपुद्गलव्यवस्थानं कृत्वा यस्येमानीत्याहेति* । कथम् ? "पञ्चेमानि, भिक्षव., इन्द्रियाणि । कतमानि पञ्च ? श्रद्धेन्द्रियं यावत् प्रज्ञेन्द्रियम् । एषा पञ्चानामिन्द्रियाणा तीक्ष्णत्वात् परिपूर्णत्वा-

पृथग्जनो वा द्विविध —आभ्यन्तरकश्चासमुच्छिन्नकुशलमूल., बाह्यकश्च समुच्छिन्नकुशलमूल. । तमधिकृत्याह—"बाह्य पृथग्जनपक्षावस्थितं वदामि" इति ।

उक्तं च सूत्रे— "सन्ति च सत्त्वा लोके जाता लोके वृद्धास्तीक्ष्णेन्द्रिया अपि मध्येन्द्रिया अपि मृद्विन्द्रिया अपि इत्यप्रवर्त्तित एव धर्मचक्रे" । तस्मात् सन्त्येव सास्रवाणि श्रद्धादीनि ।

---

दर्हन् भवति । ततस्तनुतरैर्मृदुतरैरनागामी भवति । ततस्तनुतरैर्मृदुतरै सकृदागामी । ततस्तनुतरैर्मृदुतरै स्रोतआपन्न । ततोऽपि तनुतरैर्मृदुतरैर्धर्मानुसारी । ततस्तनुतरैर्मृदुतरै. श्रद्धानुसारी । इति हि, भिक्षव , इन्द्रियपारमिता प्रतीत्य फलपारमिता प्रज्ञायते । फलपारमिता प्रतीत्य पुद्गलपारमिता प्रज्ञायते । यस्येमानि पञ्चेन्द्रियाणि सर्वेण सर्वाणि न सन्तीति तमहं बाह्य पृथग्जनपक्षावस्थितं वदामि" ( ) इति । तदेवमार्यपुद्गलव्यवस्थानं कृत्वा 'यस्येमानि' इत्याह *भगवानिति* ।

*पृथग्जनो वा द्विविध* इति । *आभ्यन्तरकश्च, बाह्यकश्च । असमुच्छिन्नकुशलमूल* आभ्यन्तरक , बौद्धसंगृहीतत्वात् । *समुच्छिन्नकुशलमूलस्तु* बाह्यक , तद्विपर्ययात् । अत एव च 'बाह्यम्' इति विशेषणम् । इतरथा हि 'पृथग्जनपक्षावस्थितं वदामि' इत्येवावक्ष्यत् ।

*उक्तं च सूत्र इति* । "अथ भगवतोऽभिचाराभिसम्बुद्धस्यैतदभवत्—'अधिगतो म धर्मो गम्भीरो गम्भीरावभासो दुर्दर्शो दुरवबोधोऽतर्क्योऽतर्कावचर., सूक्ष्मो निपुण पण्डितवेदनीय , त चाहं परेषामावेदयम् । तं च परे न विजानीयु ।.स मम स्याद् विघात , स्यात् क्लमथ., स्याच्चेतसोऽनुदय. । यं न्वहमेकाकी अरण्ये प्रवणे दृष्टधर्मसुखविहारतायोगमनुयुक्तो विहरेयम् ।' अथ ब्रह्मण: सहापतिर्ब्रह्मलोके स्थितस्यैतद् अभवत्—'नश्यति बतायं लोक , प्रणश्यति बतायं लोक , यत्रेदानी कदाचित् कर्हिचित् तथागता अर्हन्त. सम्यक्सम्बुद्धा. लोक उत्पद्यन्ते तद्यथोदुम्बरपुष्पम् ! तस्य चाद्य भगवतोऽल्पोत्सुकविहारिताया चित्तं क्रामति, न धर्मदेशनायाम्, यं न्वहं गत्वा अध्येषयेयम् ।' अथ ब्रह्मा सहापतिस्तद्यथा बलवान् पुरुष. सम्मिञ्जितं बाहुं प्रसारयेत्, प्रसारितं वा सम्मिञ्जयेत एवमेव ब्रह्मा सहापतिर्ब्रह्मलोकेऽन्तर्हितो भगवत. पुरस्तात् प्रत्यस्थात् । अथ ब्रह्मा तस्या वेलाया गाथामभाषत—

प्रादुर्बभूव मगधेषु पूर्वं धर्मो ह्यशुद्धः समलानुबद्ध ।

पुनश्चोक्तम्—"यावच्चाहमेषा पञ्चानामिन्द्रियाणां समुदय चास्तगम च स्वादं चादीनवं च निस्सरणं च यथाभूतं नाभ्यज्ञासिषं न तावदहमस्मान् सदेवकाल्लोकाद्" (                ) इति विस्तर.। न चानास्रवाणामेष[1] परीक्षा प्रकारः ॥ ९ ॥

कतीन्द्रियाणि विपाकः ? कति न विपाकः ? एकान्तेन तावत्—

**विपाको जीवितं**

अथ यदर्हन् भिक्षुरायुःसंस्कारान् स्थापयति तज्जीवितेन्द्रियं विपाक ? शास्त्रे ( ज्ञा० प्र० १२, १४ ) उक्तम्—"कथमायु.सस्कारान् स्थापयति ? अर्हन् भिक्षुः ऋद्धिमाश्चेतोवशित्व प्राप्तः संघाय वा पुद्गलाय वा पात्र वा चीवरं वा अन्यतमान्यतम वा श्रामणकं जीवितपरिष्कारं वा दत्त्वा तत् प्रणिधाय प्रान्त-

---

अथ भगवानस्या वेलायाम् इमे गाथे अभाषत—

'कृच्छ्रेण मे अधिगतो ब्रह्मन् खिला प्रविदाल्य ।
भवरागपरीतैश्च नायं धर्मं सुसम्बोध ॥
प्रतिस्रोतोपमं मार्गं गम्भीरमतिदुर्दशम् ।
न द्रक्ष्यन्ति रागरक्तास्तम स्कन्धेन चावृना ॥'

ब्रह्मावोचत्—'सन्ति, भदन्त, सत्त्वा लोके जाता लोके वृद्धास्तीक्ष्णेन्द्रिया अपि मध्येन्द्रिया अपि मृद्विन्द्रिया अपि इत्यप्रवर्तित एव स्वधर्मचक्रे" ( म० व० १. ५ ७-८ ) इति। विस्तर.—इन्द्रियाणि श्रद्धादीनि, यस्ते भव्या उक्ता । यस्माद् "अप्रवर्त्तितेऽपि धर्मचक्रे सन्ति तीक्ष्णेन्द्रिया" इत्याद्युक्तम्, तस्मात् *सन्त्येव सास्रवाणि श्रद्धादीनीति* । *सदेवकाल्लोकादिति* । विस्तर.—"न तावदहं अस्मात् सदेवकाल्लोकात् समारकात् सब्रह्मकात् सश्रमणब्राह्मणिकायाः प्रजायाः सदेवमानुषाया मुक्तो नि.सृतो विसंयुक्तो विप्रमुक्तो विपर्यासापगतेन चेतसा बहुलं व्यवहार्षम्" इति विस्तरवचनम् । *न चानास्रवाणामेष परीक्षाप्रकार* इति । न ह्यनास्रवाणामास्वाद आदीनवो नि.सरणं वा युज्यते ॥ ९ ॥

*अर्हन्निति* । नानागामी, क्लेशविमुक्तसन्तानत्वात् । *ऋद्धिमानिति* । प्राप्ताभिज्ञः। चेतोवशित्वं प्राप्त इति असमयविमुक्त.। *जीवितपरिष्कारमिति*। जीविताय परिष्कारः तदनुगुणत्वात् । *दत्त्वा तत्प्रणिधायेति* । तदायु प्रणिधाय चेतसि कृत्वेत्यर्थः । कथम् ? इत्याह—*यन्मे भोगविपाकं कर्म तदायुर्विपाकं भवतु इति* ।

---

१. चानास्रवाणा धर्माणा०—का० ।

कोटिकं चतुर्थं ध्यान समापद्यते। स तस्मात् व्युत्थाय चित्तमुत्पादयति वाचं च भाषते—'यन्मे भोगविपाक कर्म[1] तदायुर्विपाकं[2] भवतु' इति तस्य यत् भोगविपाकं तदायुर्विपाक भवति

येषा पुनरयमभिप्राय —विपाकोच्छेष विपच्यत इति। त आहु—"पूर्वजातिकृतस्य कर्मणो विपाकोच्छेषम् स भावनाबलेनाकृष्य प्रतिसवेदयते" ( ) इति। कथमायुसंस्कारानुत्सृजति? तथैव दान दत्त्वा प्रणिधाय प्रान्तकोटिकं चतुर्थं ध्यानं समापद्यते—'यन्मे आयुर्विपाक तद् भोगविपाकं भवतु' इति। तस्य तथा भवति।

**भदन्तघोषकस्त्वाह**—"तस्मिन्नेव आश्रये रूपावचराणि महाभूतानि ध्यानबलेन सम्मुखीकरोत्यायुषोऽनुकूलानि वैरोधिकानि च। एवमायुःसंस्कारान् स्थापयति, एवमुत्सृजति" ( ) इति।

एवं तु भवितव्यम्—समाधिप्रभाव एव स तेषां तादृशो येन पूर्वकर्मज[3] स्थितिकालावेधमिन्द्रियमहाभूतानां व्यावर्त्तयन्ति[4], अपूर्वं च समाधिजमावेधमाक्षिपन्ति। तस्मान्न तज्जीवितेन्द्रियं विपाकम्, ततोऽन्यत् तु विपाकः।

---

*प्रान्तकोटिक*मिति। "वृद्धिकाष्ठागतम्" ( अभि० को० ७ ४१ ) इति लक्षणमस्य वक्ष्यते। *चित्तमुत्पादयति, वाचं च भाषते* इति। चित्तवाचावपि तत्सिद्धये कुर्यात्। नैककारणसाध्यं हि कार्यम्, तदनेन विपाक एव जीवितेन्द्रियमिति दर्शयति। *यन्मे भोगविपाकं कर्म तदायुर्विपाकदायि भवत्विति*। ध्यानभावनाबल तु तस्या आकर्षकमिति।

*विपाकोच्छेषं विपच्यत* इति। अकालमरणेनापरिसमाप्तफलस्य त्यक्तस्य जन्मान्तकर्मणो भावनाबलेन विपाकोच्छेषमाकृष्य प्रतिसंवेदयते। तेषा तादृश इति। तेषाम्=योगिनाम्।

*पूर्वकर्मजं स्थितिकालावेध*मिति। पूर्वस्मिन् जन्मनि कर्म पूर्वकर्म, ततो जात पूर्वकर्मज, स्थितिरिन्द्रियं महाभूताना प्रवाहः, स्थिते. काल स्थितिकाल, तस्यावेध. आक्षेप.। स्थितिकालावेधस्तावत् संस्कारक्षणानुबन्धसामर्थ्यमाक्षेप., तेन ह्यसौ स्थितिकाल आविध्यते। तं पूर्वकर्मजं स्थितिकालावेधमिन्द्रियमहाभूताना व्यावर्तयन्ति योगिन, *अपूर्वं च समाधिजमागन्तुकमाक्षिपन्ति*।

---

१ का० पुस्तके नास्ति। २ तदायुर्विपाकदायि—का०।
३ पूर्वकर्मजं च—का०। ४ व्यावर्तयन्ते—पाठा०।

प्रश्नात् प्रश्नान्तरमुपजायते—किमर्थमायुःसंस्कारानधितिष्ठन्ति ? पर-हितार्थम्, शासनस्थित्यर्थं च[१]। ते ह्यात्मनः क्षीणमायुः पश्यन्ति, न च तत्रान्यं शक्तं पश्यन्ति।

अथ किमर्थमुत्सृजन्ति ? अल्पं च परहितं जीविते पश्यन्ति रोगादिभूतं[२] चात्मभवम्। यथोक्तम्—

"सुचीर्णे ब्रह्मचर्येऽस्मिन् मार्गे चैव सुभाविते।
तुष्ट आयुःक्षयात् भवति रोगस्यापगमे यथा॥" इति।

अथैतदायुःसंस्काराणां स्थापनार्थमुत्सर्जनं वा क्व कस्य च[३] वेदि-तव्यम् ? मनुष्येष्वेव त्रिषु द्वीपेषु स्त्रीपुरुषयोरसमयविमुक्तस्यार्हतः प्रान्तकोटिक-ध्यानलाभिनः। तस्य हि समाधौ च[४] वशित्वम्। क्लेशैश्चानुपस्तब्धा सन्ततिः। सूत्र उक्तम्—"भगवान् जीवितसंस्कारानधिष्ठायायुःसंस्कारानुत्सृष्टवान्।"

तेषां को विशेषः ? न कश्चिदित्येके। तथा ह्युक्तम्—"जीवितेन्द्रियं कतमत् ? त्रैधातुकमायुः (मू० शा० ) इति।

पूर्वकर्मफलमायुःसंस्काराः, प्रत्युत्पन्नकर्मफलं जीवितसंस्कारा इत्यपरे।

---

*प्रश्नात् प्रश्नान्तरमुपजायत* इति। 'अथ यदर्हन् भिक्षुरायुःसंस्कारान् स्थापयति तज्जीवितेन्द्रियं कस्य विपाकः' इत्यस्मात् प्रश्नात् *किमर्थमायुःसंस्कारानधितिष्ठन्तीति* प्रश्नान्तरम्। *परहितार्थं शासनस्थित्यर्थं* चेति। परहितार्थमेव बुद्धा भगवन्तः, शासनस्थित्यर्थमेव श्रावकाः। *रोगादिभूतं चात्मभाव*मिति। रोगगण्डशल्यादिभूतम्, त्रिदुःखतायोगात्।

*क्व कस्य* चेति। 'क्व' इत्यस्य प्रश्नविसर्जनम्—*मनुष्येष्वेव त्रिषु द्वीपेष्विति*। 'कस्य' इत्यस्य विसर्जनम्—*स्त्रीपुरुषयोरसमयविमुक्तस्यार्हतः प्रान्तकोटिध्यानलाभिन* इति। *तस्य हीति*। विस्तरः—*समाधौ च वशित्वं* प्रान्तकोटिकध्यानलाभिनः, तीक्ष्णेन्द्रियत्वात्। *क्लेशैश्चानुपस्तब्धा सन्ततिः*, निरवशेषक्लेशप्रहाणात्। दृष्टिप्राप्तस्य यद्यपि समाधौ वशित्वमस्ति, न तु तस्य क्लेशैरनुपस्तब्धा सन्ततिः। समयविमुक्तस्य यद्यपि क्लेशैरनुपस्तब्धा सन्ततिः, न तु समाधौ वशित्वम्। असमयविमुक्तस्य तूभयमस्ति।

---

१ वा—का०।  २ रोगाभिभूतं—का०।
३ वा—का०।  ४ का० पुस्तके नास्ति।

यैर्वा निकायसभागस्थितिस्त आयुःसंस्काराः। यैस्तु कालान्तरं जीवति ते जीवितसंस्कारा इति।

बहुवचनं बहूनामायुर्जीवितसंस्काराणाम्[1] उत्सर्जनाधिष्ठात्। न ह्येकस्य क्षणस्योत्सर्जनमधिष्ठानं चास्ति। न च कालान्तरस्थावरमेकमायुर्द्रव्य न भवतीति द्योतनार्थमित्येके।

बहुष्वेव संस्कारेष्वायुराख्या। नैकमायुर्नाम द्रव्यमस्ति; अन्यथा हि नैव संस्कारग्रहणमकरिष्यदित्यपरे।

किमर्थं पुनर्भगवता आयुसंस्कारा उत्सृष्टाश्च, अधिष्ठिताश्च? मरणवशित्वज्ञापनार्थमुत्सृष्टाः, जीवितवशित्वज्ञापनार्थमधिष्ठिता—त्रैमास्यमेव नोर्ध्वम्, विनेयकार्याभावात्। यच्चापि तत् प्रतिज्ञातम्—"एवम्भावितैरहं चतुर्भिर्ऋद्धिपादैराकाङ्क्षन् कल्पमपि तिष्ठेयम्, कल्पावशेषमपि" ( ) इति, तस्यापि सम्पादनार्थम्।

---

बहुवचनमिति। जीवितसंस्कारानिति यद्वचनं तद् बहुवचनम्। कस्माद्? इत्याह–*बहूनामिति*। विस्तर—बहूना सन्तानवर्तिना *जीवितसंस्काराणामुत्सर्जनाधिष्ठानात्*। न ह्येकस्य क्षणस्य उत्सर्जने अधिष्ठाने वा प्रयोजनमस्ति, प्रवाहेण परकार्याभिनिष्पादनात्। एकस्य च क्षणस्यापोढाकरत्वात्। *न च कालान्तरस्थावरमिति*। कालान्तरस्थानशीलं कालान्तरस्थावरम् = अक्षणिकम्। तच्चैतद् *आयुर्द्रव्यं न भवतीति द्योतनार्थं बहुवचनमित्येके*।

*बहुष्वेव संस्कारेष्विति*। सौत्रान्तिकानामयं पक्ष। एकस्मिन्नपि क्षणे बहवस्ते संस्कारा, येष्वायुरिति प्रज्ञप्ति। *नैकमायुर्नाम द्रव्यमस्ति*। ते च संस्काराः पञ्चस्कन्धस्वभावा, चतुःस्कन्धस्वभावा वा द्रष्टव्या। *अन्यथा हि नैव संस्कारग्रहणमकरिष्यत्*। एवं तु वक्तव्यमभविष्यत्—'भगवान् जीवितान्यधिष्ठायायूंष्युत्सृष्टवान्' इति।

*मरणवशित्वज्ञापनार्थमिति*। मरण वशित्वमस्तीति। *त्रैमास्यमेव नोर्ध्वमिति*। त्रयो मासाः समाहृतास्त्रिमासम्, त्रिमासमेव त्रैमास्यम्। अत्र "कालाध्वनोरत्यन्तसंयोगे" (पा० सू० २.३.५) इति द्वितीया भवति। नोर्ध्वं त्रैमास्याद्, *विनेयकार्याभावात्* सुभद्रावसानत्वात् बुद्धकार्यस्य। *तस्यापि सम्पादनार्थमिति*।

---

1. जीवितसंस्कारक्षणानाम्—का०।

स्कन्धमरणमारयोर्निर्जयार्थमिति वैभाषिकाः । बोधिमूले क्लेशदेवपुत्रमारौ निर्जिताविति ।

निष्ठितमानुषङ्गिकम् ॥

प्रकृतमेवारभ्यते—

**द्वेधा द्वादश**

कतमानि द्वादश ?

**अन्त्याष्टकादृते ।**

**दौर्मनस्याच्च**

**अन्त्यमष्टकं** श्रद्धादीनि **दौर्मनस्य** च वर्जयित्वा ।

जीवितेन्द्रियादन्यानि द्वादश द्विविधानि इन्द्रियाणि[1]—विपाकश्चाविपाकश्च । तत्र चक्षुरादीनि सप्तौपचयिकानि अविपाकः, शेषाणि विपाकः । मनोदुःखसुखसौमनस्योपेक्षेन्द्रियाणि कुशलक्लिष्टानि[2], तान्यविपाकः[2] । ऐर्यापथिकशैल्पस्थानिक-

---

प्रतिज्ञातसम्पादनार्थम् । अन्यथा वचनमात्रं स्यादिति । *कल्पावशेषं* । कल्पः एकः सकलः, कल्पाधिकः कल्पः सातिरेक इत्यर्थः ।

*स्कन्धमरणमारयोरि*ति । चत्वारो माराः—देवपुत्रमारः, क्लेशमारः, स्कन्धमारः, मरणमारश्चेति । तत्र प्रथमे यामे देवपुत्रमारो निर्जितः । द्वितीये यामे दिव्येन चक्षुषा लोकं व्यवलोक्य तृतीये यामे क्लेशमारो निर्जितः । *वैशाल्यां* तु त्रैमास्यं जीवितसंस्कारानधिष्ठाय आयुःसंस्कारानुत्सृष्टवान् । स्कन्धमारनिर्जयार्थमुत्सृष्टाः स्कन्धाः, तेषूत्सृष्टेषु मर्तव्यं स्यात् । अतो मरणमारनिर्जयार्थमधिष्ठिता इति *वैभाषिकाः* ।

*निष्ठितमानुषङ्गिकं* यत् प्रश्नात् प्रश्नान्तरमुपजातम् ॥

"*द्वेधा द्वादश*" इति । द्वेधैव द्वादश एवेत्यवधार्यते । ऋते अन्त्यादष्टकाच्छ्रद्धादिकादाज्ञातावीपर्यन्ताद् ।

"*दौर्मनस्याच्च*" । *जीवितेन्द्रियादेकान्तविपाकादन्यानि* द्वादशेन्द्रियाणि विपाकश्च, अविपाकश्च । *तत्र* चक्षुरादीनि पुरुषेन्द्रियावसानानि सप्त स्वप्राप्यभिनिर्वृत्तानि *औपचयिकान्यविपाकः* । *मनोदुःखसुखमिति* विस्तरः । यानि मनआदीनि *कुशलक्लिष्टानि तान्यविपाकः* । यानि च यथायोगमैर्यापथिक-शैल्प-

---

१. वा० पुस्तके नास्ति । २–२. कुशलक्लिष्टान्यविपाकः—का० ।

नैर्माणिकानि च यथायोगम् । शेषाणि विपाक. । जीवितेन्द्रियं चक्षुरादीनि द्वादश हित्वा शेषाण्यविपाक इति सिद्धम् ।

यदि दौर्मनस्येन्द्रियं न विपाक इति, सूत्र कथ नीयते—"त्रीणि कार्याणि—सौमनस्यवेदनीय कर्म, दौर्मनस्यवेदनीय कर्म, उपेक्षावेदनीयं कर्म" इति ? सम्प्रयोगवेदनीयतामधिकृत्योक्तम् । दौर्मनस्येन सम्प्रयुक्त कर्म दौर्मनस्यवेदनीयम्, यथा—सुखसम्प्रयुक्तः स्पर्शः सुखवेदनीयः ।

सौमनस्योपेक्षावेदनीये अपि तर्हि कर्मणी एवं भविष्यतः ? यथेच्छसि तथाऽस्तु । सम्प्रयोगेऽपि न दोप', विपाकेऽपि न दोष. । अगत्या ह्येतदेवं गम्येत ।

---

पस्थानिक-नैर्माणिकस्वभावानि *अव्याकृतानि*, तान्यविपाक । *यथायोग*मिति विशेषणमैर्यापथिकादोना मानमत्वेन दु खेन्द्रियासम्भवात्, सुखसौमनस्ययोश्च कचिदसम्भवात् । तत्र कामधातावैर्यापथिकं मनइन्द्रियं तत्सम्प्रयुक्ते च सौमनस्योपेक्षेन्द्रिये अविपाक । रूपधातावैर्यापथिकं मनइन्द्रियमविपाक., वेदनेन्द्रियं च तत्सम्प्रयुक्तं यथाभूमि । नैमाणिकं पञ्चभूमिकम्, तत्र चोपेक्षेन्द्रियमेवाविपाक । "ऐर्यापथिकशैल्पस्थानिकनर्माणिकानि नित्यमुपक्षेन्द्रियेण सम्प्रयुक्तानि" इति *भदन्तानन्तवर्मा* । *शेषाणि विपाक* इति । कुशलक्लिष्टैर्यापथिक-शैल्पस्थानिक-नैर्माणिकस्वभावेभ्योऽन्यानि मनइन्द्रियादीनि विपाकजानि विपाक । *शेषाण्यविपाक इति सिद्धमिति* । जीवितेन्द्रियं द्वादशचक्षुरादीनि हित्वा तदवधारणादेव शेषाण्यविपाक इति सिद्धम् । कतमानि पुनस्तानि ? दौर्मनस्येन्द्रियं न विपाकः, कुशलाकुशलत्वात् । तथा हि वक्ष्यति—"तत्वेकं सविपाकम्" इति । श्रद्धादीन्यष्टकं कुशलमित्यविपाक , "विपाकोऽव्याकृतो धर्म. सत्त्वाख्य." ( अभि० २ ५७ ) इति विपाकलक्षणाभावात् ।

*यदि दौर्मनस्येन्द्रिय न विपाक* इति । अनेनागमविरोधं दर्शयति । *सम्प्रयोगवेदनीयतामधिकृत्येति* । वेदनीयं वेदना, दौर्मनस्यं वेदनीयमस्मिन्निति दौर्मनस्यवेदनीयं कर्म । *सौमनस्योपेक्षावेदनीय अपी*ति । सम्प्रयोगमात्रवचनाद् दौर्मनस्यवत् सौमनस्योपेक्षे अपि न विपाक. प्राप्नुत इति परस्याभिप्राय. । *सम्प्रयोगेऽपि न दोपो विपाकेऽपीति* । सौमनस्यं वदनीयमस्मिन् सौमनस्यवेदनीयं कर्म । तथा सौमनस्यं विपाकत्वेन वेदनीयमस्य सौमनस्यवेदनीयं कर्मेति । *अगत्या ह्येतदेवं गम्येत* इति । यदि दौर्मनस्यं युक्त्या परिच्छिन्नं न विपाक इति, तत एवमगत्याऽऽख्यायेत—सम्प्रयोगवेदनीयतामधिकृत्योक्तमिति ।

का पुनरत्र युक्ति[1]—दौर्मनस्यं न विपाक इति ? दौर्मनस्यं हि परिकल्पविशेषैरुत्पाद्यते च, व्युत्पाद्यते[1] च, व्युपशाम्यते च । न चैवं विपाकः । सौमनस्यमप्येवं न स्याद् विपाकः । यदि तर्हि दौर्मनस्य विपाकः स्याद्, आनन्तर्यकारिणां तन्निमित्तं दौर्मनस्योत्पादात्तत्कर्म विपक्वं स्यात् । सौमनस्यमप्येवम् । यदि सौमनस्यं विपाक स्यात्, पुण्यकारिणां तन्निमित्त सौमनस्योत्पादात् तत्कर्म विपक्वं स्यात् । वीतरागादीना[2] तर्हि दौर्मनस्यासम्भवात् । न चैवं विपाक । सौमनस्यमप्येषामव्याकृत कीदृशं विपाकः स्यात् ? यादृश तादृशमस्तु । सति तु सम्भवे सौमनस्यस्यास्ति विपाकावकाश, न दौर्मनस्यस्य । सर्वथाऽप्यसमुदाचारादिति[3] नास्त्येवं दौर्मनस्य विपाक इति वैभाषिकाः ।

---

तेनाह—*का पुनरत्र युक्तिर्दौर्मनस्यं न विपाक* इति । अथ वा अगत्या ह्येतदेवं गम्येत—क्वचित् सम्प्रयोगवेदनीयता, क्वचित् विपाकवेदनीयतेति । ब्रूयास्त्वं सर्वत्रैव तर्हि सम्प्रयोगवेदनीयतेति ? अत एतदन्तराभिप्रायमभिसमीक्ष्याह—का पुनरत्र युक्ति—दौर्मनस्य न विपाक इति । *दौर्मनस्य हीति* । अनिष्टचिन्तनादिकै *परिकल्पविशेषैरुत्पाद्यते च, व्युत्पाद्यते च, व्युपशाम्यते च । सौमनस्यमप्येवमिति* । परिकल्पविशेषैरिष्टचिन्तनादिभिरुत्पाद्यते च, व्युपशाम्यते च । *वीतरागादीना तर्हीति* । यस्माद् वीतरागादीना दौर्मनस्यं व्यावर्तते । न हि चक्षुरादिको विपाकभूतो वीतरागादीना व्यावर्तते, दौर्मनस्यं तु व्यावर्तते । वचनाद् दौर्मनस्येन कामवीतरागोऽसमन्वागत इति । *सूत्रेऽप्युक्तम्*—"अवीतरागस्य द्विशल्या वेदनोक्ता—कायिकं दुःखं प्रतिसंवेदयते, चैतसिकं च दौर्मनस्यम्" इति । वचनाद् वीतरागस्य च एकशल्या कायिमेव दुःखं प्रतिसंवेदयत इति । *सौमनस्यमप्येषामिति* । विस्तर—वीतरागाणामव्याकृतं विपाकरूपं सौमनस्यं कीदृशं स्यात् ! समापत्तिसंगृहीतं तेषा सौमनस्यं सम्भवति, तच्च कुशलत्वान्न विपाक, अतो वक्तव्यम्—कीदृश तेषा सौमनस्यं विपाक इति । *यादृश तादृशमस्त्विति* । अपरिच्छिद्यमानमपि तदस्त्येवेति दर्शयति—तस्यास्ति *विपाकावकाशो न दौर्मनस्यस्य* । *सर्वथाप्यसमुदाचारात्* समापत्त्यवस्थायामपि, असमापत्त्यवस्थायामपीति । अतो *न विपाक* इति सिद्धम् ।

---

१. —का० पुस्तके नास्ति ।

२. वीतरागाणां—का० ।

३. सर्वथाऽसमु०—का० ।

तत्र जीवितेन्द्रियाष्टमानि सुगतौ कुशलस्य विपाकः, दुर्गतावकुशलस्य। मनइन्द्रियमुभयोरुभयस्य। सुखसौमनस्योपेक्षेन्द्रियाणि कुशलस्य। दुःखेन्द्रियमकुशलस्य। सुगतावुभयव्यञ्जनस्याकुशलेन तत्स्थानप्रतिलम्भः। न त्विन्द्रियस्य कुशलाक्षेपात्।

गतमेतद्॥

इद नु वक्तव्यम्—कतीन्द्रियाणि सविपाकानि? कत्यविपाकानि? यदेतत् दौर्मनस्यमनन्तरोक्तम्

**तत्त्वेकं सविपाकं**

तदेकं सविपाकमेव। तुशब्द एवकारार्थो भिन्नक्रमश्च वेदितव्यः। न हि तदव्याकृतमस्ति, नाप्यनास्रवम्, असमाहितत्वात्। अतो नास्त्यविपाकं दौर्मनस्यम्॥

**दश द्विधा॥ १०॥**

---

*मनइन्द्रियमुभयोरुभयस्येति*। उभयोः=सुगतिदुर्गत्योः। उभयस्य=कुशलाकुशलस्य। विपाक इत्यधिकारः। इदमुत्सृष्टम्—जीवितेन्द्रियाष्टमानि सुगतौ कुशलस्य विपाक इति, तत्र कथमुभयव्यञ्जनमासाद्यमम्मतं कुशलस्य विपाकः? इत्याह—*सुगतावुभयव्यञ्जनस्याकुशलेन* तत्स्थानप्रतिलम्भ इति। स्थानमस्य भ्रष्टम्, अतोऽस्याकुशलेन प्रतिलम्भो विप्रयुक्तो धर्मः। उभयं तु व्यञ्जनं कुशलस्यैव विपाक इत्यभिप्रायः।

*"तत्त्वेकं सविपाकम"* इति। तदेकं सविपाकमेवेत्यर्थः। तेनाह—*तुशब्द एवकारार्थो भिन्नक्रमश्चेति*। भिन्नस्थान इत्यर्थः। 'तदेकं सविपाकं तु' इति हि क्रमो न भिन्नः स्यात्। श्लोकबन्धानुगुण्येन त्वेवमुक्तम्। *न हि तदव्याकृतमिति*। सविपाकमेवेति अवधारणे युक्तिं दर्शयति। द्वे हि वस्तुनी अविपाके इष्येते—अव्याकृतम्, अनास्रवं च। विकल्पविशेषोत्पाद्यत्वान्न तदव्याकृतम्, *असमाहितत्वाच्च* नानास्रवम्। अव्याकृतं हि पूतिबीजवन्न विपाकदानाय समर्थम्। अनास्रवं तु तृष्णानभिष्यन्दितत्वान्नाल विपाकदानाय, अनभिष्यन्दितसारबीजवत्। पारिशेष्यादकुशलं वा भवेत्, कुशलसास्रवं वा। *अतः* सविपाकमेव, नास्त्यविपाकमेव, *नास्त्यविपाकं दौर्मनस्यम्*।

*"दश द्विधा"* इति। दशैव द्विधा, द्विधैव च दश इत्यवधारणम्। द्विधेति सविपाकाविपाकानि॥ १०॥

सविपाकानि, अविपाकानि च।

कतमानि दश?

**मनोऽन्यवित्तिश्रद्धादीनि**

अन्यवित्तिग्रहणात् दौर्मनस्यादन्यत् वेदितं गृह्यते। **श्रद्धादीनि** श्रद्धावीर्यस्मृतिसमाधिप्रज्ञाः। तत्र मनःसुखसौमनस्योपेक्षा अकुशलाः कुशलाः सास्रवाश्च सविपाकाः। अनास्रवा अव्याकृताश्चाविपाकाः। दुःखेन्द्रियं कुशलाकुशलं सविपाकम्। अव्याकृतमविपाकम्। श्रद्धादीनि सास्रवाणि सविपाकानि। अनास्रवाण्यविपाकानि। अन्यदविपाकमिति सिद्धम्॥

कति कुशलानि? कत्यकुशलानि? कत्यव्याकृतानि? एकान्तेन तावत्—

**अष्टकं कुशलं**

पञ्च श्रद्धादीनि, त्रीणि चाज्ञास्यामीन्द्रियादीनि।

**द्विधा।**

**दौर्मनस्यं**

कुशलं च, अकुशलं च।

**मनोऽन्या च वित्तिस्त्रेधा**

---

"*मनोऽन्यवित्तिश्रद्धादीनि*" इति। मनश्च अन्यवित्तयश्च श्रद्धादीनि चेति। वित्ति=वेदना। अन्यग्रहणेन दौर्मनस्यवर्जितं गृह्यते, दौर्मनस्यस्योक्तत्वात्। *श्रद्धादीनि श्रद्धावीर्यस्मृतिसमाधिप्रज्ञा*। गृह्यन्त इत्यधिकृतम्। *अन्यदविपाकमिति*। यथोक्तदौर्मनस्याद्यवधारणाज्जीवितं रूपीणि च सप्तेन्द्रियाणि, आज्ञास्यामीन्द्रियादीनि च त्रीण्यविपाकानीति *सिद्धम्*। अव्याकृतत्वादनास्रवत्वाच्च यथाक्रमम्।

"*अष्टकं कुशलम्*" इति। अष्टकं कुशलमेवेत्यवधारणम्।

"*द्विधा दौर्मनस्यम्*" इति। द्विधैव दौर्मनस्यम्, दौर्मनस्यं च द्विधेत्यवधारणम्। द्विधेति कुशलं च, अकुशलं च। अन्यदपि द्वैधमस्ति—कुशलञ्च अव्याकृतं च, अकुशलं च अव्याकृतं चेति, तत् कथमिदमवधार्यते—कुशलं च अकुशलं चेति? व्याख्यानतो विशेषप्रतिपत्तिः। अथ वा—दौर्मनस्यं सविपाकमेवेति निर्धारितम्। तस्मादिदमेव द्वैधं भवति, नान्यद्।

"*अन्या च वित्तिः*" इति। दौर्मनस्यवर्जं वेदनाचतुष्टयम्, तस्योक्तत्वात्।

कुशलाकुशलाव्याकृतानि ।

**अन्यदेकधा ॥ ११ ॥**

किञ्चिदन्यत् । जीविताष्टमं चक्षुरादि । एतदव्याकृतमेव ॥

कतमदिन्द्रियं कतमधात्वाप्तमेषामिन्द्रियाणाम् ?

**कामाप्तममल हित्वा**

कामप्रतिसंयुक्तं तावदिन्द्रियं वेदितव्यम् । एकान्तानास्रवमाज्ञास्यामीन्द्रियादित्रयं हित्वा । तद्धयप्रतिसंयुक्तमेव ।

**रूपाप्तं स्त्रीपुमिन्द्रिये ।**

**दुःखे च हित्वा**

'अमल च' इति वर्त्तते । दुःखे इति दुःखदौर्मनस्ये । तत्र मैथुनधर्मवैराग्यादशोभाकरत्वाच्च रूपधातौ स्त्रीपुरुषेन्द्रिये न स्तः ।

---

"*त्रेधा*" इति । *कुशलाकुशलाव्याकृतानि* । त्रय प्रकारा. त्रेधा । "द्वित्र्योश्च धमुञ्", "एधाच्च" (पा० सू० ५ ३ ४५–४६) इति त्रेधा इत्येषा शब्दव्युत्पत्ति । अलोभादिसम्प्रयुक्तानि कुशलानि, लोभादिसम्प्रयुक्तान्यकुशलानि अतोऽन्यान्यव्याकृतानि ।

"*अन्यदेकधा*" इति । *जीविताष्टम*मन्यदेकधैवेत्यवधार्यते । अव्याकृतमेवेत्यर्थः । एतदर्थं च पुनरस्य करणम्, अन्यथा ह्यकुशलमेव, कुशलाव्याकृतमेव, अकुलाव्याकृतमेव वा तत् सम्भाव्यते । तस्मादभीप्सितैकधात्वप्रसिद्धयर्थं पुनरुच्यते । यस्यैकधात्वं सम्भवति तद् भवति । किञ्च सम्भवति ? अव्याकृतत्वमिति ॥ ११ ॥

"*कामाप्तममलं हित्वा*" इति । अमलमेव हित्वा कामाप्तं भवति । *तद्धयप्रतिसम्प्रयुक्तमेवे*ति । अधातुपतितमेवेत्यर्थ. ।

"*रूपाप्तं स्त्रीपुमिन्द्रिये*" इति । विस्तर.—स्त्री च पुमाँश्च स्त्रीपुमासौ । "समासान्तो विधिरनित्य." ( परि० ८४ ) इति परिभाषया समासान्तो न भवति । तयोरिन्द्रिये स्त्रीपुमिन्द्रिये ।

"*दु खे च*" इति । दुःखवेदनास्वभावे इन्द्रिये दु.खदौर्मनस्ये इत्यर्थः । ते स्त्रीपुमिन्द्रिये दु खदौर्मनस्ये अमलं चेहानुवर्तमानं *हित्वा* । शेषं रूपाप्तमिन्द्रियं भवति ।

कथमिदानीं पुरुषास्त उच्यन्ते ? क्वोच्यन्ते ? सूत्रे—"अस्थानमनवकाशो यत् स्त्री ब्रह्मत्वं कारयिष्यति। नेदं स्थानं विद्यते यत् पुरुष" इति। अन्यः पुरुषभावोऽस्ति[1] यः कामधातौ पुरुषाणां भवति। दुःखेन्द्रियं नास्ति, आश्रयस्याच्छत्वाद्, अकुशलाभावाच्च। दौर्मनस्येन्द्रियं नास्ति, शमथस्निग्धसन्तानत्वादाघातवस्त्वभावाच्च।

**आरूप्याप्तं सुखे चापोह्य रूपि च ॥ १२ ॥**

'स्त्रीपुमिन्द्रिये[2] दुःखे चामलं च[3] हित्वा' इति वर्त्तते। किमवशिष्यते ? मनोजीवितोपेक्षेन्द्रियाणि श्रद्धादीनि च पञ्च। एतान्यारूप्यप्रतिसंयुक्तानि सन्ति, नान्यानि ॥ १२ ॥

कतीन्द्रियाणि दर्शनप्रहातव्यानि ? कति भावनाप्रहातव्यानि ? कत्यप्रहातव्यानि ?

---

क्वोच्यन्ते ?—इति पृष्टे *सूत्रं* दर्शयति—*अस्थानमनवकाश* इति। अत्र सूत्रं इत्यभिप्रायः। *अन्यः पुरुषभावोऽस्ति यः कामधातौ पुरुषाणां भवतीति*। स्तनादिसंस्थानस्वराचारान्यथात्वम्। *दुःखेन्द्रियं नास्तीत्याश्रयस्याच्छत्वात्* तदभिघातजं नास्ति। *अकुशलाभावाच्च* विपाकजं नास्ति। *दौर्मनस्येन्द्रियं नास्ति शमथस्निग्धसन्तानत्वादिति*। यस्माच्च शमथेन समाधिना प्रतिघविगमाद् रौक्ष्यं सन्ताने नास्ति, तस्माद् दौमनस्येन्द्रियं नास्ति। *आघातवस्त्वभावाच्चेति*। आघात = कोप, तस्य वस्तु=विषय, आघातवस्तु। नव चाघातवस्तूनि—अनर्थं मेऽकार्षीत्, करोति, करिष्यति च—इत्याघातवस्तुत्रयम्, मित्रस्य मेऽनर्थमकार्षीत्, करोति, करिष्यति च—इत्यपरमाघातवस्तुत्रयम्, अमित्रस्य मेऽर्थंकार्षीत्, करोति, करिष्यति च—इत्यपरमाघातवस्तुत्रयमिति। एषां नवानामाघातवस्तूनामभावाद् विषयकृतमपि दौर्मनस्यं नास्ति। न केवलं हेतुकृतं नास्तीति दर्शयति। हेतुकृतं हि तद् यत् स्वसन्तानप्रतिघकृतम्, प्रत्ययकृतं च तद् यत् नवाघातवस्तुकृतमिति।

"*सुखे चापोह्य रूपि च*" इति। च-शब्देन पूर्वोक्तमनुकृष्यते। तेनाह—*स्त्रीपुमिन्द्रिये दुःखे चामलं च हित्वेति वर्तत* इति। *सुखे* इति सुखवेदनास्वभावे सुखसौमनस्येन्द्रिये। *रूपीन्द्रियं* चक्षुरादि ॥ १२ ॥

---

१ 'पुरुषभावो—रा०।

२. स्त्रीपुरुषेन्द्रिये—का०।

३., का० पुस्तके नास्ति।

**मनोवित्तित्रयं त्रेधा**

कतमद् वित्तित्रयम् ? सुखसौमनस्योपेक्षाः ।

**द्विहेया दुर्मनस्कता ।**

दौर्मनस्यं द्वाभ्यां प्रहेय दर्शनभावनाभ्याम् ।

**नव भावनया**

'हेयानि' इत्यधिकारः । बीविनाष्टमानि चक्षुरादीनि दुःखेन्द्रियं च भावनाहेयान्येव ।

**पञ्च त्वहेयान्यपि**

श्रद्धादीनि पञ्च भावनाहेयान्यपि, अहेयान्यपि; सास्रवानास्रवत्वात् ।

**न त्रयम् ॥ १३ ॥**

त्रयं नैव प्रहेयमाज्ञास्यामीन्द्रियादिकम्; अनास्रवत्वात् । नहि निर्दोष प्रहाणार्हम् ॥ १३ ॥

उक्त प्रकारभेदः ॥

लाभ इदानीं वक्तव्यः—

कतीन्द्रियाणि कस्मिन् धातौ विपाकः प्रथमतो लभ्यन्ते ?

**कामेष्वादौ विपाकौ[1] द्वे लभ्येते[2]**

---

*वित्तित्रयं सुखसौमनस्योपेक्षा* इति । सुखेन्द्रियं यत् तृतीयध्यानभूमिकं दर्शनहेयानुशयसम्प्रयुक्तं तद् दर्शनहेयम् । ततैव अतोऽन्यत् सास्रवम्, पञ्चविज्ञानकायिकं च कामावचरम् । प्रथमध्यानभूमिकं च त्रिविज्ञानकायिकं भावनाप्रहातव्यम् । अनास्रवं तु सुखेन्द्रियम् । सौमनस्य दर्शनहेयसम्प्रयुक्तं दर्शनहेयम् । अतोऽन्यत् सास्रवं भावनाहेयम् । अनास्रवमहेयम् । उपेक्षेन्द्रियं तु सर्वगमिति सुगमम् ।

"*द्विहेया दुर्मनस्कता*" इति । दौर्मनस्ययोगाद् दुर्मनस्कः, तद्भावो दुर्मनस्कता, दौर्मनस्यमित्यर्थः । "यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेश, तदभिधाने त्वतलौ" इति लक्षणात् । तद् दर्शनहेयसम्प्रयुक्तं दर्शनहेयम् । अतोऽन्यद् भावनाहेयम् । नाहेयम्, असमाहितत्वात् ॥ १३ ॥

"*कामेष्वादौ विपाकौ द्वे लभ्येते*" इति । "कामप्रधानत्वात् कामधातु का[मा] इति निर्दिश्यते" इति वक्ष्यते। अण्डज-जरायुज-संस्वेदज सत्त्व कामधातावादौ

---

१ विपाको—का० । २ लभ्यते—का० ।

कायेन्द्रियम्, जीवितेन्द्रियं च। ते पुनः—

**नोपपादुकैः।**

उपपादुकप्रतिषेधादण्डज-जरायुज-संस्वेदजैरिति वेदितव्यम्। कस्मान्न मनउपेक्षेन्द्रिये? प्रतिसन्धिकाले तयोरवश्यं क्लिष्टत्वात्।

अथोपपादुकैः कति लभ्यन्ते?

**तैः षड् वा**

यद्यव्यञ्जना भवन्ति, यथाप्राथमकल्पिकाः।

कतमानि षट्? चक्षुःश्रोत्रघ्राणजिह्वाकायजीवितेन्द्रियाणि।

**सप्त वा**

यद्येकव्यञ्जना भवन्ति, यथा देवादिषु।

**अष्टौ वा**

यद्युभयव्यञ्जना भवन्ति।

किं पुनरुभयव्यञ्जना अप्युपपादुका भवन्ति? भवन्त्यपायेषु। एवं तावत् कामधातौ।

अथ रूपधातावारूप्यधातौ च कथम्? इत्याह—

---

प्रथमतो द्वे इन्द्रिये विपाकात्मके लभ्येते—कायेन्द्रियम्, जीवितेन्द्रियं च। कस्मात्? प्रतिसन्धिकाले मनउपेक्षेन्द्रिययोरवश्यं क्लिष्टत्वात्। "उपपत्तिभव. क्लिष्ट. सर्वक्लेशै स्वभूमिकै." (अभि० ३.३८) इति वचनात्। चक्षुरादीनां च तस्यामवस्थायामविद्यमानत्वात्।

"*नोपपादुकैः*" इत्यपवादः। अविशेषितत्वाद्धि उपपादुकैरपि तथैव द्वे एव लभ्येयातामिति प्रसङ्गः।

किमुपपादुकैस्ते द्वे नैव लभ्येते? लभ्येते, न तु द्वे द्वे एव। तेनाह— "*तैः षड् वा*" इति। विस्तरः—*यद्यव्यञ्जना भवन्ति*। यद्यविद्यमानस्त्रीपुरुषेन्द्रियाः। *यथाप्राथमकल्पिका* इति। युगाद्युत्पन्नाः "प्रागासन् रूपिवत् सत्त्वाः" (अभि० ३.९७) इति वचनात्। *कतमानि षट्?* चक्षुरादीनि पञ्च, जीवितं च षष्ठमिति। *यथा देवादिष्विति*। आदिशब्देन नारकादयोऽपि गृह्यन्ते। अन्तराभवोपपत्तिभवप्रतिसन्ध्यवस्थाया तानि प्रथमतो लभ्यन्ते। *किं पुनरुभयव्यञ्जना अप्युपादुका भवन्तीति*। निहीना उभयव्यञ्जनोत्पत्तिः, विशिष्टा चोपपादुका

**षड् रूपेषु**

कामप्रधानत्वात् कामधातुः 'कामाः' इति निर्दिश्यते। रूपप्रधानत्वाद् 'रूपाणि' इति रूपधातुर्निर्दिश्यते[1]। सूत्रेऽप्युक्तम्- "येऽपि ते[2] शान्ता विमोक्षा अतिक्रम्य रूपाण्यारूप्याः" ( ) इति। तत्र रूपधातौ षडिन्द्रियाणि विपाकः प्रथमतो लभ्यन्ते। यान्येव कामधातावव्यञ्जनैरुपपादुकैः।

**एकमुत्तरे ॥ १४ ॥**

रूपधातोरारूप्यधातुरुत्तरः। समापत्तितश्च परत्वाद्, उपपत्तितश्च प्रधानतरत्वात्। तस्मिन् एकमेव जीवितेन्द्रियं विपाकः प्रथमतो लभ्यते, नान्यत् ॥

उक्तो लाभः ॥

त्याग इदानीं वक्तव्यः—

कस्मिन् धातौ म्रियमाणः कतीन्द्रियाणि निरोधयतीति ?

**निरोधयत्युपरमन्नारूप्ये[3] जीवितं मनः।**

---

ष्टेति, कथमनयोः समायोग इति चोदनाभिप्रायः। *रूपप्रधानत्वाद् रूपाणीति रूपधातुर्निर्दिश्यते*। रूपप्रधानत्वादिति रूपाणां स्वच्छत्वात्, भास्वरत्वादित्यर्थः। अथ वा—न कामगुणप्रधानो धातुः, किं तर्हि ? रूपमात्रप्रधानः। नाप्यारूप्यधातुवदरूपप्रधान इति। *सूत्रेऽप्युक्तमिति*। सूत्रेऽप्येवं दृष्टम्, न मदुपज्ञमेवैतदिति दर्शयति। येऽपि *ते शान्ता विमोक्षा अतिक्रम्य रूपाण्यारूप्याः*। तेऽप्यनित्या अध्रुवा अनाश्वासिका विपरिणामधर्माण इति विस्तरः। *अव्यञ्जनैरुपपादुकै*रिति प्राथमकल्पिकैः। *समापत्तितश्च परत्वादिति*। यस्मात् पूर्वं रूपसमापत्तिः, पश्चादारूप्यसमापत्तिः, तस्माद् रूपधातोरुत्तर आरूप्यधातुः। *उपपत्तितश्च प्रधानतरत्वादिति*। यस्माच्चोपपत्तितः प्रधानतरो रूपधातोरारूप्यधातुः, बहूनि कल्पसहस्राणि, तत्रातिप्रशान्तो विपाको भवति, अतोऽप्यसावुत्तरः, न तूपपत्तिदेशतः। "आरूप्यधातुरस्थाने" ( अभि० ३.३ ) इति वचनात् ॥ १४ ॥

*"निरोधयत्युपरमन्"* इति। *म्रियमाण* आरूप्यधातावेतान्येव त्रीणीन्द्रियाणि निरोधयति। सापवादं चेदं वेदितव्यम्, "शुभे सर्वत्र पञ्च च" ( अभि० २.१५ ) इति वचनात्।

---

१. का० पुस्तके नास्ति।

२. ते भिक्षव —का०।

३. ०त्युपरमान्ना०—का०।

**उपेक्षां चैव रूपेऽष्टौ**

रूपधातौ म्रियमाणोऽष्टौ निरोधयति—तानि च त्रीणि, चक्षुरादीनि पञ्च। सर्वे ह्युपपादुकाः समग्रेन्द्रिया उपपद्यन्ते, म्रियन्ते च।

**कामे दश नवाष्ट वा ॥ १५ ॥**

कामधातौ म्रियमाण उभयव्यञ्जनो दशेन्द्रियाणि निरोधयति—तानि चाष्टौ, स्त्रीपुरुषेन्द्रिये च। एकव्यञ्जनो नव। अव्यञ्जनोऽष्टौ! सकृन्मरण एष न्यायः ॥ १५ ॥

**क्रममृत्योस्तु[1] चत्वारि**

क्रमेण तु म्रियमाणश्चत्वारीन्द्रियाणि निरोधयति—कायजीवितमनउपेक्षेन्द्रियाणि। न ह्येषां पृथग्निरोध।

एष च न्यायः क्लिष्टाव्याकृतचित्तस्य मरणे वेदितव्यः।

यदा तु कुशले चेतसि स्थितो म्रियते, तदा—

**शुभे सर्वत्र पञ्च च।**

कुशले चेतसि म्रियमाणः सर्वत्र यथोक्तमिन्द्रियाणि निरोधयति—श्रद्धादीनि च पञ्चाधिकानि। एषा हि[2] कुशले चेतस्यवश्यम्भावः।

---

"रूपेऽष्टौ" इति। रूपधातावष्टावेतान्येव। सह पञ्चभिश्चक्षुरादिभिर्निरोधयेत्, सकृत् समग्रेन्द्रियमरणात्। अत एवाह—*सर्वे ह्युपादुकाः समग्रेन्द्रिया उपपद्यन्ते, म्रियन्ते चेति*।

"*कामे दश नवाष्ट वा*" इति। *उभयव्यञ्जनो दशेन्द्रियाणि निरोधयति* यदि समग्रेन्द्रियो भवति। *एकव्यञ्जनो नव। अव्यञ्जनोऽष्टौ*। यदि तु विकलेन्द्रियो ... वा भवति तदा तदिन्द्रियं परिहार्यम् ॥ १५ ॥

सापवादं चेतत् सर्वकामधातावेव वेदितव्यम्। तदपवादमाह—"*क्रममृत्योस्तु चत्वारि*" इति। *न ह्येषां पृथङ् निरोध* इति। न ह्येषां कामधातावन्योन्यं विरहय्य निरोधोऽस्तीत्यभिप्राय.।

"*शुभे सर्वत्र पञ्च च*" इति। सर्वस्य पूर्वोक्तस्य मरणविधे. "निरोधयत्युपरि मन्नारूप्ये जीवितं मन." ( अभि० २ १५ ) इत्येवमादेरपवाद.। त्रिविधं हि मरणचित्तं सम्भवति—क्लिष्टम्, अव्याकृतम्, कुशलं च। तत्र क्लिष्टाव्याकृतचित्तस्योत्सर्गन्यायेन मरणविनिरुक्त। कुशलचित्तस्य तु मरणे श्रद्धादय पञ्चा-

१. क्रममृत्यो तु—का०। २. का० पुस्तके नास्ति।

कामप्रधानत्वात् कामधातु. 'कामाः' इति निर्दिश्यते। रूपप्रधानत्वाद् 'रूपाणि' इति रूपधातुर्निर्दिश्यते[1]। सूत्रेऽप्युक्तम्- "येऽपि ते[2] शान्ता विमोक्षा अतिक्रम्य रूपाण्यारूप्या." ( ) इति। तत्र रूपधातौ षडिन्द्रियाणि विपाकः प्रथमतो लभ्यन्ते। यान्येव कामधातावव्यञ्जनैरुपपादुकैः।

**एकमुत्तरे ॥ १४ ॥**

रूपधातोरारूप्यधातुरुत्तरः। समापत्तितश्च परत्वाद्, उपपत्तितश्च प्रधानतरत्वात्। तस्मिन् एकमेव जीवितेन्द्रियं विपाकः प्रथमतो लभ्यते, नान्यत् ॥

उक्तो लाभः ॥

त्याग इदानीं वक्तव्यः—

कस्मिन् धातौ म्रियमाणः कतीन्द्रियाणि निरोधयतीति ?

**निरोधयत्युपरमन्नारूप्ये[3] जीवितं मनः।**

---

इति, कथमनयो समायोग इति चोदनाभिप्राय.। *रूपप्रधानत्वाद् रूपाणि* ... *पधातुर्निर्दिश्यते*। रूपप्रधानत्वादिति रूपाणा स्वच्छत्वात्, भास्वरत्वादित्यर्थं। अथ वा—न कामगुणप्रधानो धातु, किं तर्हि ? रूपमात्रप्रधान। नाप्यारूप्यधातुवदरूपप्रधान इति। *सूत्रेऽप्युक्तमिति*। सूत्रेऽप्येवं दृष्टम्, न मदुपज्ञमेवैतदिति दर्शयति। येऽपि *ते शान्ता विमोक्षा अतिक्रम्य रूपाण्यारूप्याः*। तेऽप्यनित्या अध्रुवा अनाश्वासिका विपरिणामधर्माण इति विस्तर.। *अव्यञ्जनैरुपपादुकै*रिति प्राथमकल्पिकै। *समापत्तितश्च परत्वादिति*। यस्मात् पूर्वं रूपसमापत्ति, पश्चादारूप्यसमापत्ति, तस्माद् रूपधातोरुत्तर आरूप्यधातु। *उपपत्तितश्च प्रधानतरत्वादिति*। यस्माच्चोपपत्तितः प्रधानतरो रूपधातोरारूप्यधातु, बहूनि कल्पसहस्राणि, तत्रातिप्रशान्तो विपाको भवति, अतोऽप्यसावुत्तर., न तूपपत्तिदेशतः। "आरूप्यधातुरस्थाने" ( अभि० ३ ३ ) इति वचनात् ॥ १४ ॥

*"निरोधयत्युपरमन्"* इति। *म्रियमाण* आरूप्यधातावेतान्येव त्रीणीन्द्रियाणि निरोधयति। सापवादं चेदं वेदितव्यम्; "शुभे सर्वत्र पञ्च च" (अभि० २ १५) इति वचनात्।

---

१. का० पुस्तके नास्ति। २. ते भिक्षव —का०।

३. ०त्युपरमान्ना०—का०।

**उपेक्षां चैव रूपेऽष्टौ**

रूपधातौ म्रियमाणोऽष्टौ निरोधयति—तानि च त्रीणि, चक्षुरादीनि पञ्च। सर्वे ह्युपपादुकाः समग्रेन्द्रिया उपपद्यन्ते, म्रियन्ते च।

**कामे दश नवाष्ट वा ॥ १५ ॥**

कामधातौ म्रियमाण उभयव्यञ्जनो दशेन्द्रियाणि निरोधयति—तानि चाष्टौ, स्त्रीपुरुषेन्द्रिये च। एकव्यञ्जनो नव। अव्यञ्जनोऽष्टौ। सकृन्मरण एष न्यायः ॥ १५ ॥

**क्रममृत्योस्तु[1] चत्वारि**

क्रमेण तु म्रियमाणश्चत्वारीन्द्रियाणि निरोधयति—कायजीवितमनउपेक्षेन्द्रियाणि। न ह्येषां पृथग्निरोधः।

एष च न्याय. क्लिष्टाव्याकृतचित्तस्य मरणे वेदितव्यः।

यदा तु कुशले चेतसि स्थितो म्रियते, तदा—

**शुभे सर्वत्र पञ्च च।**

कुशले चेतसि म्रियमाणः सर्वत्र यथोक्तमिन्द्रियाणि निरोधयति—श्रद्धादीनि च पञ्चाधिकानि। एषां हि[2] कुशले चेतस्यवश्यम्भाव.।

---

"*रूपेऽष्टौ*" इति। रूपधातावष्टावेतान्येव। सह *पञ्चभिश्चक्षुरादिभिर्निरोधयेत्*, सकृत् समग्रेन्द्रियमरणात्। अत एवाह—*सर्वे ह्युपपादुकाः समग्रेन्द्रिया उपपद्यन्ते, म्रियन्ते चेति*।

"*कामे दश नवाष्ट वा*" इति। *उभयव्यञ्जनो दशेन्द्रियाणि निरोधयति* यदि समग्रेन्द्रियो भवति। *एकव्यञ्जनो नव*। *अव्यञ्जनोऽष्टौ*। यदि तु विकलेन्द्रियो [illegible] वा भवति तदा तदिन्द्रियं परिहार्यम् ॥ १५ ॥

सापवादं चैतत् सर्वं कामधातावेव वेदितव्यम्। तदपवादमाह—"*क्रममृत्योस्तु चत्वारि*" इति। *न ह्येषां पृथङ् निरोध* इति। न ह्येषां कामधातावन्योन्यं विनिहृत्य निरोधोऽस्तीत्यभिप्राय.।

"*शुभे सर्वत्र पञ्च च*" इति। सर्वस्य पूर्वोक्तस्य मरणविधेः "निरोधयत्युपपन्नारूप्ये जीवितं मन" (अभि० २ १५) इत्येवमादेरपवाद.। त्रिविधं हि मरणचित्तं सम्भवति—क्लिष्टम्, अव्याकृतम्, कुशलं च। तत्र क्लिष्टाव्याकृतचित्तस्योत्सर्गन्यायेन मरणविधिरुक्त.। कुशलचित्तस्य तु मरणे श्रद्धादय. पञ्चा-

---

१ क्रममृत्यौ तु—का०। २. का० पुस्तके नास्ति।

एवमारूप्येष्वष्टौ निरोधयति, रूपेषु त्रयोदश—इति विस्तरेण गणनीयम् ॥

इन्द्रियप्रकरणे सर्वं इन्द्रियधर्मा विचार्यन्ते—

अथ कतमच्छ्रामण्यफलं कतिभिरिन्द्रियैः प्राप्यते ?

**नवाप्तिरन्त्यफलयोः**

**नवभिरिन्द्रियैः प्राप्तिरन्त्यफलयोः**। के पुनरन्त्ये ? स्रोतआपत्तिफलम्, अर्हत्त्वं च। के मध्ये ? सकृदागामिफलम्, अनागामिफलं च।

तत्र स्रोतआपत्तिफलस्य श्रद्धादिभिराज्ञातावीन्द्रियवर्ज्यैर्मन उपेक्षेन्द्रियाभ्यां चेति नवभिः। आज्ञास्यामीन्द्रियमानन्तर्यमार्गे वेदितव्यम्, आज्ञेन्द्रियं च

---

धिकाः प्रक्षेप्तव्याः। *एषां हि श्रद्धादीनां कुशले चेतस्यवश्यम्भावः।* तेन यत्र त्रीण्युक्तानि तत्राष्टौ, यत्राष्टौ तत्र त्रयोदश, यत्र दश तत्र पञ्चदश, यत्र नव तत्र चतुर्दश, यत्र पुनरष्टौ तत्र त्रयोदश, यत्र चत्वारि तत्र नव—इति *विस्तरेण गणनीयम्*। रूपारूप्यधातोर्नास्ति क्रममरणम्।

*इन्द्रियप्रकरणे सर्वं इन्द्रियधर्मा विचार्यन्ते* इति। इन्द्रियप्रकरणे इह क्रियमाणे सर्वं इन्द्रियधर्मा इन्द्रियावस्थाविशेषाः कारित्रविशेषा वा विचार्यन्ते—इत्येके व्याचक्षते। *अपरे* तु व्याचक्षते—इन्द्रियप्रकरणे इन्द्रियस्कन्धके सर्वं इन्द्रियाधर्मा अवस्थाविशेषाः कारित्राविशेषा वा विचार्यन्ते। तेनेहापि ते विचार्यन्ते; तत्प्रत्यासत्त्वादस्य शास्त्रस्येत्यभिप्रायः।

"*नवाप्तिरन्त्यफलयोः*" इति। नवभिरिन्द्रियैराप्तिर्नवाप्तिः। कस्य ? अन्त्यफलयोः। अन्ते भवे अन्त्ये, अन्त्ये फले अन्त्यफले, तयोः। *के पुनरन्त्ये ? स्रोतआपत्तिफलम्, अर्हत्त्वफलं* च। यथा दण्डस्य द्वावन्तौ भवतः, एवं पंक्त्यवस्थितानां चतुर्णां फलानां स्रोतआपत्तिफलम्, अर्हत्त्वफलं चान्ते भवतः।

*सकृदागामिफलमनागामिफलं* च मध्ये भवतः। तयोरन्त्ययोः फलयोर्नवभिरेवेन्द्रियैः प्राप्तिः। कतमैर्नवभिः ? इत्याह *श्रद्धादिभिराज्ञातावीन्द्रियवर्ज्यैर्मनउपेक्षेन्द्रियाभ्यां चेति नवभिरिति।*

तत्रैवमभिसमयक्रमः—दुःखे धर्मज्ञानक्षान्तिः, दुःखे धर्मज्ञानम्; दुःखेऽन्वयज्ञानक्षान्तिः, दुःखेऽन्वयज्ञानम्; समुदये धर्मज्ञानक्षान्तिः, समुदये धर्मज्ञानम्; समुदयेऽन्वयज्ञानक्षान्तिः, समुदयेऽन्वयज्ञानम्; निरोधे धर्मज्ञानक्षान्तिः, निरोधे धर्मज्ञानम्; निरोधेऽन्वयज्ञानक्षान्तिः, निरोधेऽन्वयज्ञानम्; मार्गे धर्मज्ञानक्षान्तिः मार्गे धर्मज्ञानम्; मार्गेऽन्वयज्ञानक्षान्तिः, मार्गेऽन्वयज्ञानम्—इति षोडश क्षणा

मार्गे । उभाभ्यां हि तस्य प्राप्तिर्विसंयोगप्राप्तेरावाहकसन्निश्रयत्वाद् यथा-

अर्हत्त्वमस्य पुनः—श्रद्धादिभि', आज्ञास्यामीन्द्रियवर्ज्यैर्मनइन्द्रियेण, सुखसौमनस्योपेक्षेन्द्रियाणां चान्यतमेनेति नवभिः ।

---

*अभिसमय* इत्युच्यन्ते । तत्र दुःखे धर्मज्ञानक्षान्तिर्यावन्मार्गेऽन्वयज्ञानक्षान्तिरिति पञ्चदश क्षणा दर्शनमार्ग, "अदृष्टदृष्टेर्दृङ्मार्गस्तत्र पञ्चदश क्षणा." (अभि० ६.२८) इति वचनात् । तच्चाज्ञास्यामीन्द्रियमित्युच्यते । मार्गेऽन्वयज्ञानं तु षोडशः, स भावनामार्ग. । तत. प्रभृति आ वज्रोपमसमाधेर्यावाननान्तरो मार्ग. सर्वोऽसौ भावनामार्ग । तच्चाज्ञेन्द्रियमित्युच्यते । क्षयज्ञानात् प्रभृति सर्वोऽनास्रवो मार्गोऽशैक्षमार्गः । तच्चाज्ञातावीन्द्रियमित्युच्यते । तत्र स्रोतआपत्तिफलं मार्गेऽन्वयज्ञानक्षान्त्यवस्थाया प्राप्यते । श्रद्धादीनि चात्र पञ्चेन्द्रियाण्यवश्यं भवन्ति, तस्या अवस्थाया कुशलत्वात् । आज्ञास्यामीन्द्रियस्वभावा चासौ मार्गेऽन्वयज्ञानक्षान्तिर्वर्तमाना । मनइन्द्रियं च तत्सम्प्रयुक्तं भवति । उपेक्षेन्द्रियं चावश्यमनागम्याश्रयत्वात् । अनागम्यस्य चोपेक्षेन्द्रियसम्प्रयुक्तत्वात् । मार्गेऽन्वयज्ञानं त्वस्यामवस्थायामाज्ञेन्द्रियस्वभावमुत्पादाभिमुखं वर्तते, तेन श्रद्धादिभि. पञ्चभिराज्ञास्यामीन्द्रियेणाज्ञेन्द्रियेण मनउपेक्षेन्द्रियाभ्या चेति तत्फलं नवभि. प्राप्यते ।

*उभाभ्या हि तस्य प्राप्तिरि*ति । आनन्तर्यमार्गेणाज्ञास्यामीन्द्रियस्वभावेन विमुक्तिमार्गेण चाज्ञेन्द्रियस्वभावेन तस्य प्राप्ति । *विसंयोगप्राप्तेरावाहकसन्निश्रयत्वाद् यथाक्रमम्*; तस्या. विसंयोगप्राप्तेरानन्तर्यमार्गस्यावाहकत्वात्, जनकत्वात्, विमुक्तिमार्गस्य च तस्या. सन्निश्रयत्वात् । आधारत्वादित्यर्थ. । द्वाभ्या चौरनिष्कासनकपाटपिधानवत् । यथा हि द्वयोर्मनुष्ययोरेकेन चौरो निष्कास्यते, द्वितीयेनास्य कपाटं पिधीयते, तथानन्तर्यमार्गेण विसंयोगप्राप्तिरावाह्यते, क्लेशप्राप्तिमादाय निरोधात् । विमुक्तिमार्गेणाधार्यते, विसंयोगप्राप्तिसहोत्पादात् ।

*अर्हत्त्वस्य पुनः श्रद्धादिभिराज्ञास्यामीन्द्रियवर्ज्यै*रिति । वज्रोपमसमाध्यवस्थायामर्हत्त्वफलं प्राप्यते । श्रद्धादीनि मनइन्द्रियं च पूर्ववत् । वज्रोपमसमाधिकलापस्तस्यामवस्थायामानन्तर्यमार्ग आज्ञेन्द्रियस्वभावो वर्तमानः । *सुखसौमनस्योपेक्षेन्द्रियाणा चान्यतमत्* । यदि तृतीयं ध्यानं निश्रित्यार्हत्त्वं प्राप्यते, सुखेन्द्रियं तत्र वर्तमानम् । अथ प्रथमं द्वितीयं ध्यानं निश्रित्य, तत्र सौमनस्येन्द्रियम् । अथानागम्यध्यानान्तरचतुर्थध्यानाकाशविज्ञानाकिञ्चन्यायतनानामन्यतमम्

**सप्ताष्टनवभिर्द्वयोः ॥ १६ ॥**

सकृदागाम्यनागामिफलयोः प्रत्येकं सप्तभिरष्टभिर्नवभिश्चेन्द्रियैः प्राप्तिः । कथं कृत्वा ? सकृदागामिफलं तावद् यद्यानुपूर्वीकः प्राप्नोति, स च लौकिकेन मार्गेण, तस्य सप्तभिरिन्द्रियैः प्राप्तिः—पञ्चभिः श्रद्धादिभिः, उपेक्षामनइन्द्रियाभ्या

---

निश्रित्यै, तत्रोपेक्षेन्द्रियं वर्तमानम् । क्षयज्ञानकलापस्त्वस्यामवस्थाया विमुक्तिमार्ग आज्ञातावीन्द्रियस्वभाव उत्पादाभिमुखो भवति । तेन श्रद्धादिभि पञ्चभिराज्ञेन्द्रियेणाज्ञातावीन्द्रियेण मनइन्द्रियेण सुखसौमनस्योपेक्षेन्द्रियाणा चान्यतमेनेति तत्फलं नवभि. प्राप्यते । आनन्तर्यविमुक्तिमार्गाभ्या तत्प्राप्तिरिति पूर्ववद् व्याख्यानम् ।

*"सप्ताष्टनवभिर्द्वयोः"* । प्राप्तिरिति शेष. । *प्रत्येकमिति* । विस्तर.—सकृदागामिफलस्य *सप्तभिरष्टाभिर्नवभिर्वा प्राप्तिः* । एवमनागामिफलस्य । तत्प्रतिपादयन्नाह—*सकृदागामिफलं* तावद् यद्यानुपूर्वीकः प्राप्नोति । *स च लौकिकेन मार्गेणेति* । लौकिको मार्ग शान्ताद्युदाराद्याकार , "शान्ताद्युदाराद्याकारा उत्तराधरगोचरा." ( अभि० ६ ५० ) इति वचनात् । तेनोत्तरा भूमि शान्तत. प्रणीततो नि.सरणतश्चेह योगी पश्यति । अधरामौदारिकतो दु खिलत स्थूलभित्तिकतश्च पश्यति । स चायं चतु.प्रकारो वर्ण्यते—प्रयोगमार्ग., आनन्तर्यमार्ग , विमुक्तिमार्गः, विशेषमार्गश्च । तत्र प्रयोगमार्गो यत आनन्तर्यमार्ग उत्पद्यते, स पुनर्येन क्लेशान् प्रजहाति । विमुक्तिमार्गोऽप्यानन्तर्यमार्गादनन्तरमुत्पद्यते क्लेशप्रहाणप्राप्तेराधारक. । विशेषमार्गस्तत उच्चं विशिष्टो मार्गः ।

तेन मार्गेण नवप्रकारा. क्लेशा. प्रहेया.—अधिमात्राधिमात्र., अधिमात्रमध्य., अधिमात्रमृदु, मध्याधिमात्र , मध्यमध्य., मध्यमृदु., मृद्वधिमात्र., मृदुमध्य., मृदुमृदुश्चेति । तद् यदि पृथग्जन. प्रजहाति दर्शनभावनाहेयान् क्लेशान् मिश्रीकृत्य, तेन मृदुमध्याधिमात्रादिभेदेन नवधा कृत्वा प्रजहाति, मृदुमृदुभ्यामानन्तर्यविमुक्तिमार्गाभ्यामधिमात्राधिमात्रं क्लेशप्रकारं प्रजहाति, एवं यावदधिमात्राधिमात्राभ्यामानन्तर्यविमुक्तिमार्गाभ्या मृदुमृदुक्लेशप्रकारं प्रजहाति । आर्यस्तु भावनाहेयानेव क्लेशाँस्तथैव नवधा कृत्वा प्रजहाति, दर्शनहेयाना दर्शनमार्गेण पाकप्रहीणत्वात् ।

लोकोत्तरस्तु भावनामार्गस्तथैव षोडशाकार., अनित्याकारभेदात् । स चापि तथैव प्रयोगादिमार्गभेदाच्चतुर्भेद. । इहापि मृदुमृदुभ्यामानन्तर्यविमुक्तिमार्गाभ्यामधिमात्राधिमात्रं क्लेशप्रकारं प्रजहाति । एवं यावदधिमात्राधिमात्राभ्यामानन्तर्यविमुक्तिमार्गाभ्या मृदुमृदुक्लेशप्रकारं प्रजहाति ।

चेति । अथ लोकोत्तरेण मार्गेण, तस्याष्टाभिरिन्द्रियैः प्राप्तिः । आज्ञेन्द्रियमष्टमं भवति ।

अथ भूयोवीतराग प्राप्नोति, तस्य नवभि, येनैव स्रोतआपत्तिफलस्य ।

अनागामिफल यथानुपूर्वीक. प्राप्नोति, स च लौकिकेन मार्गेण, तस्य सप्तभिरिन्द्रियै. प्राप्ति, यथा—सकृदागामिफलस्य । अथ लोकोत्तरेण मार्गेण, तस्याष्टाभिस्तथैव ।

---

एष लौकिक-लोकोत्तरमार्गयोर्दिङ्मात्रनिर्देश. । तत्सकृदागामिफलमानुपूर्वीकेण वा लभ्येत, भूयोवीतरागेण वा । तदानुपूर्वीको य· स्रोतआपत्तिफलं प्राप्य क्रमात् सकृदागामिफलं प्राप्नोति, कश्चासौ ? य सकलबन्धन एकप्रकाराद्युपलिखितो वा यदि न षष्ठप्रकारोपलिखितो नियाममवक्रामति, षोडशे चित्तक्षणे स स्रोतआपन्नो भवति । स भावनाहेयस्यैकस्य यावत् षष्ठस्यैव वा प्रकारस्य प्रहाणाय शमथचरितत्वाल्लौकिकमपि मार्गमुत्पादयति । स षष्ठप्रकारप्रहाणे सकृदागामिफलं प्राप्नोति । *तस्य फलस्य सप्तभिरिन्द्रियैः प्राप्तिः श्रद्धादिभिः पञ्चभिर्मनइन्द्रियणापेक्षेन्द्रियण* च सप्तमेनानागम्यनिश्रयत्वात् । *अथ लोकोत्तरेण मार्गेण तस्याष्टाभिरिन्द्रियैः प्राप्तिः* । तैरेवाज्ञेन्द्रियेण चाष्टमेन । तान्येव हि श्रद्धादीनि सप्तेन्द्रियाण्याज्ञेन्द्रियाख्या लभन्ते, अनास्रवत्वात् ।

*अथ भूयोवीतराग* इति । यो लौकिकेन मार्गेण पृथग्जनावस्थायां षट्प्रकारोपलिखितोऽभूत्, स 'भूयोवीतराग' इत्युच्यते, भूयसा प्रकारेण वीतराग इति कृत्वा । स यदि सकृदागामिफलं प्राप्नोति । कथं स प्राप्नोति इति ? अभिसमयक्रमेण पूर्वोक्तेन मार्गेऽन्वयज्ञानक्षान्त्यवस्थायां प्राप्नोति । तस्य *नवभिर्येव स्रोतआपत्तिफलस्य* । श्रद्धादिभिराज्ञातावीन्द्रियवर्ज्यै । मनउपेक्षेन्द्रियाभ्यां चेति पूर्ववद् व्याख्यानम् । अयं हि स्रोतआपत्तिफलमप्राप्यैव षोडशे क्षणे सकृदागामी भवति । *अनागामिफलं यथानुपूर्वीकः प्राप्नोतीति* । इहानुपूर्वीको यः स्रोतआपत्तिफलं च प्राप्यानागामिफलं प्राप्नोति, यो वा भूयोवीतरागो भूत्वा स्रोतआपत्तिफलमलब्ध्वैव सकृदागामिफलमेव च लब्ध्वानागामिफलं प्राप्नोति । स च *यदि लौकिकेन मार्गेण* प्राप्नोति, *तस्य सप्तभिरिन्द्रियैः* प्राप्ति । यथा *सकृदागामिफलस्य*, आनुपूर्विकीयस्येत्यभिप्रेतम् । श्रद्धादिभि. पञ्चभिर्मनउपेक्षेन्द्रियाभ्यां चेत्यर्थ. । *अथ लोकोत्तरेण मार्गेण तस्याष्टाभिस्तथैवेति* । यथा *सकृदागामिफलस्यैवाष्टाभिरित्यर्थ* । आज्ञेन्द्रियमष्टमं भवतीति ।

अथ वीतरागः प्राप्नोति, तस्य नवभिः प्राप्तिः; यथा—स्रोतआपत्तिफलस्य ।

अय तु विशेषः—सुखसौमनस्योपेक्षेन्द्रियाणामन्यतमं भवति, निश्रयविशेषात् । यदाप्ययमानुपूर्वीको नवमे विमुक्तिमार्गे तीक्ष्णेन्द्रियत्वाद् ध्यानं प्रविशति लौकिकेन मार्गेण, तदाप्यष्टाभिरिन्द्रियैरनागामिफलं प्राप्नोति । तत्र हि नवमे विमुक्तिमार्गे सौमनस्येन्द्रियमष्टमं भवति । आनन्तर्यमार्गे तूपेक्षेन्द्रियमेव, निन्यमुभाभ्या च तस्य प्राप्तिः । अथ लोकोत्तरेण प्रविशति, तस्य नवभिरिन्द्रियैः प्राप्तिः । आज्ञेन्द्रियं नवमं भवति ॥ १६ ॥

---

*अथ वीतराग* इति । कामधातुमात्रवीतरागो लौकिकेन मार्गेण नवमे प्रकारे प्रहीणे । प्रथमादपि वा ध्यानाद् यावदाकिञ्चन्यादपि वा वीतरागो योऽनागामिफलं प्राप्नोति । *तस्य नवभिः प्राप्तिः । यथा स्रोतआपत्तिफलस्य ।* स्रोतआपत्तिफलस्य हि दर्शनमार्गेण प्राप्तिः । अस्य च दर्शनमार्गेणैव प्राप्तिरिति तुल्यत्वम् ।

*अयं तु विशेषः—सुखसौमनस्योपेक्षेन्द्रियाणामन्यतमं भवति निश्रयविशेषा*दिति । यदि तृतीयं ध्यानं निश्रित्य नियाममवक्रामति, सुखेन्द्रियं तत्र भवति । अथ प्रथमद्वितीये ध्याने निश्रित्य, सौमनस्येन्द्रियं तत्र भवति । अथानागम्यध्यानान्तरचतुर्थध्यानानामन्यतमं निश्रित्य, उपेक्षेन्द्रियं तत्र भवतीति । *यदाप्ययमानुपूर्वीक* इति । विस्तरः—यदाप्ययमधिगतपूर्वफल आनुपूर्वीकस्तीक्ष्णेन्द्रियः । *स नवमे विमुक्तिमार्गे ध्यानं प्रविशति* मौलं *लौकिकेन मार्गेण, तदापि अष्टाभिरिन्द्रियैरनागामिफलं प्राप्नोति ।* तत्र मौलध्यानसंगृहीतो विमुक्तिमार्गो भवति, तत्र च सौमनस्येन्द्रियम् । आनन्तर्यमार्गस्त्वनागम्यसंगृहीत एव । यदि न प्रविशति, तत्र चोपेक्षेन्द्रियमेव, नान्यथा । तस्य प्राप्तिरष्टाभिः श्रद्धादिभिः पञ्चभिर्मन उपेक्षासौमनस्येन्द्रियैश्चेति । *उभाभ्यां च तस्य प्राप्तिरिति ।* आनन्तर्यविमुक्तिमार्गाभ्यां चोरनिष्कासनकपाटपिधानवदिति व्याख्यातमेतत् । *अथ लोकोत्तरेण प्रविशती*ति । स एवानुपूर्वीकस्तीक्ष्णेन्द्रियो वेदितव्यः, अधिकारानुवृत्तेः । *तस्य नवभिरिन्द्रियैः प्राप्तिः ।* तैरेवदानीमुक्तैरिन्द्रियैः । *आज्ञेन्द्रियेण च नवमेन ।* तान्येव हीन्द्रियाण्यनास्रवत्वादाज्ञेन्द्रियाख्या लभन्ते ।

इदमिह चोद्यते—कस्मादानुपूर्वीक एवमुक्तः, न पुनर्वीतरागपूर्वी ? न हि वीतरागपूर्व्यनागम्यनिश्रयेण दर्शनमार्गमुत्पाद्य षोडशे चित्तक्षणे मौलं प्रथमं ध्यानं प्रविशति, तत्राधिगतेरनादरात् । आनुपूर्वीको हि मौलध्यानार्थी, तस्यानधिगतपूर्वत्वात् । तस्मादस्ति सम्भवो यदसौ मौलमेव प्रविशति । वीतरागपूर्वी तु चतुःसत्यदर्शनं प्रति कृतादरः, न ध्यानं प्रति । इति न तत्र षोडशे चित्तक्षणे मौलं ध्यानं प्रविशतीत्यभिप्रायः ॥ १६ ॥

यत्तर्हि अभिधर्म उक्तम्—"कतिभिरिन्द्रियैरर्हत्त्वं प्राप्नोतीत्याह—एकादशभिः" (　　　　　) इति, तत् कथं नवभिरित्युच्यते ? नवभिरेव तत् प्राप्नोति।

एकादशभिरर्हत्त्वमुक्तं त्वेकस्य सम्भवात्।

अस्ति सम्भवो यदेकः पुद्गलः परिहाय परिहाय सुखसौमनस्योपेक्षाभिरर्हत्त्वं प्राप्नुयाद्, अत एकादशभिरित्युक्तम्। न तु खलु सम्भवोऽस्ति सुखादीनामेकस्मिन् काले।

कथमनागामिनोऽप्येष प्रसङ्गो न भवति ? न ह्यसौ परिहीणः कदाचित् सुखेन्द्रियेण प्राप्नोति।

---

"नवाप्तिरन्त्यफलयो" (अभि० २१६) इत्युक्तम्, तद्विरोधयति—*यत् तर्हि अभिधर्मे उक्तम्।* ज्ञानप्रस्थाने। *"कतिभिरिन्द्रियैरर्हत्त्व प्राप्नोति ? इत्याह—एकादशभिः" इति*। तत्कथं न विरुध्यते इत्यभिप्राय।

*"एकस्य सम्भवात्"* इति। कस्यचिदेवैकस्य पुद्गलस्य सम्भवः। न सर्वस्य सम्भव.। यो हि मृद्विन्द्रिय *परिहाय परिहाय सुखसौमनस्योपेक्षाभिः एकादशभि.* निश्रयविशेषात् पार्यायिकीभिरर्हत्त्वं प्राप्नुयात्, तं प्रति एवमुक्तम्। *एकादशभिरिति*। *न तु सम्भवोऽस्ति* सुखसौमनस्योपेक्षाणा *एकस्मिन् काले समवधानमित्यर्थः*। चित्तचैत्तानामेकैकद्रव्योत्पत्ते। यो हि कश्चिन्मृद्विन्द्रिय. पुद्गलोऽनागम्यं वोपेक्षेन्द्रियनिश्रयं निश्रित्यार्हत्त्वं प्राप्नुयात्, तस्य तत्प्राप्तिरुपेक्षेन्द्रियेण। तत. पुनरपि परिहीयते। तत प्रथमं द्वितीयं वा ध्यानं निश्रित्य पुनरर्हत्त्वं प्राप्नुयात्, तस्य तत्प्राप्ति सौमनस्येन्द्रियेण। तत. पुनरपि परिहीयते। तत. स तृतीयं ध्यानं निश्रित्य पुनरर्हत्त्वं प्राप्नुयात्, तस्य तत्प्राप्ति. सुखेन्द्रियेण। इति प्रत्येकं तत्र प्राप्ताववश्यं नवैवेन्द्रियाणि व्याप्रियन्ते—श्रद्धादीनि पञ्च, मनआज्ञाज्ञातावीन्द्रियाणि सुखसौमनस्योपेक्षेन्द्रियाणां चान्यतमदिति। पुन. पुन. प्राप्तेस्तदेकादशभिरित्युक्तम्।

*कथमनागामिनोऽप्येष प्रसङ्गो न भवतीति*। कस्मात् तत्र शास्त्रेऽर्हत्त्वफलमेवैकादशभिः प्राप्नोति इत्युक्तम्, न तूक्तम्—अनागामिफलमपीति ? *न ह्यसौ परिहीणः कदाचित् सुखेन्द्रियेण प्राप्नोतीति*। असावनागामी तृतीयध्यानोर्ध्वभूमिलाभात् परिहीणो भव..., ऊर्ध्वभूमेरेव परिहीणो भवति, नासावनागामिफलात् परिहीण इत्युच्यते। एवं यावद् द्वितीयध्यानात्। यदा तु प्रथमात् परिहीणो भवति, तदानागामिफलात परिहीण इत्युच्यते। पञ्चावरभागीय-

न च वीतरागपूर्वी परिहीयते; तद्वैराग्यस्य द्विमार्गप्रापणात् ॥

प्रहाणाद्धि अनागामिफलं व्यवस्थाप्यते। यदा स च कामवैराग्यात् परिहीण, तदा तृतीयं ध्यानमस्य नास्ति, तत् कथं सुखेन्द्रियेणानागामिफलं प्राप्नुयात्। तत आह—न ह्यसौ परिहाण कदाचित् सुखेन्द्रियेण प्राप्नोतीति, किं सौमनस्येन्द्रियेण प्राप्नुयात्, यत एव सुखेन्द्रियस्यैव प्रतिषेध प्राप्नुयाद् यदि नवमे विमुक्तिमार्गे मौलं ध्यानं प्रविशेत्। नैतदस्ति—यो हि परिहीणो भवेत् स मृद्विन्द्रिय, यश्च मृद्विन्द्रिय. स न शक्नोति नवमे विमुक्तिमार्गे मौलं ध्यानं प्रवेष्टुम्, तीक्ष्णेन्द्रियस्तु शक्नोति, इन्द्रियसञ्चारस्यादुष्करत्वात्? अस्त्येतत्, किन्तु यद्यसौ मृद्विन्द्रिय आनुपूर्विकोऽनागामिफलं प्राप्य ततश्च परिहीणो भूत्वा इन्द्रियसञ्चारं कुर्यात्, इन्द्रियसञ्चारेण च तीक्ष्णेन्द्रियो भूत्वा पूर्वकेणैव क्रमेणानागामिफलं प्राप्नुवन् यदि नवमे विमुक्तिमार्गे मौलं प्रविशेत्, तस्य तदानागामिफलप्राप्तिरष्टाभिर्नवभिर्वा भवति—श्रद्धादिभि पञ्चभि, मनइन्द्रियेण चानन्तर्यमार्गसंगृहीतेन सौमनस्येन्द्रियेण च मौलध्यानविमुक्तिमार्गसंगृहीतेनेति। लोकोत्तरेण चेन्मौलं ध्यानं प्रविशेत्, एभिश्चाष्टाभिराज्ञेन्द्रियेण च नवमेन इत्यवगन्तव्यम्। तस्मात् सूक्तम्—न ह्यसौ परिहीण कदाचित् सुखेन्द्रियेण प्राप्नोतीति।

वीतरागपूर्वी तर्ह्येकादशभिस्तत्प्राप्नुयात्। कथम्? यो मृद्विन्द्रिय पुद्गलस्तृतीयध्यानलाभो तृतीय ध्यानं निश्रित्य नियाममवक्रामेत्, स षोडशे चित्तक्षणे अनागामी भवति, सा तत्फलप्राप्ति सुखेन्द्रियेण श्रद्धादिभि. पञ्चभिर्मनआज्ञास्यामीन्द्रियाज्ञेन्द्रियैश्चेति। स ततोऽनागामिफलात् परिहीण इन्द्रियोत्तापनेन तीक्ष्णेन्द्रियमात्मानं कृत्वा अनागम्यनिश्रयेणैवानागामिफलं प्राप्नुवन्नवमे विमुक्तिमार्गे मौलं प्रविशेत्। तस्य तत्फलप्राप्ति. पूर्ववदुपेक्षेन्द्रियेण सौमनस्येन्द्रियेण च श्रद्धादिभिश्चापि पञ्चभिर्मनइन्द्रियेण चाष्टमेन लोकोत्तरमार्गत्वादाज्ञेन्द्रियेणापि नवमेन—इत्येवं द्वयो. कालयोरेकादशभिरिन्द्रियै. स पुद्गलस्तदनागामिफलं प्राप्नुयादिति। ततस्तत्प्रतिषेधार्थमिदमाह—*न च वीतरागपूर्वी परिहीयते। तद्वैराग्यस्य द्विमार्गप्रापणा*दिति। न च कामवीतराग. केनचिन्निश्रयेण नियाममवक्रान्त परिहीयते। कस्मात्? तद्वैराग्यस्य कामवैराग्यस्य द्विमार्गप्रापणात् लौकिकलोकोत्तरमार्गप्रापणात्। इह फलं द्विविधम्—संस्कृतम्, असंस्कृतं च। "संस्कृतासंस्कृतं फलम्" (अभि० को० ६.५१) इति वचनात्। तत्र यदसंस्कृतं विसंयोगलक्षणमनागामि फलम्, तत्पूर्वं लौकिकेन मार्गेण प्राप्तम्, नियामावक्रान्तौ च लोकोत्तरमार्गेण पुनस्तत्प्राप्तम्। द्विविधा हि तस्य प्राप्ति.—लौकिकी, लोकोत्तरा च। तस्मात् स्थिरं तद्वैराग्यम्। तस्मादतो न परिहीयते।

इदं विचार्यते—कतमेनेन्द्रियेण समन्वागतः कतिभिरवश्यं समन्वागतो भवति ? तत्र—

**उपेक्षाजीवितमनोयुक्तोऽवश्यं त्रयान्वितः ॥ १७ ॥**

य एषामुपेक्षादीनामन्यतमेन समन्वागतः, सोऽवश्यं त्रिभिरिन्द्रियैः समन्वागतो भवत्येभिरेव । न ह्येषामन्योऽन्येन विना समन्वागमः ।

शेषैस्त्वनियमः—स्यात् समन्वागतः, स्यादसमन्वागतः ।

तत्र तावच्चक्षुःश्रोत्रघ्राणजिह्वेन्द्रियैरारूप्यधातूपपन्नो[1] न समन्वागतः । कामधातौ च येनाप्रतिलब्धविहीनानि । कायेन्द्रियेणारूप्योपपन्नो न समन्वागतः । स्त्रीन्द्रियेण रूपारूप्योपपन्नः । कामधातौ येनाप्रतिलब्धविहीनम् । एवं पुरुषेन्द्रियेण ।

---

ननु च "फलाद्धानिर्नं पूर्वकात्" (अभि० ६.५८) दर्शनहेयानामवस्तुकत्वादित्येतदपि कारणान्तरमस्ति, कस्मात् तदिह नोक्तमिति ? एतदपि वक्तव्यम् । अपि खलु पर एव ब्रूयात्—मा भूद् दर्शनहेयक्लेशवैराग्यपरिहाणिः, भावनाहेयक्लेशमात्रवैराग्यपरिहाणिस्तु कस्मादस्य परिहीणकस्य न भवेत् ? पञ्चावरभागीयप्रहाणाद्धि अनागामिफलं भवति । तत्र च सत्कायदृष्टिः शीलव्रतपरामर्शो विचिकित्सा च दर्शनहेयाः, कामच्छन्दो व्यापादश्च भावनहेयौ, तयोश्च तस्य वीतरागपूर्विणोऽभिसमयान्ते षोडशे चित्तक्षणे प्रहाणस्य लौकिकेन मार्गेण प्राप्तस्य तत्सामर्थ्यात् पुनरनास्रवा प्राप्तिर्भवति, अनास्रवगोत्राणां लब्धत्वात् । अनास्रवं ह नवमविमुक्तिमार्गस्वभावं संस्कृतम्, अनागामिफलमसंस्कृतं च कामच्छन्दादिप्रहाणं तस्यामवस्थायां लभ्यते । तस्मादिदमेव कारणमुक्तम् आचार्येण—तद्वैराग्यस्य द्विमार्गप्रापणादिति । कामच्छन्दादिप्रहाणस्य द्विमार्गप्रापणादित्यर्थः ।

*"उपेक्षाजीवितमनोयुक्तोऽवश्यं त्रयान्वितः"* इति । उपेक्षया जीवितेन मनसा वा युक्तोऽन्वितोऽवश्यं त्रयेण *समन्वागतः* । तेनैवोपेक्षाजीवितमनःस्वभावेन । *न ह्येषामन्योऽन्येन विना समन्वागम* इति । यदैकस्य समन्वागमः, तदेतरयोरपि समन्वागमः । तेनैषां समन्वागमव्यवस्थानं क्रियते । चक्षुरादीनां तु न क्रियते ।

तस्मादाह—*चक्षुःश्रोत्रघ्राणजिह्वेन्द्रियैरिति* । विस्तरः—चक्षुःश्रोत्रघ्राणजिह्वेन्द्रियैरारूप्यधातूपपन्नो न समन्वागत इत्यत्र कायेन्द्रियाग्रहणम् । *कामधातौ च येनाप्रतिलब्धविहीनानीति* । अस्योपचयार्थस्य चक्षुरादिष्वेव सम्भवान्न कायेन्द्रिये ।

---

१ ०रारूप्योपपन्नो—का० ।

सुखेन्द्रियेण चतुर्ध्यानारूप्योपपन्ना. पृथग्जना न समन्वागता. । सौमनस्येन्द्रियेण तृतीयचतुर्थध्यानारूप्योपपन्नाः पृथग्जना एव । दु खेन्द्रियेण रूपारूप्योपपन्न. । दौर्मनस्येन कामवीतराग । श्रद्धादिभि समुच्छिन्नकुशलमूल. । आज्ञास्यामीन्द्रियेण पृथग्जनफलस्था न समन्वागता । आज्ञेन्द्रियेण पृथग्जनदर्शनाशैक्षमार्गस्था । आज्ञातावीन्द्रियेण पृथग्जनशैक्ष्या असमन्वागता ।

अप्रतिषिद्धास्ववस्थासु यथोक्तसमन्वागतो वेदितव्य ॥ १७ ॥

**चतुर्भिः सुखकायाभ्यां**

य सुखेन्द्रियेण समन्वागत, सोऽवश्यं चतुर्भिरिन्द्रियै—तैश्च त्रिभिरुपेक्षादिभि, सुखेन्द्रियेण च ।

---

अन्यथा-हि रूपिभिरिन्द्रियैरारूप्योपपन्नो न समन्वागत इत्येवोच्यते । अप्रतिलब्धानि कललाद्यवस्थायाम् । विहीनानि लब्धविनाशादन्धत्वाद्यवस्थायां क्रममरणे वा । *पृथग्जना न समन्वागता* इति विशेषणम्, आर्यस्यावश्यं समन्वागतत्वात् । न हि तस्य भूमिसञ्चारेण अनास्रवसुखादित्याग । *दौर्मनस्येन कामवीतराग* इति । इहस्थो धात्वन्तरस्थो वा पृथग्जनो वार्यो वा न समन्वागत । *पृथग्जनफलस्था* इति । फलस्था स्रोतआपन्नादय. । अभिसमयान्ते विहीनत्वात् । तेनानाज्ञातमाज्ञास्यामीन्द्रियेणासमन्वागता । *आज्ञेन्द्रियेण* दर्शनमार्गस्था अप्राप्तत्वादसमन्वागता । *अशैक्षमार्गस्थाः* फलप्राप्तौ विहीनत्वादसमन्वागता. । *अप्रतिषिद्धास्ववस्थासु यथोक्तसमन्वागमो वेदितव्य* इति । या अप्रतिषिद्धा अवस्थाश्चक्षुरादिभिरिन्द्रियै. समन्वागमं प्रति तास्ववस्थासु यद्यदिन्द्रियमुक्तम्, तैस्तै समन्वागतो वेदितव्य इत्यर्थ. । तद्यथा—कामधातावप्रतिलब्धविहीनावस्था हित्वा चक्षुरादिभिर्जिह्वान्तै. समन्वागत । कायेन्द्रियेण कामरूपधातूपपन्न समन्वागत इत्यादि ॥ १७ ॥

*"चतुर्भिः सुखकायाभ्याम्"* इति । *'युक्त'* इति वर्तते, 'अवश्यम्' इति च । संख्यानुक्रमविवक्षाया तु तदनन्तरं तैरित्येवानन्तरं सुखादिग्रहणम् । *सुखेन्द्रियेण समन्वागत* इति । चतुर्थध्यानारूप्यधातूपपन्नं पृथग्जनं मुक्त्वा सर्वं सुखेन्द्रियेण समन्वागत । तस्यान्यैर्नावश्यं समन्वागत । चक्षुरादिभिर्जिह्वेन्द्रियान्तैरारूप्यधातौ कामधातौ चाप्रतिलब्धविहीनावस्थायामसमन्वागम । कायेन्द्रियेण चारूप्यधातौ । स्त्रीपुरुषेन्द्रियाभ्या रूपारूप्यधात्वोश्च । कामधातौ चालब्धविहीनावस्थायाम् । दु खेन्द्रियेण रूपारूप्यधात्वो. । सौमनस्येन्द्रियेण पृथग्जनस्तृतीयध्यानोपपन्न. । दौर्मनस्येन्द्रियेण कामवीतरागावस्थायाम् । श्रद्धादिभि पञ्चभि

य: **कायेन्द्रियेण, सोऽपि चतुर्भिः**—तैश्च त्रिभिः, कायेन्द्रियेण च।

**पञ्चभिश्चक्षुरादिमान्**

यश्चक्षुरिन्द्रियेण, सोऽवश्यं पञ्चभिरुपेक्षाजीवितमन कायेन्द्रियैः, तेन च। एवं श्रोत्रघ्राणजिह्वेन्द्रियैर्वेदितव्यम्।

**सौमनस्यी च**

यश्चापि सौमनस्येन्द्रियेण, सोऽवश्य पञ्चभिरुपेक्षाजीवितमनःसुखसौमनस्यैः।

द्वितीयध्यानजस्तृतीयालाभी कतमेन सुखेन्द्रियेण समन्वागतो भवति? क्लिष्टेन तृतीयध्यानभूमिकेन।

---

समुच्छिन्नकुशलमूलावस्थायाम्। आज्ञास्यामीन्द्रियेण पृथग्जनफलस्थावस्थायाम्। आज्ञेन्द्रियेण पृथग्जनदर्शनमार्गस्थाशैक्षावस्थायाम्। आज्ञातावान्द्रियेण पृथग्जनशैक्षावस्थायामसमन्वागत इति। *यः कायेन्द्रियेण सोऽपि चतुर्भिरि*ति। कामधातूपपन्न. कायेन्द्रियेण समन्वागत। तस्य नान्यैरवश्यं समन्वागम.। चक्षुरादिभि. कामधातावलब्धविहीनावस्थायसमन्वागम। स्त्रीपुरुषेन्द्रियाभ्यामेतस्यामेवावस्थाया रूपधातौ चासमन्वागम। दु खेन चास्मिन्नेव। सुखेन च पृथग्जनस्य चतुर्थध्यानोपपत्तावसमन्वागम। सौमनस्येन पृथग्जनस्तृतीयचतुर्थध्यानोपपन्नोऽसमन्वागत.। दौर्मनस्येन श्रद्धादिभिश्चान्यै पूर्ववदसमन्वागमो वक्तव्य.।

"*पञ्चभिश्चक्षुरादिमान्*" इति चक्षुश्रोत्रघ्राणजिह्वावानित्यर्थ। *तेन* चेति। तेन चक्षुषा। चक्षुषि सत्यवश्यं कायेन्द्रियम्, न तु श्रोत्रादीनि. कामधातावलब्धविहीनत्वसम्भवात्। स्त्रीपुरुषेन्द्रियादीना तु पूर्ववद् व्यभिचारो वक्तव्य.। *एवं श्रोत्रघ्राणजिह्वेन्द्रियै*रिति। य श्रोत्रेन्द्रियेण सोऽवश्यं पञ्चभिरुपेक्षाजीवितमन.कायैस्तेन च - इत्येवं सर्वं नेयम्।

"*सौमनस्यी च*"। किम्? पञ्चभिरवश्यं समन्वागत इत्यधिकृतम्। चक्षुरादिष्वेव सौमनस्यं कस्मान्न प्रक्षिप्तम्? अन्यस्थानपाठात्। तथा ह्यादिशब्देन प्रक्षेप आकुल स्यात्। *द्वितीयध्यानजस्तृतीयालाभी कतमेन सुखेन्द्रियेण समन्वागत* इति। सुखेन्द्रियं कामधातौ पञ्चविज्ञानकायिकं प्रथमे च ध्याने त्रिविज्ञानकायिकमस्ति, तृतीये तु ध्याने मानसम्। अतो द्वितीयध्यानजो नाधरेण सुखेन्द्रियेण समन्वागत., तस्य भूमिसञ्चारेण त्यक्तत्वात्। न तृतीयध्यानभूमिकेन, तस्यालाभित्वादिति मत्वा चोदयति—*कतमेन सुखेन्द्रियेण समन्वागत* इति। आह—*क्लिष्टेन तृतीयध्यानभूमिके*नेति। सर्वे ह्यधरभूम्युपपन्ना सत्त्वा उपरिभूमिकेनाप्रहीणेन क्लिष्टेन समन्वागता इति सिद्धान्त। शेषेन्द्रियव्यभिचार. पूर्ववद् वक्तव्यः।

**दुःखी तु सप्तभिः**

यो दुःखेन्द्रियेण, सोऽवश्यं सप्तभिः कायजीवितमनोभिश्चतुर्भिर्वेदनेन्द्रियैः।

**स्त्रीन्द्रियादिमान् ॥ १८ ॥**

**अष्टाभिः**

यः स्त्रीन्द्रियेण समन्वागतः सोऽवश्यमष्टाभिः—तैश्च सप्तभिः, स्त्रीन्द्रियेण च। आदिशब्देन पुरुषेन्द्रियदौर्मनस्यश्रद्धादीनां सग्रहः। तद्वानपि प्रत्येकमष्टाभिः समन्वागतो भवति—तैश्च सप्तभिः, अष्टमेन च पुरुषेन्द्रियेण। एवं दौर्मनस्येन्द्रियेण। श्रद्धादिमांस्तु तैश्च पञ्चभिः, उपेक्षाजीवितमनोभिश्च।

**एकादशभिस्त्वाज्ञाज्ञातेन्द्रियान्वितः।**

आज्ञात इन्द्रियमाज्ञातेन्द्रियम्। य आज्ञेन्द्रियेण[1] समन्वागतः, सोऽवश्य-

---

"*दुःखी तु सप्तभिः*" इति। कामधातूपपन्नो ह्येषः। तस्मादवश्यं कायेन्द्रियेण चतुर्भिश्च वेदनेन्द्रियैरिति दौर्मनस्यवर्ज्यैः। तद्वीतरागावस्थाया दौर्मनस्यं व्यभिचरति। मनोजीवितेन्द्रिये च स्त इत्यवश्यं सप्तभिरिन्द्रियैः समन्वागतः। शेषेन्द्रियव्यभिचारस्तु पूर्ववद् वाच्यः।

"*स्त्रीन्द्रियादिमान् अष्टाभिः*" इति। स्त्रीपुरुषदौर्मनस्यश्रद्धावीर्यस्मृतिसमाधिप्रज्ञेन्द्रियवानित्यर्थः। जीवितमनःसुखदुःखसौमनस्योपेक्षेन्द्रियाणामुक्तत्वात्, आज्ञानावीन्द्रियादीनां च त्रयाणां वक्ष्यमाणत्वात्। एषामेवाष्टानामिन्द्रियाणां ग्रहणं भवति। *यः स्त्रीन्द्रियेण समन्वागतः* इति। स कामधातूपपन्न एव स्त्रीन्द्रियवत्त्वात्। अतः सोऽवश्यमष्टाभिरिन्द्रियैः समन्वागतः। कतमैः? इत्याह—*तैश्च सप्तभिः स्त्रीन्द्रियेण चेति*। कायजीवितमनोभिश्चतुर्भिश्च वेदनेन्द्रियैरिति सप्तभिः, स्त्रीन्द्रियेण चाष्टमेन। शेषैरनियमः। यथोक्तैश्चक्षुरादीनां वैकल्यसम्भवादित्यादिभिः कारणैः। स्त्रीन्द्रियवत् *पुरुषेन्द्रियवानपि* वक्तव्यः। *दौर्मनस्यवानपि* कामोपपन्नः कामवीतराग इति तथैव तैः सप्तभिर्दौर्मनस्येन च। *श्रद्धावानपि* त्रैधातुकः सत्त्व इति *तैः पञ्चभिः* श्रद्धादिभिरविनाभाविभि*रुपेक्षाजीवितमनोभिश्च* समन्वागतः। शेषैरनियमः पूर्ववत्। यथा श्रद्धावानेवं यावत् प्रज्ञावान्।

*आज्ञाते इन्द्रियमाज्ञातेन्द्रियमिति*। आज्ञात एवेन्द्रियमाज्ञातेन्द्रियम्। निरवशेषाज्ञात इन्द्रियमित्यर्थः। आज्ञेन्द्रियमपि ह्याज्ञात इन्द्रियम्, न तु निरवशेषे, सावशेषत्वात् प्रहेयस्य। अथ वा—पदैकदेशग्रहणेन आज्ञातावी पुद्गल आज्ञात इत्युच्यते, तस्येन्द्रियमाज्ञातेन्द्रिमिति। *य आज्ञेन्द्रियेण सोऽवश्यमेकादशभिरिति*।

---

१. आज्ञातेन्द्रियेण—का०।

**मेकादशभिः** --सुखसौमनस्योपेक्षाजीवितमनःश्रद्धादिभि·, आज्ञेन्द्रियेण च। एवमाज्ञातावीन्द्रियेणापि—तैरेव दशभि., आज्ञानाचीन्द्रियेण च।

**आज्ञास्यामीन्द्रियोपेतस्त्रयोदशभिरन्वितः ॥ १९ ॥**

**कतमैस्त्रयोदशभिः ?** मनोजीवितकायेन्द्रियै·, चतसृभिर्वेदनाभि श्रद्धादिभिराज्ञास्यामीन्द्रियेण च ॥ १९. ॥

अथ य. सर्वाल्पै समन्वागत· स कियद्भिरिन्द्रियैः ?

---

आज्ञेन्द्रियवान् फलस्थ. शैक्षस्त्रिष्वपि धातुषु भवति। स चतुर्थध्यानारूप्योपपन्न कथं सुखसौमनस्येन्द्रियाभ्यां समन्वागत ? समापत्त्यर्थ. कामवैराग्येऽवश्यं सौमनस्येन्द्रियं प्रतिलभते, द्वितीयध्यानवैराग्ये च सुखेन्द्रियम्, ते च भूमिसञ्चारेऽपि न त्यजते। तथा हि वक्ष्यति—

"भूमिसञ्चारपरिहाणिभ्यां ध्यानाप्तं त्यजते शुभम्।

तथाऽऽरूप्याप्तमार्यं तु फलाप्त्युत्तप्तिहानिभि· ॥" ( अभि० ४.४० ) इति।

फलप्राप्तीन्द्रियोत्तापनेऽपि यद्यपि ते प्रतिपन्नकमार्ग-मृद्विन्द्रियमार्गसंगृहीते त्यजेते। तस्मात् ताभ्यां सुखसौमनस्याभ्यां भूमिसञ्चारेऽप्यपरित्यक्ताभ्यां चतुर्थध्यानारूप्योपपन्नोऽप्यार्य. समन्वागत एव भवति। शेषै पूर्ववदनियम.।

"*आज्ञास्यामीन्द्रियोपेतस्त्रयोदशभिरन्वितः*" इति। विस्तर -आज्ञास्यामीन्द्रियसमन्वागत कामावचर सत्त्व कामधातावेवाज्ञास्यामीन्द्रियोत्पादनात्। "अत्रैवेशादिह विधा तत्र निष्ठेति वाचनात्" ( अभि० ६ ५५ ) इति। तस्मादवश्यं कायेन्द्रियमस्यास्ति। चतस्रो वेदना दौर्मनस्यवर्ज्या, तस्य वीतरागावस्थाया व्यभिचारात्। तत्रावश्यमिति वर्तते। त्रयोदशभिरेभिरिन्द्रियैरवश्यमेव समन्वागत इत्यवधार्यते, न तु त्रयोदशभिरेवेति। शेषैरनियम, अन्धादिष्वपि दर्शनमार्गसम्भवात्। स्त्रीपुरुषेन्द्रिययोर्वैकल्ये कथं दर्शनमार्गोत्पत्ति., स्त्रीपुरुषेन्द्रियवियुक्तविकलाना हि संवरफलप्राप्तिवैराग्याणि न सन्तीति ? केचित् तावदाहु—प्रतिलब्धसंवराणा फलप्राप्तिर्भवति। द्विव्यञ्जनोदयाद्धि प्रातिमोक्षसंवरत्यागो भवति, न तद्वैकल्यात्। क्रमसरणाद्वा स्त्रीपुरुषेन्द्रियनिरोधेऽप्यस्तनिर्वेधभागीयस्य दर्शनमार्गोत्पत्तिर्भवति।

अपरे पुनराहु—पुद्गलसामान्यमिहाधिक्रियते, नैकैवेन्द्रियैरावश्यकसमन्वागमव्यभिचाराबुच्येते। कथम् ? "उपेक्षाजीवितमनोयुक्तोऽवश्यं त्रयान्वित." ( अभि० को० २ १७ ) इति यावत्। उपेक्षासमन्वागत पुद्गल कामधातूपपन्नो वा यावद्भवाग्रोपपन्नो वा सर्वोऽसाववश्यं त्रयेण समन्वागत.। चक्षुरादिव्यभिचारस्तु सम्भवतो न सर्वत्र। कश्चिदेव हि रूपिभिरिन्द्रियै-

**सर्वाल्पैर्नि:शुभोऽष्टाभिर्विन्मनःकायजीवितैः ।**

**युक्तः**

समुच्छिन्नकुशलमूलो निःशुभः । स **सर्वाल्पैरष्टाभिरिन्द्रियैः** समन्वागतः—पञ्चभिर्वेदनादिभिः, **कायमनोजीवितैश्च** । **वेदना हि वित्**, वेदयत इति कृत्वा । वेदनं वा वित्, यथा—सम्पदनं सम्पत् ।

यथा च निःशुभः सर्वाल्पैरष्टाभिरिन्द्रियैर्युक्तः,

**बालस्तथारूप्ये**

बाल इति पृथग्जनस्याख्या ।

कतमैरष्टाभिः ?

---

रसमन्वागतो य आरूप्यधातूपपन्नः, न तु यो रूपधातूपपन्नः । विस्तरेण यावत् कश्चिदेव श्रद्धादिभिरसमन्वागतो यः समुच्छिन्नकुशलमूलः, न तु स एवारूप्यधातूपपन्नः । तथेहापि यावानाज्ञास्यामीन्द्रियोपेतः सर्वोऽसावेभिर्यथोक्तैस्त्रयोदशभिरिन्द्रियैरवश्यं समन्वागतः । व्यभिचारस्तु सम्भवतः कस्यचिदेव । तथा हि कस्यचिच्चक्षुरिन्द्रियेणासमन्वागमो योऽन्धः, कस्यचिच्छ्रोत्रेन्द्रियेण यो बधिरः । एवं घ्राणादिभिः, यावत् कस्यचित् स्त्रीन्द्रियेण यः पुरुषः, कस्यचित् पुरुषेन्द्रियेण या स्त्री, कस्यचित् दौर्मनस्येन यो वीतरागः—इत्येवमेवावगन्तव्यम् ॥ १९ ॥

"*सर्वाल्पैर्निःशुभोऽष्टाभिः*" इति । एकः पुद्गलः सर्वेभ्योऽल्पैर्यः समन्वागतः । स कियद्भिरल्पैः समन्वागतः ? इत्याह—निःशुभः । यः समुच्छिन्नकुशलमूलः । स च कामधातावेव । "छिनत्ति स्त्रीपुमान् दृष्टिचरितः" ( अभि० को० ४८० ) इति । कामवैराग्यं वास्य न सम्भवति । तस्मादस्य पञ्चापि वेदनेन्द्रियाणि सन्ति । कायेन्द्रियं च जीवितमनसी च त एव सर्वत्र । चक्षुरादीनि तु न सन्ति, क्रममरणावस्थायामन्धत्वाद्यवस्थायां च तेषामभावात् । *वेदयत इति कृत्वेति* । कर्तरि क्विप् । *वेदनं वा विदिति* । भावसाधन औणादिकः क्विप् । ज्ञापकं दर्शयति—*यथा सम्पदनं सम्पदिति* ।

"*तथारूप्ये*" इति । संख्यामात्रं तथाशब्देन सम्बध्यते । *एकान्तकुशलत्वाच्छ्रद्धादीनि शुभग्रहणेन गृह्यन्त* इति । शुभान्येव नाकुशलाव्याकृतानि यानि तानि शुभानीत्यर्थः । *आज्ञास्यामीन्द्रियादीनामपि ग्रहणप्रसङ्ग* इति । तान्यप्येकान्तकुशलानि । तस्मात्तद्ग्रहणप्रसङ्ग इति । न, *अष्टाधिकारादिति* । 'निःशुभोऽष्टभिः' इत्येतस्मात् ।

**उपेक्षायुर्मनःशुभैः ॥ २० ॥**

**उपेक्षाजीवितमनोभिः**, श्रद्धादिभिश्च । एकान्तकुशलत्वात् श्रद्धादीनि शुभग्रहणेन गृह्यन्ते । आज्ञास्यामीन्द्रियादीनामपि ग्रहणप्रसङ्गः ? न; अष्टाधिकाराद्, बालाधिकाराच्च ॥ २० ॥

अथ यः सर्वबहुभिरिन्द्रियैः समन्वागत, स कियद्भिः ?

**बहुभिर्युक्त एकान्नविंशत्याऽमलवर्जितैः ।**

अनास्रवाणि त्रीणि वर्जयित्वा ।

स पुनः—

**द्विलिङ्गः**

द्विव्यञ्जनो यः समग्रेन्द्रियः **एकान्नविंशत्या** समन्वागतः ।

कश्चापरः ?

**आर्यो रागी**

अवीतरागोऽपि शैक्षः सर्वबहुभिरेकान्नविंशत्या समन्वागतः ।

**एकलिङ्गद्वयमलवर्जितैः ॥ २१ ॥**

एकं व्यञ्जनं द्वे चानास्रवे वर्जयित्वा । आज्ञातावीन्द्रियं द्वयोश्चान्यतरत् ।

उक्त इन्द्रियाणां धातुप्रभेदप्रसङ्गेनागताना विस्तरेण प्रभेदः ॥ २१ ॥

---

*"उपेक्षायुर्मनःशुभैः"* अष्टाभिरित्याज्ञास्यामीन्द्रियादीना निरासः कृतो भवति; अष्टशब्देन कृतावधित्वात् । *बालाधिकाराच्चेति* । बालोऽत्राधिक्रियते, "बालस्तथाऽन्ये" इति वचनात् । आज्ञास्यामीन्द्रियाद्यभावे च पृथग्जनो भवति, "पृथग्जनत्वं कतमत् ? आर्यधर्माणामलाभः" (          ) इति वचनात् । तस्मात् तेष्वनास्रवेष्वप्रसङ्ग इति ॥ २० ॥

*द्विव्यञ्जनो यः समग्रेन्द्रिय इति* : द्विव्यञ्जनोऽपि हि समग्रचक्षुरादिक एवमेका*न्नविंशत्या समन्वागत*., नान्यथा ।

*आज्ञातावीन्द्रियं द्वयोश्चान्यतरदिति* । रागित्वादाज्ञातावीन्द्रियमेकान्तेन वर्जयितव्यम्, आर्यस्य चाज्ञास्यामीन्द्रियाज्ञेन्द्रियाभ्यामवश्यं पर्यायेण समन्वागमात् । यदाज्ञास्यामीन्द्रियं न तदाज्ञेन्द्रियम्, यदाज्ञेन्द्रियं न तदाज्ञास्यामीन्द्रियम् ।

*उक्त इन्द्रियाणां धातुप्रभेदप्रसङ्गेनागतानां विस्तरेण प्रभेद* इति । "अष्टादशानां धातूना कतीन्द्रियं कति नेन्द्रियम" इति धातुप्रभेदप्रसङ्गेन । "धर्मार्धं इन्द्रियं ये

इदमिदानीं विचार्यते—किमेते संस्कृता धर्मा यथा भिन्नलक्षणाः, एवं भिन्नोत्पादाः ? उताहो नियतसहोत्पादा अपि केचित् सन्ति ? सन्तीत्याह । सर्वे इमे धर्माः पञ्च भवन्ति—रूपम्, चित्तम्, चैतसिकाः, चित्तविप्रयुक्ताः संस्काराः, असंस्कृतं च । तत्रासंस्कृतं नैवोत्पद्यते ।

रूपिणां तु धर्माणामयं नियमः—

**कामेऽष्टद्रव्यकोऽशब्दः परमाणुरनिन्द्रियः ।**

सर्वसूक्ष्मो हि रूपसङ्घात परमाणुरित्युच्यते; यतो नान्यतरो विज्ञायेत । स कामधातावशब्दकोऽनिन्द्रियश्चाष्टद्रव्यक उत्पद्यते, नान्यतमेन हीन. । अष्टौ द्रव्याणि—चत्वारि महाभूतानि, चत्वारि चोपादायरूपाणि रूपगन्धरसस्प्रष्टव्यानि ।

सेन्द्रियस्तु परमाणुरशब्दको नवद्रव्यक उत्पद्यते, दशद्रव्यको वा । तत्र तावत्—

**कायेन्द्रियी नवद्रव्यः**

---

च द्वादशाध्यात्मिका स्मृता" ( अभि० को० १.४८ ) इति इन्द्रियाण्याग तानि । तेषा प्रभेदः "अमलं त्रयम्" ( अभि० को० २९ ) इत्येवमादिविस्तरेणोक्त ॥ २१ ॥

*"किमेते संस्कृता धर्माः"* इति । ये ते स्कन्धधात्वायतनत्वेनाभिहिता पूर्वम् । *यथा भिन्नलक्षणा* इति । रूप्यते इति रूपम्, अनुभवो वेदना, निमित्तोद्ग्रहणं संज्ञेत्यादि । संस्कृतग्रहणमुत्पत्तिमत्त्वात् । *उताहो नियतसहोत्पादा अपि केचित् सन्तीति* । सन्ति हि केचित् सहोत्पादा, न तु नियतसहोत्पादा. । यथा चक्षुरादिसहोत्पादास्तद्विज्ञानादयश्चक्षुरादीना सभाग-तत्सभागभावात् । तस्मादेवं पृच्छति । *सर्वे इमे धर्माः पञ्च भवन्तीति* । पञ्चवस्तुकनयेनैवं सर्वधर्मसंग्रहो व्यवस्थाप्यते । रूपादिकलापमुखेन धर्मनिर्देश. सुखप्रतिपत्त्यर्थम् । *तत्रासंस्कृतं नैवोत्पद्यत* इति । न तत्प्रति सहोत्पादनियमश्चिन्त्यते ।

*सर्वसूक्ष्मो रूपसंघातः* परमाणुरिति । संघातपरमाणुर्न द्रव्यपरमाणु. । यत्र हि पूर्वापरभागो नास्ति तत् सर्वरूपापचितं द्रव्यं द्रव्यपरमाणुरितीष्यते । तस्माद्विशिनष्टि—संघातः परमाणुरिति ।

*"कामेऽष्टद्रव्यकोऽशब्दः"* इति । कामधातौ यदा शब्दोऽत्र नोत्पद्यते, न दा नियतमष्टद्रव्यक एव भवति, नातो न्यूनद्रव्यक. ।

कायेन्द्रियमत्रास्तीति सोऽयं कायेन्द्रियी। तत्र नव द्रव्याणि—तानि चाष्टौ, कायेन्द्रियं च।

**दशद्रव्योऽपरेन्द्रियः ॥ २२ ॥**

अपरमिन्द्रियं यत्र परमाणौ तत्र दश द्रव्याणि—तान्येव नव, चक्षुःश्रोत्रघ्राणजिह्वेन्द्रियाणां चान्यतमम्।

सशब्दाः पुनरेते परमाणव उत्पद्यमाना यथाक्रमं नवदशैकादशद्रव्यका उत्पद्यन्ते। अस्ति हीन्द्रियाविनिर्भागी शब्दोऽपि य उपात्तमहाभूतहेतुकः।

कथमविनिर्भागे[1] भूतानां कश्चिदेव सङ्घातः कठिन उत्पद्यते, कश्चिदेव द्रव उष्णो वा, समुदीरणो वा? यद्यत्र पटुतमं प्रभावत उद्भूतं तस्य तत्रोपलब्धिः; सूचीतूलीकलापस्पर्शवत्[2], सक्तुलवणचूर्णरसवच्च।

---

*"अपरेन्द्रियः"* इति। अपरमिन्द्रियमस्मिन्नित्यपरेन्द्रियः, चक्षुरादिमानित्यर्थः। यत्र हि चक्षुः श्रोत्रादि वा तत्र कायेन्द्रियेण भवितव्यम्, तत्प्रतिबद्धवृत्तित्वाच्चक्षुरादीनाम्। *सशब्दाः पुनरेते परमाणव* इत्यष्टद्रव्यकादयः संघातपरमाणवः सशब्दा *उत्पद्यमाना यथाक्रमं नवदशैकादशद्रव्यका उत्पद्यन्ते*—योऽष्टद्रव्यकः स नवद्रव्यकः, यो नवद्रव्यकः स दशद्रव्यकः, यो दशद्रव्यकः स एकादशद्रव्यक इति। *अस्ति हीन्द्रियाविनिर्भागी शब्दोऽपीति*। इन्द्रियाद् विनिर्भक्तुं यो न शक्यते स इन्द्रियाविनिर्भागी शब्दः। इन्द्रियापृथग्वर्त्तीत्यर्थः। अविनिर्भागीति केचिद् भुजि पठन्ति।

*कथमविनिर्भागे भूतानां कश्चिदेव संघातः कठिन* इत्यादि। कठिनः पृथिवीधातुः, द्रवोऽब्धातुः, उष्णस्तेजोधातुः, समुदीरणा वायुधातुः। तुल्यभूतसद्भावात् तुल्यरूपैस्तत्संघातैर्भवितव्यमित्यभिप्रायः। *यद्यत्र पटुतममिति*। विस्तरः—यद् द्रव्यं पृथिव्यादिलक्षणम्, यत्र संघाते पटुतमं स्फुटतमम्, *प्रभावतः* शक्तितः, न तु द्रव्यतः। उद्भूतम् उत्पन्नम्। *तस्य तत्रोपलब्धिः*। तस्य द्रव्यस्य तत्र संघात उपलब्धिर्ग्रहणम्। *सूचीतूलीकलापस्पर्शवत्*। तत्र सूच्यो लोहमय्यः प्रतीता लोके। तूल्यो वीरणादिपुष्पमूलदण्डाः, या 'सिंका' इति प्राकृतजनप्रतीताः, तासां सूचीनां तूलीनां च कलापः, तस्य स्पर्शः सूचीतूलीकलापस्पर्शः। तस्य चोपलब्धिः तस्य पटुतमस्य प्रभावत उद्भूतस्य भूतस्येति। "तत्र तस्येव" (पा० सू० ५ १ ११६) इत्यनेन लक्षणेन वतिः। एतदुक्तं भवति—

---

१. कथमिहाविनिर्भागे—का०। २. सूचीतूली०—का०।

**कथं पुनस्तेषु शेषास्तित्वं गम्यते ? कर्मतः संग्रहधृतिपक्तिव्यूहनात् ।**

**प्रत्ययलाभे च सति कठिनादीनां द्रवणादिभावात् अप्सु शैत्यातिशयादौष्ण्यं गम्यत इत्यपरे ।**

**अव्यतिभेदेऽपि तु स्याच्छैत्यातिशयः, शब्दवेदनातिशयवत् ।**

---

यथा तुल्येऽपि सूचीना तूलोना कलापसद्भावे तीक्ष्णत्वात् सूचीनामेव स्पर्शो व्यक्तमुपलभ्यते, न तूलीनाम्, अतीक्ष्णत्वात्; तथा क्वचिदेव संघाते काष्ठादिके कठिनमुपलभ्यते—क्वचिद् द्रव पानीये, क्वचिदुष्णोऽग्नौ, क्वचित् समुदीरणा वायौ । न च तत्र तत्र संघाते चत्वारि महाभूतानि न सन्ति । *सक्तुलवणचूर्णरसवच्च* । सक्तुचूर्णानां लवणचूर्णाना च यथा रसस्योपलब्धि, लवणचूर्णरस एव व्यक्तमुपलभ्यते, न तु सक्तुचूर्णरसः, तद्वदिहापीति ।

*संग्रहधृतिपक्तिव्यूहनादिति* । संग्रहकर्मणाब्धातोरस्तित्वं गम्यते काष्ठादिके । अन्यथा पासुमुष्टिवत् तद् विशीर्येत, यदि तत्राब्धातुर्न स्यात् । धृतिकर्मणाप्सु नौप्रभृतीना पृथिवीधातोरस्तित्वं गम्यते । पक्तिकर्मणा तेजोधातोरस्तित्वं गम्यते । यदि हि तत्र स्यात् काष्ठादिकं न पूतीभवेत् । व्यूहनकर्मणा वायुधातोरस्तित्वं गम्यते । प्रसर्पणं हि तस्य न स्याद्, वृद्धिर्वा, यदि वायुधातुस्तत्र न स्यात् । एवमन्यत्रापि योज्यम् ।

*प्रत्ययलाभे च सतीति* । विस्तरः—प्रत्ययानामग्न्यादीना लाभे सति *कठिनादीनां* द्रवद्रव्यानां च *द्रवणादिभावात्* द्रवणघनत्वादिभावात् । तद्यथा अग्निभूते सति कठिनस्य लोहस्य द्रवणम् । तेन ज्ञायते—लोहेऽब्धातुरस्तीति । तथा द्रवस्य शैत्यादिप्रत्ययलाभे काठिन्यम्, तेन ज्ञायते—पृथिवीधातोरत्रास्तित्वमिति । तथा कठिनसंघर्षादौष्ण्यमुपलभ्यते, तेन तेजोधातोरत्रास्तित्वं गम्यते । इत्येवं सम्भवतोऽन्यत्रापि योज्यम् । *अप्सु शैत्यातिशयादौष्ण्यं गम्यते* इत्यपर इति *भदन्तश्रीलाभः* । यस्मादापः शीता शीततरा शीततमाश्चोपलभ्यन्ते, ततो ज्ञायते तेजसस्तत्रान्यतरतमोत्पत्तेः शैत्यातिशयः । तेन च तत्र तेजोऽस्तीति गम्यते ।

*अव्यतिभेदेऽपीति* विस्तरः । नं मतमाचार्यो दूषयति । यथा न च शब्दस्य द्रव्यान्तरेण व्यतिभेदो मिश्रीभावोऽस्ति, अतिशयश्च भवति, स्वभावभेदात्—पटुः शब्दः पटुतम इति । एवमिहापि भवेत् । यथा च वेदनाया न केनचिद् द्रव्यान्तरेण व्यतिभेदो भवतीति स्वभावभेदात् तारतम्येनातिशयः, तथेहापीति । नानेन तेजोऽस्तित्वं गम्यते । ता एव ह्याप. काश्चिच्छीताः, काश्चिच्छीततराः, काश्चिच्छीततमा इति ।

बीजतस्तेषु तेषां भावो न स्वरूपत इत्यपरे; "सन्त्यस्मिन् दारुस्कन्धे विविधा धातव." ( ) इति वचनात् ।

कथं वायौ वर्णसद्भाव ? श्रद्धानीय एषोऽर्थः नानुमानीय: संसर्गतो[1] गन्धग्रहणात् तस्य वर्णाव्यभिचारात् ।

रूपधातौ गन्धरसयोरभाव उक्तः, तेन तत्रत्या परमाणव. षट्सप्ताष्टद्रव्यका इत्युक्तरूपत्वात् न पुनरुच्यन्ते ॥

---

*बीजतस्तेषु तेषा भावो न स्वरूपत इत्यपर* इति । *सौत्रान्तिका:* । बीजत. = शक्तित, सामर्थ्यत इत्यर्थ । न स्वरूपतो न द्रव्यत इत्यर्थ । शक्तिरेव हि नानाविधास्ति यया योगिभिरधिमोक्षविशेषेण सुवर्णधातु, रूप्यधातु., ताम्र धातुरित्येवमादयो धातव क्रियन्ते । कस्मात् ? इत्याह—*सन्त्यस्मिन् दारुस्कन्धे विविधा धातव इति वचनात्* । धातुशक्तयो हि तत्रैवं भगवतोक्ता । न हि तत्रातिबहूना सुवर्णरूप्यादोना स्वरूपतस्तत्रावकाशोऽस्तीति ।

*कथं वायौ वर्णसद्भाव* इति । वैभाषिकानेवं चोदयन्ति—"कामेऽष्टद्रव्यक.' इति नियमे कथं वायौ वर्णोऽस्तीति निर्धार्यते, न हि कथञ्चित् तत्र वर्ण उपलभ्यते ? *श्रद्धानीय एषोऽर्थो नानुमानीय* इति वैभाषिका. । परमाप्तैरयमुक्तोऽर्थ इति प्रत्येतव्य., नार्थोऽनुमानसाध्य इत्यभिप्राय : *संसर्गतो गन्धग्रहणादिति* । अस्ति वानुमानमिति दर्शयति । गन्धवता तु द्रव्येण वायो सम्पर्काद् गन्ध उपलभ्यते । स च गन्धो वर्णं न व्यभिचरति । यत्र हि गन्धस्तत्र वर्णेन भवितव्यमिति । अत्र च साधनवचनम्—'वर्णवान् वायुः, गन्धवत्त्वाज्जाति पुष्पवद्' इति ।

*रूपधातौ गन्धरसयोरभाव उक्त इति* । "विना गन्धरसघ्राणजिह्वाविज्ञानधातुभि." ( अभि० को० १ ३ ) इति वचनात् । तेन *तत्रत्याः परमाणव. षट्सप्ताष्टद्रव्यका* इति । तत्रत्यास्तत्र भवा. । तत्रत्या. परमाणव संघातपरमाणवोऽधिकृता. । य इहाष्टद्रव्यक उक्तो निरिन्द्रियोऽशब्द:, स तत्र षड्द्रव्यक । यो नवद्रव्यकः कायेन्द्रियी स सप्तद्रव्यक: । यो दशद्रव्यकोऽपरेन्द्रिय: सोऽष्टद्रव्यक । सशब्दका: पुनरेते सप्ताष्टनवद्रव्यका इत्यवगन्तव्यम् । उक्तरूपत्वान्न पुनरुच्यन्त इति । उक्तकल्पत्वान्न पुन: सूत्र्यन्त इत्यर्थ ।

---

१. संस्पन्दतो—का० ।

किं पुनरत्र द्रव्यमेव द्रव्यं गृह्यते ? आहोस्विदायतनम् ?

किं चात. ? यदि द्रव्यमेव द्रव्यं गृह्यते, अत्यल्पमिदमुच्यते—अष्टद्रव्यक., नवदशद्रव्यक इति । अवश्यं हि तद्द्रव्यसंस्थानेनापि भवितव्यम्; तस्यापि परमाणुसञ्चितत्वात्, गुरुत्वलघुत्वयोश्चान्यतरेण, श्लक्ष्णत्वकर्कशत्वयोश्च, शीतेनापि, क्वचित् जिघत्सया पिपासया च ?

अथाप्यायतनद्रव्यं गृह्यते, अपि बह्विदमुच्यते—अष्टद्रव्यक इति ?

चतुर्द्रव्यको हि वक्तव्यः—यावता भूतान्यपि स्प्रष्टव्यायतनम् । किञ्चिदत्र द्रव्यमेव द्रव्यं गृह्यते यदाश्रयभूतम्, किञ्चिदायतनं द्रव्यं गृह्यते यदाश्रितभूतम् ।

एवमपि भूयांसि भूतद्रव्याणि भवन्ति ? उपादायरूपाणा प्रत्येक भूतचतुष्काश्रितत्वात् ।

---

*किं पुनरत्र द्रव्यमेव द्रव्यमिति* । विस्तर'—मुख्यवृत्त्या यद् द्रव्यं यस्य स्वलक्षणमस्ति तद् द्रव्यं गृह्यते ? आहोस्विदायतनम् ? द्रव्यमित्यधिकृतम् । आयतनमपि हि द्रव्यमिति शक्यते वक्तुम्, सामान्यविशेषलक्षणसद्भावात् । *किं चातः* । कश्चातो दोष इत्यर्थ. । *यदि द्रव्यमेव द्रव्यं गृह्यते* । यदि रूपपर्यन्तलक्षणं पृथिव्यादि परमाणुद्रव्यं गृह्यते । *अत्यल्पमिदमुच्यते अष्टद्रव्यक* इत्यादि । संस्थानगुरुत्वलघुत्वश्लक्ष्णत्वकर्कशत्वशीतजिघत्सापिपासाना सम्भवतो द्रव्यान्तराणा क्वचित् क्वचित् सद्भावात् । तथा च सति योऽष्टद्रव्यक. स नवद्रव्यको यावच्चतुर्दशद्रव्यक इत्यष्टद्रव्यकनियमो भिद्यते । एवं नवद्रव्यकादिषु योज्यम् । एवं रूपधातावपि षट्सप्ताष्टद्रव्यनियमभेदो वक्तव्य. ।

चतुर्द्रव्यको *हि* वक्तव्य इति । यस्माद् *भूतान्यपि* पृथिव्यादीनि *स्प्रष्टव्यायतनम्* । "स्प्रष्टव्यं द्विविधम्" ( अभि० को० १.३५ ) इति वचनात् । तस्मात् कामे चतुर्द्रव्यकोऽशब्द.—रूपं गन्धो रस. स्प्रष्टव्यमिति । सशब्दस्तु पञ्चद्रव्यक इति वक्तव्यम् । *यदाश्रयभूतमिति* । पृथिव्यादीनि चत्वारि । *यदाश्रितभूतमिति* । रूपं गन्धो रसः स्प्रष्टव्यैकदेशश्च । तदेवं संस्थानस्य रूपेऽन्तर्भावात् गुरुत्वादाना च स्प्रष्टव्य इति नात्यल्पमिदमुच्यते, नाप्यतिबहु, आश्रयभूताना स्प्रष्टव्यायतनात्रिःकृष्य चतुर्धा निर्देशात् ।

*एवमपि भूयांसीति* । विस्तर.—यद्भूतचतुष्कमाश्रित्य एकस्योपादायरूपस्य नीलस्य पीतस्य वा, न तदेवान्यस्योपादायरूपस्य गन्धस्य रसस्य वाश्रय । किं तर्हि ? अन्यदेव भूतचतुष्कं तस्याश्रय इति *वैभाषिक*सिद्धान्त. ।

तत्र[1] पुनर्जातिद्रव्यं गृह्यते; भूतचतुष्कान्तराणां स्वजात्यनतिक्रमात् ।

कः पुनर्यत् स एव विकल्पेन वक्तुम् । च्छन्दतो[2] हि वाचा प्रवृत्तिरर्थस्तु परीक्ष्यः ।

उक्तो रूपिणा सहोत्पादनियम ॥

शेषाणा वक्तव्य । तत्र तावत्

**चित्तचैत्ताः सहावश्यं**

न ह्येते विनाऽन्योन्यं भवितुमुत्सहन्ते ।

---

*तत्र पुनर्जातिद्रव्यमिति* । भूतचतुष्कजातिरत्र गृह्यते । या ह्येकस्य भूतचतुष्कस्य जातिस्तामन्यानि भूतचतुष्काणि नातिक्रामन्ति । *एवं विकल्पेन वक्तुमिति* । किञ्चिदत्र द्रव्यमेव द्रव्यं गृह्यते यदाश्रयभूतम् । किञ्चिदत्रायतनद्रव्यं गृह्यते यदाश्रयिभूतम् । यच्चैतदाश्रयभूतं तज्जात्या गृह्यत इति । *छन्दतो हि वाचा प्रवृत्तिः, अर्थस्तु परीक्ष्य* इति । छन्दत इच्छातः संक्षेपविस्तरविधानानुविधायिन्यो वाच प्रवर्तन्ते । अर्थस्तु तासां परीक्ष्य. । किमेवं नियतसहोत्पादानि तानि भवन्ति ? न भवन्तीति । *योगाचारचित्तास्तु* सङ्घातावस्थाने भूताना भौतिकाना च नियमं वर्णयन्ति । कथमिति ? उच्यते—अस्ति समुदाय एकभौतिक:, तद्यथा शुष्को मृत्पिण्ड । अस्ति द्विभौतिक स एवार्द्र । अस्ति त्रिभौतिक. स एवोष्ण । अस्ति यावत् सार्वभौतिक: स एवार्द्रं उष्णश्च मृत्पिण्डो गमनावस्थागमिति ।

उपादायरूपेऽपि यदुपादायरूपं यस्मिन् समुदाये उपलभ्यते तत् तत्रास्तीति वेदितव्यम् । अस्ति समुदाय एकोपादायरूपिक., तद्यथा प्रभा । अस्ति द्व्युपादायरूपिक., तद्यथा सशब्दो गन्धो वायु । त्र्युपादायरूपिक:, तद्यथा धूम., तस्य रूपगन्धस्प्रष्टव्यविशेषप्रभावितत्वात् । स्प्रष्टव्यविशेष पुनरत्र लघुत्वं वेदितव्यम् । चतुरुपादायरूपिक:, तद्यथा गुडपिण्ड: । पञ्चोपादायरूपिक:, तद्यथा स एव सशब्द:—इत्येवमाद्यापि वक्तव्यम् ॥ २२ ॥

*शेषाणा वक्तव्य इति* । चित्तचैत्ताना विप्रयुक्ताना च ।

*"चित्तचैत्ताः सहावश्यम्"* इति । न चित्तं चैत्तैर्विना उत्पद्यते, नापि चैत्ता विना चित्तेनेत्यवधार्यते । न तु सर्वं चित्तं सर्वचैत्तनियतसहोत्पादम्, नापि सर्वचैत्ता. सर्वचित्तनियतसहोत्पादा इति ।

---

१. अत्र —का० ।  २. च्छन्दतोऽपि—का० ।

**सर्वं संस्कृतलक्षणैः ।**

सहावश्यमिति वर्तते । यत्किञ्चिदुत्पद्यते—रूपम्, चित्तम्, चैतसिका[1], चित्तविप्रयुक्ताश्च[1]—सर्वं संस्कृतलक्षणैः सार्धमुत्पद्यते ।

**प्राप्त्या वा**

प्राप्त्या सह सत्त्वाख्यमेवोत्पद्यते, नान्यद्—इति विकल्पार्थो वाशब्दः । चैत्ता इत्युच्यन्ते, क इमे चैत्ताः ?

**पञ्चधा चैत्ता महाभूम्यादिभेदतः ॥ २३ ॥**

पञ्च प्रकाराश्चैत्ताः—महाभूमिका, कुशलमहाभूमिकाः, क्लेशमहाभूमिकाः, अकुशलमहाभूमिका, परीत्तक्लेशमहाभूमिकाश्च । भूमिर्नाम गतिविषयः । यो हि यस्य गतिविषयः स तस्य 'भूमिः' इत्युच्यते ॥ २३ ॥

तत्र महती भूमिरेषामिति महाभूमिका, ये सर्वत्र चेतसि भवन्ति ।

के पुन सर्वत्र चेतसि भवन्ति ?

**वेदना चेतना सञ्ज्ञा च्छन्दः स्पर्शो मतिः स्मृतिः ।**
**मनस्कारोऽधिमोक्षश्च समाधिः सर्वचेतसि ॥ २४ ॥**

---

"*सर्वं संस्कृतलक्षणैः*" इति । संस्कृतलक्षणैर्यद्युक्तं तत्सर्वं तैः संस्कृतलक्षणैर्जात्यादिभिरवश्य महोत्पाद्यते । किं पुनस्तद् ? इत्याह—*यत्किञ्चिदुत्पद्यते रूपं चित्तं चैतसिकाश्चित्तविप्रयुक्ताश्चेति*। पूर्वमेव ह्यसंस्कृतं बहिष्कृतम्, "तत्रासंस्कृतं नैवोत्पद्यते" इति वचनात् ।

*विकल्पार्थो वा शब्द* इति । किञ्चित्प्राप्त्या सहोत्पद्यते यत्सत्त्वसंख्यातम्, किञ्चिन्न यदसत्त्वसंख्यातमिति विकल्पः । प्रतिसंख्याप्रतिसंख्यानिरोधयोर्यद्यपि प्राप्तिरस्ति, न तु नायुत्पद्येते इति न तयोर्ग्रहणम् । सहोत्पादननियमो ह्यमारम्भ इति, असत्त्वसंख्यातस्य प्राप्तिर्नास्तीति किमत्र कारणम् ? सर्वसत्त्वसाधारणत्वात् । सहजयैव च प्राप्त्या प्राप्तिमान् सहोत्पद्यते, न पूर्वपश्चात्कालजयेत्यवगन्तव्यम् ।

"*गतिविषयः*" इति । उत्पत्तिविषय इत्यर्थः । *महाभूमिका* इति, महत्त्वं सर्वचित्तभवत्वात् ॥ २३ ॥

---

१-१. विप्रयुक्ता वा—का० ।

इमे किल दश धर्माः सर्वत्र चित्तक्षणे समग्रा भवन्ति। तत्र **वेदना** त्रिविधोऽनुभवः—सुखः, दुःखः, अदुःखासुखश्च। **चेतना** चित्ताभिसंस्कारो मनस्कर्म। **संज्ञा** संज्ञानं विषयनिमित्तोद्ग्रहः। **छन्दः** कर्तृकामता। **स्पर्श** इन्द्रियविषयविज्ञानसन्निपातजा स्पृष्टिः। **मतिः** प्रज्ञा धर्मप्रविचयः। **स्मृति**रालम्बनासम्प्रमोषः। **मनस्कार**श्चेतस आभोगः। **अधिमोक्षो**ऽधिमुक्तिः। **समाधि**श्चित्तस्यैकाग्रता।

सूक्ष्मो हि चित्तचैत्तानां विशेषः। स एष[1] दुःपरिच्छेदः प्रबन्धेष्वपि[2]

---

*इमे किले*ति। किलशब्दः परमतद्योतने। स्वमतं तु छन्दादयः सर्वचेतसि न भवन्ति। तथा ह्यनेनैवाचार्येण *पञ्चस्कन्धके* लिखितम्—"छन्दः कतमः? अभिप्रेते वस्तुन्यभिलाषः। अधिमोक्षः कतमः? निश्चिते वस्तुनि तथैवावधारणम्" (          ) इत्यादि। *चेतना चित्ताभिसंस्कार* इति चित्तप्रस्पन्दः। प्रस्पन्द इव प्रस्पन्द इत्यर्थः। *विषयनिमित्तग्राह* इति। विषयविशेषरूपग्राह इत्यर्थः। *स्पर्श इन्द्रियविषयविज्ञानसन्निपातजा स्पृष्टिरि*ति। इन्द्रियविषयविज्ञानानां सन्निपाताज्जाता स्पृष्टिः। स्पृष्टिरिव स्पृष्टिः। यद्योगादिन्द्रियविषयविज्ञानान्यन्योन्यं स्पृशन्तीव स स्पर्शः। *धर्मप्रविचय* इति। प्रविचिनोतीति प्रविचयः। प्रविचीयते वानेन धर्मा इति प्रविचयः। येन संकीर्णा इव धर्माः पुष्पाणीव प्रविचीयन्ते, उच्चीयन्त इत्यर्थः। इमे सास्रवाः, इमेऽनास्रवाः, इमे रूपिणः, इमे अरूपिण इति। धर्माणां प्रविचयो *धर्मप्रविचयः।* प्रतीतत्वात् प्रज्ञेति वक्तव्ये श्लोकबन्धानुगुण्येन मतिरिति कारिकायामुक्तम्। *स्मृतिरा*-*लम्बनासम्प्रमोष* इति। यद्योगादालम्बनं न मनो विस्मरति, तच्चाभिलपतीव, *सा स्मृतिः। मनस्कारश्चेतस आभोग* इति। आलम्बने चेतस आवर्जनम्, अवधारणमित्यर्थः। मनस कारो मनस्कारः। मनो वा करोति आवर्जयतीति मनस्कारः। *अधिमुक्तिस्तदालम्बनस्य गुणतोऽवधारणम्।* रुचिरित्यन्ये। यथानिश्चयं धारणेति योगाचारचित्ताः। *समाधिश्चित्तस्यैकाग्रत*ति। अग्रमालम्बनमित्येकोऽर्थः। यद्योगाच्चित्तं प्रबन्धेन एकत्रालम्बने वर्तते, स समाधिः। यदि समाधिः सर्वचेतसि भवति, किमर्थं ध्यानेषु यत्नः क्रियते? बलवत्समाधिनिष्पादनार्थम्।

कथमेकस्मिंश्चित्ते दशानां भिन्नलक्षणानां चैत्तानामस्तित्वं गम्यत इति? अत आह—*सूक्ष्मो हि चित्तचैत्तानां विशेष* इति। विस्तरः—*स एष विशेषश्चित्त*

---

१ एव—का०। २ प्रवाहेष्वपि—का०।

लभेते । एवं कायप्रश्रब्धिरपि बोध्यङ्गानुगुण्याद् बोध्यङ्गशब्दं लभते ।

**उपेक्षा** चित्तसमता चित्तानाभोगता । कथमिदानीमेतद्योक्ष्यते—तत्रैव चित्ते आभोगात्मको मनस्कारोऽनाभोगात्मिका चोपेक्षा इति ? ननु चोक्तम्—"दुर्ज्ञान एषां विशेष" ( ) इति ? अस्ति हि नाम दुर्ज्ञानमपि ज्ञायते । इदं तु खल्वतिदुर्ज्ञानं यद् विरोधेऽप्यविरोध इति । अन्यत्राभोग, अन्यत्रानाभोगः—इति कोऽत्र विरोधः ? न तर्हीदानीमेकालम्बनाः सर्वे सम्प्रयुक्ताः प्राप्नुवन्ति । एवञ्जातीयकमत्रान्यदप्यायास्यतीति यस्तस्य नयः सोऽस्यापि वेदितव्यः ।

**ह्रीरपत्राप्यं** च पश्चाद् वक्ष्यते । **मूलद्वयं** द्वे कुशलमूले अलोभाद्वेषौ । अमोहोऽप्यस्ति, स तु प्रज्ञात्मकः ।

---

वितर्कवीर्यस्वभावत्वात् तौ प्रज्ञास्वभावौ । यदा च त्रिस्कन्धो मार्गः क्रियते—शीलस्कन्धः, समाधिस्कन्धः, प्रज्ञास्कन्ध इति । तत्र *प्रज्ञास्कन्धनिर्देशे* उक्तम्—"प्रज्ञास्कन्धः कतमः ? सम्यग्दृष्टिः, सम्यक्सङ्कल्पः, सम्यग्व्यायामः" इति । *उपेक्षा चित्तसमतेति* । यद्योगाच्चित्तं सममनाभोगं वर्तते, सोपेक्षा संस्कारोपेक्षा नाम । त्रिविधा उपेक्षा—वेदनोपेक्षा, संस्कारोपेक्षा, अप्रमाणोपेक्षा चेति ।

*ननु चोक्तं दुर्ज्ञान एषां विशेष इति* । "सूक्ष्मो हि चित्तचैत्तानां विशेषः, स एष दुःपरिच्छेदः प्रवाहेष्वपि[1] तावद्" इत्यादिवचनाद् दुःखेन ज्ञायते दुर्ज्ञानः । *अस्ति हि नाम दुर्ज्ञानमपि ज्ञायते* । यदविरुद्धमेकस्मिंश्चित्तक्षणे धर्मान्तरेण स्पर्शादिना । *इदं तु खलु अतिदुर्ज्ञानं यद्विरोधेऽप्यविरोध इति* । आभोगानाभोगयोरेकस्मिंश्चित्तक्षणेऽविरोधो व्यवस्थाप्यत इति वाक्यशेषः । न हि विरुद्धयोः सुखदुःखयोरेकस्मिंश्चित्तक्षणे भावो दृष्ट इति । *अन्यत्राभोग इति* । अन्यत्रालम्बने आभोगः अन्यत्रानाभोग इत्यविरोधः । *एवञ्जातीयकमत्रान्यदप्यायास्यतीति* । विरोधजातीयं यथा वितर्कविचारौ । तयोर्हि लक्षणम्—चित्तौदारिकता वितर्कः, चित्तसूक्ष्मता विचार इति; "वितर्कविचारौदार्यसूक्ष्मते" ( अभि० को० २ ३३ ) इति वचनात् । तयोस्त्वेकत्र चित्ते विरोध इति वक्ष्यते । *यस्तस्य नयः सोऽस्यापीति* । पर्यायेणानयोर्वृत्तिरित्यभिप्रायः ।

*ह्रीरपत्राप्यं च पश्चाद्वक्ष्यत इति* । "अह्रीरगुरुतावद्ये भयादर्शित्वमत्रपा" ( अभि० को० २ ३२ ) इत्यत्र विपर्ययग्रहणात् । *स तु प्रज्ञात्मक इति* । स

---

१. प्रबन्धेष्वपि—इति तत्र पाठः ।

प्रज्ञा च महाभूमिकेति नासौ कुशलमहाभूमिक एवोच्यते । **अविहिंसा** अविहेठना । **वीर्यं** चेतसोऽभ्युत्साह ॥ २५ ॥

उक्ताः कुशलमहाभूमिकाः ॥

महती भूमिर्महाभूमिः । क्लेशा महाभूमिरेषा त इमे क्लेशमहाभूमिका ये धर्माः सदैव क्लिष्टे चेतसि भवन्ति । के पुनस्ते सदैव क्लिष्टे चेतसि भवन्ति ?

**मोहः प्रमादः कौशीद्यमाश्रद्ध्यं स्त्यानमुद्धवः ।**

**क्लिष्टे सदैव**

तत्र **मोहो** नामाविद्या, अज्ञानमसम्प्रख्यानम् । **प्रमादः** कुशलानां धर्माणामभावना अप्रमादभावनाविपक्षो धर्मः । **कौशीद्यं** चेतसो नाभ्युत्साहो वीर्यविपक्षः । **आश्रद्ध्यं** चेतसोऽप्रसादः श्रद्धाविपक्षः । **स्त्यानं** कतमत् ? या कायगुरुता, चित्तगुरुता, कायाकर्मण्यता, चित्ताकर्मण्यता । "कायिकं स्त्यानं चैतसिकं स्त्यानम्" इत्युक्तमभिधर्मे । कथं चैतसिको धर्मः कायिक इत्युच्यते ? यथा कायिकी वेदना । **औद्धत्यं** चेतसोऽव्युपशमः[1] । इतीमे षट् क्लेशमहाभूमिकाः ॥

---

त्वमोह प्रज्ञास्वभाव । *प्रज्ञा च महाभूमिकेति* । "मतिः स्मृतिः" ( अभि० को० ३२८ ) इति वचनात् । नासो कुशलमहाभूमिक एवोच्यते, किं तर्हि ? अकुशलादि भूमिकोऽपीति । *अविहेठनेति* । यद्योगात्परो न विहेठ्यते साविहिंसा । विहिंसाप्रतिपक्षश्चैतसिक । *चेतसोऽभ्युत्साह* इति । कुशलक्रियाया यश्चेतसोऽभ्युत्साहस्तद् वीर्यम् । यस्त्वकुशलादिक्रियाया चेतसोऽभ्युत्साहो नैतद् वीर्यम्, कौसीद्यमेव तत् प्रवचने पठ्यते, सीदनात्मकत्वात् । तथा ह्युक्तं *भगवता*—"इतो बाह्यकानां यद्वीर्यं कौसीद्यमेव तत्" *इति* ॥ २५ ॥

*मोहो नामाविद्येति* । "विद्याविपक्षो धर्मोऽन्योऽविद्या" (अभि० को० ३२८) इति पश्चाद् व्याख्यायते । *भावनाविपक्षो धर्म इति* । भावनाया अभावमात्रप्रतिपत्तिर्मा भूदिति भावनाविपक्ष इत्याह । एवं कौसीद्यादिष्वपि व्याख्येयम् । *कायगुरुता, चित्तगुरुतेति* । प्रश्रब्धिप्रतिपक्षो धर्मः । *यथा कायिकी वेदनेति* । यथा वेदना रूपीन्द्रियाश्रयत्वाच्चैतसिक्यपि 'कायिकीति व्याख्याता । तथा कायिकं स्त्यानम्, पञ्चविज्ञानकायसम्प्रयुक्तं स्त्यानं कायिकमित्युच्यते । *औद्धत्यं चेतसोऽव्युपशम इति* । नृत्यगीतादिशृंगारवेषालंकारकायोद्धत्यसन्निश्रयदानकर्मकश्चैतसिको धर्मः ।

---

1 पुनश्चेतसो०—का० ।

ननु चाभिधर्मे दश क्लेशमहाभूमिकाः पठ्यन्ते—"आश्रद्ध्यं कौशीद्यं मुषितस्मृतिता चेतसो विक्षेपः अविद्या असम्प्रजन्यमयोनिशोमनस्कारो मिथ्याधिमोक्ष औद्धत्यं प्रमादश्च" ( ) इति ? प्राप्तिज्ञो देवानां प्रियः, न त्विष्टिज्ञः। का पुनरत्रेष्टिः? मुषितस्मृतिविक्षेपासम्प्रजन्यायोनिशोमनसिकारमिथ्याधिमोक्षा महाभूमिकत्वात् न क्लेशमहाभूमिका एवावधार्यन्ते। तथैवामोहः कुशलमहाभूमिको नावधार्यते, प्रज्ञास्वभावत्वात्। स्मृतिरेव हि क्लिष्टा मुषितस्मृतिता। समाधिरेव क्लिष्टो विक्षेप इत्येवमादि।

अत एवोच्यते—"ये महाभूमिका. क्लेशमहाभूमिका अपि ते" ( ) इति। चतुष्कोटिकः। प्रथमा कोटिः—वेदना चेतना सञ्ज्ञा च्छन्दः स्पर्शश्च। द्वितीया—अश्राद्धयं कौशीद्यमविद्या औद्धत्यं प्रमादश्च। तृतीया—स्मृत्यादयः[1] पञ्च क्लिष्टा यथोक्ता। चतुर्थ्येतानाकारान् स्थापयित्वेति।

*न चात्र स्त्यानं पठ्यो इत्यभिधर्मे। प्राप्तिज्ञो देवाना प्रियो न त्विष्टिज्ञ* इति। पाठप्रामाण्यमात्रेण दश क्लेशमहाभूमिका. प्राप्ता इत्येतामेव प्राप्तिं जानीते देवाना प्रिय., न त्वाचार्याणामिष्टिमिच्छया जानीते। कोऽयं देवाना प्रियो नाम ? 'ऋजुकजातीयो देवाना प्रिय.' इत्येके व्याचक्षते, अशठो हि देवाना प्रियो भवति, मूर्खो देवाना प्रिय इत्यपरे। "यो हीश्वराणामिष्ट स न ताडनेन शिक्षते" इति मूर्खो भवतीति। *यथैवामोह* इति। यथैवामोह. कुशलमूलं प्रज्ञास्वभावत्वान्महाभूमिक इति व्यवस्थापितो न *कुशलमहाभूमिक एवेत्यवधार्यते*, ततश्च कुशलमहाभूमिकेषु न पठित.। तथा मुषितस्मृत्यादयोऽपि पञ्चमहाभूमिकत्वान्न क्लेशमहाभूमिका एवेत्यवधार्यन्ते। ततश्च इमे न क्लेशमहाभूमिकमध्ये पठ्यन्ते। कथम् ? इत्याह—*स्मृतिरेव हि क्लिष्टा मुषितस्मृतिता, समाधिरेव क्लिष्टो विक्षेप इत्येवमादीनि*। आदिशब्देन प्रज्ञैव क्लिष्टा असम्प्रजन्यम्। मनस्कार एव क्लिष्टोऽयोनिशोमनस्कारः, अधिमुक्तिरेव क्लिष्टा मिथ्याधिमोक्ष इति दर्शयति।

*अत एवोच्यत* इति विस्तर.। यत एवं स्मृत्यादयो मुषितस्मृतितादयो व्यवस्थाप्यन्ते नैतद्व्यतिरिक्ता.। अत एवोच्यते—*चतुष्कोटिक इति*। ये महाभूमिका· क्लेशभूमिका अपि त इति काका पृच्छति। चतुष्कोटिका:—स्युर्महाभूमिकाः न क्लेशमहाभूमिका., स्यु क्लेशमहाभूमिका न महाभूमिकाः, स्युर्महाभूमिकाश्च क्लेशमहाभूमिकाश्च, स्युर्नैव महाभूमिका न क्लेशमहाभूमिकाः।

१ मुषितस्मृत्यादय—का०।

**केचित्तु**—मिथ्यासमाधेरन्यचेतसो विक्षेपमिच्छन्ति । तेषामन्यथा चतुष्कोटिकः । स्त्यानं पुनरिष्यते सर्वक्लेशसम्प्रयोगीति क्लेशमहाभूमिकेषु तस्यापाठे कस्यापराधः ।

एवं त्वाहुः—पठितव्यं भवेत्, समाध्यनुगुणत्वात् तु न पठितम् । क्षिप्रतरं किल स्त्यानचरितः समाधिमुत्पादयेत्, नौद्धत्यचरित इति । कः पुनः स्त्यानचरितो यो नौद्धत्यचरितः, को वा औद्धत्यचरितो यो न स्त्यानचरितः; न ह्येते जातु सहचरिष्णुतां जहीतः ? तथापि यद् यस्याधिमात्रं स तच्चरितो ज्ञातव्यः ।

अत. षडेव क्लेशमहाभूमिकाः सिद्ध्यन्ति । एते हि सदा क्लिष्ट एव चेतसि भवन्ति, नान्यत्र ।।

---

*तृतीया स्मृत्यादय* इति । ये मुषितस्मृत्यादय पञ्च यथोक्ताः । एते हि महाभूमिका. क्लेशमहाभूमिकाश्च । *चतुर्थी एतानाकारान् स्थापयित्वेति* । उक्तनिर्मुक्ता धर्माः कुशलमहाभूमिकादयश्चैतसिका रूपादयश्चान्य इति । *तेषामन्यथा चतुष्कोटिक* इति । द्वितीयाया कोट्यां विक्षेप प्रक्षेप्तव्यः, न तु तृतीयायाम् । अत एवं वक्तव्यम्—प्रथमा कोटि पूर्ववत्, द्वितीया आश्रद्ध्यं कौसीद्यमविद्या औद्धत्यं प्रमादो विक्षेपश्च, तृतीया स्मृत्यादयश्चत्वार, मुषितस्मृत्यसम्प्रजन्यायोनिशोमनस्कारमिथ्याधिमोक्षा इत्यर्थ । चतुर्थी पूर्ववत् ।

यत्तूक्तम्—'न चात्र स्त्यानं पठ्यते' इति, तान् प्रति ब्रवीति—*स्त्यानं पुनरिष्यत* इति । विस्तर—*तस्यापाठे कस्यापराध* इति । किमस्य स्त्यानस्यापाठे ममापराधः, किमाभिधार्मिकस्येति ! अभिधर्मकारस्यायमपराधो न ममेत्यभिप्राय., स्त्यानस्य सर्वक्लेशसम्प्रयोगित्वेनाभिमतत्वात् ।

*एवं त्वाहुरिति* । तत्र शास्त्रे स्त्यानस्यापाठे -कारणमाहुराभिधर्मिकाः । *क्षिप्रतरं किलेति* । किलशब्दोऽसम्भावनायाम् । कथं हि नाम क्लिष्टो धर्मः शुक्लस्य समाधेरनुगुणो भविष्यति, लयौद्धत्ये हि समाधिपरिपन्थिनी, तत् कथं परिपन्थ्येवानुगुण इति ? *न ह्येते जातु सहचरिष्णुता जहीत* इति । न ह्येते स्त्यानौद्धत्ये कदाचित् सहचरधर्मता त्यजत इत्यर्थ. । *तथापि यद्यस्याधमात्रमिति* । एवमपि च स्त्यानमौद्धत्यं वा यस्य पुद्गलस्याधिमात्रम्, स पुद्गलस्तच्च*रितः* स्त्यानचरित., औद्धत्यचरितो वावगन्तव्य. । कचिद्धि कलापे कश्चिद्धर्म उद्भूतो भवतीति ।

*नान्यत्रेति* । कुशलादिषु ।

**अकुशले त्वाह्रीक्यमनपत्रपा ॥ २६ ॥**

**अकुशले तु** चेतस्याह्रीक्यमनपत्राप्यं च नित्यं भवत इति एतौ द्वौ धर्मावकुशलमहाभूमिकावुच्येते । तयोश्च पश्चाल्लक्षण वक्ष्यते ( अभि० को० २. ३२ ) ॥ २६ ॥

**क्रोधोपनाहशाठ्येर्ष्याप्रदासम्रक्षमत्सराः ।**
**मायामदविहिंसाश्च परीत्तक्लेशभूमिकाः ॥ २७ ॥**

परीत्तक्लेशा भूमिरेषां त इमे **परीत्तक्लेशभूमिका** अविद्यामात्रेण भावनाहेयेन मनोभूमिकेनैव च सम्प्रयोगात् । एषा तु निर्देश उपक्लेशेषु ( अभि० को० ५. ४६ ) करिष्यते ॥ २७ ॥

उक्ता इमे पञ्चप्रकाराश्चैत्ताः ॥

अन्येऽपि चानियताः सन्ति वितर्कविचारकौकृत्यमिद्धादय । तत्र वक्तव्यम्—

---

"*अकुशले त्वाह्रीक्यमनपत्रपा*" इति । तु-शब्दो विशेषणे, अवधारणे वा—अकुशल एवेति ॥ २६ ॥

"*परीत्तक्लेशभूमिकाः*" इति । परीत्त.=अल्पक । कोऽसौ ? अविद्यामात्रम् । अविद्यैव केवलेत्यर्थं । *तेन अविद्यामात्रेणेति* । नान्येन रागादिना क्लेशेन । *भावनाहेयेनेति* । न दर्शनहेयेन । *मनोभूमिकेनैवेति* । न पञ्चविज्ञानकायिकेन । यस्मादिमे क्रोधादय उपक्लेशा मनोभूमिका एव भवन्ति, अतो मन.सम्प्रयोगात् परीत्तक्लेशभूमिका उच्यन्ते । रागादिकलापे ह्यवश्यमविद्यया भवितव्यमिति न परीत्तो रागादिक. । तदेवं ये सर्वत्र चैतसिके ते महाभूमिका., ये कुशल एव ते कुशलमहाभूमिकाः, ये क्लिष्टे निवृत्ते चाकुशले च ते क्लेशमहाभूमिका., ये च परीत्तक्लेशसम्प्रयुक्ते चेतसि ते परीत्तक्लेशभूमिका. । *एषा तु निर्देशः उपक्लेशेषु करिष्यत* इति । अनुशयनिर्देशे ॥ २७ ॥

*अन्येऽपि चानियता* इति । ये कदाचित् कुशले, कदाचिदकुशले, कदाचिदव्याकृते चेतसि भवन्ति । *मिद्धादय* इति । आदिशब्देनारतिविजृम्भिकातन्द्रीभक्तेऽसमतादय उपक्लेशा. क्लेशाश्च रागादयोऽप्यनियतत्वेन गृह्यन्ते । न ह्येते रागादय पञ्चानां प्रकाराणा अन्यतमस्मिन्नियता भवन्ति । न महाभूमिका, सर्वत्र चेतस्यभावात् । न कुशलमहाभूमिकाः, कुशलत्वायोगात् । न क्लेशमहाभूमिका, सर्वत्र क्लिष्टे तदभावात् । न हि सप्रतिघे चेतसि रागो भवति, सरागे च चेतसि प्रतिघ इति । एवमन्येऽपि क्लेशा वक्तव्या ।

कस्मिंश्चिच्चित्ते कति चैत्ता अवश्यं भवन्तीति ? कामावचरं तावत् पञ्चविधं चित्तम् । कुशलमकुशलम् । तत्राकुशल द्विविधम्—आवेणिकम्, अन्यक्लेशसम्प्रयुक्तं च । अव्याकृतमपि[1] द्विविधम्—निवृताव्याकृतम्, अनिवृताव्याकृतं च । तत्र तावत् कामावचरचित्तमवश्यं सवितर्कं सविचारम् । अतोऽत्र—

**सवितर्कविचारत्वात् कुशले कामचेतसि ।**

**द्वाविंशतिश्चैतसिकाः**

अवश्यं भवन्ति । दश महाभूमिका:, दश कुशलमहाभूमिकाः, वितर्कः, विचारश्च ।

**कौकृत्यमधिकं क्वचित् ॥ २८ ॥**

न हि सर्वत्र कुशले चेतसि कौकृत्यमस्ति । यत्र त्वस्ति तत्र तदेवाधिकं कृत्वा त्रयोविंशतिश्चैत्ता भवन्ति ।

किमिदं कौकृत्यं नाम ? कुकृतभावः[2] कौकृत्यम् । इह तु पुनः कौकृत्यालम्बनो धर्मः कौकृत्यमुच्यते—चेतसो विप्रतिसारः । तद्यथा—

---

अत्राचार्यवसुमित्रः संग्रहश्लोकमाह—

"वितर्कचारकौकृत्यमिद्धप्रतिघसक्तय. ।

मानश्च विचिकित्सा चेत्यष्टावनियताः स्मृताः ॥" (       ) इति ।

तदिदमष्टनियमवचनं न बुध्यामहे, दृष्टयोऽपि कस्मान्नानियता इष्यन्ते ! न हि सप्रतिघे सविचिकित्से वा चित्ते मिथ्यादृष्टिः प्रवर्तते ।

"आवेणिके त्वकुशले दृष्टियुक्ते च विंशतिः ।

क्लेशैश्चतुर्भि क्रोधाद्यै. कौकृत्येनैकविंशतिः ॥" ( अभि० को० २.२९ )

इति वचनात्, तस्माद् यद्वा तद्वेदमुक्तमिति पश्याम. ॥

*कामावचरं तावत् पञ्चविधमिति* । कुशलमेकम्, अकुशलं द्विविधम्—आवेणिकमविद्यामात्रसम्प्रयुक्तम्, रागाद्यन्यक्लेशसम्प्रयुक्तं च । अव्याकृतमपि द्विविधम्—निवृताव्याकृतं सत्कायान्तर्ग्राहदृष्टिसम्प्रयुक्तम्, अनिवृताव्याकृतं च विपाकजादीति ।

*कुकृतभावः कौकृत्यमिति* । अर्थस्य कुकृतस्य धर्मः, स तु चैतसिक इति न सम्बध्यते । तस्मादाह—*इह तु पुनः कौकृत्यालम्बनो धर्म* इति । किंस्वभावः ? इत्याह—*चेतसो विप्रतिसार* इति । यदि कौकृत्यालम्बनो धर्म. कौकृत्यमुच्यते,

---

१. अव्याकृतं—का० । २. कुकृतस्य भावः—का० ।

शून्यतालम्बनविमोक्षमुखं,[1] शून्यतेत्युच्यते, अशुभालम्बनश्च अलोभोऽशुभ इति। लोकेऽपि च दृष्टः स्थानेन स्थानिनामतिदेशः—सर्वो ग्राम आगतः, सर्वो देश आगत इति। स्थानभूतं च कौकृत्यं विप्रतिसारस्य।

फले वा हेतूपचारोऽयम्। यथा[2]—"षडिमानि स्पर्शायतनानि पौराणं कर्म वेदितव्यम्" (        ) इति।

यत्तर्हि अकृतालम्बनं तत् कथं कौकृत्यम्? अकृतेऽपि कृताख्या भवति—न मया साधु कृतं यत्तन्न[3] कृतमिति।

कतमत् कौकृत्यं कुशलम्? यत् कुशलमकृत्वा तप्यते, अकुशलं च कृत्वा।

---

तत्सम्प्रयुक्ता अप्यन्ये चित्तचैत्ताः कौकृत्यं प्राप्नुवन्ति, तेषामप्राधान्यात्। विप्रतिसारावस्थाया हि कौकृत्यलक्षणं चैतसिकं कौकृत्याकारमुद्भूतवृत्तिकम्, अन्ये चित्तचैत्तास्तदाकारेणानुवर्तन्ते, कस्यचिदेव हि धर्मस्य कस्मिंश्चित् चित्तकलापे प्राधान्यमिति वर्णयन्ति। *शून्यतालम्बनविमोक्षमुखं शून्यतेति*। स्कन्धानामन्तर्व्यापारपुरुषरहितालम्बनं विमोक्षमुखं समाधिविशेष. शून्यतेत्युच्यते। विनीलकव्याध्मातकाद्यशुभालम्बनोऽलोभोऽशुभेत्युच्यते। भावनासम्बद्धत्वात् स्त्रीलिङ्गनिर्देशः—अशुभा भावनेति, तथेहापि कौकृत्यालम्बनश्चैतसिको धर्म कौकृत्यमिति। *स्थानेन स्थानिनामतिदेशः—सर्वो ग्राम आगत* इति। सभूमिक शालासमुदायो ग्रामः। स्थानिषु मनुष्येष्वागतेषु वक्तारो भवन्ति—सर्वो ग्राम आगत इति। एवं *सर्वो देश आगत* इति। *स्थानभूतं च कौकृत्य विप्रतिसारस्येति*। विप्रतिसारालम्बनत्वात्। तस्माद्युक्तस्तथा निर्देशः। *फले वा हेतूपचार* इति। हेतुः कौकृत्यम्, फलं विप्रतिसार, तस्मिन् फले हेतुरुपचर्यते, हेतुवाचकेन शब्देन फलमुच्यत इत्यर्थं। *यथा षडिमानि स्पर्शायतनानि पौराणं कर्मेति*। पूर्वजन्मकृतस्य पौराणस्य कर्मणश्चक्षुरादीनि षट् स्पर्शायतनानि फलानि, तेषु यथा कर्मोपचर्यते, तद्वत्।

*यत् तर्ह्यकृतालम्बनं तत् कथं कौकृत्य*मिति। यदकृतं तन्न कृतमिति मत्वा चोदयति—*अकृतेऽपि कृताख्या भवतीति*। अकृतेऽप्यर्थे कृतशब्दप्रयोगो भवति। कथम्? इत्याह—*न साधु मया कृतं यत्तन्न कृतमिति*। कृतमिव तदिति कृत्वा। *यत्कुशलमकृत्वा तप्यत* इति। यत् कुशलं दानादिकमकृत्वा तप्यते पश्चात्तापी भवति तत् कुशलम्। *अकुशलं च कृत्वा*। किम्? तप्यत इत्यधिकृतम्। यच्चा-

---

१. शून्यतालम्बनं०—का०। २. यथोक्तम्—का०। ३. यन्न—का०।

विपर्ययादकुशलं कौकृत्यम् । तदेतदुभयमप्युभयाधिष्ठानं भवति[1] ॥ २८ ॥

**आवेणिके त्वकुशले दृष्टियुक्ते च विंशतिः ।**

यदकुशलं चित्तमावेणिकं तत्र विंशतिश्चैत्ताः—दश महाभूमिकाः, षट् क्लेशमहाभूमिकाः, द्वावकुशलमहाभूमिकौ, वितर्कः, विचारश्च ।

आवेणिकं नाम चित्तं यत्राविद्यैव केवला, नान्यः क्लेशोऽस्ति रागादिः ।

दृष्टियुक्तेऽप्यकुशले विंशतिर्य एवावेणिके ।

ननु च दृष्ट्यधिकत्वादेकविंशतिर्भवन्ति ? न भवन्ति । यस्मान्महाभूमिक एव कश्चित् प्रज्ञाविशेषो दृष्टिरित्युच्यते । तत्राकुशलं दृष्टियुक्तम्, यत्र मिथ्यादृष्टिश्च[2] दृष्टिपरामर्शो वा शीलव्रतपरामर्शो वा ।

**क्लेशैश्चतुर्भिः क्रोधाद्यैः कौकृत्येनैकविंशतिः ॥ २९ ॥**

यत्र पुनश्चतुर्भिः क्लेशैः सम्प्रयुक्तमकुशलं चित्तं रागेण वा प्रतिघेन वा मानेन वा विचिकित्सया वा, तत्रैकविंशतिर्भवन्ति—स च क्लेशः आवेणिकोक्ताश्च

---

कुशलं प्राणातिपातादिकं कृत्वा तप्यते तदपि कुशलम् । *विपर्ययादकुशलम्* । यदकुशलमकृत्वा तप्यते, कुशलं च कृत्वेति । यत्पापमकृत्वा पश्चात्तापी भवति—न साधु मया कृतं यत्तन्न कृतमिति, तदकुशलं कौकृत्यम् । यच्च कुशलं दानादिकं कृत्वा पश्चात्तापी भवति—न साधु मया कृतं यद्दानादिकं कृतमिति, तदप्यकुशलम् । *तदेतदुभयमप्युभयाधिष्ठानं* भवतीति । तदेतत् कौकृत्यमुभयमपि कुशलं चाकुशलं चोभयाधिष्ठानं भवति यथोक्तेन विधानेन ॥ २८ ॥

"*आवेणिके*" इति । रागादिपृथग्भूत इत्यर्थः ।

"*दृष्टियुक्ते च*" इति । च-शब्दोऽकुशल इत्यनुकर्षणार्थः । महाभूमिक एव कश्चित् प्रज्ञाविशेषो दृष्टिरिति । सन्तीरिका या प्रज्ञा, सा दृष्टिः । सा चेहाकुशला गृह्यते । तस्मादाह—*मिथ्यादृष्टिश्चे*त्यादि ।

"*कौकृत्येनैविंशतिः*" इति कौकृत्येन चेति लुप्तनिर्दिष्टश्चकारो द्रष्टव्यः ।

"*क्लेशैश्चतुर्भिः*" इत्यादिषु प्रत्येकं वाक्यपरिसमाप्तिर्वेदितव्या । न हि रागादयः परस्परेण सम्प्रयुज्यन्त इत्या*भिधर्मिकाः* । *स च क्लेश आवेणिक*ोक्ताश्च विंशतिरिति । दश महाभूमिकाः षट् क्लेशमहाभूमिकाः, द्वावकुशलमहाभूमिकौ, वितर्को विचारश्चेति विंशतिः । स च क्लेशो रागः प्रतिघो मानो

---

१ का० पुस्तके नास्ति ।

२. मिथ्यादृष्टिर्वा—का० ।

विंशतिः । क्रोधादिभिरप्युपक्लेशैर्यथोक्तैः सम्प्रयुक्ते चित्ते एते च विंशतिः स चोपक्लेश इत्येकविंशतिर्भवन्ति । कौकृत्येनाप्येकविंशतिः । तदेव कौकृत्यमेकविंशतितमं भवति । समासत आवेणिके चेतस्यकुशले दृष्टिसम्प्रयुक्ते[1] च विंशतिः । अन्यक्लेशोपक्लेशसम्प्रयुक्ते त्वेकविंशतिः ॥ २९ ॥

**निवृतेऽष्टादश**

सत्कायान्तग्राहदृष्टिसम्प्रयुक्तं चित्तं कामधातौ निवृताव्याकृतम् । तत्राष्टादश चैत्ताः—दश महाभूमिकाः, षट् क्लेशमहाभूमिकाः, वितर्कविचारौ च । दृष्टिः पूर्ववदेव नाधिका भवति ।

**अन्यत्र द्वादशाव्याकृते मताः ।**

निवृतादन्यदव्याकृतमनिवृताव्याकृतम् । तत्र द्वादश चैत्ता इष्टा—दश महाभूमिकाः, वितर्कविचारौ च । बहिर्देशका अव्याकृतमपि कौकृत्यमिच्छन्ति । तेषां तत्सम्प्रयुक्ते चेतसि त्रयोदश भवन्ति ।

**मिद्धं सर्वाविरोधित्वाद् यत्र स्यादधिकं हि तत् ॥ ३० ॥**

---

विचिकित्सा चेत्येकविंशतिः । *एकविंशतिर्भवन्त्येवेति* क्रियावधारणमवगन्तव्यम् । *क्रोधादिभिरपीति* ।

"क्रोधोपनाह-शाठ्येर्ष्या-प्रदास-म्रक्ष-मत्सराः ।
मायामदविहिंसाश्च" ( अभि० को० २ २७ ) ॥

इत्येभिरपि *सम्प्रयुक्ते चित्ते एकविंशतिरेव* चैतसिकाः । ते चावेणिकोक्ताः पूर्ववत् । *स चोपक्लेशः* क्रोधो वा यावद्विहिंसा वेति । *कौकृत्येन च सम्प्रयुक्ते ।* ते च पूर्वोक्तास्तच्च कौकृत्यमित्येकविंशतिः । कौकृत्यमपि ह्युपक्लेशः स्वतन्त्रमिष्यते । *समासत आवेणिक* इति । विस्तर —अविद्यामात्रसम्प्रयुक्ते चेतस्यकुशले दृष्टिसम्प्रयुक्ते चाकुशले विंशतिः । *अन्यक्लेशोपक्लेशसम्प्रयुक्ते त्वकुशल एवैकविंशतिः* ॥ २९ ॥

*निवृताव्याकृत*मिति । क्लेशाच्छादितं कुशलाकुशलत्वेनाव्याकृतं यत् तन्निवृताव्याकृतम् । अनाच्छादितं त्वनिवृताव्याकृतम् विपाकजैर्यापथिकशैल्पस्थानिकनैर्माणिकस्वभावम् । *बहिर्देशका अव्याकृतमपि कौकृत्यमिच्छन्तीति ।* काश्मीरमण्डलाद् ये बहिर्देशस्थितास्ते बहिर्देशकाः । *त्रयोदशेति* । क्वचिदनिवृताव्याकृते कौकृत्यं त्रयोदशमधिकं प्रक्षिप्य । मिद्धं प्रचलायमानावस्थाया

---

१ दृष्टियुक्ते—का० ।

सर्वै रेभिर्यथोक्तैश्चैत्तैर्मिद्धमविरुद्धम्; कुशलाकुशलाव्याकृतत्वात् । अतो यत्र तत् स्यात् तत्राधिकं तद् वेदितव्यम्—यत्र द्वाविंशतिस्तत्र त्रयोविंशतिः, यत्र त्रयोविंशतिस्तत्र चतुर्विंशतिरित्येवमादि ॥ ३० ॥

य एव कामधातौ चैत्तानां नियम उक्तः,

**कौकृत्यमिद्धाकुशलान्याद्ये ध्याने न सन्त्यतः ।**

**अतो** यथोक्तात् कौकृत्यं मिद्धं च सर्वथा नास्ति प्रथमे ध्याने यत् किञ्चिदकुशलम् । प्रतिघः शाठ्यमदमायावर्ज्याश्च क्रोधादय आह्रीक्यानपत्राप्ये च । अन्यत् सर्वं तथैव ।

य एव प्रथमे ध्याने न सन्ति, त एव—

**ध्यानान्तरे वितर्कश्च**

नास्ति । शेषं तथैव ।

**विचारश्चाप्यतः परम् ॥ ३१ ॥**

---

स्वप्नदर्शनावस्थाया वा *कुशलाकुशलाव्याकृतत्वादि*ति । शास्त्रे वचनात् । कथं मिद्धं कुशलं वक्तव्यम्, अकुशलं वक्तव्यम्, अव्याकृतं वक्तव्यमिति ? *यत्र द्वाविंशतिस्तत्र त्रयोविंशति*रिति । विस्तरः—यत्र द्वाविंशतिश्चैतसिका इत्युक्तम्, तत्र तन्मिद्धं त्रयोविंशम् । त्रयोविंशतेः पूरणमित्यर्थः । *यत्र त्रयोविंशतिः* कौकृत्यमधिकं क्वचिदिति । तत्र तन्मिद्धं चतुर्विंशम् । एवं यावत्—

*"अन्यत्र द्वादशाव्याकृते मताः"* । मिद्धं त्रयोदशं वक्तव्यम् । *बहिर्देशकमतेन* तु कौकृत्याधिके चतुर्दशं मिद्धं भवतीति योज्यम् ॥ ३० ॥

*अतो यथोक्ता*दिति । अतो यथावर्णिताच्चैत्तसहोत्पादनियमात् । *कौकृत्यं मिद्धं च सर्वथा नास्ती*ति । न कुशलं नाप्यव्याकृतम्, कुत एवाकुशलमिति सर्वथा मिद्धं कौकृत्यं च नास्ति । *शाठ्यमदमायावर्ज्या* इति । "माया शाठ्यं च कामाद्यध्यानयोर्ब्रह्मवञ्चनात् । स्त्यानौद्धत्यमदा धातुत्रये" (अभि०को० ५.५३) इति वचनात् । एतानि वर्ज्यन्ते, तेषां तत्र सद्भावात् । *अन्यत् सर्वं तथैवे*ति । कुशले चित्ते पूर्ववद् द्वाविंशतिः । आवेणिके दृष्टियुक्ते च निवृताव्याकृतेऽष्टादश, कामधातुवत् । रागमानविचिकित्सान्यक्लेशसम्प्रयुक्ते मायाशाठ्यमदोपक्लेश-सम्प्रयुक्ते च एकान्नविंशतिः । ते च स च क्लेश उपक्लेशो वा तत्रैकान्नविंशो भवति । अनिवृत्ताव्याकृते विपाकजैर्यापथिकनैर्माणिके पूर्ववद् द्वादश ।

*"ध्यानान्तरे वितर्कश्च"* इति । कौकृत्यमिद्धाकुशलानि चेति चशब्दः ।

ध्यानान्तरात् परेण द्वितीयादिषु ध्यानेष्वारूप्येषु च यथाप्रतिषिद्धं नास्ति **विचारश्च** । माया शाठ्यं चेत्यपिशब्दात् । शेषं तथैव ।

ब्रह्मणो हि यावच्छाठ्यं पठ्यते पर्षत्सम्बन्धात्[1], नोर्ध्वम् । स हि स्वस्यां पर्षदि निषण्णः[2] **अश्वजिता** भिक्षुणा प्रश्नं पृष्टः—"कुत्रेमानि ब्रह्मन् चत्वारि महाभूतान्यपरिशेषं निरुध्यन्ते" ( ) इति ? अप्रजानन् क्षेपमकार्षीत्—"अहमस्मिन् ब्रह्मा ईश्वरः कर्ता निर्माता स्रष्टा सृजः पितृभूतो भावानाम्[3]" इति ॥ ३१ ॥

उक्तमेतद् यस्यां भूमौ यत्र चित्ते यावन्तश्चैत्ताः ॥

---

किम् ? न सन्तीत्यधिकृतम् । *शेषं तथैव* । वितर्कन्यूनं *यथा प्रतिषिद्धं नास्तीति* । कौकृत्यमिद्धाकुशलवितर्का न सन्तीत्यर्थः । *विचारश्च मायाशाठ्यं* चेत्यपिशब्दादिति । 'विचारश्च' इति एतावति वक्तव्ये *"विचारश्चापि"* इति अपिशब्दाधिक्यादर्थाधिक्यमिति माया शाठ्यमपि तत्र नास्तीत्ययमपरार्थो लभ्यते । मदस्तु नापास्यते, *"स्त्यानौद्धत्यमदा धातुत्रये"* ( अभि० को० ५.५३ ) इति वचनसामर्थ्यात् । *शेषं तथैवेति* । कुशले वितर्कविचारनिर्मुक्ता विंशतिः । आवेणिके दृष्टियुक्ते षोडश । रागादिक्लेशसम्प्रयुक्ते मदोपक्लेशसम्प्रयुक्ते च सप्तदश । दश महाभूमिका षट् क्लेशमहाभूमिका । स च क्लेशः स वोपक्लेशः । अनिवृताव्याकृते दश महाभूमिका य एवेति गमनीयम् ।

*ब्रह्मणो हि यावच्छाठ्यमिति* । विस्तर—तत्र शाठ्यपूर्वकत्वान्मायापि गृहीता भवति । *पर्षत्सम्बन्धान्नोर्ध्वमिति* । येषां पर्षदस्ति तेषां पर्षद्ग्रहणार्थं मायाशाठ्यं प्रवर्त्तते । अष्टौ पर्षद. पठ्यन्ते—क्षत्रियपर्षद्, ब्राह्मणपर्षद्, गृहपतिपर्षद्, श्रमणपर्षत्, चातुर्महाराजिकपर्षत्, त्रयस्त्रिंशत्पर्षत्, मारपर्षद्, ब्रह्मपर्षत् । तासामन्यतमापि ऊर्ध्वमतो नास्तीति मायाशाठ्याभाव. । ब्रह्मणस्तु पर्षदस्ति । तस्मादाह—*स हि स्वस्यां पर्षदि* निषण्णोऽ*श्वजिता भिक्षुणा* ब्रह्मलोकगतेन *प्रश्नं पृष्टः—कुत्रेमानि चत्वारि महाभूतान्यपरिशेषं निरुध्यन्त* इति । *अप्रजानन्*नारूप्यधातौ चत्वारि महाभूतान्यशेषं निरुध्यन्त इत्यनवबुध्यमानः क्षेपं कथाप्रकरणमकार्षीत्—*अहमस्मि ब्रह्मेति* विस्तर. । ब्रह्मेत्युक्त्वा महाब्रह्मेति वचनं ब्रह्मान्तरेभ्यः आत्मनो विशिष्टत्वप्रदर्शनार्थम् । *ईश्वरः* ईशनशील *कर्ता निर्माता स्रष्टा सृज* इति पर्याया:, उत्तरोत्तरव्याख्यायोगो वा । पितेव *पितृभूतः* । केषाम् ? *भावानाम्* ॥ ३१ ॥

*उक्तमेतदिति* । विस्तर.—या भूमिर्यच्चित्तं यावन्तश्च चैत्ताः, सा भूमिस्तच्चित्तं तावन्तश्च चैत्ता इत्युक्तमेतत् ।

---

१ सम्बन्धत्वात्—का० । २ का० पुस्तके नास्ति । ३. भूतानाम्—का० ।

इदानीं केषाञ्चिदेव चैतानां तन्त्रविहितं[1] नानाकारणं वक्ष्यते ।

आह्रीक्यस्यानपत्राप्यस्य च किं नानाकारणम् ?

**अह्रीरगुरुता**

गुणेषु गुणवत्सु चागौरवता अप्रतीशता अभयवशवर्तिता[2] आह्रीक्यं गौरवप्रतिद्वन्द्वो धर्मः ॥

**अवद्ये भयादर्शित्वमत्रपा ।**

अवद्यं नाम यद् गर्हितं[3] सद्भिः । तत्राभयदर्शिता अनपत्राप्यम् । भयमत्रानिष्टं फलम्—भीयतेऽस्मादिति ।

कथमिदं विज्ञातव्यम्—अभयस्य दर्शनमभयदर्शिता, आहोस्वित् भयस्यादर्शनम् ? किं चातः ? अभयस्य दर्शनं चेत्, प्रज्ञा विज्ञास्यते; भयस्यादर्शनं

---

*तन्त्रविहितमिति* । शास्त्रे विहितम् । स एव चात्रार्थः ।

*गुणेषु गुणवत्सु चेति । तत्र विहितमिति* केचित् पठन्ति । स्वपरसान्तानिकेषु मैत्रीकरुणादिषु । गुणेषु गुणवत्सु च पुद्गलेष्वाचारगोचरगौरवादिसम्पन्नेषु । यद्योगाद् गौरवं न करोत्यसौ *अगौरवता* । नास्ति गौरवमस्येत्यगौरवः, तद्भावोऽगौरवता, चैतसिकविशेषः । कोऽसौ ? इति पर्यायावाहुः । *अप्रतीशता अभयवशवर्तितेति* । शिष्यं प्रति इष्ट इति प्रतीशी गुरुस्थानीयः, नास्ति प्रतीशोऽस्येत्यप्रतीशः, तद्भावोऽप्रतीशता । भावाभिधानेन चैत्तो गृह्यते । भयं नाम मानसश्चैत्तो धर्मः । भयेन वशे वर्तितुं शीलमस्येति भयवशवर्त्ती, न भयवशवर्त्ती अभयवशवर्त्ती, तद्भावोऽ*भयवशवर्तिता* । तदेव चाह्रीक्यम् । नास्ति ह्रीरस्येत्यह्रीकः, तद्भाव *आह्रीक्यम्* । स च *गौरवप्रतिद्वन्द्वो धर्मः*, न तदभावमात्रम् ।

"*अवद्ये भयादर्शित्वमत्रपा*" इति । अवाच्यम् = अवद्यम् । अतश्चाह—*अवद्यं नाम यद्गर्हितं सद्भिरिति* । *तत्राभयदर्शिता अनपत्राप्यमिति* । अवद्येऽनिष्टफलादर्शितेत्यर्थः । *भीयतेऽस्मादिति* । अत्र भयशब्दोऽपादानसाधनः, तस्माद्भयशब्देन *अनिष्टं* फलमुच्यते । *अभयस्य दर्शनमभयदर्शितेति* । विस्तरः—यदि तावदेवं क्रियेत—न भयमभयम्, अभयं द्रष्टुं शीलमस्येत्यभयदर्शी, तद्भावोऽभयदर्शितेति ? *प्रज्ञा विज्ञास्यते* । प्रज्ञया ह्यभयं पश्यति । अथ पुनरेवं क्रियेत—भयं द्रष्टुं शीलमस्येति भयदर्शी, न भयदर्शी अभयदर्शी, 'तद्भावोऽभयदर्शितेति ?

---

१. तत्रविहितं—स्फुटार्थापुस्तके मुद्रितः पाठः । तन्त्रे विहितम्—इत्युचितः पाठः ।

२ अभयमवश०—का० । ३ विगर्हितं—का० ।

चेद्, अविद्या विज्ञास्यते ? नैव हि दर्शनं दर्शिता, नाप्यदर्शनमदर्शिता, किं तर्हि ? यस्तयोर्निमित्तमुपक्लेशः । तच्चानपत्राप्यमिति ।

अन्ये पुनराहुः—आत्मापेक्षया दोषैरलज्जनमाह्रीक्यम्, परापेक्षयाऽनपत्राप्यमिति ।

एवमपि द्वे अपेक्षे युगपत् कथं सेत्स्यतः ? न खलूच्यते—'युगपदात्मानं परं चापेक्षते' इति, अपि त्वस्त्यसौ कदाचिदलज्जा या आत्मानमपेक्षमाणस्यापि प्रवर्तते सा आह्रीक्यम् । अस्ति या परमपेक्षमाणस्य प्रवर्त्तते साऽनपत्राप्यम् । विपर्ययेण ह्रीरपत्राप्यं च वेदितव्यम् । प्रथमेन तावत् कल्पेन सगौरवता सप्रतीशता न भयवशवर्तिता ह्रीः । अवद्येष्वभयदर्शिता अपत्राप्यम् । द्वितीयेन कल्पेनात्मपरापेक्षाभ्यां लज्जने ॥

---

*अविद्या विज्ञास्यते* । तथा ह्यविद्यायोगाद् भयं न पश्यति । *नैव हि दर्शनं दर्शितेति* । विस्तरः—न प्रज्ञा नाप्यविद्या, किं तर्हि ? *तयोः* प्रज्ञाविद्ययोर्यो *निमित्तमुपक्लेश*स्तदभयदर्शनम् । *तच्चानपत्राप्यमि*ति । अपत्रपतेऽनेनेत्यपत्राप्यम् । "कृत्यल्युटो बहुलम्" ( पा० सू० ३ ३.११३ ) इति करणे ण्यत्प्रत्ययः । न अपत्राप्यमनपत्राप्यमिति ।

"ह्री लज्जायाम्" ( मा० धा० ३.३ ) 'त्रपूष् लज्जायाम्" ( मा० धा० १.२५५ ) इत्येकार्थयोरनयोर्धात्वोः कथमर्थान्तरे वाचकत्वम् ? इत्यपरितुष्यन्तोऽन्ये पुनराहुः—*आत्मापेक्षयेति* विस्तरः ।

*एवमपि द्वे अपेक्षे युगपत् कथं सेत्स्यत* इति । अस्मिन्नपि पक्षे युगपदपेक्षाद्वयासम्भव इति पश्यँश्चोदक आह—*एवमपी*ति । अपिशब्देनायमपि पक्षो दुष्यतीत्यभिप्रायः । आह्रीक्यमनपत्राप्यं चैकस्मिश्चित्ते कथं भवत इति मत्वा चोदयति—*अपेक्षे युगपत् कथं सेत्स्यत* इति । *न खलूच्यते युगपदात्मानं परं चापेक्षत* इति । विस्तरः—पर्यायेण वृत्तिमनयोर्दर्शयति । कस्यचिद्धि दोषैरात्मानमपेक्षमाणस्यापि न प्रवर्त्तते लज्जा, कस्यचित् *परमपेक्षमाणस्येति* । *विपर्ययेण ह्रीरपत्राप्यं* चेति विस्तरः । प्रथमेन तावत् कल्पेन—"अह्रीरगुरुतावद्ये भयादर्शित्वमत्रपा" इत्यनेन । *सगौरवतेति* विस्तरेण । *अभयदर्शिता अपत्राप्यमिति* । भयदर्शितानिमित्तमपत्राप्यमित्यर्थः । *द्वितीयेन कल्पेन आत्मापेक्षया* दोषैरलज्जनमाह्रीक्यं *परापेक्षयानपत्राप्यमि*त्यनेन आत्मापेक्षया दोषैर्लज्जनं ह्री., परापेक्षयानपत्राप्यमिति । एवमपि द्वे अपेक्षे इति विस्तरेण चोद्यपरिहारौ वक्तव्यौ ।

प्रेम्णो गौरवस्य च किं नानाकारणम् ?

**प्रेम श्रद्धा**

द्विविधं हि प्रेम—क्लिष्टम्, अक्लिष्टं च। तत्र क्लिष्टं तृष्णा, यथा—पुत्रदारादिषु। अक्लिष्टं श्रद्धा—शास्तृगुरुगुणान्वितेषु। स्याच्छ्रद्धा न प्रेम—दुःखसमुदयालम्बना श्रद्धा। स्यात् प्रेम न श्रद्धा—क्लिष्टं प्रेम। उभयम्—निरोधमार्गालम्बना श्रद्धा। नोभयमेतानाकारान् स्थापयित्वा।

पुद्गलेषु तु प्रेम न गौरवम्— पुत्रदारसार्धविहार्यन्तेवासिषु। गौरवं न प्रेम— अन्यगुरुषु। उभयम्—स्वगुरुषु। नोभयम्—एतानाकारान् स्थापयित्वा।

श्रद्धा हि नाम गुणसम्भावना। तत्पूर्विका च प्रियता प्रेम। तस्मान्न सैव प्रेमेत्यपरे।

**गुरुत्वं ह्रीः**

गौरवं हि नाम सप्रतीशता। तत्पूर्विका च लज्जा ह्रीः। अतो न गौरवमेव ह्रीरित्यपरे।

---

प्रेमगौरवयोरेकत्वं मन्यन्ते केचित्। तस्मादनयोर्नानाकरणप्रदर्शनार्थमाह—"*प्रेम श्रद्धा*" इति। प्रेमैव श्रद्धा, न गौरवम्। न तु श्रद्धैव प्रेम। तेनाह—*द्विविधं हि प्रेम क्लिष्टमक्लिष्टं* चेत्यादि। *स्याच्छ्रद्धा न प्रेम*ति चतुष्कोटिक। दुःखसमुदयसत्ययोः श्रद्धैवाभिसम्प्रत्ययरूपा, न प्रेम, अस्पृहणीयत्वात्। *स्यात् प्रेम न श्रद्धे*ति। प्रियतारूपा तृष्णा नाभिसम्प्रत्ययरूपेति श्रद्धा न भवति। *उभयं श्रद्धा च प्रेम च*। अभिसम्प्रत्ययरूपत्वात् स्पृहणीयत्वाच्च निरोधमार्गसत्ययोस्तदुभयात्मकं भवतीत्यर्थः। *नोभयमेतानाकारान् स्थापयित्वेति*। अन्ये चैतसिका वेदनादयो विप्रयुक्तादयश्च। एवं धर्मालम्बनस्य प्रेम्णः श्रद्धायाश्च चतुष्कोटिकं कृत्वा, पुद्गलालम्बनस्य चतुष्कोटिकं करोति—*पुद्गलेष्वि*ति विस्तरः। तत्र सार्धं विहरन्तीति *सार्धविहारिणः* शिष्याः। ये प्रव्रजिता गुरोरन्तेवसन्तीत्यन्तेवासिनो निश्रयाध्ययनसम्बन्धिनः। तेषु पुत्रादिषु *प्रेम न गौरवं* क्लिष्टमक्लिष्टं चेति सम्भवतः। *गौरवं न प्रेम*। "गुरुत्वं ह्रीः" इति वक्ष्यमाणलक्षणं गौरवं न प्रेम; गौरवस्थानत्वात्। *उभयम्*, प्रेम गौरवं च। तदुभयात्मकं भवतीत्यर्थः। *नोभयमेतानाकारान् स्थापयित्वा*। योऽन्यो जनोऽसम्बद्धो निर्गुणः, तत्र न प्रेम न गौरवमिति। *तत्पूर्विका च प्रियता प्रेमे*ति। गुणसम्भावनापूर्विका प्रियता तच्च प्रेम। *तस्मान्न सैव* श्रद्धा प्रेमेत्याचार्य।

"*गुरुत्वं ह्रीः*" इति। यथोक्ता ह्रीः सगौरवता सप्रतीशता सभयवश-

**ते पुनः कामरूपयोः ॥ ३२ ॥**

आरूप्यधातौ प्रेमगौरवे न स्तः । ननु च श्रद्धा ह्रीश्च कुशलमहाभूमिकत्वात् तत्रापि विद्येते । द्विविधा हि श्रद्धा—धर्मेषु पुद्‌गलेषु च । एवं सप्रतीशताऽपि । तत्र ये पुद्‌गलालम्बने श्रद्धाह्रियौ ते तत्र न स्तः । ते चेह प्रेमगौरवे अभिप्रेते ॥ ३२ ॥

वितर्कविचारयोः किं नानाकारणम् ?

**वितर्कचारावौदार्यसूक्ष्मते**

कस्य ? चेतस इति पश्चाद् वक्ष्यति । चित्तौदारिकता **वितर्कः** । चित्तसूक्ष्मता **विचारः** ।

कथं पुनः अनयोरेकत्र चित्ते योगः ?

**केचिदाहुः**—यथाऽप्सु निष्ठ्यूतं सर्पिः सूर्यरश्मिभिरुपरिष्टात् स्पृष्टं नातिश्यायते नातिविलीयते, एव वितर्कविचारयोगाच्चित्तं नातिसूक्ष्मं भवति नात्यौदारिकमिति, उभयोरपि तत्रास्ति व्यापारः ।

एवं तर्हि निमित्तभूतौ वितर्कविचारावौदारिकसूक्ष्मतयोः प्राप्नुतः, यथा पयश्चातपश्च सर्पिषः श्यानत्वविलीनत्वयोर्न तु पुनस्तत्स्वभावौ । आपेक्षिकी चौदा-

---

वर्त्तितेत्युक्ता । या ह्रीस्तद् गौरवम् । तदेवं प्रेम श्रद्धालक्षणं भवति । ह्रीलक्षणं तु गौरवमित्युक्तं तयोर्नानाकरणम् । एवं *सप्रतीशतापीति* । एवं ह्रीरपि ।

*धर्मेषु च पुद्गलेषु च । ये पुद्गलालम्बने श्रद्धाह्रियौ ते तत्र न स्त* इति । पुद्गलालम्बने श्रद्धाह्रियावधिक्रियेते ययोरैक्यं मन्यन्ते । ते आरूप्यधातौ न स्तः । कामरूप्यधात्वोरेव भवत इत्युक्तम् ॥ ३२ ॥

*कथं पुनरनयोरेकत्र चित्ते योग* इति । न हि तदेव चित्तं तद्योगादौदारिकं च सूक्ष्मं च युज्यते, विप्रतिषेधात् । *निष्ठ्यूतमिति* नि.पूर्वस्य ष्ठीवतेर्निष्ठायामेतद् रूपम्–निष्ठ्यूतम्, निरस्तमित्यर्थः । *नातिश्यायते* नातिघनीभवति । *नातिविलीयते* नातिद्रवीभवति । *नातिसूक्ष्म भवति नात्यौदारिक*मिति । मध्यमावस्थमित्यर्थः । *एवं तर्हि निमित्तभूताविति* विस्तर । यथोदकातपौ सर्पिष. श्यानत्वविलीनत्वयोर्निमित्तभूतौ, *न तु पुनस्तत्स्वभावौ* श्यानत्वविलीनत्वस्वभावौ । एवं वितर्कविचारौ चित्तस्यौदारिकतासूक्ष्मतयोर्निमित्तभूतौ, न तु पुनरौदारिकसूक्ष्मतास्वभावाविति । अत एवं वक्तव्यम्—चित्तौदारिकताहेतुर्वितर्कः, चित्तसूक्ष्मता-

रिकसूक्ष्मता भूमिप्रकारभेदादित्याभवाग्राद् वितर्कविचारौ स्याताम् । न चौदारिक-सूक्ष्मतया जातिभेदो युक्तः ।

अन्ये पुनराहुः—वाक्संस्कारा वितर्कविचाराः सूत्र उक्ताः—"वितर्क्य विचार्य वाचं भाषते, नावितर्क्य नाविचार्य" (                ) इति । तत्र ये औदारिकास्ते वितर्काः, ये सूक्ष्मास्ते विचाराः । यदि चैकत्र चित्तेऽन्यो धर्म औदारिकः, अन्यः सूक्ष्मः—कोऽत्र विरोध इति ? न स्याद्विरोधो यदि जातिभेदः

---

हेतुर्विचार इति । भूयास्त्वमभ्युपगमाददोष एष इति ? तत इदं दोषान्तर-माह—*आपेक्षिकी चौदारिकसूक्ष्मतेति* विस्तर । *भूमिप्रकारभेदात्* । भूमिभेदात्, प्रकारभेदाच्च । भूमिभेदात्तावत् प्रथमध्यानमपेक्ष्य कामधातुरौदारिकः; महा-भिसंस्कारतरत्वात् । कामधातुमपेक्ष्य प्रथमं ध्यानं सूक्ष्ममल्पाभिसंस्कारतरत्वात् प्रशान्तमिति । तदेव पुनर्द्वितीयं ध्यानमपेक्ष्यौदारिकम् । एवं *यावद्भवाग्रं* सूक्ष्मम् । प्रकारभेदादपि तस्यामेव भूमावापेक्षिक्यावौदारिकसूक्ष्मते । तद्यथा य एव ते त्रयः क्लेशाना मूलप्रकारा मृदुमध्यादिमात्रा गुणाना च, कामधातौ यावद्भवाग्रे तेपामधिमात्र. क्लेश औदारिक. मृदु सूक्ष्म. क्लेशविपर्ययेण गुणानामिति । एवं भूमिप्रकारभेदेनापेक्षिक्यावौदारिकसूक्ष्मते इति *आभवाग्रादौदारिकसूक्ष्मते स्याताम्* । अनिष्ट चैतत्, वितर्कविचारयो कामधातुप्रथमभूमिकत्वादिति । *न चौदारिकसूक्ष्मतया जातिभेदो युक्त* इति । वितर्कविचारयोर्जातिभेद इष्यते—अन्यो वितर्क , अन्यो विचार इति । न चौदारिकत्वेन सूक्ष्मत्वेन च वितर्कविचा-रयोर्यथाक्रमं स्वभावभेदो युक्त. । किं कारणम् ? जातिभिन्नयोर्हि वेदनासंज्ञयो-रौदारिकसूक्ष्मता भवति । न च पुनरौदारिकसूक्ष्मतयैव तयो स्वभावभेदः, किं तर्हि ? अनुभवलक्षणतया निमित्तोद्ग्रहणलक्षणतया च तयो. स्वभावभेद., तस्मादप्यनयोर्नास्ति लक्षणम् ।

*अन्ये* पुनराहुरिति । सौत्रान्तिका । *वाक्संस्कारा* इति । वाक्समुत्थापका इत्यर्थ. । *वितर्क्य विचार्य वाचं भाषते नावितर्क्य नाविचार्येति* । वितर्कविचारैरेवं चैवं च भाषिष्य इति । *तत्र ये औदारिकास्ते वितर्का* वाक्सस्कारा. । कर्मणा स्वभावो द्योतितो न शक्यमन्यथा स्वलक्षणं प्रदर्शयितुमिति । *एवं सूक्ष्मास्ते विचाराः* । एतस्या कल्पनाया समुदायरूपा वितर्कविचारा पर्यायभाविनश्च भवन्ति, चित्तचैत्यकलापस्य वाक्समुत्थापकत्वात् । कथं पुनरनयोरेकत्र चित्ते ~~योग इत्युक्तम्~~ ? अतो वैभाषिक आह—*यदि चैकत्र चित्तेऽन्यो धर्म औदारिक* इति । विस्तर.—एकत्र चित्ते वितर्क औदारिकस्वभावोऽन्यो धर्मः, विचारस्तु सूक्ष्म-स्वभावोऽपर., तौ च यथाक्रमं चित्तौदारिकतासूक्ष्मताहेतुत्वाच्चित्तौदारिकता-

स्याद्, वेदनासंज्ञावत् । एकस्यां तु जातौ मृद्वधिमात्रता युगपन्न सम्भवति । जातिभेदोऽप्यस्ति । स तर्हि वक्तव्यः ? दुर्वचो ह्यसौ—अतो मृद्वधिमात्रतया व्यज्यते । नैवं व्यक्तो भवति; प्रत्येकं जातीनां मृद्वधिमात्रत्वात् ।

नैव हि वितर्कविचारावेकत्र चित्ते भवत इत्यपरे ।

---

सूक्ष्मतेत्युच्यते। अथ वा चित्तस्यौदारिकश्चित्तौदारिकः, चित्तौदारिकभावश्चित्तौदारिकता। एवं चित्तसूक्ष्मतापि वक्तव्येति *कोऽत्र विरोधः । न स्याद्विरोधो यदि* वितर्कविचारयो*र्जातिभेदः स्याद् वेदनासंज्ञावत् ।* वेदना ह्यौदारिकी, संज्ञा सूक्ष्मा, तयोस्तु जातिभेदोऽस्तीति औदारिकसूक्ष्मतायामप्येकत्र चित्ते न विरोधः। *एकस्यां तु जाता*वनवधृतलक्षणायामैक्येन च कैश्चिद् गृहीतायां मृद्वधिमात्रता औदारिकसूक्ष्मतालक्षणा *युगपन्न सम्भवती*ति । अर्थादयुगपत् सम्भवतीत्युक्तम् । तथा हि वेदना अन्यो वा धर्मः पर्यायेण मृदुतामधिमात्रतां च भजते। *नैवं व्यक्तो भवति ।* किम् ? जातिभेदः, कस्मात् ? *प्रत्येकं जातीनां मृद्वधिमात्रत्वात् ।* वेदना ह्यौदारिकी भवति सूक्ष्मा वा; अपेक्षाभेदात्। कथमिति ? वेदना संज्ञामपेक्ष्यौदारिकी, रूपमपेक्ष्य सूक्ष्मा; तथा संज्ञा संस्कारानपेक्ष्यौदारिकी, वेदनामपेक्ष्य सूक्ष्मा वितर्कविचारवदेव वा। भवतोऽपि हि कामावचरौ वितर्कविचारावौदारिकौ प्रथमध्यानभूमिकौ सूक्ष्मौ, ध्यानान्तरे च विचारः सूक्ष्मतर इति। तदेवं *प्रत्येकं जातीनां मृद्वधिमात्रत्वा*न्नैवं व्यक्तो भवति। न मृद्वधिमात्रतया जातिभेदो व्यक्तो भवतीत्यर्थः।

अत्र *सङ्घभद्र आचार्य* आह—एकत्र च चित्ते औदारिकसूक्ष्मते भवतः। न च विरोधः; प्रभावकालान्यत्वात्। यदा हि चित्तचैत्तकलापे वितर्क उद्भूतवृत्तिर्भवति, तदा चित्तमौदारिकं भवति। यदा विचारस्तदा सूक्ष्मम्, रागमोहचरितव्यपदेशवत्। रागमोहयौगपद्येऽपि हि तयोरन्यतरोद्भूतवृत्तियोगाद् रागचरितो मोहचरित इति वा व्यपदिश्यते। तद्वदिहापि द्रष्टव्यमिति।

अत्र वयं ब्रूमः—भवति कस्मिंश्चित् कलापे कस्यचिद्धर्मस्योद्भूतवृत्तित्वम्, किं त्वनयोर्न लक्षणं विवेचितमिति न किञ्चिदेतत्। ननु च चित्तौदारिकतासूक्ष्मतालक्षणौ वितर्कविचारावुक्तौ ? सत्यमुक्तौ, प्रत्येकं तु जातीनामौदारिकसूक्ष्मते इति तावौदारिकसूक्ष्मतालक्षणौ भवितुमर्हतो यथोक्तमिति नैतदस्मानाराधयति।

*नैव हि वितर्कविचारावेकत्र चित्ते भवत* इत्यपर इति। *आचार्य*मतम्। अस्मिन् मते यथोक्तदोषप्रसङ्गो न भवति। कस्त्वनयोः पर्यायवर्त्तिनोर्विशेषः ? अत्र पूर्वाचार्या आहुः—"वितर्कः कतमः ? चेतनां वा निश्रित्य प्रज्ञां वा पर्येषको मनोजल्पोऽनभ्यूहाभ्यूहावस्थयोर्यथाक्रमम्, सा च चित्तस्यौदारिकता। विचारः

**कथमिदानीं प्रथमं ध्यानं पञ्चाङ्गमुक्तम्[1] ? भूमितस्तत् पञ्चाङ्गमुक्तम्, न क्षणतः ॥**

मानमदयोः कि नानाकारणम् ?

**मान उन्नतिः ।**
**मदः स्वधर्मे रक्तस्य पर्यादानं तु चेतसः ॥ ३३ ॥**

**येन केनचित् परतो विशेषपरिकल्पेन चेतस उन्नति मानः ।**

**मदस्तु स्वधर्मेष्वेव रक्तस्य यच्चेतस पर्यादानम् । यथा मद्यज एवं रागजः । सम्प्रहर्षणविशेषो मद इत्यपरे ॥ ३३ ॥**

उक्ता सह चित्तेन चैत्ताः प्रकारेण ॥

---

कतम ? चेतनां वा निश्रित्य प्रज्ञा वा प्रत्यवेक्षको मनोजल्पोऽनभ्यूहाभ्यूहावस्थयोर्यथाक्रमम्, सा च चित्तसूक्ष्मता" इति । अस्मिन् पक्षे वितर्कविचारावेकस्वभावौ समुदायरूपौ पर्यायवर्त्तिनौ पर्येषणप्रत्यवेक्षणाकारमात्रेण भिन्नाविष्येते । तत्रोदाहरणं केचिदाचक्षते—"तद्यथा बहुषु घटेष्ववस्थितेषु 'कोऽत्र दृढ', को जर्जर.' इति मुष्टिनाभिघ्नतो य ऊह स वितर्क., 'इयन्तो जर्जरा दृढा वा' इति यदन्ते ग्रहणं स विचार" इति ।

*कथमिदानीं प्रथमं ध्यानं पञ्चाङ्ग*मिति विस्तर. । विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः. सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसम्पद्य विहरतीति सूत्रे पञ्चाङ्गमुक्तम्, तत् कथम् ? *भूमितस्तत् पञ्चाङ्गमुक्तं न क्षणत* इति । प्रथमध्यानभूमि. कदाचिद् वितर्केण व्यवकीर्णा, कदाचिद् विचारेण; तदेवं सन्तानमधिकृत्य पञ्चाङ्गमुक्तम्, न क्षणमधिकृत्येत्यदोष ।

*येन केनचित् परतो विशेषपरिकल्पेनेति* भूतेनाभूतेन वा परत उत्कर्षपरिकल्पेन 'शूरोऽर्थवानस्मि शीलवान् बुद्धिसम्पन्न" इति वा या चेतस उन्नति स मानो नाम चैतसिको धर्म. ।

"*पर्यादानं तु चेतसः*" इति । तु-शब्दो विशेषणार्थो भिन्नक्रमश्चावगन्तव्य., अत एवाह—*मदस्तु स्वधर्मेष्वेव रक्तस्येति* । विस्तर.—*चेतसः पर्यादानमिति* । येन स्वधर्मेष्वेव रूपशौर्यादिषु रक्तं चेत पर्यादीयते सन्निरुध्यते स रागनिष्यन्दो मद । य. स्वधर्मेष्वेव रक्तस्य दर्पचेतसः पर्यादानात् कुशलधर्मक्रियाभ्यः प्रतिसंहारो मद इत्याचार्यसङ्घभद्र. । *सम्प्रहर्षविशेषो मद* इति । क्लिष्टसौमनस्यमभिप्रेतम् । तदेतन्नेच्छन्ति *वैभाषिकाः* । यस्मात् सौमनस्यमा द्वितीयाद् ध्यानात् । मदश्च त्रैधातुक., "स्त्यानौद्धत्यमदा धातुत्रये" (अभि० को० ५.५३) इति वचनात् ॥ ३३ ॥

---

१. पञ्चाङ्गयुक्तम्—का० । एवमुपर्यपि ।

तेषां पुनरिमाः संज्ञाः परिभाष्यन्ते, प्रवचन एताभिः सद्व्यवहारात् ।

**चित्तं मनोऽथ विज्ञानमेकार्थं**

चिनोतीति चित्तम् । मनुत इति मनः । विजानातीति विज्ञानम् । चितं शुभाशुभैर्धातुभिरिति चित्तम् । तदेवाश्रयभूतं मन. । आश्रितभूतं विज्ञानमित्यपरे ।

यथा चित्तं मनो विज्ञानमित्येकोऽर्थः, एव

**चित्तचैतसाः ।**

**साश्रयालम्बनाकाराः सम्प्रयुक्ताश्च**

एकोऽर्थः । त एव हि चित्तचैत्ताः साश्रया उच्यन्ते; इन्द्रियाश्रितत्वात् । सालम्बनाः; विषयग्रहणात् । साकाराः; तस्यैवालम्बनस्य प्रकारेण[1]

---

*उक्ताः सह चित्तेन चैत्ताः प्रकारेणेति* । चित्तं तावत् प्रकारेणोक्तम्—"विज्ञानं प्रतिविज्ञप्तिः" ( अभि० को० १.१६ ) इत्येवमादिना स्वलक्षणस्कन्धधात्वायतनकुशलादिप्रभेदेन । चैत्ता अपि स्वलक्षणपरस्परविशेषेण चित्तसंख्यावधारणकामप्रथमध्यानादिभूमिप्रभेदेन ।

*"एकार्थम्"* इति । यच्चित्तं तदेव मनस्तदेव विज्ञानमिति एकोऽर्थोऽस्येत्येकार्थम् । निर्वचनभेदस्तूच्यते—*चिनोतीति चित्तमिति* । कुशलमकुशलं वा चिनोतीत्यर्थः । नैरुक्तेन विधिनैवं सिद्धम् । *मनुत इति मनः* "मन ज्ञाने" इत्यस्य औणादिकप्रत्ययात् तस्यैतद् रूपम्—मन इति । *विजानात्यालम्बनमिति* विज्ञानम्, कर्तरि ल्युट् । *चितं शुभाशुभैर्धातुभिरिति चित्तम्* । वासनासन्निवेशयोगेन *सौत्रान्तिकमतेन, योगाचारमतेन* वा । *आश्रयभूतं मन आश्रितभूतं विज्ञानमिति* । आश्रयभावापेक्षं मन, "षण्णामनन्तरातीतं विज्ञानं यद्धि तन्मनः" ( अभि० को० १ ७ ) इत्यर्थपरिग्रहात् । आश्रितभावापेक्षं विज्ञानम्, 'द्वयं प्रतीत्य विज्ञानस्योत्पत्तिः' इति वचनात् ।

*"चित्तचैतसाः साश्रयालम्बनाकाराः सम्प्रयुक्ताश्च"* इति । च-शब्द एकानुकर्षणार्थः । त[2] *एव हि चित्तचैत्ता* इत्यनेन शब्देनाभिहितास्त एव साश्रया इत्यनेनापि शब्देनाभिधीयन्ते । एवं सालम्बनाः साकाराः सम्प्रयुक्ताश्च । तत्र *साश्रया इन्द्रियाश्रितत्वात्* । षडायतनाश्रितत्वादित्यर्थः । *सालम्बना विषयग्रहणात्* । न हि विनालम्बनेन चित्तचैत्ता उत्पद्यन्ते । *साकाराः तस्यैवालम्बनस्य*

---

१. प्रकारशः—का० ।

२. य—मुद्रित. पाठः ।

आकरणात् । सम्प्रयुक्ताः; समं प्रयुक्तत्वात् ।

केन प्रकारेण समं प्रयुक्ताः ? इत्याह—

**पञ्चधा ॥ ३४ ॥**

पञ्चभिः समताप्रकारैः—आश्रयालम्बनाकारकालद्रव्यसमताभिः । केयं समता ? यथैव ह्येकं चित्तम्, एवं चैत्ता अप्येकैका इति ॥ ३४ ॥

निर्दिष्टाश्चित्तचैत्ताः सविस्तरप्रभेदाः ॥

**विप्रयुक्तास्तु संस्काराः प्राप्त्यप्राप्ती सभागता ।**
**आसंज्ञिकं समापत्ती जीवित लक्षणानि च ॥ ३५ ॥**

---

*प्रकारेणाकारणात्* । येन ते सालम्बना. तस्यैवालम्बनस्य प्रकारेण ग्रहणात् । कथम् ? विज्ञानं हि नीलं पीतं वा वस्तु विजानाति । उपलभत इत्यर्थ. । तदेव तथालम्बनं वस्तु वेदनानुभवति, संज्ञा परिछिनत्ति, चेतनाभिसंस्करोतीत्येवमादि । अथ वा—तस्यैवालम्बनस्य विज्ञानं सामान्यरूपेणोपलभ्यतारूपं गृह्णाति, विशेषरूपेण तु वेदनानुभवनीयतारूपं गृह्णाति, संज्ञा परिच्छेद्यतारूपं गृह्णातीत्येवमादि । *सम्प्रयुक्ताः समं प्रयुक्तत्वादिति* । समा अविप्रयुक्ताश्चान्योन्यमिति सम्प्रयुक्ता ।

*आश्रयालम्बनाकारकालद्रव्यसमताभिरिति* । येनाश्रयेण चित्तमुत्पद्यते, तेनैवाश्रयेण वेदनासंज्ञाचेतनादय उत्पद्यन्ते । तथा येनालम्बनेन चित्तम्, तेनैव वेदनादयः । येनाकारेण चित्तम्, तेनैव वेदनादय । यदि हि नीलाकारं चित्तम्, नीलाकारा एव तत्सम्प्रयुक्ता वेदनादय उत्पद्यन्ते । यस्मिंश्च काले चित्तम्, तस्मिन्नेव वेदनादय. । यथा च चित्तद्रव्यमेकमेवोत्पद्यते, न द्वे त्रीणि वा, तथा वेदनाद्रव्यमेकमेवोत्पद्यते, न द्वे त्रीणि वा । तथा संज्ञाद्रव्यम्, चेतनाद्रव्यमित्येवमादि । तेनेदमेवान्त्यं दुर्गममिति व्याचष्टे—*यथैवं ह्येकं चित्तम् एवं चैत्ता अपि एकैका* इति ॥ ३४ ॥

विप्रयुक्तान् वक्तुकाम *आचार्य* उपोद्घातं करोति । *निर्दिष्टाश्चित्तचैत्ताः सविस्तरप्रभेदाः*, विप्रयुक्तास्त्ववसरप्राप्ता इदानीमुच्यन्ते इत्यभिप्रायः । सविस्तरप्रभेदा इति । विस्तरश्च प्रभेदश्च विस्तरप्रभेदौ, सह विस्तरप्रभेदाभ्यां सविस्तरप्रभेदा । अथ वा—विस्तरेण प्रभेद विस्तरप्रभेद., सह विस्तरप्रभेदेन सविस्तरप्रभेदा । तत्र चित्तं तावत् सविस्तरप्रभेदं निर्दिष्टम्—"विज्ञानं प्रतिविज्ञप्तिर्मनआयतनं च" ( अभि० को० १ १६ ) इत्येवमादिना । चैत्ता अपि "वेदनानुभवः" (अभि० को० १.१४) इत्यारभ्य यावत् "पञ्चधा चैत्ताः" ( अभि० को० २ २३ ) इति विस्तरेण ।

**नामकायादयश्चेति**

इमे संस्कारा न चित्तेन सम्प्रयुक्ताः, न च रूपस्वभावा इति **चित्त-विप्रयुक्ता** उच्यन्ते ।

तत्र तावत्—

**प्राप्तिर्लाभः समन्वयः ।**

द्विविधा हि **प्राप्तिः**—अप्राप्तविहीनस्य च प्रतिलम्भः[1], प्रतिलब्धेन च

---

"*नामकायादयश्च*" इति । चशब्द एवञ्जातीयकानुक्तविप्रयुक्तप्रदर्शनार्थः । सङ्घभेदप्रभृतयो हि द्रव्यतश्चित्तविप्रयुक्ता इष्यन्त इति । 'येऽप्येवञ्जातीयका.' इति शास्त्रेऽप्युक्तत्वात् । *चित्तविप्रयुक्ता इति* । चित्तग्रहणं चित्तसमानजातीय-प्रदर्शनार्थम् । चित्तमिव चित्तेन च विप्रयुक्ता इत्यर्थः । किं च तेषां चित्तेन समानजातीयत्वम् ? यदरूपिणोऽमी भवन्ति । रूपित्वादेव हि विप्रयुक्तत्वेऽपि रूपं न विप्रयुक्तत्वे नाम लभते । यद्वा अमीषा नामरूपमिति नामत्वम्, तत्तेषां चित्तेन समानजातीयत्वम् । चैत्ता अपि चित्तेन तुल्यजातीया । ते तु चित्तेन सहालम्बने सम्प्रयुक्ता । तद्विशेषणार्थं विप्रयुक्तग्रहणम् । असंस्कृतमपि तत्समान-जातीयमनालम्बनत्वेनेति तत्परिहारार्थं संस्कारग्रहणम् । अत एवाह—*इमे संस्कारा न चित्तेन सम्प्रयुक्ताः, न च रूपस्वभावा इति चित्तविप्रयुक्ता उच्यन्त* इति ।

*तत्रेति* वाक्योपन्यासे, निर्धारणे वा । *तावच्छब्द* क्रमे ।

"*प्राप्तिर्लाभ समन्वयः*" इति । प्राप्तिरिति सामान्यसंज्ञा । लाभ , समन्वय इति विशेषसंज्ञा । लाभ , प्रतिलम्भ इत्येकार्थः । समन्वय , समन्वागम इत्यनर्थान्तरम् । प्रतिलम्भ इत्युक्ते समन्वागमस्याग्रहणम्, समन्वागम इत्युक्ते प्रतिलम्भस्याग्रहणम्, प्राप्तिरित्युक्ते तूभयोर्ग्रहणम् । अत एवाह—*द्विविधा हि प्राप्तिः—अप्राप्तविहीनस्य च प्रतिलम्भः, प्रतिलब्धेन च समन्वागम* इति । अप्राप्तं च विहीनं चाप्राप्तविहीनम्, तस्याप्राप्तविहीनस्य प्रतिलम्भ । अप्राप्तस्य तद्यथा—दु खे धर्मज्ञानक्षान्ते । विहीनस्य तद्यथा—कामावचरस्य कामवैराग्येण त्यक्तस्य धातुप्रत्यागमनात् परिहाण्या वा पुन प्रतिलम्भ । प्रतिलब्धेन च द्वितीयादिषु क्षणेषु समन्वागम , तस्या समनुवर्त्तनात् । यश्च प्रतिलम्भो यश्च समन्वागमः सा द्विधा प्राप्ति —इति प्रतिलम्भे समन्वागमे च प्राप्तिशब्दो वर्त्तते । अभेद-विवक्षाया तु प्राप्ति , प्रतिलम्भ , समन्वागम इत्येक एवार्थः । तथा हि प्रथमे क्षणे दु खे धर्मज्ञानक्षान्ते. प्राप्ति. प्रतिलम्भ इष्यते । सापि समन्वागम

---

१. लाभ —का० ।

समन्वागम । विपर्ययादप्राप्तिरिति सिद्धम् ।

कस्य पुनरिमे प्राप्त्यप्राप्ती ?

**प्राप्त्यप्राप्ती स्वसन्तानपतितानां**

न परसन्तानपतितानाम् । नहि परकीयैः कश्चित् समन्वागत । नाप्य-सन्ततिपतितानाम् । न ह्यसत्त्वसंख्यातैः कश्चित् समन्वागत ।

एष तावत् संस्कृतेषु नियम ।

असंस्कृतेषु पुन प्राप्त्यप्राप्ती—

**निरोधयोः ॥ ३६ ॥**

---

इत्युच्यते । प्रथमक्षणस्थ आर्यपुद्गलो दुःखे धर्मज्ञानक्षान्त्या समन्वागत इत्युच्यते, "आज्ञास्यामीन्द्रियाणेनत्रयोदशभिरन्वित ' ( अभि०को० २ १९ ) इत्यादिवच-नात् । कस्मात्य लक्षणनिर्देश ? न हि भेदविवक्षायामपि पर्यायवचनेन लक्षण-निर्देश कल्पते—'प्राप्ति कतमा ? य प्रतिलम्भो य समन्वागम ' इति । पर्याय-वचनमपि कदाचित् लक्षणाय कल्पते—'अनलो जातवेदा अग्नि ' इति । सूत्रे-ऽप्युक्तम्—"अविद्या कतमा ? यत्पूर्वान्ते अज्ञानमपरान्त अज्ञानम्" इति विस्तर । *विपर्ययादप्राप्तिरिति सिद्धमिति* । विपर्ययादेवाप्राप्तिरिति सिद्धे नैतदर्थं सूत्रं कर्त्तव्यमित्यभिप्राय. । अप्राप्तिरप्रतिलम्भोऽसमन्वागम इति विपर्ययादेतत् त्रयं गम्यते । तथैव चाप्रतिलम्भासमन्वागमयोरप्राप्तिरिति सामान्यसंज्ञा । तस्मादेवं च वक्तव्यम्—द्विविधा अप्राप्ति अप्राप्तपूर्वाणामप्रतिलम्भः, प्राप्त-विहीनानामसमन्वागम इति । अथ वा—अप्रतिलब्धस्य विहीनस्य चाप्राप्ति-रप्रतिलम्भ , अप्रतिलब्धेन विहीनेन च द्वितीयादिषु क्षणेष्वसमन्वागम इति ।

"*प्राप्त्यप्राप्ती स्वसन्तानपतितानाम्*" इति । संस्कृतानां प्राप्त्यप्राप्ती स्वसन्ता-नपतितानामेवेत्यवधार्यते । *न परसन्तानपतितानामिति* । न परसत्त्वसन्तति-पतिता धर्मेण स्वसन्ततौ प्राप्त्यप्राप्ती भवत इत्यर्थ । तेनाह—न *हि परकीयैः कश्चित् समन्वागत* इति । माल्याभरणादय काष्ठकुड्यादिगताश्च रूपादयो-ऽसत्त्वसंख्याता , चक्षुरादय सत्त्वसंख्याता , केशादयो रूपीन्द्रियसम्बद्धा. सत्त्व-संख्याता एव वेदितव्या ; तदनुग्रहोपघातपरिणामानुविधानात् । तथा हि—रूपीन्द्रियोपघातात् पालित्यादिविकार केशानां दृश्यते, रसायनोपयोगेन चानुग्रहात् पालित्यादिप्रत्यापत्तिरिति सर्वेषां सत्त्वसंख्यातानां प्राप्तिर्भवतीति सिद्धान्त ।

"*निरोधयोः*" इति । प्रतिसंख्याप्रतिसंख्यानिरोधयोरसत्त्वसंख्यातयोरपि

सर्वसत्त्वा अप्रतिसंख्यानिरोधेन समन्वागताः । अत एव हि **चोक्तमभिधर्मे** ( ज्ञा० प्र० १९.९ )— "अनास्रवैर्धर्मैः कः समन्वागतः ? आह— सर्वसत्त्वा " इति । प्रतिसंख्यानिरोधेन सकलबन्धनादिक्षणस्थवर्ज्याः सर्वे आर्याः पृथग्जनाश्च केचित् समन्वागताः । आकाशेन तु नास्ति कश्चित् समन्वागतः । तस्मादस्य नास्ति प्राप्तिः । यस्य च नास्ति प्राप्तिस्तस्याप्राप्तिरपि नास्तीति **सिद्धान्तः ।**

प्राप्तिर्नामास्ति किञ्चित् भावान्तरमिति । कुत एतत् ? आह—सूत्रात् । **सूत्रे** ह्युक्तम्—"स एषां दशानामशैक्षाणां धर्माणामुत्पादात् प्रतिलम्भात्

---

प्राप्त्यप्राप्ती भवत । *सर्वसत्त्वा अप्रतिसंख्यानिरोधेन* यथा प्रत्ययवैकल्यं *समन्वागताः । सकलबन्धनादिक्षणस्थवर्ज्या* इति । आदौ क्षण. दु खे धर्मज्ञानक्षान्तिक्षण., तत्र स्थिता आदिक्षणस्था. । सकलानि बन्धनान्येषामिति सकलबन्धना, अप्रहीणसर्वप्रकारक्लेशा । सकलबन्धनाश्चादिक्षणस्थाश्च त इति सकलबन्धनादिक्षणस्थवर्ज्या. । के ? *सर्वे आर्याः । ते प्रतिसंख्यानिरोधेन समन्वागता. ।* सकलबन्धनादिक्षणस्थास्त्वार्या न समन्वागता. । तस्या ह्यवस्थाया क्षान्तिवश्या क्लेशाश्छिद्यन्ते, न छिन्ना । तन्निरोधोऽपि प्राप्यते ? न प्राप्त , "निरुध्यमानो मार्गस्तु प्रजहाति तदावृतिम्" (अभि० ६.८१) इति सिद्धान्तात् । एकप्रकारोपलिखितादयस्त्वार्या लौकिकमार्गप्राप्तेन निरोधेन तस्यामवस्थाया समन्वागता । अत ऊर्ध्वं द्वितीयादिषु क्षणेषु समन्वागता एव अनास्रवमार्गप्राप्तेनापि निरोधेन । *पृथग्जनाश्च केचित् समन्वागता* इति । एकप्रकारोपलिखितादय. । *आकाशेन तु नास्ति कश्चित् समन्वागत* इति । असम्बन्धात् । निरोधाभ्या त्वस्ति सम्बन्ध· । तस्मादाकाशस्य प्राप्तिर्नास्ति । *यस्य च नास्ति प्राप्तिः, तस्याप्राप्तिरपि नास्तीति सिद्धान्त* एष वैभाषिकाणाम् ।

*कुत एतदिति* । रूपादिचक्षुरादिवत् स्वरूपकार्यानुपलम्भात् पृच्छति । *सूत्रादिति* । व्याख्यानमेव *वैभाषिकः* साधयति । *दशानामशैक्षाणा धर्माणामिति* । विस्तर.—दशाशैक्षा धर्मा —अष्टावशैक्षाण्यार्यमार्गाङ्गानि, सम्यग्विमुक्ति , सम्यग् ज्ञानञ्च । तेषामुत्पादात् सम्मुखीभावात् *प्रतिलम्भाददित* प्राप्ते , *समन्वागमात्* पश्चात्प्राप्तेः, *पञ्चाङ्गं विप्रहीणः* प्रहीणपञ्चाङ्ग इत्यर्थ. । पञ्चाङ्गानि—सत्कायदृष्टि, शीलव्रतपरामर्श , विचिकित्सा, कामच्छन्द , व्यापाद इति । एतान्यनागामिफलप्राप्तौ प्रहीणानीति न युज्यन्ते। इमानि तु प्रयुज्यमानानि पञ्चाङ्गानि पञ्चोर्ध्वभागीयानि-रूपराग आरूप्यराग., औद्धत्यम्, मान., अविद्या

समन्वागमादार्यो भवति पञ्चाङ्गविप्रहीणः" ( म० आ० ४९.१६ ) इति विस्तरः।

तेन तर्हि असत्त्वाख्यैरपि समन्वागमः प्राप्नोति, परसत्त्वैश्च। किं कारणम्? सूत्रे[1] वचनात्[1]। "राजा भिक्षवश्चक्रवर्ती सप्तभी रत्नैः समन्वागत." ( दी० नि० ३. ५९ ) इति विस्तरः। वशित्वमत्र समन्वागमशब्देनोक्तम्। तस्य तेषु रत्नेषु वशित्व कामचार इति। तत्र[2] वशित्वं समन्वागमः, अन्यत्र पुनर्द्रव्यान्तरमिति।

कुत एतत् कः पुनरेवमयोगः? अयमयोगः—यदस्या नैव 'स्वभावः प्रज्ञायते रूपशब्दादिवद्, रागद्वेषादिवद्वा; न चापि कृत्यं चक्षुःश्रोत्रादिवत्। तस्माद् द्रव्यधर्मासम्भवादयोगः।

---

चेति। प्रतिनिधिभूताया प्राप्तेर्योगात् प्रकृतिस्थोऽप्यर्हन्नार्य इत्युच्यते। साधनं चात्र—'द्रव्यतोऽस्ति समन्वागमः, सूत्रोक्तत्वात्, आयतनद्रव्यवत्' इति।

*आचार्यस्तं* प्रत्याह—*तेन तर्ह्यसत्त्वाख्यैरपि* चक्ररत्नादिभिः *परसत्त्वैरपि* स्त्रीरत्नादिभि *समन्वागमो* द्रव्यसत् *प्राप्नोति*। *सूत्रे वचनात्*। कथमिति? सूत्र दर्शयति—*राजा* यावद्विस्तर इति। राजा भिक्षवश्चक्रवर्ती सप्तभी रत्नै. समन्वागत। तस्येमानि सप्त रत्नानि, तद्यथा—चक्ररत्नम्, हस्तिरत्नम्, अश्वरत्नम्, मणिरत्नम्, स्त्रीरत्नम्, गृहपतिरत्नम्, परिणायकरत्नमेवं सप्तममिति विस्तर। एभि सप्तभी रत्नै. समन्वागमः सूत्र उक्त.। न च द्रव्यतोऽस्तीत्यनैकान्तिकता दर्शयति, प्रतिज्ञादोषं चायमुद्ग्राहयति, अनुमानविरोधात्। कथम्? इत्युच्यते- 'न द्रव्यसन् दशाशैक्षधर्मसमन्वागम. समन्वागमस्वाभाव्यात् चक्रवर्तिसप्तरत्न समन्वागमवद्' इति। अनेन प्रतिज्ञाया धर्मस्वरूपं विपर्यासयति। *वशित्वं कामचार* इति। इच्छानुविधायित्वम्। *तत्र वशित्वमिति* चक्रवर्तिसूत्रे। *अन्यत्र पुनर्द्रव्यान्तरमिति*। दशाशैक्षधर्मसमन्वागमसूत्रे। *कः पुनरेवमयोग* इति। प्रवचने हि द्विविधमिष्यते—द्रव्यसच्च वस्तु, प्रज्ञप्तिमच्चेति। कथमयुक्ति.? इति *वैभाषिकाः*। *आचार्य* आह—*अयमयोग* इति। विस्तर.—इह यद् द्रव्यसद्वस्तु तत् प्रत्यक्षग्राह्यं वा भवेदनुमानग्राह्यं वा। तत्र प्रत्यक्षग्राह्यं रूपशब्दादि,पञ्चेन्द्रिय ग्राह्यत्वात्। मनोविज्ञानग्राह्यमपि किञ्चित् प्रत्यक्षं रागद्वेषादि; स्वसंवेद्यत्वात्। चक्षु.श्रोत्रादि त्वनुमानग्राह्यं चक्षुर्विज्ञानादिकृत्यानुमेयत्वात्, तद्भावाभावयोस्त-

---

१–१. सूत्रवचनात्—का०। २ अत्र—का०।

उत्पत्तिहेतुर्धर्माणां प्राप्तिरिति चेत् ? असंस्कृतस्य न स्यात् । ये च धर्मा अप्राप्ता ये च त्यक्ता भूमिसञ्चारवैराग्यतः, तेषां कथमुत्पत्तिः स्यात् ।

सहजप्राप्तिहेतुका चेत् ? जातिरिदानीं किङ्करी, जातिजातिर्वा । सकलबन्धनानां खल्वपि मृदुमध्याधिमात्रक्लेशोत्पत्तिप्रकारभेदो[1] न स्यात्; प्राप्त्यभेदात् । यतो वा स भेदस्तत एवास्तु तदुत्पत्तिः । तस्मान्नोत्पत्तिहेतुः प्राप्तिः ।

कश्चैवमाह—उत्पत्तिहेतुः प्राप्तिरिति ? किं तर्हि ? व्यवस्थाहेतुः प्राप्तिः[2] ।

---

द्भावाभावात् । प्राप्तिः पुनर्न प्रत्यक्षग्राह्या, न चानुमानग्राह्या; तत्सिद्धौ निरवद्यानुमानादर्शनात् । *तस्माद् द्रव्यधर्मासम्भवादयोग* इति स्थितमेतत् ।

इदानीमाचार्यस्तत्पक्षमुत्थाप्योत्थाप्य दूषयति—*उत्पत्तिहेतुरि*ति । विस्तरः—यस्य प्राप्तिरस्ति स उत्पद्यते, हेतुवद्भावात् । *असंस्कृतस्य न स्यात्* प्राप्तिः; तस्मादसंस्कृतमनुत्पाद्यम् । *ये च धर्मा अप्राप्ता* दुःखे धर्मज्ञानक्षान्त्यादयः । *ये च त्यक्ताः भूमिसञ्चारवैराग्यतः* । तद्यथा कामावचरा अक्लिष्टा उर्ध्वभूम्युपपत्त्या क्लिष्टाश्च वैराग्येण त्यक्ताः । *तेषां* धातुप्रत्यागमतः परिहाण्या वा *कथमुत्पत्तिः स्यात् !* नहि तेषां प्राप्तिरस्ति; अनुत्पन्ननिरुद्धत्वात् ।

*सहजप्राप्तिहेतुका* चेत् । का ? तेषामुत्पत्तिरधिकृता । सहजा या प्राप्तिरिदानीमुत्पद्यते सा तेषां जनिकेति । आह—*जातिरिदानीं किङ्करी जातिजातिर्वे*ति । किंकरणशीला किङ्करी । जातिर्लक्ष्यं धर्मं जनयति । जातिजातिस्तु तल्लक्षणं जातिं जनयति । तेन यदि लक्ष्याणां धर्माणामुत्पत्तिस्तः प्राप्तिहेतुकोच्यते तत्र जातिः किङ्करी । अथ लक्षणानाम्, उत्पत्तिस्तद्धेतुकोच्येत, तत आह—जातिजातिर्वा किङ्करीति विकल्पः । अथ वा यदि भवतैवं कल्प्येत—जातिर्धर्मं जनयति, प्राप्तिः पुनर्जातिं जनयतीति, तत्रोच्यते—जातिजातिर्वा किङ्करीति । *सकलबन्धनानां खल्वपी*ति । विस्तरः—येषामेकोऽपि क्लेशप्रकारो न प्रहीणस्ते सकलबन्धनाः, तेषां सकलबन्धनानां खल्वपि *मृदुमध्याधिमात्रक्लेशोत्पत्तिप्रकारभेदो न स्यात्* । कस्मात् ? *प्राप्त्यभेदात्* । विकल्पबन्धनानां हि प्राप्तिवैकल्यान् मृदुमध्याधिमात्रक्लेशोत्पत्तिभेदः परिकल्प्येत, न तु सकलबन्धानाम्; प्राप्तीनां तुल्यत्वात् । *यतो वा स भेद* इति । ततो वा कारणादभ्यासतोऽन्यतो वा स भेदः—कस्यचित् सकलबन्धनस्याधिमात्रः, कस्यचिन्मध्यः, कस्यचिन्मृदुः । *तत एव* भेदकारणात् *तदुत्पत्तिरस्तु* । तेषां मृद्वादीनां क्लेशानामुत्पत्तिः । *तस्मान्नोत्पत्तिहेतुः प्राप्तिरि*ति ।

*वैभाषिक* आह—*कश्चैवमाहे*ति । विस्तरः—*व्यवस्थाहेतुः प्राप्तिः* । *असत्यां*

---

१. ०त्पत्तिभेदो—का० ।    २. का० पुस्तके नास्ति ।

असत्यां हि प्राप्तौ लौकिकमानसानामार्यपृथग्जनानाम् 'आर्या इमे', 'पृथग्जना इमे' इति न स्याद् व्यवस्थानम् । प्रहीणाप्रहीणक्लेशताविशेषादेतद् भवितुमर्हति ।

एतच्चैव कथं भविष्यति—एषां प्रहीणः क्लेशः, एषामप्रहीण इति; नासौ सत्यामेतत् सिध्यति तद्विगमाविगमात् ? आश्रयविशेषादेतत् सिध्यति । आश्रयो हि स आर्याणां दर्शनभावनामार्गसामर्थ्यात् तथा परावृत्तो भवति यथा न पुनस्तत्प्रहेयाणां क्लेशानां प्ररोहसमर्थो भवति । अतोऽग्निदग्धव्रीहिवदबीजीभूत[1] आश्रय[1] क्लेशानां प्रहीणक्लेश इत्युच्यते । उपहतबीजभावे वा लौकिकेन मार्गेण ।

*हि प्राप्तौ लौकिकमानसानाम्* इति । लोके भवं लौकिकम्, मन एव मानसम्, लौकिकं मानसमेषां त इमे लौकिकमानसाः । आर्यपृथग्जनाः । आर्याश्च पृथग्जनाश्च । लौकिकमानसग्रहणमार्यविशेषणम् । पृथग्जना हि नित्यमेव लौकिकमानसाः । आसंज्ञिकासंज्ञिसमापत्त्यवस्थायां वा पृथग्जनविशेषणमपि सम्भवति । तेषा*मार्यपृथग्जनानाम्* । तेषामिति निर्धारणे षष्ठी, सम्बन्धलक्षणा वा । तेषां न स्याद् व्यवस्थानमिति परिच्छेदः । यत्कृतं व्यवस्थानं सा प्राप्तिः । *प्रहीणाप्रहीणक्लेशताविशेषा*दिति । प्रहीणक्लेशा आर्याः, अप्रहीणक्लेशाः पृथग्जनाः, तद्भावः, स एव विशेष इति प्रहीणाप्रहीणक्लेशताविशेषः, तस्मात् *एतद्* व्यवस्थानं *भवितुमर्हति* ।

ननु च पृथग्जना अपि केचित् प्रहीणक्लेशा भवन्ति, कथमवधार्यते—आर्या एव प्रहीणक्लेशा इति ? अत्यन्तसमुद्घातवचनादेवमुक्तम् । *एतच्चैव कथमिति* । *एषां प्रहीणः क्लेशः एषामप्रहीण इति* यदेतद्व्यवस्थानम्, तत् *कथं भविष्यति* । *प्राप्तौ तु सत्यां* क्लेशप्राप्त्या *एतत्सिध्यति* व्यवस्थानम्; *तद्विगमाविगमात्* क्लेशप्राप्तिविगमाविगमात् । छेदाच्छेदादित्यर्थः । येषां तत्प्राप्तिविगमाः ते आर्याः, येषामविगमाः ते पृथग्जना इति । ननु च पृथग्जनानामपि केषाञ्चित् क्लेशप्राप्तिर्विगता ? विगता, न तु लोकोत्तरेण मार्गेण । स तर्हि लोकोत्तरमार्गकृतो विशेषः कथं परिच्छिद्यते ? लोकोत्तरेणेयं क्लेशप्राप्तिर्विगता, लौकिकेनेयमिति: सास्रवानास्रवविसंयोगप्राप्तिभेदात् । *आश्रयविशेषादेतत्सिद्ध्यतीति* । आत्मभावविशेषादेतद्व्यवस्थानम्—एषां प्रहीणः क्लेशः, एषामप्रहीणः क्लेश इति सिद्ध्यति । *तथा परावृत्त* इति । तथान्यथाभूतः । तत्प्रहेयाणां दर्शनभावनामार्गप्रहेयाणाम् । *अग्निदग्धव्रीहिवदिति* । यथा अग्निदग्धो व्रीहिरबीजीभूतो भवति, एवं यथोक्तेन न्यायेनाबीजीभूत *आश्रयः क्लेशानां प्रहीणक्लेश इत्युच्यते* ।

१–१. ०भूते आश्रये—का ।

विपर्ययादप्रहीणक्लेशः । यश्चाप्रहीणस्तेन समन्वागतः, यश्च[1] प्रहीणस्तेनासमन्वागत इति प्रज्ञप्यते ।

कुशला अपि[2] द्विप्रकाराः—अयत्नभाविनः, यत्नभाविनश्च; ये त उच्यन्ते—उत्पत्तिप्रतिलम्भिकाः, प्रायोगिकाश्चेति । तत्रायत्नभाविभिराश्रयस्य तद्बीजभावानुपघातात् समन्वागतः, उपघातादसमन्वागत उच्यते समुच्छिन्नकुशलमूलः । तस्य तूपघातो मिथ्यादृष्ट्या वेदितव्यः । न तु खलु कुशलानां धर्माणां बीजभावस्यात्यन्तं सन्ततौ समुद्घातः ।

ये पुनर्यत्नभाविनस्तैरुत्पन्नैस्तदुत्पत्तौ[3] वशित्वाविघातात् सन्ततेः समन्वागम[3] उच्यते ।

---

*उपहतबीजभावे वा* । आश्रय इत्यधिकृतम् । तेन *लौकिकेन मार्गेण* प्रहीणक्लेश इति शक्यते वक्तुम्; बीजस्योपघातमात्रभावात् । *विपर्ययादप्रहीण* इति । अनिर्दग्धबीज आश्रयेऽनुपहतबीजभावे वा । *यश्चाप्रहीण* इति । यश्चाप्रहीणोऽनन्तरोक्तेन विधिना दर्शनप्रहातव्यः, कामावचरो यावद्भावाग्रिकः, भावनाप्रहातव्यो वा कामावचरो यावद्भावाग्रिकः, *तेन समन्वागतः । यश्च प्रहीणस्तथैव* यावद्भावाग्रिकः । *तेनासमन्वागत इति प्रज्ञप्यते* । प्रज्ञप्तिधर्मोऽयमिति दर्शयति ।

*कुशला अपि द्विप्रकारा* इति । विस्तरः—यथा क्लिष्टा द्विप्रकारा इत्यपिशब्दार्थः । समुच्चये वा कुशलाश्चेत्यर्थः । *तद्बीजभावानुपघातादिति* । तेषामुत्पत्तिलाभिकानां कुशलानां बीजं तद्बीजम्, तद्बीजस्य भावस्तद्बीजभावः, कस्य ? आश्रयस्य । तद्बीजभावस्यानुपघातस्तद्बीजभावानुपघातः, तस्मात् तद्बीजभावानुपघातात् । *समन्वागतः* । कैः ? अयत्नभाविभिः कुशलैः । *उपघातादसमन्वागत* उच्यते । कोऽसौ ? इत्याह—*समुच्छिन्नकुशलमूलः । तस्य त्विति* । तस्याश्रयस्य तद्बीजभावस्य *उपघातो मिथ्यादृष्ट्या वेदितव्यः*, नान्यथा । तेनाह—*न तु खलु कुशलानां धर्माणां बीजभावस्यात्यन्तं सन्ततौ समुद्घातः* । यथा क्लेशानामार्यमार्गेणात्यन्तं सन्ततौ समुद्घात इत्यभिप्रायः ।

*ये पुनरिति* । विस्तरः—ये प्रायोगिकाः, तैरुत्पन्नैः तेषामुत्पत्तिस्तदुत्पत्तिः । तदुत्पत्तौ वशित्वं सामर्थ्यविशेषस्तस्या*विघातात्* । कस्य ? *सन्ततेः । समन्वागम उच्यते* । कैः ? तैर्यत्नभाविभिः कुशलैः ।

---

१. यः—का० । २. अपि धर्माः—का० ।
३-३. तदुत्पत्तेर्वशित्वाविघातात् समन्वागतः—का० ।

तस्माद् बीजमेवात्रानपोद्धृतमनुपहतं परिपुष्टं[1] च वशित्वकाले समन्वागमाख्यां लभते, नान्यद् द्रव्यम् ॥

किं पुनरिदं बीजं नाम ? यन्नामरूपं फलोत्पत्तौ समर्थं साक्षात् पारम्पर्येण वा; सन्ततिपरिणामविशेषात् ।

कोऽयं परिणामो नाम ? सन्ततेरन्यथात्वम् ।

का चेयं सन्ततिः ? हेतुफलभूतास्त्रैयध्विकाः संस्काराः ।

[2]यत्र तूक्तम्—"लोभेन समन्वागतोऽभव्यश्चत्वारि स्मृत्युपस्थानानि उत्पादयितुम्[3]" ( ) इति ? तत्राधिवासनं लोभस्याविनोदनं वा समन्वागमः । यावद्धि तस्याधिवासकोऽविनोदको भवति तावद् भव्यस्तानि

---

यस्मादेवं *तस्माद्बीजमेव* शक्तिविशेष एवात्र समन्वागमावस्थायाम*नपोद्धृतं* क्लिष्टानां धर्माणामार्यमार्गेण, *अनुपहतं* लौकिकमार्गेण । अयत्नभाविनां च कुशलानां धर्माणां मिथ्यादृष्ट्या । *परिपुष्टं च वशित्वकाले ।* यत्नभाविनां कुशलानां बीजमिति प्रकृतम् । *समन्वागमाख्यां लभते । नान्यद् द्रव्यं* यद् *वैभाषिकैः* कल्पितम् ।

*किं पुनरिदं बीजं नामेति* द्रव्याशङ्कया पृच्छति । *यन्नामरूपं फलोत्पत्तौ समर्थम्* । यत् पञ्चस्कन्धात्मकं रूपं फलोत्पत्तिसमर्थम् । *साक्षादनन्तरम्* । *पारम्पर्येण* दूरतः ।

*कोऽयं परिणामो नामेति* सांख्यीयपरिणामाशङ्कया पृच्छति । *सन्ततेरन्यथात्वमिति* । अन्यथोत्पादः । *का चेयं सन्ततिरिति* । किं यथा *सांख्यानामवस्थित*द्रव्यस्य धर्मान्तरनिवृत्तौ धर्मान्तरप्रादुर्भावः, तथावस्थायिन्याः सन्ततेरन्यथात्वमिति ? नेत्युच्यते । किं तर्हि ? *हेतुफलभूता* । हेतुश्च फलं च हेतुफलम् । हेतुफलमिति नैरन्तर्येण प्रवृत्तास्*त्रैयध्विकाः संस्काराः* सन्ततिरिति व्यवस्थाप्यन्ते ।

यत्र तूक्तमिति । विस्तरः—यत्र तु सूत्र उक्तम् । किम् ? इत्याह—*लोभेन समन्वागतोऽभव्योऽयोग्यश्चत्वारि स्मृत्युपस्थानानि* कायस्मृत्युपस्थानादीनि *उत्पादयितुमिति* । यदि बीजं प्राप्तिः ? बीजं नित्यमस्तीति स्मृत्युपस्थानोत्पत्तिर्न स्यात् । भवदीयायामपि प्राप्तौ तदुत्पत्तिर्न स्यादिति तुल्यमेतत् । तस्मादुभाभ्यामपि वक्तव्यम् ।

*तत्राधिवासनं लोभस्याविनोदनं वा समन्वागम* इति । अधिवासनम्=अभ्यनु-

---

१. परिपूष्टं—का० । २. यत्—का० ।
३. भावयितुम्—का० ।

भावयितुम् । एवमयं समन्वागमः सर्वथा प्रज्ञप्तिधर्मः, न तु द्रव्यधर्मः ' तस्य च प्रतिषेधोऽसमन्वागम इति ।

द्रव्यमेव तु **वैभाषिकाः** उभयं वर्णयन्ति । किं कारणम् ? एष हि नः सिद्धान्त इति ॥ ३६ ॥

---

ज्ञानम्, अविनोदनम्, अव्युपशमनम् । *सर्वथा प्रज्ञप्तिधर्मो न द्रव्यधर्म* इति । सर्वप्रकारेण—यद्युत्पत्तिहेतुर्यदि व्यवस्थाहेतुर्यद्याश्रयविशेषो यद्यधिवासनमविनोदनं वा, सर्वथा प्रज्ञप्तिधर्मः । प्रज्ञप्त्या संवृत्या व्यवहारेण धर्मः प्रज्ञप्तिधर्मः । न द्रव्यधर्मः न द्रव्यतो धर्मः, स्वभाव इत्यर्थः । अथ वा—द्रव्यं च तद्धर्मश्च स द्रव्यधर्मः । न रूपादिवत् विद्यमानस्वलक्षणो धर्मः इत्यर्थः । *तस्य च प्रतिषेधः।* तस्य च प्रज्ञप्तिधर्मस्य प्रतिषेधोऽ*समन्वागम* इति ।

"इदमस्येति ज्ञानचिह्नं प्रतिलब्धधर्माविप्रणाशकारणं च प्राप्तिः" इत्याचार्य*सङ्घभद्रः।*

'इदमस्येति ज्ञानचिह्नम्' इत्यसिद्धमेतत्, आश्रयविशेषेण तज्ज्ञानमिति ब्रूमः । यदि च प्रतिलब्धधर्माविप्रणाशकारणं प्राप्तिरिष्यते ? प्राप्तपरित्यागो नैव स्यात्, भवति च । तस्मादकारणमेतत् ।

*स* एव च शक्तिविशेषलक्षणं बीजभावमा*चार्येण* व्यवस्थापितं दूषयति—किमयं शक्तिविशेषश्चित्तादर्थान्तरम् ? उतानर्थान्तरम् ? किं चातः ? अर्थान्तरं चेत्, प्राप्तिरस्तीति, संज्ञामात्रे तु विवादः । अनर्थान्तरं चेत् ? नन्वकुशलं कुशलस्य बीजमभ्युपगतं भवति, अकुशलस्य च कुशलम् । को हि नामौष्ण्यस्य तेजसोऽनर्थान्तरत्वे सत्यौष्ण्यमेव दाहकमध्यवस्येन्न तेजः ! कुशलबीजं ह्यकुशले चेतस्यव्याकृते वा वर्त्तते । एवमकुशलबीजं कुशले चेतस्यव्याकृते वा वर्त्तते । तथैव चाव्याकृतबीजमपि कुशले चाकुशले च वर्त्तते । सास्रवबीजं चानास्रवे, अनास्रवबीजं च सास्रवे चेतसि वर्त्तते—इति साङ्कर्यदोषः प्रसज्यत इति ?

अत्र वयं ब्रूमः—अनर्थान्तरभावे साकर्यदोषो भवेत् । तत्तु बीजं न चित्तादर्थान्तरं वक्तव्यम्, नाप्यनर्थान्तरम्; उपादायप्रज्ञप्तिरूपत्वात् । अथाप्यनर्थान्तरभावः, तथाप्यदोषः; कुशलेन हि चित्तेनोत्पन्नेन स्वजातीयेऽन्यजातीये वा स्वसन्तानचित्ते बीजमाधीयेत, ततः कारणविशेषात् कार्यविशेष इति विशिष्टम्, तेन तच्चित्तमुत्पद्येत । तद्विशिष्टं चित्तं कुशलबीजकार्यक्रियायां समर्थमुत्पद्येत । एवमकुशलेनापि स्वजातीयेऽन्यजातीये वा स्वसन्तानचित्ते बीजमाधीयेत, तच्च तेन विशिष्टमकुशलबीजकार्यक्रियायां समर्थमुत्पद्येत । एवमव्याकृतेनापि चित्तेन स्वजातीये अन्यजातीये वा स्वसन्तानचित्ते बीजमाधी-

सा चैषा प्राप्तिः

त्रैयध्विकानां त्रिविधा

---

येत, तच्चापि तेन विशिष्टमव्याकृतबीजकार्यक्रियायां समर्थमुत्पद्येत। सास्रवेणाप्यनास्रवे चित्ते बीजमाधीयेत, अनास्रवेणापि सास्रवे। इत्येवमन्योन्यबीजाधायकमन्योन्यजनकं च चित्तं चित्तान्तरादुत्पद्यमानमन्योन्यवास्यवासकत्वेन प्रवर्त्तते। न च कुशले नाकुशले चित्ते शक्तिविशेष आहित इति तदकुशलं कुशलतामापद्यते, कुशलं वा तदकुशलताम्; शक्तिविशेषमात्रत्वात्। शक्तिबीजं वासनेत्येकोऽयमर्थः। एवमकुशलादिवासनापि वक्तव्या। यावत् सास्रवेणानास्रवे शक्तिविशेषाधानेऽपि, अनास्रवेणापि सास्रवे शक्तिविशेषाधाने। न तत् सास्रवमनास्रवं सम्पद्यते, अनास्रवं वा सास्रवमिति। भवतामपि *वैभाषिका*णामिदं चिन्त्यते—यदा सास्रवचित्तसमनन्तरमनास्रवम्, अनास्रवचित्तसमनन्तरं वा सास्रवचित्तमुत्पद्यते, तदा किं पूर्वकः सास्रवकलापोऽनास्रवकलापो वा शक्तिमान् समनन्तरप्रत्ययादिभावेनोत्तरकलापोत्पत्तौ ? उताशक्तिमान् ? किं चातः ? यद्यशक्तिमान्, समनन्तरप्रत्ययादिभावोऽप्यस्य हीयेत। अथ शक्तिमान्, सा शक्तिः किं सास्रवे चेतसि सास्रवा, आहोस्विदनास्रवा ? तच्चित्तं सास्रवस्यानास्रवस्य च चित्तान्तरस्य समनन्तरप्रत्ययादिभावं कुर्वत् किं ययैव शक्त्या सास्रवस्य समनन्तरप्रत्ययादिभावं कुर्यात् तयैवानास्रवस्य ? यदि च तयैव, कथं शक्तिकार्यसांकर्यं न भवेत्! अथान्यया शक्त्या सास्रवस्य, अन्ययानास्रवस्य समनन्तरप्रत्ययादिभावं कुर्यात्, कथमनयोरेकत्र शक्त्योरनन्यस्माच्चित्तादनन्ययोर्भिन्नरूपता भिन्नकार्यता च युज्यते ? युज्यते चेत् ? अस्माकमपि चित्तादनन्यासां शक्तीनां तत्रावस्थानं कार्यभेदश्च भविष्यति। एवमनास्रवस्यापि चित्तस्य सास्रवानास्रवचित्तसमनन्तरप्रत्ययादिभावेन सम्भवतः। तथैव शक्त्योर्भिन्नरूपता कार्यभेदश्च वक्तव्यः। तेन यदुक्तम्—नन्वकुशलं कुशलस्य बीजमभ्युपगतं भवतीत्यादि, तदयुक्तम्; न हि कुशलाहितेन शक्तिविशेषेण विशिष्टं समर्थमकुशलमकुशलबीजकार्यं करोति। किं तर्हि ? कुशलबीजकार्यमेव करोति। स्वाहितेन तु शक्तिविशेषेण तदकुशलं स्वबीजकार्यं करोति। तत् कथमिदमुच्यते—कुशलस्याकुशलं न भवतीति। ब्रूमास्त्वम्—अकुशलचित्ते तत्कुशलबीजमाहितं किमकुशलं न भवतीति ? न भवन्तो बीजार्थं जानते। कुशलेन चित्तेन निरुध्यमानेन तथा शक्तिविशिष्टमकुशलं चित्तं जन्येत। यथा तच्चित्तं स्वोत्पत्तियोग्यं भविष्यति साक्षात् पारम्पर्येण वेति शक्तिविशेष एव बीजम्। न बीजं नाम किञ्चिदस्ति; प्रज्ञप्तिसत्त्वात्। अत एव प्राप्त्यप्राप्ती प्रज्ञप्तिसत्यावुच्येते। द्रव्यसत्यावेव तु *वैभाषिका* वर्णयन्ति ॥ ३६ ॥

अतीतानां धर्माणामतीतापि प्राप्तिरस्ति, अनागतापि, प्रत्युत्पन्नापि ।
एवमनागत-प्रत्युत्पन्नानां प्रत्येकं त्रिविधा ।

**शुभादीनां शुभादिका ।**

कुशलाकुशलाव्याकृतानां कुशलाकुशलाव्याकृतैव यथाक्रमं प्राप्तिः ।

**स्वधातुका तदाप्तानां**

ये धर्मास्तद्धात्वाप्तास्तेषां **स्वधातुका** प्राप्तिः । कामरूपारूप्यावचराणां कामरूपारूप्यावचरी यथाक्रमम् ।

**अनाप्तानां चतुर्विधा ॥ ३७ ॥**

---

*अतीतानां धर्माणामतीतापि प्राप्तिरिति*। विस्तरः—अतीतानां धर्माणां तद्यथा क्लिष्टानामतीता प्राप्तिः । या उत्पन्ननिरुद्धा साग्रजापि सम्भवति, सहजापि, पश्चात्कालजापि। तेषामेवा*नागता* प्राप्तिरनुत्पन्ना । *प्रत्युत्पन्ना* या पश्चात्कालजा उत्पन्नानिरुद्धा । *अनागतानामपि* प्राप्तिरतीता याग्रजोत्पन्ननिरुद्धा, अनागता यानुत्पन्ना, प्रत्युत्पन्ना अग्रजोत्पन्नानिरुद्धा । तथा *प्रत्युत्पन्नानामप्य*तीता प्राप्तिर्याग्रजोत्पन्ननिरुद्धा, अनागता यानुत्पन्ना, प्रत्युत्पन्ना या सहजा। अतीतादिजातिसामान्यं च गृहीत्वैवमुक्तम्। न त्वेकस्यातीतस्यावश्यं त्रिविधा प्राप्तिरस्ति । न हि विपाकजस्यानागतातीता वा प्राप्तिः सम्भवति; "अव्याकृताप्तिः सहजा" (अभि० को० २.३८) इति वचनात्। यदि तु प्रतिद्रव्यं प्राप्तिव्यवस्था क्रियेत, सम्भवं प्रत्येतदेवं भवेत् । क्लिष्टानामुत्पत्तिप्रतिलम्भिकानां च कुशलानामतीतादीनामतीतादयः प्राप्तयोऽवश्यं भवन्ति । न हि पृथग्जनस्यानुत्पन्नस्यानास्रवस्य मार्गस्यातीता प्रत्युत्पन्ना च प्राप्तिरस्ति । सापवादश्चायमुत्सर्गोऽवगन्तव्यः; "अव्याकृताप्तिः सहजा" (अभि० को० २.३८) इति वचनात् ।

असंस्कृतानां तु प्राप्तिरुत्पन्ननिरुद्धातीता, अनुत्पन्नानागता, उत्पन्नानिरुद्धा प्रत्युत्पन्ना । सुगमत्वात्तु न सूत्रितमेतत् ।

*कामरूपारूप्यावचराणां कामरूपारूप्यावचरी यथाक्रममिति* । कामधातूपपन्नस्य कामावचराणां धर्माणां कामावचरी प्राप्तिः । तस्यैव रूपावचराणां रूपावचरी । तस्यैवारूप्यावचराणामारूप्यावचरी रूपधातूपपन्नस्य च कामावचराणाम् । तद्यथा निर्माणचित्तानां कामावचरी, रूपावचराणां रूपावचरी, आरूप्यावचराणामारूप्यावचरी । आरूप्यधातूपपन्नस्य तद्धातुकानां तद्धातुकैव प्राप्तिः ।

अनात्वाप्तानामनास्रवाणां धर्माणां चतुर्विधा प्राप्तिः। समासेन त्रैधातुकी चानास्रवा च। तत्राप्रतिसंख्यानिरोधस्य त्रैधातुकी, प्रतिसंख्यानिरोधस्य रूपारूप्यावचरी च, अनास्रवा च। मार्गसत्यस्यानास्रवैव। सेयं समस्य चतुर्विधा भवति ॥३७॥

शैक्षाणां धर्माणां शैक्षैव प्राप्तिः, अशैक्षाणामशैक्षैव। नैवशैक्षानाशैक्षाणां तु भेदः, स निर्दिश्यते—

**त्रिधा नशैक्षाऽशैक्षाणां**

नैवशैक्षानाशैक्षा धर्मा उच्यन्ते—सास्रवा धर्माः, असंस्कृतं च। तेषां शैक्षादिभेदेन् त्रिविधा प्राप्तिः।

सास्रवाणां तावत् नैवशैक्षानाशैक्षी प्राप्तिः।

अप्रतिसंख्यानिरोधस्य च प्रतिसंख्यानिरोधस्य चानार्येण प्राप्तस्य।

---

"*अनाप्तानां चतुर्विधा*" इति। *अधात्वाप्तानां* संस्कृतासंस्कृताना*मनास्रवाणां चतुर्विधा प्राप्तिः।* कामरूपारूप्यावचरी चानास्रवा च, *समासेन* सर्वाननाप्तानभिसमस्येत्यर्थः। प्रत्येकं तु न चतुर्विधा। तत आह—*तत्राप्रतिसंख्यानिरोधस्येति*। विस्तरः—[illegible] कामावचरादीनां यथासम्भवमप्रतिसंख्यानिरोधस्य प्राप्तिः कामावचरी। रूपधातूपपन्नस्य रूपावचरादीनामप्रतिसंख्यानिरोधप्राप्ती रूपावचरी। आरूप्यधातूपपन्नस्यारूप्यावचरादीनामप्रतिसंख्यानिरोधप्राप्तिरारूप्यावचरी। सत्त्वसन्तानवशेनैव हि तत्प्राप्तिर्व्यवस्थाप्यते, न तु तेषां वशेन येषामप्रतिसंख्यानिरोधः। यदि ह्येवं स्यात्, मार्गसत्यस्याप्रतिसंख्यानिरोधप्राप्तिरनास्रवा स्यात्। *प्रतिसंख्यानिरोधस्य रूपारूप्यावचरी चानास्रवा* चेति। न कामावचरी; कामधातोरप्रतिपक्षत्वात्। रूपावचरेण तु मार्गेण प्राप्तस्य रूपावचरी प्राप्तिः, आरूप्यावचरेणारूप्यावचरी, अनास्रवेण मार्गेणानास्रवा। आर्यस्य तु रूपावचरेण मार्गेण प्राप्तस्य रूपावचरी चानास्रवा च, आरूप्यावचरेणारूप्यावचरी चानास्रवा च। "लौकिकेनार्यवैराग्ये विसंयोगाप्तयो द्विधा" ( अभि० को० ६.४७ ) इति वचनात्। *मार्गसत्यस्यानास्रवैवेति*। लौकिकीमस्य प्राप्ति प्रतिषेधयति। *सेयं समस्य चतुर्विधेति।* समासेन त्रैधातुकी चानास्रवा च—इत्युक्तमर्थं निगमयति ॥ ३७ ॥

*शैक्षाणामिति*। शैक्षा धर्माः शैक्षस्यानास्रवा धर्माः। अशैक्षा अशैक्षस्यानास्रवाः। मार्गसत्यभावा एवैते द्रष्टव्याः। शैक्षाशैक्षेभ्यस्त्वन्ये नैवशैक्षानाशैक्षाः। असंस्कृता अपि यावन्नैवशैक्षा नाशैक्षा इष्यन्ते। *तेषाम् त्रिधा प्राप्तिः शैक्षादिभेदेन*—शैक्ष्यशैक्षी, नैवशैक्षी, नाशैक्षी चेति। *अनार्येण प्राप्तस्येति*। पृथग्जनेन

तस्यैव शैक्षेण मार्गेण प्राप्तस्य शैक्षी, अशैक्षेणाशैक्षी ।

दर्शनभावनाहेयानां यथाक्रमं दर्शनभावनाहेयैव प्राप्तिः ॥

अहेयानां तु भेदः । स निर्दिश्यते—

**अहेयानां द्विधा मता ।**

अप्रहेया धर्मा अनास्रवाः ।

अनार्यप्राप्तस्य च प्रतिसंख्यानिरोधस्य । तस्यैवार्यमार्गप्राप्तस्यानास्रवा अहेया, मार्गसत्यस्य च ।

यदुक्तम्—"त्रैयध्विकानां त्रिविधा" ( अ० को० २.३७ ) इति, तस्योत्सर्गस्यायमपवादः—

**अव्याकृताप्तिः सहजा**

अनिवृताव्याकृतानां सहजैव प्राप्तिः, नाग्रजा, न पश्चात्कालजा; दुर्बलत्वात् । तेन तेषामतीतानामतीतैव, यावत् प्रत्युत्पन्नानां प्रत्युत्पन्नैव ।

किं सर्वस्यैवानिवृताव्याकृतस्य ? न सर्वस्य ।

**अभिज्ञानैर्माणिकादृते ॥ ३८ ॥**

द्वे अभिज्ञे अव्याकृते निर्माणचित्तं च वर्जयित्वा । तेषां हि बलवत्त्वात्

---

**प्राप्तस्य** । *तस्यैव शैक्षेणेति* । तस्यैव प्रतिसंख्यानिरोधस्य शैक्षेण मार्गेण प्राप्तस्य शैक्षी । *अशैक्षेणाशैक्षी* । क्षयज्ञानसम्प्रयुक्तेन मार्गेण प्राप्तस्य, विसंयोगप्राप्तिसन्निश्रयत्वात् क्षयज्ञानस्य । यद्यपि स वज्रोपमेन शैक्षेण प्राप्यते तदावाहकत्वात्, तत्प्राप्तत्ववचने तु शैक्ष्याः प्राप्तेरशैक्षी प्राप्तिविशेषिता स्यादिति न तेन शैक्षेणाशैक्षीत्युक्तम् । *तस्यैवार्यमार्गप्राप्तस्यानास्रवेति* । तस्यैव प्रतिसंख्यानिरोधस्यार्यमार्गप्राप्तस्यानास्रवा । *मार्गसत्यस्य* चानास्रवा । प्राप्तिरित्यधिकृतम् । आर्येण लौकिकमार्गप्राप्तस्य प्रतिसंख्यानिरोधस्य प्राप्तिः किं सास्रवा ? उताहोऽनास्रवा ? उभयथेत्याह । सा कस्मान्नोक्ता ? सावशेषं भाष्यम्, पश्चाद् दर्शयिष्यते—"लौकिकेनार्यवैराग्ये विसंयोगाप्तयो द्विधा" ( अभि० को० ६.४७ ) इति नोच्यते । या त्वसंकीर्णा प्राप्तिः सैवेहोच्यत इति वेदितव्यम् ।

*दुर्बलत्वादिति* । अनभिसंस्कारवत्त्वाद् दुर्बलत्वम् ।

*द्वे अभिज्ञे* इति । दिव्यचक्षुरभिज्ञाम्, दिव्यश्रोत्राभिज्ञाम् । *निर्माणचित्तं च वर्जयित्वा* । किम् ? "अव्याकृताप्तिः सहजा" इति सम्बन्धनीयम् । *तेषां हि*

प्रयोगविशेषनिष्पत्तेः पूर्वं पश्चात् सहजा प्राप्तिः। शैल्पस्थानिकस्यापि कस्यचिदैर्यापथिकस्य चात्यर्थमभ्यस्तस्येच्छन्ति[1] ॥ ३८ ॥

किमनिवृताव्याकृतस्यैव [2]सहजप्राप्तिः ? इत्याह—

**निवृतस्य च रूपस्य**

**निवृताव्याकृतस्यापि विज्ञप्तिरूपस्य सहजैव** प्राप्तिः; अधिमात्रेणाप्यविज्ञप्त्यनुत्थापनाद्दौर्बल्यसिद्धेः।

यथा अव्याकृतानां धर्माणामयं प्राप्तिभेदः, किमेवं कुशलाकुशलानामपि कश्चित् प्राप्तिभेदोऽस्ति ? अस्तीत्याह।

**कामरूपस्य[3] नाग्रजा।**

कामावचरस्य विज्ञप्त्यविज्ञप्ति**रूपस्याग्रजा** प्राप्तिः सर्वथा **नास्ति**। **सहजा** चास्ति, पश्चात्कालजा च।

---

*बलवत्त्वा*दिति। विस्तरः—तेषां हि दिव्यचक्षुरभिज्ञादीनां बलवत्त्वात्। किम् ? पूर्वपश्चात् सहजा प्राप्तिः। *प्रयोगविशेषनिष्पत्ते*रिति। प्रयोगविशेषेण निष्पत्तिर्दिव्यचक्षुरभिज्ञादीनाम्, तस्याः प्रयोगविशेषनिष्पत्तेर्बलवत्त्वम्। बलवत्त्वात् पूर्वपश्चात्सहजा प्राप्तिरित्यर्थसम्बन्धः। *शैल्पस्थानिकस्या*पि कस्यचित्, तद्यथा विश्वकर्मणः। *ऐर्यापथिकस्य च*। तद्यथा स्थविरस्या*श्वजितः। अत्यर्थमभ्यस्तस्य* भृशमात्मसात्कृतस्येच्छ*न्ति वैभाषिकाः*। किम् ? पूर्वपश्चात्सहजा प्राप्तिरिति ॥ ३८ ॥

"*निवृतस्य च रूपस्य*" इति। च-शब्दः समुच्चयार्थः। प्राप्तिः सहजेति समुच्चीयते। तच्च क्लिष्टं रूपं प्रथमध्यानभूमिकमेव विज्ञप्तिरूपं वेदितव्यम्; ततोऽन्यासु भूमिषु तदुत्थापकाभावात्। *अधिमात्रेणापी*ति। विस्तरः—अधिमात्रेणापि चित्तेन निवृत्ता विज्ञप्तिरुत्थापिता। तदेव चाधिमात्रं विज्ञप्तिचित्त*मविज्ञप्तिं नोत्थापयति*। *अतो दौर्बल्यसिद्धिः*। तस्याः दौर्बल्यसिद्धेः सहजैव प्राप्तिः। *प्राप्तिभेद* इति। विपाकजादीनामनिवृताव्याकृतानां सहजा प्राप्तिः, अभिज्ञाद्यादीनां तु पूर्वपश्चात्सहजा प्राप्तिरिति तद्भेदः।

"*कामरूपस्य नाग्रजा*" इति। *कामावचरस्य* कुशलाकुशलस्य विज्ञप्त्यविज्ञ*प्तिरूपस्याग्रजा प्राप्तिः सर्वथा नास्ति*। यदि कुशलस्य यद्यकुशलस्य, नास्त्येव सर्वथेत्यर्थः। *सहजा चास्ति पश्चात्कालजा* चेति। सम्भवतः। तद्यथा प्रथमस्य

---

१. अत्यर्थं०—का०। २. सहजा प्राप्तिः—का०। ३ कामे रूपस्य—का०।

तस्यैव शैक्षेण मार्गेण प्राप्तस्य शैक्षी, अशैक्षेणाशैक्षी ।

दर्शनभावनाहेयानां यथाक्रमं दर्शनभावनाहेयैव प्राप्तिः ॥

अहेयानां तु भेदः । स निर्दिश्यते—

**अहेयानां द्विधा मता ।**

अप्रहेया धर्मा अनास्रवाः । भावनाहेया प्राप्तिः, अनार्यप्राप्तस्य च प्रतिसंख्यानिरोधस्य । तस्यैवार्यमार्गप्राप्तस्यानास्रवा अहेया, मार्गसत्यस्य च ।

यदुक्तम्—"त्रैयध्विकानां त्रिविधा" ( अ० को० २.३७ ) इति, तस्योत्सर्गस्यायमपवादः—

**अव्याकृताप्तिः सहजा**

अनिवृताव्याकृतानां सहजैव प्राप्तिः, नाग्रजा, न पश्चात्कालजा; दुर्बलत्वात् । तेन तेषामतीतानामतीतैव, यावत् प्रत्युत्पन्नानां प्रत्युत्पन्नैव ।

किं सर्वस्यैवानिवृताव्याकृतस्य ? न सर्वस्य ।

**अभिज्ञानैर्माणिकादृते ॥ ३८ ॥**

द्वे अभिज्ञे अव्याकृते निर्माणचित्तं च वर्जयित्वा । तेषां हि बलवत्त्वात्

---

प्राप्तस्य । *तस्यैव शैक्षेणेति ।* तस्यैव प्रतिसंख्यानिरोधस्य शैक्षेण मार्गेण प्राप्तस्य शैक्षी । *अशैक्षेणाशैक्षी ।* क्षयज्ञानसम्प्रयुक्तेन मार्गेण प्राप्तस्य, विसंयोगप्राप्तिसन्निश्रयत्वात् क्षयज्ञानस्य । यद्यपि स वज्रोपमेन शैक्षेण प्राप्यते तदावाहकत्वात्, तत्प्राप्तत्ववचने तु शैक्ष्याः प्राप्तेरशैक्षी प्राप्तिविशेषिता स्यादिति न तेन शैक्षेणाशैक्षीत्युक्तम् । *तस्यैवार्यमार्गप्राप्तस्यानास्रवेति ।* तस्यैव प्रतिसंख्यानिरोधस्यार्यमार्गप्राप्तस्यानास्रवा । *मार्गसत्यस्य* चानास्रवा । प्राप्तिरित्यधिकृतम् । आर्येण लौकिकमार्गप्राप्तस्य प्रतिसंख्यानिरोधस्य प्राप्तिः किं सास्रवा ? उताहोऽनास्रवा ? उभयथेत्याह । सा कस्मान्नोक्ता ? सावशेषं भाष्यम्, पश्चाद् दर्शयिष्यते—"लौकिकेनार्यवैराग्ये विसंयोगाप्तयो द्विधा" ( अभि० को० ६. ४७ ) इति नोच्यते । या त्वसंकीर्णा प्राप्तिः सैवेहोच्यत इति वेदितव्यम् ।

*दुर्बलत्वादिति ।* अनभिसंस्कारवत्त्वाद् दुर्बलत्वम् ।

*द्वे अभिज्ञे इति ।* दिव्यचक्षुरभिज्ञाम्, दिव्यश्रोत्राभिज्ञाम् । *निर्माणचित्तं च वर्जयित्वा ।* किम् ? "अव्याकृताप्तिः सहजा" इति सम्बन्धनीयम् । *तेषां हि*

प्रयोगविशेषनिष्पत्तेः पूर्वं पश्चात् सहजा प्राप्तिः। शैल्पस्थानिकस्यापि कस्यचिदैर्यापथिकस्य चात्यर्थमभ्यस्तस्येच्छन्ति[1] ॥ ३८ ॥

किमनिवृताव्याकृतस्यैव [2]सहजप्राप्तिः ? इत्याह—

**निवृतस्य च रूपस्य**

**निवृताव्याकृतस्यापि विज्ञप्तिरूपस्य** सहजैव प्राप्तिः; अधिमात्रेणाप्यविज्ञप्त्यनुत्थापनाद्दौर्बल्यसिद्धेः।

यथा अव्याकृतानां धर्माणामयं प्राप्तिभेदः, किमेवं कुशलाकुशलानामपि कश्चित् प्राप्तिभेदोऽस्ति ? अस्तीत्याह।

**कामरूपस्य[3] नाग्रजा।**

कामावचरस्य विज्ञप्त्यविज्ञप्ति**रूपस्याग्रजा** प्राप्तिः सर्वथा **नास्ति**। सहजा चास्ति, पश्चात्कालजा च।

---

*बलवत्त्वा*दिति। विस्तरः—तेषां हि दिव्यचक्षुरभिज्ञादीनां बलवत्त्वात्। किम् ? पूर्वपश्चात् सहजा प्राप्तिः। *प्रयोगविशेषनिष्पत्ते*रिति। प्रयोगविशेषेण निष्पत्तिर्दिव्यचक्षुरभिज्ञादीनाम्, तस्याः प्रयोगविशेषनिष्पत्तेर्बलवत्त्वम्। बलवत्त्वात् पूर्वपश्चात्सहजा प्राप्तिरित्यर्थसम्बन्धः। *शैल्पस्थानिकस्यापि* कस्यचित्, तद्यथा विश्वकर्मणः। *ऐर्यापथिकस्य च*। तद्यथा स्थविरस्या*श्वजितः। अत्यर्थमभ्यस्तस्य* भृशमात्मसात्कृतस्ये*च्छन्ति वैभाषिकाः*। किम् ? पूर्वपश्चात्सहजा प्राप्तिरिति ॥ ३८ ॥

"*निवृतस्य च रूपस्य*" इति। च-शब्दः समुच्चयार्थः। प्राप्तिः सहजेति समुच्चीयते। तच्च क्लिष्टं रूपं प्रथमध्यानभूमिकमेव विज्ञप्तिरूपं वेदितव्यम्; ततोऽन्यासु भूमिषु तदुत्थापकाभावात्। *अधिमात्रेणापी*ति। विस्तरः—अधिमात्रेणापि चित्तेन निवृत्ता विज्ञप्तिरुत्थापिता। तदेव चाधिमात्रं विज्ञप्तिचित्त*मविज्ञप्तिं नोत्थापयति*। *अतो दौर्बल्यसिद्धिः*। तस्याः दौर्बल्यसिद्धेः सहजैव **प्राप्तिः**। *प्राप्तिभेद* इति। विपाकजादीनामनिवृताव्याकृतानां सहजा प्राप्तिः, अभिज्ञाद्वयादीनां तु पूर्वपश्चात्सहजा प्राप्तिरिति तद्भेदः।

"*कामरूपस्य नाग्रजा*" इति। *कामावचरस्य* कुशलाकुशलस्य विज्ञप्त्यविज्ञप्तिरूपस्याग्रजा *प्राप्तिः सर्वथा नास्ति*। यदि कुशलस्य यद्यकुशलस्य, नास्त्येव सर्वथेत्यर्थः। *सहजा चास्ति पश्चात्कालजा* चेति। सम्भवतः। तद्यथा प्रथमस्य

---

१. अत्यर्थ०—का०। २. सहजा प्राप्ति.—का०। ३ कामे रूपस्य—का०।

किमप्राप्तेरपि प्राप्तिवत् प्रकारभेदः ? नेत्याह । किं तर्हि ?

**अक्लिष्टाव्याकृताऽप्राप्तिः**

अप्राप्तिरनिवृताव्याकृतैव सर्वाः । अध्वभेदेन पुनः

**साऽतीताजातयोस्त्रिधा ॥ ३९ ॥**

प्रत्युत्पन्नस्य नास्त्यप्राप्तिः प्रत्युत्पन्ना । अतीतानागतयोस्तु त्रैयध्विकी ॥३९॥

**कामाद्याप्तामलानां च**

'त्रिविधा' इति वर्त्तते । कामाप्तानां कामरूपारूप्यावचरी । एवं रूपारूप्याप्तानामनास्रवाणां च नास्त्यनास्रवा काचिदप्राप्तिः । तथा हि—

---

विज्ञप्त्यविज्ञप्तिक्षणस्यादौ सहजा प्राप्तिर्भवति । द्वितीयादिषु क्षणेषु तस्यैवाद्यस्य क्षणस्य पश्चात्कालजा भवति । एवमन्येषामपि द्वितीयादीनां क्षणानां सहजा पश्चात्कालजा प्राप्तिर्वेदितव्या । कामावचरस्यैव रूपस्याग्रजा प्राप्तिप्रतिषेधाद् ध्यानानास्रवसंवररूपस्याग्रजा प्राप्तिरस्त्येवेत्युत्सृष्टा भवति ।

*अप्राप्तिरनिवृताव्याकृतैव सर्वा ।* कस्माद्व्यवस्थाप्यते ? यद्यप्राप्तिः क्लेशानां क्लिष्टा भवेत्, प्रहीणक्लेशस्य क्लेशवदेव न स्यात् । यदि कुशला स्यात्, समुच्छिन्नकुशलमूलस्य न स्यात् । अनास्रवाणां धर्माणामप्राप्तिरनास्रवा स्यात् । किं स्यात् ? पृथग्जनो न स्यात्; नित्यमार्यधर्मसमन्वागतत्वात् । पारिशेष्यादनिवृताव्याकृतैवाप्राप्तिरिति व्यवस्थाप्यते । *प्रत्युत्पन्नस्य नास्त्यप्राप्तिः प्रत्युत्पन्नेति ।* प्रत्युत्पन्नस्य धर्मस्य प्राप्तिर्वर्तते । तस्मादस्याप्राप्तिर्नास्ति प्रत्युत्पन्ना; तस्य प्राप्त्यप्राप्त्योः समवधानासम्भवात् । *अतीतानागतयोस्तु त्रैयध्विकीति ।* अप्राप्तानां प्राप्तविहीनानां च प्रायोगिकाणां गुणानामनागतानां च चक्षुरादीनामपि च येषां प्राप्तिर्नास्ति, अतीताप्यस्त्यप्राप्तिः, अनागतापि, प्रत्युत्पन्नापि । स्रोतोन्यायेन हि तेषामप्राप्तिरुत्पद्यते निरुध्यते अनागतावस्थानेति ॥ ३९ ॥

"*कामाद्याप्तामलानां च*" इति । "त्रिधा" इत्यनुकर्षणार्थश्चकारः । कामादिषु धातुष्वाप्ता अवियुक्ताः कामाद्याप्ताः, कामाद्याप्तानाममलानां चाप्राप्तिस्त्रिविधा, उपपत्त्याश्रयवशेन व्यवस्थापनात् । धर्मसहाव्यवस्थापिनी ह्यप्राप्तिः, न प्राप्तिवद्धर्मवशेन व्यवस्थाप्यते । तद्यथा, कामधातूपपन्नस्य कामरूपारूप्यावचराणामनास्रवाणां च धर्माणामप्राप्तिः कामावचरी, रूपधातूपपन्नस्य रूपावचरी, आरूप्यधातूपपन्नस्यारूप्यावचरी । तद्यथा—कामधातूपन्नस्य प्रायोगिकाणां गुणानामुपपत्तिलाभिकानामपि कुशलसमुच्छेदावस्थायामप्राप्तिः, अवीतरागत्वाच्च रूपारूप्यावचराणामक्लिष्टानामप्राप्तिः, पृथग्जनत्वाच्चानास्रवा-

**मार्गस्याप्राप्तिरिष्यते ।**

**पृथग्जनत्वम्**

"पृथग्जनत्वं कतमत् ? आर्यधर्माणामलाभः" (                ) इति **शास्त्रपाठः**। अलाभश्च नामा**प्राप्तिः** । न च **पृथग्जनत्व**मनास्रवं भवितुमर्हति ।

कतमेषामार्यधर्माणामलाभः ? सर्वेषाम्; अविशेषवचनात् । स तु यो विना लाभेनालाभः । अन्यथा हि बुद्धोऽपि श्रावकप्रत्येकबुद्धसान्तानिकैरसमन्वागमाद्[1] अनार्यः स्यात् । एवशब्दस्तर्हि पठितव्यः ? न पठितव्यः । एकपदान्यपि ह्यवधारणानि भवन्ति, तद्यथा—अब्भक्षः, वायुभक्ष इति ।

---

णामप्राप्तिः कामावचरी । तथा रूपधातूपपन्नस्य कामावचराणां भूमिसञ्चारत्यक्तानां रूपारूप्यावचराणां च प्रायोगिकाणां गुणानां पृथग्जनत्वाच्चानास्रवाणामप्राप्ती रूपावचरी । तथैव चारूप्यधातूपपन्नस्य कामरूपावचराणां भूमिसञ्चारत्यक्तानामारूप्यावचराणां च प्रायोगिकाणां गुणानां पृथग्जनत्वादेव चानास्रवाणामप्राप्तिरारूप्यावचरीति नेयम् ।

*पृथग्जनत्वं कतमत् ? आर्यधर्माणामलाभ* इति । अनेन शास्त्रपाठेनानास्रवत्वाभावमप्राप्तेर्दर्शयति ।

*कतमेषामार्यधर्माणामलाभ* इति । 'आर्यधर्मा दुःखे धर्मज्ञानक्षान्तिमारभ्य सर्वोऽनास्रवो मार्गः' इति । अत एवं पृच्छति । *सर्वेषामविशेषवचनादि*ति । सर्वेषां दुःखे धर्मज्ञानक्षान्त्यादीनां शैक्षाशैक्षज्ञानानामलाभः । कस्मात् ? अविशेषितत्वात् । यद्येवम्, उत्पन्नायामपि दुःखे धर्मज्ञानक्षान्तौ परिशिष्टानामार्यधर्माणामलाभोऽस्यास्तीत्यनार्यः स्यात् ? तस्मादिदमाह—*स तु यो विना लाभेने*ति । यो विना लाभेनालाभः, तत् पृथग्जनत्वमिति । *अन्यथा ही*ति । विस्तरः—यद्यार्यधर्माणां लाभेऽपि सत्यन्येषामपि धर्माणामलाभः पृथग्जनत्वमिष्यते, *बुद्धोऽपि श्रावकप्रत्येकबुद्धसान्तानिकैर्धर्मैरसमन्वागमादनार्यः* स्यात् । केवलालाभग्रहणात् त्वप्रसङ्गः । *एवशब्दस्तर्हि पठितव्य* इति । आर्यधर्माणामलाभ एवेति । *एकपदान्यपि ह्यवधारणा*नीति केवलपदान्यपीत्यर्थः । *अब्भक्षो वायुभक्ष* इति । अब्भक्ष एव, वायुभक्ष एवेति नोच्यते, एवशब्दस्य चार्थो गम्यते, तद्वदिहापीति । अथ वा—अप एव यो भक्षयति सोऽब्भक्षः, यो वायुमेव भक्षयति स वायुभक्ष इति । यथात्र लुप्तनिर्दिष्टस्यैवकारस्यावधारणार्थो गम्यते, तद्वदिहाप्यलाभ एवेति ।

---

१. प्रत्येकबुद्धगोत्रकै०—का० ।

दुःखे धर्मज्ञानक्षान्तितत्सहभुवामलाभ इत्यपरे । न च तत्त्यागादनार्यत्वप्रसङ्गः[1] ? तदलाभस्यात्यन्तं हतत्वात् । ते तर्हि त्रिगोत्रा इति कतमेषामलाभः ? सर्वेषाम् । एवं तर्हि स एव परिहारः । यत्नस्तर्हि व्यर्थः ? एवं तु साधु यथा सौत्रान्तिकानाम् । कथं च सौत्रान्तिकानाम् ? "अनुत्पन्नार्यधर्मा सन्ततिः[2] पृथग्जनत्वम्" इति ।

अथेयमप्राप्तिः कथं विहीयते ? यस्य या धर्मस्य प्राप्तिरसौ

**तत्प्राप्तिभूसञ्चाराद् विहीयते ॥ ४० ॥**

यथा तावदार्यमार्गस्यालाभः पृथग्जनत्वम्, तस्य लाभात् तद्विहीयते, भूमिसञ्चाराच्च ।

---

*दुःखे धर्मज्ञानक्षान्तितत्सहभुवामित्यपर* इति। विस्तरः—दुःखे धर्मज्ञानक्षान्तेस्तत्सहभुवां च वेदनादीनां धर्माणा*मलाभः पृथग्जनत्वम्* । अस्मिन् पक्ष उत्पन्नायामपि दुःखे धर्मज्ञानक्षान्तौ परिशिष्टानामार्यधर्माणामलाभोऽस्तीत्यनार्यः स्यादिति यो दोषः उक्तः स न सम्भवति । यदा तर्हि फलप्राप्तिस्तदा दुःखे धर्मज्ञानक्षान्तितत्सहभुवां विहानिरिति फलप्राप्तावनार्यः स्यादिति दोषपरिहारमर्थमाह—*न च तत्त्यागात्* । न च तेषां क्षान्तिसहभुवां त्यागात् । *अनार्यत्वप्रसङ्गः* । तदलाभस्यात्यन्तं हतत्वात्, तस्यालाभस्यात्यन्तविहीनत्वात् । कथम् ? असावत्यन्तं हतः; तत्सन्ताने पुनरनुत्पत्तेः । *ते तर्हि त्रिगोत्रा* इति । श्रावकप्रत्येकबुद्धबुद्धगोत्रा इति । *कतमेषामलाभः ? सर्वेषामि*ति । श्रावकादिगोत्राणाम् । *एवं तर्हि स एव दोष* इति । बुद्धोऽपि त्रिगोत्रालाभादनार्यः स्यादित्यर्थः । *पुनः स एव परिहार* इति । 'स तु यो विना लाभेन' इति पूर्ववत् प्रपञ्चो यावत् 'तद्यथा अब्भक्षो वायुभक्षः' इति । *यत्नस्तर्हि व्यर्थ* इति । क्षान्तिपरिशिष्टार्यधर्मालाभसद्भावादनार्यः स्यादित्यस्य दोषस्य परिहाराय 'क्षान्तितत्सहभुवामलाभः पृथग्जनत्वम्' इति यो यत्नः, स व्यर्थः स्यात् । पूर्वपक्षदोषपरिहार एवायमास्थीयते—*अनुत्पन्नार्यधर्मा सन्तति*रिति । अनुत्पन्ना आर्यधर्मा अस्यामित्यनुत्पन्नार्यधर्मा सन्ततिः *पृथग्जनत्वम्* । अनुत्पन्नार्यमार्गा स्कन्धसन्ततिरित्यर्थः । अर्थाद् उत्पन्नार्यधर्मा सन्ततिरार्यत्वमित्युक्तं भवति; आश्रयपरावृत्तेः ।

*अथेयमप्राप्तिरि*ति । सर्वधर्माप्राप्तिश्चोद्यते, नार्यधर्माप्राप्तिरेव । *यथा तावदि*ति । उदाहरणमेतत् । *तस्य लाभात् तद्विहीयत* इति । तस्यार्यमार्गस्य लाभात् तत्पृथग्जनत्वमलाभलक्षणं विहीयते । किंधातुकं तत् पृथग्जनत्वम् ?

---

१. तद्योगाद०—का० । २ ०र्यधर्मसन्ततिः—का० ।

एवमन्येषामपि योज्यम् ।

'विहीयते' इति तस्या अप्राप्तेरप्राप्तिरुत्पद्यते, प्राप्तिश्छिद्यते । किं पुनरप्राप्ति-

---

त्रिधातुकमित्येके । ननु चोपपत्त्याश्रयवशेनालाभो व्यवस्थाप्यते, पृथग्जनत्वं चालाभस्वभावम्, तस्मादस्य कामावचरस्य सत्त्वस्य कामावचरमेव पृथग्जनत्वमस्ति, न रूपारूप्यावचरम् । अतस्त्रैधातुकं विहीयत इत्ययुज्यमानमेतत् पश्यामः ? अथ पुनरनुत्पत्तिधर्मतां तदापन्नमिति कृत्वा त्रैधातुकं तद्विहीयत इत्युपचारकल्पना ? भवत्वेषा, नैषा वार्यते । कामावचरस्यैव त्वेकस्य पृथग्जनत्वस्य प्राप्तिरस्ति । तल्लौकिकाग्रधर्मावस्थायां विहीयत इति वेदयामः । तच्च कामवैराग्ये नवमे विमुक्तिमार्गे प्रहीयते । रूपारूप्यधात्वोरुत्पद्यमानस्य त्वार्यस्य प्रतिभूम्यवस्थितानां पृथग्जनत्वानामार्यमार्गप्राप्तिसामर्थ्यान्नैव प्राप्तिरुत्पद्यते । प्रतिभूमि तु नवमे विमुक्तिमार्गे तेषां प्रहाणं भवतीत्यवगन्तव्यम् ।

*भूमिसञ्चाराच्चेति* । यदा च कामधातोर्वैराग्यं कृत्वा प्रथमं ध्यानं सञ्चरति, तदा च तत्कामावचरं पृथग्जनत्वं विहीयते । न चार्यो भवति; प्रथमध्यानभूमिकपृथग्जनत्वप्रादुर्भावात् । एवमारूप्यधातुसञ्चाराद् रूपावचरं पृथग्जनत्वं विहीयते । ऊर्ध्वभूमेश्चाधरां भूमिं सञ्चरते । ऊर्ध्वभूमिकं पृथग्जनत्वं विहीयत इति वक्तव्यम् । *एवमन्येषामपि योज्य*मिति । यथा आर्यमार्गस्य प्राप्त्या पृथग्जनत्वमप्राप्तिर्विहीयत इति योजितम्, एवमन्येषामपि श्रुतचिन्तामयादिकानां धर्माणामप्राप्तिर्विहीयत इति योज्यम् । कथम् ? कामावचराणां तावच्छ्रुतचिन्तामयादिकानां धर्माणां प्राप्तिलाभादप्राप्तिर्विहीयते । उपपत्तिलाभिकानां च कुशलानां प्राप्त्या समुच्छिन्नकुशलस्याप्राप्तिर्विहीयते, भूमिसञ्चाराच्च । यदा चायं कामधातोश्च्युत्वा प्रथमं ध्यानमुपपत्त्या सञ्चरति, तदा च तद्भूमिकानां गतिसंगृहीतानां स्कन्धानामप्राप्तिर्विहीयते । अक्लिष्टाव्याकृता एव हि गतयो वक्ष्यन्ते । "अव्याकृताप्तिः सहजा" ( अभि० को० २.३८ ) इति चोक्तम् ।

एवं प्रथमध्यानभूमिकानां प्रायोगिकाणां गुणानां प्राप्तेरप्राप्तिर्विहीयते, भूमिसञ्चाराच्च । ऊर्ध्वभूमिकानां गतिसंगृहीतानां स्कन्धानां तद्भूमिसञ्चाराद् विहीयत इति । इदमेकेषां भूमिसञ्चारव्याख्यानोदाहरणम् । तत्राविविक्तं पश्यामः ऊर्ध्वभूमिकानां गतिसंगृहीतानां स्कन्धानामप्राप्तिर्न केवलं भूमिसञ्चाराद्विहीयते, किं तर्हि ? तत्प्राप्तितोऽपीति । इदं त्वसंकीर्णमुदाहरणं पश्यामः । तद्यथा— द्वितीयादिध्यानभूमिकानां प्रायोगिकाणां गुणानां तदलाभिनः कामावचरस्य सत्त्वस्याप्राप्तिरस्ति । स यदि कामवैराग्यं कृत्वा प्रथमध्यानमुपपद्यते, सा तेषामप्राप्तिर्भूमिसञ्चाराद्विहीयते । प्रथमध्यानभूमिका तु तेषामप्राप्तिरुद्भवतीति । एवमन्येषामपि योज्यम् ।

प्राप्त्योरपि प्राप्त्यप्राप्ती भवतः ? उभयोरप्युभयं भवतीत्याहुः । ननु चैवमनवस्थाप्रसङ्गः प्राप्तीनाम् ? नानवस्थाप्रसङ्गः; परस्परसमन्वागमात् । आत्मना तृतीयो हि धर्म उत्पद्यते । स च धर्मः, तस्य प्राप्तिः, प्राप्तिप्राप्तिश्च । तत्र प्राप्त्युत्पादात् तेन धर्मेण समन्वागतो भवति, प्राप्तिप्राप्त्या च । प्राप्तिप्राप्त्युत्पत्तेः[1] पुनः प्राप्त्यैव समन्वागतो भवति, अतो नानवस्था ।

एवं च कृत्वा आत्मना तृतीयस्य धर्मस्य कुशलस्य क्लिष्टस्य च[2] द्वितीये क्षणे तिस्रः प्राप्तयो जायन्ते, तासां च पुनस्तिस्रोऽनुप्राप्तय[3] उद्भवन्ति इति षड् भवन्ति । तृतीये क्षणे प्रथमद्वितीयक्षणोत्पन्नानां द्रव्याणां नव प्राप्तयः सार्धमनुप्राप्तिभिरष्टादश[4] भवन्ति ।

एवमुत्तरोत्तरवृद्धिप्रसङ्गेनैताः प्राप्तयो विसर्पन्त्यः सर्वेषामतीतानागतानां

---

*ननु चैवमनवस्थाप्रसङ्गः प्राप्तीनामि*ति । प्राप्तेरपि प्राप्तिः, अस्या अप्यन्या, तस्या अप्यन्या—इत्यनवस्था । *परस्परसमन्वागमा*दिति । प्राप्तिप्राप्तियोगात् प्राप्त्याः समन्वागतः । प्राप्तियोगात् प्राप्तिप्राप्त्या समन्वागत इत्यर्थः । *प्राप्त्युत्पादादिति* विस्तरः । प्राप्त्युत्पादात् *तेन धर्मेण* चित्तेन वा *समन्वागतो भवति* । *प्राप्तिप्राप्त्या च* । समन्वागत इति वर्त्तते । *प्राप्तिप्राप्त्युत्पत्तेः प्राप्त्यैव समन्वागतो भवती*ति । एवं प्राप्तिरुभयत्र व्याप्रियते, प्राप्तिप्राप्तिस्त्वेकत्रेति, *अतो नानवस्था* । *कुशलस्य क्लिष्टस्य* चेति । अनयोरग्रजपश्चात्कालजप्राप्तित्वाद् ग्रहणम् । अव्याकृतस्य हि सहजैव प्राप्तिरिति । *द्वितीये क्षण* इति । विस्तरः—द्वितीये क्षणे *तस्य* धर्मस्य, तत्प्राप्तेः, प्राप्तिप्राप्तेश्च प्राप्तय इति तिस्रः प्राप्तयः । प्राप्तियोगाद्धि तैः समन्वागतो भगति । ताभिस्तिसृभिः प्राप्तिभिः समन्वागमार्थं *पुनस्तिस्रोऽनुप्राप्तय उद्भवन्तीति षड् भवन्ति* प्राप्तयः । *प्रथमद्वितीयक्षणोत्पन्नानां द्रव्याणामि*ति । धर्मेण सार्धं नवानां द्रव्याणां नव *प्राप्तयः सार्धमनुप्राप्तिभिरष्टादश भवन्ति* ।

*एवमुत्तरोत्तरवृद्धिप्रसङ्गेने*ति । विस्तरः–उत्तरोत्तरस्य क्षणस्य वृद्धिः प्राप्तिभिः, उत्तरोत्तरे वा क्षणे वृद्धिः प्राप्तीनाम्, तस्याः प्रसङ्ग उत्तरोत्तरवृद्धिप्रसङ्गः, तेन उत्तरोत्तरवृद्धिप्रसङ्गेन । *एताः प्राप्तयो विसर्पन्त्य* इति । दिङ्मात्रं दर्शयिष्यामः । चतुर्थे क्षणे प्रथमक्षणोत्पन्नैस्त्रिभिर्धर्मैः प्राप्त्यनुप्राप्तिमद्भिर्भवितव्यम् । द्वितीयक्षणोत्पन्नाभिरपि षड्भिः प्राप्त्यनुप्राप्तिभिः पुनः प्राप्त्यनुप्राप्तिमतीभिर्भवि-

---

१. प्राप्तिप्राप्त्युत्पादात्–का० । २ वा—का० ।
३. का० पुस्तके नास्ति । ४. ०रित्यष्टादश—का० ।

क्लेशोपक्लेशक्षणानामुपपत्तिलाभिकानां च कुशलक्षणानां [1]ससम्प्रयोगसहभुवामनाद्यन्तसंसारपर्यापन्नानामनन्ता एकस्य प्राणिनः क्षणे क्षणे उपजायन्ते इत्यनन्तद्रव्याः प्रतिसन्तानमात्मभावक्षणाः सत्त्वानां भवन्ति । अत्युत्सवो बतायं प्राप्तीनां वर्त्तते ! केवलं न प्रतिघातिन्यः;[2] यतोऽवकाशं[3] लभन्ते । इतरथा ह्याकाशेऽप्यवकाशो न स्याद् द्वितीयस्य प्राणिनः ॥ ४० ॥

अथ केयं सभागता ?

**सभागता सत्त्वसाम्यं**

**सभागता** नाम द्रव्यम्, सत्त्वानां सादृश्यम् । 'निकायसभागः' इत्यस्याः **शास्त्रे** संज्ञा ।

---

तव्यम् । एवं तृतीयक्षणोत्पन्नाभिरष्टादशभिः प्राप्त्यनुप्राप्तिभिः पुनरपि प्राप्त्यनुप्राप्तिमतीभिर्भवितव्यमिति प्रथमद्वितीयतृतीयक्षणोत्पन्नानां सप्तविंशतिः प्राप्तयः सार्धमनुप्राप्तिभिस्तावतीभिरिति चतुःपञ्चाशत् प्राप्तयश्चतुर्थे क्षणे भवन्ति । पञ्चमे तु क्षणे प्रथमद्वितीयतृतीयक्षणोत्पन्नाः प्राप्त्यनुप्राप्तयः पुनश्चतुःपञ्चाशच्चतुर्थक्षणोत्पन्नप्राप्त्यनुप्राप्तयश्च द्विश्चतुःपञ्चाशद् भवन्ति । त्रीणि चतुःपञ्चाशत्कानि द्वाषष्ट्युत्तरशतं प्राप्तीनां जायते । एवमुत्तरोत्तरवृद्धिप्रसङ्गो वक्तव्यः । *अतीतानागतानामिति* । अत्र प्रत्युत्पन्नाग्रहणम्; अनावश्यकत्वात् । *उत्पत्तिलाभिकानां चेति* । अत्र प्रायोगिकाग्रहणमनावश्यकत्वादेव । *ससम्प्रयोगसहभुवामिति* । सवेदनादिसजात्यादीनाम् । *अनाद्यन्तसंसारपर्यापन्नानाम्* । अनादावनन्ते च संसारे संगृहीतानाम् । अनन्ता अप्रमेया एकस्य प्राणिनः, किमङ्ग बहूनाम् ! *क्षणे क्षण उपजायन्ते प्राप्तय* इति । अनन्तद्रव्या एव । अनन्तप्राप्तिद्रव्या इत्यर्थः । *अत्युत्सवो बतायं प्राप्तीनामिति* । परिहासवचनमेतत् । *केवलं न प्रतिघातिन्यः*; अरूपिणीत्वात् । *यतोऽवकाशं लभन्ते* प्राप्तयः ॥ ४० ॥

"*सभागता सत्त्वसाम्यम्*" इति । विस्तरः—समानो भागो भजनमेषामिति सभागाः, तद्भावः सभागता । समानो वा भागो भजनं सभागः, सभाग एव सभागता । यद्योगात् सभागो भवति तद् *द्रव्यम्* । सत्त्वानां साम्यं सामान्यम्, सादृश्यमित्यर्थः । सत्त्वग्रहणमसत्त्वनिरासार्थम् । *सत्त्वानां* सत्त्वसंख्यातानां च धर्माणां *सादृश्यं* सभागता । असत्त्वसंख्यातानां शालियवादिनां नेष्यते । *निकायसभाग इत्यस्याः शास्त्रे संज्ञेति* । ज्ञानप्रस्थानादिके शास्त्रे 'निकायसभागः'

---

१. सप्रयोग० —का० ।
२. तु अप्रतिघातिन्यो—का० ।
३. ०शमाकाशे—का० ।

सा पुनरभिन्ना भिन्ना च । अभिन्ना सर्वसत्त्वानां सत्त्वसभागता; प्रतिसत्त्वं सर्वेषु भावात् । भिन्ना पुनस्तेषामेव सत्त्वानां धातु-भूमि-गति-योनि-जाति-स्त्री-पुरुषोपासक-भिक्षु-शैक्षाशैक्षादिभेदेन प्रतिनियता धर्मसभागता ।

पुनः स्कन्धायतनधातुतः । यदि सत्त्वसभागता द्रव्यमविशिष्टं न स्यात्, अन्योन्यविशेषभिन्नेषु सत्त्वेषु 'सत्त्वः सत्त्वः' इत्यभेदेन बुद्धिर्न स्यात्, प्रज्ञप्तिश्च । एवं स्कन्धादिबुद्धिप्रज्ञप्त्योऽपि योज्याः ।

स्याच्च्यवेत, उपपद्येत, न च सत्त्वसभागतां विजह्यात्, न च प्रतिलभेत— इति चतुष्कोटिकः । प्रथमा कोटिः—यतश्च्यवते तत्रैवोपपद्यमानः । द्वितीया—

---

इत्यनया संज्ञयायं चित्तविप्रयुक्तो निर्दिश्यते । इह तु श्लोकबन्धानुगुण्यात् सभागतेत्यनया संज्ञयेत्यभिप्रायः ।

*सा पुनरभिन्ना भिन्ना चेति* । या सर्वसत्त्ववर्त्तिनी । प्रतिसत्त्वमन्यान्याप्यभिन्नेत्युच्यते; सादृश्यात् । न हि सा यथा *वैशेषिकाणामेका* नित्या चेति । भिन्ना—या क्वचिद् वर्त्तते, क्वचिन्न वर्त्तते । तत आह—*भिन्ना पुनरिति* विस्तरः । *धातवस्त्रयः* कामादयः । *गतयः* पञ्च नरकादयः । *योनयश्चतस्रोऽण्डजादयः* । *जातयो* ब्राह्मणादयः । आदिशब्देन उपासिका-भिक्षुणी-नैवशैक्षनाशैक्षादयः संगृह्यन्ते । *स्कन्धायतनधातुत* इति । रूपस्कन्धसभागता यावद्धर्मधातुसभागता । *अविशिष्टमिति* । सामान्यरूपम् । *प्रज्ञप्तिश्चेति* । अभिधानं चेत्यर्थः । *एवं स्कन्धादिबुद्धिप्रज्ञप्त्योऽपि योज्या* इति । यदि स्कन्धसभागताद्रव्यमविशिष्टं न स्याद्, अन्योन्यविशेषभिन्नेषु स्कन्धेषु 'स्कन्धः स्कन्धः' इत्यभेदेन बुद्धिर्न स्यात्, प्रज्ञप्तिश्चेति ।

*एवं धात्वादिबुद्धिप्रज्ञप्त्योऽपि योज्या* इत्येके पठन्ति । तेषामेवं वक्तव्यम्—यदि सभागतेति विस्तरेण यावदन्योन्यविशेषभिन्नेषु धातुषु 'कामावचरः' 'कामावचरः' इत्यभेदेन बुद्धिर्न स्यात्, प्रज्ञप्तिश्चेति ।

*चतुष्कोटिक* इति । *स्याच्च्यवेतोपपद्येत न च सत्त्वसभागतां विजह्यान्न च प्रतिलभेतेति* । सत्त्वसभागतामिति । सत्त्वानां सभागता सत्त्वसभागता मनुष्यत्वादिलक्षणा । सत्त्वग्रहणं हि धर्मविशेषणार्थम् । सत्त्वसभागता ह्यत्र चतुःकोटिके विवक्षिता, न धर्मसभागतेति । न तु 'सत्त्वस्सत्त्वः' इत्याकारसभागतेहाभिप्रेता । यदि हि साभिप्रेता स्यात्, तृतीया कोटिर्न सिध्येत; गतिसञ्चारेऽपि तस्याः सत्त्वसभागतायास्तादवस्थ्यात् । *तत्रैवोपपद्यमान* इति । तद्यथा मनुष्य-

नियाममवक्रामन् स हि पृथग्जनसभागतां विजहाति[1], आर्यसभागतां प्रतिलभते। तृतीया—गतिसञ्चारात्। चतुर्थी—एतानाकारान् स्थापयित्वा।

यदि पृथग्जनसभागता नाम द्रव्यमस्ति, किं पुनः पृथग्जनत्वेन। नहि मनुष्यसभागताया अन्यत् मनुष्यत्वं कल्प्यते। नैव च लोकः सभागतां पश्यति; अरूपिणीत्वात्। नचैनां प्रज्ञया परिच्छिनत्ति, प्रतिपद्यते च सत्त्वानां जात्यभेदमिति सत्या अपि तस्याः कथं तत्र व्यापारः।

---

गतेश्च्युत्वा मनुष्यगतावेवोपपद्यमानो मनुष्यगतेश्च्यवते मरणादुपपद्यते च; तस्यामेव प्रतिसन्धिबन्धात्। न चासौ मनुष्यसभागतां विजहाति, न च प्रतिलभते; तस्या मनुष्यसभागतायास्तादवस्थ्यात्। *द्वितीया नियाममवक्रामन्निति*। *स सत्त्वसभागतां* पृथग्जनत्वस्वभावां सभागतां *विजहाति, आर्यत्वस्वभावां सभागतामपरां प्रतिलभते*। *तृतीया गतिसञ्चारादिति*। तद्यथा मनुष्यगतेश्च्युत्वा देवगतावुपपद्यमानः च्यवते, तथैव मरणादुपपद्यते च; प्रतिसन्धिबन्धात्। सत्त्वसभागतां मनुष्यसभागतालक्षणां विजहाति, प्रतिलभते च देवसभागतालक्षणामपरामिति। *चतुर्थ्येतानाकारान् स्थापयित्वेति*। पूर्वोक्तकोटिस्वभावप्रकारान् वर्जयित्वेत्यर्थः। तद्यथा जीवन् पृथग्जन आर्यो वा किञ्चिदलभमानः।

*यदि पृथग्जनसभागता नाम द्रव्यमस्ति किं पुनः पृथग्जनत्वेन*। आर्यधर्मालाभस्वभावेन *कल्पितेन*। प्रयोजनमिति वाक्यशेषः। पृथग्जनसभागतयैव पृथग्जन इति परिच्छिद्येत, यथा मनुष्यसभागतयैव मनुष्य इति। *न हि मनुष्यसभागताया अन्यन्मनुष्यत्वं कल्प्यते*। वैभाषिकैरलाभवदन्यस्वभावम्। तत्र च साधनम्—'न स्वसभागताया अन्यत् पृथग्जनत्वम्; स्वसभागताप्रत्ययाभिधेयत्वात्, मनुष्यत्ववत्'। *नैव च लोकः सभागतां पश्यत्यरूपिणीत्वादिति*। न लोकश्चक्षुषा सभागतां पश्यति; अरूपिणीत्वादरूपवतीत्वाद्, अरूपस्वभावत्वाद्वा। यथा न पश्यति एवं न शृणोति, यावन्न स्पृशतीति। अनेन प्रत्यक्षासिद्धतां दर्शयति। *न चैना प्रज्ञया परिच्छिनत्तीति*। अनेनानुमानेनापि न सिद्ध्यतीति दर्शयति। *प्रतिपद्यते च सत्त्वानां जात्यभेदमिति*। *सत्या अपि तस्याः कथं तत्र व्यापार* इति। जात्यभेदप्रतिपत्तौ जात्यभेदप्रतिपत्तिरस्ति। सा तु न सभागतया द्रव्यान्तरकल्पितया कृता; प्रमाणेनानुपलभ्यमानत्वेन तस्या व्यापारासम्भवात्।

ब्रूयास्त्वम्—न निर्निमित्ता सामान्यबुद्धिर्भवितुमर्हति, तेन यन्निमित्तं तस्याः सामान्यबुद्धेः तत् सभागता नाम द्रव्यमिति ? वयमपि तां सामान्य-

---

१. विजह्याद्—का०।

अपि च—असत्त्वसभागतापि किं नेष्यते । शालियवमुद्गमाषाम्रपनस-लोहकाञ्चनादीनां स्वजातिसादृश्यात्, तासां च सभागतानामन्योन्यभिन्नानां कथमभेदेन सभागता प्रज्ञप्तिः क्रियते । **वैशेषिकाश्चैवं** द्योतिता भवन्ति । तेषामपि ह्येष सिद्धान्तः—'सामान्यपदार्थो नामास्ति, यतः समानप्रत्ययोत्पत्तिरतुल्यप्रकारेष्वपि' इति । अयं तु तेषां विशेषः—स एकोऽप्यनेकस्मिन् वर्त्तते यदि द्योतिताः, यदि न द्योतिताः ।

अस्त्येषा तु सभागता; **सूत्रे** वचनाद्—इति **वैभाषिकाः** । उक्तं हि **भगवता**—"स चेदित्थन्त्वमागच्छति मनुष्याणां सभागताम्" इति ।

उक्तमेतत्, न तूक्तं द्रव्यान्तरमिति ?

का तर्हि सा ? त एव हि तथाभूताः संस्कारा येषु मनुष्यादिप्रज्ञप्तिः शल्यादिषु सभागतावत् । तत्त्वेतन्न वर्णयन्ति ॥

---

बुद्धिं सनिमित्तां ब्रूमः । सादृश्यकृता हि सा बुद्धिः । तच्च सादृश्यं न द्रव्यान्तरमिति ब्रूमः । तेनोच्यते—*अपि चासत्त्वसभागतापि किं नेष्यत* इति । विस्तरः—न द्रव्यान्तरसभागतानिमित्ता 'सत्त्वः सत्त्वः' इति सामान्यबुद्धिः; सामान्याकारप्रवृत्तत्वात् । *शालियवमुद्ग*माषादिसामान्यबुद्धिवत् । शालियव*स्वजाति-सादृश्यकृता* ह्येषा सामान्यबुद्धिः । न च तेषां स्वजातिसादृश्यं स्वतोऽर्थान्तरं भवति । *तासाञ्च सभागतानामिति* । विस्तरः—अन्या सत्त्वसभागता, अन्या धातुसभागता, अन्या गतिसभागतेत्यन्योन्यभिन्नाः सभागता इष्यन्ते । तासां सभागतेति प्रज्ञप्तिः 'इयं सभागतेयं सभागता' इत्यभेदेन कथं भवद्भिः क्रियते, व्यवहारः प्रत्ययश्च कथं जायते ? यद्यत्रापि सभागतान्तरं प्रतिज्ञायेत येन सभागता सामान्यबुद्धिर्भवेत्, भवेत् सोऽयमपक्षः; प्राक्पक्षविरोधात् । *वैशेषिकाश्चैवं द्योतिता* इति । ज्वलिताः, समर्थिता इत्यभिप्रायः । तेऽपि हि सामान्यपदार्थवादिनः, भवन्तोऽपीति । अयं तु तेषां *वैशेषिकाणां* विशेषः—*एकोऽप्यनेकस्मिन् वर्तते* स्रक्सूत्रवत्, भूतकण्ठे गुणवच्चेति । *यदि द्योतिताः* सामान्यपदार्थवादित्वात् । *यदि न द्योतिता* एकानेकनित्यानित्यत्वादिविशेषवादित्वात् । न हि परलोकास्तित्वादीनि *वैशेषिकैः* कल्पितानीति न व्यवस्थाप्यन्ते ।

*स चेदित्थन्त्वमागच्छतीति* । प्राणातिपातेनासेवितेन भावितेन बहुलीकृतेन नरकेषूपपद्यते, स चेदित्थन्त्वमागच्छति *मनुष्याणां* सभागतां प्राप्नोति प्राणातिपातेनाल्पायुर्भवतीति विस्तरः । इदं प्रकार इत्थम्, तद्भावः इत्थन्त्वमिति ।

अथ किमिदमासंज्ञिकं नाम ?

**आसंज्ञिकमसंज्ञिषु ।**

**निरोधश्चित्तचैत्तानां**

असंज्ञिसत्त्वेषु देवेषूपपन्नानां यश्चित्तचैत्तानां निरोधस्तदासंज्ञिकं नाम द्रव्यम्। येन चित्तचैत्ता अनागतेऽध्वनि कालान्तरं सन्निरुध्यन्ते, नोत्पत्तुं लभन्ते; नदीतोयसन्निरोधवत् ।

तत् पुनरेकान्तेन

**विपाकः**

**कस्य विपाकः ?** असंज्ञिसमापत्तेः ॥

कतमे ते सत्त्वा येष्वसंज्ञिसत्त्वाः ?

**ते बृहत्फलाः ॥ ४१ ॥**

**बृहत्फला** नाम देवा येषां केचिदसंज्ञिसत्त्वाः प्रदेशे भवन्ति ध्यानान्तरिकावत् । किं पुनस्तेनैव कदाचित् संज्ञिनो भवन्ति ? भवन्त्युपपत्तिकाले च्युतिकाले च । "प्रकृष्टमपि कालं स्थित्वा सह संज्ञोत्पादात् तेषां सत्त्वानां तत्स्थानात् च्युतिर्भवति" इति सूत्रे पाठः । ते च ततो दीर्घस्वप्नव्युत्थिता इव च्युता कामधातावु-

---

"शरीरेन्द्रियसंस्थानचेष्टाहारादिसौभाग्यकारणम् अन्योन्याभिरभिसम्बन्धनिमित्तं च सभागता" इत्याचार्यसङ्घभद्रः । तदेतदेनेनैव प्रत्युक्तम् । वयमपि ह्येवमिच्छामः । न तु सा सभागता द्रव्यान्तरम् । त एव हि संस्कारास्तथाकारणभावं प्रतिपद्यन्त इति ॥

*"आसंज्ञिकमसंज्ञिषु निरोधश्चित्तचैत्तानाम्"* इति । विस्तरः—असंज्ञिनामिदमासंज्ञिकम्, असंज्ञिषु वा भवमासंज्ञिकम् । निरुध्यन्तेऽनेन चित्तचैत्ताः, चित्तचैत्तान् वा निरुणद्धीति निरोधः । *येनानागतेऽध्वन्यवस्थिताश्चित्तचैत्ताः कालान्तरं* तावत्कालं *सन्निरुध्यन्ते, नोत्पत्तुं लभन्त* इत्यर्थः । *तदासंज्ञिकं नाम द्रव्यम्* । *नदीतोयसन्निरोधवत्* । सेतुवदित्यर्थः ।

*ध्यानान्तरिकावदिति* । यथा ब्रह्मपुरोहिता नाम ते देवा येषां केचिन्महाब्रह्माणः प्रदेशे भवन्ति ध्यानान्तरिकायाम्, तथा बृहत्फला नाम ते देवा येषामसंज्ञिसत्त्वाः प्रदेशे भवन्ति, न भूम्यन्तरे । *भवन्ति उपपत्तिकाले च्युतिकाले च* । संज्ञिन इति सम्बन्धनीयम्; क्लिष्टेन मनसा प्रतिसन्धिबन्धात् । "उपेक्षायां

पद्यन्ते, नान्यत्र । पूर्वसमापत्तिसंस्कारपरिक्षयात् अपूर्वानुपचयाच्च क्षिप्ता इव क्षीणवेगा इषवः पृथिवीं पतन्ति । येन च तत्रोपपत्तव्यम्, तस्यावश्यं कामावचरं कर्मापरपर्यायवेदनीयं भवति । यथा उत्तरकौरवाणां देवोपपत्तिवेदनीयम् ॥ ४१ ॥

अथ 'समापत्ती' इति यदुक्तम्, कतमे ते समापत्ती ? असंज्ञिसमापत्तिः, निरोधसमापत्तिश्च ।

केयमसंज्ञिसमापत्तिः ? यथैवासंज्ञिकमुक्तम्—"निरोधश्चित्तचैत्तानाम्" इति ।

**तथाऽसंज्ञिसमापत्तिः**

असंज्ञिनां सत्त्वानां समापत्तिः, असंज्ञा वा[1] समापत्तिरित्यसंज्ञिसमापत्तिः[1] । सापि चित्तचैत्तानां निरोधः । एतावत् तथाशब्देनान्वाकृष्यते ।

सा तु समापत्तिः

**ध्यानेऽन्त्ये**

अन्त्यध्यानं चतुर्थम्, तत्पर्यापन्नाऽसौ, नान्यभूमिका ।

किमर्थमेनां समापद्यन्ते ?

**निःसृतीच्छया ।**

निःसरणमेषां मन्यन्ते । अतो मोक्षकामतया समापद्यन्ते ।

आसंज्ञिकं विपाकत्वात् अव्याकृतमिति सिद्धम् ।

इयं तु

**शुभा**

---

च्युतोद्भवौ" ( अभि० को० ३.४२ ) इति च नियमात् । *पूर्वसमापत्तिसंस्कारपरिक्षयादिति* । पूर्वसमापत्तिसंस्कारलक्षणस्य विपाकहेतोः परिक्षयात् । ततः समाप्तफलत्वादित्यर्थः । पूर्वसमापत्तिसंस्कारावेधपरिक्षयादित्यपरे व्याचक्षते । *अपूर्वानुपचयाच्चेति* । चित्ताभावात् । कर्मानुपचयादित्यभिप्रायः । *क्षिप्ता इव क्षीणवेगा इषवः पृथिवीमिति* । उपपद्यन्त इति प्रकृतम् । पूर्वमयं पदिर्जन्यर्थः, इदानीमर्थवशाद् गत्यर्थः—सम्पद्यन्ते = गच्छन्तीत्यर्थः । पृथिवीं गच्छन्तीति वाक्यशेष इत्यपरे ॥ ४१ ॥

*असंज्ञिनां सत्त्वानां समापत्तिरसंज्ञा वा समापत्तिरित्यसंज्ञिसमापत्तिः* । 'अव्याकृतमेव ह्यासंज्ञिकम् । कुशलैव चेयं समापत्तिः' इति वक्ष्यते ।

---

१–१. वेत्यसंज्ञिसमा०–का० ।

कुशलैवासंज्ञिसमापत्तिः । तस्या असंज्ञिसत्त्वेषु पञ्चस्कन्धको विपाकः ।

कुशला सती

**उपपद्यवेद्यैव**

उपपद्यवेदनीयैव । न दृष्टधर्मपर्यायवेदनीया, नापि अनियता ।

योऽप्येनामुत्पाद्य परिहीयते, सोऽपि किलावश्यं पुनरुत्पाद्यासंज्ञिसत्त्वेषूपपद्यत इति । तत[1] एव तल्लाभी नियामं नावक्रामति ।

सेयं पृथग्जनस्यैवेष्यते,

**नार्यस्य**

न ह्यार्या असंज्ञिसमापत्तिं समापद्यन्ते, विनिपातस्थानमिवैनां[2] पश्यन्ति[2] । निःसरणसंज्ञिनो हि तां समापद्यन्ते ।

अथ किमेनामार्याश्चतुर्थध्यानलाभादतीतानागतां प्रतिलभन्ते ध्यानवत् ? अन्येऽपि तावन्न प्रतिलभन्ते । किं कारणम् ? एषा ह्युचितापि सती महाभिसंस्कारसाध्यत्वाद्, अचित्तकत्वाच्च ।

---

*पञ्चस्कन्धको विपाक* इति । च्युत्युत्पत्तिकाले चित्तचैत्तानां विपाकत्वसद्भावात् । *तत एव तल्लाभीति* । यत एव परिहीणोऽपि पुनरुत्पाद्यासंज्ञिसत्त्वेषूपपद्यते तत एव तल्लाभी *नियामं* नावक्रामति । नियामावक्रान्त्यैव ह्यार्योऽपायगत्यासंज्ञिकमहाब्रह्मकौरवोपपत्त्यष्टमभवादीनामप्रतिसंख्यानिरोधं प्रतिलभते । *विनिपातस्थानमिवैनां पश्यन्तीति* । अपायस्थानमिवैनां पश्यन्तीत्यर्थः । गिरितटादिविनिपातस्थानमिवेत्यपरे । *निःसरणसंज्ञिनो हि तां समापद्यन्ते* । पृथग्जना मोक्षसंज्ञिन इत्यर्थः । न चैवमार्या विपरीतसंज्ञिनः प्रतिलभन्ते ।

*ध्यानवदिति* । चतुर्थध्यानलाभादतीतानागतमनादिमति संसारे लब्धपूर्वं चतुर्थध्यानं प्रतिलभन्ते योगिनः । तस्मात् किं तद्वदेवातीतानागता तां प्रतिलभन्त इति पृच्छति । *अन्येऽपि तावन्न प्रतिलभन्त* इति । पृथग्जना अपि तावन्नातीतानागतां प्रतिलभन्ते येषां तावदियमात्मीया समापत्तिः, किं पुनरार्या येषामियमनात्मीयेति ! *उचितापि सती.* इति । अनादिमति संसारे लब्धपूर्वापि महाभिसंस्कारसाध्यत्वान्महायत्नाभिनिष्पाद्यत्वादित्यर्थः । *अचित्तकत्वाच्च* ।

---

१. अतः—का० ।

२–२. मिवैतां पश्यन्तः—का० ।

**एकाध्विकाप्यते ॥ ४२ ॥**

एककालिकेत्यर्थः । वर्त्तमानकालिकैव लभ्यते । यथा प्रातिमोक्षसंवरः । लब्धया तु द्वितीयादिषु क्षणेष्वतीतयाऽपि समन्वागतो भवति यावन्न त्यजति । अचैत्तकत्वान्नानागता भाव्यते ॥ ४२ ॥

निरोधसमापत्तिरिदानीं कतमा ?

**निरोधाख्या तथैवेयं**

यथैवासंज्ञिसमापत्तिः । तथाशब्देन कः प्रकारो गृह्यते ? "निरोधश्चित्तचैत्तानाम्" इति । अयं त्वस्या विशेषः—इयं

**विहारार्थं**

शान्तविहारसंज्ञापूर्वकेण मनसिकारेण एनां समापद्यन्ते । तां तु निःसरणसंज्ञापूर्वकेण । सा खल्वपि चतुर्थध्यानभूमिका । इयं तु

**भवाग्रजा ।**

नैवसंज्ञानासंज्ञायतनभूमिकैव । सा चेयम्—

---

"*एकाध्विकाप्यते*" । समानाध्विका लभ्यत इत्यर्थः । *यथा प्रातिमोक्षसंवर* इति । प्रातिमोक्षसंवरोऽष्टविधोऽपि यदा समादीयते तदा स प्राप्यते । प्राप्तिश्च तस्य तस्मिन्नेव क्षण उत्पद्यते । *लब्धया तु* तया समापत्त्या *द्वितीयादिषु क्षणेषु* प्रातिमोक्षसंवरवदेव *समन्वागतो भवति यावन्न त्यजति* तां समापत्तिम् । तत्त्यागस्तु परिहाण्या:, भूमिसञ्चाराद्वा । *अचेत्तिकत्वान्नानागता भाव्यते ।* कुशलं हि चित्तमानगतं भाव्यते । न त्वियमचित्तकेति न तद्वदनागता भाव्यते ॥ ४२ ॥

"*निरोधाख्या तथैव*" इति । समापत्तिरिति वर्त्तते । एवशब्दोऽवधारणे । यथाऽसंज्ञिसमापत्तिनिर्देशे तथाशब्देन 'निरोधश्चित्तचैत्तानाम्' इत्यतिदिश्यते, तथैवेहापि निरोधसमापत्तिनिर्देशे स एवम्प्रकारोऽतिदिश्यत इति ।

*शान्तविहारसंज्ञापूर्वकेण मनसिकारेणे*ति । विहारः = क्रीडा, विहार इव विहारः, समाधिविशेषः । शान्तो विहारः शान्तविहारः, शान्तविहारे संज्ञा शान्तविहारसंज्ञा, सा पूर्वा अस्येति शान्तविहारसंज्ञापूर्वकः । मनसिकारो मनस्कार इति योऽर्थः, अलुक्समासात् स मनसिकार इति भवति । संज्ञावेदितसमुचारपरिश्रान्ता हि तत्र शान्तविहारसंज्ञिनस्तथाविधेन मनसिकारेणैनां निरोधसमापत्तिं *समापद्यन्ते । तां* त्वसंज्ञिसमापत्तिं *निःसरणसंज्ञापूर्वकेण ।* मोक्षसंज्ञापूर्वकेणेत्यर्थः ।

**शुभा**

कुशलैव, न क्लिष्टा नाव्याकृता । कुशला सती

**द्विवेद्याऽनियता च**

द्वयोः कालयोर्वेद्या उपपद्यवेदनीया च, अपरपर्यायवेदनीया च । अनियता च विपाकं प्रति कदाचिन्न विपच्यते । यदीह परिनिर्वायात्, तस्या हि भवाग्रे चतुःस्कन्धको विपाकः ।

**सा चेयमेकान्तेन**

**आर्यस्य**

न हि पृथग्जना निरोधसमापत्तिमुत्पादयितुं शक्नुवन्ति; उच्छेदभीरुत्वाद्, आर्यमार्गबलेन चोत्पादनाद्, दृष्टधर्मनिर्वाणस्य तदधिमुक्तितः ।

---

*अपरपर्यायवेदनीया* चेति । अपरः पर्यायस्तृतीयादिजन्म, तत्र वेदनीया। कथम् ? यः आर्यः कामधातौ निरोधसमापत्तिमुत्पाद्य भवाग्र उत्पद्येत, तस्य सा परिपूरिका उपपद्यवेदनीया । यस्तु ततः [illegible] कालान्तरेण च पुनरपि भवाग्रं लब्ध्वा निरोधसमापत्तिमुत्पाद्यानुत्पाद्य वा भवाग्र उपपद्यते, तस्य सापरपर्यायवेदनीया भवति । यस्त्विह परिनिर्वायात्, तस्यानियतेति ।

*उच्छेदभीरुत्वादि*ति । सर्वात्मभावोच्छेदभीरुत्वात् ।

"व्यथन्ते ह्यपुनर्भवात् प्रपातादिव बालिशाः" ।

असंज्ञिसमापत्तौ कस्मादुच्छेदभयं न भवति ? तत्र रूपसद्भावात् । रूपे ह्यात्मसंज्ञामभिनिवेश्य ता समापद्यन्ते । निरोधसमापत्तौ त्वारूप्यभूमिकत्वाद् रूपमपि नास्तीति सर्वात्मभावाभावं पश्यन्तो न ता समापत्तिमुत्पादयन्ते । ननु चारूप्येषु निकायसभागजीवितेन्द्रियादयश्चित्तविप्रयुक्ताः सन्ति, कस्मात् तत्रात्मसंज्ञामभिनिवेश्य तां न समापद्यन्ते ? विप्रयुक्तानामदृश्यत्वात्, *आर्यमार्गबलेन चोत्पादनात्* । कथं पुनर्गम्यत आर्यमार्गबलेन तदुत्पादनम् ? इत्यत आह—*दृष्टधर्मनिर्वाणस्य तदधिमुक्तित* इति । दृष्टे जन्मनि निर्वाणं दृष्टधर्मनिर्वाणम्, तस्य । तदधिमुक्तितः—तदित्यधिमुक्तिस्तदधिमुक्तिः, तेन वाधिमुक्तिस्तदधिमुक्तिः, तदधिमुक्तेस्तदधिमुक्तितः । दृष्टे जन्मन्येतन्निर्वा[illegible]मुच्यते ।

केचित् पुनरेवं पठन्ति—*दृष्टनिर्वाणस्य तदधिमुक्तितः* । एवं तु व्याचक्षते—दृष्टं निर्वाणमनेनेति दृष्टनिर्वाणस्तस्यार्यस्य तस्यामधिमुक्तिस्तदधिमुक्तिः, तदधिमुक्तेस्तदधिमुक्तितः । एतदुक्तं भवति—दृष्टनिर्वाणस्य आर्यस्तामधिमुच्यते, नान्य इति । ननु च पृथग्जनोऽपि लौकिकेन मार्गेण दृष्टनिर्वाणः ? न पृथग्जनो

आर्यस्यापि चेयं न वैराग्यलभ्या । किं तर्हि ?

**आप्या प्रयोगतः ॥ ४३ ॥**

प्रयोगलभ्यैवेयम् । न चातीता लभ्यते, नाप्यनागता भाव्यते; चित्तबलेन तद्भावनात् ॥ ४३ ॥

किं भगवतोऽपि प्रायोगिकी ? नेत्याह ।

**बोधिलभ्या मुनेः**

क्षयज्ञानसमकालं[1] बुद्धा भगवन्त एतां[2] प्रतिलभन्ते[2] । नास्ति किञ्चिद् बुद्धानां प्रायोगिकं नाम । इच्छामात्रप्रतिबद्धो हि तेषां सर्वगुणसम्पत्सम्मुखीभावः । तस्मादेषां सर्ववैराग्यलाभिकम् ।

कथं खल्विदानीमनुत्पादितायां निरोधसमापत्तौ क्षयज्ञानकाले भगवानुभयतोभागविमुक्तः सिध्यति? सिध्यति; उत्पादितायामिव तस्यां वशित्वलाभात्[3] प्रागेव तां

---

दृष्टनिर्वाणः, प्राप्तिनिर्वाणस्तु भवेत्, तदुत्तरां हि भूमिं पृथग्जनः शान्ततः पश्यन् वैराग्यं लभते न निर्वाणमित्यचोद्यमेतत् ।

*प्रयोगलभ्यैवेयमि*ति । इयमपि समापत्तिरसंज्ञिसमापत्तिवदेव *महाभि*-संस्कारसाध्येति तथैव *एकाध्विकाऽऽप्यते* । कथम् ? इत्याह—*न चातीता लभ्यत* इति । यदा परिहीणः पुनस्तामुत्पादयति, तदा प्रयोगेणापूर्वेव लभ्यते, प्राति मोक्षसंवरवदिति विस्तरेण व्याख्येया । *चित्तबलेन तद्भावना*दिति । चित्तबलेनानागतभावनादित्यर्थः ॥ ४३ ॥

"*बोधिलभ्या मुनेः*" । 'प्रयोगलभ्यैवेयम्' इत्युत्सर्गस्यायमपवादः । श्रावकप्रत्येकबुद्धानां स विधिरिति कृत्वा, क्षयानुत्पादज्ञाने बोधिरिति वक्ष्यति ( अभि० को० ६.७० ) । तेनाह—*क्षयज्ञानसमकाल*मिति । विस्तरः—सास्रवाश्च क्षयज्ञान इति । *बुद्धा भगवन्त एतां प्रतिलभन्ते । नास्ति बुद्धानां किञ्चित् प्रायोगिकं नामे*ति । यथोक्तं स्तोत्रकारेण—

'न ते प्रायोगिकं किञ्चित् कुशलं कुशलान्तग !
इच्छामात्रवबद्धा ते यत्र कामावसायिता ॥ इति ।

*कथं पुनर्भगवानुभयतोभागविमुक्त* इति । क्लेशावरणं समापत्त्यावरणं चोभयतो भागः, ततो विमुक्तः । *सिध्यत्युत्पादितायामिवे*ति । सिध्यत्युभयतो भाग-

---

१ ०समानकालं—का० । २–२. एनां लभन्ते—का० ।
३. वशित्वात्—का० ।

**बोधिसत्त्वः** शैक्षावस्थायामुत्पादयतीति **पाश्चात्त्याः** ।

अथ कस्मादेवं नेष्यते, एवं च **स्थविरोपगुप्तस्यापीदं नेत्रीपदं** प्रामाणिकं भविष्यति—"निरोधसमापत्तिमुत्पाद्य क्षयज्ञानमुत्पादयतीति वक्तव्यं तथागत" इति ?

**न प्राक्**

न हि पूर्वं तस्या उत्पादनं युज्यत इति **काश्मीरकाः** । किं कारणम् ?

**चतुस्त्रिंशत्क्षणाप्तितः ।**

चतुस्त्रिंशता किल चित्तक्षणैर्बोधिसत्त्वो बोधिमनुप्राप्तः । सत्याभिसमये षोडशभिः,भवाग्रवैराग्ये चाष्टादशभिर्नवप्रकाराणां क्लेशानां प्रहाणाय; नवानन्तर्यविमुक्तिमार्गोत्पादनात् । त एते **चतुस्त्रिंशत्** भवन्ति । आकिञ्चन्यायतनवीतरागस्यास्य नियामावक्रमणादधोभूमिका न पुनः प्रहेया भवन्ति । अत **एतस्मिन्नन्तरे** विसभागचित्ता सम्भवान्निरोधसमापत्तेरयोग इति ।

---

विमुक्तो भगवान् सम्मुखीकृतपूर्वायामिव । *तस्यां वशित्वलाभात्* । तत्सम्मुखीकारणसामर्थ्ययोगतः । *प्रागेव तामिति* । विस्तरः—धर्मतैषा यद् बोधिसत्त्वश्चरमभविको भवाग्रलाभी भूत्वा चतुर्थध्यानसन्निश्रयेण दर्शनमार्गमुत्पाद्य ततश्च व्युत्थाय भवाग्रं समापद्यते, ततो निरोधसमापत्तिं समापद्यते, ततो व्युत्थाय पुनश्चतुर्थध्यानसन्निश्रयेण भावाग्रिकभावनाप्रहातव्यक्लेशप्रहाणं कृत्वा क्षयज्ञानकालात् प्रभृत्यनुत्तरसम्यक्सम्बुद्धो भवतीत्येवं *शैक्षावस्थायां* स *तामुत्पादयतीति* पाश्चात्त्याः । काश्मीरमण्डलात् पश्चाद्भवाः पाश्चात्त्याः ।

नेत्रीपदमिति शास्त्रनाम *स्थविरोपगुप्तस्य* । *यत्रेदं* वाक्यम्—*निरोधसमापत्तिमुत्पाद्य क्षयज्ञानमुत्पादयतीति वक्तव्यं तथागत* इति ।

*सत्याभिसमये षोडशभिरिति* । दुःखे धर्मज्ञानक्षान्तिमारभ्य यावन्मार्गेऽन्वयज्ञानमिति षोडशभिश्चित्तक्षणैः । *भवाग्रवैराग्ये चाष्टादशभिरिति* । *नवप्रकाराणां क्लेशानां* भावाग्रिकाणां भावनाहेयानां *प्रहाणाय नवानन्तर्य*मार्गा नव च *विमुक्ति*मार्गा इत्यष्टादशभिः । *त एते चतुस्त्रिंशद् भवन्ति* । षोडश चाष्टादश चेति । *अधोभूमिका न पुनः प्रहेया भवन्तीति* । कामावचरादीनां क्लेशानां लौकिकेण मार्गेण पृथग्जनत्वावस्थायामेव प्रहीणत्वात् । यद्येष नियमः—प्रहीणक्लेशप्रतिपक्षोत्पादनं न कर्त्तव्यमिति, अथ किमर्थं प्रहीणेषु कामावचरेषु क्लेशेषु तत्प्रतिपक्षं धर्मज्ञानपक्षं मार्गमभिसमयकाल उत्पादयति ? तन्नान्तरीयकत्वादन्वय-

किं पुनः स्याद्—यदि विसभागचित्तमन्तरा सम्मुखीकुर्यात्? **व्युत्थानाशयः स्याद्**, अव्युत्थानाशयाश्च बोधिसत्त्वाः ? सत्यमव्युत्थानाशयाः; न तु आस्रवमार्गाव्युत्थानात् ।

कथं तर्हि—"न तावत् भेत्स्यामि पर्यङ्कमप्राप्ते आस्रवक्षये" ( ) इति ? अस्याशयस्याव्युत्थानादेकायन एव सर्वार्थपरिसमाप्तेरिति **बहिर्देशकाः** । पूर्वमेव तु वर्णयन्ति **काश्मीराः** ।

यद्यप्यनयोर्बहुप्रकारो[1] विशेषः ।

**कामरूपाश्रये तूभे**[2]

**उभे** अपि त्वेते असंज्ञिनिरोधसमापत्ती कामधातौ रूपधातौ चोत्पत्स्येते ।

ये त्वसंज्ञिसमापत्तिं रूपधातौ नेच्छन्ति, तेषामयं **ग्रन्थो** विरुध्यते—"स्याद्रूपभवो न चासौ भवः पञ्चव्यवचारः । स्याद्रूपावचराणां संज्ञिनां[3] देवानां

ज्ञानपक्षस्य मार्गस्य । न ह्यसत्यां धर्मज्ञानपक्षोत्पत्तावन्वयज्ञानपक्षसम्मुखीभावः सम्भवति । एतद्ध्यन्वयज्ञानस्यान्वयज्ञानत्वं यदतः पश्चाद् भवतीति ।

*पाश्चात्त्या* आहुः—*किं पुनः स्यादि*ति । विस्तरः—को दोषः स्याद् *यदि विसभागं* सास्रवं *चित्तमन्तरा सम्मुखीकुर्यात्* । *वैभाषिका* आहुः—*व्युत्थानाशयः स्याद्*ति । विस्तरः—व्युत्थानाभिप्रायो बोधिसत्त्वः स्यात् । व्युत्थानकुशलः स्यादित्यपरे । कुशलमूलार्थो ह्याशयार्थः । तदेतदुक्तं भवति—ईदृशानि कुशलमूलानि बोधिसत्त्वानां यैः सम्मुखीभूतैस्तावन्न व्युत्तिष्ठन्ते यावदेकासन एवानुत्तरा सम्यक्सम्बोधिः प्राप्नोति । *बहिर्देशका* आहुः—*सत्यमव्युत्थानाशयाः*, न तु यथा भवन्तो वर्णयन्ति इति । *पूर्वमेव तु वर्णयन्ति* । क्षयज्ञानसमकालमिति यः पक्षः ।

*यद्यप्यनयोर्बहुप्रकारो विशेष* इति । एका "**ध्यानेऽन्त्ये**" (**अभि० को०** २.४२)। अपरा "भवाग्रजा" ( अभि० को० २.४३ ), एकां **निःसरणसंज्ञया** समापद्यते, अपरां विहारकामतया—इत्येवमादि बहुप्रकारो **विशेषः** ।

साम्यं त्वनयोः *"कामरूपाश्रये तूभे"* इति । *स्याद्रूपभवः* इति विस्तरः । यः क्वचिद् रूपभवः सर्वोऽसौ भवः । *पञ्चव्यवचार* इति । चतुःकोटिकः । *स्याद् रूपभवो न चासौ भवः पञ्चव्यवचारः । रूपावचराणां संज्ञिनां देवानां*

१. ०नयोः समापत्त्योर्बहु०—का० । २. भूते—का० ।

३. सत्त्वानां संज्ञिनां—का० ।

**विसभागे चित्ते** स्थितानामसंज्ञिसमापत्तिं निरोधसमापत्तिं च समापन्नानामसंज्ञिनां च देवानामासंज्ञिके प्रतिलब्धे यो भवः" इति। अत **उभे** अप्येते **कामरूपाश्रये**।

तत्रापि त्वयं विशेषः—

**निरोधाख्यादितो नृषु ॥ ४४ ॥**

निरोधसमापत्तिः प्रथमतो मनुष्येषूत्पाद्यते, पश्चाद् रूपधातौ परिहीणपूर्वैः।

किमप्यस्ति[1] परिहाणिः ? अस्तीत्याह । अन्यथा हि **उदायिसूत्रं** विरुध्येत—"इहायुष्मन्तो भिक्षुः शीलसम्पन्नश्च भवति, समाधिसम्पन्नश्च प्रज्ञा-

---

*विसभागे चित्ते स्थितानामसंज्ञिसमापत्तिं निरोधसमापत्तिं च समापन्नानामसंज्ञिनां च देवानामासंज्ञिके प्रतिलब्धे यो भवः।* स्याद् भवः पञ्चव्यवचारो न चासौ रूपभवः। कामावचराणां सत्त्वानां सभागे चित्ते स्थितानां यो भवः। स्याद् रूपभवः स च भवः पञ्चव्यवचारः। रूपावचराणां संज्ञिनां देवानां सभागे चित्ते स्थितानां असंज्ञिनां च देवानामासंज्ञिकेऽप्रतिलब्धे यो भवः। स्यान्नैव रूपभवो न चासौ भवः पञ्चव्यवचारः। कामावचराणां सत्त्वानां विसभागे चित्ते स्थितानामसंज्ञिसमापत्तिं निरोधसमापत्तिं च समापन्नानां यो भवः। आरूप्यभवश्च। तत्र प्रथमा कोटिरुदाहरणम्। रूपभवो रूपावचरं स्कन्धपञ्चकम्। पञ्चव्यवचारः पञ्चस्कन्ध इत्यर्थः। व्यवचार इति *काश्यपस्य* तथागतस्य स्कन्धसंज्ञा। विशेषेणावचारो व्यवचारः, अन्यथीभावेन विसंवादनमित्यर्थः। सोऽस्यास्तीति व्यवचारः। "अर्श आदिभ्योऽच्" ( पा० सू० ५.२.१२७ ) इत्यकारो मत्वर्थीयः। विसंवादनमित्यर्थः। "फेनपिण्डोपमं रूपं वेदना बुद्बुदोपमा" (           ) इत्यादिना विसंवादनात्। तत्र यदि रूपधातावसंज्ञिसमापत्तिर्नेष्यते, 'असंज्ञिसमापत्तिं निरोधसमापत्तिं समापन्नानाम्' इति नोच्येत। नेन रूपावचर्यसंज्ञिसमापत्तिरिति गम्यते।

*तत्रापि त्वयं विशेष* इति। तत्र साधर्म्येऽपि विशेषो भवति। *पश्चाद्रूपधाता*विति। य आर्या निरोधसमापत्तिमुत्पाद्य ततः परिहीणा ध्यानं च लब्ध्वा रूपधातावुपपद्यन्ते, तैः *परिहीणपूर्वैः* पूर्वाभ्यासवशाद् रूपधातौ निरोधसमापत्तिरुत्पाद्येत, असंज्ञिसमापत्तिस्तु कामरूपधातौ प्रथमतोऽपि पृथग्जनैरुत्पाद्यत इत्ययं विशेषः।

*किमप्यस्ति परिहाणि*रिति। निर्वाणसदृशीयं समापत्तिः, कथमतः परिहाणिरित्यसम्भावयन् पृच्छति। *उदायिसूत्र*मिति। आर्य*शारिपुत्र*भाषितमेतद् सूत्रम्।

---

१. किमतोऽप्यस्ति—का०।

सम्पन्नश्च। सोऽभीक्ष्णं संज्ञावेदितनिरोधं[1] समापद्यते च व्युत्तिष्ठते च, अस्ति चैतत्

---

उदायी तु तत्र विबन्धक इति उदायिसूत्रम्' इत्युच्यते। कथमिति ? "श्रावस्त्यां निदानम्। तत्रायुष्मान् शारिपुत्रो भिक्षूनामन्त्रयते स्म—'इहायुष्मन्तो भिक्षुः शीलसम्पन्नश्च भवति समाधिसम्पन्नश्च प्रज्ञासम्पन्नश्च। सोऽभीक्ष्णं संज्ञावेदितनिरोधं समापद्यते च, व्युत्तिष्ठते च। अस्ति चैतत् स्थानमिति यथाभूतं प्रजानाति। स न हैव दृष्ट एव धर्मे प्रतिपद्येवाज्ञामारागयति। नापि मरणकालसमये। भेदाच्च कायस्यातिक्रम्य देवान् कवडीकारभक्षानन्यतमस्मिन् दिव्ये मनोमये काय उपपद्यते, स तत्रोपपन्नोऽभीक्ष्णं संज्ञावेदितनिरोधं समापद्यते च व्युत्तिष्ठते च। अस्ति चैतत् स्थानमिति यथाभूतं प्रजानाति'। तेन खलु पुनः समयेनायुष्मानुदायी तस्यामेव पर्षदि सन्निपण्णोऽभूत् सन्निपतितः। अथायुष्मानुदाय्यायुष्मन्तं शारिपुत्रमिदवोचत्—'अस्थानमेतदायुष्मञ्छारिपुत्रानवकाशो यद्भिक्षुरन्यतमस्मिन् दिव्ये मनोमये काय उपपन्नोऽभीक्ष्णं संज्ञावेदितनिरोधं समापद्यते च व्युत्तिष्ठते च, अस्ति चैतत् स्थानमिति यथाभूतं प्रजानाति'। द्विरपि त्रिरप्यायुष्मानुदाय्यायुष्मन्तं शारिपुत्रमिदवोचत्—'अस्थानमेतदायुष्मन्' इति पूर्ववत्। अथायुष्मतः शारिपुत्रस्यैतदभवद्—'यावत् त्रिरपि मेऽयं भिक्षुर्भाषितं प्रतिवहति प्रतिक्रोशति, न च मे कश्चित् सब्रह्मचारी भाषितमभ्यनुमोदते, न्वहं येन भगवांस्तेनोपसंक्रामेयम्'। अथायुष्मान् शारिपुत्रो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्ते निषण्णश्चायुष्माञ्छारिपुत्रो भिक्षूनामन्त्रयते स्म—'इहायुष्मन्तो भिक्षुः शीलसम्पन्नश्च भवति' पूर्ववत्। तेन खलु समयेनायुष्मानुदायी पूर्ववत्। एवं द्विरपि त्रिरप्यायुष्मानुदाय्यायुष्मन्तं शारिपुत्रमिदमवोचत्, पूर्ववत्। अथायुष्मतः शारिपुत्रस्यैतदभवत्—'शास्तुरपि मे पुरस्तादयं भिक्षुर्यावत् त्रिरपि भाषितं प्रतिवहति प्रतिक्रोशति। न च मे कश्चित् सब्रह्मचारी भाषितमभ्यनुमोदते, यन्न्वहं तूष्णीं स्याम्'। अथायुष्मान् शारिपुत्रस्तुष्णीमभूत्। तत्र भगवानायुष्मन्तमुदायिनमामन्त्रयते स्म—'कं पुनस्त्वमुदायिन्नन्यतमं दिव्यं मनोमयं कायं सञ्जानीषे' ? 'ननु यावदेवारूपिणं संज्ञामयमेवं भदन्त'। त्वं तावन्मोहपुरुषान्ध एव सन्नचक्षुश्चक्षुष्मता शारिपुत्रेण भिक्षुणा सार्धमभिधर्मेऽभिविनये सँल्लपितव्यं मन्यसे' इति। तत्र भगवानायुष्मन्तमुदायिनं सम्मुखमवसाद्यायुष्मन्तमानन्दमामन्त्रयते स्म—'त्वमप्यानन्द स्थविरं भिक्षुं विहेठ्यमानमध्युपेक्षसे, कारुण्यमपि ते मोहपुरुष नोत्पन्नं स्थविरे भिक्षौ विहेठ्यमाने'

---

१. ०वेदयित०—का०।

स्थानमिति यथाभूतं प्रजानाति। स न हैव दृष्ट एव धर्मे प्रतिपद्येवाज्ञामारागयति[1]। नापि मरणकालसमये भेदाच्च। कायस्यातिक्रम्य देवान् [2]कवडीकारभक्षानन्यतरस्मिन् दिव्ये मनोमये काय उपपद्यते। स तत्रोपपन्नोऽभीक्ष्णं संज्ञावेदितनिरोधं समापद्यते च व्युत्तिष्ठते च, अस्ति चैतत् स्थानमिति यथाभूतं प्रजानाति" (　　　　) इति। अत्र हि दिव्यो मनोमयः कायो रूपावचर उक्तो भगवता।

इयं च समापत्तिर्भावाग्रिकी। तत् कथमपरिहीणस्य तल्लाभिनो रूपधातो स्यादुपपत्तिः? चतुर्थध्यानभूमिकामपि निरोधसमापत्तिं निकायान्तरीया इच्छन्ति। तेषां विनापि परिहाण्या सिध्यत्येतत्। एतदेव तु न सिध्यति—चतुर्थध्यानभूमिकाप्यसावस्तीति। किं कारणम्? "नवानुपूर्वसमापत्तयः" इति सूत्रे वचनात्।

---

इति। तत्र भगवानायुष्मन्तमुदायिनमायुष्मन्तं चानन्दं सम्मुखमवसाद्य भिक्षूनामन्त्रयते स्म—'इह भिक्षवो भिक्षुः शीलसम्पन्नश्च भवति समाधिसंम्पन्नश्च, विस्तरेण यावदस्ति चैतत् स्थानमिति यथाभूतं प्रजानाति' इति। उक्त्वा भगवानुत्थायासनाद् विहारं प्राविक्षत् प्रतिसंलयनाय" इति।

अत्रायुष्मानुदायी 'आरूप्यावचरोऽयं मनोमयः काय उक्तः' इति मनसि कृत्वा प्रतिबन्धमकार्षीत्। तत्र हि रूपं नास्ति, मन एव तु ससम्प्रयोगमस्ति, तस्मान्मनोमयः कायः। तत्र चेयं समापत्तिर्न समापद्यत इति तस्याभिप्रायः। आर्यशारिपुत्रस्य तु रूपावचरो दिव्यो मनोमयः कायोऽभिप्रेतः; शुक्रशोणितमनुप्राप्य प्रादुर्भावात्। अत एव चासावायुष्मानुदायी भगवता पृष्टः—'किं पुनस्त्वमुदायिन्नन्यतमं दिव्यं मनोमयं कायं संजानीषे, ननु यावदेवारूपिणं संज्ञामयम्' इति। तेनापि 'एवं भदन्त' इति प्रतिपन्नम्। भगवानपि रूपावचरमेव दिव्यं मनोमयं कायमभिप्रेत्यार्यशारिपुत्रस्य मतं समर्थयन् तमायुष्मन्तमुदायिनमवसादयति स्म—'त्वं तावन्मोहपुरुषान्ध एव सन्नचक्षुश्चक्षुष्मता शारिपुत्रेण भिक्षुणा सार्धमभिधर्मेऽभिविनये सँल्लपितव्यं मन्यसे' इति।

*अस्ति चैतत् स्थानमिति।* यदेतन्निरोधसमापत्तेः समापदनं व्युत्थानं चेति, एतत् स्थानम् *यथाभूतं प्रजानाति। प्रतिपद्येवेति।* पूर्वमेवेत्यर्थः। *आज्ञामारागयतीत्य*र्हत्त्वं प्राप्नोतित्यर्थः।

*इयञ्च समापत्तिर्भावाग्रिकीति।* विस्तरः—निरोधसमापत्तिर्भावाग्रिकी। यश्च तल्लाभी तस्य भवाग्र एवोपपत्तिः स्यात्, न रूपधातौ। उक्तं च सूत्रे—

---

१. प्रतिपत्स्ये०—का०।　　　२. कवडीकाराहार०—का०।

यद्येष नियमः, कथं व्युत्क्रान्तसमापत्तयो भवन्ति ? प्राथमकल्पिकं प्रत्येष नियमः । प्राप्तप्रकामवशित्वात् तु सन्तो विलङ्घ्यापि समापद्यन्ते ।

एवमनयोः समापत्त्योर्भूमितोऽपि विशेषः; चतुर्थध्यानतयाऽग्रभूमिकत्वात् ।

प्रयोगतोऽपि, निःसरणविहारसंज्ञापूर्वकमनसिकारप्रयोगात् ।

सन्तानतोऽपि, पृथग्जनार्यसन्तानत्वात् ।

फलतोऽपि, आसंज्ञिकभवाग्रफलत्वात् ।

वेदनीयतोऽपि, नियतोभयथावेदनीयत्वात्[1] ।

प्रथमोत्पादनतोऽपि, द्विधातुमनुष्योत्पादनात् ।

---

"स तत्र रूपधातावुपपन्नोऽभीक्ष्णं संज्ञावेदितनिरोधं समापद्यते च व्युत्तिष्ठते च" (                    ) इति। तस्मादस्त्यतः परिहाणिरिति गम्यते। युज्यत एवैतद् *वैभाषिकाणाम्*। *सौत्रान्तिकानान्तु* कथमेतत्। आर्य एव हि निरोधसमापत्तिलाभी, न चार्यमार्गादस्ति परिहाणिरिति सौत्रान्तिकसिद्धान्तः। तस्यार्यस्य कथमुपरिभूमिकादार्यमार्गात् परिहाणिरितीष्यते ? तेषामप्येतत् सूत्रं न विरुध्यते। कथम् ? यो हि कश्चित् भवाग्रलाभी नियामवक्रामति सोऽनागामी सन्निरोधसमापत्तिमुत्पादयेत्, स भवाग्रात् निरोधसमापत्तेश्च परिहीयेत, न तु मार्गात्; ऊर्ध्वभूमिकस्यार्यमार्गस्य कदाचिदनुत्पादितत्वात्। स परिहीणो भूत्वा ध्यानमुत्पाद्य रूपधातावुपपद्येत। तस्मादस्त्यतः परिहाणिः, न चार्यमार्गात् परिहाणिरिति न स्वसिद्धान्तविरोधः। *नवानुपूर्वसमापत्तय* इति। चत्वारि ध्यानानि चत्वार आरूप्या निरोधसमापत्तिश्च। *प्राथमकल्पिकं प्रतीति*। आदितः समापत्तिविधायकं प्रतीत्यर्थः।

*नियतोभयथावेदनीयत्वादिति* । नियतवेदनीयासंज्ञिसमापत्तिरुपपद्यवेदनीयत्वात्। उभयथा वेदनीया निरोधसमापत्तिर्नियता नियतवेदनीयेत्यर्थः। नियतवेदनीया अनागामिनः; अनियतवेदनीया अर्हतः, इहैव परिनिर्वाणात्।

*प्रथमोत्पादनतोऽपीति*। असंज्ञिसमापत्तिं कश्चित् प्रथमं मनुष्येषूत्पादयति, कश्चित् रूपधातौ; निरोधसमापत्तिं तु मनुष्येष्वेवोत्पादयति, परिहीणस्तु रूपधातौ। अथ कस्मान्मनुष्येष्वेवैनामुत्पादयति ? संज्ञावेदनाद्वारेण वितर्कविचारादिचैत्तप्रचारपरिखिन्नोऽनागामी तां तेन विहारेण सुखं विहरेयमिति निरोधसमापत्तिमुत्पादयति। रूपधातूपपन्नस्त्वनागामी रूपधातोः शान्तत्वान्न तथा तत्रत्यचैतसिकप्रवृत्त्या पीड्यत इति न प्रथमतस्तत्रोत्पादयति, परिहीणस्तु

---

१. नियतानियतोपपद्योभयथा०—का० ।

कस्मात् पुनरेते चित्तचैत्तनिरोधस्वभावे सत्यावसंज्ञिसमापत्तिः, संज्ञावेदित-निरोधसमापत्तिश्चोच्येते ? तत्प्रातिकूल्येन तत्समापत्तिप्रयोगात्, वेदनादिज्ञानेऽपि परचित्तज्ञानवचनवत् ।

कथमिदानीं बहुकालनिरुद्धाच्चित्तात्[1] पुनरपि चित्तं जायते ? अतीतस्याप्यस्तित्वाद् इष्यते वैभाषिकैः समनन्तरप्रत्ययत्वम् ।

---

पूर्वाभ्यासतस्तामुत्पादयति । आरूप्यधातूपपन्नोऽप्यत एव शान्तत्वान्नैवसंज्ञानासंज्ञायतनोपपन्नो नोत्पादयति । निरुपधिशेषनिर्वाणप्रसङ्गाद्वा, तत्र हि रूपं नास्ति । चित्तचैत्ता यदि निरुध्येरन् परिनिर्वाणमेवास्य स्यात् । चित्तविप्रयुक्तानां केवलानामवस्थानासामर्थ्यान्नियतवेदनीयस्य च कर्मणोऽपरिसमाप्तफलस्य विघ्नभावेनावस्थानान्न परिनिर्वाणसम्भवः । असंज्ञिसमापत्तिं तु मोक्षसंज्ञया निःसरणसंज्ञापूर्वकेण मनसिकारेण समापद्यत इति रूपधातावपि प्रथमत समापद्यते ।

*कस्मात् पुनरेते* इति । विस्तरः—सर्वचित्तचैत्तनिरोधस्वभावत्वात्, उभे अप्येते समापत्ती चित्तचैत्तनिरोधे इति वक्तव्ये इत्यभिप्रायः । *तत्प्रातिकूल्येन तत्समापत्तिप्रयोगा*दिति । संज्ञावेदनाप्रतिकूल्येन तयोः समापत्त्योः प्रयोगात् । संज्ञाप्रातिकूल्येनासंज्ञिसमापत्तिप्रयोगः संज्ञा रोगः संज्ञाशल्यः संज्ञागण्डः एतच्छान्तमेतत् प्रणीतमिति विस्तरः । संज्ञावेदितप्रातिकूल्येन निरोधसमापत्तिप्रयोगः । *परचित्तज्ञानवचनव*दिति । यथा परचित्तज्ञानवचनं न च परचित्तज्ञानेन चैत्ता न ज्ञायन्ते कदाचित्, अथ च 'परस्य चित्तं ज्ञास्यामि' इत्येवं प्रथमतः प्रयोगात् परचित्तज्ञानमित्युच्यते, न परचित्तचैत्तज्ञानमिति; तद्वदिहाप्यनयोः समापत्त्योस्तथा वचनम् ।

तत्राचित्तकान्येव निरोधासंज्ञिसमापत्त्यासंज्ञिकानीति *वैभाषिका*दयः, अपरिस्फुटमनोविज्ञानसचित्तकानीति स्थविर*वसुमित्रा*दयः, आलयविज्ञानसचित्तकानीति *योगाचाराः*—इति सिद्धान्तभेदः । तस्मादिदमुपन्यस्यते—*कथमिदानीं बहुकालनिरुद्धा*दिति । विस्तरः—बहुकालनिरुद्धग्रहणं समनन्तरनिरुद्धनिरासार्थम् । समनन्तरनिरुद्धादिदानीं कथं भवति ? यदि समनन्तरनिरुद्धमस्तीत्यभ्युपगतम्, बहुकालनिरुद्धमप्यस्तीति किं नाभ्युपगम्यत इति *वैभाषिकाः* । न समनन्तरनिरुद्धस्यास्तित्वं ब्रूमः, अपि तु वर्त्तमानं चित्तमात्मनोऽन्यचित्तहेतुभावं व्यवस्थाप्य निरुध्यते, अन्यच्चोत्पद्यते, तुलादण्डनामोन्नामवत् । तच्च निरुद्धमपरं च चित्तमुत्पन्नं भवतीत्यनन्तरनिरुद्धाच्चित्ताच्चित्तान्तरमुत्पद्यत इत्युच्यते । "वर्त्तमानसामीप्ये वर्त्तमानवद्" (पा० सू० ३.३.१३१) इति कृत्वा ।

---

१. बहुकालं निरु०—का० ।

**अपरे** पुनराहुः—कथं तावदारूप्योपपन्नानां चिरनिरुद्धेऽपि रूपे पुनरपि रूपं जायते ? चित्तादेव हि तज्जायते, न रूपात् । एवं चित्तमप्यस्मादेव सेन्द्रियात् कायात् जायते, न चित्तात् ।

अन्योन्यबीजकं ह्येतदुभयं यदुत चित्तं च सेन्द्रियश्च काय इति **पूर्वाचार्याः** ।

**भदन्तवसुमित्रस्त्वाह परिपृच्छायाम्**—"यस्याचित्तिका निरोधसमापत्तिस्तस्यैष दोषः, मम तु सचित्तिका समापत्तिः" इति ।

**भदन्तघोषक** आह—तदिदं नोपपद्यते; "सति हि विज्ञाने त्रयाणां सन्निपातः, स्पर्शप्रत्यया च वेदना संज्ञा चेतना" (          ) इत्युक्तं भगवता । अतः संज्ञावेदनयोरप्यत्र निरोधो न स्यात् ।

अथापि स्यात् ? यथा "वेदनाप्रत्यया तृष्णा" (          ) इत्युक्तम् । सत्यामपि तु वेदनायामर्हतो न तृष्णोत्पत्तिः, एवं सत्यपि स्पर्शे वेदनादयो न स्युरिति ? तस्याविशेषितत्वात् । "अविद्यासंस्पर्शजं हि वेदितं प्रतीत्योत्पन्ना तृष्णा" इत्युक्तम्, न तु वेदनोत्पत्तौ स्पर्शो विशेषित इत्यसमानमेतत् ।

तस्मादचित्तिका निरोधसमापत्तिरिति **वैभाषिकाः** ।

---

*अपरे पुनराहुरिति* । *सौत्रान्तिकाः* । *कथं तावदारूप्योपपन्नानामिति* । विस्तरः—तावच्छब्दः क्रमार्थः । इदमेव तावद् दृष्टान्तार्थं वक्तव्यमित्यर्थः । रूपस्य हि समनन्तरप्रत्ययो नेष्यते, तत् कथमुत्पद्यते ? *तस्माच्चित्तादेव तज्जायते न रूपादिति* ब्रूमः । *अन्योन्यबीजकं ह्येतदुभयमिति* । चित्तेऽपि सेन्द्रियस्य कायस्य बीजमस्ति, काये च सेन्द्रिये चित्तस्येति ।

*परिपृच्छायामिति* । 'परिपृच्छा' नाम शास्त्रम्, कृतिः स्थविर*वसुमित्र*स्य । स तस्यामाह । पञ्चवस्तुकादीन्यपि हि तस्य सन्ति शास्त्राणि, तस्माद् विशिनष्टि । *तस्यैव दोषः* इति । कतमः स दोषः ? कथमिदानीं बहुकालनिरुद्धाच्चित्तादिति य उक्तः । *त्रयाणां सन्निपात* इति । इन्द्रियविषयविज्ञानानाम् । *संज्ञावेदनयोरप्यत्र निरोधो न स्यादिति* । भदन्त*वसुमित्र*स्यैतन्मतम् । सचित्तकत्वेऽपि तस्या निरोधसमापत्तेः संज्ञावेदनयोस्तत्र निरोध इति । तस्माद् *भदन्तघोषक* एवं प्रसङ्गं करोति ।

*अविद्यासंस्पर्शजमिति* । अविद्यासहितः संस्पर्शोऽविद्यासंस्पर्शः, तस्माज्जातम् अविद्यासंस्पर्शजम् । *न तु वेदनोत्पत्ताविति* । न तु वेदनोत्पत्तौ स्पर्शो विशेषितः—ईदृशः स्पर्शो वेदनाप्रत्यय इति । स एव *भदन्तघोषक* उपसंहरति—*तस्मादचित्तिकेति* ।

कथमचित्तिकायाः समापत्तित्वम् ? महाभूतसमतापादनात् । समापत्ति-चित्तेन च तां समापद्यन्ते = समागच्छन्तीति समापत्तिः ।

किं पुनरेते समापत्ती द्रव्यतः स्तः ? उताहो प्रज्ञप्तितः ? द्रव्यत इत्याह । चित्तोत्पत्तिप्रतिबन्धनात् ? न; समापत्तिचित्तेनैव तत्प्रतिबन्धनात् ।

समापत्तिचित्तमेव हि तच्चित्तान्तरविरुद्धमुत्पद्यते, येन कालान्तरं चित्तस्याप्रवृत्तिमात्रं भवति; तद्विरुद्धाश्रयापादनात् । यासौ समापत्तिरिति प्रज्ञप्यते, तच्चाप्रवृत्तिमात्रं न पूर्वमासीत्, न पश्चाद् भवति व्युत्थितस्येति संस्कृतासौ समापत्तिः प्रज्ञप्यते ।

अथ वा—आश्रयस्यैव तथा समापादनं समापत्तिः ।

---

*कथमचित्तिकायाः समापत्तित्वमिति* । ध्यानादिसमापत्तित्वमर्हति । समाधिना हि चित्तचैत्ताः समा आपाद्यन्त एकाग्रीक्रियन्त इत्येवं मत्वा पृच्छति । *महाभूतसमतापादनादिति* । महाभूतानि समान्यापद्यन्तेऽनयेति समापत्तिः । एवमस्यां निरोधसमापत्तौ ध्यानादिषु च समापत्तित्वम् । का पुनरिह महाभूतानां समता ? चित्तोत्पत्तिप्रातिकूल्यसमवस्थानम् । *समागच्छन्तीति* । समापद्यन्ते । समागच्छन्ति *तामिति* समापत्तिः कर्मसाधनम् । ध्यानादीन्यपि समागच्छन्ति योगिनः । तस्माद् ध्यानादीनामपि समापत्तित्वं भवति ।

*द्रव्यत इति* । स्वलक्षणतः; चित्तोत्पत्तिप्रतिबन्धनात्, यस्माच्चित्तोत्पत्तिं प्रतिबध्नीतः । न, *समापत्तिचित्तेनैवेति* । नैतदेवम्; कस्मात् ? समापत्तिचित्तेनैव *तत्प्रतिबन्धनात्* । चित्तोत्पत्तिप्रतिबन्धनादित्यर्थः । कथमिति ? तत्प्रतिपादयति—*समापत्तिचित्तमेव हीति* । विस्तरः—तत्समापत्तिचित्तमेव नान्यद् द्रव्यम् । *चित्तान्तरविरुद्धमनागतचित्तविरुद्धमुत्पद्यते* । *येन* चित्तेन *कालान्तरं* नात्यन्तमप्रवृत्ति*मात्रं भवति* । मात्रशब्दो द्रव्यान्तरव्यावर्तनार्थः । *तद्विरुद्धाश्रयापादनात्* । चित्तविरुद्धस्याश्रयस्य सन्तानस्यापादनात् कारणात् । यदेतदप्रवृत्तिमात्रं *सासौ समापत्तिरिति प्रज्ञप्यते*, प्रज्ञप्तिधर्मोऽयम्, न द्रव्यधर्म इत्यर्थः । यदि न द्रव्यधर्मः कथमसौ संस्कृतमिति प्रज्ञप्यते ? इत्यत आह—*तच्चाप्रवृत्तिमात्रम्* । *न पूर्वमभूत्* उत्तरकालं *व्युत्थितस्य* योगिनो *भवतीति* । *संस्कृतासौ समापत्तिरसंज्ञिसमापत्तिः*, निरोधसमापत्तिर्वा *प्रज्ञप्यते*; संव्यवहारतो न तु द्रव्यतः । *अथवेति* विस्तरः । *आश्रयस्यैव तथा समापादनम्*, तथा व्यवस्थानम्, अवस्थाविशेषः समापत्तिजनितो यः सा *समापत्तिरित्यर्थः* । स चावस्थाविशेषः पूर्वं नासीत् पश्चाच्च न भवति व्युत्थितस्येति संस्कृतत्वं न विरुध्यते । अथ वा *समापदनमिति* पाठः ।

एवमासंज्ञिकमपि द्रष्टव्यम् । चित्तमेवासौ तत्र चित्तप्रवृत्तिविरुद्धं लभते, तच्चाप्रवृत्तिमात्रमासंज्ञिकं प्रज्ञप्यत इति तदेतन्न वर्णयन्ति ॥ ४४ ॥

व्याख्याते समापत्ती ॥

जीवितं कतमत् ?

**आयुर्जीवितम्**

एवं ह्युक्तमभिधर्मे—"जीवितेन्द्रियं कतमत् ? त्रैधातुकमायुः" (                ) इति । एतच्चैव न ज्ञायते—आयुर्नाम क एष धर्म इति ?

**आधार ऊष्मविज्ञानयोर्हि यः ।**

इदमुक्तं भगवता—

"आयुरूष्माथ विज्ञानं यदा कायं जहत्यमी ।
अपविद्धस्तदा शेते यथा काष्ठमचेतनः" ॥ (                ) इति ।

तद् य ऊष्मणो विज्ञानस्य चाधारभूतो धर्मः स्थितिहेतुः, तद् 'आयुः' । तस्येदानीमायुषः क आधारभूतः ? ते एवोष्मविज्ञाने ।

एवं तर्हि परस्परापेक्ष्यवृत्तित्वादेषां कः पूर्वं निवर्त्तिष्यते, यद्वशादादिभवौ निवर्त्तिष्येते इति नित्यानिवृत्तिप्रसङ्गः ? आयुषस्तर्हि कर्माधारभूतं यावदाक्षिप्तम्, कर्मणा तावदनुवर्त्तनात् ।

ऊष्मविज्ञानयोरपि किमर्थं कर्मैवाधारभूतं नेष्यते ? मा भूत् सर्वं विज्ञानमामरणाद् विपाक इति ।

ऊष्मणस्तर्हि कर्माधारभूतं भविष्यति, ऊष्मा च विज्ञानस्य ? एवमप्यारूप्येष्वनाधारं विज्ञानं स्याद्; ऊष्माभावात् । तस्य पुनः कर्माधारो भविष्यति ?

---

संस्कृतावस्थाविशेषत्वादस्याः समापत्तेः संस्कृतत्वं सिध्यतीत्यर्थः । *एवमासंज्ञिकमिति* विस्तरः । *चित्तमेवासौ* योगी *तत्रासंज्ञिषु चित्तप्रवृत्तिविरुद्धं लभते, तच्चाप्रवृत्तिमात्रम्* । चित्तचैत्तानामिति वाक्यशेषः । *आसंज्ञिकमिति प्रज्ञप्यते*, न तु द्रव्यतोऽस्तीत्यभिप्रायः ॥ ४४ ॥

*य उष्मणः* इति विस्तरः । उष्मणो विज्ञानस्य च जीवितप्रतिबद्धा प्रवृत्तिः । *तस्माज्जीवितमूष्मणो विज्ञानस्य चाधार* उच्यते *स्थिति*हेतुस्तयोरेव । *नित्यानिवृत्तिप्रसङ्ग* इति । नित्यमेषां स्रोतः प्रसज्येत ।

न वै लभ्यते कामचारो यत् क्वचिदेवोष्मा विज्ञानस्याधारो भविष्यति, क्वचिदेव कर्मेति। उक्तं चात्र। किमुक्तम्? "मा भूत् सर्वं विज्ञानमामरणाद् विपाकः" इति। तस्मादस्त्येव तयोराधारभूतमायुः।

न हि नास्तीति ब्रूमः, न तु द्रव्यान्तरम्। किं तर्हि? त्रैधातुकेन कर्मणा निकायसभागस्य स्थितिकालावेधः। यावद्धि कर्मणा निकायसभागस्यावेधः कृतो भवति—'एतावन्तं कालमवस्थातव्यम्' इति, तावत् सोऽवतिष्ठते, तद् 'आयुः' इत्युच्यते। सस्यानां पाककालावेधवत्, क्षिप्तेषुस्थितिकालावेधवच्च।

यस्तु मन्यते—संस्कारो नाम कश्चिद् गुणविशेष इषौ जायते, यद्वशाद् गमनमिषोरापतनाद् भवतीति? तस्य तदेकत्वात् प्रतिबन्धाभावाच्च[1] देशान्तरैः शीघ्र-

---

*निकायसभागस्य स्थितिकालावेध* इति। निकायसभागो व्याख्यातः। त एव तथाभूताः संस्कारा रूपादिस्कन्धस्वभावा इति। तेषां स्थितिः, प्रबन्धः, तस्या कालो यावत् तेन स्थातव्यम्, त एव तावन्तः संस्कारक्षणाः, तस्यावेधः प्रतिसन्धिक्षणे पूर्वजन्मकर्मणो हेतुभावव्यवस्थानम्। कः पुनरसौ हेतुः? सामर्थ्यविशेषः। स हि स्कन्धप्रबन्धलक्षणायाः स्थितेः क्षणपरम्परया कारणं भवति। अत एव स्थितिकालावेध उच्यते; तावत्कालं प्रवाहाक्षेपलक्षणत्वात्। *तावत् सोऽवतिष्ठत* इति। स निकायसभागः। *सस्यानां पाककालावेधवत्*। यथा सस्यानां पाककालावेधः सामर्थ्यविशेषस्वभावो बीजेनाङ्कुर एवाधीयते, य क्षणपरम्परया आ पाककालात् सस्यसन्तानहेतुर्भवति, तद्वदेतत्। *क्षिप्तेषुस्थितिकालावेधवच्च*। यथा क्षिप्तस्येषोः शरस्य स्थितिः=आकाशदेशान्तरोत्पत्तिः सन्तानानुवृत्तिः, तस्याः कालः=मर्यादा यतः परेण सा न भवति, तस्यावेधो हेतुव्यवस्थानम्। कः पुनरसौ हेतुः? प्रयत्नभूतातिशयनिर्वृत्तवायुधातुजनितसामर्थ्यविशेषः। तद्यथा क्षिप्तेषुस्थितिकालावेधो न द्रव्यान्तरम्, तद्वदयमायुर्लक्षणमावेधो द्रष्टव्यः।

*यस्तु मन्यत* इति। *वैशेषिकः*। *संस्कारो नाम गुणविशेष* इति। पृथिव्यादीनां वैशेषिको गुणः संस्कारो नाम कर्मजः कर्महेतुश्च वेगद्वितीयनामा *इषौ जायते*। *यद्वशात्* यस्य गुणस्य वशात्, *गमनमिषोरापतनाद् भवतीति* तं प्रत्यदृष्टान्त एषः। यथा हि संस्कारो नाम भावान्तरमस्ति, एवमायुरपि स्यादिति, तेन तन्मतं दूषयत्याचार्यः—*तस्येति*। विस्तरः—तस्य *वैशेषिकस्य तदेकत्वात्* संस्कारैकत्वात्। *प्रतिबन्धाभावाच्च*। प्रतिबन्धस्य काष्ठप्रत्याख्यानादिलक्षणस्याभावाच्च।

---

१ प्रतिपक्षाभावाच्च—का०।

तरतमप्राप्तिकालभेदानुपपत्तिः, पतनानुपपत्तिश्च । वायुना तत्प्रतिबन्ध इति चेत् ? अर्वाक्पतनप्रसङ्गो न वा कदाचिद् वायोरविशेषात् । एवं तु वर्णयन्ति— द्रव्यान्तरमेवायुरस्तीति ।

अथ किमायुःक्षयादेव मरणं भवति ? आहोस्विदन्यथापि ? प्रज्ञप्तावुक्तम्— "आयुःक्षयान्मरणम्, न पुण्यक्षयात्" (                ) इति । चतुष्कोटिः । प्रथमा कोटिः—आयुर्विपाकस्य कर्मणः पर्यादानात् । द्वितीया—भोगविपाकस्य । तृतीया—उभयोः । चतुर्थी—विषमापरिहारेण ।

आयुरुत्सर्गाच्चेति वक्तव्यम् ? न वक्तव्यम् । आयुःक्षयादेव तन्मरणम्; प्रथमकोट्यन्तर्गमात् । क्षीणे त्वायुषि पुण्यक्षयस्य मरणे नास्ति सामर्थ्यम् । तस्माद् 'उभयक्षये सति मरणमायुःक्षयाद्' इत्युक्तम् ।

**ज्ञानप्रस्थाने**ऽप्युक्तम्—"आयुः सन्तत्युपनिबद्धं वर्त्तत इति वक्तव्यम् । सकृदुत्पन्नं तिष्ठतीति वक्तव्यम् ? आह—कामावचराणां सत्त्वानामसंज्ञिसमापत्तिं निरोधसमापत्तिं च समापन्नानां सन्तत्युपनिबद्धं वर्त्तत इति वक्तव्यम् । समापन्नानां रूपारूप्यावचराणां च सत्त्वानां सकृदुत्पन्नं तिष्ठतीति वक्तव्यम्" (                ) ।

---

किम् ? देशान्तरे *शीघ्रतरतमप्राप्तिकालभेदानुपपत्तिः* । शीघ्रा, शीघ्रतरा, शीघ्रतमा प्राप्तिः शीघ्रतरतमप्राप्तिः । कैः ? सह देशान्तरैराकाशदेशादिभिः, तस्याः कालः, तस्य भेदः, तस्यानुपपत्तिः । शीघ्रा, शीघ्रतरा, शीघ्रतमा देशान्तरैः सह प्राप्तिर्नोपपद्यते । पूर्वोक्तादस्मात् कारणद्वयात् संस्कारस्याविशिष्टत्वात् *पतनानुपपत्तिश्च* । पतनं चेषोर्नोपपद्यते । सति संस्कारे न ह्येतदिष्टम्—सति कारणे कार्यं न भवतीति । *वायुना तत्प्रतिबन्ध इति चेत्* ? स्यान्मतम्—वायुरत्र प्रतिबन्धः, प्रतिबन्धविशेषाच्छीघ्रतरतमप्राप्तिकालभेदः पतनं चोपपद्यत इति स्पर्शवद् द्रव्यसंयोगादभावः कर्मणः इति वचनात् । अत्रोच्यते—*अर्वाक्पतनप्रसङ्गः* । ज्याविभागानन्तरमेवार्वागेवरत एव वायुसंयोगात् स इषुः पतेत् । अथ प्रतिबध्यमानोऽपि वायुना नार्वाक् पतेत्, *न वा कदाचित्* पतेत्, न पश्चादपि पतेदित्यर्थः । किं कारणम् ? *वायोरविशेषात्* । यथा हि समीपे वायुः, एवं दूरेऽपीति ।

'*चतुर्थी विषमापरिहारेणेति*' । अत्यशनादेर्विषमस्यापरिहारेण । *क्षीणे त्वायुषि पुण्यक्षयस्य मरणे नास्ति सामर्थ्यम्* । तेन तृतीया कोटिर्न प्राप्नोति । *तस्मादुभयक्षये सति मरणमुभयक्षयादिति* । उभयक्षये सतीति योऽर्थः सोऽर्थ उभयक्षयादि-

कोऽस्य भाषितस्यार्थः ? यस्याश्रयोपघाताद् उपघातस्तत्सन्तत्यधीनत्वात् प्रथमम् । यस्य त्वाश्रयोपघात एव नास्ति तद्यथोत्पन्नावस्थानाद् द्वितीयम् ।

सान्तरायं प्रथम्, निरन्तरायं द्वितीयमिति काश्मीराः ।

तस्मादस्त्यकालमृत्युः ।

सूत्रेऽप्युक्तम्—"चत्वार आत्मभावप्रतिलम्भाः । अस्त्यात्मभावप्रतिलम्भो यत्रात्मसञ्चेतना क्रमते; न परसञ्चेतना" इति । चतुष्कोटिकः—१. आत्मसञ्चेतनैव क्रमते कामधातौ क्रीडाप्रमोषकाणां देवानाम्, मनःप्रदूषकाणां च । तेषां हि प्रहर्षमनःप्रदोषाभ्यां तस्मात् स्थनाच्च्युतिर्भवति, नान्यथा । बुद्धानां चेति वक्तव्यम्; स्वयम्मृत्युत्वात् । २. परसञ्चेतनैव क्रमते गर्भाण्डगतानाम् । ३. उभयमप्येषां कामावचराणां प्रायेण । ४. नोभयं सर्वेषामन्तराभविकाणां रूपारूप्यावचराणामेक-जातीयानां कामावचराणाम्, तद्यथा नारकाणामुत्तरकौरवाणां दर्शनमार्गमैत्रीनिरोधा-

---

त्ययमर्थ उक्तो वेदितव्यः ? न; आयुक्षयादपि मरणं भवतीति कथं गम्यते, सस्यादिसाधर्म्यात् । सस्यादीनां हि बीजावेधपरिक्षये सति सत्सु प्रत्ययान्तरेषु क्षेत्रोदकादिषु दृष्टा सन्ताननिवृत्तिरप्राप्यैव फलकालं फलपाककालं वा; बीजस्य नातिसारत्वात् । सत्यपि च सारबीजाक्षेपे सलिलादिस्थितिवृद्धिप्रत्ययाभावा-दृष्टा सन्ताननिवृत्तिः । सारबीजाक्षेपस्थितिवृद्धिप्रत्ययाभावेऽपि दृष्टा—यदा बीजाक्षेपश्च परिसमाप्तो भवति, सलिलस्य चाभावः । सत्यपि च सारबीजाक्षेपे सलिलादिस्थितिवृद्धिप्रत्यये च जङ्गमाद्युपक्रमकृता दृष्टा सस्यादीनां सन्तान-निवृत्तिरिति ।

*यस्याश्रयोपघातादुपघातस्तत्सन्तत्यधीनत्वा*दिति । *बहिर्देशिक*मतमेतत् । आश्रयसन्ततिप्रतिबद्धं तदायुरिति सन्तत्युपनिबद्धमित्युच्यते ।

*काश्मीरमतेऽपि स एवार्थः*; शब्दमात्रं तु भिद्यते । *सान्तरायं निरन्तराय-मिति* । अथ वा सन्तत्युपनिबद्धमिति स्वसन्तत्युपनिबद्धम् । सन्तानवत्येव तत् केवलम्, न तु सकृदुत्पन्नं तिष्ठतीति सान्तरायमित्युच्यते ।

अनेनागमेन अस्त्यकालमृत्युरिति दर्शयन्नाह—*सूत्रेऽप्युक्तं चत्वार आत्म-भावप्रतिलम्भा* इति । विस्तरः—*आत्मसञ्चेतना* आत्मना मारणम्, *परसञ्चेतना* परेण मारणम् । *बुद्धानाञ्चेति वक्तव्यम्* । किम् ? आत्मसञ्चेतनैव क्रमते, *स्वयं-मृत्युत्वात्* । अनुपक्रमणधर्माणो हि बुद्धा भगवन्त आयुरुत्सर्गवशित्वालाभिनश्च ।

संज्ञिसमापत्तिसमापन्नानां **राजर्षि-जिनदूत-जिनादिष्ट-धर्मिलोत्तरगङ्गिलश्रेष्ठि-पुत्रयशःकुमारजीवकादीनां** सर्वेषां चरमभविकानाम्, बोधिसत्त्वमातुस्तद्गर्भायाः, चक्रवर्त्तिमातुश्च तद्गर्भायाः।

अथ कस्मात् सूत्र उक्तम्---"कतमे ते भदन्त सत्त्वा येषां नात्मसञ्चेतना क्रमते, न परसञ्चेतना ? नैवसंज्ञानासंज्ञायतनोपगाः **शारिपुत्र**" इति ? अन्येषु किल ध्यानारूप्येष्वात्मसञ्चेतना स्वभूमिक आर्यमार्गः, परसञ्चेतना उत्तरभूमि-सामन्तकः, तत्र चोभयं नास्तीति।

ननु चैवं तत्रापि परभूमिक आर्यमार्गः परसञ्चेतना प्राप्नोति ? **पर्यन्त-ग्रहणात् तर्हि तदादिसम्प्रत्ययः।** क्वचिदादिसम्प्रत्ययः, क्वचिदादिना पर्यन्तोऽपि

---

*प्रायेणे*ति ग्रहणं चतुर्थकोट्यभिहितनारकान्तराभविकादिपरिवर्जनार्थम्। *राज-र्षयश्च*क्रवर्त्तिपूर्वाः प्रव्रजिताः। *जिनदूतो* यो बुद्धेन भगवता दूतः कश्चित् सम्प्रेषितः। तद्यथा शुकः कश्चिद् भगवता आम्रपाल्याः प्रेषितो लिच्छविभिश्च योग्यां कुर्वाणैर्दृष्टः। शरजालेनापूर्यमाणोऽपि मारयितुं न शक्यते। यावद्धि स दूतकृत्यं न करोति तावन्नात्मसञ्चेतना क्रमते, न परसञ्चेतना। *जिनादिष्टः।* 'इयन्तं कालमनेन जीवितव्यम्' इति य आदिष्टो भगवता। *धर्मिलादयः* पूर्वयोग-विद्भ्यः आगमितव्याः। आदिशब्देन चान्येऽपि तत एव चागमयितव्याः। तेषां नात्मसञ्चेतना क्रमते, न परसञ्चेतना। *चरमभविकानां च।* ये तस्मिन्नेव जन्मन्य-र्हत्त्वं प्राप्नुवन्ति। *बोधिसत्त्वमातुस्तद्गर्भाया* बोधिसत्त्वगर्भायाः। *चक्रवर्त्तिमातु-श्चक्रवर्त्तिगर्भायाः।* नात्मसञ्चेतना, न परसञ्चेतना। यदा तर्हि सर्वेषां रूपा-रूप्यावचराणां नात्मसञ्चेतना, न परसञ्चेतना, *अथ कस्मात् सूत्र उक्त*-मिति ? विस्तरः—*तत्र चोभयं नास्ती*ति। तत्र नैवसंज्ञानासंज्ञायतने स्वभूमिक आर्यमार्गो नास्ति, "यावदेव संज्ञासमापत्तिस्तावदाज्ञाप्रतिवेधः" इति वचनात्, नाप्युपरिभूमिसामन्तकः, ऊर्ध्वभूम्यभावात्।

*परभूमिक आर्यमार्ग* इति। आकिञ्चन्यायतनभूमिकः। "आर्याकिञ्चन्यसा-म्मुख्याद् भवाग्रे त्वास्रवक्षयः" ( अभि० को० ८.२० ) इति वचनात्। *पर्यन्त-ग्रहणात् तर्ही*ति। तर्हीत्यर्थान्तरविवक्षायां निपातः। *तदादिसम्प्रत्यय* इति। तस्य पर्यन्तस्य नैवसंज्ञानासंज्ञायतनस्यादिश्चत्वारि ध्यानानि त्रयश्च शेषा आरूप्याः। न तु कामधातुस्तदादिः, असमाहितत्वेन वैसादृश्यात्। समापत्तितो वा ध्याना-रूप्या एव तदादिः, "नवानुपूर्वसमापत्तयः" इति वचनात्। तत्र सम्प्रत्ययस्तदा-*दिसम्प्रत्ययः।* अस्ति कचिदन्यत्राप्येवं दृष्टमिति ? अस्तीत्याह—*क्वचिदादिना पर्यन्त*

प्रतीयते, यदाह—"तद्यथा देवा ब्रह्मकायिकाः । इयं प्रथमा सुखोपपत्तिः" इति । क्वचित् पर्यन्तेनादिरपि प्रतीयते, यदाह—"तद्यथा देवा आभास्वराः । इयं द्वितीया सुखोपपत्तिः" इति ।

अयमत्र 'तद्यथा' शब्दो दृष्टान्तवाचक इति युक्त एतस्माच्छेषसम्प्रत्ययः । एष हि दृष्टान्तधर्मो यदेकमपि तज्जातीयकं दृश्यते । स चेह तद्यथा-शब्दो नास्तीत्यनुपसंहार एषः ।

यद्ययं तद्यथाशब्दो दृष्टान्तवाचकः स्याद्, इह न प्राप्नुयात्—सन्ति सत्त्वा नानात्वकाया नानात्वसंज्ञिनः, तद्यथा मनुष्यास्तदेकत्याश्च देवा इति ? तस्मादुपदर्शनार्थ एवायं द्रष्टव्य इत्यलमतिप्रसङ्गेन ॥

उक्तं जीवितम् ॥

**लक्षणानि पुनर्जातिर्जरा स्थितिरनित्यता ॥ ४५ ॥**

एतानि हि संस्कृतस्य चत्वारि लक्षणानि । यत्रैतानि भवन्ति स धर्मः संस्कृतो लक्ष्यते । विपर्ययादसंस्कृतः ।

---

इत्यादि । *तद् यथा देवा ब्रह्मकायिका* इति । देवा ब्रह्मकायिकाः, तत्पर्यन्तग्रहणाच्च ब्रह्मपुरोहिता महाब्रह्माणश्च । *प्रथमा सुखोपपत्तिः । तद्यथा देवा आभास्वरा* इति । आभास्वराः, तदादिग्रहणाच्च परीत्ताभाः, अप्रमाणाभाश्च । *द्वितीया सुखोपपत्तिरिति* । तिस्र एव हि सुखोपपत्तय इष्यन्ते ।

"सुखोपपत्तयस्तिस्रो नव त्रिध्यानभूमयः" (अभि० को० ३.७१) इति वचनात् । *एष हि दृष्टान्तधर्म* इति । एतद्दृष्टान्तचरितं यदेकमपि *तत्प्रकारं निर्दिशते*, न सर्वम्, शेषसम्प्रत्ययश्च भवति । तद्यथा—'अनित्यः शब्दः कृतकत्वात्, यथा घटः' इति पटादीन्यपि हि गृह्यन्ते, 'तद्यथा'शब्दस्य दृष्टान्तवाचकत्वात् । *अनुपसंहार* एष इति । अदृष्टान्त इत्यर्थः । *मनुष्यास्तदेकत्याश्च देवा* इति । तदेके देवाः षट् कामावचरा देवाः, प्रथमाभिनिर्वृत्तवर्ज्याश्च प्रथमध्यानोपपन्ना देवा इत्येतावन्त एव नानात्वकाया नानात्वसंज्ञिनः सत्त्वाः, नैतद्व्यतिरिक्ताः सन्तीति । नायं *तद्यथाशब्दो दृष्टान्तवाचकः । तस्मादुपदर्शनार्थ एवायं द्रष्टव्यः* । उपदर्शनार्थत्वे च सति तदेव स्थितमेतत्—पर्यन्तग्रहणात् तदादिसम्प्रत्यय इति ॥

*विपर्ययादसंस्कृत* इति । यत्रैतानि न भवन्ति सोऽसंस्कृत इति । ननु च स्थितिरसंस्कृतलक्षणमस्ति, नासंस्कृतस्य स्थितिर्द्रव्यान्तररूपास्ति । द्रव्यान्तररूपाणि चेह संस्कृतलक्षणानीष्यन्त इत्यचोद्यमेतत् ।

तत्र जातिस्तं धर्मं जनयति, स्थितिः स्थापयति, जरा जरयति, अनित्यता विनाशयति ।

ननु "त्रीणीमानि संस्कृतलक्षणानि" इति सूत्र उक्तम्, चतुर्थमप्यत्र वक्तव्यं स्यात्, किं चात्र नोक्तम् ? आह—स्थितिः । यत् तर्हि "इदं स्थित्यन्यथात्वम्" इति ? जराया एष पर्यायः; तद्यथा जातेरुत्पाद इति, अनित्यतायाश्च व्ययः इति ।

ये हि धर्माः संस्काराणामध्वसञ्चाराय प्रवृत्ताः, त एव सूत्रे लक्षणान्युक्तान्युद्वेजनार्थम् । जातिर्हि या संस्कारानानागतादध्वनः प्रत्युत्पन्नमध्वानं सञ्चारयति । जराऽनित्यते पुनः प्रत्युत्पन्नादतीतं दुर्बलीकृत्य विघातात्[1] । तद्यथा किल गहनप्रविष्टस्य पुरुषस्य त्रयः शत्रवः—तत एक एनं गहनादाकर्षेत्, द्वौ पुनर्जीवितात् व्यपरोपयेताम्, तद्वदिति । स्थितिस्तु तान् संस्कारानुपगृह्य तिष्ठत्यवियोगमि-

ननु च *त्रीणीमानीति* विस्तरः । कथम् ? *सूत्रे*—"*त्रीणीमानि* भिक्षवः *संस्कृतस्य संस्कृतलक्षणानि* । कतमानि त्रीणि ? संस्कृतस्य भिक्षवः उत्पादोऽपि प्रज्ञायते, व्ययोऽपि प्रज्ञायते, स्थित्यन्यथात्वमपि" (                ) इति । *चतुर्थमप्यत्र वक्तव्यं स्यादिति वैभाषिकाः । किञ्चात्र नोक्तमिति* चोदकः । *स्थितिरिति वैभाषिकाः । यत्तर्हीदं स्थित्यन्यथात्वमपीति* । स्थितिशब्दोऽत्र श्रूयते कथमिदमुच्यते—स्थितिर्नोक्तेति चोदकाभिप्रायः । *जराया एष पर्याय* इति । जरेयमुक्ता, स्थितेरन्यथात्वं स्थित्यन्यथात्वमिति । *तद् यथा जातेरुत्पाद* इति पर्यायः । *अनित्यतायाश्च व्ययः* । तथा जरायाः स्थित्यन्यथात्वं पर्याय इति ।

कस्मात् पुनर्लक्षणचतुष्ट्वे सति भगवता त्रीण्येवोक्तानीति ? अत आह—*ये हि धर्मा* इति । विस्तरः—*उद्वेजनार्थं विनेयानाम्* । जातिजरानित्यता इति धर्माणां लक्षणान्युक्तानि । आभिप्रायिको हि सूत्रनिर्देशः, न लाक्षणिकः, यथाभिधर्मः । *जरानित्यते पुनः प्रत्युत्पन्नादतीत*मिति । सञ्चारयत इत्यधिकारोऽनुवर्त्तते । जरानित्यते प्रत्युत्पन्नादध्वनोऽतीतमध्वानं सञ्चारयतः । कस्मात् ? *दुर्बलीकृत्य विघातात्* । जरा दुर्बलीकरोति । अनित्यता निहन्तीति कृत्वा । ननु चानित्यतैव धर्म प्रत्युत्पन्नादध्वनोऽतीतमध्वानं सञ्चारयति; न जरा; जरा हि केवलं धर्मं दुर्बलीकरोति, कस्मादेवमुच्यते—जरानित्यते प्रत्युत्पन्नादतीतं सञ्चारयत इति ? आह—दुर्बलीकरणमपि तदध्वसञ्चारायैव वर्त्तते । न ह्यदुर्बलीकृतस्याध्वसञ्चा-

१. प्रतिघातात्—का० ।

**वेच्छन्ती । अतोऽसौ संस्कृतलक्षणं न व्यवस्थापिता । असंस्कृतस्यापि च स्वलक्षणस्थितिभावात्**[1] ।

**अन्ये** पुनः कल्पयन्ति—स्थितिं जरां चाभिसमस्य स्थित्यन्यथात्वमित्येकं **लक्षणमुक्तं सूत्रे** । किं प्रयोजनम् ? एषा ह्येषु सङ्गास्पदम्, अतः श्रियमिवैनां कालकर्णीसहितां दर्शयामास तस्यामनासङ्गार्थमिति ।

अतश्चत्वार्येव संस्कृतलक्षणानि ॥ ४५ ॥

तेषामपि नामजात्यादीनां संस्कृतत्वादन्यैर्जात्यादिभिर्भवितव्यम् ? भवन्त्येव ।

**जातिजात्यादयस्तेषां**

---

रोऽस्तीति जरापि तत्सञ्चारे व्यवस्थाप्यते । *असंस्कृतस्यापि च स्वलक्षणस्थितिभावादिति* । स्वलक्षणे स्थितिः, स्थित्या भावः, तस्मात् स्थितिभावात् । असौ स्थितिः संस्कृतलक्षणं न व्यवस्थापिता । स्थितिर्ह्यसंस्कृतावस्थाविशेषलक्षणया स्थित्या सदृशीति तस्यासंस्कृतस्य संस्कृतत्वप्रसङ्गपरिजिहीर्षया न लक्षणमुक्तमित्यभिप्रायो भगवतो *धर्मस्वामिनः* ।

*अन्ये पुनः कल्पयन्तीति* । सूत्रेऽपि स्थितिरुक्तेति कथयन्ति । *स्थितिं जरां चाभिसमस्य* । स्थितिश्च स्थित्यन्यथात्वं च स्थित्यन्यथात्वमित्यभिसमस्यैवं लक्षणमुक्तं सूत्रे, न विभागशः । कस्मात् ? "त्रीणीमानि संस्कृतलक्षणानि" इति वचनविरोधप्रसङ्गात् । किमत्र प्रयोजनम् ? इत्यत आह—*एषा ह्येषु सङ्गास्पदमिति* । विस्तरः—एषा हि स्थितिरेषु जात्यादिषु सङ्गास्पदं सङ्गस्थानम्, धर्मोऽनया तिष्ठतीति । अतः *श्रियमिवैनां* स्थितिं *कालकर्णीसहिताम*लक्ष्मीसहितां *दर्शयामास भगवान् तस्यां* स्थित्या*मनासङ्गार्थम्* । 'नास्यामासङ्गः कर्त्तव्यः, यस्मादियमनित्यतयानुबद्धा लक्ष्मीरिवालक्ष्म्या' इति तदेकीयं व्याख्यानम् । *अपरे* तु व्याचक्षते—'नास्यामासक्तव्यम्, यस्मादियं जरयानुबद्धा लक्ष्मीरिवालक्ष्म्या' इति । जरया ह्यन्यथात्वलक्षणयास्या एकीकरणम्, नानित्यतयेति ।

*अतश्चत्वार्येव संस्कृतलक्षणानीति* । उभयोरपि पक्षयोरयमुपसंहारः ॥ ४५ ॥

*अन्यैर्जात्यादिभिर्भवितव्यमिति* । जातिसामर्थ्यात् कश्चित् संस्कृतो धर्मो जायते, जातिरपि संस्कृता, तस्मात् तस्या अप्यन्यथा जात्या भवितव्यम्, स्वात्मनि वृत्तिविरोधात् । "सर्वं संस्कृतलक्षणैः" ( अभि० को० २.२४ ) इति च सिद्धान्तात् । एवं जरादयोऽपि योज्याः ।

*"जातिजात्यादयस्तेषाम्"* इति । जातिजात्यादयश्च तेषामिति चशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः ।

---

१. स्वलक्षणे स्थिति०—का० ।

तेषामपि चत्वार्यनुलक्षणानि भवन्ति—**जातिजातिः**, स्थितिस्थितिः, जराजरा, अनित्यताऽनित्यता इति ।

ननु चैकस्यैकस्य चतुर्लक्षणी प्राप्नोति अपर्यवसानदोषश्च, तेषां पुनरन्यजात्यादिप्रसङ्गात् ? न प्राप्नोति; यस्मात्

**तेऽष्टधर्मैकवृत्तयः ।**

तेषां जात्यादीनामष्टासु धर्मेषु वृत्तिः । किमिदं वृत्तिरिति ? कारित्रं पुरुषकारः । जातिजात्यादीनां चैकत्र धर्मे कथं कृत्वा आत्मना नवमो हि धर्म उत्पद्यते ? सार्धं लक्षणानुलक्षणैरष्टाभिः । तत्र जातिरात्मानं विरहय्यान्यानष्टौ धर्मान् जनयति । जातिजातिस्तु तामेव जातिम् । तद्यथा किल काचित् कुक्कुटी बहून्यपत्यानि प्रजायते, काचिदल्पानि; तद्वत् स्थितिरप्यात्मानं वर्जयित्वाऽन्यानष्टौ धर्मान् स्थापयति, स्थितिस्थितिस्तु तामेव स्थितिम् ।

एवं जराऽनित्यते अपि यथायोग्यं योज्ये । तस्मान्न भवत्यनवस्थाप्रसङ्गः ।

---

*ननु चैकस्येति* । विस्तरः—एकैकस्य लक्षणस्य *चतुर्लक्षणी*, चतुर्णां लक्षणानां समाहारः चतुर्लक्षणी *प्राप्नोति* । *अपर्यवसानदोषश्च*, अनिष्ठादोषश्च; तेषामनुलक्षणानां पुनरन्यजात्यातिप्रसङ्गात् । जातेर्जातेर्जातिजातेर्यावदनित्यताया अनित्यताया अनित्यतानित्यतायाश्च प्रसङ्गात् ।

*"तेऽष्टधर्मैकवृत्तयः"* । 'ते' इति पुंल्लिङ्गनिर्देशः; धर्माभिसम्बन्धनात् । ते जात्यादिजातिजात्यादिस्वभावा धर्मा यथाक्रममष्टधर्मैकवृत्तयः । जात्यादीनामष्टासु धर्मेषु वृत्तिः, जातिजात्यादीनां चैकधर्मे । आत्मनवमा हीति लक्षणानुलक्षणापेक्ष एवमुक्तम् । न हि यथासम्भवं तत्र प्राप्त्यादयो भूतानि भौतिकानि वा नोत्पद्यन्ते; "कामेऽष्टद्रव्यकोऽशब्दः" ( अभि० को० २.२२ ) "सर्वं संस्कृतलक्षणैः प्राप्त्या वा" ( अभि० को० २.२४ ) इति चैवमादिवचनात् ।

*जातिरात्मानं विरहय्येति* विस्तरः । स्वात्मनि वृत्तिविरोध इत्यत आत्मानं विरहय्य मुक्त्वाष्टौ *धर्मान् जनयति* । कतमानष्टौ ? तं धर्मं रूपं चित्तं वा स्थितिं जरामनित्यतां जातिजातिं स्थितिस्थितिं जराजरामनित्यतानित्यतां च जनयति । *जातिजातिस्तु तामेव जातिं* जनयति । *एवं जरानित्यते अपि यथायोगं योज्ये इति* । जरा आत्मानं विरहय्याष्टौ धर्मान् जनयति, जराजरा पुनस्तामेव जराम् ।

तदेतदाकाशं पाट्यत इति सौत्रान्तिकाः । न ह्येते जात्यादयो धर्मा द्रव्यतः संविद्यन्ते यथा विभज्यन्ते[1] । किं कारणम् ? प्रमाणाभावात् । न ह्येषां द्रव्यतोऽस्तित्वे किञ्चिदपि प्रमाणमस्ति—प्रत्यक्षमनुमानमाप्तागमो वा, यथा रूपादीनां धर्माणामिति ।

यत्तर्हि सूत्र उक्तम्—"संस्कृतस्योत्पादोऽपि प्रज्ञायते, व्ययोऽपि, स्थित्यन्यथात्वमपि" (　　) इति ?

ग्रन्थज्ञो देवानां प्रियो न त्वर्थज्ञः । अर्थश्च प्रतिसरणमुक्तं[2] भगवता ।

---

अनित्यतात्मानं विरहय्याष्टौ धर्मान् विनाशयति, अनित्यतानित्यता पुनस्तामेवानित्यतामिति ।

*तदेतदाकाशं पाट्यत* इति । विभिद्यत इत्यभिप्रायः । सप्रतिघद्रव्याभावमात्रमाकाशम् । नाकाशं नाम किञ्चिदस्ति । तद् विभक्तं यथा न शक्यते न युज्यते वा, एवमिमे जात्यादयोऽसन्तो धर्मा विभक्तुं न शक्यन्ते, न युज्यन्ते वा । तत आह—*न ह्येत* इति । विस्तरः—नह्येते *द्रव्यतः* स्वलक्षणतः *संविद्यन्ते यथा विभज्यन्ते*, जातिरात्मानं विरहय्याष्टौ धर्मान् जनयतीत्येवं विस्तरेण विभज्यन्ते । *यथा रूपादीनां धर्माणामिति* । अत्रादिशब्देन शब्दादिवेदनादिचक्षुरादीनां ग्रहणम् । तत्र रूपशब्दादि तावत् *प्रत्यक्षेण* चक्षुर्विज्ञानादिलक्षणेन प्रमाणेनोपलभ्यते । वेदनाद्यपि प्रत्यक्षेणैवोपलभ्यते; स्वसंवेद्यत्वात् । चक्षुरादि तु चक्षुर्विज्ञानादिनानुमानेनानुमीयते । चक्षुर्विज्ञानादिसन्निश्रयो रूपप्रसादश्चक्षुरादीनि, तद्भावाभावयोस्तद्भावाभावात् । *आगमो*ऽपि चक्षुषा रूपाणि दृष्ट्वेति विस्तरः । एवं श्रोत्रेण शब्दाँच्छ्रुत्वेति विस्तरेण । एवं गन्धादिष्वपि योज्यम् । तथा यत्किञ्चिद् रूपमतीतानागतप्रत्युत्पन्नमिति विस्तरः । एवं वेदनादिष्वपि योज्यम् । पारसान्तानिकानां त्वरूपिणां वेदनादीनामस्तित्वानुमानमात्मीयवच्छरीरविकारं दृष्ट्वा तत्सम्प्रतिपत्तेः । आगमोऽपि—चक्षुः प्रतीत्य रूपाणि चोत्पद्यन्ते चक्षुर्विज्ञानं सहजाता वेदना संज्ञा चेतनेति विस्तरः । जात्यादयस्तु न चक्षुरिन्द्रियादिप्रत्यक्षा भवन्ति । न चैषामस्तित्वे समर्थमनुमानमस्ति, न चाप्यागमो द्रव्यतोऽस्तित्वे ।

*यत्तर्हि सूत्र उक्तमिति* विस्तरः । ननु चायमागमोऽस्ति—*संस्कृतस्योत्पादोऽपि प्रज्ञायत* इति विस्तरः । *अर्थश्च प्रतिसरणमुक्तं भगवतेति* । "चत्वारीमानि भिक्षवः प्रतिसरणानि । कतमानि चत्वारि ? धर्मं प्रतिसरणं न पुद्गलः, अर्थः प्रतिसरणं न व्यञ्जनम्, नीतार्थसूत्रं प्रतिसरणं न नेयार्थम्, ज्ञानं प्रतिसरणं न विज्ञानम्" (　　) इति । तथा*र्थप्रतिसरणो भवति* न व्यञ्जनप्रतिसरण इति ।

---

१. अभिव्यज्यन्ते—का० ।　　२. प्रतिशरण०—का० ।

कः पुनरस्यार्थः ? अविद्यान्धा हि बालाः संस्कारप्रबन्धमात्मत[1] आत्मीयतश्चाधिमुक्ताः कृतरुचयोऽभिष्वजन्ते[2] । तस्य मिथ्याधिमोक्षस्य व्यावर्त्तनार्थं भगवांस्तस्य संस्कारप्रवाहस्य संस्कृतत्वं प्रतीत्यसमुत्पन्नत्वं[3] द्योतयितुकाम इदमाह—"त्रीणीमानि संस्कृतस्य संस्कृतलक्षणानि" । न तु क्षणस्य । न हि क्षणस्योत्पादादयः प्रज्ञायन्ते । न चाप्रज्ञायमाना एते लक्षणं भवितुमर्हन्ति । अत एवात्र सूत्रे—"संस्कृतस्योत्पादोऽपि प्रज्ञायते" इत्युक्तम् ।

पुनः संस्कृतग्रहणं संस्कृतत्वे लक्षणानीति यथा विज्ञायेत ? मैवं विज्ञायि; संस्कृतस्य वस्तुनोऽस्तित्वे लक्षणानि जलबलाकावत्, साध्वसाधुत्वे वा कन्यालक्षणवदिति ।

---

*कः पुनरस्यार्थ इति* । अन्योपन्यस्तस्य संस्कृतलक्षणसूत्रस्य । तमर्थमाह—*अविद्यान्धा हि बाला* इति । विस्तरः—*संस्कारप्रबन्धमात्मत आत्मीयतश्चाधिमुक्ताः कृतरुचयोऽभिष्वजन्त* इत्यर्थः । *संस्कृतत्वं प्रतीत्यसमुत्पन्नत्व*मिति पर्यायावेतौ । समेत्य सम्भूय प्रत्ययैः कृतम् संस्कृतम्, तं तं प्रत्ययं प्रतीत्य समुत्पन्नं प्रतीत्यसमुत्पन्नमिति । *न तु क्षणस्येति* । प्रवाहस्यैव संस्कृतत्वं द्योतयितुकाम इदमाह—न तु क्षणस्य संस्कृतत्वम् । *न हि क्षणस्योत्पादादय* उत्पादव्यवस्थित्यन्यथात्वलक्षणा धर्माः *प्रज्ञायन्ते*; क्षणस्य दुरवधारत्वात् । ब्रूयास्त्वम्—अप्रज्ञायमाना अप्येते लक्षणं भवितुमर्हन्तीति ? अत आह—*न चाप्रज्ञायमाना एते लक्षणं भवितुमर्हन्तीति* । प्रज्ञायमानमेव हि लक्षणं भवति, तद्यथा—जलस्य बलाकेति । *अत एवात्रेति* । अत एवात्र सूत्रे 'प्रज्ञायते' इति पदग्रहणम् ; अन्यथा हि 'संस्कृतस्योत्पादोऽपि व्ययोऽपि स्थित्यन्यथात्वमपि' इत्येवावक्ष्यत् ।

*संस्कृतत्वे लक्षणानीति* । संस्कृतमिति लक्षणानीत्यर्थप्रतिग्रहार्थं *पुनः संस्कृतग्रहणम्* । *जलबलाकावदिति* । वैधर्म्यदृष्टान्तोऽयम् । यथा बलाका जलास्तित्वे लक्षणम्, न पुनर्जलस्य जलत्वे लक्षणम् । *मैवं विज्ञायि* । किम् ? *संस्कृतस्य वस्तुनोऽस्तित्वे*ऽमूनि *लक्षणानि* । *साध्वसाधुत्वे वा कन्यालक्षणवदिति* । यथा कन्यायाः शुभाशुभानि लक्षणानि यथाक्रमं साध्वसाधुत्वे लक्षणानीति । यदि ह्यमूनि तथा संस्कृतस्य वस्तुनोऽस्तित्वे साध्वसाधुत्वे लक्षणानीष्येरन्, 'त्रीणीमानि संस्कृतलक्षणानि' इत्युच्येत, संस्कृतस्य संस्कृतलक्षणानीति न क्रियेत, कृतं च, तेन ज्ञायते—संस्कृतत्वे लक्षणानीति । कथं पुनरविद्यमाना जात्यादयः प्रवाहे

---

१. ०प्रवाहमा०—का० । २. श्चाधिमुक्ता अभि०—का० ।

३. ०समुत्पन्नतां—का० ।

तत्र प्रवाहस्यादिरुत्पादः, निवृत्तिर्व्ययः, स एव प्रवाहोऽनुवर्त्तमानः स्थितिः, तस्याः[1] पूर्वापरविशेषः स्थित्यन्यथात्वम् । एवं च कृत्वोक्तम्—"विदिता एव नन्दस्य कुलपुत्रस्य वेदना उत्पद्यन्ते, विदिता इव[2] तिष्ठन्ति, विदिता इव अस्तं परिक्षयं पर्यादानं गच्छन्ति" इति । आह चात्र—

"जातिरादिः प्रवाहस्य व्ययश्छेदः स्थितिस्तु सः ।
स्थित्यन्यथात्वं तस्यैव पूर्वापरविशिष्टता ॥
"जातिरपूर्वो भावः स्थितिः प्रबन्धो व्ययस्तदुच्छेदः ।
स्थित्यन्यथात्वमिष्टं प्रबन्धपूर्वापरविशेषः" इति ।
"क्षणिकस्य हि धर्मस्य विना स्थित्या व्ययो भवेत् ।
न च व्येत्येव तेनास्य वृथा तत्परिकल्पना ॥"

---

व्यवस्थाप्यन्ते, प्रज्ञायन्ते वा ? न ब्रूमः—जात्यादयो न संविद्यन्त इति, यथा तु द्रव्यरूपेण विभज्यन्ते तथा न संविद्यन्त इति ब्रूमः ।

यथा तर्हि भवतां संविद्यन्ते तथा कथ्यताम् ? अत आह—*प्रवाहस्यादिरुत्पाद* इति विस्तरः । *निवृत्तिर्व्यय* इति । प्रवाहस्योपरतिः=व्ययः । *स एव प्रवाहोऽनुवर्त्तमान* इति । सन्तानक्षणानुवृत्त्यानुवर्त्तमानः प्रवाहः *स्थिति*रित्युच्यते । *तस्याः पूर्वापरविशेष* इति । पूर्वस्मादपरस्य क्षणस्य विशेषः, पूर्वापरयोः क्षणयोर्वा विशेषः पूर्वापरविशेषः । *एवञ्च कृत्वोक्त*मिति । प्रवाहरूपानेवोत्पादादीन् कृत्वा-नित्योपस्थितस्मृतितामायुष्मतः सुन्दरनन्दस्यारभ्योक्तम् । प्रवाहगता हि वेदनास्तस्य विदिता इवोत्पद्यन्ते *विदिता इव तिष्ठन्ते । विदिता इव अस्तं परिक्षयं पर्यादानं गच्छन्ति*, न क्षणगताः; क्षणस्य दुरवधारत्वादिति । विदितस्य च क्षणस्यावस्थानासम्भवात् ।

एतमेवार्थं श्लोकद्वयेन संगृह्णन्नाह—*जातिरादिः प्रवाहस्येति* सर्वम् । *स्थितिस्तु स* इति । स एव प्रवाहः स्थितिः । *तस्यैवे*ति । तस्यैव प्रवाहस्य ।

*तदुच्छेद* इति । प्रबन्धोच्छेदः ।

*क्षणिकस्य हि धर्मस्येति* श्लोकः । क्षणिको हि धर्मः, स्थितिमन्तरेण विनश्येदित्यर्थः । स्थितिरस्तीति मन्यसे चेत् ; स च धर्मो व्येत्येव सत्यामपि स्थितौ, विनश्यत्येव क्षणिकत्वात् । विनाशहेत्वभावात् । तस्माद् *वृथा तत्परिकल्पना* । निष्प्रयोजना स्थितिपरिकल्पनेत्यर्थः । द्वितीयादिक्षणावस्थानेन हि स्थिति-

१. तस्य—का० । २. अवतिष्ठन्ते—का० ।

तस्मात् प्रवाह एव स्थितिः। एवं च कृत्वायमप्यभिधर्मनिर्देश उपपन्नो भवति—"स्थितिः कतमा? उत्पन्नानां संस्काराणामविनाशः" इति। न हि क्षणस्योत्पन्नस्याविनाशोऽस्तीति।

यदपि च **ज्ञानप्रस्थान** उक्तम्—"एकस्मिंश्चित्ते क उत्पादः? आह—जातिः। को व्ययः? मरणम्। किं स्थित्यन्यथात्वम्? जरा" (                ) इति। तत्रापि निकायसभागचित्तं युज्यते।

प्रतिक्षणं चापि संस्कृतस्यैतानि लक्षणानि युज्यन्ते, विनापि द्रव्यान्तरकल्पनया। कथमिति? प्रतिक्षणमभूत्वाभाव उत्पादः, भूत्वाऽभावो व्ययः, पूर्वस्य पूर्वस्योत्तरोत्तरक्षणानुबन्ध स्थितिः, तस्याविसदृशत्वं स्थित्यन्यथात्वमिति।

यदा तर्हि सदृशा उत्पद्यन्ते, न ते निर्विशेषा भवन्ति। कथमिदं ज्ञायते?

---

**परिकल्पना न वृथा भवेत्। तस्मात् प्रवाह एव स्थितिः; यस्मात् क्षणिकस्य हि धर्मस्य** स्थितिपरिकल्पना व्यर्थेति।

*एवं च कृत्वायमपी*ति। प्रवाह एव स्थितिरिति कृत्वेत्यर्थः। *न हि क्षणस्योत्पन्नस्याविनाशोऽस्ती*ति। अत्र कस्यचिदेवमभिप्रायो भवेत्—स्थितिसद्भावादेवं क्षणमविनाशो धर्मस्योत्पन्नस्य। यदि हि स्थितिर्न स्यात्, सोऽप्येकः क्षणो न स्यादिति? न; हेतुप्रत्ययपूर्वकत्वात् तदस्तित्वस्य; "अस्मिन् सतीदं भवति" इति वचनात्। स्थितिरुपगृह्णातीति चेत्? स्यान्मतं हेतुप्रत्ययेभ्य उत्पद्यमानं धर्मं स्थितिरुपगृह्णातीति। यदि स्थितिर्नोपगृह्णीयात्, किं स्यात्? आत्मसत्ता धर्मस्य न भवेत्। जनिका तर्हि स्थितिः प्राप्नोति, न स्थापिका। सन्तानमवस्थापयतीति चेत्? हेतुप्रत्ययेषु स्थित्याख्या प्रसज्यते; हेतुप्रत्ययानां सन्तानहेतुत्वात्।

*निकायसभागचित्तं युज्यत* इति। एकस्मिन् निकायसभागेऽनेकमपि चित्तमेकमित्युच्यते, एकनिकायसभागसम्बन्धादित्यभिप्रायः। तच्चित्तं युज्यत एकस्मिंश्चित्त इति वक्तुम्, अन्यथा हि कथमेकस्यैव चित्तक्षणस्य जातिश्च मरणं चान्यथात्वं च स्यात्।

*उत्तरोत्तरक्षणानुबन्धः स्थिति*रिति। पूर्वस्य क्षणस्योत्तरः क्षणः प्रतिनिधिभूतः; सादृश्यात्। अतः स पूर्वः क्षणोऽद्याप्यवतिष्ठत इवेति कृत्वोत्तरः क्षणः स्थितिरुच्यते।

*यदा तर्हि सदृशा उत्पद्यन्त* इति। यदा सदृशा उत्पद्यन्ते, तदा विसदृशत्वं नास्ति। विसदृशत्वं च स्थित्यन्यथात्वमुक्तम्। अतः सदृशोत्पत्तौ स्थित्यन्यथात्वं

क्षिप्ताक्षिप्तबलिदुर्बलक्षिप्तस्य वज्रादेश्चिराशुतरपातकालभेदात् तन्महाभूतानां परिणामविशेषसिद्धेः । नातिबहुविशेषभिन्नास्तु संस्काराः सत्यप्यन्यथात्वे सदृशा एव दृश्यन्ते ।

अन्तिमस्य तर्हि शब्दार्चिःक्षणस्य परिनिर्वाणकाले च षडायतनस्योत्तरक्षणाभावात् स्थित्यन्यथात्वं नास्तीत्यव्यापिनी लक्षणव्यवस्था प्राप्नोति ? न वै संस्कृतस्य स्थितिरेवोच्यते, लक्षणम्, अपि तु स्थित्यन्यथात्वम् । अतो यस्यास्ति स्थितिस्तस्यावश्यमन्यथात्वं भवतीति नास्ति लक्षणव्यवस्थाभेदः ।

समासतस्त्वत्र सूत्रे संस्कृतस्येदं लक्षणमिति द्योतितं भगवता—"संस्कृतं नाम यद्भूत्वा भवति, भूत्वा च पुनर्न भवति, यश्चास्य स्थितिसंज्ञकः प्रबन्धः

---

नास्तीत्यव्यापिलक्षणं स्यादित्यभिप्रायः । *क्षिप्ताक्षिप्तबलिदुर्बलक्षिप्तस्येति* । विस्तरः—क्षिप्तं च तदक्षिप्तं च क्षिप्ताक्षिप्तम्, बलिदुर्बलाभ्यां क्षिप्तं बलिदुर्बलक्षिप्तम् । क्षिप्ताक्षिप्तं च तद् बलिदुर्बलक्षिप्तं च क्षिप्ताक्षिप्तबलिदुर्बलक्षिप्तम् । किं तत् ? *वज्रादि* । आदिग्रहणेन लोहपाषाणादेर्ग्रहणम् ।

अपरे पुनरेवं विग्रहं कुर्वन्ति—क्षिप्तश्चाक्षिप्तश्च क्षिप्ताक्षिप्तौ, बलिदुर्बलाभ्यां क्षिप्तौ बलिदुर्बलक्षिप्तौ । क्षिप्तस्यैवायं द्विधाभेदः । क्षिप्ताक्षिप्तौ च बलिदुर्बलक्षिप्तौ च क्षिप्ताक्षिप्तबलिदुर्बलक्षिप्तम् । वज्रमादिरस्य वज्रादिः । अस्मिन् विग्रहे वज्रादि विशेषणम्, क्षिप्ताक्षिप्तबलिदुर्बलक्षिप्तं विशेष्यम् ।

तस्य वज्रादेरेवंविधस्य यथासम्भवं चिराशुतरपातः; क्षिप्तस्य चिरं पातः, अक्षिप्तस्य चिरतरः पातः; दुर्बलक्षिप्तस्याशुपातः, बलिक्षिप्तस्याशुतरः पातः, तस्य कालः, कालस्य भेदः, *चिराशुतरपातकालभेदात्* । *तद्गतानां वज्रादिमहाभूतानाम्* । परिणामविशेषः क्षिप्तस्यान्यथापरिणामो येन चिरं पातः । एवं यावद् बलिक्षिप्तस्यान्यथापरिणामो येनाशुतरः पातः, तस्य परिणामविशेषस्य सिद्धिः, तस्याः *परिणामविशेषसिद्धेः* । न ते निर्विशेषा भवन्तीत्यधिकृतम् ।

*अन्तिमस्य तर्हीति* । शब्दस्यार्चिषश्च, दीपादेर्योऽन्त्यः क्षणः सन्तानोपरतिकाले, निरुपधिशेषनिर्वाणकाले वा अर्हतः । तस्य *षडायतनस्योत्तरक्षणाभावात्* स्थितिर्नास्ति । स्थितेरभावात् *स्थित्यन्यथात्वं नास्तीत्यव्यापिनी लक्षणव्यवस्था प्राप्नोति*, येयमुक्ता तस्याविसदृशत्वं स्थित्यन्यथात्वमिति । यस्यास्ति स्थितिस्तस्यावश्यमन्यथात्वं भवति । यस्य नास्ति स्थितिस्तस्य नास्ति स्थित्यन्यथात्वमित्युक्तं भवति । सम्भवं हि प्रत्येवमुक्तं सूत्रे—'त्रीणीमानि संस्कृतलक्षणानि' इति । तस्मादन्त्यशब्दार्चिःक्षणप्रभृतीनामुत्पादव्ययावेव द्वे लक्षणे—इत्यभिप्रेयेते,

सोऽन्यथा चान्यथा च भवति" (          ) इति। किमत्र द्रव्यान्तरै-र्जात्यादिभिः ।

कथमिदानीं स एव धर्मो लक्ष्यस्तस्यैव च[1] लक्षणं योक्ष्यते ? कथं ताव-न्महापुरुषलक्षणानि महापुरुषान्नान्यानि, सास्नालाङ्गूलककुदशफविषाणादीनि च गोत्वलक्षणानि गोर्नान्यानि ? काठिन्यादीनि च पृथिवीधात्वादीनां लक्षणानि तेभ्यो नान्यानि, यथा चोर्ध्वगमनेन दूराद् धूमस्य धूमत्वं लक्ष्यते, न च तत् तस्मादन्यत्, स एवात्र न्यायः स्यात् ।

---

तदन्येषां तु स्थित्यन्यथात्वमपीति। अपर आह—अन्त्यानामपि शब्दार्चिः-क्षणप्रभृतीनां स्थितिरस्ति यत् स्वावस्थानम्, तस्याश्चान्यथात्वं पूर्वक्षणापेक्ष-मिति, तेषामपि त्रीणि संस्कृतलक्षणानि व्यवस्थाप्यन्त इति।

*कथमिदानीं स एव धर्मो लक्ष्यः। तस्यैव च लक्षणमिति*। लक्ष्यलक्षणयो-र्जलबालकावदन्यत्वं पश्यन्तश्चोदयन्ति। तद् व्यभिचारयन्तः *सौत्रान्तिका* आहुः—*कथं तावन्महापुरुषलक्षणानीत्यादि*। महापुरुषलक्षणानि महापुरुषसंगृ-हीतत्वान्नातोऽन्यानि। ब्रूयात्—न महापुरुषलक्षणमात्रं महापुरुषः, धर्ममात्रं त्वभूत्वा भवति भूत्वा च न भवतीत्यदृष्टान्त एषः ?

अत्र ब्रूमः—सममेवैतत्। यथा हि महापुरुषलक्षणानि महापुरुषाख्यानि महापुरुषलक्षणाख्यानि च भवन्ति, एवं संस्कृतो धर्मः संस्कृतश्चोच्यते संस्कृत-लक्षणं च। उत्पादादिलक्षणेन ह्यवस्थाविशेषेण स धर्मो लक्ष्यते। यदा च प्रवाहलक्षणव्यवस्था क्रियते, तदा समुदायिभिः समुदायो लक्ष्यते, यथा—महापुरुषसंज्ञः समुदायो महापुरुषलक्षणैः समुदायिभिरिति। एतेन सास्नादीनि लक्षणानि व्याख्यातानि। *काठिन्यादीनि* चेति विस्तरः। उभयसिद्धोऽयं दृष्टान्तः; प्रवचनसिद्धत्वात्। कठिनलक्षणो हि पृथिवीधातुरुच्यते, न च पृथिवीधातोरन्यत् काठिन्यम्। एवं सर्वत्र योज्यम्। स एव हि पृथिवीधातुः कठिनो लक्ष्यमाणः कठिनलक्षण उच्यते। एतदेव संस्कृतमभूत्वाभवद्भूत्वाचाभवल्लक्ष्यमाणं संस्कृतलक्षणमुच्यते, लक्ष्यत इति लक्षणमिति कृत्वा। न च तत् तस्मादन्यत्। *यथा चोर्ध्वगमनेनेति*। विस्तरः—क्षणिकवादिनो *वैभाषिकस्य* धूमस्योर्ध्वगमनं नान्यदस्ति। स एवोर्ध्वदेशान्तरेषु निरन्तरमुत्पद्यमानं ऊर्ध्वगमनावस्थां लभते। तदूर्ध्वगमनं ततो भिन्नमिव लक्ष्यते, न च धूमस्योर्ध्वगमनत्वमन्यदिष्यते। *न च तत् तस्मादन्यत्*। न च तदूर्ध्वगमनं तस्माद् धूमादन्यत्। *स एवात्र न्याय* इति। एवमुत्पादो विनाशोऽन्यथात्वं च ततो भिन्नमिव लक्ष्यते, न च संस्कृतस्य संस्कृतमन्यद् भवतीति।

---

१. का० पुस्तके नास्ति।

न च संस्कृतानां रूपादीनां तावत् संस्कृतत्वं लक्ष्यते, गृह्णतापि स्वभावम्, यावत् प्रागभावो न ज्ञायते पश्चाच्च सन्ततेश्च विशेषः। तस्मान्न तेनैव तल्लक्षितं भवति। न च तेभ्यो द्रव्यान्तराण्येव जात्यादीनि विद्यन्ते।

अथापि नाम द्रव्यान्तराण्येव जात्यादीनि भवेयुः ? किमयुक्तं स्यात् ? एको धर्मः एकस्मिन्नेव काले जातः स्थितो जीर्णो नष्टः स्यादेषां सहभूतत्वात्[1] ? न; कारित्रकालभेदात्। अनागता हि जातिः कारित्रं[2] करोति। यस्मान्न जातं जन्यते। जनिते तु धर्मे वर्त्तमानाः क्षित्यादयः कारित्रं कुर्वन्तीति न यदा जायते तदा तिष्ठति, विनश्यति वा।

इदं तावदिह सम्प्रधार्यं भवेत्—किमनागतं द्रव्यतोऽस्ति नास्तीति पश्चाज्जनयति वा न वेति सिध्येत्। सत्यपि तु तस्मिन् जातिः कारित्रं कुर्वती कथमनागता सिध्यतीत्यनागतलक्षणं वक्तव्यम्। उपरतकारित्रा चोत्पन्ना कथं वर्त्तमाना

---

*न च संस्कृतानां रूपादीनां तावत् संस्कृतत्वं लक्ष्यते गृह्णतापि स्वभावम्।* गृह्णतापि रूपादीनां स्वभावम्। यावत् *प्रागभावो* न ज्ञायते। यावत् तेषां रूपादीनां प्रागुत्पत्त्यभावो न ज्ञायते। *पश्चाच्च।* किम् ? *अभावः*, प्रागभावश्च प्रध्वंसाभावश्च यावन्न ज्ञायते। *सन्ततेश्च विशेषः।* यावन्न ज्ञायत इति वर्त्तते। *तस्मान्न तेनैव तल्लक्षितं भवति।* न तेनैव संस्कृतत्वेन संस्कृतत्वं लक्ष्यते। किं तर्हि ? प्रागभावादिभिस्तत् संस्कृतत्वं लक्ष्यते। यदि हि रूपादीनां स्वभावम् गृह्णन् संस्कृतमिति गृह्णीयात्, प्रागभावं पश्चादभावं न सन्ततेश्च विशेषमज्ञात्वा तेनैव तल्लक्षितं स्यात्। न त्वेवं जानीत इति। *न तेनैव तल्लक्षितं भवति। न च तेभ्योऽपि* रूपादिभ्यो *द्रव्यान्तराण्येव जात्यादीनि विद्यन्ते।* 'जातिरादिः प्रवाहस्य' इति विस्तरेण वचनात्।

एषां *सहभूतत्वात्।* जात्यादीनां समानकालोत्पादत्वात्। *न; कारित्रकालभेदादिति।* नैतदेवम्; कस्मात् ? कारित्रकालभेदात्, पुरुषकारकालभेदादित्यर्थः। तत् प्रतिपादयन्नाह—*अनागता हि जातिः कारित्रं करोतीति* विस्तरः।

*किमनागतं द्रव्यतोऽस्ति नास्तीति।* अनागतमेव तावद् द्रव्यतो नास्तीति प्रतिपादयिष्यते। कुतोऽनागता जातिः कारित्रं करोतीत्यभिप्रायः। *सत्यपि तु तस्मिन्निति।* सत्यपि तु द्रव्यतोऽनागते जातिरनागतावस्थाया कारित्रं कुर्वती कथमनागता *सिध्यति।* अप्राप्तकारित्रं ह्यनागतमिति सिद्धान्तः, स

---

१. सहभूत्वात्—का०। २. कारित्रं हि—का०।

सिद्धयतीति वर्तमानलक्षणं वक्तव्यम् ।

स्थित्यादयोऽपि च युगपत् कारित्रे वर्तमाना एकक्षण एव धर्मस्य स्थित-जीर्णविनष्टतां प्रसज्येयुः । यदैव ह्येनं स्थितिः स्थापयति तदैव जरा जरयति अनित्यता विनाशयतीति । किमयं तत्र काले तिष्ठतु, आहोस्विज्जीर्यतु विनश्यतु वा ।

योऽपि हि ब्रूयात्—स्थित्यादीनामपि कारित्रं क्रमेणेति ? तस्य क्षणिकत्वं बाध्यते ।

अथाप्येवं ब्रूयात्—एष एव हि नः क्षणो यावतैतत् सर्वं समाप्यत इति ? एवमपि ताभ्यां सहोत्पन्ना स्थितिस्तावत् स्थापयति, न तु जरा जरयति, अनित्यता वा विनाशयतीति । कुत एतत् ? स्थितेर्बलीयस्त्वात् । पुनः केनाबलीयस्त्वम् ? यदेनां[1] सह धर्मेणानित्यता निहन्ति[2] ।

कृतकृत्या पुनः कर्तुं नोत्सहते जातिवत् । स्थातुर्युक्तमनुत्सोढुम् ।

---

विरुध्येत, तस्माद् तद् वक्तव्यम् । *कथं वर्त्तमाना सिध्यतीति* । उपरतकारित्रोऽतीत इष्यते, जातिश्चानागतैव । उपरतकारित्रे हि वर्तमानावस्थायामेवातीता प्राप्नोतीति न वर्त्तमाना भवेदिति *वर्त्तमानलक्षणं वक्तव्यमिति* । अपरिसमाप्त-कारित्रो वर्त्तमान इति चेत् ? अतीतो वर्त्तमानः स्यात्, अतीतस्यापि हि फल-दानकारित्रमिष्यते । *यदैव ह्येनं स्थिति*रिति । विस्तरः–स्थितिजराविनाशवृत्तयो ऽन्योन्यविप्रतिषिद्धाः । न हि स एव धर्मस्तिष्ठति च जीर्यति च विनश्यति चेति युक्तो [illegible] । *तस्य क्षणिकत्वं बाध्यत* इति । प्रथमं स्थितिः स्थापयति, ततो जरा जरयति, ततोऽनित्यता विनाशयति । क्षणत्रयावस्थानात् क्षणिकत्वं बाध्यत इति ।

*एष एव हि नः क्षण* इति । कार्यपरिसमाप्तिलक्षणः, न तूत्पत्त्यनन्तरविनाश-लक्षण इत्यर्थः । *एवमपीति* विस्तरः । सहोत्पन्नानां क्रमेण कारित्रं न युज्यते । कुत एतत् ? *स्थितिस्तावत् स्थापयति* । न तु तस्मिन् काले *जरा जरयति*, *नाप्य-नित्यता विनाशयतीति* । *पुनः केनाबलीयस्त्वम्* । पश्चात् केनाबलीयस्त्वम् । *यदेनां* यस्मादेनां स्थितिं *सह धर्मेण* यस्यासौ स्थितिः । तेन धर्मेण *सहानित्यता निहन्ति* ।

*कृतकृत्या पुनः कर्तुं नोत्सहते जातिवदिति* । यथा जातिः कृतकृत्या जन्यं जनयित्वा परिक्षीणशक्तिर्न पुनर्जनयति, तथा स्थितिरपि तद्वदेव न पुनः स्था-

---

१. यदैनां—का० । २. हन्ति—का० ।

न हि शक्यं जात्यादिजन्यं वर्त्तमानतामानीतं पुनरानेतुम्। शक्यं तु खलु स्थित्या स्थाप्यमत्यन्तं[1] स्थापयितुम्। अतो न युक्तं यन्नोत्सहते।

को वाऽत्र प्रतिबन्धः ? ते एव जराऽनित्यते। यदि हि ते बलीयस्यौ स्याताम्, पूर्वमेव स्याताम्। निवृत्तकारित्रायां खल्वपि स्थितौ ते अपि[2] न तिष्ठतः, स चापि धर्म इति, कथं[3] कुत्र वा कारित्रं कर्त्तुमुत्सहिष्येते, किं वा पुनस्ताभ्यां कर्त्तव्यम् ?

स्थितिपरिग्रहाद्धि स धर्म उत्पन्नमात्रो न व्यनश्यत्। स तु तयाऽप्युपेक्ष्यमाणो[4] नियतं न स्थास्यति—अयमेवास्य विनाशः।

स्याच्च तावदेकस्य धर्मस्योत्पन्नस्याविनाशः स्थितिः, विनाशोऽनित्यता। जरा तु खलु सर्वथात्वेन न तथा; पूर्वापरविशेषात्, विपरिणामाच्च। अतस्तदन्यथात्वेऽन्य एव। उक्तं हि—

"तथात्वेन जराऽसिद्धिरन्यथात्वेऽन्य एव सः।
तस्मान्नैकस्य भावस्य जरा नामोपपद्यते"॥ ( )

---

पयतीति। *न हि शक्यमिति* विस्तरः। *न वर्त्तमानतामानीतं जन्यं पुनरानेतुं शक्यते*; अनवस्थाप्रसङ्गात्। *शक्यं तु खलु स्थित्या स्थाप्यमत्यन्तं स्थापयितुम्*; स्थितेर्विनाशप्रतिबन्धलक्षणत्वात्।

*ते एव जरानित्यते* इति। ते एव जरानित्यते प्रतिबन्धः, येन स्थितिः स्थाप्यमत्यन्तं स्थापयितुं न शक्नोति। जरा हि स्थितिं दुर्बलीकरोति, दुर्बलामनित्यता निहन्तीति।

*आचार्य* आह—*यदीति* सर्वम्। यदि *हि ते जरानित्यते बलीयस्यौ स्यातां पूर्वमेव स्यातां* स्थितिकारित्रकाले। यतः सा स्थितिर्न लभते कारित्रं कर्त्तुम्। *निवृत्तकारित्रायामिति*। विस्तरः—यदा निवृत्तिकारित्रा स्थितिः, तदा *ते अपि* जरानित्यते *न तिष्ठतः, स चापि धर्मः*। स्थितिकारित्राद्धि तेषां स्थितिः कल्पते। तस्मात्ते अपि न तिष्ठतः। *कथ*मतिष्ठन्त्यौ जरानित्यते *कुत्र वा* धर्मिण्यतिष्ठति *कारित्रं कर्तुम् उत्सहिष्येते। किं वा पुनस्ताभ्यां* जरानित्यताभ्यां *कर्त्तव्यम्*।

*स्थितिसामर्थ्याद्धि स धर्म उत्पन्नमात्रो* न विनष्टोऽभूत्। *स तया* उपरतकारित्रया स्थित्या*प्युपेक्ष्यमाणो*ऽस्थाप्यमानो ध्रुवं *न स्थास्यतीति अयमेवास्य विनाशो* यदिदमनवस्थानम्। किं पुनर्जरानित्यताभ्यां कार्यमित्यभिप्रायः। न च तस्मादेव

---

१. ०त्यन्तमपि—का०। २. चापि—का०।
३. का० पुस्तके नास्ति। ४. व्युपेक्ष्यमाणो—का०।

योऽप्याह **निकायान्तरीयः**—"विनाशकारणं प्राप्यानित्यता विनाशयति" इति ? तस्य 'हरीतकीं प्राप्य देवता विरेचयति' इत्यापन्नं भवति, किं पुनस्तां कल्पयित्वा ! तत एवास्तु विनाशकारणाद् विनाशः, चित्तचैत्तानां च क्षणिकत्वाभ्युपगमात् तदनित्यताया विनाशकारणानपेक्षत्वात् स्थित्यनित्यते कारित्रमभिन्नकालं कुर्यातामित्येकस्यैकत्र काले स्थितिविनष्टता सम्प्रसज्यते[1]। तस्मात् प्रवाहं प्रत्येतानि संस्कृतलक्षणान्युक्तानीति, एवमेतत् सूत्रं सुनीतं भवति ।

अपि च—यद्यनागता जातिर्जन्यस्य जनिका, किमर्थं सर्वमनागतं युगपन्नोत्पद्यते ? यस्मात्

**जन्यस्य जनिका जातिर्न हेतुप्रत्ययैर्विना ॥ ४६ ॥**

न हि विना हेतुप्रत्ययसामग्र्या जातिर्जनिका भवति ।

हेतुप्रत्ययानामेव तर्हि सामर्थ्यं पश्यामः; सति सामग्र्ये भावाद्, असति चाभावात् । न जातेरिति हेतुप्रत्यया एव जनकाः सन्तः ।

---

तस्यान्यप्रकारता युज्यत इति ? यदि स एव नासावन्यथा, अथान्यथा न स एव । ययोर्ह्यन्यथात्वं तयोरन्यत्वं दृष्टम्; तद्यथा—देवदत्तयज्ञदत्तयोः ।

*योऽप्याह निकायान्तरीय* इति । *आर्यसम्मतीयः* । स घटादेर्मुद्गरादिकृतो विनाश इति मन्यते । कालान्तरावस्थायि हि तस्य रूपम् । चित्तचैत्तानां च क्षणिकत्वम् । अत उच्यते—*चित्तचैत्तानां च क्षणिकत्वाभ्युपगमात् तदनित्यताया*-श्चित्तचैत्तानित्यताया *विनाशकारणानपेक्षत्वात्* स्वयं विनश्वरत्वात् *स्थित्यनित्यते कारित्रं* युगपत् *कुर्याताम्* । अत एकस्य चित्तस्य चैत्तस्य वा युगपत् *स्थितिविनष्टता* अन्योन्यविरुद्धापि *सम्प्रसज्यते* । *एवमेतत् सूत्रं सुनीतमिति* । यदेतत्—"त्रीणीमानि भिक्षवः संस्कृतस्य संस्कृतलक्षणानि" इति ।

*सति सामग्र्ये भावात्, असति चाभावात्* इति । सति हेतुप्रत्ययानां सामग्र्ये भावात् जन्यस्य, असति चाभावात् । *न जातेः* । किम् ? 'सामर्थ्यम् पश्यामः' इत्यधिकृतम् । न हि हेतुप्रत्ययसामग्र्येऽपि तज्जन्यं कदाचिद् भवति, कदाचिन्न भवति ।

*अत्र भदन्तानन्तवर्माऽऽह*—यथा चक्षुर्न विनालोकादिभिश्चक्षुर्विज्ञानं जनयति, न चातस्तदुत्पत्तौ न कारणम्, एवं जातिर्न विना हेतुप्रत्ययैर्धर्मं जनयति; न चातस्तदुत्पत्तौ न कारणमिति ?

---

१. सम्प्रसज्येत—का० ।

किं च भोः सर्वं विद्यमानमुपलभ्यते, सूक्ष्मा अपि हि[1] धर्मप्रकृतयः संविद्यन्ते । जातमित्येव तु न स्याद्, असत्यां जातौ षष्ठीवचनं च —रूपस्योत्पादः इति, यथा—रूपस्य रूपमिति । एवं यावदनित्यता यथायोगं वक्तव्या ।

तेन तर्ह्यनात्मत्वमप्येष्टव्यमनात्मबुद्धिसिद्ध्यर्थम् । संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसत्तादयोऽपि तीर्थकरपरिकल्पिता अभ्युपगन्तव्या एकद्विमहदणु-

अत्रोच्यते—असमानमेतत् । चक्षुर्हि दृष्टसामर्थ्यं सत्स्वालोकादिष्वन्धान-

*सूक्ष्मा अपि हि धर्मप्रकृतय* इति । तद्यथा स्पर्शादीनां चैतसिकानां प्रकृतयः स्वभावाः दुःपरिच्छेद्यत्वात् सूक्ष्माः । अस्त्येतदेवम्; अदृश्यमानोऽपि कश्चिद्धर्मः कारित्रेण निर्धार्यते, न त्वेवं जातिः कारित्रेण निर्धार्यते । स्पर्शस्य हि कारित्रं *भगवतैव* निर्धारितम्—'यः कश्चिद् वेदनास्कन्धः संज्ञास्कन्धः संस्कारस्कन्धः सर्वः स स्पर्शं प्रतीत्य' इति विस्तरः ।

*जातमित्येव तु न स्यादसत्यां जाताविति* । स्वलक्षणापेक्षा रूपे रूपबुद्धिः । न तु जातमिति स्वलक्षणापेक्षा जातबुद्धिः; वेदनादिष्वपि भावात् । तस्मादर्थान्तरभूतजातिद्रव्यापेक्षेयं जातबुद्धिरिति निर्धार्यते । *षष्ठीवचनं च न स्याद्-रूपस्योत्पाद* इति । वैयधिकरण्ये हि षष्ठीनिर्देशः, न सामानाधिकरण्ये, तेनाह—*यथा रूपस्य रूपमिति* । वैधर्म्यदृष्टान्त एषः । यथा रूपं रूपादन्यदिति कृत्वा षष्ठीनिर्देशो न भवति—रूपस्य रूपमिति, तथा रूपस्योत्पाद इति न स्यात् । तस्माज्जातिनिमित्तोऽयं षष्ठीनिर्देश इति गम्यते । *एवं यावदनित्यता यथायोगं वक्तव्येति* । स्थितमेव तु न स्यादसत्या स्थितौ । षष्ठीवचनं च—रूपस्य स्थितिरिति, यथा—रूपस्य रूपम् इति । जीर्णमित्येव तु न स्यात् रूपस्य जरायाम् । षष्ठीवचनं च—रूपस्य जरेति, यथा रूपस्य रूपमिति । तथा विनष्टमित्येव तु न स्यादसत्यामनित्यतायाम् । षष्ठीवचनं च—रूपस्य विनाश इति, यथा रूपस्य रूपमिति ।

*तेन तर्हीति विस्तरः* । यदि जातमित्येवमादिबुद्धिसिद्ध्यर्थं षष्ठीविधानार्थं च जात्यादयः कल्प्यन्ते, [illegible] न हि निर्निमित्तानात्मबुद्धिर्भवितुमर्हति । अथानात्मत्वं प्रज्ञप्तिसदिष्यते, तन्निमित्ता नात्मबुद्धिः ? जात्याद्यपि प्रज्ञप्तिसदेष्टव्यम् । तन्निमित्ता च [illegible] । साधनं चात्र "प्रज्ञप्तिसज्जात्यादि, द्रव्यसदपेक्ष्य गृह्यमाणत्वादनात्मत्ववत्" इति । *सत्तादयोऽपीति* । आदिशब्देन द्रव्यत्वरूपघटत्वादि गृह्यते । एकं रूपं द्वे रूपे महदणु

१. का० पुस्तके नास्ति ।

पृथक्संयुक्तविभक्तपरापरसदादिबुद्धिसिद्ध्यर्थम्[1]। षष्ठीविधानार्थं च—रूपस्य संयोग इति। एषा च षष्ठी कथं कल्प्यते—रूपस्य स्वभाव इति। तस्मात् प्रज्ञप्तिमात्रमेवैतदभूत्वाभावज्ञापनार्थं क्रियते जातमिति।

स चाभूत्वाभावलक्षण उत्पादो बहुविकल्पः। तस्य विशेषणार्थं रूपस्योत्पाद इति षष्ठीं कुर्वन्ति—यथा रूपसंज्ञक एवोत्पादः प्रतीयेत, माऽन्यः प्रत्यायीति। तद्यथा—चन्दनस्य गन्धादयः, शिलापुत्रकस्य शरीरमिति।

एवं स्थित्यादयोऽपि यथायोगं वेदितव्याः।

यदि जात्या विना जायते, कस्मादसंस्कृतमप्याकाशादिकं न जायते?

---

पृथक् संयुक्तं विभक्तं परमपरं सद् रूपमिति। तथा द्रव्यमेतद्, रूपमिदम्, घटोऽयमित्येवमादिबुद्धिसिद्ध्यर्थं संख्यादयोऽपि *वैशेषिक*परिकल्पिता अभ्युपगन्तव्याः। *षष्ठीविधानार्थं च रूपस्य संयोग* इति। संयोगग्रहणमुदाहरणमात्रम्। रूपस्य विभागः, परत्वापरत्वमित्येवमाद्यपि योज्यम्। *एषा च षष्ठी कथं कल्प्यते—रूपस्य स्वभाव* इति। न हि *वैभाषिकाणां* रूपादन्यो रूपस्य स्वभाव इष्टः। *जातमिति*। जातमेव न विनष्टमित्यभूत्वाभावज्ञापनार्थं क्रियते प्रज्ञप्तिः।

*बहुविकल्प* इति। बहुभेदो रूपवेदनादिभेदात्। *तस्य विशेषणार्थं रूपस्योत्पाद* इति। न वेदनादीनामुत्पाद इति विशेषणार्थं *षष्ठीं कुर्वन्ति। मा अन्यः प्रत्यायि* रूपसंज्ञक *एवोत्पादो* न वेदनादिसंज्ञक इति। दृष्टान्तं कथयन्ति—*चन्दनस्य गन्धादयः, शिलापुत्रकस्य शरीरमिति*। अनर्थान्तरभावेऽपि षष्ठीनिर्देशः क्रियते। गन्धादिसमूहमात्रं हि चन्दनमिति बौद्धसिद्धान्तः। *वैशेषिक*सिद्धान्तापेक्षया त्वसिद्धश्चन्दन इत्यपरो दृष्टान्तः उपन्यस्यते—शिलापुत्रकस्य शरीरमिति। शिलापुत्रकशरीरयो*र्वैशेषिका*णामपि सिद्धान्ते नार्थान्तरभावः। भवति च षष्ठीनिर्देशः। अर्थान्तरपरिकल्पकृतो हि तथा निर्देशः।

*एवं स्थित्यादयोऽपि यथायोगं वेदितव्या* इति। तस्मात् प्रज्ञप्तिमात्रमेवेदं प्रवाहावस्थानज्ञापनार्थं क्रियते—स्थितमिति। स च प्रवाहावस्थानलक्षणा स्थितिर्बहुविकल्पा। तस्या विशेषणार्थं रूपस्य स्थितिरिति षष्ठीं कुर्वन्ति, यथा रूपसंज्ञकैव स्थितिः प्रतीयेत, मान्याः प्रत्यायीति। तथा प्रज्ञप्तिमात्रमेवैतत् पूर्वापरविशेषज्ञापनार्थं क्रियते—जीर्णमिति। सा च पूर्वापरविशेषलक्षणा जरा बहुविकल्पा। तस्या विशेषणार्थं रूपस्य जरेति षष्ठीं कुर्वन्ति, यथा रूपसंज्ञकैव जरा प्रतीयेत, मान्या प्रत्यायीति। तथा प्रज्ञप्तिमात्रमेवैतत् प्रवाहनिवृत्तिज्ञापनार्थं क्रियते—विनष्टमिति। स च प्रवाहनिवृत्तिलक्षणो विनाशो बहुविकल्पः।

---

१. ◦वियुक्त◦—का◦।

जायत इत्यभूत्वा भवति। असंस्कृतं च नित्यमस्तीति न जायते। यथा च धर्मतया न सर्वं जातिमदिष्यते, तथा न सर्वं जायत इत्येष्टव्यम्। यथा च तुल्ये जातिमत्त्वे तदन्ये प्रत्ययास्तदन्यस्योत्पादने न समर्था भवन्ति, एवमेवासंस्कृतस्योत्पादने सर्वेऽप्यसमर्थाः स्युः।

सिद्धा एव तु द्रव्यभावेन जात्यादय इति **वैभाषिकाः**। न हि दूषकाः सन्तीत्यागमा अपास्यन्ते, न हि मृगाः सन्तीति यवा नोप्यन्ते, न हि मक्षिकाः पतन्तीति मोदका न भक्ष्यन्ते। तस्माद्दोषेषु प्रतिविधातव्यम्, सिद्धान्तश्चानुसर्तव्यः[1] ॥ ४६ ॥

उक्तानि लक्षणानि ॥

---

तस्य विशेषणार्थं रूपस्य विनाश इति षष्ठीं कुर्वन्ति, यथा रूपसंज्ञक एव विनाशः प्रतीयेत, मान्यः प्रत्यायीति। सर्वत्र च दृष्टान्तद्वयं वक्तव्यम्। तद्यथा चन्दनस्य गन्धादयः, शिलापुत्रकस्य शरीरमिति।

*यथा च धर्मतयेति*। धर्मता धर्मप्रकृतिः, धर्मस्वभावः, धर्मशैलीत्यर्थः। धर्मता धर्मप्रकृतिरिति कुत एतत्? चक्षुः समृद्धे शून्यं नित्येन ध्रुवेण शाश्वतेनाविपरिणामधर्मेणात्मनात्मीयेन च। तत् कस्य हेतोः? प्रकृतिरस्यैषेति। यथा च *न सर्वं जातिमदिष्यते* आकाशादि, *तथा* धर्मतया *न सर्वं जायत इत्येष्टव्यम्*। न ह्यत्र किञ्चित् कारणमस्ति यत् संस्कृतमेव जातिमद् भवति, नासंस्कृतमित्यन्यत्र धर्मतायाः। एवमसत्यामपि जातौ संस्कृतमेवोत्पद्यते, नासंस्कृतमिति। यथा च *तुल्यजातिमतां* केषाञ्चिद् रूपवेदनादीनाम्। *तदन्ये प्रत्ययाः*, तेभ्यः रूपोत्पत्तिप्रत्ययेभ्योऽन्येवेदनाद्युत्पत्तिप्रत्ययास्तदन्ये, ते तदन्ये प्रत्ययास्तदन्यस्योत्पादने *न समर्था भवन्ति*। तेभ्यो वेदनादिभ्योऽन्यत् तदन्यत्, किं तत्? रूपम्, तस्य तदन्यस्य ते वेदनादिप्रत्यया उत्पादने यथा न समर्था भवन्ति; एवम*संस्कृतस्याकाशादेरुत्पादने सर्वेऽपि* रूपवेदनादिप्रत्यया न *समर्थाः* स्युरिति। पूर्वं स्वभावनियमेनोक्तम्, इदानीं शक्तिनियमेनेति।

*न हि दूषकाः सन्ति* इति। विस्तरः—*यथा न मृगाः सन्तीति यवा नोप्यन्ते*। उप्यन्त एवेत्यर्थः। द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः *यथा न मक्षिकाः पतन्तीति मोदका न भक्ष्यन्ते*। किं तर्हि? भक्ष्यन्त एव। तथा न दूषकाः सन्तीत्यागमोऽभिधर्मशास्त्राण्यपास्यन्ते। *तस्माद्दोषेषु प्रतिविधातव्यम्*, दोषेषु परव्यवस्थापितेषु परिहारः कर्तव्यः। *सिद्धान्तश्चानुसर्तव्यः*। न परित्याज्य इत्यभिप्रायः ॥ ४६ ॥

---

१. ०नुवर्तितव्यः—का० ।

नामकायादयः कतमे ?

**नामकायादयः संज्ञावाक्याक्षरसमुक्तयः ।**

आदिग्रहणेन पदव्यञ्जनकायग्रहणम् ।

तत्र संज्ञाकरणं नाम, तद्यथा—रूपम्, शब्द इत्येवमादिः !

वाक्यं पदम्, यावताऽर्थपरिसमाप्तिः, तद्यथा—"अनित्या बत संस्कारा:" इत्येवमादि, येन क्रियागुणकालसम्[illegible]विशे[illegible] गम्यन्ते ।

---

*"नामकायादयः संज्ञावाक्याक्षरसमुक्तयः"* इति । *संज्ञासमुक्तयो* नामकायाः, *वाक्यसमुक्तयः* पदकायाः, *अक्षरसमुक्तयो* व्यञ्जनकायाः ।

*संज्ञाकरणमिति* लोकभाषेयम् । संज्ञाकरणम्, नामधेयमिति पर्यायः । तथा हि लोके वक्तारो भवन्ति—'देवदत्तः' इति अस्य संज्ञाकरणमिति । संज्ञायाः करणं संज्ञाकरणम्, येन संज्ञा चैतसिको धर्मः क्रियते जन्यते । संज्ञैव वा करणं संज्ञाकरणम् । संज्ञाग्रहणं [illegible]. करणग्रहणं चैतसिकविशेषणार्थम् । यदि हि संज्ञा नामेत्युच्येत, चैतसिकोऽपि [illegible] भाव्येत । ततः पुनः संज्ञाकरणं नाम *रूपं शब्दो* रसो गन्धो वेत्येवमादि ।

*वाक्यं पदमिति* । पद्यते गम्यतेऽनेनेति । पदं तु सुप्तिङन्तं पदं गृह्यते । तेनाह—*यावतार्थपरिसमाप्तिस्तद्यथा "अनित्या बत संस्काराः"* इत्येवमादीति । आदिशब्देन "उत्पादव्ययधर्मिणः, उत्पद्य हि निरुध्यन्ते, तेषां व्युपशमः सुखम्" इत्येवमादि ।

अस्या गाथाया एवमर्थं व्याचक्षते—'अनित्या बत संस्काराः' इति प्रतिज्ञा, 'उत्पादव्ययधर्मिणः' इति हेतुः, यस्मादुत्पादव्ययधर्मवन्तस्तस्मादनित्या इति परिच्छिद्यन्ते । 'उत्पद्य हि निरुध्यन्ते' इति दृष्टान्तः । य उत्पद्यन्ते निरुध्यन्ते च तेऽनित्याः । तद्यथा–घटादयः, यथा च संस्कारा इति । *अपरे* पुनर्व्याचक्षते–असिद्धहेतुसाधनार्थमेतदिति ! कथमेतद्गम्यते ? उत्पादव्ययधर्मिणस्त इति, यस्मादेते उत्पद्य निरुध्यमाना दृष्टा इति । *अपरे* वर्णयन्ति—अनित्या बत संस्कारा उत्पादव्ययधर्मिण इति [illegible] । कस्माद् ? इत्याह—यस्मादुत्पद्य निरुध्यन्त इति हेतुवचनम् । तेषां व्युपशमः सुखम् । ये ह्यनित्यास्ते दुःखा, अतस्तेषां व्युपशमः सुखमिति विनेयजनं नियोजयति ।

*येन क्रियागुणकालसम्बन्धविशेषा गम्यन्ते* । साव्ययकारकविशेषणं वाक्यमिति वाक्यविदो वदन्ति । तद्यथा—पचति पठति गच्छतीति, कृष्णो गौरो रक्तः इति, पचति पक्ष्यत्यपाक्षीदिति क्रियागुणकालानां सम्बन्धविशेषा गम्यन्ते तत् पदम् । तथा हि सामान्ये वर्त्तमानानां पदानां यद्विशेषेऽवस्थानं स वाक्यार्थ

व्यञ्जनम् = अक्षरम्, तद्यथा—अ, आ इत्येवमादि ।

ननु चाक्षराण्यपि लिप्यवयवानां नामानि ? न वै लिप्यवयवानां प्रत्यायनार्थमक्षराणि प्रणीतानि, अक्षराणामेव तु प्रत्यायनार्थं लिप्यवयवाः प्रणीताः । कथमश्रूयमाणानि लेख्येन प्रतीयेरन्निति नाक्षराण्येषां नामानि ।

एषां च संज्ञादीनां समुक्तयो नामादिकायाः । "उच समवाये" ( मा० धा० ४.११४ ) पठन्ति, तस्य 'समुक्तिः' इत्येतद् रूपं भवति । योऽर्थः समवाय इति, सोऽर्थः समुक्तिरिति ।

तत्र नामकायस्तद्यथा—रूपशब्दगन्धरसस्प्रष्टव्यानीत्येवमादि ।

पदकायस्तद्यथा—"सर्वे संस्कारा अनित्याः", "सर्वे धर्मा अनात्मानः", "शान्तं निर्वाणम्", इत्येवमादि ।

व्यञ्जनकायस्तद्यथा—क, ख, ग, घ, ङेत्येवमादि ।

ननु च [1] ते [1] वाक्स्वभावत्वाच्छब्दात्मका इति रूपस्वभावा भवन्ति, कस्माच्चित्तविप्रयुक्ता इत्युच्यन्ते ? नैते वाक्स्वभावाः । घोषो हि वाक्, न च घोष-

---

इत्याहुः । तदेव स्वलक्षणाभिद्योतकं नाम क्रियादिसम्बन्धविशेषाभिद्योतकं पदमित्युक्तं भवति ।

*व्यञ्जनमक्षरमिति* । वर्ण इत्यर्थः । न तु हल् एव; अचामपि व्यञ्जनकत्वेनेष्टत्वात् ।

*ननु चाक्षराण्यपि लिप्यवयवानां नामानीति* । लिपयो मनुष्यादिभिः पत्त्रादिषु ये लिखिताः, तेषामक्षराणि नामानि । रूपनामग्रहणे रूपप्रतीतिवद् व्यञ्जनग्रहणे लिपिप्रतीतिः । अतो व्यञ्जनमपि लिप्यवयवानां नाम भवतीति लक्षणसाङ्कर्यम् । ततश्च यदभिप्रेतम्—नाम्नो व्यतिरिक्तमन्यदेव व्यञ्जनमक्षरमिति, तन्नोपपद्यते । *न वै लिप्यवयवानामिति* । विस्तरः—विपरीतमेतदिति व्याचष्टे । यत्तु व्यञ्जनग्रहणे लिपिप्रतीतिरिति, तत् प्रत्याय्यप्रत्यायकभावेन संकेतितत्वात्, न तु तन्नामभावात् ।

*समुक्तिरिति* । *'उच समवाये'* ( मा० धा० ४ ११४ ) इत्येतस्य धातोः क्तिनि 'समुक्तिः' इत्येतद् रूपं भवति ।

*योऽर्थः समवाय इति सोऽर्थ समुक्तिरिति* । समवाय इत्यर्थः ।

ननु च ते इति । *सौत्रान्तिकवचनम्* । *नैते वाक्स्वभावा* इति । विस्तरेण *वैभाषिकवचनम्* । *न च घोषमात्रेणेति*, नानक्षरात्मकेन घोषेणा*र्थोऽवगम्यते*,

---

१–१. चैते—का० ।

मात्रेणार्थाः प्रतीयन्ते । किं तर्हि ? वाङ् नाम्नि प्रवर्त्तते, नाम अर्थं द्योतयति ।

न[1] वै[1] घोषमात्रं वाक्, येन तु घोषेणार्थः प्रतीयते स घोषो वाक् ।

केन पुनर्घोषेणार्थः प्रतीयते ? योऽर्थेषु कृतावधिर्वक्तृभिः, तद्यथा—गौरित्येष शब्दो नवस्वर्थेषु कृतावधिः—

"वाग्दिग्भूरश्मिवज्रेषु पश्वक्षिस्वर्गवारिषु ।
नवस्वर्थेषु मेधावी गोशब्दमुपधारयेत्" ॥ (          ) इति ।

योऽपि हि मन्यते—नामार्थं द्योतयतीति ? तेनाप्येतदवश्यमभ्युपगन्तव्यं यदि प्रतीतपदार्थकं भवतीति । तच्चैतच्छब्दमात्राद्[2] प्रतीतपदार्थकात् सिध्यतीति किमर्थान्तरं नाम कल्पयित्वा ।

इदं चापि न ज्ञायते—कथं वाङ् नाम्नि वर्त्तत इति, किं तावदुत्पादयति ? आहोस्वित् प्रकाशयति ? यद्युत्पादयति, घोषस्वभावत्वाद् वाचः सर्वं घोषमात्रं नामोत्पादयिष्यति । यादृशो वा घोषविशेष इष्यते नाम्न उत्पादकः, स एवार्थस्य द्योतको भविष्यति । अथ प्रकाशयति, घोषस्वभावत्वाद् वाचः सर्वं घोषमात्रं

---

*किं तर्हि ? वाङ्नाम्नि प्रवर्तते*, तन्नामात्मरूपतामिव वाच आपादयदर्थत्वं *द्योतयति* । तां वाचमुपादाय पदार्थं द्योतयति, प्रत्याययतीत्यर्थः ।

*सौत्रान्तिक आह—न वै घोषमात्रं वागिति* । विस्तरः—न वयं घोषमात्रं वागिति वर्णयामः, कश्चिदेव तु घोषो वर्णात्मकः । *सैव वाग्योऽर्थेषु कृतावधिः* । कृतमर्यादः । एतेन संकेतापेक्षः शब्दोऽर्थं प्रत्याययति, न यः कश्चिच्छब्द इति दर्शयति, कृतसङ्केतः शब्दोऽर्थं प्रत्याययतीति ।

*तच्चैतच्छब्दमात्रात् प्रतीतपदार्थकात् सिध्यतीति* । तच्चैतदर्थद्योतनं नामरहिताच्छब्दमात्रात् [illegible] सिध्यतीत्ययमस्यार्थ इति ।

*यद्युत्पादयतीति* । विस्तरः—वाचि सत्यां स चित्तविप्रयुक्त उत्पद्यत इतीष्यते, तेनाशंक्यते—यद्युत्पादयतीति । एवं चेत् *सर्वं घोषमात्रं* वृषभादिगर्जितमपि *नामोत्पादयिष्यति*, घोषस्वभावा वागिति कृत्वा । ब्रूयास्त्वम्—*विशिष्ट एव घोषो* यो वर्णात्मकः सम्भावितः, स एव नामोत्पादयतीति ? अत्रोच्यते—यादृशो वा घोषविशेष इष्यते नाम्नः उत्पादकः, *स एवार्थस्य द्योतको भविष्यति* । न तु स चित्तविप्रयुक्त इत्यभिप्रायः । *अथ प्रकाशयतीति* । विस्तरः—घोषेणोत्पद्यमानेन स चित्तविप्रयुक्त उत्पद्यते, स तं

१-१. नैव—का० । २. ०मात्रादेव—का० ।

नाम प्रकाशयिष्यति। यादृशो वा घोषविशेष इष्यते नाम्नः प्रकाशकः, स एवार्थस्य द्योतको भविष्यति। न खल्वपि शब्दानां सामग्र्यमस्ति क्षणैकमिलनम्। न चैकस्य भागश उत्पादो युक्त इति कथमुत्पादयन्ती वाङ् नामोत्पादयेत्!

कथं तावदतीतापेक्षः पश्चिमो विज्ञप्तिक्षण उत्पादयत्यविज्ञप्तिम्? एवं तर्हि पश्चिम [1]शब्दे एव[1] नाम्न उत्पादाद् योऽपि तमेवैकं शृणोति सोऽप्यर्थं प्रतिपद्येत।

अथाप्येवं कल्प्येत—वाग् व्यञ्जनं जनयति, व्यञ्जनं तु नामेति?

---

प्रकाशयत्यर्थद्योतनायेति यदीष्यते? अत्रोच्यते—*सर्वं घोषमात्रं नाम प्रकाशयिष्यतीति* पूर्ववद् वाच्यम्। *न खल्वपि शब्दानां सामग्र्यमस्तीति*। यदनेकाक्षरं नाम तदुत्पत्तिपरिकल्पोऽनेकशब्दापेक्षः। तेनैवं विचार्यते—इहोच्चरितप्रध्वंसिनः शब्दः, तस्मादेषां युगपदवस्थानं नास्ति। *एकस्य* च द्रव्यसतो *धर्मस्य भागशः* खण्डश *उत्पादो न युक्तः*, यथा घटपटादेः प्रज्ञप्तिसतः कल्प्यत इति *कथमुत्पादयन्ती वाङ् नामोत्पादयेत्*! यदा तदुत्पादयति तदा कथं सा तदुत्पादयतीति वाक्यार्थः। वर्त्तमाना हि वाङ् नामोत्पादयन्त्युत्पादयेत्, न च सर्वे वाक्छब्दक्षणा युगपद् वर्त्तमाना भवन्ति। यदा हि रूपमिति र शब्दो वर्त्तमानो भवति तदा ऊकारपकाराकारा अनागता भवन्ति, यदा ऊकारो वर्त्तमानो भवति तदा रशब्दोऽतीतः पकाराकारावनागतौ, एवं पकाराकारावपि क्रमशो यदा वर्त्तमानौ भवतस्तदा इतरे न वर्त्तमाना—इत्येवं सा वाङ् नाम नैवोत्पादयेत्। ब्रूयास्त्वम्—वर्त्तमानो रशब्दस्तस्य रूपनाम्नः पूर्वं भागमुत्पादयति, ऊशब्दोऽपि वर्त्तमानो द्वितीयं भागम्, एवं यावदकारशब्दस्तस्य चतुर्थभागमुत्पादयतीति? तदयुक्तम्; एकस्य धर्मस्य भागश उत्पादासम्भवादिति। उक्तमेतत्।

*कथं तावदतीतापेक्षः पश्चिमो विज्ञप्तिक्षणः उत्पादयत्यविज्ञप्तिमिति*। प्रातिमोक्षसंवरसमादाने कायवाग्विज्ञप्तयः प्रवर्त्तन्ते, तासां नास्ति सामग्र्यम्। अथ चातीतकायवाग्विज्ञप्तिक्षणापेक्षः पश्चिमो विज्ञप्तिक्षणः प्रातिमोक्षसंवरसंगृहीतामविज्ञप्तिमुत्पादयति, एवमतीतशब्दक्षणापेक्षः पश्चिमो वाक्छब्दक्षणो नामोत्पादयतीति। *एवं तर्हीति* विस्तरः। *पश्चिमशब्द एव नाम्न उत्पादात् योऽपि तमेवैकं शृणोति* योऽपि पश्चिममेवैकं शब्दं शृणोति रूपमिति। *सोऽप्यर्थं प्रतिपद्येत*। सोऽपि रूपनामार्थं गृह्णीयात्; तन्नामोत्पत्तेः। न चैवं प्रतिपद्यते। तस्मादयुक्तमेतत्।

*अथाप्येवं कल्प्येत* इति विस्तरः। क्षणप्रतिभासा वर्णवाग्, व्यञ्जनमपि तत्प्रतिभासमिति पक्षान्तरमुपन्यस्यते। वाग् व्यञ्जनं जनयति, व्यञ्जनं तु

---

[1] १. पश्चिम एव शब्दे—का०।

अत्रापि स एव प्रसङ्गः; व्यञ्जनानां सामग्र्याभावात् ।

एष एव तु[1] प्रसङ्गो नाम्नः प्रकाशकत्वे वाचः । व्यञ्जनं चापि वाग्विशिष्ट-प्राज्ञा अव्यवहितचेतस्का लक्षणतः परिच्छेत्तुं नोत्सहन्त इति व्यञ्जनस्यापि वाङ् नैवोत्पादिका, न प्रकाशिका युज्यते ।

अथाप्यर्थसहजं नाम जात्यादिवदिष्येत[2] ? एवं सत्यतीतानागतस्यार्थस्य

---

नाम जनयतीति । *अत्रापि स एव प्रसङ्गो व्यञ्जनानां सामग्र्याभावात्* । कथम् ? न खलु व्यञ्जनानां सामग्र्यमस्ति । न चैकस्य धर्मस्य भागश उत्पादो युक्त इति कथमुत्पादयद् व्यञ्जनं नामोत्पादयेत्, कथं तावदतीतापेक्षः पश्चिमो विज्ञप्तिक्षणः उत्पादयत्यविज्ञप्तिम् ! एवं तर्हि पश्चिम एव व्यञ्जने नाम्न उत्पादाद् योऽपि तमेवैकं पश्चिमं व्यञ्जनोत्पादकं शब्दं शृणोति, यो वा तदेवैकं पश्चिमं व्यञ्जनं शृणोति, सोऽप्यर्थं प्रतिपद्येत ।

*एष एव तु प्रसङ्गो नाम्नः प्रकाशकत्वे वाच* इति । न खल्वपि शब्दानां सामग्र्यमस्ति । न चैकस्य धर्मस्य भागशः प्रकाशो युक्त इति कथं प्रकाशयन्ती वाङ् नाम प्रकाशयेत् । कथं तावदतीतापेक्षः पश्चिमो विज्ञप्तिक्षणः प्रकाशयत्यविज्ञप्तिम् । एवं तर्हि पश्चिम एव शब्दे नाम्नः प्रकाशाद् योऽपि तमेवैकं शब्दं शृणोति, सोऽप्यर्थं प्रतिपद्येत । अथाप्येवं कल्प्येत—वाग् व्यञ्जनं प्रकाशयति, व्यञ्जनं तु नामेति ? अत्रापि स एव प्रसङ्गः; व्यञ्जनानां सामग्र्याभावात् ।

यस्य तर्हि शब्दमात्रं नामानेकाक्षरं च नाम भवति, न च शब्दानां सामग्र्यमस्ति, तस्य कथं नामार्थं प्रत्याययति ? सर्वाक्षरस्मृत्यनन्तरत्वादर्थप्रतिपत्तेः । अत एव च नान्तरीयकन्यायेन प्रथमाक्षरश्रवणकाल एव शेषाक्षरानुस्मृतिबलेन कश्चिदर्थं प्रतिपद्यत एवेति । *व्यञ्जनस्यापि वाङ् नैवोत्पादिका न प्रकाशिका युज्यत इति* । पूर्वं शब्दस्योत्पाद्यं शब्दस्य व्यङ्ग्यं वा व्यञ्जनमभ्युपगम्य दोष उद्ग्राहितः, इदानीं शब्दव्यतिरिक्तानुपलब्धेरुत्पाद्यव्यङ्ग्यत्वमपि तस्य नास्तीति तदेवोन्मूलयति । न तु शब्दानां सामग्र्यभावादिति दोषो वक्तव्यः । न ह्यनेकशब्दापेक्षा व्यञ्जनप्रतिपत्तिः । अपि च—घोषस्वभावत्वाद् वाचः सर्वं घोषमात्रं व्यञ्जनमुत्पादयिष्यति, प्रकाशयिष्यति वा । यादृशो वा घोषविशेष इष्यते व्यञ्जनस्योत्पादकः प्रकाशको वा, स एव व्यञ्जनार्थं करिष्यतीति ।

*अथाप्यर्थसहजं नाम जात्यादिवदिष्येतेति* । विस्तरः—अथ सहजे नाम्नि कल्प्यमाने वाचोत्पाद्यं प्रकाश्यं वा नामेत्येवमादिदोषप्रसङ्गो न भविष्यतीति

१. च—का० । २. ०दिष्यते—का० ।

वर्तमानं नाम न स्याद्। अपत्यानां पितृभिर्यथेष्टं नामानि कल्प्यन्त इति कतमन्नाम तत् सहजं स्यात्। असंस्कृतानां च धर्माणां केन सहजं नाम न[1] स्यात् इत्यनिष्टिरेवेयम्।

यदप्युक्तं **भगवता**—

"नामसन्निश्रिता गाथा गाथानां कविराश्रयः" (          ) इति।

तत्रार्थेषु[2] कृतावधिः शब्दो नाम, नाम्नां[3] च रचनाविशेषो गाथेति नामसन्निश्रिता भवति। रचनाविशेषश्च द्रव्यान्तरं नोपपद्यते, पंक्तिवत्, चित्तानुपूर्व्यवच्च।

अस्तु वा व्यञ्जनमात्रस्य द्रव्यान्तरभावपरिकल्पना। तत्समूहा एव नामकायादयो भविष्यन्तीत्यपार्थिका तत्प्रक्लृप्तिः[4]।

---

मत्वा पक्षान्तरमिदं विकल्प्यते। यथा जात्यादीनि लक्षणान्यर्थसहजान्येवेष्यन्ते, नातीतानागतस्यार्थस्य वर्त्तमानानि भवन्ति। एवमेव यदि नामेष्येत। *अतीतानागतस्यार्थस्य वर्त्तमानं नाम न स्यात्।* ततश्चातीतानागतार्थव्यवहारो न शक्येत कर्त्तुम्। न ह्यतीतानागतं नामार्थं द्योतयितुमर्हति, यथातीतानागता वाङ्नाम नोत्पादयितुं व्यञ्जयितुं चार्हति। नामबहुत्वे च न सहजं नाम परिच्छिद्येत। *असंस्कृतानां* चानुत्पत्तिमत्त्वात् *सहजं नाम न स्यादित्यनिष्टिरेवेयम्*। न कर्त्तव्यैवेयमिष्टिरित्यभिप्रायः।

*नामसन्निश्रिता गाथा* इति। गाथा = वाक्यम्। सा नामानि सन्निश्रिता; नामसूत्पन्नेषु भावात्। तस्मात् सन्ति नामानि वाक्यं चेति वचनावकाशोऽस्ति? इत्याह—*तत्रार्थेषु कृतावधिशब्दो नामेति*। विस्तरः—अर्थकृतावधिशब्दस्वभावानां *नाम्नां रचनाविशेषो गाथा*। विन्यासविशेष इत्यर्थः। *पंक्तिवदिति* यथा पंक्तिः पिपीलिकादीनां रचनाविशेषः, न ततो द्रव्यान्तरमुपपद्यते, तद्वत्। एककालवर्त्तिनां पक्षिपिपीलिकादीनां रचनाविशेषः पंक्तिरित्युच्यते, क्रमवर्त्तिनां तु शब्दानां न रचनाविशेषः, तेन वैषम्यमिति वचनावकाशमभिसमीक्ष्य द्वितीयो दृष्टान्त उपन्यस्यते—*चित्तानुपूर्व्यवच्चेति*। यथानुक्रमवर्त्तिभ्यश्चित्तेभ्यो नान्यदानुपूर्व्यमस्ति, तद्वत्।

*अपार्थिका तत् प्रक्लृप्तिरिति*। निष्प्रयोजना नामपदयोरर्थान्तरपरिकल्पनेत्यर्थः।

---

१. का० पुस्तके नास्ति। २. अत्रा०—का०।
३. नाम्ना—का०। ४. तत्प्रज्ञप्तिः—का०।

सन्त्येव तु विप्रयुक्तसंस्कारभावना नामकायादयो द्रव्यत इति **वैभाषिकाः।** न हि सर्वे[1] धर्मास्तर्कगम्या[1] भवन्तीति ।

अथ किंप्रतिसंयुक्ता एते नामकायादयः सत्त्वाख्यासत्त्वाख्या[2] विपाकजा औपचयिका नैःष्यन्दिकाः कुशला अकुशला अव्याकृता इति वक्तव्यम् ? आह—

**कामरूपाप्तसत्त्वाख्या निःष्यन्दाव्याकृताः**

**कामाप्ताः, रूपाप्ताश्चेति।** आरूप्याप्ता अपि सन्ति, ते त्वनभिलाप्या इत्यपरे। **सत्त्वाख्या** एते। यश्च द्योतयति स तैः समन्वागतः, न यो द्योत्यते। नैःष्यन्दिका अनिवृताव्याकृताश्च।

यथा चैते नामकायादयः सत्त्वाख्या नैःष्यन्दिका अनिवृताव्याकृताश्च,

*न हि सर्वे धर्मास्तर्कगम्या* इति। केचिदेव तर्कगम्याः, न सर्वे। ये हि तथागतज्ञानगोचरपतिता एव, न ते तर्कगम्या इत्यभिप्रायः।

चित्तविप्रयुक्तप्रभेदविवक्षयेदमुपन्यस्यते—*अथ किंप्रतिसंयुक्ता* इति। विस्तरः—कस्मिन् धातौ प्रतिसंयुक्ताः किंप्रतिसंयुक्ताः। *सत्त्वाख्यासत्त्वाख्येति किमिति*।

"*कामरूपाप्तसत्त्वाख्या निष्पन्दाव्याकृताः*" इति। कामरूपाप्ता एव, सत्त्वाख्या एव, निष्यन्दा एव, अव्याकृता एव चेत्यवधारणम्।

ते *त्वनभिलाप्या* इति। ते त्वारूप्याप्ता नामकायादयोऽकथ्याः; वाचस्तत्राभावात्। कथं ते सन्तीति गम्यन्ते? यदा ते नाभिलप्यन्ते। तस्मात् कामरूपाप्ता एव, नारूप्याप्ता इति *वैभाषिकाः*। सत्त्वाख्या एव च; सत्त्वप्रयत्नाभिनिर्वृत्तवर्णादिस्वभावत्वात्। *यश्च द्योतयति, स तैः समन्वागत* इति। कुतः पुनरियमाशङ्का—अन्योन्यस्य तैः समन्वागमः स्यादिति? अस्येदं नामेति व्यपदेशात्। यथा चक्षुरिन्द्रियेण द्रष्टैव समन्वागतो न दृश्यः सत्त्वः, तथा द्योतयितैव तैः समन्वागतो न *द्योत्यः*। *नैष्यन्दिकाः*। सभागहेतुजनितत्वात्। न विपाकजाः, इच्छातः प्रवृत्तेः। नौपचयिकाः, अरूपिणां चयाभावादिति। *अनिवृताव्याकृताश्च*। न कुशला नाकुशलाः। कस्मात्? समुच्छिन्नकुशलमूलकामवीतरागाणामपि तत्समन्वागमप्रसङ्गात्। इतरथा हि यदा समुच्छिन्नकुशलमूलः कुशलान् धर्मान् द्योतयति, तदास्य कुशलधर्मसमन्वागमः स्यात्। एवं कामवीतरागस्याप्यकुशलधर्मद्योतने योज्यम्। तस्मादनिवृत्ताव्याकृता एव; अनिवृत्ताव्याकृतानां कुशलाकुशलैरविरोधात्॥ ४७॥

१–१. सर्वधर्माः०—का०। २. सत्त्वाख्या असत्त्वाख्या—का०।

तथा ॥ ४७ ॥

**सभागता सा तु पुनर्विपाकापि**[1]

न केवलं नैःष्यन्दिकी कामरूपारूप्यावचरी,

**आप्तयो द्विधा ।**

प्राप्तयो नैःष्यन्दिक्यः, विपाकजाश्च ।

**लक्षणानि च**

द्विधेति वर्त्तते, प्राप्तिवत् ।

**निःष्यन्दाः समापत्त्यसमन्वयाः ॥ ४८ ॥**

द्वे अचित्तसमापत्ती असमन्वागमश्च नैःष्यन्दिका एव । शेषमेषां वक्तव्यमुक्तम् ।

---

"*तथा सभागता*" इति । तथाशब्देन सत्त्वाख्यनैष्यन्दिकाव्याकृतत्वमेव सभागताया अतिदिश्यते; त्रिधात्वाप्ताया अपवादरूपेण वक्ष्यमाणत्वात् । *सा तु* इति । तुशब्दो विशेषणार्थः । नामकायादिभ्यो हि सभागता विशिष्यते । कथम् ? इत्याह—"*विपाकापि*" इति । विपाकजापीत्यर्थः । न केवलमियं नैष्यन्दिकी, किं तर्हि ? विपाकजापीति । न त्वौपचयिकी; तथैव चयाभावात् ।

"*आप्तयो द्विधा*" इति । द्विधाशब्देन नैष्यन्दिकविपाकजत्वप्रभेदावेव प्राप्तीनामुच्येते, प्रभेदान्तरत्वोक्तत्वात् । लक्षणानामपि जात्यादीनां तावेव प्रभेदावेवमेव वक्तव्यौ । *असमन्वागमः* अप्राप्तिः, सानिवृताव्याकृतापि न विपाकजा । न हि विपाकस्याप्यसमन्वागमो विपाको भवितुमर्हति । तथा ह्यकुशलस्य कुशलसास्रवस्य च विपाक इष्यते । न चानयोरप्राप्तिर्विपाको भवितुमर्हति । यो हि बुद्धिपूर्वकश्चेतनात्मकस्तत्सम्प्रयुक्तसमुत्थो वा धर्मः स विपाकहेतुः । न चासमन्वागम एवं बुद्धिपूर्वककर्मकृत इत्यतो न विपाकजः । *शेषमेषां वक्तव्यमुक्तमिति* । एषां प्राप्तिलक्षणसमापत्त्यसमन्वागमानां वक्तव्यं व्याख्यातव्यमुक्तं व्याख्यातमित्यर्थः । किं पुनः तच्छेषमिति ? धात्वाप्तता, सत्त्वासत्त्वाख्यता, कुशलाकुशलाव्याकृतता च । कथं पुनस्तदुक्तम् ? प्राप्तेस्तावद्धात्वाप्ततोक्ता, 'स्वधातुका तदाप्तानाम्" ( अभि० को० २.३७ ) इति वचनात् । सत्त्वाख्यतोक्ता, समन्वागमवचनात् । न ह्यसत्त्वसंख्यातेन संस्कृतेन सन्ति समन्वागमाः; "प्राप्त्यप्राप्ती स्वसन्तानपतितानाम्" ( अभि० को० २.३६ ) इति वचनात् । कथं कुशलाकुशलाव्याकृततोक्ता ? "शुभादीनां शुभादिका" ( अभि० को० २.३७ ) इति वचनात् । लक्षणानामपि त्रैधातुकप्रतिसंयुक्ततोक्ता, "सर्वं संस्कृतलक्षणैः"

---

१. ०विपाकोऽपि—का० ।

शेषयोश्चासंज्ञिकजीवितयोः, अतो न पुनर्ब्रूमः ।

कथं प्राप्त्यादीनां सत्त्वाख्यतोक्ता ? समन्वागमवचनात् ।

कथं लक्षणानां सत्त्वासत्त्वाख्यतोक्ता ? सर्वसंस्कृतसहभूत्वात् ॥ ४८ ॥

उक्ता विप्रयुक्ताः ॥

यत्तूक्तम्—"जन्यस्य जनिका जातिर्न हेतुप्रत्ययैर्विना" ( अभि० को० २.४६ ) इति, क इमे हेतवः ? के च प्रत्ययाः ?

---

( अभि० को० २.२३ ) इति वचनात् । सत्त्वासत्त्वाख्यताप्यत एवोक्ता; सर्वं संस्कृतसहभूतत्वात् । अत एव च कुशलाकुशलाव्याकृतताप्युक्ता;

"चैत्ता द्वौ संवरौ तेषां चेतसो लक्षणानि च ।

चित्तानुवर्तिनः कालफलादिशुभतादिभिः" ॥ ( अभि० को० २.५१ ) इति वचनात् । असंज्ञिसमापत्ते रूपधात्वाप्ततोक्ता, "ध्यानेऽन्त्ये" (अभि०को० २.४२) इति वचनात् । कुशलतापि "शुभा" ( अभि० को० २.४२ ) इति वचनात् । सत्त्वाख्यताप्यत एव, "उपपद्यवेद्यैव" ( अभि० को० २.४२ ) इति वचनात् । निरोधसमापत्तेरप्यारूप्यधात्वप्ततोक्ता, "भवाग्रजा" ( अभि० को० २.४३ ) इति वचनात् । कुशलतापि "शुभा" ( अभि० को० २.४२ ) इति वचनात्, सत्त्वाख्यताप्यत एव, कुशलसंस्कृतत्वात् । असमन्वागमस्य त्रिधात्वाप्ततोक्ता, "कामाद्याप्तामलानां" च ( अभि० को० २.४० ) इति वचनात् । सत्त्वाख्यता, समन्वागमवचनात् । अव्याकृतताप्युक्ता, "अक्लिष्टाव्याकृता प्राप्तिः" ( अभि० को० २.३९ ) इति वचनात् । *शेषयोश्चासंज्ञिकजीवितयोः* । किम् ? वक्तव्यमुक्तमिति वर्त्तते । आसंज्ञिकस्य रूपाप्तसत्त्वाख्यविपाकाव्याकृततोक्ता, "विपाकस्ते बृहत्फलाः" ( अभि० को० २.४१ ) इति वचनात् । जीवितस्य त्रिधात्वाप्ततोक्ताः, "आयुर्जीवितम्" ( अभि० को० २.४५ ) इति वचनात् । आयुषश्च त्रैधातुकत्वात् । सत्त्वाख्यताप्युक्ता, "विपाको जीवितम्" (अभि० को० २.१०) इति सूत्रात् । विपाको हि सत्त्वाख्य एव, "विपाकोऽव्याकृतो धर्मः सत्त्वाख्यो व्याकृतोद्भवः" ( अभि० को० २.५८ ) इति वचनात् । अत एवास्या-निवृत्ताव्याकृतताप्युक्तेति । *आचार्येण* तु यद्दर्शनं वक्तव्यमुक्तं तद्विवृत्तम् । *कथं प्राप्त्यादीनां सत्त्वाख्यतोक्ता समन्वागमवचनादित्यादि* ॥ ४८ ॥

*क इमे हेतवः के च प्रत्यया* इति । हेतुनां च कः प्रतिविशेषः ? न कश्चिदित्याह । तथा ह्युक्तं भगवता—"द्वौ हेतू द्वौ प्रत्ययौ सम्यग्दृष्टेरुत्पादाय । कतमौ द्वौ ? परतश्च घोषोऽध्यात्मं च योनिशोमस्कारः" इति । हेतुः प्रत्ययो निदानं कारणं निमित्तं लिङ्गमुपनिषदिति पर्यायाः । उपनिषच्छब्दस्तु कदाचिद्

**कारणं सहभूश्चैव सभागः सम्प्रयुक्तकः ।**
**सर्वत्रगो विपाकाख्यः षड्विधो हेतुरिष्यते ॥ ४९ ॥**

---

उपांशौ, कदाचित् प्रामुख्य इति। तद् यथापि सूर्योपनिषदो देवा इति, उपांशु-प्रयोग उपनिषत्प्रयोग इति। यदि प्रतिविशेषो नास्ति किमर्थं हेतूनां प्रत्ययानां च पृथङ्निर्देश: ? अन्येनार्थविशेषेण हेतुनिर्देशोऽन्येन प्रत्ययनिर्देश:। हेतुनिर्देशे ह्यविघ्नभावसहभूत्वसदृशत्वादिरर्थविशेष उक्त:। प्रत्ययनिर्देशे तु हेतुसमन्तरत्वादिभिरपरोऽर्थविशेष उक्त इति। अथ कतमस्मिन् सूत्रे षड् हेतव: उक्ता: ? सर्वो ह्यभिधर्म: सूत्रार्थ: सूत्रनिकष: सूत्रव्याख्यानमिति। अन्तर्हितं तत् सूत्रमिति *वैभाषिकाः*। तथा हि–एकोत्तरिकागम आ शताद्धर्मनिर्देश आसीत्, इदानीं त्वा दशकाद् दृश्यन्त इति कथयन्ति।

अपि तु सन्ति प्रतिनियतहेतुवाचकानि सूत्राणि तान्युदाहरिष्याम:।

'चक्षु: प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानम्" इति कारणहेतु:। जननाविघ्नभावेन ह्येष व्यवस्थाप्यते।

"इमानि त्रीणि मार्गाङ्गानि सम्यग्दृष्टिमनुपरिवर्त्तन्ते। तै: सह जाता वेदना संज्ञा चेतना च" इति सहभूहेतु:। अन्योन्यानुपरिवर्त्तनैककृत्यार्थेन ह्येष व्यवस्थाप्यते।

"समन्वागमोऽयं पुद्गल कुशलैरपि धर्मैरकुशलैरपि यावदस्ति चास्याणुसहगतं कुशलमूलमसमुच्छिन्नं यतोऽस्य कुशलमूलादन्यद् कुशलमूलमुत्पत्स्यते। एवमयं पुद्गल आयत्यां विशुद्धिधर्मा भविष्यति" इति सभागहेतु:। एप ह्यतीतप्रत्युत्पन्नानां धर्माणां स्वफलनिवर्तनार्थेन व्यवस्थाप्यते।

"इयमुच्यते दर्शनमूलिका श्रद्धा वेत्यज्ञानसम्प्रयुक्ता। यद्विजानाति तत् प्रजानाति" इति सम्प्रयुक्तकहेतु:। एकालम्बनकृत्यार्थेन ह्येप व्यवस्थाप्यते।

"मिथ्यादृष्टे: पुरुषपुद्गलस्य यच्च कायकर्म तद्दृष्टेर्यच्च वाक्कर्म या चेतना य: प्रणिधिर्ये च संस्कारास्तदन्वया:, सर्वेऽप्येते धर्मा अनिष्टत्वाय संवर्तन्तेऽकान्तत्वायाप्रियत्वायामनआपत्वाय। तत् कस्य हेतो: ? दृष्टिर्ह्यस्य पापिका यदुत मिथ्यादृष्टि:" इति सर्वत्रगहेतु:। एष हि सभागविसभागक्लिष्टधर्मप्रबन्धजनकार्थेन व्यवस्थाप्यते।

'इह कृतस्य कर्मण: कुशलस्य सास्रवस्य भावनामयस्य तत्रोत्पन्ना विपाकं प्रतिसंवेदयन्ते। सञ्चेतनीयस्य कर्मण: कृतस्योपचितस्य विपाक:" इति विपाकहेतु:। एष हि विसदृशफलाक्षेपत्वेन व्यवस्थाप्यते।

इत्यत एते षड् हेतव: सूत्रत एव प्रसिद्धा इति "*षड्विधो हेतुरिष्यते*" *वैभाषिकै*रित्यभिप्राय: ॥ ४९ ॥

**षडिमे हेतवः—कारणहेतुः, सहभूहेतुः, सभागहेतुः, सम्प्रयुक्तक-हेतुः, सर्वत्रगहेतुः, विपाकहेतुरिति । तत्र—**

**स्वतोऽन्ये कारणं हेतुः**

संस्कृतस्य हि धर्मस्य स्वभाववर्ज्याः सर्वधर्माः कारणहेतुः; उत्पादं[1] प्रति[1] अविघ्नभावावस्थानात् ।

ननु च येऽस्याजानत उदपत्स्यन्तास्रवा जानतोऽस्य ते नोत्पद्यन्त इति ज्ञानमेषां विघ्नमुत्पत्तौ करोति, सूर्यप्रभा[2] चज्योतिषां[3] दर्शनस्येति कथं स्वभाव-वर्ज्याः सर्वधर्माः संस्कृतस्य कारणहेतुर्भवन्ति ?
उत्पद्यमानस्याविघ्नभावेनावस्थानादिति[3] ज्ञातव्यम् ।

*"स्वतोऽन्ये"* इति । आत्मनोऽन्य इत्यर्थः । स्वात्मनि वृत्तिविरोधात् स्वात्मा न हेतुः । *सर्वधर्माः* संस्कृतासंस्कृता *कारणहेतुरिति* । कारणमेव हेतुः कारणहेतुः । यो हेतुर्विशेषसंज्ञया नोच्यते, सामान्यं हेतुभावं परिगृह्योच्यते, स कारणहेतुः । अन्येषु हि विशेषसंज्ञानिरुक्तेषु हेतुषु यो न विशेषितः कारणं च । तस्य तदेव विशेषणं भवति । यथा रूपायतनमुक्तमिति । *उत्पादं प्रत्यविघ्नभावावस्थाना*दिति । यस्मादुत्पादं प्रत्युत्पत्तिमतां स्वतोऽन्ये धर्मा अविघ्नभावेनावतिष्ठन्ते, तस्मात् कारणहेतुरित्युच्यते ।

ननु च *येऽस्याजानत* इति विस्तरः । ज्ञानश्चेन्नोदपत्स्यत । *उदपत्स्यन्तास्र-वास्त* इति । विस्तरो लृङोऽर्थः । तेनाह—अस्याजानत अनुत्पन्नदर्शनभावना-मार्गपुद्गलस्य ये दर्शनभावनामार्गवध्या रागादयः सास्रवा उदपत्स्यन्त । *जानत* उत्पन्नदर्शनभावनामार्गस्यास्य पुद्गलस्य तद्वध्यास्ते रागादयो *नोत्पद्यन्ते* । ततः किम् ? इत्याह—*ज्ञानमेषां विघ्नमुत्पत्तौ करोति* दर्शनभावनामार्गसंगृहीतम् । *सूर्यप्रभा च ज्योतिषां दर्शनस्य* । विघ्नमुत्पत्तौ करोतीत्यधिकृतम् । एवं सति *कथं स्वभाववर्ज्याः सर्वधर्माः संस्कृतस्य कारणहेतुर्भवन्ति* । यस्मादास्रवोत्पत्तौ न ज्ञानं कारणहेतुः । ज्योतिर्दर्शनोत्पत्तौ च सूर्यप्रभा । एवं हि वक्तव्यं स्यात्—आस्रवोत्पत्तौ स्वभावज्ञानवर्ज्याः सर्वधर्माः कारणहेतुः, ज्योतिर्दर्शनोत्पत्तौ च स्वभावसूर्यप्रभावर्ज्याः सर्वधर्माः कारणहेतुरिति । *उत्पद्यमानस्याविघ्नभावावस्था-नादिति* । समग्रेषु हेतुप्रत्ययेष्वनन्तरभावी धर्म उत्पद्यमान उच्यते । तस्योत्पद्य-

१–१. उत्पादं प्रत्य०—का० ।

२–२. सूर्यप्रभावज्ज्योतिषां—का० ।

भवेत् तावदुत्पत्तौ विघ्नकारणे समर्थानामविघ्नकारणाद्धेतुत्वम् । तद्यथा अनुपद्रोतारं भोजकमधिकृत्य ग्रामीणा भवन्ति वक्तारः—'स्वामिना स्मः सुखिताः' इति ।

यस्य पुनर्नास्त्येव शक्तिर्विघ्नयितुम्, तस्य कथं हेतुभावः, तद्यथा निर्वाणस्यानुत्पत्तिधर्माणां[1] च सर्वोत्पत्तौ, नारकादीनां चारूप्यस्कन्धोत्पत्तौ[2] ? असन्तोऽपि ह्येते तथैव विघ्नं कर्तुमसमर्थाः स्युः । असमर्थेऽपि हि भोजके तथा वक्तारो भवन्तीति स एवात्र दृष्टान्तः सामान्येनैव निर्देशः ।

---

मानस्योत्पादं प्रति सर्वधर्मा एवाविघ्नभावेनावतिष्ठन्ते, न सर्वस्येत्यवगन्तव्यम् । ज्ञाने पुनः सति त आस्रवा नोत्पद्यमाना भवन्ति, प्राप्त्याद्यभावेन प्रत्ययसामग्र्यभावात् । ज्योतिर्दर्शनमपि प्रत्ययवैकल्यादेव नोत्पद्यमानमिति योज्यम् । अतस्तदवस्थमिदं स्वभावर्ज्याः सर्वधर्माः संस्कृतस्य कारणहेतुर्भवन्तीति ।

*तद्यथाऽनुपद्रोतारं भोजकमिति* विस्तरः । अनुपद्रवकरं ग्रामपतिमभिसन्धाय मनुष्या ब्रूयुः—*स्वामिना स्मः सुखिता* इति । कस्मात् त एवं वक्तारो भवन्ति ? यस्मादसावुपद्रवकरणे समर्थ उपद्रवं न करोति ।

*तद्यथा निर्वाणस्यानुत्पत्तिधर्माणां* च । किम् ? *कथं हेतुभावः सर्वोत्पत्तौ* । *नारकादीनाञ्च* नारकतिर्यग्योन्यादिकाना*मारूप्यस्कन्धोत्पत्तौ* कथं हेतुभावः । नारकादिग्रहणं मनुष्यादीनां कदाचिद् भवेदुपदेशादिनेत्यभिप्रायः । *असन्तोऽपि ह्येवेति* । असन्तोऽपि ह्येते निर्वाणदयस्तथैव, *यथा सन्तो* विद्यमाना *विघ्नं कर्तुमसमर्थाः स्युः* । अतोऽसतां सतां चैषा निर्वाणादीनां विघ्नकरणे निर्विशिष्टत्वम् । असत्तुल्यास्त इत्यर्थः । *असमर्थेऽपीति* । उपद्रवं *कर्तुमसमर्थे*ऽपि *भोजके* ग्रामीणास्*तथा वक्तारो भवन्ति*–'स्वामिना स्मः सुखिताः' इति । *स एवात्र दृष्टान्तो यः प्राक्तनः* । अतोऽनेनैव दृष्टान्तेन विघ्नयितुमसमर्थानामपि निर्वाणादीनामविघ्नभावावस्थानात् कारणहेतुभावः सिद्धः । कस्मात् पुनरसत्तुल्यानां निर्वाणदीनां कारणहेतुत्वमिष्यते, न पुनरसतां शशविषाणादीनाम् ? असद्दृष्टान्ताभावात् । न ह्यसन्तं भोजकमधिकृत्य ग्रामीणा भवन्ति वक्तारः—स्वामिना स्मः सुखिता इति, न वा शशविषाणेन स्मः सुखिता इति । अचोद्यमेतत् । *सामान्येनैव निर्देश* इति । यश्च प्रधानः कारणहेतु, यश्चाप्रधानः सर्वमधिकृत्योक्तम्—"स्वतोऽन्ये कारणं हेतुः" इति ।

---

१. ०धर्मकाणां—का० ।

२. सत्त्वस्कन्धो०—का० ।

यस्तु प्रधानः कारणहेतुः, स उत्पादनेऽपि समर्थः, यथा चक्षूरूपे चक्षुर्विज्ञानस्य, आहारः शरीरस्य, बीजादयोऽङ्कुरादीनामिति ।

यस्त्वेवं चोदयति—अनावरणभावेन चेत् सर्वं धर्महेतवो भवन्ति, कस्मान्न सर्वस्योत्पादो युगपद्भवति, प्राणातिपातेन च घातकवत् सर्वे तद्भाजो भवन्तीति ?

तस्येदमचोद्यम्; यस्मादनावरणभावेन सर्वधर्माः हेतुः प्रतिज्ञायन्ते, न कारकभावेनेति ।

सर्वस्यैव कारणहेतोः सर्वोत्पत्तौ सामर्थ्यमित्यपरे । तद्यथा—निर्वाणस्यापि चक्षुर्विज्ञानम् ।

कथं कृत्वा ? तेन ह्यालम्बनात् मनोविज्ञानमुत्पद्यते कुशलाकुशलम्; यतः क्रमेण पश्चाच्चक्षुर्विज्ञानमिति कारणपरम्परया तस्यापि प्रत्ययीभावादस्ति सामर्थ्यम् । एवमन्यस्यापि प्रतिपत्तव्यम् । एषा हि दिक् ।

उक्तः कारणहेतुः ॥

---

*यो हि प्रधानो जनकः स कारणहेतुः ।* स सुतरामविघ्नभावेनावतिष्ठते, न केवलमितरः । आहारः शरीरस्योत्पादनेऽपि समर्थ इत्यधिकृतम्; "आहारसमुदयात् कायसमुदयः" इति वचनात् । रसादिपरिणामयोगात् । *बीजादयोऽङ्कुरादीनामिति ।* बीजाङ्कुरनालगण्डप्रवालादीनामुत्पादने समर्था इत्येवम् ।

*यस्त्वेवं चोदयतीति ।* विस्तरः—कारणे सति कार्येण भवितव्यमिति मत्वा चोदयति—*कस्माच्च सर्वस्योत्पादो युगपद् भवति ।* *यथा च प्राणातिपातकारकः* प्राणातिपातभाग् भवति, तथा *सर्वेऽपि कस्मान्न तद्भाजो भवन्तीति ।* *न कारकभावेनेति ।* न मुख्यवृत्त्यास्य कारणत्वमिति दर्शयति । तेन सर्वस्य तावद् युगपदुत्पादो न प्राप्नोति; प्रत्ययसामग्र्यभावेनानुत्पद्यमानत्वात् । प्राणातिपातयोगश्च भवति; अकारकत्वात् । यस्तु कारकः स प्राणातिपातभागेव भवति ।

*मनोविज्ञानमुत्पद्यते कुशलाकुशलमिति ।* कुशलं मनोविज्ञानमिति निर्वाणालम्बनत्वात् । निर्वाणालम्बनात् कुशलादकुशलाद्वा मनोविज्ञानमुत्पद्यते । *ततश्चक्षुर्विज्ञानमिति ।* एवं *परम्परया तस्यापि* निर्वाणस्य *प्रत्ययीभावादस्ति सामर्थ्यम् ।* क ? चक्षुर्विज्ञान इत्यधिकृतम् । *एवमन्यस्यापि प्रतिपत्तव्यमिति ।* नारकादीनामप्यारूप्यस्कन्धोत्पत्तौ सामर्थ्यम् । कथम् ? अमी बत नारकप्रेतादयः परमदुःखिता इति नारकाद्यालम्बनं मनोविज्ञानं कुशलमुत्पद्यते, यतः क्रमेण शीले व्यवस्थितस्य भावनायां प्रयोगादारूप्यसमापत्तिः, उपपत्तिश्चोपपद्यत इति ।

**सहभूर्ये मिथःफलाः ।**

**मिथः** पारम्पर्येण ये धर्माः परस्परफलास्ते परस्परः **सहभूहेतुर्यथाकथम्** ।

**भूतवच्चित्तचित्तानुवर्तिलक्षणलक्ष्यवत् ॥ ५० ॥**

चत्वारि महाभूतान्यन्योन्यं सहभूहेतुः । चित्तं चित्तानुवर्त्तिनां धर्माणाम्, तेऽपि तस्य । संस्कृतलक्षणानि लक्ष्यस्य, सोऽपि तेषाम् ।

एवं च कृत्वा सर्वमेव संस्कृतं सहभूहेतुर्यथायोगम् । विनापि चान्योन्यफलत्वेन धर्मोऽनुलक्षणानां सहभूहेतुः, न तानि तस्येत्युपसंख्यातव्यम् ॥ ५० ॥

के पुनरेते चित्तानुवर्त्तिनो धर्माः ?

**चैत्ता द्वौ संवरौ तेषां चेतसो लक्षणानि च ।**

**चित्तानुवर्त्तिनः**

सर्वे चित्तसम्प्रयुक्ताः, ध्यानसंवरः, अनास्रवसंवरः, तेषां च ये जात्यादयः, चित्तस्य च । एते धर्माश्चित्तानुवर्त्तिन उच्यन्ते ।

कथमेते चित्तमनुपरिवर्त्तन्ते ? समासतः

---

*"सहभूर्ये मिथफलाः"* इति । हेतुरिति वर्त्तते । सहभूहेतुस्ते धर्मा भवन्ति ये धर्माः मिथःफलाः, ये परस्परफला इत्यर्थः । सहभूहेतुः सहभुव इति नोक्तम् । कस्मात् ? सन्ति हि धर्माः केचित् सहभुवो न तु सहभूहेतुः, तद्यथा—नीलाद्युपादायरूपं भूतैः सहभूर्भवति, न चान्योन्यं सहभूहेतुः । अतो मिथःफला इत्यर्थपरिग्रहः । इदञ्च सावशेषं लक्षणम्, अतो वक्ष्यति—*विनापि चान्योन्यफलत्वेन धर्मोऽनुलक्षणानां सहभूहेतुः, न तानि तस्येत्युपसंख्यातव्यमिति* । उपसंख्यानकरणञ्च महाशास्त्रताप्रदर्शनार्थम् । सोपसंख्यानं हि व्याकरणादि महाशास्त्रं दृश्यते ।

*"भूतवत्"* इति । तद् यथार्थे वतिप्रत्ययः । *एवञ्च कृत्वा सर्वमेव संस्कृतं सहभूहेतुर्यथायोगमिति* । यस्मात् संस्कृतलक्षणानि लक्ष्यस्य सहभूहेतुः, सोऽपि तेषाम्, अतः यथायोगं यथासम्भवं सर्वं संस्कृतं सहभूहेतुः; संस्कृतस्य लक्षणवत्त्वात्, लक्ष्यलक्षयोश्च सहभूहेतुत्वात् । न तु सर्वं सर्वस्य; अपरलक्षणैरसहभूहेतुत्वादिति यथायोगग्रहणम् ॥ ५० ॥

*तेषाञ्च ये जात्यादयश्चित्तस्य* चेति । तेषाञ्च चित्तसम्प्रयुक्तानां चेतनादीनां ध्यानसंवरस्यानास्रवसंवरस्य ये जात्यादयश्चत्वारो धर्माश्चित्तानुपरिवर्तिन उच्यन्ते ।

**कालफलादिशुभतादिभिः ॥ ५१ ॥**

**कालस्तावच्चित्तेनैकोत्पादस्थितिनिरोधतया एकाध्वपतितत्वेन चतुर्थेन[1] ।**

**फलादिभिरेकफलविपाकनिःष्यन्दतया । पूर्वकस्त्वेकशब्दः सहार्थे वेदितव्यः ।**

**शुभतादिभिः कुशलाकुशलाव्याकृतचित्ते कुशलाकुशलाव्याकृततया ।**

**एवं दशभिः कारणैश्चित्तानुपरिवर्त्तिन उच्यन्ते ।**

---

"*कालफलादिशुभतादिभिः*" इति । कालेन च फलादिभिश्च शुभतादिभिश्चेति कालफलादिशुभतादिभिः ।

*कालस्तावदिति* । विस्तरः—चित्तेन सहैते एकोत्पादा एकस्थितय एकनिरोधाश्च, तद्भावः, तया *एकोत्पादस्थितिनिरोधतयेति* । एकमध्वानं पतिताः एकाध्वपतिताः, तद्भावः, तेन *एकाध्वपतितत्वेन चतुर्थेनेति* । कालतश्चित्तमनुपरिवर्त्तन्ते ।

*एकफलतयैकविपाकतयैकनिष्यन्दतया च चित्तमनुपरिवर्त्तन्ते* । फलमिह पुरुषकारफलं विसंयोगफलं च, विपाकफलनिष्पन्दयोः पृथग् गृहीतत्वात् । अधिपतिफलं तु सर्वसाधारणत्वान्न गण्यते । अयं चैकशब्दः संख्याने साधारणे वा एकफलतयेत्यादि । *पूर्वकस्त्वेकशब्दः सहार्थे* । चित्तेन सहोत्पादस्थितिनिरोधतयेत्यर्थः । न ह्यत्र संख्यानार्थं सम्भवति । न हि यश्चित्तस्योत्पादः स एव चित्तानुपरिवर्त्तिनाम्, यो वा तेषां स चित्तस्येति ।

*एवं दशभि कारणैरिति* । कालतश्चतुर्भिरेकोत्पादतयैकस्थिततयैकनिरोधतयैकाध्वपतितत्वेन चेति । ननु चैकोत्पादस्थितिनिरोधतयेत्येतेनैवैकाध्वपतितत्वमुक्तम् ? न सर्वमुक्तम् । अनुत्पत्तिधर्मिणि हि चित्ते ते चित्तानुपरिवर्तिन एकाध्वपतिता भवन्ति, नैकोत्पादस्थितिनिरोधा इति । तस्मादेकाध्वपतितत्वं चतुर्थं कारणमुच्यते । एकफलविपाकनिष्यन्दतयेति त्रिभिः ।

*कुशलाकुशलाव्याकृततया* चेति पुनस्त्रिभिरिति दशभिः । पर्यायवृत्ति जाति वा प्रत्येवमुक्तम्—*दशभिरिति* । न ह्येकत्र चित्ते दश कारणानि भवन्ति । न हि कुशले चेतस्यकुशलाव्याकृते कारणे भवतः, न चाकुशलाव्याकृते चित्ते अनुत्पत्तिधर्मिणि । [illegible]फलनिष्यन्दताभ्यामव्याकृतत्वेन चेति चतुर्भिः । उत्पत्तिधर्मिणि त्वेभिरेव चतुर्भिरेकोत्पादस्थितिनिरोधताभिश्चेति सप्तभिः । अनास्रवेऽप्येवम् । अव्याकृततां तु केवलमपनीय कुशलता प्रक्षेप्तव्या । अकुशले तु कुशलसास्रवे चानुत्पत्तिधर्मिण्यकुशलतया कुशलतया च यथावस्त्वे-

---

1. च—का० ।

तत्र सर्वाल्पं[1] चित्तमष्टपञ्चाशतो[1] धर्माणां सहभूहेतुः । दशानां महाभूमिकानां चत्वारिंशतस्तल्लक्षणानाम्, अष्टानां च स्वलक्षणानुलक्षणानाम् ।

तस्य पुनश्चतुःपञ्चाशद् धर्माः सहभूहेतुः, स्वान्यनुलक्षणानि स्थापयित्वा ।

**चतुर्दशेत्यपरे** । दश महाभूमिकाः स्वान्येव च लक्षणानीति ।

तदेतन्न वर्णयन्ति । **प्रकरणग्रन्थो** ह्येवं विरुध्येत—"स्याद् दुःखसत्यं

---

काध्वपतितत्वेनैकफलविपाकनिष्यन्दताभिश्चेति पञ्चभिः । उत्पत्तिधर्मिणि तु तस्मिन्नेभिरेव पञ्चभिरेकोत्पादस्थितिनिरोधताभिश्चेत्यष्टाभिः ।

*सर्वाल्पं चित्तमि*ति । सर्वेभ्यो यदल्पपरिवारं चित्तं तत् सर्वाल्पमित्युच्यते । तत् पुनः कतमत् ? द्वितीयध्यानात् प्रभृत्यूर्ध्वमनिवृत्ताव्याकृतं चित्तम् । तत्र वितर्कविचारौ न स्तः । न चापि कुशलादिमहाभूमिकाः, केवलमहाभूमिका एव दश भवन्ति । *तल्लक्षणाना*मिति । दशमहाभूमिलक्षणानाम् । न तदनुलक्षणानाम्, विप्रकृष्टत्वात् । स्वानुलक्षणानां तु भवति, सन्निकृष्टत्वात् । आह–*अष्टानां च स्वलक्षणानुलक्षणाना*मिति । *स्वान्यनुलक्षणानि स्थापयित्वे*ति । लक्षणेष्वनुलक्षणानां व्यापारः, न विशिष्टे च चित्ते । न्यूनानि तानि । राजायते हि चित्तं लक्षणानुलक्षणानाम् । अतश्चित्तमनुलक्षणानां सहभूहेतुः, न तु तानि चित्तस्य । लक्षणानां तु चित्तेऽस्ति व्यापार इति तानि चित्तस्य *सहभूहेतु*र्भवन्ति ।

· *चतुर्दशेत्यपर* इति । यथानुलक्षणानां नास्ति धर्मे व्यापारः, किं तर्हि ? धर्मस्य लक्षणेषु, अतो न तेषां हेतुभावो धर्मे इष्यते । तथा सम्प्रयुक्तेष्वेव तल्लक्षणानां व्यापारो न चित्त इति न तानि चित्तस्य सहभूहेतुः । चित्तं तु तेषां राजकल्पमिति सहभूहेतुर्भवतीत्यपरेषामभिप्रायः । *प्रकरणग्रन्थो ह्येवं विरुध्येत*, दशानां महाभूमिकानां यानि चत्वारिंशल्लक्षणानि, तानि यदि चित्तस्य सहभूहेतुर्नेष्येरन् । यस्मात् प्रकरणेषूक्तम्–"चत्वार्यार्यसत्यानि दुःखसत्यं यावन्मार्गसत्यम् । एषां कति सत्कायदृष्टिहेतुकानि न सत्कायदृष्टेर्हेतुः, कति सत्कायदृष्टेर्हेतुर्न सत्कायदृष्टिहेतुकानि, कति सत्कायदृष्टिहेतुकानि न सत्कायदृष्टेश्च हेतुः, कति नैव सत्कायदृष्टिहेतुकानि न सत्कायदृष्टेर्हेतुः ?— इति प्रश्ने कृते विसर्जनं करोति—द्वे नैव सत्कायदृष्टिहेतुके न सत्कायदृष्टेर्हेतुः, निरोधसत्यं मार्गसत्यं च । द्वयोर्भेदः । कथमिति ? दुःखसत्यं स्यात् सत्कायदृष्टिहेतुकं न सत्कायदृष्टेर्हेतुः, स्यात्

---

१–१. सर्वाल्प०—का० ।

सत्कायदृष्टिहेतुकम्, न सत्कायदृष्टिर्हेतुः। सत्कायदृष्टेस्तत्सम्प्रयुक्तानां च धर्माणां जातिं जरां स्थितिमनित्यतां च स्थापयित्वा यत्तदन्यत् क्लिष्टं दुःखसत्यं सत्कायदृष्टिहेतुकम्[1], सत्कायदृष्टेश्च हेतुः, यदेतत् स्थापितम्" ( ) इति।

---

सत्कायदृष्टिहेतुकं सत्कायदृष्टेश्च हेतुः। स्यान्नैव सत्कायदृष्टिहेतुकं न सत्कायदृष्टेर्हेतुरिति त्रिकोटिकम्। द्वितीया कोटिर्नास्ति। तत्र *सत्कायदृष्टिहेतुकं न सत्कायदृष्टेर्हेतुः*, अतीतप्रत्युत्पन्नान् दुःखदर्शनप्रहातव्याननुशयाँस्तत्सम्प्रयुक्तं च दुःखसत्यं स्थापयित्वा। अतीतप्रत्युत्पन्नान् समुदयदर्शनप्रहातव्यान् सर्वत्रगाननुशयान् तत्सम्प्रयुक्तं च दुःखसत्यं स्थापयित्वा। अनागतं च सत्कायदृष्टिसम्प्रयुक्तं दुःखसत्यं स्थापयित्वा।

*सत्कायदृष्टेस्तत्सम्प्रयुक्तानां च धर्माणां जातिं जरां स्थितिमनित्यतां च स्थापयित्वा यत्तदन्यत् क्लिष्टं दुःखसत्यं सत्कायदृष्टिहेतुकं सत्कायदृष्टेश्च हेतुर्यदेतत् स्थापितमिति।* नैव सत्कायदृष्टिहेतुकं न सत्कायदृष्टेर्हेतुरक्लिष्टं दुःखसत्यम्। यथा दुःखसत्यम्, एवं समुदयसत्यम्" इति *प्रकरणग्रन्थः।* तस्यार्थं विवृण्महे—ये अतीतप्रत्युत्पन्ना दुःखदर्शनप्रहातव्या दशानुशयाः सत्कायदृष्ट्यादयः, ते स्थापिताः। तैर्दशभिरनुशयैः सम्प्रयुक्तं दुःखसत्यं वेदनादिकं स्थापितम्। किमत्रास्थापितम्? एत एवानागता दशानुशयास्तत्सम्प्रयुक्तं च वेदनादिकं दुःखसत्यं वर्जयित्वानागतसत्कायदृष्टिसम्प्रयुक्तं दुःखसत्यम्। तद्धि स्थापयिष्यते, "अनागतं च सत्कायदृष्टिसम्प्रयुक्तं दुःखसत्यं स्थापयित्वा" इति वचनात्। तत्प्राप्तिजात्यादयश्चास्थापिता वर्जयित्वा सत्कायदृष्टेस्तत्सम्प्रयुक्तानां च धर्माणां जात्यादीन्। ते हि स्थापयिष्यन्ते, "सत्कायदृष्टेस्तत्सम्प्रयुक्तानां च धर्माणां जातिं जरां स्थितिमनित्यतां च स्थापयित्वा" इति वचनात्। तदेवं तावदनागतोऽनुशयस्तत्सम्प्रयुक्तं च स्थापितादन्यत्। तदन्यत् क्लिष्टमित्युच्यते सत्कायदृष्टिहेतुकम्। सत्कायदृष्टिहेतुरस्येति सत्कायदृष्टिहेतुकम्। सभागहेतुना सर्वत्रगहेतुना चातीतप्रत्युत्पन्नसत्कायदृष्टिहेतुकत्वात्, न तु सत्कायदृष्टेर्हेतुः। न ह्यनागतो धर्मः सभागहेतुः सर्वत्रगहेतुर्वा व्यवस्थाप्यते। न च सहभूहेतुः सम्प्रयुक्तकहेतुर्वात्र सम्भवति। न हि सत्कायदृष्टिः सत्कायदृष्ट्या सह भवति सम्प्रयुज्यते वा; एकस्मिन् कलापे द्वितीयसत्कायदृष्ट्यभावात्। न चाप्यन्तग्राहदृष्ट्यादिभिः सह भवति सम्प्रयुज्यते वा; पृथक्कलापत्वात्। विप्रयुक्तास्तेषामतीतप्रत्युत्पन्नानां दुःखदर्शनहेयानां प्राप्तयो जात्यादयश्चास्थापिताः। ते स्थापितकादन्ये क्लिष्टाश्च। तेऽपि सर्वत्रगहेतुना पूर्वोत्पन्नसत्कायदृष्टिहेतुकाः, न तु ते सत्काय-

---

१. ०हेतुकं न सत्कायदृष्टेर्हेतुः—का०।

दृष्टेर्हेतुः। कस्मात्? प्राप्तयस्तावद् वृक्षप्रपाटिकावत् स्वसर्वत्रगेभ्यो बहिरवस्थितत्वान्न सर्वत्रगा व्यवस्थाप्यन्ते। सर्वत्रगत्वाभावाच्च न सत्कायदृष्टेः सर्वत्रगहेतुः। सर्वत्रगजात्यादयोऽपि यद्यपि सर्वत्रगाः इष्टाः; "प्राप्तिवर्ज्याः सहभुवो येऽप्येभिस्तेऽपि सर्वगाः" (अभि० को० ५.१३) इति सिद्धान्तवचनात्। न तु ते चित्तचैत्तवत् पश्चिमानां चित्तचैत्तानां सर्वत्रगहेतुः; स्वलक्ष्यव्यापारपरत्वेनाप्राधान्ये सति चित्तचैत्तान्तरेषु सर्वत्रगत्वे सति पुरुषकाराभावात्। सर्वत्रगव्यवस्थानं तु तेषां जात्यादीनां स्वसन्तानसर्वत्रगहेतुत्वात्। तस्मान्न ते सत्कायदृष्टेर्हेतुरिति शास्त्रार्थो लक्ष्यते।

सभागहेतुस्तर्हि कस्मान्न भवति? सभागहेतुव्यवस्था हि पुरुषकारापेक्षयापि। यस्य हि धर्मस्य जनने यः पुरुषकारवान् धर्मः स तस्य सभागहेतुः। इदमेव च ज्ञापकम्—यथेष्टं सभागहेतुव्यवस्थेति। *विभाषायाम*प्येवमुक्तम्—"चक्षुश्च चक्षुषः सभागहेतुः, देवदत्तचक्षुषो देवदत्तचक्षुः सभागहेतुः। [illegible] यावच्चक्षुर्द्रव्यं चक्षुर्द्रव्यान्तरस्य। बाह्येष्वपि यवो यवस्य, शालिः शालेः" इति। यदि हि सर्वचक्षुः सर्वस्य चक्षुषः सभागहेतुरिष्येत, अव्याकृतत्वं तुल्यमिति कृत्वा नैवं विशेषणमुच्येत। तस्मान्न ते सत्कायदृष्टेः सभागहेतुरित्यवगन्तव्यम्। अपरे त्वाहुः—सावशेषमेतद् भाष्यम्। तस्मात् [illegible]नेऽनुशयास्तत्सम्प्रयुक्ताश्च धर्माः स्थापिता वेदितव्याः। ये हि धर्मस्य तत्सम्प्रयुक्तानां च जात्यादयः सहभूहेतुर्भवन्ति, तैः सार्धं ते धर्माः पूर्वोत्पन्नाः सर्वत्रगहेतुः सभागहेतुर्वा भवन्तो भवन्ति; "प्राप्तिवर्ज्याः सहभुवो येऽप्येभिस्तेऽपि सर्वगाः" (अभि० को० ५.१३) इति सिद्धान्तात्। अत एवोक्तम्—'सत्कायदृष्टेस्तत्सम्प्रयुक्तानां च धर्माणां जातिं जरां स्थितिमनित्यतां च स्थापयित्वा' इति। तस्माज्जात्यादयोऽपि केचित् स्थापिताः। अतोऽन्यदस्थापितमित्यवगन्तव्यम्। युक्तिरिह दृष्टव्या। यतो युक्तिस्ततोऽवगन्तव्यम्। समुदयदर्शनप्रहातव्या अपि ये सर्वत्रगा अतीतप्रत्युत्पन्नास्तत्सम्प्रयुक्तं च दुःखसत्यं वेदनादिकम्, तत् स्थापितम्। किमन्यत् समुदयदर्शनप्रहातव्यमस्थापितम्? ये सर्वत्रगा अनागतास्तत्सम्प्रयुक्तं च दुःखसत्यं वेदनादिकम्, तदस्थापितम्। ये[illegible] रागादयस्त्रैयध्विका अपि, याश्च तेषां सर्वेषां प्राप्तयः, न ते स्थापिताः। जात्यादयस्त्वेकस्मिन् पक्षे नैव स्थापिताः। पक्षान्तरे तु केचित् स्थापिताः, केचिन्न स्थापिताः। तदेतत् सर्वमस्थापितं समुदयदर्शनप्रहातव्यसर्वत्रगहेतुना सत्कायदृष्टिहेतुकं भवति, पूर्वोत्पन्नसत्कायदृष्टिहेतुकत्वात्। न तु सत्कायदृष्टेर्हेतुः, सर्वत्रगाणां तत्सहभुवां चानागतत्वेनासर्वत्रगहेतुत्वात्। असर्वत्रगाणां च रागादीनां तत्सहभुवां च वेदनादीनां जात्यादीनां चैकस्मिन् पक्षे सर्वप्राप्तीनां चासर्वत्रगत्वात्। निरोधमार्गदर्शनप्रहातव्या भावनाप्रहातव्याश्च

ये तर्हि "तत्सम्प्रयुक्तानाम्[1]" इत्येतन्न पठन्ति, तैरप्येतत् पठितव्यम्—**अर्थतो वैवं बोद्धव्यमिति काश्मीराः ।**

---

क्लिष्टा अनुशयतत्सम्प्रयुक्ततत्समुत्थजात्यादिस्वभावा अस्थापिताः । ते सर्वत्रगहेतुना सत्कायदृष्टिहेतुकाः, न तु ते सत्कायदृष्टेर्हेतुः, सर्वत्रगहेतुत्वासम्भवादितरहेत्वयोगाच्च । सत्कायदृष्टिहेतुकं सत्कायदृष्टेश्च हेतुर्यदेतत् स्थापितमिति । ये अतीप्रत्युत्पन्ना दुःखदर्शनप्रहातव्या दशानुशयास्तत्संप्रयुक्तं च दुःखसत्यं यच्च एक्षान्तरे जात्यादिकं तत् सभागहेतुना सर्वत्रगहेतुना च पूर्वसत्कायदृष्टिहेतुकम् । ये च सत्कायदृष्टिजात्यादयस्तत्सम्प्रयुक्तजात्यादयश्च ते सहभूहेतुना पूर्वोक्ताभ्यां च हेतुभ्यां तद्धेतुकाः । ये पुनः सत्कायदृष्टिसम्प्रयुक्तास्ते सम्प्रयुक्तहेतुना च पूर्वोक्तैश्च हेतुभिस्तद्धेतुकाः । सत्कायदृष्टेश्च ते तथैव हेतुः । येऽप्यतीतप्रत्युत्पन्नाः समुदयदर्शनप्रहातव्याः सर्वत्रगास्तत्सहभुवश्च वेदनादयो जात्यादयश्च पक्षान्तरे, ते सर्वत्रगहेतुनैव सत्कायदृष्टिहेतुकाः, सत्कायदृष्टेश्च हेतुः । पूर्वोत्पन्ना हि सत्कायदृष्टिस्तेषां हेतुः, ते च पूर्वोत्पन्ना सत्कायदृष्टेरिति । असंक्लिष्टं तु दुःखसत्यं कुशलमनिवृत्ताव्याकृतं न न सत्कायदृष्टिहेतुकं न च सत्कायदृष्टेर्हेतुः; पञ्चविधहेतुत्वासम्भवात् । जनको ह्यत्र हेतुरधिक्रियते, न कारणहेतुः; साधारणत्वात् । विपाकहेतोश्चेहायोगः; सत्कायदृष्टेर्निवृताव्याकृतत्वेनाविपाकत्वात् । तत्र यदेतदुक्तम् - 'सत्कायदृष्टेस्तत्सम्प्रयुक्तानां च धर्माणां जातिं जरां स्थितिमनित्यतां च स्थापयित्वा' इति, तद्विरुध्येत; यदि हि सत्कायदृष्टिसम्प्रयुक्तधर्मजात्यादयो न सहभूहेतुर्भवेयुः, न ते स्थाप्येरन् । ये हि स्थापितास्ते सत्कायदृष्टिहेतुकाः, सत्कायदृष्टेश्च हेतुरिति ।

*ये तर्हि तत्सम्प्रयुक्तानामित्येतन्न पठन्ति ।* तेषां कथं प्रकरणग्रन्थो विरुध्येतेत्यध्याहार्यम् । ते हि सत्कायदृष्टेर्जातिं जरां स्थितिमनित्यतां च स्थापयित्वेत्येवं पठन्ति । तत्सम्प्रयुक्तेष्वेव तल्लक्षणानि व्याप्रियन्ते, न सत्कायदृष्टौ, अतस्तानि तस्या न सहभूहेतुरिति तेषामेवंवादिनामभिप्रायः । *तैरप्येतत् पठितव्यमिति ।* एवमपाठे दोषः इत्यतस्तैरेतत् पदं पठितव्यम्—तत्सम्प्रयुक्तानां चेति । तत्सम्प्रयुक्ता हि सत्कायदृष्टेरात्मकल्पाः; एकालम्बनकृत्याद्यर्थत्वात् । तस्माद्यथा तेषु तत्सम्प्रयुक्तेष्वेतानि लक्षणानि सहभूहेतुः, तथा सत्कायदृष्टावपीति *वैभाषिकाभिप्रायः । अर्थतो वैवं बोद्धव्यमिति ।* सत्कायदृष्टिग्रहणेन सत्कायदृष्टिसम्प्रयुक्तानामपि ग्रहणम् । अधिकारानुवृत्तेर्वा तेनैवं बोद्धव्यम्—तत्सम्प्रयुक्तानाञ्चेति । *काश्मीराः ।* न बहिर्देशका इति दर्शयति ।

१. तत्संप्रयुक्तानां च धर्माणाम्—का० ।

यत्तावत् सहभूहेतुना हेतुः, सहभ्वपि तत् । स्यात्तु सहभूर्न सहभूहेतुना हेतुः धर्मस्यानुलक्षणानि, तानि चान्योन्यम् । चित्तानुपरिवर्त्त्यनुलक्षणानि[1] चैवं[2] चित्तस्य, तानि चान्योन्यं सप्रतिघं चोपादायरूपमन्योन्यमप्रतिघं च किञ्चित् सर्वं च भूतैः प्राप्तयश्च सहजाः प्राप्तिमतः सहभुवो न सहभूहेतुः; अनेकफल-विपाकनिष्यन्दत्वात् । न चैत्ताः[3] सहचरिष्णवः; पूर्वमप्युत्पत्तेः पश्चादपीति ।

सर्वमप्येतत् स्यात्; किन्तु प्रसिद्धहेतुफलभावानां बीजादीनामेष न्यायो न

---

*सहभ्वपि* तदिति । चैत्तादि । चित्तस्य हि चैत्तास्तानि च लक्षणानि सहभूहेतुः सहभूनि च तानि भवन्ति । *धर्मस्यानुलक्षानीति* । विस्तरः—धर्मस्य जातिजात्यादीनि सहभूनि, न सहभूहेतुना हेतुः; विप्रकृष्टत्वात् । जात्यादिषु हितेषां व्यापारो न धर्मे । *तानि चान्योन्यम्* । तानि चानुलक्षणान्यन्योन्यं सह-भूनि; जात्यादिषु व्यापारात् । न सहभूहेतुना हेतुः । धर्मस्तु तेषां सहभूहेतु-र्भवति, प्राधान्यात् । स हि राजेव यात्रायां सभृत्यस्तद्भृत्यवर्गं सर्वं स्वकलाप-माकर्षन्निव प्रवर्त्तते । *चित्तानुपरिवर्त्त्यनुलक्षणानि* चेति । चित्तानुपरिवर्त्तिनां चैत्तध्यानास्रवसंवराणाम् अनुलक्षणानि च तथैव *चित्तस्य* सहभूनि, न तु सहभूहेतुना हेतुः । एवशब्दोऽर्थप्रदर्शनार्थः । तानि चान्योन्यमनुपरिवर्त्त्यनु-लक्षणानि सहभूनि, न तु सहभूहेतुना हेतुः । सप्रतिघं *चोपादायरूपमन्योन्य-*मष्टद्रव्यकादिषु परमाणुषु रूपशब्दगन्धरसस्प्रष्टव्यात्मकं सहभू, न तु सहभू-हेतुना हेतुः । *सप्रतिघ*ग्रहणमप्रतिघनिरासार्थम् । अप्रतिघं हि ध्यानानास्रवं संवररूपं सप्तविधाविज्ञप्तिस्वभावं परस्परं सहभूः, सहभूहेतुना च हेतुरिति । *सर्वं च भूतैरि*ति । सप्रतिघं चाप्रतिघं चोपादायरूपं यथास्वभूतैः सहभूः, न तु सहभूहेतुना हेतुः । *प्राप्तयश्च सहजाः प्राप्तिमतो धर्मस्य* सहोत्पादेऽपि न सहभूहेतुः । पूर्वपश्चात्कालजात् प्राप्तीनाम् । असहभूत्वादेव सहभूहेतुत्वाप्रसङ्ग इति । सहज इति विशेषणम् । *कस्माद्* ? इत्याह—*अनेकफलविपाकनिष्यन्दत्वा*दिति । यस्मात्तासां प्राप्तिमता सह नैकं फलं पुरुषकारफलं वृक्षप्रपाटिकावत् पृथक्स्रोतस्त्वात् । नाप्येकं विपाकफलम्, "नाक्षेपिके समापत्ती अचित्ते प्राप्तयो न च" ( अभि० को० ४.९६ ) इति वचनात् । न चाप्येकनिष्यन्दफलम्; प्राप्तीनां हि प्राप्तय एव निष्यन्दफलं पृथक्सन्तानत्वात् । चित्तानुपरिवर्तिनामेवैकं फलं विपाक-निष्यन्दफलं चेष्यते, न प्राप्तीनाम् । न चैत्ताः *सहचरिष्णवः* सहचरणशीलाः ।

*सर्वमप्येतत् स्यादि*ति । यत्तावत् सहभूहेतुना हेतुरिति विस्तरेण यदुक्तम् ।

---

१. चित्तानुपरि०—का० । २. चैवं—का० । ३. चैत्ताः—का० ।

न दृष्ट इति वक्तव्यमेतत्—कथं सहोत्पन्नानां धर्माणां हेतुफलभाव इति ?

तद्यथा प्रदीपप्रभयोरङ्कुरच्छाययोश्च ।

सम्प्रधार्यं तावदेतत्—किं प्रभायाः प्रदीपो हेतुः, आहोस्वित् पूर्वोत्पन्नैव सामग्री सप्रभस्य प्रदीपस्य सच्छायस्याङ्कुरस्योत्पत्तौ हेतुरिति ?

इतस्तर्हि भावाभावयोस्तद्वत्त्वात् । एतद्धि हेतुहेतुमतो लक्षणमाचक्षते **हैतुकाः**—यस्य भावाभावयोः यस्य भावाभावौ नियमतः, स हेतुः, इतरो हेतुमानिति । सहभुवां च धर्माणामेकस्य भावे सर्वेषां भावः, एकस्याभावे सर्वेषामभाव इति युक्तो हेतुफलभावः ।

स्यात्तावत् सहोत्पन्नानाम्, परस्परं तु कथम् ? अत एव कारणात्[1] ।

---

*बीजादीनामिति* । आदिशब्देनाङ्कुरनालकाण्डादीनां ग्रहणम् । *एष न्यायो न दृष्टः* इति । सहोत्पन्नयोर्हेतुफलभावलक्षणो न्यायो न दृष्टः । पूर्वं हि बीजं पश्चादङ्कुरः, पूर्वमभिघातः पश्चाच्छब्द इति ।

*तद्यथा प्रदीपप्रभयोरङ्कुरच्छाययोश्च* । किम् ? हेतुफलभाव इति वर्तते । प्रदीपः सप्रभ एवोत्पद्यते, न निष्प्रभः । अंकुरस्यातपे उत्पद्यमानस्यैव छाया भवति । अथ च प्रदीपः प्रभायाः सहोत्पन्नाया हेतुर्भवति, छायायाश्चाङ्कुरः, तद्वत् । *सम्प्रधार्यं तावदि*ति । विस्तरः—असिद्धो दृष्टान्त इति परस्याभिप्रायः । *यस्मात् पूर्वोत्पन्नैव* वर्त्तिस्नेहादिका *सामग्री सप्रभस्य प्रदीपस्योत्पत्तौ* हेतुः । प्रदीपस्य प्रभायाश्च नैव सामग्री हेतुः, न तु प्रदीपः प्रभाया हेतुरिष्यते । एवं सच्छायस्याङ्कुरस्योत्पत्तौ पूर्वोत्पन्नैव सामग्री बीजातपादिका वाच्या ।

*नियमत* इति । यस्य धर्मस्य भावे यस्य धर्मस्य भावो नियमेन न यदृच्छया, *स हेतुः, इतरो हेतुमान्* । कार्यधर्म इत्यर्थः । *सहभुवां च धर्माणाम्*, तद्यथा भूतानां चतुर्णां चित्तचैत्तानुपरिवर्तिनां लक्ष्यलक्षणानां च । *एकस्य भावे सर्वेषां भाव एकस्य चाभावे सर्वेषामभाव* इति *युक्तो हेतुफलभावः* ।

*स्यात्तावत् सहोत्पन्नाना*मिति विस्तरः । सहोत्पन्नानां हेतुफलभाव इष्यते । तद्यथा—चक्षुः सहोत्पन्नमपि चक्षुर्विज्ञानेन तदुत्पत्तौ हेतुर्भवति । *परस्परं तु कथम् ?* न हि चक्षुर्विज्ञानं तस्य चक्षुषो हेतुर्भवतीति आह—*अत एव कारणाद्* । भावाभावयोस्तद्वत्त्वादित्यर्थः । चैत्तादीनां भावे चित्तस्य भावादभावे चाभा-

---

१. एवाह—का० ।

एवं तर्ह्यविनाभाविनो[1]ऽप्युपादायरूपस्यान्योन्यमेष प्रसङ्गः भूतैश्च सार्धं चित्तानुलक्षणादीनां च चित्तादिभिः ?

त्रिदण्डान्योन्यबलावस्थानवत् तर्हि सहभुवां हेतुफलभावः सिध्यति ।

मीमांस्यं तावदेतत्—किमेषां सहोत्पन्नबलेनावस्थानम्, आहोस्वित् पूर्वसामग्रीवशात् तथैवोत्पाद इति ? अन्यदपि च तत्र किञ्चिद्भवति—सूत्रकम्, शङ्कुको वा, पृथिवी वा धारिका। एषामपि नामान्येऽपि सभागहेतुत्वादयो भवन्तीति सिद्धः सहभूहेतुः ॥ ५१ ॥

सभागहेतुः कतमः ?

**सभागहेतुः सदृशाः**

---

वात् चित्तस्य हेतवो भवन्तीति । *एवं तर्हीति* । विस्तरः—यद्येकस्य भावे सर्वेष भावः, सर्वेषां चाभाव एकस्येत्यतोऽन्योन्यं हेतुफलभावः ? "कामेऽष्टद्रव्यकः" (अभि० को० २.२२) इत्यविनाभाविनोऽपि रूपरसगन्धस्प्रष्टव्यस्वभावस्योस्योपा*दायरूपस्यान्योन्यमेष प्रसङ्गः* । अन्योन्यसहभूहेतुप्रसङ्ग इत्यर्थः । *भूतैश्च सार्धमुपा*दायरूपस्य सहभूहेतुत्वप्रसङ्गः । *चित्तानुलक्षणादीनां* चेति । आदिशब्देन चित्तानुपरिवर्त्यनुलक्षणानां च । *चित्तादिभिरि*ति । अत्राप्यादिशब्देन चित्तानुपरिर्वात्तिभिश्चान्योन्यहेतुप्रसङ्गः । तेनैव चादिशब्देन प्राप्तिभिः सहजाभिः प्राप्तिमतामेष प्रसङ्ग इति वक्तव्यम् ।

*त्रिदण्डान्योन्यबलावस्थानवदि*ति । अन्योन्यबलेनावस्थानमन्योन्यबलावस्थानम्, त्रिदण्डस्यान्योन्यबलावस्थानं त्रिदण्डान्योन्यबलावस्थानम्, तद्वत् त्रिदण्डान्योन्यबलावस्थानवत् । *यथा त्रिदण्डस्य* दण्डत्रयस्यान्योन्यबलेनावस्थानम्, एवं *सहभुवां* चित्तचैत्तादीनां *हेतुफलभावः सिध्यति* ।

*मीमांस्यं तावदेतदि*ति । विस्तरः—परीक्ष्यमेतत्, न सिद्धोऽयं दृष्टान्त इत्यभिप्रायः । सहोत्पन्नास्त्रयो दण्डास्तेषां बलम्, तेन *सहोत्पन्नबलेन किमेषां* दण्डा*नामवस्थानम्, आहोस्वित् पूर्वसामग्रीवशात् तथोत्पादः* । आहोस्विद् यथैवैषामवस्थितः पूर्वभूतभौतिकसमुदायलक्षणसामग्रीवशात् सहभावस्तथैव पश्चादपि परस्पराश्रितानामुत्पाद इति । *अन्यदपि च तत्र किञ्चिद् भवति* । नान्योन्यबलमेवेति दर्शयति । किं तद् ? इत्याह—*सूत्रकं* दण्डत्रयं निवेशितम्, *शङ्कुको वा* कीलको वेत्यर्थः । *पृथिवी वा धारिका* अधस्तात् । *एषामपि नामे*ति । एषामपि सहभुवामन्येऽपि सभागसर्वत्रविपाककारणा हेतवः सूत्रकादिस्थानीया *भवन्तीति सिद्धः* सहभूहेतुः ॥ ५१ ॥

---

१. ०विनिर्भाविणो—का० ।

**सदृशा** धर्माः सदृशानां धर्माणां **सभागहेतुः**, तद्यथा—कुशलाः पञ्च स्कन्धाः कुशलानामन्योन्यं क्लिष्टाः क्लिष्टानाम्, अव्याकृताः अव्याकृतानाम्, रूपमव्याकृतं पञ्चानाम् ।

चत्वारस्तु न रूपस्येत्यपरे, न्यूनत्वात् ।

कललं कललादीनां दशानामवस्थानाम्, अर्बुदादयोऽर्बुदादीनामेकैकापह्रासेनैकस्मिन् निकायसभागे ।

अन्येषु तु समानजातीयेषु दशाप्यवस्था दशानाम् ।

बाह्येष्वपि यवो यवस्य, शालिः शालेरिति विस्तरेण योज्यम् ।

---

*क्लिष्टाः क्लिष्टानामिति* । क्लिष्टाः, अकुशलाः, निवृताव्याकृताश्च । क्लिष्टत्वसामान्येन सभागहेतुत्वमेषाम् । तेनाकुशला अकुशलानां सभागहेतुः, निवृताव्याकृता निवृताव्याकृतानाम् । अकुशला निवृताव्याकृतानाम् । निवृताव्याकृताश्चाकुशलानां सभागहेतुरिति दर्शितं भवति । *अव्याकृता अव्याकृतानामिति* । अनिवृताव्याकृता अनिवृताव्याकृतानामित्यर्थः ।

*रूपमव्याकृतमव्याकृतो* रूपस्कन्धः, *पञ्चानां स्कन्धानां* सभागहेतुः । *चत्वारस्तु स्कन्धा* वेदनादयो *न रूपस्य सभागहेतु*र्विशिष्टत्वात् । न हि विशिष्टो न्यूनस्य सभागहेतुरिष्यते; "*समविशिष्टयोः*" इति वचनात् । कुशलाकुशलं तु रूपमाभिसंस्कारिकत्वात् समं विशिष्टं चेति चत्वारस्तस्य सभागहेतुर्भवन्ति ।

*कललं कललादीनामिति* । पञ्च गर्भावस्थाः—कललार्बुदपेशीघनप्रशाखावस्थाः, पञ्च जातावस्थाः—बालकुमारयुवमध्यवृद्धावस्थाः । इत्येते दश *दशानामवस्थानां सभागहेतुः* । कललं कललान्तस्य यावद् वार्धस्य । *अर्बुदमर्बुदस्य* यावद् वार्धस्य । एवं यावद्वार्धं वार्धस्यैव । *एकैकापह्रासेन* एकैकपरिहारेण *एकस्मिन् निकायसभागे* वक्तव्यम् । *अन्येषु समानजातीयेषु* निकायसभागेषु यदा मनुष्यजन्मनो मनुष्यजन्मैवोत्पद्यते तदा *दशाप्यवस्था दशानामप्यवस्थानाम्* । वृद्धावस्थापि यावद्दशानामवस्थान्तराणाम् । सा हि वृद्धावस्था क्षणान्तरे तज्जन्मवृद्धावस्थायाः सभागहेतुः । अन्त्या तु जन्मान्तरकललादीनां दशानामप्यवस्थानां सभागहेतुरित्यवगन्तव्यम् ।

*बाह्येष्वपि यवो यवस्येति* विस्तरः । यवो यवस्य सभागहेतुर्न शालेः, *शालिः शालेर्* न यवस्य—इत्यनेन तुल्येऽप्यव्याकृतत्वे स्वसन्तान एव सभागहेतुत्वम्, नान्यसन्ताने, जननशक्त्यभावादिति दर्शयति ।

ये तु रूपं रूपस्य नेच्छन्ति सभागहेतुम्, तेषामेष ग्रन्थ इच्छाविघा-ाय सम्प्रवर्त्तते—"अतीतानि महाभूतान्यनागतानां महाभूतानां हेतुरधिपतिः" ) इति ।

किं पुनः सर्वे सदृशाः सभागहेतुः ? नेत्याह । किं तर्हि ?

**स्वनिकायभुवः**

स्वो निकायो भूश्चैषां त इमे **स्वनिकायभुवः** ।

पञ्च निकायाः—दुःखदर्शनप्रहातव्यो यावत् भावनाप्रहातव्यः ।

नव भूमयः—कामधातुरष्टौ च ध्यानारूप्याः ।

तत्र दुःखदर्शनहेया दुःखदर्शनहेयानां सभागहेतुः, नान्येषाम् । एवं यावद् भावनाहेया भावनाहेयानाम् ।

तेऽपि कामावचराः कामावचराणां प्रथमध्यानभूमिकाः प्रथमध्यानभूमिकानां यावद् भवाग्रभूमिकास्तद्भूमिकानामेव नान्येषाम् ।

तेऽपि न सर्वे, किं तर्हि ?

**अग्रजाः** ।

पूर्वोत्पन्नाः पश्चिमानामुत्पन्नानुत्पन्नानां सभागहेतुः । अनागता नैव सभाग-हेतुः । एवमतीते ;

कुत एतत् ? आह—**शास्त्रात्** । "सभागहेतुः कतमः ? पूर्वोत्पन्नानि कुशलमूलानि पश्चादुत्पन्नानां कुशलमूलानां तत्सम्प्रयुक्तानां च धर्माणां स्वधातौ सभागहेतुना हेतुः । एवमतीतानि अतीतप्रत्युत्पन्नानाम् ।

---

*अतीतानि महाभूतान्यनागतानां महाभूतानां हेतुरधिपति*रिति । हेतुप्रत्ययः, अधिपतिप्रत्ययश्चेत्यर्थः । अयुगपद्भावान्न सहभूहेतुः, अत एवाचित्तचैत्तत्वाच्च न सम्प्रयुक्तकहेतुः, असर्वत्रगत्वान्न सर्वत्रगहेतुः, आव्याकृतत्वान्न विपाकहेतुः, पारिशेष्यात् सभागहेतुरेवेत्यवगम्यते । यदि सदृशाः सदृशानां सभागहेतुः, एवं पश्चादुत्पन्नोऽपि पूर्वोत्पन्नस्य सभागहेतुः प्राप्नोति, सहोत्पन्नोऽपि सहो-त्पन्नस्य, अनुत्पन्नोऽप्यनुत्पन्नस्य ? इत्यत आह—*तेऽपि न सर्वे । किं तर्हि ?*

*"अग्रजाः"* । अग्रे जाता अतीताः प्रत्युत्पन्ना वा सभागहेतुः । अनागता न सभागहेतुरित्यर्थादुक्तं भवति । *एवमतीतान्यतीतप्रत्युत्पन्नाना*मिति । पूर्वो-

अतीतप्रत्युत्पन्नान्यनागतानामिति वक्तव्यम्" ।

इदमपि शास्त्रम्—"यो धर्मो यस्य धर्मस्य हेतुः कदाचित् स धर्मस्तस्य धर्मस्य न हेतुः ? आह—कदाचिद्" इति ?

सहभूसम्प्रयुक्तकविपाकहेत्वभिसन्धिवचनाददोष एषः ।

यस्तु मन्यते—अनागतोऽपि स धर्म उत्पद्यमानावस्थायां सभागहेतुत्वे नियतीभूतो भवति, अतस्तां चरमावस्थामभिसन्धायोक्तम्—"न कदाचिन्न हेतुः" इति ?

तस्यायमपरिहारः; यस्मात् स धर्म उत्पद्यमानावस्थायाः पूर्वं सभागहेतुरभूत्वा पश्चाद् भवति ।

इहापि च प्रश्ने—यो धर्मो यस्य धर्मस्य समनन्तरः कदाचित् स धर्मस्तस्य न समनन्तर इति शक्यमनया कल्पनया वक्तुं स्यात्—न कदाचिदिति ।

---

त्पन्नान्यतीतानि पश्चादुत्पन्नातीतानामिति विभज्य व्याख्येयम् । *अतीतप्रत्युत्पन्नान्यनागतानां* सभागहेतुः, न त्वनागतान्यनागतानामित्युक्तम् । अतो गम्यते—नास्त्यनागतः सभागहेतुरिति । *न कदाचिदिति* । न कदाचिन्न हेतुरित्यधिकृतम्, हेतुरेवेत्यर्थः । तस्मादस्त्यनागतः सभागहेतुरित्यभिप्रायः ।

*सहभ्विति* । विस्तरः—सहभूसम्प्रयुक्तकविपाकहेतुष्वभिसन्धिरभिप्रायः, तेन वचनम्, तस्मात् । *सहभूसम्प्रयुक्तकविपाकहेत्वभिसन्धिवचनाददोषः*, न कदाचिन्न हेतुरिति वचने । बाहुलिको ह्येष निर्देश इष्यते ।

*चरमावस्थामभिसन्धायेति* । अन्त्यामनागतावस्थामभिप्रेत्येत्यर्थः । अध्वत्रयेऽपि हेतुर्भवतीति तस्याभिप्रायः ।

*तस्यायमपरिहार* इति विस्तरः । तस्य वादिनोऽयमपरिहारः । कस्मात् ? *यस्मात् स धर्म उत्पद्यमानावस्थायाः पूर्वं सभागहेतुरभूत्वा पश्चाद् भवति*, न नित्यं सभागहेतुरित्यर्थः । बह्वीनामनागतावस्थानामेका चरमावस्था सभागहेतुत्वे नियतीभूता । तदन्या बह्व्यस्तत्रानियतीभूताः सन्ति । तत्र च सामान्येनोक्तम्—न कदाचिन्न हेतुरिति । एवं कृत्वायमपरिहारः । एकस्यामपि ह्यवस्थायां स न सभागहेतुरिति शक्यमेव वक्तुं स्यात् ।

*यो धर्मो यस्य धर्मस्य समनन्तर* इति । समनन्तरप्रत्यय इत्यर्थः । *शक्यमनया कल्पनयेति* । स धर्म उत्पद्यमानावस्थायां समनन्तरप्रत्ययत्वे नियतीभूतो भवति । अतः शक्यं तां चरमावस्थामभिसन्धायेत्यनया कल्पनया वक्तुम्—

कस्मादेवमाह ? यदि स धर्मो नोत्पन्नो भवतीति द्विमुखसन्दर्शनार्थम्—यथा तत्र तथेहापि कर्त्तव्यम्, यथा चेह तथा तत्रेति ।

एवं सति को गुणो लभ्यत इत्यकौशलमेवात्र शास्त्रकारस्यैवं[1] सम्भाव्यते[1] । तस्मात् पूर्वक एवैष[2] परिहारः साधुः ।

यत् तर्हीदमुक्तम्—"अनागतानां सत्कायदृष्टिं तत्सम्प्रयुक्तं च दुःखसत्यं

---

*स्यान्न कदाचिन्न समनन्तर* इति । *कस्मादेवमाह—यदि स धर्मो नोत्पन्नो भवतीति* । यदि स धर्मोऽनागतो भवति नासौ समनन्तरप्रत्ययो भवतीत्यर्थः । *कस्मादेवमाह—द्विमुखसन्दर्शनार्थमिति* । विस्तरः—*यथा तत्र* यो धर्मो यस्य धर्मस्य हेतुः, कदाचित् स धर्मस्तस्य धर्मस्य न हेतुः । आह—न कदाचिदिति । *तथेहापि कर्त्तव्यम्* । यो धर्मो यस्य धर्मस्य समनन्तरः, कदाचित् स धर्मस्तस्य धर्मस्य न समनन्तर इति। आह—न कदाचिदिति कर्त्तव्यम्। यदि स धर्मो नोत्पन्नो भवतीति । *यथा चेह तथा तत्रेति । कथम्* ? यो धर्मो यस्य धर्मस्य समनन्तरः कदाचित् स धर्मः तस्य धर्मस्य न समनन्तरः । आह—यदि स धर्मो नोत्पन्नो भवतीति, एवं तत्र कर्त्तव्यम् । कथम् ? यो धर्मो यस्य धर्मस्य हेतुः कदाचित् स धर्मः तस्य धर्मस्य न हेतुः । आह—यदि स धर्मो नोत्पन्नो भवतीति । यदि स धर्मोऽनागतो भवति नासौ हेतुप्रत्ययो भवतीत्यर्थः ।

अत्राचार्य आह—*एवं सति को गुण* इति विस्तरः । इति द्विमुखसन्दर्शनेन कश्चिद् गुणो लभ्यते । नैव ह्युत्पद्यमानावस्थायां स धर्मो हेतुः समनन्तरो वा मुख्यवृत्त्या भवतीत्य*कौशलमेवात्र शास्त्रकारस्यैवं सम्भाव्यते* । क्वचित् सावकाशं ब्रुवतः, क्वचिन्निरवकाशम् । सावकाशं तावद् यदिदमुक्तम्—यो धर्मो यस्य धर्मस्य हेतुः कदाचित् स धर्मस्तस्य धर्मस्य न हेतुः । आह—न कदाचिदिति । कथं न कदाचिन्न हेतुरित्येवमुक्त्वा पुनर्वर्णयति—चरमावस्थायां सभागहेतुरिति । निरवकाशम्—यदि स धर्मो नोत्पन्नो भवति न समनन्तरः, उत्पन्नस्तु समनन्तर इति । अयमत्राभिप्रायार्थं ऐकान्तिकमर्थं व्यवस्थाप्य पुनरन्यथाकरोतीति *तस्मात् पूर्वक एवैष परिहारः साधुरिति* । सहभूसम्प्रयुक्तकविपाकहेत्वभिसन्धिवचनाददोष इति ।

*यत्तर्हीदमुक्तमिति* । विस्तरः—कुत एतदायातम् ? अनागतो नैव सभागहेतुरित्युक्तम् । तद् यद्यनागतो नैव सभागहेतुः, कस्मादनागता सत्कायदृष्टिः

---

१-१. शास्त्रकारस्यैव सम्भाव्यंत—का० ।

२. एवात्र—का० ।

स्थापयित्वा यत् तदन्यत् क्लिष्टं दुःखसत्यं तत् सत्कायदृष्टिहेतुकं न सत्कायदृष्टेर्हेतुः, यत्तु स्थापितं तत्सत्कायदृष्टिहेतुकं सत्कायदृष्टेश्च हेतुः" इति ?

अनागतसत्कायदृष्टिसम्प्रयुक्तं दुःखसत्यं स्थापयित्वेत्येवमेतत् कर्त्तव्यम्, अर्थतो[1] वैवं[2] बोद्धव्यमिति ।

इदं तर्हि **प्रज्ञप्तिभाष्यं** कथं नीयते—"सर्वधर्माश्चतुष्के नियताः—हेतौ फले आश्रये आलम्बने नियताः" इति ? हेतुरत्र सम्प्रयुक्तकहेतुः, सहभूहेतुश्च ।

---

स्थापिता । यद्धि स्थापितं तत् सत्कायदृष्टिहेतुकं सत्कायदृष्टेश्च हेतुरिति व्याख्यातम् । तत्र कथमनागता सत्कायदृष्टिः सत्कायदृष्टेर्हेतुः । न तावत् सहभूहेतुः सम्प्रयुक्तकहेतुर्वा सम्भवति; असहभूत्वात् । न विपाकहेतुः, अव्याकृतत्वात् । न कारणहेतुः, साधारणत्वेनागण्यमानत्वात् । पारिशेष्यात् सभागहेतुः सर्वत्रगहेतुर्वा भवन्ती भवेत् । इह च सभागहेतुरेव सर्वत्रगहेतुः । अतो यद्यनागता सत्कायदृष्टिः सत्कायदृष्टेर्न सभागहेतुः, कस्मादसौ तृतीयकोट्यर्थं स्थापितेति ?

*वैभाषिक* आह—*अनागतसत्कायदृष्टिसम्प्रयुक्तकं दुःखसत्यं स्थापयित्वेत्येवमेतत् कर्त्तव्यमि*ति । सत्कायदृष्टिसम्प्रयुक्तकमेव स्थापयितव्यम्, न तु सत्कायदृष्टिः । तद्धि वेदनादिकं सहभूहेतुना सम्प्रयुक्तकहेतुना वा सत्कायदृष्टिहेतुकं सत्कायदृष्टेश्च हेतुः, न सभागहेतुना । विनष्टको ह्ययमनागतां सत्कायदृष्टिमिति पाठः । पश्चात्पदस्थेन तच्छब्देन सह न पठितव्यः । सम्प्रयुक्तदुःखसत्यविशेषणार्थं तु समस्यैतत् पदद्वयं पठितव्यम्—अनागतसत्कायदृष्टिसम्प्रयुक्तकमिति । *अर्थतो वैवं बोद्धव्यं* यद्येवं न क्रियेत पाठः । भाष्याक्षेपनिर्वृत्तः पाठो न तन्त्रमित्यभिप्रायः ।

*प्रज्ञप्तिभाष्यं कथं नीयते—सर्वधर्माश्चतुष्के नियता* इति । *हेतौ* नियता यस्य धर्मस्य यो धर्मो हेतुः । स धर्मस्तस्य धर्मस्य न कदाचिन्न हेतुः । त्रिष्वपि कालेषु हेतुरित्यर्थः । एवं फले नियता यस्य धर्मस्य यो धर्मः फलं पुरुषकारादि योज्यम् । *एवमाश्रये* नियता यस्य धर्मस्य चक्षुर्विज्ञानादेर्यो धर्म आश्रयश्चक्षुरादिरिति योज्यम् । *एवमालम्बने* नियता यस्य धर्मस्य चक्षुर्विज्ञानादेर्यो धर्म आलम्बनं रूपादिरिति योज्यम् । तेन धर्माणां हेतौ नियतत्वात् त्रिष्वपि कालेषु सभागहेतुर्भवतीति चोदकाभिप्रायः । सर्वहेत्वनभिसन्धेरदोष इति दर्शयन् *वैभाषिक* आह—*हेतुरत्र सम्प्रयुक्तकहेतुः सहभूहेतुश्च ।* न सभागहेतुः सर्वत्रगहेतुर्वा; अनागतावस्थायामव्यवस्थापितत्वात् । न विपाकहेतुः, अनानि-

---

१. ०समर्थतोऽपि—का० । २. चैवं—का० ।

फलम्—पुरुषकारफलम्, अधिपतिफलं च। आश्रयश्चक्षुरादिरालम्बनं रूपादिकमिति द्रष्टव्यम्।

ननु चैवं सति सभागहेतुरभूत्वा हेतुर्भवतीति प्राप्तम्?

इष्यत एवावस्थां प्रति न द्रव्यम्। अवस्थाफलं हि सामग्र्यम्, न द्रव्यफलम्।

किं पुनः स्याद्—यदि विपाकहेतुवदनागतोऽपि सभागहेतुः स्यात्?

शास्त्रे तस्य ग्रहणं स्यात्।

य एव हि फलदानग्रहणक्रियासमर्थस्तस्यैव ग्रहणाददोषः? नैतदस्ति; निष्यन्दफलेन हि सफलः सभागहेतुः। तच्चानागतस्यायुक्तम्; पूर्वपश्चिमताभावात्।

---

न्ज्यस्य कर्मणः कस्यचिद् गत्यन्तरेऽपि विपाकादानात्। *फलं* पुरुषकारफलमधिपतिफलं च। तयो [illegible] फलत्वात्। *वैभाषिकाणामेतन्मतम्*—अनागतं विद्यमानमुत्पद्यत इति। तस्मादयं प्रसञ्जयति।

*ननु चैवं सति सभागहेतुरभूत्वा* अनागतावस्थाया *हेतुर्भवति* वर्त्तमानावस्थायामिति। *प्राप्तं* प्रसक्तमित्यर्थः।

*इष्यत एवावस्थां प्रति न द्रव्यमिति*। इष्यत एव सभागहेतोः सभागहेतुत्वावस्था—पूर्वं नासीदिदानीं भवतीति। न तु द्रव्यस्वलक्षणम्—पूर्वं नासीदिदानीं भवतीति। *अवस्थाफलं हि सामग्र्यं न द्रव्यफलमिति*। हेतुप्रत्ययसामग्र्या वर्त्तमानावस्थाफलं न द्रव्यम्। यस्मादनागतोऽपि स धर्मो द्रव्यतोऽस्ति, न पुनः प्रत्युत्पन्न एवेति। चोदक आह—*किं पुनः स्यादिति* विस्तरः। *वैभाषिक* आह—*शास्त्रे तस्य ग्रहणं स्यादिति*। तस्यानागतस्य सभागहेतोः। न चास्ति ग्रहणम्। न हि तत्र शास्त्रमुक्तम्—अनागतानि कुशलमूलान्यनागतानां कुशलमूलानां सभागहेतुरिति। चोदक आह—*य एव हीति* विस्तरः। चोदकस्यायमभिप्रायः—यद्यप्यनागतोऽस्ति सभागहेतुर्न त्वसौ फलदानग्रहणक्रियायां समर्थः। य एव हि *फलदानग्रहणक्रियासमर्थः* फलाक्षेपक्रियासमर्थश्च *तस्यैव* सभागहेतोरतीतस्य वर्त्तमानस्य च *ग्रहणात् अदोषः*, अनागतस्य सभागहेतोरग्रहणम्; तस्य फलदानग्रहणक्रियायामसामर्थ्यात्। तस्मादस्त्यनागतः सभागहेतुः। अथ च शास्त्रे नोक्त इति? वैभाषिक आह—*नैतदस्तीति* विस्तरः। नैतद् युज्यते। *निष्यन्दफलेन हि सफलः सभागहेतुः*। "सभागसर्वत्रगयोर्निष्यन्दः", (अभि० को० २.५६) "निष्यन्दो हेतुसदृशः" (अभि० को० २.५७) इति वचनात्। *तच्चानागतस्यायुक्तम्*। तन्निष्यन्दफलमयुक्तम्। कस्मात्?

न चोत्पन्नमनागतस्य निःष्यन्दो युज्यते, यथा—अतीतं वर्त्तमानस्य ।

मा भूद्धेतोः पूर्वं फलमिति, नास्त्यनागतः सभागहेतुः; विपाकहेतुरपि एवमनागतो न प्राप्नोति, विपाकफलस्य पूर्वं सह चायोगादनागते चाध्वनि पूर्वपश्चिमताऽभावात् ? नैतदस्ति; सभागहेतोर्विना पौर्वापर्येण सदृशः सदृशस्य सभागहेतुरित्यन्योन्यहेतुत्वादन्योन्यनिःष्यन्दता सम्प्रसज्येत । न चान्योन्य-निःष्यन्दता युक्तिमतीति ।

न त्वेवं[1] विपाकहेतुः[2]; विना[2] पौर्वापर्येणान्योन्यहेतुफलता सम्प्रसज्यते; भिन्नलक्षणत्वाद्धेतुफलयोः ।

---

*पूर्वपश्चिमताभावात्* । अनागतावस्थायाम् 'इदं पूर्वमिदं पश्चिमम्' इति न परिच्छिद्यते; विप्रकीर्णत्वात् । न चासति पूर्वापरभावे सदृशः सदृशस्य निष्यन्दो युज्यते । अथ मतम्—उत्पन्नमतीतं वर्त्तमानं वा अनागतस्य निष्यन्द इति ? अत आह—*न चोत्पन्नमनागतस्य निष्यन्दो युज्यत* इति । *यथातीतं वर्त्तमानस्य निष्यन्दो* न भवति, तथाऽनागतस्यानुत्पन्नो न निष्यन्दो भवितुमर्हति ।

कस्माद् ? इत्याह—*मा भूद्धेतोः पूर्वं* फलमिति । दोषात् । *विपाकफलस्य पूर्वं सह चायोगा*दिति, मा भूद्धेतो पूर्वं फलमिति पूर्वमयोगः । सह चायोगोऽनागतावस्थायाम् । न हि प्रत्युत्पन्नावस्थायां सहभूहेतोरिव विपाकहेतोः सहोत्पन्नं फलमुपलभ्यते । कस्मात् ? *अनागते चाध्वनि पूर्वपश्चिमताभावात्* । विप्रकीर्णत्वादनागतस्याध्वनो न पूर्वं विपाकहेतुः पश्चाद् विपाकफलं युज्यते । तस्माच्च सभागहेतुवद् विपाकहेतुरप्यनागतो न प्राप्नोति । *वैभाषिक* आह—*नैतदस्ति* । यदुक्तम्—विपाकहेतुरप्येवमिति । *न चान्योन्यनिष्यन्दता युक्तिमती*ति । यस्य यः सभागहेतुः सदृशो धर्मस्तस्य स एव धर्मस्तदानीमेव कथं निष्यन्दो योक्ष्यते, न हि पुत्रः स्वस्यैव पितुस्तदानीमेव पिता भवतीति ! *न त्वेवं विपाकहेतुः* । किम् ? *अन्योन्यहेतुफलता न पौर्वापर्येण विना सम्प्रयुज्यते* प्राप्नोति । कस्मात् ? *भिन्नलक्षणत्वाद्धेतुफलयोः* । हेतोरन्यल्लक्षणं स्वभाव इत्यर्थः । अकुशलता कुशलसास्रवता वा तस्य लक्षणम् । फलस्य चान्यल्लक्षणमनिवृताव्याकृतत्वम् । "विपाकहेतुरशुभाः कुशलाश्चैव सास्रवाः", ( अभि० को० २.५४ ) "विपाकोऽव्याकृतो धर्मः" ( अभि० को० २.५७ ) इति वचनात् ।

---

१. त्वेव—का० ।

२–२. विपाकहेतोर्विना—का० ।

तस्मादवस्थाव्यवस्थित एव सभागहेतुः, लक्षणव्यवस्थितस्तु विपाकहेतुरित्यनागतोऽपि न वार्यते ।

यदुक्तम्—'स्वभूमिकः सभागहेतुर्भवति' इति, किमेष नियमः सर्वस्य सास्रवस्यैष नियमः ?

**अन्योन्यं नवभूमिस्तु मार्गः**

'सभागहेतुः' इत्यधिकारः । अनागम्ये ध्यानान्तरिकायां चतुर्षु ध्यानेषु त्रिषु चारूप्येषु **मार्गसत्यमन्योन्यं** सभागहेतुः ।

किं कारणम् ? आगन्तुको ह्यसौ तासु भूमिषु न तद्धातुपतितः; तद्भूमिकाभिस्तृष्णाभिरस्वीकृतत्वात् । अतः समानजातीयस्यान्यभूमिकस्यापि सभागहेतुर्भवति ।

---

तस्मादिति विस्तरः । *अवस्थाव्यवस्थित एव सभागहेतुः ।* अवस्थायां व्यवस्थितः, अतीतावस्थः प्रत्युत्पन्नावस्थश्च सभागहेतुः, नागतावस्थः । *लक्षणव्यवस्थितस्तु विपाकहेतुः ।* लक्षणेन व्यवस्थितस्त्रिष्वपि कालेषु यथोक्तलक्षण *इत्यनागतोऽपि* विपाकहेतुर्न *वार्यते* न प्रतिषिध्यते । इदमिह विचार्यते—किमनागतेऽध्वनि सदृशा धर्मा विप्रकीर्णा इति न शक्यते परिच्छेत्तुम्—'अयं हेतुरिदमस्य निष्यन्दफलम्' इति, अतो नानागतः सभागहेतुर्व्यवस्थाप्यते ? आहोस्विद् यो धर्मो यस्य धर्मस्य सभागहेतुर्भवेत् स धर्मस्तस्य हेतुप्रत्ययवशान्निष्यन्दफलं भवेदित्यतोऽनागतः सभागहेतुर्न व्यवस्थाप्यते ? नेतद् *व्याख्यानकारै*र्विचारितम्, मम तु पूर्वक एवायं पक्षः प्रतिभातीति ।

*किमेष नियम* इति । किं स्वभूमिक एवेत्यवधार्यते । नान्यथाप्यस्तीत्यभिप्रायः ।

*"अन्योन्यं नवभूमिस्तु मार्गः"* इति । तुशब्दो विशेषणे । मार्ग इति मार्गसत्यं विवक्षितम् । सास्रवान्मार्गसत्यं विशिष्यते । सास्रवो हि धर्मः स्वभूमिक एव सभागहेतुः, नान्यभूमिकः । मार्गसत्यं तु भिन्नभूमिकोऽपि सभागहेतुः । इह भूमिग्रहणे सास्रवानास्रवग्रहणम्, धातुग्रहणे तु सास्रवस्यैव, इत्यत आह—यत् सास्रवाणां मार्गस्य च तुल्ये भूमिभेदे *मार्ग एव नवभूमिकोऽन्योन्यं सभागहेतुर्न* सास्रव इति । *कुतः ?* इत्याह—*आगन्तुको ह्यसौ तासु भूमिषु न तद्धातुपतितः, तद्भूमिकाभिस्तृष्णाभिरस्वीकृतत्वा*दिति । न हि कामरूपारूप्यचर्यस्तृष्णाः सास्रवानिवानास्रवान् धर्मान् स्वीकुर्वन्ति । यदा तर्हि निर्वाणं मार्गं वाभिलषति कुशलोऽसौ धर्मच्छन्दः, न रागः, तस्य वर्ज्यत्वादिति वचनात् । *समानजातीय*स्येति । अनास्रवजातीयस्य ।

स पुनः—

**समविशिष्टयोः ॥ ५२ ॥**

न न्यूनस्य हेतुर्भवति । तद्यथा—दुःखे धर्मज्ञानक्षान्तिस्तस्या एवानागतायाः सभागहेतुर्विशिष्टस्य च यावदनुत्पादज्ञानस्य । अनुत्पादज्ञानमनुत्पादज्ञानस्यैव; अन्यविशिष्टस्याभावात् ।

दर्शनभावनाऽशैक्ष्यमार्गास्त्रिद्व्येकेषाम् । तत्रापि मृद्विन्द्रियमार्गो मृदुतीक्ष्णेन्द्रियमार्गस्य हेतुः । तीक्ष्णेन्द्रियमार्गस्तीक्ष्णेन्द्रियमार्गस्यैव । तद्यथा—श्रद्धानुसारिश्रद्धाधिमुक्तसमयविमुक्तमार्गाः षण्णां चतुर्णां द्वयोश्च । धर्मानुसारिदृष्टिप्राप्तासमयविमुक्तमार्गाः त्रयाणां द्वयोरेकस्य ।

---

एवं तर्हि सर्वः सर्वस्य सभागहेतुः प्राप्नोति ? अत आह—"*समविशिष्टयोः*" इति । अन्योन्यग्रहणं तर्हि किमर्थम् ? उर्ध्वभूमिकाधरभूमिकयोरन्योन्यमित्येवमर्थम् । ऊर्ध्वभूमिकोऽप्यधरभूमिकयोः समविशिष्टयोः सभागहेतुर्भवति, अधरभूमिकोऽप्यूर्ध्वभूमिकयोरिति । *तद्यथेति* । विस्तरः—दुःखे *धर्मज्ञानक्षान्तिस्तस्या* एवानागतायाः समेति कृत्वा *सभागहेतुः*, *विशिष्टस्य* च दुःखे धर्मज्ञानस्य दुःखेऽन्वयज्ञानक्षान्ते*र्यावदनुत्पादज्ञानस्य*, न तु न्यूनस्य ; न हि दुःखे धर्मज्ञानमनागताया दुःखे धर्मज्ञानक्षान्तेः सभागहेतुर्भवति ।

*दर्शनभावनाशैक्षमार्गास्त्रिद्व्येकेषामिति* । दर्शनमार्गो दर्शनमार्गान्तरस्य भावनामार्गस्याशैक्षमार्गस्य च सभागहेतुरिति त्रयाणाम् । भावनामार्गो भावनामार्गान्तरस्याशैक्षमार्गस्य च सभागहेतुः, न दर्शनमार्गस्येति द्वयोः । अशैक्षमार्गोऽशैक्षमार्गान्तरस्य न दर्शनमार्गभावनामार्गयोरित्येकस्य सभागहेतुः । *तत्रापीति* । तत्र दर्शनमार्गादिषु *मृद्विन्द्रियमार्गो* दर्शनमार्गस्वभावो *मृदुतीक्ष्णेन्द्रियमार्गस्य* तत्स्वभावस्यैव । तीक्ष्णेन्द्रियमार्गस्तीक्ष्णेन्द्रियमार्गस्यैव, न मृद्विन्द्रियमार्गस्य, न्यूनत्वात् । एवं भावनामार्गोऽशैक्षमार्गश्च वक्तव्यः । तद्दर्शयन्नाह—*तद्यथेति* । विस्तरः—एकस्यापि मृद्विन्द्रियस्य पुद्गलस्य षण्मार्गाः सन्ति । प्रकृतितीक्ष्णेन्द्रियस्य त्रयः । तत्र *श्रद्धानुसारिमार्गः* श्रद्धानुसारिमार्गान्तरस्यात्मीयस्य सभागहेतुः । धर्मानुसारिमार्गस्य चात्मीयस्यानागतावस्थस्य श्रद्धाधिमुक्तदृष्टिप्राप्तसमयविमुक्तासमयविमुक्तमार्गाणां चात्मीयानां यथायोगमुत्पत्त्यनुत्पत्तिधर्माणां चेति षण्णां *सभागहेतुः* । *श्रद्धाधिमुक्तमार्गः* श्रद्धाधिमुक्तमार्गान्तरस्य दृष्टिप्राप्तसमयविमुक्तासमयविमुक्तमार्गाणां चापरेषामपि त्रयाणामिति *चतुर्णां* सभागहेतुः । *समयविमुक्तमार्गः* समयविमुक्तमार्गान्तरस्यासमय-

कथं पुनरूर्ध्वभूमिकस्याधोभूमिको मार्गः समो वा भवति ? विशिष्टो वा ? इन्द्रियतः, हेतूपचयतश्च ।

---

विमुक्तमार्गस्य चेति द्वयोः सभागहेतुः । न तु श्रद्धाधिमुक्तमार्गः श्रद्धानुसारिधर्मानुसारिमार्गयोर्हेतुः; पूर्वकालीनत्वाद् दर्शनमार्गस्य, भावनामार्गस्य च विशिष्टत्वात् । एवमन्यत्रापि योज्यम् । *धर्मानुसारिमार्गो* धर्मानुसारिमार्गान्तरस्य दृष्टिप्राप्तासमयविमुक्तमार्गयोश्चे*ति त्रयाणां* सभागहेतुः । *दृष्टिप्राप्तमार्गो* दृष्टिप्राप्त[illegible] चेति *द्वयोः* । *असमयविमुक्तमार्गो*ऽसमयविमुक्तमार्गान्तरस्यैवेत्येकस्य सभागहेतुः । न तु धर्मानुसारिमार्गः श्रद्धानुसारिमार्गस्य सभागहेतुः; धर्मानुसारिमार्गस्येन्द्रियतो विशिष्टत्वात् । नापि श्रद्धाधिमुक्तमार्गस्येन्द्रियतो विशिष्टत्वात्, नापि समयविमुक्तमार्गस्येन्द्रियतो विशिष्टत्वात् । समयविमुक्तमार्गस्तर्हीन्द्रियतो विशिष्टस्य दृष्टिप्राप्तमार्गस्य सभागहेतुः प्राप्नोति ? न प्राप्नोति, अशैक्षमार्गसंगृहीतत्वात् । नहि पूर्वकालीनं फलं पश्चात्कालीनो हेतुरिति । दृष्टिप्राप्तमार्गः पुनः समयविमुक्तमार्गस्य न सभागहेतुः; इन्द्रियतो न्यूनत्वात् ।

*कथं पुनरि*ति । विस्तरः—कथं पुनरूर्ध्वभूमिकस्य द्वितीयध्यानात् प्रभृति यावदाकिञ्चन्यायतनभूमिकस्य दर्शनमार्गस्य भावनामार्गस्य वा अशैक्षमार्गस्य वा यथायोगमधोभूमिको मार्गो विज्ञानानन्त्यायतनात् प्रभृति यावदनागम्यभूमिको यथायोगं दर्शनमार्गो भावनामार्गो वा अशैक्षमार्गो वा *समो वा विशिष्टो वा* भवति । कथञ्च न भवितव्यम् ? हीनत्वादधराया भूमेः । *इन्द्रियतो हेतूपचयतश्च ।* इन्द्रियतस्तावत् समो भवति विशिष्टो वा, दर्शनमार्गे श्रद्धानुसारिमार्गश्चतुर्थध्यानभूमिकोऽधरभूमिकस्य तस्यैव श्रद्धानुसारिमार्गस्य समः; उभयोर्मृद्विन्द्रियत्वात् । तस्यैवाधरभूमिको धर्मानुसारिमार्गो विशिष्टः, तीक्ष्णेन्द्रियत्वात् ।

नुसारिमार्गस्य समः । एवमेतावेव श्रद्धानुसारिधर्मानुसारिमार्गौ चतुर्थध्यानभूमिकावधरभूमिकयोर्भावनाशैक्षमार्गयोः प्रत्येकं भूमीन्द्रियभेदभिन्नयोः समौ वा विशिष्टौ वेति सम्भवतो योज्यौ । तथा भावनामार्गे आकिञ्चन्यायतनभूमिकस्य श्रद्धाधिमुक्तमार्गस्याधरभूमिकः श्रद्धाधिमुक्तमार्गः समः; उभयोर्मृद्विन्द्रियत्वात् । तस्यैवाधरभूमिको दृष्टिप्राप्तमार्गो विशिष्टः, तीक्ष्णेन्द्रियत्वात् । तथा तस्यैव समयविमुक्तमार्गोऽधरभूमिकः समः, उभयोर्मृद्विन्द्रियत्वात् । तस्यैवासमयविमुक्तमार्गोऽधरभूमिको विशिष्टः, तीक्ष्णेन्द्रियत्वात् । [illegible]मार्गे आकिञ्चन्यायतनभूमिकस्याशैक्षमार्गस्याधरभूमिकः समो विशिष्टो वेति यथायोगं योज्यम् । अनया दिशा सर्वभूमयो योज्याः ।

तत्र दर्शनादिमार्गाणां मृदुमृद्वादीनां चोत्तरोत्तरे[1] हेतूपचिततराः[1] ।

यद्यप्येकसन्ताने श्रद्धाधर्मानुसारिमार्गयोरसम्भवः; उत्पन्नस्त्वनागतस्य हेतुः ॥ ५२ ॥

---

कथं हेतूपचयतः ? ऊर्ध्वभूमिकस्याधरभूमिको मार्गः समो विशिष्टो वा भवतीत्यत इदमुच्यते । *तत्र दर्शनादिमार्गाणामिति* । विस्तरः—आदिग्रहणेन भावनाशैक्षमार्गोपसंग्रहः । ऊर्ध्वभूमिकाया दुःखे धर्मज्ञानक्षान्तेरधोभूमिकं दुःखे धर्मज्ञानं हेतूपचयतो विशिष्टं भवति । दुःखे धर्मज्ञानादप्यूर्ध्वभूमिकादधरभूमिका दुःखेऽन्वयज्ञानक्षान्तिर्यावदूर्ध्वभूमिकान्मार्गे धर्मज्ञानदधरभूमिका मार्गेऽन्वयज्ञानक्षान्तिर्हेतूपचयतो विशिष्टा भवति; एकैकाधिकसभागहेतूपचितत्वात् । दर्शनमार्गादूर्ध्वभूमिकादधोभूमिको भावनामार्गो हेतूपचयतो विशिष्टो भवति । दर्शनमार्गो हि दर्शनमार्गहेतूपचितः । भावनामार्गस्तु दर्शनभावनामार्गहेतूपचितः । ऊर्ध्वभूमिकाभ्यां दर्शनभावनामार्गाभ्यामधरभूमिकोऽशैक्षमार्गो हेतूपचयतो विशिष्टो भवति; दर्शनभावनामार्गहेतूपचितत्वात् । ऊर्ध्वभूमिकस्य दर्शनमार्गस्याधोभूमिको. दर्शनमार्गो हेतूपचयतः समानक्षणापेक्षया समो भवति । एवं भावनामार्गस्य भावनामार्गः, अशैक्षमार्गस्याशैक्षमार्ग इति ।

तदेवं कश्चिदिन्द्रियतः समो भवति, हेतूपचयतो विशिष्टः सत्यप्यधरभूमिकत्वे, तद्यथा—प्रथमध्यानभूमिकाच्छ्रद्धानुसारिमार्गादधरभूमिकौ श्रद्धाधिमुक्तसमयविमुक्तमार्गौ । कश्चिद्धेतूपचयतः समो भवतीन्द्रियतो विशिष्टः, तद्यथा—चतुर्थध्यानभूमिकाच्छ्रद्धानुसार्यादिमार्गादधोभूमिकधर्मानुसार्यादिमार्गः समानक्षणापेक्षया । कश्चिदिन्द्रियतो हेतूपचयतश्च विशिष्टः, तद्यथा—चतुर्थध्यानभूमिकाच्छ्रद्धानुसारिमार्गादधरभूमिकौ दृष्टिप्राप्तासमयविमुक्तमार्गौ । *मृदुमृद्वादीनां चोत्तरोत्तरे हेतूपचिततरा* इति । दर्शनमार्गवर्ज्याः । तस्मिन् मृदुमृद्वाद्यसम्भवात् । तत्र मृदुमृदोः प्रकारादूर्ध्वभूमिकादधरभूमिकोऽपि मृदुमध्यो यावदधिमात्रमध्यादधिमात्राधिमात्रः समानासमानक्षणापेक्षया हेतूपचयतः समो विशिष्टो वा भवति; एकैकाधिकप्रकारहेतूपचितत्वात् ।

यदुक्तम्—'श्रद्धानुसारिमार्गः षण्णां सभागहेतुः' इति, कथं श्रद्धानुसारिमार्गो धर्मानुसारिमार्गस्य सभागहेतुर्भवति, न हि तयोरेकसन्ताने सम्मुखीभावोऽस्ति ? तेनाह—*यद्यप्येकसन्ताने श्रद्धाधर्मानुसारिमार्गयोरसम्भवः, उत्पन्नस्त्वनागतस्य हेतुरिति* । असम्भवो ह्यत्रासम्मुखीभावः । न त्वभावः, सन्ति हि मृद्विन्द्रियाणां मृद्विन्द्रियमार्गवदात्मीयास्तीक्ष्णेन्द्रियमार्गा अपि । दृष्टिप्राप्तासमयविमु-

---

१–१. चोत्तरोत्तरहेतू०—का० ।

किं पुनः मार्ग एव समविशिष्टयोः सभागहेतुर्भवति ? नेत्याह । लौकिका अपि हि—

**प्रयोगजास्तयोरेव**

समविशिष्टयोः सभागहेतुर्भवन्ति, न न्यूनस्य । यथा कतमे ? इत्याह—

**श्रुतचिन्तामयादिकाः ।**

एते हि प्रायोगिकाः श्रुतचिन्ताभावनामया गुणाः समविशिष्टयोरेव हेतुः, न न्यूनानाम् । तद्यथा—कामावचराः श्रुतमयाः श्रुतचिन्तामयानाम्, चिन्तामयाश्चिन्तामयानाम्; भावनामयाभावात् । रूपावचराः श्रुतमयाः; श्रुतभावनामयानां चिन्तामयाभावात् । भावनामया भावनामयानामेव । आरूप्यावचरा भावनामया भावनामयानामेव । तेषामपि नवप्रकारभेदात् मृदुमृदवः सर्वेषां मृदुमध्या अष्टानाम्—इत्येषा नीतिः ।

---

क्तमार्गास्तु तत्सन्ताने सम्मुखीभवेयुरपि, यदीन्द्रियसञ्चारः क्रियेत । तस्मादुत्पन्नः श्रद्धानुसारिमार्गोऽनुत्पत्तिधर्मिणो धर्मानुसारिमार्गस्य श्रद्धाविमुक्तदृष्टिप्राप्तसमयविमुक्तासमयविमुक्तमार्गाणां च यथायोगमनागतानामुत्पत्तिधर्माणामनुत्पत्तिधर्माणां वा समविशिष्टानां सभागहेतुरिति ।

आचार्यवसुमित्रस्त्वाह—"उत्पन्नः धर्मानुसारिमार्गस्य दृष्टिप्राप्तमार्गस्य वा हेतुः, यदा श्रद्धानुसार्यादय इन्द्रियाणि सञ्चरन्तो धर्मानुसारिमार्गादीन् सम्मुखीकुर्वन्ति". तदयुक्तम्; न हि श्रद्धानुसारीन्द्रियाणि सञ्चरति, श्रद्धाविमुक्तादयस्तु सञ्चरेयुः ॥ ५२ ॥

*प्रायोगिका* इति । प्रयोगेण निवृत्ताः प्रायोगिकाः, प्रायोगिकग्रहणमुपपत्तिप्रतिलम्भिकनिरासार्थम् ।

*कामावचराः श्रुतमया* इति । ये बुद्धवचनश्रुतेन नियाताः, ते श्रुतमयाः । *चिन्तामयाश्च चिन्तामयानामिति*, चिन्तामयानामेव न श्रुतमयानाम्, "तयोरेव समविशिष्टयोः" इति वचनात् । *भावनामयाभावा*दिति । कामधातोरसमाहितत्वाद् भावनामया न सन्ति । *चिन्तामयाभावा*दिति । यदा हि चिन्तयितुमारभन्ते, तदैषां समाधिरेवोत्तिष्ठत इति चिन्तामयाभावकारणम् ।

*तेषामपीति* । श्रुतमयादीनाम् । *मृदुमृदवः सर्वेषामिति* । मृदुमृदवो मृदमृद्वन्तराणां समानां मृदुमध्यादीनां चान्येषामष्टानां विशिष्टानामिति सर्वेषां सभागहेतुः । *मृदुमध्या अष्टानाम्* । मृदुमृदुप्रकारमपास्य तस्य न्यूनत्वात् । *एषा*

उपपत्तिप्रतिलम्भिकास्तु कुशला धर्माः सर्वे नवप्रकाराः परस्परं[1] सभाग-हेतुः[1]। क्लिष्टा अप्येवम्। अनिवृताव्याकृतास्तु चतुर्विधाः—विपाकजा ऐर्या-पथिकाः शैल्पस्थानिकाः निर्माणचित्तसहजाश्च।

ते यथाक्रमं चतुस्त्रिद्व्येकेषां सभागहेतुः। निर्माणचित्तमपि कामावचरं[2] चतुर्ध्यानफलम्[2]। तत्र नोत्तरध्यानफलमधरध्यानफलस्य।

---

*नीतिरि*ति। तद्यथा—मृद्वधिमात्राः सप्तानां मध्यमृदवः षण्णां यावदधिमात्राधि-मात्रा अधिमात्राधिमात्रान्तराणामेकरूपाणां सभागहेतुरिति; पूर्वान् पूर्वान-पास्य तेषां तेषां न्यूनत्वात्।

*उपपत्तिप्रतिलम्भिकास्तु कुशला* इति। उपपत्त्या प्रतिलम्भ उपपत्तिप्रतिलम्भः, स एषामस्तीत्युपपत्तिप्रतिलम्भिकाः, "अत इनिठनौ" ( पा० सू० ५.२.११५ ) इति ठन्। *सर्वे ते नव प्रकारा परस्परं सभाग*हेतुः, मृदुमृदूनां यावदधिमात्राधिमा-त्राणामेव, अधिमात्राधिमात्रा मृदुमृदूनां यावदधिमात्राधिमात्राणां सभागहेतुः, न समविशिष्टानामेव; अनाभिसंस्कारिकत्वात्। आभिसंस्कारिकस्य हि सभाग-हेतोर्न्यूनं फलं नेष्यते, नानाभिसंस्कारिकस्य। *क्लिष्टा अप्येवमि*ति। सर्वे नव प्रकाराः परस्परं सभागहेतुः; अप्रायत्निकत्वात्। पूर्वोत्पन्नाः सर्वे समानभूमि-कानां पश्चाद्वर्त्तिनां सर्वेषां सभागहेतुः। नात्र समविशिष्टते अपेक्ष्येते।

*ते यथाक्रमं चतुस्त्रिद्व्येकेषां सभागहेतुरि*ति। विपाकजा विपाकजादीनां चतुर्णां सभागहेतुः। ऐर्यापथिका ऐर्यापथिकादीनामेव त्रयाणाम्, न विपाकजानाम्; तेषामनाभिसंस्कारिकत्वेन न्यूनत्वात्। शैल्पस्थानिका द्वयोः शैल्पस्थानिक-नैर्माणिकयोः, नैर्माणिका नैर्माणिकानामेव, न पूर्वेषाम्; उत्तरेषामुत्तरेषामाभि-संस्कारिकत्वात्। *निर्माणचित्तमपि कामावचरं चतुर्ध्यानफलमि*ति। चतुर्णां ध्यानानां फलं प्रथमद्वितीयतृतीयचतुर्थध्यानफलमिति चतुष्प्रकारं कामावचरं निर्माणचित्तम्। तद्यथाक्रमं चतुस्त्रिद्व्येकेषां च सभागहेतुरिति वर्त्तते। प्रथम-ध्यानफलं चतुर्णां प्रथमद्वितीयतृतीयचतुर्थध्यानफलानां सभागहेतुः। द्वितीय-ध्यानफलं त्रयाणां द्वितीयतृतीयचतुर्थध्यानफलानाम्, तृतीयध्यानफलं द्वयो-स्तृतीयचतुर्थध्यानफलयोः, चतुर्थध्यानफलमेकस्य चतुर्थध्यानफलान्तरस्यैव सभागहेतुः।

का पुनरत्र युक्तिर्ययैवं नियम इति ? तां युक्तिं निर्दिदिक्षुराह—*नोत्तरध्यान-फलमधरध्यानफलस्ये*ति। विस्तरः—न चतुर्थध्यानफलं कामावचरं निर्माणचित्तं

---

१–१. परस्परसभाग०—का०। २–२. कामावचरचतु०—का०।

न ह्याभिसंस्कारिकस्य सभागहेतोर्हीयमानं फलं भवति । तद्यथा—शालिर्यवादीनाम्, मा भून्निष्फलः प्रयत्न इति ।

अत एवाहुः[1]—स्यादुत्पन्नोऽनास्रवोऽनुत्पन्नस्यास्रवस्य न हेतुः स्यात्, तद्यथा—दुःखे धर्मज्ञानमुत्पन्नमनुत्पत्तिधर्माणां[2] दुःखे धर्मज्ञानक्षान्तीनाम् ।

सर्वं च विशिष्टं न्यूनस्य न हेतुः ।

स्यादेकसन्ताननियतः पूर्वप्रतिलब्धोऽनास्रवो धर्मः पश्चादुत्पन्नस्य न हेतुः ।

स्यादनागताः दुःखे धर्मज्ञानक्षान्तयो दुःखे धर्मज्ञानस्य, यस्मान्न पूर्वतरं फलमस्ति, अनागतो वा सभागहेतुः ।

---

प्रथमध्यानफलस्य कामावचरस्य निर्माणचित्तस्य यावत् तृतीयध्यानफलस्य कामावचरस्य निर्माणचित्तस्य सभागहेतुः । *कस्माद् ?* इत्याह—न *ह्याभिसंस्कारिकस्य* महायत्नसाध्यस्य *सभागहेतोर्हीयमानम*महायत्नसाध्यं *फलं भवति ।* यादृशेन हि यत्नविशेषेण प्रथमं ध्यानं यावत् तृतीयं ध्यानं निष्पाद्यते, न तादृशेनैव चतुर्थं ध्यानं निष्पाद्यते । किं तर्हि ? उत्कृष्टतरेण यत्नविशेषेण निष्पाद्यते । तस्मात् फलमस्योत्कृष्टतरेणैव यत्नविशेषेण निष्पाद्यत इत्यवगम्यते । तेन अधरध्यानफलमुत्तरध्यानफलस्य सभागहेतुः, न तूत्तरध्यानफलमधरध्यानफलस्य । यथा च चतुर्थध्यानफलं योजितम्, एवं तृतीयद्वितीयध्यानफलमपि योज्यम् ।

*अत एवाहुरि*ति । यस्मादाभिसंस्कारिकस्य सभागहेतोर्हीयमानं फलं न भवति, तस्मादाहुरित्यर्थः । किमाहुरिति ? आहुः—*स्यादुत्पन्न* इति । विस्तरः—दुःखे ः　　*दुःखे धर्मज्ञानक्षान्तीनां* च हेतुः; दुःखे धर्मज्ञानक्षान्तिभ्यो दुःखे धर्मज्ञानस्याभिसंस्कारिकत्वेन विशिष्टत्वात् । एवं हि तद् विशिष्टम् यत् क्लेशविसंयोगप्राप्त्या सहोत्पद्यते ।

*विशिष्टं च न्यूनस्य न हेतुः ।* तद्यथार्हत्त्वात् परिहीणस्याशैक्षो मार्गः पूर्वोत्पन्नः सकृदागाम्यनागामिमार्गयोः पश्चादुत्पद्यमानयोर्न सभागहेतुः ।

*स्यादेकसन्ताननियतः पूर्वप्रतिलब्ध* इति । विस्तरः—*अनागता दुःखे धर्मज्ञानक्षान्तयः* प्रथम एव क्षणे प्रतिलब्धा एकसन्तानगताः । दुःखे धर्मज्ञानं द्वितीयक्षणोत्पन्नम्, तस्य ता न हेतुः । *यस्मान्न पूर्वतरं फलम् ।* पूर्वतरं हि दुःखे धर्मज्ञानं दुःखे धर्मज्ञानक्षान्तिभ्यः; तस्योत्पन्नत्वात्, तासाञ्चानुत्पन्नत्वात् । *अनागतो वा* धर्मो यस्मान्न *सभागहेतुः ।* अनागता दुःखे धर्मज्ञानक्षान्तयोऽपरिमिताः प्रतिलब्धा एव, न तूत्पन्नाः ।

---

१. चाहुः—का० ।　　२. ०मनुत्पन्नानां—का० ।

स्यात् पूर्वोत्पन्नोऽनास्रवो धर्मः पश्चादुत्पन्नस्यानास्रवस्य न हेतुः ।

स्यादधिमात्रो न्यूनस्य । तद्यथा—उत्तरफलपरिहीणस्याधरफलसम्मुखीभावे[1] दुःखे धर्मज्ञानप्राप्तिश्च; उत्तरोत्तरक्षणसहोत्पन्नानां दुःखे धर्मज्ञानक्षान्तिप्राप्तीनां न्यूनत्वादिति ।

उक्तः सभागहेतुः ॥

**सम्प्रयुक्तकहेतुस्तु चित्तचैत्ताः**

एवं सति भिन्नकालसन्तानजानामप्यन्योन्यसम्प्रयुक्तकहेतुत्वप्रसङ्गः ।

---

*स्यात् पूर्वोत्पन्न* इति । विस्तरः—पूर्वं प्रतिलब्धमात्रो धर्मः पृष्टो न तूत्पन्नः, अनुत्पन्नश्च न सभागहेतुर्भवतीति; इदानीं पूर्वोत्पन्नोऽपि किमस्ति न सभागहेतुरित्यतिशयरूपेण पृच्छ्यते । *अधिमात्रो न्यूनस्येति* । विशिष्टो न्यूनस्येत्यर्थः । *तद्यथा—उत्तरफलपरिहीणस्य* अर्हत्त्वफलपरिहीणस्यानागामिफलपरिहीणस्य वा *अधरफलसम्मुखीभावे*ऽनागामिफलसम्मुखीभावे सकृदागामिफलसम्मुखीभावे वा योऽर्हत्त्वमार्गोऽधिमात्रः पूर्वोत्पन्नः स पश्चादुत्पन्नस्यानागामिफलस्य सकृदागामिफलस्य वा न सभागहेतुः; न्यूनत्वात् । एवमनागामिफलपरिहीणस्य योऽनागामिफलमार्गः स पूर्वोत्पन्नः पश्चादुत्पन्नस्य सकृदागामिफलस्य न सभागहेतुः, न्यूनत्वात् । *दुःखे धर्मज्ञानप्राप्तिश्चे*ति । विस्तरः—दुःखे धर्मज्ञानप्राप्तिर्या पूर्वोत्पन्ना, *सा उत्तरक्षणसहोत्पन्नानामुत्तरैः* क्षणैर्दुःखेऽन्वयज्ञानक्षान्तिक्षणादिभिरा मार्गेऽन्वयज्ञानक्षान्तेः सहोत्पन्नानां *दुःखे धर्मज्ञानक्षान्तिप्राप्तीनां* न सभागहेतुः । किं कारणम् ? तासां *न्यूनत्वात्*, तस्याश्च विशिष्टत्वात् । कथं पुनस्तासां न्यूनत्वम्, तस्याश्च विशिष्टत्वम् ? दुःखे धर्मज्ञानक्षान्तेर्दुःखे धर्मज्ञानं विशिष्टं तद्वध्यक्लेशप्राप्तिविमुक्तत्वात्, हेतूपचिततरत्वाच्च । तस्माद्धेतूपचिततराभ्योऽपि दुःखे धर्मज्ञानक्षान्तिप्राप्तिभ्यो दुःखे धर्मज्ञानप्राप्तिर्विशिष्टा, ताश्च न्यूनाः; तत्प्राप्तित्वात् ।

किञ्च—प्रथमक्षणोत्पन्नाया दुःखे धर्मज्ञानक्षान्तिप्राप्तेर्दुःखे धर्मज्ञानप्राप्तिः, तस्मादेव हेतुद्वयाद् विशिष्टा । न्यूना च सा दुःखे धर्मज्ञानक्षान्तिप्राप्तिः । अतस्तत्पूर्विका अप्यन्या उत्तरक्षणसहोत्पन्ना दुःखे धर्मज्ञानक्षान्तिप्राप्तयो हेतूपचिततरत्वेऽपि न्यूना एवेति । तस्मान्न सा तासां सभागहेतुरिति ।

*"सम्प्रयुक्तकहेतुस्तु चित्तचैत्ताः"* इति । तु–शब्दोऽवधारणे, भिन्नक्रमश्च । चित्तचैत्ता एव सम्प्रयुक्तकहेतुरिति । *एवं सतीति* विस्तरः । यदि 'चित्तचैत्ता

---

1. ०स्यावर०—का० ।

एकाकारालम्बनास्तर्हि ? एवमपि स एव प्रसङ्गः ।

एककालास्तर्हि ? एवं तर्हि सति भिन्नसन्तानजानामपि प्रसङ्गो नवचन्द्रादीनि हि[1] पश्यताम् ।

तस्मात् तर्हि—

**समाश्रयाः ॥ ५३ ॥**

समान आश्रयो येषां ते **चित्तचैत्ता** अन्योन्यं **सम्प्रयुक्तकहेतुः** ।

समान इत्यभिन्नः । तद्यथा—य एव चक्षुरिन्द्रियक्षणश्चक्षुर्विज्ञानस्याश्रयः, स एव तत्सम्प्रयुक्तानां वेदनादीनामेव, यावन्मनः । इन्द्रियक्षणो मनोविज्ञानतत्सम्प्रयुक्तानां वेदितव्यः । यः सम्प्रयुक्तकहेतुः सहभूहेतुरपि सः ।

अथ केनार्थेन सहभूहेतुः ? केन सम्प्रयुक्तकहेतुः ? अन्योन्यफलार्थेन सहभूहेतुः; सहसार्थिकान्योन्यबलमार्गप्रयाणवत् । पञ्चभिः समताभिः सम्प्रयोगार्थेन

---

एव सम्प्रयुक्तकहेतुः' इत्येतावदुच्यते *भिन्नकालजा अपि* भिन्नकालजैः सह *भिन्नसन्तानजा अपि* च भिन्नसन्तानजैः सह सम्प्रयुक्तकहेतुः *सम्प्रयुज्यते* । न हि ते कालसन्तानभिन्ना न चित्तचैत्ता भवन्ति । *एकाकारालम्बनास्तर्ही*ति । यदि चित्तचैत्ता एकाकारा एकनीलाद्याकारा एकालम्बनाश्च एकनीलाद्यालम्बनाः एवं ते सम्प्रयुक्तहेतुः, नान्यथेति । एवं भिन्नकालजत्वं भिन्नसन्तानजत्वं च व्यावर्तितं भवतीत्यभिप्रायः । *एवमपि स एव प्रसङ्गः* । भिन्नकालसन्तानजानामन्योन्यं सम्प्रयुक्तकहेतुत्वप्रसङ्ग इत्यर्थः । सम्भवति हि भिन्नकालसन्तानजानामपि चित्तचैत्तानामेकाकारालम्बनत्वम् । *भिन्नसन्तानजानामपि प्रसङ्ग* इति । भिन्नकालजत्वमेकं परिहृतम् । *नवचन्द्रादीनि हि पश्यतां* बहूनामेकाकारालम्बनाश्चित्तचैत्ता वर्तन्ते ।

*"समाश्रयाः"* इति । समः अभिन्न आश्रय एषामिति समाश्रयाः । तुल्यार्थे समशब्दग्रहणे हि जातितुल्यत्वात् स एव प्रसङ्गः स्यात् ।

*अन्योन्यफलार्थेने*ति विस्तरः । *यथा सहसार्थिकानां परस्परबलेन मार्गप्रयाणम्, एवं* चित्तं चैत्तस्य फलम्, चैत्तोऽपि चित्तस्येत्यन्योन्यफलमिति तेनार्थेन **सहभूहेतुः** । *पञ्चभिरि*ति विस्तरः । पञ्चभिः *समताभिः*, आश्रयालम्बनाकारकालद्रव्यसमताभिरित्यर्थः । *समप्रयोगार्थेन* समप्रवृत्त्यर्थेन *सम्प्रयुक्तकहेतुः* । यथा—

---

१. का० पुस्तके नास्ति ।

सम्प्रयुक्तकहेतुः । तेषामेव सार्थिकानां स्नानशयनादिपरिभोगक्रियाप्रयोगवत्[1] । एकेनापि हि विना न सर्वे[2] सम्प्रयुज्यन्त इत्ययमेषां हेतुभावः ॥ ५३ ॥

उक्तः सम्प्रयुक्तकहेतुः ॥

सर्वत्रगहेतुः कतमः ?

**सर्वत्रगाख्यः क्लिष्टानां स्वभूमौ पूर्वसर्वगाः ।**

स्वभूमिकाः पूर्वोत्पन्नाः सर्वत्रगा धर्माः पश्चिमानां क्लिष्टानां धर्माणां **सर्वत्रगहेतुः** । तान् पुनः पश्चादनुशयनिर्देशकोशस्थान एव व्याख्यास्यामः ।

क्लिष्टधर्मसामान्यकारणत्वेनायं सभागहेतोः पृथग् व्यवस्थाप्यते; **निकायान्तरीयाणामपि** हेतुत्वात् । एषां हि प्रभावेणान्यनैकायिका अपि क्लेशा उपजायन्ते ।

---

तेषामेव सार्थिकानामन्योबलेन मार्गं गच्छतां समोऽन्नपानस्नानशयनादिपरिभोगक्रियाया प्रयोगः । तद्वत् सम्प्रयोगत्वमेषामन्योन्यं भवति । अत एवाह— *एकेनापि हि विना न सर्वे सम्प्रयुज्यन्त इति* ॥ ५३ ॥

*"पूर्वसर्वगाः"* इति । पूर्वे च ते सर्वगाश्च पूर्वसर्वगाः, पूर्वोत्पन्नाः सर्वगा इत्यर्थः । *स्वभूमिकाः पूर्वोत्पन्ना* अतीता प्रत्युत्पन्ना वा *सर्वत्रगा क्लिष्टानां* क्लेशस्वभावसम्प्रयुक्तसमुत्थानां *पश्चिमानां* पश्चादतीतप्रत्युत्पन्नानामनागतानां च *सर्वत्रगहेतुः । व्याख्यास्याम* इति ।

"सर्वत्रगा दुःखहेतुदृग्घेया दृष्टयस्तथा ।
विमतिः सह ताभिश्च याविद्यावेणिकी च या" ॥ (अभि० को० ५.१२)

इत्यत्र *पञ्चमे कोशस्थाने* निर्देक्ष्यामः ।

*क्लिष्टधर्मसामान्यकारणत्वेनेति* विस्तरः । यस्मादयं सर्वत्रगहेतु. क्लिष्टानामेव सामान्येन पञ्चनिकायानामपि भवति, सभागहेतुस्तु क्लिष्टानां चाक्लिष्टानां च, *तस्मात् पृथग्व्यवस्थाप्यते* । कथं क्लिष्टधर्मसामान्यकारणत्वमस्येति प्रतिपादयन्नाह—[illegible]नि । *एषां हि प्रभावेणेति* । एषां हि सर्वत्रगाणां प्रभावेण *अन्यनैकायिका* अन्यनिकायभवाः *क्लेशा* रागादय *उपजायन्ते* । के पुनस्ते ? दुःखदर्शनप्रहातव्यस्य सर्वत्रगहेतोः समुदयनिरोधमार्गदर्शनभावनाप्रहातव्या निकायान्तरीया भवन्ति । समुदयदर्शनप्रहातव्यस्य सर्वत्रगहेतोर्दुःखनिरोधमार्गदर्शनभावनाप्रहातव्या निकायान्तरीया भवन्ति । सर्वान् क्लेशनिकायान् गच्छन्ति भजन्ते आलम्बन्ते, सर्वेषां वा क्लेशनिकायानां हेतुभावं

---

१. गमानाद्यपानादि०—का० । २–२. सर्वेण—का० ।

किमार्यपुद्गलस्यापि क्लिष्टा धर्माः सर्वत्रगहेतुकाः ? सर्वे एव क्लिष्टा धर्मा दर्शनप्रहातव्यहेतुका इति **काश्मीराः** । तथा **प्रकरणेषूक्तम्**

"दर्शनप्रहातव्यहेतुका धर्माः कतमे ? क्लिष्टा धर्माः, यश्च दर्शनप्रहातव्यानां धर्माणां विपाक इति । अव्याकृतहेतुका धर्माः कतमे ? अव्याकृता संस्कृता धर्मा अकुशलाश्चेति । दुःखसत्यं स्यात् सत्कायदृष्टिहेतुकं न सत्कायदृष्टेर्हेतुरिति विस्तरो यावन्न सत्कायदृष्टेः । तेषां च धर्माणां जातिं जरां स्थितिमनित्यतां च स्थापयित्वा यत्तदन्यत् क्लिष्टं दुःखसत्यम्" ( ) इति ।

इदं तर्हि **प्रज्ञप्तिभाष्यं** कथं नीयते "स्याद्धर्मोऽकुशलहेतुक एव ।

---

गच्छन्तीति सर्वत्रगाः । अत एवोक्तम्—"सत्कायदृष्टिमूलकाः सर्वक्लेशाः सत्कायदृष्टिप्रभवाः सत्कायदृष्टिसमुदयाः" इति; आत्मग्राहद्वारेण रागमानप्रतिघादिसमुदाचारात् ।

*किमार्यपुद्गलस्यापीति* । सर्वत्रगा आर्यपुद्गलस्य सर्व एव प्रहीणाः; दर्शनप्रहातव्यत्वात् । रागादयश्च शैक्षाणां समुदाचरन्ति । ते रागादयस्तेषां न सर्वत्रगहेतुका इति मन्यमान एवं पृच्छति । *क्लिष्टा धर्मा* इति । अविशेषितत्वात् पृथग्जनार्यसन्तानजा इति गम्यते । *यश्च दर्शनप्रहातव्यानां धर्माणां विपाक* इति । अर्थपरिसमाप्त्यर्थमेतदुक्तम्, नैतदुदाहरणम् । *अव्याकृताः संस्कृता धर्मा* इति । निवृताव्याकृता अनिवृताव्याकृताश्च गृह्यन्ते । निवृताव्याकृताः कामधातौ सत्कायान्तग्राहदृष्टितत्सम्प्रयुक्तसमुत्था धर्मा रूपारूप्यावचराश्च क्लिष्टा धर्माः । संस्कृतग्रहणमाकाशाप्रतिसंख्यानिरोधनिरासार्थम् । "परमव्याकृते ध्रुवे" ( अभि० को० ४.११ ) इति तयोरव्याकृतत्वात् । तत्र कामवाचराः क्लिष्टा धर्मा यथायोगं सभागसर्वत्रगसहभूसम्प्रयुक्तकहेतुभूतैस्तैरेव सत्कायदृष्ट्यादिभिरव्याकृतहेतुकाः, नान्यै रागादिभिः । ऊर्ध्वभूमिकस्त्वन्यैरपीति सुगममेतत् । अनिवृताव्याकृताः सभागहेतुनानिवृताव्याकृतहेतुकाः । अकुशलाः कामावचरा रागादयः । ते च सर्वत्रगहेतुना सत्कायदृष्ट्यादिहेतुकाः । इदमत्रोदाहरणम् । *अकुशलाश्चेति* ह्यविशेषितत्वाद् दर्शनप्रहातव्या भावनाप्रहातव्याश्च गृह्यन्ते । इदमत्र द्वितीयज्ञापकम् । *यत् तदन्यत् क्लिष्टं दुःखसत्यमिति* तृतीयं ज्ञापकम् । तदन्यद्धि क्लिष्टं दुःखसत्यं दर्शनप्रहातव्यं भावनाप्रहातव्यं चाविशेषितत्वात् गृह्यते । सर्वत्रगहेतुना हि भावनाप्रहातव्यं पृथग्जनानामिवार्याणामपि सत्कायदृष्टिहेतुकं न सत्कायदृष्टेर्हेतुरिति व्याख्यातमेतत् ।

*इदं तर्हि प्रज्ञप्तिभाष्यमिति* । यद्यकुशला अव्याकृतहेतुका अपि भवन्ति न

स्यादार्यपुद्गलः कामवैराग्यात् परिहीयमाणो यः[1] तत्प्रथमतः क्लिष्टां चेतनां सम्मुखीकरोति" इति ? अप्रहीणहेतुमेतत् सन्धायोक्तम् । दर्शनप्रहातव्यो हि तस्या हेतुः प्रहीणत्वान्नोक्तः ।

उक्तः सर्वत्रगहेतुः ॥

विपाकहेतुः कतमः ?

**विपाकहेतुरशुभाः कुशलाश्चैव सास्रवाः ॥ ५४ ॥**

**अकुशलाः कुशलसास्रवाश्च** धर्मा **विपाकहेतुः**; विपाकधर्मत्वात् ।

कस्मादव्याकृता धर्माः विपाकं न निर्वर्त्तयन्ति ? दुर्बलत्वात्, पूतिबीजवत् ।

---

केवलमकुशलहेतुकाः, *प्रज्ञप्तिभाष्यं कथं* नीयते । स्यात् *आर्यपुद्गलः कामवैराग्यात् परिहीयमाणो यस्तत्प्रथमतः क्लिष्टां चेतनां सम्मुखीकरोतीति* । कामवैराग्यपरिहाणिकाले हि सा आर्यपुद्गलस्य चेतना सहभूहेतुना च सम्प्रयुक्तकहेतुना अकुशलहेतुकैव,नाव्याकृतहेतुका; सत्कायान्तग्राहदृष्ट्योः प्रहीणत्वात्–इति प्रज्ञप्तिभाष्यार्थो लक्ष्यत इति, अनेनाभिप्रायेण चोदयति। *वैभाषिक* आह—*अप्रहीणं हेतुमेतत् सन्धायोक्तमि*ति । अप्रहीणं सहभूहेतुं सम्प्रयुक्तकहेतुञ्च सन्धाय अभिप्रेत्य एतत् *प्रज्ञप्तिभाष्यमुक्तम्* । *दर्शनप्रहातव्यो हि* सत्कायदृष्ट्यादिकः तस्याश्चेतनाया हेतुः । *प्रहीणत्वात्* दर्शनमार्गेण नोक्तः *प्रज्ञप्तिभाष्य* इति ।

*अकुशलाः कुशलसास्रवाश्चेति* । अकुशला अवश्यं सास्रवा एवेति न विशेष्यन्ते । कुशलास्तु द्विप्रकाराः—सास्रवाः, अनास्रवाश्चेति । अतो विशेष्यन्ते । ये सास्रवाः कुशलाः, ते विपाकहेतुः, नानास्रवा इति । *विपाकधर्मत्वा*दिति । विपक्तिप्रकृतित्वादित्यर्थः ।

*दुर्बलत्वात् पूतिबीजव*दिति विस्तरः । यथा पूतीनि बीजान्यभिष्यन्दितान्यपि दुर्बलत्वान्नाङ्कुरोत्पत्तिहेतुर्भवन्ति, एवमव्याकृता धर्मास्तृष्णाभिष्यन्दिता अपि न विपाकोत्पत्तिहेतुर्भवन्ति; दुर्बलत्वात् । *अनास्रवा* बलवन्तोऽपि तृष्णानभिष्यन्दितत्वाद् विपाकं *न निर्वर्तयन्ति* । यथाद्भिरनभिष्यन्दितत्वाच्छुष्काणि बलवन्त्यपि सारबीजानि नाङ्कुरं निर्वर्तयन्ति, तद्वत् । पूर्वेषां स्वशक्तिवैकल्यम्, अपरेषां सहकारिकारणान्तरवैकल्यम् ।

---

१. यां—का० ।

कस्मान्नानास्रवाः ? तृष्णानभिष्यन्दितत्वात्, अनभिष्यन्दितसारबीजवत् । अप्रतिसंयुक्ता हि किम्प्रतिसंयुक्तं विपाकमभिनिर्वर्त्तयेयुः !

शेषास्तूभयविधित्वान्निर्वर्त्तयन्ति विपाकम्[1], साराभिष्यन्दितबीजवत् ।

कथमिदं विज्ञातव्यम्—विपाकस्य हेतुर्विपाकहेतुः ? आहोस्विद् विपाक एव हेतुर्विपाकहेतुः ? किं चातः ? यदि विपाकस्य हेतुर्विपाकहेतुः, 'विपाकजं चक्षुः' इति एतन्न प्राप्नोति । अथ विपाक एव हेतुर्विपाकहेतुः, "कर्मणो विपाकः" इत्येतन्न प्राप्नोति ।

नैष दोषः, "उभयथापि योगः" इत्युक्तं प्राक् ।

---

*किंप्रतिसंयुक्तमिति* । कस्मिन् प्रतिसंयुक्तं किंप्रतिसंयुक्तम् । *विपाकमप्रतिसंयुक्ताः* कामादिष्वप्रतिसंयुक्ता अनास्रवा *अभिनिर्वर्तयेयुः* । प्रतिसंयुक्तेन विपाकेन भवितव्यम, नाप्रतिसंयुक्तेन; कामधात्वादिप्रतिसंयुक्तधर्मस्वभावत्वात् ।

*शेषास्त्विति* विस्तरः । अकुशला कुशलसास्रवाश्च शेषा *उभयविधत्वात्* उभयप्रकारत्वात् । बलवदभिष्यन्दितप्रकारत्वादित्यर्थः । *निर्वर्तयन्ति विपाकं यथा साराण्यभिष्यन्दितानि बीजान्यङ्कुरम्*, तद्वत् ।

*विपाकस्य हेतुरिति* विस्तरः । यदि विपाक इति भावसाधनो घञ्—विपक्तिर्विपाक इति । तत्र षष्ठीसमासः—विपाकस्य हेतुरिति । अथ विपच्यते स्वयमिति कर्मसाधनो घञ् । तत्र कर्मधारयः—*विपाक एव हेतुर्विपाकहेतुरिति* । *किं चातः ?* कश्चातो दोषः । *यदि विपाकस्य हेतुरिति* भावसाधनपरिग्रहः, *विपाकजं चक्षुरित्येतन्न प्राप्नोति* । न हि चक्षुर्विपक्तेर्जातम् । किं तर्हि ? विपक्तिहेतोः कर्मण इत्यर्थः । न हि विपाको हेतुः । *अथ विपाक एव हेतुरिति* कर्मसाधनपरिग्रहः, सिद्ध्यते तद् विपाकजं चक्षुरिति । कर्मैव हि विपाकः, विपच्यते इति कृत्वा । किन्तु कर्मणो विपाक इत्येतन्न प्राप्नोति, विपाको हि कर्मैवोच्यते न विपक्तिः । कर्मणो विपाक इति चात्र भावसाधनार्थ इष्टे न कर्मसाधनार्थं इति । तस्मात् कर्मणो विपाक इत्येतन्न प्राप्नोति ।

*उभयथापि योग इत्युक्तं प्रागिति* । 'विपाकजौपचयिकाः पञ्चाध्यात्मम्" ( अभि० को० १.३६ ) इत्यत्रोक्तम् । विपाकहेतोर्जाता विपाकजाः, मध्यपदलोपाद् गोरथवदिति भावसाधनपरिग्रहः । फलकालप्राप्तं वा कर्म विपाक इत्युच्यते, विपच्यत इति कृत्वा, तस्माज्जाता विपाकजा इति कर्मसाधनपरिग्रहः । फलं तु विपक्तिरेवेति विपाकः । फलविवक्षायां भावसाधन एव परिगृह्यत इत्यर्थः ।

---

१. का० पुस्तके नास्ति ।

अथ विपाक इति कोऽर्थः ? विसदृशः पाको विपाकः । अन्येषां तु हेतूनां सदृशः पाकः । एकस्योभयथेति वैभाषिकाः । नैव तु तेषां पाको युक्तः ।

पाको हि नाम सन्ततिपरिणामविशेषजः फलपर्यन्तः । न च सहभू-सम्प्रयुक्तहेत्वोः सन्ततिपरिणामविशेषजं फलमस्ति । न चापि सभागहेत्वादीनां फलपर्यन्तोऽस्ति; पुनः पुनः कुशलाद्यासंसारफलत्वात् ।

कामधातावेकस्कन्धको विपाकहेतुरेकफलः प्रत्ययः, तज्जात्यादयश्च । द्विस्कन्धक एकफलः कायवाक्कर्म, तज्जात्यादयश्च । चतुःस्कन्धक एकफलः कुशलाकुशलाश्चित्तचैत्ताः सह जात्यादिभिः ॥

रूपधातावेकस्कन्धको विपाकहेतुरेकफलः प्राप्तिः, असंज्ञिसमापत्तिश्च सह

---

तस्माद् विपाकजं चक्षुरिति मध्यपदलोपात् कर्मसाधनपरिग्रहाद्वा सिध्यति । कर्मणो विपाक इति च सिध्यति, भावसाधनपरिग्रहात् । विवक्षितपूर्विका हि शब्दप्रतिपत्तिरिति । *विसदृशः पाको* विपाक इति । हेतोर्विसदृशं फलमित्यर्थः । हेतुर्हि व्याकृत एव, फलं त्वव्याकृतमेवेति । *सहभूहेत्वादीनां तु सदृश एव पाक* इति विशेषणम् । *अभिधर्मशास्त्र* एवं व्युत्पाद्यते तेनेदं प्रत्यादिश्यते ।

*एकस्कन्धको विपाकहेतुरेकफल* इति विस्तरः । इह प्राप्तयो वृक्षप्रपाटिकावत् चित्तादिभ्यः पृथगवस्थिताः । तासां परिपूरकन्यायेन पृथक् फलं वर्ण्यते । एकः स्कन्धोऽस्येत्येकस्कन्धको विपाकहेतुः । यत्र स्कन्धे प्राप्तयः, तत्रैव च तज्जात्यादय इत्येकस्कन्धकः, यदेव च प्राप्तीनां फलं तदेव तज्जात्यादीनामिति साधारण-फलत्वादेकफलः । *द्विस्कन्धकः* एकफलो विपाकहेतुः । *कायवाक्कर्मतज्जात्यादयश्च ।* कायवाक्कर्मणो रूपस्कन्धसंगृहीतत्वात् तज्जात्यादीनां च संस्कारस्कन्धसंगृही-तत्वात् द्विस्कन्धकः, एकफलश्च, तेषामपृथक्फलत्वात् । *चतुस्कन्धक* एकफलः *कुशलाकुशलाश्चित्तचैत्ता* इति । ते *सह जात्यादिभिरिति* । तेषां चित्तचैत्तानां यथायोगं वेदनासंज्ञासंस्कारविज्ञानस्कन्धसंगृहीतत्वात् । जात्यादीनाञ्च संस्कारस्कन्धसंगृहीतत्वाच्चतुःस्कन्धको विपाकहेतुरेकफलः; साधारणफलत्वात्, न हि चित्तस्यान्यत् फलमन्यच्चैत्तादीनामिति, असमाहितत्वात् । कामधातौ पञ्चस्कन्धको विपाकहेतुर्नास्ति । न ह्यत्र रूपस्कन्धसंगृहीतं कायवाक्कर्म-चित्तचैत्तैरेकफलं भवति, पृथक् कलापत्वात् । त्रिस्कन्धकस्तु त्रिष्वपि धातुषु नास्ति; चित्तचैत्तानामवश्यमेकफलत्वात् । यथायोगं चतुःस्कन्धस्वभावत्वात् ।

*रूपधातावेकस्कन्धक* इति विस्तरः । *प्राप्तिः सह जात्यादिभिः* । संस्कारस्कन्ध-संगृहीतेत्येकस्कन्धकः । तथैव साधारणफलत्वादेकफलः । *असंज्ञिसमापत्तिरपि*

जात्यादिभिः । द्विस्कन्धक एकफलः प्रथमे ध्याने विज्ञप्तिः सह जात्यादिभिः । चतुःस्कन्धक एकफलः कुशले चेतस्यसमाहिते । पञ्चस्कन्धक एकफलः समाहिते ॥

आरूप्यधातावेकस्कन्धको विपाकहेतुरेकफलः प्राप्तिः, निरोधसमापत्तिश्च सह जात्यादिभिः । चतुःस्कन्धकः कुशलाश्चित्तचैत्ताः तज्जात्यादयश्च ।

अस्ति कर्म यस्यैकमेव धर्मायतनं विपाको विपच्यते यस्य जीवितेन्द्रियम् । यस्य मनआयतनं तस्य द्वे मनोधर्मायतने । एवं यस्य स्प्रष्टव्यायतनं तस्य त्रीणि कायस्प्रष्टव्यधर्मायतनानि । एवं यस्य रूपगन्धरसायतनानि । यस्य चक्षुरायतनं

---

सह जात्यादिभिस्तथैव वक्तव्या, विज्ञप्ते रूपस्कन्धसंगृहीतत्वात्, जात्यादीनां च संस्कारस्कन्धस्वभावत्वात् । *द्विस्कन्धक एकफलः* पूर्ववत् । *कुशले चेतस्यसमाहितेऽ*नुपरिवर्त्तिरूपं नास्तीति रूपस्कन्धवर्जितवेदनादिस्कन्धसंगृहीतत्वाच्चतुःस्कन्धकः । *पञ्चस्कन्धकः समाहिते* चेतसि । अनुपरिवर्त्तिरूपस्य चित्तादिभिरेकवर्त्तित्वात् ।

*आरूप्यधाताविति* । विस्तरः—तत्र सर्वमेव रूपं नास्तीत्येकस्कन्धकश्चतुःस्कन्धकश्च विपाकहेतुः । *प्राप्तिरिति* । तत्र सह स्वजात्यादिभिरेकस्कन्धकः पूर्ववत् । *निरोधसमापत्तिरपि* सह स्वजात्यादिभिरेकस्कन्धको विपाकहेतुरेकफल इति सुगमम् ।

*अस्ति कर्मे*ति विस्तरः । यस्य जीवितेन्द्रियं विपाकः, तस्य कर्मणोऽवश्यं तज्जीवितेन्द्रियं तज्जात्यादयश्च विप्रयुक्ता विपाकः । तच्चैतत् सर्वं धर्मायतनसंगृहीतमित्येकमायतनं *विपाको विपच्यते । यस्य मन आयतनं तस्य द्वे मनोधर्मायतने* । तस्य हि मनआयतनस्य कलापे अवश्यं वेदनादयः सहभुवो जात्यादयश्च विपाकरूपा भवन्ति । वेदनादिजात्यादयो धर्मायतनसंगृहीता इति ते द्वे मनोधर्मायतने विपाको विपच्यते । *एवं यस्य स्प्रष्टव्यायतन*मिति । तस्य स्प्रष्टव्यस्यावश्यं जात्यादयः सन्तीति धर्मायतनमपि विपच्यते । न केवलं स्प्रष्टव्यायतनमिति द्वे आयतने तस्य विपच्येते । *यस्य कायायतनं तस्य त्रीणि* । तदेव कायायतनं स्प्रष्टव्यायतनं च तदाश्रयभूतचतुष्कम्, तस्यावश्यं भूतचतुष्काश्रितत्वात् । तस्य च जात्यादिभिर्भवितव्यमिति धर्मायतनमपि तत्र तृतीयं विपच्यते । एवमिति । विस्तरः—एवं यस्य रूपगन्धरसायतनानामन्यतमद् विपाकस्तस्य त्रीण्यायतनानि विपाकः । तदेवायतनं रूपादीनामन्यतमत् स्प्रष्टव्यायतनं च तदाश्रयभूतस्वभावं धर्मायतनं च तज्जात्यादिस्वभावमिति । यस्य

तस्य चत्वारि चक्षुःकायस्प्रष्टव्यधर्मायतनानि । एवं यस्य श्रोत्रघ्राणजिह्वायतनानि ।

अस्ति तत् कर्म यस्य पञ्च षट् सप्ताष्टौ नव दशैकादशायतनानि विपाको विपच्यते ।

---

*चक्षुरायतनम्, तस्य चत्वारि* । तदेव चक्षुःकायायतनं चावश्यं चक्षुषः कायप्रतिबद्धवृत्तित्वात् । स्प्रष्टव्यधर्मायतने च पूर्ववत् । *एवं यस्येति* विस्तरः । एवं यस्य श्रोत्रादीनामन्यतमद् विपाकस्तस्यापि चत्वार्यायतनानि विपाकः । तदेव श्रोत्रादीनामन्यतमदायतनं कायस्प्रष्टव्यधर्मायतनानि च पूर्ववत् ।

*अस्ति तत् कर्मेति* । विस्तरः—पञ्च *यावदेकादशायतनानीति* सम्भवतः । न तु द्वादशायतनानि विपाकः, शब्दायतनस्याविपाकस्वभावत्वात् ।

अत्राचार्य*वसुमित्रो* व्याख्यापयति—'अस्ति कर्म यस्यैकमेव धर्मायतनं विपाको विपच्यते' इति नोपपद्यते, किं कारणम् ? आक्षेपककर्मफलत्वाज्जीवितेन्द्रियस्य । यदि तावत् कामधातौ जीवितं विपाको विपच्यते, कर्मणस्तत्रावश्यं कायजीवितेन्द्रिये भवतः कललाद्यवस्थासु अनुत्पन्ने षडायतने । उत्पन्ने तु षडायतने सप्तभिरायतनैर्भवितव्यम्—चक्षुरादिभिः षड्भिर्मनआयतनेन चेति । रूपधातावपि सप्तभिरारूप्यधातावपि मनोधर्मायतनाभ्यामवश्यं भवितव्यम्, सकलजन्माक्षेपकफलत्वाज्जीवितेन्द्रियस्य । को वात्र धातुरभिप्रेत इति ? ब्रूमः—आरूप्यधातुः । ननु च तत्राक्षेपककर्मफलत्वाज्जीवितेन्द्रियस्यावश्यं मनआयतनेनापि भवितव्यम् । न च जीवितेन्द्रियमेव विपाको विपच्यते; वेदनाप्रभावितत्वाद् विपाकस्येति वेदनयापि तत्र भवितव्यमिति ? अत्रोच्यते—क्षणोत्पत्तिमेतत् सन्धायोक्तम् । यस्मिन् क्षणे आरूप्योपपन्नस्य विपाकजं चित्तं न समुदाचरति, तस्मिन् क्षणे जीवितेन्द्रियमेव विपाको विपच्यते । विपाकस्य जीवितेन्द्रियस्यैवोत्पादान्मनआयतनस्य चासमुदाचारादिति किमर्थं तत्समुदाचारे मन आयतनमपरं न भवतीति तस्य द्वे मनोधर्मायतने इति ।

तदिदं विचार्यते—भवत्येवं चाक्षेपकस्य कर्मणो जीवितेन्द्रियं विपाक इति । जीवितेन्द्रिये च विपच्यमाने मनआयतनादीन्यपि विपच्यन्ते । नायतनान्तरविपाकः प्रतिषिध्यते, विपाकहेतुरिति चिन्त्यते । 'अस्ति तत्कर्म यस्यैकमेव धर्मायतनं विपच्यते, नान्यदायतनम्' इत्येतावद् विवक्षितम् । अथ मतम्—जीवितेन्द्रियाक्षेपकस्यैव कर्मणो मनआयतनादीन्यपि विपच्यन्ते, नैकमायतनमिति ? अत्र ब्रूमः—तस्यैव कर्मणोऽन्येऽपि मनआयतनादयस्तत्र वर्त्तमानाः विपाको न पुनरन्यस्य कर्मण इति, किंकृतोऽयं नियमः ? अस्ति हि सम्भवो

विचित्राविचित्रफलत्वात् कर्मणो बाह्यबीजवत्। तद्यथा—बाह्यानि बीजानि कानिचिद् विचित्रफलानि भवन्ति। तद्यथा—पद्मदाडिमन्यग्रोधादीनाम्।

कानिचिदविचित्रफलानि। तद्यथा—यवगोधूमादीनाम्।

एकाध्विकस्य कर्मणस्त्रैयध्विको विपाको विपच्यते। न तु त्रैयध्विकस्याप्येकाध्विकः, मा भूदतिन्यूनं हेतोः फलमिति। एकमेकक्षणिकस्य बहुक्षणिकः;

---

यदेकस्य कर्मणो निकायसभागो विपाकोऽन्यस्य जीवितेन्द्रियम्, अन्यस्यैव च मनआयतनादीनीति। ब्रूयास्त्वम्—यथा यस्य चक्षुरायतनं तस्य चक्षुःकायस्प्रष्टव्यधर्मायतनानीति वचने यस्य चक्षुरायतनं विपाकस्तस्य कायायतनमावश्यकत्वात्, एवं मनआयतनादीन्यपि तस्यैव कर्मणो विपाक इति ? तन्न; क्वचिदेव कस्यचित् प्रतिबद्धवृत्तित्वात्। न हि विना कायेन्द्रियेण चक्षुरिन्द्रियप्रादुर्भावोऽस्तीत्यसममेतत्।

*आचार्यसङ्घभद्रस्त्वाह*—अस्ति कर्म यस्य धर्मायतनमेव विपाको विपच्यते, यस्य जीवितेन्द्रियम्, यस्य चक्षुरायतनम्, तस्य पञ्च—चक्षुःकायरूपस्प्रष्टव्यधर्मायतनानि। एवं यावज्जिह्वायतनम्। यस्य कायायतनम्, तस्य चत्वारः—कायरूपस्प्रष्टव्यधर्मायतनानीति। रूपाविनाभावित्वाद् रूपायतनमपि तस्यैव चक्षुर्निर्वर्तकस्य कर्मणो विपाक इति समयान्तरमिच्छति।

अयं त्वाचार्यो न रू[illegible]यतनमवश्यं तस्यैव कर्मणो विपाक इत्यपरं पक्षमवलम्बते—यस्य कायायतनं तस्य त्रीणि, यस्य चक्षुरायतनं तस्य चत्वारि इति। न ह्यन्योन्यमविनाभाविनो जीवितनिकायसभागादीन्यावश्यकमेकस्यैव कर्मणो विपाक इत्यभिप्रायः।

तावेतौ पक्षौ *विभाषाकारै*र्लिखितौ[१]। तयोर्यो यस्मै रोचते, स तेन परिगृह्यते। इत्यलं प्रसङ्गेन।

अथ कथं कस्यचित् कर्मण एकमायतनं विपाको विपच्यत। कस्यचिद् यावदेकादश ? इत्यत आह—*विचित्राविचित्रफलत्वात् कर्मणो बाह्यबीजवदिति*। विस्तरः—*पद्मदाडिमन्यग्रोधादीनां* बीजानि *विचित्रफलानि*। मूलाङ्कुरनालपत्रकेसरकिञ्जल्ककर्णिकारैश्च रूप्यं हि [illegible]बीजादीनाम्। अनेकस्कन्धशाखाविटपपत्रपल्लवाङ्कुरपुष्पफलसमृद्धाश्च न्यग्रोधादयः पादपा जलधरायमाणा दृश्यन्ते। *कानिचिदविचित्रफलानि*। *तद्यथा यवगोधूमादीनां* बीजानि। एकरूपफलत्वात्। बीजधर्मतैषा।

*एकाध्विकस्य कर्मणोऽतीतस्य त्रैयध्विको विपाको विपच्यते* अतीतप्रत्युत्पन्ना-

---

१. विभाष्यकारै०—इति मुद्रितः पाठः।

न तु विपर्ययात् । न च कर्मणा सह विपाको विपच्यते, नाप्यनन्तरम्; समनन्तरप्रत्ययाकृष्टत्वात् समनन्तरक्षणस्य । प्रवाहापेक्षो हि विपाकहेतुः ॥ ५४ ॥

अथ क एषां हेतूनामध्वनियमः ? उक्तमेषामर्थतोऽध्वनियमः, न तु सूत्रित इत्यतः सूत्र्यते—

**सर्वत्रगः सभागश्च द्व्यध्वगौ**

अतीतप्रत्युत्पन्नावेव अनागतौ न स्तः । उक्तं चात्र कारणम् ।

---

नागतः, न तु *विपर्ययादि*ति । बहुक्षणिकस्य कर्मण एकक्षणिकः । मा भूदिति-न्यूनं हेतोः फलमिति वर्त्तते । *न च कर्मणा सह विपाको* विपच्यते । सहोत्पन्ने सहभूसम्प्रयुक्तकहेतोर्व्यापारात्, विपाकहेतोश्च विसदृशपाकापेक्षत्वात् । *नाप्यनन्तरं* विपाको विपच्यते । किं कारणम् ? *समनन्तरप्रत्ययाकृष्टत्वात् समनन्तरक्षणस्य* । यस्मात् समनन्तरक्षणः समनन्तरप्रत्ययबलेनाकृष्टः, न विपाकहेतुबलेन । यद्यप्यसौ समनन्तरप्रत्ययो विपाकहेतुरित्थं चैतदेव, यस्मात् समनन्तरक्षणो विपाकहेतोः समनन्तरप्रत्ययात् कदाचित् कुशलः, कदाचिदकुशलः, कदाचिदव्याकृतः, अन्यथा हि अव्याकृत एव स्यात् । अथ वा – समनन्तरक्षणस्याविपाकस्वभावस्य समनन्तरप्रत्ययाकृष्टत्वादित्यभिप्रायः । *प्रवाहापेक्षो हि विपाकहेतुश्चि*त्तचैत्तादिप्रवाहे सत्यतिक्रान्ते विपाकहेतुर्विपाकं दद्यात् । धर्मतैषेत्यभिप्रायः ॥ ५४ ॥

*उक्तमेषामर्थतोऽध्वनियम* इति । अर्थत उक्तो न शब्दत इत्यर्थः । द्विविधं हि वचनम्—स्वशब्दाभिहितम्, अर्थोक्तं च । कथम् ?

"सभागहेतुः सदृशाः स्वनिकायभुवोऽग्रजाः" ( अभि० को० २.५२ ) तथा "सर्वत्रगाख्यः क्लिष्टानां स्वभूमौ पूर्वसर्वगाः" ( अभि० को० २.५४ ) इति वचनात् । सभागसर्वत्रगहेतू अतीतप्रत्युत्पन्नावेव स्तः, नानागतौ । अविशेषवचनादेव सहभूसम्प्रयुक्तकविपाकहेतवस्त्रैयध्विका इत्यर्थत उक्ताः । सभागसर्वत्रगहेतू एव हि पूर्वोत्पन्नौ, पूर्वोत्पन्नावेव च तावित्यवधारणात् । परस्परफलत्ववचनात्, चिन्ताद्यकुशलादिस्वाभाव्याच्चैषामनध्वपतितत्वं व्यावर्तितम् । *सूत्र्यत* इति । सूत्रं सूत्री वा क्रियते सूत्र्यते । *उक्तं चात्र कारणमि*ति । कथमुक्तम् ? निष्यन्दफलेन हि सफलः सभागहेतुः, तच्चानागतस्यायुक्तम्; पूर्वपश्चिमताभावादित्येवमादि । यच्चैतत् कारणमुक्तं सभागहेतोः, सर्वत्रगहेतोरप्युक्तरूपं वेदितव्यम् । सभागहेतुकल्पो हि सर्वत्रगहेतुः । सभागहेतुर्हि क्लिष्टः क्लिष्टानाम्, सर्वत्रगहेतुरपि क्लिष्टः क्लिष्टानामेव । क्लिष्टधर्मसामान्यकारणत्वेन त्वयं सभागहेतोः पृथग्व्यवस्थाप्यत इति

**त्र्यध्वगास्त्रयः ।**

सहभू-सम्प्रयुक्तक-विपाकहेतवस्त्रिकालाः । कारणहेतुस्तु कालनियमानुपदर्शनात् । सर्वाध्वकश्चाध्वविनिर्मुक्तश्च[२] वेदितव्यः ।

उक्ता हेतवः ॥

किं पुनस्तत्फलं यस्यैते हेतवः ?

**संस्कृतं सविसंयोगं फलं**

**फलं** धर्माः । कतमे ? "संस्कृता धर्माः प्रतिसंख्यानिरोधश्च" ( ) इति **शास्त्रम्** ।

एवं तर्हि फलत्वादसंस्कृतस्य हेतुना भवितव्यम्, यस्य तत् फलम्; हेतुत्वाच्च फलेन भवितव्यम्, यस्य तद्धेतुः ?

संस्कृतस्यैव धर्मस्य हेतुफले भवतः,

**नासंस्कृतस्य ते ॥ ५५ ॥**

---

उक्तमेतत् । सभागहेतुवदेव चायं नानागतः, निष्यन्दफलेन च सफल इति, तद्वदेवास्य वार्त्ता ।

"*त्र्यध्वकास्त्रयः*" इति । त्र्यध्वका एव त्रयस्त्रय एव त्र्यध्वका इत्यवधारणात् । कारणहेतुरन्यथा भवति । कथं चान्यथा ? *सर्वाध्वकश्चाध्वविनिर्मुक्तश्चेति* । स्वतोऽन्ये हि स्वभाववर्ज्याः सर्वधर्माः कारणहेतुरिति । अत एवमेव भवति, नान्यथा ।

हेतुः फलमित्यन्योन्यापेक्षयैतद्द्वयमित्यतः पृच्छति—*कि पुनस्तत् फलं यस्यैतद्धेतव* इति ।

"*संस्कृतं सविसंयोगं फलम्*" इति । आकाशाप्रतिसंख्यानिरोधवर्ज्याः सर्वधर्माः फलमित्युक्तं भवति ।

*एवं तर्हीति* विस्तरः । *फलत्वादसंस्कृतस्य* फलमसंस्कृतमिति कृत्वा *हेतुना* स्वतोऽन्येनास्य *भवितव्यम्* । यस्य हेतोस्तदसंस्कृतं फलम् । *हेतुत्वाच्चासंस्कृतस्य* स्वतोऽन्येनास्य *फलेन भवितव्यम्*, यस्य फलस्य तदसंस्कृतं हेतुः । *नासंस्कृतस्य ते* हेतुफले । असंस्कृतं प्रतिसंख्यानिरोधलक्षणं विसंयोगफलं भवति । न च तस्य हेतुः; अजन्यत्वात् । हेतुश्च भवति; संस्कृतोत्पादाविघ्नभावावस्थानात् । न च तस्य फलं व्यवस्थाप्यते, फलप्रतिग्रहणदानासमर्थत्वाच्च । अत एव च

---

२. ०विप्रयुक्तश्च—का० ।

किं कारणम् ? षड्विधहेत्वसम्भवात्, पञ्चविधफलासम्भवाच्च ।

कस्मात् मार्गो विसंयोगस्य कारणहेतुर्नेष्यते ? यस्मात् स उत्पादाविघ्नभावेन व्यवस्थापितः, न चासंस्कृतमुत्पत्तिमत् ।

कस्येदानीं तत्फलम् ? कथं वा मार्गस्य फलम् ? तद्बलेन प्राप्तेः ।

---

*षड्विधहेत्वसम्भवा*दिति । विस्तरः—न सहभूहेतुरस्य सम्प्रयुक्तकहेतुर्वा सम्भवति; तन कस्यचिद् धर्मस्यासहभवत्वात्, असम्प्रयोगाच्च । न सभागहेतुरस्य कश्चिद् भवति, असंस्कृतस्यासदृशत्वात्, समानभूमित्वायोगाच्च । अत एव चास्य न सर्वत्रगहेतुः, अस्य चाक्लिष्टत्वात् । न चास्य विपाकहेतुः, असंस्कृतस्याविपाकस्वभावत्वात् । विपाको हि सत्त्वसंख्यातो धातुपतितो धर्मः । अनुत्पाद्यत्वादेव चास्यैते हेतवो न भवन्ति । अनुत्पाद्यत्वादेव चास्य कारणहेतुर्न भवति । अत एवोच्यते—कस्मान्मार्गो विसंयोगस्य कारणहेतुर्नेष्यते ? यस्मात् स उत्पादाविघ्नभावेन व्यवस्थापितः, न चासंस्कृतमुत्पत्तिमदिति । अनध्वपतितत्वाच्चास्य हेतवो न भवन्ति, अध्वपतितस्य हि धर्मस्य हेतुर्व्यवस्थाप्यते । एवं षड्विधहेत्वसम्भवान्नासंस्कृतस्य हेतुः । *पञ्चविधफलासम्भ*वाच्च नासंस्कृतस्य फलम् । कस्मात् ? सामान्यतस्तावदध्वविनिर्मुक्तस्य फलप्रतिग्रहणदानासमर्थत्वात् । तथा ह्युक्तम्—

"वर्तमानाः फलं पञ्च गृह्णन्ति द्वौ प्रयच्छतः" ( अभि० का० २.५९ ) इत्येवमादि । किञ्च न तावदधिपतिफलं भवति ? तद्धि सहोत्पन्नं पश्चादुत्पन्नं चेष्यते ।

"अपूर्वः संस्कृतस्यैव संस्कृतोऽधिपतेः फलम्" (अभि० को० २.५८) इति । तच्चानुत्पत्तिमदिति नास्य सहजं पश्चाज्जातं वा फलं भवति, अनुत्पत्तिमत्त्वादेव । न च निष्यन्दफलम्, उत्पत्तिमतो हि सदृशो धर्म उत्पत्तिमान् निष्यन्दफलम् । अत एव च न पुरुषकारफलम्; असंस्कृतस्य पुरुषकाराभावात् । यस्य हि बलेन य उत्पद्यते प्राप्यते वा, स तस्य पुरुषकारफलम् । अत एव च न विसंयोगफलम्, मार्गस्यैव हि बलेन विसंयोगः प्राप्यः, न चासंस्कृतो मार्ग इति । न चापि विपाकफलम्; विपाकहेतुवैधर्म्यात् । सास्रवो हि विपाकहेतुः, न चासंस्कृतं सास्रवमिति । अथ वा—पञ्चविधफलासम्भव इति नासंस्कृतस्य फलं सम्भवति ।

यदि मार्गो विसंयोगस्य कारणहेतुर्नेष्यते *कस्येदानीं तत् फलम् ?* हेतुमता हि फलेन भवितव्यम्, कथं वा केन वा प्रकारेण *तत् फलम् ?* आह—यत्तावदुक्तं कस्येदानीं तत्फलमिति, *मार्गस्य ।* यदप्युक्तं कथं वा तत् फलमिति,

प्राप्तिरेव तर्हि मार्गस्य फलं प्राप्नोति ? तस्यामेव सामर्थ्यान्न विसंयोगः। अन्यथा ह्यस्य प्राप्तौ सामर्थ्यमन्यथा विसंयोगे। कथमस्य प्राप्तौ सामर्थ्यम् ? उत्पादनात्। कथं विसंयोगे ? प्रापणात्। तस्मान्न तावदस्य कथञ्चिदपि हेतुः। फलं चास्य विसंयोगः।

अथासत्यधिपतिफले कथमसंस्कृतं कारणहेतुः ? उत्पत्त्यनावरणभावेन कारणहेतुः। न चास्य फलमस्ति; अध्वविनिर्मुक्तस्य फलप्रतिग्रहणदानासमर्थत्वात्।

नैव हि क्वचिदसंस्कृतं **भगवता** हेतुरित्युक्तम्। उक्तं तु पर्यायेण हेतुरिति **सौत्रान्तिकाः**।

कथमुक्तम् ?

---

फलं *तद्बलेन*। मार्गबलेन प्राप्तेरित्यर्थः। अथ वैवं पदसम्बन्धः—कस्य तत् फलमिति, मार्गस्य तत् फलम्। कथं वा तत्फलमिति, तद्बलेन प्राप्तेरिति।

*प्राप्तिरेव तर्हि मार्गस्य फलं प्राप्नोति।* *तस्यामेव* प्राप्तौ *तस्य* मार्गस्य *सामर्थ्यान्न विसंयोगः।* किम् ? मार्गस्य फलमित्यधिकृतम्। *तत्रासामर्थ्यादि*ति। एवं तत्र विसंयोगे मार्गस्यासामर्थ्यादित्यर्थः। *तस्मान्न* च तावदस्य मार्गः *कथञ्चिदपि हेतुः।* षण्णां हेतूनामन्यतमोऽपि हेतुरस्य मार्गो न भवति। *फलं चास्य विसंयोगः।* प्राप्यं फलं न जन्यमित्यभिप्रायः। पञ्चविधो हि हेतुरिति केचिदिच्छन्ति—कारकः, ज्ञापकः, व्यञ्जकः, ध्वंसकः, प्रापकश्चेति। कारको हेतुर्बीजमङ्कुरस्य, ज्ञापको धूमोऽग्नेः, व्यञ्जको दीपो घटस्य, ध्वंसको मुद्गरो घटस्य, प्रापको रथो देशान्तरप्रापणीयस्येति। तदेवं मार्गः प्रापकोऽस्य, न जनको हेतुः। प्राप्यं च विसंयोगफलं न जन्यमिति दर्शितं भवति।

*अथासत्यधिपतिफल* इति। विस्तरः—असंस्कृतस्य यदि फलं स्यादधिपतिफलं स्यात्; तस्य कारणहेतुत्वेन व्यवस्थापनात्। "नासंस्कृतस्य ते" इति वचनात् तदप्यस्य निवारितमिति परिच्छिन्ने चोदकः पृच्छति—*अथासत्यधिपतिफले कथमसंस्कृतं कारणहेतुः। उत्पत्त्यनावरणभावेन कारणहेतुः*, उत्पत्त्यनावरणभाववचनात्। संस्कृतमेव प्रतीदमसंस्कृतं कारणहेतुर्व्यवस्थाप्यते, नासंस्कृतं प्रतीति दर्शितं भवति। कस्मादस्य संस्कृतवत् फलं न व्यवस्थाप्यते ? इत्यत आह—*न चास्य फलमस्ति; अध्वविनिर्मुक्तस्य फलप्रतिग्रहणदानासमर्थत्वादिति।* अध्वसंगृहीतस्यैव हि धर्मस्य फलप्रतिग्रहणदानसामर्थ्यमस्ति, नान्यस्य। वक्ष्यति हि—"वर्तमानाः फलं पञ्च गृह्णन्ति द्वौ प्रयच्छतः" ( अभि० को० २.५९ ) इति। *उक्तं तु पर्यायेणहेतुरिति।* पर्यायेणोक्तम्, न स्वशब्देनेत्यर्थः।

"ये हेतवो ये प्रत्यया रूपस्योत्पादाय तेऽप्यनित्याः ।
अनित्यान्खलु हेतुप्रत्ययान्प्रतीत्योत्पन्नं रूपं कुतो नित्यं भविष्यति"
एवं यावद्धि विज्ञानमिति ।

एवं तर्हि विज्ञानस्यालम्बनप्रत्ययोऽप्यसंस्कृतं न प्राप्नोति ? उत्पादायेत्यवधारणात् ।

प्राप्नोति ? "ये हेतवो ये प्रत्यया विज्ञानस्योत्पादाय तेऽप्यनित्याः" इत्युक्तम्, न तूक्तम्—"ये विज्ञानस्य प्रत्ययाः तेऽप्यनित्याः" इति ।

ननु च 'हेतवोऽपि य उत्पादाय त एवानित्याः' इति वचनादसंस्कृतस्यानावरणभावमात्रेण कारणहेतुत्वाप्रतिषेधः उक्त आलम्बनप्रत्ययः सूत्रे, न त्वनावरणहेतुरिति, न सूत्रे सिद्धोऽसंस्कृतस्य हेतुभावः ?

यद्यपि नोक्तः, न तु प्रतिषिद्धः । सूत्राणि च बहून्यन्तर्हितानीति कथमेतन्निर्धार्यते—नोक्त इति ।

अथ कोऽयं विसंयोगो नाम ? ननु चोक्तं प्राक्—"प्रतिसंख्यानिरोधः" इति ? तदानीं "प्रतिसंख्यानिरोधः कतमः ? यो विसंयोगः" इत्युक्तम्, इदानीं

---

*तेऽपि अनित्या* इति । तेऽप्यनित्या एवेत्यवधारणादर्थान्न नित्यो हेतुरित्युक्तं भवति ।

*आलम्बनप्रत्ययोऽपीति* । यथा हेतवोऽत्रानित्या उक्ताः, एवं प्रत्यया अप्यनित्या एवोक्ताः; "ये हेतवो ये प्रत्ययाः" इति वचनात् । तस्मादसंस्कृतमालम्बनप्रत्ययो न प्राप्नोति । *उत्पादायेत्यवधारणादिति* । ये हेतवो ये प्रत्यया रूपस्योत्पादाय तेऽप्यनित्याः, न तु येऽनुत्पादाय । द्विविधा हि प्रत्ययाः—जनकाश्च, अजनकाश्च । आलम्बनप्रत्ययश्चाजनकः; आलम्बनमात्रत्वात् । आलम्बनप्रत्ययो हि निरुध्यमाने धर्मे कारित्रं करोति, वर्त्तमानैश्चित्तचैत्तैर्ग्रहणात् । "निरुध्यमाने कारित्रं द्वौ हेतू कुरुतः" ( अभि० को० २.६३ ) इति वचनात् ।

*ननु च हेतवोऽपीति* विस्तरः । हेतुरपि जनकश्चाजनकश्च । तस्मा*दसंस्कृतस्यानावरणभावमात्रेण* अजनकस्यापि कारणहेतुत्वाप्रतिषेधः । उक्त *आलम्बनप्रत्ययः सूत्र* इति । "चतस्रः प्रत्ययताः" इत्यत्र सूत्रे । *न तु प्रतिषिद्धः*। धर्मताया अविरोधान्न दोष इत्यभिप्रायः । *सूत्राणि च बहून्यन्तर्हितानि* । *मूलसंगीति*भ्रंशात् । अत्राचार्यो न निर्बन्धं करोति—धर्मताविरोधो नास्तीति; किन्तु असंस्कृतमेव विचार्यते—अस्ति वा, न वेति ।

"विसंयोगः कतमः ? यः प्रतिसंख्यानिरोधः" इत्युच्यते, तदिदमितरेतराश्रयं व्याख्यानमसमर्थं तत्स्वभावद्योतने, तस्मादन्यथा तत्स्वभावो वक्तव्यः ?

आर्यैरेव तत्स्वभावः प्रत्यात्मवेद्यः। एतावत् तु शक्यते वक्तुम्—नित्यं कुशलं चास्ति द्रव्यान्तरम्। तद्विसंयोगश्चोच्यते प्रतिसंख्यानिरोधश्चेति सर्वमेवासंस्कृतमद्रव्यमिति।

**सौत्रान्तिकाः**—न हि तद् रूपवेदनादिवत् भावान्तरमस्ति, किं तर्हि ? स्प्रष्टव्याभावमात्रमाकाशम्। तद्यथा ह्यन्धकारे प्रतिघातमविन्दन्त आकाशमित्याहुः।

उत्पन्नानुशयजन्मनिरोधे[1] प्रतिसंख्याबलेनान्यस्यानुत्पादः प्रतिसंख्यानिरोधः। विनैव प्रतिसंख्यया प्रत्ययवैकल्यादनुत्पादो यः सोऽप्रतिसंख्यानिरोधः। तद्यथा निकायसभागशेषस्यान्तरामरणे।

---

*सर्वमेवासंस्कृतमिति*। न केवलं प्रतिसंख्यानिरोधः।

*रूपवेदनादिवदिति*। आदिशब्देन संज्ञादीनां ग्रहणम्। यथा रूपाद् वेदना-भावान्तरं वेदनायाश्च संज्ञा यावत् संस्कारेभ्यो विज्ञानम्, तथा न रूपादिभ्यः पञ्चभ्योऽसंस्कृतं *भावान्तरमस्ति*। अतो नासंस्कृतं द्रव्यमिति *सौत्रान्तिकाः*। *स्प्रष्टव्याभावमात्रमिति*। सप्रतिघद्रव्याभावमात्रमित्यर्थः। *अविन्दन्त* इति। अलभमानाः।

*उत्पन्नानुशयजन्मनिरोधे* उत्पन्नानामनुशयानां जन्मनश्च निरोधे *प्रतिसंख्या-बलेन* प्रज्ञाबलेन *अन्यस्यानुशयस्य* जन्मनश्चा*नुत्पादः प्रतिसंख्यानिरोधः*। तदेव-मनुशयनिरोधः समुदयसत्यनिरोधः, जन्मनिरोधो दुःखसत्यनिरोध इत्युक्तं भवति। सोपधिशेषनिरुपधिशेषनिर्वाणव्यवस्थापनार्थं चोभयनिरोधवचनम्। *सौत्रान्तिकनयेन* केऽनुशयाः, कथं च तेषां जन्मनश्च प्रतिसंख्याबलेन निरोधः ? अप्रहीणक्लेशानां वासनानुशयः। यस्य चानुशयस्य यः प्रतिपक्षो मार्गः प्रतिसंख्या तेन सह प्रथमे क्षणे सोऽनुशय उत्पद्यते, तद्बलाद् द्वितीयादिषु क्षणेषु तस्य निरोधः। तद्बलादेव च पौनर्भविकस्य जन्मनोऽप्रतिसन्धिको निरोधः। *तद्यथा निकायसभागशेषस्येति*। विस्तरः–निकायसभागो मनुष्यत्वादि-लक्षणः, आत्मभावो वा पञ्चस्कन्धलक्षणः, तस्य शेषस्तल्लक्षण एवोत्पद्य-मानः, तस्य निकायसभागशेषस्या*न्तरामरणे* आयुष्यपरिसमाप्त एव *प्रत्यय-वैकल्याद् योऽनुत्पादः सोऽप्रतिसंख्यानिरोधः*। प्रत्ययवैकल्यं पुनरन्यानां स्कन्धानां

1. ०निरोधः—का०।

**निकायान्तरीयाः** पुनराहुः – अनुशयानामुत्पत्तौ प्रज्ञायाः सामर्थ्यम्, अतोऽसौ प्रतिसंख्यानिरोधः।

यस्तु पुनः दुःखस्यानुत्पादः स उत्पादकारणानुशयवैकल्यादेवेति न तस्मिन् प्रज्ञायाः सामर्थ्यमस्ति, अतोऽसावप्रतिसंख्यानिरोध इति ? सोऽपि तु नान्तरेण प्रतिसंख्यां सिध्यतीति प्रतिसंख्यानिरोध एवासौ।

य एवोत्पन्नस्य पश्चादभावः स एव स्वरसं[1] निरोधादप्रतिसंख्यानिरोध इत्यपरे। अस्यां तु कल्पनायामनित्योऽप्रतिसंख्यानिरोधः प्राप्नोति; अविनष्टे तदभावात्।

ननु च प्रतिसंख्यानिरोधोऽप्यनित्यः प्राप्नोति; प्रतिसंख्यापूर्वकत्वात्। न वै स प्रतिसंख्यापूर्वकः, न हि पूर्वं प्रतिसंख्या पश्चादनुत्पन्नानामनुत्पादः। किं तर्हि ? पूर्वमेव स तेषामनुत्पादोऽस्ति। विना तु प्रतिसंख्यया ये धर्मा उत्पत्स्यन्ते तदुत्पन्नायां प्रतिसंख्यायां पुनर्नोपपद्यन्त इति।

एतदत्र प्रतिसंख्यायाः सामर्थ्यं यदुत अ[illegible]प्रति-बन्धभावः।

यदि तर्हि अनुत्पाद एव निर्वाणम्, इदं सूत्रपद कथं नीयते—"पञ्चे-

मानीन्द्रियाणि आसेवितानि भावितानि बहुलीकृतानि अतीतानागतप्रत्युत्पन्नस्य दुःखस्य प्रहाणाय संवर्त्तन्ते" इति ? प्रहाणं हि निर्वाणम्, अनागतस्यैव चानुत्पादः, नातीतप्रत्युत्पन्नस्येति ?

अस्त्येतदेवम्; किन्तु तदालम्बनक्लेशप्रहाणात् दुःखस्य प्रहाणमुक्तं **भगवता**—"यो रूपे च्छन्दरागस्तं प्रजहीत। च्छन्दरागे प्रहीणे एवं वस्तद् रूपं प्रहीणं भविष्यति परिज्ञातम्, विस्तरेण यावद् विज्ञानम्" ( ) इति। एवं त्रैयध्विकस्यापि दुःखस्य प्रहाणं युज्यते।

अथाप्यतीतानागतप्रत्युत्पन्नस्य क्लेशस्य प्रहाणायेत्युच्येत ? अत्राप्येष नयः।

अथ वायमभिप्रायः—भवेदतीतः क्लेशः पौर्वजन्मिकः, प्रत्युत्पन्नः क्लेश ऐहजन्मिको यथा तृष्णाविचरितेष्वष्टादश तृष्णाविचरितान्यतीतमध्वानमुपादायेत्यतीतं

---

स्त्यनुत्पाद इति *कथमिदमुक्तं सूत्रे—अतीतानागतप्रत्युत्पन्नस्य दुःखस्य प्रहाणाय संवर्त्तन्त* इति। *तत्सूत्रपदं कथं नीयते ?* यस्य पुनर्द्रव्यान्तरं निर्वाणं तस्यातीतप्रत्युत्पन्नयोरपि तदासेवनादिभिर्निर्वाणं प्राप्यत इति सुनीतपदं सूत्रं भवतीति। *तदालम्बनक्लेशप्रहाणादिति*। अतीतप्रत्युत्पन्नदुःखालम्बनक्लेशप्रहाणादित्यर्थः। *यो रूपे छन्दराग* इति। छन्दोऽनागतेऽर्थे प्रार्थना, रागस्तु प्राप्तेऽर्थेऽध्यवसानम्। *विस्तरेण यावद् विज्ञानमिति*। यो वेदनायां संज्ञायां संस्कारेषु विज्ञाने छन्दरागस्तं प्रजहीत। छन्दरागे प्रहीणे एवं वस्तद्विज्ञानं प्रहीणं भविष्यति। *एवं त्रैयध्विकस्यापि दुःखस्येति*। छन्दरागप्रहाणमेव रूपादिदुःखप्रहाणम्, तस्य चानागतस्य च्छन्दरागस्यानुत्पादो भवति। अतस्त्रैयध्विकस्यापि दुःखस्य प्रहाणं युज्यत इति दर्शयति। *एष एव नय* इति। 'यद्यतीतानागतप्रत्युत्पन्नस्य क्लेशस्य प्रहाणाय' इति पाठः, तत्राप्येष एव नय इति। यः क्लेशे रागे द्वेषे वा च्छन्दरागस्तं प्रजहीतेति विस्तरः। तदालम्बनक्लेशप्रहाणादपि क्लेशस्य प्रहाणम्, न स्वभावत एवेति त्रैयध्विकस्यापि क्लेशस्य प्रहाणं युज्यत इत्यर्थः।

*अथ वेति*। विस्तरः—पूर्वजन्मनि भवः *पौर्वजन्मिकः*। इह जन्मनि भव ऐह*जन्मिकः*। तदेवमेकक्षणिकः क्लेश पर्युदस्तो भवति। कथमेतत् प्रत्येतव्यम्—पौर्वजन्मिकः सर्वक्लेशः सम्बध्यते ऐहजन्मिकश्च, न पुनरेकक्षिणकः ? इत्यत आह—*अन्यत्राप्येवन्दर्शनादेवं*[1] *प्रत्येतव्यम्*[1]। *यथा तृष्णाविचरितेष्विति*। विस्तरः। अष्टादश तृष्णाविचरितानि कथमतीतेऽध्वन्येकस्मिन् क्षणे योज्यन्त इत्यतोऽ*तीतं*

---

१–१. अयं पाठो जा० पुस्तक एव दृश्यते।

जन्माधिकृत्योक्तम्, एवं यावत् प्रत्युत्पन्नम्। तेन च क्लेशद्वयेनास्यां सन्ततौ बीजभाव अहितोऽनागतेऽस्योत्पत्तये[1]। तस्य प्रहाणात् तदपि प्रहीणं भवति, यथा विपाकक्षयात् कर्म क्षीणं भवति।

अनागतस्य पुनर्दुःखस्य क्लेशस्य वा बीजाभावात् अत्यन्तमनुत्पादः प्रहाणम्; अन्यथा ह्यतीतप्रत्युत्पन्नस्य किं प्रहातव्यम्! न हि निरुद्धे निरोधाभिमुखे च यत्नः सार्थको भवतीति।

यद्यसंस्कृतं नास्त्येव यदुक्तं **भगवता**—"केचिद्धर्माः संस्कृताश्चासंस्कृता[2] वा, विरागस्तेषामग्र आख्यायते" इति, कथमसतामसन्नग्रो भवितुमर्हति?

न वै नास्त्येवासंस्कृतमिति ब्रूमः। एतत्तु तदीदृशं यथाऽस्माभिरुक्तम्। तद्यथा—'अस्ति शब्दस्य प्रागभावः', 'अस्ति पश्चादभावः' इत्युच्यते। अथ च

*जन्माधिकृत्योक्तम्*—"अष्टादश तृष्णाविचरितानि। अस्मीति भिक्षवः सतीत्थमस्मीति भवति, एवमस्मीत्यन्यथास्मीति सदस्मीत्यसदस्मीति भवति। भविष्यामीत्यस्य भवति, न भविष्यामीत्थं भविष्याम्येवं भविष्याम्यन्यथा भविष्यामीत्यस्य भवति। स्यामित्यस्य भवति, इत्थं स्यामेवं स्यामन्यथा स्यामित्यस्य भवति। अपि स्यामित्यस्य भवति, अपीत्थं स्यामप्येवं स्यामप्यन्यथा स्यामित्यस्य भवति। *एवं यावत् प्रत्युत्पन्नम्*। तथेहापि पौर्वजन्मिकः कृत्स्नः क्लेशप्रवाह ऐहजन्मिकश्च सम्बध्यते नैकक्षणिक इति। तदेवं प्रसाध्यताभिप्रायं ब्रवीति। *तेन च क्लेशद्वयेनेति*। विस्तरः—पौर्वजन्मिकेनैहजन्मिकेन चेति क्लेशद्वयेनास्यां *सन्ततौ* प्रत्युत्पन्नायां *बीजभावो* वासनालक्षणं सामर्थ्यम*आहितोऽनागतेऽस्योत्पत्तये*। तस्य बीजभावस्य *प्रहाणात् तदपि* क्लेशद्वयं *प्रहीणं भवति*। *यथा विपाकक्षयाद्* विपाकोपभोगात् *कर्म क्षीणं भवतीत्युपदर्श्यते*, तद्वत्।

अनागतस्य तर्हि कथं प्रहाणं व्यवस्थाप्यते, न हि तेन सन्ततौ बीजभाव आहितो यस्य प्रहाणात् प्रहाणं भवेत्? इत्यत आह—*अनागतस्य पुनर्दुःखस्य क्लेशस्य वा बीजभावादत्यन्तमनुत्पादः प्रहाणमिति*। बीजभावश्च प्रतिसंख्याबलेन भवति। *न हि निरुद्धेऽतीते निरोधाभिमुखे* च प्रत्युत्पन्ने *यत्नः* प्रतिपक्षोत्पादने यत्नः *सार्थकः* सप्रयोजनमित्यर्थः।

*विरागस्तेषामग्र* इति। रागक्षयो विरागः प्रतिसंख्यानिरोध इत्यर्थः। *कथमसतामसन्नग्रो भवितुमर्हतीति*। कथमसतामाकाशादीनामसंस्कृता-

१. गतस्योत्पत्तये—का०। २. संस्कृता वा०—का०।

पुनर्नाभावो भावः सिध्यति। एवमसंस्कृतमपि द्रष्टव्यम्।

अभावोऽपि[1] कश्चित् प्रशस्यतमो भवति यः सकलस्योपद्रवस्यात्यन्तमभाव इत्यन्येषां सोऽग्र इति प्रशंसां लब्धुमर्हति, विनेयानां तस्मिन्नुपच्छन्दनार्थम्।

यद्यप्यसंस्कृतमभावमात्रं स्यात्, निरोध आर्यसत्यं न स्यात्। न हि तत् किञ्चिदस्तीति ?

कस्तावदयं सत्यार्थः ? ननु चाविपरीतार्थः। उभयमपि चैतदविपरीतं दृष्टमार्यैर्यदुत दुःखं च दुःखमेवेति, दुःखाभावश्चाभाव एवेति कोऽस्यार्यसत्यत्वे विरोधः।

कथमभावश्च नाम तृतीयं चार्यसत्यं स्यात् ? उक्तं यथार्यसत्यं द्वितीयस्य चानन्तरं[2] दृष्टमुद्दिष्टं[3] चेति तृतीयं भवति।

यद्यसंस्कृतमभावमात्रं स्याद्, आकाशनिर्वाणालम्बनविज्ञानमसदालम्बनं स्यात्। एतदतीतानागतस्यास्तित्वचिन्तायां चिन्तयिष्यामः।

यदि पुनर्द्रव्यमेवासंस्कृतमिष्येत, किं स्यात् ? किं च पुनः स्यात् ? वैभाषिकपक्षः पालितः स्यात्। देवता एनं पालयिष्यन्ति पालनीयं चेत् मंस्यते। अभूतं तु परिकल्पितं स्यात्। किं कारणम् ? न हि तस्य रूपवेदनादिवत् स्वभाव उपलभ्यते, न चापि चक्षुरादिवत् कर्म।

'अमुष्य च वस्तुनोऽयं निरोधः' इति षष्ठीव्यवस्था कथं प्रकल्प्यते, नहि तस्य तेन सार्धं कश्चित् सम्बन्धः, हेतुफलादिभावासम्भवात्; प्रतिषेधमात्रं तु युज्यते—अमुष्याभाव इति ?

---

नामसन्नसंस्कृतो विरागोऽग्रो भवितुमर्हतीति ? अस्योत्तरं ब्रवीति—*अभावोऽपि कश्चिदिति* विस्तरः। *द्वितीयस्य चेति*। द्वितीयस्य समुदयसत्यस्यानन्तरं दृष्टं स्वयं प्रज्ञया *उद्दिष्टं* परेभ्यो देशनया त्रयाणां पूरणं *तृतीयं* भवति। *किं स्यादिति*। को दोषः स्यादित्यर्थः। *किञ्च पुनः स्यादिति*। को गुणः स्यादित्यर्थः। किञ्च पुनः स्यादिति गुणपरिप्रश्न आह—*वैभाषिकपक्षः पालितः स्यादिति*। यत् तूक्तं—किं स्यात् को दोषः स्यादित्यत्रोच्यते—*अभूतं तु परिकल्पितं स्यादिति*। दोषः स्यादित्यर्थः। *रूपवेदनादिवदिति*। प्रत्यक्षतः। *चक्षुरादिवदिति*। कर्मतोऽनुमानतः इत्यर्थः। असकृद् व्याख्यातमेतत्। *वस्तुन इति*। रागादिवस्तुनः। *हेतुफलादिभावसम्भवादिति*। आदिशब्देन स्वस्वाम्यवयवावयविसम्बन्धादयो

---

१. ०पि च—का०। २. अनन्तरं—का०। ३. मुद्दिष्टं—का०।

भावान्तरत्वेऽपि यस्य क्लेशस्य प्राप्तिविच्छेदाद् य निरोधः प्राप्यते स तस्येति व्यपदिश्यते ।

तस्यैतर्हि[1] प्राप्तिनियमे को हेतुः ? "दृष्टधर्मनिर्वाणप्राप्तो भिक्षुः" इत्युक्तं सूत्रे । तत्र कथमभावस्य प्राप्तिः स्यात् ? प्रतिपक्षलाभेन क्लेशपुनर्भवोत्पादात्यन्तविरुद्धाश्रयलाभात् प्राप्तं निर्वाणमित्युच्यते ।

**आगम**श्चाप्यभावमात्रं द्योतयति । एवं ह्याह—"यत् स्वल्पस्य दुःखस्याशेषप्रहाणं प्रतिनिःसर्गो व्यन्तीभावः क्षयो विरागो निरोधो व्युपशमोऽस्तङ्गमः अन्यस्य च दुःखस्याप्रतिसन्धिरनुत्पादोऽप्रादुर्भावः । एतत् कान्तमेतत् प्रणीतं यदुत सर्वोपाधिप्रतिनिःसर्गस्तृष्णाक्षयो विरागो निरोधो निर्वाणम्" इति ।

किमेवं नेष्यते—नास्मिन् प्रादुर्भाव[2] इत्यतो[2]ऽप्रादुर्भाव इति ? असमर्थमेतां सप्तमीं पश्यामः । किमुक्तं भवति ? नास्मिन् प्रादुर्भवतीति यदि सतीत्यभिसम्बध्यते, नित्यमेवाप्रादुर्भावप्रसङ्गः; निर्वाणस्य नित्यत्वात् ।

अथ प्राप्त इत्यभिसम्बध्यते; यत एव तत्प्राप्तिः परिकल्प्यते तस्मिन्नेव

---

गृह्यन्ते । न हि वस्तुनो निरोधे हेतुः फलमवयवावयवीत्येवमादि ।

*तस्यैतर्हि प्राप्तिनियम* इति । विस्तरः—तस्य निरोधस्य योऽयं प्राप्तिनियमः—अस्यैव निरोधस्य प्राप्तिर्नान्यस्येति, तस्मिन् प्राप्तिनियमे को हेतुः ? न हि निरोधस्य प्राप्त्या सार्धं कश्चित् सम्बन्धोऽस्ति; हेतुफलादिभावासम्भवात् ।

*दृष्टधर्मनिर्वाण प्राप्त* इति । प्रत्यक्षे जन्मनि निर्वाणप्राप्तः सोपधिशेषनिर्वाणस्य इत्यर्थः । *तत्राभावः कथमस्य प्राप्तिः स्यात्, प्रतिपक्षलाभेनेति* । विस्तरः—आर्यमार्गलाभेन क्लेशस्य पुनर्भवस्य चोत्पादेऽत्यन्तविरुद्धस्याश्रयस्य लाभात् प्राप्तं निर्वाणमित्युच्यते । *अभावमात्रत्वमिति* । मात्रशब्दो द्रव्यान्तरत्वनिवृत्त्यर्थः । *यत् खल्वस्येति* । विस्तरः—*प्रहाणं यावदप्रादुर्भाव* इत्येतत् स्फुटमित्युदाहरणमुक्तम् ।

*नास्मिन् प्रादुर्भाव इत्यतोऽप्रादुर्भाव* इत्यधिकरणसाधनमिति दर्शयन्ति, न तु अप्रादुर्भूतिरप्रादुर्भाव इति भावसाधनमित्यर्थः । *यत एव तत्प्राप्तिः परिकल्प्यते*

---

१. तस्य तर्हि—का० ।

२-२. प्रादुर्भवतीत्यतो—का० ।

सम्मुखीभूते प्राप्ते वा दुःखस्यैष्यतामप्रादुर्भावः। अयं च दृष्टान्त एवं सूपनीतो भवति—

"प्रद्योतस्येव निर्वाणं विमोक्षस्तस्य चेतसः" ( ) इति।

यथा प्रद्योतस्य निर्वाणमभावः, एवं भगवतोऽपि चेतसो विमोक्ष इति।

अभिधर्मेऽपि चोक्तम्—"अवस्तुका धर्माः कतमे? असंस्कृता धर्माः" इति। अवस्तुकाः = अशरीराः, अस्वभावा इत्युक्तं भवति।

नास्यायमर्थः। कस्तर्हि? पञ्चविधवस्तु। १. स्वभाववस्तु, यथोक्तम्—"यद्वस्तु प्रतिलब्धं समन्वागतः स तेन वस्तुना" इति। २. आलम्बनवस्तु, यथोक्तम्—"सर्वधर्मज्ञेया ज्ञानेन यथावस्तु" इति। ३. संयोगवस्तु, यथोक्तम्—"यस्मिन् वस्तुनि अनुनयः संयोजनेन सम्प्रयुक्तः प्रतिघसंयोजनेनापि तस्मिन्" इति। ४. हेतुवस्तु, यथोक्तम् "सवस्तुका धर्माः कतमे? संस्कृता धर्माः" इति। ५. परिग्रहवस्तु, यथोक्तम्—"क्षेत्रवस्तु गृहवस्तु" इति।

तदत्र हेतुर्वस्तुशब्देनोक्तः। तस्मादस्येवासंस्कृतं द्रव्यत इति वैभाषिकाः। तस्य तु हेतुफले न विद्येते इति। गतं तावदेतत्॥ ५५॥

अथैषां फलानां कतमत् फलं कस्य हेतोः?

**विपाकफलमन्त्यस्य**

विपाकहेतुरन्तेऽभिहितत्वात्[1] अन्त्यः, तस्य **विपाकफलम्**।

**पूर्वस्याधिपजं[2] फलम्।**

कारणहेतुः पूर्वमुक्तत्वात् पूर्वः, तस्याधिपजं **फलम्**। अनावरणभाव-

---

यतो मार्गात् प्रहाणप्राप्तः परिकल्प्यते, *तस्मिन् सति मार्गे प्राप्ते वा दुःखस्यैष्यता-मप्रादुर्भावः*, किमन्येन निर्वाणेन परिकल्पितेन! *विमोक्षस्तस्य चेतस* इति। निरुपधिशेषनिर्वाणकाले भगवतः। *यथावस्तु* यथालम्बनम्। *संयोगस्य वस्तु* संयुज्यते। *सवस्तुका धर्मा* इति सहेतुकाः। *परिग्रहवस्तु*। परिगृह्यत इति परिग्रहः, स एव वस्तु परिग्रहवस्तु॥ ५५॥

*अन्तेऽभिहितत्वादिति*। कारिकाया अन्ते विपाकहेतुः पठितः। *तस्य विपाकफलमेव*।

*पूर्वः कारणहेतुः* श्लोकादौ पठितत्वात्, तस्य *"अधिपजं फलम्"*। अधिपति-

---

१. ०रन्त्ये०—का०। २. पूर्वस्याधिपतं—का०।

मात्रेणावस्थितस्य किमाधिपत्यम्? एतदेवाधिपत्यम्[1]। अङ्गीभावोऽपि [2]वास्ति कारणहेतोः, तद्यथा—"पञ्चसु विज्ञानकायेषु दशानामायतनानां भाजनलोके च कर्मणाम्। श्रोत्रादीनामप्यस्ति चक्षुर्विज्ञानस्योत्पत्तौ[3] पारम्पर्येणाधिपत्यम्; श्रुत्वा द्रष्टुकामतोत्पत्तेः" (               ) इत्येवमादि योज्यम्।

**सभागसर्वत्रगयोर्निष्यन्दः**

---

रधिपः, तस्माज्जातमधिपजम्, अधिपतिफलमित्यर्थः। *पूर्वस्याधिपतमिति* केचित् पठन्ति। अधिपतेरिदं फलमाधिपतमिति। आधिपत्यमिति तु प्राप्नोति; "दित्यादित्यादित्यपत्युत्तरपदाण्ण्यः" (पा० सू० ४.१.८५) इत्यपवादात्। अथात्रादन्त्रिषयेऽप्युत्सर्गसनावेश इति भवेत्, भवेदेतद् रूपम्। *एतदेवाधिपत्यमिति*। यदनावरणभावमात्रावस्थानम्। *अङ्गीभावोऽपि वास्तीति*। प्रधानभावोऽपि, जनकभावोऽपीत्यर्थः। तदनेन द्विविधस्यापि कारणहेतोः कारकस्य वा, अध्युपेक्षकस्य वाधिपतिफलमस्तीति दर्शितं भवत्यन्यत्रासंस्कृतात्। यस्माद् वक्ष्यति—"अपूर्वः संस्कृतस्यैव संस्कृतोऽधिपतेः फलम्" (अभि० को० २.५८) इति। *दशानामयतनानामिति*। चक्षुरूपायतनयोर्यावत् कायस्प्रष्टव्यायतनयोः। 'चक्षुः प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानं यावत् कायं प्रतीत्य स्प्रष्टव्यानि चोत्पद्यते कायविज्ञानम्" इति वचनात्। कारणहेतुरेव चायम्। न हि चक्षुरादीन्यायतनानि चक्षुर्विज्ञानादीनां सहभूहेत्वादयः पञ्च हेतवः सम्भवन्ति, मनआयतनं तु मनोविज्ञानस्य सभागहेत्वादि सम्भवति। धर्मायतनमपि सहभूसम्प्रयुक्तकहेत्वादि सम्भवतीति न कारणहेतुरेवेत्यवधार्यते। तस्माद् दशानामित्युक्तम्, न द्वादशानामिति। *भाजनलोके च कर्मणाम्*। किम्? *अङ्गीभावोऽस्ति*। कारणहेतोरित्यधिकृतम्, भाजनलोको हि कुशलाकुशलकर्मजनितोऽप्यव्याकृतोऽपि न विपाकफलमिष्यते, "सत्त्वाख्यो विपाकः" (अभि० को० २.५७) इति लक्षणात्। तस्मात् कारणहेतोरेतदधिपतिफलम्।

*श्रोत्रादीनामपि*। न केवलं चक्षुषोऽस्ति, किम्? *चक्षुर्विज्ञानस्योत्पत्तौ पारम्पर्येणाधिपत्यम्* न साक्षाद्, यथा चक्षुषः। कथं ज्ञायते? इत्याह—*श्रुत्वा द्रष्टुकामतोत्पत्तेः*। द्रष्टुकामतायां च चक्षुर्विज्ञानमुत्पद्यत इत्यभिप्रायः। *एवमादि योज्यमिति*। घ्रात्वा द्रष्टुकामतोत्पत्तेरित्यादि योज्यम्।

*"सभागसवत्रगयोर्निष्यन्दः"*। फलमिति वर्तते। सभागसर्वत्रगहेत्वोरेव निष्यन्दफलमित्यवधार्यते। पुरुषकारफलमपि हि तयोरनन्तरं सम्भवति।

---

१. एतदेव—का०। २. चाऽस्ति—का०। ३. ०विज्ञानोत्पत्तौ—का०।

**सदृशफलत्वादनयोर्निःष्यन्दफलम् ।**

**पौरुषं द्वयोः ॥ ५६ ॥**

सहभूसम्प्रयुक्तकहेत्वोः पुरुषकारफलम् । पुरुषभावाव्यतिरेकात् पुरुषकारः पुरुष एव, तस्य फलं **पौरुषम्** ।

कोऽयं पुरुषकारो नाम ? यस्य धर्मस्य यत् कारित्रम् । पुरुषकार इव हि पुरुषकारः । तद्यथा—काकजङ्घा ओषधिः, मत्तहस्ती मनुष्य इति ।

किमन्येषामप्यस्ति पुरुषकारफलम् ? उताहो द्वयोरेव ? अन्येषामप्यस्त्यन्यत्र विपाकहेतोः; यस्मात् सहोत्पन्नं[1] समनन्तरोत्पन्नं वा पुरुषकारफलं भवति । न चैव[2] विपाकः ।

---

*"पौरुषं द्वयोः"* इति । *पुरुषकारफलमेव सहभूसम्प्रयुक्तकहेत्वोरित्य*वधारणम् । पुरुषकारस्य फलं पौरुषम्, पुरुषकारफलमित्यर्थः । *पुरुषभावाव्यतिरेकात् पुरुषकारः* पुरुषभावान्न व्यतिरिक्तः । पुरुषकर्मैव हि पुरुषकारः, न पुरुषादन्यः । न हि कर्म कर्मवद्भ्योऽन्यदिष्यते बौद्धैः । तस्मात् पुरुषकारस्य यत् फलं तत् पुरुषस्यैवेति पौरुषमित्युच्यते । *यस्य धर्मस्य यत् कारित्रमि*ति । यस्य धर्मस्य यत्कर्म या क्रिया सा तस्य पुरुषकार इत्यर्थः । ननु चान्तर्व्यापारपुरुषाभावे धर्ममात्रं पुरुष इत्यतो धर्मकार इति प्राप्नोति, न पुरुषकारः ? इत्यत आह—*पुरुषकार इव हि पुरुषकारः । यथा लोके* कल्पितस्य पुरुषस्य पुरुषकारः, एवं धर्मस्यापीति पुरुषकार इव पुरुषकारः । दृष्टान्तं कथयति—*काकजङ्घा ओषधिरि*त्यादि । काकजङ्घाकारा ओषधिः काकजङ्घेत्युच्यते । मत्तहस्तीव यो दृष्टः शूरो वा स मनुष्यो *मत्तहस्ती*ति ।

*किमन्येषामि*ति । हेतूनाम् । *अन्येषामप्यस्ति अन्यत्र विपाकहेतोः ।* कस्माद् ? इत्याह—यस्मात् *सहोत्पन्नं समनन्तरोत्पन्नं वा पुरुषकारफलमि*ति । सहभूसम्प्रयुक्तकहेत्वोर्हि सहोत्पन्नं फलमुक्तम् । तच्च पुरुषकारफलमेव । न ह्यन्यत् फलं सहोत्पन्नमस्ति । सभागसर्वत्रगहेत्वोरनन्तरोत्पन्नमेव पुरुषकारफलम् । कारणहेतोरनुभवतथा । किं पुनर्निष्यन्दफलादधिपतिफलाद् वान्यत् पुरुषकारफलम् ? नेत्युच्यते; तदेव हि फलं तत्तन्नाम लभते । तथा हि तद्धेतुसदृशोत्पत्तेर्निष्यन्दफलम् । तद्बलेनोत्पत्तेः पुरुषकारफलम् । अविघ्नभावावस्थानेनोत्पत्तेश्चाधिपतिफलमिति । *न चैव विपाकः ।* किम् ? सहोत्पन्नो

---

१. ० वा—का० ।  २. चैव—का०

तस्याप्यस्ति विप्रकृष्टपुरुषकारफलम् । यथा कर्षकाणां सस्यमित्यपरे ॥५६॥

किं पुनरिदं विपाकफलं नाम किं यावदधिपतिफलम् ?

**विपाकोऽव्याकृतो धर्मः**

अनिवृताव्याकृतो हि धर्मः विपाकः । असत्त्वाख्योऽपि स्याद् । अत आह—

**सत्त्वाख्यः**

औपचयिकोऽपि स्यात्, नैःष्यन्दिकोऽपि ? अत आह—

**व्याकृतोद्भवः ।**

कुशलाकुशलं हि विपाकं प्रति व्याकरणाद् व्याकृतम् । तस्माद्य उत्तरकालं भवति न युगपद्[1] नाप्यन्तरं[2] स विपाकः । एतद् विपाकस्य लक्षणम् ।

कस्मादसत्त्वाख्योऽर्थः कर्मजो न विपाकः ? साधारणत्वात् । अन्योऽपि हि तत् तथैव परिभोक्तुं समर्थः । असाधारणस्तु विपाकः । न ह्यन्यकृतस्य कर्मणोऽन्यो विपाकं प्रतिसंवेदयते ।

अधिपतिफलं कस्मात् प्रतिसंवेदयते ? साधारणकर्मभूतत्वात् ।

**निःष्यन्दो हेतुसदृशः**

---

वा समनन्तरोत्पन्नो वेत्यधिकृतम् ॥ ५६ ॥

"*विपाकोऽव्याकृतो धर्मः*" इति । विस्तरः—अव्याकृत एव सत्त्वाख्य एव व्याकृतोद्भव एवेत्यवधारणम् । अव्याकृत इति अनिवृत्ताव्याकृतो विवक्षितः ।

सत्त्व इति आख्या यस्य सः "*सत्त्वाख्यः*" । सत्वसन्तानज इत्यर्थः ।

व्याकृतादुद्भवतीति "*व्याकृतोद्भवः*"। औपचयिकनैष्यन्दिकौ तु न व्याकृतादुद्भवतः । ननु च इन्द्रियमहाभूतोपचयो ध्यानविशेषसमापन्नस्य भवति, असावपि व्याकृतादुद्भवति, स विपाकः प्राप्नोति, निर्माणचित्तं चापि, तथैव समाधिभूतचित्तत्वात् ? नैष दोषः; व्याकृतोद्भवः इत्युच्छब्दः उत्तरकालार्थः । व्याकृतात् कुशलादकुशलाद्वा *य उत्तरकालमेव भवति युगपन्नाप्यनन्तरं स विपाक* इति । समाधिजस्तूपचयः समाधिना सह चानन्तरं च भवति । निर्माणचित्तं त्वनन्तरमेव च भवति । विपाकश्च समानभूमिक एवाभिप्रेत इत्येतच्चोभयं भिन्नभूमिकमपि भवतीति न विपाकस्य प्रसङ्गः । *निष्यन्दो हेतुसदृश* इति ।

---

१. सह—का० । २. नान्तरं—का० ।

हेतोर्यः सदृशो धर्मः स निष्यन्दफलम्, तद्यथा—सभागसर्वत्रगहेत्वोः ।

यदि सर्वत्रगहेतोरपि समानं फलम्, कस्मान्न सभागहेतोरेवेष्यते ? यस्मात् भूमितः क्लिष्टतया चास्य सादृश्यम्, न तु प्रकारतः । यस्य तु प्रकारतोऽपि सादृश्यं सोऽभ्युपगम्यत एव सभागहेतुः ।

अत एव यो यस्य सभागहेतुः सर्वत्रगहेतुरपि स तस्येति चतुष्कोटिकः क्रियते । प्रथमा कोटिः- असर्वत्रगः सभागहेतुः, द्वितीया—अन्यनैकायिकः सर्वत्रगहेतुः, तृतीया—एकनैकायिकः सर्वत्रगहेतुः, चतुर्थी—एतानाकारान् स्थापयित्वेति ।

---

कुशलक्लिष्टानिवृत्ताव्याकृतसादृश्यमधिकृत्य । यद्येवम्, कुशलसास्रवस्य हेतोरनास्रवं निष्यन्दफलं प्राप्नोति, कुशलसादृश्यात् ? न; निकायसादृश्याभावात् । समाननिकायो हि सभागहेतुरिष्यते, न सर्वः ।

*भूमितः क्लिष्टतया चास्य सादृश्यमि*ति । अस्य सर्वत्रगहेतोः सादृश्यं भूमितः क्लिष्टतया च । केन सह ? स्वफलेन । कथमिति ? भूमितस्तावत् सर्वत्रगहेतुः कामावचरो यावद्भावाग्रिकः । तत्फलमपि कामावचरं यावद्भावाग्रिकमिति । क्लिष्टतया च सर्वत्रगहेतुरपि क्लिष्टः, तत्फलमपि क्लिष्टम् । *न तु प्रकारतः* सादृश्यं यथा सभागहेतोः । *यस्य तु प्रकारतोऽपि सादृश्यम्* । यस्य सर्वत्रगहेतोः स्वफलेन सह प्रकारतोऽपि सादृश्यम् । स सर्वत्रगहेतु*रभ्युपगम्यत एव सभागहेतु*रिति । भूमिक्लिष्टत्वसादृश्याद्धि सर्वत्रगहेतुर्भवति, सभागहेतुश्च स भवति; प्रकारतोऽपि सादृश्यात् ।

*अत एव चतुष्कोटिकः क्रियते* । उभयस्वभावतया तृतीयकोटिसम्भवात् । *प्रथमा कोटिरसर्वत्रगः सभागहेतु*रिति । रागादिकः सभागहेतुः । स हि सभागहेतुरेव स्वनैकायिकस्य क्लेशस्य, न तु सर्वत्रगहेतुः; असर्वत्रगस्वभावत्वात् । *द्वितीयान्यनैकायिकः सर्वत्रगहेतु*रिति । सत्कायदृष्ट्यादिकः सर्वत्रगः । स हि सर्वत्रगहेतुरेव सर्वत्रगस्वभावत्वात्, अन्यनैकायिकक्लिष्टहेतुत्वाच्च । न सभागहेतुः; अन्यनैकायिके क्लिष्टे सभागहेतुत्वाभावात् । *तृतीयैकनैकायिकः सर्वत्रगहेतु*रिति । सत्कायदृष्ट्यादिकः सर्वत्रगः । स ह्येकनैकायिकस्य क्लेशस्य सभागहेतुः, एकनैकायिकक्लिष्टसादृश्यात् । सर्वत्रगहेतुश्च सः, तस्य सर्वत्रगत्वादेकनैकायिकक्लिष्टहेतुत्वयोगेन सर्वत्रगहेतुत्वयोगाच्च । *चतुर्थ्येतानाकारान् स्थापयित्वेति* । त्रिकोट्युक्तां धर्मप्रकारां वर्जयित्वेत्यर्थः । तद्यथा क्लिष्टा धर्माः कुशलानां न सभागहेतुः; सादृश्यात् । न सर्वत्रगहेतुरत एव कुशलानां चाक्लिष्टत्वात् ।

**विसंयोगः क्षयो धिया ॥ ५७ ॥**

क्षयः = निरोधः । धीः = प्रज्ञा । तेन प्रतिसंख्यानिरोधो **विसंयोग**-फलमित्युक्तं भवति ॥ ५७ ॥

**यद्बलाज्जायते यत्तत् फलं पुरुषकारजम् ।**

तद्यथा अधरभूमिकस्य प्रयोगचित्तस्योपरिभूमिकः समाधिः सास्रवस्याना-स्रवो ध्यानचित्तस्य निर्माणचित्तमित्येवमादि ।

---

एवं कुशलाः क्लिष्टानां योज्यम् । क्लिष्टा अपि क्लिष्टानां न सभागहेतुः, नापि सर्वत्रगहेतुर्भवन्ति, तद्यथा रागादयोऽन्यनैकायिकानां न सभागहेतुरन्य-नैकायिकत्वात्, न सर्वत्रगहेतुरसर्वत्रत्वाद् रागादीनामिति । सर्वत्रगा अपि धर्माः क्लिष्टानामेकनैकायिकानामपि न सभागहेतुर्न सर्वत्रगहेतुः । यद्यनागतास्ते भवन्तीति योज्यम् ।

*"विसंयोगः क्षयो धिया"* इति । धिया प्राप्यमाणो निरोधो विसंयोगफल-मित्यर्थः । *तेनेति* । तेन कारणेन यस्मात् क्षयो निरोधः, धी प्रज्ञा, तेन कारणेन *प्रतिसंख्यानिरोधो विसंयोगफलमित्युक्तं भवती*त्याचष्टे ॥ ५७ ॥

*"यद्बलाज्जायते"* इति विस्तरः । यस्य बलं यद्बलमिति षष्ठीसमासः । यस्य बलाज्जायते यत्संस्कृतम्, *तत्फलम्*, तस्य *पुरुषकारजम्* । पुरुषकाराज्जातं पुरुष-कारजम् । पुरुषकारफलमित्यर्थः ।

उदाहरणं कथयति—*तद्यथा अधरभूमिकस्य* कामावचरस्य प्रथमध्यान-भूमिकस्य वा *प्रयोगचित्तस्योपरिभूमिकः* प्रथमध्यानभूमिको द्वितीयध्यान-भूमिको वा *समाधिः* । फलं पुरुषकारजमित्यधिकृतम् । *सास्रवस्य* धर्मस्याना-*स्रवः । ध्यानचित्तस्य निर्माणचित्तं* तदेव फलं भवति । आदिशब्देनान्यदपि । तद्यथा कामावचरान्मरणचित्ताद् रूपावचरः प्रथमोऽन्तराभवक्षण इत्येवमादि विजातीयोदाहरणं निष्यन्दफलविवेचनार्थम् । अधरभूमिकस्य हि प्रयोगचित्त-स्योपरिभूमिकः समाधिर्न निष्यन्दफलम् । भिन्नभूमिकं हि न हेतुसदृशम् । नापि सास्रवस्यानास्रवमिति वक्तव्यम् । न तु सर्वं निष्यन्दफलं पुरुषकारफलं भवति । यद्धि यस्य बलाज्जायते सदृशं समानभूमिकमनन्तरं च भवति, तत्तस्य पुरुष-कारफलं निष्यन्दफलं च भवति । चतुःकोटिकं चात्र भवति—अस्ति पुरुषकार-फलमेव न निष्यन्दफलम्, यथोदाहृतम्; अस्ति निष्यन्दफलमेव न पुरुषकार-फलम्, सभागसर्वत्रगहेत्वोर्व्यवहितं फलम्; अस्त्युभयम्, समनन्तरोत्पन्नं सभागसर्वत्रगहेत्वो फलम्; अस्ति नोभयम्, तद्यथा विपाकहेतोर्विपाकफलम् । प्रतिसंख्यानिरोधोऽपि पुरुषकारफलमिष्यते ।

प्रतिसंख्यानिरोधस्तु यद्बलात् प्राप्यत इति वक्तव्यम् ।

**अपूर्वः संस्कृतस्यैव संस्कृतोऽधिपतेः फलम् ॥ ५८ ॥**

पूर्वोत्पन्नादन्यः **संस्कृतो** धर्मः **संस्कृतस्यैव** सर्वस्याधिपतिफलम् ।

पुरुषाधिपतिफलयोः किं नाना कारणम् ? कर्तुः पुरुषकारफलम् । अकर्तुरप्यधिपतिफलमेव, तद्यथा—शिल्पिनि शिल्पं पुरुषकारफलमधिपतिफलं च । अन्येषामधिपतिफलमेव ॥ ५८ ॥

अथैषां हेतूनां कतमो हेतुः कस्मिन् काले फलं प्रतिगृह्णति ? ददाति वा ?

**वर्त्तमानाः फलं पञ्च गृह्णन्ति**

नातीताः प्रतिगृहीतत्वात्, नाप्यनागता निष्पुरुषकारत्वात् । **कारणहेतु**रप्येवम् । स तु नावश्यं सफल इति नोच्यते ।

---

न चासौ हेतुबलाज्जायते नित्यत्वादित्यतः कारिकायामनुक्तं तदुपसंचष्टे—*प्रतिसंख्यानिरोधस्तु यद्बलात् प्राप्यत इति वक्तव्यमिति* । प्रतिसंख्याबलेन हि प्रतिसंख्यानिरोधः प्राप्यते । तस्मात् स प्रतिसंख्यायाः पुरुषकारफलं भवति ।

"*अपूर्वः*" इति विस्तरः । *अपूर्वः पूर्वोत्पन्नादन्यः* । कः पुनरसौ ? सहोत्पन्नः पश्चादुत्पन्नश्च न हि पूर्वं फलं पश्चाद्धेतुर्भवति । *संस्कृत एव धर्मोऽधिपतिफलम्*, नासंस्कृतः । संस्कृतस्यैव नासंस्कृतस्य फलप्रतिग्रहणदानासमर्थत्वात् । *सर्वस्येति* । जनकस्याविघ्नभावावस्थायिनश्च । *कर्तुः पुरुषकारफलमिति* । "यद्बलाज्जायते यावत् फलं पुरुषकारजम्" इति वचनात् ।

*अकर्तुरप्यधिपतिफलमेवेति* । "अपूर्वः संस्कृतस्यैव संस्कृतोऽधिपतेः फलम्" इति वचनात् । *अन्येषामधिपतिफलमेवेति* । अशिल्पिनामविघ्नभावावस्थायिनां तच्छिल्पमधिपतिफलमेव न पुरुषकारफलम् । तदेवं चतुःकोटिकं भवति—१. अस्ति पुरुषकारफलमेव नाधिपतिफलम्, तद्यथा विसंयोगफलम् । २. अस्त्यधिपतिफलमेव न पुरुषकारफलम्, उदासीनस्य हेतोर्व्यवहितश्च फलम् । ३. अस्त्युभयम्, सहोत्पन्नानन्तरोत्पन्नश्च कारकस्य हेतोः । ४. अस्ति नोभयम्, तद्यथा आकाशमप्रतिसंख्यानिरोधश्चेति ॥ ५८ ॥

"*वर्तमानाः फलं पञ्च*" इति । वर्त्तमाना एव फलम् ।

"*गृह्णन्ति*" इत्यवधारणम् । *प्रतिगृह्णन्तीति* । आक्षिपन्ति हेतुभावेनावतिष्ठन्त इत्यर्थः । *कारणहेतुरप्येवमिति* । वर्तमान एव फलं प्रतिगृह्णाति नातीतो नानागतो वा । *स तु नावश्यं सफल इति नोच्यते* । तथा हि—असंस्कृतं

**द्वौ प्रयच्छतः ।**

सहभूसम्प्रयुक्तकहेतू वर्तमानावेव[1] फलं प्रयच्छतः । समानकालमेव ह्यनयोः[2] फलदानग्रहणम् ।

**वर्त्तमानाभ्यतीतौ द्वौ**

फलं प्रयच्छतः सभागसर्वत्रगहेतू । युक्तं तावद् यदतीताविति ।

अथ कथं वर्त्तमानौ निष्यन्दफलं प्रयच्छतः ? समनन्तरनिवर्त्तनात् । निवृत्ते तु फले तौ चाभ्यतीतौ भवतः ।

फलं चापि दत्तं न पुनस्तदेव दत्तः । अस्ति कुशलः सभागहेतुः फलं प्रतिगृह्णाति न ददातीति चतुष्कोटिकः ।

प्रथमा कोटिः— कुशलमूलानि समुच्छिन्दन् याः प्राप्तीः सर्वपश्चाद्विजहाति ।

---

कारणहेतुरिष्यते, न चास्य फलमस्ति । अनागतश्च कारणहेतुः । न च पूर्वमुत्पद्यमानेन धर्मेण सफलः ।

*"द्वौ प्रयच्छतः"* इति। वर्तमानावधिकृतम् । *सहभूसम्प्रयुक्तकहेतुवर्तमानावेव फलं प्रयच्छतः । युक्तं तावद् यदतीताविति* । निष्यन्दफलेन सफलावेतावुक्तौ; "सभागसर्वत्रगयोर्निष्यन्दः" ( अभि० को० २.५६ ) इति वचनात् ।

*अथ कथं वर्त्तमानौ निष्यन्दफलं प्रयच्छतः ।* न हि तयोर्वर्त्तमानावस्थायां निष्यन्दो दृश्यत इत्यत आह—*समनन्तरनिर्वर्तनात्* । किम्, फलं प्रयच्छत इत्यधिकृतम् । *तौ चाभ्यतीतौ भवत* इति । हेतुफलयोरसमवधानात् ।

*न पुनस्तदेव दत्त इति* । न पुनस्तदेव फलं प्रयच्छत इत्यर्थः । 'दत्तः' इति ह्याख्यातपदं द्विवचनान्तम्; वर्त्तमानावस्थायामेव दत्तत्वात् । न हि वर्त्तमानतामानीतं पुनरानेतुं शक्यते । यदा च तावतीतौ फलं प्रयच्छतस्तदेव तत् स्वफलं प्रयच्छतः । उत्पद्यमानावस्थायामेव हि फलं निर्वर्तते, नान्यदा । केवलं तु व्यवहितं तत् फलमित्यवगन्तव्यम् । *कुशलमूलानि समुच्छिन्दन् या प्राप्तीः सर्वपश्चाद्विजहातीति* । इह कुशलमूलानि क्रमेण समुच्छिद्यन्ते । कथम् ? मिथ्यादृष्टिर्नवप्रकारा, मृदुमृद्वी, यावदधिमात्राधिमात्रा । कुशलमूलान्यपि नवप्रकाराणि तद्विपर्ययेण मृदुमृद्व्या मिथ्यादृष्ट्याधिमात्राधिमात्राणि कुशलमूलानि समुच्छिद्यन्ते यावदधिमात्राधिमात्रया मिथ्यादृष्ट्या मृदुमृदूनि कुशलमूलानि समुच्छिद्यन्ते, भावनाहेयक्लेशवत् । तत्रान्त्यावस्थायां मृदुमृदूनि कुशलमूलानि न समुदा-

---

१. वर्त्तमानौ—का० । २. ह्यनये.—का० ।

द्वितीया—कुशलमूलानि प्रतिसन्दधानो याः सर्वप्रथमं प्रतिसन्दधानस्य। तृतीया—असमुच्छिन्नकुशलमूलस्य शेषास्ववस्थासु। चतुर्थी—एतानाकारान् स्थापयित्वा।

अकुशलस्य तु प्रथमा कोटिः—कामवैराग्यमनुप्राप्नुवन् याः प्राप्तीः सर्वपश्चाद् विजहाति। द्वितीया—कामवैराग्यात् परिहीयमाणो याः सर्वप्रथमं प्रतिलभते। एवं तु वक्तव्यम्—स्यात्ता एव परिहीयमाणस्य। तृतीया—कामावीतरागस्य शेषास्ववस्थासु। चतुर्थी—एतानाकारान् स्थापयित्वा।

एवं निवृताव्याकृतस्याप्यर्हत्त्वप्राप्तिपरिहाणितो यथायोगं योज्यम्।

अनिवृताव्याकृतस्य पश्चात्पादकः। यस्तावत् ददाति प्रतिगृह्णात्यपि सः। स्यात् प्रतिगृह्णाति न ददात्यर्हतश्चरमाः स्कन्धाः। सालम्बननियमेन तु क्षणशः।

---

चरन्ति। प्राप्तयस्तु तेषां मृदुमृदूनां समुदाचरन्ति। ताः सर्वपश्चिमादिका यास्तदा विजहाति, तासां प्राप्तीनां प्राप्तीर्निरोधयतीत्यर्थः। ताः प्राप्तयोऽन्त्यावस्थाः कुशलः सभागहेतुः फलं प्रतिगृह्णाति, फलं परिग्रहं करोति। न ददाति स्वनिष्यन्दफलम्। कुशलस्य क्षणान्तरस्य जन्यस्याभावात्। *द्वितीया कोटिः*। ददाति न प्रतिगृह्णातीति। *कुशलमूलानि प्रतिसन्दधानो याः सर्वप्रथमं प्रतिलभते*। या प्राप्तीः सर्वपूर्वं प्रतिलभते ताः कुशलः सभागहेतुः फलं ददातीति। प्राप्तिं स्वनिष्यन्दं जनयति, न तु प्रतिगृह्णाति; पूर्वमेव प्रतिगृहीतत्वात्। अयं तु सावद्यो द्वितीयकोटिनिर्देशः। कुशलमूलप्रतिसन्धानकाले हि नवप्रकाराणामपि कुशलमूलानां प्राप्तयोऽतीतानागतप्रत्युत्पन्नाः समं प्रतिलभ्यन्ते। तासां या अतीताः प्राप्तयः स कुशलः सभागहेतुः फलं ददाति न प्रतिगृह्णाति; प्रतिगृहीतत्वादिति युक्तमेतत्। यास्तु वर्त्तमानास्तथैव प्रतिलब्धाः प्राप्तयः स कुशलः सभागहेतुः कथमवधार्यते—फलं ददात्येव न प्रतिगृह्णातीति, स हि प्रतिगृह्णाति न ददाति चेति! एवमविशेषितत्वात् सावद्योऽयं द्वितीयकोटिनिर्देशः। तस्मादाचार्य आह—*एवं तु वक्तव्यं स्यात्। ता एव प्रतिसन्दधानस्येति*। ता एव प्राप्तयः कुशलः सभागहेतुः फलं ददात्येव स्वनिष्यन्दफलदानात्। न प्रतिगृह्णाति पूर्वप्रतिगृहीतत्वात्। *तृतीया कोटिः*। फलं प्रतिगृह्णाति ददाति चेति। *असमुच्छिन्नकुशलमूलस्य शेषास्ववस्थास्विति*। द्वे अवस्थे हित्वा—यस्यामवस्थायां कुशलमूलानि समुच्छिन्दन् याः प्राप्तीः सर्वपश्चाद्विजहाति, यस्यां चावस्थायां कुशलमूलानि प्रतिसन्दधानो याः सर्वप्रथमं प्रतिलभते। यथास्मदादीनां कुशलाः प्राप्तयः फलं प्रतिगृह्णन्ति ददति चेति। विसभागक्षणान्तराव्यवहित इति

कुशलः सभागहेतुः फलं प्रतिगृह्णाति न ददातीति चतुष्कोटिकः ।

प्रथमा कोटिः—यदा[1] कुशलचित्तानन्तरं क्लिष्टमव्याकृतं वा चित्तं सम्मुखीकरोतीति । द्वितीया—विपर्ययात् । तृतीया—कुशलचित्तानन्तरं कुशलमेव । चतुर्थी— एतानाकारान् स्थापयित्वा ।

---

वक्तव्यम् ? न वक्तव्यम्; विसभागक्षणान्तरव्यवधानेऽपि प्राप्तिलक्षणस्य सभागहेतोः फलप्रतिग्रहणदानसम्भवात् । *चतुर्थ्येतानाकारान् स्थापयित्वा ।* तद्यथा—ऊर्ध्वभूमेः परिहीणस्य ऊर्ध्वभूमिकानां या प्राप्तयस्ताः कुशलः सभागहेतुर्न फलं प्रतिगृह्णाति, पूर्वं प्रतिगृहीतत्वात् । न ददाति, तद्भूमिपरिहीणस्य तद् भूमिकानां कुशलमूलानां धर्माणां प्राप्त्यभावात् । एवं समुच्छिन्नकुशलमूलावस्थायामपि वक्तव्यम् ।

अत्राचार्यः सङ्घभद्र आह—"नैतद् युज्यते यदुक्तम् । एवं तु वक्तव्यं स्यात्—ता एव प्रतिसन्दधानस्येति । कस्मात् ? न हि यास्ताः सर्वपश्चाद्विहीनास्तासामेव तन्निष्यन्दफलम् । याः प्रतिसन्दधानः सर्वप्रथमं प्रतिलभत इति पूर्वनिरुद्धस्यापि हि तत्प्राप्तिसन्तानस्य स निष्यन्दः" इति । अथ कथं फलग्रहणात् कृत्स्न एव तत् सभागहेतुर्गृहीतः स्यादिति तदर्थमेवेदमुच्यते । तस्मात् यथान्यास एव साध्विति ।

तदेवमुभयत्रापि पाठदोष उद्ग्राहिते कतरः पाठः श्रेयानिति ? अत्रा*भिधर्मपाठ* एव श्रेयानिति पश्यामः ।

ननु चोक्तम्–अविशेषितत्वात् कुशलप्रतिसन्धानकाले प्रतिलब्धा वर्त्तमानाः प्राप्तयः फलं ददति प्रतिगृह्णन्त्यपि । ननु ददत्येव न प्रतिगृह्णन्तीति दोष इति ? नैष दोषः; कुशलमूलानि प्रतिसन्दधान इति कुशलमूलप्राप्त्युत्पद्यमानावस्थायामेतदुच्यते; न वर्त्तमानावस्थायाम् । तत्र न काश्चिदपि कुशलमूलप्राप्तयो वर्त्तमाना भवन्ति । ताः कथं फलं प्रतिगृह्णन्ति ददति चेति शक्यते वक्तुम् । अतीतास्तु स्वसन्ताने कुशलमूलप्राप्तय. सर्वा अपि सभागहेतुभूताः स्वनिष्यन्दफलं तदानीं ददत्येव समनन्तरनिर्वर्त्तनन्यायेन, न प्रतिगृह्णन्ति पूर्वं प्रतिगृहीतत्वात् । इत्यनया युक्त्याऽ*भिधर्मपाठ*मेव समर्थयामः ।

ननु चैवमविशेषिते पाठेऽनागतानां कुशलमूलप्राप्तीनां द्वितीयकोटित्ववचनप्रसङ्गः, ता अपि हि तदानीमतीतप्राप्तिवत् प्राप्यन्ते ? नैष दोषः; अनागतानां सभागहेतुत्वाभावात्, सभागहेतोश्चेहाधिकृतत्वात् । एवमपि न प्राप्तय एव वक्तव्याः, या एव सर्वप्रथमं प्रतिलभत इति । एवं तु वक्तव्यं स्यात्—यान्

---

१. का० पुस्तके नास्ति ।

सर्वप्रथमं प्रतिलभत इति । यान् कुशलान् धर्मानित्यर्थः । चित्तचैत्ता अपि हि कुशलप्रतिसन्धाने प्रथमतः प्रतिलभ्यन्ते, न केवलं तत्प्राप्तयः ? अस्त्येतत्; किन्तु प्राप्तीनामेव कुशलप्रतिसन्धाने आवश्यकत्वादेवं वचनम् । कुशल-प्राप्तयो हि सम्यग्दृष्ट्या विचिकित्सयापि वा कुशलप्रतिसन्धानेऽवश्यमुत्पद्यन्ते । चित्तचैत्तास्तु विचिकित्सया कुशलप्रतिसन्धाने न तावदुत्पद्यन्त इति प्राप्तय एवोत्पद्यन्त इति वर्णयन्ति ।

*अकुशलस्येति* विस्तरः । अकुशलोऽपि [illegible] ।—अस्त्य-कुशलः सभागहेतुः फलं प्रतिगृह्णाति न ददातीति विस्तरेण। *प्रथमा कोटिः काम-वैराग्यमनुप्राप्नुवन् या प्राप्तीः सर्वपश्चाद् विजहाति*, ताः अकुशलः सभागहेतुः फलं प्रतिगृह्णाति न ददाति । कथं कृत्वा ? इह क्लेशो नवप्रकारः, मार्गोऽपि नवप्रकारः । तत्र मृदुमृदुना मार्गेणाधिमात्राधिमात्रः क्लेशप्रकारः प्रहीयते । यावदधिमात्राधिमात्रेण मृदुमृदुः प्रहीयते । तत्प्राप्तयोऽपि तथैव प्रहीयन्ते । कामवैराग्यमनुप्राप्नुवन् या मृदुमृदूनामकुशलानां प्राप्तीः सर्वपश्चाद्विजहाति, ताः अकुशलः सभागहेतुः फलं प्रतिगृह्णाति न ददाति, अकुशलप्राप्तिक्षणान्तरा-भावात् । *द्वितीया—कामवैराग्यात् परिहीयमाणो याः सर्वप्रथमं प्रतिलभतेऽकुशलानां* प्राप्तीः, ता अकुशलः सभागहेतुः फलं ददाति न प्रतिगृह्णाति, पूर्ववद् वक्तव्यम् ।

अत्राचार्यो ब्रवीति—*एवं तु वक्तव्यं स्यात्* । *ता एव परिहीयमाणस्येति* । ता एव याः कामवैराग्यमनुप्राप्नुवन् प्राप्तीः सर्वपश्चाद् विजहातीति, ता हि प्रति-गृहीतत्वान्न प्रतिगृह्णन्ति । ददत्येव तु केवलं फलम् । पूर्वपाठे तु द्वितीया कोटिर्न सम्भवति, यथोक्तं प्राक् ।

अत्राचार्यसङ्घभद्रस्तथैव प्रत्याचष्टे—नैतद् युज्यत इति । पूर्वेण समानमेतत् सर्वं प्रपञ्चयितव्यम् ।

*तृतीया—कामावीतरागस्य शेषास्ववस्थास्विति* । द्वे अवस्थे हित्वा । एते एव यथोक्ते प्रथमद्वितीयावस्थे शेषास्ववस्थासु । यथास्माकम् । या अकुशलानां प्राप्तयस्ता अकुशलः सभागहेतुः फलं प्रतिगृह्णाति ददाति च । *चतुर्थी—एता-नाकारान्* यथोक्तान् *स्थापयित्वा* । तद्यथा कामवीतरागस्यापरिहाणधर्मणो या अकुशलानां प्राप्तयः, सोऽकुशलः सभागहेतुर्न फलं प्रतिगृह्णाति, पूर्वं प्रतिगृही-तत्वात् । न ददाति, तस्य प्राप्त्यभावात् ।

*एवं निवृत्ताव्याकृतस्यापि* इति विस्तरः । एवं नि[illegible] चतुः-कोटिकविधानम् । *अर्हत्त्वप्राप्तितोऽर्हत्त्वपरिहाणितश्च यथायोगं योज्यम्* । अस्ति निवृताव्याकृतः *सभागहेतुः* फलं प्रतिगृह्णाति न ददाति इति विस्तरः । प्रथमा कोटिः—अर्हत्त्वं प्राप्नुवन् याः प्राप्तीः सर्वपश्चाद्विजहाति, स निवृत्ताव्याकृतः

**एवमकुशलादयोऽपि योज्याः ।**

---

सभागहेतुः फलं प्रतिगृह्णाति न ददाति; क्लिष्टक्षणान्तराभावात् । द्वितीया—अर्हत्त्वात् परिहीयमाणो याः सर्वप्रथमं प्रतिलभते । एवं तु वक्तव्यं स्यात्—ता एव परिहीयमाणस्येति । एवं हि फलदानमेवैकमुपपादितं भवति । पूर्वपाठसमर्थनमपि तेनैवानुक्रमेण वक्तव्यम् । तृतीया—भवाग्रवीतरागस्य शेषास्ववस्थासु । चतुर्थी—एतानाकारान् स्थापयित्वा । तद्यथा—अर्हत्त्वं प्राप्तस्य याश्चिभ्रातुक्यो निवृत्ताव्याकृतानां प्राप्तयो यथासम्भवम्, न निवृत्ताव्याकृतः सभागहेतुर्न फलं प्रतिगृह्णाति; प्रतिगृहीतत्वात् । न ददाति, प्रहीणत्वात् ।

*अनिवृत्ताव्याकृतस्य पश्चात्पादक* इति । पश्चात्पादकलक्षणं व्याख्यातमिति न पुनरुच्यते । योऽनिवृत्ताव्याकृतः सभागहेतुः फलं प्रतिगृह्णाति ददात्यपि सः । आह—*यस्तावद् ददाति प्रतिगृह्णात्यपि सः ।* अनिवृत्ताव्याकृतस्यापरिनिर्वाणात् सन्निहितत्वात् । *स्यात् प्रतिगृह्णाति न ददाति ।* अर्हतश्चरमाः स्कन्धाः, सर्वोपधिनिःसर्गेणानिवृत्ताव्याकृतनिष्यन्दाभावात् । *सालम्बनानियमेन* **तु क्षणश** इति । पूर्वमनालम्बनानां सम्भवतो नियम उक्तः, सालम्बननियमेन तु चित्तचैत्तानामेव सभागहेतुत्वमुच्यते क्षणशः क्षणान्तरापेक्षया, न तु पर्यादाय विच्छेदत इत्यर्थः ।

*कुशलचित्तानन्तरमि*ति विस्तरः । *यदा कुशलचित्तान्तरं क्लिष्टमव्याकृतं वा चित्तं सम्मुखी*करोति, तदा तत् कुशलं चित्तं फलं प्रतिगृह्णाति यस्तत्सन्तानपतितं व्यवहितमनागतं कुशलं फलं भविष्यति, अनुत्पत्तिधर्मि वा, न ददाति, यस्मादस्यानन्तरं कुशलमेव नास्ति । सदृशेन हि फलेन सफलः सभागहेतुरिष्यते । *द्वितीया—विपर्ययादिति ।* यदा क्लिष्टानिवृताव्याकृतचित्तानन्तरं कुशलं चित्तं सम्मुखीकरोति, तदा येन कुशलेन चित्तेन तत् कुशलं चित्तं फलत्वेन प्रतिगृहीतमनागतम्, तद् ददाति न तत् प्रतिगृह्णाति, पूर्वं प्रतिगृहीतत्वात् । *तृतीया—कुशलचित्तानन्तरं कुशलमि*ति । सम्मुखीकरोतीत्यधिकृतम् । तत्पूर्वकं कुशलं चित्तं द्वितीयं चित्तं फलत्वेन प्रतिगृह्णाति ददाति च; समनन्तरनिर्वर्तनात् । *चतुर्थी—एतानाकारान् स्थापयित्वे*ति । यदा क्लिष्टाव्याकृतचित्तानन्तरं क्लिष्टमव्याकृतं वा चित्तं सम्मुखीकरोतिः, तदासौ सालम्बनः कुशलः सभागहेतुर्न फलं प्रतिगृह्णाति, प्रतिगृहीतत्वात् । न ददाति, क्लिष्टाव्याकृतचित्तसम्मुखीभावात् ।

*एवमकुशलादयोऽपि याच्या* इति । अस्ति सालम्बनोऽकुशलः **सभागहेतुः** फलं प्रतिगृह्णाति न ददातीति चतुःकोटिकः । प्रथमा कोटिः—**अकुशलानन्तरं** कुशलनिवृत्ताव्याकृतं वा चित्तं सम्मुखीकरोति । द्वितीया—**विपर्ययात् ।**

कथं पुनः फल प्रतिगृहीतं भवति, तस्य बीजभावोपगमनात्[1] ?

एकोऽतीतः प्रयच्छति ॥ ५९ ॥

विपाकहेतुरतीत एव फलं प्रयच्छति; यस्मान्न सह वा समनन्तरो वाऽस्ति विपाकः ।

पुनरन्ये चतुर्विधं फलमाहुः । १. प्रतिष्ठाफलम्, यथा—जलमण्डलं वायुमण्डलस्य, यावत् तृणादयः पृथिव्याः । २. प्रयोगफलम्, यथा—अशुभाया यावदनुत्पादज्ञानम् । ३. सामग्रीफलम्, यथा—चक्षुरादीनां चक्षुर्विज्ञानादीनि । ४. भावनाफलम्, यथा—रूपावचरस्य चित्तस्य निर्माणम् ।

एतत्तु सर्वं[2] पुरुषकाराधिपतिफलयोरन्तर्भूतम् ॥ ५९ ॥

उक्ता हेतवः फलानि च ॥

---

तृतीया—अकुशलानन्तरमकुशलमेव । चतुर्थी—एतानाकारान् स्थापयित्वा । आदिशब्देन निवृत्ताव्याकृतोऽनिवृत्ताव्याकृतश्च सभागहेतुर्योज्य. । निवृत्तस्य तावत् प्रथमा कोटिः—निवृत्ताव्याकृतचित्तानन्तरं कुशलमनिवृत्ताव्याकृतं वा चित्तं सम्मुखीकरोति । द्वितीया – विपर्ययात् । तृतीया—निवृत्ताव्याकृतचित्तानन्तरं निवृत्ताव्याकृतमेव । चतुर्थी—एतानाकारान् स्थापयित्वा । अनिवृत्तस्य प्रथमा कोटिः—अनिवृत्ताव्याकृतानन्तरं कुशलं क्लिष्टं वा चित्तं सम्मुखीकरोति । द्वितीया—विपर्ययात् । तृतीया—अनिवृत्ताव्याकृतानन्तरमनिवृत्ताव्याकृतमेव । चतुर्थी—एतानाकारान् स्थापयित्वा ।

*तस्य बीजभावोपगमनादिति* । तस्य फलस्य हेतुभावोपगमनादित्युपमा । *सौत्रान्तिक*प्रक्रियैषा । क्वचित् पुस्तके नास्त्येवम्पाठः ।

*यथा जलमण्डलमिति* विस्तरः । यथेति दृष्टान्तप्रदर्शनम् । जलमण्डलं *वायुमण्डलस्य प्रतिष्ठाफलम्, याव*च्छब्देन जलमण्डलस्य काञ्चनमयी पृथिवी, काञ्चनमय्याः पृथिव्यास्तथा सस्यौषधिप्रभृतयः प्रतिष्ठाफलमित्यधिकारः । *अशुभायाः* स्मृत्युपस्थानान्यारभ्य *यावदनुत्पादज्ञानम्* । एवमन्यस्याप्यानापानस्मृत्यादेः । *प्रयोगस्य* फलं *योज्यम्* । सामग्र्याः फलं *सामग्रीफलम्* । *चक्षुरादीनामिति* । आदिशब्देन चक्षूरूपालोकमनस्काराणां ग्रहणम् । एवं भावनायाः फलं *भावनाफलमिति* समासः । *एतत्तु सर्वमिति* विस्तरः । एतच्चतुर्विधं फलं *पुरुषकाराधिपतिफलयोरन्तर्भूतम्* । प्रयोगफलादि पुरुषकाराधिपतिफलयोः ॥ ५९ ॥

---

१. भावोपगमात्—का० ।　　२. का० पुस्तके नास्ति ।

तत्र कतमे धर्माः कतिभिः हेतुभिरुत्पद्यन्ते ? इत्याह—समासत इमे चतुर्विधा धर्माः, तद्यथा—क्लिष्टा धर्माः, विपाकजाः, प्रथमानास्रवाः, तेभ्यश्च शेषाः।

क पुनः शेषाः ? विपाकवर्ज्याः अव्याकृताः प्रथमानास्रवक्षणवर्ज्याश्च कुशला इति।

त एते चतुर्विधा धर्माः

**क्लिष्टा विपाकजाः शेषाः प्रथमार्या यथाक्रमम्।**

**विपाकं सर्वगं हित्वा तौ सभागं च शेषजाः॥ ६०॥**

**क्लिष्टा** धर्मा **विपाक**हेतुं **हित्वा शेषे**भ्यः पञ्चभ्यो जायन्ते। **विपाकजाः** सर्वत्रगहेतुं **हित्वा शेषे**भ्यः पञ्चभ्य एव। **शेषा** धर्मास्तौ विपाकसर्वत्रगहेतू हित्वा शेषेभ्यश्चतुर्भ्यो जायन्ते।

---

*क्लिष्टा* इति विस्तरः। क्लेशतत्सम्प्रयुक्ततत्समुत्थाः क्लिष्टाः। विपाकहेतुजाता *विपाकजाः*। दुःखे धर्मज्ञानक्षान्तितत्सहभुवः प्रथमानास्रवाः। तेभ्यश्च शेषाः क्लिष्टादिभ्यस्त्रिभ्यः। *विपाकवर्ज्या अव्याकृता* ऐर्यापथिक-शैल्पस्थानिक-नैर्माणिकाः। *प्रथमानास्रवक्षणवर्ज्याश्च कुशला* इति। कुशलग्रहणेन सास्रवानास्रवा गृह्यन्ते। तत्र दुःखे धर्मज्ञानकलापादयः सर्व एव शैक्षाशैक्षमार्गा लौकिकाश्च कुशलाः शेषा इत्यवगन्तव्यम्। शेषाश्चात्र तृतीयो राशिः क्रियते। तेनाह—*त एते चतुर्विधा धर्माः।*

*विपाकम्* इति। विपाकहेतुम्। *क्लिष्टा धर्मा* विपाकहेतुं *हित्वा शेषेभ्यः पञ्चभ्यः* कारणसहभूसभागसम्प्रयुक्तकसर्वत्रगेभ्यो यथासम्भवं *जायन्ते*। स्वभाववर्ज्यात् सर्वधर्मलक्षणात् कारणहेतोः, स्वकलापचित्तादिलक्षणात् सहभूहेतोः, पूर्वोत्पन्नस्वभूमिकक्लिष्टलक्षणात् सभागहेतोः, स्वकलापचित्तलक्षणात् सम्प्रयुक्तकहेतोः। यस्मात् ते चित्तचैत्तस्वभावाः पूर्वोत्पन्नसत्कायदृष्ट्यादिलक्षणात् सर्वत्रगहेतोर्जायन्ते, न तु विपाकहेतोः। विपाकफलेन हि सफलो विपाकहेतुः। न च क्लिष्टा धर्मा विपाकस्वभावा इति ते न ततो जायन्ते। *विपाकजाः सर्वत्रगहेतुं हित्वा शेषेभ्यः पञ्चभ्य एव* हेतुभ्यो जायन्ते, न तु सर्वत्रगहेतोः; विपाकजानामक्लिष्टत्वात्। 'सर्वत्रगाख्यः क्लिष्टानाम्' इति हि सर्वत्रगहेतुलक्षणम्। यद्यपि मिथ्यादृष्ट्यादिभ्यः सर्वत्रगेभ्यो विपाकजा जायन्ते; न तु सर्वत्रगहेतोरिति कृत्वा ततो जायन्ते, किं तर्हि ? विपाकहेतोरिति। *शेषा* इति। विस्तरः—शेषाणामविपाकस्वभावत्वान्न विपाकहेतुरस्ति। अक्लिष्टस्वभावत्वाच्च न सर्वत्रगहेतुरस्ति। अतस्तौ *विपाकसर्वत्रगहेतू वर्जयित्वा शेषेभ्यश्चतुर्भ्यो जायन्ते।*

**प्रथमानास्रवास्तौ च विपाकसर्वत्रगहेतू सभागहेतुं च हित्वा शेषेभ्यः त्रिभ्यो जायन्ते ॥ ६० ॥**

कतमे इमे धर्माश्चतुर्विधा निर्दिष्टाः ? इत्याह --

**चित्तचैत्ताः**

अथ ये चित्तविप्रयुक्ता रूपिणश्च धर्माः, ते कथम् ? इत्याह—

**तथान्येऽपि सम्प्रयुक्तकवर्जिताः ।**

**सम्प्रयुक्तकहेतुनैकेन वर्जिताः अन्येऽपि** क्लिष्टादयो धर्मास्तथैवोत्पद्यन्ते, यथा चित्तचैत्ताः । तत्र क्लिष्टाश्चतुर्भ्यो विपाकजाश्च । शेषास्त्रिभ्यः । प्रथमानास्रवा द्वाभ्याम् । एकहेतुसम्भूतो नास्ति धर्मः ॥

समाप्तो हेतुविस्तरः ॥

प्रत्ययाः कतमे ?

**चत्वारः प्रत्यया उक्ताः**

---

पूर्ववद् व्याख्यानम् । *प्रथमानास्रवास्तौ विपाकसर्वत्रगहेतू* पूर्वोक्तौ । च-शब्देनानुकृष्टौ सभागहेतुं च हित्वा शेषेभ्यः कारणसहभूसम्प्रयुक्तकहेतुभ्यो यथासम्भवं जायन्ते । अनास्रवाणामविपाकस्वभावत्वान्न विपाकहेतुरस्ति । अक्लिष्टत्वान्न सर्वत्रगहेतुः । मार्गस्य पूर्वमनुत्पादितत्वाच्च सभागहेतुरस्ति । न हि सास्रवा अग्रधर्मा अनास्रवस्य कलापस्य सभागहेतुर्युज्यते । तस्मान्न तेभ्यो जायन्ते ॥६०॥

"*चित्तचैत्ताः*" इति । सम्प्रयुक्तकहेतुसम्भवार्थं चित्तचैत्तग्रहणम् । प्राप्तिजात्यादयश्च चित्तविप्रयुक्ताः । अनास्रवसंवरश्च रूपिस्वभावोऽनास्रवेषु वेदितव्यः । ते चित्तविप्रयुक्ता रूपिणश्च चित्तचैत्तेभ्योऽन्ये *क्लिष्टादयः* क्लिष्टविपाकजशेषप्रथमानास्रवसंगृहीतास्*तथैवोत्पद्यन्ते यथा चित्तचैत्ताः* । केवलं तु *सम्प्रयुक्तकहेतुनैकेन वर्जिताः* । तेषामसम्प्रयुक्तकस्वभावत्वान्न सम्प्रयुक्तकहेतोर्जायन्ते । कथमिति ? क्लिष्टाश्चित्तविप्रयुक्तरूपिणो विपाकसम्प्रयुक्तकहेतू हित्वा *शेषेभ्यश्चतुर्भ्यो हेतुभ्यो* जायन्ते । *विपाकजा अपि* सम्प्रयुक्तकसर्वत्रगहेतू हित्वा शेषेभ्यश्चतुर्भ्य एव । शेषा विपाकसर्वत्रगसम्प्रयुक्तकहेतून् हित्वा *शेषेभ्यस्त्रिभ्यः* । *प्रथमानास्रवा* विपाकसर्वत्रगहेतू सभागहेतुं च सम्प्रयुक्तकहेतुं च हित्वा शेषाभ्यां *हेतुभ्यां जायन्त इति । एकहेतुसम्भूतो नास्तीति* । कारणसहभूहेत्वोरवश्यमविनाभावात् ।

"जन्यस्य जनिका जातिर्न हेतुप्रत्ययैर्विना" ( अभि० को० २.४७ )

कोक्ताः ? सूत्रे । "चतस्रः प्रत्ययताः । हेतुप्रत्ययता, समनन्तरप्रत्ययता, आलम्बनप्रत्ययता, अधिपतिप्रत्ययता च" ( ) इति । प्रत्ययजातिः प्रत्ययता । तत्र—

**हेत्वाख्याः पञ्च हेतवः ॥ ६१ ॥**

कारणहेतुवर्ज्याः **पञ्च हेतवो** हेतुप्रत्ययः ।

**चित्तचैत्ता अचरमा उत्पन्नाः समनन्तरः ।**

अर्हतः पश्चिमानपास्योत्पन्ना**श्चित्तचैत्ताः समनन्तर**प्रत्ययः ।

समश्चायमनन्तरश्च प्रत्यय इति समनन्तरप्रत्ययः ।

अत एव रूपं न समनन्तरप्रत्ययः; विषमोत्पत्तेः । तथा हि—कामावचरस्य रूपस्यानन्तरं कदाचित् कामावचरं रूपावचरं चाविज्ञप्तिरूपमुत्पद्यते, कदाचित् कामावचरं चानास्रवं चेति आकुलो[1] रूपसम्मुखीभावः ।

अव्याकुलस्तु समनन्तरप्रत्ययः अनिरुद्ध एव; एकस्मिन्नौपचयिकरूपसन्ताने द्वितीयोत्पत्तेरिति **भदन्तवसुमित्रः** ।

---

इत्युक्तम् । अतो हेतुविस्तरवचनानन्तरं पृच्छति—*प्रत्ययाः कतमे* इति ।

*प्रत्ययजातिः प्रत्ययतेति* । प्रत्ययप्रकार इत्यर्थः । गोतावत् ॥ ६१ ॥

*"चित्तचैत्ताः"* इति विस्तरः । चित्तचैत्ता एव समनन्तर इत्यवधारणम् । अचरमग्रहणं सोत्तराणां समनन्तरत्वात् । उत्पन्नग्रहणमनागतनिरासार्थम् । *समश्चायमनन्तरश्च प्रत्यय इति समनन्तरप्रत्यय* इति । समानार्थे सम्-शब्दः । *कामावचरस्य रूपस्येति* । अविज्ञप्तिरूपस्य कदाचित् *कामावचरमविज्ञप्तिरूपं रूपावचरं चाविज्ञप्तिरूपमुत्पद्यते* सास्रवध्यानसम्मुखीभावे गृहीतसंवरस्य । *कदाचित् कामावचरं चानास्रवं* चानास्रवध्यानसम्मुखीभावे । न तु कामावचर-चित्तानन्तरं कदाचित् कामावचरं रूपावचरं च युगपच्चित्तमुत्पद्यते । कामावचरं चानास्रवं *चेत्याकुलो रूपसम्मुखीभावः* ।

*द्वितीयोत्पत्तेरिति* । द्वितीयौपचयिकोत्पत्तेः । यदा हि भुक्त्वा स्वपिति ध्यानं वा समापद्यते तदाहारज औपचयिकः स्वप्नजश्च समाधिजो वा औपचयिक उत्पद्यते ।

---

१. व्याकुलो—का० ।

अल्पबहुतरोत्पत्तेरिति **भदन्तः**। कदाचिद्धि महतो रूपादल्पमुत्पद्यते, तद्यथा—पलालराशेर्भस्म। कदाचिदल्पाद् बहूत्पद्यते, तद्यथा—वटनिकायाः क्रमेण, यावदनेकशाखावरोहो न्यग्रोध इति।

ननु चास्ति चैत्तानामप्यल्पबहुतरोत्पत्तिः, कुशलाकुशलाव्याकृतेषु चित्तेषु सवितर्कसविचारादौ च समाधित्रये ?

अस्ति जात्यन्तरं प्रति, न स्वजातिम्। न कदाचिद् बहुतरा वेदनोत्पद्यते, संज्ञादयो वा।

किं पुनः स्वजातेरेव समनन्तरप्रत्ययो भवति ? नैतदस्ति; सकल एव कलापः सकलस्य कलापान्तरस्य समनन्तरप्रत्ययः, न त्वल्पकाद् वेदनादिद्रव्यात् प्रभूतं वेदनादि द्रव्यमुत्पद्यत इत्येतावदेवात्रोक्तम्।

---

*अल्पबहुतरोत्पत्तेरिति*। किम् ? रूपं न समनन्तरप्रत्यय इति प्रकृतम्। *भदन्तः* स्थविरः सौत्रान्तिकः। *कुशलाकुशलाव्याकृतेषु चित्तेष्विति*।

सवितर्कविचारित्वात् कुशले कामचेतसि।
द्वाविंशतिश्चैतसिकाः कौकृत्यमधिकं क्वचित्॥
आवेणिके त्वकुशले दृष्टियुक्ते च विंशतिः।
क्लेशैश्चतुर्भिः क्रोधाद्यैः कौकृत्येनैकविंशतिः॥
निवृत्तेऽष्टादशान्यत्र द्वादशाव्याकृते मताः।"

( अभि० को० २. २९–३१ )

वाल्पे चैत्ता उत्पद्यन्ते, कदाचिदल्पाद् बहवो विपर्ययात्। *सवितर्कसविचारादौ च समाधित्रये*। अस्ति सवितर्कः सविचारः समाधिः, अस्त्यवितर्को विचारमात्रः, अस्त्यवितर्कोऽविचार इति - एतस्मिन् समाधित्रये चैत्तानामल्पबहुतरोत्पत्तिः। अतश्च चित्तचैत्ता अपि न समनन्तरप्रत्ययाः स्युरिति।

*अस्ति जात्यन्तरं प्रति न स्वजातिमिति*। अस्त्यल्पबहुतरोत्पत्तिर्जात्यन्तरं प्रति न स्वजातिम्। वितर्कविचारादीनां हि क्वचिच्चित्ते जात्यन्तरभूतानां सतां वृत्तिरवृत्तिश्च भवति। *न कदाचित् बहुतरा वेदनेति*। नहि कदाचिद्वेदनैकस्मिश्चित्ते एका, क्वचिदपरस्मिन् द्वे तिस्रो वेति। रूपस्य तु स्वजातिं प्रत्यल्पबहुतरोत्पत्तिः;

*किं पुनः स्वजातेरेवेति*। किं वेदना वेदनाया एव समनन्तरप्रत्ययः। अनेकवेदनोत्पत्तावसामर्थ्यात्। *एवं संज्ञादयः*। न परजातेः, न वेदना संज्ञादीनाम्, यतश्चैत्तानामल्पबहुतरोत्पत्तिर्न परिगृहीता भवेत्।

**सान्तानसभागिकास्तु**[1] मन्यन्ते—"स्वजातेरेव समनन्तरप्रत्ययः। तद्यथा—चित्तं चित्तस्यैव, वेदना वेदनाया एव" इति। विस्तरः—यदा त्वक्लिष्टान्तरं क्लिष्टमुत्पद्यते, तस्य क्लेशस्य पूर्वनिरुद्धक्लेशः[2] समनन्तरप्रत्ययः, तद्यथा निरोधसमापत्तिचित्तं व्युत्थानचित्तस्येति।

तदेतन्न वर्त्यते ; प्रथमानास्रवचित्तानुत्पत्तिप्रसङ्गात् चित्तविप्रयुक्ता अपि संस्काराः।

अत एव व्याकुलसम्मुखीभावान्न समनन्तरप्रत्ययः; त्रैधातुकाप्रतिसंयुक्तानां युगपत् सम्मुखीभावात्।

कस्मादनागतो नेष्यते समनन्तरप्रत्ययः ? व्याकुलत्वादनागतस्याध्वनः पूर्वोत्तराऽभावात्[3]।

कथं तर्हि भगवान् जानाति 'अमुष्यानागतस्यानन्तरमिदमनागतं भावि' इति ? अतीतसाम्प्रतानुमानात्। अतीतं किलाध्वानं पश्यति भगवान् — 'एवञ्जातीयकात् कर्मणः एवञ्जातीयको विपाकः उत्पन्नः, धर्माद्वा धर्मः'। 'इदं चापि सम्प्रत्येवञ्जातीयकं कर्म, तस्मात्ततोऽप्येवञ्जातीयको विपाक उत्पत्स्यते धर्माद्वा धर्मः' इति जानाति।

न चान्यत् ज्ञानमानुमानिकं भवति; यस्मादतीतसाम्प्रतानुमानेन भगवान् विकीर्णान्यनागतानि द्रव्याणि प्रत्यक्षमीक्षित्वा जानाति—'अनेन पुद्गलेनैवंविधं कर्म कुर्वतेदमनागतं फलं परिगृहीतम्' इति।

एवं तर्हि भगवान् पूर्वान्तमदृष्ट्वा अपरान्तं न जानीयात्।

अन्ये पुनराहुः—फलचिह्नभूतः सत्त्वानां सन्ततौ चित्तविप्रयुक्तः संस्कारविशेषोऽस्ति, यं व्यवलोक्य भगवाननागतं जानात्यसम्मुखीकृत्वापि ध्यानमभिज्ञां चेति।

नैमित्तिको हि नाम भगवान् स्यादेवं सति, न पुनः साक्षात्कारी। तस्मात् सर्वमिच्छामात्रेण भगवान् जानातीति सान्तानिकाः। "अचिन्त्यो हि बुद्धानां बुद्धिविषयः" इत्युक्तं भगवता।

अथ असत्यनागतस्य कर्मनियमावस्थाने कस्मादग्रधर्मानन्तरं दुःखे धर्मज्ञान-

---

मानादतीत इति शक्यते वक्तुम्; पूर्वोत्तरकालयोगात्। न त्वनागतस्य पूर्वपश्चिमतास्ति। अत एव च वर्तमानो वर्तमानस्य न समनन्तरप्रत्यय इष्यते; पूर्वपश्चिमताया अभावात्, तुल्यकालत्वात्।

*अतीतसाम्प्रतानुमाना*दिति। अतीतेन च साम्प्रतेन चानुमानात्। अतीतेनानुमानमिति दर्शयन्नाह—*अतीतं किलाध्वानं* पश्यतीति विस्तरः।

साम्प्रतेनानुमानमिति दर्शयन्नाह—*इदं चापि सम्प्रत्येवञ्जातीयक*मिति विस्तरः। *अपरान्तं न जानीया*दिति। सर्वविदत्वमस्य हीयेतेत्यभिप्रायः।

*फलचिह्नभूतः*, फललिङ्गभूतः। *न साक्षात्कारी*, न साक्षाद्दर्शी।

अनागतो नेष्यते समनन्तरप्रत्ययो व्याकुलत्वात् पूर्वपश्चिमताया अभावात् इत्युक्तेऽयमाह— *कस्मादग्रधर्मानन्तर*मिति विस्तरः।

क्षान्तिरेवोत्पद्यते, नान्यो धर्मः, एवं यावद् वज्रोपमानन्तरं क्षयज्ञानमेवोत्पद्यते, नान्यो धर्म इति ?

यस्य यत्प्रतिबद्ध उत्पादः स तस्यानन्तरमुत्पद्यते, तद्यथा-- बीजादीनामङ्कुरादयो विनापि समनन्तरप्रत्ययेनेति ।

कस्मादर्हतश्चरमाश्चित्तचैत्ता न समनन्तरप्रत्ययः ? अन्यचित्तासम्बन्धात्[1] ।

ननु चैवं समनन्तरनिरुद्धं चित्तं मनो भवतीत्यनन्तरविज्ञानाभावात् मनोऽपि चरमं चित्तं न प्राप्नोति ?

आश्रयभावप्रतिभावितं मनो न कारित्रप्रभावितमित्यस्त्येवाश्रयभावः । कारणान्तरवैकल्यात् तु विज्ञानान्तरं नोत्पद्यत इति । कारित्रप्रभावितस्तु समनन्तरप्रत्ययः, तेन यो धर्मः फलं प्रतिगृहीतः स सर्वैरपि धर्मैः सर्वप्राणिभिर्वा न शक्यः[2]

---

तस्य *वैभाषिकः* परिहारमाह—यस्य *यत्प्रतिबद्ध उत्पाद* इति विस्तरः । यस्य धर्मस्य दुःखे धर्मज्ञानक्षान्त्यादेर्यस्मिन् धर्मे लौकिकाग्रधर्मादौ प्रतिबद्ध उत्पादः, *स तस्यानन्तरमुत्पद्यते । तद्यथा बीजादीनामङ्कुरादयः ।* अङ्कुरस्य हि बीजे प्रतिबद्ध उत्पादः, तस्मात् तदनन्तरमुत्पद्यते । एवं काण्डादीनामङ्कुरादिषु । *विनापि समनन्तरप्रत्ययेन ।* असत्यपि समनन्तरप्रत्यये । अपिशब्दात् सति समनन्तरप्रत्यये सुतरामुत्पद्यत इत्यभिप्रायः । तस्मान्नास्ति च क्रमनियमावस्थानम् । तद्वत् समनन्तरोत्पत्तिनियमश्च भवतीति वाक्यार्थः ।

"*कस्मादर्हतश्चरमाः*" इति । "अचरमाः" इति वचनादयं प्रश्न आगतः । *अन्यचित्तासम्बन्धादिति ।* यस्मात् तदनन्तरमन्यचित्तं न सम्बध्नन्ति ।

*आश्रयभावप्रभावितं मन* इति । यथा चक्षुरुत्पन्नं चक्षुर्विज्ञानाश्रयभावेनावस्थितम्, यदि कारणान्तरवैकल्याच्चक्षुर्विज्ञानं नोत्पद्यते न तत्र चक्षुरपराध्यते । एवमर्हतोऽपि चरमं चित्तमाश्रयभावेनास्थितम् । कारणान्तरवैकल्यात्तु विज्ञानान्तरं नोत्पद्यत इति न तदपराध्यते । *तद्धि न कारित्रप्रभावितम् ।* न जननपुरुषकारप्रभावितमित्यर्थः । यदि हि तज्जनप्रभावितं स्यात्, जायमान एव सति कार्ये तन्मनः स्यात् । न चैवम्, अतोऽसत्यपि जन्ये तन्मनो भवत्येव । *कारित्रप्रभावितस्तु समनन्तरप्रत्ययः ।* सत्येव जन्ये समनन्तरप्रत्ययो भवति, नासति । *तेन यो धर्मः फलं प्रतिगृहीतः ।* तेन समनन्तरप्रत्ययेन यो धर्मः फलं प्रतिगृहीतो जायतामेतदिति, *स सर्वैरपि धर्मैर्बुद्धिमद्भिः सर्वप्राणिभिर्वा* सञ्चिन्त्यकारिभिर्न

---

१. ०संबन्धनात्—का० । २. शक्यं—का० ।

प्रतिबन्धुम्, यथा नोत्पद्येत[1]।

ये धर्माश्चित्तसमनन्तराः, चित्तनिरन्तरा अपि ते ? चतुष्कोटिकः। प्रथमा कोटिः—अचित्तकायाः समापत्तिव्युत्थानचित्तं[2] द्वितीयादयश्च समापत्तिक्षणाः। द्वितीया[3]—प्रथमस्य समापत्तिक्षणस्य सचित्तकावस्थायां[4] च[4] जात्यादयः। तृतीया कोटिः—प्रथमः समापत्तिक्षणः सचित्तिका अवस्था[5]। चतुर्थी[6]—द्वितीयादीनां समापत्तिक्षणानां व्युत्थानचित्तस्य च जात्यादयः[7]।

---

*शक्यः प्रतिबन्धुं यथा नोत्पद्येत।* मोत्पादीति।

*ये धर्माश्चित्तसमनन्तरा* इति विस्तरः। समनन्तरप्रत्ययचित्तजनिताश्चित्तसमनन्तराः। चित्तस्य समाश्च तेऽनन्तराश्च ते इति चित्तसमनन्तराः। अथ वा चित्तं समनन्तरं समनन्तरप्रत्यय एषामिति चित्तसमनन्तराः। क्षणान्तराव्यवहितास्तु *चित्तनिरन्तराः।* ते पुनश्चित्तसमनन्तराश्चित्तचैत्ता द्वे च समापत्ती असंज्ञि-निरोधसमापत्ती। नासंज्ञिकं चित्तसमनन्त॰ शास्त्रे पठितम्; कर्मसामर्थ्योत्पत्तेः। *प्रथमा कोटिरिति* विस्तरः। *समापत्तिव्युत्थानचित्तं* समापत्तिप्रवेशचित्तजनितम्। अतश्चित्तसमनन्तरं न चित्तनिरन्तरम्; समापत्तिक्षणव्यवहितत्वात्। *द्वितीयादयश्च* समापत्तिक्षणाः, प्रथमक्षणवर्ज्या इत्यर्थः। चित्तसमनन्तराः, तत्प्रत्ययजनितत्वात्। न चित्तनिरन्तराः, यथायोगं प्रथमादिक्षणव्यवहितत्वात्। *द्वितीया—प्रथमस्य समापत्तिक्षणस्य* जात्यादयश्चित्तनिरन्तराः, क्षणान्तराव्यवहितत्वात्। न तु चित्तसमनन्तराः, अचित्तसमनन्तरस्वभावत्वात्। चित्तचैत्ता एव हि सह समापत्तिद्वयेन चित्तसमनन्तरा इष्टाः। *सचित्तिकावस्थायाश्च जात्यादयः।* तेषामविशेषितत्वात् सर्वेषां चित्तचैत्तादीनां जात्यादयः। आदिग्रहेण च सर्व एव विप्रयुक्ता गृह्यन्ते समापत्तिद्वयं वर्जयित्वा। ते च तथैव चित्तनिरन्तरा न चित्तसमनन्तराः। पूर्ववद् व्याख्यानम्। *सचित्तिकावस्थेति।* यदा चित्ताच्चित्तान्तरमुत्पद्यते तदा पश्चिमाश्चित्तचैत्ताः पूर्वकेण चित्तेन चित्तसमनन्तराश्चित्तनिरन्तराश्च भवन्ति। *चतुर्थी—द्वितीयादीनां समापत्तिक्षणानां व्युत्थानचित्तस्य च जात्यादयः।* न चित्तसमनन्तराः, अचित्तसमनन्तरस्वभावत्वात्। न चित्तनिरन्तराः, प्रथमादिसमापत्तिक्षणव्यवहितत्वात्।

---

१. नोत्पद्यते—का०।
२. समापत्तेर्व्युत्थान—का०।
३. ०कोटिः—का०।
४-४. सचित्तिकायाश्चावस्थायाः—का०।
५. चावस्था—का०।
६. कोटिः—का०।
७. का० पुस्तके नास्ति

ये धर्माश्चित्तसमनन्तराः समापत्तिनिरन्तरा अपि ते ? चतुष्कोटिकः । ये तृतीयाचतुर्थ्यौ ते प्रथमाद्वितीये, ये प्रथमाद्वितीये ते तृतीयाचतुर्थ्यौ कर्त्तव्ये ।

कथमिदानीं दूरान्तरविच्छिन्नं व्युत्थानचित्तं समापत्तिचित्तस्य समनन्तरमित्युच्यते ? चित्तान्तराव्यवहितत्वात् ॥

उक्तः समनन्तरप्रत्ययः ॥

**आलम्बनं सर्वधर्माः**

यथायोगं चक्षुर्विज्ञानस्य ससम्प्रयोगस्य रूपम्, श्रोत्रविज्ञानस्य शब्दः, घ्राणविज्ञानस्य गन्धः, जिह्वाविज्ञानस्य रसः, कायविज्ञानस्य स्प्रष्टव्यम्, मनोविज्ञानस्य **सर्वधर्माः** ।

यो धर्मो यस्य धर्मस्यालम्बनं न कदाचित् स धर्मस्तद्धर्मस्य नालम्बनम्; अनालम्ब्यमानोऽपि तथालक्षणत्वात् । यथा—अनिध्यमानमपीन्धनमुच्यते काष्ठादिकम्, तथालक्षणत्वादिति ।

त एते चित्तचैत्ता धर्मा आयतनद्रव्यक्षणनियमेनालम्बने यथास्वं नियताः ।

---

*ये तृतीयचतुर्थ्यौ ते प्रथमद्वितीये* इति विस्तरः । प्रथमा कोटिः—प्रथमसमापत्तिक्षणः सचित्तिका चावस्था । ते हि चित्तसमनन्तराः समनन्तरप्रत्ययजनितत्वात्; न समापत्तिनिरन्तराः; प्रथमसमापत्तिक्षणस्य पूर्वसमापत्तिक्षणाभावेन न तन्निरन्तराभावात्, सचित्तिकावस्थायाश्च समापत्त्यभावात् । द्वितीया—द्वितीयादीनां समापत्तिक्षणानां जात्यादयो व्युत्थानचित्तस्य च, इमे धर्माः समापत्तिनिरन्तरा न चित्तसमनन्तराः । तृतीया—अचित्तिकायाः समापत्तेर्व्युत्थानचित्तं द्वितीयादयश्च समापत्तिक्षणाः, एते चित्तसमनन्तराः समापत्तिनिरन्तराश्च । चतुर्थी—प्रथमस्य समापत्तिक्षणस्य सचित्तिकायां चावस्थायां जात्यादयः, इमे धर्मा न चित्तसमनन्तरा न समापत्तिनिरन्तरा अचित्तसमनन्तरस्वभावत्वात्, पूर्वसमापत्तिक्षणाभावाच्च ।

*ससम्प्रयोगस्य* सचैतसिकस्य । *तथालक्षणत्वादिति* । आलम्ब्यलक्षणत्वात् । *आयतनद्रव्यक्षणनियमेनेति* । आयतनञ्च द्रव्यञ्च क्षणश्च तेषां नियमः, तेनैव । *ते चित्तचैत्ताः स्वस्मिन् स्वस्मिन्नालम्बने नियताः* । यथा तावच्चक्षुर्विज्ञानं ससम्प्रयोगं रूपायतने आलम्बने नियतम्, न शब्दायतनादौ । एवमायतननियमेन । तत्राप्यायतने द्रव्यनियमेन नीलरूपे नीलरूपकग्राहकमेव चक्षुर्विज्ञानं ससम्प्रयोगं नियतम्, नान्यत्र पीतादौ । एवं द्रव्यनियमेन । तत्रापि नीलरूपे

किमाश्रयनियमेनापि नियताः ? ओमित्याह। उत्पन्नास्त्वाश्रयसहिताः, अनुत्पन्ना ह्यतीता आश्रयविश्लिष्टाः।

अतीता अप्याश्रयसहिता इत्यपरे ॥

उक्त आलम्बनप्रत्ययः ॥

**कारणाख्योऽधिपः स्मृतः ॥ ६२ ॥**

य एव कारणहेतुः स एवाधिपतिप्रत्ययः। अधिकोऽयं प्रत्यय इत्यधिपतिप्रत्ययः।

आलम्बनप्रत्ययोऽपि सर्वधर्माः अधिपतिप्रत्ययोऽपीति किमस्याधिक्यम् ? न जातु सहभुवो धर्मा आलम्बनं भवन्ति; भवन्ति त्वधिपतिप्रत्यय इत्यस्यैवाधिक्यम्।

अधिकस्य वा प्रत्ययः। सर्वः सर्वस्य संस्कृतस्य स्वभाववर्ज्यस्य। स्याद्धर्मो धर्मस्य चतुर्भिरपि प्रत्ययैर्न प्रत्ययः। स्यात् स्वभावः स्वभावस्य परभावोऽपि। स्यात् संस्कृतमसंस्कृतस्य असंस्कृतं चासंस्कृतस्य।

अथैते प्रत्ययाः कारित्रं कुर्वन्तः किमवस्थे धर्मे कुर्वन्ति ? हेतुप्रत्ययस्तावत् उक्तः। तत्र—

---

आलम्बने यो नीलरूपक्षणो यस्यालम्बनं स तस्यैव, नान्यस्येति एवं क्षणनियमेन। एवं शब्दायतनादिष्वपि श्रोत्रादिविज्ञानं ससम्प्रयोगं योज्यम्।

*किमाश्रयनियमेनापीति*। किं चक्षुराद्याश्रयनियमेनाप्येते चित्तचैत्ता नियताः ? *ओमित्याह*। एवमित्यर्थः।

*आलम्बनप्रत्ययोऽपि सर्वधर्मा* इति मनोविज्ञानापेक्षया। *अधिकोऽयं प्रत्यय इत्यधिपतिप्रत्यय* इति। हेतुप्रत्ययादिभ्यः। हेतुप्रत्ययो हि परं पञ्च हेतवः। *आलम्बनप्रत्ययो हि सहभुवां न सम्भवतीति* नाधिकः। *अधिकस्य वा प्रत्यय* इति। पूर्वम्—अधिकः पतिरधिपतिः, स प्रत्यय इति समासः। इदानीम्—अधिकस्य भूयसः पतिरधिपतिः, स प्रत्यय इत्यधिपतिप्रत्यय इति समासः।

कथम् ? इत्याह—*सर्व इति* विस्तरः। *सर्वः* संस्कृतासंस्कृतः *सर्वस्य संस्कृतस्य स्वभाववर्ज्यश्च* सालम्बनस्यानालम्बनस्य च प्रत्ययोऽधिपतिप्रत्ययः। आलम्बनप्रत्ययस्तु सालम्बनस्यैव, नानालम्बनस्य। प्रथमे विग्रहे प्रत्ययस्याधिक्यं दर्शितम् द्वितीये प्रत्ययवतः ॥ ६२ ॥

**निरुध्यमाने कारित्रं द्वौ हेतू कुरुतः**

निरुध्यमानं नाम वर्त्तमानम्, निरोधाभिमुखत्वात्। तत्र सहभूसम्प्रयुक्तक-हेतू कारित्रं कुरुतः। सहोत्पन्नेऽपि फले तयोर्व्यापारः।

**त्रयः।**

**जायमाने**

जायमानं नाम अनागतमुत्पादाभिमुखम्। तत्र सभागसर्वत्रगविपाकहेतवः कारित्रं कुर्वन्ति।

एवं तावद् हेतुप्रत्ययः।

**ततोऽन्यौ तु प्रत्ययौ तद्विपर्ययात्॥ ६३॥**

येन कारित्रन्यायेन हेतुप्रत्ययो[1] द्विधा कृत्वोक्तः, **तद्विपर्ययात्** समनन्तर-प्रत्ययालम्बनप्रत्ययौ वेदितव्यौ।

समनन्तरप्रत्ययो जायमाने कारित्रं करोति; अवकाशदानात्। आलम्बन-प्रत्ययौ निरध्यमाने; वर्त्तमानैश्चित्तचैत्तैर्ग्रहणात्। अधिपतिप्रत्ययस्तु सर्वस्यामव-स्थायामनावरणभावेनावस्थित इत्येतदेवास्य कारित्रम्॥

उक्ताः सकारित्राः प्रत्ययाः॥

---

"*निरुध्यमाने कारित्रम्*" इति। निरुध्यमान एवेत्यवधारणम्, मिथः फलत्वात् समाश्रयत्वाच्च [illegible]हेत्वोर्यथाक्रमम्।

"*त्रयो जायमाने*" इति जायमान एवेत्यवधारणम्।

"*ततोऽन्यौ तु प्रत्ययौ तद्विपर्ययात्*" इति। समनन्तरप्रत्ययः पूर्वोक्तस्तं पश्चादुक्तं कारित्रकालनियममाश्रयते। जायमाने कारित्रं करोतीत्यर्थः। पश्चादुक्त आलम्बनप्रत्ययः पूर्वोक्तं कारित्रकालनियममाश्रयते। निरुध्यमाने कारित्रं करोतीत्यर्थः। एवं तौ विपर्ययात् कारित्रं कुरुतः।

तेनाह—*समनन्तरप्रत्ययो जायमाने कारित्रं करोत्यवकाशदानात्, आलम्बन-प्रत्ययो निरुध्यमाने वर्त्तमानैश्चित्तचैत्तैर्वर्तमानग्रहणादिति*। ग्रहणार्थेन ह्यालम्बन-प्रत्ययो व्यवस्थाप्यते। न चातीतानागतैश्चित्तचैत्ता ग्राह्यमर्थं गृह्णन्तीति।

*एतदेवास्य कारित्रमिति*। यदनावरणभावेन सर्वस्यामवस्थायामवस्थानम्, एतदेवास्याधिपतिप्रत्ययस्य कारित्रमिति सुगमत्वान्नाधिपतिप्रत्ययस्य कारित्र-कालनियमः सूचित इत्यभिप्रायः॥ ६३॥

---

१ ०प्रत्ययौ—का०।

अथ कतमो धर्मः कतिभिः प्रत्ययैरुत्पद्यते ?

**चतुर्भिश्चित्तचैत्ता हि**

तत्र हेतुप्रत्ययः—एषां सर्वे पञ्च हेतवः; समनन्तरप्रत्ययः—पूर्वकाश्चित्त-चैत्ता अन्यैरव्यवहिताः; आलम्बनप्रत्ययः—यथायोगं पञ्च विषयाः सर्वे धर्माश्च; अधिपतिप्रत्ययः—स्वभाववर्ज्याः सर्वधर्माः ।

**समापत्तिद्वयं त्रिभिः ।**

निरोधासंज्ञिसमापत्त्योरालम्बनप्रत्ययो नास्ति । न हि ते आलम्बिके ।

हेतुप्रत्ययस्तु तयोर्द्विविधो हेतुः—सहभूहेतुश्च जात्यादयः, सभागहेतुश्च पूर्वोत्पन्नाः समानभूमिकाः कुशला धर्माः । समनन्तरप्रत्ययः ससम्प्रयोगं समापत्तिचित्तम् । अधिपतिप्रत्ययः पूर्ववत् ।

चित्ताभिसंस्कारजत्वादेते समापत्ती चित्तसमनन्तरे । चित्तोत्पत्तिविबन्धनात् न समनन्तरप्रत्ययः ।

**द्वाभ्यामन्ये तु जायन्ते**

अन्ये तु विप्रयुक्ता रूपिणश्च धर्मा हेत्वधिपतिप्रत्ययभ्यां **जायन्ते** यथाविहितमेव ।

**आह** तु—"प्रत्ययेभ्यो भावा उपजायन्ते, न पुनः सर्वस्यैव जगतः ईश्वरपुरुषप्रधानादिकं कारणम्" (            ) इति ।

---

*द्विविधो हेतुरिति* ।

*भूमिकाः कुशला धर्मा* इति । निरोधसमापत्तेर्भावाग्रिकाः कुशला धर्मा सभागहेतुर्हेतुप्रत्ययः । असंज्ञिसमापत्तेरपि चतुर्थध्यानभूमिकाः । येषां बलेन ते समापत्ती भवतः । *समनन्तरप्रत्ययः ससम्प्रयोगं समापत्तिचित्तमि*ति । सर्वेषां निरोधसमापत्तिक्षणानामसंज्ञिसमापत्तिक्षणानां च चित्तान्तरेणाव्यवधानात् । *पूर्ववदि*ति । स्वभावर्ज्याः सर्वधर्माः ।

*चित्ताभिसंस्कारजत्वादि*ति । चित्ताभोगजत्वादित्यर्थः । *चित्तोत्पत्तिविबन्धनान्न समनन्तरप्रत्यय* इति । समनन्तरप्रत्ययस्य चित्तोत्पत्तिहेतुत्वात् ।

*"द्वाभ्यामन्ये तु"* इति । तुशब्दोऽवधारणे, भिन्नक्रमश्च । *द्वाभ्या*मेव हेत्वधिपतिप्रत्ययायाभ्यामन्ये वै चित्तचैत्तसमापत्तिद्वयविनिर्मुक्ता *धर्मा* जायन्ते ।

*ईश्वरपुरुषप्रधानादिकमि*ति । आदिशब्देन कालस्वभावपरमाण्वादि गृह्यते ।

कोऽत्र हेतुः ? यदि खलु हेतुकृतां सिद्धिं मन्यसे ।

ननु च अत एवास्य वादस्य व्युदासः प्राप्नोति—एकं कारणमीश्वरादिकं सर्वस्येति । अपि च—

**नेश्वरादेः क्रमादिभिः ॥ ६४ ॥**

यदि ह्येकमेव कारणमीश्वरः स्यादन्यद्वा, युगपत् सर्वेण जगता भवितव्यं स्यात् । दृश्यते च भावानां क्रमसम्भवः ।

स तर्हि च्छन्दवशादीश्वरस्य स्याद्—'अयमिदानीमुत्पद्यतामयं निरुध्यतामयं पश्चाद्' इति ? छन्दभेदात् तर्हि सिद्धमनेकं कारणं स्यात् ।

स चापि छन्दभेदो युगपत् स्यात्; तद्धेतोरीश्वरस्याभिन्नत्वात् । कारणान्तर-

---

*ननु चात एवेति* । यदि वेश्वर *एकं कारणं* पुरुष इति वात्र पक्षे को हेतुरिति हेतुर्मृग्यते । ईश्वरव्यतिरिक्तं हेतुं कृत्वा तत्सिद्धेरित्यभ्युपगतं भवति । तदभ्युपगमाच्चैकमीश्वरः पुरुष इति वा कारणं *सर्वस्य जगत* इत्यस्य *वादस्य व्युदासः* परित्यागः *प्राप्नोती*ति पिण्डेन वाक्यार्थः ।

"*नेश्वरादेः क्रमादिभिः*" इति । नेश्वरादेर्भावा जायन्ते । कस्मात् ? *क्रमादिभिः* । आदिग्रहणेन देशकालादीनां ग्रहणम् । अथ वा—अनेककारणत्वानवस्थाप्रसङ्गादन्यानुरूपकारणनिह्नवादीनां ग्रहणम् ।

*यदि ह्येकमेवेति* विस्तरः । यदि ह्येकमेव *कारणमीश्वरः स्यात्* महादेवो वा वासुदेवो वा *अन्यद्वा* पुरुषादि वेत्यर्थः । *युगपत् सर्वेण जगता भवितव्यं* कारणस्य तद्भावात् । न ह्यविकले कारणे कार्यं न भवतीति । *दृश्यते च भावानां* काल्पादीनामङ्कुरादीनां च *क्रमसम्भवः* । तस्मात् स्वकारणपरम्परानिर्वृत्त इति नेश्वरादि कारणमिति गम्यते । ईश्वराद्येककारणं जगदिति हि प्रतिजानानस्य स्वकारणक्रमोत्पादिनाविलक्षणेन धर्मविशेषेण तस्य सापक्षालत्वं पक्षस्योपलक्ष्यते ।

*स तर्हि छन्दवशादिति* । स क्रमभेद इच्छावशादीश्वरस्य स्यात् । कथम् ? इत्याह—*अयमिदानीं* भावः *उत्पद्यतां* यावदयं *पश्चादुत्पद्यता*मिति । एवं क्रमसम्भवश्च भावानामीश्वरश्च कारणमिति ईश्वरकारणिकाभिप्रायः । *छन्दभेदादिति* । विस्तरः—ईश्वरच्छन्दभेदादनेककारणत्वाभ्युपगमात्, प्राक्पक्षविरोधात् धर्मस्वरूपविपर्ययः पक्षस्योत्पद्यते ।

*स चापी*ति विस्तरः । स चापि *छन्दभेदो युगपत् स्यात् तद्धेतो*श्छन्दभेदहेतो*रीश्वरस्याभिन्नत्वादे*कत्वादित्यर्थः । ततश्चैव स पूर्वोक्तो दोषो युगपत् स्यादिति ।

भेदापेक्षणे च नेश्वर एव कारणं स्यात्। तेषामपि च क्रमोत्पत्तौ कारणान्तरभेदापेक्षणादनवस्थाप्रसङ्गः स्यादित्यनन्तरभेदायाः कारणपरम्पराया अनादित्वाभ्युपगमादयमीश्वरकारणाधिमुक्तः **शाक्यपूर्वीयमेव** न्यायं नातिक्रान्तः स्यात्।

यौगपद्येऽपीश्वरच्छन्दानां न जगतो यौगपद्यम्; यथाच्छन्दमुत्पादादिति चेत्? न; तेषां पश्चाद् विशेषाभावात्।

कश्च तावदीश्वरस्येयता सर्गप्रयासेनार्थः? यदि प्रीतिः, तां तर्हि नान्तरेणोपायं शक्तः कर्तुमिति न तस्यामीश्वरः स्यात्, तथैव चान्यस्मिन्।

यदि चेश्वरो नरकादिषु प्रजां बहुभिश्चेतिभिरुपसृष्टां सृष्ट्वा तेन प्रीयते, नमोऽस्तु तस्मै तादृशायेश्वराय!

---

अथ मन्यसे—अन्यदपि कारणान्तरं भिन्नं तदुत्पत्तावीश्वरोऽपेक्षत इति? अत इदमुच्यते—*कारणान्तरभेदापेक्षणे* चेति। विस्तरः—*नेश्वर एव* कारणमित्यभ्युपगमे स एव दोषः। *तेषामपि* चेति विस्तरः। तेषामपि च कारणान्तराणां *क्रमोत्पत्ता*विष्यमाणायां कारणान्तरभेदानामपि पुनः *कारणान्तरभेदापेक्षणादनवस्थाप्रसङ्गः*। तेषामपि कारणान्तरभेदापेक्षणम्, तेषामपि कारणन्तरभेदापेक्षणमित्यपर्यवसानप्रसङ्गः *स्यात्। शाक्यपुत्रीयमेव न्याय*मिति। 'अनादिः संसारः' इति शाक्यपुत्रीयं न्यायं *नातिक्रान्तः स्यात्।*

*यौगपद्येऽपी*ति विस्तरः। अथापि स्यात्—*यौगपद्येऽपीश्वरच्छन्दानां न जगतो यौगपद्यम्*। कस्मात्? *यथाच्छन्दमुत्पादात्*। यश्छन्दोऽयमिदानीमुत्पद्यतामिति, तस्य तस्माच्छन्दादिदानीमेवोत्पत्तिः। यः पश्चादुत्पद्यतामिति, तस्य तस्मात् पश्चादुत्पत्तिः। इदं च पश्चात् पश्चात्तरमेवंप्रकारमिति, तस्य तस्मात् पश्चात्तरं तथैवोत्पत्तिरिति। तच्च न; *तेषां पश्चाद्विशेषाभावात्*। तेषां छन्दानां पश्चान्न कश्चिद् विशेष इति। यथैव पूर्वं नारभन्ते तथा पश्चादपि नारभेरन्, यथा वा पश्चादारभन्ते तथा पूर्वमपीति। अथ वा—एक एवोत्पादयिता नेतर इति तेषां विशेषाभावः। अतः प्राप्तमेव भावानामीश्वरच्छन्दानामिव यौगपद्यम्। कारणान्तरापेक्षत्वे वा छन्दविशेषाणां पूर्ववद् दोषः।

*न तस्यामीश्वरः स्या*दिति। न तस्यां प्रीतावीश्वरः स्यात्। *विनोपायेन तत्कारणाशक्तेः*। एतदीश्वरस्येश्वरत्वम्, यदसौ कारणान्तरानपेक्षः कुर्यात्। *तथैव चान्यस्मिन्निति*। यथा प्रीतावनीश्वरः, एवमन्यस्मिन्नपि त्रैलोक्ये नेश्वर इत्यनुमीयते। *यदि चेश्वर* इति विस्तरः। *नरकादिषु प्रजां सृष्ट्वा बहुभिश्चेतिभिरुपसृष्टाम्*। बहुभिरनेकैः प्रकारैरीतिभिरुपसर्गै रोगादिभिरुपसृष्टामुपद्रुतां सृष्ट्वा

सुगीतश्चायं तमारभ्य श्लोको भवति—

"यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान्।
मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ॥ (       ) इति ।

एवं खल्वपि जगतः कारणं परिगृह्णताऽन्येषामर्थानां प्रत्यक्षः पुरुषकारो निह्नुतः स्यात् । सहापि च कारणैः कारणमीश्वरं कल्पयतां केवलो भक्तिवादः स्यात्; कारणेभ्योऽन्यस्य व्यापारादर्शनात्। किञ्च—सहकारिषु चान्येषु कारणेष्वीश्वरो नेश्वरः स्यात् ।

अथादिसर्ग ईश्वरहेतुकः ? तस्याप्यन्यकारणानपेक्षत्वादीश्वरवदनादित्वप्रसङ्गः ।

एवं प्रधानेऽपि यथायोगं वाच्यम् ।

---

*यदि प्रीयेत नमोऽस्तु तस्मै* इत्युत्प्रासवचनमेतद् । *सुगीतश्चे*ति विस्तरः । *सूक्तश्चायं तमारभ्य* तमीश्वरमधिकृत्य श्लोकः *शतरुद्रीये व्यासेन* ।

*"यन्निर्दहति"* इत्यादि । यस्मान्निर्दहति तस्माद् रुद्र इत्येवं सर्वत्र । *अन्येषामिति* । [illegible] *प्रत्यक्षः पुरुषकारो निह्नुतः स्यात्, कारणेभ्योऽन्यस्य व्यापारादर्शनादिति* । चक्षूरूपालोकमनस्कारादिभ्यश्च चक्षुर्विज्ञानाद्युत्पत्तौ, बीजक्षेत्रोदकादिभ्यश्चाङ्कुराद्युत्पत्तावन्यस्य व्यापारानुपलब्धेः । यथा हि चक्षुरादीनां चक्षुर्विज्ञानाद्युत्पत्तौ बीजादीनां चाङ्कुराद्युत्पत्तौ व्यापारो दृश्यते— तद्भावे भावात्, तदभावे चाभावात्; न तथा चक्षुरादिभावे चेश्वरस्याभावे चक्षुर्विज्ञानाङ्कुराद्यभावो दृष्टः । पुनश्च तद्भावे भावः; यतस्तस्यापि तदुत्पत्तौ व्यापारो गम्येत, इत्यतस्तद्व्यापारादर्शनात् *सह कारणैरीश्वरं कारणं कल्पयतां केवलो भक्तिवादः स्यात्। किञ्च सहकारिषु* चेति विस्तरः । यानि सहकारीण्यन्यानि तस्येश्वरस्य किं *नेष्वीश्वरो नेश्वरः स्यात्* । तानि हि कार्योत्पत्तौ स्वसामर्थ्येन व्याप्रियन्ते । अन्येषु तु सहकारिष्वीश्वरः स्यादित्यन्यग्रहणम् ।

*आदिसर्ग ईश्वरहेतुकः* । तथा हि प्रत्यक्षपुरुषकारनिह्नवो न स्यात्, कारणेभ्योऽन्यस्य व्यापारादर्शने चादोषो जगतश्चेश्वरः कारणमिति । *तस्याप्यन्यकारणानपेक्षत्वात्* । तस्याप्यादिसर्गस्यान्यकारणानपेक्षत्वात् । ईश्वर एवैकः कारणं नान्यदिति । *ईश्वरवदनादित्वप्रसङ्गः* । अनिष्टं चैतत्, तस्मान्नेश्वरः कारणम् ।

*एवं प्रधानेऽपि यथायोगं योज्यमिति* । प्रधानमचेतनम् । तस्मात्तत्र छन्दविकल्पनां हित्वा शेषप्रतिषेधविधानं योज्यम् । यद्येकमेव कारणं प्रधानं स्यात्, युगपत् सर्वेण जगता भवितव्यं स्यात् । दृश्यते च भावानां क्रमसम्भवः ।

तस्मान्न लोकस्यैकं कारणमस्ति। स्वान्येवैषां कर्माणि तस्यां जातौ जनयन्ति। अकृतबुद्धयस्तु वराकाः स्वं स्वं विपाकफलं चानुभवन्त ईश्वरमपरं मिथ्या परिकल्पयन्ति।

अथ कथं भूतानि भूतानां हेतुप्रत्ययः ?

**द्विधा भूतानि तद्धेतुः**

भूतहेतुरित्यर्थः। सभागसहभूहेतुभ्यां

**भौतिकस्य तु पञ्चधा।**

**भौतिकस्य तु** भूतानि पञ्चप्रकारो हेतुः। कथम् ?

"जननान्निश्रयात् स्थानादुपस्तम्भोपबृंहणात्"।

सोऽयं कारणहेतुरेव पुनः पञ्चधा भिन्नः; १. जननहेतुः; तेभ्य उत्पत्तेः। २. निश्रयहेतुः; जातस्य भूतानुविधायित्वात्, पुरुषकारफलाद्, आचार्यादिनिश्रयवत्। ३. प्रतिष्ठाहेतुः; आधारभावात्, चित्रकृत्यवत्। ४. उपस्तम्भहेतुः; अनुच्छेदहेतुत्वात्। ५. वृद्धिहेतुतुः; उपबृंहणहेतुत्वात्।

---

कारणान्तरभेदापेक्षणे वा न प्रधानमेव कारणं स्यात्। तेषामपि क्रमोत्पत्तौ कारणान्तरभेदापेक्षणादनवस्थाप्रसङ्गः स्यादिति विस्तरः। एवं खल्वपि जगतः कारणं परिगृह्णता अन्येषामर्थानां प्रत्यक्षः पुरुषकारो निह्नुतः स्यात्। सहापि च कारणैः कारणं प्रधानं कल्पयतां केवलो भक्तिवादः स्यात्; कारणेभ्योऽन्यस्य व्यापारादर्शनात्। सहकारिषु चान्येषु कारणेषु तत् प्रधानमप्रधानं स्यात्। अथादिसर्गः प्रधानहेतुकः ? तस्यापि महदाद्युत्पादस्वभावस्यादिसर्गस्याद्यलक्षणत्वात् प्रधानवचनादित्वप्रसङ्गः। नित्यं हि प्रधानम्, प्रधानञ्च महतः कारणमिति पूर्वं प्रधानं पश्चान्महानिति न सिध्यति। प्रसवधर्मि च प्रधानमिति तेन नित्यं प्रवर्त्तितव्यम्; कारणान्तरनिरपेक्षत्वात्। न हि प्रकाशः प्रकाश्यमर्थं प्रकाश्य पुनर्न प्रकाशयतीति। स्वभावो हि कृतार्थमां नोपेक्षते। *अकृतबुद्धयः।* परमार्थशास्त्रैरसंस्कृतबुद्धयः इत्यर्थः॥ ६४॥

*"द्विधा भूतानि तद्धेतुः"* इति। पूर्वोत्पन्नानि भूतानि पश्चादुत्पन्नानां स्वासन्तानिकानां *सभागहेतुः*रविनिर्भागवर्तीनि *सहभूहेतुः। भूतानुविधायित्वादिति।* भौतिकं भूतान्यनुविधत्ते; तद्विकारे विकारात्। *आचार्यादिनिश्रयवदिति।* तथा भिक्षुराचार्यमाश्रयते, आदिशब्देन उपाध्यायञ्च निश्रयते, तद्वद्भूतानि

एवमेषां जन्मविकाराधारस्थितिवृद्धिहेतुत्वमाख्यातं भवति ।

**त्रिधा भौतिकमन्योन्यं**

हेतुसहभूसभागविपाकहेतुभिः कारणहेतुरविशेषवर्त्तित्वात् न सर्वदा गण्यते ।

तत्र सहभूहेतुरन्योन्यं चित्तानुपरिवर्त्ति कायवक्कर्म, नान्यदुपादायरूपम् । सभागहेतुः सर्वं पूर्वोत्पन्नं सभागस्य । विपाकहेतुर्यस्य वाक्कर्मणश्चक्षुरादयो विपाकः ।

**भूतानामेकधैव तत् ॥ ६५ ॥**

भूतानां तु तद्भौतिकं रूपं विपाकहेतुरेव, यस्य कायवाक्कर्मणो भूतानि विपाकाः; पृथक्कलापत्वात्[1] ॥ ६५ ॥

अभेदेन चित्तचैत्ताः समनन्तरप्रत्यय उक्ताः । नियमस्तु नोक्तः—कस्य चित्तस्यानन्तरं कस्योत्पत्तिरित्ति, स इदानीं वक्तव्यः ।

---

भौतिकं निश्रयते । *एवमेषामिति* विस्तरः । *जन्महेतुत्वमेषां भूतानाम्* आख्यातं तु; भौतिकस्य तेभ्य उत्पत्तेः । विकारहेतुत्वं तदनुविधायित्वात् । *आधारहेतुत्व*-माधारभावात् । *स्थितिहेतुत्वमनुच्छेदहेतुत्वात्* । *वृद्धिहेतुत्वमुपबृंहणहेतु*-त्वादिति । *अविशेषवर्त्तित्वादिति* । अ[illegible]नभावावस्थानेनान्येषामपि हेतुत्वा-दित्यर्थः ।

*अन्योन्यं चित्तानुपरिवर्तिकायवाक्* [illegible] चित्तानुपरिवर्त्ति ध्याना-नास्रवसंवरसंगृहीतं त्रिविधं प्राण[illegible]त।दानकायमिथ्याचारविरति-भेदेन । वाक्कर्मापि चित्तानुपरिवर्त्ति ध्यानानास्रवसंवरसंगृहीतमेव चतुर्विधम् मृषावादपैशुन्यपारुष्यसम्भिन्नप्रलापविरतिभेदेन । तदेवं सप्तविधं कायवाक्-कर्मान्योन्यं सहभूहेतुः, प्राणातिपातविरतिरुपादायरूपमितरेषां षण्णां सहभूहेतुः । तान्यपि षट् तस्य सहभूहेतुरिति सर्वं योज्यम् । *नान्यदिति* । चक्षुरादिकं सर्व-*मुपादायरूपं* प्रातिमोक्षसंवरादिसंगृहीतमपि यावन्नान्योऽन्यं सहभूहेतुः पृथक्-कलापत्वात् । *सभागस्येति* । कुशलं कुशलस्य स्वासन्तानिकस्य, क्लिष्टं क्लिष्ट स्येत्यादि । *यस्य कायवाक्कर्मण* इति । विज्ञप्त्यविज्ञप्तिस्वभावस्य समाहितस्य वा यथायोगम् । *एकधैव तदिति* । विपाकहेतुरेवैक इत्यवधारणम्; कारण-हेतोस्तथैवागण्यमानत्वात् । *पृथक्कलापत्वादिति* । सहभूहेत्वाद्ययोगात् ॥ ६५ ॥

---

१. का० पुस्तके नास्ति ।

तत्र तावत् समासेन द्वादश चित्तानि । किमर्थम् ? इत्याह—

**कुशलाकुशलं कामे निवृतानिवृतं मनः ।**

कामधातौ चत्वारि—कुशलम्, अकुशलम्, निवृताऽव्याकृतम्, अनिवृताव्याकृतं च ।

**रूपारूप्येष्वकुशलादन्यत्र**

रूपधातावकुशलं नास्ति, त्रीणि सन्ति । एवामरूप्यधातौ । इत्येतानि सानुस्रवाणि दश चित्तानि भवन्ति ।

**अनास्रवं द्विधा ॥ ६६ ॥**

शैक्षमशैक्षं च । एवमेतानि द्वादश चित्तानि भवन्ति ॥ ६६ ॥

तत्र—

**कामे नव शुभाच्चित्ताच्चितानि**

अनन्तरमिति पश्चाद् वक्ष्यते[1] । कामधातौ यत् कुशलं चित्तं तस्मादनन्तरं **नव चित्तान्युत्पद्यन्ते** । स्वभूमिकानि चत्वारि । रूपावचरे द्वे । समापत्तिकाले कुशलं प्रतिसन्धिकाले निवृतम् । आरूप्यावचरं निवृतमेव प्रतिसन्धिकाले ।

---

*रूपधातावकुशलं नास्तीति* । "स विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसम्पद्य विहरति" इति वचनात् । तत्र रूपधातावकुशलं नास्ति । अकुशलविवेकाद्धि यज्जातं शुभं तद्विवेकजमित्युच्यते । यथा च हेतुः, तथा फलमिति । तत्रोपपत्तावपि नास्त्यकुशलमिति गम्यते । रूपारूप्यधातौ सर्व एव क्लेशोपक्लेशा अविपाकत्वान्निवृता एव, नाकुशलाः ॥ ६६ ॥

*अनन्तरमिति पश्चाद् वक्ष्यत इति* । कारिकान्ते । तदिह सम्बन्धनीयम् । *समापत्तिकाले कुशलमिति* । कामावचरप्रायोगिककुशलचित्तानन्तरं प्रथमध्यानभूमिकं सामन्तकीयं मौलीयं वा चित्तमुत्पद्यते । *प्रतिसन्धिकाले निवृत्तमिति* । कामावचरोपपत्तिप्रतिलम्भिकमरणचित्तानन्तरं रूपावचरं निवृत्ताव्याकृतं चित्तमुत्पद्यते प्रतिसन्धिकाले; "उपपत्तिभवः क्लिष्टः सर्वक्लेशैः स्वभूमिकैः" (अभि० को० ३ ३८) इति वचनात् । उपपत्तिरत्रान्तराभवोपपत्तिरभिप्रेता ।

---

1. वक्ष्यति—का० ।

अतिविप्रकृष्टत्वात् न कुशलम् । आरूप्या हि कामधातोश्चतसृभिर्दूरताभिर्दूरे । आश्रयाकारालम्बनप्रतिपक्षदूरताभिः । शैक्षमशैक्षं चेति ।

**अष्टाभ्य एव तत् ।**

तत्र पुनः कामावचरं कुशलं चित्तमष्टाभ्यः समनन्तरमुत्पद्यते । स्वभूमिकेभ्यश्चतुर्भ्यः । रूपावचराभ्यां द्वाभ्याम् । कुशलाच्च व्युत्थानकाले । निवृताच्च क्लिष्टसमापत्त्युत्पीडितस्याधरकुशलभूमिसंश्रयणात् । शैक्षाशैक्षाभ्यां च व्युत्थानकाले ।

**दशभ्योऽकुशलं**

शैक्षाशैक्षे हित्वा कामधातौ हि प्रतिसन्धिमुखतः सर्वेभ्यो रूपारूप्यचित्तेभ्यः समनन्तरमकुशलं चित्तमुत्पद्यते ।

---

एवमन्तराभवप्रतिसन्धिरपि क्लिष्टो वेदितव्यः । *चतसृभिर्दूरताभिर्दूर* इति । *तत्रेयमाश्रयदूरता* यदारूप्यावचरेणाश्रयेण कामावचरः कश्चिदपि धर्मो न सम्मुखीक्रियते, यथा—रूपावचरेणाश्रयेण कामावचरं निर्माणचित्तं सम्मुखीक्रियत इति । अनयाश्रयदूरतया कामधातोरारूप्या दूरे भवन्ति । *आकारदूरता* यदारूप्यावचरेण चित्तेन कामधातुर्नाकार्यते, यथा—रूपावचरेण औदारिक इत्यादिभिराकारैः । *आलम्बनदूरता* यदारूप्यावचरेण चित्तेन न कामधातुरालम्ब्यते, यथा—रूपावचरेण । ननु च रूपधातुरपि नारूप्यावचरेण चित्तेनालम्ब्यते; "न मौलाःकुशलारूप्याः सास्रवाधरगोचराः" ( अभि० को० ८.२१ ) इति वचनात्, तत् कथमिदमुच्यते—कामधातोरेवारूप्या दूरत इति ? सत्यं न मौलारूप्यावचरेण चित्तेन रूपधातुरध्यालम्ब्यते; किन्त्वाकाशानन्त्यायतनसामन्तकचित्तेनौदारिकाद्याकारैश्चतुर्थध्यानमालम्ब्यत इति । अतो न कामधातोरारूप्या दूरे व्यवस्थाप्यन्ते । *प्रतिपक्षदूरता* यदारूप्या न कामधातोः प्रतिपक्षः, यथा—रूपधातुः । इत्येवमाश्रयालम्बनाकारप्रतिपक्षदूरताभिरपि कामधातोरारूप्या दूरे भवन्ति । तस्मान्न कामावचरकुशलानन्तरमारूप्यावचरं कुशलमुत्पद्यते । *शैक्षमशैक्षं चेति ।* कामावचरप्रायोगिककुशलचित्तानन्तरं समापत्तिकाले लब्धपूर्वं शैक्षमुत्पद्यते, तथैव चाशैक्षम् ।

*क्लिष्टसमापत्त्युत्पीडितस्येति* । क्लिष्टया समापत्त्योत्पीडितस्य योगिनोऽधरायाः कुशलाया भूमेः संश्रयणान्निवृताव्याकृतादपि कुशलं चित्तमुत्पद्यते । वरमधरापि कुशला भूमिर्नोर्ध्वा क्लिष्टेति ।

*सर्वेभ्यो रूप्यारूप्यचित्तेभ्य* इति । कुशलाव्याकृतचित्तस्य मरणसम्भवात् ।

**तस्माच्चत्वारि**

अकुशलाच्चित्तात् समनन्तरं चित्तान्युत्पद्यन्ते स्वभूमिकान्येव ।

यथा—अकुशलमुक्तं कामधातौ,

**निवृतं तथा ॥ ६७ ॥**

**दशभ्य** एव समनन्तरम् । **तस्माच्च** पुनश्चत्वार्येव ।

**पञ्चभ्योऽनिवृतं**

**काम** इति वर्त्तते । अनिवृताव्याकृतं चित्तं **पञ्चभ्यः** समनन्तरमुत्पद्यते । स्वभूमिकेभ्यश्चतुर्भ्यो रूपावचराच्च कुशलान्निर्माणचित्तम् ॥ ६७ ॥

**तस्मात् सप्त चित्तान्यनन्तरम् ।**

अनिवृताव्याकृतात् कामावचरात् स्वभूमिकानि चत्वारि । रूपावचरे द्वे । कुशलं निर्माणचित्तादनन्तरम् । क्लिष्टं प्रतिसन्धिकाले । आरूप्याचरं च क्लिष्टं प्रतिसन्धिकाल एव ।

**रूपे दशैकं च शुभात्**

**रूपे** धातौ यत् कुशलं चित्तं तस्मादनन्तरमेकादश चित्तान्युत्पद्यन्ते, आरूप्यावचरमनिवृताव्याकृतं वर्जयित्वा ।

**नवभ्यस्तदनन्तरम् ॥ ६८ ॥**

रूपावचरं तु कुशलं चित्तं **नवभ्यः** समनन्तरमुत्पद्यते, कामावचरं च[1]

---

"*तस्माच्चत्वारि*" इति । तस्मादकुशलाच्चत्वारि स्वभूमिकान्येव, अकुशलस्योर्ध्वभूमिकुशलप्रयोगतत्रारम्भवादप्रहाणाच्चोर्ध्वभूम्युपपत्तिचित्तानुत्पादात् ॥६७॥

*कुशलं निर्माणचित्तादनन्तरमिति* । निर्माणाद् व्युत्थानकाले ।

*तस्मादनन्तरमेकादशेति* । प्रतिसन्धिसमापत्तितद्व्युत्थाननिर्माणप्रवेशकालेष्वेकादशचित्तोत्पत्तिसम्भवः । कथम् ? स्वभूमिकानि त्रीणि कामावचराणि च, व्युत्थानकाले कुशलम्, प्रतिसन्धिकाले क्लिष्टद्वयम्, अनिवृत्ताव्याकृतं च निर्माणचित्तम्, आरूप्यावचरं च निवृत्ताव्याकृतं प्रतिसन्धिकाले, कुशलं च समापत्तिकाले । शैक्षमशैक्षं चेति । *न त्वारूप्यावचरमनिवृताव्याकृतम्* । अवश्याक्लिष्टत्वात्, समापत्त्याद्ययोगाच्च । न हि तत् प्रयोगलभ्यं यथा रूपावचरं कामावचरं च निर्माणचित्तम् ।

---

१. का० पुस्तके नास्ति ।

क्लिष्टद्वयमारूप्यावचरं चानिवृताव्याकृतं हित्वा ॥ ६८ ॥

**अष्टाभ्यो निवृतं**

निवृताव्याकृतं रूपावचरं चित्तमष्टाभ्य उत्पद्यते। कामावचरं क्लिष्टद्वयं शैक्षाशैक्षे च स्थापयित्वा।

**तस्मात् षट्**

रूपावचरान्निवृताव्याकृतादनन्तरं षट्। स्वभूमिकानि त्रीणि कामावचराणि चानिवृताव्याकृतं मुक्त्वा।

**त्रिभ्योऽनिवृतं पुनः।**

रूपावचरमनिवृताव्याकृतं त्रिभ्यः स्वभूमिकेभ्य एव।

**तस्मात् षट्**

स्वभूमिकानि त्रीणि, कामावचरे च क्लिष्टे, आरूप्याचरं च।

यथा रूपधातावनिवृताव्याकृतमुक्तम्,

**एवमारूप्ये तस्य नीतिः**

ततस्तदप्यनिवृताव्याकृतं त्रिभ्य एवोत्पद्यते स्वभूमिकेभ्यः। तस्मादपि च च षडेवोत्पद्यन्ते—स्वभूमिकानि त्रीणि, अधरधातुकानि च क्लिष्टानि।

**शुभात् पुनः ॥ ६९ ॥**

---

*कामावचरं च क्लिष्टद्वयमारूप्यावचरं चानिवृत्ताव्याकृतं हित्वेति।* न कामावचरात् क्लिष्टद्वयाद् रूपावचरं कुशलमुत्पद्यते; तस्य क्लिष्टद्वयस्य तत्प्रयोगानर्हत्वात्। अत एव चारूप्यावचरादनिवृत्ताव्याकृतात् तदुत्पद्यते; कुशलेन च प्रतिसन्धिबन्धनाभावात् ॥ ६८ ॥

*कामावचरं क्लिष्टद्वयं शैक्षाशैक्षे च स्थापयित्वेति।* न कामावचरात् क्लिष्टद्वयाद् रूपावचरं निवृत्ताव्याकृतमुत्पद्यते, तदप्रहाणे रूपधातौ प्रतिसन्धिबन्धाभावेन निवृताव्याकृतचित्तासम्भवात्। न शैक्षाशैक्षाभ्याम्; ततस्तेन क्लिष्टेन व्युत्थानासम्भवात्।

*कामावचराणि चेति।* त्रीणीत्यधिकृतम्। प्रतिसन्धिकाले क्लिष्टद्वयं क्लिष्टसमाध्युत्पीडितस्य च कुशलम्।

*कामावचरं च क्लिष्टं आरूप्यावचरं चेति।* प्रतिसन्धिकाले।

*अधरधातुकानि च क्लिष्टानि।* प्रतिसन्धिकाले ॥ ६९ ॥

**नव चित्तानि**

आरूप्यावचरात् कुशलान्नव चित्तान्युत्पद्यन्ते । कामावचरं कुशलम्, कामरूपावचरे चानिवृताव्याकृते हित्वा ।

**तत् षण्णां**

आरूप्यावचरं कुशलं स्वेभ्यस्त्रिभ्यः—रूपावचरात् कुशलात्, शैक्षाशैक्षाभ्यां च ।

**निवृतात् सप्त**

आरूप्यावचरान्निवृतात् स्वभूमिकानि त्रीणि रूपावचरं कुशलं च कामावचरं क्लिष्टद्वयम् ।

**तत् तथा ।**

तदपि सप्तभ्य एवोत्पद्यते । कामरूपावचराणि क्लिष्टानि शैक्षाशैक्षे च हित्वा ।

**चतुर्भ्यः शैक्षम्**

त्रैधातुकेभ्यः कुशलेभ्यः, शैक्षाच्च ।

**अस्मात् तु पञ्च**

तान्येव चत्वारि, अशैक्षं च ।

---

*आरूप्यावचरात् कुशलान्नवेति* । स्वभूमकानि त्रीणि, रूपावचरं कुशलम्, तत्समापत्तिव्युत्थानकाले प्रतिलोमसमापत्तौ च । अधरभूमिकानि च क्लिष्टानि प्रतिसन्धिकाले । शैक्षमशैक्षं च ।

*कामावचरं कुशलं कामरूपावचरे चानिवृताव्याकृते हित्वेति* । न कामावचरेण कुशलेन तत्समापत्तेर्व्युत्थानं सम्भवति; अतिविप्रकृष्टत्वात् । अत एव च नानिवृताव्याकृतेनाप्यपटुत्वाच्च । अत एव च न रूपावचरेणानिवृताव्याकृतेन व्युत्थानम् । न चैभिः प्रतिसन्धिबन्धोऽस्तीति नैषामत उत्पत्तिः । तत् षण्णामनन्तरमिति वर्तते ।

*रूपावचरात् कुशलादिति* । समापत्तिकाले । *शैक्षाशैक्षाभ्यां चेति* व्युत्थानकाले । *रूपावचरं कुशलमिति* । क्लिष्टसमाध्युत्पीडितस्य । *निवृतं* चेत्यादि । प्रतिसन्धिकाले *कामरूपावचराणि क्लिष्टानि शैक्षाशैक्षे च हित्वेति* । अधोभूम्यवीतरागस्य तेन प्रतिसन्धेरभावात् शैक्षाशैक्षाभ्यां च तेन व्युत्थानासम्भवान्न तेभ्यस्तदुत्पत्तिः । *तान्येव चत्वार्यशैक्षं चेति* । त्रीणि त्रैधातुकानि कुशलानि व्युत्थानकाले, शैक्षं च

**अशैक्षं तु पञ्चकात् ॥ ७० ॥**

अत एवानन्तरोक्तात् ।

**तस्माच्चत्वारि चित्तानि**

**तस्मात्** पुनरशैक्षाच्चित्तात् समनन्तरं **चत्वारि** **चित्ता**न्युत्पद्यन्ते— त्रैधातुकानि कुशलानि, अशैक्षं च ॥ ७० ॥

समासानि द्वादश चित्तानि ॥

पुनः क्रियन्ते

**द्वादशैतानि विंशतिः ।**

कथं कृत्वा ?

**प्रायगिकौपपत्त्याप्तं शुभं भित्त्वा त्रिषु द्विधा ॥ ७१ ॥**

**त्रिषु** धातुषु चित्तं **द्विधा** भिद्यते---प्रायोगिकं च, औपपत्तिलाभिकं च ।

**विपाकजैर्यापथिक-शैल्पस्थानिक-नैर्मितम् ।**

**चतुर्धाऽव्याकृतं कामे**

'भित्त्वा' इति वर्तते । कामावचरमनिवृताव्याकृतं **चतुर्धा** भिद्यते— विपाकजम्, ऐर्यापथिकम्, शैल्पस्थानिकम्, निर्माणचित्तं च ।

---

प्रवाहे, वज्रोपमानन्तरं क्षयज्ञानमित्यशैक्षं चेति पञ्च ।

*"पञ्चकाद्" अत एवानन्तरोक्तादिति* । त्रैधातुकेभ्यः कुशलेभ्यः समापत्तिकाले । वज्रोपमानन्तरोत्पत्तौ प्रवाहे चेति । *तस्माच्चत्वारीति* । शैक्षं हित्वा । न ह्यशैक्षात् शैक्षमुत्पद्यते । परिहाणिकाले कथं नोत्पद्यते ? क्लेशोत्पादव्यवहितत्वात्, व्युत्थितस्यैव परिहाणेश्च ॥ ७० ॥

*प्रायोगिकं चौपपत्तिलाभिकं चेति* । प्रायोगिकं यत्प्रयोगाल्लभ्यते । श्रुतचिन्ताभावनामयं त्रिषु धातुषु यथासम्भवम्, उपपत्तिलाभिकं कामरूपधात्वोरन्तराभवप्रतिसन्धिक्षणे प्रथमतो यस्य प्राप्तिरुत्पद्यते, आरूप्यधातौ चोपपत्तिभवे यस्य प्राप्तिरुत्पद्यते ॥ ७१ ॥

*विपाकजमैर्यापथिकं शैल्पस्थानिकं निर्माणचित्तं चेति* । हेतुकर्मभेदादयं भेदः । विपाकहेतोर्जातं विपाकजम् । ईर्यापथेषु शयनासनस्थितिचंक्रमणेषु

रूपे शिल्पविवर्जितम् ॥ ७२ ॥

रूपधातौ त्रिधा भिद्यते शैल्पस्थानिकं वर्जयित्वा; तत्र शिल्पाभावात् । एवमेतानि द्वादश चित्तानि पुनर्विंशतिर्भवन्ति । षोढा कुशलमनिवृताव्याकृतं च सप्तधा भित्त्वा[1] । ऐर्यापथिकादीनि चित्तानीर्यापथाद्यभावादारूप्यधातौ न सन्ति । रूपगन्धरसस्प्रष्टव्यान्येषामालम्बनम् । शैल्पस्थानिकस्य तु शब्दोऽपि । एतानि मनोविज्ञानान्येव । पञ्च तु विज्ञानकाया ऐर्यापथिकशैल्पस्थानिकयोः प्रायोगिकाः ।

ऐर्यापथिकाभिनिर्हृतं मनोविज्ञानमस्ति द्वादशायतनालम्बनमित्यपरे ।

---

भवमैर्यापथिकम् । शिल्पस्थानेषु भवं शैल्पस्थानिकम् । निर्माणे चित्तं निर्माणचित्तम् । निर्मिते निर्माणे वा भवं नैर्मितं नैर्माणिकमिति वा ।

तदेवोच्यते—*पुनर्विंशतिर्भवन्तीति* । कथम् ? इत्याह—*षोढा कुशलमनिवृताव्याकृतं च सप्तधा भित्त्वेति* । त्रिषु धातुषु प्रायोगिकोपपत्तिप्रतिलम्भिकभेदेन कुशलं षोढा भित्त्वा । कामरूपधात्वोश्चानिवृताव्याकृते सप्तधा भित्त्वा—कामधातौ विपाकजैर्यापथिकशैल्पस्थानिकनैर्माणिकभेदेन, रूपधातौ च विपाकजैर्यापथिकनैर्माणिकभेदेनेति । तान्येतानि त्रयोदश । शेषाणि च सप्ताभिन्नान्येव, तद्यथा—कामावचरमकुशलं निवृताव्याकृतं च, निवृताव्याकृतमेव, आरूप्यावचरं निवृताव्याकृतमनिवृताव्याकृतञ्च शैक्षमशैक्षं चेति विंशति चित्तानि भवन्ति । *ईर्यापथाद्यभावादिति* । ईर्यापथशिल्पस्थाननिर्माणाभावात् । एतानि त्रीण्यारूप्यधातौ न सन्ति; आलम्बनभूतस्य रूपस्याभावात् । *रूपगन्धरसस्प्रष्टव्यान्येषामालम्बनमिति* । तत्र शय्यासनरूपादयः स्वशरीरावयवरूपादयश्चैर्यापथिकस्यालम्बनम्, शैल्पस्थानिकस्य शिल्पस्थानरूपादयः, नैर्माणिकस्य निर्माणरूपादयः । *शैल्पस्थानिकस्य तु शब्दोऽपीति* । तु-शब्दो विशेषणे । अपि-शब्देन रूपादयः । शब्दोऽप्यस्यालम्बनम् । शिल्पोपदेशशब्दमालम्ब्य मनोविज्ञानेन शिल्पं शिक्षत इति । विपाकजस्यावचनात् सर्वेऽपि रूपादय आलम्बनमित्यवगन्तव्यम् । *मनोविज्ञानान्येवेति* । मनोविज्ञानस्वभावान्यैर्यापथिकादीनि त्रीणि; विकल्पाभिसंस्करणे प्रवृत्तत्वात् । विपाकजमवचनात् षड्विज्ञानस्वभावमिति ज्ञापितं भवति । *पञ्च तु विज्ञानकाया*[2] *ऐर्यापथिकशैल्पस्थानिकयोः प्रायोगिका* इति । तत्प्रयोगावस्थायां भवत्वात् प्रायोगिकाः, यस्मात् ते दृष्ट्वा यावत् स्पृष्ट्वोत्पद्यन्त इति । विपाकस्य प्रयोगो नास्ति; कर्मसामर्थ्येन स्वरसवाहित्वात् ।

*ऐर्यापथिकाभिनिर्हृतमिति* । विस्तरः—ऐर्यापथिकेन मनोविज्ञानेनाभिनिर्हृत-

---

१. भित्वा—का० । २. विज्ञानकायम्—मुद्रितः पाठः ।

एषां पुनर्विंशतेश्चित्तानां कस्य कतमत् समनन्तरम् ?

**कामावचराणां** तावदष्टानां प्रायोगिकानन्तरं दश चित्तान्युत्पद्यन्ते। स्वभूमिकानि सप्त, अन्यत्राभिज्ञाफलात्।

रूपावचरं प्रायोगिकं शैक्षमशैक्षं च। तत् पुनरष्टचित्तानन्तरम्। स्वेभ्यः कुशलक्लिष्टेभ्यः रूपावचराभ्यां प्रायोगिकक्लिष्टाभ्यां शैक्षाशैक्षाभ्यां च।

उपपत्तिप्रतिलम्भिकानन्तरं नव। स्वभूमिकानि सप्त, अन्यत्राभिज्ञाफलाद्। रूपारूप्यावचरे च क्लिष्टे।

तत् पुनरेकादशानन्तरम्। स्वेभ्यः सप्तभ्यः पूर्ववत्, रूपावचराभ्यां प्रायोगिकक्लिष्टाभ्यां शैक्षाशैक्षाभ्यां च।

---

मुत्पादितं *मनोविज्ञानमस्ति द्वादशायतनालम्बनम्*। चक्षुरायतनालम्बनं यावद् धर्मायतनालम्बनमनिवृताव्याकृतस्वभाव*मित्यपरे*। तदेवं प्रदर्शयन्ति—अन्यदप्यनिवृताव्याकृतमस्ति यदैर्यापथिकादिषु नान्तर्भवतीति। इत्थमेव च प्रतिपत्तव्यम्। अन्यथा हि यद् वक्ष्यति—

"कायाक्षिश्रोत्रविज्ञानं विज्ञप्त्युत्थापकञ्च यत्।
द्वितीयादौ तदाद्याप्तमक्लिष्टाव्याकृतञ्च तत्" ॥ ( अभि० को० ७.१३ )
स्वभूमिकेन निर्माणं भाषणं त्वधरेण च।" ( अभि० को० ७.५६ )

इत्यादि, तानि विज्ञानान्येषां चतुर्णां कतमेन संगृहीतानि! न तावद् विपाकजानि, ऊर्ध्वोपपन्नानामधरभूमिकविपाकासम्भवात्। नैर्यापथिकादीनि, ईर्यापथाद्यभावात्। अज्ञानादिवासनाचित्तं च क्व प्रवेशयितव्यम्! *भदन्तानन्तवर्मणापि विभाषाव्याख्यान* उक्तम्—एतच्चतुष्टयव्यतिरिक्तान्यव्याकृतानि विज्ञानानि सन्तीति। सावशेषमेतद् भाष्यमित्यवगन्तव्यम्।

*अन्यत्राभिज्ञाफलादि*ति। कामावचरं निर्माणचित्तं रूपावचरप्रायोगिकानन्तरमेवोत्पद्यते, न कामावचरप्रायोगिकानन्तरम्। *रूपावचरं प्रायोगिकं शैक्षमशैक्षं* चेति। समापत्तिकाले। *स्वेभ्यः कुशलक्लिष्टेभ्य* इति। स्वाभ्यां कुशलाभ्यां क्लिष्टाभ्याञ्च; प्रयोगकाले क्लिष्टासद्भावात्। क्लेशपरिखिन्नस्य च प्रायोगिकोत्पत्तेः। नानिवृताव्याकृतेभ्यो दुर्बलानभिसंस्कारिकत्वात्। *रूपावचराभ्यां प्रायोगिकक्लिष्टाभ्यामि*ति। प्रायोगिकात् क्लिष्टात्। *शैक्षाशैक्षाभ्याञ्च* व्युत्थानकाले। क्लिष्टात् क्लिष्टसमाध्युत्पीडितस्य। *रूपारूप्यावचरे च क्लिष्टे* इति। प्रतिसन्धिकाले। सम्भवति ह्युपपत्तिप्रतिलम्भिकचित्तस्य मरणम्। पूर्ववदिति। अन्यत्राभिज्ञाफलादित्यर्थः। तद्धि रूपावचरप्रायोगिकानन्तरमेवे-

अकुशलनिवृताव्याकृतानन्तरं सप्त। स्वान्येव पूर्ववत्।

ते पुनश्चतुर्दशचित्तानन्तरम्। स्वेभ्यः सप्तभ्यः रूपावचरेभ्यश्चतुर्भ्योऽन्यत्र प्रायोगिकाभिज्ञाफलाभ्याम्। आरूप्यावचरेभ्यस्त्रिभ्योऽन्यत्र प्रायोगिकात्।

ऐर्यापथिकविपाकजानन्तरमष्टौ। स्वभूमिकानि षडन्यत्र प्रायोगिकाभिज्ञाफलाभ्यां रूपारूप्यावचरे च क्लिष्टे। ते पुनः सप्तचित्तानन्तरं स्वेभ्य एव पूर्ववत्।

शैल्पस्थानिकानन्तरं षट्। स्वान्येवा, अन्यत्र प्रायोगिकाभिज्ञाफलाभ्याम्। तत् पुनः सप्तानन्तरम्; स्वेभ्य एवान्यत्राभिज्ञाफलात्।

अभिज्ञाफलानन्तरं द्वे। स्वं चाभिज्ञाफलमेव, रूपावचरं च प्रायोगिकम्। तदप्यस्मादेव द्वयात्।

**रूपावचराणामिदानीं षण्णां वक्ष्यामः**[1]। प्रायोगिकानन्तरं द्वादश। कामावचरकुशले[2] अभिज्ञाफलं च स्वानि षट् आरूप्यावचरं च प्रायोगिकं शैक्षमशैक्षं च।

---

त्युक्तम्। रूपावचराभ्यां चेति विस्तरेण पूर्ववद् व्याख्यानम्। *अकुशलनिवृताव्याकृतान्तरमिति*। अकुशलानन्तरं निवृताव्याकृतान्तरं चेति विभक्तव्यम्। तुल्यत्वाद्धि तद् युगपद्वचनम्।

*रूपावचरेभ्यश्चतुर्भ्यः*। अन्यत्र *प्रायोगिकाभिज्ञाफलाभ्यामिति*। प्रतिसन्धिकाले, प्रायोगिकेऽभिज्ञाफले च स्थितस्य नास्ति मरणम्। अतस्ताभ्यां तत् क्लिष्टद्वयं नोत्पद्यते। शेषेषु तु स्थितस्यास्ति मरणम्। अतस्तेभ्यस्तत् क्लिष्टद्वयमुत्पद्यते। प्रतिसन्धिकाले। एवमन्यत्राप्यन्यत्र प्रायोगिकादिति व्याख्येयम्।

*षडन्यत्र प्रायोगिकाभिज्ञाफलाभ्यामिति*। दुर्बलानभिसंस्कारिकत्वात्। अनयोरनन्तरं प्रायोगिकं नोत्पद्यते। रूपावचरप्रायोगिकानन्तरोत्पत्तेश्च न ताभ्यामभिज्ञाफलोत्पत्तिः। *रूपारूप्यावचरे च क्लिष्टे* इति। प्रतिसन्धिकाले। *शैल्पस्थानिकानन्तरं षडिति*। तत्रस्थस्य मरणासम्भवादैर्यापथिकविपाकजवदिह रूपारूप्यावचरक्लिष्टयोरसम्भवः। *स्वं चाभिज्ञाफलमेवेति*। प्रवाहकाले। *रूपावचरं च प्रायोगिकमिति*। तद्व्युत्थाने। न तदित्यप्रविश्य ध्यानमभिज्ञाफलाद् व्युत्थानमस्तीति। *तदप्यस्मादेव द्वयादिति*। तदभिज्ञाफलम्। प्रवाहे तत्प्रवेशकाले च।

*कामावचरकुशले* इति। व्युत्थानकाले। अस्ति हि सम्भव उपपत्तिप्रतिलम्भिकेनापि समापत्तिव्युत्थानं पटुत्वात्। अतो द्वयोरपि कुशलयोर्ग्रहणम्।

---

१. वक्षामः—का०। २. कामावचरे०—का०।

तत् पुनर्दशचित्तानन्तरम् । कामावचराभ्यां प्रायोगिकाभिज्ञाफलाभ्यां स्वेभ्यश्चतुर्भ्यः, अन्यत्रैर्यापथिकविपाकजाभ्यामारूप्यावचराभ्यां प्रायोगिकक्लिष्टाभ्यां शैक्षाशैक्षाभ्यां च ।

उपपत्तिप्रतिलम्भिकानन्तरमष्टौ । कामावचरे क्लिष्टे स्वानि पञ्चान्यत्राभिज्ञाफलात् । आरूप्यावचरं क्लिष्टम् ।

तत् पुनः पञ्चभ्यः स्वेभ्यः एव, अन्यत्राभिज्ञाफलात् ।

क्लिष्टानन्तरं नव । कामावचराणि चत्वारि कुशलक्लिष्टानि स्वानि पञ्च, अन्यत्राभिज्ञाफलात् ।

तत् पुनरेकादशचित्तानन्तरम् । कामावचरेभ्य उत्पत्तिप्रतिलम्भिकैर्यापथिकविपाकजेभ्यः स्वेभ्यः पञ्चभ्यः, अन्यत्राभिज्ञाफलात् । आरूप्यावचरेभ्यस्त्रिभ्यः, अन्यत्र प्रायोगिकात् ।

ऐर्यापथिकानन्तरं सप्त । कामावचरे क्लिष्टे स्वानि चत्वारि, अन्यत्र प्रायोगिकाभिज्ञाफलाभ्यामारूप्यावचरं च क्लिष्टम् ।

तत् पुनः पञ्चानन्तरं स्वेभ्य एव, अन्यत्राभिज्ञाफलात् ।

एवं विपाकजं वक्तव्यम् ।

---

*अभिज्ञाफलं* चेति । कामावचरं निर्माणचित्तम् । आरूप्यावचरप्रायोगिकशैक्षाशैक्षाणि समापत्तिकाले ।

*अन्यत्रैर्यापथिकविपाकजाभ्यामिति* । तयोर्दुर्बलानभिसंस्कारिकत्वात् । *प्रायोगिकक्लिष्टाभ्यामिति* । व्युत्थानक्लिष्टसमापत्त्युत्पीडितकालयोः ।

*कामावचरे क्लिष्टे* इति । प्रतिसन्धिकाले । *अन्यत्राभिज्ञाफलादिति* । निर्माणचित्तस्य प्रायोगिकानन्तरोत्पत्ते । *आरूप्यावचरं क्लिष्टमि*ति । प्रतिसन्धिकाले । *कुशलक्लिष्टानी*ति । कुशले च क्लिष्टे च कुशलक्लिष्टानीति समासः । कुशलाधरभूमिकाश्रयणात् कुशले, क्लिष्टे तु प्रतिसन्धिकाले । *कामावचरेभ्य* इति । विस्तरः—प्रतिसन्धिकाले प्रायोगिकशैल्पस्थानिकाभिज्ञाफलेषु मृत्युर्नास्तीति न तेभ्यः । कामावचरे क्लिष्टे इति प्रतिसन्धिकाले ।

*आरूप्यावचरमपि क्लिष्टमस्मिन्नेव* स्वं प्रायोगिकम्, अतो नोत्पद्यते । ऐर्यापथिकस्य दुर्बलानभिसंस्कारित्वेन प्रयोगानर्हत्वात् ।

*एवं विपाकजमिति* । यथैर्यापथिकमुक्तम्, तथेदं विपाकजानन्तरं सप्त यावदन्यत्राभिज्ञाफलादिति । तावेव ग्रन्थार्थौ ।

अभिज्ञाफलानन्तरं द्वे स्वे एव प्रायोगिकाभिज्ञाफले। तदप्याभ्यामेव।

आरूप्यावचराणामिदानीं चतुर्णां वक्ष्यामः।

प्रायोगिकानन्तरं सप्त। रूपावचरं प्रायोगिकं स्वानि चत्वारि, शैक्षमशैक्षं च स्वानि[1] चत्वारि[1]।

तत् पुनः षट्चित्तानन्तरम्। रूपावचरात् प्रायोगिकात्। स्वेभ्यस्त्रिभ्यः, अन्यत्र विपाकजात् शैक्षाशैक्षाभ्यां च।

उपपत्तिप्रातिलम्भिकानन्तरं सप्त। स्वानि चत्वार्यधरधातुकानि[2] च क्लिष्टानि।

तत् पुनश्चतुर्भ्यः स्वेभ्य एव।

क्लिष्टानन्तरमष्टौ। स्वानि चत्वारि रूपावचरे प्रायोगिकक्लिष्टे, कामावचरे अपि[3] क्लिष्टे।

तत् पुनर्दशानन्तरम्। स्वेभ्यश्चतुर्भ्यः कामावचररूपावचरेभ्यश्चोपपत्तिप्रातिलम्भिकैर्यापथिकविपाकजेभ्यः।

विपाकजानन्तरं षट्। स्वानि त्रीण्यन्यत्र प्रायोगिकादधराणि त्रीणि क्लिष्टानि। तत् पुनश्चतुर्भ्यः स्वेभ्य एव।

---

*अभिज्ञाफलानन्तरं द्वे स्वे* इति। व्युत्थाने प्रवाहे च। *तदप्याभ्यामेवे*ति। प्रवेशे प्रवाहे च। *रूपावचरं प्रायोगिकमि*ति। व्युत्थानकाले। एवं *शैक्षमशैक्षञ्च स्वानि चत्वारी*ति। कुशलं भवतीति स्फुटम्। क्लिष्टमास्वादनाकाले, अनिवृत्ताव्याकृतं तु व्युत्थानकाले।

*रूपावचरात् प्रायोगिकादि*ति। समापत्तिकाले। *अन्यत्र विपाकजादि*ति। दुर्बलानभिसंस्कारवाहित्वादिति कारणं वक्ष्यते। *शैक्षाशैक्षाभ्याञ्चे*ति। समापत्तिकाले।

*अधरधातुकानि च क्लिष्टानी*ति। रूपावचरकामावचराणि प्रतिसन्धिकाले। *प्रायोगिकक्लिष्टे* इति। प्रायोगिकं क्लिष्टसमाध्युत्पीडनात्। क्लिष्टं प्रतिसन्धिकाले। *कामावचरेऽपि* क्लिष्टे प्रतिसन्धिकाल एव।

*कामावचररूपावचरेभ्य* इति विस्तरः। तच्चित्तस्थमरणसम्भवात्।

*अन्यत्र प्रायोगिकादि*ति। विपाकजानन्तरं प्रायोगिकानुत्पत्तेः। *अधराणि त्रीणि क्लिष्टानी*ति। द्विधातुकानि प्रतिसन्धिकाले।

---

१–१. का० पुस्तके नास्ति। २. ०भूमिकानि—का० । ३. का० पुस्तके नास्ति।

**शैक्षानन्तरं षट्** । द्विधातुकानि[1] प्रायोगिकाणि कामावचरमुत्पत्तिलाभिकं[2] शैक्षमशैक्षं च । तत् पुनश्चतुर्भ्यः—प्रायोगिकेभ्यः त्रिभ्यः, शैक्षाच्च ।

**अशैक्षानन्तरं पञ्च** । यथा शैक्षानन्तरं शैक्षमेकं हित्वा । तत् पुनः पञ्चभ्यः—त्रिभ्यः प्रायोगिकेभ्यः, शैक्षाशैक्षाभ्यां चेति ।

किं पुनः कारणं प्रायोगिकचित्तानन्तरं विपाकजैर्यापथिकशैल्पस्थानिकानि चित्तान्युत्पद्यन्ते, न पुनरेभ्यः प्रायोगिकम् ? ईर्यापथशिल्पाभिसंस्करणप्रवृत्तत्वात्

---

*कामावचरमुत्पत्तिलाभिकमिति* । पटुत्वादेतच्छैक्षाद् व्युत्थानचित्तं सम्भवति । पटुत्वादिति कारणं वक्ष्यति । न तु तथा रूपारूप्यावचरे उपपत्तिलाभिके पटुनी इति न ते सम्भवतः । *शैक्षं* प्रवाहे, *अशैक्षं* च वज्रोपमानन्तरम् ।

*शैक्षमेकं हित्वेति* । अशैक्षाच्छैक्षं नोत्पद्यते । तस्मादशैक्षान्तरं पञ्च, न तु षट्, यथा शैक्षात् । तानि च पञ्च शैक्षवद् वक्तव्यानि ।

अत्र विंशतिचित्तानां समनन्तरप्रत्ययस्यासूत्रितस्य सूत्ररूपाः संग्रहश्लोकाः ।

प्रायोगिकाच्छुभात् कामे दशाष्टभ्यस्तदन्यतः ।
शुभान्नवैकादशतस्तत् सप्त क्लिष्टतः पृथक् ॥
चतुर्दशभ्यस्तोऽष्टावैर्यापथि[illegible] ।
ते तु सप्ततः षट् शैल्पस्थानिकात् तत्तु सप्ततः ॥
नैर्मिताद् द्वे द्वयोश्चैतद्रूपे प्रायोगिकाच्छुभात् ।
द्वादशैतत् तु दशतः शुभादष्टावयत्नजात् ॥
तत् पञ्चभ्यो नव क्लिष्टात् तदेकादशतः पुनः ।
विपाकजैर्यापथिकात् सप्त तत् पञ्चतो द्वयम् ॥
द्वे अभिज्ञाफलाच्चित्ताद् द्वाभ्यामेव तथैव तत् ।
आरूप्ये यात्निकात् सप्त कुशलात् षड्भ्य एव तत् ॥
अयात्निकाच्छुभात् सप्त चतुर्भ्यस्तत् पुनः स्मृतम् ।
क्लिष्टादष्टौ दशभ्यस्तत् षट् चित्तानि विपाकजात् ॥
चतुर्भ्यस्तत् तु षट् शैक्षाच्चतुर्भ्यः पुनरेव तत् ।
अशैक्षात् पञ्च तदपि पञ्चभ्यः समनन्तरम् ॥

*ईर्यापथशिल्पाभिसंस्करणप्रवृत्तत्वात्* । न पुनरेभ्यः प्रायोगिकमुत्पद्यत इत्यधिकृतम् । अतोऽसम्भवादैर्यापथिकशैल्पस्थानिकानन्तरं प्रायोगिकं नोत्पद्यते; तदन्याभिसंस्करणप्रवृत्तत्वादित्यभिप्रायः । यस्मादैर्यापथिकमीर्यापथाभि-

---

१. त्रैधातुकानि—का० ।

२. ०प्रतिलम्भिकं—का० ।

दुर्बलानभिसंस्कारवाहित्वाच्चैतानि न प्रायोगिकानुकूलानि । निष्क्रमणचित्तं त्वनभिसंस्कारवाहीति युक्तोऽस्य प्रायोगिकचित्तानन्तरमुत्पादः ।

एवं तर्हि क्लिष्टेभ्योऽपि प्रायोगिकं नोत्पद्यते, विगुणत्वात् ? तथापि क्लेशसमुदाचारपरिखिन्नस्य तत्परिज्ञानाद् युक्तः प्रायोगिकसम्मुखीभावः । कामावचरमुपपत्तिप्रतिलम्भिकं पटुत्वात् शैक्षाशैक्षाभ्यां रूपावचरप्रायोगिकाच्चानन्तरमुत्पद्यते । अनभिसंस्कारवाहित्वात् तस्मादेतानि नोत्पद्यन्ते । रूपावचरक्लिष्टानन्तरं

---

संस्करणे प्रवृत्तम्, गमनाद्याकारत्वात् । शैल्पस्थानिकं च शिल्पाभिसंस्करणे प्रवृत्तम्, 'इदमेव करोमीदमेव करोमि' इत्येवमाकारप्रवृत्तत्वात् । *दुर्बलानभिसंस्कारवाहित्वाच्च* विपाकजानन्तरं प्रायोगिकं नोत्पद्यते । तद्धि विपाकजमव्याकृतत्वाद् दुर्बलम्; पूर्वकर्मापेक्षयात् । अयत्नेन च प्रवृत्तेरनभिसंस्कारवाहीति । अथ वा—ईर्यापथशिल्पाभिसंस्करणप्रवृत्तत्वाद् ऐर्यापथिकशैल्पस्थानिकानन्तरं न प्रायोगिकमुत्पद्यते । दुर्बलानभिसंस्कारवाहित्वाच्च ऐर्यापथिकशैल्पस्थानिकविपाकजानन्तरं प्रायोगिकं नोत्पद्यते; सर्वेषामव्याकृतत्वेन दुर्बलत्वात् । अनभिसंस्कारवाहित्वाच्च विपाकजस्यैवैकस्य ऐर्यापथिकशैल्पस्थानिकयोरपि वा प्रायोगिकाभिसंस्काराभावात् । अन्यव्यापारपरत्वमात्राद्धि तयोरभिसंस्करणप्रवृत्तत्वमुक्तम् । अथ वा—अयमेवास्य वाक्यस्याभिसम्बन्धः—ईर्यापथशिल्पाभिसंस्करणप्रवृत्तत्वात्, दुर्बलानभिसंस्कारवाहित्वाच्चैतानि विपाकजैर्यापथिकशैल्पस्थानिकानि *न प्रायोगिकानुकूलानि* । अतो न तदनन्तरं प्रायोगिकमुत्पद्यत इति सम्बन्धनीयम् । *निष्क्रमणचित्तं त्वनभिसंस्कारवाहीति* । प्रायोगिकचित्तप्रवाहाद् यदन्यच्चित्तं तन्निष्क्रमणचित्तम् । तेन ह्यसौ योगी ततः प्रवाहान्निष्क्रामति; तदवसानत्वात् । निष्क्रमणचित्तमनभिसंस्कारवाह्यनाभोगवाहीति युक्तोऽस्य निष्क्रमणचित्तस्य विपाकजादीनामन्यतमस्वभावस्य *प्रायोगिकचित्तादनन्तरमुत्पादः* ।

*एवं तर्हीति* । यदि न प्रायोगिकानुकूलानीति विपाकजादिभ्योऽनन्तरं प्रायोगिकं नोत्पद्यते, एवं तर्हि *क्लिष्टेभ्योऽपि प्रायोगिकं नोत्पद्यते विगुणत्वात्* । विगुणो हि क्लिष्टो धर्मः कुशलस्य नानुकूल इत्यर्थः; तद्विरोधित्वात् । *तथापीति* विस्तरः । यद्यपि तद्विगुणम्, तथापि क्लेशसमुदाचारपरिखिन्नस्य योगिनस्तत्परिज्ञानात् क्लेशसमुदाचारपरिज्ञानाद् युक्तः प्रायोगिकसम्मुखीभावः । तत्परिज्ञानमेव हि प्रायोगिकं चित्तमिति । *पटुत्वादिति* । *कामावचरमुत्पत्तिप्रतिलम्भिकं* पटु तच्छैक्षादिभ्यो व्युत्थानचित्तं सम्भवति । अत एव च क्लिष्टसमाध्युत्पीडितस्य तदाश्रयणं भवति । *अनभिसंस्कारवाहित्वात्* तु तस्य *तस्माच्छैक्षादीनि नोत्पद्यन्ते* ।

कामावचरमुपपत्तिप्रतिलम्भिकमुत्पद्यते; पटुत्वात् । आरूप्यावचरक्लिष्टानन्तरं तु रूपावचरमुपपत्तिप्रतिलाम्भिकं नोत्पद्यते; अपटुत्वादिति ॥

त्रयो मनस्काराः—१. स्वलक्षणमनस्कारः, तद्यथा—"रूपणालक्षणं रूपम्" इत्येवमादि; २. सामान्यलक्षणमनस्कारः षोडशाकारसम्प्रयुक्तः; ३. अधिमुक्तिमनस्कारः, अशुभाप्रमाणारूप्यविमोक्षाभिभ्वायतनकृत्स्नायतनादिषु ।

त्रिविधमनस्कारानन्तरमार्यमार्गं सम्मुखीकरोति, तस्मादपि त्रिविधं मनस्कारम् । एवं सति युक्तमिदं भवति—"अशुभासहगतं स्मृतिसम्बोध्यङ्गं भावयति" इति ?

सामान्यमनस्कारानन्तरमेवार्यमार्गं सम्मुखीकरोति । तस्मात् तु त्रिविधमित्यपरे ।

अशुभया तु चित्तं दमयित्वा सामान्यमनस्कारानन्तरमार्यमार्गं[1] सम्मुखी-

---

*रूपावचरं तूपपत्तिप्रतिलम्भिकं* न कामावचरवत् पटु । तस्मात् क्लिष्टसमाध्युत्पीडितस्य तदाश्रयणं न भवति, प्रायोगिकमेवाश्रीयते । अन्योन्यानन्तरं चित्तानामुत्पादः ।

तानि च मनस्कारवशादुत्पद्यन्त इत्यतो मनस्कारोपक्षेपः । *त्रयो मनस्कारा इति* । विस्तरः—स्वलक्षणस्य मनसिकरणं *स्वलक्षणमनस्कारः । तद्यथा रूपणालक्षणं रूपमित्येवमादि* । आदिशब्देनानुभवलक्षणा वेदनेत्येवमादि । अनित्यत्वादिमनसिकरणं *सामान्यलक्षणमनस्कारः षोडशाकारसम्प्रयुक्तः* । अनित्यतो यावन्नैर्याणिकत इति । अधिमुक्त्या न भूतार्थे मनसिकरणम*धिमुक्तिमनस्कारः । अशुभायां यावत् कृत्स्नायतनादिषु* । आदिशब्देन ऋद्ध्यादीनामनभिनिर्हारे लघुत्वाद्यधिमोक्षो गृह्यते, तद्यथा—"महर्धिको महानुभावः परीत्तां पृथिवीसंज्ञामधितिष्ठति अप्रमाणामप्संज्ञाम् । स आकांक्षन् पृथिवीं चलयति" इति विस्तरः ।

अशुभया सहगतं *सम्बद्धमशुभासहगतम्* । एतदुक्तं भवति—अशुभामनस्कारानन्तरं *स्मृतिसम्बोध्यङ्गं भावयति* जनयति, उत्पादयतीति । स्मृतिसम्बोध्यङ्गं ह्यार्यमार्ग इत्यस्त्यधिमुक्तिमनस्कारानन्तरमार्यमार्गोत्पाद इति दर्शयति ।

आह—यदि सामान्यमनस्कारानन्तरमेव नाधिमुक्तिमनस्कारानन्तरमार्यमार्गं सम्मुखीकरोति, इदं कथं नीयते—अशुभासहगतं स्मृतिसम्बोध्यङ्गं भावयतीति ? अत इदमुच्यते—*अशुभया तु चित्तं दमयित्वेति* विस्तरः । प्रयोगावस्थायामशुभया चित्तं दमयित्वा यावदवसाने *सामान्यमनस्कारानन्तरमार्यमार्गं सम्मुखीकरोति*, अतो न सूत्रविरोध इति ।

---

१. मार्गं—का० ।

करोति। अतः पारम्पर्यमभिसन्धायोक्तम्—"अशुभासहगतं स्मृतिसम्बोध्यङ्गं ·ावयति" इति।

आर्यमार्गानन्तरमपि सामान्यमनस्कारमेवेत्यपरे।

स्यात् तावदनागम्यादित्रिभूमिसन्निश्रयेण[1] नियामावक्रान्तौ तन्मार्गानन्तरं कामावचरं सामान्यमनस्कारं सम्मुखीकुर्याद्, अथ द्वितीयादिध्यानसन्निश्रयेण नियामावक्रान्तौ कथम्? न हि कामावचरः शक्योऽतिविप्रकृष्टत्वात्। न च तद्भूमिकः प्रतिलब्धोऽन्यत्र निर्वेधभागीयात्। न चार्यो निर्वेधभागीयं पुनः सम्मुखीकरोति। न हि प्राप्तफलस्य तत्प्रयोगसम्मुखीभावो युक्त इति अन्योऽप्यस्य तज्जातीयः सामान्यमनस्कारो भावनां गच्छति। तद्यथा—"सर्व-

---

*आर्यमार्गानन्तरमपीति* विस्तरः। न केवलं सामान्यमनस्कारानन्तरमार्यमार्गं सम्मुखीकरोति, आर्यमार्गानन्तरमपि सामान्यमस्कारमेव सम्मुखीकरोतीत्यपरे।

*स्यात्तावदिति* विस्तरः। *अनागम्यादीति*। आदिशब्देनानागम्यप्रथमध्यानध्यानान्तर-*त्रिभूमिसन्निश्रयेण नियामावक्रान्तौ तन्मार्गानन्तरं* त्रिमार्गानन्तरं *कामावचरं सामान्यमनस्कारं* श्रुतमयं चिन्तामयं वा *सम्मुखीकुर्यात्*; सन्निकृष्टत्वात्।

*अथ द्वितीयादिध्यानसन्निश्रयेण* द्वितीयतृतीयचतुर्थध्यानसन्निश्रयेण *नियामावक्रान्तौ* कथमार्यमार्गानन्तरं कथं *सामान्यमनस्कारं सम्मुखीकरोति*। न हि *कामावचरः शक्यः* सम्मुखीकर्तुमिति वाक्यशेषः। कस्मात्? प्रथमध्यानव्यवहितत्वेना*तिविप्रकृष्टत्वात्*। ब्रूयास्त्वम्—द्वितीयादिध्यानभूमिकमेव सम्मुखीकरिष्यतीति? अत आह—न च *तद्भूमिकः प्रतिलब्धोऽन्यत्र निर्वेधभागीयादिति*। द्वितीयध्यानादिभूमिकोऽनागम्यादिभूमिको वानास्रवो मार्गोऽन्यत्र निर्वेधभागीयान्न प्रतिलब्ध आसीत्। अनाकारापतितस्तु लौकिको मार्गः प्रतिलब्ध आसीत्, न तु सः। तस्मायार्याय व्युत्थानार्थं रोचते। निर्वेधभागीयं तर्हि सामान्यमनस्कारं सम्मुखीकरिष्यतीति? अत आह—*न चार्यो निर्वेधभागीयमिति विस्तरः*। *किमर्थमिति* चेत्? अत आह—*न हि प्राप्तफलस्य तत्प्रयोगसम्मुखीभावो युक्त* इति। प्रयोगस्य कृतार्थत्वान्निहीनत्वाच्च निर्वेधभागीयानि चार्यमार्गस्य प्रयोग इति। *अन्योऽप्यस्य तज्जातीय* इति। यः सत्यालम्बनत्वान्निर्वेधभागीयजातीयः सामान्यमनस्कारो भावनां गच्छति। अनास्रवमार्गोत्पत्तिकाले प्राप्यत इत्यर्थः।

---

१. ०संनिःश्रयेण—का०।

संस्कारा अनित्याः", "सर्वधर्मा अनात्मानः", "शान्तं निर्वाणम्" इति, तत् सम्मुखीकरिष्यति ?

तदेतन्न वर्णयन्ति। अनागम्यं निश्रित्यार्हत्त्वं प्राप्नुवतः तद्भूमिकं कामावचरं वा व्युत्थानं चित्तम्। आकिञ्चन्यायतनं निश्रित्य तद्भूमिकं भावाग्रिकं वा। शेषासु स्वभूमिकमेव। कामधातौ त्रयो मनस्काराः—श्रुतचिन्तामयोपपत्तिप्रतिलम्भिकाः, भावनामयो नास्ति। रूपधातौ त्रयः—श्रुतभावनामयोपपत्तिप्रतिलम्भिकाः, चिन्तामयो नास्ति। यदा चिन्तयितुमारभन्ते तदैषां समाधिरेवोपतिष्ठते। आरूप्यधातौ भावनामयोपपत्तिप्रतिलम्भिकौ। तत्र पञ्चविधमनस्कारानन्तरमार्यमार्गसम्मुखीभावोऽन्यत्रोपपत्तिप्रतिलम्भिकेभ्यः; प्रयोगप्रतिबद्धत्वात्। मार्गानन्तरं तूपपत्तिप्रतिलम्भिकस्यापि कामावचरस्य सम्मुखीभावः; पटुत्वादिति ॥ ७२ ॥

यानि द्वादश चित्तानि उक्तानि, एषां कतमस्मिंश्चित्ते कतीनां लाभः ?

**क्लिष्टे त्रिधातुके[1] लाभः षण्णां षण्णां द्वयोः**

कामावचरे हि[2] **क्लिष्टे चित्ते सम्मुखीभूते षण्णां चित्तानां लाभः।**

---

कथम् ? 'शान्तं निर्वाणम्' इति सामान्यमनस्कारः; सर्वनिर्वाणालम्बनत्वात्। *तत्सम्मुखीकरिष्यतीति*। *सर्वसंस्कारा अनित्या इति* वा, *सर्वधर्मा अनात्मान* इति वा, *शान्तं निर्वाणमिति* वा आर्यमार्गानन्तरं सम्मुखीकरिष्यतीति।

*तदेतन्न वर्णयन्ति*। कस्मात् ? एषां तज्जातीयानां सामान्यमनस्काराणां निर्वेधभागीयप्रतिबद्धभावनत्वात्। न क्लिेषामनास्रवमार्गप्रतिबद्धाभावेनेति। अनागम्यं *निश्रित्येति* विस्तरः। *तद्भूमिकमिति*। अनागम्यभूमिकम्। *तद्भूमिकं भावाग्रिकं* वेति। आकिञ्चन्यायतनभूमिकं भावाग्रिकं वा यदि भवाग्रोपपन्नो भवति। *शेषासु* भूमिषु, *स्वभूमिकमेव* व्युत्थानचित्तम्, नान्यभूमिकम्; अन्यभूमिकस्य प्रयोगसाध्यत्वात्। स्वभूमिकमनभिसंस्कारेण भवतीति।

*प्रयोगप्रतिबद्धत्वादिति*। कस्य ? आर्यमार्गस्य। मार्गानन्तरं तूपपत्तिप्रतिलम्भिकस्यापि कामावचरस्य सम्मुखीभाव इत्यधिकृतम् ॥ ७२ ॥

"*क्लिष्टे त्रिधातुके लाभः षण्णां षण्णां द्वयोः*" इति। यथासंख्येन निर्देशः। कामावचरे क्लिष्टे षण्णां चित्तानां लाभः। प्रतिलम्भ इत्यर्थः। रूपावचरे षण्णाम्, आरूप्यावचरे द्वयोरिति। तेनाह—*कामावचरे हि क्लिष्ट इति* विस्तरः। *तैरसमन्वा-*

---

१. त्रैधातुके—का०। २. का० पुस्तके नास्ति।

तैरसमन्वागतस्य कामावचरस्य कुशलस्य विचिकित्सया कुशलमूलप्रतिसन्धानाद्, धातुप्रत्यागमनाच्च । अकुशलनिवृताव्याकृतयोः रूपावचरस्य[1] क्लिष्टस्य धातुप्रत्यागमनात्, परिहाणितश्च । आरूप्यावचरस्य क्लिष्टस्य परिहाणितः शैक्षस्य च।

रूपावचरे[2] क्लिष्टे षण्णां लाभः । रूपावचराणां त्रयाणाम्, कामा-

गतस्येति । तैः षड्भिश्चित्तैरसमन्वागतस्य पुद्गलस्य । कथम् ? इह *कुशलप्रतिसन्धानं* सम्यग्दृष्ट्या वा, *विचिकित्सया* वा । तद्यदि विचिकित्सया प्रतिसन्धत्ते, तत्र विचिकित्सासम्प्रयुक्ते क्लिष्टे चित्ते सम्मुखीभूते रूपधातोरारूप्यधातोर्वा कामधातुं प्रत्यागच्छति । तदास्यान्तराभवप्रतिसन्धिचित्तेऽवश्यक्लिष्टे तस्य कुशलस्य लाभस्तेनासमन्वागतस्येति । *अकुशलनिवृताव्याकृतयो*रिति । विस्तरः—अकुशलं च निवृताव्याकृतं च कामावचरमेवाधिकाराद्, रूपावचरस्य च निवृतस्य पृथक् पाठात् । तयोरकुशलनिवृताव्याकृतयो रूपावचरस्य क्लिष्टस्य । किम् ? लाभ इति प्रकृतम् । कथं लाभः ? इत्याह—*धातुप्रत्यागमनात् परिहाणितश्चे*ति । यदा रूपधातोरारूप्यधातोर्वा कामधातुं प्रत्यागच्छति तदास्यान्तराभवप्रतिसन्धिचित्तेऽवश्यं क्लिष्टेऽकुशलनिवृताव्याकृतयोरन्यतरस्मिन् सम्मुखीभूते तयोरकुशलनिवृताव्याकृतयोर्लाभो भवति; पूर्वविहीनत्वात् तेनासमन्वागतस्य । परिहाणितश्च । यदा च कामवैराग्यात् परिहीयते तदास्य क्लिष्टे परिहाणिचित्ते सम्मुखीभूते तयोः क्लिष्टयोर्लाभस्तेनासमन्वागतस्य । रूपावचरस्य च क्लिष्टस्य धातुप्रत्यागमनात् । यदारूप्यधातोः कामधातुं प्रत्यागच्छति तदास्यान्तराभवप्रतिसन्धिचित्तेऽवश्यं क्लिष्टे रूपावचरस्य क्लिष्टस्य पूर्वविहीनस्य लाभो भवति तेनासमन्वागतस्य । परिहाणितश्च । यदा रूपवैराग्यात् परिहीयते कामावचरेण चित्तेन, तदास्य वैराग्यत्यक्तस्य रूपावचरस्य क्लिष्टस्य लाभो भवति तेनासमन्वागतस्य । *आरूप्यावचरस्य क्लिष्टस्य परिहाणितः* । यदा कामावचरेण चित्तेनारूप्यवैराग्यात् परिहीयते, तदास्यारूपावचरस्य क्लिष्टस्य लाभो भवति तेनासमन्वागतस्य । *शैक्षस्य च* । परिहाणित इत्यधिकृतम् । यदा कामावचरेण चित्तेनार्हत्त्वात् परिहीयते तदास्य शैक्षचित्तस्य लाभो भवति तेनासमन्वागतस्य । एवं तावत् कामावचरे क्लिष्टे चित्ते सम्मुखीभूते षण्णां चित्तानां लाभ उक्तस्तैरसमन्वागतस्य ।

*रूपावचरे क्लिष्टे चित्ते* सम्मुखीभूते *षण्णां लाभ*स्तैरसमन्वागतस्य । *रूपावचराणामिति* । विस्तरः—यदा आरूप्यधातो रूपधातुं प्रत्यागच्छति तदास्य

१. रूपावचरस्य च—का० । २. रूपावचरेऽपि—का० ।

वचरस्य चानिवृताव्याकृतस्य; धातुप्रत्यागमनात् । आरूप्यावचरस्य क्लिष्टस्य शैक्षस्य च परिहाणितः ।

**आरूप्यावचरे तु क्लिष्टे द्वयोर्लाभः** । परिहाणितस्तस्यैव क्लिष्टस्य शैक्षस्य च ।

**शुभे ।**

**त्रयाणां रूपजे**

रूपावचरे कुशले **त्रयाणां** चित्तानां लाभः, तस्यैव कुशलस्य कामरूपावचरयोश्चानिवृताव्याकृतयोः ।

**शैक्षे चतुर्णां**

तस्यैव शैक्षस्य कामरूपावचरयोश्चानिवृताव्याकृतयोरारूप्यावचरस्य च कुशलस्य । आर्यमार्गेण कामरूपधातुवैराग्ये ।

---

रूपावचरान्तराभवप्रतिसन्धिचित्तेऽवश्यं क्लिष्टे रूपावचराणां त्रयाणां कुशलस्योत्पत्तिप्रतिलम्भिकस्य क्लिष्टस्यानिवृताव्याकृतस्य च निर्माणचित्तस्याग्रजप्राप्तिसद्भावात् । *कामावचरस्य चानिवृताव्याकृतस्य* निर्माणचित्तस्यैव । *आरूप्यावचरस्य क्लिष्टस्य शैक्षस्य च लाभः । परिहाणितो* रूपावचरेण चित्तेनार्हत्त्वात् परिहीयमाणस्य तदसमन्वागतस्य ।

एवं रूपावचरेऽपि क्लिष्टे षण्णां लाभ उक्तः ।

*आरूप्यावचरे तु क्लिष्टे द्वयोर्लाभ*स्ताभ्यामसमन्वागतस्य । *परिहाणित* आरूप्यावचरेण चित्तेनार्हत्त्वात् परिहीयमाणस्यैव क्लिष्टस्य यस्यैकदेशः सम्मुखीभूतः *शैक्षस्य* चेति ।

"*रूपावचरे कुशले त्रयाणाम्*" इति । कुशल इति जातिनिर्देशः । कुशले कस्मिंश्चिद् *रूपावचरे त्रयाणां लाभः* सम्भवः । कथम् ? आद्ये तावद् रूपावचरे कुशले चित्ते सम्मुखीभूते तस्यैव कुशलस्य रूपावचरस्य लाभस्तेनासमन्वागतस्य । मौलध्यानसंगृहीते तु कुशले चित्ते सम्मुखीभूते कामावचररूपावचरयोरनिवृताव्याकृतयोर्निर्माणचित्तयोर्लाभस्ताभ्यामसमन्वागतस्य । इत्येवं कुशले रूपावचरे चित्ते सम्मुखीभूते त्रयाणां लाभ इत्युच्यते, न तु युगपल्लाभ इति ।

"*शैक्षे चतुर्णाम्*" इति । शैक्षे चित्ते सम्मुखीभूते दुःखे धर्म ज्ञानक्षान्तिचित्ते तस्यैव शैक्षस्य दुःखे धर्मज्ञानक्षान्तिकलापस्वभावस्य लाभस्तेनासमन्वागतस्य । *कामरूपावचरयोश्चानिवृताव्याकृतयोरारूप्यावचरस्य च कुशलस्य* । कस्मिन् कलापे ? इत्याह—*आर्यमार्गेण कामरूपवैराग्ये* । कथमिति ? यदा अयमनागम्यभूमिकेनार्य-

मार्गेण कामवैराग्यं करोति, तदा नवविमुक्तिमार्गसंगृहीते शैक्षे चित्ते सम्मुखीभूते कामारूपावचरयोरनिवृताव्याकृतयोर्निर्माणचित्तयोर्लाभस्ताभ्यामसमन्वागत -स्य। यदा तु षड्भूमिकानामार्यमार्गाणामन्यतमेन रूपवैराग्यं करोति, तदाद्य-प्रकारचित्ते शैक्षे सम्मुखीभूतेऽतीतानागतप्राप्तिन्यायेनारूप्यावचरस्य कुशलस्य लाभस्तेनासमन्वागतस्य। आर्यमार्गग्रहणं सास्रवचित्तनिरासार्थम्। शैक्षे चित्ते सम्भूतेऽयं लाभो वर्ण्यते।

अत्राचार्यगुणमतिर्व्याचिष्टे—

*"शैक्षे चतुर्णाम्"*। तस्यैव शैक्षस्य कामरूपावचरयोश्चानिवृताव्याकृतयो-रारूप्यावचरस्य च कुशलस्येति। कथम्? इत्यतो ब्रवीति—आर्यमार्गेण कामरूपवैराग्ये। यदा अयमनागम्यभूमिकेनार्यमार्गेण कामधातुवैराग्यं करोति, तदा यो नवमो विमुक्तिमार्गस्तस्मिन् मौलध्यानभूमिकमपूर्वकं शैक्षं लभत इति शैक्षस्य लाभ उच्यते। कामरूपावचरयोश्चानिवृताव्याकृतयोर्निर्माण-चित्तयोरेव तस्मिन् लाभः। षड्भूमिकेन त्वार्यमार्गेण कामरूपवैराग्ये। यो नवमो विमुक्तिमार्गस्तस्मिन्नारूप्यावचरं कुशलं प्रतिलभत इति।

तच्छिष्योऽप्याचार्यवसुमित्रस्तमेवार्थं तेन वाक्येन तैरेव पदव्यञ्जनैर्लिखति।

तदेतदयुक्तं व्याख्यानम्; न ह्येवमेकवाक्येन व्याख्यातार्थो घटते, वाक्य-भेदेन घटते। 'तस्यैव शैक्षस्य लाभः' इत्येतदेकं वाक्यम्, 'कामरूपावचरयोश्च यावत् कामरूपधातुवैराग्ये' इत्यपरं वाक्यम्। आर्यमार्गेण कामरूपधातुवैराग्य इत्येतेन विशेषेण तस्यैव शैक्षस्येत्येतत् पूर्वोक्तं न विशेष्यम्; वाक्यान्तरत्वात्। अतद्वतो ह्ययं चित्तलाभो वर्ण्यते; "चित्तलाभो ह्यतद्वतः" (अभि० को० २.७३) इति वचनात्। कथम्? नवमे विमुक्तिमार्गे शैक्षचित्तवतः पुद्गलस्य शैक्षचित्त-लाभो व्यवस्थाप्यते। ननु चोक्तम्—मौलध्यानभूमिकपूर्वकं शैक्षं लभ्यत इति? न; अतिप्रसङ्गात्। रूपावचरमपि कुशलं चित्तं मौलध्यानभूमिकमपूर्वं प्रति-लभ्यत इति तस्यापि लाभ इति प्रसज्येत।

*आचार्यवसुमित्र* आह—शैक्षचित्तस्थितस्य कामधातुवैराग्ये कुशल-मूष्मगतावस्थायामेव रूपावचरं नियामावक्रान्तौ लब्धमिति कृत्वा न गण्यत इति।

तदयुक्तम्; शैक्षस्याप्यगणनाप्राप्तेः। शैक्षमपि हि दर्शनमार्गावस्थायां लब्ध-मिति न भवता तथा स्थापयितव्यमिति प्राप्नोति। अतश्चेदमपव्याख्यानमिति निश्चीयते। यस्मादाचार्येणैव मिश्रश्लोकव्याख्यान एवं लिखितम्—शैक्षस्या-शैक्षस्य च नियामावक्रान्त्यर्हत्त्वयोरिति।

**तस्य शेषिते ॥ ७३**

शेषं कृतं शेषितम् । यत्र चित्ते लाभो न व्याख्यातः, तत्र तस्यैव लाभो द्रष्टव्यः, नान्येषाम्[1] ।

अन्ये पुनरभेदेनाहुः—

"क्लिष्टे चित्ते नवानां हि लाभ इत्युच्यते बुधैः ।
षण्णां तु कुशले चित्ते तस्यैवाव्याकृते खलु ॥"

---

*शेषं कृतं शेषितम्* इति । प्रातिपदिकधातुरूपमेतदिति दर्शयति । *यत्र चित्ते लाभो न व्याख्यातस्तत्र तस्यैव लाभ* इति । कथं कृत्वा ? कामावचरे तावत् कुशलचित्त इयतां चित्तानां लाभ इति न व्याख्यातः, तत्र तस्यैव लाभो नान्येषाम् । तद्यथा सम्यग्दृष्ट्या कुशलमूलप्रतिसन्धाने कामावचरे कुशले चित्ते सम्मुखीभूते तस्यैव कुशलस्य चित्तस्य लाभस्तेनासमन्वागतस्य । नान्येषां क्लिष्टानां त्रैधातुकानामपि; पूर्वप्रतिलब्धत्वात् । न कामावचरस्यानिवृताव्याकृतस्य; विपाकजादीनां सहजप्राप्तित्वात् । निर्माणचित्तस्य प्राप्त्यभावात् । न रूपारूप्यावचराणां कुशलादीनां शैक्षाशैक्षयोश्च प्राप्त्यभावात् । अनिवृताव्याकृतेऽपि कामावचरे चित्ते लाभो न व्याख्यातः । तत्र तस्यैव लाभस्तेनासमन्वागतस्य; "अव्याकृताप्तिः सहजा" (अभि०को०२.३८) इति कृत्वा । नान्येषां कुशलादीनां पूर्वप्रतिलब्धत्वात् । तथैव केषाञ्चित् प्राप्त्यभावाच्च । निर्माणचित्ते तु सम्मुखीभूते न कस्यचिल्लाभ इति न वक्तव्यम् । यत्र हि क्लिष्टेऽन्यत्र वा कस्यचिल्लाभो नास्ति, न तदुच्यते । क्लिष्ट एव हि त्रैधातुके षण्णां यावद् द्वयोर्लाभो न त्ववश्यमित्यवधारणम्, रूपावचरेऽप्यनिवृताव्याकृते सम्मुखीभूते तस्यैव लाभः, नान्येषाम् । पूर्ववद् वक्तव्यम् । तथारूप्यावचरे आकाशानन्त्यायतनसामन्तकाद्यप्रकारसंगृहीते कुशलचित्ते सम्मुखीभूते तस्यैव लाभस्तेनासमन्वागतस्य । नान्येषां केषञ्चित्; पूर्वप्रतिलब्धत्वात्, केषाञ्चित् प्राप्त्यभावात् ।

एवमनिवृताव्याकृते शैक्षे च ।

*अन्ये पुनरभेदेनाहुरिति* । के ? मिश्रककाराः । अभेदेनेति त्रैधातुकानां क्लिष्टादीनामपृथक्करणात् ।

"षण्णां तु कुशले चित्ते" इति यदुक्तं तन्न्यूनं लक्षणम् । कुशलं हि त्रैधातुकं सास्रवमनास्रवं च ।

---

१. नान्यस्य—का० ।

तत्र सप्तानां कुशले चित्त इति वक्तव्यम्। कामावचरस्य कुशलस्य सम्यग्दृष्ट्या कुशलमूलप्रतिसन्धानात्, कामरूपावचरयोरनिवृताव्याकृतयोर्वैराग्यतः, रूपारूप्यावचरयोः कुशलयोस्ततस्यसमाधिलाभतः, शैक्षाशैक्षस्य च नियामावक्रान्त्यर्हत्त्वयोः। शेषमत एव व्याख्यानादवधार्यम्।

---

*तत्र सप्तानां कुशले चित्ते इति वक्तव्यं* न षण्णामिति तद्दर्शयन्नाह—*कामावचरस्येति* विस्तरः। *कुशलमूलप्रतिसन्धानादि*ति व्याख्यातमेतत्। *अनिवृताव्याकृतयोर्वैराग्यत* इति। लौकिकेन लोकोत्तरेण वा मार्गेण कामधातोर्वैराग्ये नवमे विमुक्तिमार्गे कामरूपावचरयोर्निर्माणचित्तयोर्लाभस्ताभ्यामसमन्वागतस्य। *रूपारूप्यावचरयोः कुशलयोस्ततस्यसमाधिलाभत* इति। यदा रूपावचरमनागम्यं प्रथमतो लभते तदा रूपावचरस्य कुशलस्य लाभः। यदाकाशानन्त्यायतनसामन्तकं प्रथमतो लभते तदा रूपावचरस्य कुशलस्य लाभः। *शैक्षस्य चाशैक्षस्य च नियामावक्रान्त्यर्हत्त्वयोरित*। यदा नियाममवक्रामति, तदा शैक्षस्य दुःखे धर्मज्ञानक्षान्तिकलापस्य लाभः। यदार्हत्त्वं प्राप्नोति, तदा अशैक्षस्य क्षयज्ञानकलापस्य लाभः। इत्यास्ववस्थास्वमीभिश्चित्तैर्यथोक्तैः सप्तभिरसमन्वागतः समन्वागमनं प्रतिलभते।

*शेषमत एव व्याख्यानादुपधार्यमिति*। अत एव मदीयाद् व्याख्यानाच्छेषमवगन्तव्यम्। "क्लिष्टे चित्ते नवानां हि लाभः" इत्येकम्। "तस्यैवाव्याकृते खलु" इति द्वितीयम्। इत्येतच्छेषम्। कथम्? क्लिष्टे त्रिधातुके चित्ते नवानां लाभः। कामावचराणां चतुर्णां रूपावचराणां त्रयाणामारूप्यावचरस्य निवृतस्य शैक्षस्य चेति नवानां यथायोगं लाभस्तैरसमन्वागतस्य। कोऽयं यथायोगार्थः? कामावचरे च क्लिष्टे कुशलमूलप्रतिसन्धानेन वा धातुप्रत्यागमनेन वा कामावचरस्य कुशलस्य लाभः। अकुशलनिवृताव्याकृतयोश्च धातुप्रत्यागमनेन परिहाण्या वा लाभः। रूपावचर एव क्लिष्टे रूपावचरस्य कुशलस्य कामावचररूपावचरयोश्चानिवृताव्याकृतयोर्निर्माणचित्तयोर्धातुप्रत्यागमनाल्लाभः। कामावचरे रूपावचरे वा क्लिष्टे रूपावचरस्य वा क्लिष्टस्य वा धातुप्रत्यागमनात् परिहाणितो वा लाभः। कामावचरे रूपावचरे आरूप्यावचरे वा क्लिष्टे आरूप्यावचरक्लिष्टशैक्षयोः परिहाणितो लाभः—इति यथायोगार्थः।

*"तस्यैवाव्याकृते खलु"* इति। यच्छेषं तत्तुल्यमिति पूर्ववत्। अव्याकृतानां हि त्रैधातुकानामन्यतमस्मिन् सम्मुखीभूते तस्यैवाव्याकृतस्य लाभस्तेन तेनासमन्वागतस्य; "अव्याकृताप्तिः सहजा" (अभि० को० २.३८) इति सिद्धान्तात्।

संग्रहश्लोकः—

उपपत्ति-समापत्ति-वैराग्य-परिहाणिषु ।
कुशलप्रतिसन्धौ च चित्तलाभो ह्यतद्वतः ॥ इति ॥ ७३ ॥

समाप्तः प्रत्ययप्रसङ्गः ॥

**अभिधर्मकोशभाष्ये इन्द्रियनिर्देशो नाम**
**द्वितीयं कोशस्थानं समाप्तमिति**[1]

---

*संग्रहश्लोक* इति । सर्वम्—"*उपपत्तौ*" धातुप्रत्यागमनादिति वचनात् । "*समापत्तौ*" तस्यैव कुशलस्यैवमादिवचनात् ततस्त्यसमाधिलाभत इति वचनात् । "*वैराग्ये*" कामरूपधातुवैराग्य इति वचनात् । "*परिहाणौ*" परिहाणित इति वचनात् । "*कुशलप्रतिसन्धौ च*" इति विचिकित्सया सम्यग्दृष्टया च कुशलमूलप्रतिसन्धानादिति वचनात् । "*चित्तलाभः*" चित्तप्रतिलम्भः । "*अतद्वतः*" पुद्गलस्य तेरसमन्वागतस्येति वचनादिति ॥ ७३ ॥

**आचार्ययशोमित्रकृतायामभिधर्मकोशव्याख्यायाम्**

**इन्द्रियनिर्देशो नाम**

**द्वितीयं कोशस्थानं समाप्तम्**



---

१. ०श्रोलामावाकस्य—का० ।

# तृतीयं कोशस्थानम्

## ( लोकनिर्देशः )

इदमिदानीं वक्तव्यम्, कामरूपारूप्यधातुनैयम्येन[1] चित्तादीनां कृतो निर्देशः, तत्र कतमे ते कामरूपारूप्यधातव इति ? उच्यते—

नरकप्रेततिर्यञ्चो मनुष्याः [illegible] दिवौकसः ।
कामधातुः,

## स्फुटार्थाव्याख्यायां

## तृतीयं कोशस्थानम्

*इदमिदानीं वक्तव्यमिति* । द्वितीयस्य तृतीयस्य च कोशस्थानस्य सम्बन्धप्रदर्शनार्थमिदमुक्तम् । *चित्तादीनां कृतो निर्देश* इति । नियमस्य भावो नैयम्यम्, नियम एव वा नैयम्यम्, तेन चित्तादीनां कृतो निर्देशः;

"कुशलाकुशलं कामे निवृत्तानिवृत्तं मनः ।
रूपारूप्येष्वकुशलादन्यत्र" ( अभि० को० २.६७ ) इति वचनात् ।

आदिशब्देन चैत्तादीनां ग्रहणम्;

"सवितर्कविचारत्वात् कुशले कामचेतसि ।
कौकृत्यमिद्धाकुशलान्याद्ये ध्याने न सन्त्यतः ॥ ( अभि० २.२८ )
"ध्यानान्तरे वितर्कश्च ( अभि० २.३१ )

इति वचनात् ।

इन्द्रियाणां कामादिनैयम्येन कृतो निर्देशः;

"कामाप्तममलं हित्वा रूपाप्तं स्त्रीपुमिन्द्रिये ।
दुःखे च हित्वा रूपाप्तं सुखं चापोह्य रूपि च ॥" ( अभि० २.१२ )

इति वचनात् ।

तेन कामरूपारूप्यधातवो वक्तव्याः — इत्यतः पृच्छति—*तत्र कतमे ते कामरूपारूप्यधातव* इति । अत इदमुच्यते—"*नरकप्रेततिर्यञ्चः*" इति ।

---

१. रूप्यनैयम्येन—का० ।

चतस्रो गतयः; षड्[1] देवनिकायाः, तद्यथा—चातुर्महाराजिकाः[2], त्रयस्त्रिंशाः[3], यामाः, तुषिताः, निर्माणरतयः, परनिर्मितवशवर्त्तिनश्च—इत्येष **कामधातुः** सह भाजनलोकेन।

स एष कति स्थानानीति ? आह—

**स नरकद्वीपभेदेन विंशतिः ॥ १ ॥**

'स्थानानि' इति वाक्यशेषः सम्बध्यते। अष्टौ महानरकाः—सञ्जीवः,

---

विस्तरः—*चतस्रो गतय* इति। नरकप्रेततिर्यग्मनुष्यगतयश्चतस्रः साकल्येन कामधातावन्तर्गताः, देवगतिस्तु न साकल्येन। किं तर्हि ? षड् *देवनिकाया* इति दर्शयति। तत्र नीर्यन्त इति "नृ नये" (मा० धा० ९.२६), न रञ्जयन्तीति रञ्जेः (१.७२१)। नरेरिति "री गतिरेषणयोः" (मा० धा० ९.३२) इत्यस्य प्रतिषेधपूर्वस्य रूपम्। नीर्यन्तेऽस्मिन् सत्त्वा अपुण्येनेति *नरकाः*। न रञ्जयन्त इति नरका इत्यपरे। नरेरासादनार्थस्यैतद्रूपम्। रञ्जयन्ति प्रावन्ति नास्पृहयन्ति त्राणमिति नरका इत्या*चार्यसङ्घभद्रः*। भृशमितोऽपुनरावृत्तेरिताः *प्रेताः*, पिपासया परीता इत्यपरे। तिर्यग्गमनात् तिर्यञ्चः। मनस उद्भूतत्वा-*न्मनुष्याः*। मनोरपत्या इति लौकिकाः। द्यौरोको येषामिति *"दिवौकसः"*।

"कामप्रभावितो धातुः कामधातुः" (अभि० को० भा० ३ ३) इति वक्ष्यति। चत्वारो महाराजानो लोकपालाः—विरूढकः, विरूपाक्षः, धृतराष्ट्रः, वैश्रवणश्च, तेषु भवाः *चातुर्महाराजिकाः*। तन्मध्यगता इत्यर्थः। तद् यथा देवेषूपपद्यते, देवमध्ये उत्पद्यत इत्यर्थः। चतुर्महाराजस्थाने भवाश्चातुर्महाराजिकाः, मध्यपदलोपो गोरथवदित्यपरे। सहकृतसुकृतैरत्रोपपद्यन्त इति *त्रयस्त्रिंशाः*। समानपुण्यैरित्यर्थः। अष्टौ वसवः, द्वावश्विनौ, एकादश रुद्राः द्वादशादित्या इति तावत् प्रमुखत्वात् त्रयस्त्रिंशा इति लौकिकाः। तदनुसारेण प्रवचनेऽपि तथा नामव्यवहार इत्यपरे। दुःखाद् याताः पुण्येन नेति *यामाः*। दुःखानि वा यामयन्तीति यामाः। तुषा तुष्ट्या इताः, तुषो वा विद्यन्ते एषामिति *तुषिताः*। स्वयं कृते निर्माणे रतिरेषामिति *निर्माणरतयः*। परनिर्मितान् भोगान् वशे वर्त्तयितुं शीलमेषामिति *परनिर्मितवशवर्त्तिनः*।

*स्थानानीति वाक्यशेष* इति। यानि विंशतिस्थानानि स कामधातुः। यदि तु विंशतिस्थानः "विंशतिः" इति उत्तरपदलोपः क्रियेत, तद्यथा—पीततोया अश्वाः पीता इति, सुतरां श्लिष्यति। *सञ्जीवः*, यत्र सत्त्वान् म्रियमाणान्

---

१. षट् च—का०। २. चातुर्महाराजकायिकाः—का०।

३. त्रायस्त्रिंशाः—का०।

कालसूत्रः, सङ्घातः, रौरवः, महारौरवः, तपन; प्रतापनः, अवीचिश्चेति; चत्वारो द्वीपाः—जम्बूद्वीपः, पूर्वविदेहः, अवरगोदानीयः, उत्तरकुरुश्च; षट् चानन्तरोक्ता देवनिकायाः; तिर्यञ्चः प्रेताश्च—इत्येतानि विंशतिः स्थानानि कामधातुः परनिर्मितवशवर्त्तिभ्यो यावदवीचिः, सभाजनग्रहणेन तु यावद् वायुमण्डलम् ॥ १ ॥

एतस्माच्च कामधातोः—

**ऊर्ध्वं सप्तदशस्थानो रूपधातुः,**

कथमिति ? आह—

**पृथक् पृथक् ।**

**ध्यानं त्रिभूमिकं तत्र, चतुर्थं त्वष्टभूमिकम् ॥ २ ॥**

प्रथमद्वितीयतृतीयध्यानानि प्रत्येकं त्रिभूमिकानि ।

तत्र प्रथमध्यानम्—ब्रह्मकायिकाः, ब्रह्मपुरोहिताः, महाब्रह्माणः; द्वितीयम्—परीत्ताभाः, अप्रमाणाभाः, आभास्वराः; तृतीयम्—परीत्तशुभाः, अप्रमाणशुभाः,

---

वायवो जीवयन्ति । *कालसूत्रः*, यत्र कालसूत्राणि पातयित्वा सत्त्वास्तक्ष्यन्ते । *सङ्घातः*, यत्र मेषाकृतयः पर्वतादय उभयत आपतन्तः सत्त्वान् पीडयन्ति । *रौरवः*, यत्र सत्त्वाः पात्यमानाः परमविकृतं रुदन्ति । यत्र तु विशेषेण स *महारौरवः* । *तपनः*, यत्राग्न्यादिभिस्तप्यन्ते सत्त्वाः । यत्र तु विशेषेण स *प्रतापनः* । *अवीचिः*, यत्रातिमात्राग्निज्वालालिङ्गितानां सत्त्वानां सुखवीचिरन्तरं नास्ति । *जम्बुद्वीपः* जम्बुचिह्नद्वीपो द्वीपः । *पूर्वविदेहः* सुमेरोः पूर्वेण । *अवरगोदानीयः* पश्चिमेन । *उत्तरकुरु*रुत्तरेण । एवं नामान एते द्वीपा लोकप्रतीताः । *षट् चानन्तरोक्ता देवनिकायाः । इत्येतानि विंशतिः स्थानानी*ति । अष्टौ नरकाः, चत्वारो द्वीपाः, षट् चानन्तरोक्ताश्चातुर्महाराजिकादयः, प्रेतास्तिर्यञ्चश्चाभिन्ना इति विंशतिस्थानः कामधातुः । *यावद् वायुमण्डलमि*ति । अधस्ताद् यत्राब्मण्डलं भवति ॥ १ ॥

*"रूपधातुः"* इति । रूपप्रभावितो धातुः ।

*"पृथक् पृथक् ध्यानं त्रिभूमिकं तत्र चतुर्थं त्वष्टभूमिकम्"* इति । तत्र रूपधातौ सर्वेषामपि ध्यानानां मृदुमध्याधिमात्रभेदेन प्रत्येकं *त्रिभूमिकम्* । *ब्रह्मकायिका ब्रह्मपुरोहिता महाब्रह्माण* इति *प्रथमम्* । *परीत्ताभा अप्रमाणाभा आभास्वरा* इति *द्वितीयम्* । *परीत्तशुभा अप्रमाणशुभाः शुभकृत्स्ना* इति *तृतीयम्* ।

शुभकृत्स्नाः; चतुर्थम्—अनभ्रकाः, पुण्यप्रसवाः, बृहत्फलाः; अबृहाः, अतपाः, सुदृशाः, सुदर्शनाः, अकनिष्ठाः—इत्येतानि सप्तदश स्थानानि रूपधातुः।

**सह तन्निवासिभिः सत्त्वैः षोडशेति काश्मीराः। ब्रह्मपुरोहितेष्वेव किल स्थानमुत्कृष्टतरं महाब्रह्मणः परिगण इवाभिनिर्वृत्तमेकनायकम्, न तु भूम्यन्तरमिति॥**

---

*अनभ्रकाः पुण्यप्रसवा बृहत्फला* इति चतुर्थम्। तस्य त्वधिमात्रस्यैवानास्रव-ध्यानव्यत्रकिरणेन मृदुमध्याधिमात्राधिमात्रतराधिमात्रतमभेदभिन्नेन पुनः पञ्च स्थानान्तराणि—*अबृहा अतपाः सुदृशाः सुदर्शना अकनिष्ठाश्चेति।* अतश्चतुर्थं ध्यानमष्टभूमिकमित्युच्यते। तत्र बृहत्कुशलमूलनिर्यातत्वात् ब्रह्मा। कश्चासौ ? यो महाब्रह्मेत्युच्यते। ध्यानान्तरलाभात् पश्चात् पूर्वच्युत्युपपत्ति-लाभात् प्रमाणादिविशेषादिभिश्चास्य महान्, तस्य कायो निवास एषां विद्यते इति ब्रह्मकायिकाः। ब्रह्मा पुरोधीयते एषामिति ब्रह्मपुरोहिताः। आयुर्वर्णादिभिर्विशेषैर्महान् ब्रह्मा एषामिति महाब्रह्माणः। परीत्तैषामाभा स्वभूमिमपेक्ष्येति परीत्ताभाः। नाभाप्रमाणमेषां शक्यं प्रमातुमित्यप्रमा-णाभाः। कृत्स्नस्थानान्तरोद्भासनादाभास्वराः। मनोभूमिकं सुखं शुभ-मित्युच्यते, तदेषां स्वभूमिमपेक्ष्य परीत्तमिति परीत्तशुभाः। अप्रमाणं शुभमेषामप्रमाणशुभाः। शुभं कृत्स्नमेषामिति शुभकृत्स्नाः। न तदुत्कृष्टतरमन्यत्रास्ति सुखमित्यभिप्रायः। अभ्रमेषां भूमिसम्बन्धो नास्तीत्य-नभ्रकाः। सह सत्त्वेन तद्विमानोदयव्ययादिति वचनान्नैषामुपरि भूम्यन्तर-मस्तीत्यनभ्रकाः। अभ्रमिव ह्युपरि न भूमिसम्बन्ध इत्यपरे। आनिञ्ज्य-कर्मसम्भूतत्वात् पुण्येभ्यः प्रसव एषामिति पुण्यप्रसवाः। स्थानान्तरप्रतिबद्धं पार्थग्जनिकं सर्वोत्कृष्टं बृहदेषां फलमुद्भवति इति बृहत्फलाः। पृथग्जनामि-श्रत्वाच्छुद्ध आवास एषामिति शुद्धावासाः। शुद्धावासान्तरेभ्योऽनुत्कृष्टत्वाद-बृंहिता इत्यबृहाः। नाल्पेन वा कालेनात्मनः स्थानं वृंहन्ति जहतीत्यबृहाः। विशिष्टसमाधिलाभान्नात्र क्लेशास्तपन्तीत्यतपाः। कल्याणाशयत्वाद्वा न परांस्तापयन्तीत्यतपाः। परिशुद्धदर्शनत्वात् सुष्ठु पश्यन्तीति सुदृशाः। शोभ-दर्शनत्वात् सुदर्शनाः। तदुत्कृष्टतरभूम्यन्तराभावान्नैते कनिष्ठा इत्यकनिष्ठाः; ज्येष्ठभूतत्वात्। स्थानिन एते निर्दिष्टाः, कथमिदमुच्यते—*इत्येतानि सप्तदश स्थानानीति* ? स्थानिशब्देन स्थाननिर्देशाददोष एव। एवं बहिर्देशकनयेन सप्तदशस्थानान्येव रूपधातुः।

*षोडशेति काश्मीराः।* षोडशस्थानानि रूपधातुरिति काश्मीराः। *परिगण इवेति।* परिषण्ड इव। आटविककोट्ट इत्यपरे। *न तु भूम्यन्तरमिति।* न तु भूम्यन्तरसम्बन्धमिति ॥ २ ॥

**आरूप्यधातुरस्थानः**

न ह्यरूपिणां धर्माणां स्थानमस्ति । अतीतानागताविज्ञप्त्यरूपिणो हि धर्मा अदेशस्था इति नियमः । स तु—

**उपपत्त्या चतुर्विधः ।**

उपपत्तिभेदेन चतुर्विध आरूप्यधातुः । यदुत आकाशानन्त्यायतनम्, विज्ञानानन्त्यायतनम्, आकिञ्चन्यायतनम्, नैवसंज्ञानासंज्ञायतनमिति । न त्वेषां देशकृतमौत्तराधर्यं भिद्यते । यत्रैव हि देशे तत्समापत्तिलाभिनश्च्यवन्ते तत्रैवोपपद्यन्ते इति । पुनश्च तस्माच्च्यवमानानां तत्रैवान्तराभवोऽभिनिर्वर्त्तते ॥

यथा रूपिणां सत्त्वानां रूपं निश्रित्य प्रवर्त्तते चित्तसन्ततिः, एवमारूप्येषु किं निश्रित्य प्रवर्त्तते ?

**निकायं जीवितं चात्र निःश्रिता चित्तसन्ततिः ॥ ३ ॥**

निकायसभागं जीवितेन्द्रियं च निश्रित्येत्याभिधार्मिकाः ।

रूपिणामपि तर्हि सत्त्वानां किमर्थं न तदेव द्वयं निश्रित्य प्रवर्त्तते **चित्तसन्ततिः ?** दुर्बलत्वात् ।

---

*अतीतानागताविज्ञप्त्यरूपिणो हि धर्मा अदेशस्था* इति । अतीतानागतारूपिणोऽप्यदेशस्थाः । अविज्ञप्तिः रूपिणी वर्त्तमानाप्यदेशस्था । अरूपिणो वेदनादयस्तथैव वर्त्तमाना अप्यदेशस्थाः, किमङ्गातीतानागताः !

"*उपपत्त्या चतुर्विधः*" इति । कर्मनिर्वृत्ता जन्मान्तरे स्कन्धप्रवृत्तिः = उपपत्तिः, तया । *आरूप्यधातुश्चतुर्विधः* । चतुःप्रकारः । *यदुत आकाशानन्त्यायतनमिति* । विस्तरः—अनन्तमाकाशमिति समापत्तिप्रयोगकालाकारादाकाशानन्त्यम्, तस्य तदेव चायतनम् । एवमनन्तं विज्ञानं नास्ति किञ्चिदिति तदाकाराद् *विज्ञानानन्त्यायतनम्, आकिञ्चन्यायतनं* चोच्यते । संज्ञागण्डः = संज्ञाशल्यम्, आसंज्ञिकं संमोह इति संज्ञामान्द्योत्पत्तेर्नैवसंज्ञानासंज्ञायतनमित्युच्यते । *न त्वेषां देशकृतमौत्तराधर्यमिति* । अदेशस्थत्वात् ।

*यथा रूपिणामिति* विस्तरः । कि कृतेयमाशङ्का ? इह नैरात्म्ये सति चित्तचैत्तानां कामरूपधात्वो रूपनिश्रयाप्रवृत्तिः कल्प्येत, आरूप्येषु तु रूपं नास्तीति तत्र चित्तचैत्तप्रवृत्त्या न भवितव्यमित्याशङ्कानिवृत्त्यर्थमिदमुच्यते—

"*निकायं जीवितं चात्र निःश्रिता चित्तसन्ततिः*" इति । च-शब्देन पृथग्जनत्वासमन्वागमप्राप्तिजात्यादयः संगृह्यन्ते । *दुर्बलत्वादिति* । कस्यचित् सन्ततेः ।

तस्याः केन बलवत्त्वम् ? समापत्तिविशेषजत्वात् । सा हि समापत्ति-र्विभूतरूपसंज्ञा ।

तत एव तर्हि बलवत्त्वात् प्रवर्त्तिष्यते, किं पुनर्निश्रयेण ? इदं चापि वक्तव्यम्—यथा रूपिणां सत्त्वानां रूपं निश्रित्य प्रवर्त्तते निकायसभागः, जीवितेन्द्रियं च; एवमरूपिणां सत्त्वानां किं निश्रित्य प्रवर्त्तते ? तदेतद्[1] द्वय-मन्योऽन्यम् । रूपिणामपि तर्हि किमर्थं न तदेव द्वयमन्योन्यम् ? दुर्बलत्वात् तयोः । तत्रेदानीं केन बलवत्त्वम् ? समापत्तिविशेषजत्वात् । तदेतच्चित्तसन्ततौ समानं चित्तचैत्तेषु वा । तस्मान्नास्त्यरूपिणां सत्त्वानां चित्तसन्ततेरन्योन्यं निश्रय इति **सौत्रान्तिकाः** ।

अपि तु यस्याश्चित्तसन्ततेराक्षेपहेतुरवीततृष्णः, रूपे तस्याः सह रूपेण

---

रूपिणां सत्त्वानां दुर्बला चित्तसन्ततिरविभूतरूपसंज्ञत्वाद् विना रूपेण न वर्त्तते, ततो रूपं निश्रित्य वर्त्तते ।

*तस्याः केन बलवत्त्वमि*ति । तस्या आरूप्यावचर्याः केन कारणेन बलवत्त्वम् ? अत आह—*समापत्तिविशेषजत्वादि*ति विस्तरः । *विभूतरूपसंज्ञे*ति । विगतरूप-संज्ञेत्यर्थः । अतस्तज्जा आरूप्या चित्तसन्ततिरपि रूपनिरपेक्षा प्रवर्त्तते । तत एव तर्हि बलवत्वात् समापत्तिविशेषजनितात् प्रवर्त्तयिष्यते । किञ्चिदनिश्रित्ये-त्यभिप्रायः ।

*यथा रूपिणामि*ति विस्तरः । यथा रूपिणां रूपनिश्रिते निकायसभाग-जीवितेन्द्रिये, एवमरूपिणां किंनिश्रिते इति वाक्यार्थः ।

*तदेतदेतद् द्वयमन्योन्यमि*ति । निकायसभागो जीवितेन्द्रियं निश्रित्य प्रवर्त्तते, जीवितेन्द्रियं च निकायसभागमिति । *किमर्थं न तदेव द्वयमन्योन्यमि*ति । किं रूपनिश्रयेणेत्यभिप्रायः । *तत्रेदानीमि*ति । तत्रारूप्यधातौ केन बलवत्त्वं *तयो-*र्निकायसभागजीवितेन्द्रिययोः । *तदेतत् चित्तसन्ततौ समानमि*ति । असावपि चित्तसन्ततिः समापत्तिविशेषाज्जाता भवतीति न द्वयं निश्रित्य प्रवर्त्तयिष्यते । अनाश्रिते प्रवर्त्तयिष्यत इति *चित्तचैत्तेषु वा समान*मिति प्रकृतम् । किं पुनः समानमन्योन्यनिश्रयत्वम् ? यथा निकायसभागो जीवितेन्द्रियं निश्रित्य प्रवर्त्तते, जीवितेन्द्रियं च निकायसभागं निश्रित्य प्रवर्त्तते; तथा चित्तं निश्रित्य चैत्ताः प्रवर्त्तयिष्यन्ते, चैत्तांश्च निश्रित्य चित्तं प्रवर्त्तयिष्यत इति । तदन्योन्याश्रयकल्पना निष्प्रयोजनेति । *यस्याश्चित्तसन्ततेरि*ति । विस्तरः—चित्तसन्ततेराक्षेपाय हेतुरा-

---

१. तदेव—का० ।

सम्भवाद् रूपं निश्रित्य प्रवृत्तिः; यस्यास्तु हेतुर्वीततृष्णः, रूपे तस्या अनपेक्ष्य रूपं प्रवृत्तिः; हेतोस्तद्विमुखत्वादिति ।

अथ कस्मादेते कामरूपारूप्यधातव इत्युच्यन्ते ? स्वलक्षणधारणाद् धातुः । कामप्रतिसंयुक्तो धातुः कामधातुः, रूपप्रतिसंयुक्तो धातू रूपधातुः; मध्यपदलोपाद् वज्रवालकवत्, मरिचपानकवच्च । नात्र रूपमस्तीत्यरूपः, अरूपस्य भाव आरूप्यम्; रूपणीयो वा रूप्यः, न रूप्योऽरूप्यः, तद्भाव आरूप्यम्, तत्प्रतिसंयुक्तो धातुरारूप्यधातुः ।

कामानां वा[1] धातुः कामधातुः, कामान् यो दधाति । एवं रूपारूप्यधातू वेदितव्यौ ॥

कोऽयं कामो नाम ?

समासतः कवडीकाराहारमैथुनोपसंहितो रागः ।

---

क्षेपहेतुः कर्मक्लेशलक्षणः । विगता तृष्णा अस्येति वीततृष्णः, न वीततृष्णोऽवीततृष्णः । क्व ? रूपे । तस्याः चित्तसन्ततेः *सह रूपेण सम्भवाद् रूपं निश्रित्य प्रवृत्तिः । हेतोस्तद्विमुखत्वादिति* । आक्षेपहेतो रूपविमुखत्वादित्यर्थः ।

*वज्रवालकवदिति* । वज्रेण प्रतिसंयुक्तो वालकोऽङ्गुलीयकः कटको वा वज्रवालकः । *मरिचपानकवच्च* । यथा मरिचैः प्रतिसंयुक्तं पानकं मरिचपानकम् मध्यपदलोपात्, तद्वत् कामप्रतिसंयुक्तो धातुः कामधातुरित्यादिः । *रूपणीयो वेति* । बाधनीय इत्यर्थः । रूपयोगाच्च स शक्यते बाधितुम् । *तद्भाव आरूप्यमिति* । यदा धातूत्तरपदमेतद्भवति तदारूप्यधातुरिति युज्यते । यदा तु निरुत्तरपद आरूप्यशब्दप्रयोगः, तद्यथा—अतिक्रम्य रूपाण्यारूप्या इति, तदा आरूपा एवारूप्या इति स्वार्थे तद्धितात् परिग्रहः कार्यः । आरूप्ये वा साधव आरूप्या इति पश्यामः ।

*कामानां वा धातुरिति* । षष्ठीसमासेनैव साधयति विनापि प्रतिसंयुक्तशब्दलोपेन । कश्चासौ कामानां धातुः ? इत्याह—*कामान् यो दधातीति* । *एवं रूपारूप्यधातू वेदितव्याविति* । रूपाणां धातु रूपधातुरिति, रूपाणि यो दधातीति । आरूप्यस्य धातुरारूप्यधातुः, आरूप्यं यो दधातीति ।

*कवडीकाराहारमैथुनोपसंहितो राग इति* । कवडीक्रियत इति कवडीकारः, स एवाहारः कवडीकाराहारः । मिथुने भवः मैथुनम्=द्वन्द्वालिङ्गनादि । कवडीकाराहारमैथुनाभ्यामुपसंहितः सम्बन्धो जनित इति वा कवडीकाराहारमैथुनोपसंहितो रागः । कामः, काम्यतेऽनेनेति काम इति कृत्वा ।

---

१. का० पुस्तके नास्ति ।

"न ते कामा यानि चित्राणि लोके संकल्परागः पुरुषस्य कामः ।
तिष्ठन्ति चित्राणि तथैव लोके अथात्र धीरा विनयन्ति कामम्" ॥

( )

इति **गाथा**भिधानात् ।

**आजीवक आर्यशारिपु**त्रं प्रत्याह—

"न ते कामा यानि चित्राणि लोके संकल्परागं वदसीह कामम् ।
भिक्षुर्भविष्यत्यपि कामभोगी संकल्पयन् सोऽकुशलान् वितर्कान्" ॥

( )

**आर्यशारिपुत्र** आह—

"ते चेत् कामा यानि चित्राणि लोके संकल्परागो यदि ते न कामः ।
शास्ताऽपि ते भविता कामभोगी दृष्ट्वैव रूपाणि मनोरमाणि" ॥

किं पुनर्ये केचन धर्माः कामरूपारूप्यधातुषु समुदाचरन्ति, सर्वे ते कामरूपारूप्यप्रतिसंयुक्ताः ? नेत्याह । किं तर्हि ? येषु कामरूपारूप्यरागा

---

कथमेवं गम्यत इति ? स्थविरशारिपुत्रभाषितया गाथया तमर्थं दर्शयति- *"न ते कामा यानीति"* इति विस्तरः । *आजीवकेन* यदुक्तं गाथान्तरेण "भिक्षो कामवितर्कं विकल्पयनः कामभोगित्वम्" इति, तदभ्युपगतं *स्थविरेण* । त्रिविधो हि कामोपभोगः—कायेन, वाचा, मनसा च । तत्रावीतरागो मनसा कामोपभोगित्वेऽपि सति नाभिक्षुर्भवति । केवलं त्वस्य शीलमपरिशुद्धं वर्त्तते । यस्तु कायेन वाचा ताथागतीं शिक्षापदलेखां लङ्घयित्वा कामान् परिभुंक्ते, स कामोपभोग्यभिक्षुर्भवतीति । तस्मात् स दोषान्तरमाह—

*"ते चेत् कामाः"* इति विस्तरः । यदि तव 'चित्राः' रूपादयो विषयाः 'कामाः' इति पक्षः, 'शास्ता ते अवीतरागः' इत्यभ्युपगतः । तेन 'शास्तापि ते भविता' भविष्यति । *'कामभोगी दृष्ट्वैव रूपाणि मनोरमाणि'* कायेनाप्युपभुंजानोऽपि तान् विषयान् इति प्रसक्तम् । न चैवमिष्यते, तस्मात् *'सङ्कल्परागः पुरुषस्य कामः'* इति सिद्धम् ।

*केचनेति* । केचिदित्यर्थः । *नेत्याहेति* । **प्रतिषेधयति** । यस्माद् धात्वन्तरधर्माः धात्वन्तरे समुदाचरन्त्यधातुपतिताश्च । **कामधातौ** हि त्रैधातुकानास्रवा धर्माः समुदाचरन्ति, एवं रूपधातौ कामावचरं हि निर्माणचित्तं तत्र समुदाचरति, आरूप्यधातावारूप्यावचरा **अनास्रवाश्च** । तस्मात् प्रतिषेधयति—

अनुशेरते । के पुनरमी कामरूपारूप्यरागाः ? ये कामरूपारूप्यधातुष्वनुशेरते ।

इदमिदानीं तदश्वबन्धीयम्—कस्यायमश्वबन्धः ? यस्यायमश्वः; कस्याय-मश्वः ? यस्यायमश्वबन्धः—इत्युभयमपि न ज्ञायते ?

नेदमश्वबन्धीयम्; कृतनिर्देशानि हि स्थानानि कामधातौ, तेष्ववीत-रागस्य यो रागः स कामरागः । यत्रानुशेते सोऽपि धर्मः कामप्रतिसंयुक्तः ।

एवं रूपारूप्यरागावधोवीतरागस्य यथायोगं वेदितव्यौ ।

असमाहितभूमिको वा रागः कामरागः । ध्यानारूप्येषु रागो रूपारूप्यरागः ।

---

*नेति । किं तर्हि ? येषु कामरूपारूप्यरागा अनुशेरते ।* येषु कामरागोऽनुशेते आलम्बनतः सम्प्रयोगतो वा यथासम्भवम्, ते कामप्रतिसंयुक्ताः । येषु रूपारूप्य-रागावनुशयाते ते यथाक्रमं रूपारूप्यप्रतिसंयुक्ता इति । *इदमिदानीं तदश्वबन्धीय-मिति ।* अश्वश्चाश्वबन्धश्चाश्वबन्धम्, अश्वबन्धमिवाश्वबन्धीयम् । अथवा—अश्व-बन्धस्येदमश्वबन्धीयमिति[1] । *कस्यायमश्वबन्ध* इति कश्चित् पृच्छति । तस्येतरः कथयति—*यस्यायमश्व* इति । स पुनः पृच्छति—*कस्यायमश्व* इति । इतर पुनः कथयति—*यस्यायमश्वबन्ध* इति । *उभयमपि न ज्ञायते ।* अश्वबन्धः, अश्व इति च । यथेदमुभयमसिद्धेनान्योन्येन न परिच्छिद्यते, तथेहापि न रागैर्धातवः साध्यन्ते, धातुभिश्च रागा इत्युभयमप्येतन्न सिध्यति ।

*कृतनिर्देशानि हि स्थानानि कामधाताविति ।*

नरकप्रेततिर्यञ्चो मनुष्याः षड्दिवौकसः ।
कामधातुः स नरकद्वीपभेदेन विंशतिः ॥ ( अभि० ३.१ )

इति कामधातौ कृतनिर्देशानि स्थानानि ।

*तेषु स्थानेष्ववीतरागस्य यो रागः स कामराग* इति । *एवं रूपारूप्य-रागाविति ।* कृतनिर्देशानि हि स्थानानि, कामधातोः "ऊर्ध्वं सप्तदशस्थानो रूप-धातुः" ( अभि० ३.२ ) इति । तेष्ववीतरागस्य यो रागः स रूपरागः । तथा कृतनिर्देशोपपत्तिरारूप्यधातोः—"आरूप्यधातुरस्थान उपपत्त्या चतुर्विधः" ( अभि० को० ३.२ ) इति । तेषु वीतरागस्य यो रागः स आरूप्यराग इति । *यथायोगमिति ।* स्थाननिर्देशापेक्षम् ।

*ध्यानारूप्येषु राग* इति । समापत्ति-उपपत्तिध्यानेषु रागो रूपरागः । एवमारूप्यरागः ।

---

१. ०दमश्वबन्धीयमश्वबन्धीयमिति मुद्रितः पाठः ।

**निर्माणचित्ते कथं कामरागः ?** श्रुत्वा परिहाय च तदास्वादनात्। निर्माण-वशेन वा निर्मापकचित्तेऽपि[1] रागः। गन्धरसनिर्माणान् वा तस्य कामावचरत्वम्; रूपावचरेण तयोरनिर्माणात्।

**किं पुनरेकमेव त्रैधातुकम्?** त्रैधातुकानामन्तो नास्ति। यावदाकाशं तावन्तो धातवः। अत एव च नास्त्यपूर्वसत्त्वप्रादुर्भावः। प्रतिबुद्धोत्पादं चासंख्येय-सत्त्वपरिनिर्वाणेऽपि नास्ति सत्त्वानां परिक्षयः, आकाशवत्।

**कथमवस्थानं लोकधातूनाम्?**

**तिर्यक्सूत्र** उक्तम्, तद्यथा—"ईषाधारे देवे वर्षति **नास्ति वीचिर्वा अन्तरिका वा अन्तरिक्षाद्**[2] वारिधाराणां प्रपतन्तीनाम्; एवं पूर्वस्यां **दिशि नास्ति वीचिर्वा अन्तरिका वा लोकधातूनां** संवर्तमानानां विवर्तमानानां **च। यथा पूर्वस्यां दिशि,** एवं दक्षिणस्याम्, पश्चिमायाम्, उत्तरस्याम्" ( ) **इति।**

---

*निर्माणचित्ते कथं कामराग* इति। कामावचरे निर्माणचित्ते ध्यानफले कथं कामवीतरागाणां कामरागः, यतस्तस्य न कामावचरत्वम्; यदा ह्यसाववीतरागस्तदा निर्माणचित्तं न समुदाचरन्ति, यदा निर्माणचित्तं समुदाचरति तदा न तस्य राग उत्पद्यते, कथमस्य कामरागेण विना कामावचरत्वं व्यवस्थाप्यत इत्यर्थः। *श्रुत्वा परिहाय च तदास्वादनादिति*। श्रुत्वा तत्परतो निर्माणचित्तेऽस्य राग उत्पद्यते, परिहाय वा आत्मीयान्निर्माणचित्तात्, तस्यास्वादनादिति। एवं ध्यायिनः कामावचरेण निर्माणचित्तेन कामावचरं निर्माणं निर्मिण्वन्तीति श्रुत्वा तदालम्बनो राग उत्पद्यते। अनुस्मृत्य चात्मीयं तत्र राग उत्पद्यते। *निर्माणवशेनेति*। मनोहरं निर्माणं दृष्ट्वा निर्मापके चित्ते निर्मापकस्य वा चित्ते रागः, दर्शयतीत्थं निर्माणचित्तं यस्येदृशं निर्माणमिति। *गन्धरसनिर्माणाद्वेति*। यत् कामावचरनिर्माणनिर्मापकं कामावचरं तच्चित्तम्; कामावचरधर्महेतुत्वाद्, घटहेतुचित्तवत्। यत्तु न कामावचरं न तत् कामावचरधर्महेतुः, तद्यथा रूपावचरं चित्तम्। अत एवाह—*रूपावचरेण तयोरनिर्माणादिति*। कस्मात् पुना रूपावचरेण चित्तेन तयोर्गन्धरसयोरनिर्माणम्? तयोर्गन्धरसयोः कवडीकाराहारस्वभावत्वात्। रूपधातूपपन्नं च तद्वीतरागत्वादिति।

*ईषाधार* इति। ईषाप्रमाणवर्षाधारः। *नास्ति वीचिर्वा अन्तरिका* वेति।

---

१. निर्मायक०—का०। २. अन्तरीक्षाद्—का०।

न तूक्तम्—ऊर्ध्वमधश्चेति ।

ऊर्ध्वमप्यधोऽपीत्यपरे; निकायान्तरपाठाद् । अकनिष्ठादूर्ध्वं पुनः कामधातुः । कामधातोश्चाधः पुनरकनिष्ठाः । यश्चैकस्मात् कामधातोर्वीतरागः स सर्वेभ्यः । एवं रूपारूप्येभ्यः ।

यश्च प्रथमध्यानसंनिश्रयाद्धिं उत्पादयति, स यत्र लोकधातौ जात उत्पादयति तत्रस्थमेव ब्रह्मलोकमुपागच्छति, नान्यम् ॥ ३ ॥

य एते त्रयो धातव उक्ताः—

**नरकादिस्वनामोक्ता गतयः पञ्च तेषु,**

नरकाः, तिर्यञ्चः, प्रेताः, देवाः, मनुष्याः—इति स्वैरेव नामभिस्तेषु **पञ्च गतयः** प्रोक्ताः । कामधातौ चतस्रो गतयः, पञ्चम्याश्च प्रदेशः । रूपारूप्यधात्वोरेकस्या देवगतेः प्रदेशः ।

किं पुनर्गतिनिर्मुक्ताः सन्ति धातवो यत एता धातुष्वित्युच्यन्ते ? सन्ति कुशलक्लिष्टभाजनान्तराभवस्वभावा अपि धातवः ।

यास्तु पञ्च गतयः—

**ताः ।**

**अक्लिष्टाव्याकृता एव सत्त्वाख्या नान्तराभवः ॥ ४ ॥**

अनिवृताव्याकृता एव गतयः । अन्यथा हि गतिसम्भेदः स्यात् ।

---

नैरन्तर्यं दर्शयति—न *तूक्तमूर्ध्वमधश्चेति* । अतो लोकधातूनां तिर्यगेवास्थानमिति दर्शयति ॥ ३ ॥

*पञ्चम्याश्च प्रदेश* इति । देवगतेः षट् कामावचरा देवा उक्ताः । शेषा रूपारूप्यावचराः ।

*अन्यथा हि गतिसम्भेदः स्यादि*ति । गतिमिश्रिता । यदि कुशलक्लिष्टा अपि स्युर्गतिसम्भेदः स्यात् । मनुष्यो नरकसंवर्त्तनीयं कर्म करोति, यावद् देवोपपत्तिसंवर्त्तनीयम्—इत्यतो मनुष्यगतिर्नरकगतिरपि स्यात्, यावद् देवगतिरपि; तेषां कर्मणां तद्गतिपर्यापन्नत्वात् । कामधातूपपन्नश्चोर्ध्वभूमिकैः क्लेशैः समन्वागतः कामावचरेण च सार्वगतिकेन क्लिष्टेन समन्वागत इति स एव मनुष्यो नारको यावद् देव इति स्यात् ।

**सत्त्वाख्या** एव च, न चान्तराभवस्वभावाः । प्रज्ञप्तिपूक्तम्—"चतसृभिर्योनिभिः पञ्च गतयः संगृहीताः, न तु पञ्चभिर्गतिभिश्चतस्रो योनयः । किमसंगृहीतम् ? अन्तराभवः" ( ) इति ।

**धर्मस्कन्धे**ऽपि चोक्तम्—"चक्षुर्धातुः कतमः ? चत्वारि महाभूतान्युपादाय यो रूपप्रसादश्चक्षुश्चक्षुरिन्द्रियं चक्षुरायतनं चक्षुर्धातुर्नारकस्तैर्यग्योनिकः पैतृविषयको दैव्यो मानुष्यको भावनामयोऽन्तराभविकश्च" ( ) इति ।

**सूत्रे**ऽपि च बहिष्कृतोऽन्तराभवो गतिभ्यः । कस्मिन् सूत्रे ? "सप्त भवाः—नरकभवस्तिर्यग्भवः प्रेतभवो देवभवो मनुष्यभवः कर्मभवोऽन्तराभवः" ( ) इति । अत्र हि पञ्च गतयः सहेतुकाः सगमनाश्चोक्ताः[1] । अत एव चानिवृताव्याकृताः सिध्यन्ति; तद्धेतोः कर्मभवस्य ताभ्यो बहिष्करणात् ।

**काश्मीरकाश्च**[2] सूत्रं पठन्ति—"स्थविरशारिपुत्रेणोक्तम्—नारकाणामायुष्मन्नास्रवाणां सम्मुखीभावान्नरकवेदनीयानि कर्माणि करोत्युपचिनोति । तेषामायुष्मन् कायवाङ्मनोवङ्कानां कायवाङ्मनोदोषकषायाणां नरकेषु रूपं संज्ञा वेदना संस्कारो विज्ञानं विपाको विपच्यते । निर्वृत्ते विपाके नारक इति संख्यां गच्छति । तत्रायुष्मन् नारको नोपलभ्यते, अन्यत्र तेभ्यो धर्मेभ्यः" इति । अतोऽप्यनिवृताव्याकृता एव गतयः ।

---

*सत्त्वाख्या* एवेति । कर्मानुरूपेणात्मभावतस्तद्गमनात् । अत एवोक्तम्—"यथाकर्म गमिष्यन्ति पुण्यपापफलोपगाः" ( ) इति । न भाजनस्वभावा इति ।

*न चान्तराभवस्वभावा* इति । अस्य प्रतिपादनार्थं ज्ञापकमानयन्ति । *प्रज्ञप्तिपूक्तमिति* विस्तरः ।

*सहेतुकाः सगमना* इति । हेतुः कर्मभवः, गमनमन्तराभवः, गम्यतेऽनेनेति कृत्वा । गतिस्तु गम्यत इति गतिः । *तद्धेतोः कर्मभवस्य ताभ्यो बहिष्करणात्* । कुशलाकुशलस्य कर्मभवस्य ताभ्यो गतिभ्यो बहिष्करणात् ।

कश्मीरे भवाः *काश्मीरकाश्च सूत्रं पठन्तीति* । मुक्तकं तत्सूत्रं त एव पठन्ति, नान्ये इत्यभिप्रायः । *नारकाणामिति* विस्तरः । नरकानुकूला नारकाः, तेषामिति विस्तरः । *कायवाङ्मनोवङ्कानां* शाठ्यसमुत्थितानां कर्मणां दोषकषायाणां

---

१. सहागमनाः—का० । २ काश्मीराश्च—का० ।

प्रकरणग्रन्थस्तर्हि परिहार्यः—"गतिषु सर्वेऽनुशया अनुशेरते" इति ? सन्धिचित्तानि[1] हि गतीनां पञ्चप्रकाराणि सन्ति, अतः सप्रवेशगतिग्रहणाददोष एव ग्रामग्रहणे ग्रामोपविचारग्रहणवत्[2] ।

कुशलक्लिष्टा अपीत्यपरे ।

यत्तूक्तम्—"कर्मभवस्य ताभ्यो बहिष्करणात्" (          ) इति ? नावश्यं पृथग्वचनाद् बहिष्कृतो भवति । तद्यथा—पञ्चसु कषायेषु क्लेशदृष्टिकषायौ पृथगुक्तौ, न च दृष्टयो न क्लेशाः । एवं कर्मभवोऽपि गतिश्च स्यात् । पृथक् चास्य वचनं स्याद् गतिहेतुज्ञापनार्थम् ।

अन्तराभवेऽप्येष प्रसङ्गः ? नायोगात् । गच्छन्ति तामिति गतिः । न चान्तराभवो गन्तव्यः; च्युतिदेश एवोत्पादनात् ।

---

द्वेषरागसमुत्थितानाम् । *अतोऽप्यनिवृताव्याकृता एव* गतय इति । यस्मादुक्तम्—'निर्वृत्ते विपाके नारक इति संख्यां गच्छति' इति ।

*गतिषु सर्वेऽनुशया अनुशेरत इति प्रकरणग्रन्थः परिहार्यः* । वक्तव्यः परिहार इत्यर्थः; विरोधप्रसङ्गात् । यदि हि पञ्चप्रकारा धर्माः गतिस्वभावा भवेयुः, सर्वेऽनुशया अनुशयीरन् । यदि त्वव्याकृता एव गतयः स्युः, एवं वक्तव्यं स्यात्—भावना प्रहातव्याः सर्वत्रगाश्चेति । अनिवृताव्याकृता हि संस्कृता धर्मा भावनाप्रहातव्या एव । तेषु च भावनाप्रहातव्या एव सर्वत्रगाश्चानुशया अनुशेरते आलम्बनतः प्रयोगतो वा, नान्ये । तेन ज्ञायते—नानिवृताव्याकृता एव गतय इति । *सन्धिचित्तानि हि गतीनां पञ्चप्रकाराणीति* । सन्धिचित्तानि गतीनां प्रवेशाः; तेषां पञ्चप्रकारत्वात् । दुःखदर्शनप्रहातव्यं यावद् भावनाप्रहातव्यमिति । तत्र सर्वेऽनुशया अनुशेरत इति युक्तम् । *ग्रामोपविचारग्रहणवदिति* । ग्रामपरिसामन्तकग्रहणवदित्यर्थः ।

*पञ्चसु कषायेष्विति* । पञ्चकषायाः—आयुःकषायः, क्लेशकषायः, दृष्टिकषायः, कल्पकषायः, सत्त्वकषायश्च, तेषु । *क्लेशदृष्टिकषायौ पृथगुक्तौ* । क्लेशकषायाद् दृष्टिकषायः पृथगुक्त इत्यर्थः । अनयो पृथग्वचनं गृहस्थप्रव्रजितपक्षाधिकारात् । *गतिहेतुज्ञापनार्थमिति* । गतीनां कर्मोद्भवो हेतुरिति ।

*अन्तराभवेऽप्येष प्रसङ्ग* इति । एवमन्तराभवोऽपि गतिश्च स्यात् । पृथक् चास्य वचनं स्यात्—गतिगमनज्ञापनार्थमिति । *गच्छन्ति तामिति* । कर्मसाधनपरिग्रहः । न चान्तराभव एवं युज्यत इति न गतिः ।

---

1. प्रतिसन्धि०—का० ।  2. ग्रामोपचार०—का० ।

आरूप्या अपि गतिर्न भविष्यन्ति; च्युतिदेश एवोत्पादात् ? एवं तर्ह्यन्तराभवत्वादेवान्तराभवो न गतिः; गत्यन्तरालत्वात्। यदि हि गतिः स्याद्, अन्तराभव इत्येव न स्यात्।

यत्तर्हि स्थविरशारिपुत्रेणोक्तम्—"निर्वृत्ते विपाके नारक इति संख्यां गच्छति" इति ? निर्वृत्ते विपाक इत्युक्तम्, न तु[1] विपाक एवेति।

यत्तर्ह्युक्तम्—"तत्रायुष्मन्नारको नोपलभ्यतेऽन्यत्र तेभ्यो धर्मेभ्यः" इति ? गतिगामिनः पुद्गलद्रव्यस्य प्रतिषेधं करोति—नान्यत्र स्कन्धेभ्य उपलभ्यते नारक इति, न तु स्कन्धान्तरप्रतिषेधम्।

अव्याकृता एव तु गतयो वर्ण्यन्ते **वैभाषिकैः**। ताश्च विपाकस्वभावा **एवेत्येके**। औपचयिकस्वभावा अपीत्य**परे** ॥ ४ ॥

अत्रैव पञ्चगतिके धातुत्रये यथाक्रमं वेदितव्याः—

**नानात्वकायसंज्ञाश्च नानाकायैकसंज्ञिनः।**
**विपर्ययाच्चैककायसंज्ञाश्चारूपिणस्त्रयः ॥ ५ ॥**

---

*आरूप्या अपीति*। विस्तरः आरूप्या न गतिः स्युः; च्युतिदेश एवोत्पादात्। आरूप्यगा हि यत्र च्यवन्ते—विहारे वा वृक्षमूले वा यावच्चतुर्थ्यां ध्यानभूमौ, तत्रैवोत्पद्यन्त इति। अन्तराभववन्न गतिः स्यात्। *एवं तर्हीति*। पूर्वपक्षं परित्यज्य पक्षान्तरमाश्रीयते। *गत्योरन्तरा अन्तराले भवतीति* अन्तराभव इत्यन्वर्थसंज्ञाकरणा*न्नान्तराभवो गतिरिति*।

*वैभाषिका* आहुः—*यत्तर्हीति*। विस्तरः—*निर्वृत्ते विपाक* इति। विपाकशब्दवचनाद्विपाकस्वभावा गतिरिति तदभिप्रायः। *इतर* आह—*निर्वृत्ते विपाके* नारक इति नारको व्यवस्थाप्यते। न तू*क्तं विपाक एवेति*। न तूक्तं विपाकस्वभावेव गतिरिति। किं तर्हि ? विपाकाविपाकस्वभावा गतिः। तस्मात् कुशलक्लिष्टा अपि गतयो भवन्तीत्यभिप्रायः। वैभाषिकः पुनराह—*यत्तर्ह्युक्तं तत्रेति विस्तरः*। *अन्यत्र तेभ्यो धर्मेभ्य* इति। विपाकजेभ्यः। *न तु स्कन्धान्तरप्रतिषेधम्*। *करोतीत्यधिकृतम्*। *ताश्चेति* विस्तरः। अव्याकृतत्वपक्षेऽपि द्वैविध्यम्। *औपचयिकस्वभावा अपीति*। अपिशब्दाद्विपाकस्वभावा अपीति। यथोक्तम्—"विपाको जीवितं द्वेधा द्वादश" ( अभि० २.१० ) इति। नैष्यन्दिकास्तु न गृह्यन्ते। विपाकस्वभावा एवेत्याचार्य*सङ्घभद्रः* पूर्वमेव पक्षमिच्छति ॥ ४ ॥

---

१. तूक्तम्—का०।

**विज्ञानस्थितयः सप्त,**

सूत्रे उक्तम्—"रूपिणः सन्ति सत्त्वा नानात्वकाया नानात्वसंज्ञिनः, तद्यथा मनुष्यास्तदेकत्याश्च देवाः । इयं प्रथमा विज्ञानस्थितिः । कतमे पुनस्ते तदेकत्या देवाः ? कामावचराः षट् प्रथमध्यानिकाश्च[1] प्रथमाभिनिर्वृत्तवर्ज्याः" ।

नानात्वेन काय एषामिति नानात्वकायाः; अनेकवर्णलिङ्गसंस्थानत्वात् । नानात्वेन संज्ञा नानात्वसंज्ञा, सैषामस्तीति नानात्वसंज्ञिनः; सुखदुःखादुःखासुखसंज्ञित्वात् ।

"रूपिणः सन्ति नानात्वकाया एकत्वसंज्ञिनः, तद्यथा—देवा ब्रह्मकायिका ये तत्प्रथमाभिनिर्वृत्ताः । इयं द्वितीया विज्ञानस्थितिः ।"

ते हि प्रथमाभिनिर्वृत्ताः सर्वे एकैकसंज्ञिनो भवन्ति—'अनेन वयं ब्रह्मणा सृष्टाः' इति, ब्रह्मणोऽप्येवं भवति—'मयैते सृष्टाः' इत्यभिन्नकारणसंज्ञानादेकत्वसंज्ञिनः । अन्यथैव तु महाब्रह्मण आरोहपरिणाहौ[2], आकृतिविग्रहः, वाग्भाषा, चीवरधारणं च; अन्यथा तत्पर्षद इति नानात्वकायाः ।

यदिदमुक्तं सूत्रे—"तेषामेवं भवति—इमं वयं सत्त्वमद्राक्ष्म दीर्घायुषं दीर्घमध्वानं तिष्ठन्तं यावदहो बतान्येऽपि सत्त्वा इहोपपद्येरन्मम सभागतायामिति । अस्य च सत्त्वस्यैवंचेतसः प्रणिधिर्वयं चोपपन्नाः[3]" इति ।

कथं तमद्राक्षुः ? आभास्वरस्था इत्येके ।

ततो हि ते प्रच्युताः कथमिदानीमलब्धायां द्वितीयध्यानसमापत्तौ तद्भूमिकं

---

*कामावचराः षट् प्रथमध्यानिकाश्च* । कतमे ते ? *बहिर्देशकनयेन* ब्रह्मकायिकाः ब्रह्मपुरोहिता महाब्रह्माणश्च प्रथमाभिनिवृत्तवर्ज्याः । *काश्मीरनयेन* पुनर्ब्रह्मकायिका ब्रह्मपुरोहिताश्च प्रथमाभिनिवृत्तवर्ज्याः । ब्रह्मपुरोहितेष्वेव हि तेषां नयेन महाब्रह्माणो न स्थानान्तरनयाः । *अनेकवर्णलिङ्गसंस्थानत्वादि*ति । वर्णो नीलत्वादिः, लिङ्गम् वस्त्राभरणादि, संस्थानं दैर्घ्यादि । आरोह उन्नतता, परिणाहस्तिर्यक्प्रमाणम् । *आकृतिविग्रहः* । आकृतिलक्षणो विग्रह आकृतिविग्रहः । एवं विशेषिते वेदनादीनां विग्रहः पर्युदस्तो भवति; नासावाकृतिलक्षण इति । विग्रहः पुनः शरीरम् । *वाग्भाषा* वागुच्चारणम् ।

*कथमिदानीमि*ति विस्तरः । प्रथमध्यानप्रत्यागमनेन तैर्द्वितीयं व्यक्तम् । *तद्भूमिकं* द्वितीयध्यानभूमिकम् । पूर्वनिवासं कथमन्वस्मार्षुः ? न तावत्

---

१. ०ध्यानभूमिकाश्च—का० । २. आरोहपरिणाहः—का० ।

३. चेहोपपन्नाः—का० ।

पूर्वनिवासमन्वस्मार्षुः[1], लब्धायां च[2] कथं महाब्रह्मालम्बनां शीलव्रतपरामर्शदृष्टिमिविष्टाः ?

अन्तराभवस्था अद्राक्षुरित्यपरे ।

तत्रापि न दीर्घमध्वानमवस्थातुं सम्भवः; प्रतिबन्धाभावादिति ।

कथं तेषामियं[3] बुद्धिर्भवति स्म—"इमं वयं सत्त्वमद्राक्ष्म दीर्घायुषं दीर्घमध्वानं तिष्ठन्तम्" इति ?

तस्मात्तत्रस्था एव ते तस्य पूर्ववृत्तान्तं समनुस्मरन्त एव दीर्घमध्वानं तिष्ठन्तं दृष्टवन्तः, दृष्ट्वा च पश्चाद् 'अद्राक्ष्म' इत्येषां बभूव ।

"रूपिणः सन्ति सत्त्वा एकत्वकाया नानात्वसंज्ञिनः, तद्यथा देवा आभास्वराः । इयं तृतीया विज्ञानस्थितिः ।"

---

प्रथमध्यानभूमिकेन चित्तेन, तदविषयत्वात् । न द्वितीयध्यानभूमिकेन, तस्यालब्धत्वात् । पुनर्लब्धमिति चेत् ? अत आह—*लब्धायां चेति* विस्तरः । शीलव्रतपरामर्शदृष्टिर्महाब्रह्मालम्बना प्रथमध्यानभूमिकैव युज्यते । सा च द्वितीयध्यानलाभात् प्रहीणा न समुदाचरति । द्वितीय ध्यानभूमिकेति चेत् ? न; अधरालम्बनत्वायोगात् । न ह्यधरभूम्यालम्बनः कश्चिदपि क्लेश इष्यते ।

*अन्तराभवस्था अद्राक्षुरिति*। अन्तराभवस्थास्ते तं महाब्रह्माणं दृष्ट्वैवमूचुः- इमं वयं सत्त्वमद्राक्ष्मेति । *अयमपि* पक्षो न घटते । तथा हि—*तत्राप्यन्तराभावे दीर्घमध्वानमवस्थातुं न सम्भवः,* ह्युपपत्तुं *प्रतिबन्धाभावात्*, शुक्रशोणितानपेक्षत्वात् । *तेषां कथं भवतीयं बुद्धिरिमं वयं सत्त्वमद्राक्ष्म दीर्घायुषं दीर्घमध्वानं तिष्ठन्तमिति* । दीर्घाध्वावस्थानावबोधो न प्राप्नोतीत्यर्थः ।

*तस्मात्तत्रस्था एवेति* विस्तरः । प्रथमध्यानभूमिष्ठा एव *तस्य* महाब्रह्मणः *पूर्ववृत्तान्तं समनुस्मरन्तः* । उत्पद्यमानवस्थायामेव *ते तं* महाब्रह्माणं पूर्वोत्पन्नं *दीर्घमध्वानं तिष्ठन्तं दृष्टवन्तः, दृष्ट्वा च पश्चात्* उत्तरकालमद्राक्ष्मेत्येषां बभूव । बुद्धिरिति वाक्यशेषः । एवं तु सतीदमपरिहृतं भवेत् । अस्य च सत्त्वस्यैवं चेतसः प्रणिधिः—वयं चोपपन्ना इति । उपपत्तिप्रतिलम्भिकेन प्रथमध्यानभूमिकेन तस्य महाब्रह्मण एवं चेतसः प्रणिधिमन्वस्मार्षुः; समानभूमिकत्वादित्यदोष एव । तत्सकाशं श्रवणाद्वा ।

---

१. ०मास्मापुः—का० । २. वा—का० ।

३. मेवं—का० ।

अत्र पुनः पर्यन्तग्रहणात् सकलद्वितीयध्यानग्रहणं वेदितव्यम् । अन्यथा हि परीत्ताभा अप्रमाणाभाश्च कस्यां विज्ञानस्थितौ व्यवस्थाप्येरन् ।

तत्राभिन्नवर्णलिङ्गसंस्थानत्वादेकत्वकायाः । सुखसंज्ञित्वाददुःखासुखसंज्ञित्वाच्च नानात्वसंज्ञिनः ।

ते किल मौल्यां भूमौ सौमनस्येन्द्रियपरिखिन्नाः सामन्तकादुपेक्षेन्द्रियं सम्मुखीभवन्ति । सामन्तके चोपेक्षेन्द्रियपरिखिन्नाः पुनर्मौल्या भूमेः सौमनस्येन्द्रियं सम्मुखीकुर्वन्ति । यथा—कामरतिपरिखिन्ना ईश्वरा धर्मरतिं प्रत्यनुभवन्ति, धर्मरतिपरिखिन्नाः कामरतिमिति ।

ननु च शुभकृत्स्नेष्वप्येष प्रसङ्गः ? न तेषां तेन सुखेनास्ति परिखेदः । किं कारणम् ? शान्तं हि तत्सुखम्, अशान्तं च सौमनस्यम्; चेतस उत्प्लावकत्वादिति सौत्रान्तिका व्याचक्षते । सूत्र उक्तम्—"यथा ते नानात्वसंज्ञिनः । तत्र ये सत्त्वा आभास्वरे देवनिकायेऽचिरोपपन्ना भवन्ति नैव संवर्त्तनीकुशलाः, अस्य लोकस्य ते तामर्चिषं दृष्ट्वा भीताः सन्त उद्विजन्ते, संवेगमापद्यन्ते—स हैवैषाऽर्चिः शून्यं ब्राह्मं विमानं दग्ध्वाऽर्वागागमिष्यतीति । तत्र ये सत्त्वा आभास्वरे देवनिकाये चिरोपपन्नाः संवर्त्तनीकुशला विवर्त्तनीकुशलाश्चास्य लोकस्य, ते तान् सत्त्वान् भीतानाश्वासयन्ति—मा भैष्ट मार्षाः, मा भैष्ट मार्षाः, पूर्वमप्येषाऽर्चिः शून्यं ब्राह्मं विमानं दग्ध्वाऽत्रैवान्तर्हिता" (      ) इति । अतोऽर्चिष आगमव्यपगमसंज्ञित्वाद्, भीताभीतसंज्ञित्वाच्च ते नानात्वसंज्ञिनः, न सुखादुःखासुखसंज्ञित्वादिति ।

---

*ननु च शुभकृत्स्नेष्वप्येष प्रसङ्गः* । एकत्वकाया नानात्वसंज्ञिन इति । कथम् ? यथोक्तम् । 'ते हि मौल्यां भूमौ सुखेन्द्रियपरिखिन्नाः सामन्तकोपेक्षेन्द्रियं सम्मुखीकुर्वन्ति' इति विस्तरेण वक्तव्यं स्यात् । ते चैकत्वकाया एकत्वसंज्ञिन इति पश्चाद् वक्ष्यते । *तेन सुखेनेति* तृतीयध्यानभूमिकेन । *चेतस उत्प्लावकत्वादिति* । औद्बिल्यकरत्वात् । *इन्द्रसुखेनेति* । *द्वितीयध्यान*            । अचिरोपपन्नानामागमसंज्ञित्वाच्चिरोपपन्नानां व्यपगमसंज्ञित्वात् । अथ वा—अचिरोपपन्नानामागमसंज्ञित्वाच्चिरोपपन्नानामागमव्यपगमसंज्ञित्वात् । *भीताभीतसंज्ञित्वात्* । यथाक्रममचिरचिरोपपन्नत्वात् ते नानात्वसंज्ञिनो *न सुखादुःखासुखसंज्ञित्वात्*, यथोक्तं *वैभाषिकैरिति* ।

"रूपिणः सन्ति सत्त्वा एकत्वकाया एकत्वसंज्ञिनः, तद्यथा—देवाः शुभकृत्स्नाः । इयं चतुर्थी विज्ञानस्थितिः ।"

तत्राभिन्नवर्णसंस्थानलिङ्गत्वादेकत्वकायाः । एकत्वसंज्ञिनः सुखसंज्ञित्वात् ।

तत्र प्रथमे ध्याने क्लिष्टया संज्ञया एकत्वसंज्ञिनः, द्वितीये कुशलया संज्ञया नानात्वसंज्ञिनः, तृतीये विपाकजया संज्ञया एकत्वसंज्ञिनः ।

**आरूप्यास्त्रयो** यथासूत्रमिति । एताः **सप्त विज्ञानस्थितयः** ।

काऽत्र विज्ञानस्थितिः ? तत्प्रतिसंयुक्ताः पञ्च स्कन्धाश्चत्वारश्च यथायोगम् ।

शेषं कस्मान्न विज्ञानस्थितिः ? यस्मात्—

**शेषं तत्परिभेदवत् ।**

किं पुनः **शेषम्** ? दुर्गतयः, चतुर्थं ध्यानम्, भवाग्रं च ।

अत्र हि विज्ञानपरिभेदाः सन्ति, अत एव न विज्ञानस्थितिः ।

कः पुनः परिभेदः, येन विज्ञानं परिभिद्यते ? तत्रापायेषु दुःखा वेदना,

---

*प्रथमे ध्याने क्लिष्टया संज्ञयेति* । शीलव्रतपरामर्शसम्प्रयुक्तया, अकारणे कारणाभिनिविष्टत्वात् । *द्वितीये कुशलया संज्ञयेति* । सामन्तकमौलसंगृहीतत्वात् । *तृतीये विपाकजया संज्ञयेति* । विपाकजसुखसम्प्रयोगात् ।

*आरूप्यास्त्रयो यथासूत्रमिति* । "अरूपिणः सन्ति सत्त्वा ये सर्वशो रूपसंज्ञानां समतिक्रमादनन्तमाकाशमित्याकाशानन्त्यायतनमुपसम्पद्य विहरन्ति, तद्यथा—देवा आकाशानन्त्यायतनोपगाः । इयं पञ्चमी विज्ञानस्थितिः । अरूपिणः सन्ति सत्त्वा ये सर्वश आकाशानन्त्यायतनं समतिक्रम्यानन्त्यं विज्ञानमिति विज्ञानानन्त्यायतनमुपसम्पद्य विहरन्ति, तद्यथा—विज्ञानानन्त्यायतनोपगा देवाः । इयं षष्ठी विज्ञानस्थितिः । अरूपिणः सन्ति सत्त्वा ये सर्वशो विज्ञानानन्त्यायतनं समतिक्रम्य नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसम्पद्य विहरन्ति, तद्यथा—आकिञ्चन्यायतनोपगाः देवाः । इयं सप्तमी विज्ञानस्थितिः" ( ) इति ।

*पञ्चस्कन्धाश्चत्वारश्च यथायोगमिति* । आकाशानन्त्यायतनादित्रयप्रतिसंयुक्ताश्चतुःस्कन्धाः, अन्यप्रतिसंयुक्ताः पञ्चस्कन्धाः ।

*"शेषं तत्परिभेदवद्" इति* । परिभिद्यतेऽनेनेति परिभेदः, तस्य विज्ञानस्य परिभेदस्तत्परिभेदः, सोऽस्मिन् विद्यत इति तत्परिभेदवत् । शेषं दुर्गत्यादि ।

परिभेदः, उपघातकत्वात् । चतुर्थे ध्याने आसंज्ञिकमसंज्ञिसमापत्तिश्च । भवाग्रे निरोधसमापत्तिः, चित्तसन्ततिच्छेदात् ।

पुनराह—यत्रेहस्थानां गन्तुकामता तत्रस्थानां चाव्युच्चलितुकामता, असौ विज्ञानस्थितिरुक्ता । अपायेषु चोभयं नास्ति । चतुर्थे ध्याने सत्त्वा उच्चलितमानसाः पृथग्जना आसंज्ञिकं प्रवेष्टुकामाः, आर्याः शुद्धावासान् भवाग्रानपटुप्रचारत्वान्न विज्ञानस्थितिरिति ।

एताश्च सप्त विज्ञानस्थितयो यथोक्ताः ।

**भवाग्रासंज्ञिसत्त्वाश्च सत्त्वावासा नव स्मृताः ॥ ६ ॥**

एषु हि सत्त्वा आवसन्ति स्वेच्छया ॥ ६ ॥

**अनिच्छावसनान्नान्ये,**

के पुनरन्ये ? अपायाः । तेषु हि सत्त्वा अकामकाः कर्मराक्षसैरावास्यन्ते, न त्विच्छया वसन्ति । अतस्तेन सत्त्वावासाः, बन्धनस्थानवत् ।

---

*अपायेषु चोभयं नास्तीति* । नेहस्थानां गन्तुकामता, न तत्रस्थानां व्युच्चलितुकामता । *अपटुप्रचारत्वादिति* । चित्तचैत्तानामत्र मन्दप्रचारत्वात् । अतस्तद्वद् विज्ञानं न तिष्ठतीति युक्तं वक्तुम् ।

"*भवाग्रासंज्ञिसत्त्वाश्च सत्त्वावासा नव*" इति । सूत्र उक्तम्–"नव सत्त्वावासाः । कतमे नव ? रूपिणः सन्ति सत्त्वा नानात्वकाया नानात्वसंज्ञिनः । तद्यथा—मनुष्याः, तदेकत्याश्च देवाः । अयं प्रथमः सत्त्वावासः" । द्वितीयतृतीयचतुर्था अपि यथा विज्ञानस्थितिषु तथा वक्तव्याः । अयं तु विशेषः—"रूपिणः सन्ति सत्त्वा असंज्ञिनोऽप्रतिसंज्ञिनः । तद्यथा—देवा असंज्ञिसत्त्वाः । अयं पञ्चमः सत्त्वावासः" । आरूप्याणाञ्च सत्त्वावासानां त्रयो विज्ञानस्थितिवद् वक्तव्याः । चतुर्थस्त्वारूप्यः । "अरूपिणः सन्ति सत्त्वा सर्वश आकिञ्चन्यायतनं समतिक्रम्य नैवसंज्ञानासंज्ञायतनमुपसम्पद्य विहरन्ति । तद्यथा—देवा नैवसंज्ञानासंज्ञायतनोपगाः, अयं नवमः सत्त्वावासः" इति ॥ ६ ॥

असंज्ञिसत्त्वेभ्यो येऽन्ये चतुर्थध्यानोपगाः किं ते सत्त्वावासाः, उत नेति ? नेत्याहुः । कस्मादेवमुक्तमाचार्येण—*के पुनरन्ये ? अपाया* इति ? मुखमात्रमेतदुक्तम् । असंज्ञिसत्त्वाः सत्त्वावासासंगृहीताश्चतुर्थध्यानोपगा इत्यपि वक्तव्यम् । इहापि तदेव कारणं वक्तव्यम् यद्विज्ञानस्थितिषूक्तम् । इहस्थानां ह्यपायगमनप्रार्थना नास्ति, तत्रस्थानाञ्च न वस्तुकामतेति नापायाः सत्त्वावासाः ।

अन्यत्र सूत्रे सप्त विज्ञानस्थितय उक्ताः, अन्यत्र—

**चतस्रः स्थितयः पुनः ।**

**कतमाश्चतस्रः ?** रूपोपगा विज्ञानस्थितिः, वेदनोपगा, संज्ञोपगा, संस्कारोपगा इति ।

तासां कः स्वभावः ? ता हि यथाक्रमम्—

**चत्वारः सास्रवाः स्कन्धाः,**

ते पुनः—

**स्वभूमावेव,**

नान्यत्र भूमौ । किं कारणम् ? प्रतिष्ठा हि स्थितिः । न च विसभागभूमिकेषु स्कन्धेषु विज्ञानं तृष्णावशात् प्रतितिष्ठतीति ।

कस्मान्न विज्ञानं विज्ञानस्थितिरुच्यते, यथा सप्तसु विज्ञानस्थितिषु पञ्च

---

असंज्ञिसत्त्वासंगृहीतेषु बृहत्फलेषु यद्यपीहस्थानां गमनप्रार्थनास्ति, तत्रस्थानां पृथग्जनानामासंज्ञिकप्रविविक्षा भवति । आर्याणां त्वनभ्रकपुण्यप्रसवेष्वपि शुद्धावासारूप्यप्रविविक्षा । परिनिर्वातुकामता च शुद्धावासानामपीति न तेषां तत्रावस्थानबुद्धिः । अतो न ते सत्त्वावासा इत्या*चार्यसङ्घभद्रः ।*

*अन्ये* पुनर्व्याचक्षते—के पुनरन्ये, *अपाया* इति । अपायानामेव वचनादनभ्रकादयः सत्त्वावासा इष्टा *आचार्यस्ये*ति । तैर्युक्तिरन्वेष्टव्या । *बन्धनस्थानवदि*ति । यथा बन्धनस्थानानि न सत्त्वावासाः, *अनिच्छावसनात्;* एवमपाया इति ।

*रूपोपगा विज्ञानस्थितिरि*ति । विज्ञानं तिष्ठत्यस्यामिति विज्ञानस्थितिः । उपगच्छतीति उपगा । विज्ञानस्य समीपचारणी इत्यर्थः । रूपं च तदुपगा च सा रूपोपगा । एवं यावत् संस्काराश्च ते उपगा च संस्कारोपगेति ।

*भगवद्विशेषस्तु* व्याचष्टे—*रूपोपगा विज्ञानस्थितिर्यावत् संस्कारोपगेति । सौत्रान्तिकानां* नयेनोच्यते । तत्र विज्ञानस्थितिर्भवसन्त्यनुच्छेदः, रूपमुपगमस्या विज्ञानस्थितेः सेयं रूपोपगा, उपगमिति उपगम्यते तदात्मीयत इति । एवं यावत् संस्कारा उपगा अस्या विज्ञानस्थितेः सेयं संस्कारोपगाः । अथवा तृष्णा स्थितिः, तिष्ठत्यनया विज्ञानं पुनर्भवसन्तत्यनुच्छेदादिति कृत्वा, विज्ञानस्य स्थितिर्विज्ञानस्थितिः । सा रूपमुपगच्छतीति तदभिष्वङ्गत इति रूपोपगा । एवं यावत् संस्कारोपगा । *वैभाषिकाणां* पुनर्नयेन कारकार्थो न शक्यते योजयितुमिति दूषयति ।

स्कन्धा इति ? स्थातुः परिवर्जनेन[1] स्थितिविधानात्। न हि स्थातैव स्थिति-रुच्यते, यथा—न राजैव राजासनमिति। यांश्च धर्मानभिरुह्य विज्ञानं वाहयति नौनाविकन्यायेन, ते धर्मा विज्ञानस्थितय उक्ताः। न तु विज्ञानं विज्ञानमेवा-भिरुह्य[2] वाहयत्यतो नोक्तमिति वैभाषिकाः।

यत्तर्हि सूत्र उक्तम्—"विज्ञाने आहारे अस्ति नन्दी, अस्ति राग इति। यत्रास्ति नन्दी अस्ति रागः, प्रतिष्ठितं तत्र विज्ञानमधिरूढम्" ( ) इति, तत् कथम् ? "सप्त च विज्ञानस्थितयः पञ्चस्कन्धस्वभावाः[3]" ( ) इति, तत् कथम् ? एवं तर्ह्यभेदेनोपपत्त्यायतनसंगृहीतेषु स्कन्धेषु साभिरामायां विज्ञानप्रवृत्तौ विज्ञानं विज्ञानस्थितिः। प्रत्येकं तु यथा रूपादयो विज्ञानस्य संक्लेशाय भवन्ति।

---

अत्र ब्रूमः—द्विविधेऽप्यस्मिन् व्याख्याने रूपादिव्यतिरिक्ता विज्ञानस्थिति-रुक्ता—"ता हि चत्वारः सास्रवाः स्कन्धाः" इति।

*"चतुष्कोटिस्तु संग्रहे"* इत्येतत् सर्वं निरस्तं भवतीति दोषान्तरम्। तस्मात् पूर्वकमेव व्याख्यानं साधु। एतद्वैभाषिकव्याख्यानं वर्णयामः, न तैरेवं व्याख्यातम्—रूपमुपगच्छतीति रूपोपगा विज्ञानस्थितिरित्यादि।

*अपरे* पुनर्व्याचक्षते—रूपोपगा विज्ञानस्थितिरिति, रूपस्वभावेत्यर्थः। यथान्यत्रोक्तम्—खक्खटखरगतमिति। स्वभावोऽर्थो गत्यर्थ इत्यभिप्रायः।

*स्थातुः परिवर्जनेन।* अन्यो लोके स्थाता देवदत्तादिः, अन्या स्थितिः स्थानं गृहादिकमित्यर्थः। विज्ञानं वाहयति प्रवर्त्तयतीत्यर्थः। *नौनाविकन्यायेन।* यथा नाविको नावं वाहयति तद्वत्। *न तु विज्ञानं विज्ञानमेवाभिरुह्य वाहयतीत्यर्थः।* एकसन्ताने विज्ञानद्वयासमवधानम्। परसन्तानविज्ञानं तु यद्यपि युगपद् भवति, न तु तदितरस्य समीपे वर्त्तत इति न तत् तस्य स्थितिर्भवति।

*नन्दी* सौमनस्यम्। *सप्त च विज्ञानस्थितयः पञ्चस्कन्धस्वभावाः, तत् कथमिति।* सप्तसु विज्ञानस्थितिषु पञ्चस्कन्धस्वभावत्वेनेष्टासु। तत् कथं विज्ञानम्, न विज्ञानस्थितिरिष्टमिति। *एवं तर्ही*ति विस्तरः। *अभेदे*नैकपिण्डरूपेण रूपादीनां स्कन्धानाम*उपपत्त्यायतनसंगृहीतेषु स्कन्धेषु* मनुष्यादिनिकायसभागसंगृहीतेषु, *साभिरामायां* साभिरत्यां *विज्ञानप्रवृत्तौ विज्ञानं विज्ञानस्थितिः* सप्तविज्ञानस्थिति-

---

१. परिहारेण—का०। २. ०मेवारुह्य—का०।

३. पञ्चस्कन्धसंगृहीताः—का०।

तस्माच्चतसृषु विज्ञानस्थितिषु—

**केवलम् ॥ ७ ॥**

**विज्ञानं न स्थितिः प्रोक्तम्,**

अपि च क्षेत्रभावेन भगवता चतस्रो विज्ञानस्थितयो देशिताः, बीजभावेन च सोपादानं विज्ञानं कृत्स्नमेवेति । न पुनर्बीजं बीजस्य क्षेत्रभावेन व्यवस्थापयाम्बभूवेत्यभिप्रायं परिकल्पयामास । ये च[1] धर्माः सहवर्त्तिनो विज्ञानस्य, तेऽस्य क्षेत्रभावेन साधीयांसो भवन्तीति त एवास्य स्थितय उक्ताः ॥

अथ कथं सप्तभिर्विज्ञानस्थितिभिश्चतस्रो विज्ञानस्थितयः संगृहीताः, चतसृभिर्वा सप्त ? नैव हि सप्तभिश्चतस्रः, नापि चतसृभिः सप्त ।

**चतुष्कोटि तु संग्रहे ।**

संग्रहे विचार्यमाणे चतुष्कोटिकं वेदितव्यम्—स्यात् सप्तभिः संगृहीतं न

---

देशनायामभिप्रीयते । *प्रत्येकं त्वेकमेकं* स्कन्धं प्रति । *यथा रूपादयो विज्ञानस्य संक्लेशाय भवन्ति;* आश्रयसम्प्रयोगसहभूभावेनोपगतत्वात् । *नैवम् केवलम् ।* पृथग् । *विज्ञानम् । किम् ?* संक्लेशाय भवतीत्यधिकृतम् । कस्मात् ? युगपदाश्रयत्वाद्ययोगात् । तस्माच्चतुर्विज्ञानस्थितिदेशनायाम् "*केवलम्* पृथग् *विज्ञानं न स्थितिः प्रोक्तम् ।*"

तथा विनेयजनापेक्षया ह्येकत्र सूत्रे अन्यथा विज्ञानस्थितिरुक्ता, अन्यत्र चान्यथेति, अत आह—*अपि च क्षेत्रभावेनेति* विस्तरः । विज्ञानस्य क्षेत्रभावेन चतस्रो विज्ञानस्थितयो रूपवेदनासंज्ञासंस्कारस्वभावा देशिताः । *विज्ञानं बीजभावेन* वपनीयरूपेण सोपादानम् । स्वभूमिकया तृष्णया सतृष्णम् । कृत्स्नमेव सन्तानगतं देशितमिति । न पुनर्बीजं बीजस्य क्षेत्रभावेन व्यवस्थापयाम्बभूव भगवान् । नहि लोके बीजं क्षेत्रभावेन व्यवस्थाप्यते । *ये च धर्मा इति* विस्तरः । ये च धर्मा विज्ञानस्य सहवर्त्तिनो रूपादयः, त एव क्षेत्रभावेन साधुतरा भवन्ति । सहवर्त्ति हि बीजस्य क्षेत्रं लोके दृश्यते । विज्ञानं तु विज्ञानेन सह न वर्त्तते; युगपद् अभावात् । अतीतानागतास्तर्हि रूपादयो न विज्ञानस्थितयः प्राप्नुवन्ति ? तेऽप्यतीतानागता यथास्वमतीनागतानां विज्ञानानां स्थितयो भवन्ति । तस्मात् स्वभूमौ सर्व एव सास्रवा रूपादयो विज्ञानस्थितयो भवन्तीत्यवगन्तव्यम् ।

---

१. का० पुस्तके नास्ति ।

चतसृभिरित्येवमादि । प्रथमा कोटिः—सप्तसु यद्विज्ञानम् । द्वितीया—अपायेषु चतुर्थे ध्याने भवाग्रे च विज्ञानवर्ज्याः स्कन्धाः । तृतीया—सप्तसु चत्वारः स्कन्धाः । चतुर्थी—एतानाकारान् स्थापयित्वा ।

यच्चैतद् गत्यादिभेदभिन्नं त्रैधातुकमुक्तम्, वेदितव्याः—

**चतस्रो योनयस्तत्र सत्त्वानामण्डजादयः ॥ ८ ॥**

**अण्डजा** योनिर्जरायुजा संस्वेदजा उपपादुका योनिः । योनिर्नाम जातिः । युवन्त्यस्यां सत्त्वा मिश्रीभवन्ति प्रसवसाम्यादिति योनिः ।

अण्डजा योनिः कतमा ? ये सत्त्वा अण्डेभ्यो जायन्ते । तद्यथा—हंसक्रौञ्चचक्रवाकमयूरशुकशारिकादयः ।

जरायुजा योनिः कतमा ? ये सत्त्वा जरायोर्जायन्ते । तद्यथा—हस्त्यश्वगोमहिषखरवराहादयः ।

संस्वेदजा योनिः कतमा ? ये सत्त्वा भूतसंस्वेदाज्जायन्ते । तद्यथा—कृमिकीटपतङ्गमशकादयः ।

उपपादुका योनिः कतमा ? ये सत्त्वा अविकला अहीनेन्द्रियाः सर्वाङ्ग-

---

*प्रथमा कोटिरिति* विस्तरः *' सप्तसु यद्विज्ञानमि*ति । पञ्चस्कन्धस्वभावत्वात् सप्तानां विज्ञानस्थितीनाम् । तत्र विज्ञानं संगृहीतं न चतसृषु, विज्ञानस्य तत्राग्रहणात् । *विज्ञानवर्ज्याः स्कन्धा* इति । अपायादिष्वपि विज्ञानं न चतसृषु संगृहीतम्, न सप्तस्वपायादिषु, विज्ञानपरिभेदेनाग्रहणात् । *सप्तसु चत्वारः स्कन्धा* इति । सप्तसु विज्ञानस्थितिषु ये विज्ञानवर्ज्याश्चत्वारः स्कन्धा उक्ताः, ते चतसृष्वपि विज्ञानस्थितिषु संगृहीता इत्युभयत्रापि संगृहीता इति *तृतीया कोटिः* । *चतुर्थ्येतानाकारान् स्थापयित्वेति* । अपायेषु चतुर्थे ध्याने भवाग्रे च यद्विज्ञानमनास्रवाश्च धर्माः ।

*यच्चैतद् गत्यादिभेदभिन्नमिति* । आदिशब्देन भाजनान्तराभवभूम्यादि-गृह्यते । जरायुर्येन मातुः कुक्षौ गर्भे वेष्टितस्तिष्ठति तस्माज्जाता *जरायुजाः* । *भूतसंस्वेदजा* इति । भूतानां पृथिव्यादीनां संस्वेदाद् द्रवत्वलक्षणाज्जाता भूतसंस्वेदजाः ।

*अविकलाः* चक्षुरिन्द्रियाद्यवैकल्यात् । *अहीनेन्द्रियाः* काणविभ्रान्तादेरभावात् । *सर्वाङ्गैरुपेता* हस्तपादादिभिः । सर्वैश्च प्रत्यङ्गैरङ्गुल्यादिभिरुपेताः

प्रत्यङ्गोपेताः सकृदुपजायन्ते। अत एव उपपादने[1] साधुकारित्वाद् 'उपपादुकाः' इत्युच्यन्ते, तद्यथा—देवनारकान्तराभविकादयः ॥ ८ ॥

अथ कस्यां गतौ कति योनयः संविद्यन्ते ? इत्याह—

**चतुर्धा नरतिर्यञ्चः**

मनुष्याश्चतुर्विधाः—१. अण्डजास्तावद्, यथा क्रौञ्चीनिर्यातौ **शैलोपशैलौ स्थविरौ, मृगारमातुश्च** द्वात्रिंशत् पुत्राः, **पञ्चालराजस्य** च पञ्च पुत्रशतानि। २. जरायुजाः, यथेदानीम्। ३. संस्वेदजाः, तद्यथा **मान्धातृचारूपचारु-कपोतमालिन्याम्रपाल्यादयः**। ४. उपपादुकाः पुनः प्राथमकल्पिकाः।

एवं **तिर्यञ्चो**ऽपि चतुर्विधाः—त्रिविधा दृश्यन्त एव, उपपादुकास्तु **सुपर्णी**प्रभृतयः[2]।

**नारका उपपादुकाः।**

**अन्तराभवदेवाश्च**

सर्वे **नारका** अन्तराभविकाः। **देवाश्चोपपादुका** एव।

---

*सकृदुपजायन्ते*, न कललाद्यनुपूर्व्या अण्डजादिवत्। *उपपादने* उपपत्तौ *साधुकारित्वात्*। शुक्लशोणिताद्यनुपादानेन सकृदुपजातत्वात् *उपपादुका इत्युच्यन्ते*॥

*क्रौञ्चीनिर्जातावि*ति विस्तरः। भिन्नयानपात्रौ किल वणिजौ समुद्रतीरे क्रौञ्चीं समभिगतौ, ततो निर्जातौ *शैलोपशैलौ स्थविरावि*ति। *पञ्चालराजस्ये*ति। तस्य महादेव्याः पञ्चाण्डशतानि जातानि। तेन राज्ञा मञ्जूषायां प्रक्षिप्य गङ्गायामववाहितानि। लिच्छविराजेन सान्तःपुरेण स्नायता सा मञ्जूषोह्यमाना दृष्टा, उद्घाटिता च। तस्यां पञ्चशतानि दारकाणां दृष्टानि, गृहीतानि चेति। *मान्धातृप्रभृतयः संस्वेदजाः*। कथम्? उपोषधस्य किल राज्ञो मूर्ध्नि पिटको जातः, तस्य वृद्धेरन्वयात् परिपाकान्वयात् परिभेदान्वयाद् दारको जातः, सोऽयं मान्धातेति संस्वेदजो भवति। राज्ञः खल्वपि मान्धातुर्जानूपरि पिटकौ जातौ, तयोर्वृद्धेरन्वयात् पूर्ववद् यावद्दारकौ जातौ, ताविमौ *चारूपचारौ*। ब्रह्मदत्तस्य किल राज्ञ उरसि पिटको जातः। तस्य वृद्धेरन्वयात् पूर्ववद् यावद्दारिका जाता, सेयं *कपोतमालिनीति*। आम्रपाल्यपि कदलीस्तम्भाज्जातेति श्रूयते। *प्राथमकल्पिका* इति। "प्रागासन् रूपिवत् सत्त्वाः" ( अभि० ३.९७ ) इति वचनात्। *सुपर्णी*, गरुडः। प्रेतानां जरायुजत्वसिद्ध्यर्थमुच्यते।

१. उपपदने—का०। २. नागसुपर्णि०—का०।

**प्रेता अपि जरायुजाः ॥ ९ ॥**

अपिशब्दादप्युपपादुका इति । आयुष्मते महामौद्गल्यायनाय प्रती निवेदयते —

"पञ्च पुत्रानहं रात्रौ दिवा पञ्च तथा परान् ।
भक्षयामि जनित्वा तान् नास्ति तृप्तिस्तथापि मे ॥"

(　　　)

कतमा योनिः सर्वसाध्वी ? उपपादुका ।

अथ किमर्थं चरमभविको बोधिसत्त्वः प्राप्तोपपत्तिवशित्वेऽपि जरायुजां योनिं भजते ? एवं हि क्रियमाणे महान्तमर्थं पश्यति—'ज्ञातिसम्बन्धेन महतः शाक्यवंशस्य धर्मेऽवतरणार्थं चक्रवर्तिवंश्योऽयम्' इति चान्येषां बहुमानादरावर्जनार्थम्, 'मनुष्यभूता अपि चैनां सिद्धिं गच्छन्ति' इति विनेयानामुत्साहार्थम् । इतरथा ह्यप्रज्ञायमानकुलगोत्रः कोऽप्ययं मायापुरुषः—इत्येवं परिकल्पयेयुः, देवः पिशाच इति वा । यथाऽन्यतीर्थ्या अपभाषन्ते—"कल्पशतस्यात्ययादेवंविधो मायावी लोके प्रादुर्भूय मायया लोकं भक्षयति" (　　　) इति ।

अपरे त्वाहुः—'शरीरधातूनामवस्थापनार्थं येषु मनुष्या अन्ये च प्रजा

---

*आयुष्मत* इति विस्तरः । कथं गम्यते जरायुजत्वसिद्ध्यर्थमिति ? *रात्रौ पञ्चतां जनित्वेति* वचनात् । ननु च सुतरामुपपादुकत्वसिद्ध्यर्थमिति गम्यते, "पञ्च रात्रौ, दिवा पञ्च तथाऽपरान्.........नास्ति तृप्तिस्तथापि मे" इति वचनात् ? जरायुजैर्हि भक्षितैस्तृप्तिर्भवेत् । जरायुजसिद्ध्यर्थमेव नोपपादुकसिद्ध्यर्थम् । रात्रौ पञ्चानां सकृज्जन्म दिवा चापरेषां पञ्चानां सकृज्जन्म दिवा चापरेषां पञ्चानां न विरुध्यते; तावत्कालेन तदात्मभावपरिपूरितः । क्रमेणापि च रात्रौ पञ्चानां दिवा परेषां पञ्चानां जन्म न विरुध्यते; सत्त्वजातिः सा तादृशी, कर्मणां चाचिन्त्यो विपाक इति । अभिप्रवृद्धजिघांसादोषत्वात्तु नापि तृप्तिरस्तीति ।

*प्राप्तोपपत्तिवशित्वेऽपीति* । अनेन जरायुजोपपत्तौ कर्मबलात्कारायोगं दर्शयति । *यथान्यतीर्थ्या अपभाषन्त* इति । यथोक्तं निर्ग्रन्थशास्त्रे—"ऋद्धिं भदन्त को दर्शयति, मायावी गौतमः" इति । तथा भगवन्तमेवोद्दिश्यान्यत्रोक्तम्—*कल्पशतस्यात्ययादेवंविधो लोके मायावी प्रादुर्भूय मायया लोकं भक्षयतीति* । उपजीवतीत्यर्थः ।

विधाय सहस्रशः स्वर्गं च प्राप्ता अपवर्गं चेति उपपादुकानां हि सत्त्वानां बाह्यबीजाभावान्मृतानां कायो नावतिष्ठते, निशान्त इव तैलप्रद्योतोऽन्तर्धीयते । आधिष्ठानिकीमृद्धिं भगवत इच्छतां न युक्त एष परिहारः ॥

प्रश्नात् प्रश्नान्तरमुत्पद्यते[1]—

यद्युपपादुकानां[2] कायनिधनं न प्रज्ञायते, कथमुक्तं सूत्रे—"उपपादुकः सुपर्णी उपपादुकं नागमुद्धरति भक्षार्थम्" इति ? नोक्तं भक्षयतीति, अपि तूद्धरति भक्षार्थमज्ञत्वादित्यदोषः । भक्षयति वा यावन्न मृतो भवति, न पुनर्मृतस्यास्य तृप्यतीति ॥

कतमा योनिः सर्वबह्वी ? उपपादुकैव । सा हि द्वे[3] गती[3]—तिसृणां च प्रदेशः, सर्वे चान्तराभविका इति ॥ ९ ॥

---

*बाह्यबीजाभावादिति* । बाह्यस्य शुक्रशोणितकर्दमादेरभावादित्यर्थः । *आधिष्ठानिकीमिति* । यदधितिष्ठति इदमेवं भवत्विति तदधिष्ठानम्, तत्प्रयोजनमस्याः, तत्र वा भवा ऋद्धिराधिष्ठानिकी । *तामिच्छतां* बौद्धानां *न युक्त एष परिहार* इति । कतमः ? य उक्तः—शरीरधातूनामवस्थापनार्थमिति ।

*प्रश्नात् प्रश्नान्तरमुत्पद्यत* इति । अथ किमर्थं चरमभविको बोधिसत्व इति प्रश्न उक्तो विस्तरेण । तत्र चोक्तम्—शरीरधातूनामवस्थापनार्थमिति विस्तरः । तस्मात् प्रश्नादिदं प्रश्नान्तरमुत्पद्यते—*यद्युपपादुकानामिति* । विस्तरः—*कायनिधनं* कायनाशः । उपपादुकः सुपर्णी उपपादुकं नागमिति विशेषणद्वयं किमर्थम्, किमनुपपादुका अपि सुपर्णिनो नागाश्च सन्ति ? सन्तीत्याहुः । चतुर्विधा हि गरुडा नागाश्च, अण्डजादिभेदात्; तेषामुपपादुका उत्तमाः, संस्वेदजा उपोत्तमाः, जरायुजा मध्याः, अण्डजा जघन्याः । तत्रोपपादुकः सुपर्णी सर्वानुपपादुकादीनुद्धरति भक्षार्थम्, संस्वेदजस्त्रीन् संस्वेदजादीन्, जरायुजो द्वौ जरायुजाण्डजौ, अण्डजोऽण्डजमेवेति वर्णयन्ति । *यावन्न मृत* इति । यदा जीवति तदा तन्मांसादि नान्तर्धीयत इति निदर्शितं भवति । न *पुनर्मृतस्यास्य तृप्यतीति* । न पुनर्मृतेनानेन तृप्यतीत्यर्थः । "तृप्तिपूरौ विभाषा" (           ) इति विभाषा षष्ठीष्यते । तस्य मृतस्याकाशस्येव भक्षितस्य मांसपिण्डान्तर्धानान्न तृप्यतीत्यवगन्तव्यम् ।

*सा हि द्वे गती* इति । नरकगतिः, देवगतिश्च । *तिसृणां च प्रदेश* इति । तिर्यक्-प्रेत-मनुष्यगत्यन्तरालत्वात् ॥ ९ ॥

---

१. ०मुपजायते—का० । २. यद्यप्युप०—का० । ३–३. द्विगती—का० ।

कोऽयमन्तराभवो नाम ?

मृत्यूपपत्तिभवयोरन्तरा भवतीह यः ।

मरणभवस्योपपत्तिभवस्य चान्तरा य आत्मभावोऽभिनिर्वर्त्तते देशान्तरोपपत्तिसम्प्राप्तये, सोऽन्तराभव इत्युच्यते; गत्योरन्तरालत्वात्[1] ।

कथमयं जातश्च नाम न चोपपन्नो भवति :

गम्यदेशानुपेतत्वान्नोपपन्नोऽन्तराभवः ॥ १० ॥

उपपत्तिगतो हि 'उपपन्न:' इत्युच्यते; पदेर्गत्यर्थत्वात् । न चायं गम्यदेशमुपगतोऽन्तराभवः, तस्मान्नोपपन्नः ॥ १० ॥

कः पुनरसौ देशो गन्तव्यः? यत्राक्षिप्तस्य विपाकस्याभिव्यक्तिः, समाप्तिश्च ।

विच्छिन्न एवोपपत्तिभवो मरणभवात् सम्भवतीति निकायान्तरीयाः । तदेतन्नेष्यते । किं कारणम् ? युक्तितश्च, आगमतश्च ॥ १० ॥

तत्र तावत् युक्तिं निश्रित्योच्यते—

व्रीहिसन्तानसाधर्म्यादविच्छिन्नभवोद्भवः ।

---

*गत्योरन्तरालत्वात्* । ननु चाव्याकृतैव गतिरिष्यते, उपपत्तिभवश्चैकान्तेन क्लिष्टः, मरणभवोऽपि कदाचित् कुशलः क्लिष्टो वा भवति न गतिः, कथं तयोर्ग[illegible]रोप्य गत्यन्तरालत्वादित्युच्यते ? नैष दोषः; मरणोपपत्तिभवयोरनिवृताव्याकृतानां निकायसभागजीवितेन्द्रियजात्यादीनां गतिस्वभावानां तत्काले विद्यमानत्वात् । कामरूपधात्वोश्च कायेन्द्रियस्याप्यवश्यम्भावात् । न चोपपत्तिवन्मरणभवोऽवश्यं क्लिष्टो नाप्यवश्यं कुशलः । तस्मात्तेषु गतिशब्दमारोप्य गत्यन्तरालत्वादित्युक्तम् । *पदेर्गत्यर्थत्वादिति* । "पद गतौ" ( मा० धा० ४.६० ) इति पठ्यते, तेनोपपन्नशब्दस्योपगतार्थं दर्शयति ।

*"नोपपन्नोऽन्तराभवः"* । किं तर्हि ? उपपद्यमान इति । *अभिव्यक्तिः समाप्तिश्चेति* । आक्षेपकेण कर्मणा निकायसभागस्याभिव्यक्तिः, परिपूरकैः परिसमाप्तिः; सर्वस्मिन् जन्मनि कर्मद्वयस्य व्यापारात्, "एकं जन्माक्षिपत्येकमनेकं परिपूरकम्" ( अभि० ४.९५ ) इति वचनात् । अथ वा—यत्र देशे आक्षिप्तस्य कर्मणा नामरूपस्य विपाकस्य प्रादुर्भावोऽभिव्यक्तिः, षडायतनपूरितश्च समाप्तिः, स देशोऽवगन्तव्यः ॥ १० ॥

*"व्रीहि[illegible]र्म्यात्"* इति विस्तरः । संबध्नंस्तानः सन्तानः, व्रीहेः

---

[1] गत्यन्तरा०—का० ।

सन्तानवर्त्तिनां हि धर्माणामविच्छेदेन देशान्तरेषु प्रादुर्भावो दृष्टः, तद्यथा व्रीहिसन्तानस्य। तस्मादस्यापि सत्त्वसन्तानस्याविच्छेदेन देशान्तरेषु प्रादुर्भावो भविष्णुः।

विच्छिन्नोऽपि दृष्टः प्रादुर्भावः, तद्यथा—आदर्शादिषु बिम्बात् प्रतिबिम्बम्[1]। एवं मरणभवादुपपत्तिभवस्य स्यात्।

**प्रतिबिम्बमसिद्धत्वादसाम्याच्चानिदर्शनम् ॥ ११ ॥**

**प्रतिबिम्बं नामान्यदेवोत्पद्यते धर्मान्तरमित्यसिद्धमेतत्।**

---

सन्तानो व्रीहिसन्तानः। तेन साधर्म्यादविच्छिन्नस्य भवस्योद्भवो भवति। यतोऽपैति, यत्र चोत्पद्यते, तदन्तरालसन्तानवर्त्तिरूपपूर्वकमुपपत्तिभवरूपम्; स्वोपादानरूपसन्तानरूपस्वभावत्वात्, व्रीहीसन्तानपश्चात्तररूपवत्।

*सन्तानवर्त्तिनां हि धर्माणामविच्छेदेन देशान्तरोत्पत्त्या देशान्तरेषु प्रादुर्भावो दृष्टः।* तद्यथा—व्रीहिसन्तानस्य। व्रीहिन्तानपश्चात्तररूपं हि यतो देशान्तरादपैति, यत्र च देशान्तर उत्पद्यते, तदन्तरालसन्तानवर्त्तिरूपपूर्वकमुत्पद्यते। *क्षणिकवादिनां* ह्ययमस्माकं सिद्धान्तः—यदा ग्रामाद्ग्रामान्तरं नीयते व्रीहिः, न स व्रीहिः पूर्वत्र ग्रामे निरुध्य तद्ग्रामान्तरालेऽनुत्पद्यमानोऽनेकयोजनान्तरितेऽपि ग्रामान्तर उत्पद्यते। किं तर्हि? निरन्तराकाशदेशोत्पादनिरोधक्रमेणोत्पद्यते ग्रामान्तरे। तच्च स्वोपादानरूपसन्तानरूपस्वभावम्; तथोपपत्तिभवरूपमप्युत्पद्यत इति। अत्राचार्य*गणमतिः* सह शिष्येणाचार्य*वसुमित्रेण* स्वनिकायानुरागभावितमतिर्व्याख्यानव्यापारमपास्य प्रत्यवस्थानपर एव वर्त्तते। वयमिह शास्त्रार्थविवरणं प्रत्याद्रियामहे, न तद्दूषणम्; निःसारत्वात्, बहुवक्तव्यभयाच्च। *भविष्णुर्भवनशीलः*।

*विच्छिन्नोऽपीति* विस्तरः। *आदर्शादिषु बिम्बात् प्रतिबिम्बमिति*। आदर्शोदकादिषु बिम्बात् मुखात् प्रतिबिम्बं मुखच्छायारूपं विच्छिन्नमुत्पद्यमानं दृष्टमित्यनेनानैकान्तिकतामुद्ग्राहयति। प्रतिसाधनं वा करोति—'यतोऽपैति, यत्र चोत्पद्यते, न तदन्तरालसन्तानवर्त्तिरूपपूर्वकमुपपत्तिभवरूपम्; स्वोपादानरूपसन्तानरूपस्वभावत्वात्, प्रतिबिम्बरूपवत्' इति।

*प्रतिबिम्बं नामान्यदेवोत्पद्यते धर्मान्तरमित्यसिद्धमेतदिति*। बिम्बसामर्थ्यादेव तत्रादर्शादिषु प्रतिबिम्बाकारं भ्रान्तं विज्ञानमुत्पद्यत इत्याचार्यस्याभिप्रायः। *न तत्र प्रतिबिम्बं नाम किञ्चिदस्ति* इत्यनेन धर्म्यसिद्धिर्नाम दृष्टान्तदोषं

---

१. प्रतिबिम्बस्य—का०।

सिद्धावपि च सत्यामसाम्यादनिदर्शनं भवति ॥ ११ ॥

कथं तावदसिद्धम् ?

सहैकत्र द्वयाभावात्,

तत्रैव हि देशे आदर्शरूपं दृश्यते प्रतिबिम्बकं[1] च। न चैकत्र देशे रूपद्वयस्यास्ति सहभावः; आश्रयभूतभेदात्।

तथा दिग्भेदव्यवस्थितैरेकस्मिन्[2] वाप्यम्बुदेशे स्वाभिमुखदेशस्थितानां[3] रूपाणामन्योऽन्यं प्रतिबिम्बकमुपलभ्यते, न त्वेकत्र रूपे द्वयोः पश्यतोः

---

दर्शयति। तस्मान्नानेकान्तिकतास्ति। न चैतत् प्रतिसाधनं साध्विति। *सिद्धावपि च सत्याम् असाम्यादनिदर्शन*मिति। प्रतिबिम्बस्य द्रव्यसत्त्वेन सिद्धावपि सत्यामसाम्याद् दार्ष्टान्तिकेन न निदर्शनमनुदाहरणं प्रतिबिम्बकमिति ॥ ११ ॥

*कथं तावदसिद्ध*मिति। तावच्छब्दः क्रमे।

असिद्धतायुक्तिं तावत् दर्शयन्नाह—"*सहैकत्र द्वयाभावात्*" इति विस्तरः। तत्रैव हि आदर्शदेशे आदर्शरूपं दृश्यते पार्श्वस्थितेन, न प्रतिबिम्बकम्। प्रतिबिम्बकं च तत्रैव दृश्यतेऽभिमुखावस्थितेन, नादर्शरूपम्। न चैकत्र देशे उपादाय *रूपद्वयस्यास्ति सहभावः*। किं कारणम्? *आश्रयभूतभेदात्*। आश्रयभूतानि हि तयोर्भिन्नानीति। नास्त्यादर्शरूपाश्रयभूतैरवष्टब्धे देशे प्रतिबिम्बकरूपाश्रयभूतानां तत्रावकाशः। अतो नोपादायरूपद्वयस्यास्ति सम्भवः। तदेवं युगपद्विज्ञानद्वयस्याभावात्, उपादायरूपद्वयस्य चैकत्र सहभावाभावात्, न तत् किञ्चिदस्तीति दर्शयति। यत्रैव हि देशे आदर्शरूपं दृश्यत इति बिम्बकं च तत्रैव, न त्वन्यत्र। को दोषः? इत्याह—*न चैकत्र रूपद्वयस्यास्ति सहभाव* इति पूर्ववद् वाच्यम्।

अथवा सहैकत्र द्वयाभावादित्यस्य सूत्रस्यायमर्थः—एकत्र रूपे पुरुषद्वयस्य पश्यत एवाभावात्। सहदर्शनस्य प्रतिबिम्बमसिद्धमिति वाक्याध्याहारः। कथम्? इत्याह—*दिग्भेदव्यवस्थितैः* पुरुषैरेकैरुत्तरदिग्व्यवस्थितैः, इतरैर्दक्षिणदिग्व्यवस्थितैः। *एकस्मिन् वाप्यम्बुदेशे* एकस्मिंस्तटाकजलदेशे, *स्वाभिमुखदेशस्थितानां रूपाणाम्*। दक्षिणतटोर्ध्वस्थितानि रूपाण्युत्तरदिग्व्यवस्थितपुरुषस्याभिमुखस्थानि, उत्तरतटोर्ध्वस्थितान्यपि रूपाणि दक्षिणदिग्व्यवस्थितपुरुषस्याभिमुखस्थानि, तेषामुभयेषाम्। किम्? *प्रतिबिम्बकमन्योन्यमुपलभ्यते*।

---

१. प्रतिबिम्बं—का०। २. ०व्यवस्थितेरे०—का०।

३. ०देशस्थानां—का०।

सहदर्शनं न भवतीति न तत्र रूपान्तरोपपत्तिर्युक्ता ।

छायातपयोश्च द्वयोः सहैकत्रभावो न दृष्टः । उपलभ्यते च छायास्थ आदर्शे सूर्यस्य प्रतिबिम्बकमिति न युक्तोऽस्य तत्र प्रादुर्भावः ।

अथ वा—सहैकत्र द्वयाभावात् इति । कतमस्य द्वयस्य ? आदर्शतलस्य, इन्दुप्रतिबिम्बकस्य च । अन्यत्रैव हि देशे आदर्शतलं भवति, अन्यत्रैवान्तर्गतं चन्द्रप्रतिबिम्बकं दृश्यते, कूप इवोदकम् । तच्च तत्रोपपद्यमानं नान्यत्रोपलभ्यते । अतो नास्त्येव तत् किञ्चित् । सामग्र्यास्तु स तस्याः[1] प्रभावो यत् तथा दर्शनं भवति । अचिन्त्यो हि धर्माणां शक्तिभेदः । एवं तावदसिद्धत्वात् ।

---

उत्तरदिग्व्यवस्थितैर्दक्षिणतटाधः प्रतिबिम्बकमुपलभ्यते, रप्युत्तरतटाधः प्रतिबिम्बकमुपलभ्यते । एवमन्योन्यमुपलभ्यते, न तूभयं युगपदुपलभ्यत इति वाक्यार्थः । न हि स्वतटाधःप्रतिबिम्बकमेकतटस्थैः समन्ततोऽपि वापीजलं पश्यद्भिरुपलभ्यते । ततः किमिति चेद् ? अत आह—न त्वेकत्र रूपे घटे पटे वा *द्वयोः पश्यतोः* पुरुषयोः *सहदर्शनं न भवति* । भवत्येवेत्यर्थः । इह तु न भवति सहदर्शनमित्यतो *न तत्र रूपान्तरोत्पत्तिर्युक्तेति* ।

अथवा अस्यायमर्थः—*छायातपयोश्च द्वयोः सहैकत्र भावो न दृष्टो* लोके । यत्र छाया भवति मण्डपेऽन्यत्र वा, न तत्रातपः; यत्र वातपो भवत्यभ्यवकाशे, न तत्र छाया । *उपलभ्यते च छायास्थ आदर्शे सूर्यस्य प्रतिबिम्बकमिति* । कथम् ? तटाके सूर्यप्रतिबिम्बकमुत्पद्यते, तत्तटाकतटस्थे च छायावति मण्डपे आदर्शः स्थाप्यते । तत्रादर्शके तटाकस्थस्य सूर्यप्रतिबिम्बकस्यापरं प्रतिबिम्बकमुत्पद्यते, तटाके च यत् सूर्यप्रतिबिम्बकं तत् सूर्यसमुत्थमित्यवश्यमातपस्वभावमित्यभ्युपगन्तव्यम् । यच्चापरमादर्शे प्रतिबिम्बकं तदातपस्वभावप्रतिबिम्बकसमुत्थमित्येतदप्यवश्यं आतपस्वभावमभ्युपगन्तव्यम् । एवं सति छायातपयोः सहस्वभावः स्यात् । न चान्यत्र लोके छायातपयोः सहभाव इति । *न युक्तोऽस्य* प्रतिबिम्बकस्य *तत्र प्रादुर्भावः । कूप इवादेकमिति* । यथा कूपे दूरान्तर्गतमुदकं दृश्यते, तथा चन्द्रप्रतिबिम्बकमप्यत्रैवान्तर्गतं दृश्यते । न चादर्शस्तावत् वस्तुफलोऽस्ति । *तच्च तत्रोत्पद्यमानम्*, तच्च प्रतिबिम्बकमादर्श एवोत्पद्यमानम् । *नान्यत्राधस्तादुपलभ्यते* । उपलभ्यते च, *अतो नास्त्येव तत् किञ्चित्* । *सामग्र्यास्तु* । बिम्बादर्शादिलक्षणायाः । *स तस्याः प्रभावो यत्तथा दर्शनं भवति । अचिन्त्यो हि धर्माणां शक्तिभेदः* । अयसोऽयस्कान्ता।

---

१. तस्यास्तादृशः—का० ।

कथमसाम्यादनिदर्शनं भवति ?

असन्तानाद्,

नहि बिम्बस्य प्रतिबिम्बकं सन्तानभूतम्; आदर्शसन्तानसम्बद्धत्वात्, सहभावाच्च । तदेवं[1] यथा मरणभवस्योपपत्तिभवः[2] सन्तानभूतः[3], नैवं बिम्बस्य प्रतिबिम्बकम्[3] । सन्तानं च प्रत्यविच्छेदेन देशान्तरेषु प्रादुर्भाव उदाहृतः; नासन्तानम्—इत्यसाम्यं दृष्टान्तस्य, प्रतिबिम्बस्य च ।

द्वयोदयात् ।

द्वाभ्यां हि कारणाभ्यां प्रतिबिम्बस्योदयो भवति—बिम्बाच्च, आदर्शाच्चेति । यत् प्रधानं कारणं तदाश्रित्योत्पद्यते । न चैवमुपपत्तिभवस्यापि द्वाभ्यां कारणाभ्यां सम्भवः—मरणभवाच्चान्यतश्च प्रधानभूताद् । इत्यतोऽप्ययमसमानो दृष्टान्तः । न च युक्तमुक्तम्—बाह्यमेव चेतनं शुक्रशोणितं प्रधानकारणमिति । यत्र चान्यकारण एव प्रादुर्भाव उपपादुकानां तत्र किं परिकल्प्यते ?

---

नाग्नि काष्ठादीनाम्; यथा चन्द्रकान्ताच्चन्द्रोदयेऽसम्भवप्रक्षरणदर्शनम्, नाङ्गारादीनामित्येवमादि वक्तव्यम् ।

*आदर्शसन्तानसम्बद्धत्वादिति* । न बिम्बसन्तानभूतं प्रतिबिम्बमादर्शसम्बन्धत्वादादर्शरूपवत् । *सहभावाच्च* । बिम्बसमानकालरूपान्तरवत् । *तदेवं यथा मरणभवस्योपपत्तिभवः सन्तानभूतो नैवं बिम्बस्य प्रतिबिम्बकमिति* । साधनानन्वितः प्रतिबिम्बकदृष्टान्तः । व्रीहिसन्तानपश्चात्तररूपदृष्टान्तस्तु स्वसन्तानपूर्वरूपसन्तानभूत इति । तस्मा*दसाम्यं दृष्टान्तस्य प्रतिबिम्बस्य चेति* ।

*"द्वयोदयात्"* इति विस्तरः । द्वयेनोदयो द्वयोदयः, *तस्माद् बिम्बाच्चादर्शाच्चेत्यर्थः* । *यत् प्रधानं कारणमादर्शादि तदाश्रित्योत्पद्यते प्रतिबिम्बम्* । आदर्शादि हि प्रतिबिम्बस्य प्रधानं कारणम्; तदनुविधानात् । तद् यथा यद्यादर्शस्तिर्यगवस्थितो भवति प्रतिबिम्बमपि तिर्यगायतं च दृश्यते । यद्यूर्ध्वमवस्थितो भवति प्रतिबिम्बमपि तथैव दृश्यते । *न चैवमुपपत्तिभवस्यापि द्वाभ्यां कारणाभ्यां सम्भवो*. *मरणभवाच्चान्यतश्च* प्रधानभूतादादर्शस्थानीयात् । *बाह्यं शुक्रशोणितं प्रधानकारणमिति चेत्, न; अचेतनत्वात्* । उपपादुकानां च तदभावादतो*ऽप्ययमसमानो दृष्टान्तः* । किमनेन दर्शितं भवति ? उत्कालितविशेषणे हेतावयमतुल्यो दृष्टान्त इति ।

---

१. का० पुस्तके नास्ति । २. मरणस्योप०--का० ।

३–३. का० पुस्तके नास्ति ।

एवं तावद्युक्तितो नेष्यते । न मरणभवाद्विच्छिन्न उपपत्तिभवप्रादुर्भावः । तस्मादस्त्येवान्तराभवः ।

**कण्ठोक्तेश्चास्ति,**

सूत्र उक्तम्—"सप्त भवाः । नरकभवः, तिर्यग्भवः, प्रेतभवः, देवभवः, मनुष्यभवः, कर्मभवः, अन्तराभवः" इति ।

नैतत् सूत्रं तैराम्नायते ।

इतस्तर्हि—

**गन्धर्वात्,**

"त्रयाणां स्थानानां सम्मुखीभावात् मातुः कुक्षौ गर्भस्यावक्रान्तिर्भवति । माता कल्याऽपि भवति, ऋतुमती च । मातापितरौ रक्तौ[1] सन्निपतितौ च । गन्धर्वश्च प्रत्युपस्थितो भवति" ( ) इति । अन्तराभवं हित्वा कोऽन्यो गन्धर्वः ।

एतदपि नैव तैराम्नायते । कथं तर्हि "स्कन्धभेदश्च प्रत्युपस्थितो भवति" ( ) इति ?

यद्येवम् ? आश्वलायनसूत्रं कथं नीयते—"जानन्ति भवन्तो योऽसौ

---

कथमिति ? यतोऽपैति यत्र चोत्पद्यते तदन्तरालसन्तानवर्त्तिरूपपूर्वकमुपपत्तिभवरूपम्; अद्वयोत्पन्नस्वोपादानरूपसन्तानरूपस्वभावत्वात्, व्रीहिसन्तानपश्चात्तररूपवदिति । तदेवं सति नास्य साधनस्यानेकान्तिकता शक्यमुद्ग्राहयितुम्, नापि प्रतिसाधनं कर्तुमित्युक्तं भवति ।

आगमेनान्तराभवस्यास्तित्वं साधयन्नाह—"*कण्ठोक्तेश्चास्ति*" इति । स्वशब्दाभिधानादित्यर्थः । *नैतत् सूत्रं तैराम्नायत* इति । तैर्निकायान्तरीयैः । कस्मान्नाम्नायते ? तदागमेष्वभावात् । निकायान्तरागमप्रसिद्धं किमिति न प्रमाणं क्रियते ? मूलसंगीतिभ्रंशेन समारोपितसूत्राशंकितत्वात् ।

त्रयाणां *स्थानानामिति* । त्रयाणां हेतूनां *माता कल्या* माता नीरोगा, *ऋतुमती* रजस्वला, तदेतदुभयं प्रथमं स्थानं भवति । *रक्तौ सन्निपतिताविति* । मैथुनधर्मं कुर्वन्तौ, इदं द्वितीयं स्थानम् । *गन्धर्वश्च प्रत्युपस्थित* इति तृतीयम् । *स्कन्धभेदश्च प्रत्युपस्थित* इति मरणभवः ।

---

१. रक्तौ भवतः—का०।

गन्धर्वः प्रत्युपस्थितः, क्षत्रियो वाऽसौ ब्राह्मणो वा वैश्यो वा शूद्रो वा। यदि वा पूर्वस्या दिश आगतः, यदि वा दक्षिणस्याः, पश्चिमायाः, उत्तरस्याः" (　　) इति। न हि स्कन्धभेदस्यागमनं युज्यते ?

अथैतदपि न पठ्यते।

इतस्तर्हि—

**पञ्चोक्तेः,**

"पञ्चानागामिनः" इत्युक्तं भगवता। अन्तरापरिनिर्वायी, उपपद्यपरिनिर्वायी, अनभिसंस्कारपरिनिर्वायी, साभिसंस्कारपरिनिर्वायी, ऊर्ध्वस्रोताश्चेति। असत्यन्तराभवे कथमन्तरापरिनिर्वायी नाम स्यात्।

अन्तरा नाम देवाः सन्तीत्येके। उपपद्यादयोऽपि हि नाम देवा एवं सति प्रसज्यन्ते। तस्मान्नेयं कल्पना साध्वी।

इतश्च—

**गतिसूत्रतः॥ १२॥**

"सप्त सत्पुरुषगतयः" (　　) इत्यत्र सूत्रे अन्तरापरिनिर्वायिणस्त्रय उक्ताः—काल-देश-प्रकर्षभेदेन। तद्यथा—परीत्तः शकलिकाग्नि-

---

*पञ्चानागामिनः सप्त सत्पुरुषगतयः पुद्गलनिर्देशकोशस्थाने* वक्ष्यन्ते।

*उपपद्यादयोऽपीति*। उपपद्या नाम ते देवा इत्येवमादयः सम्प्रसज्यन्ते।

*सप्त सत्पुरुषगतय* इति। एत एव पञ्चान्तरापरानिर्वायिणं त्रिधा भित्त्वा सप्त भवन्ति। तेनाह—*अन्तरापरिनिर्वायिणस्त्रय उक्ताः*। *कालदेशप्रकर्षभेदेनेति*। कालप्रकर्षभेदेन, देशप्रकर्षभेदेन च यथायोगम्।

*सूत्रं* चात्र पठ्यते—"श्रावस्त्यां निदानम्। तत्र भगवान् भिक्षूनामन्त्रयते स्म। सप्त वोऽहं भिक्षवः सत्पुरुषगतीर्देशयिष्याम्यनुपादाय च परिनिर्वाणम्, तच्छृणुत, साधु च सुष्ठु च मनसिकुरुत, भाषिष्ये। सप्त सत्पुरुषगतयः। कतमा ? इह भिक्षुरेवं प्रतिपन्नो भवति—नो च स्यां नो च मे स्यात् न भविष्यामि न मे भविष्यति यदस्ति यद् भूतं तत् प्रजाहामीत्युपेक्षां प्रतिलभते। स भवेऽस्मिन्न रज्यते, स भवेऽस्मिन्न सज्यते।

"अथोत्तरं पदं शान्तं प्रज्ञया प्रतिविध्यति। तच्चानेन पदं कायेन साक्षात्कृतं भवति। एवं प्रतिपन्नस्य भिक्षोः का गतिः स्यात्, कोपपत्तिः, कोऽभिसम्पराय इति स्युः प्रष्टारः। *तद् यथा* भिक्षवः *परीत्तशकलिकाग्निरभिनिवर्तमान*

रभिनिवर्त्तमान एव निर्वायादेवं[1] प्रथमः। तद्यथाऽयस्प्रपाटिका उत्पतन्त्येव निर्वायादेवं द्वितीयः। तद्यथाऽयःप्रपाटिका उत्प्लुत्य पृथिव्यामपतित्वैव[2] निर्वायादेवं तृतीयः। न चैवमन्तरा नाम देवास्त्रिप्रकाराः काल-देश-प्रकर्षभिन्नाः सन्तीति कल्पनैवेयं केवला।

---

एव *निर्वायात्*, *एवमेव* तस्य तावन्मानावशेषमप्रहीणं भवत्यपरिज्ञातम्। तस्य तावन्मानावशेषस्याप्रहाणादपरिज्ञानात् पञ्चानामवरभागीयानां संयोजनानां प्रहाणादन्तरापरिनिर्वायी भवति। इयं प्रथमा सत्पुरुषगतिराख्याता।

"पुनरपरं भिक्षुरेवं प्रतिपन्नो भवति—नो च स्यामिति पूर्ववत् यावत् स्युः प्रष्टार इति। *तद् यथाऽयोगुड़ानां* वा अयस्फालानां वा प्रदीप्ताग्निसंप्रतप्तानामयोघनेन हन्यमानाना*मयस्प्रपाटिका उत्पतन्त्येव निर्वायात्*। *एवमेव* तस्य पूर्ववत् यावत् पञ्चानामवरभागीयानां संयोजनानां प्रहाणादन्तरापरिनिर्वायी भवति। इयं द्वितीया सत्पुरुषगतिः।

"पुनरपरं भिक्षुरेवं प्रतिपन्नो भवति—पूर्ववद् यावद*यस्प्रपाटिका उत्प्लुत्यापतित्वैव पृथिव्यां निर्वायात्*। *एवमेव* तस्य पूर्ववद् यावदन्तरापरिनिर्वायी भवति। इयं तृतीया सत्पुरुषगतिः।

"पुनरपरं भिक्षुरेवं प्रतिपन्नो भवतीति पूर्ववद् यावद् अयस्प्रपाटिका उत्प्लुत्य पतितमात्रैव पृथिव्यां निर्वायात्। एवमेव तस्य पूर्ववद् यावत् पञ्चानामवरभागीयानां संयोजनानां प्रहाणादुपपद्यपरिनिर्वायी भवति। इयं चतुर्थी सत्पुरुषगतिः।

"पुनरपरं भिक्षुरेवं प्रतिपन्न इति पूर्ववद् यावदयस्प्रपाटिका उत्प्लुत्य परीत्ते तृणकाष्ठे निपतेत्, सा तत्र धूममपि कुर्यादर्चिरपि सञ्जनयेत्। सा तत्र धूममपि कृत्वाऽर्चिरपि सञ्जनय्य तदेवं परीत्तं तृणकाष्ठं दग्ध्वा पर्यादाय निरुपादाना निर्वायात्। एवमेव तस्य पूर्ववद् यावत् पञ्चानामवरभागीयानां संयोजनानां प्रहाणादनभिसंस्कारपरिनिर्वायी भवति। इयं पञ्चमी सत्पुरुषगतिः।

"पुनरपरं भिक्षुरेवं प्रतिपन्न इति पूर्ववद् यावदयस्प्रपाटिका उत्प्लुत्य महति विपुले तृणकाष्ठे निपतेत्, सा तत्र धूममपि कुर्यादर्चिरपि सञ्जनयेत्। सा तत्र धूममपि कृत्वाऽर्चिरपि सञ्जनय्य तदेव महद् विपुलं तृणकाष्ठं दग्ध्वा पर्यादाय निरुपादाना परिनिर्वायात्। एवमेव तस्य पूर्ववद् यावत् पञ्चानामवरभागीयानां संयोजनानां प्रहाणात् साभिसंस्कारपरिनिर्वायी भवति। इयं षष्ठी सत्पुरुषगतिः।

---

१. परिनिर्वाया०—का०। २. मपतितैव—का०।

**अन्ये पुनराहुः—आयुःप्रमाणान्तरे वा देवसमीपान्तरे वा यः क्लेशान् प्रजहाति सोऽन्तरापरिनिर्वायी। स पुनर्धातुगतो वा परिनिर्वाति, संज्ञागतो वा, वितर्कगतो वा। तेन त्रिविधो भवतीति। प्रथमो वा[1] निकायसभागपरिग्रहं कृत्वा परिनिर्वाति, द्वितीयो देवसमृद्धिं चानुभूय परिनिर्वाति[2], तृतीयो[3] धर्मसङ्गीतिमनुप्रविश्य परिनिर्वाति[2]।**

---

"पुनरपरं भिक्षुरेवं प्रतिपन्न इति पूर्ववद् यावदयस्प्रपाटिका उत्प्लुत्य महति विपुले तृणकाष्ठे निपतेत्, सा तत्र धूममपि कुर्यादर्चिरपि सञ्जनयेत्, सा तत्र धूममपि कृत्वार्चिरपि सञ्जनय्य तदेव महद् विपुलं तृणकाष्ठं दग्ध्वा ग्राममपि दहेद् ग्रामप्रदेशमपि, नगरमपि नगरप्रदेशमपि, जनपदमपि जनप्रदेशमपि, कक्षमपि, दावमपि, द्वीपमपि, षण्डमपि दहेत्। ग्राममपि दग्ध्वा यावत् षण्डमपि दग्ध्वा मार्गे ह्यागम्य उदकान्तं वाऽल्पहरितकं वा पृथिवीप्रदेशमागम्य पर्यादाय निरुपादाना निर्वायात्। एवमेव तस्य यावत् पञ्चानामवरभागीयानां संयोजनानां प्रहाणादूर्ध्वंस्रोता भवति। इयं सप्तमी सत्पुरुषगतिराख्याता।

"अनुपादाय परिनिर्वाणं कतमत्? इह भिक्षुरेवं प्रतिपन्न इति पूर्ववद् यावत् स्युः प्रष्टार इति। तस्यैवम्प्रतिपन्नस्य भिक्षोर्न पूर्वस्यां दिशि गतिं वदामि, न पश्चिमायां नोत्तरस्यां नोर्ध्वं नाधो नानुविदुक्षु, नान्यत्र दृष्ट एव धर्मे निश्छायं परिनिर्वृत्तं शीतीभूतं ब्रह्मीभूतमिति। इदमुच्यते—अनुपादाय परिनिर्वाणम्। 'सप्त वोऽहं भिक्षवः सत्पुरुषगतीर्देशयिष्यामि, अनुपादाय च परिनिर्वाणम्' इति यदुक्तम्, इदमेतत् प्रत्युक्तम्" (        )।

*अन्ये पुनराहुरिति* विस्तरः। आयुषः प्रमाणं तस्यान्तरं तस्मिन् *आयुःप्रमाणान्तरेऽ*परिसमाप्त आयुषीत्यर्थः। *देवसमीपान्तरे* वा देवानामन्तिकं देवसमीपं गतस्यान्तरे *यः क्लेशान् प्रजहाति सोऽन्तरापरिनिर्वायी। स पुनर्धातुगतो वा परिनिर्वाति।* यः क्लेशबीजावस्थायामुपपन्नमात्र असमुदाचारक्लेश इत्यर्थः। *संज्ञागतो* विषयसंज्ञासमुदाचारावस्थायां यः परिनिर्वाति। धातुगताच्चिरतरेणायं परिनिर्वाति। *वितर्कगतो वा* वितर्कसमुदाचारावस्थायां यः परिनिर्वाति। अयमपि संज्ञागताच्चिरतरेण परिनिर्वाति। तेन त्रिविधो भवत्यन्तरापरिनिर्वायी यथोक्तेन दृष्टान्तत्रयेण। प्रथमो वा निकायसभागपरिग्रहं कृत्वा जातमात्र इत्यर्थः। यं प्रत्येष परीत्तः शकलिकाग्निरिति दृष्टान्तः। *द्वितीयो देवसमृद्धिं चानुभूय परिनिर्वातीति*। यं प्रत्येष दृष्टान्तः—तद्यथाऽयस्प्रपाटिकेति। *तृतीयो धर्मसङ्गीतिमनुप्रविश्य* धर्मसांकथ्यमनुप्रविश्य *परिनिर्वाति*। यं प्रत्येष दृष्टान्तः—तद्यथाऽयस्प्रपाटिका उत्प्लुत्य पृथिव्यामपतितैव परिनिर्वायात्।

---

१. वा रूपधातो—का०। २. का० पुस्तके नास्ति। ३. ०देवानां—का०।

उपपद्यपरिनिर्वायी पुनः प्रकर्षयुक्तां सङ्गीतिमनुप्रविश्य परिनिर्वाति भूयसा वा आयुरुपहत्य[1] नोपपन्नमात्र एवेति त एते सर्वेऽपि शकलिकादिदृष्टान्तैर्न सम्बध्यन्ते; देशगतिविशेषाभावात् । आरूप्येष्वपि चान्तरापरिनिर्वायी पठ्येत; आयुःप्रमाणान्तरे परिनिर्वाणात् । न चैवं[2] पठ्यते ।

"ध्यानैश्चतस्रो दशिका आरूप्यैः सप्तिकात्रयम् ।
संज्ञया षट्‌किकां[3] कृत्वा वर्गो भवति समुदितः ॥"

-त्येतस्यायद्दानगाथायाम् । तस्मादेतदपि सर्वं कल्पनामात्रम् ।

---

तदेवं विनाप्यन्तराभावेन यथान्तरापरिनिर्वायी भवति, यथा च तस्य दृष्टान्तत्रयेण त्रिविधो भेदस्तथा साधितं निकायान्तरीयैः । तस्मिन् साधिते इदं चोद्येत—यदि धर्मसङ्गीतिमनुप्रविश्य यः परिनिर्वाति, सोऽन्तरापरिनिर्वायीष्यते; कीदृश उपपद्यपरिनिर्वायी भविष्यति ? इत्यत आह—*उपपद्यपरिनिर्वायी पुनः प्रकर्षयुक्तां सङ्गीतिमनुप्रविश्य परिनिर्वातीति* । प्रकर्षयोगादुत्पत्त्यर्थो भवतीत्यभिप्रायः ।

सङ्गीत्यनुप्रवेशसामान्यान्नैष भेदो युज्यत इति वचनावकाशं मत्वा पुनराह—*भूयसा वायुरुपहत्येति* । आयुषो बहु क्षयित्वा परिनिर्वातीत्यर्थः । *त एत इति* विस्तरः । त एते *सर्वेऽपि* धातुगतादयस्त्रयः *शकलिकादिभिर्दृष्टान्तैर्न सम्बध्यन्ते* । कस्मात् ? *देशगतिविशेषाभावात्* । देशगतेर्विशेषस्याभावात् । न ह्येषां देशगतिविशेषोऽस्ति, तत्रैव देशे परिनिर्वाणात् । सूत्रोक्तानां त्रयाणां दृष्टान्तानां देशगतिविशेषोऽस्तीति नैभिरेते सम्बध्यन्ते । *आरूप्येष्वपि चेति* विस्तरः । यदि चैवमुपपद्यपरिनिर्वायिण एवान्तरापरिनिर्वायित्वेन व्यवस्थाप्येरन्, आरूप्येष्वपि ते तथैव पठ्येरन्; *तत्रायुःप्रमाणान्तरे परिनिर्वाणात्* । *न चैवम्*, अतो नैवं सूत्रार्थः—आयुःप्रमाणान्तरे वेत्यादि ।

कथं पुनर्गम्यते—नारूप्येष्वन्तरापरिनिर्वायी पठ्यते ? इत्याह—*ध्यानैश्चतस्रो दशिका इति* विस्तरः । ध्यानैश्चतुर्भिश्चतस्रो दशिकाः सूत्रार्थानाम् । प्रथमस्य ध्यानस्यैका दशिका यावच्चतुर्थस्यैका दशिका, ताः कृत्वा । *आरूप्यैः सप्तिकात्रयम्*, आकाशविज्ञानाकिञ्चन्यायतनैस्तिस्रः सप्तिकाः, तासां त्रयम्; अन्तराभवाभावादुपपत्तिस्थानत्रयाभावेन च द्वयाभावात्, तत् कृत्वा । नैवसंज्ञानासंज्ञायतनेन षट्‌*किका* । तेषामेव त्रयाणामूर्ध्वं स्रोतसश्चाभावात् । तां च *कृत्वा वर्गो भवति समुदितः* । बद्ध इत्यर्थः । कथम् ?

---

१. ०रुपहृत्य—का० । २. चैव—का० । ३. षट्टिकां—का० ।

अथैतान्यपि सूत्राणि तैर्नाम्नायन्ते ? किमिदानीं कुर्मो यच्छास्ता च परिनिर्वृतः, शासनं चेदमनायकं बहुधा भिन्नम्, भिद्यते चाद्यापि यथेच्छं ग्रन्थतश्चार्थतश्च । येषां तु तावदयमागमः प्रमाणं तेषामागमतोऽपि सिद्धोऽन्तराभवः ॥

---

१ "इह भिक्षुर्यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैर्विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमध्यानमुपसम्पद्य विहरति । स न हैव तानाकारान् तानि लिङ्गानि तानि निमित्तानि मनसिकरोति, अपि तु यत्तत्रोपलभते रूपगतं वा वेदनागतं वा संज्ञागतं वा संस्कारगतं वा विज्ञानगतं वा, स तान् धर्मान् रोगतो मनसिकरोति गण्डतः शल्यतोऽघतोऽनित्यतो दुःखतः शून्यतोऽनात्मतो मनसिकरोति । स तान् धर्मान् रोगतो मनसिकृत्य तेभ्यो धर्मेभ्यश्चित्तमुद्वेजयत्युत्त्रासयति प्रतिवारयति । स तेभ्यो धर्मेभ्यश्चित्तमुद्वेज्योत्त्रास्य प्रतिवार्यामृते धातावुपसंहरति—एतच्छान्तमेतत् प्रणीतम्, यदुत सर्वोपधिप्रतिनिसर्गस्तृष्णाक्षयो विरागो निरोधो निर्वाणम्" इति ( १ ) ।

एतदेव च सूत्रमुक्त्वाऽयं विशेषः—"तस्यैवं जानत एवं पश्यतः कामास्रवाच्चित्तं विमुच्यते भवास्रवाद्, अविद्यास्रवाच्चित्तं विमुच्यते । विमुक्तस्य विमुक्तोऽस्मीति ज्ञानदर्शनं भवति, क्षीणा मे जातिरुषितं ब्रह्मचर्यं कृतं करणीयं नापरमस्माद् भवं प्रजानामीति ( २ ) ।

एतदेव च सूत्रमुक्त्वा "नो तु विमुच्यते, अपि तु तेन धर्मच्छन्देन तेन धर्मस्नेहेन तेनैव धर्मप्रेम्णा तयैव धर्माभिरत्या अन्तरापरिनिर्वायी भवति ( ३ ) । न हैवान्तरापरिनिर्वायी भवत्यपि तूपपद्यपरिनिर्वायी भवति ( ४ ) । न हैवोपपद्यपरिनिर्वायी भवत्यपि त्वनभिसंस्कारपरिनिर्वायी भवति ( ५ ) । न हैवानभिसंस्कारपरिनिर्वायी भवति, अपि तु साभिसंस्कारपरिनिर्वायी भवति ( ६ ) । न हैव साभिसंस्कारपरिनिर्वायी भवति, अपि तूर्ध्वंस्रोता भवति ( ७ ) । न हैवोर्ध्वंस्रोता भवति, अपि तु तेनैव धर्मच्छन्देन पूर्ववद् यावत्तयैव धर्माभिरत्या महाब्रह्मणां देवानां सभागतायामुपपद्यते ( ८ ) । न हैव महाब्रह्मणां देवानां सभागतायामुपपद्यते, अपि तु तेनैव धर्मच्छन्देन पूर्ववद् यावत्तस्यैव धर्माभिरत्या ब्रह्मपुरोहितानां देवानां सभागतायामुपपद्यते ( ९ ) । न हैव ब्रह्मपुरोहितानां देवानां सभागतायामुपपद्यते, अपि तु तेनैव धर्मच्छन्देन पूर्ववद् यावत्तयैव धर्माभिरत्या ब्रह्मकायिकानां देवानां सभागतायामुपपद्यते ( १० ) ।

२. "इह भिक्षुर्यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैर्वितर्कविचाराणां व्युपशमादध्यात्मसम्प्रसादाच्चेतस एकोतीभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसम्पद्य विहरति । स न हैव तानाकारान् तानि लिङ्गानि तानि

निमित्तानि मनसिकरोति, अपि तु यत्तत्रोपलभते पूर्ववद् ग्रन्थो यावद्विरागो निरोधो निर्वाणम्" ( १ )।

एतदेव सूत्रमुक्त्वा "तस्यैवं जानत एवं पश्यतः कामास्रवाच्चित्तं विमुच्यते भवास्रवादविद्यास्रवात्, पूर्ववद् यावत् कृतं करणीयं नापरमस्माद् भवं प्रजानामीति ( २ )।

एतदेव सूत्रमुक्त्वा "नो तु विमुच्यत अपि तु तेनैव धर्मच्छन्देन पूर्ववद् यावत्तयैव धर्माभिरत्या अन्तरापरिनिर्वायी भवति ( ३ )। न हैवान्तरापरिनिर्वायी भवत्यपि तूपपद्यनिर्वायी भवति (४)। न हैवोपपद्यपरिनिर्वायी भवत्यपि त्वनभिसंस्कारपरिनिर्वायी भवति ( ५ )। न हैवानभिसंस्कारपरिनिर्वायी भवत्यपि तु साभिसंस्कारपरिनिर्वायी भवति ( ६ )। न हैव साभिसंस्कारपरिनिर्वायी भवत्यपि तूर्ध्वंस्रोता भवति ( ७ )। न हैवोर्ध्वंस्रोता भवत्यपि तु तेनैव धर्मच्छन्देन पूर्ववद् यावत्तयैव धर्माभिरत्याभास्वराणां देवानां सभागतायामुपपद्यते ( ८ )। न हैवाभास्वराणां देवानां सभागतायामुपपद्यते, अपि तु तेनैव धर्मच्छन्देन यावत्तयैव धर्माभिरत्याप्रमाणाभानां देवानां सभागतायामुपपद्यते ( ९ )। न हैवाप्रमाणाभानां देवानां सभागतायामुपपद्यते, अपि तु तेनैव धर्मच्छन्देन पूर्ववद् यावत्तयैव धर्माभिरत्या परीत्ताभानां देवानां सभागतायामुपपद्यते ( १० )।

३. "इह भिक्षुर्यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैः प्रीतिविरागादुपेक्षको विहरति, स्मृतः सम्प्रजानन् सुखं च कायेन प्रतिसंवेदयते। यत्तदार्या आचक्षते–उपेक्षकः स्मृतिमान् सुखविहारी, तृतीयं ध्यानमुपसम्पद्य विहरतीति, स न हैव तानाकारांस्तानि लिङ्गानि तानि निमित्तानि मनसिकरोति पूर्ववत् सर्वाणि सूत्राणि ( १–७ )। केवलं तु निकायसभागतायां विशेषः—न हैवोर्ध्वंस्रोता भवति, अपि तु तेनैव धर्मच्छन्देन पूर्ववद्यावच्छुभकृत्स्नानां देवानां सभागतायामुपपद्यते ( ८ )। न हैव शुभकृत्स्नानां देवानां सभागतायामुपपद्यते, अपि तु तेनैव पूर्ववदप्रमाणशुभानां देवानां सभागतायामुपपद्यते (९)। न हैवाप्रमाणशुभानां देवानां सभागतायामुपपद्यत अपि तु तेनैव पूर्ववत् परीत्तशुभानां सभागतायामुपपद्यते (१०)।

४. "इह भिक्षुर्यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैः सुखस्य च प्रहाणात् दुःखस्य च प्रहाणात् पूर्वमेव सौमनस्यदौर्मनस्ययोरस्तङ्गमात् अदुःखासुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसम्पद्य विहरति। स न हैव तानाकारांस्तानि लिङ्गानि विस्तरेण सर्वाणि सूत्राणि पूर्ववद् वक्तव्यानि ( १–८ )।

देवनिकायोपपत्तयस्तु विशेष्यन्ते—"यावत्तयैव धर्माभिरत्या बृहत्फलानां देवानां सभागतायामुपपद्यते ( ९ )। न हैव पूर्ववत् पुण्यप्रसवानां देवानां सभागतायामुपपद्यते। न हैव पूर्ववदनभ्रकाणां देवानां सभागतायामुपपद्यते (१०)।

१. "इह भिक्षुर्यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैः सर्वशो रूपसंज्ञानां समतिक्रमात्, प्रतिघसंज्ञानामस्तङ्गमात्, नानात्वसंज्ञानाममनसिकारात्, अनन्तमाकाशमित्याकाशानन्त्यायतनमुपसम्पद्य विहरति । स न हैव तानाकारानिति पूर्ववत्, केवलं तु रूपगतमिति न पठितव्यम्; तत्र रूपाभावात्, यावन्निरोधो निर्वाणमिति (१) ।

एतदेव सूत्रमुक्त्वायं विशेषः—"तस्यैवं जानत इति पूर्ववद् यावन्नापरमस्माद्भवं प्रजानामीति (२) । एतदेवोक्त्वा—"नो विमुच्यते, अपि तु तेनैव धर्मच्छन्देन यावत्तयैव धर्माभिरत्योपपद्यपरिनिर्वायी भवति (४) । न हैवोपपद्यपरिनिर्वायी भवति, तेनैव यावदनभिसंस्कारपरिनिर्वायी भवति (५) । न हैवानभिसंस्कारपरिनिर्वायी भवति, सर्वमुक्त्वा यावदूर्ध्वस्रोता न भवत्यपि तु तेनैव पूर्ववत्, यावत्तयैव धर्माभिरत्या आकाशानन्त्यायतनोपगानां देवानां सभागतायामुपपद्यते (६–७) ।

२. "इह भिक्षुर्यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैः सर्वश आकाशानन्त्यायतनं समतिक्रम्यानन्तं विज्ञानमिति विज्ञानानन्त्यायतनमुपसम्पद्य विहरति । स न हैव तानाकारानित्याकाशानन्त्यायतनवत् सप्तसूत्राणि वक्तव्यानि । केवलं तु विज्ञानानन्त्यायतनोपगानां देवानां सभागतायामुपपद्यत इति विशेषः(१–७) ।

३. "पुनरपरमिह भिक्षुर्यैराकारैर्यैर्लिङ्गैर्यैर्निमित्तैः सर्वशो विज्ञानानन्त्यायतनं समतिक्रम्य नास्ति किञ्चिदित्याकिञ्चन्यायतनमुपसम्पद्य विहरति, स न हैव तानाकारानिति पूर्ववत् सप्तसूत्राणि (१–७) ।

१. "पुनरपरमिह भिक्षुर्यैरिति यावत् सर्वश आकिञ्चन्यायतनं समतिक्रम्य नैवसंज्ञानासंज्ञायतनमुपसम्पद्य विहरति" । पूर्ववत् सर्वाणि सूत्राणि वक्तव्यान्यूर्ध्वस्रोतसंज्ञात्वेकमपनीय (१–६) ।

तदेवं चतुर्भिर्ध्यानैरमृतधातुचित्तोपसंहारचित्तविमुक्त्यन्तरोपपद्यानभिसंस्कारसाभिसंस्कारपरिनिर्वाणोर्ध्वगमनत्र्युपपत्तिस्थानोपपत्तिस्वभावाश्चतस्रः सूत्रार्थदर्शिका उक्ताः ।

त्रिभिस्त्वाद्यैरारूप्यैरमृतधातुचित्तोपसंहारचित्तविमुक्त्युपपद्यानभिसंस्कारसाभिसंस्कारपरिनिर्वाणोर्ध्वगमनोपपत्तिस्थानोपपत्तिस्वभावास्तिस्रः सूत्रार्थसप्तिकाः ।

नैवसंज्ञानासंज्ञायतनेनोर्ध्वगमनं परिहाय षट्किका चोक्ताः ।

अतो योऽसावन्तरापरिनिर्वायी नासावायुष्प्रमाणान्तरापरिनिर्वायीति युज्यते वक्तुम् । आरूप्येष्वपि ह्यन्तरामरणसम्भवः; "कुरुवर्ज्योऽन्तरामृत्युः" ( अभि० को० ३.८५ ) इति वचनात् ।

तस्मात् आगमतोऽपि सिद्धोऽन्तराभवः, न केवलं युक्तित इत्यपि-शब्दः ।

यत्तर्हि सूत्र उक्तम्—"अथ च पुनर्दूषी मारः स्वशरीरेणावीचौ महानरके प्रपतितः" (                    ) इति, तत् कथमिति ? स हि जीवन्नेव नारकीभिर्ज्वालाभिरालिङ्गितत्वात्[1] कालं कृत्वाऽन्तराभवेनावीचिं प्राप्त इत्ययं तत्राभिप्रायः। अत्युदीर्णपरिपूर्णानि हि कर्माणि कायस्य निक्षेपं न प्रतीक्षन्ते। अतोऽस्य दृष्टधर्मवेदनीयं कर्म पूर्वं विपक्वम्, पश्चादुपपद्यवेदनीयमिति।

इदमिदानीं कथं नीयते—"पञ्चानन्तर्याणि कर्माणि यानि कृत्वोपचित्य समनन्तरं नरकेषूपपद्यते" (                    ) इति ? अन्यां गतिमगत्वेत्यभिप्रायः। उपपद्यवेदनीयत्वं तत्र कर्मणो द्योतितम्। अथ यथारुतं कल्प्यते[2] ? पञ्चैव कृत्वा नैकमिति एतत्[3] प्राप्नोति, क्रियानन्तरं च। न कालान्तरं जीवित्वा को वाऽन्तराभवस्योपपद्यमानत्वं नेच्छति। अन्तराभवेनैव ह्यसौ मरणान्तरं नरकेषूपपद्यते; अभिमुखत्वात्। न तु[4] ब्रूमः—उपपन्नो भवतीति।

---

*दूषीमार* इति। क्रकुच्छन्दस्य तथागतस्य विदुरं नाम श्रावकं दूषी नाम मारस्तदानीं शिरसि मुष्टिनाऽभिघ्नन् तेनाङ्गीकृतस्तल्लक्षण एव च *स्वशरीरेणैवावीचौ महानरके प्रपतित* इति। स्वशरीरेणैवेति वचनान्नास्त्यन्तराभव इत्यभिप्रायः। *स हि जीवन्नेव नारकीभिर्ज्वालाभिरिति*। जीवन्नेवासौ मारो नरकोत्थिताभिरग्निज्वालाभिरालिङ्गितत्वात् स्वशरीरावस्थादुःखोत्पत्तेः स्वशरीरेणैव प्रपतित इत्युक्तः, न तु कालमकृत्वा अन्तराभवावस्थां नरकोपपत्तिभवावस्थां च न गतवानित्यभिप्रायः। *अत्युदीर्णपरिपूर्णानीति*। क्षेत्राशयविक्षेपयोगादत्युदीर्णानि, उपचितत्वात् परिपूर्णानि।

*समनन्तरं नरकेषूपपद्यत* इति। समनन्तरवचनान्नास्त्यन्तराभव इत्यभिप्रायः। *अन्यां गतिमगत्वेति*। उपपत्त्यन्तरप्रतिषेधपरमेतद्वाक्यम्, नान्तराभवप्रतिषेधपरमित्यभिप्रायः। *पञ्चैवेति*। यदि *यथारुतं कल्प्यते*, पञ्चभिरेवानन्तर्यैः कृतैः, न त्वेकेन द्वाभ्यां वा नरकगमनं भवतीत्येतत् *प्राप्नोति*। पञ्चेति रुतात् *क्रियानन्तरं* चानन्तर्यक्रियानन्तरं च नरकेषूपपन्न इति प्राप्नोति। यानि कृत्वोपचित्य समनन्तरं नरकेषूपपद्यत इति रुतान्न *कालान्तरं जीवित्वा को वान्तराभवस्योपपद्यमानत्वं नेच्छतीति*। विप्रकृतावस्थवचनादुपपत्त्यभिमुखो ह्युपपद्यमानः इत्यभिप्रायः। *न तु ब्रूम उपपन्नो भवतीति*। न तूपपद्यत इत्येतत् पदमुपपन्नार्थमिति ब्रूमः। तस्माददोष एषः।

---

१. ०रालिङ्गितः—का०।    २. कल्पयते—जा०।
३. का० पुस्तके नास्ति।    ४. च—का०।

इयं तर्हि गाथा कथं नीयते—

"उपनीतवया[1] जरातुरः सम्प्राप्तो हि यमान्तिकं[2] द्विज।
वासोऽपि हि नास्ति तेऽन्तरा पाथेयं च न विद्यते तव" ॥

) इति ?

अत्रापि मनुष्येष्वन्तरावासो नास्तीत्यभिप्रायः। अथ वाऽन्तराभवेऽप्यस्य वासो नास्ति; उपपत्तिदेशसम्प्राप्तिगमनाधिष्ठानादिति[3]। अयमत्राभिप्रायः, नायमभिप्रायः—इति कुत एतत्[4]? तुल्य एष भवतोऽप्यनुयोगः।

तस्मादुभयस्मिन्नपि पक्षे यथोक्तसूत्राविरोधान्न भवत्येतदन्तराभवस्याभावे ज्ञापकम्। ज्ञापकं हि नाम अगतिका गतिरिति ॥ १२ ॥

अथ कां गतिं गमिष्यतः किमाकृतिरन्तराभवोऽभिनिवर्त्तते ?

**एकाक्षेपादसावैष्यत्पूर्वकालभवाकृतिः**

---

*उपनीतवया* इति। विस्तरः—मृत्युसमीपमुपनीतं वयोऽनेन सोऽयमुपनीतवयाः। *द्विजे*त्यामन्त्रणम्। कश्चिद् जीर्णो ब्राह्मण आमन्त्रितः। *वासोऽपि हि नास्ति तेऽन्तरेति*। इदमत्र *ज्ञापकम्*। अन्तराभवाभावः इत्यभिप्रायः। *पाथेयं* पथ्योदनं च *न विद्यते तव* पारलौकिकः कुशलसम्भारस्तव नास्तीत्यभिप्रायः।

*मनुष्येष्वन्तरा*वासो नास्तीति। मरणगतस्य ते सतो मनुष्येष्वन्तरावासो नास्ति। यथेह कस्यचित् प्रतिष्ठमानस्येत्यभिप्रायः। *गमनाधिष्ठानादि*ति। गमनाविरामात्। *अयमत्राभि*प्रायः। यथा त्वया वर्ण्यतेऽस्त्यन्तराभव इति। *नायमभिप्रायः*। यथा मया वर्ण्यते नास्त्यन्तराभव इति। *कुत एतत्*। कुतो हेतोरेतद्भवति। *तुल्य एष भवतोऽप्यनुयोगः*। समान एष भवतोऽपि प्रश्न इत्यर्थः।

*यथोक्तसूत्राविरोधादि*ति। दूषीमारसूत्राद्यविरोधात्। न भवत्येतत् *सूत्रमन्तराभवस्याभावे ज्ञापकम्*। *ज्ञापकं हि नामागतिका गति*रिति। यस्यागतेरन्या गतिर्नास्त्यसावगतिका गतिः। एतदुक्तं भवति—यदि यज्ज्ञापकं सूत्रं गाथा वा यस्यार्थस्य द्योतनार्थमुच्यते, यदि तमेवार्थं द्योतयति नान्यदप्यर्थान्तरं तद्विरुद्धम्, तज्ज्ञापकमनन्यगतिकमिति ॥ १२ ॥

---

१. उपनीततया—का०। २. ममान्तिकं—का०।
३. ०संप्राप्तिप्रतिगम०—का०। ४. एवैतत्—का०।

येनैव कर्मणा गतिराक्षिप्यते तेनैवान्तराभवस्तत्प्रापये। अतो यां गतिं गन्ता भवति, तस्यां गतौ य आगमिष्यत्पूर्वकालभवस्तस्यैवास्याकृतिर्भवति।

एवं तर्हि शुनीप्रभृतीनामेकस्मिन् कुक्षौ पञ्चगतिकोऽन्तराभवोऽभिनिर्वर्तते[1] इति नारकोऽन्तराभवः मातुः[2] कुक्षिं निर्दहेत्? पूर्वकालभवेऽपि तावन्नारका न नित्यं प्रज्वलिता भवन्त्युत्सदेषु भ्रमन्तः, किं पुनरन्तराभविकाः!

अस्तु वा प्रज्वलितः। स तु यथा न द्रष्टुं शक्यते तथा न स्प्रष्टुमपि; अच्छत्वादात्मभावस्येत्यचोद्यमेतत्। अन्तराभवानामप्यन्योन्यं कुक्षावसंश्लेषात् कर्मप्रतिबन्धाच्च न दाहः।

प्रमाणं तु यथा पञ्चषड्वर्षस्य दारकस्य, स तु पटिवन्द्रियो भवति।

बोधिसत्त्वस्य पुनर्यथा सम्पूर्णयूनः, सलक्षणानुव्यञ्जनश्च।

अत एवान्तराभवस्थेन मातुः कुक्षिं प्रविशता कोटीशतं चातुर्द्वीपिकानामवभासितम्[3]।

---

"*ऐष्यत्पूर्वकालभवाकृतिः*" इति। आ एष्यदष्यत्, ऐष्यतः पूर्वकालभवस्येवाकृतिरस्येति ऐष्यत्पूर्वकालभवाकृतिः। कस्मात्? *एकाक्षेपात्।* यस्मादैष्यन्ती गतिस्तत्प्रापकश्चान्तराभवस्तेनैवैकेन कर्मणाक्षिप्यते।

*शुनीप्रभृतीनामिति* शुनीशूकरीप्रभृतीनाम्। *पञ्चगतिक* इति। पञ्चगतिगामीत्यर्थः। यदि गर्भस्थोऽपि म्रियेत तस्य *नारकोऽन्तराभवो मातुः कुक्षिं निर्दहेत्।* नारको हि प्रदीप्तो भवति, तद्रूपं चान्तराभव इति। *पूर्वकालभवेऽपीति* विस्तरः। नारकपूर्वकालभवावस्था अपि *नारका न नित्यं प्रज्वलिता भवन्त्युत्सदेषु* कुकूलादिषु *भ्रमन्तः, किमङ्गान्तराभविकाः।*

*अस्तु वा प्रज्वलित*। इति नारकोऽन्तराभवः। *कुक्षावसंश्लेषादिति*। अन्तराभवानामच्छत्वादात्मभावस्यान्योन्यमसंश्लेषान्न दाहः। *कर्मप्रतिबन्धाच्च।* तत्कर्मप्रतिबन्धान्न दाह इति कृत्वा। अत एव शुनीप्रभृतीनां कुक्षेरदाहः।

*कोटीशतं चातुर्द्वीपिकानामवभासितमिति*। यतः पूर्णयून इव बोधिसत्त्वस्यान्तराभवः सलक्षणानुव्यञ्जनश्च, अतोऽन्तराभवस्थेन तेन मातुः कुक्षिं प्रवेष्टुमिच्छता त्रिसाहस्रमहासाहस्रो लोकधातुः स्वक्षेत्रमिति कृत्वाऽवभासितः।

---

१ पाऽऽ०—का०। २. का० पुस्तके नास्ति।

३. ०मवभासितः—का०।

यत्तर्हि माता बोधिसत्त्वस्य स्वप्ने गजपोतं पाण्डरं कुक्षिं प्रविशन्तमद्राक्षीत् ? निमित्तमात्रं तत्; तिर्यग्योनेश्चिरव्यावर्त्तितत्वात्[1]। तद्यथा—कृकी राजा दश स्वप्नानद्राक्षीदिति।

*पाण्डरं गजपोतमिति*। यद्येष्यत्पूर्वकालभवाकृतिरन्तराभवः, कस्माद् बोधिसत्त्वस्य माता गजपोतमेवंरूपमद्राक्षीत् ? *निमित्तमात्रं* तत्। तस्य बोधिसत्त्वस्य। *तिर्यग्योनेश्चिरव्यावर्त्तितत्वात्*। यतः प्रभृति लक्षणविपाकानि कर्माण्यारभते कर्तुं कल्पशते शेषे ततः प्रभृति तस्य सर्वा दुर्गतयो व्यावृत्ताः। तद् *यथा कृकी राजा दश स्वप्नानद्राक्षीत्*। भविष्यतोऽर्थस्य निमित्तमात्रमिति।

दश स्वप्ना *विनये* पठ्यन्ते। कृकिना किल राज्ञा दश स्वप्ना दृष्टाः—हस्ती वातायनेन निर्गत्य पुच्छे सक्तः, कूपस्तृषितस्य पृष्ठतोऽनुधावति, सक्तुप्रस्थेन मुक्ताप्रस्थो लभ्यते, चन्दनं काष्ठार्घेण विक्रीयते, आरामाः पुष्पफलसम्पन्नाः, सर्वश्च पुष्पफलमदत्तादायिभिर्ह्रियते, कलभैर्गन्धहस्तिनस्त्रास्यन्ते, अशुचिम्रक्षितो मर्कटः परानुपलिम्पति, मर्कटाभिषेको वर्त्तते, पटकोऽष्टादशभिर्जनैराकृष्यते, महाजनकाय एकत्र

तेन च ते भगवते काश्यपाय तथागताय निवेदिताः, भगवता च व्याकृताः—भविष्यत्यनागतेऽध्वनि शाक्यमुनिर्नाम तथागतः। तस्य श्रावका विस्तीर्णस्वजनबन्धुवर्गं प्रहाय प्रव्रजिता विहारेषु गृहसंज्ञामुत्पाद्य सङ्गं करिष्यन्ति, हस्तिनो वातायननिर्गमनपुच्छलग्नवत्। कूपस्वप्नेन तच्छ्रावका एव ब्राह्मणगृहपतीनाममभ्युपेत्य धर्मं देशयिष्यन्ति, तेषा श्रोतुकामता न संस्थास्यत इत्येतद्दर्शयति। सक्तुमुक्ताप्रस्थस्वप्नेन तच्छ्रावका एव सक्तुभिक्षाया अप्यर्थायेन्द्रियबलबोध्यङ्गादीन् प्रकाशयिष्यन्ति। चन्दनस्वप्नेन तच्छ्रावका एवाभावितकायशीलप्रज्ञास्तीर्थ्यमतानि गृहीत्वा बुद्धवचनेन समानीकरिष्यन्तीत्येतद्दर्शयति। आरामस्वप्नेन तच्छ्रावका एवावासमाश्रयं कृत्वा यत्तद् भविष्यति सङ्घस्य पुष्पं वा फलं वाधिकं वा तद्विक्रीय विक्रीय जीविकां कल्पयिष्यन्ति, तेन च गृहिणः प्रतिसंस्तरिष्यन्तीत्येतद्दर्शयति। कलभस्वप्नेन तच्छ्रावका एव दुःशीला पापधर्माणो भविष्यन्ति, ये ते भिक्षवः स्थविराः शीलवन्तः कल्याणधर्माणस्तानावासेभ्यः प्रवासयिष्यन्तीत्येतद्दर्शयति। अशुचिम्रक्षितमर्कटस्वप्नेन तच्छ्रावका एव दुःशीला पापधर्माणः सन्तो ये ते भिक्षवः कल्याणास्तानसद्भिर्दोषैश्चोदयिष्यन्तीत्येतद्दर्शयति। मर्कटाभिषेकस्वप्नेन तच्छ्रावका एव सामन्तिकाभिषेकं विहारेषु करिष्यन्ति, लोकेऽपि च पण्डका अधिराज्यं कार-

१. ०व्यावृत्तत्वात्—का०।

"करिकूपसक्तुचन्दनकलभारामास्तथा कपेरभिषेकः ।
अशुचिकपिः पटकलहाविति दश दृष्टा नृपेण क्रुकिणा स्वप्नाः" ॥

नैव चान्तराभविकः कुक्षिं भित्त्वा प्रविशति, अपि तु मातुर्योनिद्वारेण । अत एव यमलयोर्यः पश्चात् प्रजायते स ज्यायानुच्यते, यः पूर्वं स कनीयानिति ।

**धर्मसूत्रविभाष्यं कथं नीयते—**

"वारण त्वमुपगम्य पाण्डरं षड्विषाणरुचिरं चतुष्क्रमम् ।
मातृगर्भशयनं विशेषसम्प्रजानन् ऋषिराश्रमं यथा" ॥

( ) इति ?

नैतदवश्यनेतव्यम् । न ह्येतत् सूत्रम्, न विनयः, नाभिधर्मः; काव्यमेतत् । कवीनां च काव्यं समायोजयतां केचिद् भावाः समारोपिता गच्छन्ति ।

अथवा—नेतव्यमेव । यथा अस्य माता स्वप्ने तं प्रविशन्तमद्राक्षीत्, तथा सोऽपि गाथामकार्षीदिति ।

रूपावचरोऽप्यन्तराभवः सम्पूर्णप्रमाणः सवस्त्रश्च प्रादुर्भवति; अपत्राप्योत्सदत्वात् बोधिसत्त्वस्य सवस्त्रः । शुक्लायाश्च भिक्षुण्याः प्रणिधानवशाद् यावन्तमेव परिवेष्टिता निर्दग्धा । अन्यो नग्नः; कामधातोरनपत्राप्योत्सदत्वात् ॥

अथ कोऽयं पूर्वकालभवो नाम ?

**स पुनर्मरणात् पूर्वं उपपत्तिक्षणात् परः ॥ १३ ॥**

**भवो हि नामाविशेषेण पञ्चोपादानस्कन्धाः । स एव चतुर्धा भिद्यते—**

---

यिष्यन्ति इत्येतद्दर्शयति । पटस्वप्नेन तच्छाशनमेवाष्टादशधाभेदं गमिष्यति, न च विमुक्तिपटः स्फाटयिष्यत इत्येतद्दर्शयति । कलहस्वप्नेन तच्छ्रावका एव निकायपरिग्रहात् परस्परं विवादमापत्स्यन्त इत्येतद्दर्शयतीति । संग्रहश्लोकः—

*"करिकूपसक्तुचन्दनकलभारामास्तथा कपेरभिषेकः ।*
*अशुचिकपिः पटकलहाविति दश दृष्टा नृपेण क्रुकिणा स्वप्नाः ॥"*

( )

अपत्राप्योत्सदत्वात् । अपत्राप्योत्कटत्वात् ।

अन्तराभवो यथोक्तः, उपपत्तिभवो प्रतिसन्धिक्षण एव[1], तस्मात् परेण मरणक्षणं पर्युदस्यान्यः सर्वो भवः पूर्वकालभवः, चरमक्षणो मरणभवः, यत ऊर्ध्वमन्तराभवो भवति रूपिषु चेत् सत्त्वेषूपपद्यते ॥ १३ ॥

स चायमन्तराभवः—

**सजातिशुद्धदिव्याक्षिदृश्यः**

समानजातीयैरेवान्तराभवैर्दृश्यते[2]। येषां च दिव्यं चक्षुः सुविशुद्धमभिज्ञामयं त एनं पश्यन्ति। उपपत्तिचक्षुषा तु न दृश्यते; अत्यर्थमच्छत्वात्[3]। देवान्तराभविकः सर्वान् पश्यति। मनुष्यप्रेततिर्यग्नारकान्तराभविकाः पूर्वं पूर्वमपास्येत्यपरे।

**कर्मर्द्धिवेगवान्।**

---

*उपपत्तिभवः प्रतिसन्धिक्षण एव। तस्मात् परेण* प्रतिसन्धिक्षणादन्यो *भवः पूर्वकालभवः। रूपिषु चेत् सत्त्वेषूपपद्यत* इति। आरूप्यधातावन्तराभवादिदं विशेषवचनम् ॥ १३ ॥

*समानजातीयैरि*ति। नारकोऽन्तराभवो नारकैरेवान्तराभवैर्दृश्यते। एवं यावद्देवान्तराभवः देवान्तराभवैरेवेति। *सुविशुद्धमि*ति। एकादशदिव्यचक्षुरपक्षालवर्जितम्। ते पुनरपक्षाला विचिकित्साऽमनसिकारो कायदौष्ठुल्यं स्त्यानमिद्धमौद्धत्यमभ्यारभ्य वीर्यमौद्बिल्यं छम्भितत्वं नानात्वसंज्ञा अभिजल्पः अभिध्यायितत्वं ज्ञेयेषु यथासूत्रम्। *अभिज्ञामयमिति*। अभिज्ञास्वभावभावनामयमित्यर्थः। *उपपत्तिप्रतिलम्भिकमपि* देवादीनां दिव्यमिष्यते, न तु सुविशुद्धम्।

*देवान्तराभविकमिति* विस्तरः। *अपर आहुः*। न समानजातीयैवान्तराभवो दृश्यते, किं तर्हि? देवान्तराभविकः *सर्वान्* देवान्तराभविकादीन् *पश्यति। मनुष्यप्रेततिर्यङ्नारकान्तराभविकाः पूर्वं पूर्वमपास्य*। कथम्? मनुष्यान्तराभविको देवान्तराभविकं पूर्वमपास्य मनुष्यप्रेततिर्यङ्नारकान्तराभविकान् पश्यति, प्रेतान्तराभविको देवमनुष्यान्तराभविकौ पूर्वावपास्य प्रेततिर्यङ्नारकान्तराभविकान् पश्यति, एवं यावन्नारकान्तराभविको देवान्तराभविकादीन् पूर्वानपास्य नारकान्तराभविकानेव पश्यति। गतीनामुत्तरोत्तरनिकृष्टत्वादिति।

---

१. गतिषु प्रतिसन्धिक्षणः—का०। २ ०भविकै०—का०।
३. आत्यर्थम०—का०।

ऋद्धिः = आकाशगमनम्, कर्मणा ऋद्धिः कर्मर्द्धिः, तस्या वेगः **कर्मर्द्धि-वेगः** = शीघ्रता, सोऽस्यास्तीति **कर्मर्द्धिवेगवान्** । येनासौ न शक्यो बुद्धैरपि प्रतिबन्धुम्; कर्मणोऽस्य बलीयस्त्वात् ।

**सकलाक्षः,**

समग्रपञ्चेद्रियः ।

**अप्रतिघवान्,**

प्रतिघातः = प्रतिघः, सोऽस्यास्तीति प्रतिघवान्, न प्रतिघवानप्रतिघवान् । वज्रादिभिरप्यनिवार्यत्वात् । तथा हि––प्रदीप्तायःपिण्डभेदे तन्मध्यसम्भूतः क्रिमिरुपलब्धः श्रूयते ।

यस्यां च गतौ स उत्पत्स्यमानस्तस्याः सर्वथा––

**अनिवर्त्यः,**

न हि कदाचिन्मनुष्यान्तराभवोऽन्तर्धाय देवान्तराभवो भवति, अन्यो वा । नियतमनेन—यामेव गतिमभिसंस्कृत्याभिनिर्वृत्तस्तस्यामेवोपपत्त्यम्, नान्यस्यामिति ।

किं पुनरन्तराभवोऽपि कामावचरः कवडीकारमाहारं भुङ्क्ते ? ओमित्याह । न त्वौदारिकम्, किं तर्हि ?

**स गन्धभुक् ॥ १४ ॥**

अत एव 'गन्धर्वः' इत्युच्यते, धातूनामनेकार्थत्वात् । ह्रस्वत्वं शकन्धु-कर्कन्धुवत् । अल्पेशाख्यस्तु दुर्गन्धाहारः, महेशाख्यः सुगन्धाहारः ।

---

*अत एव गन्धर्व* इति । यतो गन्धगतो गन्धर्वः । गन्धमर्वति भक्षयति गन्धर्व इत्यर्थः । *धातूनामनेकार्थत्वात्* । अयमर्वतिर्न केवलं गत्यर्थे वर्त्तते, किं तर्हि ? भोजनार्थेऽपीति । गत्यर्थपरिग्रहेऽप्यदोषः । गन्धमर्वति गच्छति भोक्तुमिति गन्धर्व इति । *ह्रस्वत्वं शकन्धुकर्कन्धुवदिति* । कृदन्त इति पररूपनिपातनात् शकन्धुककर्कन्धुरिति पररूपसिद्धिर्यथा तथेहापि गन्धर्व इति ।

*अल्पेशाख्यः* । अनुदारो हीनजातीय इत्यर्थः । ईष्ट इतीशः, अल्प ईशोऽल्पेशः । अल्पेश इत्याख्या यस्य सोऽल्पेशाख्यः । विपर्ययान्महेशाख्यः ।

कियन्तं कालमवतिष्ठते ?

१. नास्ति नियम इति भदन्तः । यावदुपपत्तिसामग्रीं न लभते नहि तस्यायुषः पृथगेवाक्षेपः, एकनिकायसभागत्वात् । इतरथा हि तस्यायुषः क्षयान्मरणभवः प्रसज्येत ।

यद्यासुमेरोः स्थलं मांसस्य स्यात् तत् सर्वं वर्षासु क्रिमीणां पूर्येत, किमिदानीं तत्प्रतीक्षा एव तेषामन्तराभवा आसन्, कुतो वा तदा तेभ्यो गता इति वक्तव्यम् ? नैतदागतं सूत्रे शास्त्रे वा ।

एवं तु युज्यते—गन्धरसाभिगृद्धानामल्पायुषां जन्तूनामन्तो नास्ति । ते तं गन्धं घ्रात्वा गन्धरसाभिगृद्धाः कालं कुर्वन्तः क्रिमिनिकायसभागोत्पादकं[1] कर्म विबोध्य[2] तया तृष्णया क्रिमिषूपजायन्त[3] इति ।

अथ वा—नूनं तत्प्रत्ययप्रचुर एव काले तत्संवर्त्तनीयानि कर्माणि विपाकाभिनिर्वृत्तौ वृत्तिं लभन्ते, नान्यत्र । तथा हि चक्रवर्त्तिसंवर्त्तनीये कर्मणि अशीतिवर्षसहस्रायुषि प्रजायां बहुतरायुषि वा चक्रवर्त्तिनो जायन्ते, नान्यस्याम् ।

---

*एकनिकायसभागत्वादिति* । यश्च पूर्वकालभवो यश्चान्तराभवस्तत् प्रापकः, तयोरेक एव निकायसभागः । अत एकनिकायसभागत्वात् । येनैव कर्मणायुष्येण पूर्वकालभवस्यायुराक्षिप्यते, तेनैवान्तराभवस्य । *इतरथा हि* । यदि तस्यान्तराभवायुषः पृथगाक्षेपः स्यात्, तस्याप्यायुषः अन्तराभविकस्य क्षयान्मरणभवः प्रसज्येत, पूर्वकालभववत् । *तस्मान्नास्ति नियम* इति *भदन्तः* ।

*ते तं गन्धं घ्रात्वा गन्धरसाभिगृद्धा* इति विस्तरः । ते क्षुद्रजन्तवस्तं गन्धं घ्रात्वा तत्सहचरं चानुभूतं रसमनुसृत्य *गन्धरसाभिगृद्धाः कालं कुर्वन्तः क्रिमिनिकायसभागोत्पादकं कर्म विबोध्य तया* गन्धरसतृष्णया विपाकाभिमुखं कृत्वाऽन्तराभवसन्तत्या *क्रिमिषूपजायन्त* इति । *तत्प्रत्ययप्रचुर एव काल* इति । क्रिमिप्रत्ययप्रचुरे काले *तत्संवर्तनीयानि कर्माणि* क्रिमिसंवर्त्तनीयानि *विपाकाभिनिर्वृत्तौ वृत्तिं लभन्ते* । विपाकदानायाभिमुखीभवन्तीत्यर्थः । "सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्" (       ) इति वचनात् । *नान्यत्र* । न तत्प्रचुरे काले । *नान्यस्यामिति* । नाल्पायुषि "[illegible]" (       ) इति वचनात् । *अत एवेति* । यस्माद् विद्यमानान्यपि चक्रवर्त्ति-

---

१. क्रिमिभावसंवर्तनीय—का० ।   २. प्रबोध्य—का० ।

३. ०पूपपद्यन्ते—का० ।

अत एव चोक्तं भगवता—"अचिन्त्यः सत्त्वानां कर्मविपाकः" (      ) इति ।

२. सप्ताहं तिष्ठतीति भदन्तवसुमित्रः । यदि तावता सामग्रीं न लभते तत्रैव पुनश्च्युत्वा जायन्ते ।

३. सप्ताहानीत्यपरे ।

४. अल्पं कालमिति वैभाषिकाः । स हि सम्भवैषित्वात् सन्धावगत्वा सन्धि बध्नातीति यथात्वसमग्राः प्रत्यया भवन्ति । नियतं चानेन—तस्मिन् देशे तस्यां जातौ जनितव्यं भवति, तदा कर्माण्येव प्रत्ययानां सामग्रीमावहन्ति । अथानियतं ततोऽन्यत्र देशे तस्यां जातौ जायते सदृश्यामिति ।

५. अपरे तद्यथा—गवामूष्मसु मैथुनस्य प्राचुर्यम्, शरदि शुनाम्, ऋक्षाणां हेमन्ते, वसन्ते चाश्वानाम् । गवयशृगालखरतरक्षाणां पुनः कालो नास्तीति येनान्यत्र काले गोषूपपत्तव्यं स गवयेषूपपद्यते, येन श्वसु स शृगालेषु, येनाश्वेषु स गर्दभेषु, येन ऋक्षेषु स तरक्षेषूपपद्यत इति ।

न त्वस्य निकायसभागान्तराभवो नान्यत्र निकायसभागे शक्यमुत्पत्तुमेककर्माक्षेपादिति[1] वक्तव्यमेतत् ॥ १४ ॥

स खल्वेष गतिदेशसम्प्राप्त्यर्थं प्रादुर्भूतोऽन्तराभवः—

**विपर्यस्तमतिर्याति गतिदेशं रिरंसया ।**

---

संवर्त्तनीयानि कर्माणि विपाकाभिनिवृत्तौ कदाचिदेव वृत्तिं लभन्ते, बहुप्रत्ययापेक्षित्वात्, सम्भवैषित्वादुपपत्त्यभिलाषित्वात् ।

*कर्माण्येव प्रत्ययानां सामग्रीमावहन्तीति* । कर्माधिपत्येनाश्वादीनां प्रसिद्धं कालमतिक्रम्य कालान्तरेऽपि मैथुनं भवतीति । *एककर्माक्षेपादिति* । येनैव कर्मणा गवादिनिकायसभाग आक्षिप्यते, तेनैव कर्मणा तदन्तराभव आक्षिप्यत इत्यतो *वक्तव्यमेतत्* । यदुक्तं येनान्यत्र काले गोषूपपत्तव्यं स गवयेषूपपद्यत इति विस्तरेण । न निकायभेदादेकाक्षेपकत्वं हीयते, तत्कर्मण एकजातीयत्वात्, गत्याकृतिसंस्थानान्तरापरित्यागाच्च । गतिनियतानां हि कर्मणामुपपत्तिवैचित्र्यं दृष्टम्, कल्माषपादादिवदिति । नास्त्येष दोष इत्या*चार्यसङ्घभद्रः* ॥ १४ ॥

*"विपर्यस्तमतिः"* इति । अनुनयसहगतेन वा चित्तेन यथा विपर्यस्तमति-

---

१. ०मेककामा०—का० ।

स हि कर्मप्रभावसम्भूतेन चक्षुषा सुदूरस्थोऽपि स्वमुत्पत्तिदेशं प्रेक्षते। तत्रास्य पित्रोस्तां[1] विप्रतिपत्तिं दृष्ट्वा पुंसः सतः पौंस्नो राग उत्पद्यते मातरि, स्त्रियाः सत्याः स्त्रैणो राग उत्पद्यते पितरि। विपर्ययात् प्रतिघः। एवं पठ्यते प्रज्ञप्तौ—"गन्धर्वस्य तस्मिन् समये द्वयोश्चित्तयोरन्यतरान्यतरच्चित्तं सम्मुखीभूतं भवत्यनुनयसहगतं वा प्रतिघसहगतं वा" ( ) इति।

स ताभ्यां विपर्यस्तो रन्तुकामतया तं देशमाश्लिष्य तामवस्थामात्मन्यधिमुच्यते। तस्मिंश्चाशुचौ गर्भस्थानसम्प्राप्ते जातहर्षोऽभिनिविशते। ततोऽस्य स्कन्धा घनीभवन्ति, अन्तराभवस्कन्धाश्चान्तर्धीयन्ते इत्युपपन्नो भवति। स चेत् पुमान् भवति मातुर्दक्षिणकुक्षिमाश्रित्य पृष्ठाभिमुख उत्कुटुकः[2] सम्भवति; अथ स्त्री ततो वामकुक्षिमाश्रित्योदराभिमुखी; अथेदानीं नपुंसकं तद्येन रागेणाश्लिष्टं तथा तिष्ठति। न चास्त्यन्तराभवो व्यन्तरः; सकलेन्द्रियत्वात्। अतः स्त्रीभूतः पुरुषभूतो वाऽनुप्रविश्य यथास्थानं तिष्ठति पश्चात् गर्भे आप्यायमानो नपुंसकं भवतीति।

इदं विचार्यते—किमस्य शुक्रशोणितमहाभूतान्येवेन्द्रियाश्रयभावमापद्यन्ते कर्मवशाद्, आहोस्वित् भूतान्तराण्येव कर्मभिर्जायन्ते तान्युपश्रित्येति ?

---

भवति, तद् दर्शयन्नाह—*तत्रास्य पित्रोरि*ति विस्तरः। मातापित्रोरतां *विप्रतिपत्ति* द्विन्द्रियसमापत्तिलक्षणाम्। *पुंसः सतः* पुरुषस्यान्तराभवस्य पुंसोऽयं *पौंस्नो राग उत्पद्यते* मातरि भार्यायामिव। *स्त्रिया* अयं *स्त्रैणो राग उत्पद्यते पितरि* भर्त्तरीव। *विपर्ययात् प्रतिघ* इति। पुंसः सतः पौंस्नः प्रतिघ ईर्ष्योत्थानभूत उत्पद्यते पितरि प्रतिसपत्नपुरुष इव, स्त्रियाः सत्याः स्त्रैणः प्रतिघ उत्पद्यते मातरि प्रतिसपत्न्यामिव। *स ताभ्या*मेव विपर्यस्ताभ्यां चित्ताभ्यां *विपर्यस्तो रन्तुकामतया* मैथुनकर्मकामतया *तं* देशमिन्द्रियद्वयस्थान*माश्लिष्य तामवस्थां* विप्रतिपत्त्यवस्थामात्मन्य*धिमुच्यते*—मयैतत् कर्म क्रियत इति। *तस्मिंश्चाशुचौ* शुक्रशोणिते *गर्भस्थानसम्प्राप्ते* आमाशयपक्वाशयान्तरस्थानसम्प्राप्ते, *अभिनिविशते* प्रतितिष्ठतीत्यर्थः। *पृष्ठाभिमुख* उत्कुटुक इति। मैथुनक्रियात्माभिमानक्रियायोगात्। *आप्यायमानो* वर्धमानः। *एतान्येवेति*। शुक्रशोणितमहाभूतानि। *भूतान्तराण्येवेति*। शुक्रशोणितव्यतिरिक्तानि बीजाङ्कुरनिरोधोत्पादन्यायेनैक-

---

१. मातापित्रो०—का०। २ उत्केटुकः—का०।

तान्येवेत्येके। अनिन्द्रियं हि शुक्रशोणितमन्तराभवेन सार्धं निरुध्यते, सेन्द्रियं प्रादुर्भवति। बीजाङ्कुरनिरोधोत्पादन्यायेन यत्तत् कललमित्याख्यायते। एवं च कृत्वा[1] सूत्रपदं सूत्रे सुनीतं भवति—"मातापित्रशुचिकललसम्भूतस्य" (  ) इति। तथा "दीर्घरात्रं युष्माभिर्भिक्षवः कटसिः संवर्द्धिता रुधिरबिन्दुरुपात्तः" (  ) इति।

भूतान्तराण्येवेत्यपरे। तद्यथा पर्णक्रिमेः। अशुचिसन्निश्रयोत्पत्त्यभिसन्धिवचनात्[2] तु कललस्य सूत्राविरोध इति। एवं तावदण्डजां च योनिं प्रतिपद्यते। अन्यत्र तु यथायोगं वक्तव्यमित्याहुः।

---

स्मिन्नेव क्षणे बीजं निरुध्यतेऽङ्कुरश्चोत्पद्यते; तुलादण्डनामोन्नामवन्नाशोत्पादयोः समकालत्वात्।

*यत्तत् कललमित्याख्यायत* इति। "कललं प्रथमं भवति कललाज्जायतेऽर्बुदः" इत्यादिवचनात्। *एवं च कृत्वा सूत्रपद*मिति। "वल्मीक इति भिक्षो अस्य कायस्यैतदधिवचनम्। रूपिण औदारिकस्य चातुर्महाभूतस्य ओदनकुल्माषोपचितस्य मातापित्रशुचिकललसम्भूतस्य" इति विस्तरः। मातापित्रशुच्येव कललम्, ततः सम्भूतस्येत्यर्थः। *कटसिरि*ति। श्मशानम्। *रुधिरबिन्दुरुपात्त* इति। इदमुदाहरणम्। अस्य कायेन्द्रियभावापत्तित.।

*भूतान्तराण्येव* शुक्रशोणितव्यतिरिक्तानि। *तद् यथा पर्णक्रिमे*रिति। यथा पर्णक्रिमेः पर्णमहाभूतान्युपनिश्रित्य भूतान्तराणि कर्मभिर्जायन्ते, यानीन्द्रियस्वभावमापद्यन्ते, न पर्णमहाभूतानि; बहुत्वात् तु क्रिमीणाम्, खण्डशः पत्रस्यादर्शनाच्च। सूत्रपदं कथं तर्हि नीयते—मातापित्रशुचिकललसम्भूतस्येति ? अत आह —*अशुचिसंनिश्रयोत्पत्त्यभिसन्धिवचनात् तु कललस्य सूत्राविरोध* इति। अशुचिसंनिश्रयेणोत्पत्तिर्भूतान्तराणाम्, तत्राभिसन्धिरभिप्रायः, तेन वचनं कललस्य। तस्मान्मातापित्रशुचिकललसम्भूतस्येत्यस्य सूत्रस्याविरोधः। एतदुक्तं भवति—शुक्रशोणितसन्निश्रयेण कललाख्यानि भूतान्तराणि शुक्रशोणितसमकालान्युत्पद्यते सेन्द्रियाणि। यथा पर्णसन्निश्रयेण पर्णसमानकालानि सेन्द्रियाणि क्रिमिमहाभूतान्युत्पद्यन्त इति।

*अन्यत्र तु यथायोगं वक्तव्यमित्याहु*रिति। अन्यत्र संस्वेदजौपपादुकयोरन्ययोर्यथायोगं *व्याख्येयमित्याहुरभिधर्माचार्याः*।

---

१. कृत्वेदं—का०। २. ०भिसम्बन्धि०—का०।

तत्र चायं योगो दृश्यते—

**गन्धस्थानाभिकामोऽन्यः,**

संस्वेदजां योनिं प्रतिपद्यमान उपपत्तिस्थानं गन्धाभिलाषात्[1] गच्छत्यमेध्यम्, मेध्यं वा यथाक्रमम्। उपपादुकां तु योनिं प्रपद्यमानः स्थानाभिलाषात्।

कथं नरकेषु स्थानाभिलाषः? विपर्यस्तबुद्धित्वात्। स हि शीतवातवर्षाभिषेकैरात्मानं बाध्यमानं पश्यति, नरकेषु चाग्निं दीप्यमानम्। तत्र उष्णाभिलाषाद् धावति। पुनस्तप्तवातातपाग्निसन्तापैरात्मानं बाध्यमानमनुपश्यन् शैत्यं च नरकेषु शीताभिलाषाद्धावति। यदवस्थस्तदुपपत्तिसंवर्त्तनीयं कर्माकार्षीत्, तदवस्थ[2] आत्मानं[2] तांश्च सत्त्वान् पश्यन् धावतीति पूर्वाचार्याः।

तत्र पुनर्देवान्तराभव ऊर्ध्वं गच्छत्यासनादिवोत्तिष्ठन् मनुष्यतिर्यक्प्रेतानां मनुष्यादिवत्।

**ऊर्ध्वपादस्तु नारकः ॥ १५ ॥**

"ते वै पतन्ति नरकादूर्ध्वपादा अवाङ्मुखाः।
ऋषीणामतिवक्तारः[3] संयतानां तपस्विनाम् ॥" (          )

इति गाथाभिधानात् ॥ १५ ॥

यदुक्तम्—"विपर्यस्तमतिर्याति" इति, किमवश्यं सर्वोऽन्तराभवस्तथा मातुः कुक्षिमवक्रामति? नेत्याह। किं तर्हि? चतस्रो गर्भावक्रान्तयः सूत्र उक्ताः। कतमाश्चतस्रः?

**सम्प्रजानन् विशत्येकः,**

---

*तत्र चायं योगो दृश्येत* इति। आचार्यो ब्रवीति। *शैत्यञ्च नरकेष्विति*। शीतनरकोपपत्तिकाले। *यदवस्थ* इति। औरभ्रिकाद्यवस्थः। यथाभूतेन तद्वेद्यं कृतं प्राक्कर्म तादृशान् सत्त्वान् स्वप्न इव प्रेक्ष्य नरके स धावति। *पूर्वाचार्याः*। योगाचारा *आर्यासङ्ग*प्रभृतयः।

*आसनादिवोत्तिष्ठन्निति*। ऊर्ध्वोपपत्तिस्थानगमनात्। *मनुष्यादिवदिति*। यथा मनुष्यस्तिर्यक् प्रेतश्च गच्छति, तद्वत्।

*ऋषीणामतिवक्तार* इति। अधिक्षेप्तारः अपवदितार इत्यर्थः ॥ १५ ॥

---

१. गत्वाभि०—का०। २–२. तदवस्था०—का०। ३. ०मभिवक्तारः—का०।

तिष्ठति निष्क्रामति वा सम्प्रजानन् ।

**तिष्ठत्यपरः,**

सम्प्रजानन्निति वर्त्तते । प्रविशत्यपीत्यपिशब्दात् ।

**अपरः ।**

**निष्क्रामत्यपि,**

सम्प्रजानन् प्रविशति तिष्ठत्यपि ।

**सर्वाणि मूढोऽन्यः,**

कश्चित् पुनः सर्वाण्येवासम्प्रजानन् करोति प्रविशत्यसम्प्रजानन् तिष्ठति निष्क्रामत्यपि । एताश्चतस्रो गर्भावक्रान्तयः प्रतिलोमं निर्दिष्टाः श्लोकबन्धानुगुण्यतः ।

**नित्यमण्डजः ॥ १६ ॥**

अण्डजः सत्त्वो नित्यं मूढ एव सर्वाणि करोति ।

कथमण्डाज्जातो गर्भं प्रविशति ? योऽपि जनिष्यते सोऽप्यण्डजः ।

अथ वा भाविन्यापि संज्ञया निर्देशः क्रियते । तद्यथा—"संस्कृतमभिसंस्करोति" (          ) इति सूत्रे, ओदनं पचतीति सक्तुं पिनष्टीति लोके । तस्मान्नैष दोषः ।

---

*"नित्यमण्डजः"* इति नित्यग्रहणात् । *"सर्वाणि मूढः"* इत्यत्र नास्ति नियमः । भवति तु सम्प्रजानन्नपि । *प्रतिलोमं निर्दिष्टा* इति । सूत्रे हि यः सर्वाण्यसम्प्रजानन् करोति । एषा प्रथमा गर्भावक्रान्तिरुक्ता । तिस्रस्तु यथानिर्दिष्टानुपूर्विका एवेति ;

*योऽपि जनिष्यते सोऽप्यण्डज* इति । अण्डाज्जनिष्यते अण्डज इत्यभिप्रायः । आवश्यको ह्यभूतार्थो भूतवदुच्यते तथा, "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" ( पा० सू० ३.३.१३१ ), "आशंसायां भूतवच्च" ( पा० सू० ३.३.१३२ ) । कश्चित् कस्मैचिद्वक्ता भवेत्—आगच्छन्तमेव तथा आगतमेव मां विद्धीति । तस्माददोष एषः । अण्डाज्जातो जनिष्यते जायते चेत्यण्डजः; "अन्येभ्योऽपि दृश्यते" (पा० सू० ३.३.१३०) इति वचनात् । तस्माददुष्टमेतदित्याचार्यसङ्घभद्रः ।

*अथवा भाविन्यापि संज्ञयेति* । भविष्यन्त्यापि संज्ञया निर्देशः क्रियते । *तद्यथा संस्कृतमभिसंस्करोतीति* । जनितावस्थायां संस्कृतं भवति, न जन्यमानावस्थायाम् । नहि संस्कृतस्य पुनः संस्कारो युज्यते । भविष्यन्त्या तु संज्ञया तथा निर्देशः क्रियते । एवमोदनं पचतीत्यादि योज्यम् ।

कथं पुनरसम्प्रजानन् मातुः कुक्षिं प्रविशति यावन्निष्क्रामति, कथं वा सम्प्रजानन् ?

अल्पेशाख्यस्य तावत् सत्त्वस्य मातुः कुक्षिं प्रविशतः एवं विपरीतौ संज्ञाधिमोक्षौ प्रवर्त्तेते—वातो वाति, देवो वर्षति, शीतं दुर्दिनं महतो वा जनकायस्य कोलाहलम्, हन्त तृणगहणं वा प्रविशामि वनगहनं वा पर्णकुटीं वा, वृक्षमूलं वा चोपसर्पामि[1] कुड्यमूलं वेति, तिष्ठतोऽप्येषु तिष्ठामीति निष्क्रामतोऽप्येभ्यो निर्यामीति। महेशाख्यस्य तु सत्त्वस्य—आरामं वा प्रविशाम्युद्यानं च[2], प्रसादं वाऽभिरोहामि कूटागारं वा पर्यङ्कं वेति, तथा तिष्ठामि निर्यामीति। एवं तावदसम्प्रजानन् प्रविशति यावन्निष्क्रामति।

सम्प्रजानँस्तु सम्यक् प्रजानाति—मातुः कुक्षिं प्रविशामि, अत्रैव तिष्ठामि, अत एव निर्यामीति। नास्य विपरीतौ संज्ञाधिमोक्षौ प्रवर्त्तेते ॥ १६ ॥

अत्र पुनरपदिश्यते—

**गर्भावक्रान्तयस्तिस्रश्चक्रवर्त्तिस्वयम्भुवाम्** ।

चक्रवर्त्तिनश्च स्वयम्भुवोश्च प्रत्येकबुद्धसम्बुद्धयोश्च। यथाक्रममित्यन्ते वक्ष्यति।

---

*कथं पुनरसम्प्रजानन् मातुः कुक्षिं प्रविशतीति* विस्तरः। सन्निकृष्टावस्था उपपत्तिदेशस्य। "विपर्यस्तमतिर्याति" (अभि० ३.१५) इति। विप्रकृष्टावस्था अधिमोक्षोऽधिमुक्तिः। तथा *तिष्ठामि निर्यामीति*। कथम्? तथा तिष्ठतोऽप्येषु तिष्ठामीति, निष्क्रामतोऽप्येभ्यो निर्यामीति। अयमनयोर्विपर्यासयोर्विशेष इति।

अपरे पुनराहुः—न केवलं रागद्वेषाभ्यामेव विपर्यस्तमतिरुत्पत्तिदेशं गच्छति, किं तर्हि? अन्यथापि। कथमिति? *वातो वाति, देवो वर्षतीत्यादि*। तथा *आरामं प्रविशाम्युद्यानं चेत्यादि*। सम्प्रजानंस्तु सम्यक् चित्तेन प्रजानाति—मातुः कुक्षिं प्रविशामीत्येवमादिः। यदि सम्यक् प्रजानाति, कथं क्लिष्टेनैव प्रतिसन्धबन्धो व्यवस्थाप्यते? मातृस्नेहादियोगात् क्लिष्टं चित्तं भवति।

अपर आह—*मातुः कुक्षिं प्रविशत एवं विपरीतौ संज्ञाधिमोक्षाविति*। उपपन्नमात्रावस्थायामेतद् भवति—वातो *वाति यावद्वृक्षमूलं चोपसर्पामि, कुड्यमूलं* चेति, तिष्ठतोऽप्येषु तिष्ठामीति, निष्क्रामतोऽप्येभ्यो निर्यामीत्येवमादि।

---

१. सर्पामि—का०। २. वा—का०।

तत्र प्रथमा चक्रवर्त्तिनः। स हि प्रविशत्येव सम्प्रजानन् न तिष्ठति नापि निष्क्रामति। प्रत्येकबुद्धस्तिष्ठत्यपि। बुद्धो निष्क्रामत्यपि। अत्रापि भाविन्या संज्ञया निर्देशः।

**कर्मज्ञानोभयेषां वा विशदत्वाद् यथाक्रमम् ॥ १७ ॥**

विशदकर्मणामुदारपुण्यक्रियाणां प्रथमा। विशदज्ञानानां बाहुश्रुत्यकृतप्रविचयानां द्वितीया। विशदपुण्यकर्मज्ञानानां तृतीया। त एव त्वेते चक्रवर्त्यादय एवम्भूता युज्यन्ते यथाक्रमम्। शेषाणां चतुर्थीति सिद्धं भवति ॥ १७ ॥

अत्रेदानीं बाह्यका आत्मवादं परिगृह्योपतिष्ठन्ते—यदि सत्त्वो लोकान्तरं सञ्चरतीति प्रतिज्ञायते सिद्ध आत्मा भवतीति ? स एष प्रतिषिध्यते—

**नात्मास्ति,**

कीदृश आत्मा ? य इमान् निक्षिपत्यन्यांश्च स्कन्धान् प्रतिसन्दधातीति परिकल्प्यते, स तादृशो **नास्त्यन्तर्व्यापारपुरुषः**। एवं तूक्तं भगवता—"अस्ति कर्मास्ति विपाकः, कारकस्तु नोपलभ्यते य इमांश्च स्कन्धान्निक्षिपति अन्यांश्च स्कन्धान् प्रतिसन्दधात्यन्यत्र धर्मसंकेतात्। तत्रायं धर्मसंकेतो यदुतास्मिन् सतीदं भवतीति विस्तरेण प्रतीत्यसमुत्पादः" ( )।

कीदृशस्तर्ह्यात्मा न प्रतिषिध्यते ?

**स्कन्धमात्रं तु,**

यदि तु **स्कन्धमात्र**मेवात्मेति उपचर्यते, तस्याप्रतिषेधः। एवं तर्हि स्कन्धा एव लोकान्तरं सञ्चरन्तीति प्राप्तम्, स्कन्धमात्रं तु नात्र सञ्चरतीति।

**क्लेशकर्माभिसंस्कृतम्।**

---

*तत्र प्रथमेति* विस्तरः। चक्रवर्तिनः, येयं "सम्प्रजानन् विशत्येकः" इति। द्वितीया प्रत्येकबुद्धस्य, येयं "तिष्ठत्यपरः" इति। तृतीया बुद्धस्य, येयं "निष्क्रामत्यपि" इति। *अत्रापि भाविन्येति*। ते न चक्रवर्त्यादयस्तदानीमिति कृत्वा। त एवं त्वेते चक्रवर्त्यादय इति। पर्यायमात्रमेतदुक्तम्। अर्थस्तु स एवेत्यभिप्रायः ॥ १६-१७ ॥

*सङ्केतो* हेतुफलसम्बन्धव्यवस्था।

*"क्लेशकर्माभिसंस्कृतम्"* इति क्लेशकर्मपरिभावितमित्यर्थः।

**अन्तराभवसन्तत्या कुक्षिमेति प्रदीपवत् ॥ १८ ॥**

क्षणिका हि स्कन्धाः, तेषा सञ्चरितुं नास्ति शक्तिः । क्लेशैस्तु परिभावितं कर्मभिश्च क्लेशमात्रम**न्तराभवसंज्ञिकया सन्तत्या** मातुः **कुक्षिमायाति** । तद्यथा—प्रदीपः क्षणिकोऽपि सन्तत्या देशान्तरमिति नास्त्येष दोषः ।

तस्मात् सिद्धमेतद्—सत्यप्यात्मनि क्लेशकर्माभिसंस्कृतः स्कन्धानां सन्तानो मातुः कुक्षिमापद्यत इति ॥ १८ ॥

स पुनः—

**यथाक्षेपं क्रमाद् वृद्धः सन्तानः क्लेशकर्मभिः ।**
**परलोकं पुनर्याति ;**

न हि सर्वस्य स्कन्धसन्तानस्याक्षेपस्तुल्यो भवति; आयुष्यस्य कर्मणो भेदात् । अतो यस्य यावानाक्षेपस्तस्य तावती वृद्धिः क्रमेण भवति ।

केन क्रमेण ?

"कललं प्रथमं भवति कललाज्जायतेऽर्बुदः ।
अर्बुदाज्जायते पेशी पेशीतो जायते घनः ॥
घनात् प्रशाखा जायन्ते केशरोमनखादयः ।
इन्द्रियाणि च रूपीणि व्यञ्जनान्यनुपूर्वशः ॥ (          )

इत्यार्याः । एताः पञ्च गर्भावस्थाः कललार्बुदपेशीघनप्रशाखाख्याः ।

तस्य खलु कालान्तरेण परिपाकप्राप्तस्य गर्भशल्यस्याभ्यन्तरात् मातुः कुक्षौ कर्मविपाकजा वायवो वान्ति, ये तं गर्भशल्यं सम्परिवर्त्य मातुः कायादधरद्वाराभिमुखमवस्थापयन्ति । स क्रूरपुरीषपिण्ड इवातिमात्रं स्थानात् प्रच्युतो दुःखं सम्परिवर्त्तयते ।

---

*"प्रदीपवत्"* इति । 'सन्ततिन्यायसञ्चारि स्कन्धपञ्चकम्, क्षणिकत्वात्, प्रदीपवत्' इति दर्शयति ।

*"यथाक्षेपम्"* इति । आक्षेपस्तावत् कालप्रबन्धः । एतच्च विशेषणमायुष्य-*स्यायुःसंवर्त्तनीयस्य कर्मणो भेदात्* ।

*व्यञ्जनान्यनुपूर्वश* इति । व्यञ्जनानि चक्षुराद्यधिष्ठानानि, तैर्हि चक्षुरादीन्यभिव्यज्यन्ते ।

यदि पुनः कदाचिन्मातुराहारविहारक्रियापचारेण च पूर्वकर्मापराधेन गर्भ एव व्यापादं प्राप्नोति, तत एनं तज्ज्ञाः स्त्रियः कुमारभृत्यका वा सुखोष्णेन सर्पिस्तैलेन सुपिष्टेन शाल्मलीकल्केनान्येन वा हस्तमभ्यज्य तीक्ष्णं तनुकं चात्र शस्त्रकमुपनिबध्य तस्मिन् वर्चस्कूप इवोग्रदुर्गन्धान्धकारसमलपल्वले सुबहुक्रिमिकुलसहस्रावासे नित्यस्राविणि सततप्रतिक्रिये शुक्रशोणितलसिकामलसंक्लिन्नकथितपिच्छिले परमबीभत्सदर्शने छिद्रतनुचर्मावच्छादिते पूर्वकर्मविपाकजे तस्मिन्[1] कायनाडीव्रणे[1] हस्तं प्रवेश्याङ्गमङ्गं निकृत्याध्याहरन्ति । स चाप्यपरपर्यायवेदनीयेन कर्मणा पूर्वकेण कामपि गतिं नीयते ।

अथ पुनः स्वस्ति प्रजायते, तत एनं माता पुत्राभिलाषिणी तत्परिचारिका[2] वा स्त्रियः सद्योजातकं तरुणव्रणायमानात्मानं शस्त्रक्षारायमाणसंस्पर्शाभ्यां पाणिभ्यां परिगृह्य स्नापयन्ति, स्तन्येन सर्पिषा वाप्याययन्ति, औदारिकं चाहारमाहर्तुं क्रमेणाभ्यासयन्ति । तस्य वृद्धेरन्वयादिन्द्रियाणां परिपाकात् पुनरपि क्लेशाः समुदाचरन्ति, कर्मणि चोपचयं गच्छन्ति । स तैः कायस्य भेदादन्तराभवसन्तत्या पूर्ववत् परलोकं पुनर्याति ।

इत्यनादिभवचक्रकम् ॥ १९ ॥

*तस्मिन् वर्चः कूप इवेति* । तस्मिन् *कायनाडीव्रणे* । निन्दावचनमेतत् । नाडीव्रण इव नाडीव्रण इति । उग्रो दुर्गन्धः *उग्रदुर्गन्धः* । *अन्धकारश्चासावालोकरहि*तत्वात् । समलानां च पल्वलोऽसौ पल्वल इवेति कृत्वा, तस्मिन् *सततप्रतिक्रिये* नित्यकर्त्तव्यशौचे । *शुक्रेण* पौंस्नेन । *शोणितेन* स्त्रैणेन । *लसीकया* द्रवविशेषलक्षणया, मलेन च संक्लिन्ने समन्तात् क्लिन्ने । विक्लिन्ने विशेषेण क्लिन्ने क्थिते पूतौ पिच्छिले च तस्मिन् *हस्तौ सम्प्रवेश्याङ्गमङ्गं* हस्तपादादिकं *निकृत्य* छित्वा *अध्याहरन्ति* अध्याकर्षयन्ति ।

तरुणं व्रणं सरुजम्, तरुणव्रणमिवात्मानमाचरंस्तरुणव्रणायमानः, तरुणव्रणायमान आत्माऽस्येति *तरुणव्रणायमानात्मानं बालकम्*, शस्त्रं च क्षारं च शस्त्रक्षारम्, तदिवात्मानमाचरन् शस्त्रक्षारायमाणः, शस्त्रक्षारायमाणः संस्पर्शोऽनयोरिति *शस्त्रक्षारायमाणसंस्पर्शौ* पाणी, ताभ्यां *परिगृह्य स्नापयन्ति*; तस्य वृद्धेरन्वयादनुगमात् ।

१–१. महति कामनाडी०—का० । २. तत्परिका—का० ।

एतेन प्रकारेण क्लेशकर्महेतुकं जन्म तद्धेतुकानि पुनः क्लेशकर्माणि तेभ्यः पुनर्जन्मेत्यनादिभवचक्रकं वेदितव्यम् ।

आदौ हि परिकल्प्यमाने तस्याहेतुकत्वमेतेषु सज्येत । सति चास्याहेतुकत्वे[1] सर्वमेवेदमहेतुकं प्रादुःस्यात् । दृष्टं चाङ्कुरादिषु बीजादीनां सामर्थ्यं देशकाल-प्रतिनियमादग्न्यादीनां वा[2] पाकजादिष्विति नास्ति निर्हेतुकः प्रादुर्भावः ।

नित्यकारणास्तित्ववादः[3] प्रागेव पर्युदस्तः । तस्मान्नास्त्येव संसारस्यादिः ।

अन्तस्तु हेतुक्षयाद् युक्तः । हेत्वधीनत्वाज्जन्मनो बीजक्षयादिवाङ्कुरस्येति ॥ १९ ॥

य एष स्कन्धसन्तानो जन्मत्रयावस्थ उपदिष्टः,

**स प्रतीत्यसमुत्पादो द्वादशाङ्गस्त्रिकाण्डकः ।**

तत्र द्वादशाङ्गानि—अविद्या, संस्काराः, विज्ञानम्, नामरूपम्, षडायतनम्, स्पर्शः, वेदना, तृष्णा, उपादानम्, भवः, जातिः, जरामरणं च ।

त्रीणि काण्डानि पूर्वापरान्तमध्यान्यतीतानागतप्रत्युत्पन्नानि जन्मानि ।

कथमेषु त्रिकाण्डेषु द्वादशाङ्गानि व्यवस्थाप्यन्ते ?

**पूर्वापरान्तयोर्द्वे द्वे, मध्येऽष्टौ,**

---

*तस्याहेतुकमिति* । आदेरहेतुकत्वम् । *सति चास्याहेतुकत्वे* । तद्वदेव सर्व-*महेतुकं प्रादुः स्यात् । दृष्टं चांकुरादिषु बीजादीनां सामर्थ्यम्* । अङ्कुरनाल-काण्डपत्रादिषु बीजाङ्कुरनालकाण्डादीनां सामर्थ्यमुत्पादनाय । कस्मात् ? *देश-कालप्रतिनियमात्* । देशकालयोस्तु प्रतिनियमात् । तत्र देशप्रतिनियमो बीजा-दिसम्बद्ध एव देश उत्पत्तेः । कालप्रतिनियमो बीजानन्तरमुत्पत्तेः । *अग्न्यादीनां वाग्निशीतोष्णाभिघातचक्षुरादीनां पाकजादिषु* पाकजसुखदुःखशब्दचक्षुर्विज्ञाना-दिषु दृष्टं सामर्थ्यम्; देशकालप्रतिनियमात् । यदि हि निर्हेतुकः प्रादुर्भावः स्यात्, बीजादीनामङ्कुरादिषु अग्न्यादीनाञ्च पाकजादिषु देशकालप्रतिनिय-मेनोत्पत्तिं प्रति सामर्थ्यं न स्यात् । सर्वं सर्वत्र सर्वदोत्पद्येत । न चैवं दृष्टम्, इत्यतो *नास्ति निर्हेतुकः प्रादुर्भावः । नित्यकारणास्तित्ववादः प्रागेव पर्युदस्तः*; "नेश्वरादेः क्रमादिभिः" ( अभि० को० २.६५ ) इति वचनात् ॥ १८–१९ ॥

---

१. चाहेतुकत्वे—का० । २. च—का० ।

३. ०वादश्च—का० ।

अविद्या संस्काराश्च पूर्वान्ते, जातिर्जरामरणं चापरान्ते । शेषाण्यष्टौ मध्ये ।

किं पुनरेतान्यष्टाङ्गानि सर्वस्यां जातौ भवन्ति ? नेत्याह । कस्य तर्हि ?

**परिपूरिणः ॥ २० ॥**

परिपूरोऽस्यास्तीति परिपूरी, य एतानि सर्वाण्येवावस्थान्तराणि स्पृशति सोऽत्र पुद्गलोऽभिप्रेतः, न तु योऽन्तराल एव म्रियते । नापि रूपारूप्यावचरः । तथा हि महानिदानपर्यायसूत्रे[1] कामावचर एव पुद्गलो निर्दिष्टः; "विज्ञानं चेदानन्द मातुः कुक्षिं नावक्रामेत्" ( ) इति वचनात् ।

यदा तु द्विविधः प्रतीत्यसमुत्पाद उच्यते—पौर्वान्तिकश्च, अपरान्तिकश्चेति; तदा सप्ताङ्गानि पौर्वान्तिको यावद्वेदनान्तः, पञ्चापरान्तिकः; सफलहेतुकयोः पूर्वापरान्तयोर्ग्रहणात् ॥ २० ॥

अथ क इमेऽविद्यादयः ?

**पूर्वक्लेशा दशाऽविद्या,**

या पूर्वके जन्मनि क्लेशावस्था, सेहाविद्येत्युच्यते; साहचर्यात्, तद्वशेन तेषां

---

*शेषाण्यष्टौ मध्य* इति । विज्ञाननामरूपषडायतनस्पर्शवेदनातृष्णोपादान-भवाङ्गानि ।

*नापि रूपारूप्यावचर* इति । रूपावचरस्य विज्ञानाङ्गकाल एव नामरूप-षडायतनाङ्गयोः सद्भावात् । न मध्येऽष्टावङ्गानि; आरूप्यावचरस्य च नामरूप-षडायतनाङ्गयोरभावात् । *महानिदानपर्यायसूत्रे "विज्ञानं चेदानन्द मातुः कुक्षिं नावक्रामे*दपि तु तन्नामरूपं कललत्वा*याभिसम्मूर्छेत्, नो भदन्त"* इत्यादि तत् सूत्रं पठ्यते । मातुः कुक्ष्यवक्रमणं हि कामधातावेवेति । *सफलहेतुकयोः पूर्वापरान्त-योर्ग्रहणादिति* । यथाक्रममेतत्—पूर्वान्तस्य सफलस्य ग्रहणाद्, अपरान्तस्य च सहेतुकस्य ग्रहणादिति । तत्र पूर्वान्ते हेतुरविद्या संस्काराश्च, तस्य फलं पञ्चाङ्गानि—विज्ञानं यावद्वेदनेति । अपरान्ते जातिर्जरामरणं चेति, फलम् तस्य त्रीण्यङ्गानि हेतवस्तृष्णोपादानभवाः । तदेवं सप्ताङ्गानि पौर्वान्तिकः, पञ्चाङ्गान्यपरान्तिक इति व्याख्यातं भवति ॥ २० ॥

*अथ क इमेऽविद्यादय* इति । किमविद्यैव केवला, उताहो सर्वे क्लेशाः, आहो-स्वित् क्लेशावस्था—इति सन्देहे पृच्छति । *साहचर्यादिति* । यस्मादविद्यासह-

---

१. ०पर्यये—का० ।

समुदाचाराच्च । राजागमनवचने तदनुयातृकागमनसिद्धवत्[1] ।

**संस्काराः पूर्वकर्मणः ।**

'दश' इति वर्त्तते । पूर्वजन्मन्येव या पुण्यादिकर्मावस्था **सेह संस्कारा** इत्युच्यन्ते, यस्य कर्मण इह विपाकः ।

**सन्धिस्कन्धास्तु विज्ञानम्,**

मातुः कुक्षौ प्रतिसन्धिक्षणे पञ्च **स्कन्धा विज्ञानम्** ।

**नामरूपमतः परम् ॥ २१ ॥**

**प्राक् षडायतनोत्पादात्,**

सन्धिचित्तात् परेण यावत् षडायतनं नोत्पद्यते साऽवस्था **नामरूपं** तावत् षडायतनमित्युच्यते । प्राक्चतुरायतनोत्पादादिति वक्तव्ये षडायतनवचनं तदा तद्व्यवस्थापनात् ॥ २१ ॥

**तत्पूर्वं त्रिकसङ्गमात् ।**

उत्पन्ने षडायतने सावस्था तावत् षडायतनमित्युच्यते यावदिन्द्रिय-विषय-विज्ञानत्रिकसन्निपातः ।

---

चारिणः क्लेशाः । *तद्वशेन तेषां समुदाचाराच्च* । यस्माच्चाविद्यावशेन तेषां क्लेशानां समुदाचारः स पुनस्तदनुवृत्तिः । मूढस्य हि क्लेशसमुदाचारः, नामूढस्य । *राजागमनवचन* इति विस्तरः । साहचर्यात् तद्वशेन तेषां समुदाचारात्, तद्वदेतत् । तदेवमविद्यावशादविद्याङ्गः क्लेशदशेत्यर्थः । तस्मादुक्तम्—"पूर्वक्लेशदशाविद्या" इति, न तूक्तम्—पूर्वाविद्यादशाविद्येति ।

*पुण्यादिकर्मावस्थेति* । पुण्यापुण्यकर्मावस्थेत्यर्थः ॥ २१ ॥

*प्राक् चतुरायतनोत्पादादिति वक्तव्य* इति । मनःकायायतनयोरुपपत्तिभव एवोत्पादात् । *तदा तद्व्यवस्थापनादि*ति । चक्षुराद्यायतनोत्पत्तिकाले कायमन-आयतनयोर्व्यवस्थापनादित्यर्थः ।

*"तत्पूर्वं त्रिकसङ्गमात्"* इति । तत् षडायतनाङ्गं प्राक् त्रिकसङ्गमात्, प्रागिन्द्रियविषयविज्ञानत्रिकसङ्गमात् । प्रागिन्द्रियविषयविज्ञानत्रिकसन्निपातादित्यर्थः ॥

---

१. तदनुयात्रिक०—का० ।

**स्पर्शः प्राक् सुखदुःखादिकारणज्ञानशक्तितः ॥ २२ ॥**

त्रयाणां सन्निपातात् स्पर्शो भवति । स यावद्वेदनात्रयकारणपरिच्छेदेन भवति साऽवस्था स्पर्श इत्युच्यते ॥ २२ ॥

परिच्छेदसामर्थ्ये सति—

**वित्तिः प्राङ् मैथुनात्,**

वेदनावस्था यावन्मैथुनरागो न समुदाचरति ।

**तृष्णा भोगमैथुनरागिणः ।**

कामगुणमैथुनरागसमुदाचारावस्था तृष्णेत्युच्यते, यावन्न तद्विषयपर्येष्टिमापद्यते ।

**उपादानं तु भोगानां प्राप्तये परिधावतः ॥ २३ ॥**

यस्यामवस्थायां विषयप्राप्तये पर्येष्टिमापन्नः सर्वतो धावति, असाववस्था उपादानमित्युच्यते ॥ २३ ॥

तथा च परिधावन्—

**स भविष्यद्भवफलं कुरुते कर्म तद् भवः ।**

---

*"स्पर्शः प्राक्"* इति । षडिन्द्रियविषयविज्ञानसन्निपातः स्पर्शो जातावस्थायां व्यवस्थाप्यते; परिपूर्णषडायतनसन्निपातसद्भावात् । आ कुतः ? प्राक् सुखदुःखासुखवेदनाकारणेषु । *"ज्ञानशक्तितः"* । स बालो यावत् सुखाया वेदनाया एतत् कारणम्, अदुःखासुखायाश्चैतत् कारणम्–इति परिच्छेदे न शक्तो भवति *सावस्था स्पर्श इत्युच्यते* । तथा हि बालकोऽग्निमपि स्पृशेद्—दुःखस्यैतत् कारणमित्यपरिच्छिन्दन् ॥ २२ ॥

परिच्छेदे सामर्थ्ये सति *"वित्तिः"* वेदनेत्यर्थः । आ कुतः ? *"प्राङ्मैथुनात्"* । *यावत् मैथुनरागो न समुदाचरति* सावस्था वेदनेत्युच्यते । वेदनाप्रकर्षिणी हि सावस्था वेदना; कारणवेदनात् ।

*"तृष्णा भोगमैथुनरागिणः"* इति । भोगेषु रूपादिकामगुणलक्षणेषु मैथुने च लोकप्रतीते रागिणः पुद्गलस्य *तद्रागसमुदाचारावस्था तृष्णेत्युच्यते । पर्येष्टिमापन्न* इति । 'एष' ( मा० धा० १.३९९ ) इत्येतस्य धातोरेतद्रूपम् ।

उपादीयते विषय आत्मभावोऽनेनेत्युपादा*नम्*, चतुर्विधः क्लेशः सावस्थोपादानमित्युच्यते ॥ २३ ॥

*"स भविष्यद्भवफलम्"* इति । स परिधावतो निर्देशः, भविष्यद्भवः फलम-

स विषयाणां प्राप्तिहेतोः परिधावन् पौनर्भविकं कर्मोपचिनोति सोऽस्य भवः। तेन हि कर्मणा पुनरितः प्रच्युतस्यायत्यां प्रतिसन्धिर्भवति।

योऽसौ

प्रतिसन्धिः पुनर्जातिः

यदेवेह विज्ञानाङ्गं तदेवास्यान्यत्र जन्मनि जातिः।

तत ऊर्ध्वम्—

जरामरणमा विदः ॥ २४ ॥

जातेः परेण यावद्वेदनावस्था जरामरणम्। यान्येवेह चत्वार्यङ्गानि—नामरूपषडायतनस्पर्शवेदनाः, तान्येवान्यत्र जरामरणमित्येतानि द्वादशाङ्गानि ॥

स चैव प्रतीत्यसमुत्पादश्चतुर्विध उच्यते—क्षणिकः, प्राकर्षिकः, साम्बन्धिकः, आवस्थिकश्च।

कथं क्षणिकः? एकस्मिन् खल्वपि क्षणे द्वादशाङ्गानि भवन्ति। तद्यथा—लोभवशेन प्राणिनं जीविताद् व्यपरोपयेत्, यो मोहः साऽविद्या, या चेतना ते संस्काराः, वस्तुप्रतिविज्ञप्तिर्विज्ञानम्, विज्ञानसहभुवश्चत्वारः स्कन्धा नामरूपम्, नामरूपे व्यवस्थापितानि इन्द्रियाणि षडायतनम्। षडायतनाभिनिपातः स्पर्शः, स्पर्शानुभवनं वेदना, यो लोभः स तृष्णा, तत्सम्प्रयुक्तानि

---

स्येति भविष्यद्भवफलम्। "*कर्म*" पौनर्भविकमित्यर्थः। "*तद्भवः*" इति। भवत्यनेनेति भवः कर्मपर्यायः।

"*जरामरणमा विदः*" इति। आ विदः आ वेदनाङ्गात्। जरामरणं नामरूपादिचतुरङ्गस्वभावम्। विनेयजनोद्वेजनार्थं *भगवता* जरामरणशब्देन चत्वार्यङ्गान्युक्तानि—"यो भिक्षवो रूपस्योत्पादः। एवं यावद् विज्ञानस्य" (        ) इति ॥ २४ ॥

*क्षणिकः*। क्षणे भवः, क्षणोऽस्यास्तीति वा क्षणिकः। प्रकर्षेण दीव्यति चरति वा *प्राकर्षिकः* प्रबन्धयुक्त इत्यर्थः। एवं *साम्बन्धिकः* हेतुफलसम्बन्धयुक्त इत्यर्थः। एवम*ावस्थिकः* द्वादशपञ्चस्कन्धिका अवस्था इत्यर्थः। *विज्ञानसहभुव* इति विस्तरः। रूपमत्र सहभूर्विज्ञप्त्यविज्ञप्त्यादि। संज्ञादिस्कन्धत्रयं नाम। *नामरूपव्यवस्थितानि इन्द्रियाणि* तत्प्रतिबद्धवृत्तित्वादिन्द्रियाणाम्। आश्रयत्वेन वा तानि नाम्नि व्यवस्थितानि इति। *षडायतनाभिनिपातः स्पर्श* इति। चक्षुरादीनां स्वस्मिन् विषये प्रवृत्तिरभिनिपातः। स तु सम्भवतः। अस्य

पर्यवस्थानि उपादानम्, तत्समुत्थितं कायवाक्कर्म भवः, तेषा धर्माणामुन्मज्जनं जातिः, परिपाको जरा, भङ्गो मरणमिति ।

पुनराहुः—क्षणिकः साम्बन्धिकश्च यथा प्रकरणेषु—"प्रतीत्यसमुत्पादः कतमः ? सर्वे संस्कृता धर्माः" इति ।

आवस्थिको द्वादश पञ्चस्कन्धिका अवस्था निरन्तरजन्मत्रयसम्बद्धाः । स एव प्राकर्षिकः ।

एषां कतमोऽयमभिप्रेतो भगवतः ?

**आवस्थिकः किलेष्टोऽयं,**

यद्यङ्गमङ्गं पञ्च स्कन्धाः किं कारणमविद्यादीनेव धर्मान् कीर्त्तयति स्म ?

**प्राधान्यात्त्वङ्गकीर्तनम् ।**

अविद्याप्रधानामवस्थामविद्यां जगाद संस्कारप्रधानां संस्कारान् यावज्जरामरणमित्यदोषः ।

किं पुनः कारणं सूत्रे द्वादशाङ्ग उक्तः, प्रकरणेष्वन्यथा "प्रतीत्यनुत्पादः कतमः ? सर्वे संस्कृता धर्माः" इति ? आभिप्रायिकः सूत्रे, लाक्षणिकोऽभिधर्मे । तथावस्थिकः क्षणिकः प्राकर्षिकः साम्बन्धिकः सत्त्वाख्योऽसत्त्वाख्यश्चेति भेदः ।

---

तदानीमभिनिपातः सम्भवति स तस्य स्पर्श इति वेदितव्यः । *तत्सम्प्रयुक्तानि पर्यवस्थानान्युपादानम् ।* तया तृष्णया सम्प्रयुक्तान्याह्रीक्यानपत्राप्यादीनि पर्यवस्थानानि तदुपादानम् । *तत्समुत्थमिति ।* तृष्णासमुत्थम् । चेतनासमुत्थमित्यपरे । *उन्मज्जनमुत्पादः परिपाको जरेति ।* फलाक्षेपसामर्थ्योपघातः । पूर्वक्षणापेक्षया वा । *भङ्गो मरणमिति ।* तत्क्षणविनाशः । भङ्गाभिमुख्यं भङ्ग इत्यपरे । *क्षणिकः साम्बन्धिकश्च यथाप्रकरणेष्विति ।* कथं प्रकरणेषु—"प्रतीत्यसमुत्पादः कतमः ? *सर्वे संस्कृता धर्माः"* इति ? तत्र संस्कृतानां धर्माणां प्रतिक्षणं विनाशयोगात् क्षणिकः प्रतीत्यसमुत्पादः । हेतुफलभूतोभयक्षणानम्बन्धात् साम्बन्धिकः । *निरन्तरजन्मत्रयसम्बद्धा* इति । *द्वादशपञ्चस्कन्धिका अवस्था* अतीतानागतप्रत्युत्पन्नजन्मसम्बद्धाः आवस्थिकः प्रतीत्यसमुत्पादः । निरन्तरग्रहणं त्रिकाण्डप्रसिद्ध्यर्थम् । *स एव प्राकर्षिक* इति । स एवावस्थिकः प्रकर्षयोगात् प्राकर्षिकः अनेकक्षणिकत्वादनेकजन्मिकत्वाद्वा ।

*आभिप्रायिक* इति । अभिप्राये भव आभिप्रायिकः । विनेयाभिप्रायवशात् तथा देशित इत्यर्थः । *लाक्षणिकोऽभिधर्मे* लक्षणप्रधानत्वात् । प्रकरणेषु हि

किमर्थं पुनः सूत्रे सत्त्वाख्य एव ?

**पूर्वापरान्तमध्येषु सम्मोहविनिवृत्तये ॥ २५ ॥**

अत एव च त्रिकाण्डः । तत्र **पूर्वान्तसंमोहो** यत इयं विचिकित्सा—'को न्वहमभूवमतीतेऽध्वनि, आहोस्विन्नाभूवं कथं न्वहमभूवम्' इति । **अपरान्तसंमोहो** यत इयं विचिकित्सा—'किं नु भविष्याम्यनागतेऽध्वनि' इति विस्तरः । **मध्यसंमोहो** यत इयं विचिकित्सा—'किंस्विदिदं के सन्तः के भविष्यामः' इति ।

एतस्य त्रिविधस्य सम्मोहस्य व्यावर्त्तनार्थं सत्त्वाख्य एव त्रिकाण्डश्च प्रतीत्यसमुत्पाद उपदिष्टः सूत्रे यथाक्रममविद्या संस्काराश्च जातिर्जरामरणं च विज्ञानं यावद् भवश्च । तथा हि सूत्रे एवोक्तम्—"यतश्च भिक्षवो भिक्षुणा प्रतीत्यसमुत्पादश्च प्रतीत्यसमुत्पन्नाश्च धर्मा एवं यथाभूतं सम्यक् प्रज्ञया दृष्टा भवन्ति । स न पूर्वान्तं प्रतिसरति—किं न्वहमभूवमतीतेऽध्वनि" इति विस्तरः ।

---

सर्वसंस्कृतग्रहणात् सत्त्वासत्त्वाख्यः प्रतीत्यसमुत्पादः उक्तः; सर्वसंस्कृतहेतुत्वयोगात् ।

विनेयसम्मोहविनिवृत्तिहेतुः सत्त्वाख्य एव द्वादशाङ्गः प्रतीत्यसमुत्पादो देशितः । अत आह—"*पूर्वापरान्तमध्येषु सम्मोहविनिवृत्तये*" इति । *अत एव च त्रिकाण्ड* इति । काण्ड इति भागः । *कोन्वहमभूवमिति* । देवो मनुष्य इति वा । *कथं न्वहमभूवमिति* । केन प्रकारेण कया युक्त्येत्यर्थः । *किं नु भविष्याम्यनागतेऽध्वनीति* विस्तरः । किं नु भविष्याम्यनागतेऽध्वनि, आहोस्विन्न भविष्यामि, को नु भविष्यामि, कथं नु भविष्यामीति । केन प्रकारेण कया युक्त्येत्यर्थः । *किंस्विदिदमिति* । आत्मभावद्रव्यमन्वेषते, कथंस्विदिदमिति, केन प्रकारेण कया युक्त्येति, तदेवात्मभावद्रव्यं नावधारयति । *के सन्त* इति । के वयमिदानीं विद्यमानाः । *के भविष्याम* इति एवं नावधारयति ।

*सूत्रे यथाक्रममिति* । *अविद्या संस्काराश्च* पूर्वान्तसम्मोहव्यावर्त्तनार्थम् । *जातिर्जरामरणं* चापरान्तसम्मोहव्यावर्त्तनार्थम् । *विज्ञानं यावद्भवश्च* मध्यसम्मोहव्यावर्त्तनार्थमिति । *तथा हि सूत्र एवोक्तमिति* विस्तरः । सूत्रेऽप्येवमेवं दर्शितमिति । सूत्रेण स्वव्याख्यानं समर्थयति । *स न पूर्वान्तं प्रतिसरति, किं न्वहमभूवमतीतेऽध्वनीति विस्तरः* । स न पूर्वान्तं प्रतिधावति । किं न्वहमभूवमतीतेऽध्वनीति प्रतीत्यसमुत्पादयथाभूतदर्शनेन नैवमतीतेऽध्वनि सम्मुह्यत इत्यर्थः । विस्तरशब्देन स नापरान्तं प्रतिसरति, किं नु भविष्याम्यनागतेऽध्वनीति विस्तरः । तथा न स मध्यान्तं प्रतिसरति, किंस्विदिदमिति विस्तरः ।

तृष्णोपादानभवा अप्यपरान्तसम्मोहव्यावर्तनार्थमित्यपरे । तस्यैव ह्येते हेतव इति ॥ २५ ॥

स पुनरेष द्वादशाङ्गः प्रतीत्यसमुत्पादस्त्रिस्वभावो वेदितव्यः क्लेशकर्मवस्तूनि । तत्र—

**क्लेशास्त्रीणि,**

त्रीण्यङ्गानि क्लेशस्वभावानि—अविद्यातृष्णोपादानानि ।

**द्वयं कर्म,**

अङ्गद्वयं कर्मस्वभावम्—संस्काराः, भवश्च ।

**सप्त वस्तु,**

सप्ताङ्गानि वस्तुस्वभावानि—विज्ञाननामरूपषडायतनस्पर्शवेदनाजातिजरामरणानि; क्लेशकर्माश्रयत्वात् । यथा च वस्तु सप्ताङ्गानि,

**फलं तथा ।**

सप्तैवाङ्गानि फलभूतानि । शेषाणि पञ्च हेतुभूतानि; कर्मक्लेशस्वभावत्वात्[1] ।

किं पुनः कारणं मध्ये फलहेतू विशालितौ ? वस्तुनः पञ्चधा भेदात् । क्लेशस्य च[2] द्विधा । अनागतेऽध्वनि फलं संक्षिप्तं द्विधा भेदात् । अतीतेऽध्वनि

---

*तृष्णोपादानभवा अपीति* । सर्वे तृष्णोपादानभवा अपरान्तसम्मोहव्यावर्त्तनार्थम्, न मध्यसम्मोहव्यावर्त्तनार्थम् । यथा पूर्वमुपदिष्टं विज्ञानं यावद्भवश्चेति । का पुनरत्र युक्तिः ? इत्याह—*तस्यैव ह्येते हेतव* इति । यस्मादपरान्तस्यैवैते हेतव इति ॥ २५ ॥

*क्लेशकर्माश्रयत्वादिति* । विज्ञानादीनि सप्ताङ्गानि वस्तून्यधिष्ठानानि क्लेशकर्मणामित्यर्थः ।

*"फलं तथा"* इति । सप्तैवाङ्गानि विज्ञाननामरूपषडायतनस्पर्शवेदनाङ्गान्यविद्यासंस्काराणां फलानि । जातिर्जरामरणं च तृष्णोपादानभवानां फलानि । *पञ्च हेतुभूतानीति* । अविद्यासंस्कारतृष्णोपादानभवाः । *कर्मक्लेशस्वभावत्वादिति* । अविद्यातृष्णोपादानानि क्लेशस्वभावानि, संस्काराः भवाश्च कर्मस्वभावाः ।

*वस्तुनः पञ्चधा भेदादिति* । विज्ञाननामरूपषडायतनस्पर्शवेदना इति । *क्लेशस्य च द्विधेति* । तृष्णोपादानमिति । *अनागतेऽध्वनि फलं संक्षिप्तं द्विधा भेदादिति* ।

---

१. ०स्वभावभूतत्वात्—का० । २. का० पुस्तके नास्ति ।

हेतुः संक्षिप्तः[1]; एकमुखक्लेशोपदेशादिति ।

**फलहेत्वभिसंक्षेपो द्वयोर्मध्यानुमानतः ॥ २६ ॥**

मध्येनैव हि पूर्वान्तापरान्तयोरपि हेतुफलविस्तरः शक्योऽनुमातुमिति नोक्तः । पुनरपरात्मकं हि यत्नं मा कार्यमिति ॥ २६ ॥

यदि खलु द्वादशाङ्ग एव प्रतीत्यसमुत्पादः, एवं सत्यविद्याया अनुपदिष्ट-हेतुकत्वादादिमान् संसारः प्राप्नोति, जरामरणस्य चानुपदिष्टफलत्वादन्तवान् । अङ्गान्तरं वा पुनरुपसंख्यातव्यं तस्याप्यन्यस्मादित्यनवस्थाप्रसङ्गः ? नोपसंख्या-तव्यम्; यस्मादुपदर्शितोऽत्र भगवता—

**क्लेशात् क्लेशः क्रिया चैव ततो वस्तु ततः पुनः ।**
**वस्तु क्लेशाश्च जायन्ते भवाङ्गानामयं नयः ॥ २७ ॥**

क्लेशात् क्लेशो जायते—तृष्णाया उपादानम् ।

क्लेशात् कर्म—उपादानाद् भवः, अविद्यायाश्च संस्काराः । कर्मवस्तु—संस्कारेभ्यो विज्ञानम्, भवाच्च जातिः । वस्तुनो वस्तु—विज्ञानान्नामरूपं यावत् स्पर्शाद् वेदना, जातेश्च जरामरणम् । वस्तुनः क्लेशः—वेदनायास्तृष्णेति ।

यस्मादेष नयो व्यवस्थितो भवाङ्गानाम्, तस्मादविद्यापि क्लेशस्वभावा वस्तुनः क्लेशाद्वेति ज्ञापितं भवति । वेदनावशाच्च जरामरणवस्तुनः पुनः क्लेशो भावीति

---

जातिर्जरामरणमिति । *अतीतेऽध्वनि हेतुः संक्षिप्त एकमुखक्लेशोपदेशात् ।* अविद्यामुखक्लेशोपदेशादित्यर्थः । न पुनरनागतेऽध्वनि फलमेव पञ्चधा विशालितम्, अतीते चाध्वनि नेवं द्विधा हेतुर्विशालित इति ॥ २६ ॥

*यस्मादुपदर्शितोऽत्र भगवतेति ।* कः ? *"क्लेशात् क्लेशः"* इत्येवमादिकः *"भवाङ्गानामयं नयः"* ।

*"ततो वस्तु"* इति । ततः क्रियायाः । *"ततः पुनः वस्तु"* इति । ततो वस्तुनः वस्तु । *"क्लेशाश्च जायन्ते"* इति । वस्तुन इत्यधिकृतम् । जायन्त इत्यत्रे-तिकरणोऽध्याहार्यः । *वस्तुनः क्लेशाद्वेति ज्ञापितमिति ।* इति क्लेशो वस्तुन उत्पद्यमानो दृष्टः—वेदनायास्तृष्णेति । क्लेशादपि तथा दृष्टः—तृष्णाया उपा-दानमिति । अविद्या च पूर्वान्तसर्वक्लेशस्वभावाख्याता । तद् यद्युपादानम्, तृष्णायास्तदुत्पद्यत इति गम्यते । अथ तृष्णा, तद्वस्तुन उत्पद्यत इति गम्यते ।

---

१. हेतुरेक०—का० ।
अभि० को० २ : ५

नात्र पुनः किञ्चिदुपसंख्येयम् ; "एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति" (  ) इति **वचनात्** । अन्यथा हि किमस्य सामर्थ्यं स्यात् ।

अयोनिशोमनस्कारहेतुकाऽविद्योक्ता **सूत्रान्तरे** ।

अविद्याहेतुकश्चायोनिशोमनस्कारः । स चेहाप्युपादानान्तर्भूतत्वादुक्तो भवतीति **अपरे** ।

---

तस्मादविद्या क्लेशस्वभावा सती वस्तुनः क्लेशाद्वेति ज्ञापितं भवति । जरामरणं चतुरङ्गस्वभावं वस्त्विति व्याख्यातम् । वस्तुनश्चेह क्लेश उत्पद्यमानो दृष्टः—वेदनाप्रत्यया तृष्णेति । *तस्मात्* ततः *क्लेशो भावी* भविष्यतीति ज्ञापितं भवति, *नात्र पुनः किञ्चिदुपसंख्येयमेवं* ज्ञापितत्वात् । कथं पुनरेवं नयो दर्शित इति गम्यते ? इत्याह—*एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवतीति वचनात् । अन्यथा हि किमस्य सामर्थ्यं स्यादिति* । यद्ययं यथोक्तो नयो न स्यात्—"क्लेशात् क्लेशः क्रिया चैव ततो वस्तु ततः पुनः वस्तु क्लेशाश्च जायन्ते" इति, एतावदेव ब्रूयात्—अविद्याप्रत्ययाः संस्कारा यावज्जातिप्रत्यया जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाः सम्भवन्तीति । इदं न ब्रूयात्—"एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति" इति । समुदयः, उत्पाद इत्यनर्थान्तरम् । तस्माद् यथोक्तप्रकाराभिद्योतकस्य सामर्थ्यमिति गम्यते ।

*अयोनिशोमनस्कारहेतुकाऽविद्योक्ता सूत्रान्तर* इति । *सहेतुसप्रत्ययसनिदान*-सूत्रे । कथम्—"अविद्या भिक्षवः सहेतुका सप्रत्यया सनिदाना । कश्च भिक्षवोऽविद्याया हेतुः, कः प्रत्ययः, किं निदानम् ? अविद्याया भिक्षवोऽयोनिशोमनस्कारो हेतुः, अयोनिशोमनस्कारः प्रत्ययः, अयोनिशोमनस्कारो निदानम्" (  ) इति सूत्रे वचनात् । *अविद्याहेतुकश्चायोनिशोमनस्कार* इति । सूत्रान्तर उक्त इत्यधिकृतम् । "चक्षुः प्रतीत्य रूपाणि चोत्पद्यते, आविलो मनस्कारो मोहजः" (  ) इति सूत्रे वचनात् । किमर्थं तस्येहावचनम् ? कथं च नाङ्गान्तरं भवति ? इत्यत आह—*स चेहाप्युपादानान्तर्भूतत्वादुक्तो भवतीति* । स इत्याविलो मनस्कारः । इहेति प्रतीत्यसमुत्पादसूत्रे । कथमुक्तः ? उपादानान्तर्भूतत्वात् । तथा हि उपादानं भोगानां प्राप्तये क्लेशसमुदाचारावस्थाः । तत्र चायोनिशोमनस्कारो विपरीतचेतस आभागोऽन्तर्भूत इत्युक्तो भवति, अतो नास्त्यहेतुकत्वमविद्यायाः । न चाङ्गान्तरमुपसंख्यातव्यं द्वादशभ्योऽविद्यादिभ्यः । न चानवस्थाप्रसङ्गः; अविद्याहेतुकत्वादयोनिशोमनस्कारस्येति ।

*अपर* इति । स्थविरो *वसुबन्धोराचार्यो मनोरथोपाध्याय* एवमाह ।

कथमयोनिशोमनस्कारस्योपादानेऽन्तर्भावः ? यदि सम्प्रयोगतः, तृष्णाऽविद्ययोरपि तस्यान्तर्भावः[1] प्राप्नोति[1] । सत्यपि चान्तर्भावे [2]कथमयोनिशोमनस्कारो हेतुरविद्याया इति विज्ञापितं भवति[2] । यदि ह्यन्तर्भावेनैव[3] हेतुफलभावो विज्ञायते, तृष्णाऽविद्ययोरपि तर्हि तत्रान्तर्भावादङ्गान्तरत्वं शक्यमकर्तुम् ।

अन्यः पुनराह—अयोनिशोमनस्कारो हेतुरविद्याया उक्तः **सूत्रान्तरे** । स चापि स्पर्शकाले निर्दिष्टः, "चक्षुः प्रतीत्य रूपाणि चोत्पद्यते आविलो मनस्कारो मोहजः" इति । वेदनाकाले चावश्यमविद्यया भवितव्यम्; "अविद्या-

---

*आचार्य आह*—*कथमिति* विस्तरः । *कथमयोनिशोमनस्कारस्योपादानेऽन्तर्भावः* । न ह्ययोनिशोमनस्कार उपादानस्वभावः । *यदि सम्प्रयोगतः* । यद्ययोनिशोमनस्कार उपादानेन सम्प्रयुज्यते इत्यतो भगवतोऽस्योपादानेऽन्तर्भाव इष्यते । *तृष्णाविद्ययोरपि* प्रतीत्यसमुत्पादाङ्गयो*स्तस्यायो*निशोमस्कार*स्यान्तर्भावः* प्राप्नोति । तृष्णाविद्याभ्यामपि ह्यसौ सम्प्रयुज्यत इति । ततश्चैवं वक्तव्यं स्यात्—स चेहाप्यविद्यातृष्णोपादानान्तर्भूतत्वादुक्तो भवतीति । न त्वेवं वक्तव्यम्—स चेहाप्युपादानान्तर्भूतत्वादुक्तो भवतीति । नैवमुपादानान्तर्भावावधारणं कर्त्तव्यमित्यभिप्रायः । *सत्यपि चान्तर्भाव* इति । असम्भवं तमन्तर्भावमभ्युपेत्य ब्रूमः । *कथमयोनिशोमनस्कारो हेतुरविद्याया इति विज्ञापितं भवति* । नहि तथा सूत्रे वचनमस्ति । *यदि ह्यन्तर्भावेनेति* विस्तरः । यदि यस्मादुपादानेऽन्तर्भवत्ययोनिशोमनस्कारः, तस्मादयोनिशोमनस्कारो हेतुरविद्याया इति विज्ञापितं भवति, न च तदङ्गान्तरं वक्तव्यम्; उपादानवचनादेव तत्सिद्धेः । *तृष्णाविद्ये अपि तर्ह्युपादानेऽन्तर्भवतः* । अतस्तयोरपि तत्रान्तर्भावादङ्गान्तरत्वं शक्यमकर्तुम् । उपादानवचनादेव तत्सिद्धेः । उक्ते च पृथक् तृष्णाविद्याङ्गे । तस्मादपरिहार एषः ।

*अन्यः पुनराहेति* । *भदन्तश्रीलाभः* । *अयोनिशोमनस्कारो हेतुरविद्याया उक्तः सूत्रान्तर* इति । सहेतुसप्रत्ययसनिदानसूत्रे । "अविद्यापि भिक्षवः सहेतुका सप्रत्यया सनिदाना" इति विस्तरेण । *स चापि* इति विस्तरः । *स* चाप्ययोनिशोमनस्कारः *स्पर्शकाले निर्दिष्टः* । कथम् ? इत्याह—*चक्षुः प्रतीत्य रूपाणि चोत्पद्यते आविलो मनस्कारो मोहज* इति । स्पर्शकालो योऽयं चक्षुर्विज्ञानोत्पत्तिकालः । आविलो मनस्कारः, अयोनिशः प्रवृत्तत्वान्मोहजत्वाद्वा । मोहाज्जातो

---

१–१. ०र्भावप्रसङ्गः ।

२–२. कथमेवं ज्ञापितं भवत्ययोनिशोमनस्कारहेतुका अविद्येति—का० ।

३. तर्ह्य—का० ।

संस्पर्शजं वेदितं प्रतीत्योत्पन्ना तृष्णा" (                    ) इति **सूत्रान्तरात्** । तदेवं[1] स्पर्शकाले भवन्नयोनिशोमनस्कारो वेदनासहवर्त्तिन्या अविद्यायाः प्रत्ययभावेन सिद्ध इति नास्त्यहेतुकत्वमविद्यायाः । न चाङ्गान्तरमुपसंख्येयम् । न चाप्यनवस्थाप्रसङ्गः; तस्याप्ययोनिशोमनस्कारस्य पुनर्मोहजवचनादाविलो मनस्कारो मोहज इति ।

तत्तर्ह्येतदन्यत्रोक्तमिह पुनर्वक्तव्यम् ? न वक्तव्यम् । कथमनुच्यमानं गम्यते ? युक्तितः । कया युक्त्या ? न हि निरविद्या वेदना तृष्णायाः प्रत्ययीभवत्यर्हताम्, न चाविपरीतः स्पर्शः क्लिष्टाया वेदनायाः, न च पुनर्निरविद्यस्यार्हतः[2] विपरीतः स्पर्शः[3] इत्यनया युक्त्या ।

---

मोहज इति । *अविद्यासंस्पर्शजं वेदितमिति* । अविद्यासम्प्रयुक्तात् संस्पर्शाज्जातमविद्यासंस्पर्शजं वेदितम् । यत्र वेदितमविद्यासंस्पर्शजम्, अवश्यं तत्राविद्या सम्प्रयुज्यते । न हि वेदितमसम्प्रयुक्तमविद्यया तृष्णाहेतुर्भवति । *तदेवं स्पर्शकाले भवन्नयोनिशोमनस्कारो वेदनासहवर्त्तिन्या अविद्यायाः प्रत्ययभावेन सिद्ध* इति । ज्ञापितमिदं भवति—अयोनिशोमनस्कारहेतुकाऽविद्येति । अतो *नास्त्यहेतुकत्वमविद्यायाः* । अयोनिशोमनस्कारहेतुकत्वात् । *न चाङ्गान्तरमुपसंख्येयं* द्वादशभ्योऽन्यत्, यस्मात् स्पर्शकाले भवन्नयोनिशोमनस्कारो वेदनासहवर्त्तिन्या अविद्यायाः प्रत्ययभावेन सिद्ध इति । *न चाप्यनवस्थाप्रसङ्गः, तस्याप्ययोनिशोमनस्कारस्य पुनर्मोहजवचनात् आविलो मनस्कारो मोहज* इति । तदेतच्चक्रकमुक्तं भवति—अयोनिशोमनस्कारादविद्या, अविद्यायाश्चायोनिशोमनस्कार इति ।

एवं पुनः परिहारमाचार्यः सदोषं पश्यंस्तस्य दोषस्याभिव्यक्त्यर्थं प्रसङ्गमारभते—*तत्तर्हीति विस्तरः* । तद्यथोक्तमयोनिशोमनस्कारो हेतुरविद्याया इति विस्तरेण सूत्रतो युक्त्या वा, तर्हीत्यर्थान्तरविवक्षायाम्, इदानीमर्थ इति *भगवद्विशेषः* । एतदन्यत्र सूत्र उक्तमिह पुनः प्रतीत्यसमुत्पादसूत्रे *वक्तव्यम्* । *न वक्तव्यं* इति *भदन्तश्रीलाभः* । कया युक्त्या ? इति पृष्टो *भदन्तश्रीलाभ* आह—*न हीति* विस्तरः । *अर्हतामस्ति* वेदना । न च सा *तृष्णायाः प्रत्ययीभवतीति* । सा विद्यैव वेदना तृष्णाप्रत्यय इति गम्यते । *न चाविपरीतस्पर्शः क्लिष्टाया वेदनायाः* । प्रत्ययीभवति इति प्रकृतम् । न च *पुनर्निरविद्यस्यार्हतो विपरीतः स्पर्श* इति । स्पर्शोऽपि साविद्य एवेति गम्यते यो वेदनायाः प्रत्यय उक्तः प्रतीत्यसमुत्पादसूत्रे, अविद्या चास्य स्पर्शस्य हेतुरिति गम्यते—इत्यनया युक्त्या प्रतीत्य-

---

१ अतः—का० ।   २. अर्हतः स्पर्शो—का० ।   ३ का० पुस्तके नास्ति ।

अतिप्रसङ्ग एवं प्राप्नोति, यावद् युक्त्या सम्भवति तावदनुक्तं गम्यत इति तस्मान्न भवत्ययं परिहारः ?

अचोद्यमेव त्वेतद् । अविद्याजरामरणयोः परेणाङ्गान्तरानभिधानात् संसारस्याद्यन्तवत्त्वप्रसङ्गः । न चापरिपूर्णो निर्देश इति । किं कारणम् ? प्रवृत्तिसम्मूढेभ्यो विनेयेभ्यः कथं परलोकादिहलोकः, इहलोकाच्च पुनः परलोकः सम्बध्यत इत्येतावतोऽर्थस्यात्र[1] विवक्षितत्वात् । एतस्य चार्थस्य[2] पूर्वमेवोक्तत्वात्—

समुत्पादसूत्रे साविद्यस्पर्शप्रत्यया वेदना साविद्यवेदनाप्रत्यया च तृष्णेति गम्यते। *अतो युक्त्या* यथोक्तया । स चापि स्पर्शकाले निर्दिष्ट इति विस्तरेणात्र प्रतीत्य समुत्पादे सिद्धं भवति—अयोनिशोमनस्कारो हेतुरविद्याया इति ।

अत्र चोद्यते—यदि तर्हि निरविद्या वेदना तृष्णायाः प्रत्ययो न भवतीत्यादिवचनेन स्वगतयैव युक्त्या अयोनिशोमनस्कारो हेतुरविद्यायाः, अविद्या चायोनिशोमनस्कारस्य हेतुरिति गम्यते; किं सूत्रान्तरापाश्रयेणाविद्यायोनिशोमनस्कारयोरन्योन्यहेतुकत्वप्रदर्शनेन प्रयोजनमिति ? अत्रोच्यते—सत्यमस्त्येतत्; किन्तु युक्तिमात्रमिदं प्रतीत्यसमुत्पादसूत्रे, न कण्ठोक्तिः । अतः सूत्रान्तरे कण्ठोक्त्येयं युक्तिर्व्यवस्थाप्यत इति तत् सूत्रान्तरोपन्यासप्रयोजनमवगन्तव्यम् ।

*अतिप्रसङ्ग एवं प्राप्नोती*ति शास्त्रकारः। कथमतिप्रसङ्गः ? इत्याह—"अविद्यासंस्पर्शजं वेदितम् प्रतीत्योत्पन्ना तृष्णा" इति सूत्रान्तरे निर्दिष्टम् । न च निरविद्यवेदितस्यार्हतो वेदना तृष्णायाः प्रत्ययो भवति, न चाविपरीतः स्पर्शः क्लिष्टायाः वेदनायाः, न च निरविद्यस्यार्हतो विपरीतः स्पर्शः—इत्यनया युक्त्या एतदप्यङ्गद्वयं स्पर्शवेदनाख्यमिह प्रतीत्यसमुत्पादसूत्रेऽनुच्यमानमप्यन्यत्रोपदिष्टत्वाद्गम्यते इत्येतस्याप्यङ्गद्वयस्यावचनं प्राप्तम् । तथा सूत्रान्तर उपदिष्टम्—"स पुण्यांश्चेत् संस्कारानभिसंस्करोति पुण्योपगमस्य विज्ञानं भवति । एवमपुण्योपगम्, आनिञ्ज्योपगं च । न च निरविद्यसंस्कारस्यार्हतः पुण्योपगं विज्ञानं यावदानिञ्ज्योपगं विज्ञानमिति । एतदपि संस्काराङ्गं युक्त्या सिद्धम्, न वक्तव्यमत्रेति प्राप्तम् । तथा जातिमन्तरेण जरामरणं न भवतीति युक्त्या गम्यत इति जात्यङ्गं न वक्तव्यं स्यादित्यादिप्रसङ्गः प्राप्नोति ।

*अचोद्यमेव त्वेतद*िति विस्तरेणाचार्यः स्वमतमाह—*कथं परलोकादिहलोक* इति विस्तरः । तत्राविद्यासंस्काराभ्यामिहलोकः सम्बध्यते । स चेहलोको विज्ञाननामरूपषडायतनस्पर्शवेदनाङ्गानि । तृष्णोपादानभवैः परलोकः सम्ब-

१. ०तोऽत्रार्थस्य—का० । २. च—का० ।

"पूर्वापरान्तमध्येषु सम्मोहविनिवृत्तये" ( अभि० को० ३.२५ )।

उक्तं भगवता—"प्रतीत्यसमुत्पादं वो भिक्षवो देशयिष्यामि प्रतीत्यसमुत्पन्नांश्च धर्मान्" (      ) इति। अथ क एषां विशेषः ? शास्त्रतस्तावन्न कश्चित्; उभयं हि सर्वे संस्कृता धर्मा इति।

कथमिदानीमनुत्पन्ना एवानागताः प्रतीत्यसमुत्पन्ना इत्युच्यन्ते, कथं तावदकृता एवानागताः संस्कृता उच्यन्ते ? आभिसंस्कारिकया चेतनया चेतितत्वात्। अनास्रवाः कथम् ? तेऽपि चेतिताः कुशलया चेतनया प्राप्तिं प्रति। निर्वाणेऽपि प्रसङ्गः ? तज्जातीयत्वात्तु[1] तत्रैवातिदेशः[1]। यथा न च तावद्रूप्यते रूपं

ध्यते। स च परलोको जातिर्जरामरणं च। *इत्येतावतोऽर्थस्यात्र* प्रतीत्यसमुत्पादसूत्रे विनेयेभ्यो *विवक्षितत्वात्। एतस्य चार्थस्य पूर्वमेवोक्तत्वात्।* 'पूर्वापरान्तमध्येषु सम्मोहविनिवृत्तये' ( अभि० को० ३.२५ ) इत्यनेन उक्तत्वात्। अचोद्यमेव त्वेतद् विस्तरेण यावत् न चापरिपूर्णो निर्देश इत्यभिसम्बन्धः।

*उभयं हि सर्वे संस्कृता* धर्मा इति। त्रैयध्विकाः सर्वे संस्कृता धर्माः प्रतीत्यसमुत्पादः। अत एव च प्रतीत्यसमुत्पन्ना इति न कश्चिद्विशेषः।

*कथं तावदकृता* इति। भाविन्या संज्ञया यथानागताः संस्कृता उच्यन्ते, तथा प्रतीत्यसमुत्पन्ना इत्यभिप्रायः। *आभिसंस्कारिकया चेतनयेति*। सर्वचेतनानां स्वलक्षणमभिद्योतयन्नाभिसंस्कारिकयेत्याह। सा हि विपाकाभिसंस्करणादाभिसंस्कारिका, तया *चेतितत्वात्* प्रणिहितत्वात्। देवो भविष्यामि, मनुष्यो भविष्यामीत्येवमादि। अतोऽनागता *संस्कृताः उच्यन्ते।* न तु भाविन्या संज्ञयेति तमभिप्रायं विहन्ति। *अनास्रवाः कथमिति।* ये सास्रवा अनागता त एवं चेतयितुं युज्यन्ते, ये त्वनास्रवा अनागतास्ते कथं चेतयितुं युज्यन्ते। चोदक आह—*तेऽपि चेतिताः कुशलया चेतनया प्राप्तिं प्रति।* अनास्रवा धर्माः प्राप्येरन्निति। *निर्वाणेऽपि प्रसङ्ग* इति। निर्वाणमपि संस्कृतत्वं प्रसज्यते। प्राप्तिं प्रति चेतितत्वान्निर्वाणं प्राप्येतेति। तदेवमनेनार्थेनानागतानां संस्कृतत्वव्यवस्थापने दोष इति विध्यन्तरमुपन्यस्यते। *तज्जातीयत्वात्त्विति* विस्तरः। यथा न च तावद्रूप्यते यदनागतं रूपं रूप्यमाणरूपजातीयत्वाद्रूपमित्यतिदेशः। तथा प्रतीत्यसमुत्पन्नधर्मजातीयत्वादनागता अपि धर्माः प्रतीत्यसमुत्पन्ना इत्यतिदेश एषामनागतानां भवतीति ॥ २७ ॥

१–१. ०यत्वात्तत्त्रै०—का०।

चोच्यते तज्जातीयत्वादित्यदोषः ॥ २७ ॥

सूत्राभिप्रायस्त्वयमुच्यते—

**हेतुरत्र समुत्पादः समुत्पन्नं फलं मतम् ।**

हेतुभूतमङ्गं प्रतीत्यसमुत्पादः, समुत्पद्यतेऽस्मादिति कृत्वा । फलभूतमङ्गं प्रतीत्यसमुत्पन्नम् । एवं सर्वाण्यङ्गान्युभयथा सिध्यन्ति; हेतुफलभावात् । न चैवं सत्यव्यवस्थानं[1] भवति, भिन्नापेक्षत्वात्[1] । यदपेक्ष्य प्रतीत्यसमुत्पादो न तदेवापेक्ष्य प्रतीत्यसमुत्पन्नम्, हेतुफलवत् पितृपुत्रवच्च ।

**स्थविरपूर्णाशः** किलाह—स्यात् प्रतीत्यसमुत्पादो न प्रतीत्यसमुत्पन्ना धर्मा इति । चतुष्कोटिकः । प्रथमा कोटिरनागता धर्माः । द्वितीयाऽर्हतश्चरमाः । तृतीया तदन्येऽतीतप्रत्युत्पन्ना धर्माः । चतुर्थ्यसंस्कृता धर्मा इति ।

अत्र तु **सौत्रान्तिका** विज्ञापयन्ति—किं खल्वेता इष्टय उच्यन्ते या यस्येष्टिः, आहोस्वित् सूत्रार्थः ? सूत्रार्थ इत्याह । यदि सूत्रार्थः ? नैष सूत्रार्थः । कथं कृत्वा ? यत्तावदुक्तम्—"आवस्थिक एष प्रतीत्यसमुत्पादो द्वादश पञ्च-

---

*हेतुफलभावादिति* । यस्मात्तदेवाङ्गं हेतुस्तदेव फलम् । *न चैवं सत्यव्यवस्थानं भवतीति* । पारापारवत् । हेतुफलवदिति । नाव्यवस्थितः प्रतीत्यसमुत्पादः प्रतीत्यसमुत्पन्नो *भिन्नापेक्षत्वात्* । *हेतुफलवत् पितृपुत्रवद्वा* । तत्र हेतुफलम्, तद् यथा—बीजाङ्कुरादि। यथा यदपेक्ष्य हेतुर्व्यवस्थाप्यते न तदपेक्ष्य फलम्, यदपेक्ष्य फलं व्यवस्थाप्यते न तदपेक्ष्य हेतुः । किं तर्हि ? फलमपेक्ष्य हेतुर्व्यवस्थाप्यते, हेतुश्चापेक्ष्य फलमिति । यथा च यमपेक्ष्य पिता न तमपेक्ष्य पुत्रः, यमपेक्ष्य पुत्रो न तमपेक्ष्य पिता, किं तर्हि ? तत्पुत्रमपेक्ष्य पितेति, पितरं चापेक्ष्य पुत्र इति । न च तदव्यवस्थितम्, तद्वदेतत् ।

किलेत्यसम्भावनायाम् । *प्रथमा कोटिरनागता* धर्मा इति । अन्यधर्महेतुत्वात् प्रतीत्यसमुत्पादः समुत्पद्यतेऽस्मादिति कृत्वा । न प्रतीत्यसमुत्पन्नाः, अनुत्पन्नत्वात् । *द्वितीयार्हतश्चरमा* इति । उत्पन्नत्वात्तत: फलानुत्पत्तेश्च । *तृतीया तदन्य इति* । अर्हतश्चरमेभ्योऽन्येऽतीतप्रत्युत्पन्ना धर्माः । *चतुर्थ्यसंस्कृता* इति । तत्फलाभावादनुत्पत्तिमत्त्वाच्च ।

*किं खल्वेता इष्टय उच्यन्त* इति । आवस्थिकः प्रतीत्यसमुत्पादः स्यात्

---

१–१. ०वस्था भवन्त्यपेक्षाभेदात्—का० ।

स्कन्धिका अवस्था द्वादशाङ्गानि" इति। एतदुत्सूत्रम्। सूत्रेऽन्यथानिर्देशाद्—"अविद्या कतमा? यत्तत् पूर्वान्तेऽज्ञानम्" (                ) इति विस्तरेण।

यच्च नीतार्थं न तत् पुनर्नेयं भवतीति नैष सूत्रार्थः। न वै सर्वं निर्देशतो नीतार्थं भवति। यथाप्रधानं चापि निर्देशाः क्रियन्ते। तद्यथा हस्तिपदोपमे—"पृथिवीधातुः कतमः?" इत्यधिकृत्याह—"केशा रोमाणि" (                ) इति। सन्ति च तत्रान्येऽपि रूपादयः। एवमत्रापि यथाप्रधानं निर्देशः स्यात्।

अनुपसंहार एषः। न हि तत्र केशादयः पृथिवीधातुना निर्दिश्यन्ते, यत एषामपरिपूर्णो निर्देशः स्याद्; अपि तु केशादिभिरेव पृथिवीधातुः[1] निर्दिश्यते। न च केशादीनभ्यतीत्याप्यस्ति पृथिवीधातुरिति सम्पूर्ण एवास्य निर्देशः। एवमिहाप्यविद्यादीनां परिपूर्ण एव निर्देशः, न सावशेषः।

---

प्रतीत्यसमुत्पादो न प्रतीत्यसमुत्पन्ना इत्येवमाद्याः। *पूर्वान्तेऽज्ञानमि*ति। यस्मादविद्यैवोक्ता नान्ये स्कन्धास्तस्मादविद्यैवाङ्गमिति।

*नीतार्थमेत*दिति दर्शयति। नीतार्थमिति विभक्तार्थम्। *हस्तिपदोपमे* सूत्रे। *सन्ति च तत्रान्येऽपि* रूपादय इति। तेषु केशरोमादिषु। न पृथिवीधातुमेवेति। *एवमत्रापि यथाप्रधानं निर्देशः स्यादि*ति। एवमत्रापि प्रतीत्यसमुत्पादसूत्रे द्वादशसु पञ्चस्कन्धिकास्ववस्थासु यत्र यस्य प्राधान्यं तत्र तस्य निर्देशः स्यात्। अविद्याप्रधानायामविद्येति निर्देशः स्यात्, संस्कारादिप्रधानास्ववस्थासु संस्कारादीनां निर्देशः स्यात्। सन्ति च तत्रान्येऽपि रूपवेदनादयो धर्मा इति।

*नहि तत्रे*ति विस्तरः। नहि तत्र सूत्रे केशादयः पृथिवीधातुना निर्दिश्यन्ते-केशादयः कतमे? पृथिवीधातुरिति। *यत एषां* केशादीनाम*परिपूर्णो निर्देशः स्यात्*। सन्ति हि तत्रान्येऽपि रूपादय इति। रूपादिस्वभावा अपि केशादयो न केवलं पृथिवीधातुस्वभावा इति। *अपि तु केशादिभिरेव पृथिवीधातुर्निर्दिश्यते*—पृथिवीधातुः कतमः? केशरोमाणीति। *न च केशादीनभ्यतीत्या*प्यतिक्रम्या*प्यस्ति पृथिवीधातु*राध्यात्मिक *इति सम्पूर्ण एवास्य पृथिवीधातो निर्देशः*। *एवमिहाप्यविद्यादीनाम्*। एवमिहापि सूत्रेऽविद्यासंस्कारविज्ञानादीनां *परिपूर्ण एव निर्देशोऽयम्, न सावशेषः*।

---

१. ०तत्र—का०।

ननु चाभ्यतीत्यापि केशादीनश्रुसिङ्घाणकादिष्वपि[1] पृथिवीधातुः। सोऽपि निर्दिष्ट एवेति। यद्वा "पुनरन्यदप्यस्मिन् काये खक्खटं खरगतम्" (          ) इति वचनात् भवतु वा तथैवाविद्यावशेषः, यदि शक्यते दर्शयितुम्, जात्यन्तरस्य त्वविद्यायां किङ्कृतः प्रक्षेपः। यद्यपि च तास्ववस्थासु पञ्च स्कन्धा विद्यन्ते, यस्य तु भावाभावयोर्यस्य भावाभावनियमः तदेवाङ्गं व्यवस्थापयितुम्। सत्यपि च पञ्चस्कन्धके[2] संस्कारा न भवन्ति पञ्चस्कन्धहेतुकाः। किं तर्हि? अविद्याहेतुका एव। तथा पुण्यापुण्यानेञ्ज्योपगं च विज्ञानं न भवति, तृष्णोपादानादयश्चेति[3]। यथानिर्देश[4] एव सूत्रार्थः।

यदप्युक्तम्—"हेतुरत्र समुत्पादः समुत्पन्नं फलं यावच्चतुष्कोटिकः"

---

*अश्रुसिङ्घाणकादिष्विति।* अश्रुसिङ्घाणकादीनि न तत्र सूत्रे पठ्यन्ते, तस्मान्न तद्गतः पृथिवीधातुरुक्तः इति सावशेष एवेति दर्शयति। *भवतु वा तथैवेति* विस्तरः। यथा [illegible] *तथैवाविद्यावशेषमस्तु यदि शक्यते दर्शयितुम्।* न शक्यते दर्शयितुमिति मन्यमानो यदिशब्दं प्रयुङ्क्ते; पूर्वान्तेऽज्ञानमपरान्तेऽज्ञानं मध्यान्तेऽज्ञानं बुद्धेऽज्ञानं धर्मेऽज्ञानं संघेऽज्ञानं इत्येवमादीनां सर्वेषामज्ञानस्थानानामुक्तत्वात्। *जात्यन्तरस्य* तु वेदनादेर*विद्यायां किङ्कृतः प्रक्षेपः।* पञ्चस्कन्धिकावस्थाविद्येति। न हि वेदनादीनामविद्यात्वं युज्यत इति। *भावाभावनियम* इति। यस्य भावाभावयोर्यस्य भावाभावौ यथासंख्येन नियतौ *तदेवाङ्गम्।* अविद्याभावे संस्काराणां भावः, तदभावे तेषामभाव इत्यविद्यैवाङ्गं न वेदनादि। न हि वेदनादिसद्भावेऽर्हतां संस्कारा भवन्ति, ये विज्ञानाङ्गजनका इत्यर्थः। तस्मादाह—*सत्यपि च पञ्चस्कन्धके संस्कारा न भवन्तीति* विस्तरः। सत्यपि च पञ्चस्कन्धके अर्हत्त्वावस्थायाम्। *पुण्योपगं* यावदा*निञ्ज्योपगं* च *विज्ञानं न भवति।* प्रतिसन्धिविज्ञानं न भवतीत्यर्थः। अन्तामुपपत्तिं गच्छतीत्युपगम्, पुण्योपगं विज्ञानं पुण्योपगम्, एवं यावदानिञ्ज्योपगम्। तथा सत्यपि पञ्चस्कन्धके निरविद्यावस्थायां तृष्णोपादानादयश्च न भवन्तीति। *यथानिर्देश एव सूत्रार्थः।* यथा संकीर्त्तितानामेवाविद्यादीनां ग्रहणमित्यर्थः। अतो विद्यमाना अप्यन्ये स्कन्धा न प्रत्ययाः संस्कारादीनामिति न तेऽङ्गम्।

एवं मया श्रुतमित्यादि। भगवान् राजगृहे विहरति गृध्रकूटे पर्वते महता

---

१. ०श्रुखेटशिङ्घाणका०—का०।    २. ०केऽर्हतः—का०।

३. तृष्णादय०—का०।    ४. ०निर्देशमेव—का०।

इति । एतदप्युत्सूत्रम् ; सूत्रेऽन्यथा निर्देशात् । "प्रतीत्यसमुत्पादः कतमः ? यदुतास्मिन् सतीदं भवति" इति विस्तरेणोक्त्वा "इति याऽत्र धर्मता धर्मस्थितिता यावदविपर्यस्तता अयमुच्यते प्रतीत्यसमुत्पादः" इति । धर्मजातिः धर्माणां शैलिः। अतो येयं धर्मता य एष नियमः । अविद्यायामेव सत्यां संस्कारा भवन्ति, नान्यथा । एष प्रतीत्यसमुत्पादो न हेतुरेव । यदपि चतुष्कोटिकमुक्तम्, तत्र यदनागताः धर्मा न प्रतीत्यसमुत्पन्नाः, सूत्रं विरुध्यते—"प्रतीत्यसमुत्पन्ना धर्माः कतमे ? अविद्या, यावज्जातिर्जरामरणम् ।"

अथ वा—तयोरनागताध्वव्यवस्थानं नैष्टव्यमिति त्रिकाण्डव्यवस्था भिद्यते ।

'असंस्कृतः प्रतीत्यसमुत्पादः' इति **निकायान्तरीयाः** । "उत्पादाद्वा तथागतानामनुत्पादाद्वा तथा तानां[1] स्थितैवेयं धर्मता" इति वचनात् । तदेतद-भिप्रायवशादेवं च न चैवम् ।

कथं तावदेवम्, कथं वा नैवम् ?

भिक्षुसङ्घेन सार्धमर्धत्रयोदशभिर्भिक्षुशतैः सम्बहुलैश्च बोधिसत्त्वैरिति । आयुष्मान् शारिपुत्रो मैत्रेयं बोधिसत्त्वमेतदवोचत् । शालिस्तम्बमवलोक्य भिक्षुभ्यः सूत्रमिदमुक्तम्—यो भिक्षवः प्रतीत्यसमुत्पादं पश्यति स धर्मं पश्यति, यो धर्मं पश्यति स बुद्धं पश्यति, इत्युक्त्वा भगवांस्तूष्णीम्बभूव। तदस्य भगवता भाषितस्य सूत्रस्य कोऽर्थः ? प्रतीत्यसमुत्पादः कतमः ? धर्मः कतमः ? बुद्धः कतमः ? कथं च प्रतीत्यसमुत्पादं पश्यन् धर्मं पश्यतीत्यादि ? तत्र प्रतीत्यसमुत्पादो नाम यदिदमविद्येत्यादि । इदं चाभिसन्धायेदमुक्तं तत्र सूत्रे—*उत्पादाद्वा तथागतानामनुत्पादाद् वा तथागतानां स्थितैवेयं धर्मता* धर्म-*स्थितिता* धर्मनियामता तथता अवितथता अनन्यतथता भूतता सत्यता तत्त्वमविपरीतता *अविपर्यस्ततेत्येवमादि* भगवन्मैत्रेयवचनम्। *यद्यनागता न प्रतीत्यसमुत्पन्ना* इति । यदुक्तं प्रथमा कोटिरनागता धर्मा इति, *सूत्रं विरुध्यत* इति। जातिर्जरामरणयोः प्रतीत्यसमुत्पन्नत्वं न स्यात्। उक्तं च—*अविद्या यावज्जातिजरामरणमिति* ।

*अथ* वेति विस्तरः । अथ जातिजरामरणाङ्गेऽपि प्रतीत्यसमुत्पन्ने इष्टे । *तयोरनागताध्वव्यवस्थानं नैष्टव्यमिति* कृत्वा *त्रिकाण्डव्यवस्था भिद्यते* । "पूर्वा-परान्तयोर्द्वे द्वे मध्येऽष्टौ" ( अभि० को० ३.२० ) इति ।

*निकायान्तरीया* इति । आर्यमहीशासकाः ।

१. का० पुस्तके नास्ति ।

यद्ययमभिप्रायः—उत्पादाद्वा तथागतानामनुत्पादाद्वा नित्यमविद्यादीन् प्रतीत्य संस्कारादीनामनुत्पादः, न कदाचिदप्रतीत्यान्यद्वा प्रतीत्यातो नित्य इति; एवमेतदिति प्रतिग्राह्यम्। अथायमभिप्रायः—प्रतीत्यसमुत्पादो नाम किञ्चित् भावान्तरं नित्यमस्तीति; नैतदेवमिति प्रतिषेद्धव्यम्। किं कारणम्? उत्पादस्य संस्कृतलक्षणत्वात्। न च नित्यं भावान्तरमनित्यस्य लक्षणं युज्यते। उत्पादश्च नामोत्पत्तुर्भवतीति कोऽस्याविद्यादिभिरभिसम्बन्धः, यतस्तेषां प्रतीत्यसमुत्पाद इत्युच्येत। पदार्थश्चासम्बन्धो[1] भवतीति नित्यश्च नाम प्रतीत्यसमुत्पादश्चेति।

अथ प्रतीत्यसमुत्पाद इति कः पदार्थः? प्रतिः प्राप्त्यर्थः, एतिः गत्यर्थः। उपसर्गवशेन धात्वर्थपरिणामात् प्राप्येति योऽर्थः सोऽर्थः प्रतीत्येति।

यदि सत्तार्थः, समुत्पूर्वः प्रादुर्भावार्थः। तेन प्रत्ययं प्राप्य समुद्भवः प्रतीत्यसमुत्पादः।

---

*उत्पादस्य संस्कृतलक्षणत्वा*दिति। योऽयमुत्पादः प्रतीत्यसमुत्पाद इति निकायान्तरीयैर्नित्यः परिकल्प्यते स संस्कृतलक्षणमुक्तम्—"त्रीणि इमानि संस्कृतस्य संस्कृतलक्षणानि, संस्कृतस्योत्पादोऽपि प्रज्ञायते, व्ययोऽपि, स्थित्यन्यथात्वमपि" इति। संस्कृतलक्षणत्वाच्चानित्यमित्यभिप्रायः। ब्रूयास्त्वं लक्षणमपि नित्यं भवतीति? अत आह—*न च नित्यं भावान्तरमनित्यस्य लक्षणं युज्यत* इति। न हि निर्वाणमाकाशं वा कस्यचिदनित्यस्य लक्षणं भवति। प्रागुत्पत्तेर्हि लक्ष्यस्य तदस्तीति कस्य लक्षणम्, विनष्टे च लक्ष्ये कस्य—इति न युज्यते। *उत्पादश्चेति* विस्तरः। उत्पादश्च नामाभूत्वा भावलक्षणः। *सौत्रान्तिक*नयेनोत्पत्तिर्धर्मस्य तदानीमेव भवतीति। *कोऽस्या*त्पादस्यासंस्कृतस्य तन्मतेना*विद्यादिभिरभिसम्बन्धः*। यथौदनेन पाकस्यास्ति सम्बन्धः कर्तृक्रियालक्षण इत्योदनस्य पाक इत्युच्यते। न ह्याकाशरूपयोरभिसम्बन्ध उत्पत्त्युत्पत्तृलक्षणोऽस्ति, येन रूपस्याकाशमित्युच्यते। एवं कोऽस्याविद्यादिभिरभिसम्बन्धः। *यतस्तेषाम*विद्यादीनां *प्रतीत्यसमुत्पाद इत्युच्येत*। *पदार्थश्चासम्बन्धो भवतीति*। प्रत्ययं प्राप्य समुद्भवः प्रतीत्यसमुत्पाद इति पदार्थः, स कथं *नित्यश्च नाम प्रतीत्यसमुत्पादश्चेति*।

*प्रतिः प्राप्त्यर्थ* इति। प्राप्तिद्योतक इत्यर्थः। "इ गतौ" (मा० धा० १.२१५) इति *धात्वर्थपरिणामा*दिति। अनेकार्था हि धातवः। प्रतिश्चोपसर्गः प्राप्तिद्योतक इत्ययमिः गत्यर्थमुज्झित्वा प्राप्त्यर्थमापद्यते। *पदिः सत्तार्थ* इति। "पद

---

१. ०श्चासमर्थो—का०।

न युक्त एष पदार्थः । किं कारणम् ? एकस्य हि कर्त्तुर्द्वयोः क्रिययोः पूर्वकालायां क्रियायां क्त्वाविधिर्भवति । तद्यथा—स्नात्वा भुङ्क्त इति । न चासौ पूर्वमुत्पादात् कश्चिदस्ति, यः पूर्वं प्रतीत्योत्तरकालमुत्पद्यते । न चाप्यकर्तृकाऽस्ति क्रियेति । आह चात्र—

"प्रत्येति पूर्वमुत्पादाद् यद्यसत्त्वान्न युज्यते ।
सह चेत् क्त्वा न सिद्धोऽत्र पूर्वकालविधानतः" ॥ इति ?

नैष दोषः । इदं तावदयं प्रष्टव्यः शाब्दिकः—किमवस्थो धर्मः उत्पद्यते वर्त्तमानः, उताहोऽनागत इति ? किं चातः ? यदि वर्त्तमान उत्पद्यते, कथं वर्त्तमानो यदि नोत्पन्नः । उत्पन्नस्य वा पुनरुत्पत्तावनवस्थाप्रसङ्गः । अथानागत उत्पद्यते, कथमसतः कर्तृत्वं सिद्धत्यकर्तृका वा क्रियेति ? अतो यदवस्थ उत्पद्यते तदवस्थ एव प्रत्येति । किमवस्थश्चोत्पद्यते ? उत्पादाभिमुखोऽनागतः । तदवस्थ एव प्रत्ययं प्रत्येतीत्युच्यते । अनिष्पन्नं चेदं यदुत शाब्दिकीयं कर्तृक्रिया

---

सत्तायाम्" (                ) इति । *तेनेति* कारणेन । *पूर्वकालायां क्रियायां क्त्वाविधे*रिति । "समानकर्तृकयोः पूर्वकाले" (पा० सू० ३.४.२१) इति वचनात् । न चासौ पूर्वमुत्पादात् कश्चिदस्तीति *सौत्रान्तिक*मतेन । *न चाप्यकर्तृकास्ति क्रियेति* । कर्तरि सति क्रियाया व्यवस्थापनात् ।

*आह चात्रेति* । एतद्वैयाकरणचोद्यं श्लोकेनोपनिबध्नात्या*चार्यः* । *यदि पूर्वमुत्पादात् प्रत्येति* प्राप्नोति । *असत्त्वान्न युज्यते* । न ह्यविद्यमानः कर्त्ता स्नानादिक्रियां कुर्वन् दृष्ट इति । *सह चेत्* । अथ मन्यसे प्रतीत्यक्रियां समुत्पादक्रियां च सहकरोतीत्येवम् । *क्त्वा न सिद्धोऽत्र* प्रत्ययः । कस्मात् ? *पूर्वकालविधानतः* । पूर्वस्मिन् काले विधानं क्त्वाप्रत्ययस्य; "समानकर्तृकयोः पूर्वकाले" इति वचनात् । अतः क्त्वाप्रत्ययो न सिद्धो भवेत् ।

*पुनरुत्पत्ताविति* । उत्पन्नस्य पुनरुत्पत्तौ कल्प्यमानाया*मनवस्थाप्रसङ्गः* । द्वितीये तृतीये क्षणे पुनः पुनरुत्पद्यत इत्यनिष्ठाप्रसङ्गः । *अथानागत* इति विस्तरः । अलब्धात्मकोऽनागत इति *कथमसतो*ऽलब्धात्मलाभस्य कर्तृत्वं सिध्यति, अकर्तृका वा क्रिया कथं सिध्यति; यत एवमतो यदवस्थ उत्पद्यते शाब्दिकस्य शब्दविदः, तदवस्थ एव मम प्रत्येति । *किमवस्थश्चेति* । कावस्थास्येति किमवस्थः । *उत्पादाभिमुखोऽनागत* इति । न सर्वोऽनागत उत्पद्यते, किं तर्हि ? उपपादाभिमुखः । उत्पादेऽभिमुखे उत्पित्सुरित्यर्थः । *तदवस्थ एव* । उत्पादा-

व्यवस्थानं भवतीत्येष कर्त्ता, भूतिरित्येषा क्रिया। न चात्र भवितुरर्थात् भूतिमन्यां क्रियां पश्यामः। तस्मादच्छलं व्यवहारेषु।

एष तु वाक्यार्थः—'अस्मिन् सत्यस्य भावः, अस्योत्पादादिदमुत्पद्यत इति योऽर्थः सोऽर्थः प्रतीत्यसमुत्पादः' इति। आह चात्र—

"असन्नुत्पद्यते यद्वत् प्रत्येत्यपि तथाऽथ सन्।
उत्पन्न उत्पद्यत इत्यनिष्ठाऽसन् पुरापि वा॥
सहभावे[1]ऽपि च क्त्वाऽस्ति दीपं प्राप्य तमो गतम्।
आस्यं व्यादाय शेते वा[2], पश्चाच्चेत् किं न संवृते॥"

---

भिमुखावस्थ एव प्रत्येतीत्युच्यते। *अनिष्पन्नं चेदमि*ति विस्तरः। शाब्दिकानामिदं *शाब्दिकीयम्*। कर्तुः क्रियायाश्च व्यवस्थानम्। कस्मात्? भवितुः, कर्तृरूपकल्पितादर्थात् क्रियारूपकल्पितताया भूतेरन्यत्वादर्शनात्। *तस्मादच्छलं* भवत्युत्पद्यते प्रत्येतीत्येवमादिषु।

*आह चात्रे*ति। तत्सिद्धान्तेन प्रक्रियां दर्शयति। *असन्नुत्पद्यते यद्व*दिति विस्तरः। असन्नभावोऽलब्धात्मक उत्पद्यते यथा *प्रत्येत्यपि तथा*। असन्नित्यर्थः। *अथ सन्*, अथ लब्धात्मक उत्पद्यत इति कल्प्यते। *उत्पन्न उत्पद्यते इत्यनिष्ठा*। उत्पन्नोऽपि पुनरुत्पद्यत इत्यनवस्थानादन्यदनिष्ठा प्राप्नोति। तथा हि—*सांख्यमता*नुसारेण सत एवोत्पादो नासत इति तदेतदधिकृत्य ब्रवीति। *सन् पुरापि* वेति। वा-शब्दो मतविकल्पार्थः। यदि भवतां सन्नुत्पद्यते इति पक्षः, अस्माकमपि सन्नुत्पद्यते; *वैभाषिक*नयेनानागतानामस्तित्वात् *सौत्रान्तिक*नयेन च जनकधर्मबीजसद्भावात्। ततः किमिदमुच्यते—न चासौ पूर्वमुत्पादात् कश्चिदस्ति यः प्रतीत्योत्तरकालमुत्पद्यत इति। अथ वा यदि तर्हि सन्नेवोत्पद्यते, पूर्वमेव घटो मृतपिण्डादीननपेक्ष्य स्वतः प्रसिद्धोऽस्तीति प्राप्नोति।

अपरे पुनर्व्याचक्षते—*अनिष्ठाऽसन् पुरापि* वेति। अथ मा भूदनिष्ठेति, असन्नुत्पद्यत इति प्रतिपद्यसे। पुनस्तदेव वोपतिष्ठते, असन्नुत्पद्यते यद्वत् प्रत्येत्यपि तथेति सिद्धो नः पक्ष इति पूर्ववद्वाच्यम्। यदप्युक्तम्—एकस्य हि कर्तुर्द्वयोः क्रिययोः पूर्वकालायां क्रियायां क्त्वाविधिर्भवतीति, तद्व्यभिचारयन्नाह—*सहभावेऽपि च क्त्वास्ती*ति विस्तरः। समानकालायामपि क्रियायां क्त्वाविधिर्दृष्टः, तद्यथा *दीपं प्राप्य तमोगतमि*ति। अत्र न पूर्वं तमो दीपं प्राप्नोति, पश्चाद्गच्छति विनश्यतीत्यर्थः। किं तर्हि? तस्मिन्नेव काले तमो दीपं प्राप्नुवद्

---

1. सहकाले—का०। 2. च—का०।

**अन्ये पुनरस्य चोद्यस्य परिहारार्थमन्यथा परिकल्पयन्ति—प्रतिर्वीप्सार्थः, इतौ साधव इत्याः = अनवस्थायिनः, उत्पूर्वः पदिः प्रादुर्भावार्थः; तां तां कारण-सामग्रीं प्रति इत्यानां समवायेनोत्पादः प्रतीत्यसमुत्पाद इति ।**

**एषा तु कल्पनाऽत्रैव युज्यते । इह कथं भविष्यति—"चक्षुः प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानम्" (          ) इति ॥**

**किमर्थं पुनर्भगवान् पर्यायद्वयमाह—"अस्मिन् सतीदं भवति, अस्योत्पा-**

---

विनश्यति । अथ मतम्—समनन्तरमेव तत्र युगपदिति । अतः पुनरिदमुच्यते—*आस्यं व्यादाय शेते वेति ।* न ह्यसौ पूर्वं मुखं व्याददाति विदारयति पश्चाच्छेते, किं तर्हि ? यो मुखं व्याददच्छेते स मुखं व्यादाय शेते इत्युच्यते । अथ मतम्—पूर्वमसौ मुखं व्याददाति पश्चाच्छेते इति ? अत आह—*पश्चाच्चेत् किं न संवृते ।* यः कश्चिन्मुखं व्यादानानन्तरं च संवृत्य शेते स मुखं व्यादाय शेते इत्युच्येत, न चोच्यते; तेन ज्ञायते यो मुखं व्याददच्छेते स मुखं व्यादाय शेते इत्युच्यते इति ।

*अन्ये पुनरिति ।* भदन्त*श्रीलाभः । प्रतिर्वीप्सार्थ* इति । नानावाचिनामधिकरणानां सर्वेषां क्रियागुणाभ्यां व्याप्तुमिच्छा वीप्सा, तामयं प्रतिर्द्योतयति । *इतौ* गतौ *साधव इत्याः,* "तत्र साधुः" ( पा० सू० ४.४.९८ ) इति यत्प्रत्ययः, इतौ विनष्टौ साधवः । अनवस्थायिन इत्यर्थः । समुपसर्गः *समवायार्थं* द्योतयति । *उत्पूर्वः पदिः प्रादुर्भावार्थः;* धात्वर्थपरिणामात् । *तां तां सामग्रीं प्रतीति ।* प्रतेर्वीप्सार्थतां दर्शयति । *इत्यानां* विनश्वराणां *समवायेनोत्पादः प्रतीत्यसमुत्पादः ।* न कश्चिद्धर्म एक उत्पद्यते; सहोत्पादनियमात्, रूपादीनाम् । "कामेऽष्टद्रव्य-कोऽशब्दः परमाणुः" ( अभि० को० २.२३ ) यावत् "चित्तचैत्ताः सहावश्यम्" ( अभि० को० २.२४ ) इति नियमात् ।

*एषा तु कल्पनेति विस्तरः ।* प्रतिर्वीप्सार्थ इत्येवमादिका । कल्पनाऽत्रैव प्रतीत्यसमुत्पादसूत्रे *युज्यते । इह कथं भविष्यति चक्षुः प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानमिति ।* न हि प्रतीत्यानां चक्षूंषि प्रतीत्यचक्षूंषीति समासः सम्भवति; अर्थायोगात् । चक्षुर्हि प्रतीत्य प्राप्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानमित्ययमर्थो गम्यते । तेन तदवस्थमेव तच्चोद्यं 'न युक्त एष पदार्थः' इति विस्तरेण यदुक्तम् । कथम् ? एकस्य हि कर्तुर्द्वयोः क्रिययोः पूर्वकालायां क्रियायां क्त्वाविधिर्भवति—स्नात्वा भुङ्क्त इति । न च पूर्वमुत्पादाच्चक्षुर्विज्ञानमस्ति यच्चक्षुः पूर्वं प्रतीत्य रूपाणि चोत्तरकालमुत्पद्यते, न चाप्यकर्तृका क्रियेति ।

*अवधारणार्थं पर्यायद्वयमाह । अस्मिन् सतीति ।* एतावत्युच्यमाने न केवलमविद्यायां सत्यां संस्कारा भवन्ति, अन्यस्मिन्नपि सतीति गम्येत, यथा चक्षुषि

दादिदमुत्पद्यते" इति ? अवधारणार्थम् । यथाऽन्यत्राह—"अविद्यायां सत्यां संस्कारा भवन्ति नान्यत्राविद्यायाः संस्काराः" इति । अङ्गपरम्परां वा दर्शयितुम्—अस्मिन्नङ्गे सतीदं भवति, अस्य पुनरङ्गस्योत्पादादिदमुत्पद्यत इति । जन्मपरम्परां वा—पूर्वान्ते सति मध्यान्तो भवति, मध्यान्तस्योत्पादादपरान्त उत्पद्यत इति । साक्षात् पारम्पर्येण च प्रत्ययभावं दर्शयति—कदाचिद्धि समनन्तरमविद्यायाः संस्कारा भवन्ति, कदाचित् पारम्पर्येणेति ।

अहेतुनित्यहेतुवादप्रतिषेधार्थमित्यपरे । नासति हेतौ भावो भवति, न चानुत्पत्तिमतो नित्यात् प्रकृतिपुरुषादिकात् किञ्चिदुत्पद्यत इति ।

अस्यां तु कल्पनायां पूर्वपदस्य ग्रहणमनर्थकं प्राप्नोति ; 'अस्योत्पादादिदमुत्पद्यते' इत्यनेनैवोभयवादप्रतिषेधसिद्धेः ।

---

सति चक्षुर्विज्ञानं भवत्विति । न चक्षुष्येव सतीत्यवधार्यते । तेन रूपेऽपि सतीत्यवगम्यते । द्वितीयेन तु पर्यायेणा*स्योत्पादादिदमुत्पद्यत* इत्यनेन पूर्वपर्यायमेवावधारयति । अस्यैवोत्पादादिदमुत्पद्यते, नान्यस्मादिति । *अङ्गपरम्परां वा दर्शयतुमिति* । *अस्मिन्नङ्गे सति* । अविद्याङ्गे सति संस्काराङ्गं *भवति, अस्य पुनरङ्गस्य* संस्कारस्यो*त्पादादिदं* विज्ञानाङ्ग*मुत्पद्यत* इति । एवमितरेषामप्यङ्गानां परम्परा वक्तव्या । *जन्मपरम्परां वा* । 'किं दर्शयितुं पर्यायद्वयमाह' इति वर्त्तते । *साक्षादिति* विस्तरः । साक्षात् *पारम्पर्येण* च सन्तत्याऽविद्यादीनां *प्रत्ययभावं* दर्शयितुं पर्यायद्वयमाह । 'अस्मिन् सतीदं भवति' इति साक्षात् प्रत्ययभावं दर्शयति, 'अस्योत्पादादिदमुत्पद्यते' इति पारम्पर्येण । तत्र साक्षाद् यदा अविद्यायाः समनन्तरं क्लिष्टाः संस्कारा उत्पद्यन्ते; पारम्पर्येण तु यदा कुशला उत्पद्यन्ते, कुशलावस्थायामविद्याया अभावात् । किञ्च—अविद्या संस्काराणां साक्षात् प्रत्ययः, विज्ञानादीनां पारम्पर्येण । तदुक्तं भवति—अविद्याङ्गे सति संस्काराङ्गं भवति, अस्य संस्काराङ्गस्योत्पादादिदमुत्पद्यते विज्ञानाङ्गं साक्षादविद्याप्रत्ययं पारम्पर्येणेति । एतत् सर्वमाचार्यमतम् ।

*प्रतिषेधार्थमित्यपर* इति स्थविरवसुवर्मा । *नासति हेतौ भावो भवतीत्यहेतुवादप्रतिषेधार्थं* प्रथमेन पर्यायेण । नित्यहेतुवादप्रतिषेधार्थम्—*न चानुत्पत्तिमतो नित्यात् प्रकृतिपुरुषादिकात् किञ्चिदुत्पद्यत* इति द्वितीयेन ।

*आचार्य* आह—*अस्यां तु कल्पनायामिति विस्तरः* । *पूर्वपदस्य ग्रहणमनर्थकमिति* । अस्मिन् सतीदं भवतीत्यस्य । *उभयवादप्रतिषेधसिद्धेरिति* । अस्योत्पादादिदमुत्पद्यत इत्यनेनैव पर्यायेण । हेतोरस्तित्वमुत्पत्तिमतश्च हेतुत्वमित्युभयस्या-

सन्ति तर्हि केचिद् ये आत्मनि सत्याश्रयभूते संस्कारादीनां भावं परिकल्पयन्ति, अविद्यादीनां चोत्पादात्तदुत्पत्तिम्। अतस्तेषां कल्पनां पर्युदासयितुमिदं निर्धारयाम्बभूव--"यस्यैवोत्पादाद्यदुत्पद्यते तस्मिन्नेव सति तद् भवति, नान्यस्मिन्। यदुत अविद्याप्रत्ययाः संस्काराः, यावदेवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति" (              ) इति।

अप्रहीणोत्पत्तिज्ञापनार्थमित्याचार्याः। अविद्यायामप्रहीणायां संस्कारा न प्रहीयन्ते। तस्या एवोत्पादादुत्पद्यन्त इति विस्तरः।

---

[illegible] वादस्य प्रतिषेधसिद्धितः पूर्वपर्यायस्यानर्थक्यं प्राप्नोति।

*सन्ति तर्हि केचिदिति विस्तरः।* सन्ति केचिद् वादिनः। *य आत्मनि सत्याश्रयभूते।* अविद्याया आश्रयभूते। *संस्कारादीनां* संस्कारविज्ञाननामरूपादीनां भावमुत्पादं *कल्पयन्ति। अविद्यादीनां* चाविद्यासंस्कारादीनामुत्पादात्तदुत्पत्तिम्। संस्कारादुत्पत्तिं कल्पयन्ति इत्यधिकृतम्। *अतः* कारणात्तेषां वादिनां *कल्पनां पर्युदासयितुं* प्रतिषेद्धुमिदं *निर्धारयाम्बभूव।* किम्? इत्याह—*यस्यैवोत्पादात् यावत् स्कन्धस्य समुदयो भवतीति।* यस्यैवोत्पादाद् यदुत्पद्यते, तस्मिन्नेव सति तद् भवति, नान्यस्मिन्नात्मनि। *यदुताविद्याप्रत्ययाः संस्काराः।* अविद्यायामेव सत्यां संस्कारा भवन्ति, नान्यस्मिन्। *यावदेवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति।* कथम्? जातिप्रत्यया जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाः सम्भवन्ति। एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति। जात्यामेव सत्यां जरामरणादयः सम्भवन्ति, नान्यस्मिन्नात्मनि। अन्यथा हि 'अस्मिन् सतीदं भवति' इत्युच्यमाने वक्तारः स्युः—आत्मनि सत्याश्रयभूते अविद्यादिषु सत्सु संस्कारादयो भवन्तीति। अथ पुनर्द्वितीयमेव पर्यायं ब्रूयात्—अस्योत्पादादिदमुत्पद्यत इति। एवमपि तथैव कल्पेयुः—सत्यमविद्यादीनामुत्पादात् संस्कारादय उत्पद्यन्ते, आत्मनि तु सत्याश्रयभूत इति। अतः पर्यायद्वयेन निर्धारयति—यस्योत्पादाद् यदुत्पद्यते तस्मिन्नेव सति तद्भवति, नान्यस्मिन्नात्मनि सत्याश्रयभूत इति।

*आचार्या* इति। पूर्वाचार्याः। *अप्रहीणज्ञापनार्थमुत्पत्तिज्ञापनार्थं च।* *अविद्यायां सत्यामप्रहीणायां संस्कारा भवन्ति, न प्रहीयन्त* इति प्रथमेन पर्यायेण दर्शयति। *तस्या एवोत्पादादुत्पद्यन्त* इति द्वितीयेन दर्शयति। एवं यावज्जात्यां सत्यामप्रहीणायां जरामरणादयो भवन्ति, न प्रहीयन्ते; तस्या एवोत्पादादुत्पद्यन्त इति।

स्थित्युत्पत्तिसन्दर्शनार्थमित्यपरे । यावत् कारणस्रोतस्तावत् कार्यस्रोतो भवति । कारणस्यैव चोत्पादात् कार्यमुत्पद्यत इति । उत्पादे त्वधिकृते कः प्रसङ्गः स्थितिवचनस्य, भिन्नक्रमं च भगवान् किमर्थमाचक्षीत प्राक् स्थितिं पश्चादुत्पादम् !

पुनराह—"अस्मिन् सतीदं भवति" इति "कार्ये सति कारणस्य विनाशो भवति" इति । स्यान्मतम्—अहेतुकं तर्हि कार्यमुत्पद्यत इति ? अत आह नाहेतुकम्; यस्मादस्योत्पादादिदमुत्पद्यत इति ।

एष चेत् सूत्रार्थोऽभविष्यद् 'अस्मिन् सतीदं न भवति' इत्येवावक्ष्यत् । पूर्वं च तावत् कार्यस्योत्पादमेवावक्ष्यत्, पश्चाद् 'अस्मिन् सतीदं न भवति' इति । एवं हि साधुः क्रमो भवति । इतरथा तु 'प्रतीत्यसमुत्पादः कतमः' इत्यादेरर्थे कः प्रक्रमो विनाशवचनस्य ! तस्मान्नैष सूत्रार्थः ।

---

*स्थित्युत्पत्तिसन्दर्शनार्थमित्यपर* इति *भदन्तश्रीलाभः*। तदर्थं *पर्यायद्वयमाहेति*। *यावत् कारणस्रोतस्तावत् कार्यस्रोतो भवतीति* प्रथमेन पर्यायेण। *कारणस्यैवोत्पादात् कार्यमुत्पद्यत* इति द्वितीयेन। *उत्पादे त्वधिकृत* इति। प्रतीत्यसमुत्पादं वो भिक्षवो देशयिष्यामीत्यधिकृते। *कः प्रसङ्गः* कः प्रस्तावः *स्थितिवचनस्य*, अस्मिन् सतीदं भवतीत्यनेन यावत् कारणस्रोतस्तिष्ठति तावत् कार्यस्रोतस्तिष्ठतीति। एवमस्य स्थित्यर्थो वर्ण्यते इति। *भिन्नक्रमं च भगवान् किमर्थमाचक्षीत*। उत्पत्तिर्हि प्रथमं भवति, पश्चात् स्थितिः। उत्पत्तिप्रतिबद्धा स्थितिरिति कृत्वा 'अस्योत्पादादिदमुत्पद्यते' इति पूर्वं वक्तव्यं स्यात्, पश्चाद् 'इदमस्मिन् सतीदं भवति'। न त्वेवम्, अतो नायमर्थ इति।

*पुनराहेति*। स एव *भदन्तश्रीलाभः*।

*आचार्य* प्रत्याह—*एष चेद्* इति विस्तरः। *अस्मिन् सतीदं न भवतीत्येवावक्ष्यदिति*। नञैवाभावनिर्देशो युक्तरूप इति दर्शयति। *पूर्वं च कार्यस्योत्पादमिति*। अस्योत्पादादिदमुत्पद्यते इति पूर्वमवक्ष्यत्; उत्पादपूर्वकत्वाद्विनाशस्य।

सूत्र उक्तम्—जातिप्रत्यया जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाः सम्भवन्तीति। जरामरणसंगृहीता एवं ते, नाङ्गान्तरमित्यवगन्तव्यम्। तत्र सत्त्वासत्त्वसंख्यातस्य विषयस्य परिणामादात्मभावपरिणामाच्चैते भवन्ति। दौर्मनस्यसम्प्रयुक्तो वितर्कः शोकः। शोकसमुत्थितः प्रलापः परिदेवः। दुःखदौर्मनस्ये व्याख्याते। विच्छिन्नवेगं दौर्मनस्यमुपायासः। शोकपरिदेवपूर्वकः श्रम उपायास इत्यपरे।

कथं पुनः "अविद्याप्रत्ययाः संस्कारा यावत् जातिप्रत्ययं जरामरणम्" (          ) इति ? अभिसम्बन्धमात्रं दर्शयिष्यामः। बालो हि प्रतीत्यसमुत्पन्नं संस्कारमात्रमिदमिति अप्रजानन् आत्मदृष्ट्यस्मिमानाभिनिविष्ट आत्मनः सुखार्थमदुःखार्थं वा कायादिभिस्त्रिविधं कर्मारभते—आयतिसुखार्थं पुण्यम् सुखादुःखासुखार्थमानिञ्ज्यम्, ऐहिकसुखार्थमपुण्यम्। तस्याविद्याप्रत्ययाः संस्काराः कर्माक्षेपवशाच्च विज्ञानसन्ततिस्तां तां गतिं गच्छति; ज्वालागमनयोगेनान्तराभवसम्बन्धात्। तदन्यसंस्काराप्रत्ययं विज्ञानम्। एवं च कृत्वा तदुपपन्नं भवति विज्ञानाङ्गनिर्देशे—"विज्ञानं कतमत्? षड्विज्ञानकायाः" (          ) इति।

---

*बालो हीति* विस्तरः। बालः पृथग्जनः। *संस्कारमात्रमिति*। मात्रग्रहणमात्मप्रतिषेधार्थम्। *अप्रजानन्निति*। आवेणिकीमविद्यां दर्शयति। *आत्मदृष्ट्यस्मिमानाभिनिविष्टः* प्रतिष्ठितः *कायादिभिः* कायवाङ्मनोभि*स्त्रिविधं कर्म* पुण्यापुण्यानिञ्ज्यलक्षण*मारभते*। *आनिञ्ज्यमिति* इगिः प्रकृत्यन्तरम्, तस्यैवेदं रूपम्। एजतेरेतद्रूपमानेञ्ज्यमिति वा पाठः। *आयतिसुखार्थं पुण्यमिति*। अनागतजन्मसुखार्थम्। किम्? कामावचरं कुशलं कर्म। *सुखादुःखासुखार्थमानिञ्ज्यमिति*। रूपारूप्यावचरं कुशलम्। सुखार्थमा तृतीयाद्ध्यानात्, तस्मादूर्ध्वमदुःखासुखार्थम्। *ऐहिकसुखार्थमिति*। इहसुखापेक्षया तत् कृतम्, नायतिसुखापेक्षयेत्यर्थः। *कर्माक्षेपवशाद्* यथोक्तं कर्मविधवशात्। *तां तां गतिं* नरकादीनां *गच्छति*। *ज्वालागमनयोगेन*। यथा दीर्घा तृणानुषक्ता ज्वाला गच्छतीत्युच्यते, तथा विज्ञानसन्ततिभिरन्तराभवसम्बन्धादन्तराभवसम्बन्धेनातिविप्रकृष्टदेशामपि तां तां गतिं गच्छति। *एवञ्च कृत्वेति*। यदि संस्कारप्रत्ययमन्तराभवप्रतिसन्धिचित्तमुपादाय यावदुपपत्तिक्षणः, सर्वासौ विज्ञानसन्ततिः षण्णां विज्ञानकायानां संस्कारप्रत्ययं विज्ञानमभिप्रेतं *तदुपपन्नं भवति*। *विज्ञानाङ्गनिर्देशे*। विज्ञानाङ्गस्य तृतीयस्य निर्देशे। *"विज्ञानं कतमत्? षड्विज्ञानकायाः"* इति। अन्यथा हि यदि षण्णां विज्ञानकायानां सन्ततिर्नाभिप्रेता स्यात्, संस्कारप्रत्ययं विज्ञानं प्रतिसन्धिचित्तमेवाभिप्रेतं स्यात्, अत्र षड्विज्ञानकाया इति नोक्तं स्यात्। एवं तु वक्तव्यं स्यात्—'विज्ञानं कतमत्? मनोविज्ञानम्' इति। न हि प्रतिसन्धिक्षणे प्रतिविज्ञानकायसम्भवोऽस्ति; मनोविज्ञानेनैव प्रतिसन्धिबन्धात्। "छेदसन्धानवैराग्यहानिच्युत्युपपत्तयः, मनोविज्ञान एवेष्टाः" ( अभि० को० ३.४२ ) इति वचनात्।

विज्ञानपूर्वकं पुनस्तस्यां तस्यां गतौ नामरूपं जायते पञ्चस्कन्धकं कृत्स्न-जन्मानुगतम्; **विभङ्गे, महानिदानपर्याये** चैवं निर्देशात्—"तथा नामरूप-परिपाकात् क्रमेण षडायतनम्। ततो विषयसम्प्राप्तौ सत्यां विज्ञानसम्भवः" (          ) इति। त्रयाणां सन्निपातः स्पर्शः सुखादिवेदनीयः। तत-स्त्रिविधा वेदना। ततस्तृष्णा। दुःखोत्पीडितस्य सुखायां वेदनायां कामतृष्णा; सुखायामदुःखासुखायां च रूपतृष्णा। अदुःखासुखायामारूप्यतृष्णा। तत इष्टवेदनातृष्णायाः कामादीनामुत्पादनम्।

तत्र कामाः पञ्च कामगुणाः। दृष्टयो द्वाषष्टिर्यथा **ब्रह्मजालसूत्रे**। शीलं दौःशील्यविरतिः। व्रतं कुक्कुरगोव्रतादीनि। यथा च निर्ग्रन्थादीनां नग्नो भवत्यचेलक इति विस्तरः। ब्राह्मण-पाशुपत-परिव्राजकादीनां च दण्डाजिन-भस्म-जटा-त्रिदण्डमौण्ड्यादिसमादानम्।

आत्मवादः पुनरात्मभावः। आत्मेति वादोऽस्मिन्नित्यात्मवादः। आत्म-

---

*विभङ्ग एवं निर्देशादिति*। प्रतीत्यसमुत्पादसूत्रे नामरूपविभङ्ग एवं निर्देशात्—"नाम कतमत्? चत्वारोऽरूपिणः स्कन्धा इति। रूपं कतमत्? यत्किञ्चिद्रूपमिति विस्तरेण। यावद्यच्चेदं रूपं यच्च नाम तदुभयं नामरूप-मित्युच्यते" इति। *कामतृष्णेति*। कामावचरी तृष्णा। *रूपतृष्णेति*। या *सुखायां* त्रिषु ध्यानेषु। *अदुःखासुखायां* चतुर्थे। *अदुःखासुखायामारूप्यतृष्णेति*। आरूप्या-वचरी। *कामादीनामुपादानमिति*। कामदृष्टिशीलव्रतात्मवादानामुपादान-मित्यर्थः। *पञ्च कामगुणा इति*। काम्यन्त इति कामाः, गुण्यन्त इति गुणाः, कामा एव गुणाः कामगुणाः। के पुनस्ते? रूपशब्दगन्धरसस्प्रष्टव्यानि।

*दृष्टयो द्वाषष्टिर्यथा ब्रह्मजाल इति*। ब्रह्मजालसूत्रदर्शनेन ता दृष्टयो बोद्धव्याः। *कुक्कुरगोव्रतादीनी*ति। आदिशब्देन मृगव्रतादीनि गृह्यन्ते। *निर्ग्रन्थादीनामिति*। आदिशब्देन पाण्डरभिक्ष्वादीनां ग्रहणम्। *ब्राह्मणेत्यादि*। विस्तरः—ब्राह्मणानां *दण्डाजिनम्*। *पाशुपतानां जटाभस्म*। *परिव्राजकानां त्रिदण्डमौण्ड्यम्*। आदि-शब्दद्वयेन कापालिकादीनां कपालधारणादीनि गृह्यन्ते। *तत्समादानं* शीलव्रतो-पादानम्।

*आत्मेतिवादोऽस्मिन्नित्यात्मवादः*। यथोक्तम्—"ये केचिच्छ्रमणा ब्राह्मणा वा आत्मेति समनुपश्यन्तः, समनुपश्यन्ति सर्वे त इमानेव पञ्चोपादानस्कन्धान्"

—यस्मिमानावित्यपरे । कथमनयोरात्मवादत्वम् ? "आभ्यामात्मा" ( ) इति वचनात् । आत्मनो ह्यसत्त्वादात्मवादोपादानमित्युच्यते ; प्रज्ञप्तिमात्रकस्योपादानात्। यथोक्तम्—"आत्मा आत्मेति भिक्षवो बालोऽश्रुतवान् पृथग्जनः प्रज्ञप्तिमनुपतितः, न त्वत्रात्मा वा आत्मीयं वा" इति । तेषामुपादानं तेषु यश्छन्दरागः । एवं हि भगवता सर्वत्राख्यातम्—"उपादानं कतमत् ? योऽत्र च्छन्दरागः" ( ) इति । उपादानप्रत्ययं पुनः पौनर्भविकं कर्मोपचीयते । तद् भवः । "यदप्यानन्द कर्मायत्यां पुनर्भवाभिनिवर्तकमिदमत्र भवस्य" ( ) इति सूत्रात् । भवप्रत्ययं पुनर्विज्ञानाक्रान्तियोगेन । अनागतं जन्म जातिः पञ्चस्कन्धिका । जातौ सत्यां जरामरणम् । यथा निर्दिष्टं सूत्रे—"एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति" ( ) इति । केवलस्येति, आत्मीयरहितस्य । महतो दुःखस्कन्धस्येति, अनाद्यन्तस्य दुःखसमूहस्य । समुदयो भवतीति प्रादुर्भावः । स एव तु वैभाषिकन्यायो यः पूर्वमुक्तः ॥

---

इति विस्तरः । *आत्मदृष्ट्यस्मिमानावित्यपर* आत्मवादगाहृ । *आत्मनो ह्यसत्त्वादात्मवादोपादानमिति* । वादशब्दोपन्यासे प्रयोजनं दर्शयति । *बालोऽश्रुतवान् पृथग्जन* इति । यस्य पूर्वाभ्यासवासनानिर्जातोपपत्तिलाभिका प्रज्ञा नास्ति स बालः, यस्यागमजा नास्ति सोऽश्रुतवान्, यस्याधिगमजा सत्याभिसमयजा नास्ति स पृथग्जनः । *प्रज्ञप्तिमनुपतित* इति । यथा संज्ञा यथा च व्यवहारस्तथानुगत इत्यर्थः । *तेषामिति* । कामादीनाम् । *छन्दराग* इति । अप्राप्तेषु विषयेषु प्रार्थना छन्दः, प्राप्तेषु रागः । तेषु कामादिषु *यश्छन्दरागस्तदुपादानम्* । न तु "यथोक्ता एव सा विद्या द्विधा दृष्टिविवेचनात्, उपादानानि" ( अभि० ५.३८ ) इत्यभिप्रायः । *पौनर्भविकमिति* । पुनर्भवफलम् । *इदमत्र भवस्येति* । इदमत्र भवस्य स्वलक्षणं स्वभाव इत्यर्थः । *विज्ञानावक्रान्तियोगेनेति* । ज्वालागमनयोगेनान्तराभवसम्बन्धाद् । *अनागतं जन्म जातिः पञ्चस्कन्धिका* नामरूपस्वभावत्वात् । *जरामरणं यथानिर्दिष्टं सूत्र* इति । "जरा कतमा ? यत्तत् खालित्यं पालित्यम्" इति विस्तरः । "मरणं कतमत्, या तेषां तेषां सत्त्वानां तस्मात्तस्माच्च्युतिश्च्यवनम्" इति विस्तरः । *केवलस्यात्मरहितस्येत्यर्थं* दर्शयति । *महत इत्यनाद्यन्तस्य* । *दुःखस्कन्धस्येति* । दुःखसमूहस्य । *स एव तु वैभाषिकन्यायो यः पूर्वमुक्त* इति । द्वादश पञ्चस्कन्धिका अवस्था द्वादशाङ्गानीति ।

अथाविद्येति कोऽर्थः ? या न विद्या । चक्षुरादिष्वपि प्रसङ्गः ? विद्याया अभावस्तर्हि । एवं सति न किंचित् स्यात् ? नचैतद् युक्तम् । तस्मात्—

**विद्याविपक्षो धर्मोऽन्योऽविद्याऽमित्रानृतादिवत् ॥ २८ ॥**

यथा मित्रविपर्ययेण तद्विपक्षः तः कश्चिदमित्रो भवति, न तु यः कश्चिदन्यो मित्रात्, नापि मित्राभावः । ऋतं चोच्यते सत्यम्, तद्विपक्षभूतं वाक्यमनृतं भवति । अधर्मानर्थाकार्यादयश्च धर्मादिप्रतिद्वन्द्वभूताः । एवमविद्यापि विद्यायाः प्रतिद्वन्द्वभूतधर्मान्तरमिति द्रष्टव्यम् ॥ २८ ॥

कुत एतत् ? प्रत्ययभावेनोपदेशात् । अपि च—

**संयोजनादिवचनात्,**

संयोजनं बन्धनमनुशय ओघो योगश्चाविद्योच्यते सूत्रेषु । न चाभावमात्रं तथा भवितुमर्हति । न चापि चक्षुरादयः । तस्माद् धर्मान्तरमेवाविद्या ।

यथा तर्हि कुभार्या अभार्येत्युच्यते, कुपुत्रश्चापुत्रः, एवमविद्याऽप्यस्तु ?

**कुप्रज्ञा चेन्न दर्शनात् ।**

कुत्सिता हि प्रज्ञा क्लिष्टा । सा च दृष्टिस्वभावा इति नाविद्या युज्यते ।

---

*या न विद्या* । *चक्षुरादिष्वपि प्रसङ्ग* इति । चक्षुःश्रोत्रादीन्यविद्या प्रसज्यन्ते, तान्यपि हि न विद्येति कृत्वा । *न किञ्चित् स्यादिति* । यदि विद्याया अभावोऽविद्या, अद्रव्यं स्यादित्यर्थः । *न चैतद् युक्तमिति* । प्रत्यभावेनोपदेशात् । *तद्विपक्ष* इति । विरोधे नञिति दर्शयति । *न तु यः कश्चिदन्यो मित्रादिति* । न पर्युदासमात्र इति दर्शयति । *नापि मित्राभाव* इति । नाभावार्थ इति दर्शयति । *अधर्मानर्थाकार्यादयश्चेति* । आदिशब्देनायुक्त्यव्यवहारा मनुष्यादयो गृह्यन्ते । *धर्मादिप्रतिद्वन्द्वभूता* इति । धर्मार्थकार्ययुक्तिव्यवहारमनुष्यादिप्रतिद्वन्द्वभूताः । न तु ये केचिदन्ये धर्मादिभ्यश्चक्षुरादयः । *नापि धर्मादयभावः* । *एवमविद्यापीति* विस्तरः ॥ २८ ॥

*कुत एतत्, प्रत्ययभावेनोपदेशात्* । अविद्याप्रत्ययाः संस्कारा इति । न चाविद्याया अन्येषां चक्षुरादीनां प्रत्ययभावेनोपदेशो युक्तः; अर्हतां संस्कारासम्भवात् । न चाभावस्य; शशविषाणादीनां प्रत्ययत्वात् ।

*संयोजनं यावद्योगश्चाविद्योच्यत* इति । अविद्यासंयोजनं यावदविद्यायोग इति *सूत्रेषूच्यते* । *न चाभावमात्रं तथा भवितुमर्हतीति* । न संयोजनादि भवितुमर्हतीत्यर्थः । *न चापि चक्षुरादयः* । तथा भवितुमर्हन्तीत्यधिकृतम् । *सा च दृष्टिस्वभावेति नाविद्या युज्यत* इति । दृष्ट्यविद्ययोः संयोजनादित्वेन पृथक् पाठात् ।

या तर्हि न दृष्टिः सा भविष्यति ? सापि भवितुं नार्हति । किं कारणम् ?

**दृष्टेस्तत्सम्प्रयुक्तत्वात्,**

अविद्या चेत् प्रज्ञाऽभविष्यन्न दृष्टिस्तया युज्यते सम्प्रायोक्ष्यत; द्वयोः प्रज्ञाद्रव्ययोरसम्प्रयोगात् ।

इतश्च—

**प्रज्ञोपक्लेशदेशनात् ॥ २९ ॥**

"रागोपक्लिष्टं चित्तं नावमुच्यते, अविद्योपक्लिष्टा प्रज्ञा न विशुध्यति" ( ) इत्युक्तं सूत्रे । न च सैव प्रज्ञा तस्याः प्रज्ञाया उपक्लेशो युक्त इति । यथा चित्तस्यान्यो भिन्नजातीय उपक्लेशो रागः, एवं प्रज्ञाया अविद्या । किं पुनरेवं नेष्यते ?

क्लिष्टया प्रज्ञया कुशला प्रज्ञा व्यवकीर्यमाणा न विशुध्यति, अतोऽसौ तस्या उपक्लेश इति । यद्यापि रागोपक्लिष्टं चित्तं न विमुच्यते । किं तदवश्यं रागपर्यवस्थितं भवति । उपहतं तु तत्तथा रागेण भवति यन्न विमुच्यते । तां भावनां[1] व्यावर्तयतो विमुच्यते ।

---

*या तर्हि न दृष्टिरिति* । या क्लिष्टा प्रज्ञा रागादिसम्प्रयुक्ता ।

*"दृष्टेस्तत् सम्प्रयुक्तत्वात्"* इति । अविद्यासम्प्रयुक्तत्वादित्यर्थः । कथञ्च दृष्टिरविद्यया सम्प्रयुक्ता ? यस्मादविद्यालक्षणो मोहः क्लेशमहाभूमौ पठ्यते, क्लेशमहाभूमिकाश्च सर्वेऽपि महाभूमिकैः सह सम्प्रयुज्यन्त इति दृष्ट्या सत्कायदृष्ट्यादिकया प्रज्ञास्वभावया अविद्या सम्प्रयुज्यत इति गम्यते । तस्मान्नाविद्या प्रज्ञा, *द्वयोः प्रज्ञाद्रव्ययोरसम्प्रयोगात्* ।

*अविद्योपक्लिष्टा प्रज्ञा न विशुध्यतीति* । एतदुदाहरणम् । येन विद्या प्रज्ञाया अर्थान्तरभूतेति । *न च सैव प्रज्ञा तस्याः प्रज्ञाया उपक्लेशो युक्त* इति । प्रज्ञोपक्लेशदेशनायां प्रज्ञाया अर्थान्तरभूता अविद्या; उपक्लेशत्वेन निर्दिष्टत्वात् । रागवत् । अत आह—*यथा चित्तस्यान्य* इति विस्तरः ।

*व्यवकीर्यमाणा न विशुध्यतीति* । अन्तरान्तरोत्पद्यमानाया क्लिष्टया प्रज्ञया व्यवकीर्यमाणा क्षणान्तरोत्पन्ना कुशला प्रज्ञा न विशुध्यतीत्यर्थः । *किं तदवश्यं रागपर्यवस्थित*मिति । रागसम्प्रयुक्तमित्यर्थः । *उपहतं तु तत्तथा रागेणेति* । समुदाचरता रागेण वासनाधानेन तदुपहतं भवति । *तां भावनां* तद् दौष्ठुल्यं

---

१. पुनर्भावनां—का० ।

एवमविद्योपहता[1] क्लिष्टा[1] प्रज्ञा न शुध्यतीत्यविद्योपहतां[2] परिकल्पयामः। को हि परिकल्पयन् वार्यते। जात्यन्तरमेव त्वविद्यां वर्णयन्ति।

योऽपि मन्यते—"सर्वक्लेशा अविद्या" इति, तस्याप्यत एव व्युदासः। सर्वक्लेशस्वभावा हि[3] सती संयोजनादिषु पृथग्नोच्येत, दृष्ट्या च न सम्प्रयुज्येत। अन्येन वा क्लेशेन दृष्ट्यादीनां परम्परासम्प्रयोगात् चित्तमपि चाविद्योपक्लिष्टमेवोक्तं भवेत्।

अथ मतम्—विशेषणार्थं तथोक्तमिति? प्रज्ञायामपि[4] विशेषणं[4] कर्त्तव्यं स्यात्[5]। भवत्वविद्या धर्मान्तरम्, कस्तु तस्याः स्वभावः? सत्यवत्न कर्मफला-

---

*व्यावर्त्तयतो योगिनस्तच्चित्तं विमुच्यते। एवमविद्योपहता क्लिष्टा प्रज्ञा न शुध्यतीति*। अतः प्रज्ञा चाविद्या, न च दोष इति दर्शयति।

*को हि परिकल्पयन् वार्यत* इति। परिकल्पनामात्रमेतदागमनिरपेक्षमिति कथयति।

*योऽपि मन्यते सर्वक्लेशाविद्येति*। *भदन्तश्रीलाभः* एवं मन्यते—अविद्येति सर्वक्लेशानामियं सामान्यसंज्ञा, न रागादिक्लेशव्यतिरिक्ताऽविद्या नास्तीति। कस्मात् स एवं मन्यते? बुद्धसूत्रात्। "न प्रजानाति न प्रजानातीत्यायुष्मन् महाकौष्ठिल, तस्मादविद्योच्यते" इति। सत्कायदृष्ट्यादयोऽपि क्लेशा अज्ञानस्वरूपा विपरीतग्रहणत इति। *तस्याप्यत एवेति* विस्तरः। तस्य *भदन्तस्यात एव प्रतिषेधवचनाद् व्युदासः*। प्रतिषेधस्तन्मतस्येत्यध्याहार्यम्। कथम्? इत्याह—*सर्वक्लेशस्वभावा हि सती संयोजनादिषु पृथग् नोच्येत*। अनुशयसंयोजनादिष्वविद्यासंयोजनमिति पृथग् नोच्येत, शेषसंयोजनाव्यतिरेकात्। 'रागो बन्धनं द्वेषो बन्धनम्' इत्युक्त्वा मोहो बन्धनमिति, 'कामारागानुशयः' इत्याद्युक्त्वा अविद्यानुशय इति, ओघेष्वविद्यौघ इति, योगेष्वविद्यायोग इति पृथग्नैवोच्यते; कस्मात्? परस्परासम्प्रयोगात्। न हि दृष्टिर्दृष्ट्या संप्रयुज्यते, रागो वा रागेण। दृष्ट्यादिसम्प्रयुक्ता चाविद्योक्ता, क्लेशमहाभूमिकत्वेन महाभूमिकसम्प्रयोगनियमात्। *चित्तमपि चाविद्योपक्लिष्टमेवोक्तं भवेत्*। रागोपक्लिष्टं चित्तं न विमुच्यत इति नोक्तं भवेत्; अविद्योपक्लिष्टत्ववचनेनैव रागाद्युपक्लिष्टत्वसिद्धेः।

*अथ मतम्—विशेषणार्थं तथोक्तमिति*। रागलक्षणयाविद्ययोपक्लिष्टचित्तं न विमुच्यत इति। *प्रज्ञायामपि विशेषणं कर्त्तव्यं स्यात्*। रागेण प्रतिघेन मानेन

---

१–१. ०पक्लिष्टा—का०।　　२. विशुध्यती०—का०।　　३. अपि—का०।
४–४. मप्यविद्याविशेषणं—का०।　　५. भवेत्—का०।

नामसम्प्रख्यानम् ।

एतच्चैव न ज्ञायते किमिदमसम्प्रख्यानं नामेति ?

यदि यन्न सम्प्रख्यानम्? सम्प्रख्यानाभावेऽपि तथैव दोषो यथा अविद्यायाम् ।

अथ सम्प्रख्यानविपक्षभूतं धर्मान्तरम्? तदिदं तथैव न ज्ञायते किं तदिति ।

एवञ्जातीयकोऽपि धर्माणां निर्देशो भवति, तद्यथा—"चक्षुः कतमत्? यो रूपप्रसादश्चक्षुर्विज्ञानस्याश्रय" ( ) इति ॥

अस्मीति सत्त्वमयताऽविद्येति भदन्तधर्मत्रातः । का पुनरस्मिमानादन्या मयता? याऽसौ सूत्र उक्ता—"सोऽहमेवं ज्ञात्वा एवं दृष्ट्वा सर्वासां तृष्णानां सर्वासां दृष्टीनां सर्वासां मयतानां सर्वेषामहङ्कारममकारास्मिमानाभिनिवेशानुशयानां प्रहाणात् परिज्ञानान्निरुछायो निर्वृतः" ( ) इति ।

अस्त्येषा मयता, सा त्वियमविद्येति कुत एतत् ?

---

वेति, मा भूत् सर्वक्लेशग्रहणप्रसङ्ग इति। इष्ट इति चेत्? चित्तेऽपि न विशेषणं कर्त्तव्यं स्यात्। अविद्योपक्लिष्टं चित्तं न विमुच्यत इत्येवमेव तु वक्तव्यं स्यात्।

*सम्प्रख्यानम्।* प्रज्ञानमित्येकोऽर्थः। *तथैव दोषो यथाविद्यायामिति।* *अथासम्प्रख्यानमिति* कोऽर्थः? यन्न संप्रख्यानम्। चक्षुरादिष्वपि प्रसङ्गः। सम्प्रख्यानाभावस्तर्हि? एवं सति न किञ्चित् स्यात्। न चैतद् युक्तमिति। *अथ सम्प्रख्यानविपक्षभूतं धर्मान्तरम्। तदिदं तथैव न ज्ञायते* यथैवाविद्या, *किं तदिति।*

*एवञ्जातीयकोऽपीति* विस्तरः। एवञ्जातीयकः, कर्मप्रभावित इत्यर्थः। तस्मादविद्यायाः कर्मणा कारित्रेण स्वभावो विज्ञातव्यः—अस्त्यसौ कश्चिद्धर्मो यो विद्याविपक्ष इति। विद्याविपक्षत्वं तस्याः कर्मेति। *तद्यथा चक्षुः कतमत्? यो रूपप्रसादश्चक्षुर्विज्ञानस्याश्रय* इति। ननु च रूपप्रसाद इति स्वभावप्रभावितोऽस्य निर्देश इति? न; अप्रत्यक्षत्वान्नित्यं चक्षुर्विज्ञानमेयत्वाच्च।

*अस्मीति सत्त्वमयतेति।* अविज्ञातार्थमेतत्। न तेन *स्थविरे*णास्याभिधेयमवधारितम्। मयता पुनः *सौत्रान्तिकै*रविद्या प्रकारभिन्ना वर्ण्यते, मानो वा। *यासौ सूत्र उक्तेति* विस्तरः। मयतानामित्यविद्यानां प्रकारभिन्नानां नामेति ग्रहणम्। तृष्णादीनां पृथगुपदेशादिति *भदन्तधर्मत्रात*स्याभिप्रायः। *आचार्य* आह—*अस्त्येषा मयता,* अस्ति सूत्रे उक्ता मयता, तत्र जातिनिर्देशादेकवचनम्, *सा त्वविद्ये*ति। *कुतः* कारणादेतत् परिच्छिद्यते—*साविद्येति? भदन्तधर्मत्रातः*

यत एषा नान्यः क्लेशः शक्यते वक्तुम् ।

ननु चान्यो मान एव स्यात् । अत्र तु[1] पुनर्विचार्यमाणे बहु वक्तव्यं जायते । तस्मात् तिष्ठत्वेतत् ॥ २९ ॥

अथ नामरूपमिति कोऽर्थः ? रूपं विस्तरेणोक्तम्[2] ।

**नाम त्वरूपिणः स्कन्धाः,**

**किं कारणम् ? नामेन्द्रियार्थवशेनार्थेषु नमतीति नाम ।**

**कतमस्य नाम्नो वशेन ? यदिदं लोके प्रतीतं तेषां तेषामर्थानां प्रत्यायकम्—गौः, अश्वः, रूपम्, रस इत्येवमादि ।**

---

स्वाभिप्रायं विवृणोति—*यत एषा नान्यः क्लेशः शक्यते वक्तुमिति* । कस्मान्न शक्यते ? तृष्णादृष्टास्मिमानानां पृथगुक्तेः ।

*आचार्य* आह—*ननु चान्यो मान एव स्यादिति* । अस्मिमानादन्यः षण्णामन्यतमः । स च मयता, नाविद्येत्यभिप्रायः । *अत्र तु पुनर्विचार्यमाणे बहु वक्तव्यं जायत* इति । अत्र पुनर्विचार्यमाणेऽविद्याङ्गे बहुरयं ग्रन्थो जायते, यथोक्तमिति । *तस्मात्तिष्ठत्वेतत्* । एतावदेवास्त्विति । अथवा—अन्यो मान एव स्यात्, न पुनरविद्येति, कुत एतदित्येवमादिके पुनर्विचारे क्रियमाणे उत्तरप्रत्युत्तरवचनेन बहु वक्तव्यं जायते । तस्मात्तिष्ठत्वेतदलं विचारान्तरेणेत्यर्थः ॥ २९ ॥

*अथ नामरूपमिति* । अविद्याङ्गनिर्देशानन्तरं संस्काराङ्गं निर्देष्टव्यम् । तदनु-विज्ञानाङ्गम्, किमित्येतदतिक्रम्योपन्यस्यते ? एतदर्थमत्र वक्ष्यत्याचार्यः—"उक्तं च वक्ष्यते चान्यत्" ( अभि० ३.३६ ) इति ।

*रूपं विस्तरेणोक्तमिति* । "रूपं पञ्चेन्द्रियाण्यर्थाः पञ्चाविज्ञप्तिरेव च" ( अभि० को० १.९ ) इत्यत्र । *नामेन्द्रियार्थवशेनेति* विस्तरः । नामवशेन इन्द्रियवशेन अर्थवशेन चार्थेषु रूपादिषु *नमतीति नाम । कतमस्य नाम्नो वशे-नेति* । नामद्वैविध्यात् पृच्छति । *आचार्यस्त्वाचष्टे—यदिदं लोके प्रतीतमिति* विस्तरः । *गौरश्व* इति, समुदायप्रत्यायकम् । रूपं रस इति, एकार्थप्रत्यायकम् । तदेतद् वेदनादिस्कन्धचतुष्कं नामशब्देनोच्यते । यस्मात्तन्नामवशेन संज्ञाकरण-वशेनार्थेष्वप्रत्यक्षेषु प्रत्यक्षेष्वपि वा नमति प्रवर्त्तते—अस्य नाम्नोऽयमर्थ इति । इन्द्रियार्थवशेन तु प्रत्यक्षेषु रूपादिषु नमति, उत्पद्यत इत्यर्थः । नाम्नि चाप्यर्थ-

---

१. का० पुस्तके नास्ति ।

२. विस्तरेण यथोक्तम्—का० ।

एतस्य पुनः केन नामत्वम् ? तेषु तेष्वर्थेषु तस्य नाम्नो नमनात् । इह निक्षिप्ते काय उपपत्त्यन्तरे नमनान्नामारूपिणः स्कन्धा इत्यपरे ॥

षडायतनमुक्तम् ॥

स्पर्शो वक्तव्यः ?

**स्पर्शाः षट् ,**

चक्षुःसंस्पर्शः, यावन्मनःसंस्पर्श इति । ते पुनः—

**सन्निपातजाः ।**

त्रयाणां सन्निपाताज्जाता इन्द्रियार्थविज्ञानानाम् । युक्तं तावत् पञ्चानामिन्द्रियाणामर्थविज्ञानाभ्यां सन्निपातः; सहजत्वात् ।

मनइन्द्रियस्य पुनर्निरुद्धस्यानागतवर्त्तमानाभ्यां धर्ममनोविज्ञानाभ्यां कथं सन्निपातः ? अयमेव तेषां सन्निपातो यः कार्यकारणभावः । एककार्यार्थो वा सन्निपातार्थः । सर्वे च ते त्रयोऽपि स्पर्शोत्पत्तौ प्रगुणा भवन्तीति ।

---

वशेन नमति—अस्यार्थस्येदं नामेति । *एतस्य पुनः केन नामत्वमिति ।* एतस्य संज्ञाकरणलक्षणस्य नाम्नः केन कारणेन नामत्वम् । *तेषु तेष्वर्थेषु तस्य नाम्नो नमनादिति ।* यस्मात्तेष्वर्थेषु चतुस्कन्धलक्षणं नाम, तन्नाम नमयति प्रवर्त्तयति, तस्मात् एतस्य नामत्वम्, नमयतीति नामेति कृत्वा । इह *निक्षिप्त* इति विस्तरः । मरणकाले निक्षिप्ते *काय उपपत्त्यन्तरे नमनाद्* गमनाद*रूपिणो* वेदनादयः *स्कन्धा नामेच्युच्यन्ते ।* यथोक्तम्—मृतस्य खलु कालं गतस्य ज्ञातय इमं पूतिकायमग्निना वा दहन्ति, उदके वा प्लावयन्ति, भूमौ वा निखनन्ति, वातातपाभ्यां वा परिशोषं परिक्षयं पर्यादानं गच्छति । यत्पुनरिदमुच्यते—चित्तमिति वा मन इति वा विज्ञानमिति वा श्रद्धापरिभावितं तदूर्ध्वगामि भवति, विशेषगाम्यायत्यां स्वर्गोपगमिति ।

*षडायतनमुक्तमिति ।* "तद्विज्ञानाश्रया रूपप्रसादाश्चक्षुरादयः" (अभि० १.९), "विज्ञानं प्रतिविज्ञप्तिर्मनआयतनं च तत्" (अभि० को० १.१६) इत्यत्र । *मनइन्द्रियस्य पुनर्निरुद्धस्यानागतेन धर्मेण* रूपादिनोत्पत्स्यमानेन *वर्त्तमानेन मनोविज्ञानेन कथं सन्निपातः । यः कार्यकारणभावः ।* कार्यं मनोविज्ञानम्, कारणं मनइन्द्रियम्, धर्मश्च रूपादिः । *एककार्यार्थो वेति ।* एककार्यमेवार्थ एककार्यार्थः, एककार्यत्वमित्यर्थः । कथमेककार्यार्थः ? इत्याह—*सर्वे च ते त्रयोऽपि* मनइन्द्रियादयः *स्पर्शोत्पत्तौ प्रगुणा* अनुकूला *भवन्तीति ।*

अत्र पुनराचार्याणां भेदं गता बुद्धयः ।

केचिद्धि सङ्गनिपातमेव स्पर्शं व्याचक्षते । सूत्रं चात्र ज्ञापकमानयन्ति—"इति य एषां त्रयाणां धर्माणां सङ्गतिः सन्निपातः समवायः स स्पर्शः" (                ) इति ।

केचित् पुनश्चित्तसम्प्रयुक्तं धर्मान्तरमेव स्पर्शं व्याचक्षते, सूत्रं चात्र ज्ञापकमानयन्ति—"षट्षट्को धर्मपर्यायः कतमः ? षडाध्यात्मिकान्यायतनानि, षट् बाह्यान्यायतनानि, षट् विज्ञानकायाः, षट् स्पर्शकायाः, षट् वेदनाकायाः, षट् तृष्णाकायाः" (          ) इति । अत्र हीन्द्रियार्थविज्ञानेभ्यः स्पर्शकायाः पृथग् देशिताः ।

तत्र ये सन्निपातमेव स्पर्शमाहुस्त एवं परिहारमाहुः—न वै पृथग्निर्देशात् पृथग्भावो भवति । मा भूद्धर्मायतनाद्वेदनातृष्णयोः पृथग्भाव इति । नैष दोषः; तद्व्यतिरिक्तस्यापि धर्मायतनस्य भावात् । न चैवं स्पर्शभूतात् त्रयादन्यत् त्रयमस्ति, यस्य शेषस्यात्र ग्रहणं स्यात् ।

---

*षट्षट्को धर्मपर्याय* इति । षट् षट्कान्यस्मिन्निति षट्षट्कः । *आध्यात्मिकबाह्यविज्ञानस्पर्शवेदनातृष्णाषट्कसम्भवात् । षट्स्पर्शकाया* इति ज्ञापकम् । अनन्यत्वे हि सतीन्द्रियार्थविज्ञानेषूक्तेषु स्पर्शकायवचनं पुनरुक्तं स्यात् । ततश्च षट्षट्कत्वं हीयते ।

*मा भूद् धर्मायतनाद्वेदनातृष्णयोः पृथग्भाव* इति । यदि पृथङ्निर्देशात् पृथग्भावो भवेत्, वेदनातृष्णे अपि धर्मायतनात् पृथङ्निर्दिष्टे, तयोरपि वेदनातृष्णयोर्धर्मायतनात् पृथग्भावः स्यात् । न च तयोः पृथग्भावः इष्यते; धर्मायतनान्तर्भावात् । नैष दोष इति विस्तरः । नैष दोष इति यथोक्तः । *तद्व्यतिरिक्तस्यापि* वेदनातृष्णाव्यतिरिक्तस्यापि *धर्मायतनस्य* तज्जादिस्वभावस्य *भावाद*स्तित्वात् । *न चैवमि*ति विस्तरः । न चैवं भवतः 'त्रयाणां सन्निपातः स्पर्शः' इत्येवं ब्रुवाणस्य, *स्पर्शभूता*दिन्द्रियार्थविज्ञान*त्रयादन्य*दस्पर्शभूतं *त्रय*मिन्द्रियार्थविज्ञान*त्रयमस्ति, यस्य शेषस्यात्र* सूत्रे *ग्रहणं स्यात्* । 'षट् स्पर्शकायाः' इति प्रयोजनवशादपृथग्भावेऽपि स्पर्शभूतात् त्रयात् । तस्मादपृथग्भावेऽपि वेदनातृष्णयोः पृथङ्निर्देशो युक्तः; विनेयकार्यवशात् । न तु भवतः सन्निपातमात्रस्पर्शवादिनः केनचिदपि प्रयोजनेन 'षट् स्पर्शकायाः' इति पृथङ्निर्देशो युक्तः; यस्मात् 'षट् स्पर्शकायाः' इति वचनेनेन्द्रियार्थविज्ञानत्रयमुक्तमिति तद्वचनं प्राप्तमित्यतः 'षट्षट्को धर्मपर्यायः' इति न सिध्येत् । मम तु सिध्यति; स्पर्शवेदनातृष्णाषट्कवचनेऽपि तद्व्यति-

यद्यपीन्द्रियार्थौ[1] स्यातामविज्ञानकौ, न तु पुनर्विज्ञानमनिन्द्रियार्थकम् । तस्मात्त्रिषु निर्दिष्टेषु पुनः स्पर्शग्रहणमनर्थकं[2] प्राप्नोति ।

न खलु सर्वे चक्षूरूपे सर्वस्य चक्षुर्विज्ञानस्य कारणम्, नापि सर्वं चक्षुर्विज्ञानं पूर्वयोश्चक्षूरूपयोः कार्यम् । अतो येषां कार्यकारणभावस्ते स्पर्शभावेन[3] व्यवस्थिता[4] इत्येके ।

ये पुनः सन्निपातादन्यं स्पर्शमाहुः, त एतत् सूत्रं कथं परिहरन्ति—"इति य एषां त्रयाणां सङ्गतिः सन्निपातः समवायः स स्पर्शः" इति ? न वा एवं पठन्ति । किं तर्हि ? "सङ्गतेः सन्निपातात् समवायात्" इति पठन्ति । कारणे वा कार्योपचारोऽयमिति ब्रुवन्ति ।

---

रिक्तधर्मायतनाद्यर्थेन्द्रियविज्ञानषट्कसम्भवात् । तस्मात् 'षट् स्पर्शकायाः' इति पृथङ्निर्देशाद् 'अस्ति चित्तसम्प्रयुक्तं स्पर्शाख्यं धर्मान्तरम्' इति सिद्धम् ।

अथ ब्रूयादसौ—इन्द्रियार्थाविविज्ञानकौ निर्दिष्टावस्मिन् सूत्रे, षडाध्यात्मिकानि, षड् बाह्यानीति वचनात्; अत इन्द्रियविषयविज्ञानत्रयं स्पर्शभूतमित्यस्य शेषस्य ज्ञापनार्थमत्र ग्रहणं स्यात्—षट् स्पर्शकाया इति ? अस्य समाधेः प्रतिषेधार्थमिदमारभ्यते—*यद्यपीन्द्रियार्थौ स्यातामविज्ञानकौ* । तत्सभागावित्यर्थः । *न तु पुनर्विज्ञानमनिन्द्रियार्थकम्* । अवश्यं हि विज्ञानं सेन्द्रियार्थकं भवति । तच्च विज्ञानमपदिष्टमत्र—षड्विज्ञानकाया इति । *तस्मात्त्रिषु निर्दिष्टेषु* इन्द्रियार्थविज्ञानेषु षड्विज्ञानकायवचनेन *पुनः स्पर्शग्रहणमनर्थकं प्राप्नोति*—षट् स्पर्शकाया इति । अतः 'सन्निपातादन्यः स्पर्शः' इति सिद्धम् ।

अत्र *भदन्तश्रीलाभ* आह—*न खल्विति* विस्तरः । पूर्वोत्पन्ने चक्षूरूपे *कारणम्*, न तु विज्ञानसहोत्पन्ने । *नापि सर्वचक्षुर्विज्ञानमिति* । पश्चादुत्पन्नं पूर्वयोश्चक्षूरूपयोर्न सहोत्पन्नयोः । *अतो येषां कार्यकारणभावस्ते* विज्ञानेन्द्रियविषयाः *स्पर्शभावेन व्यवस्थिताः*, 'षट् स्पर्शकायाः' इत्यस्मिन् सूत्रे, तदिदमन्यथा न ज्ञापितं स्यात् ।

*न वा एवं पठन्ति* । वै इति निपातः । न वै एवं पठन्तीत्यर्थः । कथं पुनः पठन्ति ? "य एषां धर्माणां संगतिः सन्निपातः समवायः स स्पर्शः" इति पठन्ति । *कारणे वा कार्योपचारोऽयमिति* । सङ्गतौ सन्निपाते समवाये कारणे कार्योपचारः स्पर्श इति । यथा—'सुखो बुद्धानामुत्पादः' इति ।

---

१. यद्यपि हीन्द्रिया०—का० । २. स्पर्शस्य ग्रहण०—का० ।
३. स्पर्शभावे—का० । ४. व्यवस्थापिता—का० ।

अतिबहुविस्तरप्रकारविसारिणी[1] त्वेषा कथेत्यलं प्रसङ्गेन ।

अन्यमेव स्पर्शं वर्णयन्त्याभिधार्मिकाः ॥

तेषां पुनः षण्णां स्पर्शानाम्—

**पञ्च प्रतिघसंस्पर्शः षष्ठोऽधिवचनाह्वयः ॥ ३० ॥**

चक्षुःश्रोत्रघ्राणजिह्वाकायसंस्पर्शाः **पञ्च प्रतिघसंस्पर्श** इत्युच्यते ; सप्रतिघेन्द्रियाश्रयत्वात् । मनःसंस्पर्शः **षष्ठः** सोऽधिवचनस्पर्श इत्युच्यते ।

किं कारणम्—अधिवचनमुच्यते नाम । तत्किलास्याधिकमालम्बनम्, अतोऽधिवचनं[2] संस्पर्श[2] इति । **यथोक्तम्**—"चक्षुर्विज्ञानेन नीलं विजानाति नो तु नीलम्, मनोविज्ञानेन नीलं विजानाति नीलमिति च विजानाति" (　　　) इति । एक आश्रयप्रभावितः, द्वितीय आलम्बनप्रभावितः ।

**अपरे** पुनराहुः—वचनमधिकृत्यार्थेषु मनोविज्ञानस्य प्रवृत्तिः, न पञ्चानाम् । अतस्तदेवाधिवचनम् । तेन सम्प्रयुक्तः स्पर्शोऽधिवचनसंस्पर्श इति । एक आश्रयप्रभावितः, द्वितीयः सम्प्रयोगप्रभावितः ॥ ३० ॥

---

अतिबहुविस्तरेण प्रकारेण विसर्तुं शीलमस्या इति *अतिबहुविस्तरप्रकारविसारिणी* ।

*अधिवचनमुच्यते नामेति* । अध्युच्यतेऽनेनेत्यधिवचनम् । वाङ्नाम्नि प्रवर्त्तते, नामार्थं द्योतयति इत्यधिवचनं नाम । *तत् किल* । नामार्थे । मनोविज्ञानसम्प्रयुक्तस्याधिकं बाहुल्येनालम्बनम् । *अतोऽधिवचनं संस्पर्श* इति । स्पर्शः संस्पर्श इत्येकोऽर्थः । *मनोविज्ञानेन नीलं विजानातीति* । अभिधेयं विजानातीत्यर्थः । *नीलमिति च विजानातीति* । अस्यार्थस्येदं नामेति विजानाति । *एक आश्रयप्रभावित* इति । प्रथम आश्रयेण प्रभावितः प्रतिघाश्रयः संस्पर्शः, प्रतिघस्य वा संस्पर्शः *प्रतिघसंस्पर्शः* । *आलम्बनप्रभावित* इति । अधिवचनादालम्बनसंस्पर्शः, अधिवचने वा संस्पर्शः अधिवचनसंस्पर्श इति ।

*वचनमधिकृत्येति* । वचनमवधार्य । अर्थेषु रूपादिषु *मनोविज्ञानस्य प्रवृत्तिः* । *न पञ्चानां* चक्षुर्विज्ञानादीनां वचनमधिकृत्यार्थेषु प्रवृत्तिः । *अतस्तदेवाधिवचनं* मनोविज्ञानं वचने प्रवर्त्ततेऽधिवचनमिति । *तेन सम्प्रयुक्तस्तस्य* वा संस्पर्शस्या*धिवचनसंस्पर्शः* । तेन चायं *द्वितीयः* संस्पर्शः *सम्प्रयोगप्रभावित* इत्युच्यते ॥ ३० ॥

---

१. ०विस्तरप्रसारिणी—का० ।

२-२. ०वचनसंस्पर्शः—का० ।

पुनस्त एव षट् स्पर्शास्त्रयो भवन्ति—

**विद्याविद्येतरस्पर्शाः,**

विद्यासंस्पर्शः, अविद्यासंस्पर्शः, ताभ्यां चान्यो नैवविद्यानाविद्यासंस्पर्श इति ।

एते पुनर्यथाक्रमं वेदितव्याः—

**अमलक्लिष्टशेषिताः ।**

अनास्रवः स्पर्शो विद्यासंस्पर्शः, क्लिष्टोऽविद्यासंस्पर्शः; विद्याऽविद्याभ्यां सम्प्रयुक्तत्वात् । शेषो नैवविद्यानाविद्यासंस्पर्शः; उभाभ्यामसम्प्रयोगात् ।

कः पुन शेषः ? कुशलसास्रवोऽनिवृताव्याकृतश्च ।

पुनरविद्यासंस्पर्शस्याभीक्ष्णसमुदाचारिण एकदेशस्य ग्रहणाद् द्वौ स्पर्शौ भवतः—

**व्यापादानुनयस्पर्शौ,**

व्यापादानुनयाभ्यां सम्प्रयोगात् । पुनः सर्वसंग्रहेण—

**सुखवेद्यादयस्त्रयः ॥ ३१ ॥**

सुखवेदनीयः स्पर्शः, दुःखवेदनीयः, अदुःखासुखवेदनीयश्च; सुखवेदनाविहितत्वात् ।

अथ वा—वेद्यते तद्, वेदयितुं वा शक्यमिति वेदनीयम् । किं तत् ? वेदि-

---

"*विद्याविद्येतरस्पर्शाः*" इति । विद्या अविद्या इतरश्च विद्याविद्येतरे, त एव स्पर्शा विद्याविद्येतरस्पर्शाः । विद्या चाविद्या चेति, विद्याह्वः अविद्याह्वः, ताभ्यामितरश्चेत्यर्थः । *विद्ये*त्यनास्रवा प्रज्ञा । *अविद्या* क्लिष्टमज्ञानम् । *नैवविद्यानाविद्या* कुशलसास्रवा प्रज्ञा, तत्सम्प्रयुक्ता एते यथाक्रमं संस्पर्शा वेदितव्याः ।

पुन*रविद्यासंस्पर्श*स्येति विस्तरः । अविद्यासंस्पर्शस्य सर्वक्लेशसम्प्रयुक्तस्य *अभीक्ष्णसमुदाचारी* नित्यसमुदाचारी एकदेशः, *तस्य ग्रहणाद् द्वौ स्पर्शौ भवतः*—"*व्यापादानुनयस्पर्शौ* ।

*सुखवेद्यादयस्त्रयः*" इति । सुखस्य वेदः, सुखेवेदे साधुः सुखवेद्यः, सुखं वा वेद्यमस्मिन्निति सुखवेदनादौ हितः सुखवेदनीयः, "प्राक्क्रीताच्छः" ( पा० सू० ५.१.१ ) । *वेद्यते तद्वेदयितुं वा शक्यमि*ति । वेद्यत इति कर्ममात्रे कृत्य इति दर्शयति । वेदयितुं शक्यमिति—"अर्हे कृत्यतृचश्च"

तम्। सुखं वेदनीयमस्मिन्निति सुखवेदनीयः स्पर्शो यत्र सुखं वेदितमस्ति एवं दुःखादुःखासुखवेदनीयावपि योज्यौ।

त एते षोडश स्पर्शा भवन्ति ॥ ३१ ॥

उक्तः स्पर्शः ॥

वेदना वक्तव्या। तत्र यः पूर्वं षड्विधः स्पर्श उक्तः—

**तज्जाः षड्वेदनाः,**

चक्षुःसंस्पर्शजा वेदना, श्रोत्र-घ्राण-जिह्वा-काय-मनःसंस्पर्शजा वेदनाः।

तासां पुनः—

**पञ्च कायिकी चैतसी परा।**

चक्षुःश्रोत्रघ्राणजिह्वाकायसंस्पर्शजाः पञ्च वेदनाः कायिकी वेदनेत्युच्यते; रूपीन्द्रियाश्रितत्वात्। मनःसंस्पर्शजा पुनर्वेदना चैतसिकीत्युच्यते; चित्तमात्राश्रितत्वात्।

अथ किं स्पर्शादुत्तरकालं वेदना भवति, आहोस्वित् समानकालम्?

समानकालमिति वैभाषिकाः; अन्योन्यं सहभूहेतुत्वात्।

कथं सहोत्पन्नयोर्जन्यजनकभावः सिध्यति?

कथं च न सिध्यति?

असामर्थ्यात्। जाते हि धर्मे धर्मस्य नास्ति सामर्थ्यं प्रतिज्ञाऽविशिष्टम्?

---

(पा० सू० ३.३.१६९) इत्यस्मिन्नर्थे कृत्य इति दर्शयति।

*त एते षोडशेति*। चक्षुःसंस्पर्शो यावन्मनःसंस्पर्श इति षट्। पुनः—प्रतिघसंस्पर्शः, अधिवचनसंस्पर्शः, विद्यासंस्पर्शः, अविद्यासंस्पर्शः, नैवविद्यानाविद्यासंस्पर्शः, व्यापादसंस्पर्शः, अनुनयसंस्पर्शः, सुखवेदनीयः, दुःखवेदनीयः, अदुःखासुखवेदनीयश्च स्पर्श इति षोडश ॥ ३१ ॥

*उक्तः स्पर्शः। वेदना वक्तव्येति*। ननु च वेदनाप्युक्ता "वेदनानुभवः" (अभि० १.१४) इति। अन्यथोक्तमप्युच्यते, न तर्हीदं वक्तव्यम्—यच्चोक्तं यच्च वक्ष्यमाणम्, तन्न वक्ष्यामीति। "उक्तं च वक्ष्यते चान्यत्" इति (अभि० को० ३ ३६) वचनात्? प्रकारनिर्देशाददोषः। पूर्वं लक्षणमुक्तम्, इदानीं प्रकार इति।

*जाते हीति विस्तरः*। जाते हि जन्ये *धर्मे धर्मस्य* जनकस्य *नास्ति सामर्थ्यं* सहोत्पन्नत्वात्। *प्रतिज्ञाविशिष्टमिति*। प्रतिज्ञाया अविशिष्टमेतत् साधनमित्यर्थः,

यदेव हीदं सहोत्पन्नयोर्जन्यजनकभावो नास्तीति तदेवेदं जाते धर्मे धर्मस्य नास्तीति ।

अन्योन्यजनकप्रसङ्गात्तर्हि ?

इष्टत्वाददोषः । इष्टमेव हि सहभूहेतोरन्योन्यफलत्वम् ।

इष्टमिदम्, सूत्रे त्वनिष्टं स्पर्शवेदनयोरन्योन्यफलत्वम्; "चक्षुःसंस्पर्शं प्रतीत्य उत्पद्यते चक्षुःसंस्पर्शजा वेदना, न तु चक्षुःसंस्पर्शजां वेदनां प्रतीत्योत्पद्यते चक्षुःसंस्पर्शः" इति वचनात् ।

जनकधर्मातिक्रमाच्चायुक्तम् । यो हि धर्मो यस्य धर्मस्य जनकः प्रसिद्धः, स तस्मात् भिन्नकालः प्रसिद्धः । तद्यथा—पूर्वं बीजं पश्चादङ्कुरः, पूर्वं क्षीरं पश्चाद्दधि, पूर्वमभिघातः पश्चाच्छब्दः, पूर्वं मनः पश्चात् मनोविज्ञानमित्येवमादि ।

अन्यथा परम्परापेक्षत्वात् कार्यकारणयोः सर्वं वा युगपदुत्पद्यते, न वा कदाचित्; पश्चाद्विशेषाभावात् ।

नहि न सिद्धः कार्यकारणयोः पूर्वापरभावः ।

सहभावोऽपि तु सिद्धः । तद्यथा चक्षुर्विज्ञानादीनां चक्षूरूपादिभिर्भूतभौतिकानां च तत्रापि पूर्वमिन्द्रियार्थौ पश्चाद्विज्ञानम् । पूर्वकाच्च भूतभौतिकसमुदायादुत्तर उत्पद्यत इतीष्यमाणे कः प्रतिषेधः ।

---

यदि प्रतिज्ञाविशिष्टं साधनं नेष्यते । *अन्योन्यजनकप्रसङ्गात्तर्हि*। किम्? कथं सहोत्पन्नयोर्जन्यजनकभावः सिध्यतीत्यधिकृतम् । अनेन प्रतिज्ञादोष उद्ग्राह्यते—अस्ति सहोत्पन्नयोर्जन्यजनकभाव इति प्रतिज्ञा पूर्वाभ्युपगमविरोधिनीति ।

*इष्टत्वाददोष* इति । पूर्वाभ्युपगमं दर्शयति ।

*इष्टमिदं सूत्रे त्वनिष्टमिति* । इष्टमिदमभिधर्मे—"सहभूर्ये मिथःफलाः" ( अभि० को० २.५० ) इति । सूत्रे त्वनिष्टम् । तत् प्रतिपादयन्नाह—*चक्षुःसंस्पर्शं प्रतीत्योत्पद्यते चक्षुःसंस्पर्शजा वेदनेति* । सूत्रप्रामाण्येनान्योन्यफलत्वं भङ्क्त्वा सहोत्पन्नकार्यकारणभावविभंक्षया आह—*जनकधर्मातिक्रमाच्चायुक्तमिति*। जनकस्यायं धर्मः प्रसिद्धो या भिन्नकालता, *तद्यथा पूर्वं बीजं पश्चादङ्कुर* इत्यादि ।

*तत्रापि पूर्वमिन्द्रियार्थौ पश्चाद् विज्ञानमिति* । प्रथमक्षणोत्पन्नाविन्द्रियार्थौ, विज्ञानं तु द्वितीये क्षण इति ।

यथा तर्हि च्छायाङ्कुरयोरेवं स्पर्शवेदनयोपीति वैभाषिकाः ।

स्पर्शादुत्तरकालं वेदनेत्यपरे । इन्द्रियार्थौ हि पूर्वान्तो विज्ञानम्। सोऽसौ त्रयाणां सन्निपातः स्पर्शः, स्पर्शप्रत्ययात् पश्चाद्वेदना तृतीये[1] क्षण[1] इति ।

एवं तर्हि न सर्वत्र विज्ञाने वेदना प्राप्नोति, न च सर्वविज्ञानं[2] स्पर्शः ?

नैष दोषः; पूर्वस्पर्शहेतुका ह्युत्तरत्र स्पर्शे वेदना, सर्वे च स्पर्शाः सवेदनकाः[3], सर्वं च विज्ञानं स्पर्श इति ।

इदमयुक्तं वर्त्तते ।

किमत्रायुक्तम् ?

यदुत भिन्नालम्बनयोरपि स्पर्शवेदनयोः पूर्वस्पर्शहेतुकोत्तरत्र[4] वेदनेति ।

कथं हि नामान्यजातीयालम्बनस्पर्शसम्भूता वेदनाऽन्यालम्बना भविष्यति ?

---

*यथा तर्हि छायांकुरयोरिति* । किम् ? सहोत्पन्नयोर्जन्यजनकभावः । उत्पन्न एव ह्यङ्कुरश्छायां जनयति । न प्रथमे क्षणेऽङ्कुरो निश्छायो भवति, द्वितीये सच्छाय इति ।

*एवं स्पर्शवेदनयोरपीति* । अनयोरपि छायाङ्कुरयोः पूर्वसामग्रीहेतुरिति शक्यं वक्तुम् । *सहभूहेतुनिर्देशे* त्वयमर्थं उक्त इति न पुनरुच्यते ।

*स्पर्शादुत्तरकालं वेदनेत्यपर* इति । *भदन्तश्रीलाभः* । *सोऽसौ त्रयाणां सन्निपातः स्पर्श* इति । योऽयं जनकजनितभावः । *वेदना तृतीये क्षणे* इति । इन्द्रियार्थक्षणः प्रथमः, विज्ञानोत्पत्तिक्षणो द्वितीयः, वेदनोत्पत्तिक्षणस्तृतीय इति । *न सर्वत्र विज्ञाने वेदना प्राप्नोतीति* । विज्ञानक्षणे द्वितीये वेदनाया अभावात् । *न च सर्वविज्ञानं स्पर्शः* । वेदनाक्षणे तृतीये विज्ञानं न स्पर्शः । पूर्वद्वितीयक्षणयोः स्पर्श एव विधीयते । *पूर्वस्पर्शहेतुका ह्युत्तरत्र स्पर्शे वेदना* । योऽयमिदानीं द्वितीयः क्षणः स्पर्शभावेनोक्तः, तत्र पूर्वस्पर्शहेतुका प्रथमक्षणविज्ञानहेतुका वेदनोत्पद्यते, तत्स्पर्शपूर्विकाप्यन्यस्मिन्नित्येवं सर्वत्र विज्ञाने वेदना प्राप्नोति ।

*सर्वं च विज्ञानं स्पर्श* इति । ते च स्पर्शाः सवेदनका इति ।

*भिन्नालम्बयोरिति* विस्तरः । भिन्नमालम्बनमनयोस्तौ भिन्नालम्बनौ । पूर्वस्य रूपमालम्बनम्, उत्तरस्य शब्दः । तयोर्भिन्नालम्बनयोः *पूर्वस्पर्शहेतुका* रूपालम्बनस्पर्शहेतुका उत्तरत्र स्पर्शे शब्दालम्बने यद् वेदनोत्पद्यते, इत्येतदयुक्तम् । *कथं हि नामेति* दोषमाविष्करोति । *अन्यजातीयालम्ब .स्पर्शसम्* ।

---

१–१. तृतीयक्षणे—का० । २. सर्वं विज्ञानं—का० ।

३. सर्ववेदनकाः—का० । ४. ०हेतुकोत्तरस्य—का०

**येन वा चित्तेन सम्प्रयुक्ता ततो भिन्नालम्बनेति ।**

**अस्तु तर्हि तस्मिन् काले स्पर्शभूतं विज्ञानमवेदनकम् । तस्माच्च यत् पूर्वं विज्ञानं सवेदनकं तत्र स्पर्शः; प्रत्ययवैधुर्यादित्येवं सति को दोषः ?**

**महाभूमिकनियमो भिद्यते—"सर्वत्र चित्ते दशमहाभूमिकाः" (      ) इति।**

**क्व चैष नियमः सिद्धः ? शास्त्रे ।**

---

रूपप्रकारलम्बनात् स्पर्शात् सम्भूता वेदना *अन्यालम्बना भविष्यति* । शब्दालम्बना भविष्यति। विधुरकारणत्वात् कार्यस्यासम्भावना। यदा हि रूपालम्बनात् स्पर्शात् सम्भूता वेदना रूपालम्बनेनैव वेदना भविष्यति, तदा पूर्वस्पर्शहेतुकोत्तरत्र स्पर्शे वेदनेति युक्तम् । यदा तु रूपालम्बनात् स्पर्शात् शब्दालम्बना वेदनोत्पद्यते, तदा *कथमेतद्योक्ष्यते* । कारणानुरूपं हि लोके कार्यं दृश्यते ।

*अथ मतम्*—रूपालम्बनात् स्पर्शात् सम्भूता वेदना शब्दालम्बनस्पर्शसम्प्रयुक्तापि रूपालम्बना भवतीति ? अत इदमाह—*येन वा चित्तेन सम्प्रयुक्ता ततो भिन्नालम्बनेति* । ततः शब्दालम्बनाच्चित्ताद्भिन्नालम्बना यत उत्पन्ना रूपालम्बना, तेन समालम्बनेत्यर्थः । कथं चासौ तेन सम्प्रयुक्तेत्युच्यते ? समं प्रयुक्ता हि सम्प्रयुक्ता । यद्यभिन्नाश्रयत्वात्, कथं श्रोत्राश्रयोत्पन्ना सती रूपालम्बना भविष्यति ? कथं न भविष्यति ? चित्तचैत्तानामाश्रयेणैकविषयप्रवृत्तत्वात् । तस्मादन्यतरालम्बनत्वेऽपि वेदनाया दोषः । स दोषः प्रदर्श्यते—यदि तावद् रूपालम्बनात् स्पर्शादुत्पन्ना वेदना शब्दाद्यालम्बनान्तरमालम्ब्यते, स रूपालम्बनः स्पर्शः सुखवेदनीयो यावद् दुःखासुखवेदनीय इति न प्राप्नोति । एकालम्बनस्य तु वेदनया तथा निर्देशो युक्त इति ।

*अस्तु तर्हीति* विस्तरः । यद्येवं दोषः, अस्तु तर्हि *तस्मिन् काले* । कस्मिन् काले ? शब्दालम्बनकाले । *स्पर्शभूतं विज्ञानमवेदनकम्* । *तस्माच्च* शब्दालम्बनाद् *यत् पूर्वं विज्ञानं सवेदनकं तत्र स्पर्शः* । एवं हि निर्दोषं भवतीति । अन्यथा हि यदि पूर्वोत्पन्नं सवेदनकं विज्ञानं स्पर्शः स्यात्, तदेवं स्पर्शप्रत्यया वेदनेति यथोक्तो दोषः स्यात् । किं पुनः कारणम्—किञ्चिदविज्ञानमवेदनकम्, किञ्चिच्च न स्पर्शः ? *प्रत्ययवैधुर्यात्* । विधुरा हि प्रत्यया विप्रतिबन्धेनावस्थिताः । न हि सर्वः समनन्तरप्रत्ययो वेदनाप्रत्ययं स्पर्शभूतं विज्ञानं जनयितुं समर्थ इति । तदेवं तस्य भिन्नालम्बनं विज्ञानमेकान्तेनावेदनकम्, तदुत्पादकं चास्पर्शभूतम् । यदि तु रूपालम्बनाच्चक्षुर्विज्ञानादनन्तरं रूपालम्बनमेव चक्षुर्विज्ञानमेवमुत्पद्यते—मनोविज्ञानं तत्सवेदनकं पूर्वोत्पन्नं स्पर्श इति । *एवं सतीति* । *महाभूमिकनियमो भिद्यत* इति । स्पर्शवेदनयोः पर्यायेण नियमात् ।

सूत्रप्रमाणका वयम्, न शास्त्रप्रमाणकाः।

उक्तं हि भगवता—　　　　　　　　(　　　) इति।

न वा एष महाभूमिकार्थः—सर्वत्र चित्ते दश महाभूमिकाः सम्भवन्तीति।

कस्तर्हि महाभूमिकार्थः?

तिस्रो भूमयः—सवितर्का सविचारा भूमिः, अवितर्का विचारमात्रा, अवितर्काऽविचारा भूमिः। पुनस्तिस्रः—कुशला भूमिः, अकुशला, अव्याकृता भूमिः। पुनस्तिस्रः—शैक्षी भूमिः, अशैक्षी, नैवशैक्षीनाशैक्षी भूमिः। तद्य एतस्यां सर्वस्यां भूमौ भवन्ति ते महाभूमिकाः, ये कुशलायामेव भूमौ[1] ते कुशलमहाभूमिकाः, ये क्लिष्टायामेव ते क्लेशमहाभूमिकाः।

ते पुनर्यथासम्भवं पर्यायेण, न तु सर्वे युगपदित्यपरे।

---

*तिस्रो भूमय* इति। *सवितर्का सविचारा* कामधातुः प्रथमं च ध्यानम्। *अवितर्का विचारमात्रा* ध्यानान्तरम्। *अवितर्का अविचारा* द्वितीयाद्ध्यानात् प्रभृति यावद्भवाग्रम्। *कुशला भूमिः* कुशला धर्माः। *एवमकुशला अव्याकृताः*। *शैक्षी भूमिः* शैक्षस्यानास्रवा धर्माः। *अशैक्षी* अशैक्षस्यानास्रवा धर्माः। *नैवशैक्षीनाशैक्षी* भूमिः सास्रवा धर्माः। असंस्कृता इह नोच्यन्ते, चैत्तसम्बन्धात्। *तद् य एतस्यामिति* विस्तरः। *तदिति* वाक्योपन्यासे। *य* इति ये चैतसिकाः। *एतस्यां सर्वस्यां भूमाविति*। सवितर्कसविचारायां भूमौ, यावन्नैवशैक्षीनाशैक्ष्यां भूमौ। *ते महाभूमिकाः*। वेदनाचेतनादयो यथोक्ताः। *ये कुशलायामेव भूमौ ते कुशलमहाभूमिकाः*। श्रद्धादयः। *ये क्लिष्टायामेव ते क्लेशमहाभूमिकाः*। अविद्यादयो यथोक्ता एव।

*ते पुनर्यथासम्भवमिति* विस्तरः। ते पुनर्महाभूमिकादयो ये यस्यां सम्भवन्ति ते तस्यां *पर्यायेण*। *न तु सर्वे युगपदित्यपरे*। तद् यथा वेदना सर्वासु भूमिषु भवन्त्यपि न युगपत् संज्ञाचेतनास्पर्शमनस्कारादिभिर्भवति, तथा स्पर्शो वेदनादिभिः। यथा कुशलायां वितर्कादय इत्येवमादिकम्।

अपरे पुनरेवं व्याचक्षते—यथा पञ्चस्कन्धके लिखितं तथेदं ग्रहीतव्यमिति। तद्यथा—"छन्दः कतमः, अभिप्रेतवस्तुन्यभिलाषः, अनभिप्रेते नास्ति छन्द इत्यभिप्रायः। अधिमोक्षः कतमः? निश्चिते वस्तुनि तथैवावधारणम्। स्मृतिः कतमा? संस्तुते वस्तुन्यसम्प्रमोषश्चेतसोऽभिलपनता। समाधिः कतमः?

---

१. का० पुस्तके नास्ति।

अकुशलमहाभूमिकास्तु पाठप्रसङ्गेनासंहिताः[1] इदानीम् । पूर्वं न पठ्यन्ते स्म ।

यदि तर्हि स्पर्शादुत्तरकालं वेदना, सूत्रं परिहार्यम्—"चक्षुः प्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानं त्रयाणां सन्निपातः स्पर्शः सहजाता वेदना संज्ञा चेतना" (            ) इति ।

सहजाता इत्युच्यन्ते, न स्पर्शसहजाता इति किमत्र परिहार्यम् ! समनन्तरेऽपि चायं सहशब्दो दृष्टः, तद्यथा—"मैत्रीसहगतं स्मृतिसम्बोध्यङ्गं भावयति" (            ) इत्यज्ञापकमेतत् ।

यत्तर्हि सूत्र उक्तम्—"या च वेदना या च संज्ञा या च चेतना यच्च विज्ञानं संसृष्टा इमे धर्मा नासंसृष्टाः" इत्यतो नास्ति वेदनाभिरसंसृष्टं विज्ञानम् ?

सम्प्रधार्यं तावदेतत्—एक एष संसृष्टार्थः ? तत्र हि सूत्र एवमुक्तम्—"यद्वेदयते तच्चेतयते, यच्चेतयते तत्सम्प्रजानीते, यत्सम्प्रजानीते तद्विजानाति"

---

उपपरीक्ष्ये वस्तुनि चित्तस्यैकाग्रता । प्रज्ञा कतमा ? तत्रैव प्रविचयः, योगायोगविहितोऽन्यथा च"—इत्येवमादिः *पञ्चस्कन्धकग्रन्थो* द्रष्टव्यः । तत्र ह्युक्तम्—"पञ्च सर्वत्रगा वेदनासंज्ञास्पर्शमनस्कारचेतनाः । पञ्च प्रतिनियतविषयाश्छन्दाधिमोक्षस्मृतिसमाधिप्रज्ञाः[2]" इत्येवमादि । *अकुशलमहाभूमिकास्तु पाठप्रसङ्गेनासंहिता* इति । सूत्रादिषु पाठात् । कुशलमकुशलमव्याकृतमित्येवं पाठप्रसङ्गेनासंहिताः, अध्यारोपिताः पश्चादित्यर्थः । *पूर्वं न पठ्यन्ते स्म । प्रकरणपादे* महाभूमिकाः, कुशलमहाभूमिकाः, क्लेशकुशलमहाभूमिकाः, परीत्तक्लेशमहाभूमिकाश्चेति चतुर्विधाः पठ्यन्ते ।

*सहजाता इत्युच्यन्ते, न स्पर्शसहजाता* इति । अविशेषत्वादेते वेदनादयः परस्परसहजाताः । न तु स्पर्शेनेत्यर्थपरिग्रहेण परिहर्तव्यं सूत्रमित्यर्थः । *मैत्रीसहगतमिति* । अयं सहशब्दो नावश्यं युगपद्भावे, *समनन्तरेऽपि दृष्टः* । न हि मैत्र्याः स्मृतिसम्बोध्यङ्गस्य च समवधानमस्ति; मैत्र्या एकान्तसास्रवत्वात् । स्मृतिसम्बोध्यङ्गस्य चैकान्तानास्रवत्वात् । तस्मा*दज्ञापकमेतत्* ।

*संसृष्टा* इति । सहोत्पन्ना इत्यभिप्रायः ।

*तत्र हि सूत्र* इति । यत्रैवोक्तम् । *या वेदना या चेतना या च संज्ञेति*

---

१. ०नासञ्जिताः—का० । २. ०विषयाया०—मुद्रितः पाठः ।

इति । तन्न विज्ञायते—किं तावदयमेषामालम्बननियम उक्तः, उताहो क्षणनियम इति ।

आयुरूष्मणोः सहभाव्ये[1] संसृष्टवचनात् सिद्धः क्षणनियमः । यच्चापि सूत्र उक्तम्—"त्रयाणां सन्निपातः स्पर्शः" इति, तत् कथं विज्ञानं चास्ति, न च त्रयाणां सन्निपातो न च स्पर्श इति । तस्मादवश्यं सर्वत्र विज्ञाने स्पर्शः, स्पर्शसहजा च वेदनैष्टव्या । अलमतिप्रसङ्गिन्या कथया । प्रकृतमेवानुक्रम्यताम् ॥

उक्ता समासेन चैतसिकी वेदना ॥

**पुनश्चाष्टादशविधा सा मनोपविचारतः । ३२ ॥**

सैव चैतसिकी वेदना पुनरष्टादश मनोपविचारव्यवस्थानादष्टादशधा भिद्यते ।

पुनः सन्धिकरणं चात्र द्रष्टव्यम् ।

---

विस्तरेण । तत्र सूत्र इत्यर्थः । *तन्न विज्ञायत* इति विस्तरः । *किं तावदयमेषां* वेदनादीन*ामालम्बननियमः* । आलम्बने नियमः—यदेवालम्बनं वेदयते, तदेव चेतयते यावद्विज्ञानं *विजानातीति । उताहो क्षणनियमः*—यस्मिन्नेव क्षणे वेदयते तस्मिन्नेव यावद् विजानातीति । वयं ब्रूमः—आलम्बननियमोऽयमिति । तस्मान्न सूत्रविरोध इत्यभिप्रायः ।

*आचार्य* आह—तत्रैव सूत्रे *आयुरूष्मणोः सहभाव्ये संसृष्टवचनात् सिद्धः क्षणनियम* इति । आयुरूष्मा च संसृष्टौ, इमौ धर्मौ न विसंसृष्टावित्यायुरूष्मणोः सहोत्पन्नतोक्ता भवति; तयोरनालम्बनत्वात् । तदेवं साधितं भवति—अवश्यं सहोत्पन्नानि वेदनासंज्ञाचेतनाविज्ञानानि; तत्र सूत्रे संसृष्टवचनेनोक्तत्वात्, आयुरूष्मवदिति । *तत् कथमिति* विस्तरः । तत् कथं *विज्ञानं चास्ति । न च त्रयाणा*मिन्द्रियविषयविज्ञानानां *सन्निपातः*। तस्मादवश्यं विज्ञानास्तित्वे सन्निपातोऽभ्युपगन्तव्यः । सन्निपातश्च ते स्पर्श इति । तेनेदं ते विरुध्यते *न सर्वविज्ञानं स्पर्श* इति । *सन्निपातो वा न स्पर्श इति ।*

*पुनः सन्धिकरणं चात्र द्रष्टव्यमिति ।* "पूर्वत्रासिद्धम्" (पा० सू० ७.२.१) इति सकारलोपस्यासिद्धत्वाद् गुणो न प्राप्नोति ? परिहारस्तु, ईषदर्थेऽयं नञ् द्रष्टव्यः; ईषत् सिद्धमसिद्धमित्यतः सिद्धत्वात् सकारलोपस्य गुणो भवति, 'सैष दाशरथी रामः' इति यथा ।

---

१. साहभाव्ये—का० ।

अष्टादश मनोपविचाराः कतमे ? षट् सौमनस्योपविचाराः, षट् दौर्मनस्योपविचाराः, षडुपेक्षोपविचाराः ।

कथमेषां व्यवस्थानम् ? यदि स्वभावतः, त्रयो भविष्यन्ति—सौमनस्य-दौर्मनस्योपेक्षाविचाराः । अथ सम्प्रयोगतः, एको भविष्यति; सर्वेषां मनःसम्प्रयुक्तत्वात् । अथालम्बनतः, षड् भविष्यन्ति; रूपादिषड्विषयालम्बनत्वात् ?

त्रिभिरपि स्थापना ।

तेषां पञ्चदश रूपाद्युपविचारा असम्भिन्नालम्बनाः; प्रतिनियतरूपाद्यालम्बनत्वात् । त्रयो धर्मोपविचारा उभयथा ।

मनोपविचारा इति कोऽर्थः ? मनः किल प्रतीत्यैते सौमनस्यादयो विषयानुपविचरन्तीति । विषयेषु वा मन उपविचारयन्तीत्यपरे । वेदनावशेन मनसो विषयेषु पुनः पुनर्विचारणात्[1] ।

---

षट् *सौमनस्योपविचारा* इति विस्तरः । चक्षुषा रूपाणि दृष्ट्वा सौमनस्यस्थानीयानि रूपाण्युपविचरति, श्रोत्रेण शब्दान् श्रुत्वा सौमनस्यस्थानीयान् शब्दानुपविचरति, एवं यावन्मनसा धर्मान् विज्ञाय सौमनस्यस्थानीयान् धर्मान् उपविचरति । एवं चक्षुषा रूपाणि दृष्ट्वा दौर्मनस्यस्थानीयान्युपेक्षास्थानीयानि चेति विस्तरेण योज्यम् । *त्रयो भविष्यन्तीति* । सौमनस्यदौर्मनस्योपेक्षास्वभावत्रैविध्यात् । *एक* इति । मनोविज्ञानमात्रसम्प्रयोगात् । *षडिति* । रूपादिविषयषट्कभेदात् । *त्रिभिरपि स्थापनेति* । यद्वेदनाद्रव्यं मनोविज्ञानमात्रसम्प्रयुक्तमेकम्, तत् सौमनस्यादिस्वभावत्रयभेदात् त्रिधा भिद्यते, तत् पुनः प्रत्येकं विषयषट्कभेदात् षोढा भिद्यते इत्यष्टादश भवन्ति । स्वभावव्यवस्थापनायामसत्यां मनोपविचारा इत्येव न स्याद्, अष्टादशव्यतिरिक्ताश्च स्युः। रूपादिविषयषट्कालम्बनव्यवस्थापनायामसत्यां प्रत्येकं सौमनस्यादिषोढाभेदेनाष्टादश मनोपविचारा इति न स्यात् ; तस्मात् त्रिभिरपि व्यवस्थापनेति सिद्धम् ।

*असम्भिन्नालम्बना* इति । असम्मिश्रालम्बनाः । *त्रयो धर्मोपविचारा उभयथेति* । ये रूपादिविषयपञ्चकव्यतिरिक्तधर्मालम्बनास्ते धर्मोपविचारा असम्भिन्नालम्बनाः । ये तु रूपादीनां षण्णां विषयाणां द्वौ त्रीन् यावत् षडपि विषयानालम्बन्ते ते सम्भिन्नालम्बनाः ।

*मनः किलेति* । किलशब्दः परमतद्योतकः । मनः किल *प्रतीत्याश्रित्य विषयानुपविचरन्ति* आलम्बन्त इत्यर्थः । *उपविचारयन्तीति* प्रवर्तयन्ति । कथम् ? इत्याह—वेदनावशेन मनसो *विषयेषु* पुनः पुनर्विचारणादिति । पुनःपुनरित्युपशब्दस्यार्थः ।

---

१. ०विचरणात्—का० ।

१. कस्मात् कायिकी वेदना न मनोपविचारः । नैव ह्यसौ मन एवाश्रिता, नाप्युपविचारिका, अविकल्पकत्वादित्ययोगः ?

२. तृतीयध्यानसुखस्य कस्मान्मनोपविचारेष्वग्रहणम् । आदितः किल कामधातौ मनोभूमिकसुखेन्द्रियाभावात् तत्प्रतिद्वन्द्वेन दुःखोपविचाराभावाच्चेति ?

३. यदि मनोभूमिका एवैते, यत्तर्हि सूत्र उक्तम्—"चक्षुषा रूपाणि दृष्ट्वा सौमनस्यस्थानीयानि रूपाण्युपविचरन्तीत्येवमादिः, कथम् ?

पञ्चविज्ञानकायाभिनिर्हृतत्वमभिसन्धायैतदुक्तम्—"मनोभूमिकास्त्वेते[1] । तद्यथा—अशुभा चक्षुर्विज्ञानाभिनिर्हृता च मनोभूमिका च" इति । अपि तु "दृष्ट्वा यावत् स्पृष्ट्वा" इति वचनात् अचोद्यमेतत् । योऽप्यदृष्ट्वा[2] यावदस्पृष्ट्वोपविचरति[3] तेऽपि मनोपविचाराः । इतरथा हि कामधातौ रूपधात्वालम्बना

*नाप्युपविचारिकेति* । असन्तीरिकेत्यर्थः । *अयोग* इत्यसम्भवः ।

यदि मन एवाश्रिता वेदना मनोपविचारः, तृतीये ध्याने यत् सुखं तन्मन एवाश्रितम्, न चक्षुरिन्द्रियाद्याश्रितमिति तस्य *कस्मान्मनोपविचारेष्वग्रहणम्* । *आदितः किलेति* विस्तरः । आदावादितः । किलेति परमते । *कामधातौ मनोभूमिकं सुखं नास्ति,* तस्मान्न तन्मनोपविचारः । अतः पश्चादपि तृतीये ध्याने सुखेन्द्रियस्य मनआश्रितत्वेऽपि मनोपविचारेष्वग्रहणम् । यथा चास्योपविचारप्रतिद्वन्द्वेन दौर्मनस्योपविचारः, नैवं सुखोपविचारस्य *प्रतिद्वन्द्वेन दुःखोपविचारो*ऽस्ति; मनोविज्ञानाश्रितत्वाद् दुःखस्य । अतः सर्वत्र तत् सुखं न मनोपविचार इति ।

*सौमनस्यस्थानीयानीति* । सौमनस्यजनकानि । पञ्चेति विस्तरः। पञ्चभिर्विज्ञानकायैरभिनिर्हृतत्वमुत्पादितत्वमभिसन्धाय चेतसिकृत्वा *एतदुक्तं चक्षुषा रूपाणीति* विस्तरेण । *मनोभूमिकास्त्वेते,* तद् यथा—*अशुभा चक्षुर्विज्ञानाभिनिर्हृता च,* विलीनकादिदर्शनात् । *मनोभूमिका च* । समाहितत्वात् । *अपि त्विति* । चक्षुषा रूपाणि *दृष्ट्वा यावत्* कायेन स्प्रष्टव्यानि *स्पृष्ट्वेति वचनादचोद्यमेतत्* । यदि चक्षुषा रूपाणि पश्यन् सौमनस्यस्थानीयानि रूपाण्युपविचरतीत्युक्तं स्यात्, यावत् कायेन स्प्रष्टव्यानि स्पृशन्निति स्याच्चोद्यम् । न त्वेवमुक्तमित्यचोद्यमेवैतत् । *योऽप्यदृष्ट्वेति* विस्तरः । योऽपि श्रुत्वा परतो मनसोपविचरत्यालम्बते, तेऽपि तस्य *मनोपविचाराः* । *इतरथा हीति* विस्तरः । *रूपधात्वालम्बना* रूपाद्युप-

१. ०का ह्येते—का० । २. येऽप्य०—का० ।

३. ०विचरन्ति—का० ।

रूपाद्युपविचारा न स्युः, कामधात्वालम्बनाश्च रूपधातौ गन्धरसस्प्रष्टव्योपविचाराः। यथा तु व्यक्ततरं तथोक्तम्—योऽपि रूपाणि दृष्ट्वा शब्दानुपविचरति सोऽपि मनोपविचारः। यथा त्वनाकुलं तथोक्तमिन्द्रियार्थव्यवच्छेदतः[1]।

किमस्ति रूपं यत् सौमनस्यस्थानीयमेव स्यात् यावदुपेक्षास्थानीयमेव ?

**अस्ति सन्तानं नियम्य[2], न त्वालम्बनम् ॥ ३२ ॥**

अथैषां मनोपविचाराणां कति कामप्रतिसंयुक्ताः, तेषां च कति किमालम्बनाः, एवं यावदारूप्यप्रतिसंयुक्ताः वक्तव्याः ? आह—

**कामे स्वालम्बनाः सर्वे**

कामधातौ सर्वेऽष्टादश सन्ति, स एव[3] च तेषां सर्वेषामालम्बनम्। तेषामेव—

---

*विचारा न स्युः।* कामधातूपपन्नेन रूपावचराणां रूपादीनामप्रत्यक्षीकृतत्वात्। *कामधात्वालम्बनाश्च गन्धरसस्प्रष्टव्योपविचारा* रूपधातूपपन्नस्य *न स्युः;* तस्य गन्धादीनामविषयत्वात्। *यथा तु व्यक्ततरं तथोक्तमिति।* प्रत्यक्षीकृतरूपाद्यालम्बनानां मनोपविचाराणां व्यक्ततरत्वात्। *योऽपि रूपाणि दृष्ट्वा* तत्सहचरान् *शब्दानुपविचरति सोऽपि* तस्य *मनोपविचारः। यथा त्वनाकुलं तथोक्तम्।* कथं चानाकुलम् ? इत्याह—*इन्द्रियार्थव्यवच्छेदत* इति। चक्षुरादीन्द्रियव्यवच्छेदेन, रूपाद्यर्थव्यवच्छेदेन चोक्तमिति; अन्यथा ह्याकुलं स्यात्—चक्षुषा रूपाणि दृष्ट्वा सौमनस्यस्थानीयाञ्छब्दानुपविचरतीत्येवमादि।

*अस्ति सन्तानं नियम्येति* कस्यचित् सत्त्वस्य सन्तानमवेक्ष्य। यदस्य किञ्चित् *सौमनस्यस्थानीयमेव, यावदुपेक्षास्थानीयमेव। न त्वालम्बनम्।* किम् ? नियम्य, किम् कारणम् ? तदेव ह्यालम्बनं कस्यचित् सौमनस्यस्थानीयम्, कस्यचिन्नेति ॥ ३२ ॥

*एवं यावदारूप्यप्रतिसंयुक्ता* इति। कति रूपप्रतिसंयुक्तास्तेषां च कति रूपालम्बनाः, कत्यारूप्यप्रतिसंयुक्तास्तेषां च कति किमालम्बना इति।

*"कामे स्वालम्बनाः सर्वे"* इति। कामे कामावचरा मनोपविचाराः। *सर्वे अष्टादश सन्ति। स एव च* कामधातुस्तेषां *सर्वेषामालम्बनम्।* स्वो धातुरालम्बनमेषामिति स्वालम्बना इति कारिकापदविग्रहः।

---

१. ०र्थस्य व्यव०—का०। २. नियमय्य—का०।

३. का० पुस्तके नास्ति।

रूपी[1] धातुर्द्वादशानामालम्बनम्[1],

तयोरभावात् ।

**त्रयाणामुत्तरः,**

गोचर इति वर्तते । आरूप्यधातुस्त्रयाणां धर्मोपविचाराणामालम्बनम्;
तत्र रूपाद्यभावात् ॥

**उक्ताः कामप्रतिसंयुक्ताः ॥**

रूपप्रतिसंयुक्ता वक्तव्याः ? तत्र तावत्

**ध्यानद्वये द्वादश,**

दौर्मनस्योपविचारानपास्य । ते च द्वादश

**कामगाः ॥ ३३ ॥**

कामान् गच्छन्तीति कामगाः । कामधातुमालम्बन्त इत्यर्थः । दृष्टं हि विषयाणां ग्रहणार्थे गमिप्रयोगः—'कथमेतद् गम्यते ? एवमेतद् गम्यते' इति ॥३३॥

**स्वोऽष्टालम्बनम्,**

स एव रूपधातुस्तेषां स्वः । स्वोऽष्टानां मनोपविचाराणामालम्बनम्, गन्धरसोपविचारांश्चतुरो हित्वा ।

---

"रूपी द्वादशगोचर:" इति । रूपी धातुः कामावचराणां द्वादशानां *मनोपविचाराणां गोचरः । षड्गन्धरसोपविचारानपास्येति* । द्वौ गन्धरसावालम्बनौ सौमनस्योपविचारौ हित्वा, द्वौ गन्धरसालम्बनौ दौर्मनस्योपविचारौ हित्वा, द्वौ तदालम्बनावेव चोपेक्षोपविचारौ हित्वा, द्वौ तदालम्बनावेव चोपेक्षोपविचारौ हित्वेति । कस्मात् ? तत्र रूपधातौ तयोर्गन्धरसयोरभावात् । "विना गन्धरसघ्राणजिह्वाविज्ञानधातुभिः" ( अभि० को० १.३० ) इति वचनात् ।

"*त्रयाणामुत्तरः*" इति । त्रयाणां सौमनस्यदौर्मनस्योपेक्षाधर्मोपविचाराणां कामावचराणामुत्तरो धातुरारूप्यधातुरालम्बनम्, *तत्र रूपाद्यभावात्* ।

"*ध्यानद्वये द्वादश*" इति । दौर्मनस्योपविचाराणां षण्णामभावात् ॥ ३३ ॥

"*स्वोऽष्टालम्बनम्*" इति । अष्टानामालम्बनमष्टालम्बनम् । *गन्धरसोपविचारांश्चतुरो हित्वेति* । सौमनस्योपेक्षोपविचारौ गन्धालम्बनौ द्वौ रसालम्बनौ

---

१-१. रूपधातु०—का० ।

**आरूप्या[1] द्वयोः,**

धर्मोपविचारयोरालम्बनम् ।

**ध्यानद्वये तु षट् ।**

तृतीयचतुर्थयोर्ध्यानयोः षडुपेक्षोपविचारा एव सन्ति, नान्ये ।

तेषां पुनरालम्बनम्—

**कामाः षण्णां,**

कामधातुः षण्णामप्यालम्बनम् ।

**चतुर्णां स्वः,**

रूपधातुश्चतुर्णाम्; तत्र गन्धरसाभावात् ।

**एकस्यालम्बनं परः ॥ ३४ ॥**

आरूप्यधातुरेकस्यैव धर्मोपविचारस्यालम्बनम् ॥ ३४ ॥

उक्ता रूपप्रतिसंयुक्ताः ॥

आरूप्यप्रतिसंयुक्ता इदानीमुच्यन्ते—

**चत्वारोऽरूपिसामन्ते,**

आकाशानन्त्यायतनसामन्तकमत्रारूपिसामन्तकम् । तत्र चत्वारो रूप-शब्द-स्प्रष्टव्य-धर्मोपविचाराः । ते च—

**रूपगाः,**

चतुर्थं हि ध्यानमेषामालम्बनम् । येषां तद् व्यवच्छिन्नालम्बनमस्ति, येषां

---

च द्वौ हित्वेत्यर्थः, तत्र तयोरभावात् ।

"*आरूप्यं द्वयोः*" इति । सौमनस्योपेक्षाधर्मोपविचारयोः । प्रथमद्वितीय-ध्यानभूमिकयोरारूप्यधातुरालम्बनम्; रूपाद्याभावात् । *षडुपेक्षोपविचारा एव सन्ति, नान्य* इति । रूपशब्दगन्धरसस्प्रष्टव्यधर्मालम्बना उपेक्षोपविचारा एव सन्ति; सौमनस्योपविचाराणामपि तृतीये चतुर्थे चाभावात् । गन्धरसालम्बनौ तु तत्र कामावचरगन्धरसालम्बनावित्यवगन्तव्यम् ॥ ३४ ॥

*तत्र चत्वार* इति । आकाशानन्त्यायतनसामन्तकानन्तर्यमार्गस्य चतुर्थध्यानालम्बनत्वात् । तत्र च रूपशब्दस्प्रष्टव्यधर्मसद्भावात् ।

*येषां तद्व्यवच्छिन्नालम्बनमस्तीति* । येषामचार्याणां मतेन तदाकाशानन्त्या-

---

१. आरूप्यो—का० ।

पुनः परिपिण्डितालम्बनम्, तेषां तत्रैक एव सम्मिश्रालम्बनो[1] धर्मोपविचारः ।

**एक ऊर्ध्वगः ।**

एक एव धर्मोपविचारस्तत्रारूप्यधात्वालम्बनः ।

**एको मौले,**

मौले पुनरारूप्ये धर्मोपविचार एवैकोऽस्ति, नान्यः । स चापि—

**स्वविषयः,**

आरूप्यधात्वालम्बन एव। नहि मौलानामारूप्याणामधरो धातुरालम्बनमिति पश्चात् प्रतिवेदयिष्यामि[2] ।

एते च मनोपविचाराः—

**सर्वेऽष्टादश सास्रवाः ।। ३५ ।।**

नास्ति कश्चिदनास्रवः ।

कः कतिभिः समन्वागतः ? कामधातूपपन्नो रूपावचरस्य कुशलस्य चित्तस्यालाभी कामावचरैः सर्वैः प्रथमद्वितीयध्यानभूमिकैरष्टाभिः तृतीयचतुर्थध्यानभूमिकैश्चतुर्भिः क्लिष्टैर्गन्धरसालम्बनान् पर्युदस्य आरूप्यावचरेणैकेन क्लिष्टे-

---

यतनसामन्तकं व्यवच्छिन्नालम्बनम्, पृथक् पृथग्रूपाद्यालम्बनमसमस्तालम्बनमित्यर्थः । औदारिकादिभिराकारैस्तच्चतुर्थध्यानमालम्बत इत्येकेषामाचार्याणां मतम् । *येषामाचार्याणां मतेन परिपिण्डितालम्बनमेव* तदाकाशानन्त्यायतनसामन्तकं चतुर्थध्यानभूमिकस्कन्धपञ्चकालम्बनमिति मतम्, *तेषामाचार्याणां तत्रैक एव सम्मिश्रालम्बनो धर्मोपविचार* इति ।

*"एक ऊर्ध्वगः"* इति । केषां पक्षे ? येषाम् "चत्वारोऽरूपिसामन्ते" इति पक्षः । *न हि मौलानामिति* विस्तरः । *मौलानामारूप्याणामधरो धातुर्नालम्बनमधर*भूमिकं सास्रवं वस्तु नालम्बनमित्यर्थः । *पश्चात् प्रवेदयिष्यामीति* । "न मौलाः कुशलारूप्याः सास्रवाधरगोचराः" ( अभि० को० ८. २१ ) इति ।

*प्रथमेति* विस्तरः । *प्रथमद्वितीयध्यानभूमिकैरष्टाभिः* समन्वागतस्*तृतीयचतुर्थध्यानभूमिकैश्चतुर्भिः* । कतमैः ? इत्याह—*क्लिष्टैः, गन्धरसालम्बनान् पर्युदस्य* । तत्र गन्धरसाभावात् । कथम् ? प्रथमद्वितीयोर्ध्यानयोर्द्वादशोपविचाराः सन्तीत्युक्तम् । सौमनस्योपेक्षोपविचाराणां षड्विषयालम्बनव्यवस्थापनात् । तत्र स्वभूम्या-

---

१. संभिन्ना०—का० । २. प्रतिवेदयिष्यामः—का० ।

नैवालाभी रूपावचरस्य कुशलस्य चित्तस्यावीतरागः सर्वैः कामावचरैः प्रथमध्यानभूमिकैर्दशभिः । चतुर्भिः सौमनस्योपविचारैः क्लिष्टैर्गन्धरसालम्बनावपास्य[1] षड्भिरुपेक्षोपविचारैरनागम्यभूमिकैः । द्वितीयतृतीयचतुर्थध्यानारूप्यजैः[2] पूर्ववत् ।

अनया वर्त्तन्या शेषमनुगन्तव्यम् ।

---

लम्बना रूपशब्दस्प्रष्टव्यधर्मालम्बनाः सौमनस्योपविचाराश्चत्वारः क्लिष्टाः । ये चोपेक्षोपविचाराः क्लिष्टा एव चत्वारः । तैः कामधातूपपन्नो रूपावचरकुशलालाभी समन्वागतः । अधरभूम्युपपन्नो ह्यूर्ध्वभूमिकैः क्लिष्टैः समन्वागतो भवति । न तु विशिष्टैश्चतुर्भिर्गन्धरसालम्बनैः; तेषामक्लिष्टत्वात् । रूपावचरकुशलालाभित्वाच्च । नास्त्यक्लिष्टरूपावचर धर्मलाभ इति न तैः समन्वागतः । तृतीयचतुर्थध्यानभूमिका अपि षडेवोपेक्षोपविचारा उक्ताः । तेषां ये स्वभूम्यालम्बनाः क्लिष्टाः, तैः समन्वागतस्तथा, यौ तु गन्धरसालम्बनौ न तौ क्लिष्टौ । अतः पूर्वोक्तेनैव न्यायेन न ताभ्यां समन्वागतः । *क्लिष्टैर्नैवेति* । नाक्लिष्टेन; कुशलस्याभावात् । *लाभी रूपावचरस्येति* विस्तरः । कामधातूपपन्न एव लाभी *रूपावचरस्य* कुशलस्य चित्तस्यानागम्यसंगृहीतस्या*वीतरागः कामधातोः सर्वैः* कामावचरैरष्टादशभिरपि *समन्वागतः । प्रथमध्यानभूमिकैर्दशभिरि*ति । कथं दशभिः ? इत्याह—*सौमनस्योपविचारैः क्लिष्टैर्गन्धरसालम्बनावपास्ये*ति । सौमनस्योपविचाराः सामन्तकेषु न भवन्ति; सामन्तकानामुपेक्षेन्द्रियसम्प्रयोगित्वात् । अतो मौलसंगृहीतैरेव सौमनस्योपविचारैः क्लिष्टैः स्वभूम्यालम्बनैश्चतुर्भिः समन्वागतः, *न तु गन्धरसालम्बनाभ्याम्*; मौलकुशलालाभेनाक्लिष्टलाभाभावात् । न हि क्लिष्टं ध्यानमधरालम्बनमस्ति । *षड्भिरुपेक्षोपविचारैरनागम्यभूमिकैरिति ।* अत्राविशेषाभिधानादुपेक्षोपविचारैः क्लिष्टैरपि चतुर्भिः समन्वागतः सामन्तकसंगृहीतैः, षड्भिश्चोपेक्षोपविचारैः कुशलैः कामधात्वालम्बनैः स्वभूम्यालम्बनैरपि । *द्वितीयतृतीयचतुर्थध्यानारूप्यजैः पूर्ववदिति ।* कथम् ? स एव धातूपपन्नो लाभी रूपावचरस्य कुशलस्य चित्तस्यावीतरागो द्वितीयध्यानभूमिकैरष्टाभिर्यैरेवालाभी गन्धरसालम्बनानपास्य । तृतीयचतुर्थध्यानभूमिकैश्चतुर्भिः क्लिष्टैरेव गन्धरसालम्बनौ पर्युदस्यारूप्यावचरेणैकेन क्लिष्टेनैव ।

*अनया वर्तन्या* मार्गेण *शेषमनुगन्तव्यम् ।* कथम् ? प्रथमध्यानोपपन्नो द्वितीयध्यानभूमिकस्य कुशलस्य चित्तस्यालाभी प्रथमध्यानभूमिकैः सर्वैः समन्वागतः । द्वितीयध्यानभूमिकैः क्लिष्टैरष्टाभिस्तृतीयचतुर्थध्यानारूप्यजैः पूर्ववत् । लाभी

---

१. लम्बनौ व्युदस्य—का० ।

२. द्वितीयध्यानभूमिकैरष्टाभिः । तृतीयचतुर्थध्यानारूप्यभूमिकैः—का० ।

ध्यानोपपन्नस्तु कामावचरेणैकेनोपेक्षाधर्मोपविचारेण निर्माणचित्तसम्प्रयुक्तेन समन्वागतो वेदितव्यः ।

अपर आह—अस्त्येवं मनोपविचाराणां वैभाषिकीयोऽर्थः, सूत्रार्थस्त्वन्यथा दृश्यते । नहि यो यस्माद्वीतरागः स तदालम्बनमुपविचरतीति युक्तम् । अतः सास्रवा अपि न सर्वे सौमनस्यादयो मनोपविचाराः । किं तर्हि ? सांक्लेशिकाः, यैर्मनो विषयानुपविचरतीति । कथमुपविचरति[1] तत्र[2] ? अनुनीयते वा[3], प्रतिहन्यते वा[4], अप्रतिसंख्याय[4] वोपेक्षते[5] । येषां प्रतिपक्षेण षट् सातता विहारा

द्वितीयध्यानभूमिकस्य कुशलचित्तस्य तद्भूम्यवीतरागः सर्वैः प्रथमध्यानभूमिकैः, द्वितीयध्यानभूमिकैरष्टाभिः । चतुर्भिः सौमनस्योपविचारैः क्लिष्टैः, गन्धरसालम्बनावपास्य । चतुर्भिश्चोपेक्षोपविचारैर्द्वितीयध्यानसामन्तकसंगृहीतः । तृतीयध्यानभूमिकैश्चतुर्भिः क्लिष्टैः, गन्धरसालम्बनौ पर्युदस्य । एवं चतुर्थध्यानभूमिकैरारूप्यावचरेणैकेन क्लिष्टेनैव । द्वितीयध्यानोपपन्नस्तृतीयध्यानभूमिकस्य कुशलस्य चित्तस्यालाभी द्वितीयध्यानभूमिकैः सर्वैः समन्वागतः । तृतीयध्यानभूमिकैश्चतुर्भिः क्लिष्टैः । चतुर्थध्यानारूप्यजैः पूर्ववत् । लाभी तृतीयध्यानभूमिकस्य कुशलचित्तस्य तद्भूम्यवीतरागः सर्वैर्द्वितीयध्यानभूमिकैः । तृतीयध्यानभूमिकैश्चतुर्भिरुपेक्षोपविचारैः क्लिष्टैर्गन्धरसालम्बनावपास्य । चतुर्भिश्चोपेक्षोपविचारैः तृतीयध्यानसामन्तकसंगृहीतैश्चतुर्थध्यानारूप्यजैः पूर्ववत् । एषा दिक् । अनया दिशा तृतीयादिष्वपि ध्यानेषूपपन्नस्य स्वभूम्यूर्ध्वभूमिकैरुपेक्षोपविचारैरेव क्लिष्टैः कुशलैश्च समन्वागमो यथासम्भवं योज्यः ।

*उपेक्षाधर्मोपविचारेणेति ।* *कामावचरस्य* निर्माणचित्तस्योपेक्षासम्प्रयोगित्वात् ।

*अपर आहेति ।* अयमेव शास्त्रकारः । *न हि यो यस्मादिति* विस्तरः । *यः पुद्गलः यस्माद्रूपादेर्वीतरागो न स तद्रूपाद्यालम्बनमुपविचरति ।* कथमुपविचरति ? तत्रानुनीयते वा, प्रतिहन्यते वा, अप्रतिसंख्याय वोपेक्षत इत्येवम् । यदा प्रतिसंख्यायोपेक्षते नाभुजति, तदाकुशलत्वम्, अतोऽप्रतिसंख्यायेति विशेषणम् । *अतः सास्रवा अपि न सर्वे । किं तर्हि ? सांक्लेशिकाः ।* संक्लेशे भवाः सांक्लेशिकाः संक्लेशानुकूलाः । *यैः सौमनस्यादिभिर्मनो विषयानुपविचरति ।* *येषां प्रतिपक्षेण षट् सातता विहारा* इति । येषां सांक्लेशिकानां प्रतिव्यूहेन

१. कथं चोप०—का० ।
२. का० पुस्तके नास्ति ।
३. च—का० ।
४-४. चाप्रति०—का० ।
५. चोपेक्षते—का० ।

भवन्ति—चक्षुषा रूपाणि दृष्ट्वा नैव सुमना भवति न दुर्मनाः, उपेक्षको भवति[1] स्मृतिमान् सम्प्रजानन् एवं यावन्मनसा धर्मान् विज्ञायेति । न ह्यर्हतो लौकिकं नास्ति कुशलं धर्मालम्बनं सौमनस्यम् । यत्तु तत्सांक्लेशिकं मनस उपविचारभूतम्, तस्यैव प्रतिषेधो लक्ष्यत इति ।

---

सततं भवाः सातता विहारा योगविशेषा भवन्ति। ते च षट्। कथम्? इत्याह—*चक्षुषा रूपाणि दृष्ट्वा नैव सुमना भवति*, नानुनीयते। न दुर्मनाः, न प्रतिहन्यते। *उपेक्षको भवति*, नाभुजति। कथं नाभुजति, किमप्रतिसंख्यायाहोस्वित् प्रतिसंख्यायेति ? विशेषयन्नाह—*स्मृतिमान् सम्प्रजानन्निति* । स्मृतिसम्प्रयुक्तया प्रज्ञया प्रतिसमीक्ष्यमाण इत्यर्थः। एवं *यावन्मनसा धर्मान् विज्ञायेति* । विषयषट्कभेदात् षट् सातता इति। *न ह्यर्हत* इति विस्तरः। अर्हतो लौकिकं कुशलं सास्रवं धर्मालम्बनं धर्मायतनालम्बनमधिगमधर्मालम्बनं वा सौमनस्यमस्ति। तस्य हि बुद्धसान्तानिकान् गुणान् सम्मुखीकुर्वतः कुशलं सौमनस्यमुत्पद्यते। न तस्यैष प्रतिषेधो युज्यते। कस्य तर्हि ? यत्तु तत् सांक्लेशिकं मनस *उपविचारभूतम्* । तस्यैष प्रतिषेधो लक्ष्यते। तस्मात् सास्रवा अपि न सर्वे सौमनस्यादय उपविचारा इति ।

अत्र *भदन्तानन्तवर्माह*—अयुक्तमेतत्। कस्मात् ? सूत्रेऽन्यथा निर्देशात्। सूत्रे हि भगवता न सांक्लेशिका एवोपविचारा उक्ताः। एवं ह्याह—"तत्र भिक्षवो य इमे षट् सौमनस्योपविचारास्तानाश्रित्य तान् प्रतिष्ठाय य इमे षट् सौमनस्योपविचारास्तान् प्रजहीत। तत्र भिक्षवो य इमे षडुपेक्षोपविचारास्तानाश्रित्य तान् प्रतिष्ठाय य इमे षडुपेक्षोपविचारास्तान् प्रजहीत। द्वे भिक्षवो उपेक्षे—नानात्वसन्निश्रिता, एकत्वसन्निश्रिता च। तत्र भिक्षवो येयमेकत्वसन्निश्रितोपेक्षा, तामागम्य तामधिष्ठाय येयं नानात्वसन्निश्रितोपेक्षा तां प्रजहीत" ( ) इति। एतस्मात् सूत्राज्ज्ञायते—न सांक्लेशिका एव सौमनस्यादय उपविचारा इति। तदेतज्ज्ञापकम्; प्रहाणवचनेऽपि सांक्लेशिकत्वानिवृत्तेः। न हीतरेणेतरस्य सन्निश्रयप्रहाणवचनेऽपि सत्येषां मनोपविचाराणां सांक्लेशिकत्वं विनिवर्त्तते; अन्यथासम्भवात्। एवमाह—"मानं निश्रित्य मान एव प्रहातव्यः" इति। न तु जातु कश्चिन्मानो व्यवदानिकः सम्भवति। तस्मात् क्लेशानां परस्परविरोधेन वृत्तेर्वृत्त्यन्तरस्य चापेक्षया गुणवत्त्वात्, गुरुलाघवमभिसन्धाय सूत्रे वचनाददोषः। नन्दादयोऽत्र निदर्शनम्।

---

१. विहरति—का० ।

पुनस्त एव सौमनस्यादयः षट्त्रिंशच्छास्तृपदानि भवन्ति गर्धनैष्क्रम्याश्रितभेदेन; तद्भेदस्य शास्त्रा गमितत्वात्। तत्र गर्धाश्रिताः क्लिष्टाः, नैष्क्रम्याश्रिताः कुशलाः।

एवमेतद् वेदनाख्यं भवाङ्गमनेकप्रकारभेदं वेदितव्यम्॥ ३५॥

शेषाण्यङ्गानि पुनर्नोच्यन्ते। किं कारणम्? यस्मात्

**उक्तं च, वक्ष्यते चान्यत्,**

किञ्चिदत्राङ्गमुक्तम्, किञ्चित् पश्चाद् वक्ष्यते। तत्र विज्ञानं तावदुक्तम्—

"विज्ञानं प्रतिविज्ञप्तिर्मनआयतनं च तद्" (अभि० को० १.१६) इति।

षडायतनमप्युक्तम्—

"तद्विज्ञानाश्रया रूपप्रसादाश्चक्षुरादयः" (अभि० को० १.९) इति।

संस्काराः, भवश्च **कर्मकोशस्थाने** व्याख्यास्यन्ते। तृष्णोपादानानि **क्लेशकोशस्थाने**।

स चैष प्रतीत्यसमुत्पादः समासतः क्लेश-कर्म-वस्तूनीति प्रज्ञापितम्[1]।

**अत्र तु क्लेश इष्यते।**

**बीजवन्नागवन्मूलवृक्षवत् तुषवत् तथा॥ ३६॥**

---

अतश्चैतदेवं यदुपेक्षोपविचाराणामुपेक्षोपविचारानेत्र प्रहाणाय सन्निश्रयत्वेन दिदेश भगवान्—'द्वे भिक्षव उपेक्षे' इत्यादिवचनात्।

ननु च *गर्धाश्रितनैष्क्रम्याश्रितभेदेन षट्त्रिंशच्छास्तृपदानी*ति वचनात् सिद्धमेषां सांक्लेशिकव्यवदानिकत्वं *वैभाषिक*मतानुसारात्? अदोषः; *आचार्य*स्यापि मनोपविचारव्यतिरिक्तास्तत्र सौमनस्यादयः सन्ति।

*पुनस्त एवेति* विस्तरः। त एवाष्टादशोपविचाराः केचिद् भवाश्रिता अभिष्वङ्गाश्रिताः, केचिन्नैष्क्रम्याश्रिताः। नैष्क्रम्यम् = निष्क्रमभावः संक्लेशात् संसारदुःखाद् वा। *गर्धनैष्क्रम्याश्रितभेदेन* द्वावष्टादशकौ षट्त्रिंशच्छास्तृपदानि। *तद्भेदस्य* तेषां मनोपविचाराणां द्विधाभेदस्य। *शास्त्रा* बुद्धेन। *गमितत्वाद्* देशितत्वाद् यथासूत्रम्॥ ३५॥

*क्लेशकर्मवस्तूनीति प्रज्ञापितमिति*। "क्लेशास्त्रीणि द्वयं कर्म सप्त वस्तु" (अभि० को० ३. २६) इति वचनात्॥ ३६॥

---

१. प्राक् ज्ञापि०—का०।

किमस्य बीजादिभिः साधर्म्यम् ?

तद्यथा—बीजादङ्कुरकाण्डपत्रादीनां प्रभवो भवति, एवं क्लेशात् क्लेशकर्म-वस्तूनाम् ।

यथा—नागाधिष्ठितं सरो न शुष्यति, एवं क्लेशनागाधिष्ठितं जन्मसरः ।

यथा च—अनपोद्धृतमूला वनस्पतयश्छिन्नाश्छिन्नाः पुनरपि प्ररोहन्ति, एवमनपोद्धृतक्लेशमूला गतयः ।

यथा च—वृक्षाः कालेन कालं पुष्पफलानां प्रसोतारो भवन्ति, एवं क्लेशा अप्यसकृत् क्लेशकर्मवस्तूनां हेतुर्भवन्ति ।

यथा च—तुषावनद्धास्तण्डुलाः प्ररोहणसमर्था भवन्ति न केवलाः, एवं क्लेशमात्रतुषावनद्धं कर्म जन्मान्तरविरोहणे समर्थं भवति न केवलमिति । एवं तावत् क्लेशो बीजादिवद् वेदितव्यः ॥ ३६ ॥

**तुषितण्डुलवत् कर्म तथैवौषधिपुष्पवत् ।**

तुषोऽस्यास्तीति तुषी । तुषस्थानीयः क्लेश उक्तः । इदानीं तुषितण्डुल-स्थानीयं कर्मोच्यते । सन्त्योषधयः फलपाकान्ताः, एवं कर्माणि विपच्य पुनर्विपाकानभिनिर्वर्तयन्ते ।

यथा च पुष्पं फलोत्पत्तावासन्नं कारणम्, एवं कर्माणि विपाकोत्पत्तौ वेदितव्यानि ।

**सिद्धान्नपानवद् वस्तु,**

यथा सिद्धमन्नं पानं च केवलं परिभोगाय कल्प्यते, न पुनर्विरोहाय; एवं विपाकाख्यं वस्तु । न हि पुनर्विपाकाद्विपाकान्तरं जन्मान्तरेषु प्रवर्तते । यदि हि प्रवर्तेत, मोक्षो न स्यात् । न खल्वेष जन्मसन्तान एवं प्रतीत्यसमुत्पद्यमानो भवचतुष्टयं नातिक्रामति, यदुत—अन्तराभवमुपपत्तिभवं पूर्वकालभवं मरणभवं च । ते च व्याख्याताः ।

---

*एवं कर्माणि विपाकोत्पत्ताविति* । आसन्नं कारणमित्यधिकृतम् । क्लेशोऽपि हि कारणं विपाकस्य, तत्तु विप्रकृष्टम् ।

*ते च व्याख्याता* इति । 'मृत्यूपपत्तिभवयोरन्तराभवतीह यः । ( अभि० को० ३.१० ) । "स पुनर्मरणात् पूर्वमुपपत्तिक्षणात् परः" (अभि० को० ३.१३) इति वचनाद् व्याख्याताः ।

तस्मिन् भवचतुष्टये ॥ ३७ ॥

उपपत्तिभवः क्लिष्टः,

एकान्तेन। कतमेन क्लेशेन ?

सर्वक्लेशैः स्वभूमिकैः।

यद्भूमिक उपपत्तिभवस्तद्भूमिकैरेव सर्वक्लेशैः। नहि स क्लेशोऽस्ति येन प्रतिसन्धिबन्धः प्रतिविध्येत इत्याभिधार्मिकाः। क्लेशैरेव तु, न पर्यवस्थानैः स्वतन्त्रैः। यद्यपि साऽवस्था मन्दिका, यस्तु यत्राभीक्ष्णं चरित आसन्नश्च, तस्य तदानीं स एव क्लेश उपतिष्ठते; पूर्वावेधात्।

अन्तराभवप्रतिसन्धिरप्येवमवश्यं क्लिष्टो वेदितव्यः।

त्रिधाऽन्ये,

अन्ये त्रयो भवाः, अन्तराभवादयः कुशलक्लिष्टाव्याकृताः।

अथैषां भवानां कतमः किंप्रतिसंयुक्तः ?

त्रय आरूप्ये,

अन्तराभवं वर्जयित्वा। न ह्यारूप्यधातुः स्थानान्तरपरिच्छिन्नः, यस्य प्राप्त्यर्थमन्तराभवोऽभिनिर्वर्तेत। कामरूपधात्वोरपरिसंख्यानात् सर्व एव चत्वारो भवाः सन्तीत्यनुज्ञापितं भवति।

उक्तो यथा सत्त्वानां प्रतीत्यसमुत्पादो विस्तरेण ॥

---

*न पर्यवस्थानैः स्वतन्त्रैरिति*। ईर्ष्यामात्सर्यक्रोधम्रक्षैः स्वातन्त्र्यमेषाम्। अविद्यानिर्मुक्तैरन्यक्लेशैरसम्प्रयोगात्, अविद्या हि सर्वत्रैव विद्यत इति न तत्संप्रयोगेनास्वातन्त्र्यम्। आह्रीक्यादिभिस्त्वन्यक्लेशसम्प्रयुक्तैः प्रतिसन्धिबन्धो न प्रतिषिध्यते। *यद्यपि सावस्था मन्दिकेति* विस्तरः। यद्यपि सा मरणावस्था मन्दिका; चित्तचैत्तसमुदाचारस्यापटुत्वात्। 'उपेक्षायां च्युतोद्भवौ' (अभि० को० ३.४२) इति वेदनामान्द्यात्। *यस्तु* पुद्गलो *यत्र* क्लेशे*ऽभीक्ष्णं* सततं *चरितः* प्रवृत्तः। *आसन्नश्च* मरणकालस्य पुद्गलस्य। *तदानीं* मरणकाले *स एव क्लेशः समुदाचरति*, समुत्थाय मिथ्यादृष्ट्यादिरपि, *पूर्वावेधात्* पूर्वाक्षेपात्, पूर्वाभ्यासादित्यर्थः। अथ वा—योऽसौ तदानीं क्लेश *उपतिष्ठते*, तस्य पूर्वं फलभावेन परिग्रहावेधात् आक्षेपात् स तदानीमुपतिष्ठत इति।

*कामरूपधात्वोरपरिसंख्यानात्, सर्व एव चत्वारो भवाः सन्तीति*। त्रय एवारूप्येषु, आरूप्येष्वेव च त्रय इत्यवधारणात्। अनयोरितरयोर्धात्वोर्भवचतुष्टयं तु ज्ञातं भवति।

स्पर्शसञ्चेतनाविज्ञा आहाराः सास्रवास्त्रिषु ।

स्पर्शस्त्रिकसन्निपातजः । चेतना, मनस्कर्म, विज्ञानं च सास्रवाण्येवाहाराः त्रिष्वपि धातुषु संविद्यन्ते ।

किमर्थं नानास्रवाणि ? यस्मात् भवापोषणार्थ आहारार्थः । तानि च भवक्षयायोत्थितानीति वैभाषिकाः । अपि तु सूत्र उक्तम्—“चत्वार इमे आहारा भूतानां सत्त्वानां स्थितये यापनायै सम्भवैषिणां चानुग्रहाय” (        ) इति । न चैवमनास्रवा धर्मा इति नाहाराः ।

भूता हि तावत् सत्त्वा उपपन्ना इति विज्ञायन्ते ।

अथ सम्भवैषिणः कतमे ?

मनोमयः सम्भवैषी गन्धर्वश्चान्तराभवः ॥ ४० ॥
निर्वृत्तिश्च,

अन्तराभवो ह्येभिरभिधानैरुक्तो भगवता—१. स एव मनोनिर्जातत्वात् मनोमय उक्तः; शुक्रशोणितादिकं किञ्चिद् बाह्यमनुपादाय भावात् । २. सम्भवैषणशीलत्वात् सम्भवैषी । ३. गन्धर्वणात् गन्धर्वः । ४. उपपत्त्यभिमुखत्वादभिनिर्वृत्तिः । “अव्याबाधमात्मभावमभिनिर्वर्त्य सव्याबाधे लोके उपपद्यते” इति सूत्रपदात् ।

तथा “अस्ति पुद्गलो यस्याभिनिर्वृत्तिसंयोजनं प्रहीणं नोपपत्तिसंयोजनम्”

---

*“स्पर्शसञ्चेतनाविज्ञा”* इति । विज्ञेत्यादन्तमेतत्, प्रज्ञेति यथा । विज्ञानमित्यर्थः । कवडीकाराहारस्त्र्यायतनात्मकत्वात् सास्रव इति सिद्धः । त्रयस्तु स्पर्शादयः सास्रवाः अनास्रवाश्च सम्भवन्तीत्यतस्त एव विशेषिताः ।

*“सास्रवाः”* इति । *न चैवमनास्रवा धर्मा* इति । न चैवं ते भूतानां स्थितये यापनायै सम्भवैषिणां चानुग्रहायेति ।

*मनोनिर्जातत्वादिति* । *“निर्वृत्तिः”* इति । उपपत्त्यभिमुखादधारणम् । अत एव ब्रवीति—*शुक्रशोणितादिकं किञ्चिद् बाह्यमनुपादायभावादिति* । आदिशब्देन कर्दमपुष्पादीनां ग्रहणम् । *उपपत्त्यभिमुखत्वादभिनिर्वृत्तिरिति* । उपपत्त्यभिमुखी निर्वृत्तिर्जन्मास्येत्यभिनिर्वृत्तिः । *सव्याबाधमिति* । सदुःखम् । *अव्याबाधमभिनिर्वर्त्येति* । इदमत्र ज्ञापकम्—भवोऽभिनिर्वृत्तिरिति ।

*तथास्ति पुद्गल इति विस्तरः* । अस्मात् सूत्राच्चतुष्कोटिकादभिनिर्वृत्तिरन्तराभव इति—अस्ति पुद्गलो *यस्याभिनिर्वृत्तिसंयोजनं प्रहीणं नोपपत्तिसंयोजनम्,*

इति सूत्रे चतुःकोटिकात्। प्रथमा कोटिर्द्विधातुवीतरागस्योर्ध्वस्रोतसोऽनागामिनः । द्वितीयान्तरापरिनिर्वायिणः । तृतीयाऽर्हतः[1] । चतुर्थ्येतानाकारान् स्थापयित्वा ।

भूता वाऽर्हन्तः सम्भवैषिण सतृष्णाः ।

अथ कत्याहाराः सत्त्वानां स्थितये ? कति सम्भवैषिणामनुग्रहाय ?

सर्वेऽप्युभयथेति वैभाषिकाः । कवडीकाराहारोऽपि हि तद्रागिणां पुनर्भवाय संवर्तते । उक्तं हि भगवता—"चत्वार इमे आहारा रोगस्य मूलं गण्डस्य शल्यस्य, जरामरणस्य प्रत्ययः" ( ) इति ।

---

अस्ति यस्योपपत्तिसंयोजनं प्रहीणं नाभिनिर्वृत्तिसंयोजनम्, अस्ति यस्याभिनिर्वृत्तिसंयोजनं च प्रहीणमुपपत्तिसंयोजनं च, अस्ति यस्य न वाभिनिर्वृत्तिसंयोजनं प्रहीणं नोपपत्तिसंयोजनम् । *द्विधातुवीतरागस्येति*। काम-रूपधातुवीतरागस्येति । *अनागामिन* इति विशेषणं पृथग्जनानामन्तराभवसंयोजनस्यात्यन्ताप्रहाणात्। "तद्धि भिक्षवः प्रहीणं यदार्यया प्रज्ञया प्रहीणम्" ( ) इति वचनात्। तस्य च पुनर्भावित्वात्। तत्र प्रथमा कोटिर्द्विधातुवीतरागस्यानागामिनः, *द्वितीयान्तरापरिनिर्वायिणः*, *तृतीयार्हतः*, *चतुर्थी* तदन्येषामस्मदादेः पृथग्जनस्यार्यस्य चावीतरागस्य कामधातुवीतरागस्य रूपधातावुपपद्यमानस्य ेति ।

*भूता वार्हन्त* इति । पूर्वमेवोक्तः पर्यायः । भूताः उत्पन्नाः सम्भवैषिणोऽन्तराभविका इति इदानीमयमपरः पर्यायः। भूता अर्हन्तस्त्रैधातुकवीतरागत्वात् । *सम्भवैषिणः सतृष्णाः*, त्रैधातुके सम्भवैषित्वात् ।

*स्थितय* इति । अवस्थापनाय । *अनुग्रहायेति* । पुनर्भवाय, सम्भवायेत्यर्थः

*सर्वेऽप्युभयथेति* । सर्वेऽपि चत्वार आहारा भूतानां सत्त्वानां स्थितयेऽनुग्रहाय च। तथा सम्भवैषिणामिति । युक्तं तावन्मनःसञ्चेतना कर्मस्वभावत्वात् तत्प्रभावितं च विज्ञानं बीजम्; स्पर्शोऽपि तत्सम्प्रयुक्तो भवत्यनुग्रहायेति; कवडीकारस्तु कथं सम्भवैषिणामनुग्रहायेति ? अत उच्यते—*कवडीकारोऽपि हीति* विस्तरः। *तद्रागिणामिति*। कवडीकाररागिणाम्। *पुनर्भवाय संवर्तत* इति अस्य ज्ञापनार्थमिदं सूत्रपदमुपन्यस्यते—*उक्तं हि भगवतेति* विस्तरः । रोगादिभिः पञ्च उपादानस्कन्धा उक्ताः। तस्य *रोगस्य चत्वार आहारा मूलम्* मूलं च हेतुरित्यनेन कवडीकारोऽपि तद्रागिणां पुनर्भवाय संवर्तत इति सिद्धम् अन्ये पुनः *जरामरणस्य प्रत्यय* इत्येतदेवोदाहरणं ब्रुवते । अस्माज्जन्मनः परे

---

1. अर्हताम्—का० ।

मनःसञ्चेतनापि चेह स्थितये दृश्यते। एवं हि **वर्णयन्ति**—दुर्भिक्षाभ्याहतेन किल पित्रा पुत्रकौ सक्तव इति भस्मना भस्त्रां परिपूर्य कीलके आसज्याश्वासितौ। तौ च तां परिकल्पयन्तौ चिरमप्यासितौ केनापि चोद्घाटितायां भस्मेति नैराश्यमापन्नौ व्यापन्नाविति। पुनश्च महासमुद्रे भग्नयानपात्राः पुरुषाः स्थलमिति महान्तं फेनपिण्डं प्रद्रुताः, आमृश्य चैनं निराशा उपरेमुरिति। **सङ्गीतिपर्याये** चोक्तम्—महासमुद्रादौदारिकाः प्राणिनो जलात् स्थलमभिरुह्य सिकतास्थलेऽण्डानि स्थापयित्वा सिकताभिरवष्टभ्य पुनरपि महासमुद्रेऽवतरन्ति। तत्र यासां मातॄणामण्डान्यारभ्य स्मृतिर्न मुष्यते तान्यण्डानि न पूतीभवन्ति, यासां तु मुष्यते तानि पूतीभवन्ति।

तदेतन्न वर्णयन्ति **सौत्रान्तिकाः**—मा भूत् परकीयेणाहारेणाहार इति। एवं तु वर्णयन्ति—येषामण्डानां मातरमारभ्य स्मृतिर्न मुष्यते तानि न पूतीभवन्ति, येषां तु मुष्यते तानि पूतीभवन्ति। तस्याः स्पर्शावस्थायाः स्मरन्तीति।

अथ कस्माच्चत्वार एवाहाराः, ननु च सर्व एव सास्रवा धर्मा भवानां पोषकाः? यद्यप्येतदेवम्, तथापि प्राधान्येनोक्तम्—

**इह पुष्ट्यर्थमाश्रयाश्रितयोर्द्वयम्।**
**द्वयमन्यभवाक्षेपनिवृत्त्यर्थं यथाक्रमम्॥ ४१॥**

आश्रयो हि सेन्द्रियः कायः, तस्य पुष्टये कवडीकाराहाराः। आश्रिताश्चित्तचैत्ताः, तेषां पुष्टये स्पर्शः। अनयोस्तावदिहोत्पन्नस्य भवस्य पोषणे प्राधान्यम्। मनःसञ्चेतनया पुनर्भवस्याक्षेपः। आक्षिप्तस्य पुनः कर्मपरिभाविताद्

---

जरामरणं व्यवस्थापितमित्यभिप्रायः। कवडीकारोऽपि भूतानां सत्त्वानामिह स्थितय इति युक्तम्; प्रत्यक्षत्वात्। तथा सुखवेदनीयः स्पर्शो विज्ञानं चानुग्राहकमित्युक्तम्।

अथ मनःसञ्चेतना कथमिति? अत इदमुच्यते—*मनःसञ्चेतनापि चेति* विस्तरः। अत एव मनःसञ्चेतनाग्रहणेन स्पर्शविज्ञाने अपि गृहीते भवतः; तत्सम्प्रयोगित्वात्। *प्रद्रुता* इति प्रसृताः। *सङ्गीतिपर्याय* इत्यभिधर्मशास्त्रे। *तेषां पुष्टये स्पर्श* इति। सुखवेदनीयेनानुग्रहात्। "यः कश्चिद् वेदनास्कन्धः संज्ञास्कन्धः, सर्वः स स्पर्शं प्रतीत्य" इति वचनात्। *मनःसञ्चेतनायाः पुनर्भवस्य*

विज्ञानबीजादभिनिर्वृत्तिरित्यनयोरनुत्पन्नस्य भवस्याकरणे प्राधान्यम्। अतश्चत्वार उक्ताः। पूर्वकौ हि द्वौ धात्रीस्थानीयौ; जातस्य पोषकत्वात्। उत्तरौ मातृस्थानीयौ; जनकत्वादिति।

यः[1] कवडीकारः सर्वः स आहारः? स्यात् कवडीकारो नाहार इति चतुष्कोटिकम्। प्रथमा कोटिः—य कवडीकारं प्रतीत्येन्द्रियाणामपचयो भवति महाभूतानां च परिभेदः। द्वितीया कोटिः—त्रय आहाराः। तृतीया—यं कवडीकारं प्रतीत्येन्द्रियाणामुपचयो भवति महाभूतानां च वृद्धिः। चतुर्थी—एतानाकारान् स्थापयित्वा।

एवं स्पर्शादिभिरपि यथायोगं चतुःकोटिकानि कर्त्तव्यानि।

---

*आक्षेप* इति। तस्याः कर्मस्वभावत्वात्। कथञ्च पुनस्तयोः पुनर्भव आक्षिप्यते? तदुत्पत्तिप्रत्ययपरस्परानुकूल्यावस्थानात्। *कर्मपरिभाविताद् विज्ञानबीजादभिनिर्वृत्तिरिति*। बीजादिवाङ्कुरस्य पुनर्भवस्योत्पाद इत्यर्थः।

*यः कवडीकारः सर्वः स आहार* इति प्रश्ने आह—*स्यात् कवडीकारो नाहारः*, स्यादाहारो न कवडीकारः, स्यादुभयम्, स्यान्नोभयम् *इति चतुष्कोटिकम्*। *द्वितीया कोटिस्त्रय आहारा* इति। मनःसञ्चेतनास्पर्शविज्ञानानि। *चतुर्थ्येतानाकारान् स्थापयित्वेति*। शब्दो दुःखवेदनासम्प्रयुक्ताश्च सर्वे चित्तचैत्ताः।

*एवं स्पर्शादिभिरपि यथायोगं चतुष्कोटिकानि कर्त्तव्यानीति*। यः कश्चित् स्पर्शः सर्वः स आहारः। स्यात् स्पर्शो नाहर इति चतुष्कोटिकम्। एवं या काचिन्मनःसञ्चेतना सर्वा सा आहारः। स्यान्मनःसञ्चेतना नाहार इति चतुष्कोटिकम्। तथा यत् किञ्चिद् विज्ञानं सर्वं तदाहारः। स्याद्विज्ञानं नाहार इति चतुष्कोटिकम्। स्पर्शस्य तावत् प्रथमा कोटिः—यं स्पर्शं प्रतीत्येन्द्रियाणामुपचयो भवति महाभूतानां च परिभेदः, द्वितीया—त्रय आहाराः, तृतीया—यं स्पर्शं प्रतीत्येन्द्रियाणामपचयो भवति महाभूतानाञ्च वृद्धिः, चतुर्थी—एतानाकारान् स्थापयित्वेति। एवं यावद्विज्ञानं चतुष्कोटिकम्। प्रथमा कोटिः—यद्विज्ञानं प्रतीत्येन्द्रियाणामपचयो भवति महाभूतानां परिभेदः, द्वितीया कोटिः—त्रय आहारा विज्ञानवर्ज्याः, तृतीया—यद्विज्ञानं प्रतीत्येन्द्रियाणामुपचयो भवति महाभूतानां च वृद्धिः, चतुर्थी—एतानाकारान् स्थापयित्वा।

---

१. यः कश्चित्—का०।

स्यात् स्पर्शादीन् प्रतीत्येन्द्रियाणामुपचयो महाभूतानां च वृद्धि:,
आहारा: ? योऽपि हि परिभुक्तो
मादधाति सोऽप्याहारः[1]; आपातेऽनुग्रहात् । द्वयोर्हि कालयोराहार
कृत्यं करोति—परिभुज्यमानः, जीर्यश्चेति वैभाषिकाः ॥

अथ कस्यां गतौ कत्याहाराः ? सर्वासु सर्वे । एवं योनिष्वपि ।

कथं नरकेषु कवडीकार आहारः ? प्रदीप्तायस्पिण्डाः, कथितं च ताम्रम् । यद्युपघातकोऽप्याहारो भवति चतुःकोटिकं बाध्यते, प्रकरणग्रन्थश्च—"कवडीकार आहारः कतमः ? यं कवडीकारं प्रतीत्येन्द्रियाणामुपचयो भवति[2] विस्तरेण यावद् विज्ञानम्" ?

उपचयाहाराभिसन्धिवचनादविरोधः । अपचयाहारस्तु नरकेषु आहार लक्षणप्राप्तत्वात्[3] ।

---

*स्यात् स्पर्शादीन् प्रतीत्येति* । विस्तरेणापरः प्रश्नः । स्पर्शादीनिति स्पर्शचेतनाविज्ञानधर्मानित्येवं नेतव्यम् । एवं च ग्रन्थः कर्त्तव्यः—स्यात् स्पर्शादीन् प्रतीत्येन्द्रियाणामुपचयो भवति महाभूतानां च वृद्धिः, न च ते आहाराः । *स्यात् अन्यभूमिकाननास्रवांश्च* । प्रतीत्येत्यभिसम्बन्धाद् द्वितीयाप्रयोगः । *योऽपि हि परिभुक्त* इति विस्तरः । केन सम्बन्धेनेदमुक्तम् ? अन्यभूमिकाननास्रवांश्च प्रतीत्यानाहार इत्युक्तेऽर्थादेतदुक्तं भवति—स्वभूमिकान् सास्रवान् प्रतीत्याहार इति । यं चेह परिभुक्त इति । कवडीकारो *भोक्तुर्बाधामादधाति* । स किमाहारः ? *सोऽप्याहारः; आपाते* भोजनवेलायामनुग्रहात् ।

*सर्वासु सर्वः । एवं योनिष्विति* । कामधातौ पञ्चानां गतीनां चतसृणां च योनिनां सद्भावात् । *चतुष्कोटिकं बाध्यते, प्रकरणग्रन्थश्चेति* । प्रथमे चतुष्कोटिके येयं तृतीया कोटिः—यं कवडीकारं प्रतीत्येन्द्रियाणामुपचयो भवति महाभूतानां च वृद्धिरिति, अस्या बाधाच्चतुष्कोटिकं बाध्यते न केवलमुपचयकरः, किं तर्हि ? अपचयकरोऽपि कवडीकाराहार इति । प्रकरणग्रन्थश्च किं बाध्यते ? कीदृशः प्रकरणग्रन्थ इति तद्दर्शयन्नाह—*कवडीकाराहारः कतमः, यं कवडीकारं प्रतीत्येन्द्रियाणामुपचयो भवति विस्तरेण यावद्विज्ञानमिति । उपचयाहाराभिसन्धिवचनादविरोध* इति । उपचयाहाराभिप्रायेण चतुष्कोटिकवचनं प्रकरणग्रन्थवचनं च, तस्मात्तयोरविरोधः । यो ह्युपचयाय स मुख्यः । *आहारलक्षणप्राप्त्या-*

---

१. आहार एव—का० । २. भवति महाभूतानां च वृद्धिर्यापनाऽनुयापनेति—का० ।
३. लक्षण०—का० ।

सोऽपि हि जिघत्सां पिपासां च[1] प्रतिहन्तुं[2] समर्थ इति। अपि तु प्रत्येकनरकेषु मनुष्यवत् कवडीकाराहारसद्भावाद् युक्तं पाञ्चगतिकत्वम्।

उक्तं भगवता—"यश्च बाह्यकानामृषीणां कामेभ्यो वीतरागाणां शतं भोजयेद्, यश्चैकं जम्बूषण्डगतं पृथग्जनम्; अतो दानादिदं दानं महाफलतरम्" (        ) इति।

कोऽयं जम्बूषण्डगतो नाम पृथग्जनः ?

१. जम्बूद्वीपनिवासिनः कुक्षिमन्त इत्येके। तदेतन्न युक्तम्; एकमिति वचनात्। कश्चात्र विशेषः ? स्याद्यदि भूयसः पृथग्जनान् भोजयित्वा भूयः पुण्यं स्यात्, नाल्पीयसो वीतरागानिति।

२. सन्निकृष्टो बोधिसत्त्व इत्यपरे। तदेतन्न वर्णयन्ति—"बहुतरं हि तस्मै दत्त्वा पुण्यं नार्हत्कोटिभ्यः" इति। अतो निर्वेधभागीयलाभी पृथग्जन एषोऽभिप्रेत इति वैभाषिकाः।

---

दिति। कवडीकाराहारलक्षणप्राप्तत्वात्।

कथम्? इत्याह—*सोऽपि हि जिघत्सां पिपासां च प्रतिहन्तुं समर्थ* इति। प्रदीप्तायष्पिण्डलक्षण आहारो जिघत्साप्रतिघाते समर्थः, क्वथितताम्रलक्षणः पिपासाप्रतिघाते इति योज्यम्।

कवडीकाराहारप्रसङ्गेनेदमुच्यते—*उक्तं भगवता यश्च बाह्यकानामिति* विस्तरः। जम्बूद्वीपः = जम्बूषण्डः। तथा ह्युक्तं भगवता—"याः काश्चित् जम्बूषण्डात् स्रवन्त्यः सर्वाः समुद्रनिम्नाः समुद्रप्राग्भाराः" इति। तस्मिन्नवासिनो *जम्बूषण्डगताः कुक्षिमन्तो* भोजनशक्त्युपेता अकललाद्यवस्था इत्यभिप्रायः।

*तदेतदयुक्तमिति वचनादिति*। यदि जम्बूद्वीपवासिनः कुक्षिमन्तो जम्बूषण्डगता इष्येरन्, यश्च जम्बूषण्डगतान् पृथग्जनानिति वक्तव्यं स्यात्। उक्तं च—'यश्चैकं जम्बूषण्डगतम्' इति। तस्मादयमर्थो न घटते। *कश्चात्र विशेष* इति। किमत्राश्चर्यं यद्बहून् भोजयित्वा बहु पुण्यं स्यात्, न त्वल्पीयसः शतमात्रान् वीतरागानित्यर्थः।

*सन्निकृष्टो बोधिसत्त्व इति*। आसन्नाभिसम्बोधिः। "बोधिसत्त्वः कुतो यावद्यतो लक्षणकर्मकृत्" ( अभि० को० ४.११० ) इत्यभिप्रायः।

---

१. का० पुस्तके नास्ति।     २. हन्तुं—का०।

३. न त्वियमन्वर्था संज्ञा, नापि[1] परिभाषिता सूत्रे, शास्त्रे वा। जम्बूषण्डगतो निर्वेधभागीयलाभीति परिकल्प एवायं केवलः। बोधिसत्त्व एव त्वेष[2] जम्बूषण्डगतो[2] युज्यते। स हि पृथग्जनः कामवैराग्यसम्बन्धेन तदानीं तेभ्यो विशिष्यमाण उक्त इति। अनन्तेभ्योऽपि हि स तेभ्यो विशिष्यमाणः। शतग्रहणं तु पूर्वाधिकारात्। इत्थं चैतदेवं यदेनमपास्य[3] बाह्यकेभ्य एव स्रोतआपत्तिफलप्रतिपन्नकं विशेषयाम्बभूव। अन्यथा हि जम्बूषण्डगतादेव व्यशेषयिष्यत्॥ ४०–४१॥

उक्तो यथा सत्त्वानां प्रतीत्यसमुत्पादः॥

यथावस्थितिश्च्युतिरप्युक्ता यथायुःक्षयादिभिः॥

---

*न त्वियमनर्था संज्ञेति*। नार्थानुगता, नार्थवाचकं पदमित्यर्थः। *नापि परिभाषिता*। अर्थमनपेक्ष्य। *बोधिसत्त्व एव त्वेष जम्बूषण्डगत* इति। कृषिग्रामकं व्यवलोकनाय निर्गतः सर्वार्थसिद्धो बोधिसत्त्वो जम्बूवृक्षमूले निषण्णः प्रथमं ध्यानमुत्पादितवान्। अत आह—*स हि पृथग्जनः कामवैराग्यसम्बन्धेनेति*। स चापि हि बोधिसत्त्वः पृथग्जनः कामवीतरागश्च, बाह्यकाश्च तथैव कामवीतरागाः पृथग्जनाश्च; अनेन सम्बन्धेन तेभ्यो बाह्यकेभ्यो बहुतरेण दानफलेन विशिष्यमाण इत्येवमुक्तः। स तेभ्यो बाह्यकेभ्योऽनन्तेभ्यो विशिष्यमाणो "बोधिसत्त्वाय चामेया अनार्येभ्योऽपि दक्षिणा" इति वचनात्। *शतग्रहणं तु पूर्वाधिकारादिति*। तत्रैव सूत्रे शताधिकारोऽधिकृतः। "यश्च तिर्यग्योनिगतानां शताय दानं दद्यात्, यश्चैकस्मै दुःशीलाय मनुष्यभूताय दानं दद्यात्, ततः शतगुणो विपाकः प्रतिकांक्षितव्यः। यावद् यश्च बाह्यकानाम्" इति विस्तरः। *इत्थं चैतदेवमिति*। इत्थं चैतदेव बोधिसत्त्व एव त्वेष जम्बूषण्डे निषण्णो युज्यत इति। *यदेनं* बोधिसत्त्व*मपास्य*। बाह्यकेभ्य एव *स्रोतआपत्तिफलप्रतिपन्नकं विशेषयाम्बभूवेति*। बाह्यकेभ्यो वीतरागेभ्यः स्रोतआपत्तिफलप्रतिपन्नकाय दानमप्रमेयतरम्, स्रोतआपन्नाय ततोऽप्रमेयतरम्, सकृदागामिफलप्रतिपन्नकायेति विस्तरः। यदि निर्वेधभागी जम्बूषण्डगतोऽभविष्यद् *जम्बूषण्डगतादेव व्यशेषयिष्यत्*। कथम्? यश्च जम्बूषण्डगतानां शतं भोजयेद् यश्चैकं स्रोतआपत्तिफलसाक्षात्क्रियायै प्रतिपन्नकम्, अतो दानादिदं महाफलतरमिति। न त्वेवम्। स्रोतआपत्तिफलप्रतिपन्नकादिभ्यो विशिष्टतरत्वादतो बोधिसत्त्व एव त्वेष जम्बू-

---

१. नापि क्वचित्—का०। २–२. त्वेषु जम्बुद्वीपषण्डेषु निषिण्णो—का०।
३. यदेनं पर्युदस्य—का०।

इदमिदानीं वक्तव्यम्—कतमस्मिन् विज्ञाने वर्त्तमाने च्युत्युपपत्ती भवतः ? इत्याह—

**छेद-सन्धान-वैराग्य-हानि-च्युत्युपपत्तयः**
**मनोविज्ञान एवेष्टाः,**

कुशलमूलसमुच्छेदः, कुशलमूलप्रतिसन्धानम्, धातुभूमिवैराग्यम्, परिहाणिः, च्युतिः, उपपत्तिश्च—एते षड् धर्मा **मनोविज्ञान** एवेष्यन्ते, नान्यत्र।

उपपत्तिवचनादन्तराभवप्रतिसन्धिरप्युक्तरूपो वेदितव्यः।

वेदनायां तु—

**उपेक्षायां च्युतोद्भवौ ॥ ४२ ॥**

च्युतिरेव च्युतम्। उपपत्तिः = उद्भवः। एतावदुःखासुखायां वेदनायां भवतः, तस्या अपटुत्वात्। इतरे हि वेदने पट्व्यौ। न च पटुविज्ञाने च्युत्युपपत्ती युज्येते ॥ ४२ ॥

तत्रापि च मनोविज्ञानेऽपि—

**नैकाग्राचित्तयोरेतौ,**

'च्युतोद्भवौ' इति वर्तते। न हि समाहितचित्तस्यास्ति च्युतिः, उपपत्तिर्वा;

---

षण्डगतो युज्यते। *आयुःक्षयादिभिरिति।* अस्त्यायुःक्षयान्मरणं न पुण्यक्षयाद्, अस्ति पुण्यक्षयान्नायुःक्षयादित्यादि ॥ ४०–४१ ॥

*छेदसन्धानवैराग्य* इति विस्तरः। *कुशलमूलसमुच्छेदो* मिथ्यादृष्ट्या। सा च मानस्येव; सन्तीरकत्वात्। *कुशलमूलप्रतिसन्धानं* सम्यग्दृष्ट्या विचिकित्सया वा, ते च मानस्यौ। *धातुभूमिवैराग्यम्।* धातुभूमितो वा वैराग्यं मनोविज्ञान एव, समाहित एव चित्ते लभ्यत्वात्। *परिहाणि*रयोनिशोमनसिकारप्रवर्तिता। मनोविज्ञानेन चायोनिशोमनसिकारो विकल्प इति। *च्युतिः* संक्षिप्तपञ्चेन्द्रियगोचरस्य प्रवाहच्छेदानुकूले विज्ञाने भवति। *उपपत्ति*रपि विपर्यस्तमतेर्भवतीति मनोविज्ञान एव युज्यते। *अन्तराभवप्रतिसन्धिरप्युक्तरूप* इति। प्रतिसन्धिसामान्यादनुक्तोऽप्युक्तकल्प इति नोच्यत इत्यभिप्रायः।

*च्युतिरेव च्युतम्।* एकार्थतां दर्शयति; भावे क्तोत्पन्नत्वात्। *इतरे हि वेदने पट्व्याविति।* सुखदुःखे ॥ ४२ ॥

विसभागभूमिकत्वाद्, आभिसंस्कारिकत्वाद्, अनुग्राहकत्वाच्च ।

नाप्यचित्तकस्य[1] सा, न ह्यचित्तक उपक्रन्तुं[2] शक्येत । यदा चास्याश्रयो विपरिणन्तुमारभेत, तदानीमवश्यमस्य[3] तदाश्रयप्रतिबद्धं चित्तं सम्मुखीभूय पश्चात् प्रच्यवेत, नान्यथा ।

उपपत्तौ च चित्तच्छेदहेत्वभावाद्, विना च क्लेशेनानुपपत्तेरयुक्तमचित्तकत्वम् ।

---

*विसभागभूमिकत्वादिति* । समाहितं चित्तं समाहितभूमिकत्वाद् विसभागं कामधातोः । [illegible] वा न युज्यते । यदा तर्हि रूपधातावेव म्रियते उपपद्यते वा, तदा समाहितभूमिकं चित्तं तद् भविष्यति ? इत्यत आह—*आभिसंस्कारिकत्वादिति* । अभिसंस्कारो यत्नः, अभिसंस्कारेण निर्वृत्तमाभिसंस्कारिकम्, तद्भावः, तस्मात् । न तदाभिसंस्कारिकं च्युतिचित्तमुपपत्तिचित्तं वा युज्यते; मरणावस्थाया अपटुत्वात् । *अनुग्राहकत्वाच्च* । यस्माच्च समाहितं चित्तमनुग्राहकं न च्छेदानुकूलम्, अतोऽपि समाहितचित्तस्य च्युतिर्नास्ति ।

*नाप्यचित्तकस्येति* विस्तरः । नाप्यचित्तकस्य । किम् ? च्युतिरुपपत्तिर्वेति प्रकृतम् । अचित्तको निरोधसमापत्तिसमापन्नोऽसञ्ज्ञिसमापत्तिसमापन्नस्तद्विपाके वावस्थितः । *सोऽचित्तक उपक्रन्तुं* मारयितुं न शक्यते शस्त्रादिभिः । अतो नाचित्तकस्यास्ति च्युतिः । *यदा चास्याश्रयो विपरिणन्तुमारभेतेति* । शस्त्रेणाग्निना वोपक्रमान्निरोधसमापत्तिमसंज्ञिसमापत्तिं वा समापन्नस्यासंज्ञिसमापत्तेर्विपाके स्थितस्य विपाकावेधसमाप्तेरवश्यमस्य *तदानीमाश्रयप्रतिबद्धं चित्तमाश्रये* बीजभावेनास्ति । तत् *सम्मुखीभूय पश्चात् प्रच्यवेत* । कः प्रच्यवेत ? पुद्गलः । यदि पुद्गलोऽधिक्रियेत, असमानकर्तृकत्वात् क्त्वाविधिर्न प्राप्नोति ? चित्तं तर्हि प्रच्यवेत ।

अथवैवमभिसम्बन्धः—यदा चाश्रयो विपरिणन्तुमन्यथात्वमापत्तुमारभेत, अवश्यमस्य पुद्गलस्य तदाश्रयप्रतिबद्धं बीजभावेनावस्थितं चित्तं सम्मुखीभूय समुदाचर्य परिणन्तुमारभेत । पश्चात् प्रच्यवेत पुद्गल इति ।

अथ वा—सम्मुखीभूयेति सम्मुखीभाव्येत्यर्थे णिलोपात् । "अस्ति पर्णरुहो वातः, अस्ति पर्णमुखोऽपरः" इति यथा ।

*उपपत्तौ* त्वयुक्तम्, अचित्तकत्वात् । कस्मात् ? *चित्तच्छेदहेत्वभावात्* । अवश्यं क्लिष्टतया प्रतिसन्धिचित्तस्य निरोधसमापत्त्याद्यसम्भवात् । *विना च क्लेशेनानुप-*

---

१. नाप्यचित्तस्य—का० । २. उपक्रमितुं—का० ।

३. तदावश्य०—का० ।

मरणभवस्त्रिप्रकार इत्युक्तम् । अर्हस्तु—

निर्वात्यव्याकृतद्वये ।

ऐर्यापथिके, विपाकचित्ते वा । अस्ति चेत्, कामधातौ विपाक उपेक्षा । नास्ति चेत्, ऐर्यापथिक एव ।

किमर्थमव्याकृत एव नान्यस्मिन् ? तद्धि चित्तच्छेदानुकूलम्; दुर्बलत्वात् ।

अथ म्रियमाणस्य कस्मिन् शरीरप्रदेशे विज्ञानं निरुध्यते ? सकृन्मरणे समनस्कं कायेन्द्रियं सहसाऽन्तर्धीयते । यदि तु क्रमेण च्यवते, ततः—

**क्रमच्युतौ पादनाभिहृदयेषु मनश्च्युतिः ॥ ४३ ॥**

**अधोनृसुरगाजानां,**

अधो गच्छन्तीत्यधोगाः, अपायगामिनः । नॄन् गच्छन्तीति नृगाः, मनुष्यगामिनः । सुरान् गच्छन्तीति सुरगाः, देवगामिनः । तेषां यथासंख्यं पादयोर्नाभ्यां

---

पत्तेः । सर्वक्लेशैर्हि तद्भूमिकैरुपपत्तिप्रतिसन्धिबन्धो भवति, न च चित्तमन्तरेण क्लेशाः कदाचिदपि भवन्तीति । अतोऽपि नास्त्यचित्तकस्योपपत्तिः ।

*मरणभवस्त्रिप्रकार इत्युक्तमिति* । "उपपत्तिभवः क्लिष्टः सर्वक्लेशैः स्वभूमिकैः" ( अभि० को० ३.३८ ) इति । उपपत्तिभव एव क्लिष्ट इत्यवधारणात् । मरणपूर्वान्तिकालान्तराभवास्त्रिप्रकाराः कुशलाकुशलाव्याकृता उक्ताः ।

अथ वा—"निरोधयत्युपरमो नारूप्ये जीवितं मनः, उपेक्षां च" इति विस्तरेण यावत् "शुभे सर्वत्र पञ्च च" ( अभि० को० २.१५-१६ ) इत्युक्तम्, अतो मरणभवस्त्रिप्रकार इत्युत्सर्गः ।

*अर्हस्तु "निर्वात्यव्याकृतद्वये"* इत्येवमपवादः । *अस्ति चेत् कामधातौ विपाक उपेक्षेति* । "अधोऽपि मध्यमस्त्येके" ( अभि० को० ४.४८ ) इत्येकीयमतेन । *नास्ति चेदिति* । "अतः परम्, अदुःखासुखवेद्यम्" ( अभि० को० ४.४७ ) इत्यपरमतेन । *ऐर्यापथिक एवेति* । ऐर्यापथिकजातीयं तद्यत्र निर्वाति ।

"विपाकजैर्यापथिकशैल्पस्थानिकनैर्मितम् ।
चतुर्धा व्याकृतं कामे"            ( अभि० को० २.७२ ) इति ।

नैतावदेवाव्याकृतमिष्यत इति व्याख्यातमेतत् । *तद्धि चित्तच्छेदानुकूलमिति* । अप्रतिसन्धिकचित्तच्छेदानुकूलम्, दुर्बलत्वात् । परमापटुत्वादित्यर्थः । सप्रतिसन्धिकचित्तच्छेदे कुशलाकुशलमपि चित्तं सम्भवति ।

*तेषां यथासंख्यमिति* । पादयोरपायगामिनां *विज्ञानं सन्निरुध्यते, नाभ्यां*

हृदये च विज्ञानं सन्निरुध्यते। न पुनर्जायन्त इत्यजाः, अर्हन्तः। तेषामपि हृदये विज्ञानं निरुध्यते। मूर्धीत्यपरे। कायेन्द्रियस्य तेषु निरोधात्। कायेन्द्रियं हि म्रियमाणस्य तप्त इवोपले जलं निष्ठ्यूतं सङ्कोचमापद्यमानं पादादिष्वन्तर्धीयत इति।

एवं च पुनः क्रमेण मरणं प्राणिनां प्रायेण मर्मच्छेदवेदनाभ्यां हतानां जायते—

मर्मच्छेदस्त्वबादिभिः।

शरीरप्रदेशाः केचिदुपहन्यमाना मरणमानयन्ति। ते ह्येतदुच्यन्ते मर्माणीति। तानि चाप्तेजोवायुधातूनामन्यतमेनातिमात्रं गतेन निशितशस्त्रसम्पातस्पर्शिनाडीतीव्राभिर्वेदनाभिः छिद्यन्त इव। न तु[1] पुनस्तानि काष्ठवच्छिद्यन्ते[2], छिन्नवद्वा पुनर्न चेष्टन्त इति च्छिन्नान्युच्यन्ते।

कस्मान्न पृथिवीधातुना? चतुर्थदोषाभावात्। वातपित्तश्लेष्माणो हि त्रयो दोषाः। ते चाप्तेजोवायुधातुप्रधाना यथायोगमिति।

भाजनलोकसंवर्तनीसाधर्म्येणेत्यपरे।

---

मनुष्यगामिनाम्, हृदये देवगामिनाम्। अरूपित्वाददेशस्थं विज्ञानं कथं तेषु निरुध्यत इति? अत आह—*कायेन्द्रियस्य तेषु निरोधादिति*। तेषु पादादिषु। कायेन्द्रियप्रतिबद्धवृत्ति हि कामधातौ रूपधातौ च विज्ञानमिति। *तेषामपि हृदये विज्ञानं निरुध्यत* इति। यथासंख्यनिर्देशादेवायमर्थो लभ्यते। कथम्? हृदयं च हृदयं च हृदये, पादश्च नाभिश्च हृदये चेति पादनाभिहृदयानीति चत्वारोऽर्थाः॥ ४३॥

अधोगश्च, नृगश्च, सुरगश्च, अजगश्च—इत्येतेऽपि चत्वारोऽर्थाः। तेन यथासंख्यसिद्धिः।

*प्रायेणेति* ग्रहणं देवादीनां सुखमृत्युत्वात्। *न तु पुनस्तानि काष्ठवच्छिद्यन्ते*। किं तर्हीति? *तीव्राभिर्वेदनाभिश्छिद्यन्त इवेति*। *छिन्नवद्वा न पुनश्चेष्टन्त* इति *छिन्नानीत्युच्यन्त* इति। च्छिन्नाङ्गप्रत्यङ्गवत्, न पुनश्चेष्टन्त इति छिन्नानीत्युच्यन्ते। सैषा काल्पनिकी; छेदवृत्तिमर्मणा द्विधाभावाकरणात्।

*अप्तेजोवायूनामन्यतमेनेत्युक्ते* पृच्छति—*कस्मान्न* पृथिवीधातुनेति। *अप्तेजोवायुधातुप्रधाना यथायोगमिति*। यथासम्भवम्। अब्धातुप्रधानः श्लेष्मा, तेजोधातुप्रधानं पित्तम्, वायुधातुप्रधानो वायुशेष इति। *भाजनलोकसंवर्तनीसाधर्म्येणे-*

---

1. च—का०। 2. काष्ठादिव०—का०।

देवेषु नास्ति मर्मच्छेदः। किं तु च्यवनधर्मणो देवपुत्रस्य पञ्चोपनिमित्तानि प्रादुर्भवन्ति—वस्त्राणामाभरणानां च मनोज्ञः शब्दो निश्चरति, शरीरप्रभा मन्दीभवति, स्नातस्योदबिन्दवः काये सन्तिष्ठन्ते, चपलात्मनोऽप्येकत्र विषये बुद्धिरवतिष्ठते, उन्मेषनिमेषौ चाक्ष्णोः सम्भवतः। एतानि तु व्यभिचारीणि। पञ्च पुनर्निमित्तानि मरणं नातिवर्त्तन्ते—वासांसि क्लिश्यन्ति, माला म्लायन्ति, कक्षाभ्यां स्वेदो मुच्यते, दौर्गन्ध्यं कायेऽवक्रामति, स्वे चासने देवपुत्रो नाभिरमते।

सोऽयं सत्त्वलोक एवमुत्पद्यमानस्तिष्ठन् च्यवमानश्च त्रिषु राशिषु स्थापितो भगवता। त्रयो राशयः—सम्यक्त्वनियतो राशिः, मिथ्यात्वनियतो राशिः, अनियतो राशिरिति। तत्र पुनः—

सम्यङ्मिथ्यात्वनियता आर्यानन्तर्यकारिणः ॥ ४४ ॥

"सम्यक्त्वं कतमत्? यत्तत् पर्यादाय रागप्रहाणम्, पर्यादाय द्वेषप्रहाणम्, पर्यादाय मोहप्रहाणम्, पर्यादाय सर्वक्लेशप्रहाणम्—इदमुच्यते सम्यक्त्वम्" (          ) इति सूत्रम्।

आर्याः कतमे? येषामनास्रवो मार्ग उत्पन्नः। आराद् याताः पापकेभ्यो धर्मेभ्य इत्यार्याः; आत्यन्तिकविसंयोगप्राप्तिलाभात्। एते हि क्लेशक्षये नियतत्वात् सम्यक्त्वनियताः मोक्षभागीयलाभिनोऽप्यवश्यं परिनिर्वाणधर्माण इति। कस्मान्न सम्यक्त्वे नियताः? ते हि मिथ्यात्वेऽपि नियता भवेयुः। न च ते कालनियमेन सम्यक्त्वे नियताः, यथा सप्तकृत्वः परमादयः।

---

त्यपरे इति। तिस्रो भाजनसंवर्त्तन्यः—अप्संवर्त्तनी, तेजःसंवर्त्तनी, वायुसंवर्त्तनी च। तासां च साधर्म्येण अप्तेजोवायुधातूनामन्यतमेनेति विस्तरेणोक्तमिति।

कथमाराद्याताः? *आत्यन्तिकविसंयोगप्राप्तिलाभात्*। पृथग्जनानां त्वस्ति विसंयोगप्राप्तिलाभः, न त्वात्यन्तिक इति ते नाराद् याता एवेति। *ते हि मिथ्यात्वेऽपि* नियता *भवेयुरिति*। यद्यानन्तर्याणि कुर्युरित्यर्थः। न च *त* इति विस्तरः। न च ते मोक्षभागीयलाभिनः *कालनियमेन सम्यक्त्वे नियताः*। यथा *सप्तकृत्वः परमादयः*। आदिशब्देन कूलंकूलैकवीचिकादयो गृह्यन्ते। कालनियमश्चैषां *पुद्गलनिर्देशे* वक्ष्यते।

मिथ्यात्वं कतमत्? नरकाः, प्रेताः, तिर्यञ्चः—इदमुच्यते मिथ्यात्वम्। तत्रानन्तर्यकारिणो नरके नियतत्वान्मिथ्यात्वनियताः। नियतेभ्योऽन्येऽनियता इति सिद्धम्। प्रत्ययापेक्षं हि तेषामुभयभाक्त्वम्, अनुभयभाक्त्वं च ॥ ४४ ॥

उक्तः सत्त्वलोकः ॥

भाजनलोक इदानीं वक्तव्यः—

**तत्र भाजनलोकस्य सन्निवेशमुशन्त्यधः।**
**लक्षषोडशकोद्वेधमसंख्यं वायुमण्डलम् ॥ ४५ ॥**

त्रिसाहस्रमहासाहस्रलोकधातोरेवं सन्निवेशमिच्छन्ति। यदुताकाशप्रतिष्ठमधस्ताद् वायुमण्डलमभिनिर्वृत्तं सर्वसत्त्वानाम्। कर्माधिपत्येन तस्य योजनलक्षाणां षोडशकमुद्वेधः, परिणाहेनासंख्यम्, तथा च दृढं यन्महानग्नोऽपि वज्रेण भेत्तुमशक्तः ॥ ४५ ॥

तस्योपरिष्टात्—

**अपामेकादशोद्वेधं सहस्राणि च विंशतिः।**

'मण्डलम्' इति वर्तते। तस्मिन् वायुमण्डले सत्त्वानां कर्मभिर्मेघाः सम्भूयाक्षमात्राभिर्धाराभिरभिवर्षन्ति। तद् भवति अपां मण्डलम्। तस्य योजनानामेकादशलक्षाण्यूर्ध्वं, अधो विंशतिश्च सहस्राणि।

कथं ता आपो न तिर्यग्विस्रवन्ति?

सत्त्वानां कर्माधिपत्येन। यथा हि भुक्तं पीतमन्नं पानं च नापक्वं पक्वाशयमापततीत्येके।

---

*नियतेभ्यो द्वयेभ्य*। *एभ्योऽन्येऽनियताः*। *प्रत्ययापेक्षं हीति* विस्तरः। यदि सम्यक्त्वे प्रत्ययं लभन्ते, सम्यक्त्वे नियताः। अथ मिथ्यात्वे, मिथ्यात्वे नियताः। अथोभयस्मिन्न प्रत्ययं लभन्ते अनुभयभाक्त्वेऽपि ॥ ४४ ॥

*उक्तः सत्त्वलोकः*। विद्यादिक्रमनिर्देशेन ॥

"*उशन्ति*" इच्छन्तीत्यर्थः। "*लक्षषोडशकोद्वेधमसंख्यं वायुमण्डलम्*" लक्षषोडशकं वेधनभावेन। *परिणाहेनासंख्यमिति*। समन्[illegible]संख्यमित्यर्थः ॥ ४५ ॥

*कर्माधिपत्येन* कर्मसामर्थ्येन। तत्र निदर्शनम्—*यथा भुक्तं पीतं* चान्नं *पानं* च *यथासंख्येन नापक्वं पक्वाशयं पतति*। पक्वमेव स पक्वस्थानं गच्छतीत्यर्थः।

कुसूलन्यायेन वायुना सन्धार्यन्त इति **निकायान्तरीयाः** ।

ताश्च पुनरापः सत्त्वानां कर्मप्रभावसम्भूतैर्वायुभिरावर्त्यमाना उपरिष्टात् काञ्चनीभवन्ति पक्वक्षीरशरीभावयोगेन । तद् भवत्यपां मण्डलम् ।

**अष्टलक्षोच्छ्रयं पश्चाच्छेषं भवति काञ्चनम् ॥ ४६ ॥**

**किं च शेषम्** ? त्रयो लक्षाः सहस्राणि च विंशतिः । सा काञ्चनमयी मही भवत्यपामुपरिष्टात् ॥ ४६ ॥

उक्तो जलकाञ्चनमण्डलोच्छ्रायः ॥

**तिर्यक् त्रीणि सहस्राणि सार्धं शतचतुष्टयम् ।**
**लक्षद्वादशकं चैव जलकाञ्चनमण्डलम् ॥ ४७ ॥**

समानं ह्येतदुभयं विस्तारतः ॥ ४७ ॥

**समन्ततस्तु त्रिगुणम्,**

**समन्ततः** परिक्षेपेण तु परिगण्यमानं त्रिगुणं जायते—षट्त्रिंशल्लक्षा दशसहस्राणि सार्धानि च त्रीणि शतानि योजनानाम् ।

यच्च तत् काञ्चनमयं महीमण्डलमपामुपरिष्टात् सन्निविष्टम्,

**तत्र मेरुर्युगन्धरः ।**
**ईशाधारः खदिरकः सुदर्शनगिरिस्तथा ॥ ४८ ॥**
**अश्वकर्णो विनितको निमिन्धरगिरिः**

इतीमे काञ्चनमण्डलप्रतिष्ठा अष्टौ महापर्वताः । मध्ये सुमेरुः । शेषाः

---

*कुसूलन्यायेन* कोष्ठन्यायेन । समन्तात् प्राकारवदवस्थितमित्यर्थः । *पक्वक्षीरशरीभावयोगेन* । पक्वक्षीरशरीभावन्यायेन । यथा पक्वस्य क्षीरस्य शरी । स्त्रीलिङ्गनिर्देशः, शर इत्यर्थः । अथ वा शरस्य भावः शरीभावः स्त्रीप्रयोगः । यथाऽसौ द्रवो घनीभावेन भवति, एवं जलस्योपरिष्टात् *काञ्चनमयी भूमिरिति* ।

*शेषम्, त्रयो लक्षाः सहस्राणि च विंशतिरिति* । विंशतिसहस्रोत्तराणामेकादशानां लक्षाणामष्टावपनीयैतावच्छेषं भवति ॥ ४५-४६ ॥

*"तिर्यक् त्रीणि सहस्राणि"* इति विस्तरः । चतुर्द्वीपकस्य एतत् [illegible] उच्यते, न त्रिसाहस्रमहासाहस्रस्य । *समानं ह्येतदुभयम्* । एतदिति *"जलकाञ्चनमण्डलम्" "समन्ततस्तु त्रिगुणम्"* इति । समन्तपरिक्षेपेण त्रिगुणमेतदुभयम् । सर्वस्य परि-

सुमेरुं परिवार्यावस्थिताः । तस्यान्यसप्तपर्वतप्राकारपरिक्षिप्तस्य यो बाह्यः पर्वतो निमिन्धरगिरिः ।

ततः ।

**द्वीपाः,**

ततो बहिश्चत्वारो द्वीपाः । तेभ्यः पुनः—

**बहिश्चक्रवाडः,**

तेन चतुर्द्वीपकश्चक्रीकृतः[1] । तेषां तु—

**सप्त हैमाः स आयसः ॥ ४९ ॥**

युगन्धरादयः सप्त पर्वताः सौवर्णाः, चक्रवाडः शस्त्रकम्[2] ॥ ४९ ॥

**चतूरत्नमयो मेरुः,**

सुवर्णमयः, रूप्यमयः, वैदूर्यमयः, स्फटिकमयश्च यथासंख्यं चतुर्षु पार्श्वेषु । यच्च यन्मयं पार्श्वं सुमेरोः, तस्यानुभावेन तद्वर्णं तस्यां दिशि नभो दृश्यते । जम्बूद्वीपकस्य[3] पार्श्वं वैदूर्यमयं वर्णयन्ति । तस्येह प्रभानुरागेण वैदूर्यमयं नभो दृश्यत इति ।

अथ कथं तेषां सम्भवः ? काञ्चनमय्यां पृथिव्यां पुनर्वारिधारा अतिपतन्ति । ता ह्यापो नानाविधबीजगर्भा बहुविधप्रकारभिन्नैर्वायुभिर्मथ्यमानास्तां[4] तां जातिं परिणमयन्ति । एवं च पुनः परिणमयन्ति यद् भिन्नजातीयस्य कार्य-

---

मण्डलस्येयं स्थितिः । यदस्य तिर्यक्प्रमाणं त्रिगुणमेव समन्तपरिक्षिप्तस्य प्रमाणमिति ।

*तेन चतुर्द्वीपकश्चक्रीकृत* इति । चक्रं कृतश्चक्रीकृतः । चक्राकारतां गमितः । अत एव "चक्रवाडः" इत्युच्यते ।

शस्त्रकमित्ययोमयः ॥ ४७–४९ ॥

*यथासंख्यं चतुर्षु पार्श्वेष्विति* । उत्तरकुरुपार्श्वं सुवर्णमयम्, पूर्वविदेहपार्श्वं रूप्यमयम्, जम्बूद्वीपपार्श्वं वैदूर्यमयम्, अवरगोदानीयपार्श्वं स्फटिकमयम् ।

*नानाविधबीजगर्भाः* । नानाप्रकारसामर्थ्ययुक्ताः । *बहुविधप्रकारभिन्नैर्वायुभिरिति* । तदुत्पादने अनेकप्रकारसामर्थ्यभिन्नैर्वायुभिरित्यर्थः । *असमाधानेनेति* । अयुगपद्भावेनेत्यर्थः । न हि यदा कार्यं तदा कारणं तिष्ठति ।

---

१. चातुर्द्वीपक०—का० । २. शस्त्रकः—का० ।
३. जाम्बूद्वीपकमस्य—का० । ४. ०विधप्रभावभिन्नै०—का० ।

विशेषोत्पत्तावसमाधानेन[1] प्रत्ययीभवन्ति। न तु खलु यथा सांख्यानां परिणामः।

कथं च सांख्यानां परिणामः? न ह्यवस्थितस्य द्रव्यस्य धर्मान्तरनिवृत्तौ धर्मान्तरप्रादुर्भाव इति। कश्चात्र दोषः? स एव[2] धर्मी न संविद्यते यस्यावस्थितस्य धर्माणां परिणामः कल्प्येत। कश्चैवमाह—धर्मेभ्योऽन्यो धर्मीति, तस्यैव तु द्रव्यस्यान्यथीभावमात्रं परिणामः? एवमप्ययुक्तम्। किमत्रायुक्तम्? 'तदेव चेदं न चेदं तथा' इति अपूर्वैषा वाचोयुक्तिः[3]।

एवं च पुनः सम्भूताः सुवर्णादयः कर्मप्रभावात् प्रेरितैर्वायुभिः समाहृत्य राशीक्रियन्ते।

त एते पर्वताश्च भवन्ति, द्वीपाश्च।

ते पुनः सुमेर्वादयश्चक्रवाडपर्यन्ताः पर्वताः—

**जलेऽशीतिसहस्रके।**

**मग्नाः,**

काञ्चनमय्याः पृथिव्या उपर्यशीतियोजनसहस्राण्युदकम्, तत्र ते मग्नाः।

**ऊर्ध्वं जलात् मेरुर्भूयोऽशीतिसहस्रकः॥ ५०॥**

इति हि मेरोः षष्टियोजनशतसहस्रसमुच्छ्रायः[4] ॥ ५०॥

---

*न ह्यवस्थितस्य द्रव्यस्येति*। रूपरसाद्यात्मकस्य। *धर्मान्तरनिवृत्ताविति*। क्षीरनिवृत्तौ। *धर्मान्तरप्रादुर्भाव* इति। दधिजन्म। *स एव धर्मी* नेति। रूपाद्यात्मकक्षीरादिधर्मेभ्योऽन्यो धर्म उत्पादव्ययेऽप्यनुत्पन्नोऽविनष्टः। *परिणाम* इति। क्षीरनिवृत्तौ दधिभावः। *तदेवं चेदमिति*। क्षीरमेव दधि, न चेदं तथेति; न चेदं दधि क्षीरम्, तदेवेदमिति यत् परिणामेनेत्युक्तम्। न चेदं *तथेति*। 'तस्यैव द्रव्यस्यान्यथीभावमात्रं परिणामः' इति वचनात्। *अपूर्वैषा वाचोयुक्तिरिति*। स्ववचनविरुद्धेत्यभिप्रायः। पूर्वोत्तरयोर्हि क्षणयोरन्यथात्वमिष्यते। ययोश्चान्यथात्वं तयोरन्यत्वं दृष्टम्, तद्यथा देवदत्तयज्ञदत्तयोः। तस्मात् कार्यकारणयोरन्यत्वेन भवितव्यम्।

*सुवर्णादय* इति। सुवर्णरूप्यमणिमृदादयः। *षष्टियोजनशतसहस्रसमुच्छ्राय* इति। षष्ट्यधिको योजनलक्ष उच्छ्राय इत्यर्थः॥ ५०॥

---

१. ०समवधानेन—का०। २. एव हि—का०।
३. वाचो युक्तिः—का०। ४. ०सहस्रं समुच्छ्रयः—का०।

अर्धार्धहानिरष्टासु

जलादूर्ध्वं यावान्सुमेरुस्ततोऽर्धेन युगन्धरश्चत्वारिंशद्योजनसहस्राणि। ततोऽर्धेन ईशाधरः। इत्येवमन्येष्वप्यर्धार्धहानिर्वेदितव्या, यावन्निमिन्धरार्धेनार्धत्रयोदशोत्तराणि त्रीणि योजनशतानि चक्रवाडः।

समोच्छ्रायघनाश्च ते।

यावानेव चैषां जलादूर्ध्वं समुच्छ्रायः, तावानेव घनो विस्तार इत्यर्थः।

शीताः[1] सप्तान्तराण्येषाम्,

एषां च निमिन्धरान्तानां पर्वतानां सप्तान्तराणि सप्त शीता उच्यन्ते पूर्णा अष्टाङ्गोपेतस्य पानीयस्य। तद्धि पानीयं शीतलं च स्वादु च लघु च मृदु चाच्छं च निष्प्रतिकं च, पिबतश्च कण्ठं न क्षिणोति, पीतं च कुक्षिं न व्याबाधते।

तासां च पुनः—

आद्याशीतिसहस्रिका॥ ५१॥

सुमेरुयुगन्धरान्तरं प्रथमा शीता अशीतिर्योजनसहस्राणि वैपुल्येन॥५१॥

आभ्यन्तरः समुद्रोऽसौ,

द्वौ हि समुद्रौ—आभ्यन्तरो बाह्यश्च। तदाऽसौ शीताऽऽभ्यन्तरः समुद्रः—

त्रिगुणः स तु पार्श्वतः।

अशीतिर्योजनसहस्राण्यस्य वैपुल्यमुक्तम्। पार्श्वतस्तु[2] त्रिगुणो भवति युगन्धरतीरेण गण्यमानः—चत्वारिंशत् सहस्राणि, लक्षद्वयं च।

अर्धार्धेनापराः शीताः

युगन्धरस्येषाधारस्य चान्तरं द्वितीया शीता अर्धेन प्रथमायाश्चत्वारिंशद्

---

*अष्टाङ्गोपेतस्येति।*

"शीतलाच्छलघुस्वादुमृदुनिःपूतिगन्धकम्।
पीतं न बाधते कुक्षिं न कण्ठं क्षिणोति तज्जलम्॥"

इति *अष्टांगसंग्रहश्लोकः*॥ ५१॥

*पार्श्वतस्तु त्रिगुणो भवति युगन्धरतीरेण गण्यमान* इति। स *"आभ्यन्तरः समुद्रः"* युगन्धरपार्श्वेनायामतः संख्यायमानः *त्रिगुण* इति कृत्वा चत्वारिंशद्योजन-

---

१. शीताः—स्फुटार्थायां मुद्रितः पाठः। २. पार्श्वतः—का०।

योजनसहस्राणि, ततोऽर्धेन पुनस्तृतीया—इत्येवमर्धार्धेनापराः शीता भवन्ति। यावदर्धत्रयोदशशतानि सप्तमी शीता।

दैर्घ्यं तु तासां न परिसंख्यातम्; अतिबहुमकर्षविसर्पणात्।

**शेषं बाह्यो महोदधेः ॥ ५२ ॥**

किं शेषम्? निमिन्धरचक्रवाडयोरन्तरम्। तद्धि बाह्यो महासमुद्रो लवणः, पूर्णः क्षारोदकस्य ॥ ५२ ॥

स खलु विस्तारेण योजनानाम्—

**लक्षत्रयं सहस्राणि विंशतिर्द्वे च,**

तत्र चत्वारो द्वीपाश्चतुर्षु सुमेरुपार्श्वेषु।

तत्र तु।

**जम्बूद्वीपो द्विसाहस्रस्त्रिपार्श्वः शकटाकृतिः ॥ ५३ ॥**

द्विसाहस्राणि त्रीणि पार्श्वान्यस्य, शकटस्येवाकृतिः। तस्य च मध्ये काञ्चन-

---

*सहस्राधिकलक्षद्वयमायामो* भवति युगन्धरपार्श्वे। अशीतिरेका, तदुभयतश्चेतरयोर्दिशोस्तत्सीतानदीवैपुल्ययोगेनापरे द्वे अशीती इति तिस्रोऽशीतयः। चत्वारिंशदधिकं लक्षद्वयं भवति इति ॥ ५२ ॥

"*लक्षत्रयं सहस्राणि विंशतिर्द्वे च*" इति निमिन्धरगिरिचक्रवाडयोरन्तर एकस्यां दिशि बाह्यस्य समुद्रस्य तत् परिमाणमुक्तम्। अत्र सहस्रमेकं द्वे शते चान्ये अर्धाष्टाशीतिरेवेति वक्तव्यम्; न्यूनत्वात्। एवमपरस्यां दिशि वक्तव्यम्। एवं द्वयोः सहस्रयोः पञ्चसु शतेषु पञ्चसप्ततौ च योजनानां प्रक्षिप्तेषु स आधारः पूरितो भवति, य उक्तः—

तिर्यक् त्रीणि सहस्राणि सार्धं शतचतुष्टयम्।
लक्षद्वादशकं चैव जलकाञ्चनमण्डलम् ॥"

(अभि० को० ३.४७) इति।

अनया चतुर्द्वीपसंख्यया यथाविन्यासमतिरिच्यमानत्वात्। तदिदं परिह्रियते—नैष दोषः; चक्रवाडबहिर्जलकाञ्चनमण्डलस्य एतावतातिरिच्यमानत्वात्। न तर्हि चतुर्द्वीपकस्तेन चक्रवाडेन चक्रीकृतः। उपरिभूमिरनेन चक्रीकृता, न जलमण्डलमित्यवगन्तव्यम्। अपर आह—न सुमेर्वादयः पर्वता अत्यन्तच्छिन्नतटाः समुच्छ्रायघना भवन्ति। किं तर्हि? पर्वताकारत्यायेन

मय्यां पृथिव्यां वज्रासनमभिनिर्वृत्तम्, यस्मिन्निषद्य सर्वे बोधिसत्त्वा वज्रोपमं समाधिमुत्पादयन्ति। न हि तमन्य आश्रयः प्रदेशो वा सोढुं समर्थः ॥ ५२ ॥

**सार्धत्रियोजनं त्वेकं,**

चतुर्थमस्य पार्श्वं सार्धानि त्रीणि योजनानि। अत एव ह्यसौ शकटाकृतिः।

**प्राग्विदेहोऽर्धचन्द्रवत्।**

इतः पूर्वेण सुमेरुपार्श्वे पूर्वं विदेहो द्वीपः। सोऽर्धचन्द्र इवाभिनिर्वृत्तः। परिमाणतस्तु—

**पार्श्वत्रयं तथाऽस्य,**

यथा जम्बूद्वीपस्य द्वे द्वे योजनसहस्रे।

**एकं सार्धं त्रिशतयोजनम् ॥ ५४ ॥**

चतुर्थं पार्श्वं सार्धानि त्रीणि योजनशतानि ॥ ५४ ॥

**गोदानीयः सहस्राणि सप्त सार्धानि मण्डलः।**

इतः पश्चिमेन सुमेरुपार्श्वेऽपरगोदानीयो द्वीपः सार्धानि सप्त योजनसहस्राणि साकल्येन। मण्डलश्चासौ पूर्णचन्द्रवत्।

**सार्धे द्वे मध्यमस्य,**

मध्यमस्यार्धतृतीये योजनसहस्रे।

**अष्टौ चतुरस्रः कुरुः समः ॥ ५५ ॥**

इह उत्तरेण सुमेरुपार्श्वे उत्तरकुरुद्वीपः। सोऽष्टौ योजनसहस्राणि साकल्येन चतुरस्रः, [illegible]। सर्वेषु च पार्श्वेषु समः। यथैकं पार्श्वं द्वियोजनसहस्रे, तथाऽन्यानि; स्तोकमपि नाधिकम्।

---

किञ्चिदतिरिच्यमानाधरभागा दुर्लक्षविशेषत्वात् "समोच्छ्रायघनाश्च ते" (अभि० को० ३.५१) इत्युक्ताः। अतस्तैस्तैः किञ्चिदतिरिच्यमानैरधोभागैस्तदाधेयं सुमेर्वादिकमाधारं जलकाञ्चनमण्डलात्मकं व्याप्नोतीत्यविरोध एष इति।

*अन्य* इति विस्तरः। न बोधिसत्त्वाश्रयादन्य *आश्रयः*, वज्रासनाद्वान्यः *प्रदेशस्तं वज्रोपमं समाधिं सोढुं समर्थं* इति ॥ ५३–५४ ॥

यश्च द्वीपो यदाकृतिस्तदाकृतीन्येव तत्र मनुष्याणां मुखानि ॥ ५५ ॥

तेषां खलु द्वीपानामन्तरालेऽन्तरद्वीपा अभिनिर्वृत्ताः । के पुनस्ते कति च ? इत्याह—

**देहा विदेहाः कुरवः कौरवाश्चामरावराः ।**
**अष्टौ तदन्तरद्वीपा गाठा उत्तरमन्त्रिणः ॥ ५६ ॥**

तत्र देहविदेहौ पूर्वविदेहपरिवारौ । कुरुकौरवौ उत्तरकुरोः । गाठोत्तरमन्त्रिणौ अपरगोदानीयस्य । चामरावरौ जम्बूद्वीपस्य । सर्वे मनुष्यैरावासिताः । एको राक्षसैरित्यपरे ॥ ५६ ॥

**इहोत्तरेण कीटाद्रिनवकाद्धिमवान्,**

इहैव जम्बूद्वीपे **उत्तरेण**ास्य जम्बूद्वीपस्य कृष्णपर्वतास्त्रयः, तानतिक्रम्यापरे त्रयः, पुनश्च त्रयः—इति नवभ्यः कीटपर्वतेभ्यः परेण **हिमवान्** पर्वतः ।

ततः ।

**पञ्चाशद् विस्तृतायामं सरोऽर्वाग् गन्धमादनात् ॥ ५७ ॥**

तस्माद्धिमवतः परेणानवतप्तं नाम **सरो गन्धमादनादर्वाक्**, यतश्चतस्रो नद्यः स्रवन्ति—गङ्गा, सिन्धुः, शीता, वक्षुश्च । तस्य **पञ्चाशद्** योजनानि विस्तारः । पञ्चाशदायामः । पूर्णमष्टाङ्गस्याङ्गोपेतस्याम्भसः । दुर्गमं च मनुष्याणामनृद्धिमताम् ।

तस्यैव चान्तिके जम्बूरभिनिर्वृत्ता, मधुरस्वादूनि यस्याः फलानि । तदधिकारेणायं[1] जम्बूद्वीप इति ख्यातः । तत्फलाधिकारेण वा जम्बूद्वीप इति ॥ ५७ ॥

---

*यश्च द्वीपो यदाकृतिरिति* । प्रत्यक्षमेतद् भूमिवशात् सत्त्वानां वैचित्र्यम्, हिमवद्विन्ध्यवासिनां किरातशवराणां गौर-श्यामते दृश्येते ॥ ५५ ॥

*"देहा विदेहाः कुरवः"* इति । स्थानिनां बहुत्वात् स्थानस्यापि बहुवचननिर्देशः । *एको राक्षसैरिति* । चामरावरयोरन्यतरः ॥ ५६ ॥

*"कीटाद्रिनवकात्"* इति । कीटाकृतीनां पर्वतानां नवकात् । *तदधिकारेणायं जम्बूद्वीप* इति । जम्बुवृक्षाधिकारेण जम्बुवृक्षचिह्नो द्वीपो जम्बूद्वीपः । *फलाधि-*

---

१. तस्या अधिकारेणायं—का० ।

नरकाः कस्मिन्नवकाशे ? कियत्प्रमाणाश्च ?

**अधः सहस्रैर्विंशत्या तन्मात्रोऽवीचिरस्य हि ।**

अस्यैव जम्बूद्वीपस्याधो विंशत्या योजनसहस्रैरवीचिर्महानरको विंशतिसहस्रप्रमाण एवोद्वेधविस्ताराभ्याम् । एवमस्याधरतलमितश्चत्वारिंशता योजनसहस्रैर्भवति ।

दुःखनिरन्तरत्वादवीचिः । अन्येषु सान्तरं दुःखम् । तद्यथा—सञ्जीवे च्छिन्नावभिन्नसम्पिष्टशरीराणां शीतला वायवो वान्ति, पुनरपि तान् सत्त्वान् सञ्जीवयन्ति । अत एव सञ्जीवः ।

नास्मिन् सुखवीचिरस्तीत्यवीचिरित्यपरे । अन्येष्वपि सुखा वेदना विपाको नास्ति । नैःष्यन्दिकी न वार्यते ।

**तदूर्ध्वं सप्त नरकाः,**

तस्मादवीचेरूर्ध्वं सप्त नरकाः उपर्युपरि सन्निविष्टाः—प्रतापनः, तापनः, महारौरवः, रौरवः, सङ्घातः, कालसूत्रः, सञ्जीवश्च । अवीचिपार्श्वेष्वित्यपरे ।

ते पुनः—

**सर्वेऽष्टौ षोडशोत्सदाः ॥ ५८ ॥**

उक्तं हि भगवता—

"इत्येते नरका अष्टावाख्याता दुरतिक्रमाः ।
रौद्रकर्मभिराकीर्णाः प्रत्येकं षोडशोत्सदाः ॥
चतुस्कन्धाश्चतुर्द्वारा विभक्ता भागशोऽसिताः ।
अयःप्राकारपर्यन्ता अयसा प्रतिकुब्जिताः[1] ॥
तस्या चैवायसी भूमिर्ज्वलिता तेजसा युता ।
अनेकयोजनशता स्फुटा तिष्ठति अर्चिषा" ॥ ( ) इति ॥५८॥

---

कारेण वेति । जम्ब्वाः "लुप् च" ( पा० सू० ४.३.१६६ ) इति फलमपि जम्बू । तत्फलचिह्नो जम्बूद्वीप इत्यर्थः ॥ ५७ ॥

*चतुःस्कन्धा* इति । चतुःप्रकारा इत्यर्थः । चतुःसन्निवेश इत्यपरे । *अयःप्राकारपर्यन्ता* इति । अयःप्राकारपरिक्षिप्ता इत्यर्थः । *अयसा प्रतिकुब्जिता*

---

१. प्रतिवर्जिताः—का० ।

षोडशोत्सदाः कतमे ?

**कुकूलं कुणपं चाथ क्षुरमार्गादिकं नदी ।**
**तेषां चतुर्दिशम्,**

द्वारे द्वारे तेषां चत्वार उत्सदाः—

१. **कुकूलं** जानुमात्रम् । यत्र तेषां सत्त्वानां निक्षिप्ते संशीर्यते त्वङ्मांसशोणितम्, उत्क्षिप्ते पादे पुनरपि सञ्जायते त्वङ्मांसशोणितम् ।

२. **कुणपं** गूथमृत्तिका । यत्र न्यङ्कुटा नाम प्राणिनः प्रतिवसन्ति सर्वश्वेताः कृष्णशिरसः सूचिमुखाः, तेषां सत्त्वानां यावदस्थीनि भिन्दन्ति ।

३. ( क ) क्षुरधाराचितो महापथः । यत्र तेषां सत्त्वानामन्वाक्रामतां निक्षिप्ते पादे सञ्छिद्यते त्वङ्मांसशोणितमिति पूर्ववत् ।

( ख ) असिपत्रवनम् । यत्र तेषां सत्त्वानां तीक्ष्णा असयः सन्निपतन्ति, अङ्गप्रत्यङ्गान्यवकृन्तन्ति, श्यामलशबलाश्च[1] श्वानो भक्षयन्ति ।

( ग ) अयःशाल्मलीवनं तीक्ष्णषोडशाङ्गुलकण्टकम् । तेषां सत्त्वानामभिरोहतां कण्टका अवाङ्मुखीभवन्तः कायं भिन्दन्ति, अवतरतां चोर्ध्वीभवन्तः । अयस्तुण्डाश्च वायसा अक्षीण्युत्पाट्योत्पाट्य भक्षयन्ति ।

तदेतत् **क्षुरमार्गादिकं** त्रयं शस्त्राभिनिपातं सामान्यादेकीक्रियते ।

४. चतुर्थ उत्सदो **नदी** वैतरणी पूर्णा[2] । यस्यां ते सत्त्वा असिशक्तिप्रासहस्तैः पुरुषैरुभाभ्यां तीराभ्यां प्रतिवार्यमाणा ऊर्ध्वमपि गच्छन्तः स्विद्यन्ते पच्यन्ते, अधस्तिर्यगपि गच्छन्तः स्विद्यन्ते पच्यन्ते । तद्यथा—बहूदकायां स्थाल्यामग्नावधिश्रितायां तिलतण्डुलादयः । सा हि महानरकस्य परिखेवोत्पन्ना ।

---

इति । अयसोपरिष्टाच्छादिता । अयसा पिहितद्वारा इत्यपरे । स्फुटेति । व्याप्ताः ॥ ५८ ॥

पूर्ववदिति । उत्क्षिप्ते पादे पुनरपि सञ्जायते त्वङ्मांसशोणितमित्यर्थः ।
*श्यामलशबलाश्च श्वानो भक्षयन्तीति* । असिपत्रवनान्तर्भूताः ।
*अयस्तुण्डाश्च वायसा* इति । शाल्मलीवनान्तर्भूताः । *प्रासाः* भिन्दिपालादयः ।
*क्षुरमार्गादिकं त्रयमिति* । क्षुरमार्गः, असिपत्रवनम्, शाल्मलीवनं चेति त्रयः ।

---

१. श्यामशब०—का० । २. ०तप्तस्य क्षारोदकस्य—का० ।

त एते चत्वार उत्सदा दिग्भेदेन षोडशोच्यन्ते ।

अधिकयातनास्थानित्वादुत्सदाः इत्युच्यन्ते । नरकेषु हि पतिता एतेषु पुनर्यात्यन्ते । आ नरकावरोधादूर्ध्वमेतेषु सीदन्ति, अतस्तदुत्सदा[1] इत्यपरे ॥

प्रश्नात् प्रश्नान्तरमुपजायते—किं ते नरकपालाः सत्त्वसंख्याताः, उताहो नेति ? नेत्येके । कथमिदानीं चेष्टन्ते ? सत्त्वानां कर्मभिर्विवर्त्तनीवायुवत्[2] । यत्तर्हि भदन्तधर्मसुभूतिनोक्तम्—

"क्रोधनाः क्रूरकर्माणः पापाभिरुचयश्च ये ।
दुःखितेषु च नन्दन्ति जायन्ते यमराक्षसाः" ॥ इति ।

ये ते यमेनानुशिष्टाः सत्त्वान् नरकस्थानेषु[3] प्रक्षिपन्ति त एते यमराक्षसा उक्ताः, न तु ये कारणाः कारयन्तीति । सत्त्वसंख्याता इत्येके ।

तस्येदानीं कर्मणः क्व विपाकः ? तेष्वेव नरकेषु हि आनन्तर्यकारिणां विपाकावकाशस्तत्र तेषां को विप्रतिबन्धः ।

---

*अधिकयातनास्थानत्वादुत्सदा* इति । उच्छब्दोऽधिकार्थः । अधिकं सीद्यन्त अत्रेत्युत्सदाः । पुनर्यातनदाधिक्यमपरः । *नरकेष्विति* विस्तरः । *अपर* इति । *स्थविरमनोरथः* । स ऊर्ध्वार्थमुच्छब्दमिति । तेनाह—*आ नरकावरोधाद*वीच्यादिनरकावरोधात् *ऊर्ध्वमेषु* कुकूलादिषु *सीदन्ति, अतस्तदुत्सदा* इति ।

*प्रश्नात् प्रश्नान्तरमिति* । 'षोडशोत्सदाः कतमे' इत्युक्त्वा 'चतुर्थ उत्सदो वैतरणी, यस्यां सत्त्वा असिशक्तिप्रासहस्तैः पुरुषैरुभाभ्यां तीराभ्यां प्रतिवार्यमाणादूर्ध्वमपि गच्छन्तः स्विद्यन्ते पच्यन्ते' इति । तस्मादिदं प्रश्नान्तरमुपजायते । *किं ते नरकपाला* इति विस्तरः । *विवर्तनीवायुवदिति* । यथा विवर्त्तन्यां वायवो भाजनलोकाभिनिवृत्तये चेष्टन्ते, तद्वत् ते भूतभौतिकमात्रा नरकपाला इति ।

*यमराक्षसा* इति । पापकर्माणः सत्त्वा नरकपाला जायन्त इत्यर्थः ।

*ये ते यमेनेति* । ये ते यमेन देवदूतीयसूत्रोक्तेनानुशासनेना*नुशिष्टास्तान् सत्त्वान् नरकस्थानेषु प्रक्षिपन्ति* यमराजधानीनिवासिनः । *त एते यमराक्षसा उक्ताः* । न तु ये *कारणा* यातनाः *कारयन्ति* असिशक्तिप्रासहस्तादयः । *तस्येदानीं कर्मणः क्व विपाक* इति । नरकपालानां नरककृत्यस्य कर्मणः क्व विपाकः । तेष्वेवेति विस्तरः । येष्वानन्तर्यकारिणां *विपाकावकाशस्तेषु* नरकेषु *तेषां* नरक-

---

१. उत्सदाः—का० । २. ०वायुबीजवत्—का० । ३. नरकेषु—का० ।

कथमग्निना न दह्यन्ते ? अग्नेर्नूनं कर्मभिः कृतावधित्वात्, भूतविशेषनिवृत्तेर्वा ।

इमे तावदुष्णा अष्टौ महानरका उच्यन्ते ॥

शीता अन्येऽष्टावर्बुदादयः ॥ ५९ ॥

अन्ये शीतनरका अष्टौ । तद्यथा—अर्बुदः, निरर्बुदः, अठठः[1], हहवः, हुहुवः, उत्पलः, पद्मः, महापद्मश्च ।

तेषां सत्त्वानां तीव्रशीताभिहतानां कायशब्दविकारानुरूपाण्येतानि नामानि। तेऽप्यस्यैव जम्बूद्वीपस्याधस्तात् महानरकाणां तिर्यक् ।

कुत इयतो जम्बूद्वीपस्याधस्तादवीच्यादीनामवकाशः ? धान्यराशिवदधो विशाला हि द्वीपाः । अत एव महासमुद्रोऽनुपूर्वनिम्नः ।

इतीमे षोडश नरकाः सर्वे सत्त्वकर्माधिपत्यनिर्वृत्ताः । प्रत्येकं नरकास्तु स्वैः स्वैः कर्मभिरभिनिर्वृत्ताः। बहूनां सत्त्वानां द्वयोरेकस्य वा। तेषामनेकप्रकल्पो भेदः स्थानं चानियतम्; नदीपर्वतमरुप्रदेशेष्वन्येषु वाऽधश्च भावात् ।

एष तावन्नरकभाजनानां सन्निवेशः ॥

तिर्यञ्चः स्थलजलाकाशगोचराः । तेषां किल मूलं स्थानं महासमुद्रः, ततोऽन्यत्र विसृता इति ॥

प्रेतानां यमो राजा । तस्य जम्बूद्वीपस्याधस्तात् पञ्चयोजनशतान्तरपरिच्छिन्ना राजधानी तेषां मूलस्थानम्, ततोऽन्यत्र विसृताः। केचित् प्रेता महर्द्धिका दैवीमिव श्रियमुद्वहन्ति । शेषा यथा प्रेतावदाने ॥ ५९ ॥

---

*पालानां को विप्रतिबन्धः।* एतदुक्तं भवति—तेषामपि तावदानन्तर्यकारिणो महदानन्तर्यकर्मणो विपाकस्यातिमहतो नरकेष्ववकाशोऽस्ति, किमङ्ग पुनर्नरकपालानां यत्कर्म तत् कारणाः कारयतामिति । *कृतावधित्वात्।* कृतमर्यादत्वान्नरकपालान् प्रति—एते न दग्धव्या इति । *भूतविशेषनिवृत्तेर्वा।* भूतविशेषास्तादृशास्तेषां कर्मभिरभिनिर्वृत्ताः यत्तेनाग्निना *न दह्यन्ते।*

*कायशब्दविकारानुरूपाणीति ।* कायविकारानुरूपाणि—अर्बुदः, निरर्बुदः, उत्पलः, पद्मः, महापद्मश्चेति *नामान्यर्बुदाद्या*कारकायत्वात्तत्रत्यानां सत्त्वानाम् । शब्दविकारानुरूपाणि—अठठः, हहवः, हुहुव इत्येतानि नामानि । *अत एवेति ।* *धान्यराशिवदधोविशालत्वात्।* बहिरिति नान्तर्गतः ॥ ५९ ॥

---

१. अटटः—का० ।

अथेमौ चन्द्रार्कौ कस्मिन् प्रतिष्ठितौ ? वायौ । वायवोऽन्तरिक्षे सर्वसत्त्वसाधारणकर्माधिपत्यनिर्वृत्ता आवर्तवत् सुमेरुं परिवर्तन्ते । चन्द्रार्कताराणां बोध्र्वचारः ।

कियद्विप्रकृष्टाविताश्चन्द्रार्कौ ?

**अर्धेन मेरोश्चन्द्रार्कौ**

युगन्धरगिरेर्मूर्ध्ना समं वहतः ।

किम्प्रमाणौ ? यथाक्रमम्—

**पञ्चाशत्सैकयोजनौ ।**

पञ्चाशद् योजनानि चन्द्रमण्डलस्य प्रमाणम् । सैकानि पञ्चाशत् सूर्यमण्डलस्य प्रमाणम् । एकपञ्चाशदित्यर्थः । तारकाविमानां यस्याल्पप्रमाणम्, प्रमाणं तस्य क्रोशः । सूर्यविमानस्याधस्ताद् बहिः स्फटिकमण्डलं तैजसमभिनिर्वृत्तं तापनं प्रकाशनं च । चन्द्रविमानस्याधस्तादाप्यं शीतलं भास्वरं च । प्राणिनां कर्मभिर्दृष्टिशरीरफलपुष्पशस्यौषधीनामनुग्रहार्थम्, उपघातकार्थं च[1] यथासम्भवम् ।

चतुर्द्वीपके एकश्चन्द्रमाः कृत्यं करोति, एकः सूर्यः ।

किं पुनश्चतुर्द्वीपेषु सूर्यो युगपत् कृत्यं करोति ? नेत्याह । किं तर्हि ? तेषु—

**अर्धरात्रोऽस्तङ्गमनं मध्याह्न उदयः सकृत् ॥ ६० ॥**

यदोत्तरकुरावर्धरात्रः, तदा पूर्वविदेहे सूर्यस्यास्तङ्गमनम्, जम्बूद्वीपे **मध्याह्नः**, गोदानीये **उदयः** । एवमन्येष्वपि योज्यम् । सूर्यस्येह गतिभेदेन रात्रिदिवानां वृद्धिह्रासौ ॥ ६० ॥

तत्र पुनः—

---

*तैजसं* सूर्यकान्तात्मकम् । *आप्यं* चन्द्रकान्तात्मकम् । *यथासम्भवमिति* । तदुभयमण्डलं दृष्ट्यादीनां देशकालावस्थान्तरानुरूप्येणानुग्रहार्थमुपघातार्थं च ।

*एवमन्येष्वपि योज्यमिति* । कथम् ? यदा पूर्वविदेहेऽर्धरात्रस्तदा जम्बूद्वीपे **सूर्यास्तगमनम्**, अवरगोदानीये मध्याह्नः, उत्तरावुदयः—इत्येवमन्यत्रापि **योज्यम्** ॥ ६० ॥

---

१. का० पुस्तके नास्ति ।

**प्रावृण्मासे द्वितीयेऽन्त्यनवम्यां वर्धते निशा।**

वर्षाणां **द्वितीये** मासे भाद्रपदे द्वितीयस्य पक्षस्य **नवम्यां वर्धते** रात्रिः।

**हेमन्तानां चतुर्थे तु हीयते,**

सैव **हेमन्तानां चतुर्थे** मासे पुनर्हीयते। अन्त्यनवम्यामिति वर्त्तते। फाल्गुनमासस्य द्वितीयपक्षनवम्याम्।

**अहर्विपर्ययात्॥ ६१॥**

यदा रात्रिर्वर्धते तदा दिवसो हीयते। यदा रात्रिर्हीयते तदा दिवसो वर्धते॥ ६१॥

कियत्या मात्रया वर्धते?

**लवशो रात्र्यहर्वृद्धी,**

लवं लवं रात्रिर्वर्धते, दिवसो वा। ते च हानिवृद्धी यथाक्रमं—

**दक्षिणोत्तरगे रवौ।**

जम्बूद्वीपस्य दक्षिणं पार्श्वं गच्छति भास्करे रात्रिवृद्धिः, उत्तरं गच्छत्यहर्वृद्धिः॥

शुक्लपक्षस्यादौ चन्द्रमसो विकलं मण्डलं दृश्यते, किं तत्र कारणम्?

**स्वच्छाययाऽर्कसामीप्याद् विकलेन्दुसमीक्षणम्॥ ६२॥**

यदा हि सौरस्य विमानस्यासन्ने चान्द्रमसं विमानं वहति तदा किल सौर्यो भासस्तस्मिन् विमाने पतन्ति, ततोऽपरपार्श्वे छाया पतन्ती विकलं मण्डलं दर्शयतीति प्राज्ञप्तिको निर्देशः।

---

*"प्रावृण्मासे द्वितीयेऽन्त्यनवम्याम्"* इति। प्रावृण्मासाश्चत्वारः—श्रावणो यावत् कार्त्तिकः। सर्वे च मासाः कृष्णपक्षाद्याः। तत्र *भाद्रपदशुक्लपक्षनवम्यां रात्रिर्वर्धते।*

*हेमन्तकानां चतुर्थे हीयते।* हेमन्ता मासाश्चत्वारः—मार्गशीर्षाद्याः फाल्गुनान्ताः। तत्र फाल्गुनशुक्लपक्षनवम्यां हीयते॥ ६१॥

*"लवशः"* इति लवं लवम्, "कालाध्वनोरत्यन्तसंयोगे" (पा० सू० २.३.५) द्वितीया।

*अपरपार्श्वे छाया पतन्ती विकलमण्डलं दर्शयति।* तद्यथा—स्तम्भे प्रदीपच्छाया पतन्ती यथा यथा स्तम्भ आसन्नो भवति, तथा तथा स्तम्भः

वाह्ययोगः स तादृशो भवति यत् कदाचिद् विमानस्यार्धं दृश्यत इति **पूर्वाचार्याः** ॥

अथैतानि सूर्यादिविमानानि कतमे सत्त्वा अध्यावसन्ति ? देवाश्चातुर्महाराजकायिकाः ।

किमेतान्येव तेषां स्थानानि ? विमानवासिनामेतानि । भूमिनिवासिनां पुनः सुमेरुपरिषण्डादीनि ॥ ६२ ॥

कति चास्य परिषण्डाः ? कियत्यो वा ?

**परिषण्डाश्चतस्रोऽस्य दशसाहस्रिकान्तराः ।**

दशयोजनसहस्राण्युद्गम्यैका, एवं यावच्चतुर्थी । ताभिः सुमेरोरर्धमाक्षिप्तम् ।

ताश्च ततो यथासंख्यम्—

**षोडशाष्टौ सहस्राणि चत्वारि द्वे च निर्गताः ॥ ६३ ॥**

प्रथमा परिषण्डा **षोडश सहस्राणि** योजनानां सुमेरोर्**निर्गता** । द्वितीयाऽष्टौ । तृतीया **चत्वारि** । चतुर्थी **द्वे** ॥ ६३ ॥

**करोटपाणयस्तासु मालाधारास्सदामदाः ।**

**महाराजिकदेवाश्च,**

प्रथमायां परिषण्डायां **करोटपाणयो** नाम यक्षाः प्रतिवसन्ति । द्वितीयायां **मालाधाराः** । तृतीयायां **सदामदाः** सदामत्ताः । सर्वे एते चातुर्महाराज-

---

स्वच्छाययाच्छाद्यते—दूरे हि वर्तमाने प्रदीपे परिपूर्णस्तम्भो दृश्यते, किञ्चिदासन्ने किञ्चित् क्षीयते, यावदासन्ने स्तम्भो नष्टरूपो वर्त्तते; तद्वदेतत् ।

*वाह्ययोग स तादृश* इति । पुनस्तिर्यगवनामोन्नामयोगेनाधोभागश्चन्द्रमण्डलस्य क्षीयते, ऊर्ध्वं वर्धते चेति *योगाचाराः* ।

*चातुर्महाराजकायिका* इति । चतुर्महाराजानं कायः, तत्र भवाश्चातुर्महाराजकायिकाः ।

*सुमेरुपरिषण्डादीनीति* । आदिशब्देन युगन्धरादीनि ॥ ६२ ॥

"*दशसाहस्रिकान्तराः*" इति । योजनदशसहस्रप्रमाणान्तरा इत्यर्थः ।

*अर्धमाक्षिप्तमिति* । अर्धमवष्टब्धम् ॥ ६३ ॥

"*सदामदाः*" इति । 'सदामत्ताः' वक्तव्ये श्लोकबन्धानुगुण्येन 'सदामदाः' इत्युक्तम्; अर्थैकत्वात् ।

कायिकाः । चतुर्थ्यां[1] चत्वारो महाराजाः स्वयं प्रतिवसन्ति, तत्परिचाराश्च । अतस्तस्यां चातुर्महाराजकायिका[2] देवा इत्युक्तम् ।

यथा परिषण्डासु चतुर्महाराजकायिका देवाः, एवं

**पर्वतेष्वपि सप्तसु ॥ ६४ ॥**

युगन्धरादि पर्वतेषु तेषां ग्रामनिगमाः । अत एवैष देवनिकायः सर्वेषां महिष्ठः ॥ ६४ ॥

**मेरुमूर्ध्नि त्रयस्त्रिशाः,**

अथ कियान् मेरुमूर्धा ?

**स चाशीतिसहस्रदिक् ।**

एकैकपार्श्वमशीतिसहस्राणि यथैवाधस्तात् ।

अन्ये पुनराहुः—**स विंशतिसहस्रदिक्** । चत्वारि पार्श्वान्यस्य चतस्रो दिशः । एकैकं पार्श्वं विंशतिर्योजनसहस्राणि, समन्तात् परिक्षेपेणाशीतिरिति ।

तस्य च—

**विदिक्षु कूटाश्चत्वार उषिता वज्रपाणिभिः ॥ ६५ ॥**

सुमेरुमूर्ध्नो विदिशः कोणाः, तासु पञ्चयोजनशतप्रमाणाश्चत्वारः कूटा अभ्युद्गताः, येषु वज्रपाणयो नाम यक्षाः प्रतिवसन्ति ॥ ६५ ॥

तस्य च मेरुमूर्ध्नः—

---

*चतुर्थ्यां चत्वारो महाराजाः*[3] *स्वयं प्रतिवसन्ती*ति । धृतराष्ट्रः पूर्वदिग्भागे, विरूढको दक्षिणे, विरूपाक्षः पश्चिमे, वैश्रवण उत्तरस्मिन्नित्यनुक्रमोऽवगन्तव्यः । *चातुर्महाराजिका देवा* इत्युक्तमिति । यस्माच्चतुर्थ्यां परिषण्डायां चत्वारो महाराजानः स्वयं प्रतिवसन्ति, अत एवमुक्तम्—"*महाराजिकदेवाः*" इति । महाराजे भवा इति कृत्वा । महिष्ठो महत्तमः ॥ ६४ ॥

*स विंशतिसहस्रदिगि*ति । यद्येवम्, कथमिदमुक्तम्—"समुच्छ्रायघनाश्च ते" ( अभि० को० ३.५१ ) इति ? मध्यभागमेवाभिसमीक्ष्यैवमुक्तमिति तेषामभिप्रायः ॥ ६५ ॥

---

१. चतुर्थ्यां तु—का० ।　　　२. महाराज०—का० ।

३. महाराजानः—इति मुद्रित पाठः ।

मध्ये सार्धद्विसाहस्रपार्श्वमध्यर्धयोजनम् ।
पुरं सुदर्शनं नाम हैमं चित्रतलं मृदु ॥ ६६ ॥

सुमेरुतलस्य मध्ये सुदर्शनं नाम नगरं दैर्घ्यं सार्धतृतीययोजनसहस्रे एकैकं पार्श्वमुच्छ्रायेणाध्यर्धयोजनम् । प्राकारः सौवर्णः । एकोत्तरेण धातुशतेनास्य भूमिश्चित्रिता । तच्च भूमितलं तूलपिचुवत् मृदुसंस्पर्शं पादक्षेपोत्क्षेपाभ्यां नतोन्नतम् । शक्रस्य देवानामिन्द्रस्य राजधानी ॥ ६६ ॥

सार्धद्विशतपार्श्वोऽत्र वैजयन्तः,

शक्रस्य देवानामिन्द्रस्य वैजयन्तो नाम प्रासादो नगरस्य मध्ये नानारत्नस्थानविधानसम्पदा सर्वान्यभवनश्रीमहिम्ना ह्रेपणः, दैर्घ्येणार्धतृतीये योजनशते पार्श्वं पार्श्वम् । इयं तावन्नगरस्याभिरामता ।

बहिः पुनः ।

तच्चैत्ररथ-पारुष्य-मिश्र-नन्दनभूषितम् ॥ ६७ ॥

तस्य हि नगरस्य बहिश्चतुर्षु पार्श्वेषु चत्वार्युद्यानादीनि देवानां क्रीडाभूमयः । चैत्ररथमुद्यानम्, पारुष्यकम्, मिश्रकावणम्, नन्दनवनं च । तैस्तन्नगरं बहिरलंकृतम् ॥ ६७ ॥

विंशत्यन्तरितान्येषां सुभूमीनि चतुर्दिशम् ।

एषां चोद्यानानां चतुर्दिशं चत्वारि सुभूमीनि विंशतियोजनान्यतिक्रम्य[1]

---

*अध्यर्धमिति* । अधिकमर्धमस्मिन्निति । अध्यर्धं योजनमस्येति *"अध्यर्धयोजनम्"* । 'समुच्छ्रायेण' इत्यध्याहार्यम् ॥ ६६ ॥

*धातुशतेन* रङ्गशतेन । *नानारत्नस्थानविधानसम्पदेति* । नानारत्नविधानसम्पदा, नानास्थानविधानसम्पदा च । *सर्वान्यभवनानां श्रियस्तासां महिमानो* महत्त्वानि । *ह्रेपणः* । लज्जनः । लज्जाजनक इत्यर्थः । *दैर्घ्येणार्धतृतीये योजनशते पार्श्वमिति* । एकं पार्श्वमेतत्प्रमाणम् । यावच्चतुर्थमप्येतत्प्रमाणमिति ।

*चैत्ररथादीन्यपि* चतुरस्रसार्धद्विशतपार्श्वानि ॥ ६७ ॥

*"सुभूमीनि"* इति । शोभना भूमय एषामिति सुभूमानि क्रीडास्थानानि । *"चतुर्दिशमिति"* । चतस्रो दिशा अस्त्येति चतुर्दिशं क्रियाविशेषणम् । *भागुरिमतेन* दिक्शब्द आकारान्तो भवति । *विंशतियोजनान्यतिक्रम्येति* । क्रीडा-

---

१. योजनान्तरितानि—का० ।

क्रीडास्थानानि[1] भवन्ति । तान्येव[1] देवानां परस्परस्पर्धयैव शोभां वितन्वन्ति ।

बहिरेव नगरस्य पार्श्वे—

**पूर्वोत्तरे पारिजातः सुधर्मा दक्षिणावरे ।। ६८ ।।**

**पारिजातो** नाम कोविदारस्त्रायस्त्रिंशानां देवानां कामरतिप्रकर्षालयः[2] । तस्य पञ्च योजनानि मूलाभिनिवेशः, योजनशतमुच्छ्रायः । पञ्चाशद् योजनानि शाखापत्रपलाशं स्फरित्वा तिष्ठति ।

तस्य खलु सर्वपरिफुल्लस्य योजनशतमनुवातं गन्धो वाति पञ्चाशद् योजनानि[3] प्रतिवातम् ।

युक्तं तावदनुवातम्, प्रतिवातं तु कथम् ? वृक्षानतिक्रमं सन्धायोक्तमित्येके । न हि नाम प्रतिवातं[4] वातो वाति । तस्यैव तु सा गन्धस्य तादृशी प्रभावसम्पदेष्टव्या यत् प्रतिबाध्यमनोऽपि दिव्यैर्मृदुमारुतैर्गन्धान्तरं सन्तनोति । मन्दतरतमसमारम्भात्तु गन्धसन्तान[5] आश्वेव समुच्छिद्यते, अतो[6] न तथा विप्रकृष्टमध्वानं प्रसर्पति ।

---

*स्थानानि भवन्तीति* । विंशतियोजनान्यन्तरितानीत्युच्यते ।

*त्रायस्त्रिंशानामिति* । त्रयस्त्रिंशास्तेषु भवास्त्रायस्त्रिंशाः, तेषाम् । *कामरतिप्रकर्षालयः* । कामरतिविशेषस्थानम् ।

*वृक्षानतिक्रमं सन्धायोक्तमिति* । तं कोविदारवृक्षमनतिक्रम्य स गन्धो वर्त्तते । तस्य पञ्चाशद्योजनानि शाखापत्रपलाशमिति । एवं वृक्षानतिक्रमं सन्धायोक्तम्—*पञ्चाशद्योजनानि प्रतिवातं गन्धो वातीति* । अत्रोत्तरमाहुः—*न हि नाम प्रतिवातं वातो भवति*, यत्रैवोत्पद्यते तत्रैव ध्वंस्यते, न देशान्तरे सन्तानं सन्तनोति । उक्तं च—"पञ्चाशद्योजनानि प्रतिवातम्" इति, तस्मादसमाधिरेषः ? तस्मात् समाध्यन्तरमिदमाह—*तस्यैव त्विति* विस्तरः । किं पुनः कारणम्—योजनशतमत्र वातं गन्धो वाति, प्रतिवातं तु पञ्चाशत्, न ततः परेण ? इत्यत आह—*मन्दतरतमसमारम्भात्त्विति* विस्तरः । मृदुमारुतप्रतिबध्यमानतया मन्दतरतमसमारम्भः । ततश्च स *गन्धसन्तान आश्वेव समुच्छिद्यते* । *अतः* कारणात् न तथा *विप्रकृष्टमध्वानं* योजनशतप्रमाणं *प्रसर्पतीति* ।

---

१–१. ०स्थानान्येव—का० । २. ०श्रय:—का० । ३. योजनयोजनानि—का० । ४. सप्रतिवातं—का० । ५. सन्तान—का० । ६. यतो—का० ।

किं पुनः स्वभूताश्रित एवमपुष्पगन्धसन्तानो वर्तते, उताहो वायुरधिवासितो जायते ? नात्र नियमः। उभयथापि ह्याचार्येष्टिः।

यत्तर्हि भगवतोक्तम्—

"न पुष्पगन्धः प्रतिवातमेति न मौलिकस्तागरचान्दनो वा।

सतां तु गन्धः प्रतिवातमेति सर्वा दिशः सत्पुरुषः प्रवाति" ॥ ( ) इति ?

मानुष्यकं पुष्पगन्धं सन्धायोक्तम्। तद्धि प्रतीतं लोके। न च तस्य तादृशी शक्तिः।

**महीशासकास्तु**[1] पठन्ति—"योजनशतमनुवातं गन्धो वाति पञ्चाशद् योजनानि प्रतिवातम्" ( ) इति।

**सुधर्मा** नाम देवसभा दक्षिणपश्चिमे दिग्भागे, यस्यां निषद्य देवाः **कृत्याकृत्यं समर्थयन्ते**[2] ॥ ६८ ॥

एष तावत् त्रिदशानां भाजनसन्निवेशः ॥

**तत ऊर्ध्वं विमानेषु देवाः,**

त्रिदशेभ्य **ऊर्ध्वं देवा विमानेषु** प्रतिष्ठिताः। ते पुनर्यामाः, तुषिताः, निर्माणरतयः, परनिर्मितवशवर्तिनश्च ब्रह्मकायिकादयश्च पूर्वोक्ताः षोडशस्थानान्तरगताः। इत्येते द्वाविंशतिदेवनिकायाः समासेन येषां भाजनं प्रज्ञायते।

**कामभुजस्तु षट्।**

तेषां तु **षट्** कामावचरा देवनिकायाः कामान् परिभुञ्जते, न शेषाः। तद्यथा—चतुर्महाराजकायिका यावत् परनिर्मितवशवर्तिनः। ते पुनः—

---

*उताहो वायुरधिवासितो जायत* इति। यथा तिलेषु पुष्पगन्धाद् गन्धान्तरमुत्पद्यतेऽन्यदेव, न स पौष्पो गन्ध इत्याह—यदि पञ्चाशद् योजनं प्रतिवातं गन्धो वाति।

*यत्तर्हि भगवतोक्तं न पुष्पगन्धः प्रतिवातमेतीति* विस्तरः। *मौलिको गन्धो* मुस्तादिः।

*कृत्याकृत्यं समर्थयन्त* इति। कार्याकार्यं सम्प्रतीच्छन्ति सम्प्रधारयन्तीत्यर्थः ॥ ६८ ॥

*समासेन येषां भाजनं प्रज्ञायत* इति। भाजनम्=स्थानम्। विस्तरेणान्येऽपि देवाः क्रीडाप्रमोषकप्रहासकादयः सन्तीति। अतः समासेनोक्तम्।

---

१. महीसासकास्त—का०। २. समर्थयन्ति—का०।

**द्वन्द्वालिङ्गनपाण्याप्तिहसितेक्षितमैथुनाः ॥ ६९ ॥**

द्वन्द्वेन मैथुनं भूमिसम्बद्धवासिनाम् —चातुर्महाराजकायिकानां त्रायस्त्रिंशानाम्, यथा मनुष्याणाम्। तेषां तु वायुनिर्मोक्षाद् दाहविगमः; शुक्राभावात्। आलिङ्गनेन मैथुनं यामानाम्; आलिङ्गनमात्रेण दाहविगमात्। पाणिसम्प्राप्त्या तुषितानाम्, हसितेन निर्माणरतीनाम्, प्रेक्षितेन परनिर्मितवशवर्तिनाम्। स्ववर्तिनां सर्वेषां द्वन्द्वसमापत्त्या।

कालपरिमाणं तु प्रज्ञप्तावुक्तमिति **वैभाषिकाः**। यावद्यावद् विषयाणां तीव्रतरता, तावत्तावद् रागोऽपि तीव्रतरः।

यस्य देवस्य देव्या वा उत्सङ्गे देवकुमारो देवकन्या वा जायते, स तयो पुत्रो भवति सा च दुहिता ॥ ६९ ॥

कियत्प्रमाणो जायते ?

**पञ्चवर्षोपमो यावत् दशवर्षोपमः शिशुः।**

**सम्भवत्येषु**

यथासंख्यं षट्सु देवनिकायेषु। ते तु क्षिप्रमेवाभिवर्धन्ते।

**सम्पूर्णाः सवस्त्राश्चैव रूपिणः ॥ ७० ॥**

रूपावचरा देवाः सम्पूर्णकायाः वस्त्रेण संवीता उपपद्यन्ते। सर्वे देवा आर्यभाषाभाषिणः ॥ ७० ॥

तदत्र कामधातौ वेदितव्याः—

**कामोपपत्तयस्तिस्रः कामदेवाः समानुषाः।**

---

द्वन्द्वेन यावदीक्षितेन मैथुनमेषामिति *"द्वन्द्वालिङ्गनपाण्याप्तिहसितेक्षितमैथुनाः।"*

*सर्वेषां समापत्त्येति*। षण्णामपि कामभुजां द्वन्द्वसमापत्त्या परिदाहविगमः।

*कालपरिमाणं तु प्रज्ञप्तावुक्तमिति*। यावता कालेन द्वन्द्वालिङ्गनपाण्याप्तिहसितेक्षितानि भवन्ति, तावता कालेन एषां भूमिसम्बद्धवासिनां याम-तुषित-निर्माणरति-परनिर्मितवशवर्तिनां यथाक्रमं द्वन्द्वसमापत्तिरिति *वैभाषिकाः*। *यावद्यावदिति* विस्तरः। यावद्यावत् परेण परतरेण *विषयाणां तीव्रतरत्वात् रागोऽपि* तीव्रतरः, तावत्तावन्मैथुनकर इत्यभिप्रायः ॥ ६९–७० ॥

**कथं कृत्वा ?** सन्ति सत्त्वाः प्रत्युपस्थितकामाः प्रत्युपस्थितेषु कामेष्वैश्वर्यं वशे वर्तयन्ति । तद्यथा—मनुष्याः, तदेकत्याश्च देवाः । ते पुनश्चत्वारो देवनिकायाः ।

सन्ति सत्त्वा निर्मितकामा निर्माय कामानैश्वर्यं वशे वर्तयन्ति । तद्यथा—देवा निर्माणरतयः ।

सन्ति सत्त्वाः परनिर्मितकामाः परनिर्मितेषु कामेष्वैश्वर्यं वशे वर्त्तयन्ति । तद्यथा—देवाः परनिर्मितवशवर्त्तिनः ।

ता एता यथोत्पन्नपरिभोगित्वात्, यथेच्छात्मनिर्मितपरिभोगित्वाद्, यथेच्छात्मपरनिर्मितपरिभोगित्वाच्च **तिस्रः कामोपपत्तय** इत्युच्यन्ते ॥

रूपधातौ तु—

**सुखोपपत्तयस्तिस्रो नवत्रिध्यानभूमयः ॥ ७१ ॥**

त्रिषु ध्यानेषु या नव भूमयः तास्तिस्रः **सुखोपपत्तयः** । ते हि देवा विवेकजेन समाधिजेन च प्रीतिसुखेन च निष्प्रीतिकेन च सुखेन सुखं विहरन्तो दीर्घमध्वानं तिष्ठन्ति । अत एता निर्दुःखदीर्घसुखत्वात् सुखा उपपत्तयः सुखोपपत्तयः । ध्यानान्तरोत्पत्तौ तु प्रीतिसुखाभावात् सुखोपपत्तित्वं विचार्यम् ॥ ७१ ॥

---

*ते पुनश्चत्वारो देवनिकाया* इति । चातुर्महाराजकायिका यावत् तुषिताः । यथोत्पन्नप्रतिभोगः, स एषामस्तीति *यथोत्पन्नपरिभोगिनः*, तदभावस्तस्मात् । *यथेच्छयात्मनिर्मितम्*, तस्य *परिभोगः* पूर्ववत् । *यथेच्छात्मपरनिर्मितपरिभोगित्वादिति* । आत्मना परेण च निर्मिते यथेच्छात्मपरनिर्मिते, तयोः परिभोगः पूर्ववत् । *यथेच्छपरनिर्मितपरिभोगित्वादिति* केचित् पठन्ति । तत्र तावदेवं विग्रहः—परनिर्मितं यथेच्छं परनिर्मितं तस्य परिभोग इति पूर्ववत् । निर्माणरतीनां परनिर्मितान् कामान् परिभोक्तुं न समृध्यति । तदेवं परनिर्मितवशवर्त्तिनां निर्माणरतिभ्यो विशेषः प्रदर्शितो भवति । बाह्यरूपादिविषयनिर्माणं चात्र वेदितव्यम् ।

*विवेकजेन* प्रथमध्यानभूमिकेनाकुशलविविक्तत्वात् । *समाधिजेन* च द्वितीयध्यानभूमिकेन वितर्कविचारविगमात् । *प्रीतिसुखेनेति* । प्रीतिलक्षणेन सुखेन । *निष्प्रीतिकेन च सुखेन* सौमनस्यविगमात् । *सुखं विहरन्त* इति । सुखमिति क्रियाविशेषणम् । *सुखोपपत्तित्वं विचार्यमिति* । सुखाभावान्न ध्यानान्तरं सुखोप-

यान्येतानि देवानां द्वाविंशतिस्थानान्युक्तानि, तेषामधरादुत्तरं कियद् विप्रकृष्टम् ? नैतत् सर्वं योजनपरिसंख्यया सुकरं परिसंख्यातुम् । अपि तु—

**स्थानात् स्थानादधो यावत् तावदूर्ध्वं ततस्ततः ।**

जम्बूद्वीपात् प्रभृति यदुत्तरं स्थानं तस्माद् **यावदधो** जम्बूद्वीपस्**तावत्** पुनस्तस्मादूर्ध्वं स्थानान्तरम् । तद्यथा—चतुर्थी परिषण्डा चतुर्णां महाराजानां मूलस्थानमितश्चत्वारिंशद्योजनसहस्राणि, तस्माद् यावदधो जम्बूद्वीपस्तावदूर्ध्वं त्रिदशानां स्थानम् । तस्मादपि यावदधो जम्बूद्वीपस्तावदूर्ध्वं यामानां स्थानम् । ततोऽपि यावदधो जम्बूद्वीपस्तावदूर्ध्वं तुषितानां स्थानमिति । एवं विस्तरेण सर्वमनुक्रम्य सुदर्शनेभ्यो यावदधो जम्बूद्वीपस्तावदूर्ध्वमकनिष्ठानां स्थानम् ।

तस्मादूर्ध्वं न पुनः स्थानमस्ति । अत एव ज्येष्ठभूत्वादकनिष्ठा उच्यन्ते । अघ-निष्ठा इत्यपरे । अघं किल चित्तस्थं रूपम्, तन्मात्रनिष्ठेति ॥

किं पुनरधरस्थानोपपन्ना ऊर्ध्वानि विमानानि गत्वा पश्यन्ति ?

**नोर्ध्वं　दर्शनमस्त्येषामन्यत्रर्द्धिपराश्रयात् ॥ ७२ ॥**

ऋद्धया वा त्रायस्त्रिंशा यामान् गच्छेयुः । पराश्रयेण वा यद्यृद्धिमता नीयेरन्, देवेन वा तत्रत्येन । एवं शेषाः ।

आगतं तूर्ध्वोपपन्नं पश्येत्, न तूर्ध्वधातुकम्, नोर्ध्वभूमिकम् । यथा स्प्रष्टव्यं न स्पृशेदविषयत्वात् । अत एव ते नास्वेन कायेनागच्छन्ति, किं तर्हि ? निर्मितेनाधरभूमिकेन ।

तदिच्छया पश्येदिहत्यमिवेति **निकायान्तरीयाः** ॥

---

पत्तिरिति शक्यं वक्तुम् । कुशलविपाकत्वेन सुखकल्पत्वात् सुखोपपत्तिरिति न शक्यं व्यवस्थापयितुम्, चतुर्थेऽपि ध्याने सुखोपपत्तिप्रसङ्ग इति चेत् ? न; तस्यां भूमौ सुखाभावात् । तस्माद्विचार्य सम्प्रधार्यमेतदिति भावः ॥ ७१ ॥

*एवं शेषा* इति । ऋद्धया वा यामास्तुषितां गच्छेयुः, यदि ऋद्धिमता नीयेरन्, देवेन वा तत्रत्येन । समानभूमिकास्तु चातुर्महाराजकायिकास्त्रयस्त्रिंशां गच्छन्ति । *आगतं तूर्ध्वोपपन्नं पश्येदिति* । समानभूमिकम्, नोर्ध्वभूमिकमिति । प्रथमध्यानोपपन्नो न द्वितीयध्यानोपपन्नमित्यादि ।

*तदिच्छयेति* । ऊर्ध्वोपपन्नेच्छया । *इहत्यमिवेति* । इह भवः इहत्यः । अधोभूमिक इत्यर्थः । *इहत्यमिव पश्येदिति निकायान्तरीयाः* । *यथा स्प्रष्टव्यमिति* । उदाहरणमात्रमेतत् । यथाशब्द इत्येतदपि गम्येत ।

अथैषां यामादिविमानानां कियत् प्रमाणम् ?

चतुर्णां तावद् यावत्सुमेरुमूर्ध्नः इत्येके । द्विगुणोत्तरमित्यपरे ।

प्रथमं तु ध्यानं यावांश्चातुर्द्वीपकः, द्वितीयं यावान् साहस्रश्चूडिको लोकधातुः, तृतीयं यावान् द्विसाहस्रः, चतुर्थं यावांस्त्रिसाहस्र इत्येके ।

प्रथमादीनि साहस्रादिपरिमाणानि, चतुर्थं त्वपरिमाणमित्यपरे ॥ ७२ ॥

अथ कोऽयं साहस्रश्चूडिको लोकधातुः, को द्विसाहस्रः, त्रिसाहस्रो वा ?

**चतुर्द्वीपकचन्द्रार्कमेरुकामदिवौकसाम् ।**
**ब्रह्मलोकसहस्रं च साहस्रश्चूडिको मतः ॥ ७३ ॥**

सहस्रं जम्बूद्वीपानां पूर्वविदेहानामपरगोदानीयानामुत्तरकुरूणाम्, सहस्रं सूर्याणां चन्द्राणां सुमेरूणाम्, सहस्रं चातुर्महाराजकायिकानां देवानां यावत् परनिर्मितवशवर्तिनाम्, सहस्रं ब्रह्मलोकानाम्—अयमुच्यते **साहस्रश्चूडिको लोकधातुः** ।

**तत् सहस्रं द्विसाहस्रो लोकधातुस्तु मध्यमः ।**

तेषां चूडिकानां लोकधातूनां सहस्रं **द्विसाहस्रो मध्यमो लोकधातुः** ।

**तत् सहस्रं त्रिसाहस्रः,**

तेषां द्विसाहस्राणां लोकधातूनां सहस्रं **त्रिसाहस्रमहासाहस्रो** लोकधातुः ।

एष हि कृत्स्नः—

**समसंवर्तसम्भवः ॥ ७४ ॥**

**समं संवर्तते, समं विवर्तते । सम्भवो हि विवर्त** इत्युत्तरत्र व्याख्यास्यामः[1]

चतुर्णां कामावचराणां यामादिस्थानानाम् । *द्विगुणोत्तरमिति* । यामस्थानं द्विगुणं तुषितस्थानमित्यादि । *चतुर्थं त्वपरिमाणमिति* । तारकावदतलत्वादन्‍प्रतिबद्धविमानत्वादपरिमाणत्वसम्भव इत्यभिप्रायः ॥ ७२ ॥

*सहस्रं ब्रह्मलोकानामिति* । ब्रह्मकायिक-ब्रह्मपुरोहित-महाब्रह्मणामित्यर्थः । लोके तथा प्रतीतत्वात् ।

*"चूडिकः"* इति । महतो लोकधातोश्चूडाभूतत्वाच्चूडिक इत्युच्यते । *सम्भवो हि विवर्त* इति । विविधवर्त्तनं विवर्त्तः । विविधा वर्तन्तेऽस्मिन्निति

१. व्याख्यास्यते—का० ।

किं खलु यथा भाजनानां प्रमाणभेदः, एवं तद्वासिनामपि सत्त्वानां प्रमाणभेदोऽस्ति ? अस्तीत्याह । तत्र तावत्—

**जाम्बूद्वीपाः प्रमाणेन चतुःसार्धत्रिहस्तकाः ।**

जम्बूद्वीपका मनुष्याः प्रमाणार्धचतुर्हस्तकाः । केचित्तु चतुर्हस्तकाः ।

**द्विगुणोत्तरवृद्धया तु पूर्वगोदोत्तराह्वयाः ॥ ७५ ॥**

पूर्वविदेहकाः, गोदानीयाः,[1] औत्तरकौरवाश्च[2] मनुष्या अष्ट-षोडश-द्वात्रिंश-द्धस्तप्रमाणका[3] यथाक्रमम् ॥ ७५ ॥

**पादवृद्धया तनुर्यावत् सार्धक्रोशो दिवौकसाम् ।**

**कामिनाम्,**

पादः = क्रोशस्य चतुर्थो भागः । तन्मात्रं शरीरं चातुर्महाराजकायिकानाम्, द्वौ पादौ त्रायस्त्रिंशानाम्, त्रयो यामानाम्, चत्वारस्तुषितानाम्, पञ्च निर्माणरतीनाम्, अध्यर्धः क्रोशः परिनिर्मितवशवर्तिनाम् ।

**रूपिणां त्वादौ योजनार्धम्,**

**रूपिणां** देवानां प्रथमे स्थाने ब्रह्मकायिकानामर्धयोजनमात्रं शरीरम् ।

---

विवर्तः । संवर्तनं ..वर्तः । संवर्तन्ते वास्मिन्निति संवर्त्तः । तस्मिन् हि काले सत्त्वा एकस्मिन् ध्याने द्वितीये तृतीये चतुर्थे वा संवर्त्तन्ते, सङ्गच्छन्त इति ।

"विवर्तते च संवृत्त आस्ते संवर्तते समम्" ( अभि० को० ३.९३ ) इति उत्तरत्र *व्याख्यास्यामः* ॥ ७३-७४ ॥

*"जाम्बूद्वीपाः प्रमाणेन चतुःसार्धत्रिहस्तकाः"* इति । सार्धत्रिहस्तप्रमाणशरीराः । केचित्तु चतुर्हस्तप्रमाणशरीराः ।

*"पूर्वगोदोत्तराह्वयाः"* इति । पूर्वंगोदः, उत्तर इति चाह्वय एषां ते पूर्वंगोदोत्तराह्वयाः, तेषां *यथासंख्यमष्टहस्तप्रमाणाः पूर्वविदेहकाः, षोडशहस्तप्रमाणा गोदानीयाः, द्वात्रिंशद्धस्तप्रमाणका औत्तरकौरवा* इति ॥ ७५ ॥

*"पादवृद्धया"* इति विस्तरः । *"यावत् सार्धक्रोशः"* इति । वक्ष्यमाणत्वात् पाद इति क्रोशस्येति गम्यते । *क्रोशचतुर्थभागमात्रं च शरीरं चातुर्महाराजकायिकानाम्, द्विपादमात्रं त्रायस्त्रिंशानाम्, यावदध्यर्धं क्रोशमात्रं परनिर्मितवशवर्त्तिनाम् ।*

---

१. गोदानीकाः—का० ।	२. उत्तर०—का० ।

३. ०द्धस्तकाः—का० ।

ततः परम् ॥ ७६ ॥

अर्धार्धवृद्धिः,

त्रिषु स्थानेषु ब्रह्मपुरोहितानां योजनम्, महाब्रह्मणोऽध्यर्धम्, परीत्ताभानां द्वे योजने ।

ऊर्ध्वं तु परीत्ताभेभ्य आश्रयः ।
द्विगुणद्विगुणा हित्वाऽनभ्रकेभ्यस्त्रियोजनम् ॥ ७७ ॥

अप्रमाणाभानां चत्वारि योजनानि । आभास्वराणामष्टौ । एवं द्विगुणवृद्ध्या यावच्छुभकृत्स्नानां चतुःषष्टिः । अनभ्रकाणां ततो योजनत्रयेण हीनं द्विगुणं पञ्चविंशतियोजनशतम् । तस्मात् परेण पुनः पुण्यप्रसवानां द्विगुणं द्विगुणं यावदकनिष्ठानां षोडशयोजनसहस्राणि शरीरम् ॥ ७६–७७ ॥

एवं प्रमाणभिन्नानां किमायुषोऽप्यस्ति भेदः ? अस्तीत्याह ।

सहस्रमायुः कुरुषु,

वर्षाणाम् ।

द्वयोरर्धार्धवर्जितम् ।

द्वयोर्द्वीपयोरर्धार्धं वर्जयित्वा पञ्च वर्षशतानि गोदानीयानाम् । अर्धतृतीये वर्षशते पूर्वविदेहानाम् ।

इहानियतम्,

जम्बूद्वीपे नास्त्यायुषो नियमः । कदाचित् भूयो भवति, कदाचिदल्पीयः ।

अन्ते तु दशाब्दाः,

अब्दः = संवत्सरः । अन्ते हीयमानं दश वर्षाण्यायुर्भवति ।

आदितोऽमितम् ॥ ७८ ॥

आदितः प्राथमकल्पिकानां मनुष्याणामपरिमाणमायुर्भवति । सहस्रादि-

---

*योजनत्रयेण हीनं द्विगुणमिति* । द्विगुणं कृत्वा त्रीणि योजनान्यपनेयानि । पञ्चविंशयोजनशतमनभ्रकाणां शरीरप्रमाणमिति । *पुण्यप्रसवानामिति* । पुण्यप्रसवानामर्धतृतीये योजनशते शरीरप्रमाणम्, बृहत्फलानां पञ्चयोजनशतानीति गणयितव्यम् ॥ ७६-७७ ॥

संख्यया परिमातुं न शक्यते ।

उक्तं मनुष्याणाम् ॥

देवानां वक्तव्यम् । तच्चाहोरात्रं व्यवस्थाप्य शक्यं वक्तुमिति स एव चैषां व्यवस्थाप्यते—

**नृणां वर्षाणि पञ्चाशदहोरात्रो दिवौकसाम् ।**

**कामेऽधराणाम्,**

यानि मनुष्याणां पञ्चाशद् वर्षाणि, तानि कामधातावधराणां देवानां चातुर्महाराजकायिकानामेकं रात्रिन्दिवम् ।

**तेनायुः पञ्चवर्षशतानि तु ॥ ७९ ॥**

तेन ततस्त्येनाहोरात्रेण[1] तेषां त्रिंशद्रात्रकेण मासेन द्वादशमासकेन संवत्सरेण दिव्यानि पञ्चवर्षशतानि आयुःप्रमाणम् ।

**द्विगुणोत्तरमूर्ध्वानामुभयम्,**

ऊर्ध्वानां देवानामुभयं द्विगुणोत्तरमहोरात्रश्चायुश्च । कथं कृत्वा ? यन्मनुष्याणां वर्षशतं तत् त्रायस्त्रिंशानां देवानामेकं रात्रिन्दिवम्, तेन रात्रिन्दिवेन दिव्यं वर्षसहस्रमायुः । एवं यामादीनां यथाक्रमम् । मानुष्यकाणि द्वे चत्वार्यष्टौ षोडश वर्षशतान्येकं रात्रिन्दिवम्, तेन रात्रिन्दिवेन द्वे चत्वार्यष्टौ षोडश दिव्यानि वर्षसहस्राण्यायुषः प्रमाणम् ।

युगन्धरादूर्ध्वं सूर्याचन्द्रमसोरभावात् कथं देवानामहोरात्रव्यवस्थानम्, आलोककृत्यं वा ?

पुष्पाणां सङ्कोचविकासात् कुमुदपद्मवत्[2], शकुनीनां च[3] कूजनाकूजनात्,

---

"*कुमुदपद्मवदिति*" । यथेह कुमुदान्यहनि सङ्कुचन्ति रात्रौ विकसन्ति, पद्मानि तु विपर्ययेण; तथा तत्र केषाञ्चिदेव पुष्पाणां सङ्कोचादहनि च विकासादहोरात्रव्यवस्थानम् । *शकुनीनाञ्च कूजनाकूजनात्* । अकूजनाद् रात्रिः,

---

१. ततस्तेना०—का० । २. कुमुदबन्धुवत्—का० ।

३. का० पुस्तके नास्ति ।

मिद्धापगमोपगमाच्च[1] आलोककृत्यम्; स्वयम्प्रभत्वात् ।

उक्तमायुः कामिनाम् ॥

**रूपिणां पुनः ।**

**नास्त्यहोरात्रमायुस्तु कल्पैः स्वाश्रयसम्मितैः ॥ ८० ॥**

येषां रूपिणामर्धयोजनमाश्रयः, तेषामर्धकल्पमायुः । येषां योजनम्, तेषां कल्पम् । एवं यस्य यावद्योजनमाश्रयः, तस्य तावत्कल्पमायुः; यावदकनिष्ठानां षोडशकल्पसहस्राण्यायुःप्रमाणम् ॥ ८० ॥

**आरूप्ये विंशतिः कल्पसहस्राण्यधिकाधिकम् ।**

आकाशानन्त्यायतने विंशतिकल्पसहस्राण्यायुषः प्रमाणम् । विज्ञानानन्त्यायतने तस्मादधिकं विंशतिः सहस्राणि । आकिञ्चन्यायतने तस्मादधिकं विंशतिः । भवाग्रे तस्मादधिकं विंशतिः । एवं तेषां यथाक्रमं चत्वारिंशत्[2] षष्टिरशीतिः कल्पसहस्राण्यायुःप्रमाणम् ॥

कतमोऽत्र कल्पो वेदितव्यः—किमन्तरकल्पः, अथ संवर्तकल्पः, अथ विवर्तकल्पः, अथ महाकल्पः ?

**महाकल्पः परीत्ताभात् प्रभृत्यर्धमधस्ततः ॥ ८१ ॥**

परीत्ताभादेव निकायात् प्रभृति महाकल्पेनायुः वेदितव्यम् । तस्मादधो महाकल्पस्यार्धं कल्पीकृत्य महाब्रह्मादीनामायुर्व्यवस्थापितम् ।

---

कूजनात् प्रभातम् । विपर्ययेण वा यथा शकुनिजात्[3] *मिद्धापगमोपगमाच्च ।* मिद्धोपगमाद् रात्रिः प्रज्ञायते, मिद्धापगमात् प्रभातमिति ॥ ७८-८० ॥

"*अधिकाधिकम्*" इति । विंशतिरधिकम् । अधिकं भवतीत्यर्थः । तेनाह—*एवं तेषां यथाक्रमं चत्वारिंशत् षष्टिरशीतिः कल्पसहस्राणि आयुःप्रमाण*मिति । *विज्ञानानन्त्यायतने* चत्वारिंशत् । *आकिञ्चन्यायतने* षष्टिः । *भवाग्रे*ऽशीतिः । *तस्मादधो महाकल्पस्यार्ध*मिति विस्तरः । अशीतिरन्तरकल्पा महाकल्पाः, तस्यार्धं चत्वारिंशदन्तरकल्पाः । तस्य महाकल्पार्धस्य कल्पीकृतस्य यदर्धं विंशतिरन्तरकल्पाः, तद् ब्रह्मकायिकानामायुःप्रमाणम् । यत्तदर्धकल्पीकृतं चत्वारिंशदन्तरकल्पाः, तद्ब्रह्मपुरोहितानामायुःप्रमाणम् । तदेवमात्मीयार्धं महाब्रह्मण आयुःप्रमाणम् । *स ह्यध्यर्धः कल्प* इत्युच्यते षष्ट्यन्तरकल्पसंख्याः । *महा-*

---

१. मिद्धापगमागमाच्च—का० । २. विंशतिश्चत्वा०—का० ।

३. शकुनिजोति—मु० पाठः ।

कथं कृत्वा ?

यच्च लोको विंशतिमन्तरकल्पान् विवर्तते, यच्च लोको विंशतिमन्तरकल्पान् विवर्त आस्ते, यच्च विंशतिमन्तरकल्पान् संवर्तते—इमे षष्टिरन्तरकल्पा महाब्रह्मणोऽध्यर्धः कल्प उक्तः। एवं च कृत्वा महाकल्पस्यार्धं चत्वारिंशदन्तरकल्पान् कल्पीकृत्य तेषामायुःप्रमाणमुक्तम् ॥ ८१ ॥

उक्तं सुगतावायुःप्रमाणम् ॥

दुर्गताविदानीं वक्तव्यम्। तत्र तावत्—

**कामदेवायुषा तुल्या अहोरात्रा यथाक्रमम्।**
**सञ्जीवादिषु षट्सु,**

यावत् षण्णां कामावचराणां देवनिकायानामायुरुक्तम्, तेन **तुल्या अहोरात्राः षट्सु** नरकेषु **यथाक्रमं** वेदितव्याः—सञ्जीवे, कालसूत्रे, सङ्घाते, रौरवे, महारौरवे, तापने च।

**आयुस्तैस्तेषां कामदेववत् ॥ ८२ ॥**

तैरिदानीं स्वैरहोरात्रैस्तेषां यथा षण्णां कामावचराणां देवानामायुः, तथैव यथाक्रमं वेदितव्यम्।

कथं कृत्वा ? यद्धि चातुर्महाराजकायिकानामायुःप्रमाणम्, तत् सञ्जीवने महानरके एकं रात्रिन्दिवम्। तेन यावद् द्वादशमासकेन संवत्सरेण तत्रत्यानि पञ्चवर्षशतान्यायुः।

---

*ब्रह्मादीनामिति*। आदिशब्देन ब्रह्मपुरोहितानां ब्रह्मकायिकानां च प्रातिलोम्येन ग्रहणम्।

*"अर्धमधस्ततः"*। परीत्ताभात् देवनिकायादिति निर्देशापेक्षणात् *तेषामायुः प्रमाणमुक्तमिति*। तेषां महाब्रह्मपुरोहितानां ब्रह्मकायिकानाम् ॥ ७८-८१ ॥

*"कामदेवायुषा तुल्याः"* इति विस्तरः। चातुर्महाराजकायिकानां यदायुःप्रमाणमुक्तम्, स सञ्जीवे अहोरात्रः। एवं यावद्यत् परनिर्मितवशवर्तिनामायुःप्रमाणमुक्तम्, स तपने अहोरात्रः।

*"कामदेववत्"* इति। कामदेवानामिव कामदेववत्। "तत्र तस्येव" (पा० सू० ५.१.११६) इति वतिः। तेन *यावद् द्वादशमासकेनेति*। तेन तत्स्थेनाहोरात्रेण तेषां त्रिंशद्रात्रकेण *मासेन* द्वादशमासकेन *संवत्सरेण तत्रत्यानि*

यत् त्रायस्त्रिंशानामायुःप्रमाणम्, तत् कालसूत्रे महानरके एकं रात्रिन्दिवम्। तेन रात्रिन्दिवेन तस्मिन् वर्षसहस्राण्यायुःप्रमाणम्।

एवमन्येष्वपि यथायोगं योज्यम्, यावत् परनिर्मितवशवर्तिनामायुःप्रमाणं तत्तुल्येनाहोरात्रेण तापने षोडश वर्षसहस्राण्यायुःप्रमाणम् ॥ ८२ ॥

**अर्धं प्रतापने,**

**प्रतापने** महानरकेऽन्तरकल्पस्यार्धमायुःप्रमाणम्।

**अवीचावन्तःकल्पम्,**

तिरश्चां तु नियमो नास्ति।

**परं पुनः।**

**कल्पं तिरश्चाम्,**

**परमायुस्तिरश्चामन्तरकल्पम्।** तत् पुनर्नागानां **नन्दोपनन्दाश्वतली**-प्रभृतीनाम्। उक्तं हि **भगवता**—"अष्टाविमे भिक्षवो नागा महानागाः कल्पस्था धरणीन्धराः" ( ) इति विस्तरः।

**प्रेतानां मासाह्ना शतपञ्चकम् ॥ ८३ ॥**

यो मनुष्याणां मासः, स **प्रेतानामहोरात्रः।** तेनाहोरात्रेण पञ्च वर्षशतान्यायुः ॥ ८३ ॥

शीतनरकेष्वायुषः किं प्रमाणम्?

**वाहाद् वर्षशतेनैकतिलोद्धारक्षयायुषः।**
**अर्बुदाद् विंशतिगुणप्रतिवृद्ध्यायुषः परे ॥ ८४ ॥**

---

दिव्यानि पञ्च वर्षशतान्यायुरित्यादि।

*एवमन्येष्वपि यथायोगं योज्यमिति।* यद् यामानामायुःप्रमाणम्, तत् सङ्घाते महानरके एकं रात्रिन्दिवम्। तेन तस्मिन् रात्रिन्दिवेन वर्षसहस्रद्वयमायुःप्रमाणम्। एवमन्येष्वपि यथायोगं योज्यम् ॥ ८२ ॥

*अष्टाविमे भिक्षव* इति। 'अष्टाविमे भिक्षवो नागा महानागाः कल्पस्था धरणीन्धरा अप्रत्युद्धार्याः सुपर्णिनः पक्षिराजस्य देवासुरमपि संग्राममनुभवन्त्यपि प्रत्यनुभवन्त्यपि। ते पुनः कतमे? तद् यथा—नन्दो नागराजः, उपनन्दो नागराजः, अश्वतरी नागराजः, मुचिलिन्दो नागराजः, मनस्वी नागराजः,

उपमानमात्रेण तेष्वायुराख्यातं भगवता—"तद्यथा भिक्षव इह स्याद् विंशतिखारीको मागधकस्तिलवाहः पूर्णस्तिलानां चूडिकाबद्धः। ततः कश्चिदेव वर्षशतस्यात्ययादेकं तिलमपनयते, क्षिप्रतरं भिक्षवः स विंशतिखारीको मागधकस्तिलवाहोऽनेनोपक्रमेण परिक्षयं पर्यादानं गच्छेत्। न त्वेवाहमर्बुदोपपन्नानामायुषः पर्यन्तं वदामि। यथा खलु भिक्षवो विंशतिरर्बुदाः, एवमेको निरर्बुदः; विस्तरेण यथा खलु भिक्षवो विंशतिः पद्मा एवमेको महापद्मः" इति॥

एवमेषामायुष्मतां सत्त्वानां किमस्त्यपरिपूर्णायुषामन्तरा मृत्युः, आहोस्विन्न? सर्वत्रास्ति—

**कुरुबाह्योऽन्तरामृत्युः,**

उत्तरकुरुषु नियतायुषः सत्त्वा अवश्यं कृत्स्नमायुर्जीवन्ति। अन्येषु नावश्यम्। पुद्गलानां तु बहूनां नास्त्यन्तरेण कालक्रियया। तुषितस्थस्यैकजातिप्रतिबद्धस्य[1] बोधिसत्त्वस्य, चरमभविकसत्त्वस्य जिनादिष्टस्य जिनभूतस्य, श्रद्धानुसारिधर्मानुसारिणोः,[2] बोधिसत्त्वचक्रवर्तिमात्रोश्च तद्गर्भयोरित्येवमादीनाम्॥

योजनप्रमाणेन स्थानानि शरीराणि चोक्तानि, वर्षप्रमाणेनायुरुक्तम्॥

तयोश्च प्रमाणं नोक्तमिति वक्तव्यम्, नाम्ना च सर्वेषां व्यवस्थानम्, अतस्तस्यापि पर्यन्तो वक्तव्यः। तेषां समानाख्यानार्थमादिप्रक्रम आरभ्यते—

**परमाण्वक्षरक्षणाः।**

---

धृतराष्ट्रो नागराजः, महाकारो नागराजः, एलपत्रो नागराजः" (          ) इति। चूडिकाबद्ध इति शिखाबद्धः॥ ८३-८४॥

*एकजातिप्रतिबद्धस्येति*। एकजन्मप्रतिबद्धबुद्धत्वस्य। *चरमभविकस्येति*। अन्त्यजन्मनः। येन तस्मिन्नेव जन्मन्यर्हत्त्वं साक्षात् कर्त्तव्यम्। तस्य नास्त्यन्तरेण कालक्रिया यावदर्हत्त्वं न प्राप्नोति। *श्रद्धानुसारिधर्मानुसारिणोः* नास्त्यन्तरेण कालक्रिया यावच्छ्रद्धाधिमुक्तदृष्टिप्राप्तौ न भवतः। *तद्गर्भयोरिति*। बोधिसत्त्वचक्रवर्त्तिगर्भयोः तन्मात्रोर्नास्त्यन्तरेण कालक्रिया यावन्न तौ जायेते। *एवमादीनामिति*। आदिशब्देन निरोधासंज्ञिसमापत्तिसमापन्नानां मैत्र्यादिसमापन्नानां च नास्त्यन्तरेण कालक्रिया, यावत्तस्मात् समाधेर्न व्युतिष्ठन्ते॥ ८६॥

---

१. जातिबद्धस्य—का०। २. श्रद्धाधर्मानुसारिणो—का०।

**रूपनामाध्वपर्यन्ताः,**

रूपस्यापचीयमानस्य पर्यन्तः परमाणुः। कालस्य पर्यन्तः क्षणः। नाम्नः पर्यन्तोऽक्षरम्। तद्यथा—गौरिति।

क्षणस्य पुनः किं प्रमाणम्? समग्रेषु प्रत्ययेषु यावता धर्मस्यात्मलाभः, गच्छन् वा धर्मो यावता परमाणोः परमाण्वन्तरं गच्छति। बलवत्पुरुषाच्छटमात्रेण पञ्चषष्टिः क्षणा अतिक्रामन्तीत्याभिधार्मिकाः।

**परमाणुरणुस्तथा ॥ ८५ ॥**

**लोहाप्शशाविगोच्छिद्ररजोलिक्षास्तदुद्भवाः।**

**यवस्तथाङ्गुलीपर्व ज्ञेयं सप्तगुणोत्तरम् ॥ ८६ ॥**

एतत् परमाण्वादिकं सप्तगुणोत्तरं वेदितव्यम्। सप्त परमाणवोऽणुः, सप्ताणवो लोहरजः, तानि सप्ताब्रजः, तानि सप्त शशरजः, तानि सप्तैडकरजः, तानि सप्त गोरजः, तानि सप्त वातायनच्छिद्ररजः, तानि सप्त लिक्षाः, तदुद्भवा यूकेत्यर्थः, सप्त यूका यवः, सप्त यवा अङ्गुलीपर्व। त्रीणि पर्वाण्यङ्गुरीति प्रसिद्धमेवेति नोक्तम् ॥ ८५–८६ ॥

पार्श्वीकृतास्तु—

**चतुर्विंशतिरंगुल्यो हस्तो हस्तचतुष्टयम्।**
**धनुः,**

व्यासेनेत्यर्थः।

**पञ्चशतान्येषां क्रोशोऽरण्यं च तन्मतम् ॥ ८७ ॥**

धनुषां पञ्चशतानि क्रोशः। क्रोशमात्रं च ग्रामादि अरण्यमिष्टम्[1] ॥८७॥

**तेऽष्टौ योजनमित्याहुः,**

उक्तं योजनस्य प्रमाणम् ॥

वर्षस्येदानीमुच्यते—

**विंशं क्षणशतं पुनः।**

---

"*चतुर्विंशतिरङ्गुल्यो हस्तः*" इति। अभिधर्मवचनकाले यः पुरुषहस्तः स ग्रहीतव्यः। येन चतुर्द्वीपकादिपरिमाणव्यवस्थानम् ॥ ८७ ॥

---

१. रण्यमिष्टम्—का०।

**तत्क्षणः,**

क्षणानां विंशं शतमेकस्तत्क्षणः ।

**ते पुनः षष्टिर्लवः,**

तत्क्षणाः षष्टिर्लव इत्युच्यते ।

**त्रिंशद्गुणोत्तराः ॥ ८८ ॥**

**त्रयो मुहूर्त्ताहोरात्रमासाः,**

त्रिंशल्लवा मुहूर्त्तः, त्रिंशन्मुहूर्त्ता अहोरात्रः । कदाचित्तु रात्रिरधिका भवति, कदाचिदूना, कदाचित् समा । त्रिदशाहोरात्रा मासः ।

**द्वादशमासकः ।**

**संवत्सरः सोनरात्रः,**

चत्वारो मासा हेमन्तानाम्, चत्वारो वर्षाणामित्येते द्वादश मासा संवत्सरः सार्धमूनरात्रैः । संवत्सरेण हि षडूनरात्रा निपात्यन्ते । कथं कृत्वा ?

"हेमन्तग्रीष्मवर्षाणामध्यर्धे मासि निर्गते ।
शेषेऽर्धमासे विद्वद्भिरूनरात्रो निपात्यते ॥"

उक्तं वर्षप्रमाणम् ॥

---

*हेमन्तानामिति* । यथा वर्षा इत्येकस्मिन्नप्यर्थे बहुवचनं प्रसिद्धम्, तथा हेमन्ताः, ग्रीष्मा इति द्रष्टव्यम् । *प्रवचने* त्रय एवर्तवः, न यथा लोके षडिति । शिशिरो हि शीतसामान्याद्धेमन्त इत्युक्तः, वसन्तोऽप्यूष्मसामान्याद् ग्रीष्म इत्युक्तः, शरदपि वृष्टिसामान्याद् वर्षा इत्युक्तेति ।

*हेमन्तग्रीष्मवर्षाणामिति* । सर्वबौद्धानां हेमन्ताः प्रथम ऋतुः, ग्रीष्मा द्वितीयः, वर्षास्तृतीयः । तत्राधिकमर्धमस्येत्यध्यर्धो मासः, तस्मिन्नध्यर्धे *मासि निर्गते* । मार्गशीर्षे सपौषार्धेऽधिक्रान्ते । *शेषेऽर्धमासे* । पौषस्यार्धेऽवशिष्टे कृष्णचतुर्दश्याम्, ऊनरात्रो *विद्वद्भिर्बौद्धैर्निपात्यते* । त्यज्यत इत्यर्थः । चातुर्दशिकोऽत्र भिक्षुभिः पोषधः क्रियते । एवं माघे फाल्गुनार्धेऽतिक्रान्ते शेषेऽर्धमासे फाल्गुनावशिष्टे पुनरपर ऊनरात्रो निपात्यते । तथा ग्रीष्मेषु वैशाखकृष्णचतुर्दश्याम्, आषाढकृष्णचतुर्दश्यां चापरावूनरात्रौ निपात्येते । वर्षास्वपि भाद्रपदकृष्णचतुर्दश्यां कार्त्तिककृष्णचतुर्दश्यां चापरावूनरात्रौ निपात्येते ॥ ८८–८९ ॥

कल्पस्येदानीं वक्तव्यम् —

**कल्पो बहुविधः स्मृतः ॥ ८९ ॥**

अन्तरकल्पः, संवर्त्तकल्पः, विवर्त्तकल्पः, महाकल्पश्चेति । तत्र तावत्—

**संवर्त्तकल्पो नरकासम्भवात् भाजनक्षयः ।**

नरकेषु हि सत्त्वासम्भवात् प्रभृति यावत् भाजनसंक्षयः ।

द्वे हि संवर्त्तन्यौ—गतिसंवर्तनी, धातुसंवर्तनी च । पुनर्द्वे संवर्तन्यौ—सत्त्वसंवर्तनी, भाजनसंवर्तनी च ।

भवति स कालो यन्नरकेषु सत्त्वाश्च्यवन्ते नोपपद्यन्ते । स आरम्भः संवर्तकल्पस्य । यदयं लोको विंशत्यन्तरकल्पान् विवृत्तोऽस्थात् तन्निर्यातं वक्तव्यम् । यद्विंशतिमन्तरकल्पान् संवर्तिष्यते तत् प्रतिपन्नं वक्तव्यम् ।

यदा नरकेष्वेकसत्त्वो नावशिष्टो भवति इयतायं लोकः संवृत्तो भवति । यदुत नरकसंवर्त्तन्या यस्य तदानीं नियतं नरकवेदनीयं कर्म ध्रियते स लोकधात्वन्तरनरकेषु क्षिप्यते ।

एवं तिर्यक्संवर्त्तनी, प्रेतसंवर्त्तनी च वक्तव्या । महासमुद्रगतास्तिर्यञ्चः पूर्वं संवर्तन्ते ।

---

*गतिसंवर्त्तनीति* । नरकाद्याः पञ्चगतयो गत्येकदेशे देवगतौ संवर्त्तन्ते एकस्थीभवन्तीत्यर्थः । *धातुसंवर्त्तनी* चेति । कामधातू रूपधातौ संवर्तत इति । *सत्त्वसंवर्त्तनी* । यदा सत्त्वा एव संवर्त्तन्ते, ध्यानेष्वेकस्थीभवन्ति; न तु तद्भाजनानि संवर्तन्ते, विनश्यन्तीत्यर्थः । *भाजनसंवर्त्तनीति* । यदा भाजानान्येव संवर्त्तन्ते न तु सत्त्वाः; एकस्यापि सत्त्वस्य तत्राभावात् ।

*यदयं लोक* इति विस्तरः । यदयं लोको *विंशतिमन्तरकल्पान्* विवृत्तो जातः । यावन्नरकोत्पत्तिप्रवृत्ति *निर्यातं* तन्निष्ठितं *वक्तव्यमित्यर्थः* । *तत्प्रतिपन्नं वक्तव्यमिति* । तत्संवर्तनमारब्धं वक्तव्यमिति ।

*एवं तिर्यक्संवर्तनी प्रेतसंवर्त्तनी च वक्तव्येति* । यदा तिर्यक्ष्वेकसत्त्वोऽपि नावशिष्टो भवति, इयतायं लोकः संवृत्तो भवति । तिर्यक्संवर्तन्या यस्य तदानीं नियतं तिर्यग् वेदनीयं कर्म ध्रियते, स लोकधात्वन्तरतिर्यक्षु क्षिप्यते । एवं प्रेतसंवर्तनी योज्या 'यदा प्रेतेषु' इति विस्तरेण ।

मनुष्यसहचरिष्णवस्तु तैरेव सार्धं भवन्ति । स कालो यन्मनुष्येष्वन्यतमः सत्त्वः स्वयमनाचार्यकं धर्मताप्रातिलम्भिकं प्रथमं ध्यानं समापद्यते, स तस्मात् व्युत्थाय वाचं भाषते—'सुखं बत विवेकजं प्रीतिसुखम्, शान्तं बत विवेकजं प्रीतिसुखम्' इति । तं च शब्दं श्रुत्वा अन्येऽपि सत्त्वाः समापद्यन्ते । कालं कृत्वा ब्रह्मलोक उपपद्यन्ते । यदा जम्बूद्वीप एकसत्त्वोऽपि नावशिष्टो भवति इयताऽयं लोकः संवृत्तो भवति यदुत जम्बूद्वीपसंवर्तन्या ।

एवं पूर्वविदेह-गोदानीयोत्तरकुरुसंवर्तन्यो वक्तव्याः ।

यदा मनुष्येष्वेकसत्त्वोऽपि नावशिष्टो भवति इयताऽयं लोकः संवृत्तो भवति यदुत मनुष्यगतिसंवर्त्तन्या ।

औत्तरकौरवास्तु कालं कृत्वा कामावचरेषु देवेषूपपद्यन्ते । तत्र वैराग्याभावात् ।

एवं चातुर्महाराजकायिकेष्वपि देवेषु प्रथमं ध्यानं समापद्य ब्रह्मलोक उपपद्यन्ते । यदा तत्रैकसत्त्वोऽपि नावशिष्टो भवति इयताऽयं लोकः संवृत्तो भवति यदुत चातुर्महाराजकायिकसंवर्त्तन्या ।

एवं यावत् परिनिर्मितवशवर्तिसंवर्त्तन्यो वक्तव्याः । यदैकसत्त्वोऽपि कामावचरेषु देवेषु नावशिष्टो भवति इयताऽयं लोकः संवृत्तो भवति यदुत कामधातुसंवर्तन्या ।

ब्रह्मलोकेऽप्यन्यतमः सत्त्वो धर्मताप्रातिलम्भिकं द्वितीयं ध्यानं

---

*मनुष्यसहचरिष्णव* इति । मनुष्यसहचरणशीला गोमहिषादयः । *धर्मताप्रतिलम्भिकमिति* । धर्मता नाम कुशलानां धर्माणां तदानीं परिणामविशेषः, तया प्रतिलम्भोऽस्यास्तीति धर्मताप्रतिलम्भिकम् । *यन्मनुष्येष्विति* । जम्बूद्वीपमनुष्येष्वित्यभिप्रायः ।

एवं *पूर्वविदेह-गोदानीयसंवर्तन्यौ* योज्यौ । *उत्तरकुरुसंवर्तनी* त्वेवं वक्तव्या भवति—स कालो यदुत्तरकुरौ मनुष्याश्च्यवन्त एव, नोपपद्यन्ते । *यदा तत्रैकसत्त्वोऽपि नावशिष्टो भवति,* इयतायं लोकः संवृत्तो भवत्युत्तरकुरुसंवर्तन्येति । कस्मादेवं वक्तव्या, न तु जम्बूद्वीपसंवर्त्तन्यादिवद् ? इत्याह—तत्र *वैराग्याभावात्* । तत्रोत्तरकुरौ वैराग्याभावात् ।

समापद्योत्थाय वाचं भाषते—'सुखं बत समाधिजं प्रीतिसुखम्, शान्तं बत समाधिजं प्रीतिसुखम्' इति। तं शब्दं श्रुत्वाऽन्येऽपि सत्त्वाः समापद्यन्ते। कालं च कृत्वा आभास्वरेषु देवेषूपपद्यन्ते। यदा ब्रह्मलोक एकसत्त्वोऽपि नावशिष्टो भवति इयताऽयं लोकः संवृत्तो भवति यदुत सत्त्वसंवर्तन्या।

ततः शून्ये भाजने इत एव सामन्तकात् सत्त्वानां तदाक्षेपके कर्मणि परिक्षीणे सप्त सूर्याः प्रादुर्भूय क्रमेण यावत् पृथिवीं सुमेरुं च निःशेषं दहन्ति। तस्मादेव च[1] प्रज्वलितादर्चिर्वायुना क्षिप्तं शून्यं ब्राह्मं विमानं निर्दहत् परैति। तच्च तद्भूमिकमेवार्चिर्वेदितव्यम्। नहि विसभागा अपक्षालाः क्रमन्ते; तत्सम्बद्धसम्भूतत्वात्। तस्मात्तदित्युक्तम्। कामावचरो ह्यग्नी रूपावचरमग्निं सम्बध्नातीति।

एवमन्यस्यामपि संवर्तन्यां यथासम्भवं[2] वेदितव्यमिति। नरकेषु सत्त्वानां च्युत्यनुत्पादात् प्रभृति यावत् भाजनानां संक्षय एष कालः।

**विवर्तकल्पः प्राग्वायोर्यावन्नरकसम्भवः॥ ९०॥**

प्रथमाद् **वायोः** प्रभृति **यावन्नरकेषु** सत्त्वसम्भवः, एष कालो **विवर्तकल्प** इत्युच्यते।

---

*इत एव सामन्तकादिति*। चातुर्द्वीपकसामन्तकादित्यर्थः। *तदाक्षेपके कर्मणि परिक्षीण* इति। भाजनाक्षेपके भाजनोत्पादके परिक्षीण इत्यर्थः। *ब्राह्मं विमानं निर्दहदर्चिः परैति*। गच्छतीत्यर्थः। *तच्च तद्भूमिकमेवार्चि*रिति। प्रथमध्यानभूमिकम्। *कस्माद्?* इत्याह—*नहि विसभागा* विसदृशा *अपक्षाला* उपद्रवा अग्न्यादयः *क्रमन्ते*। तापयन्त इत्यर्थः। आह—यद्येवम्, किमिदमुच्यते—*तस्मादेव चेति* विस्तरेणेति? अत उच्यते—*तत्सम्बद्धसम्भूतत्वादिति* विस्तरः। तेन कामावचरेणार्चिषा सम्बद्धं सम्भूतं रूपावचरमर्चिः, तद्भावस्तस्मादिति।

*एवमन्यस्यामिति*। यथा तेजःसंवर्त्तन्यामुक्तम्, एवमन्यस्यामप्यप्संवर्तन्याम्, वायुसंवर्तन्यां च *यथासम्भवं वेदितव्यम्*। कथं कृत्वा नरकादिसंवर्तनी? यां पूर्ववदुक्त्वा यावदियताऽयं लोकः संवृत्तो भवति सत्त्वसंवर्त्तन्या। ततः शून्ये भाजने सहजोऽब्धातुः सम्भवति। यस्तं भाजनलोकं लवणमिव विलोपयति, स कामावचरोऽब्धातुः सम्बध्नाति, स च द्वितीयध्यानभूमिकं सम्बध्नाति। स [illegible] स्वेन स्वेन भाजनेन सहान्तर्धीयते।

---

१. का० पुस्तके नास्ति। २. यथायोगं—का०।

तथा हि[1] संवृत्तो[1] लोक आकाशमात्रावशेषश्चिरं कालं तिष्ठति यावत् पुनरपि सत्त्वानां कर्माधिपत्येन भाजनानां पूर्वनिमित्तभूता आकाशे मन्दमन्दा वायवः स्यन्दन्ते। तदा प्रभृति[2] यदयं लोको विंशतिमन्तरकल्पान् संवृत्तोऽस्थात्, तन्निर्यातं वक्तव्यम्। यद् विंशतिमन्तरकल्पान् विवर्तिष्यते, तदुपयातं वक्तव्यम्।

ततस्ते वायवो वर्धमाना यथोक्तं वायुमण्डलं जायते। ततः शनैर्यथोक्त-क्रमविधानं सर्वं जायते—अब्मण्डलम्, काञ्चनमयी पृथिवी[3], सुमेर्वादयश्च। प्रथमं तु ब्राह्मं विमानमुत्पद्यते। ततो यावद् यामीयम्, ततो वायुमण्डलादीनि। इयताऽयं लोको विवृत्तो भवति यदुत भाजनविवर्तन्या।

अथान्यतरः सत्त्व आभास्वरेभ्यश्च्युत्वा शून्ये ब्राह्मे विमान उत्पद्यते।

---

एवं वायुसंवर्तन्यां सहजो वायुः सम्भवतीति वक्तव्यम्। कथमिति ? पूर्ववदुक्त्वा यावत् सहजो वायुधातुः सम्भवतीति। यस्तं भाजनलोकं कामावचरं यावत् तृतीयध्यानभूमिकं क्रमेण पांशुराशिमिव विकरति विध्वंसयति। यावत्तेनैव सार्धमन्तर्धीयते।

विवर्तकल्पं विस्तरेण वक्तुकाम आह—*तथा हि संवृत्तो लोक* इति विस्तरः। तथेति यथा वर्णितम्। *तदेति* विस्तरः। *यदाकाशे मन्दमन्दा वायवः स्यन्दन्ते तदा प्रभृति यदयं लोको विंशतिमन्तरकल्पान् संवृत्तोऽस्थात्, तन्निर्यातं* परिसमाप्तं *वक्तव्यम्। तदुपयातं वक्तव्यमिति।* तदारब्धं वक्तव्यमित्यर्थः।

*यथोक्तक्रमविधानमिति।* यथोक्तेन क्रमेण विधानेन च *सर्वं जायते।* यथोक्तः क्रमः—*वायुमण्डलम्, अब्मण्डलम्, ततः काञ्चनमयी पृथिवी, ततः सुमेर्वादयश्चेति।* यथोक्तं विधानम्—यस्य यद्विधानमुक्तम्, अयामोद्वेधपरिणाहसंस्थानलक्षणम्, तत्तथा *सर्वं जायते। प्रथमं तु ब्राह्ममिति* विस्तरः। यत् पश्चात् संवर्तते तत्पूर्वं विवर्तत इति स्थितिः। तेनाह—*प्रथमं तु ब्राह्मं विमानमुत्पद्यते। ततो यावद्यामीय*मिति। यावच्छब्देन ब्रह्मविमानानन्तरं परनिर्मितवशवर्तिविमानम्, तदनन्तरं निर्माणरतिविमानम्, ततोऽनन्तरं यावद्यामीयं विमानमुत्पद्यते। *ततो* यामीय-विमानोत्पत्त्यनन्तरं *वायुमण्डलादीनीति। यदुत भाजनविवर्तन्येति।* न सत्त्व-विवर्तन्येति दर्शयति।

*शून्ये ब्राह्मे विमान उत्पद्यते* इति। महाब्रह्मा।

---

१–१. तथा संवृत्ते हि—का०। २. का० पुस्तके नास्ति।

३. महापृथिवी द्वीपाः—का०।

अन्येऽपि च[1] सत्त्वास्ततश्च्युत्वा ब्रह्मपुरोहितेषूपपद्यन्ते। ततो ब्रह्मकायिकेषु परनिर्मितवशवर्तिषु। क्रमेण यावदुत्तरकुरौ, गोदानीये, पूर्वविदेहे, जम्बूद्वीपे, प्रेतेषु, तिर्यक्षु, नरकेषूपपद्यन्ते। धर्मता ह्येषा—यत् पश्चात् संवर्तते तत् पूर्वं विवर्तते।

यदा नरकेष्वेकः सत्त्वोऽपि प्रादुर्भूतो भवति, तदा यदयं लोको विंशति-मन्तरकल्पान् विवर्तते तन्निर्यातं भवति। यद् विंशतिमन्तरकल्पान् विवर्त्तः स्थास्यति, तदुपयातं भवति॥ ९० ॥

**अन्तःकल्पोऽमितात् यावद् दशवर्षायुषः,**

विवर्तमाने लोके एकान्नविंशतिरन्तरकल्पा अपरिमितायुषां मनुष्याणामति-क्रामन्ति।

अपरिमितायुषामेव ह्रसतां[2] **यावद्दशवर्षायुषो** भवन्ति। सोऽसौ विवृत्तानां तिष्ठतां प्रथमोऽन्तरकल्पः।

ततः।

**उत्कर्षा अपकर्षाश्च कल्पा अष्टादशापरे॥ ९१ ॥**

तस्मादपरेऽष्टादशोत्कर्षाः, अपकर्षाश्चाष्टादशान्तरकल्पा भवन्ति।

---

*अन्येऽपि च सत्त्वा* इति। तत्परिवाराः। *ततश्च्युत्वा ब्रह्मपुरोहितेष्विति*। तत आभास्वरेभ्यः।

*तन्निर्यातं भवतीति*। तद्विवर्तनं लोकस्य परिसमाप्तं भवतीत्यर्थः। *तदुपयातं भवतीति*। आरब्धं विवृत्तावस्थानायेत्यर्थः॥ ९० ॥

*एकोनविंशतिरन्तरकल्पा अपरिमितायुषामिति*। एकोऽन्तरकल्पो ब्रह्मलोक-विमानादिभाजननिवृत्त्याऽतिक्रान्त इत्येकोनविंशतिरवशिष्टा अन्तरकल्पा अपरिमितायुषां मनुष्याणामतिक्रामन्ति; आनरकसत्त्वप्रादुर्भावात्। सा च विवर्तमानावस्थातिक्रान्तैवावगन्तव्या। प्रादुर्भूते नारके सत्त्वे विवृत्तावस्था प्रारब्धा। सेयमुच्यते—*अपरिमितायुषामेव ह्रसतां यावद्दशवर्षायुषामेको विवृत्ता-वस्थान्तरकल्पः*। तेनाह—*सोऽसौ विवृत्तानां तिष्ठतां प्रथमोऽन्तरकल्प* इति।

*ततोऽष्टादश "उत्कर्षा अपकर्षाश्च"*॥ ९१ ॥

---

१. का० पुस्तके नास्ति। २. क्रमतां—का०।

कथं कृत्वा ? तेभ्यो हि दशवर्षायुष्केभ्य उत्कर्षं गच्छन्तः क्रमेणाशीतिवर्षसहस्रायुषो भवन्ति। पुनश्चापकर्षं गच्छन्तो दशवर्षायुषो भवन्ति। एवं द्वितीयोऽन्तरकल्पः। एवं यावदष्टादश ॥ ९१ ॥

**उत्कर्ष एकः,**

एकान्तरकल्पो विंशतितम उत्कर्षः। एवमपकर्षः। दशवर्षायुष्केभ्यो यावदशीतिवर्षायुषां मनुष्याणामिति वर्त्तते।

अथैते उत्कर्षाः कियन्तं प्रकर्षं गच्छन्ति ?

**तेऽशीतिसहस्राद् यावदायुषः।**

नातः परेण वर्धन्ते। यावानेव चान्येषामन्तरकल्पानामुत्कर्षापकर्षकालः, तावानेव प्रथमस्यापकर्षकालः पश्चिमस्य चोत्कर्षकाल इति समानकालाः सर्वे भवन्ति।

**इति लोको विवृत्तोऽयं कल्पाँस्तिष्ठति विंशतिम् ॥ ९२ ॥**

इत्यनेनान्तरकल्पन्यायेनायं विंशतिमन्तरकल्पान् विवृत्तस्तिष्ठति ॥९२॥

यावन्तं कालं विवृत्तस्तिष्ठति, तावन्तमेव कालम्—

**विवर्ततेऽथ संवृत्त आस्ते संवर्तते समम्।**

विंशतिमेवान्तरकल्पान् विवर्तते, विंशतिं संवर्त्तते, विंशतिं संवृत्त आस्ते।

यद्यपि तदानीमुत्कर्षा अपकर्षाश्च न प्रवर्तन्ते, कालस्तु समानः परिसंख्यायते। तत्रैकेनान्तरकल्पेन भाजनान्यभिनिवर्तन्ते, एकान्नविंशत्याऽन्तरकल्पेन भाजनानि विध्वंस्यन्ते, एकान्नविंशत्या शून्यीभवन्ति। ता एता अन्तरकल्पानां चतस्रो विंशत्योऽशीतिर्भवन्ति।

**ते ह्यशीतिर्महाकल्पः,**

एतन्महाकल्पस्य प्रमाणम् ॥

कल्पः किंस्वभावः ? पञ्चस्कन्धस्वभावः। यदुच्यते—

---

ततस्तु "उत्कर्ष एकः" इति। विंशत्यन्तरकल्पपरिमाणा *विवृत्तावस्था* अवगन्तव्या ॥ ९२ ॥

*पञ्चस्कन्धस्वभावः कल्पः*। "त एवाध्वा कथावस्तु" ( अभि० को० १.७ ) इति।

"त्रिभिरसंख्येयैः कल्पानां बुद्धत्वं प्राप्यते" (       ) इति ।

तत् कतमेषां कल्पानाम् ? य एव महाकल्पो निर्दिष्टः ।

**तदसंख्यत्रयोद्भवम् ॥ ९३ ॥**

बुद्धत्वम्,

असंख्येयानां कल्पानां त्रयेण ।

कथमसंख्येयस्यासति संख्येयावसाने पुनस्त्रित्वमुच्यते ? नैतदेवं वेदितव्यम् । किं तर्हि ? "षष्टिः स्थानान्तराण्यसंख्येयम्" (       ) इति मुक्तकसूत्रं पठ्यते ।

कतमानि षष्टिः ?

एको ह्यद्वितीयः प्रथमं स्थानान्तरम् । एककानां दशको द्वितीयम् । दश दशकानि शतं तृतीयम् । दश शतानि सहस्रम् । दश सहस्राणि प्रभेदः । दश प्रभेदा लक्षम् । दश लक्षा अतिलक्षः । दशातिलक्षाः कोटिः । दश कोट्यो मध्यः । दश मध्या अयुतम् । दशायुता महायुतम् । दश महायुता नियुतम् । दश नियुता महानियुतम् । दश महानियुताः प्रयुतम् । दश प्रयुता महाप्रयुतः । दश महाप्रयुताः कङ्करः । दश कङ्करा महाकङ्करः । दश महाकङ्करा विस्वरः । दश विस्वरा महाविस्वरः । दश महाविस्वरा अक्षोभ्यः । दशाक्षोभ्या महाक्षोभ्यः । दश महाक्षोभ्या विवाहः । दश विवाहा महाविवाहः । दश महाविवाहा उत्सङ्गः । दशोत्सङ्गा महोत्सङ्गः । दश महोत्सङ्गा वाहनः । दश वाहनानि महावाहनम् । दश महावाहनानि तिटिभः । दश तिटिभा महातिटिभः । दश महातिटिभा हेतुः । दश हेतवो महाहेतुः । दश महाहेतवः करभः । दश करभा महाकरभः । दश महाकरभा इन्द्रः । दशेन्द्रा महेन्द्रः । दश महेन्द्राः समाप्तम् । दश समाप्तानि महासमाप्तम् । दश महासमाप्तानि गतिः । दश गतयो महागतिः । दश महागतयो निम्बरजः । दश निम्बरजांसि महानिम्बरजः । दश महानिम्बरजांसि मुद्रा । दश मुद्रा महामुद्रा । दश महामुद्रा बलम् । दश बलानि महाबलम् । दश महाबलानि संज्ञा । दश संज्ञा

---

मुक्तकमिति । न चतुरागमान्तर्गतमित्यर्थः ।

महासंज्ञा । दश महासंज्ञा विभूतः । दश विभूता महाविभूतः । दश महाविभूता बलाक्षम् । दश बलाक्षा महाबलाक्षम् । दश महाबलाक्षाणि असंख्यम् ।

अष्टकं मध्याद् विस्मृतम्[1] ।

इत्येतेषां षष्टिस्थानान्तरगतां संख्यामनुप्राप्ताः कल्पा असंख्येयानीत्युच्यन्ते। ततो व्यावृत्य पुनर्गण्यन्ते । एवं त्रीणि असंख्येयानीत्युच्यन्ते । न तु नैव परिसंख्यातुं शक्यन्त इति ।

किन्नु खलु कालप्रकर्षेणैव कृतप्रणिधाना बोधिसत्त्वा बोधिमभिसम्बुध्यन्ते ? किमेतदेव भविष्यति—महतां हि पुण्यज्ञानसम्भारेण षड्भिः पारमिताभिः बहुभिर्दुष्करशतसहस्रैस्त्रिभिः कल्पासंख्येयैरनुत्तरां सम्यक्संबोधिमभिसम्बुध्यन्ते बोधिसत्त्वाः । यद्यप्यन्यथाप्यस्ति मोक्षावकाशः, किमर्थं त इयन्तं यत्नमारभन्ते ? परार्थं त इयन्तं यत्नमारभन्ते—'कथं परानपि महतो दुःखौघात् परित्रातुं शक्नुयाम्' इति ।

क एषां परार्थेन स्वार्थः ? स एव तेषां स्वार्थो यः परार्थः, तस्याभिमतत्वात् ।

क[2] इदानीमेतच्छ्रद्धास्यते ? सत्यं दुःश्रद्धानमेतदात्मम्भरिभिर्निष्करुणैः;

---

*अष्टकं मध्याद् विस्मृतमि*ति । अष्टौ स्थानानि क्वापि प्रदेशे प्रमुषितत्वान्न पठितानि । तेनात्र द्वापञ्चाशत् स्थानानि भवन्ति । षष्ट्या च संख्यास्थानैर्भवितव्यम् । तान्यष्टकानि स्वयं कानिचिन्नामानि कृत्वा पठितव्यानि, येन षष्टिसंख्यास्थानानि परिपूर्णानि भवेयुः । *असंख्या* इति । असंख्येयाः संख्यानेनासंख्येया असंख्या इति । बहुवचननिर्देशादनुक्ता अपि तद्धिता भवन्ति । यद्येवं "तदसंख्यत्रयोद्भवम्" इति कथमुक्तम् ? नैष दोषः; नास्ति संख्या परेणैष्वित्यसंख्याः, असंख्येयाः कल्पाः । असंख्याश्चासंख्याश्चासंख्याश्चेत्यसंख्याः, तेषां त्रयम् । तेषां कल्पानामसंख्यत्रय उद्भवतीति तदसंख्यत्रयोद्भवं बुद्धत्वमित्येवं तद्व्याख्यातव्यम् ।

*तस्याभिमतत्वा*दिति । तस्य परार्थस्याभिमतत्वात् । यो ह्यभिमतः स स्वार्थो दृष्ट इति ।

---

१. विस्तृतम्—का० । २. का० पुस्तके नास्ति ।

कारुणिकैस्तु श्रद्धितमेवैतत् । यथा चेह केचिदभ्यस्तनैर्घृण्या असत्यपि स्वार्थे परव्यसनाभिरता उपलभ्यन्ते । तथा पुनरभ्यस्तकारुण्या असत्यपि स्वार्थे परहितक्रियाभिरामाः सन्तीति सम्भाव्यम् । यथैव चाभ्यासवशादनात्मभूतेषु संस्कारेषु संस्कृतलक्षणानभिज्ञा आत्मस्नेहं निवेश्य तद्धेतोर्दुःखान्युद्वहन्ति, एवं पुनरभ्यासवशादात्मस्नेहं तेभ्यो निवर्त्य परेष्वपेक्षां वर्धयित्वा तद्धेतोर्दुःखान्युद्वहन्तीति सम्भाव्यम् ।

गोत्रान्तरमेव हि तत् तथाजातीयं निर्वर्तते[1] यत् परेषां दुःखेन दुःखायते सुखेन सुखायते, नात्मन इति । न ते पुनः स्वार्थमन्यं पश्यन्ति । आह चात्र—

"हीनः प्रार्थयते स्वसन्ततिगतं यैस्तैरुपायैः सुखम्,
मध्यो दुःखनिवृत्तिमेव न सुखं दुःखास्पदं तद् यतः ।
श्रेष्ठः प्रार्थयते स्वसन्ततिगतैर्दुःखैः परेषां सुखम्,
दुःखात्यन्तनिवृत्तिमेव च यतस्तद्दुःखदुःख्येव सः ॥" ( )

किं पुनरुत्कर्षा बुद्धा उत्पद्यन्ते ? आहोस्विदपकर्षाः ?

**अपकर्षे तु शताद् यावत् तदुद्भवः ।**

अशीतिवर्षशतायुषि प्रजायामपकर्षे आरब्धे यावद्वर्षशतायुषो मनुष्या भवन्ति, एतस्मिन्नन्तरे बुद्धा उत्पद्यन्ते ।

---

*तद्धेतोरि*ति । आत्मस्नेहहेतोः । *आत्मस्नेहं तेभ्य* इति विस्तरः । आत्मस्नेहं तेभ्यः स्वासान्तानिकेभ्यः संस्कारेभ्यो *निवर्त्य*[2] *अपेक्षां* करुणालक्षणां *वर्धयित्वा तद्धेतो*रपेक्षाहेतो*र्दुःखान्युद्वहन्तीति सम्भाव्यं* प्रतिपत्तव्यम् ।

*मध्यो दुःखनिवृत्तिमेवे*ति । प्रत्येकबुद्धः श्रावको दुःखनिवृत्तिमेव मोक्षमेव प्रार्थयते, *न सुखं* सांसारिकम् । कुतः ? *दुःखास्पदं तद्यतः* । यस्मात् तत् सांसारिकं सुखं दुःखस्थानं भवति । *श्रेष्ठो* बोधिसत्त्वः *स्वसन्ततिगतैर्दुःखैः परेषां सुख*माभ्युदयिकं *दुःखात्यन्तनिवृत्तिमेव* च निःश्रेयसस्वभावां परेषां *प्रार्थयते* । अथवा—परेषां सुखमाभ्युदयिकनैःश्रेयसिकं प्रार्थयते । दुःखात्यन्तनिवृत्तिमेव च बुद्धलक्षणामात्मीयां परहितक्रियोपायभूतां प्रार्थयते । कस्माद् ? इत्याह—*यतस्तद्दुःखदुःख्येव स* इति । तस्मात् परदुःखैः स बोधिसत्त्वो दुःखी भवति । अत एव सुखं द्विप्रकारं प्रार्थयत इति ।

---

१. हि—का० ।  २. निवर्त्य—मुद्रितः पाठः ।

कस्मान्नोत्कर्षकाले ? तदा हि दुःसमुद्वेजाः सत्त्वा भवन्ति ।

कस्मान्न शतात् ? तदा हि पञ्च कषाया अभ्युत्सदा भवन्ति । तद्यथा—आयुष्कषायः, कल्पकषायः, क्लेशकषायः, दृष्टिकषायः, सत्त्वकषायश्च ।

अपकर्षस्याधस्तात् प्रत्यवरा आयुरादयः किट्टभूतत्वात्[1] कषाया उच्यन्ते ।

द्वाभ्यां हि जीवितोपकरणविपत्ती यथाक्रमम् । द्वाभ्यां कुशलपक्षविपत्तिः; कामसुखल्लिकाऽऽत्मक्लमथानुयोगाधिकारात्, गृहिप्रव्रजितपक्षयोर्वा । एकेनात्मभावविपत्तिः; प्रमाणरूपारोग्यबलबुद्धिस्मृतिवीर्यधैर्यभ्रंशात् ॥

अथ प्रत्येकबुद्धानां कस्मिन् काले उत्पादः ?

**द्वयोः प्रत्येकबुद्धानाम्,**

उत्कर्षेऽपि, अपकर्षेऽपि ।

द्विविधा हि प्रत्येकबुद्धाः—वर्गचारिणः, खड्गविषाणकल्पाश्च ।

---

*अपकर्षस्याधस्तादि*ति विस्तरः । वर्षशतस्याधस्तात् । *पञ्चकषाया अभ्युत्सदा भवन्ति* । अभ्यधिका भवन्तीत्यर्थः । वर्षशतेऽभ्युत्सदाः, न त्वभ्युत्सदा यथाधस्तात् । *आयुःकषाय* इति । *किट्टभूतं प्रत्यवरं* कषायः, आयुरेव कषाय आयुःकषायः । एवं कल्पकषायादयः ।

*यथाक्रममि*ति । *जीवितविपत्ति*रायुःकषायेण, *उपकरणविपत्तिः* कल्पकषायेण । धान्यपुष्पफलौषधादीन्युपकरणान्यल्परसवीर्यविपाकप्रभावाणि हि तानि भवन्ति, नैव वा भवन्ति । *द्वाभ्यां कुशलपक्षविपत्तिरि*ति । क्लेषकषायेण, दृष्टिकषायेण च कुशलपक्षस्य विपत्तिः । कथम् ? इत्याह—*कामसुखल्लिकात्मक्लमथानुयोगाधिकारा*दिति । कामसुखमेव कामसुखल्लिका, कामसुखलीनतेति वा । कामतृष्णा वा कामसुखल्लिका, यथा कामसुखे सज्यते । आत्मक्लमथः = आत्मोपतापः । आत्मपीडेत्यर्थः । कामसुखल्लिकात्मक्लमथयोरनुयोगः=अनुसेवनम्, तस्याधिकारस्तस्मात् । तदुक्तम्—कामसुखल्लिकानुयोगमात्मक्लमथानुयोगं वाधिकृत्यारभ्य क्लेशदृष्टिकषायाभ्यां कुशलपक्षविपत्तिर्भवतीति । एवं तावदविशेषेण ।

*गृहिप्रव्रजितपक्षयोर्वा* । गृहिपक्षस्य क्लेषकषायेण कुशलपक्षविपत्तिः, प्रव्रजितपक्षस्य दृष्टिकषायेण । यथाक्रमं कामप्रधाना गृहिणः, दृष्टिप्रधाना प्रव्रजिता इति । *एकेने*ति । सत्त्वकषायेण ।

*द्विविधा हि प्रत्येकबुद्धा* इति । *यस्माद् वर्गचारिणोऽपि* प्रत्येकबुद्धाः

---

१. किटभूतत्वात्—का० ।

तत्र वर्गचारिणः श्रावकपूर्विणः प्रत्येकजिना उच्यन्ते । पृथग्जनपूर्विणोऽपि सन्तीत्यपरे । येऽन्यत्रोत्पादितनिर्वेधभागीया इह स्वयं मार्गमभिसम्बुध्यन्ते । तथा हि पूर्वयोगं पठन्ति—"पर्वते किल पञ्चशतानि तापसानां कष्टानि तपांसि तप्यन्ते स्म, यावत् प्रत्येकबुद्धसहोषितेन मर्कटेनागम्य तदीर्यापथसन्दर्शनात् प्रत्येकबोधिमभिसम्बुद्धाः" (                ) इति । न चार्याः सन्तः कष्टानि तपांसि तप्येरन् ।

खड्गविषाणकल्पाः पुनरसंसृष्टविहारिणः[1] ।

तेषां प्रत्येकबुद्धानाम्—

**खड्गः कल्पशतान्वयः ॥ ९४ ॥**

महाकल्पानां शतं बोधिसम्भारेषु चरितः खड्गं विषाणकल्पो भवति । विनोपदेशेनात्मानमेकं प्रतिबुद्धा इति प्रत्येकबुद्धाः । ते ह्येकमात्मानं दमयन्ति, नान्यान् ।

किं पुनरत्र कारणम् ? न हि तावदशक्ता धर्मं देशयितुम्; प्रतिसंवित्प्राप्त-

---

*श्रावकपूर्विणो भवन्ति* न केवलं खड्गविषाणकल्पाः । तस्मादुत्कर्षेऽपि तेषामुत्पत्तिर्न विरुध्यते । ये ह्युत्पादितस्रोतआपत्तिफलसकृदागामिफला अन्तर्हिते बुद्धशासने स्वयमर्हत्त्वमधिगच्छन्ति, ते वर्गचारिणः । ते च बुद्धोत्पादकाल एव प्राकृतसंवेगत्वान्न पुनः संवेजनीया इति । *-ईर्यापथसन्दर्शनादिति* । प्रत्येकबुद्धेर्यापथसन्दर्शनात् । पर्यङ्कबद्धसमाधिरूपसन्दर्शनात् । *न चार्याः सन्तः कष्टानि तपांसि तप्येरन्निति* । सत्यदर्शनकाल एव शीलव्रतपरामर्शदृष्टेः प्रहीणत्वात्, शीलव्रतपरामर्शदृष्टिपूर्वकत्वाच्च कष्टतपःक्रियायाः ।

*खड्गविषाणकल्पा* इति । यथा खड्गविषाणा अद्वितीया भवन्ति, एवं ते *गृहस्थश्रावकजिनैरन्यैश्च* प्रत्येकबुद्धैर*संसृष्टविहारिण* इति । खड्गविषाणकल्पा इत्युच्यन्ते ।

*"कल्पशतान्वयः"* इति । कल्पशतकृतबोधिहेतुरित्यर्थः । अत एव व्याचष्टे—*महाकल्पानां शतं बोधिसम्भारेषु* शीलसमाधिप्रज्ञालक्षणेषु *चरितः* कृतप्रयोग इति ।

---

१. पुनरेकविहारिणः—का० ।

त्वात्। शक्यं च तैः पूर्वबुद्धानामनुशासनमनुस्मृत्यापि[1] धर्मं देशयितुम्। नापि निष्करुणाः; सत्त्वानुग्रहार्थमृद्धेराविष्करणात्। नापि सत्त्वानामभव्यत्वात्; तथा हि लौकिकवीतरागाः[2] संविद्यन्ते। किं तर्हि?

पूर्वाभ्यासवशेनाल्पोत्सुकताधिमुक्तत्वात् नोत्सहन्ते गम्भीरधर्मग्रहणाय परेषां व्यापर्तुम्। अनुस्रोतोगामिनीनां हि प्रजानां दुष्करं प्रतिस्रोतोनयनम्।

गणपरिकर्षणप्रसङ्गपरिहारार्थं च; व्याक्षेपसंसर्गभीरुत्वात्॥ ९३–९४॥

अथ चक्रवर्त्तिनः कदोत्पद्यन्ते?

**चक्रवर्तिसमुत्पत्तिर्नाधोऽशीतिसहस्रकात्।**

अमिते चायुषि मनुष्याणां यावदशीतिसहस्रके चोत्पत्तिश्चक्रवर्त्तिनाम्, **नाधः**; तस्याः सम्पदस्तदूनायुषामभाजनत्वात्।

राज्यं चक्रेण वर्तयितुं शीलमेषामिति चक्रवर्त्तिनः।

ते पुनश्चतुर्विधाः—

**सुवर्णरूप्यताम्रायश्चक्रिणः,**

---

*शक्यञ्च तैरि*ति विस्तरः। अथापि ते प्रतिसंवित्प्राप्ता न भवेयुः। तथापि तैः प्रणिधिज्ञानेन *पूर्वबुद्धानामनुशासनमनुस्मृत्य धर्मो देशयितुं शक्यते। ऋद्धेराविष्करणादिति*। आकाशगमनादिकायाः सत्त्वानुग्रहार्थं प्रकाशनात्। *नापि सत्त्वानामभव्यत्वात्*। धर्मं न देशयन्तीति वाक्यशेषः। कस्माद्? इत्याह—*तथा हीति* विस्तरः। यस्माद्धि *लौकिकवीतरागास्तदानीं संविद्यन्ते*, तस्माल्लोकोत्तरवीतरागा अपि सम्भवेयुरित्यभिप्रायः। यद्येते न हेतवो धर्मदेशनाया अकरणे, कस्तर्हि हेतुः? इत्याह—*कि तर्ही*ति विस्तरः।

*पूर्वाभ्यासवशेन* असंसर्गाभ्यासवशेन। त्वादित्यर्थः। *गणपरिकर्षणप्रसङ्गपरिहारार्थं*[3] च *नोत्सहन्ते गम्भीरधर्मग्रहणाय परेषां व्यापर्तुम्*। तथा व्यापारे हि सति गणः परिकृष्टव्यः स्यात्। गणपरिकर्षणप्रसङ्गं पुनः कस्मात् परिहरन्ति? *व्याक्षेपसंसर्गभीरुत्वात्*। व्याक्षेपसंसर्गाभ्यां भीरुत्वात्। व्याक्षेपः=अभिप्रेतसमाध्यादिकर्मण्यप्रवृत्तिः। संसर्गः=अन्यसम्पर्कः। व्याक्षेपसंसर्गभीरुत्वं पुनः पूर्वाभ्यासवशात्॥ ९३–९४॥

---

१. ०बुद्धानां शासनमनु०—का०। २. लौकिकमार्गवीत०—का०।
३. ०परिहार्यं—मुद्रितः पाठः।

सुवर्ण-रूप्य-ताम्र-अयश्चक्राणि येषां सन्ति । प्रथम एषामुत्तमः, द्वितीय उपोत्तमः, तृतीयो मध्यमः, चतुर्थोऽधमः ।

नेऽधरक्रमात् ॥ ९५ ॥

एक-द्वि-त्रि-चतुर्द्वीपाः,

यस्यायसं चक्रं स एकद्वीपाधिपतिः, यस्य ताम्रमयं स द्वयोः, यस्य रूप्यमयं स त्रयाणाम्, यस्य सुवर्णमयं स चतुर्द्वीपाधिपतिः—एष प्राज्ञप्तिको निर्देशः ।

सूत्रे तु प्रधानग्रहणादेकमेव सौवर्णं चक्रम् । "यस्य राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य तदेव पोषधे पञ्चदश्यां शिरःस्नातस्योपोषधोपोषितस्योपरिप्रासाद-तलगतस्यामात्यगणपरिवृतस्य पूर्वस्यां दिशि चक्ररत्नं प्रादुर्भवति सहस्रारं सना-भिकं सनेमिकं सर्वाकारपरिपूर्णं शुभकर्मारकृतं दिव्यं सर्वसौवर्णम्, स राजा भवति चक्रवर्ती" (                ) इति ।

एवं चैते चक्रवर्तिन उत्पद्यन्ते—

न च द्वौ सह बुद्धवत् ।

सूत्र उक्तम्—"अस्थानमनवकाशो यदपूर्वाचरमौ द्वौ तथागतावर्हन्तौ सम्यक्सम्बुद्धौ लोक उत्पद्येयाताम् । नेदं स्थानं विद्यते । स्थानमेतद् विद्यते यदेकस्तथागतः । यथा तथागत एवं चक्रवर्तिनौ" (                ) इति ।

इदमत्र सम्प्रधार्यम्—किमत्र त्रिसाहस्रमहासाहस्रो लोकधातुर्लोक इष्टः, उताहो सर्वलोकधातव इति ?

नान्यत्र बुद्धा उत्पद्यन्ते इत्येके । किं कारणम् ? मा भूद् भगवतः शक्ति-व्याघात इति । एक एव हि भगवान् सर्वत्र शक्तः । यत्र बुद्ध एको न शक्तः

---

*एष प्राज्ञप्तिक इति* । *प्रज्ञप्तिशास्त्र*निर्देशः—*चतुर्विधाश्चक्रवर्त्तिन* इति । सूत्रे तु सुवर्णचक्रवर्त्येवोक्तः; प्राधान्यात् ।

*अस्थानं* वर्तमानकालापेक्षया । *अनवकाशो*ऽनागतापेक्षया । अनागतेऽप्य-ध्वनि सम्भवाद्युगपद् द्वयोरिति । *अपूर्वाचरमाविति* । नैकः पूर्वो नापरः पश्चात् । किं तर्हि ? सहेत्यर्थः । *समसम* इति वीप्सा । अथ वा—समैः सर्वसत्त्वेषु बुद्धै-र्भगवद्भिः सम इति समसमः ।

स्याद् विनेयान् विनेतुम्, तत्रान्योऽपि न शक्त इति । उक्तं च सूत्रे—"स चेत् त्वां शारिपुत्र कश्चिदुपसंक्रम्यैवं पृच्छेत्—'अस्ति कश्चिदेतर्हि श्रमणो वा ब्राह्मणो वा समसमः श्रमणेन गौतमेन यदुताभिसम्बोधाय । एवं च पृष्टः किं व्याकुर्याः' ? 'स चेन्मां भदन्त कश्चिदुपसंक्रम्यैवं पृच्छेत्, तस्याहं पृष्ट एवं व्याकुर्याम्—नास्ति कश्चिदेतर्हि श्रमणो वा ब्राह्मणो वा समसमो भगवता यदुताभिसम्बोधाय । तत् कस्य हेतोः ? सम्मुखं मे भगवतोऽन्तिकाच्छ्रुतम्, सम्मुखमुद्गृहीतम्—अस्थानमनवकाशो यदपूर्वाचरमौ तथागतौ लोक उत्पद्येयातां नेदं स्थानं विद्यते'" (                ) इति ।

यत्तर्हि भगवतोक्तं ब्रह्मसूत्रे—"यावत्त्रिसाहस्रमहासाहस्रको लोको वशो मेऽत्र वर्तते" (                ) इति ? आभिप्रायिक एष निर्देशः ।

कोऽत्राभिप्रायः ? तावतोऽनभिसंस्कारेण व्यवलोकनात् । अभिसंस्कारेण त्वनन्तो बुद्धानां चक्षुर्विषयः ।

सन्त्येवान्यलोकधातुषु बुद्धा इति **निकायान्तरीयाः** । किं कारणम् ? बहवो हि समं सम्भारेषु प्रवर्तमाना दृश्यन्ते । न चैकत्र बहूनां युगपद् योग उत्पत्तुम्, न चास्ति तदुत्पत्तौ कश्चित् प्रतिबन्ध इति नियतं लोकधात्वन्तरेषू-त्पद्यन्ते । अनन्ता लोकधातव इति न शक्यं भगवता कल्पमप्यायुर्बिभ्रता यथेह तथान्येष्वपि अनन्तेषु लोकधातुषु व्यापर्तुम्, किं पुनः पुरुषायुषम् ।

कथं चेह बुद्धो व्याम्रियते ? अस्य पुद्गलस्येदमिन्द्रियम् इयता कालेना-मुष्मिन् देशे अमुं पुद्गलमागम्यास्य दोषस्य परिहारादस्याङ्गस्योपसंहारादनेन प्रयोगेणानुत्पन्नं वोत्पत्स्यते, अपरिपूर्णं वा परिपूरयिष्यतीति ।

यत्त्विदं सूत्रमत्रोपनीतम्—"अस्थानमनवकाशो यदपूर्वाचरमौ द्वौ तथा-गतावेकत्र लोक उत्पद्येयाताम्" (                ) इति, तदेवेदं सम्प्रधार्यते—

---

*तावतोऽनभिसंस्कारेणेति* । तावतो लोकधातोरनाभोगेन दर्शनात ।
*निकायान्तरीया* इति । महासाङ्घिकप्रभृतयः ।
*न चैकत्रेति* । लोकधातौ पुरुषायुषमिति । पुरुषस्यायुः पुरुषायुषम् । तद् बिभ्रतेति वर्तते । इदमिन्द्रियमिति । श्रद्धादि । *अस्याङ्गस्येति* । अस्य प्रत्ययस्य ।

किमिदमेकं लोकधातुमधिकृत्योक्तम्, आहोस्वित् सर्वानिति ? चक्रवर्तिनोऽपि चास्य लोकधातौ न स्यादुत्पादः; सहोत्पत्तिप्रतिषेधात् बुद्धवत् ।

अथैतत् क्षम्यते, इदं तु कस्मान्न क्षम्यते—"पुण्यस्तु बुद्धानां लोक उत्पादः" इति ? यदि बहूनां बहुषु स्यात्, न दोषः स्यात् । भूयसां लोकानामभ्युदयेन योगः स्यान्निःश्रेयसेन च ॥

अथैकस्मिन्नपि कस्माद् द्वौ तथागतौ न सहोत्पद्येते ?

१. प्रयोजनाभावात् । २. प्रणिधानवशाच्च । एवं हि बोधिसत्त्वाः प्रणिधानं कुर्वन्ति—'अहो बताहमन्धे लोकेऽपरिणायके बुद्धो लोक उत्पद्येयमनाथानां नाथः' इति । ३. आदरार्थम् । ४. अभित्वरार्थं च । एकस्मिन् हि बुद्धे सुतरामाद्रियन्ते । 'दुर्लभ ईदृशोऽन्यः' इति मन्यमानाः सुतरां चाभित्वरन्ते शासनप्रतिपत्तौ—'माऽस्मिन् गते परिनिर्वृते वाऽनाथा भूम' इति ॥

अथैते चक्रवर्तिनः सुवर्णादिमयैश्चक्रैः पृथिवीं जयन्तः कथं जयन्ति ? यथाक्रमम्—

**प्रत्युद्यानस्वयंयानकलहास्त्रजितः,**

यस्य सौवर्णं चक्रं भवति तं कोटराजानः स्वयं प्रत्युद्गच्छन्ति—'इमे देवस्य जनपदाः ऋद्धाश्च स्फीताश्च क्षेमाश्च सुभिक्षाश्चाकीर्णबहुजनमनुष्याश्च, तान् देवः समनुशास्तु, वयं देवस्यानुयात्रिका भविष्यामः' इति ।

यस्य रूप्यमयं स स्वयमेव तेषामन्तिकं याति, पश्चादस्य प्रह्वीभवन्ति ।

यस्य ताम्रमयं स तेषामन्तिकं गत्वा कलहायते, पश्चात् प्रह्वीभवन्ति ।

---

*किमिदमेकं लोकधातुमधिकृत्येति* । एकचातुर्द्वीपकं त्रिसाहस्रमहासाहस्रं वा लोकधातुमधिकृत्यैतदुक्तमित्यभिप्रायः । *चक्रवर्तिनोऽपि* चेति विस्तरः । "अस्थानमनवकाशो यदपूर्वाचरमौ द्वौ तथागतौ उत्पद्येयाताम्" इति नानेन वचनेन लोकधात्वन्तरोत्पादप्रतिषेधः; तथागतानां तथोक्तत्वात् । तद् यथा—चक्रवर्त्तिनाम् । चक्रवर्त्तिनोऽपि हि तथोक्ताः—"अस्थानमनवकाशो यदपूर्वाचरमौ द्वौ चक्रवर्त्तिनौ लोक उत्पद्येयाताम्" इति ।

*जनाः* प्राकृतमनुष्याः । *मनुष्यास्तु* मतिमन्तः ।

यस्य शस्त्रमयं स तेषामन्तिकं गच्छति, अन्योन्यं शस्त्राण्यावहन्ति, पश्चान्नमन्ति ॥

सर्वे तु चक्रवर्तिनः—

**अवधाः ॥ ९६ ॥**

शस्त्रेणापि जयतां वधो न प्रवर्तते । निर्जित्य च सत्त्वान् दशसु कुशलेषु कर्मपथेषु प्रतिष्ठापयन्ति । अत एव ते नियतं देवेषूत्पद्यन्ते । सूत्र उक्तम्—"राज्ञश्चक्रवर्तिनो लोके प्रादुर्भावात् सप्तानां रत्नानां लोके प्रादुर्भावो भवति । तद्यथा—चक्ररत्नस्य, हस्तिरत्नस्य, अश्वरत्नस्य, मणिरत्नस्य, स्त्रीरत्नस्य, गृहपतिरत्नस्य, परिणायकरत्नस्य" (                ) इति । कथं सत्त्वसंख्याता हस्त्यादयः परकीयेण कर्मणोत्पद्यन्ते ? न वै कश्चित् परकीयेणोत्पद्यते । येन तु सत्त्वेन तत्सम्बन्धजातीयं[1] तत्सम्बद्धसंवर्तनीयं[1] कर्मोपचितम्, तस्मिन्नुत्पन्ने स्वान्येवैनं कर्माण्युत्पादयन्ति ।

किमेष एवान्यराजभ्यश्चक्रवर्तिनां विशेषः ? अन्योऽपि विशेषोऽस्ति; तद्यथा—द्वात्रिंशन्महापुरुषलक्षणान्येषां भवन्ति, तद्यथा बुद्धानाम् ॥९५–९६॥

तत्र तु—

**देशस्थोत्तप्तपूर्णत्वैर्लक्षणातिशयो मुनेः ।**

देशस्थतराणि बुद्धानां लक्षणानि, उत्तप्ततराणि, सम्पूर्णतराणि च—इत्येष तेषां विशेषः ॥

---

*शस्त्राण्यावहन्ति* उत्क्षिपन्ति ।

*गृहपतिरत्नम्* । कोषाध्यक्षजातीयः । *परिणायकरत्नम्* । बलाध्यक्षजातीयः । *तत्सम्बन्धजातीयमि*ति । तेन चक्रवर्त्तिना सम्बद्धः । तत्सम्बद्धस्य तत्सम्बद्धेन वा संवर्तनं तस्मै हितं तदनुकूलं *तत्सम्बद्धसंवर्तनीयमि*ति । येन सत्त्वेन कर्मोपचितं *तस्मिन्नुत्पन्ने* चक्रवर्त्तिन स्वान्येवैनं सत्त्वं कर्माण्युत्पादयन्ति । न तु सत्त्वश्चक्रवर्त्तिकुशलविपाकोत्पत्तिप्रत्ययभावमापद्यते । स च कुशलविपाकश्चक्रवर्त्तिन एवेत्यवगन्तव्यम् ॥ ९५–९६ ॥

*देशस्थतराणीति* । अभ्रष्टस्थानानि । *उत्तप्ततराणि* । प्रभास्वरतराणि । *सम्पूर्णतराणि* । अखण्डरूपाणि ॥

---

१–१. तत्सम्बन्धसंवर्तनीयम्—का० ।

किं खलु प्राथमकल्पिका अपि मनुष्याः सराजका आसन् ? नेत्याह । किं तर्हि ?

**प्रागासन् रूपिवत् सत्त्वाः,**

प्राथमकल्पिका मनुष्या रूपावचरा इवासन् । सूत्र उक्तम्—"ते भवन्ति रूपिणो मनोमयाः सर्वाङ्गप्रत्यङ्गोपेता अविकला अहीनेन्द्रियाः शुभा वर्णस्थायिनः स्वयम्प्रभा विहायसङ्गमाः प्रीतिभक्षाः प्रीत्याहारा दीर्घायुषो दीर्घमध्वानं तिष्ठन्ति" (          ) इति ।

**रसरागात् ततः शनैः ॥ ९७ ॥**

**आलस्यात् सन्निधिं कृत्वा साग्रहैः क्षेत्रपो भृतः ।**

तेषां तथाभूतानां भूमिरसः प्रादुर्भूतो मधुस्वादुरसः ।

तस्यान्यतमो लोलुपजातीयः सत्त्वो गन्धं घ्रात्वा रसं स्वादितवान्, भक्षितवांश्च । तथा अन्येऽपि सत्त्वास्तथैवाकार्षुः । स आरम्भः कवडीकाराहारस्य । तेषां तदाहाराभ्यासात् खरत्वं गुरुत्वं च कायेऽवक्रान्तम्, प्रभाश्च अन्तर्हिताः । ततोऽन्धकार उत्पन्ने सूर्याचन्द्रमसौ प्रादुर्भूतौ ।

सोऽप्येषां भूमिरस आस्वादगृद्धानां क्रमेणान्तर्हितो भूमिपर्पटकं प्रादुर्भूतम् । तत्रापि गृद्धाः, तदप्यन्तर्हितम् । वनलता प्रादुर्भूता । तत्रापि गृद्धाः, साऽप्यन्तर्हिता । अकृष्टोप्तः शालिरुत्पन्नः, तं प्रभुक्ताः । तस्येदानीमौदारिकत्वान्निःष्यदनिर्वाहार्थं सत्त्वानां मूत्रपुरीषमार्गौ सह स्त्रीपुरुषेन्द्रियाभ्यां प्रादुर्भूतौ, संस्थानं च

---

चक्रवर्त्तिराजप्रस्तावेनेदं विचार्यते—*किं खलु यावत् सराजका* इति । *रूपावचरा इवासन्निति*, अस्यार्थस्य प्रतिपादनाय सूत्रमानयति—*सूत्र उक्तमिति* विस्तरः । दृश्यरूपत्वाद् *रूपिणः* । उपपादुकत्वान्*मनोमयाः* । हस्तपादतदङ्गुल्याद्युपेतत्वात् *सर्वाङ्गप्रत्यङ्गोपेताः* । समग्रेन्द्रियत्वाद*विकलाः* । काणविभ्रान्ताद्यभावाद*हीनेन्द्रियाः* । दर्शनीयसंस्थानत्वात् *शुभाः* । रमणीयवर्णत्वाद् *वर्णस्थायिनः* । आदित्यादिप्रभानपेक्षत्वात् *स्वयम्प्रभाः* । कर्मर्द्धिसंयोगेनाकाशचरत्वाद् *विहायसङ्गमाः* । कवडीकाराहारानपेक्षत्वात् *प्रीतिभक्षाः, प्रीत्याहारा* इति पर्यायौ । तथा *दीर्घायुषो दीर्घमध्वानं तिष्ठन्तीति* ।

*मधुस्वादुरस* इति । मधुन इव स्वादुरसोऽस्य स इति ।

भिन्नम्। तेषामन्योन्यं पश्यतां पूर्वाभ्यासवशादयोनिशोमनस्कारग्राहग्रासतां गतानां कामराग उदीर्णो यतो विप्रतिपन्नाः। एष आरम्भः कामिनां कामभूतग्रहावेशस्य।

ते च खलु तं शालिं सायं च सायमाशार्थं प्रातश्च प्रातराशार्थं प्रवेशयन्ति स्म। अथान्यतमः सत्त्वोऽलसजातीयः सन्निधिकारमकार्षीत्। अन्येऽपि च सत्त्वाः सन्निधिकारमकार्षुः। तेषां तत्र ममकार उत्पन्ने स शालिर्लूनो लूनो न पुनर्जायते स्म।

ततः क्षेत्राणि प्रविभज्य स्वेष्वाग्रहं कृत्वा परकीयं हर्तुमारब्धाः। प्रथम आरम्भश्चौर्यस्य। तैस्तेषामङ्कुशार्थं समेत्यान्यतमः पुरुषविशेषः क्षेत्राणि पालयितुं षष्ठभागेन भृतः। तस्य क्षेत्राणामधिपतिः क्षत्रियः क्षत्रिय इति संज्ञोत्पन्ना। महाजनकायस्य सम्मतः प्रजां च रञ्जयतीति महासम्मतो राजेति संज्ञोत्पन्ना। एष आरम्भो राजपरम्परायाः।

तत्र ये गृहेभ्यो बहिर्मनसः संवृत्तास्तेषाम् 'ब्राह्मणाः' इति संज्ञोत्पन्ना।

अथान्यतमस्य राज्ञो लोभात् संविभागमकुर्वन्तः सत्त्वानां तास्कर्यं प्राचुर्यमापन्नम्। स तान् शस्त्रेणोपसंक्रमते स्म। ततोऽन्ये 'नैवङ्कारकाः स्म' इति मृषा वाचं वक्तुमारब्धा इति।

**ततः कर्मपथाधिक्यादपह्रासे दशायुषः ॥ ९८ ॥**

तत एवं कर्मपथानां वृद्धौ सत्यां क्रमेण ह्रसतां मनुष्याणां दशवर्षायुषो मनुष्याः सम्भवन्ति।

अतोऽस्य कृत्स्नस्यानर्थौघस्य द्वौ धर्मौ मूलयोनिः—रसरागः, आलस्यं च ॥ ९८ ॥

---

*अयोनिशोमनस्कारस्य ग्राहभूतस्य ग्रासतां गतानां* सत्त्वानां *काम* एव ग्रहः, *तेनावेशस्तस्यारम्भ* इति।

*सायमाशार्थमिति*। अपराह्णभोजनार्थम्। *प्रातराशार्थमिति*। प्रातर्भोजनार्थम्। *सन्निधिकारः* संग्रहः। *क्षेत्राणि विभज्य* अकृष्टोप्तेन शालिना तद्वृत्तिकल्पनात्। क्षत्रियादिसंज्ञानां नैरुक्तेन विधिना सिद्धिः ॥ ९७-९८ ॥

मनुष्याणामन्तरकल्पस्य निर्याणं भवति। कथं भवति ? इत्याह —

**कल्पस्य शस्त्ररोगाभ्यां दुर्भिक्षेण च निर्गमः।**

त्रिभिरन्तरकल्पस्य निर्याणं भवति—**शस्त्रेण, रोगेण, दुर्भिक्षेण च।** अन्तरकल्पस्य निर्याणकाले दशवर्षायुषो मनुष्या अधर्मरागरक्ता भवन्ति विषमलोभाभिभूता मिथ्याधर्मपरीताः अमातृज्ञा[1] अपितृज्ञाः[1]। तेषां व्यापाद उत्कर्षं गतोऽन्योन्यं सत्त्वं दृष्ट्वा तीव्रमाघातचित्तं वधकचित्तं च प्रत्युपस्थितं भवति। तद्यथा—इदानीं मृगलुब्धकस्यारण्यकं मृगं दृष्ट्वा ते यद्यदेव गृह्णन्ति काष्ठं वा लोष्टं वा तत्तेषां तीक्ष्णं शस्त्रं प्रादुर्भवति, तेऽन्योन्यं सत्त्वं जीविताद् व्यपरोपयन्ति।

नः कल्पस्य निर्याणकाले दशवर्षायुषां मनुष्याणां तैरेव दोषैरमनुष्या ईतिमुत्सृजन्ति, यतस्तेषामसाध्या[2] व्याध्यादयः प्रादुर्भवन्ति यतो म्रियन्ते।

पुनर्दशवर्षायुषां मनुष्याणां तैरेव दोषैर्देवा वर्षं नोत्सृजन्ति, यतो दुर्भिक्षं जायते—चञ्चुः, श्वेतास्थि, शलाकावृत्तिः।

कथं च चञ्चुः ? द्वाभ्यां कारणाभ्याम्। य इदानीं समवायः स तदानीं 'चञ्चुः' इत्युच्यते। समुद्गोऽपि चञ्चुः। ते च मनुष्या जिघत्सादौर्बल्यपरीताः

---

*निर्याणमि*ति। परिसमाप्तिः। *अधर्मरागरक्ता* इति। काममिथ्याचाररागाध्यवसिताः। *विषमलोभाभिभूता* इति। विषमलोभः = परकीयस्वीकरणेच्छा चौर्याद् बलाद्वा, तेनाभिभूताः। *मिथ्याधर्मपरीता* इति। विपरीतधर्मपरिदीपकाः। *अमातृज्ञा अपितृज्ञा* इति विस्तरः।

*पुनः कल्पस्य निर्याणकाल* इति। इह कल्पस्य निर्याणानि त्रीण्युच्यन्ते—शस्त्र-रोग-दुर्भिक्षाणि। किमेकस्य दशवर्षायुःकल्पस्य त्रीणि निर्याणानि क्रमेण भवन्ति, आहोस्विदेकैकस्यैकैकं क्रमेणेति ? एके तावदाहुः—एकैकमिति। अपरे पुनराहुः—एकस्य क्रमेण त्रीणि भवन्ति। पूर्वं दुर्भिक्षम्, तदनन्तरो रोगः, तदनन्तरं शस्त्रमिति। पूर्वकस्तु पक्ष इष्ट इति पश्यामः।

*तैरेव दोषैरि*ति। अधर्मादिरागादिभिः। *अमनुष्याः* पिशाचादयः। ईतिव्याध्यादिकामुत्सृजन्ति, ओजो वा हरन्ति, प्रभावतो वा पुष्पफलौषधिप्रभृतीनां महाभूतानि दूषयन्ति। *यतस्तेषामसाध्या व्याधयः प्रादुर्भवन्ति यतो म्रियन्ते।*

---

१-१. का० पुस्तके नास्ति। २. तेषाम०—का०।

समेत्य कालं कुर्वन्ति, समुद्गेषु चानागतजनतानुग्रहार्थं बीजान्यवस्थापयन्ति। अतस्तद् दुर्भिक्षम्, 'चञ्चम्' इत्युच्यते।

कथं श्वेतास्थि ? द्वाभ्यां कारणाभ्याम्। तेषां हि शुष्करूक्षकायानां कालं कुर्वतामाश्वेवास्थीनि श्वेतानि भवन्ति, बुभुक्षाहताश्च श्वेतान्यस्थीनि संहृत्य क्वाथयित्वा पिबन्ति।

कथं शलाकावृत्तिः ? द्वाभ्यां कारणाभ्याम्। ते हि सत्त्वाः शलाकोद्देशिकया गृहेष्वामिषं संविभजन्ते—अद्य गृहस्वामी भोक्ष्यते, श्वो गृहस्वामिनीत्येवमादि; धान्यस्थानविवरेभ्यश्च शलाकया धान्यफलानि निष्कृष्य बहुलोदकेन क्वाथयित्वा पिबन्ति।

एवं वर्णयन्ति—"येनैकाहमपि प्राणातिपातविरतिः संरक्षिता भवति एकहरीतकी वा सङ्घायैकपिण्डपातो वा सत्कृत्यानुप्रदत्तो भवति, स तेषु शस्त्ररोग-दुर्भिक्षान्तरकल्पेषु नोत्पद्यते" (　　　　　) इति।

अथ कियन्तं कालमेतानि शस्त्राघातरोगदुर्भिक्षाणि तेषां सत्त्वानां भवन्ति ?

**दिवसान् सप्त मासांश्च वर्षाणि च यथाक्रमम् ॥ ९९ ॥**

शस्त्रकः प्राणातिपातः **सप्त दिवसान्** भवति। रोगः **सप्त मासांश्च**, दिवसांश्च। दुर्भिक्षं सप्त **वर्षाणि** च। मासांश्च दिवसांश्चेति समुच्चयार्थश्चकारः।

तदा च द्वयोर्द्वीपयोस्तेषां प्रतिरूपकाणि भवन्ति। व्यापाद उद्रेकप्राप्तो भवति, वैवर्ण्यदौर्बल्ये, जिघत्सापिपासे च।

यदुक्तम्, एवमन्यस्यामपि संवर्तन्यां वेदितव्यं यथायोगमिति ॥ ९९ ॥

अथ कतीमाः संवर्तन्यः ?

**संवर्तन्यः पुनस्तिस्रो भवन्त्यग्न्यम्बुवायुभिः।**

एकत्र ध्याने सत्त्वाः समं संवर्तन्ते एतस्यामिति संवर्तनी।

---

*तदा* चेति विस्तरः। यदेह जम्बुद्वीपे शस्त्रकः प्राणातिपातः, तदा द्वयोर्द्वीपयोः पूर्वविदेहावरगोदानीययोर्व्यापाद *उद्रेकप्राप्तो भवति*। यदेह रोगस्तदा तयोर्दौर्बल्यम्, यदेह दुर्भिक्षं तयोर्जिघत्सापिपासे ॥ ९९ ॥

१. सप्तभिः सूर्यैस्तेजःसंवर्तनी भवति । २. वर्षोदकेनाप्संवर्तनी । ३. वायुप्रकोपाद् वायुसंवर्तनी । ताभिश्च भाजनानां सूक्ष्मोऽप्यवयवो नावशिष्यते ।

अत्र तु केचित् **तीर्थकरा** इच्छन्ति—"परमाणवो नित्यास्ते तदानीं शिष्यन्ते" इति ।

कस्मात् त एवमिच्छन्ति ? मा भूद्बीजकः स्थूलानां प्रादुर्भाव इति ।

ननु च सत्त्वानां कर्मजः प्रभावविशिष्टो वायुर्बीजमुक्तम् । संवर्तनीशीर्षवायुर्वा तस्य निमित्तं भविष्यति । "वायुना लोकान्तरेभ्यो बीजान्याह्रियन्ते" इति **महीशासकाः** सूत्रे पठन्ति ।

एवमपि न ते बीजादिभ्योऽङ्कुरादीनामुत्पत्तिमिच्छन्ति । किं तर्हि ? स्वेभ्य एवावयवेभ्यः, तेषामपि स्वेभ्य एव, एवं यावत् परमाणुभ्यः ।

किमिदं बीजादीनामङ्कुरादिषु सामर्थ्यम् ? न किञ्चिदन्यत्र परमाणूपसर्पणात्[1] ।

किं पुनः कारणं त एवमिच्छन्ति ? नहि विजातीयात् सम्भवो युक्त इति ।

कस्मान्न युक्तः ? अनियमो हि स्यात् ।

---

*तीर्थकराः* कणभुक्प्रभृतयः ।

*वायुर्बीजमुक्तमिति* । "बहुविधप्रभावभिन्नैर्वायुभिरभिमथ्यमानाः[2]" इति वचनात् । *तस्य निमित्तमिति* । रूपावचरो वायुरविनष्टः । कामावचरस्य विवर्तकाले प्रथमक्षणोत्पन्नस्य वायोर्निमित्तम् । *बीजान्याह्रीयन्त* इति । पञ्च बीजजातानि मूलबीजादीनि । मूलबीजम्, फलबीजम्, बीजबीजम्, अग्रबीजम्, स्कन्धबीजम् ।

*एवमपीति* । यद्यप्याह्रियन्ते बीजानि न ते स्थूलभावानां *बीजादिभ्यो* बीजाङ्कुरगण्डादिभ्यो [illegible] । बीजादीनि हि तेषां निमित्तकारणानि, न समवायिकारणानि, समवायिकारणैश्च भवितव्यम् ? अत आह—*किं तर्हि, स्वेभ्य एवावयवेभ्य* इति विस्तरः । तद्यथा—अङ्कुराद्यवयवी अङ्कुराद्यवयवेभ्यः । तेषामप्यङ्कुराद्यवयवानां स्वेभ्य एवावयवेभ्यः । *तेषामपि स्वेभ्य एवेति* । *एवं यावत् परमाणुभ्यः* ।

*अन्यत्र परमाणूपसर्पणादिति* । न जनने बीजादीनां *सामर्थ्यं किञ्चिदस्ति* । अङ्कुरादिपरमाणूपसर्पणात्तु तेषां सामर्थ्यमिष्यत इत्यभिप्रायः । *अनियमो* हि

१. तत्परमाणू०—का० । २. द्र०—अभि० को० ३.४९; ५०८ तमे पृष्ठे ।

शक्तिनियमान्नैवं भविष्यति । शब्दपाकजोत्पत्तिवत् ।

चित्रो हि गुणधर्मः, द्रव्यं तु नैवम् । समानजातीयेभ्यः एव हि द्रव्येभ्यः समानजातीयानां दृष्ट उत्पादः, तद्यथा—वीरणेभ्यः कटस्य, तन्तुभ्यः पटस्येति ।

इदमयुक्तं वर्तते ।

किमत्रायुक्तम् ? यदसिद्धं साधनायोदाह्रियते ।

किमत्रासिद्धम् ? अन्यो वीरणेभ्यः कटः, अन्यश्च तन्तुभ्यः पट इति ।

त एव हि ते तथासन्निविष्टास्तां तां संज्ञां लभन्ते, पिपीलिकापङ्क्तिवत् ।

कथं गम्यते[1] ? एकतन्तुसंयोगे पटस्यानुपलम्भात् । को हि तदा सतः पटस्योपलब्धौ प्रतिबन्धः ।

---

*स्यादिति* । तन्त्वादिभ्योऽपि कटाद्युत्पत्तिः स्यादित्यर्थः । *शक्तिनियमादिति* । यथा बीजादीनां सामर्थ्यनियमान्नानियमो भविष्यति । *शब्दपाकजोत्पत्तिवत्* । यथा शब्दोऽभिघातादिभ्यो विजातीयेभ्य उत्पद्यते, अथ च न यतः कुतश्चिद् गन्धरसादेर्विजातीयादुत्पद्यते, अभिघातादीनामेव विजातीयानां तदुत्पादने सामर्थ्यात्; तथा पाकजा रूपादयो विजातीयादग्न्यादेरुत्पद्यन्ते, अथ च न यतः कुतश्चिद् विजातीयाच्चक्षुरादेरुत्पद्यन्ते, अग्न्यादेरेव तदुत्पादने सामर्थ्यात् ।

वैशेषिक आह—*चित्रो वै गुणधर्मः* स्वजातीयेभ्यो विजातीयेभ्यश्चोत्पद्यते । स्वजातीयेभ्यस्तावद् रूपरसगन्धस्पर्शादयः कारणपूर्वा रूपरसगन्धस्पर्शादिभ्यः एवोत्पद्यन्ते, विजातीयेभ्योऽपि संयोगविभागपाकजादयः कर्मादिभ्यः । तदेवं गुणधर्मो द्रव्यधर्मं प्रत्यनुदाहरणम् ।

*त एव हि ते तथेति* विस्तरः । वीरणादय एव हि *ते तथा* तेन प्रकारेण कटादिरूपेण *सन्निविष्टा* व्यवस्थितास्*तां* कटसंज्ञां *लभन्ते* । यथा पिपीलिकास्तथासन्निविष्टाः पंक्तिरिति संज्ञां लभन्ते, न च ताभ्योऽन्यत् पंक्तिद्रव्यमस्ति भवतामपि सिद्धान्ते ।

*कथं गम्यते* तानि वीरणादीनि तथासन्निविष्टानि कटादिसंज्ञां लभन्ते, न पुनस्तेभ्यो द्रव्यान्तराणीति ? अत आह—*एकतन्तुसंयोगे पटस्यानुपलम्भात्* । आरब्धकार्ये ह्येकस्मिन् तन्तौ चक्षुःसंस्पर्शाभ्यां संयुक्ते तत्समवेतः, पटोऽपि च ताभ्यां सन्निकृष्ट इत्यसावपि तथैवोपलभ्येत । यदि ब्रूयात्—प्रतिबन्धात्तस्यानुपलब्धिरिति ? अत आह—*को हि तदा सतो* विद्यमानस्य *पटस्योपलब्धौ प्रतिबन्ध* इति । नास्ति प्रतिबन्ध इत्यभिप्रायः । तस्मान्न पटो नाम द्रव्यान्तरमस्तीति ।

स्यान्मतम्, एकैकस्मिन्तन्तौ प्रदेशेन पटौ वर्त्तते, न सर्वात्मना वर्त्तत इति ?

---

१. गम्येत—का० ।

अकृत्स्नवृत्तौ पटभागोऽत्र स्यात्, न पटः। समूहमात्रं च पटः[1]। कश्च तन्तुभ्योऽन्यः पटभागः। अनेकाश्रयसंयोगापेक्षायां[2] दशामात्रसङ्घाते[3] पटोपलब्धिः स्यात्। न वा कदाचित्; मध्यपरभागानामिन्द्रियेणासन्निकर्षात्। क्रमसन्निकर्षे चावयवानां चक्षुःस्पर्शनाभ्यामवयविज्ञानं[4] न स्यात्। तस्मात् क्रमेण सन्निकर्षादवयविव्यवसायादवयवेष्वेव तद्बुद्धिः, अलातचक्रवत्। भिन्नरूपजातिक्रियेषु

अत उच्यते—*अकृत्स्नवृत्ताविति* विस्तरः। अकृत्स्नवृत्तौ पटस्य कल्प्यमानायां *पटभागोऽत्रै*कैकस्मिन् तन्तौ *स्यान्न पटः*। ततः किमिति चेत्? अत आह—*समूहमात्रं च पटः*। स्यादिति वर्त्तते। एकस्मिन् तन्तावेको भागः, अपरस्मिन्नपर इति तन्तुवर्त्तिनां बहूनां भागानां समुदायः पट इति च प्राप्नोति, न चेष्यते। *कश्च तन्तुभ्योऽन्यः पटभाग* इति *कणभुग्भक्ताः* प्रष्टव्याः, येन भागेनायमिन्द्रियसन्निकृष्टे तन्तौ वर्त्तते। तस्मादेतामपि कल्पनां कल्पयित्वा नातोऽन्यः पटः सिध्यति।

स्यान्मतम्—एकैकस्मिन्नपि तन्तौ पटो वर्त्तते, पटोपलब्धेस्तु पटेन्द्रियसन्निकर्षः पटस्यानेकाश्रयसंयोगापेक्षो निमित्तमिति। अतो*ऽनेकाश्रयसंयोगापेक्षाया*मुपलब्धौ कल्प्यमानायां *दशामात्रसङ्घाते* गृह्यमाणे *पट उपलभ्येत*, न तूपलभ्यते; पटमध्यभागाद्यदर्शनात्।

अथ मतम्—नैव तदानीमपीन्द्रियेण मध्यादिभागाः सम्प्रयुज्यन्त इति, अतो दशामात्रसङ्घाते पटोपलब्धिर्न भवतीति? तत इदमभिधीयते—*न वा कदाचिदि*ति विस्तरः। न वा कदाचित् *पटोलब्धिः स्यात्*। *मध्यपरभागानामिन्द्रियेणासन्निकर्षात्*। नैव हि सम्भवोऽस्ति यत्तदारम्भका मध्यपरभागाः सर्व एवेन्द्रियेण सन्निकृष्येरन्। तथा च सति तन्त्वादिष्वप्येष प्रसङ्ग इति। न च किञ्चिदपि कार्यमुपलभ्येत। किञ्च—*क्रमसन्निकर्षे* चेति विस्तरः। यदा क्रमेण चक्षुः संस्पर्शनेन्द्रियं वा पटं गृह्णीयाद्, तदा पटग्रहणं न स्यात्; युगपदनेकाश्रयसंयोगाभावाच्चक्षुःस्पर्शनेन्द्रिययोः। एवमन्येषामप्यवयवानां ग्रहणं न स्यात्।

*तस्मादिति* विस्तरः। यस्मात् क्रमेण पटबुद्धिः कटबुद्धिर्वा, *तस्मादवयवेष्वेव* पटावयवेषु कटावयवेषु वा *तद्बुद्धिः* पटबुद्धिः, कटबुद्धिर्वा विकल्पवशाद् भवति। *अलातचक्रवत्*। यथालाते शीघ्रसञ्चारात् तत्र तत्रोत्पद्यमाने अलातचक्रबुद्धिर्भवति, तद्वत्। साधनं चात्र—'न द्रव्यसत् पटः, अवयवग्रहणसापेक्षग्रहणत्वात्, अलातचक्रवत्'। *भिन्नरूपजातिक्रियेष्विति* विस्तरः। भिन्नरूपेषु

१. पटः स्यात्—का०। २. ०गापेक्षणे—का०। ३. ०संयोगे—का०। ४. ०मवयववि०—का०।

तन्तुषु पटस्य रूपाद्यसम्भवात् ।

चित्ररूपादित्वे विजातीयारम्भोऽपि स्यात्, अविचित्रे[1] च पार्श्वान्तरे पटस्यादर्शनं स्यात्[2], चित्ररूपदर्शनं[3] वा। क्रियापि च चित्रेत्यतिचित्रम्। तापप्रकाशभेदे चाग्निप्रभाया[4] आदिमध्यान्तेषु[5] तद्रूपस्पर्शयोरनुपपत्तिः।

परमाण्वतीन्द्रियत्वेऽपि समस्तानां प्रत्यक्षत्वं यथा तेषां कार्यारम्भकत्वं

---

तन्तुषु नीलपीतादिभेदात्, भिन्नजातिषु दुकूलकर्पासादिभेदात्, भिन्नक्रियेषू-र्ध्वाधोगमभेदात्। *पटस्य रूपाद्यसम्भवात्।* कीदृशं तत्र रूपं भवतु, जातिः क्रिया वा ?

स्यादेषा बुद्धिः—चित्रमस्य रूपादीति ? तदेवं *चित्ररूपादित्वे* कल्प्यमाने *विजातीयारम्भोऽपि* स्यात्, तन्तुवीरणयोरपि कटारम्भः स्यात्। तथा सति धर्म-विशेषविपर्ययः प्राप्नोति। अत्यन्तविजातीयारम्भकत्वं द्रव्याणां प्राप्नोतीत्यर्थः।

*अविचित्रे च पार्श्वान्तरे* एकपार्श्वचित्रस्य *पटस्यादर्शनं स्यात्*, तस्य चित्र-रूपाभिमतत्वात्। रूपदर्शने हि तदाश्रयद्रव्योपलब्धिरिष्यते *वैशेषिकैः*; "महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः", "रूपसंस्काराभावाद् वायावनुपलब्धिः" (वै० सू० ४.१.६-८) इति वचनात्। *चित्ररूपदर्शनं* वा अचित्रे पार्श्वे स्याद् यदि पटो दृश्येत। चित्रं हि तस्य रूपमिष्यते। *क्रियापि च चित्रेत्यतिचित्रमिति।* एकं तद् द्रव्यं विचित्रक्रियमिति न युज्यते। क्रियावैचित्र्ये हि क्रियावदभिमतानां द्रव्याणामन्यत्वमिष्यते। *तापप्रकाशभेदे* चेति विस्तरः। अग्निप्रभालक्षणस्या-वयविन आदिमध्यान्तेष्वारम्भकेषु तापप्रकाशभेदे स्पर्शनभेदो दृष्टः। स च तद्भेदस्तत्र यथाक्रमं तीव्रमध्यमन्दता। तस्यावयविनः प्रभाद्रव्यस्य *तौ रूप-स्पर्शौ नोपपद्येते।* न ह्येकस्यावयविनोऽनेकं रूपं स्पर्शो वा युज्यते। तेन नावयवेभ्योऽवयविद्रव्यमन्यदस्तीति।

अथ मतम्—यदि तन्त्वादिभ्योऽवयवेभ्यो न पटाद्यवयवी व्यतिरिक्तोऽस्ति, परमाणूनामतीन्द्रियत्वात्, न च तैरवयवैरैन्द्रियक आरब्ध इति कृत्स्नं जगद-प्रत्यक्षं स्यात्, प्रत्यक्षं च गवादि दृश्यते। तस्मादतीन्द्रियैः परमाणुभिरर्थान्तरम-न्यदैन्द्रियकमारब्धमिति सिद्धिरिति ? अत्रोच्यते—*परमाण्वतीन्द्रियत्वेऽपीति* विस्तरः। यथा भवतां वैशेषिकाणामतीन्द्रियत्वेऽपि *समस्तानां* कार्यारम्भकत्वम्,

---

१. अचित्रे—का०। २. का० पुस्तके नास्ति।

३. चित्रदर्शनं—का०। ४. वा०—का०।

५. आदिमध्यान्ते—का०।

चक्षुरादीनां च तैमिरिकाणां च विकीर्णकेशोपलब्धिः। तेषां परमाणुवदेकः केशोऽतीन्द्रियः।

रूपादिष्वेव च परमाणुसंज्ञाविनिवेशात्[1] तद्विनाशे सिद्धः परमाणुविनाशः?

द्रव्यं हि परमाणुः, अन्यच्च रूपादिभ्यो द्रव्यमिति न तेषां विनाशे तद्विनाशः सिद्ध्यति।

अप्रयुक्तमस्यान्यत्वम्; यावता न परिच्छिद्यन्ते[2] केनचित्—इमानि पृथिव्यप्तेजांसि, इम एषां रूपादय इति। चक्षुःस्पर्शनग्राह्याणि च प्रतिज्ञायन्ते[3]। दग्धेषु चोर्णाकर्पासकुसुम्भकुङ्कुमादिषु तद्बुद्ध्यभावाद् रूपादिष्वेव[4] तद्बुद्धिः।

---

न व्यस्तानाम्; एवमस्माकमपि समस्तानामेव प्रत्यक्षत्वं न व्यस्तानामसत्यवयविन्यर्थान्तरभूते। *यथा* चक्षुरा*दीनां* चक्षुरूपालोकमनस्काराणां समस्तानां चक्षुर्विज्ञानोत्पत्तौ *कारणत्वम्*, नैकैकस्य; एवं परमाणूनामतीन्द्रियत्वेऽपि समस्तानां प्रत्यक्षत्वम्, नैकैकस्य। *तैमिरिकाणां* च पुरुषाणां *विकीर्णा*नामसंयुक्तानां *केशानां समूह उपलभ्यते* अनारब्धेऽप्यवयविनि, न त्वेकैकः केशः। *तेषां* तैमिरिकाणां *परमाणुवदेकः केशोऽतीन्द्रिय* इति। अतो नास्ति तेऽन्यद् द्रव्यम्।

तदेवमवयविनं प्रतिषिध्य रूपादिभ्यो गुणेभ्योऽर्थान्तरं गुणिनं प्रतिषेद्धुकाम आह—*रूपादिष्वेव चेति* विस्तरः। रूपादिष्वेव *परमाणु*रिति *संज्ञाविनिवेशः*। *तद्विनाशे* रूपादिविनाशे सिद्धः *परमाणुविनाश* इति।

*वैशेषिका* आहुः—*द्रव्यं हि परमाणुः। अन्यच्च रूपादिभ्यो* द्रव्यम्; "रूपरसगन्धस्पर्शवती पृथिवी" ( वै० सू० २.१.१ ) इत्येवमादिसिद्धान्तवचनात्।

*अप्रयुक्तमस्यान्यत्वम्।* यस्मान्न *केनचित् परिच्छिद्यन्ते इमानि पृथिव्यप्तेजांसि, इमे एषां* पृथिव्यादीनां *रूपादयो* रूपरसगन्धस्पर्शा गुणा *इति*। ब्रूयाद्—अतीन्द्रियाणि तत्त्वतो न निर्धार्यन्त इति? अत आह—*चक्षुस्पर्शनग्राह्याणि च तानि* पृथिव्यादीनि *प्रतिज्ञायन्त* इति। *दग्धेषु चेति* विस्तरः। ऊर्णादीन्यवयविद्रव्याणि न पच्यन्त इति *पैलुकाः*। तदुक्तं भवति—प्राक्तनगुणनिवृत्तौ पाकजगुणोत्पत्तौ तदाश्रयास्तु द्रव्याणि तदवस्थानान्येव भवन्तीति। तथैवोर्णादिबुद्धिः स्यात्। न च भवति। *तस्माद् द्रव्यबुद्ध्यभावात्, रूपादिष्वेव तद्बुद्धि*र्न द्रव्येऽर्थान्तरभूत इति। यदि हि ऊर्णादिद्रव्यं रूपादिभ्योऽन्यत् स्यात्, तत्तदवस्थानं भवतीति

---

१. संज्ञानिवेशात्—का०। २. निर्धार्यते—का०।
३. प्रज्ञायन्ते—का०। ४. रूपादिभेदेष्वेव—का०।

पाकजोत्पत्तौ घटपरिज्ञानं संस्थानसामान्यात्, पङ्क्तिवत् । चिह्नमपश्यतोऽपरिज्ञानात्[1] ।

को वा बालप्रलापेष्वादरः इति तिष्ठतु तावदेवाप्रतिषेधः ॥

अथ कस्याः संवर्तन्याः कतमच्छीर्षं भवति ?

**ध्यानत्रयं द्वितीयादि शीर्षं तासां यथाक्रमम् ॥ १०० ॥**

त्रीणि संवर्तनीशीर्षाणि—तेजःसंवर्तन्या द्वितीयं ध्यानं शीर्षं भवत्यधो दह्यते, अप्संवर्तन्यास्तृतीयं ध्यानं शीर्षं भवत्यधः क्लिद्यते, वायुसंवर्त्तन्याश्चतुर्थं ध्यानं शीर्षं भवत्यधो विकीर्यते ।

यद्धि संवर्तन्या उपरिष्टात्तच्छीर्षमित्युच्यते ॥ १०० ॥

किं पुनः कारणं प्रथमद्वितीयतृतीयध्यानानि तेजोजलवायुभिर्ध्वस्यन्ते ?

**तदपक्षालसाधर्म्यात्,**

प्रथमे हि ध्याने वितर्कविचारा अपक्षालाः । ते च मनसः परिदाहकत्वादग्निकल्पाः ।

द्वितीये प्रीतिरपक्षाला । सा च प्रस्रब्धियोगेनाश्रयमृदुकरणादप्कल्पा[2] ।

---

रूपादीन्येवाग्निसम्बन्धादुष्णेन निरुद्धानीत्यूर्णादिबुद्धिः स्यात्, न च भवति, तस्माद् रूपादिष्वेवोर्णादिबुद्धिः ।

*वैशेषिका* आहुः—यदि रूपादिमात्रं घटः स्यात्, अग्निसम्बन्धाद् रूपादीनि पाकजादीन्यन्यान्युत्पद्यन्त इति 'स एवायं घटः' इति न परिज्ञायेत । यस्य तु पाकाद् रूपादीन्येवोत्पद्यन्ते निरुध्यन्ते चेति, स एव घटस्तदवस्थानो भवतीति तस्य तत् परिज्ञानं युज्यत इति ? अत इदमुच्यते—*पाकजोत्पत्तौ घटपरिज्ञानं संस्थानसामान्यादि*ति । रूपाद्याकृतिसामान्यादित्यर्थः । *पंक्तिवत् ।* यथा न वस्तत् पिपीलिकानां तद्व्यतिरिक्तं पंक्तिद्रव्यं नामास्ति, अथ च पूर्वपंक्तिसंस्थानसामान्यादन्यस्यामपि[3] तत्परिज्ञानं भवति—सैवेयं पिपीलिकानां पंक्तिरिति । आह—कथमेतद् गम्यते संस्थानसामान्यात् परिज्ञानम्, न तु तादवस्थ्यादिति ? अत्रोच्यते—*चिह्नमपश्यतोऽपरिज्ञाना*दिति । यस्मात् खण्डनिम्नोन्नतादि चिह्नमपश्यतस्तत्परिज्ञानं न भवति, अतः संस्थानसामान्यादिति सिद्धम् ॥ १०० ॥

*सा चेति* विस्तरः । सा च प्रीतिः । *प्रस्रब्धियोगेन ।* 'प्रीतेर्मनसः प्रस्रब्धिर्जायते' इति प्रस्रब्धियोगे*नाश्रयमृदुकरणादप्कल्पा ।*

---

१. परिज्ञानाभावात्—का० । २. ०मृदूकरणादाकल्पाः—का० ।

३. ०स्यामिति—मुद्रितः पाठः ।

अत एव च[1] तस्मिन् कृत्स्नकायस्थैर्यापगमात्[2] दुःखेन्द्रियनिरोध[3] उक्तः सूत्रे ।

तृतीये ध्याने आश्वासप्रश्वासाः । ते च वायव एव । इति यस्यां ध्यानसमापत्तौ यथाभूत आध्यात्मिकोऽपक्षालः, तस्यां ध्यानोपपत्तौ तथाभूतो बाह्य इति ।

कस्मात् पृथिवीसंवर्तनी न भवति ? पृथिव्येव हि भाजनाख्या, तस्यां तेजोजलवायुभिर्विरोधः, न पृथिव्येति ।

अथ चतुर्थध्याने कथं न संवर्तनी ?

**न चतुर्थेऽस्त्यनिञ्जनात् ।**

चतुर्थं ध्यानमाध्यात्मिकापक्षालरहितत्वादानेज्यमुक्तं[4] भगवता । अतोऽत्र बाह्योऽपक्षालो न प्रवर्तत इति नास्त्यत्र संवर्तनी ।

शुद्धावासप्रभावादित्यपरे । न[5] तैः शक्यमारूप्यान् प्रवेष्टुम्, नाप्यन्यत्र गन्तुमिति ।

नित्यं तर्हि चतुर्थध्यानभाजनं प्राप्नोति ?

**न नित्यं सह सत्त्वेन तद्विमानोदयव्ययात् ॥ १०१ ॥**

---

*अत एव चेति* विस्तरः। आश्रयमृदुकरणात् । *तस्मिन्* द्वितीये *समापत्तिध्याने कृत्स्नस्य कायस्थैर्यस्यापगमाद् दुःखेन्द्रियनिरोध* उक्तः। "सुखस्य च प्रहाणाद् दुःखस्य च प्रहाणात् पूर्वमेव सौमनस्यदौर्मनस्ययोरस्तङ्गमाददुःखासुखमुपेक्षा-स्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसम्पद्य विहरति" (        ) इति वचनात् ।

*आध्यात्मिकापक्षालरहितत्वादिति* । ये वितर्कविचारादयोऽष्टावाध्यात्मिकापक्षालाः—"वितर्कचारौ श्वासौ च सुखादि च चतुष्टयम्" (अभि० को० ८.११) इति, तद्रहितत्वादित्यर्थः । *आनेज्यमिति* । "एजृ कम्पने" (मा० धा० १.१४६) इत्यस्य धातोरेतद् रूपम्—आनेज्यमिति । यदा त्वानिञ्ज्यमिति पाठः, तदा इगेः[6] प्रकृत्यन्तरस्यैतद् रूपं द्रष्टव्यम् । *न तैः* शुद्धावासकायिकैः *शक्यमारूप्यान् प्रवेष्टुं* विपश्यनाचरितत्वात् । शमथचरिताश्चारूप्याः । *नाप्यन्यत्र गन्तुम*धरां भूमिं विशेषगामित्वात् ॥ १०१ ॥

---

१. का० पुस्तके नास्ति । २. ०स्थैर्या०—का० ।
३. ०न्द्रियस्य०—का० । ४. दानेञ्जमु०—का० ।
५. नहि—का० । ६. इ०—मा० धा० १.९१ ।

न हि चतुर्थं ध्यानमेकभूमिसम्बद्धम् । किं तर्हि ? विच्छिन्नस्थानान्तरम्; तारकावत् । तत्राप्ययं सत्त्व उपपद्येत, च्यवेत वा, स सार्धं विमानेनेति नास्त्यस्य नित्यत्वम् ॥ १०१ ॥

केन पुनः क्रमेणैताः संवर्तन्यो भवन्ति ? निरन्तरं तावत्—

**सप्ताग्निना,**

सप्त संवर्तन्यस्तेजसा भवन्ति । ततः—

**अद्भिरेका,**

सप्तानां तेजःसंवर्तनीनामनन्तरमद्भिः संवर्तनी भवति ।

**एवं गतेऽद्भिः सप्तके पुनः ।**

**तेजसा सप्तकः,**

एतेन क्रमेणाप्संवर्तनीनां गते सप्तके पुनः तेजःसंवर्तनीनां सप्तको भवति ।

**पश्चाद् वायुसंवर्तनी ततः ॥ १०२ ॥**

**पश्चादेका वायुसंवर्तनी** भवति । किं कारणम् ? यथैव हि तेषां सत्त्वानां समापत्तिविशेषादात्मभावानां स्थितिविशेषः, तथा भाजनानामपामिति ता एता भवन्ति । एवं[1] च कृत्वा[1]—षट्पञ्चाशत् तेजःसंवर्तन्यः, सप्त अप्संवर्त्तन्यः, एका

एतेन क्रमेणेति । यथोक्तेन । सप्तानां तेजःसंवर्तनीनामनन्तरमद्भिः संवर्तनी भवत्येका । पुनः *सप्तानां तेजःसंवर्त्तनीनामनन्तरमद्भिः संवर्तनी भवति* द्वितीया । एवं यावत् सप्तम्यद्भिः संवर्तनी ।

*"एवं गतेऽद्भिः सप्तके पुनः तेजसा सप्तकः"* । *"ततः"* पश्चात् एका *वायुसंवर्त्तनी भवति, किं कारणम् ?* यथा वर्णितम्—बहुना कालप्रकर्षेणाप्संवर्तनी भवति, ततोऽपि बहुतरेण वायुसंवर्त्तनीति, अत इदमुच्यते—*यथैव हि तेषा*मिति विस्तरः । यथा प्रथमध्यानाद् द्वितीयध्यान*समापत्तिविशेषादात्मभावानां* द्वितीयध्यानभूमिकानां *स्थितिविशेषः* । अर्धमहाकल्पार्धं प्रथमध्यानोपपन्नानामायुःप्रमाणम्, कल्पद्वयं द्वितीयध्यानोपपन्नानामिति । *तथा भाजनानामपामपि* । किम् ? स्थितिविशेष इति । एवं द्वितीयादपि तृतीयध्यानस्य विशेषो वक्तव्यः । *एवं च कृत्वेति* । यस्मादष्टकृत्वस्तेजःसंवर्तनीसप्तका इति *षट्पञ्चाशत् तेजःसंवर्तन्यो*

१–१. का० पुस्तके नास्ति ।

वायुसंवर्त्तनी ।

एवं च प्रज्ञप्तिभाष्यं सुनीतं भवति—"चतुःषष्टिः कल्पाः शुभकृत्स्नानामायुःप्रमाणम्[1]" ( ) इति ॥ १०२ ॥

अभिधर्मकोशभाष्ये लोकनिर्देशो नाम
तृतीयं कोशस्थानं
समाप्तमिति[2] ।

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवंवादी महाश्रमणः ॥ इति ।

---

भवन्ति, *सप्ताप्संवर्तन्यः*, *एका वायुसंवर्तनीति* चतुःषष्टिः संवर्तन्यो भवन्ति । तस्माद् यदुक्तं *प्रज्ञप्तिभाष्ये*—*चतुःषष्टिः कल्पाः शुभकृत्स्नानामायुःप्रमाणमिति*, तत् सूक्तं *भवति* । यथा "ऊर्ध्वं तु परीत्ताभेभ्य आश्रयः । द्विगुणद्विगुणः" ( अभि० को० ३.७७ ) इत्यत्रोक्तं शुभकृत्स्नानां चतुःषष्टियोजनानां शरीरप्रमाणम् । शरीरप्रमाणेन च तेषामायुःप्रमाणमुक्तम् । "आयुस्तु कल्पैः स्वाश्रय०" ( अभि० को० ३.८० ) इति वचनात् । एकैका संवर्तनी महाकल्प इति कृत्वा । इयता हि कालेन तेषामायुषः परिसमाप्तिरिति ॥ १०२ ॥

आचार्ययशोमित्रकृतायां स्फुटार्थायां
अभिधर्मकोशव्याख्यायां
तृतीयं कोशस्थानम् ॥

---

१. शुभकृत्स्नानां देवानामायुः०—का० ।

२. ०श्रीलामावाकस्य यदत्र पुण्यम्—का० ।

❀ ॐ नमो बुद्धाय ❀

# चतुर्थं कोशस्थानम्

## ( कर्मनिर्देशः )

अथ यदेतत् सत्त्वभाजनलोकस्य बहुधा वैचित्र्यमुक्तं तत् केन कृतम् ? न खलु केनचिद् बुद्धिपूर्वकं कृतम् । किं तर्हि ? सत्त्वानां

**कर्मजं लोकवैचित्र्यम्,**

यदि **कर्मजम्**, कस्मात् सत्त्वानां कर्मभिः कुङ्कुमचन्दनादयो रम्यतरा जायन्ते, न तेषां शरीराणि ? कर्माण्येव तान्येवञ्जातीयानि व्यामिश्रकारिणां सत्त्वानाम् यदाश्रयाश्च व्रणभूता जायन्ते, भोगाश्च रम्यास्तत्प्रतीकारभूताः । अव्यामिश्रकारिणां तु देवानामुभयेऽपि रम्याः ।

किं पुनस्तत् कर्म ? इत्याह—

**चेतना तत्कृतं च तत् ।**

सूत्र उक्तम्—"द्वे कर्मणी चेतना कर्म चेतयित्वा च" ( ) इति । यत् तच्चेतयित्वा चेतनाकृतं च तत् ।

ते एते द्वे कर्मणी त्रीणि भवन्ति—काय-वाङ्-मनस्कर्माणि ।

कथमेषां कर्मणां व्यवस्थानम्, किमाश्रयतः ? आहोस्वित् स्वभावत. .

---

## स्फुटार्थाव्याख्यायाम्

### चतुर्थं कोशस्थानम्

तीर्थंकरविप्रतिपत्त्या समुत्पादित-सन्देहः पृच्छति—*अथ यदेतदिति* विस्तरः ।

तत्र *सत्त्ववैचित्र्यं* धातु-गति-योन्यादिभेदेन । *भाजनवैचित्र्यं* मेरु-द्वीपादि-भेदेन । *व्यामिश्रकारिणामिति* । कुशलाकुशलकर्मकारिणाम् । अथ कस्मात् तेषा-माश्रया रम्या न भवन्ति, भोगास्तु रम्या इति ? सति चैवं विषयोपभोगः सम्भवति । आश्रयरम्यत्वे हि कस्य प्रतीकाराय रम्यविषयोपभोगः स्यात् । *अव्यामिश्रकारिणामिति* । रूपावचराणाम् । कामावचरा अपि देवा अव्यामिश्र-कारिकल्पा आश्रयविषयरम्याः; रम्यताहेतुकर्मद्वयकारित्वात् ।

*चेतयित्वा चेति* ' ''वं चेदं करिष्यामीति ।

समुत्थानतो वा ? आश्रयतश्चेद्, एकं कायकर्म प्राप्नोति, सर्वेषां कायाश्रितत्वात्। स्वभावतश्चेद्, वाक्कर्मैकं प्राप्नोति; वचसः कर्मस्वभावत्वात्। समुत्थानतश्चेत्, मनस्कर्मैकं प्राप्नोति; सर्वेषां मनःसमुत्थितत्वात् ?

यथाक्रमं त्रिभिः कारणैस्त्रयाणामिति वैभाषिकाः।

तत्र पुनः—

**चेतना मानसं कर्म**

चेतना मनस्कर्मेति वेदितव्यम्।

**तज्जं वाक्कायकर्मणी ॥ १ ॥**

यत्तच्चेतनाजनितं चेतयित्वा कर्मेत्युक्तम्, कायवाक्कर्मणी ते वेदितव्ये।

**ते तु विज्ञप्त्यविज्ञप्ती,**

ते तु कायवाक्कर्मणी प्रत्येकं विज्ञप्त्यविज्ञप्तिस्वभावे वेदितव्ये।

तत्र तु—

**कायविज्ञप्तिरिष्यते।**

**संस्थानम्,**

चित्तवशेन कायस्य तथा तथा संस्थानं कायविज्ञप्तिः। गतिरित्यपरे। प्रस्यन्दमानस्य हि कायकर्म, नो अप्रस्यन्दमानस्येति[1]।

**न गतिर्यस्मात् संस्कृतं क्षणिकं**

कोऽयं क्षणो नाम ? आत्मलाभोऽनन्तरविनाशी, सोऽस्यास्तीति

---

*स्वभावतश्चेद्वाक्कर्मैकमिति*। वागेव कर्मेति कृत्वा। इतरयोस्तु न कर्मत्वम्। कायेन कायस्य वा कर्म कायकर्म, एवं मनस्कर्म। इति न स्वभावतः कर्म।

*त्रिभिः कारणैरिति*। आश्रयतः, स्वभावतः, समुत्थानतश्चेति। *त्रयाणामिति*। कायवाङ्मनस्कर्मणाम्। आश्रयतः कायकर्म—कायाश्रयं कर्म कायकर्मेति, स्वभावतो वाक्कर्म—वागेव कर्मेति, समुत्थानतो मनस्कर्म—मनःसमुत्थितमिति कृत्वा ॥ १ ॥

*गतिरित्यपर इति*। वात्सीपुत्रीयाः।

*आत्मलाभोऽनन्तरविनाशीति*। क्षणस्यानन्तरक्षण इति नैरुक्तेन विधिना आत्मलाभः। अनन्तरविनाशी क्षणशब्देनाभिधीयते। अथ वा—कालपर्यन्तः

---

१ ०स्येति। त उच्यन्ते—का०।

क्षणिकः[1] । दण्डिकवत् । सर्वं हि संस्कृतमात्मलाभादूर्ध्वं न भवतीति यत्रैव जातं तत्रैव ध्वस्यते । तस्यायुक्ता देशान्तरसंक्रान्तिः । तस्मान्न गतिः कायकर्म ।

स्यादेतदेव, यदि सर्वस्य क्षणिकत्वं सिध्येत् ? सिद्धमेवैतद् विद्धि । कुतः ? संस्कृतस्यावश्यं—

व्ययात् ॥ २ ॥

आकस्मिको हि भावानां विनाशः । किं कारणम् ? कार्यस्य हि कारणं भवति, विनाशश्चाभावः । यश्चाभावस्तस्य किं कर्तव्यम् ! सोऽसावाकस्मिको विनाशो यदि भावस्योत्पन्नमात्रस्य न स्यात्, पश्चादपि न स्याद्; भावस्य तुल्यत्वात् । अथान्यथीभूतः ? न युक्तं तस्यैवान्यथात्वम् । न हि स एव तस्माद् विलक्षणो युज्यते । दृष्टो वै काष्ठादीनामग्न्यादिसंयोगाद् विनाशः । न च दृष्टाद् गरिष्ठं प्रमाणमस्तीति । न च सर्वस्याकस्मिको विनाशः ।

कथं तावद् भवान् काष्ठादीनामग्न्यादिसंयोगाद् विनाशं पश्यामीति मन्यते ? तेषां पुनरदर्शनात् । सम्प्रधार्य तावदेतत्—किमग्निसंयोगात् काष्ठादयो विनष्टाः,

---

क्षणः स्वावस्थानः । *सोऽस्यास्तीति क्षणिकः* । "अत इनिठनौ" ( पा० सू० ५.२.११५ ) इति ठन् ।

*संस्कृतस्यावश्यं व्ययादिति* । उत्पत्त्यनन्तरविनाशिरूपं चित्तचैत्तवत् ।

*आकस्मिको हि भावानां विनाश इति* । अकस्माद्भव *आकस्मिकः* । अहेतुक इत्यर्थः । साधनं चात्र—'अहेतुको विनाशः; अभावत्वाद्, अत्यन्ताभाववत्' । *दृष्टो वै काष्ठादीनामिति* विस्तरः । *आदि*शब्देन रूपादीनां ग्रहणम् । *दृष्टोऽग्निसंयोगाद् विनाश इति* । प्रत्यक्षद्वारापतितो धर्मस्वरूपविपर्यय इति प्रतिज्ञादोषं दर्शयति । अत एवाह—*न च दृष्टाद् गरिष्ठं प्रमाणमिति* । न प्रत्यक्षाद् गुरुतमं प्रमाणमस्तीत्यर्थः ।

*आचार्यः* प्रत्यक्षाभिमानं परेषां दर्शयन्नाह—*कथं तावद्भवान् यावन् मन्यत इति* । न हि काष्ठादिविनाशो रूपादिवत् प्रत्यक्षत उपलभ्यते । *अक्षणिकवादि*नस्त आहुः । *तेषां पुनरदर्शनादिति* । तेषां काष्ठादीनामदर्शनात् । तदेवमनुमानतः सिद्धिं दर्शयति—'अग्निसंयोगहेतुकः, काष्ठादिविनाशः; तदापाते भावात् । यस्य यदापाते भावः स तद्धेतुकः, तद्यथा—बीजपातभाव्योऽङ्कुरः । *सम्प्रधार्यं तावदेतदिति* । अनैकान्तिकतामुद्भावयति[2] । न हि यस्यापाते यो विनाशो भवति

---

१. क्षणिकम्—का० । २. नैकान्तिक०—मुद्रितः पाठः ।

अतो न दृश्यन्ते ? उताहो स्वयं विनष्टाः अन्ये च पुनर्नोत्पन्नाः, अतो न दृश्यन्ते; यथा वायुसंयोगात् प्रदीपः, पाणिसंयोगाद् घण्टाशब्द इति ? तस्माद्-नुमानसाध्योऽयमर्थः ॥ २ ॥

किं पुनरत्रानुमानम् ? उक्तं तावत् अकार्यत्वादभावस्येति । पुनः—

**न कस्यचिदहेतोः स्यात्,**

यदि विनाशो हेतुसामान्यान्न कस्यचिदहेतुकः स्यादुत्पादवत् । क्षणिकानां च बुद्धिशब्दार्चिषां दृष्ट आकस्मिको विनाश इति नायं हेतुमपेक्षते ।

यस्तु मन्यते—बुद्ध्यन्तराद् बुद्धेर्विनाशः, शब्दान्तराच्छब्दस्येति ? न[1] युक्तमेतत्[1]; बुद्ध्योरसमवधानात् । न हि संशयनिश्चयज्ञानयोर्युक्तं समवधानम् ।

---

स तद्धेतुक इति । वायुसंयोगपाते हि सति *प्रदीपस्य विनाशः* । न च स विनाशो वायुसंयोगकृतः । क्षणिकत्वाभ्युपगमाद्धि प्रदीपस्याकस्मिको विनाश इष्यते । स हि उत्पन्नप्रध्वंसितत्वात् *स्वयं विनष्टः* प्रदीपः । वायुप्रतिबन्धादन्यस्यानुत्पत्तौ न दृश्यते, न तेन विनाश इति । तथा घण्टाशब्दैः क्षणिक इष्यते । *पाणिसंयोग*पाते च सति *घण्टाशब्दस्य* विनाशः, न स तत्कृतः । क्षणिकत्वाद्धि स्वयं विनष्टो घण्टाशब्दस्तत्प्रतिबन्धत्वादन्यस्यानुत्पत्तौ न दृश्यते, न तेन विनाश इति । *तस्मादनुमानसाध्योऽयमर्थः* । न प्रत्यक्षसिद्ध इत्यभिप्रायः । तस्मादनैकान्तिकमेतत् । यस्य पाते यः कश्चिद्विनाशः स तत्कृत इति ।

*किं पुनरत्रानुमानमिति* । अत्राहेतुको विनाश इत्येतस्मिन्नर्थे किमनुमानमिति । *उक्तं तावदकार्यत्वादभावस्येति* । 'अहेतुको विनाशः; अकार्यत्वादाकाशवत् । अकार्यश्चासौ अभावस्वभावत्वादत्यन्ताभाववत्' ॥ २ ॥

*"न कस्यचिदहेतोः" इति* । न कस्यचिदकस्मादित्यर्थः । *उत्पादवदिति* । विपरीतोपमानम् । यथोत्पाद आत्मलाभलक्षणः सहेतुक एव, नाहेतुकस्तद्विनाशः स्यात् । न चैवं भवति । कथम् ? इत्याह—*क्षणिकानां च बुद्धिशब्दार्चिषां दृष्ट आकस्मिको विनाशः* । तदेवमनुमानापतितो धर्मः स्वरूपविपर्ययः । 'आकस्मिकः काष्ठादीनां विनाशः; विनाशस्वाभाव्यात्, बुद्ध्यादिविनाशवद्' इति ।

*यस्तु मन्यत इति* । वैशेषिकः । पूर्वा बुद्धिरुत्तरया बुद्ध्या उत्पन्नया विनाश्यते । अन्या तु बुद्धिः पूर्वया बुद्ध्या विनाश्यते । एवं शब्दोऽपि वाच्यः । आह—*न युक्तमेतत्* । कस्मात् ? *बुद्ध्योरसमवधानात्* अयुगपद्भावादित्यर्थः । न ह्यसन्तं नाश्यं हेतुर्विनाशयतीति । कथं गम्यते बुद्ध्योरसमवधानमिति ? अत आह—*न हि संशयनिश्चयज्ञानयोर्युक्तं समवधानमिति* विस्तरः । स्वसंवेद्य-

---

१-१. तदयुक्तम्—का० ।

एवं[1] सुखदुःखयोः, रागद्वेषयोर्वा। यदा च पटुबुद्धिशब्दानन्तरमपटुबुद्धिशब्दावुत्पद्येते, तदा कथमपटुः समानजातीयो धर्मः पटीयांसं हिंस्यात्। अन्त्ययोश्च कथम्!

योऽपि अर्चिषामवस्थानहेत्वभावाद्, धर्माधर्मवशाद् वा विनाशं मन्यते! स[2] चायुक्तः[2]; न ह्यभावः कारणं भवितुमर्हति। न चाप्युत्पादविनाशहेत्वोर्धर्माधर्मयोः क्षण[3] एव[3] क्षणे वृत्तिलाभप्रतिबन्धौ भवितुमर्हतः।

शक्यश्चैष कारणपरिकल्पः सर्वत्र संस्कृते कर्तुमित्यलं विवादेन।

---

मेतत्। यदा संशयज्ञानं न तदा निश्चयज्ञानम्, यदा निश्चयज्ञानं न तदा संशयज्ञानमिति। *एवं सुखदुःखयो रागद्वेषयोश्चा*समवधानमिति योज्यम्। यथा च विरुद्धयोरसमवधानम्, एवमविरुद्धयोरपि ज्ञानयोरसमवधानं भवतीति। *यदा चेति* विस्तरः। अथापि समवधानं स्यादिति, तथाप्यपटुबुद्धिशब्दौ पटू न हिंस्याताम्; दुर्बलसमानजातीयत्वात्। न हि दुर्बलसमानजातीयो बलवन्तं हिंसन् दृष्टः। असमानस्तु दुर्बलोऽपि हिंस्यात्। तद्यथा—उदकं तेजः।

*योऽप्यर्चिषामवस्थानहेत्वभावादिति। अवस्थानहेत्वभावाद्* भावानां विनाश इति *स्थविर-वसुबन्धुप्रभृतिभिरयं हेतुरुक्तः; स चायुक्तः। न ह्यभावः कारणं भवितुमर्हतीति। धर्माधर्मवशाद्वेति वैशेषिकः।* तं प्रत्याह—*न चाप्युत्पादविनाशहेत्वोरिति।* उत्पादविनाशहेत्वोरधर्मस्य। *क्षण एव क्षण* इति। मुख्ये क्षणे, नौपचारिके क्षण इत्यर्थः। अथ वा *क्षण एव क्षण* इति। क्षणे क्षण एवेत्यर्थः। *वृत्तिलाभप्रतिबन्धौ।* वृत्तिलाभो वृत्तिप्रतिबन्धश्च क्षणे क्षणे भवितुं नार्हतः। कथं कृत्वा? यस्यार्चिषः उत्पत्तावनुग्रहो भवति चैत्रस्य मैत्रस्य वा, तस्य धर्म उपलब्धवृत्तिः तदुत्पादयतीत्येवमुत्पादहेतुः। विनाशहेतुरपि, यदि तद्विनाशस्तस्यानुग्रहं करोति अन्धकारावस्थायाम्। एवमधर्मोऽपि यस्यार्चिरुत्पत्तावपकारो भवति, तस्याधर्मोपलब्धवृत्तिस्तदुत्पादयति। विनाशहेतुरपि, यदि तद्विनाशस्तस्याप्यपकारं करोति अन्धकारावस्थायामिति तयोर्वृत्तिलाभादर्चिषामुत्पत्तिर्भवति। न च वृत्तिलाभं तयोरप्रतिबध्य ताभ्यामेव तस्मिन्नेव क्षणे तेषां विनाश इति। क्षणे क्षणे वृत्तिलाभप्रतिबन्धौ न द्वयोर्युज्येते।

*शक्यश्चैष कारणपरिकल्प* इति विस्तरः। धर्माधर्मविनाश इति कारणपरिकल्प इति। *सर्वत्र संस्कृते* द्व्यणुकादौ अनित्येषु रूपादिषु कर्मणि च शक्यते कर्तुम्। अतो न वक्तव्यमेतत्—अग्निसंयोगात् काष्ठादीनां विनाश इत्येवमादि। ततश्च सर्वसंस्कृतस्य क्षणिकसिद्धिः; धर्माधर्मयोस्तद्विनाशकारणान्तरानपेक्ष-

---

१. का० पुस्तके नास्ति। २–२. तदप्ययुक्तम्—का०। ३–३. क्षणे—का०।

यदि च काष्ठादीनामग्न्यादिसंयोगहेतुको विनाशः स्यात्, एवं सति पाकजानां गुणानां पक्वतरतमोत्पत्तौ—

**हेतुः स्याच्च विनाशकः ।**

**हेतुरेव च विनाशकः स्यात् ।** कथं कृत्वा? घासाद्यग्निसम्बन्धाद्[1] गुणाः पाकजा उत्पन्नाः, तत एव तादृशाद्वा पुनः पक्वतरतमोत्पत्तौ तेषां विनाश इति हेतुरेव तेषां विनाशकः स्याद्, हेत्वविशिष्टो वा ।

न च युक्तम्—यत एव यादृशाद्वा तेषां भावः, तत एव तादृशाच्च तेषां पुनरभाव इति । ज्वालान्तरेषु च[2] तावद्धेतुभेदेऽपि[3] परिकल्पनां[3] परिकल्पयेयुः । क्षारहिमशुक्तसूर्योदकभूमिसम्बन्धात्तु पाकजविशेषोत्पत्तौ कां कल्पनां कल्पयेयुः ।

यत्तर्ह्यापः क्वाथ्यमानाः क्षीयन्ते, किं तत्राग्निसंयोगाः कुर्वन्ति ? तेजोधातुं प्रभावतो वर्धयन्ति, यस्य प्रभावादपां सङ्घातः क्षामक्षामो जायते, यावदतिक्षामतां गतोऽन्ते न पुनः सन्तानं सन्तनोति । इदमत्राग्निसंयोगाः कुर्वन्ति ।

---

स्यादित्यलं *विवादेन* ।

*तत एव तादृशाद्वेति* । अग्निसंयोगः श्यामतां घटस्य निवर्त्य रक्ततां जनयति, स एव रक्ततां निवर्त्य रक्ततरतां जनयतीति कल्प्यते । हेतुरेव विनाशकः स्यात् ।

अथ ज्वालानां क्षणिकत्वादन्यस्तत्संयोगो जनकः, अन्योऽपि विनाशक इति कल्प्यते ? हेत्वविशिष्टो विनाशकः स्यात्, न च युक्तमिति सर्वम् । *ज्वालान्तरेषु च तावद्धेतुभेदेऽपि परिकल्पनां परिकल्पयेयुर्वैशेषिकाः* । क्षणिकत्वात् ज्वालानामन्या जनिका अन्या विनाशिका इति । *क्षार-यावद्-भूमिसम्बन्धात्तु पाकजविशेषोत्पत्तौ कां कल्पनां कल्पयेयुः* । न हि तेषां क्षारादयः क्षणिकाः । तत्र हेतुरेव विनाशकः स्यात् ।

*यत्तर्हि आप इति* विस्तरः । यद्यग्निसंयोगेऽप्यापो न विनाश्यन्ते, कथं तर्ह्यापः *क्वाथ्यमानाः क्षीयन्त* इत्यभिप्रायः । *तेजोधातुरिति* । तदविनिर्भागिसंवर्धनम् । *यस्य प्रभावादपां संघातः*[4] *क्षामक्षामो जायत* इति । कारणविशेषात् कार्यविशेष इति क्षामक्षामतरो जायते । *यावदतिक्षामतां गतोऽन्ते न पुनः सन्तानं सन्तनोतीति* । कार्यं करोति । न त्वभावं करोतीत्यर्थः ।

---

१. ०सम्बन्धा—का० ।
२. का० पुस्तके नास्ति ।
३–३. ०भेदकल्पनां—का० ।
४. संहातः—मुद्रितः पाठः ।

तस्मान्नास्ति भावानां विनाशहेतुः । स्वयमेव तु भङ्गुरत्वाद् विनश्यन्त उत्पन्नमात्राद्[1] विनश्यन्तीति सिद्ध एषां क्षणभङ्गः । क्षणभङ्गाच्च गत्यभावः ।

गत्यभिमानस्तु देशान्तरेषु निरन्तरोत्पत्तौ तृणज्वालावत् । गत्यभावे च "संस्थानं कायविज्ञप्तिः" इति सिद्धम् ।

"नास्ति संस्थानं द्रव्यतः" इति सौत्रान्तिकाः । एकदिङ्मुखे हि भूयसि वर्ण उत्पन्ने दीर्घं रूपमिति प्रज्ञप्यते, तमेवापेक्ष्याल्पीयसि ह्रस्वमिति, चतुर्दिशं भूयसि चतुरस्रमिति, सर्वत्र समे वृत्तमिति । एवं सर्वम् । तद्यथा—अलातमेकस्यां दिशि देशान्तरेष्वनन्तरेषु निरन्तरमाशु दृश्यमानं दीर्घमिति प्रतीयते, सर्वतो दृश्यमानं मण्डलमिति । न[2] द्रव्यसत्[2] संस्थानम् । यदि हि स्यात्—

द्विग्राह्यं स्यात्,

चक्षुषा हि दृष्ट्वा दीर्घमित्यवसीयते कायेन्द्रियेणापि स्पृष्ट्वेति द्वाभ्यामस्य ग्रहणं प्राप्नुयात् । न च रूपायतनस्य द्वाभ्यां ग्रहणमस्ति ।

यथा वा स्प्रष्टव्ये दीर्घादिग्रहणम्, तथा वर्णेऽपि[3] सम्भाव्यताम् ।

---

*भङ्गुरत्वादिति* विस्तरः । भङ्गशीलत्वात् *स्वयं विनश्यन्तोऽन्येनाजनित*-विनाशाः । *सन्त उत्पन्नमात्रा*देकक्षणलब्धात्मानो भवन्तो *विनश्यन्ति* ।

*तृणज्वालावदिति* । यथा तृणज्वालायाः क्षणिकत्वेऽपि *देशान्तरेषु निरन्तरो-त्पत्तौ गत्यभिमानः*—तृणं दहन्तीति, ज्वाला गच्छन्तीति, तद्वत् । साधनं च—'अविद्यमानगतयो देशान्तरे निरन्तरमुत्पद्यमाना रूपादयो भावाः; क्षणिकत्वात्, तृणज्वालावत्' । *संस्थानं कायविज्ञप्तिरिति* । *वैभाषिक*वचनम् ॥ ३ ॥

*एकदिङ्मुख* इति । एका दिङ् मुखमस्येति एकदिङ्मुखं तस्मिन् । *भूयसि* बहुतरे । *एवं सर्वमि*त्यूर्ध्वैकदिङ्मुखे भूयसि उत्पन्न उन्नतमिति प्रज्ञप्यते, अधो भूयस्यवनतमिति । एषा दिक् । *तद् यथा अलातमिति* । *'न द्रव्यसत् संस्था-नम्;* वर्णग्रहणात् पक्षग्रहणत्वात्, अलातचक्रवद्' इति । अथवा—'न द्रव्य-संस्थानम्; अन्यरूपग्रहणात् पक्षग्रहणत्वाद्धान्यराशिवद्' इति ।

*द्वाभ्यामस्य ग्रहणं प्राप्नुयादि*त्युक्ते *वैभाषिको* ब्रूयात्—न दीर्घत्वादेः काये-न्द्रियेण ग्रहणम्, किं तर्हि ? स्प्रष्टव्यावयवेष्वेव तथासंनिविष्टेषु दीर्घादि-ग्रहणं भवति, अतो न द्वाभ्यामस्य ग्रहणं प्राप्नोति ? अत इदमुच्यते—*यथा वा*

---

१. उत्पन्नमात्रा—का० । २-२. न तु खलु जात्यन्तरमस्ति—का० ।
३. वर्णे—का० ।

स्मृतिमात्रं तत्र स्पर्शसाहचर्याद्[1] भवति। स तु साहचर्यात् भवति, न तु साक्षाद् ग्रहणम्, यथा—अग्निरूपं दृष्ट्वा तस्योष्णतायां स्मृतिर्भवति, पुष्पगन्धं च घ्रात्वा तद्वर्ण इति ?

युक्तमत्राव्यभिचारत्वादन्येनान्यस्मरणम्[2]; न तु किञ्चित् स्प्रष्टव्यं क्वचित् संस्थाने नियतम्, यतोऽत्र[3] स्मरणं नियमेन स्यात्।

तथा[4] सत्यपि साहचर्यनियमे संस्थाने[5] स्मरणं[5] नियमेन स्यात्। वर्णेऽपि स्यात्। वर्णवद् वा संस्थानेऽप्यनियमेन स्यात्।

---

*स्प्रष्टव्य* इति विस्तरः। कोऽर्थः ? *यथा स्प्रष्टव्ये दीर्घह्रस्वादिग्रहणम्*, न च स्प्रष्टव्यायतनसंगृहीतं संस्थानम्; *तथा वर्णेऽपि* सम्भाव्यतां दीर्घादिग्रहणम्, न च रूपायतनसंगृहीतसंस्थानम्। अर्थान्तरभूतं स्यादित्यर्थः।

पुनर्वैभाषिक आह—*स्मृतिमात्रं तत्र इति* विस्तरः। स्मृतिमात्रं तत्र संस्थाने स्पर्शसाहचर्यात् श्लक्ष्णत्वादिभिः स्पर्शैः सहचरभावाद् भवति। *न तु साक्षाद्ग्रहणं* दीर्घादिसंस्थानस्य। *यथाग्निरूपं दृष्ट्वा तस्याग्नेरुष्णतायां स्मृतिर्भवति* साहचर्यात्। *पुष्पस्य* च चम्पकस्य च *गन्धं घ्रात्वा तद्वर्णे*ऽपि स्मृतिसाहचर्यम्।

आह—*युक्तमत्रेति* विस्तरः। *युक्तमत्राग्नावव्यभिचारात्* उष्णतायाश्च रूपस्य च। *अन्येनान्यस्मरणम्*। अग्निरूपेणोष्णतायाः, पुष्पगन्धेन च तद्वर्णस्य। *न तु किञ्चिदिति* विस्तरः। न तु किञ्चित् *स्प्रष्टव्यं* श्लक्ष्णत्वादि क्वचिदिति संस्थाने दीर्घादौ *नियतम्; यतोऽत्र* संस्थाने स्प्रष्टव्यं स्पृष्ट्वा *स्मरणं नियमेन स्यात्*। यत्र ह्यग्निरूपम्, तत्र तदुष्णतया भवितव्यम्। यत्र च चम्पकगन्धः, तत्र तद्रूपेण भवितव्यम्। न तु यत्र श्लक्ष्णत्वं कर्कशत्वं वा, तत्र दीर्घत्वेन ह्रस्वत्वेन वा भवितव्यम्। तस्मात् तदुष्णतारूपयोर्नियमेन युज्यते। संस्थानेन तु नियमेन स्मरणं न प्राप्नोति।

*तथा सत्यपि साहचर्यनियमे* स्प्रष्टव्यं संस्थानयोः *संस्थाने स्मरणं नियमेन स्यात्। वर्णेऽपि स्यात्*। स्मरणं नियमेनेति वर्तते। तदेवं स्प्रष्टव्यं स्पृष्ट्वा स्मरेदित्यर्थः। *अथा*नियमेन वर्णस्मरणं भवति ? *वर्णवद्वा संस्थानेऽप्यनियमेन स्यात्*—

---

१. स्प्रष्टव्यसाह०—का०। २. ०नान्यस्य स्मरणम्—का०।
३. यतस्तत्र—का०। ४. अथा—का०।
५–५. संस्थान०—का०।

न चैवं भवति। अयुक्तमस्य स्प्रष्टव्यात् स्मरणम्। चित्रान्तरेण[1] वाऽनेकवर्णसंस्थाने दर्शनाद् बहूनामेकदेशं[2] प्राप्नुयात्। तच्चायुक्तं वर्णवत्।

तस्मान्नास्ति द्रव्यतः संस्थानम्॥

यच्चापि किञ्चित् सप्रतिघं रूपमस्ति तदवश्यं परमाणौ विद्यते।

**न चाणौ तत्,**

**न च** संस्थानं परमाणौ विद्यते दीर्घादि। तस्माद् बहुष्वेव तथासन्निविष्टेषु दीर्घादिप्रज्ञप्तिः।

---

दीर्घे ह्रस्वमिति, ह्रस्वे दीर्घमिति। किं कारणम्? वर्णे ह्यनियमेन स्मरणं भवति स्प्रष्टव्यात् कदाचिद् रक्ते पीतमिति पीते रक्तमिति। *न चैवं भवति।* कथमेवं न भवति? यथा वर्णे संस्मरणं न नियमेन भवति, तथा संस्थानेऽप्यनियमेनेति। किं तर्हि? वर्णे स्मरणं न नियमेन भवति, संस्थाने पुनर्नियमेनेति अयुक्तमस्य संस्थानस्य स्प्रष्टव्यात् स्मरणम्। कथं तर्हि दीर्घबुद्धिर्ह्रस्वबुद्धिर्वा भवति? उक्तमेतद्—एकदिङ्मुखे भूयसि वर्णे वा स्प्रष्टव्ये वा गृह्यमाणे दीर्घविकल्पबुद्धिः, अल्पीयसि ह्रस्व इति विकल्पबुद्धिरित्येवमाद्यत्रागन्तव्यम्। *चित्रान्तरेण वेति* विस्तरः। *चित्रान्तरेण वानेकवर्णसंस्थाने* बहुभिः प्रकारैर्दृश्यमानेनानेकसंस्थानं दृश्यते दीर्घादि। अतोऽनेकसंस्थानदर्शनात् *बहूनां* संस्थानानामेकदेशं *प्राप्नुयात्।* यत्रैव दीर्घत्वं तत्रैव ह्रस्वादिग्रहणात्। *तच्चायुक्तं वर्णवत्।* यथा हि वर्णः सप्रतिघत्वादेकदेशो न भवति, तथा संस्थानमपीति।

तथा च सति *द्रव्यतोऽपि संस्थान*मिति सापक्ष्यालः पक्ष्यो भवति; धर्मविशेषविपर्ययात्।

*"न चाणौ तद्"* इति। यथा नीलादिरूपम् अष्टद्रव्यकादावणौ विद्यते *न चैवमणौ संस्थानं दीर्घादि विद्यते।* कथं पुनर्गम्यते—संस्थानं परमाणौ नास्तीति? दीर्घसङ्घातेऽपचीयमाने दीर्घबुद्ध्यभावात्। दीर्घं हि दण्डमुपलभ्य तस्मिन्नेवापचीयमाने दीर्घबुद्धिर्न निवर्तेत[3]। न हि नीलादि द्रव्यमुपलभ्यापचीयमाने तस्मिन् पीतबुद्धिर्भवति। दीर्घद्रव्ये त्वपचीयमाने ह्रस्वबुद्धिर्भवति, न दीर्घबुद्धिः। न च युक्तं वक्तुम्—तदेव संस्थानं दीर्घादि-ह्रस्वादि-बुद्धिं जनयतीति। *तस्माद् बहुष्वेवेति* सर्वम्।

---

१. चित्रास्तरणे—का०। २. मैकदेश्यें—का०।

३. विवर्तेत—मुद्रितः पाठः।

अथ मतम्—संस्थानपरमाणव एव तथासन्निविष्टा दीर्घादिसंज्ञा[1] भवन्ति[1] इति ! सोऽयं केवलः पक्षपातः; तेषामसिद्धत्वात् । सिद्धस्वलक्षणानां हि तेषां सञ्चयो युज्यते । न च संस्थानावयवानां वर्णादिवत् स्वभावः सिद्ध इति कुत एषां सञ्चयः !

यत्तर्हि वर्णत्वाभिन्नो[2] भवति. संस्थानं च भिन्नं दृश्यते मृद्भाजनानाम् ! ननु चोक्तं यथा कृत्वा वर्णे दीर्घादिसंज्ञा प्रज्ञप्यते, यथा च पिपीलिकादीनामभेदे पङ्क्तिचक्रादीनां भेदः प्रज्ञायते, तथा संस्थानस्यापि !

यत्तर्हि तमसि[3] दूराद् वा वर्णमपश्यन्तः स्थाण्वादीनां दैर्घ्यादीन पश्यन्ति ? वर्णमेव ते तत्राव्यक्तं दृष्ट्वा दीर्घादिपरिकल्पं कुर्वन्ति, पङ्क्तिसेनापरिकल्पवत् ।

---

*अथ मत*मिति विस्तरः । *संस्थानपरमाणव एव तथासन्निविष्टा* एकदिङ्मुखादिक्रमेण *दीर्घादिसंज्ञा भवन्ति* । न ह्येतत्स्वभावाः तथासन्निविष्टाः समानास्तां संज्ञामुपलब्धुमर्हन्तीत्यभिप्रायः । *न च संस्थानावयवानां वर्णादिवत् स्वभावः सिद्ध इति* । वर्णावयवाः प्रसिद्धस्वभावाः; प्रत्यवयवं नीलादित्वतो ग्रहणात्, न चैवं संस्थाने परमाणवः प्रत्यवयवं दीर्घादित्वतो गृह्यन्ते । तस्मान्न प्रसिद्धस्वभावाः । यदि तु नैव ते दीर्घादिस्वभावाः, सन्निवेशविशेषात् तु दीर्घादिबुद्धिहेतवो भवन्ति । वर्णादिपरमाणव एव सन्निवेशविशेषात्तु दीर्घादिबुद्धिहेतवो भवन्तीति किं नेष्यते !

*यत्तर्हि वर्णत्वाभिन्न* इति । यदि वर्णसन्निवेशमात्रं संस्थानं स्यात्, वर्णाभेदे संस्थानभेदो न स्यात्; *मृद्भाजनानां* कुण्डादीनामनर्थान्तराभावात् ।

ननु *चोक्तमिति* विस्तरः । यथा कृत्वा वर्णे दीर्घादिसंज्ञा प्रज्ञप्यते । एकदिङ्मुखे च वर्ण इति विस्तरेण । *यथा च पिपीलिकादीनामिति* विस्तरः । यथा च पिपीलिकादय एकरूपा भवन्ति । तेषां च *पङ्क्ति*रित्यस्मिन् देशेऽन्यादृशी, अन्यस्मिन्नन्यादृशी । एवं *चक्रादीनां भेद* इत्येवमादि । तथा वर्णाभेदेऽपि *संस्थानभेदः स्यात्* ।

*यत् तर्हि तमसीति* विस्तरः । यत् तर्हि तमसि *वर्णमपश्यन्तः स्थाणुपुरुषहस्त्यादीनामिति दीर्घत्वह्रस्वत्वपरिमण्डलादीनि पश्यन्ति* । तत् कथमिति वाक्यशेषः । यदि तर्हि वर्णाज्जात्यन्तरसंस्थानं न स्यात् । यथा वर्णं नीलं पीतमिति वा न पश्यन्ति तथा संस्थानमपि दीर्घह्रस्वमिति न पश्येयुः, पश्यन्ति च कदाचित् । अतो जात्यन्तरं संस्थानमिति । *पङ्क्तिसेनापरिकल्पवदिति* । यथा

---

१–१. ०संज्ञां लभन्त—का० । २. वर्णश्चाभिन्नो—का० । ३. तमपि—का० ।

वेविदितं[1] चैतदेवम्। यत् कदाचिदनिर्धार्यमाणपरिच्छेदं सङ्घातमात्रमव्यक्तं दृश्यते किमप्येतदिति।

अथेदानीं कायस्य गतिं निराकृत्य संस्थानं च तत्रभवन्तः **सौत्रान्तिकाः** कां कायविज्ञप्तिं प्रज्ञपयन्ति? संस्थानमेव हि ते कायविज्ञप्तिं प्रज्ञपयन्ति, न तु पुनर्द्रव्यतः।

तां च प्रज्ञपयन्तः कथं कायकर्म प्रज्ञपयन्ति? कायाधिष्ठानं कर्म कायकर्म, या चेतना कायस्य तत्र तत्र प्रणेत्री।

एवं वाङ्मनस्कर्मणी अपि यथायोगं वेदितव्ये।

यत्तर्हि "चेतना कर्म चेतयित्वा च" ( ) इत्युक्तम्? सङ्कल्पचेतना पूर्वं भवति—'एवं चैवं च करिष्यामि' इति। तथा चेतयित्वा पश्चात् क्रिया चेतनोत्पद्यते। यया कायः प्रेर्यते सासौ चेतयित्वा कर्मेत्युच्यते।

एवं तर्हि विज्ञप्त्यभावादविज्ञप्तिरपि कामावचरी न[2] स्यादिति[2] महान्तो

---

तमस्यव्यक्तं पक्षिणः पिपीलिका वा दृष्ट्वा दीर्घा पंक्तिरिति परिकल्पयन्ति, यथा वा तमस्येव हस्त्यादीनव्यक्तं दृष्ट्वा परिमण्डलेयं सेना व्यवस्थितेति परिकल्पयन्ति, तद्वत्। *वेविदितं चैतदेवमिति*। यथेदानीमुक्तम्—असत्यपि जात्यन्तरे संस्थाने वर्णमेव ते तत्राव्यक्तं दृष्ट्वा दीर्घादिपरिकल्पं कुर्वन्ति। *यत् कदाचिदिति* विस्तरः। *अनिवार्यमाणपरिच्छेदमिति*। अनिर्धार्यमाणसंस्थानसंघातमात्रमव्यक्तमलक्ष्यमाणनीलत्वादिकं *दृश्यते*। न च वर्णसंस्थानव्यतिरिक्तं रूपायतनमस्तीति। यथा नान्यत् किञ्चिद् द्रव्यं कल्प्यते, तद्वत् संस्थानमपि न वर्णव्यतिरिक्तं कल्पयितव्यम्।

*तत्रभवन्त* इति। ते भवन्त इत्यर्थः। "इतराभ्योऽपि दृश्यन्ते" (पा० सू० ५.३.१४) इति वचनात्। *कथं कायकर्म प्रज्ञापयन्तीति*। प्रज्ञप्तिसत्त्वात् कायकर्मायोग *इति* मन्यमानः पृच्छति। *कायाधिष्ठानमिति*। कायालम्बनमित्यर्थः। यस्य हि कायः प्रवर्त्यः, तत्कायाधिष्ठानं कर्म। तेनाह—*या चेतना कायस्य तत्र तत्र प्रणेत्रीति*[3]। *यथायोगं वेदितव्ये* इति। वागधिष्ठानं कर्म *वाक्कर्म*। *मनस्कर्म* तु मनसः कर्म, मनसा वा संयुक्तं कर्म मनस्कर्म। तेन *यथायोगमित्युक्तम्*।

*विज्ञप्त्यभावादिति* विस्तरः। यदि विज्ञप्तिर्न स्यात् *अविज्ञप्तिरपि कामावचरी न स्यात्*। विज्ञप्त्यधीना हि कामावचर्यविज्ञप्तिः, न चित्तानुपरिवर्तिनीति। सा

---

१. इत्थं—का०। २–२. नास्तीति—का०। ३. पश्यतीति—मुद्रितः पाठः।

दोषा अनुषज्यन्ते, अनुषङ्गाणां[1] पुनः प्रत्यनुषङ्गा भविष्यन्ति; यदि तस्मादेव कायकर्मसंशब्दिताच्चेतनाविशेषादविज्ञप्तिः स्यात्, चित्तानुपरिवर्तिनी स्यात् समाहिताविज्ञप्तिवत् !

नैवं भविष्यति; चेतनाविशेषेण तदाक्षेपविशेषात्। सापि च विज्ञप्तिः सती तदाक्षेपे उत्पादनचेतनाया[2] बल निभालयते; जडत्वात्। द्रव्यमेव तु संस्थानं वैभाषिका वर्णयन्ति, संस्थानात्मिकां तु कायविज्ञप्तिम्।

**वाग्विज्ञप्तिस्तु वाग्ध्वनिः ॥ ३ ॥**

वाक्स्वभावो यः शब्दः सैव वाग्विज्ञप्तिः ॥ ३ ॥

अविज्ञप्तिः पूर्वमेवोक्ता। सापि द्रव्यतो नास्तीति **सौत्रान्तिकाः**; अभ्युपेत्याकरणमात्रत्वात्। अतीतान्यपि महाभूतान्युपादाय प्रज्ञप्तेः, तेषां चाविद्यमान-

---

चैवं नास्तीति *महान्तो दोषा अनुषज्यन्ते*। संवरासंवराभावदोषः, सप्तौपधिकपुण्यक्रियावस्तु-पुण्यवृद्ध्यभावदोष इत्येवमादयोऽनुषङ्गाः। *अनुषङ्गाणां पुनः प्रत्यनुषङ्गा* इति। तत्परिहारा भविष्यन्तीत्यर्थः। *कायकर्मसंशब्दितादिति*। कायाधिष्ठानादित्यर्थः। *समाहिताविज्ञप्तिवदिति*। यथा समाहिताविज्ञप्तिश्चित्तानुपरिवर्तिनी, एवं प्रातिमोक्षसंवरादिलक्षणाप्यविज्ञप्तिः स्यात्।

*सौत्रान्तिका* आहुः—*नैवं भविष्यति*। न चित्तानुपरिवर्तिनी *भविष्यति*; *चेतनाविशेषणा*समाहितेन *तदाक्षेपविशेषाद्*। असमाहिताया *अविज्ञप्ते*राक्षेपादित्यर्थः। *सापि च विज्ञप्ति*र्भवदीया *सती* विद्यमाना अविज्ञप्तेराक्षेपे *उत्पादनचेतनाया बलं* सामर्थ्यं *निभालयते* अपेक्षते। कस्मात्? *जडत्वाद्*। अपटुत्वाच्चेतनाबलमन्तरेण तामविज्ञप्तिं जनयितुं न शक्नोति। न ह्यसत्यां समादानचेतनायां यदृच्छोत्पन्ना विज्ञप्तिरविज्ञप्तिं जनयति।

*"वाग्विज्ञप्तिस्तु" इति*। तु-शब्दो विशेषणेन। यथा कायविज्ञप्तिः संस्थानात्मिका, न तथा वाग्विज्ञप्तिः। किं तर्हि? वागात्मको ध्वनिः, वर्णात्मकः शब्द इत्यर्थः ॥ ३ ॥

*अविज्ञप्तिः पूर्वमेवोक्तेति*। "ते तु विज्ञप्त्यविज्ञप्ती" इत्युक्तम्। तत्र विज्ञप्तिरुक्ता, अविज्ञप्तिर्वक्तव्या। सा च पूर्वमेवोक्ता—"विक्षिप्ताचित्तकस्य" (अभि० को० १.११) इति वचनात्। *सापि द्रव्यतो नास्ति*। साप्यविज्ञप्तिर्द्रव्यतो नास्ति। न केवला विज्ञप्तिरित्यपिशब्दः। *अभ्युपेत्याकरणमात्रत्वादिति*। "इमं दिवसमुपा-

---

१. अनुषङ्गानां—का०। २. चेतनायाः—का०।

स्वभावत्वाद्, रूपलक्षणाभावाच्च ।

अस्तीति वैभाषिकाः । कथं ज्ञायते ?

**त्रिविधामलरूपोक्तिवृद्ध्यकुर्वत्पथादिभिः ।**

त्रिविधं रूपमुक्तं सूत्रे—"त्रिभिः स्थानै रूपस्य रूपसंग्रहो भवति—अस्ति रूपं सनिदर्शनं सप्रतिघम्, अस्ति रूपमनिदर्शनं सप्रतिघम्, अस्ति रूपमनिदर्शनमप्रतिघम्" (   ) इति । अनास्रवं च भगवता रूपमुक्तम्—"अनास्रवाः धर्माः कतमे ? यस्मिन् रूपेऽतीतानागतप्रत्युत्पन्नो नोत्पद्यतेऽनुनयो वा प्रतिघो वा यावद् यस्मिन् विज्ञाने, इम उच्यन्तेऽनास्रवा धर्माः" (   ) इति । नाविज्ञप्तिं[1] विरहय्यास्ति रूपमनिदर्शनमप्रतिघम्, नाप्यनास्रवम् ।

---

दाय प्राणातिपातादिभ्यः प्रतिविरमामि' इत्यभ्युपेत्य । तस्मात् परेण तेषामकरणमात्रमविज्ञप्तिरित्येवं द्रव्यतो नास्तीति *सौत्रान्तिकाः* । *तेषां* चातीतानां महाभूतानाम् । न ह्यतीतानां प्रत्युत्पन्नस्वभावोऽस्ति । *पञ्चमे च कोशस्थान* एतद् दर्शयिष्यत इति । कथम् ? *अविद्यमानान्यस्या* आश्रय इत्यतो न द्रव्यतोऽस्ति । *रूपलक्षणाभावाच्च* । रूप्यत इति रूपलक्षणम्, तच्चास्या अप्रतिघत्वान्नास्ति । तस्मान्न द्रव्यतोऽस्ति ।

*त्रिविधेति विस्तरः* । त्रिविधञ्च तदमलञ्च *त्रिविधामलरूपम्*, तस्योक्तिः । अकुर्वतः पन्था *अकुर्वत्पथः* । परेण कारयतः स्वयमकुर्वतः कर्म इत्यर्थः । त्रिविधामलरूपोक्तिश्च वृद्धिश्चाकुर्वत्पथश्चादिरेषाम्, तानीमानि *त्रिविधामलरूपोक्तिवृद्ध्यकुर्वत्पथादीनि* । *आदिशब्देन* धर्मो भिक्षो इत्यत्रारूपीत्यवचनम्, आर्याष्टाङ्गवचनम्, प्रातिमोक्षसंवरसेतुवचनं च गृह्यते ।

*रूपस्य रूपसंग्रह इति* । रूपस्य रूपेणैव संग्रहो भवति, नान्यैर्वेदनादिभिः । *अस्ति रूपं सनिदर्शनं सप्रतिघम्* । यच्चक्षुर्विज्ञानविज्ञेयं रूपम् । *अस्त्यनिदर्शनं सप्रतिघम्* । यानि चक्षुरादीनि तत् पुनर्नव रूप्यायतनानि । *अस्ति रूपमनिदर्शनमप्रतिघम्* । यन्मनोविज्ञानविज्ञेयम् अविज्ञप्तिरूपं धर्मायतनसंगृहीतम् । *नाविज्ञप्तिं विरहय्येति* विस्तरः । अविज्ञप्तिं मुक्त्वा *नास्ति रूपमनिदर्शनमप्रतिघं* यद् रूपसंग्रहसूत्र उक्तम् । *नाप्यनास्रव*मस्ति रूपम् । अविज्ञप्तिं विरहय्येति वर्तते । न हि मार्गसत्यसमापन्नस्य कायवाग्विज्ञप्तिरूपं युज्यते ।

---

१. न चाविज्ञप्तिं—का० ।

वृद्धिरपि चोक्ता—"एभिः सप्तभिरौपधिकैः पुण्यक्रियावस्तुभिः समन्वागतस्य श्राद्धस्य कुलपुत्रस्य वा[1] कुलदुहितुर्वा चरतो वा स्वपतो वा तिष्ठतो वा जाग्रतो वा सततसमितमभिवर्धत एव पुण्यम्, उपजायत एव पुण्यम्। एवं निरौपधिकैः" ( ) इति। न चाविज्ञप्तिमन्तरेणान्यमनसोऽपि पुण्यस्याभिवृद्धिर्युज्यते। अकुर्वतश्च स्वयं परैः कारयतः कर्मपथा न सिध्येयुरसत्यामविज्ञप्तौ।

---

*सप्तभिरौपधिकैरिति*। उपधिः=आरामविहारादिः, तत्र भवमौपधिकम्। तस्योपधेरभावान्निरौपधिकम्। *सततमभीक्ष्णम्*। *समितं* निरन्तरम्।

अत्र सूत्रम्—"भगवान् कौशाम्ब्यां विहरति स्म घोषितारामे। अथायुष्मान् महाचुन्दो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्तेऽस्थात्। एकान्ते स्थित आयुष्मान् महाचुन्दो भगवन्तमेतदवोचत्—'लभ्यं भदन्त औपधिकं पुण्यक्रियावस्तु प्रज्ञपयितुं महाफलं महानुशंसं महाद्युतिकं महावैस्तारिकम्'? 'लभ्यं चुन्द' इति भगवांस्तस्यावोचत्।

'*सप्तेमानि चुन्दौपधिकानि पुण्यक्रियावस्तूनि* महाफलानि यावन्महावैस्तारिकाणि। *यैः समन्वागतस्य* श्राद्धस्य कुलपुत्रस्य वा कुलदुहितुर्वा *चरतो वा तिष्ठतो वा स्वपतो वा जाग्रतो वा सततसमितमभिवर्धते एव पुण्यम्, उपजायते एव पुण्यम्*'।

'कतमानि सप्त'? १. 'इह चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा चातुर्दिशाय भिक्षुसङ्घायारामं प्रतिपादयति। इदं चुन्द प्रथमौपधिकं पुण्यक्रियावस्तु महाफलं यावन्महावैस्तारिकम्, येन समन्वागतस्य कुलपुत्रस्य वा विस्तरेण यावदुपजायत एव पुण्यम्।

२. 'पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा तस्मिन्नेवारामे विहारं प्रतिष्ठापयति। इदं द्वितीयमौपधिकं पुण्यक्रियावस्तु महाफलं यावदुपजायत एव पुण्यम्।

३. 'पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा तस्मिन्नेव विहारं शयनाशनं प्रयच्छति। तद्यथा—मञ्चं पीठं वृषिं कोच्चवं बिम्बोपधानं चतुरस्रकं ददाति। इदं चुन्द तृतीयमौपधिकं पुण्यक्रियावस्तु पूर्ववत्।

४. 'पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा तस्मिन्नेव विहारे ध्रुवभिक्षां प्रज्ञपयत्यनुकूलयज्ञाम्। इदं चुन्द चतुर्थमौपधिकं पुण्यक्रियावस्तु महाफलं पूर्ववत्।

---

१. का० पुस्तके नास्ति।

५. 'पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा आगन्तुकाय गमिकाय वा दानं ददाति। इदं चुन्द पञ्चममौपधिकं पुण्यक्रियावस्तु पूर्ववत्।

६. 'पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा ग्लानाय ग्लानोपस्थापकाय वा दानं ददाति। इदं चुन्द षष्ठमौपधिकं पुण्यक्रियावस्तु पूर्ववत्।

७. 'पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा यास्ता भवन्ति शीतलिका वा वद्दलिका वा वातलिका वा वर्षलिका वा, तद्रूपासु शीतलिकासु यावद्वर्षलिकासु भक्तानि वा तर्पणानि वा यवागूपानानि वा तानि सङ्घायाभिनिर्हृत्यानुप्रयच्छति—इदमार्या अस्माकमनार्द्रगात्राः अनभिवृष्टचीवराः परिभुज्य सुखस्पर्शं विहरन्तु। इदं च चुन्द सप्तममौपधिकं पुण्यक्रियावस्तु महाफलं यावदुपजायत एव पुण्यम्।

'एभिः सप्तभिरौपधिकैः पुण्यक्रियावस्तुभिः समन्वागतस्य श्राद्धस्य कुलपुत्रस्य वा कुलदुहितुर्वा न लभ्यं पुण्यस्य प्रमाणमुद्ग्रहीतुम्—एतावत् पुण्यं वा, पुण्यफलं वा, पुण्यविपाकं वा। अपि तु बहुत्वात् पुण्यस्य 'महापुण्यस्कन्धः' इति संख्यां गच्छतीत्येवमादि'"।

"द्विरप्यायुष्मान् महाचुन्दो भगवन्तमेतदवोचत्—'लभ्यं भदन्त *निरौपधिकं* पुण्यक्रियावस्तु प्रज्ञपयितुं महाफलं यावन्महावैस्तारिकम्? 'लभ्यं चुन्द' इति भगवांस्तस्यावोचत्। 'सप्तेमानि चुन्द निरौपधिकानि पुण्यक्रियावस्तूनि यैः समन्वागतस्य श्राद्धस्य कुलपुत्रस्य वा कुलदुहितुर्वा चरतो वा तिष्ठतो वा विस्तरेण यावदुपजायत एव पुण्यम्'।

कतमानि सप्त'? १. 'इह चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा शृणोति तथागतं वा तथागतश्रावकं वा अमुकं ग्रामक्षेत्रमुपनिश्रित्य विहरतीति। श्रुत्वा पुनरधिगच्छति प्रीतिप्रामोद्यमुदारं कुशलं नैष्कम्योपसंहितम्। इदं चुन्द प्रथमं निरौपधिकं पुण्यक्रियावस्तु पूर्ववत् यावदुपजायत एव पुण्यम्।

२. 'पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा शृणोति तथागतं वा तथागतश्रावकं वा उद्युक्तमागमनाय। श्रुत्वा च पुनरधिगच्छतीति पूर्ववत्। इदं चुन्द द्वितीयं निरौपधिकं पुण्यक्रियावस्तु।

३. 'पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा शृणोति तमेव तथागतं वा तथागतश्रावकं वा अध्वानमार्गप्रतिपन्नं तमेव ग्रामक्षेत्रमनुप्राप्तम्। श्रुत्वा च पुनरधिगच्छतीति पूर्ववत्। इदं चुन्द तृतीयं निरौपधिकं पुण्यक्रियावस्तु यावदुपजायत एव पुण्यम्।

४. 'पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा शृणोति तमेव तथागतं वा तथागतश्रावकं वा तदेव ग्रामक्षेत्रमनुप्राप्तम्। श्रुत्वा च पुनरधिगच्छतीति पूर्ववत्। इदं चुन्द चतुर्थं निरौपधिकं पुण्यक्रियावस्तु यावदुपजायत एव पुण्यम्।

न ह्याज्ञापनविज्ञप्तेः[1] कर्मपथ उपयुज्यते[1]; तस्य कर्मणोऽकृतत्वात्। कृतेऽपि च तस्याः स्वभावविशेषादिति।

उक्तं च **भगवता**—"धर्मा भिक्षवो बाह्यमायतनमेकादशभिरायतनैरसंगृहीतमनिदर्शनमप्रतिघम्" (               ) इति। न त्वरूपीत्युक्तम्। तत्र किं प्रयोजनं स्याद् यदि धर्मायतनान्तर्गतमविज्ञप्तिरूपं नश्येत।

अष्टाङ्गश्च मार्गो न स्यादविज्ञप्तिमन्तरेण। समापन्नस्य वाक्कर्मान्ताजीवानामयोगात्[2]।

यत्तर्हीदमुक्तम्—"तस्यैवं जानत एवं पश्यतः सम्यग्दृष्टिर्भावनापरिपूरिं

---

५. 'पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा तमेव तथागतं वा तथागतश्रावकं वा दर्शनायोपसंक्रामति, दृष्ट्वा च पुनरधिगच्छतीति पूर्ववत्। इदं चुन्द पञ्चमं निरौपधिकं पुण्यक्रियावस्तु।

६. 'पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा तस्यैव तथागतस्य वा तथागतश्रावकस्य वा अन्तिकाद् धर्मं शृणोति। श्रुत्वा च पुनरधिगच्छतीति पूर्ववत्। इदं चुन्द षष्ठं निरौपधिकं पुण्यक्रियावस्तु।

७. 'पुनरपरं चुन्द श्राद्धः कुलपुत्रो वा कुलदुहिता वा तस्यैव तथागतस्य वा तथागतश्रावकस्य वा अन्तिकाद् धर्मं शृणोति। श्रुत्वा च बुद्धं शरणं गच्छति, धर्मं शरणं गच्छति, सङ्घम् शरणं गच्छति, शिक्षापदानि च प्रतिगृह्णाति। इदं चुन्द सप्तमं निरौपधिकं पुण्यक्रियावस्तु महाफलमिति पूर्ववत्"। बहुग्रन्थभयात् न सर्वं लिखितम्।

*न ह्याज्ञापनविज्ञप्तेः कर्मपथ उपयुज्यते; तस्य* प्राणातिपातादिकर्मणोऽकृतत्वात्। स्यान्मतम्, कृते तस्मिन् कर्मणि तदाज्ञापनविज्ञप्तेः कर्मपथो भविष्यतीति? अत्रेदमुच्यते—*कृतेऽपि च तस्याः स्वभावविशेषादिति*। परेण कृतेऽपि तस्मिन् कर्मणि तस्या आज्ञापनविज्ञप्तेर्न कश्चित् स्वभावविशेषोऽस्ति, येन तदानीं कर्मपथः स्यात्। तस्मात् पूर्ववत्। *तस्याः स्वभावाविशेषात्*। यथैव पूर्ववत् कर्मपथो न व्यवस्थाप्यते, तथैव पश्चादित्यतोऽस्तीत्यभ्युपगन्तव्या यासौ तदानीमुत्पद्यते कर्मपथसंगृहीतेति।

*एकादशभिरायतनैरसंगृहीतमिति*॥ धर्मायतनवर्जैः। *वाक्कर्मान्ताजीवानामयोगादिति*। विज्ञप्तिस्वभावानामेवासम्भवादित्यर्थः।

*यत्तर्हीदमुक्तमिति* विस्तरः। कोऽस्याभिसम्बन्धः। यदि वा मतम्—यद्य-

---

१—१. ०विज्ञप्तिः मौलः कर्मपथो युज्यते—का०। २. सम्यग्वाक्क०—का०।

गच्छति, सम्यक्सङ्कल्पः, सम्यग्व्यायामः, सम्यक्स्मृतिः, सम्यक्समाधिः। पूर्वमेव चास्य सम्यग्वाक्कर्मान्ताजीवाः परिशुद्धा भवन्ति पर्यवदाताः" ( ) इति ? लौकिकमार्गवैराग्यं पूर्वकृतमभिसन्धायैतदुक्तम्।

प्रातिमोक्षसंवरश्चापि न स्यादसत्यामविज्ञप्तौ। न हि समादानादूर्ध्वं तदस्ति, येनान्यमनस्कोऽप्ययं भिक्षुः स्यात्, भिक्षुणी वेति। सेतुश्च सूत्रे विरक्तिरुक्ता; दौःशील्यविबन्धत्वात्। न वा भवन्ती सेतुर्भवितुमर्हतीत्यस्त्येवाविज्ञप्तिः।

अत्र **सौत्रान्तिका** आहुः—बह्वप्येतत्, चित्रमप्येतत्। नैवं त्वेतत्। किं कारणम् ? यत्तावदुक्तम्—"त्रिविधरूपोक्तेः" इति।

तत्र **योगाचारा** उपदिशन्ति—ध्यायिनां समाधिविषयरूपं[1] समाधिप्रभावादुत्पद्यते, चक्षुरिन्द्रियाविषयत्वाद् अनिदर्शनम्, देशानावरणाद् अप्रतिघमिति[2]।

अथ मतम्—कथमिदानीं तद् रूपमिति ? एतदविज्ञप्तौ समानम्। यदप्युक्तम्—'अनास्रवरूपोक्तेः' इति, तदेव समाधिप्रभावसम्भूतं रूपमनास्रवे समाधावनास्रवं वर्णयन्ति **योगाचाराः**।

---

विज्ञप्तिर्न स्यादष्टाङ्गं मार्गो न स्यात्; तत्र विज्ञप्त्ययोगात्। तस्माद् अस्त्यविज्ञप्तिरिति।

यत्तर्हीदमुक्तमिति विस्तरेणोक्त्वा यावत् *सम्यक् समाधिरिति* किमर्थमेवमुच्यते ? *पूर्वमेव चास्येति* सर्वम्। मार्गस्य समापत्तिकालात् पूर्वमित्यर्थः। विज्ञप्तिरूपास्त उक्ता इत्यभिप्रायः। *वैभाषिका* परिहरन्ति—*लौकिकमार्गवैराग्यमिति विस्तरः*। लौकिकमार्गवैराग्यावस्थायां वागादिस्वभावं विज्ञप्तिरूपम्। एतद*भिसन्धायैतदुक्तम्*। न तु मार्गकाले तत् संगृहीतं वागाद्यविज्ञप्तिरूपं नास्तीति।

*समाधिविषयरूपमिति*। समाधेरालम्बनमस्थिसङ्कलादि। *देशानावरणादप्रतिघमिति*। यद्रूपं देशमावृणोति तत् प्रतिघम्। विपर्ययादप्रतिघमिति सिद्धम्।

*कथमिदानीं तद्रूपमिति*। यदि न रूपयितुं शक्यत इत्यभिप्रायः। *एतदविज्ञप्तौ समानम्*। अविज्ञप्तिरपि वा देशं नावृणोतीति तुल्यम्। *अनास्रवे समाधौ अनास्रवमिति*। मार्गं सम्मुखीकुर्वाणो *योगाचार*स्तद्रूपमाशयं चाश्रयञ्च प्रतिलभते यत् सम्यग्दृष्टिवदनास्रवं शीलं प्रतिलभते। यस्मिन् सति प्रकृतिशीलतायां सन्तिष्ठते।

---

१. ०विषयो रूपं—का०। २. ०नावरणत्वाद०—का०।

अर्हतो यद् रूपं बाह्यं चेत्यपरे; आस्रवाणामनिःश्रयत्वात् ।

यत्तर्हि सूत्र उक्तम्—"सास्रवा धर्माः कतमे? यावदेव चक्षुर्यावदेव रूपाणि" इति विस्तरः? तत्[1] पुनरास्रवाणामप्रतिपक्षत्वात् सास्रवमुक्तम्। पर्यायेण तर्हि तदेव सास्रवं चानास्रवं च स्यात्! किं स्यात्? लक्षणसङ्करः स्यात्। यथा तत् सास्रवं तथा न कदाचिदनास्रवमिति कोऽत्र सङ्करः? यदि च रूपायतनादीनि एकान्तेन सास्रवाणि स्युः, इह सूत्रे किमर्थं विशेषितानि स्युः—"यानि रूपाणि सास्रवाणि सोपादानीयानि चेतःखिलम्रक्षवस्तु" इति विस्तरः।

यदप्युक्तम्—"पुण्याभिवृद्धिवचनाद्" इति, तत्रापि पूर्वाचार्या निर्दिशन्ति—"धर्मता ह्येषा यथा यथा दातॄणां दायाः परिभुज्यन्ते तथा तथा भोक्तॄणां गुणविशेषादनुग्रहविशेषाच्चान्यमनसामपि दातॄणां तदालम्बनदानचेतनापरिभाविताः[2] सन्ततयः सूक्ष्मं परिणामविशेषं प्राप्नुवन्ति, येनायत्यां बहुतरफलाभिनिष्पत्तये

---

अथवा अनास्रवेऽपि समाधौ तदेवंविधं रूपं त *आचार्या* इच्छन्ति। *अर्हतो यद्रूपं बाह्यं चेत्यपर* इति। अपर *आचार्या* वर्णयन्ति—अर्हतो यद्रूपं चक्षुरायतनादि वाह्यं च काष्ठकुड्यादि तदनास्रवं रूपम्। कुतः? *आस्रवाणामनिश्रयत्वात्।* न ह्यर्हत्सान्तानिकं रूपं बाह्यं चास्रवाणां क्लेशानां निश्रय इति।

यद्येवम्, *यत्तर्ह्य*विशेषेण *सूत्र उक्तम्—सास्रवा धर्माः कतमे? यावदेव चक्षुर्यावदेव रूपाणीति विस्तरः। तत् पुनरास्रवाणामप्रतिपक्षत्वात् सास्रवमुक्तम्।* चित्तचैत्तविशेषो हि आस्रवप्रतिपक्ष इति। *पर्यायेण तर्हीति* विस्तरः। *तदेवार्हतो* रूपं बाह्यं चास्रवाणामप्रतिपक्षत्वात् *सास्रवम्, आस्रवाणाम*निश्रयत्वादनास्रवमिति। तथा च *लक्षणसंकरः स्यादिति* दोषः। *यानि रूपाणीति।* यानि रूपाण्यायतनानीत्यर्थः। विस्तरेण यावद् ये धर्माः सास्रवाः सोपादानीयाश्चेतःखिलम्रक्षवस्त्विति वचनात्। सन्त्यनास्रवाणि रूपायतनानीति। तानि पुनः कतमानि सास्रवाणि? सोपादानीयानि पृथग्जनरूपाणि; आस्रवाणां निःश्रयत्वात्तदप्रतिपक्षत्वाच्च। कतमान्यनास्रवाणि? यान्यर्हतो रूपाणि बाह्यानि च; आस्रवाणामनिःश्रयत्वात्।

*धर्मता ह्येषेति।* कर्मणामनादिकालिका शक्तिः। *गुणविशेषादिति।* ध्यानाप्रमाणादिगुणविशेषात्। *अनुग्रहविशेषाच्चेति।* शरीरस्य वर्णबलादिविशेषात्। *तदालम्बनेति* विस्तरः। सप्रतिग्राहकमालम्बनमस्याः सेयं *तदालम्बना दानचेतना,* तया *परिभाविताः सन्ततयः सूक्ष्मं परिणामविशेषं* फलोत्पत्तिनिमित्तं

---

१. तत्र—का०। २. ०चेतनाभाविताः—का०।

समर्था भवन्ति"। इदमभिसन्धायोक्तं भवेद्—"अभिवर्धत एव पुण्यमुपजायत एव पुण्यम्" इति।

अथ मतम्—कथमिदानीं सन्तानान्तरविशेषादन्यमनसोऽपि सन्तानान्तरस्य परिणामः सेत्स्यतीति? एतदविज्ञप्तौ समानम्।

कथमिदानीं सन्तानान्तरविशेषात् सन्तानान्तरे धर्मान्तरमविज्ञप्तिः सेत्स्यतीति निरौपधिकेष्विदानीं पुण्यक्रियावस्तुषु कथं भविष्यतीति? अभीक्ष्णं तदालम्बनचेतनाभ्यासात् स्वप्नेष्वपि ता अनुषङ्गिण्यो भवन्ति। अविज्ञप्तिवादिनस्तु निरौपधिके यत्र विज्ञप्तिर्नास्ति तत्र कथमविज्ञप्तिः स्यात्!

यच्च[1] औपधिकेष्वप्येवमभीक्ष्णम्[1], तदालम्बनचेतनाभ्यासादित्यपरे[2]।

यत्तर्हि सूत्रमुक्तम्[3]—"यस्योग्रभिक्षुः शीलवान् कल्याणधर्मा पिण्डकं परिभुज्याप्रमाणं चेतःसमाधिं कायेन साक्षात्कृत्वोपसम्पद्य विहरति, अप्रमाणस्तन्निदानदायकस्य दानपतेः पुण्याभिष्यन्दः कुशलाभिष्यन्दः सुखास्वादधारः प्रति-

---

*प्राप्नुवन्ति। कथं भविष्यतीति।* बहुतरफलाभिनिष्पत्तये कथं भविष्यतीत्यभिप्रायः। नह्यत्र दातॄणां दाया परिभुज्यन्ते, यत्परिभोगात् भोक्तॄणां गुणविशेषादनुग्रहविशेषाच्चान्यमनसामपि दातॄणानिति विस्तरेण यावत् समर्था भवन्ति यावदुपजायत एव पुण्यमिति वा।

*तदालम्बनचेतनाभ्यासादिति।* तथागततच्छ्रावकालम्बनचेतनाभ्यासात् सन्ततयः सूक्ष्मं परिणामविशेषं प्राप्नुवन्ति। येनायत्यां बहुतरफलाभिनिष्पत्तये समर्था भवन्ति। चरतस्तिष्ठतो जाग्रतो युक्तम्, एवं स्वपतस्तु कथम्? इत्यत आह—*स्वप्नेष्वपि ताश्चेतना अनुषङ्गिण्यो भवन्तीति। अविज्ञप्तिवादिनस्तु* वैभाषिकस्य *निरौपधिके* पुण्यक्रियावस्तुनि *यत्र विज्ञप्तिर्नास्ति*, केवलं तं श्रुत्वाधिगच्छति प्रीतिप्रामोद्यमुदारं कुशलम्, *तत्र कथमविज्ञप्तिः स्यात्;* तस्य श्रोतुर्विज्ञप्तिसमाध्योरसम्भवात्। अविज्ञप्तिर्हि विज्ञप्तेः समाधेर्वा सम्भवेत्।

*औपधिकेष्वपीति* विस्तरः। आरामदानादिष्वपि *तदालम्बनचेतनाभ्यासात्।* प्रतिग्राहक आलम्बनमस्याश्चेतनाया इति पूर्ववत्। आह—*यच्चौपधिकेष्वप्येवमभीक्ष्णं तदालम्बनचेतनाभ्यासात्।*

*यत्तर्हि सूत्रमिति* विस्तरः। *अप्रमाणं चेतःसमाधिमिति।* मैत्र्यादिसम्प्रयुक्तं

---

१-१. औपधिकेष्वप्यभी०—का०। २. तदालम्बने—का०।

३. सूत्रे उक्तम्—का०।

काङ्क्षितव्यः" इति, अत्र तदानीं दातुः कश्चेतनाविशेषः ? तस्मात् सन्तति-परिणामविशेष एव न्याय्यः ।

यदप्युक्तम्—"कारयतः कथं कर्मपथाः सेत्स्यन्ति" इति ? तत्राप्येवं वर्णयन्ति—तत्प्रयोगेण परेषामुपघातविशेषात् प्रयोक्तुः सूक्ष्मः सन्ततिपरिणामविशेषो जायते, यत आयत्यां समन्तेऽपि बहुतरफलाभिनिर्वर्त्तनसमर्थो भवतीति ।

स्वयमपि च कुर्वतः क्रियाफलपरिसमाप्तावेष एव न्यायो वेदितव्यः ।

सोऽसौ सन्ततिपरिणामविशेषः 'कर्मपथः' इत्याख्यायते; कार्ये कारणोपचारात् । कायिकवाचिकत्वं तु तस्य[1] तत्क्रियाफलत्वाद्, यथा अविज्ञप्तिवादिनामविज्ञप्तिरिति[2] ।

उपात्तेषु स्कन्धेषु त्रिकालया चेतनया प्राणातिपातावद्येन स्पृश्यते घातक[3] इति भदन्तः । 'हनिष्यामि', 'हन्मि', 'हतम्' इति चास्य यदा भवतीति ।

न त्रियता कर्मपथः परिसमाप्यते । मा भूदहतेऽपि मात्रादौ हताभिमानिना-

---

*चेतनाविशेष* इति । एतदालम्बनचेतनस्यापि दायकस्याप्रमाणः पुण्याभिष्यन्दोऽस्तीति दर्शयति ।

*क्रियाफलपरिसमाप्ताविति* । मौलकर्मपथप्रयोगः *क्रिया* । मौलकर्मपथफलं तस्य *परिसमाप्तौ* । *एष एव न्याय इति* । स्वयं प्रयोगेण परेषामुपघातविशेषात् कर्त्तुः सूक्ष्मः सन्ततिपरिणामविशेषो जायत इति सर्वम् ।

*कार्ये कारणोपचारादिति* । *सन्ततिपरिणामविशेषः कर्मपथो* भवतीति । सन्ततिपरिणामविशेषः *कार्यम्*, कर्मपथः *कारणम्* । योऽसौ कायवाचोः प्रयोगः, स हि चेतनालक्षणस्य कर्मणः पन्था इति । तस्मिन् कार्ये कर्मपथ इति कारणोपचारः । *कायिकवाचिकत्वं तु तस्य* सन्ततिपरिणामविशेषस्य *तत्क्रियाफलत्वात्* । कायवाक्क्रियायाः फलत्वादित्यर्थः । *यथा अविज्ञप्तिवादिनाम् अविज्ञप्तिरिति* । *यथा* वैभाषिकाणाम*विज्ञप्तिवादिनामविज्ञप्तिः* कर्मपथ इत्याख्यायते; कार्यकारणोपचारात् । कायिकवाचिकत्वं तु तत्क्रियाफलत्वादिति ।

अविज्ञप्तिरद्रव्यमिति प्रकारान्तरेण दर्शयन् *भदन्त आह—उपात्तेषु स्कन्धेष्विति* विस्तरः । सत्त्वसंख्यातेषु वर्तमानेषु स्कन्धेषु *त्रिकालया चेतनया प्राणातिपातावद्येन स्पृश्यते घातक इति* । कथं त्रिकालया ? इत्याह—*हनिष्यामि हन्मि हतमिति चास्य यदा भवतीति* । तदेवमत्र चेतनैव कर्मेत्युक्तं भवति । *आचार्यो भदन्तमतं* केनचिद् भागेनाभिप्रेतं केनचिद्भागेनानभिप्रेतं दर्शयन्नाह—*न त्रियतेति*

---

१. का० पुस्तके नास्ति । २. ०मविज्ञप्तेरिति—का० । ३. का० पुस्तके नास्ति ।

मानन्तर्यं कर्मेति, स्वयं तु घ्नत एतावांश्चेतनासमुदाचार इति—अयमत्राभिप्रायो युक्तरूपः स्यात् ।

क इदानीमेष प्रद्वेषो यदविज्ञप्तिः प्रक्षिप्यते, सन्ततिपरिणामविशेषश्चाभ्युपगम्यते तथैवासंज्ञायमानः[1] ?

न खलु कश्चित् प्रद्वेषः; किन्तु चित्तान्वयकायप्रयोगेण क्रियापरिसमाप्तौ ताभ्यां पृथग्भूतं धर्मान्तरं प्रयोजयितुरुत्पद्यत इति नोत्पद्यते परितोषः । यत्कृतप्रयोगसम्भूता तु क्रियापरिसमाप्तिस्तस्यैव तन्निमित्तः सन्ततिपरिणामो भवतीति भवति परितोषः; चित्तचैत्तसन्तानाच्चायत्यां फलोत्पत्तेः ।

उक्तं चात्र । किमुक्तम् ? "विज्ञप्त्यभावाद्" इत्येवमादि । तदभावाद-विज्ञप्तेरभावः ।

यदप्युक्तम्—"धर्मायतनस्यारूपित्वं यस्मान्नोक्तम्" इति ? तद्यदेवात्र रूप-

---

विस्तरः । यदि कश्चिदेवं प्रयोजयेत्—मन्मातरं मारयेति । उज्ज्वलिते च मारके तस्यैवं भवेद्—हता तेन मन्मातेति । तस्य *हताभिमानिन आनन्तर्यकर्म स्यात्* । न चेष्यते । तस्मात् स्वयं घ्नन्निति *भदन्तेन* विशेष्यं वक्तव्यम् । अत एवाह—*स्वयं तु घ्नत* इति विस्तरः । *एतावांश्चेतनासमुदाचार इति* । हनिष्यामि हन्मि हतमिति । *युक्तरूप* इति । युक्त एव युक्तरूप इति । स्वार्थे रूपप्रत्ययः, नामधेयवत् । यथा—नामैव नामधेयमित्येके व्याचक्षते । प्रशस्तरूपो युक्तरूपः । युक्तं वा रूपं स्वभावोऽस्येति युक्तरूपः ।

*तथैवासंज्ञायमान इति* । यथैवाविज्ञप्तिर्दुरवबोधा, तथैव सन्ततिपरिणाम-विशेषोऽपीति । *चित्तान्वयकायप्रयोगेणेति* । चित्तपूर्वकेण कायप्रयोगेणेत्यर्थः । *ताभ्यां पृथग्भूतमिति* । चित्तकायाभ्यां पृथग् भूतम् । *यत्कृतप्रयोगसम्भूतेति* । येन कृतो यत्कृतः, यत्कृतात् प्रयोगात् सम्भूता । *क्रियापरिसमाप्तिः* । कर्मपथ-परिसमाप्तिः । *तस्यैव* चित्तचैत्तस्य प्रयोक्तुस्त*न्निमित्त*स्तत्प्रयोगनिमित्तः *सन्तति-परिणामो भवतीति* । *भवति परितोषः* । अस्माकमिति वाक्यशेषः । *चित्तचैत्त-सन्तानाच्चायत्यां फलोत्पत्तेः* । नाविज्ञप्तेः । किम् ? भवति परितोष इति वर्तते ।

*विज्ञप्त्यभावादित्येवमादीति* । समुत्थापकस्य धर्मस्याभावात् समुत्थाप्यस्य धर्मस्याभाव इत्यर्थः । अविज्ञप्तिर्द्रव्यतो नास्तीति साधितमेतत् । आदि-शब्देन—अभ्युपेत्याकारणमात्रत्वादतीतानि महाभूतान्युपादाय प्रज्ञप्तेः; तेषामविद्यमान-

---

१. ०वाप्रज्ञायमानः—का० ।

अभि० को० २ : १४

मनिदर्शनमप्रतिघं चोक्तम्, तदेवास्तु धर्मायतनपर्यापन्नम् ।

यदप्युक्तम्—अष्टाङ्ग आर्यमार्गो न स्यादिति? अङ्ग[1] तावदाचक्ष्व—कथं मार्गसमापन्नस्य सम्यग्वाक्कर्मान्ताजीवा भवन्तीति। किमसौ वाचं भाषते, क्रियां वा करोति, चीवरादीन् वा पर्येषते? नेत्याह। किं तर्हि? तद्रूपामनास्रवाम-विज्ञप्तिं प्रतिलभते। यस्याः प्रतिलम्भाद् व्युत्थितोऽपि न पुनर्मिथ्यावागादिषु प्रवर्तते, सम्यग्वागादिषु च प्रवर्तते। अतो निमित्ते नैमित्तिकोपचारादविज्ञप्तौ तदा[2] व्याक्रियते[2]।

यद्येवम्, इहाप्येवं किं न गृह्यते—मार्गसमापन्नो विनाप्यविज्ञप्त्या तद्रूपमाशयं च आश्रयं च प्रतिलभते, यस्य प्रतिलम्भात् व्युत्थितोऽपि न पुनर्मिथ्यावागादिषु प्रवर्तते, सम्यग्वागादिषु च प्रवर्तते। अतो निमित्ते नैमित्तिकोपचारं कृत्वा अष्टौ मार्गाङ्गानि व्यवस्थाप्यन्त इति?

अपरस्त्वाह—तदक्रियामात्रमत्राङ्गमुक्तं स्यात्। यदसावार्यमार्गसामर्थ्याद-क्रियानियमं प्रतिलभते, तच्चानास्रवमार्गसन्निश्रयलाभादनास्रवं स्यात्।

न हि सर्वत्र द्रव्यमन्तो धर्माः परिसंख्यायन्ते। तद्यथा अष्टौ लोकधर्माः—

---

त्वादि। *तदेवास्तु धर्मायतनपर्यापन्नमिति*। यद्ध्यायिनां समाधिविषयो रूपं समाधिप्रभावादुत्पद्यत इत्युक्तं *तद्धयनिदर्शनं चाप्रतिघं च*।

*अङ्ग तावदाचक्ष्वेति*। अङ्गाप्रातिलोम्य इति पठ्यते। हन्त तावदाचक्ष्वेति। एहि तावदाचक्ष्वेत्यर्थं इत्यपरे। *अतो निमित्त* इति विस्तरः। यत एवम्, *अतो निमित्तेऽविज्ञप्तौ नैमित्तिकोपचारात्* सम्यग्वागाद्युपचारात् *अविज्ञप्तौ तदा व्याक्रियते*। सम्यग्वाक्कर्मान्ताजीवाख्या क्रियत इत्यर्थः।

*आशयं चाश्रयं चेति*। *आशयः* प्राणातिपाताद्यकरणाशयः, श्रद्धाद्याशयो वा। *आश्रय* आश्रयपरावृत्तिः। *अतो निमित्ते* आशये च *नैमित्तिकोपचारम्*। सम्यग्वागाद्युपचारं *कृत्वाष्टौ मार्गाङ्गानि व्यवस्थाप्यन्त इति*।

*तदक्रियामात्रमिति*। *मिथ्यावागाद्यक्रियामात्रम्*। कतमत्तद्? इत्याह—*यद-साविति* विस्तरः। यद्यक्रियामात्रमङ्गं कथं तदनास्रवम्? इत्याह—*तच्चानास्रव-मार्गसन्निश्रयालाभादनास्रवमिति*। यद्यक्रियामात्रमङ्गम्, तथाऽद्रव्यसत्।

कथमष्टावङ्गानि भवन्ति? इत्याह—*न हि सर्वत्रेति* विस्तरः। *विधिपूर्व*-

---

१. अङ्गं—का०। २–२. तदाख्याक्रियते—का०।

लाभः, अलाभः, यशः, अयशः, निन्दा, प्रशंसा, सुखम्, दुःखमिति। न चात्र चीवरादीनामलाभो नामास्ति द्रव्यान्तरम्। प्रातिमोक्षसंवरोऽपि स्यात्, यया चेतनया विधिपूर्वं कृत्वाऽभ्युपगमः प्रतिषिद्धात् कर्मणः कायवाचौ संवृणोति।

अन्यचित्तो न संवृतः स्यादिति चेत्? न; तद्भावनया क्रियाकाले स्मरतः तत्प्रत्युपस्थानात् सेतुभावोऽपि स्यादक्रियां प्रतिज्ञां संस्मृत्य लज्जितो दौःशील्याकरणात् इत्यर्थमेव[1] तस्याः समादानम्। यदि पुनरविज्ञप्तेरेव दौःशील्यं प्रतिबध्नीयात्, न कश्चित् मुषितस्मृतिः शिक्षां भिन्द्यात्।

अलं विस्तरेण, अस्त्येव द्रव्यान्तरमविज्ञप्तिरूपमिति **वैभाषिकाः**।

यद्यस्ति, तच्च महाभूतान्युपादायेत्युक्तम्, तत् किं विज्ञप्तिमहाभूतान्येवोपादायाविज्ञप्तिरुत्पद्यते? अथान्यानि? अन्यान्येव सा महाभूतान्युपादायोत्पद्यते।

न हि सैव सामग्री सूक्ष्मफला चौदारिकफला च युज्यते। किं खलु? यदातनी विज्ञप्तिस्तदातनान्येव सा महाभूतान्युपादाय वर्तते। सर्वमुपादायरूपं

---

मिति। शीलग्रहणविधिपूर्वम्। *अन्यचित्तो न संवृतः स्यादिति चेत्।* यदि सा चेतना संवरः, तस्माच्चेतनाचित्तादन्य*चित्तो न संवृतः स्यात्।* यया[2] चेतनया[2] कायवाचौ संवृणोति नासौ तदानीमस्तीति। *न तद्भावनयेति* विस्तरः। नैतदेवम्; *तद्भावनया* चित्तसन्तानभावनया *क्रियाकाले* प्राणातिपातादिचित्ते प्रत्युपस्थिते *स्मरतः* अहं प्राणातिपातादिभ्यः प्रतिविरत इति प्रत्युपस्थितस्मृतेः। *तत्प्रत्युपस्थानाद्* यया चेतनया कायवाचौ संवृणोति; तस्याः सम्मुखीभावात्। *इत्यर्थमेव तस्याः समादानमिति।* कथम्? अयमक्रियाप्रतिज्ञां संस्मृत्य दौःशील्यं कुर्यादिति। *न कश्चिन्मुषितस्मृतिः शिक्षां भिद्यादिति।* यासावविज्ञप्तिः सेतुभूता दौःशील्यं प्रतिबध्नाति सा तदानीं विद्यत इति।

*न हि सैव सामग्रीति* विस्तरः। *न सैव* पृथिवीधात्वादीनां महाभूतानां विज्ञप्त्याश्रयाणां *सामग्री सूक्ष्मफला* चानिदर्शनाप्रतिघा अविज्ञप्तिफलत्वात्, *औदारिकफला च* सनिदर्शनसप्रतिघविज्ञप्तिफलत्वाद् *युज्यते।* तस्मादन्यान्येव महाभूतानि उपादायाविज्ञप्तिरुत्पद्यते।

*यदातनी विज्ञप्तिरिति* विस्तरः। यदा भवा विज्ञप्तिः यदातनी विज्ञप्तिः। एवं तदातनानि महाभूतानि। यत्कालसम्भूता *विज्ञप्तिः किं* तत्कालसम्भूतान्येव *महाभूतान्युपादाय* विज्ञप्तिरुत्पद्यते। *सर्वमुपादाय रूपं* विज्ञप्तिरविज्ञप्तिर्ध्यानास्रव-

---

१. ०मेव च—का०। २-२. यथा चेतना या—मुद्रितः पाठः।

प्रायेणैवम्, किञ्चिद्[1] वर्तमानमनागतं चातीतानि महाभूतान्युपादाय ।

किं पुनस्तदिति ?

**क्षणादूर्ध्वमविज्ञप्तिः कामाप्तातीतभूतजा ॥ ४ ॥**

प्रथमात् क्षणादूर्ध्वमविज्ञप्तिः कामावचरी अतीतानि महाभूतान्युपादायोत्पद्यते । तान्यस्या आश्रयार्थेन सम्भवन्ति[2] । प्रत्युत्पन्नानि शरीरमहाभूतानि सन्निश्रयार्थेन; प्रवृत्त्यनुवृत्तिकारणत्वाद् यथाक्रमम् । चक्रस्येव भूमौ सपरिवर्तमानस्य पाण्यावेध-भूमिप्रदेशौ ॥ ४ ॥

अथ कुतस्त्यानि महाभूतान्युपादाय कुतस्त्यं कायवाक्कर्म ?

**स्वानि भूतान्युपादाय कायवाक्कर्म सास्रवम् ।**

कामावचरं **कायवाक्कर्म** कामावचराण्येव महाभूतान्युपादाय । एवं यावच्च चतुर्थध्यानभूमिकं तद्भूमिकान्येवोपादाय ।

---

संगृहीता चक्षुःश्रोत्ररूपशब्दादि चैवं समानकालान्येव *महाभूतान्युपादाय वर्तते* । *प्रायेणेति*ग्रहणं किञ्चित्कामावचर्यविज्ञप्तिनिरासार्थम् । अत एवाह—*किञ्चिद् वर्तमानमनागतमतीतानि महाभूतान्युपादायेति* । किञ्चिदुपादाय रूपं वर्तमानमतीतानि महाभूतान्युपादाय वर्तते, किञ्चिदनागतमुपादायरूपमतीतानि महाभूतान्युपादाय वर्तते ।

*किं पुनस्तदुपादायरूपं यदेवं भूतमिति* दर्शयन्नाह—

*"क्षणादूर्ध्वमविज्ञप्तिः कामाप्तातीतभूतजा"* इति । कामावचरसंवरादिग्रहणकालेऽविज्ञप्तिः सहजानि महाभूतान्युपादायोत्पद्यते । एवमन्याप्य*विज्ञप्तिस्तान्येवोपादायोत्पद्यते*; यस्मात् *तान्यस्या आश्रयार्थेन सम्भवन्ति* । यथान्येषामुपादायरूपाणां प्रत्युत्पन्नानि महाभूतान्याश्रयः, एवं *तस्यातीतान्याश्रयः* । *प्रवृत्त्यनुवृत्तिकारणत्वात् यथाक्रममिति* । अतीतानि महाभूतानि *प्रवृत्तिकारणत्वात्* आक्षेपकारणत्वात् आश्रयार्थेन भवन्ति । *प्रत्युत्पन्नानि शरीरमहाभूतान्यनुवृत्ति*कारणत्वादधिष्ठानकारणत्वात् *सन्निश्रयार्थेन* भवन्ति । *चक्रस्येवेति* विस्तरः । यथा *चक्रस्य पाण्यावेधः* । एवमस्याः प्रवृत्तिकारणम् । यथा *भूमिप्रदेशः* । एवमनुवृत्तिकारणम् ॥ ४ ॥

कालनियममुक्त्वा भूमिनियमं पृच्छति—*अथ कुतस्त्यानीति* विस्तरः । *यावच्च चतुर्थध्यानभूमिकमिति* । आरूप्येषु भूतभौतिकानामभावात् ।

---

१. किंचित्तु—का० । २. भवन्ति—का० ।

**अनास्रवं यत्र जातः,**

अनास्रवं तु कायवाक्कर्म यस्यां भूमौ जातस्तदुत्पादयति, तद्भूमिकान्युपादाय तद् वेदितव्यम्। धात्वपतितत्वाद्, अनास्रवाणां च महाभूतानामभावात्[1], तद्बलेन चोत्पत्तेः। तत्र विज्ञप्त्यविज्ञप्त्याख्यकर्मणी वेदितव्ये।

**अविज्ञप्तिरनुपात्तिका ॥ ५ ॥**

**नैःष्यन्दिकी च सत्त्वाख्या,**

किञ्च—

**निष्यन्दोपात्तभूतजा।**

नैःष्यन्दिकान्येव भूतान्युपादाय चित्तचैतानि चोपादायाविज्ञप्तिर्भवति। असमाहितभूमिकाया एष प्रकारः॥

**समाधिजौपचयिकानुपात्ताभिन्नभूतजा ॥ ६ ॥**

ध्यानानास्रवसंवरा विज्ञप्तिः समाधिजा। सा समाधिसम्भूतान्यौपचयि-

---

धात्वपतितत्वादिति। अनास्रवस्य कायवाक्कर्मणोः धात्वप्रतिसंयुक्तत्वात्। नास्ति नियमत इत्यभिप्रायः। अनास्रवाणि तर्हि महाभूतान्युपादाय कस्मान्न भवति? इत्यत आह—*अनास्रवाणाञ्च महाभूतानामभावादिति*। किं पुनरस्या महाभूतैः कार्यम्? इत्यत आह—*तद्बलेन चोत्पत्तेरिति*। महाभूतबलेन चोत्पत्तेरित्यर्थः। अथ चित्तबलेनैव तदुत्पत्तिः कस्मान्न भवति? अनुपादायरूपत्वप्रसङ्गात्।

"*अविज्ञप्तिरनुपात्तिका*"इति। अमूर्तत्वाच्चित्तचैत्ताधिष्ठानभावायोगाद् ॥५॥

"*नैष्यन्दिकी च*" इति। कुशलाकुशलत्वात्। न विपाकजा; "नाव्याकृतास्त्यविज्ञप्तिः" (अभि० ४.७) इति वचनात्। विपाकजस्य चाव्याकृतत्वात् "विपाकोऽव्याकृतो धर्मः" (अभि० को० २.५७) इति वचनात्। नौपचयिकी उपचयाभावात्। पारिशेष्यान्नैष्यन्दिकी।

"*सत्त्वाख्या*" सत्त्वसन्तानपतितत्वात्।

"*निष्यन्दोपात्तभूतजा*" इति। नैष्यन्दिकोपात्तमहाभूतजा; समुत्थापकचित्तापेक्षत्वात्, असमाहितचित्तविज्ञप्त्यधिकाराच्च। न स्वप्नसमाध्याद्यौपचयिकमहाभूतजा। अत एव च न विपाकजमहाभूतजा।

"*समाधिजा*" इति विस्तरः। सास्रवानास्रवमाधिजत्वात्। ध्यानानास्र-

---

१. भूतानाम०—का०।

कानि, अनुपात्तानि च महाभूतान्युपादायोत्पद्यते । अभिन्नानि च, यान्येव च भूतान्युपादाय प्राणातिपाताद् विरतिरुत्पद्यते तान्येव यावत् सम्भिन्नप्रलापात् । किं कारणम् ? चित्तवद् भूताभेदात् ।

प्रातिमोक्षसंवरे त्वन्यान्यानि महाभूतान्युपादाय सप्ताविज्ञप्तयो भवन्ति । विज्ञप्तिस्तु नैःष्यन्दिकी । उपात्ता तु कायिकी ।

किं पुनरियं विज्ञप्तिरुत्पद्यमाना पूर्वकस्य संस्थानस्य सन्तानं बाधित्वोत्पद्यते ? उताहो न ?

किञ्चातः यदि बाधित्वोत्पद्यते ? न; विपाकरूपस्योच्छिन्नस्य पुनः प्रबन्धादवैभाषिकीयं प्राप्नोति ।

अथाबाधित्वा ? कथमेकस्मिन् भूतसङ्घाते संस्थानद्वयं सिध्यति । अन्यान्येव तानि नैःष्यन्दिकानि तदानीमुपजायन्ते यान्युपादाय विज्ञप्तिर्भवति ?

---

वज्रसंवराविज्ञप्तिः समाधिजेत्युच्यते । *अनुपात्तानि च महाभूतान्युपादायेति* । समाहितचित्तवशेन तत्र शरीरे चित्तानुवृत्तित्वात् । उपात्तानि हि महाभूतानि निरोधसमापत्त्याद्यवस्थासु चित्तमन्तरेणापि वर्तन्ते । *यावत्सम्भिन्नप्रलापादिति* । यावच्छब्देन अदत्तादानात् काममिथ्याचारान्मृषावादात् पैशुन्यात् पारुष्यात् सम्भिन्नप्रलापादिति । *चित्तवद् भूताभेदात्* । यथा तदुत्पादकं चित्तमभिन्नम्, एवं भूतान्यपि तदुत्पादकान्यभिन्नान्येव । न चाधारार्थेनाविज्ञप्तेर्महाभूतान्याश्रयः, किं तर्हि ? तत्प्रवर्तनार्थेन । तस्माद*भिन्नभूतजेति* वचनं न विरुध्यते ।

*प्रातिमोक्षसंवरे त्वन्यान्यानीति* । अचित्तानुपरिवर्त्तनीयत्वात् । *विज्ञप्तिस्तु नैष्यन्दिकीति* । आक्षेपवशेनानुवृत्तेः । *उपात्ता तु कायिकीति* । न वाचिकीत्यर्थः । कायिकी हि कायमहाभूताविनिर्भागवर्तित्वात् तदाश्रयभूतानामुपात्ता । न तु वाचिकी; तद्विनिर्भागवर्तित्वात् ।

अत्र चोदयति—शास्त्रविरुद्धमेतद् । एवं ह्याह–"यानीमान्युपासकस्य पञ्च शिक्षापदानि, एषां कत्युपात्तानि ? कत्यनुपात्तानि ? आह—सर्वाण्यनुपात्तानि" इति ? अविज्ञप्तिलक्षणशिक्षापदभिसन्धिवचनाद् बाहुलिकत्वाद्वा तथानिर्देशस्येत्यदोषः ।

*पुनः प्रबन्धादवैभाषिकीयमिति* । एकसंस्थानोत्पत्तावितरसंस्थानानिवृत्तेः । *कथं* विस्तरेण यावत् *संस्थानद्वयं सिध्यतीति* । अन्योन्यावकाशदानात् ।

एवं तर्हि यद्यदेवाङ्गं निश्रित्योत्पद्यते विज्ञप्तिः, तेन तेनाङ्गेन महीयसा भवितव्यम्; तन्महाभूतैरभिव्यापनात्। अनभिव्यापने च पुनः कथं कृत्स्नेनाङ्गेन[1] विज्ञपयेत्। शुषिरत्वात् कायस्यास्ति तेषामवकाशः ॥ ६ ॥

तत् खल्वेतत् कर्म पर्यायेण द्विविधम्, त्रिविधम्, पञ्चविधं चोक्तम्। चेतना, चेतयित्वा चेति। चेतयित्वा पुनर्द्विधा—काय-वाक्कर्म, चेतना च। कायकर्म पुनः द्विविधम्—विज्ञप्त्याख्यम्, अविज्ञप्त्याख्यं च। एवं वाक्कर्म, चेतना चेति पञ्चविधं भवति। तत्र पुनरविज्ञप्तिर्द्विधा—कुशला, अकुशला च।

**नाव्याकृतास्त्यविज्ञप्तिः,**

किं कारणम्? अव्याकृतं हि चित्तं दुर्बलम्, अतो न शक्तं बलवत् कर्माक्षेप्तुम्, यन्निरुद्धेऽपि तस्मिन्ननुबध्नीयात्।

**त्रिधाऽन्यत्,**

अन्यत् कर्म त्रिविधम्—कुशलाकुशलाव्याकृतम्। किं तदन्यत्? विज्ञप्तिः, चेतना च।

**अशुभं पुनः।**

---

*तन्महाभूतैरभिव्यापनादिति*। विज्ञप्त्याश्रयैर्महाभूतैरङ्गस्याभिव्यापनात्। *अनभिव्यापने च पुन*र्विज्ञप्तिमहाभूतैः *कथं कृत्स्नेनाङ्गेन विज्ञापयेत्*। न हि शक्यते वक्तुम्—कायैकदेशेनासौ विज्ञापयति न सर्वकायेनेति। विज्ञप्त्याश्रयाणि महाभूतानि तदङ्गं न व्याप्यावतिष्ठन्त इति। *शुषिरत्वात् कायस्यास्ति तेषाम*वकाश इति। अभिव्यापनेऽपि न महीयसाङ्गेन भवितव्यम्; शुषिरत्वेन कायानुप्रवेशात्। पीनेन तर्हि गुरुणा वा तेनाङ्गेन न भवितव्यम्; सूक्ष्मत्वात् ॥ ६ ॥

*द्विविधं त्रिविधं पञ्चविधं चोक्तमिति*। "चेतना तत्कृतं च तत्" (अभि० को० ४.१) इति वचनाद् द्विविधमुक्तम्। "चेतना मानसं कर्म तज्जे वाक्कायकर्मणी" (अभि० को० ४.२) इति वचनात् त्रिविधमुक्तम्। "ते तु विज्ञप्त्यविज्ञप्ती" (अभि० को० ४.३) इति कायवाक्कर्मणोर्विज्ञप्त्यविज्ञप्तित्वे भेदात् चेतनात्मनः कर्मणश्च पञ्चसत्त्वात् पञ्चविधमुक्तम्।

*"नाव्याकृतास्त्यविज्ञप्तिः"* इति। कुशलाकुशलैवाविज्ञप्तिरित्यर्थादुक्तं भवति। *बलवत्कर्मेति*। अविज्ञप्तिलक्षणम्।

---

१. कृत्स्नाङ्गेन—का०।

**कामे,**

अकुशलं वस्तु कर्म कामधातौ वेदितव्यम्, नान्यत्र; अकुशलभूतानां प्रहीणत्वाद्, आह्रीक्यानपत्राप्ययोश्च। कुशलाव्याकृतं तु सर्वत्राप्रतिवेधात्। तत्र—

**रूपेऽप्यविज्ञप्तिः,**

कामेऽपीति; अपिशब्दात्। आरूप्येषु नास्ति; भूताभावात्। यत्र हि कायवाचोः प्रवृत्तिस्तत्र कायवाक्संवरौ।

इह तर्हि समापन्नस्य स्यादनास्रवाविज्ञप्तिवत्? न; तस्या धात्वपतितत्वात्।

आरूप्यावचरी त्वविज्ञप्तिर्नार्हति कामरूपावचराणि[1] विसभागानि महाभूतान्युपादाय[2] भवितुम्।

सर्वरूपवैमुख्याच्चारूप्यसमापत्तिर्नालं[3] रूपोत्पत्तये; विभूतरूपसंज्ञत्वात्।

दौःशील्यप्रतिपक्षेण शीलम्। तच्च दौःशील्यं कामावचरम्। आरूप्याश्च

---

*कामेऽपीति अपिशब्दादिति*। च-शब्दार्थेनापिशब्देन *काम* इत्याकृष्यते। *अनास्रवाविज्ञप्तिवदिति*। यथा न च तावदनास्रवाया अविज्ञप्तेरनास्रवाणि महाभूतानि; अथ च पुनर्यस्यां भूमौ जातस्तामुत्पादयति, तद्भूमिकानि महाभूतान्युपादायोत्पद्यते। एवं न च तावदारूप्याणि महाभूतानि स्युः।

अथ च पुनर्यस्यां भूमौ जातस्तामुत्पादयति, तद्भूमिकानि महाभूतान्युपादायारूप्यावचर्याविज्ञप्तिर्भविष्यतीति? *न; तस्या धात्वपतितत्वादिति*। नेह; असाम्यात्। यस्मादविज्ञप्तिरनास्रवा धात्वपतिता कामरूपारूप्यावचरीति तृष्णाभिरस्वीकृतत्वात् तस्या धातुतो भूमितो वा नैव सभागानि, नापि विसभागानि महाभूतानि भवन्तीति, अतो यत्र जातस्तत्रजानि महाभूतान्युपादायोत्पद्यते। *आरूप्यावचरी त्वज्ञप्तिर्नार्हति कामरूपावचराणि विसभागानि महाभूतान्युपादाय भवितुम्*। धातुपतितत्वादित्यभिप्रायः।

*किञ्च—सर्वरूपवैमुख्याच्चारूप्यसमापत्तिर्नालं रूपोत्पत्तये*। रूपभूमिका त्वनास्रवा समापत्तिरलं रूपोत्पत्तये, अविज्ञप्त्युत्पत्तये इत्यर्थः। कस्मात्? सर्वरूपवैमुख्यादित्यभिप्रायः। कथं चारूप्यसमापत्तेः सर्वरूपवैमुख्यमिति? अतो ब्रवीति—*विभूतरूपसंज्ञत्वादिति*। विगतरूपसंज्ञत्वादित्यर्थः।

*दौःशील्यप्रतिपक्षेण शीलमिति* विस्तरः। *दौःशील्यं कामावचरम्;* अकुशल-

---

१. का० पुस्तके नास्ति। २. भूतान्युपा०—का०।

३. ०समापत्तु०—का०।

कामधातोराश्रयाकारालम्बनप्रतिपक्षदूरताभिर्दूरे । अत एष्वविज्ञप्तिर्नास्तीति **वैभाषिकाः** ।

**विज्ञप्तिः सविचारयोः ।। ७ ।।**

**विज्ञप्तिस्तु सविचारयोरेव** भूम्योः । कामधातौ प्रथमे च ध्याने न तत ऊर्ध्वम् ॥ ७ ॥

**कामेऽपि निवृता नास्ति,**

**निवृता** तु विज्ञप्तिः **कामधातावपि नास्ति** । ब्रह्मलोक एवास्ति। **महाब्रह्मणो** हि शाठ्यसमुत्थितं कायकर्म श्रूयते । स हि स्वपर्षन्मध्ये आयुष्मतोऽश्वजितः क्षेपार्थमात्मानं क्षिप्तवान् ।

तत ऊर्ध्वमसत्यां वाग्विज्ञप्तौ कथं तत्र शब्दायतनं बाह्यमहाभूतहेतुकम् ।

---

समुत्थानत्वात् । तस्य रूपभूमिकं शीलमविज्ञप्तिलक्षणं प्रतिपक्ष इति युज्यते । आरूप्यावचरमप्येवं भविष्यतीति चेद् ? अत आह—*आरूप्याश्च कामधातोरिति* विस्तरः । *आरूप्याः कामधातोश्चतसृभिर्दूरताभिर्दूरे ।* दूरत्वाच्चारूप्यसंगृहीतं शीलं कामधातुप्रतिपक्षे न कल्पते । चतसृश्च दूरता व्याख्याताः पुरस्तादिति[1] न पुनर्व्याख्यायन्ते । *प्रतिपक्षदूरता* चात्रोदाहरणम् ।

*"विज्ञप्तिः सविचारयोः" इति । सविचारयोरेव भूम्योरिति* । अवधारणार्थं आरम्भः । "वितर्क्य विचार्य वाचं भाषते" इति वितर्कविचारपूर्वकत्वात् कायवाक्कर्मणोः ॥ ७ ॥

*"कामेऽपि निवृता नास्ति" इति* । न केवलमविचारासु भूमिष्विति दर्शयति । *ब्रह्मलोक एवास्तीत्युक्तं* भवति ।

*तत ऊर्ध्वमिति* । ब्रह्मलोकादूर्ध्वम् । *बाह्यमहाभूतहेतुकमिति* । वायुप्रभृतीनां *शब्दायतनम्* । विज्ञप्तिशब्दप्रतिषेधपरमेतद्वचनम् । न तु बाह्यमहाभूतहेतुकमिति । पाण्याद्यङ्गशब्दोऽपि हि द्वितीयादिषु ध्यानेषु सम्भवति । अन्यथा हि शास्त्रविरोधः स्यात् । तथा हि शास्त्र उक्तम्—"शब्दधातुना कः समन्वागतः ? आह—कामरूपावचरः । कोऽसमान्वागतः ? आह—आरूप्यावचरः" ( ) इति । न हि बाह्येन सत्त्वसंख्यातेन समन्वागतो युज्यते; "प्राप्त्यप्राप्तिस्वसन्तानपतितानाम्" ( अभि० को० २.३६ ) इति वचनात् ।

---

१. द्र०—अभि० को० स्फु० २.६७; पृ० ३५८ ।

अन्ये पुनराहुः—द्वितीयादिष्वपि ध्यानेषु विज्ञप्तिरस्त्यनिवृताव्याकृता। न तु[1] कुशला, न क्लिष्टा। किं कारणम्? न हि तेषूपपन्नस्तथाजातीयमधोभूमिकं[2] चित्तं सम्मुखीकरोति, येन तां विज्ञप्तिं समुत्थापयेत्; न्यूनत्वात्, प्रहीणत्वाच्च।

पूर्वमेव तु वर्णयन्ति।

किं पुनः कारणमूर्ध्वं ब्रह्मलोकान्नास्ति विज्ञप्तिः, कामधातौ च निवृताव्याकृता नास्ति?

**समुत्थानमसद्यतः।**

सवितर्कविचारेण हि चित्तेन विज्ञप्तिः समुत्थाप्यते। तच्च द्वितीयादिषु ध्यानेषु नास्ति, भावनाप्रहातव्येन चोत्थाप्यते; दर्शनप्रहातव्यस्यान्तर्मुखप्रवृत्तत्वात्।

---

अस्यैव च दोषपरिहारार्थम*न्ये पुनराहुरिति*। *द्वितीयादिष्वपि ध्यानेषु विज्ञप्तिरस्तीति*। किम्भूमिका? प्रथमध्यानभूमिका। *वैभाषिक*पक्ष एवायम्, न पक्षान्तरम्;

"कायाक्षिश्रोत्रविज्ञानं विज्ञप्त्युत्थापकं च यत्।
द्वितीयादौ तदा व्याप्तमक्लिष्टाव्याकृतं च तत्" ॥

इति सिद्धान्तात्। एवं तर्हि द्वितीयादिध्यानभूमिका भवति पक्षान्तरम्। सा तु किं व्याकृता, उताव्याकृता? इत्याह—*अनिवृताव्याकृता*। *न तु कुशला न क्लिष्टेति*। परस्परसम्भाषणादि कुर्वतां ततस्त्यानामव्याकृता विज्ञप्तिर्भवति। *किं कारणं* न कुशला न क्लिष्टाऽस्ति? इत्याह—*न हि तेषूपपन्न* इति विस्तरः। न हि द्वितीयादिषु ध्यानेषूपपन्नः *तथाजातीयं* कुशलक्लिष्टजातीयम*धोभूमिकं चित्तं सम्मुखीकरोति*। *येन* चित्तेन कुशलां क्लिष्टां वा *विज्ञप्तिं समुत्थापयेत्*। किं कारणम्? इति आह—*न्यूनत्वात् प्रहीणत्वाच्चेति*। कुशलमधोभूमिकं न्यूनत्वात् न सम्मुखीकरोति। प्रहीणत्वाच्चेति न क्लिष्टम्। अर्थादेतदुक्तं भवति—अव्याकृतमधोभूमिकं चित्तं सम्मुखीकरोति, तेन तां समुत्थापयतीति। एतदुक्तं भवति—अधोभूमिकेन चित्तेनोर्ध्वभूमिका विज्ञप्तिरुत्थाप्यत इति। तदेवं नेच्छन्ति *वैभाषिका*ः। प्रथध्यानिकैव हि सा विज्ञप्तिः; प्रथमध्यानभूमिकचित्तसमुत्थापितत्वात्। तस्मादाह—*पूर्वमेव तु वर्णयन्तीति*।

*तच्च कामाधाताविति*। *तच्च* भावनाप्रहातव्यं *निवृताव्याकृतं* चित्तं *कामधातौ नास्ति*। सत्कायान्तर्ग्राहदृष्टिसम्प्रयुक्तमेव हि कामधातौ निवृताव्याकृतं चित्तमिष्यते। तेन च न विज्ञप्तिः समुत्थाप्यते। *अन्तर्मुखप्रवृत्तत्वात्*।

---

१. का० पुस्तके नास्ति। २. ०न्नस्तज्जातीय०—का०।

तच्च कामधातौ निवृताव्याकृतं नास्ति ।

किं खलु समुत्थानवशादेव धर्माणां कुशलाकुशलत्वं वेदितव्यम् ? नेत्याह । किं तर्हि ? चतुर्भिः प्रकारैः—परमार्थतः, स्वभावतः, सम्प्रयोगतः, समुत्थानतश्च ।

तत्र तावत्—

**परमार्थशुभो मोक्षः,**

निर्वाणं हि सर्वदुःखव्युपशमः । ततः परमक्षेमत्वात् परमार्थेन कुशलम्, आरोग्यवत् ।

**स्वतो मूलह्र्यपत्रपाः ॥ ८ ॥**

त्रीणि कुशलमूलानि ह्रीश्चापत्राप्यं च स्वभावेन कुशलानि; अन्यसम्प्रयोगसमुत्थनानपेक्षत्वात्, पथ्यौषधवत् ॥ ८ ॥

**सम्प्रयोगेण तद्युक्ताः,**

तैरेव कुशलमूलह्र्यपत्राप्यैः सम्प्रयुक्ता धर्माः सम्प्रयोगेण कुशलाः; तैरसम्प्रयुक्तानां कुशलत्वाभावाद्, औषधमिश्रपानीयवत् ।

**समुत्थानात् क्रियादयः ।**

कायवाक्कर्मणी चित्तविप्रयुक्ताश्च संस्कारजात्यादयः प्राप्तिनिरोधासंज्ञिसमापत्तयस्तैरेव कुशलमूलादिसम्प्रयुक्तैर्धर्मैः समुपस्थापिताः समुत्थानेन कुशलाः, औषधिपानीयसम्भूतक्षीरवत्[1] ।

प्राप्तीनां तु विसभागचित्तसमुत्थापितानां कथं कुशलत्वमिति वक्तव्यम् ।

---

*स्वभावत* इति । आत्मतः । *परमक्षेमत्वादिति* । अक्षेमलेशानुबन्धाभावात् । यद्धि स्वभावसम्प्रयोगसमुत्थानतः कुशलम्, न तत् परमक्षेममित्युक्तं भवति ॥८॥

*असम्प्रयुक्तानां कुशलत्वाभावादिति* । कुशलमूलादिभिरसम्प्रयुक्तानां चैत्तादीनां कुशलत्वाभावात् तत्सम्प्रयोगकुशलत्वसिद्धिः ।

*तैरेव कुशलमूलादिसम्प्रयुक्तैरिति* । आदिशब्देन ह्र्यपत्राप्ययोर्ग्रहणम् । *औषधिपानीयसम्भूतक्षीरवदिति* । पीतौषधपानीयाया गोर्यत् क्षीरं तदौषधपानीयसंभूतम् ।

*प्राप्तीनां त्विति* विस्तरः । *प्राप्तीनां* कुशलानां *विसभागचित्तसमुत्थापितानाम्* । विसभागं चित्तं कुशलादन्यत् । विचिकित्सया कुशलमूलप्रतिसन्धाने याः

---

१. औषधपानीयसम्भूतधात्रीक्षीरवत्—का० ।

तद्यथा—विचिकित्सया कुशलमूलप्रतिसन्धानम्, धातुप्रत्यागमपरिहाणिभ्यां च।

यथा च कुशलमुक्तम्, ततो

**विपर्ययेणाकुशलम्,**

कथं कृत्वा ? संसारः परमार्थेनाकुशलः; सर्वदुःखप्रवृत्त्यात्मकत्वेन परमाक्षेमत्वात्। अकुशलमूलाह्रीक्यानपत्राप्याणि स्वभावतः। तत्सम्प्रयुक्ता धर्माः सम्प्रयोगतः। तत्समुत्थापिताः कायवाक्कर्मजात्यादिप्राप्तयः समुत्थानतः व्याध्यपथ्यौषधादिभिरुपमेयाः।

एवं तर्हि न किञ्चित् सास्रवमव्याकृतं भविष्यति, कुशलं वा; संसाराभ्यन्तरत्वात् ? परमार्थत एवमुक्तम्, विपाकं तु प्रति यत् सास्रवं न व्याक्रियते तदव्याकृतमित्युच्यते।

---

कुशलानां प्राप्तयः, तासां कुशलत्वम्। न तावत् परिनिर्वाणवत्; परमार्थाक्षेमत्वात्। नाप्यलोभादिवत् स्वभावतः कुशलम्; अतत्स्वभावत्वात्। नापि वेदनादिवत्; संप्रयोगतो [illegible]। नापि समुत्थानतः; तत्समुत्थानचित्तस्य क्लिष्टत्वात्। एवं पुनर्भवप्रतिसन्धावपि उपपत्तिप्रतिलम्भिककुशलप्राप्तयो वक्तव्याः। कथं तासां *कुशलत्वमिति* वक्तव्यमेतत्। कर्तव्योऽत्र यत्न इत्यभिप्रायः। अत्र परिहरन्ति—कुशलमूलसमुत्थापनीयत्वादनागतावस्थायामेव ताः कुशलमूला भवन्ति। क्लिष्टेन चित्तेन तत्प्राप्तिविबन्धोऽपनीयते। न तत् कुशलत्वमापद्यत इति।

*सर्वदुःखप्रवृत्त्यात्मकत्वेनेति*। सर्वस्य दुःखस्य प्रवृत्तिरात्मा स्वभावोऽस्येति सर्वदुःखप्रवृत्त्यात्मकः, तद्भावेन। *परमार्थेनाक्षेमः संसारः*। *कायवाक्कर्मजात्यादिप्राप्तय इति*। कायवाक्कर्माणि विज्ञप्त्यविज्ञप्तिस्वभावान्यसंवर-नैवसंवरनासंवर-संगृहीतानि। *जात्यादयो* [illegible]। प्राप्तयोऽकुशलानाम्। *व्याध्यपथ्यौषधादिभिरुपमेया* इति। संसारो व्याधिनोपमेयः। व्याधिसंसार इत्यर्थः। लोभादीन्यपथ्यौषधेनोपमेयानि; अन्यसम्प्रयोग समुत्थानापेक्षत्वात्। तत्सम्प्रयुक्ता अपथ्यौषधिमिश्रपानीयेन। कायवाक्कर्मजात्यादिप्राप्तयोऽपथ्यौषधपानीयसम्भूतक्षीरेणोपमेयाः।

*एवं तर्हीति* विस्तरः। यदि परमार्थेनाकुशलः संसारः। न *किञ्चित् सास्रवमव्याकृतं भविष्यति*, कुशलं वा; *संसाराभ्यन्तरत्वात्* सास्रवस्य। *परमार्थत एवमुक्तमिति*। अभ्युपगतमेतत्—सर्वं संसारपर्यापन्नमकुशलमिति। *विपाकं तु प्रतीति* विस्तरः। *यद्विपाकं प्रति न व्याक्रियते*। सविपाकमेतदिति। *तदव्याकृत-*

इष्टविपाकत्वात्[1] कुशलमित्युच्यते ।

यदि तु परमार्थेनाव्याकृतं मृग्यते, तत्—

**परमाव्याकृते ध्रुवे ॥ ९ ॥**

द्वे असंस्कृते निष्पर्यायेणानिवृताव्याकृते—आकाशम्, अप्रतिसंख्यानिरोधश्च ।

इदं विचार्यते—यदि समुत्थानवशात् कुशलाकुशलत्वं कायवाक्कर्मणः, किं । महाभूतानाम् ? कर्मणि हि कर्तुरभिप्रायः, न महाभूतेषु ।

समाहितस्याविज्ञप्तौ नास्त्यभिप्रायः । न चासमाहितं चित्तं तस्याः समुत्थापकं विसभागभूमिकत्वादिति कथं तस्याः कुशलत्वम् ?

दिव्ययोरपि वा चक्षुःश्रोत्रयोः कुशलत्वप्रसङ्गः ? कर्तव्योऽत्र यत्नः ।

---

*मित्युच्यते* । तदुक्तं भवति—यत् सास्रवं तदकुशलम्; परमाक्षेमत्वात् । विपाकं प्रत्यव्याकरणार्थादव्याकृतमिति । कुशलमपि । तथैवाकुशलम् । *इष्टविपाकत्वात् कुशलमित्यवगन्तव्यम्* ।

*यदि समुत्थानवशादिति विस्तरः* । चेतनाया एव कुशलाकुशलत्वमित्यनेनाभिप्रायेण । *कायवाक्कर्मणः कुशलाकुशलत्वं* विचारयति । *किं न महाभूतानामिति* । कुशलाकुशलत्वम् । कुशलाकुशलेन हि चित्तेन कायवाक्कर्म-तन्महाभूतानि समुत्थाप्यते । *वैभाषिक* आह—*कर्मणि हि कर्तुरभिप्रायो न महाभूतेषु* । न 'महाभूतानि कुर्याम्' इति । किं तर्हि ? 'इदं कर्म कुर्याम्' इति । न कर्मवन्महाभूतानां कुशलाकुशलत्वमिति ।

आचार्य आह—*समाहितस्य* कर्तुर*विज्ञप्तौ नास्त्यभिप्रायः* । अविज्ञप्तिं कुर्यामिति । *न चासमाहितं चित्तं तस्याः समुत्थापकमस्ति* । यदेवमभिप्रायं कुर्यात् । *विसभागत्वाद्* विसदृशत्वाद् *भूमितो*ऽसमाधानाद्वा । *कथं तस्याः* समाहितायाः अविज्ञप्तेः *कुशलत्वम्* । महाभूतवत् तस्याः कुशलत्वं न स्यादित्यभिप्रायः ।

*दिव्ययोरपि वा चक्षुःश्रोत्रयोः कुशलत्वप्रसङ्ग इति* । यद्यन्तरेणापि तदभिप्रायमविज्ञप्तेः कुशलमिति । अथ वा अयमस्याभिसम्बन्धः—यदि विसभागासमाहितचित्तवशेन तस्याः कुशलत्वम्, दिव्ययोरपि चक्षुःश्रोत्रयोः कुशलत्वप्रसङ्गः, प्रयोगकाले तदभिप्रायसम्भवात् । न च तयोः कुशलमस्ति, "अव्याकृते श्रोत्रचक्षुरभिज्ञे" ( अभि० ७.४५ ) इति वचनात् ।

---

१. ०विपाकं च—का० ।

यदुक्तम्—"दर्शनप्रहातव्यं चित्तं विज्ञप्तेरसमुत्थापकम्" इति। किं तर्हि भगवतोक्तम्—"ततोऽपि मिथ्यादृष्टेर्मिथ्यासङ्कल्पः प्रभवति मिथ्यावाग् मिथ्याकर्मान्तः[1]" इत्येवमादि। अविरुद्धमेतत् ॥ ९ ॥

**समुत्थानं द्विधा हेतुतत्क्षणोत्थानसंज्ञितम्।**

द्विविधं समुत्थानम्—हेतुसमुत्थानम्, तत्क्षणसमुत्थानं च। तत्रैव क्षणे समुद्भावात्[2]।

**प्रवर्तकं तयोराद्यं द्वितीयमनुवर्तकम् ॥ १० ॥**

हेतुसमुत्थानं **प्रवर्तकम्**; आक्षेपकत्वात्। तत्क्षणसमुत्थानम**नुवर्तकम्**; क्रियाकालानुवर्तनात्।

किमिदानीं तस्य तस्यां क्रियायां सामर्थ्यम्? तेन हि विनासौ मृतस्येव न स्यादाक्षिप्तापि सती।

---

*यदुक्तं दर्शनप्रहातव्यं चित्तं विज्ञप्तेरसमुत्थापकमिति*। दर्शनप्रहातव्यस्यान्तर्मुखप्रवृत्तत्वादित्येवं ब्रुवतां *किं तर्हि भगवतोक्तमिति* विरुध्यते। तद् भगवतोक्तमिति वाक्यार्थः। किं तद्? इत्युच्यते—*ततो मिथ्यादृष्टेरिति* विस्तरः। *कथं मिथ्यादृष्टेर्दर्शनप्रहातव्यायाः मिथ्यावाक्* विज्ञप्तिस्वभावा, *मिथ्याकर्मान्तश्च* तत्स्वभाव एवेत्युक्तमिति ॥ ९ ॥

"इति। हेतूत्थानं च तत्क्षणोत्थानं च हेतुतत्क्षणोत्थानम्, हेतुतत्क्षणोत्थानमिति संज्ञितं हेतुतत्क्षणोत्थानसंज्ञितम्। संज्ञितमिति संज्ञीकृतम्। अथवा—हेतुतत्क्षणोत्थानं संज्ञास्येति हेतुतत्क्षणोत्थानसंज्ञम्, हेतुतत्क्षणोत्थानसंज्ञीकृतं हेतुतत्क्षणोत्थानसंज्ञितम्।

*हेतुसमुत्थानमिति*। समुत्तिष्ठतेऽनेनेति समुत्थानम्, हेतुश्च समुत्थानञ्च तत् हेतुसमुत्थानम्। *तत्क्षणसमुत्थानमिति*। स क्षणः क्रियाक्षणः, तत्क्षणे समुत्थानं तत्क्षणसमुत्थानम्। *तत्रैव क्षणे समुद्भावात्*। सद्भावात्। तत्रैव क्रियाक्षणे तत्क्षणसमुत्थानस्य भावादित्यर्थः। *आक्षेपकत्वादिति*। उत्पादकत्वात्।

*किमिदानीमिति* विस्तरः। *तस्य* तत्क्षणसमुत्थानस्य *तस्यां* विज्ञपनक्रियायां *सामर्थ्यम्*। येन तदानीं तदनुवर्तकमित्युच्यते। *तेन हीति* विस्तरः। *तेन हि* तत्क्षणसमुत्थानेन *विना असौ* विज्ञप्ति*र्मृतस्येव न स्यादाक्षिप्ता सती*। हेतुसमुत्थानेन जनितापि सती। तद्यथा—कश्चिद् 'ग्रामं गमिष्यामि' इत्याक्षिप्तक्रियान्तरा म्रियेत, तस्यानुवर्तकचित्ताभावाद् गमनं न भवति, तद्वत्।

---

१. मिथ्याकर्मान्तम्—का०। २. तद्भावात्—का०।

अचित्तकस्य तर्हि संवरोत्पत्तौ कथं भवति ? स्फुटतरा तर्हि सचित्तकस्य भवतीति, एतत् तस्य[1] सामर्थ्यम् ॥ १० ॥

तत्र च—

**प्रवर्तकं दृष्टिहेयं विज्ञानम्,**

दर्शनप्रहातव्यं चित्तं विज्ञप्तेः **प्रवर्तकम्**; तत्समुत्थापकयोर्वितर्कविचारयोर्निदानभूतत्वात् । न त्वनुवर्तकम्; बहिर्मुखचित्तस्य क्रियाकाले तदभावात् । तत्समुत्थापितं च रूपं दर्शनप्रहातव्यं स्यात् ।

किं स्यात् ? अभिधर्मो बाधितः स्यात् ।

विद्याविद्याभ्यां चाविरोधान्नास्ति रूपं दर्शनप्रहातव्यम् ।

---

*अचित्तकस्य तर्ही*ति विस्तरः । यदि तत्क्षणसमुत्थानेन विनाऽसौ मृतस्येव न स्यात् । निरोधसमापत्तिलाभिनः कस्यचिदुपसम्पाद्यमानस्य कायविज्ञप्तिमाबध्नतः तत्कालोपस्थितनिरोधसमापत्तित्वादचित्तकस्य *संवरोत्पत्तौ* कर्मवासनावसानकालीनायां तत्संवरान्तर्गता कायविज्ञप्तिः *कथं भवति* । कथमुत्पद्यते तत्क्षणसमुत्थानं विनेत्यर्थः । एवं विरोधिते समाध्यन्तरं श्रीयते—*स्फुटतरा तर्ही*ति । तत्क्षणसमुत्थानेन *सचित्तकस्य* व्यक्ततरा विज्ञप्तिर्भवतीत्येतत् *तस्य सामर्थ्यम्* ॥ १० ॥

*प्रवर्तकं दृष्टिहेयमिति* । प्रवर्तकमेव दृष्टिहेयमित्यवधार्यते । कथं पुनस्तत् प्रवर्तकम् ? इत्याह—*तत्समुत्थापकयोर्वितर्कविचारयोर्निदानभूतत्वात्* । हेतुभूतत्वाद् विज्ञप्तेः प्रवर्तकमिति । *न त्वनुवर्तकमिति* विस्तर. । यत्तद् *बहिर्मुखं चित्तमनुवर्तकम्*, तस्य यो विज्ञप्ति*क्रियाकालः*, तस्मिन् *तदभावात्* । तस्य दर्शनप्रहातव्यस्य प्रवर्तकस्याभावादित्यर्थः । अतस्तन्नानुवर्तकम् । अयं चान्यो दोषः—*तत्समुत्थापितं च रूपमिति* विस्तरः । यदि *तदनुवर्तकं* स्याद्दर्शनप्रहातव्यम्, तेन दर्शनप्रहातव्येन *समुत्थापितं* कायवाग्विज्ञप्तिरूपं *दर्शनप्रहातव्यं स्यात्* । यथा भावनाप्रहातव्येन चित्तेन समुत्थापितं कायवाक्कर्म भावनाप्रहातव्यमिति ।

*किं स्यादिति* चोदकः । *अभिधर्मो बाधितः स्यादिति* वैभाषिकः । "न दृष्टिहेयमक्लिष्टं न रूपम्" ( अभि. को. १ ४० ) इति वचनात् ।

किञ्च—*विद्याविद्याभ्यां* चा*विरोधात्* । विद्यया दर्शनमार्गेण सत्कायदृष्ट्यादिवत् तस्य रूपस्या*विरोधात्* । अप्रहाणादित्यर्थः । दृष्टसत्यानामपि तत्समन्वागतत्वा*न्नास्ति रूपं दर्शनप्रहातव्यम्* । *अविद्यया चाविरोधात्* । किञ्च अविद्ययापि

---

१. का० पुस्तके नास्ति ।

साध्य एष पक्षः ।

भूतान्यपि तर्हि दर्शनप्रहातव्यानि स्युः; समानचित्तोत्थापितत्वात् ?

नैवं भविष्यति, यथा न कुशलाकुशलानि भवन्ति । अथ वा पुनर्भवन्तु ।

नैवं शक्यम् । न हि तानि दर्शनप्रहातव्यानि युज्यन्ते, नाप्यप्रहातव्यानि ।

किं कारणम् ? अक्लिष्टस्य धर्मस्य विद्याविद्याभ्यामविरोधात् ।

---

रूपं न विरुध्यते । न हि क्लिष्टाक्लिष्टरूपसमुदाचारावस्थायां तत्प्राप्तिप्रवाहे वा सत्यविद्या न भवति । अविद्यायां च सत्यां तन्न भवति । यथा अनास्रवो मार्गोऽविद्यया विरुध्यते; पृथग्जनावस्थायां तदनुत्पादात् । तदुत्पादे वार्यावस्थायां कस्याश्चिदविद्यायाः प्रहाणात् । तदेवमनास्रववदप्रहातव्यमपि न भवति । न चेदप्रहातव्यम्, नापि दर्शनप्रहातव्यम्, पारिशेष्याद् भावनाप्रहातव्यमिति सिद्धम् ।

इतर आह—*साध्य एष पक्षः*—विद्यया रूपं न विरुध्यत इति । यो हि दर्शनप्रहातव्यं रूपमिच्छति स कथं विद्यया रूपस्याविरोधं ग्रहीष्यति !

*वैभाषिक* आह—*भूतान्यपीति* विस्तरः । यदि तद्रूपं दर्शनप्रहातव्यचित्तसमुत्थापितं दर्शनप्रहातव्यं स्यात् । तदाश्रयभूतान्यपि *तर्हि दर्शनप्रहातव्यानि स्युः* । कस्मात् ? *समानचित्तोत्थापितत्वात्* । येन हि दर्शनप्रहातव्येन चित्तेन तद्रूपं समुत्थापितम्, तेनैव तदाश्रयभूतान्यपि इति । न च तानि तथा भवितुमर्हन्ति; अक्लिष्टाव्याकृतत्वात् । दर्शनप्रहातव्यानां च क्लिष्टत्वात् ।

इतर आह—*नैवं भविष्यति* । दर्शनप्रहातव्यानि स्युरिति । कथम् ? इत्याह—*यथा न कुशलाकुशलानि भवन्ति* । यथा येन चित्तेन कुशलाकुशलेन कुशलाकुशलं रूपं समुत्थापितं तेनैव तदाश्रयभूतानि समुत्थापितानि । तच्च कायवाक्कर्मस्वभावं रूपं कुशलाकुशलम्, न तदाश्रयभूतानीति, तद्वत् । स एव पुनः परावृत्याह—*अथवा पुनर्भवन्तु* दर्शनप्रहातव्यानीति ।

वैभाषिक आह—*नैवं शक्यं भवितुम्* । दर्शनप्रहातव्यानीति वाक्यशेषः । कस्मात् ? *अक्लिष्टस्य धर्मस्य विद्याविद्याभ्यामविरोधात्* । न ह्यक्लिष्टो धर्मः अनिवृताव्याकृतः कुशलसास्रवश्च विद्ययाऽनास्रवेण मार्गेण विरुध्यते । यथा क्लिष्टा धर्माः प्राप्तिच्छेदाद् विरुध्यन्ते । तदालम्बनक्लेशप्राप्तिच्छेदात्तु विरोधो न प्रतिषिध्यते । नाप्यविद्यया विरुध्यते । प्राप्तिच्छेदेन तदालम्बनक्लेशप्रहातव्येन च । भूतानि चाक्लिष्टानि । तत्र यदुक्तम्—'अथवा पुनर्भवन्तु' इति, तदयुक्तम् । तदेवमत्र साधनमुत्तिष्ठते—"न दर्शनप्रहातव्यानि क्लिष्टरूपाश्रयमहाभूतानि; अक्लिष्टत्वादक्लिष्टचित्तचैत्तधर्मवत्" इति ।

अतो हेतुसमुत्थानमधिकृत्य सूत्रे पठनान्नास्ति विरोधः ।

**उभयं पुनः ।**

**मानसं भावनाहेयम्,**

**भावनाहेयं** पुनर्मनोविज्ञानमुभयं भवति—प्रवर्तकं च, अनुवर्तकं च ।

**पञ्चकं त्वनुवर्तकम् ॥ ११ ॥**

पञ्च विज्ञानकाया अनुवर्तका एव । तदिदं चतुष्कोटिकं भवति—प्रवर्तकमेव दर्शनप्रहातव्यं चित्तम्, अनुवर्तका एव पञ्च विज्ञानकायाः, उभयं भावनाहेयं मनोविज्ञानम्, नोभयमनास्रवम् ॥ ११ ॥

किं खलु यथा प्रवर्तकं तथैवानुवर्तकं भवति ? नेदमेकान्तम्[1] ।

**प्रवर्तके शुभादौ हि स्यात् त्रिधाप्यनुवर्तकम् ।**

कुशले प्रवर्तके कुशलाकुशलाव्याकृतमनुवर्तकं स्यात् । एवमकुशले च, अव्याकृते च ।

**तुल्यं मुनेः,**

बुद्धस्य तु भगवतस्तुल्यं प्रवर्तकेनानुवर्तकम्—कुशले कुशलम्, अव्याकृते चाव्याकृतम् ।

**शुभं यावत्,**

कुशलं वा भवत्यनुवर्तकमव्याकृतेऽपि प्रवर्तके । न तु कदाचित् कुशलं प्रवर्तकमनुवर्तकं चाव्याकृतं भवति । अम्लायमाना[2] हि बुद्धानां देशनेति ।

---

तदेवं *वैभाषिकः प्रवर्तकं दृष्टिहेयं विज्ञानमिति* सचोद्यपरिहारं प्रतिष्ठाप्य निगमयति—*अतो हेतुत्थानमिति* विस्तरः । *यदुक्तम्*—'मिथ्यादृष्टेर्मिथ्यासंकल्पो यावन्मिथ्याकर्मान्तः' इति, तस्य सूत्रस्य न विरोधो भवतीति ।

*प्रवर्तकं चानुवर्तकं चेति* । अन्तर्बहिर्मुखप्रवृत्तत्वात् ।

"*पञ्चकं त्वनुवर्तकम्*" इति । अवधारणमविकल्पकत्वात् ।

*नोभयमनास्रवमिति* । न प्रवर्तकम्, नाप्यनुवर्तकम्; समाहितान्तर्मुखप्रवृत्तत्वात् ॥ ११ ॥

*अम्लायमानेति* । अहीयमाना । शानच्प्रत्ययान्तश्चायं शब्दः ।

---

१. नायमेका०—का० ।　　　२. आम्नायमाना—का० ।

नास्ति बुद्धानामव्याकृतं चित्तमिति निकायान्तरीयाः। कुशलैकसन्ताना[1] हि बुद्धानां सन्ततयः; नित्यं समाहितत्वात्। उक्तं हि सूत्रे—

"चरन् समाहितो नागस्तिष्ठन्नागः समाहितः।
स्वपन् समाहितो नागो निषण्णोऽपि समाहितः"॥ ( ) इति।

अनिच्छयास्य चित्तस्याविसरणादेवमुक्तम्, न तु न सन्त्यव्याकृतानि विपाकजैर्यापथिकनिर्माणचित्तानि बुद्धानामिति वैभाषिकाः। मानसं भावनाहेयं प्रवर्तकं चानुवर्तकं चेत्युक्तम्, तत् कुशलाकुशलाव्याकृतं सर्वं वेदितव्यम्।

**नोभयं तु विपाकजम्॥ १२॥**

विपाकजं तु चित्तं नैव प्रवर्तकं नानुवर्तकम्; निरभिसंस्कारवाहित्वात्।

किमिदानीं यथा प्रवर्तकं तथा विज्ञप्तिः, आहोस्विद् यथा अनुवर्तकम्? किं चातः? यथा प्रवर्तकं चेत्, इहापि निवृताव्याकृता विज्ञप्तिः प्राप्नोति; सत्कायान्तग्राहदृष्टिप्रवर्तितत्वात्?

न वा सर्वं दर्शनप्रहातव्यं प्रवर्तकमिति विशेषणं वक्तव्यम्। यथानुवर्तकं

---

*कुशलैकसन्ताना* इति। कुशलैकप्रबन्धा इत्यर्थः। "बुद्धो भगवान् नागः" इत्युक्तं सूत्रे। कथम्? "तथागत उदायिन् सदेवके लोके समारके" इति विस्तरेणोक्त्वाह—"आगो न करोति कायेन वाचा मनसा, तस्मान्नाग इत्युच्यते" इति। आगो न करोतीति, अपराधं न करोतीत्यर्थः।

*अनिच्छयास्येति*। अनिच्छयास्य बुद्धस्य चित्तस्याविसरणाद् विषयेष्वगमनादेवमुक्तम्।

चरन्[2] *समाहितो नाग* इति विस्तरः। चतुर्ष्वीर्यापथेषु चरन् चरामीति, यावत् निषीदन्निषीदामीति उपस्थितस्मृतित्वान्नित्यसमाहितः स उच्यते।

*निरभिसंस्कारवाहित्वादिति*। अभावो हि संस्कारस्य = प्रयत्नस्य निरभिसंस्कारम्, निरभिसंस्कारं वहतीति निरभिसंस्कारवाही, तद्भावस्तस्मात् इति।

*न वा सर्वं दर्शनप्रहातव्यं प्रवर्तकमिति*। स्यादेतदेवम्, यदि सर्वं दर्शनप्रहातव्यं प्रवर्त्तकमिष्येत, न तु सर्वम्। किं तर्हि? मिथ्यादृष्ट्यादिकमेव प्रवर्तकं विज्ञप्तेः, न सत्कायदृष्ट्यादिकम्? इत्यत आह—न वा सर्वमिति विशेषणं

---

१. कुशलैकताना—का०; जा०। २. चरण—मुद्रितः पाठः।

चेत्, अकुशलाव्याकृतचित्तस्य प्रातिमोक्षविज्ञप्तिः कुशला न प्राप्नोति? यथा प्रवर्तकं तथा विज्ञप्तिः, न तु यथा दर्शनप्रहातव्यम्; भावनाहेयान्तरितत्वात्।

यदि नानुवर्तकवशाद्विज्ञप्तेः कुशलादित्वम्, न तर्हीदं वक्तव्यम्—'हेतुसमुत्थानं सन्धायोक्तं सूत्रे, न तत्क्षणसमुत्थानम्। अतो नास्तीह निवृताव्याकृता विज्ञप्तिः' इति। एवं तु[1] वक्तव्यम्—'अन्यव्यवहितं हेतुसमुत्थानं सन्धायोक्तम्' इति। अवसितः प्रसङ्गः ॥ १२ ॥

सा तु पूर्वोक्ता

**अविज्ञप्तिस्त्रिधा ज्ञेया संवरासंवरेतरा।**

संवरश्च, असंवरश्च, ताभ्यां चेतरो नैवसंवरो नासंवरः। दौःशील्यप्रसरस्य संवरणं संरोधः = संवरः। तत्र पुनः—

**संवरः प्रातिमोक्षाख्यो ध्यानजोऽनास्रवस्तथा ॥ १३ ॥**

त्रिविधः संवरः—१. प्रातिमोक्षसंवर इहत्यानां कामावचरं शीलम्। २. ध्यानसंवरो रूपावचरं शीलम्। ३. अनास्रवसंवरोऽनास्रवं शीलम् ॥१३॥

---

वक्तव्यम्—ईदृशं प्रवर्तकमीदृशं नेति। *अकुशलाव्याकृतचित्तस्येति*। उपसम्पाद्यमानस्य केनचिद् योगेनाकुशलाव्याकृतचित्तस्य। प्रातिमोक्षसंवरविज्ञप्तिरञ्जल्यादिका *कुशला न प्राप्नोति*। तदनुवर्तकञ्चित्तमकुशलाव्याकृतमिति कृत्वा। *यथा प्रवर्तकमिति* विस्तरः। यथा प्रवर्तकं चित्तं भावनाप्रहातव्यम्। *तथा विज्ञप्तिर्व्यवस्थाप्यते*। *न तु यथा दर्शनप्रहातव्यं* प्रवर्तकं तथा व्यवस्थाप्यते। कस्मात्? *भावनाहेयेनान्तरितत्वात्*। तस्मात् तत्प्रवर्तकं दर्शनप्रहातव्यं भावनाहेयेन प्रवर्तकेनान्तरितम्। कथं कृत्वा? तद्यथा—'अस्त्यात्मेति मया परेषां गमयितव्यम्' इति पूर्वमेवावधार्य ततो वाक्समुत्पादकेन चित्तेन बहिर्मुखप्रवृत्तेन भावनाप्रहातव्येन सवितर्केण सविचारेण वाचं भाषते 'अस्त्यात्मा' इत्येवमादि। अतो *यथाप्रवर्तकमिति* विस्तरः। तदेवमवश्यं दर्शनप्रहातव्यस्य प्रवर्तकस्यानन्तरं प्रवर्तकमेव भावनाप्रहातव्यं कुशलमकुशलमव्याकृतं चोत्पद्यते, तद्वशाच्च विज्ञप्तेः कुशलादित्वमिति।

*एवं तु वक्तव्यमिति* विस्तरः। एवं तु *वक्तव्यमन्यव्यवहितं* भावनाहेयव्यवहितं *हेतुसमुत्थानं सन्धायोक्तमिति*। परम्पराहेतुसमुत्थानं सन्धायेत्यर्थः ॥ १२ ॥

*"अविज्ञप्तिस्त्रिधा"* इति विस्तरः। त्रिविधेत्युद्दिश्य *"संवरासंवरेतरा"* इति।

---

१. का० पुस्तके नास्ति।

तत्र पुनः—

**अष्टधा प्रातिमोक्षाख्यः,**

१. भिक्षुसंवरः, २. भिक्षुणीसंवरः, ३. शिक्षमाणासंवरः, ४. श्रामणेरसंवरः, ५. श्रामणेरीसंवरः, ६. उपासकसंवरः, ७. उपासिकासंवरः, ८. उपवाससंवरश्च—एषोऽष्टविधसंवरः प्रातिमोक्षसंवर इत्याख्यायते ।

नामत एषोऽष्टविधः,

**द्रव्यतस्तु चतुर्विधः ।**

१. भिक्षुसंवरः, २. श्रामणेरसंवरः, ३. उपासकसंवरः, ४. उपवाससंवरश्च—इत्येष चतुर्विधः प्रातिमोक्षसंवरस्तु द्रव्यतः; प्रतिनियतलक्षणत्वात् । भिक्षुसंवराद् भिक्षुणीसंवरो नान्यः, श्रामणेरसंवराच्च शिक्षमाणा-श्रामणेरीसंवरौ । उपासकसंवरादुपासिकासंवरो नान्यः ।

कथं ज्ञायते ?

**लिङ्गतो नामसञ्चारात्,**

लिङ्गमिति व्यञ्जनस्याख्या, येन स्त्रीपुरुषौ लिङ्ग्येते । लिङ्गतो हि भिक्षुभिक्षुण्यादीनां नामसञ्चारो भवति । कथं कृत्वा ? परिवृत्ते हि व्यञ्जने भिक्षुर्भिक्षुणीत्युच्यते, भिक्षुणी च पुनर्भिक्षुः । श्रामणेरः श्रामणेरीत्युच्यते, श्रामणेरी च पुनः शिक्षमाणा च श्रामणेरः । उपासक उपासिकेत्युच्यते, उपा-

---

विवृणोति—संवरश्च सः असंवरश्च सः संवरासंवरः, संवरासंवरश्च स इतरा च सा *संवरासंवरेतरे*ति समासः ॥ १३ ॥

*प्रतिनियतलक्षणत्वादेति* । भिक्षुसंवरस्यान्यल्लक्षणम्, एवं यावदुपवाससंवरस्यान्यल्लक्षणम् । तथा हि वक्ष्यति—

"पञ्चाष्टदशसर्वेभ्यो वर्ज्येभ्यो विरतिग्रहात् ।

( अभि० को० ४.१५ )

इति अष्टविधत्वे तु साङ्कर्यसम्भवः । य एव हि भिक्षुसंवरः स एव भिक्षुणीसंवर इत्येवमादि ।

*श्रामणेरी च पुनः शिक्षमाणा चेति* । श्रामणेरी परिवृत्तव्यञ्जना श्रामणेरो भवति । शिक्षमाणा चापि परिवृत्तव्यञ्जना श्रामणेर एव भवति । किमेवं

सिका च पुनरुपासक इति । न च व्यञ्जनपरिवृत्तौ पूर्वसंवरत्यागकारणमस्ति[1], नाप्यपूर्वसंवरप्रतिलम्भे । तस्मादभिन्न एषां चतुर्णां संवराणा त्रिभ्यः स्वभावः ।

य उपासकसंवराच्छ्रामणेरसंवरं समादत्ते तस्माच्च पुनर्भिक्षुसंवरम्, किं ते संवरा विरतिवृद्धियोगादन्योन्य उच्यन्ते, पञ्च-दश-विंशतिवत्, दीनारसतेरवच्च[2] ? आहोस्वित् पृथगेव ते सकला उपजायन्ते[3] ? आह—

**पृथक्,**

अन्यामिश्रा एव ते पृथग्लक्षणा उपजायन्ते । त्रिषु संवरेषु तिस्रः प्राणातिपातविरतयो यावन्मद्यपानविरतयः । एवं शेषाः ।

---

नेष्यते, परिवृत्तव्यञ्जनो भिक्षुर्भिक्षुसंवरं च त्यजति भिक्षुणीसंवरं च प्रतिलभते ? इत्यत आह—*न च व्यञ्जनपरिवृत्ताविति* विस्तरः । न भिक्षभिक्षुणीव्यञ्जनप्रादुर्भावे *पूर्वसंवरत्यागकारणमस्ति* ।

प्रातिमोक्षदमत्यागशिक्षानिक्षेपणाच्च्युतेः ।
उभयव्यञ्जनोत्पत्तेर्मूलोच्छेदान्निशात्ययात् ॥ ( अभि० को० ४,३८ )

इत्यत्र यत् कारणमुक्तम् । *नाप्यपूर्वसंवरप्रतिलम्भे* । कारणमस्तीति वर्तते । यदुक्तम्—प्रातिमोक्षाख्यः परविज्ञानादिभिरिति । अतो विज्ञायते—न भिक्षुसंवरादन्यो भिक्षुणीसंवर इति । एवं श्रामणेरादीनामपि वक्तव्यम् । *तस्मादभिन्नोऽनन्यश्चतुर्णां* भिक्षुणीशिक्षमाणाश्रामणेर्युपासिका*संवराणां त्रिभ्यो* भिक्षुश्रामणेरोपासकसंवरेभ्यः *स्वभावः* ।

*कि ते संवरा* इति विस्तरः । *यथा* पञ्चसंख्यायामन्यानि पञ्च प्रक्षिप्य पञ्चवृद्धियोगाद् *दश* भवन्ति । पञ्चदशसंख्यायां चान्यानि पञ्च प्रक्षिप्य च *विंशति*र्भवन्ति । *दीनारसतेरवच्च* । यथा पूर्वको दीनारो द्वितीयेन सह सतेरो भवति । तथा हि लोके एकदीनारमूल्येन द्वितीयं दीनारं दीनारमूल्यं वा तेन पूर्वकेण दीनारमूल्येन सहाधिकमपेक्ष्य कश्चिद् वक्ता भवेत्—दीनारसतेरो मया लब्ध इति । दीनारद्वयं मया लब्धमित्यर्थः । किमेवमेतदुपासकश्रामणेरभिक्षुसंवरा *विरतिवृद्धियोगात्* प्राणातिपातादिविरतिषु तथैवावस्थितासु पुनः नृत्यगीतविरत्यादीनां पूर्वासां विरतीनां वृद्धियोगादन्योन्य *उच्यन्ते* । अन्य उपासकसंवराच्छ्रामणेरसंवरः, श्रामणेरसंवराच्चान्यो भिक्षुसंवर इति एकदेशविशेषयोगादन्योन्यव्यवस्थेत्यर्थः । *आहोस्वित् पृथगेव ते सकला उपजायन्ते* । अन्याः प्राणातिपातादिविरतय उपासकस्य, ततोऽन्याः श्रामणेरस्य, ततोऽन्याश्च भिक्षोः—इत्येकस्मिन् भिक्षुसन्ताने *तिस्रः प्राणातिपातादिविरतयः* । एवमदत्ता-

---

१. ०त्यागे०—का० । २. ०शतेर०—का० । ३. जायन्ते—का० ।

को नु तासां विशेषः ? निदानविशेषाद् विशेषः ।

कथं कृत्वा ? यथा यथा हि बहुतराणि शिक्षापदानि समादित्सते, तथा तथा बहुतरेभ्यो मदप्रमादेभ्यो[1] निवर्तमानो बहुतरेभ्यः प्राणातिपातादीनां निदानेभ्यो निवर्तते, विरतीनां च निदानेषु प्रवर्तत इति निदानविशेषाद् विरतीनां विशेषः। एवं चासति भिक्षुसंवरं प्रत्याचक्षाणस्त्रीनपि संवरान् विजह्याद्, द्वयोरपि तत्रान्तर्भावात् । न चैतदिष्टम् । तस्मात् पृथगेव ते संवराः ।

**ते चाविरोधिनः ॥ १४ ॥**

ते च त्रयोऽपि सह वर्तन्ते । नोत्तरसंवरसमादानात् पूर्वकस्य त्यागः । मा भूत् भिक्षुसंवरपरित्यागादनुपासक एवेति ॥ १४ ॥

कथं चायमुपासको भवति, कथमुपवासस्थो यावद् भिक्षुः ?

**पञ्चाष्टदशसर्वेभ्यो वर्ज्येभ्यो विरतिग्रहात् ।**
**उपासकोपवासस्थश्रमणोद्देशभिक्षुता ॥ १५ ॥**

यथासंख्यमनुदेशो वेदितव्यः । पञ्चभ्यो वर्जनीयेभ्यो धर्मेभ्यो विरतिसमापादनादुपासकसंवरस्थो[2] भवति - प्राणातिपातात्, अदत्तादानात्, कामिमिथ्याचारात्, मृषावादात्, सुरामैरेयमद्यपानाच्च ।

अष्टाभ्यो विरतिसमादानादुपवासस्थः—प्राणातिपाताद्, अदत्तादानाब्रह्मचर्यमृषावादमद्यपानेभ्यः, गन्धमाल्यविलेपननृत्यगीतवादित्राद्, उच्चशयनमहाशयनाद्, अकालभोजनाच्च ।

---

दानविरतयः। इत्येवमादि । *एवं शेषा* इति । नृत्यगीतविरत्यादयः।

*मदप्रमादेभ्य* इति । उच्चशयनादिमद्यपानादिभ्यः। *बहुतरेभ्यः प्राणातिपातादीनां निदानेभ्य* इति। उपासकाच्छ्रामणेरो बहुतरेभ्यः प्राणातिपातादिनिदानेभ्यो निवर्तते । तद्यथा—विकालभोजनं प्राणातिपातनिदानं भवेत्, तस्माच्छ्रामणेरो निवर्तते, नोपासक इत्येवमादि योज्यम् । *एवं चासति* । एवं च यदि न स्यादित्यर्थः। *भिक्षुसंवरं प्रत्याचक्षाणस्त्यजन् त्रीनपि* उपासकसंवरादीन् *विजह्यात्* । *द्वयोरप्युपासकश्रामणेरसंवरयोस्तत्र* भिक्षुसंवरेऽन्तर्भावात् ॥ १४ ॥

*विरतिसमापादनादिति* । विज्ञप्त्यविज्ञप्तिविरतिरिति वक्ष्यति। समापादना-

---

१. मदप्रमादपदेभ्यः—का० । २. ०समादानादु०—का० ।

दशभ्यो विरतिसमादानाच्छ्रामणेरो भवति—एभ्य एव, जातरूपरजतप्रतिग्रहाच्च। नृत्यगीतवादित्रगन्धमाल्यविलेपनं चात्र द्वयीकृत्य दश भवन्ति।

सर्वेभ्य एव वर्जनीयेभ्यः कायवाक्कर्मभ्यः विरतिसमादानात् भिक्षुरित्युच्यते ॥ १५ ॥

स एष प्रातिमोक्षसंवरः—

**शीलं सुचरितं कर्म संवरश्चोच्यते,**

विषमकर्मणां विरतिसमादानाच्छीलम्; शीतलत्वादिति निरुक्तिः। "सुखशीलसमादानं कायो न परिदह्यते" (     ) इति गाथावचनात्। विद्वत्प्रशस्तत्वात् सुचरितम्। क्रियास्वभावत्वात् कर्म।

ननु चाविज्ञप्तिरक्रियेत्युच्यते, सा कथं क्रिया भवति, न कुर्वन्ति तया समात्तया लज्जिनः पापमित्यक्रियेत्युच्यते?

सापि तु विज्ञप्तिचित्ताभ्यां क्रियत इति क्रिया भवति।

क्रियाहेतुत्वात्, क्रियाफलत्वाच्चेत्यपरे। संवर इति कायवाचोः संवरणात्।

एवं तावदविशेषेण प्रातिमोक्षसंवरः संशब्द्यते।

पुनः।

---

दिति। प्रतिसंस्थापनादित्यर्थः। पापकर्मणो हि सत्त्वेषु *विषमं* सम्प्रवर्तते ॥१५॥

*सापि तु विज्ञप्तिचित्ताभ्यां क्रियत* इति। विज्ञप्त्या च क्रियते प्रातिमोक्षसंवरसंगृहीता अविज्ञप्तिः, चित्तेन च क्रियते ध्यानानास्रवसंवरसंगृहीता अविज्ञप्तिः। समाधिना क्रियत इत्यर्थः। तदेवं *क्रियत इति क्रियेति* कर्मसाधनम्।

*क्रियाहेतुत्वादिति*। क्रियाया हेतुत्वात्। संवरस्थो हि संवरपरिरक्षणार्थं क्रियां विज्ञप्तिलक्षणामारभते। *क्रियाफलत्वाच्चेति*। विज्ञप्तिलक्षणायाः क्रियायाः फलत्वादित्यर्थः। समाधिसम्भूता कथं क्रिया भवति? समाधिजायाश्चेतनायाः फलत्वात् सापि क्रिया। प्रतिमोक्षसंवराधिकाद्वा। न तत्र चिन्ता[1]।

*एवं तावद् अविशेषेण प्रातिमोक्षसंवरः संशब्द्यत* इति। आद्योऽपि क्षणो द्वितीयादयोऽपि च क्षणाः प्रातिमोक्षसंवर इत्युच्यते।

---

१. चित्ता—इति मुद्रितः पाठः।

**आद्ये विज्ञप्त्यविज्ञप्ती प्रातिमोक्षक्रियापथः ॥ १६ ॥**

**संवरसमादानस्य प्रथमे विज्ञप्त्यविज्ञप्ती प्रातिमोक्ष इत्युच्यते; पापस्य तेन प्रातिमोक्षणाद्।** उत्सर्जनादित्यर्थः। स्वार्थे वृद्धिविधानाद् वैकृत-वैशसवत्।

प्रातिमोक्षसंवर इत्यपि कायवाक्संवरणात् कर्मपथ इत्युच्यते; मौलसंगृहीतत्वात्।

द्वितीयादिषु क्षणेषु प्रातिमोक्षसंवर एव, न प्रातिमोक्षः। पृष्ठं च न मौलकर्मपथः ॥ १६ ॥

अथैषां संवराणां केन कः समन्वागतः ?

**प्रातिमोक्षान्विता अष्टौ,**

प्रातिमोक्षसंवरेणाष्टौ निकायाः समन्वागताः—भिक्षुः, भिक्षुणी यावदुपवासस्थोऽष्टमः।

किं खलु बाह्यकानां समादानशीलं नास्ति ? अस्ति, न तु प्रातिमोक्षसंवरः। किं कारणम् ? नहि तदत्यन्तं पापस्य प्रतिमोक्षणाय संवर्तते; भवसन्निश्रितत्वात्।

---

प्रातिमोक्षस्वभावस्त्वाद्यक्षण एव। तदर्थमाह—पुनः *आद्ये विज्ञप्त्यविज्ञप्ती प्रातिमोक्ष इत्युच्यते। पापस्य तेन प्रतिमोक्षणादिति।* प्रथमेनैव क्षणेन पापं प्रतिमोक्ष्यते = *उत्सृज्यते।* त्यज्यते इत्यर्थः। प्रतिमोक्ष इति प्राप्ते प्रातिमोक्ष इति वचनं *स्वार्थे वृद्धिविधानात्।* स्वार्थे प्रत्यये कृते वृद्धिकरणादित्यर्थः। *वैकृतवैशसवत्।* यथा विकृतमेव वैकृतम्, विशसमेव मारणं वैशसम्। एवं प्रतिमोक्ष एव प्रतिमोक्ष इति।

*प्रातिमोक्षसंवर इत्यपीति।* प्रातिमोक्षश्चासौ संवरश्च। *कायवाचोः संवरणार्थ* इत्यर्थः। *कर्मपथ इत्यप्युच्यत* इति। मौलः कर्मपथ इत्यर्थः। *द्वितीयादिषु प्रातिमोक्षसंवर एव।* प्रातिमोक्षजातीयः, प्रातिमोक्षाद्वा जातः संवरः प्रातिमोक्षसंवरः। *न प्रातिमोक्षः।* यस्मात् न तेन पापं प्रतिमोक्ष्यते, प्रथमक्षण एव प्रतिमोक्षितत्वात् ॥ १६ ॥

*अष्टावेव निकाया* इत्यवधारणे पृच्छति—*किं खलु बाह्यकानामिति* विस्तरः। *समादानशीलमिति* विशेषणं शीलद्वैध्यात्। द्विविधं हि शीलम्—समादानशीलम्, धर्मताप्रतिलम्भितं च। तत्र समादानशीलं यद् गृह्यते। इदं चेदं च न करिष्यामीति। धर्मताप्रतिलम्भिकम्—ध्यानसंवरः, अनास्रवसंवरश्च। *भवसन्निश्रितत्वादिति।* मोक्षार्थिनामपि तेषां मिथ्यादृष्ट्याद्युपहतत्वात्। भवविशेष

**ध्यानजेन तदन्वितः ।**

ध्यानाद् ध्याने वा जातो ध्यानजः । यो ध्यानेन समन्वागतः, सोऽवश्यं ध्यानसंवरेण । सामन्तकमप्यत्र ध्यानं कृत्वोच्यते । यथा ग्रामसामन्तकमपि ग्राम इत्युच्यते—अस्त्यस्मिन् ग्रामे शालेयं क्षेत्रम्, अस्ति व्रैहेयमिति ।

**अनास्रवेणार्यसत्त्वाः,**

आर्यपुद्गला **अनास्रवेण** संवरेण समन्वागताः । ते पुनः शैक्षाशैक्षाः । **यदुक्तम्**—"सहभूहेतावुच्यमाने द्वौ संवरौ चित्तानुवर्तिनौ" ( ) इति ।

कतमौ तौ ? एषामेव त्रयाणाम्

**अन्त्यौ चित्तानुवर्तिनौ ॥ १७ ॥**

ध्यानसंवरः, अनास्रवसंवरश्च । न प्रातिमोक्षसंवरः । किं कारणम् ? अन्यचित्ताचित्तकस्याप्यनुवृत्तेः ।

पुनस्तावेव ध्यानानास्रवसंवरौ प्रहाणसंवराख्यां लभेते ॥ १७ ॥

कस्यामवस्थायाम् ? इत्याह—

**अनागम्ये प्रहाणाख्यौ तावानन्तर्यमार्गजौ ।**

**अनागम्ये तौ** ध्यानानास्रवसंवरौ नवस्वानन्तर्यमार्गेषु 'प्रहाणसंवरौ' इत्युच्येते; ताभ्यां दौःशील्यस्य तत्समुत्थापकानां च क्लेशानां प्रहाणात् ।

---

एव च तेषां केषाञ्चिन्मोक्ष इति । भवसन्निश्रितमेव शीलम् । ततोऽस्ति तेषां समादानशीलम्, न *प्रातिमोक्षसंवर* इति ।

*सामन्तकमप्यत्र ध्यानं कृत्वोच्यत* इति । यस्मात् सामन्तकेऽपि ध्यानसंवरोऽनास्रवसंवरश्चेष्यते, तस्माद् ध्यानसामन्तकमप्यत्र ध्यानशब्देनोच्यत इतीष्यते । *अपि*शब्दान्मौलमपि गृह्यत एव ।

*सहभूहेतावुच्यमान* इति । "चैत्ता द्वौ संवरौ तेषाम्" (अभि० को० २.५१) इत्यत्र । *त्रयाणामिति* । प्रातिमोक्षसंवरध्यानसंवरानास्रवसंवराणाम् । *अन्यचित्ताचित्तकस्याप्यनुवृत्तेरिति* । "विज्ञप्ताचित्तकस्यापि" ( अभि० १.११ ) इति वचनात् ॥ १७ ॥

*"अनागम्ये"* इति ग्रहणं कामावचरस्यैव दौःशील्यस्य प्रतिपक्षत्वात् । *आनन्तर्यमार्गेष्विति* । तेषां प्रहाणमार्गत्वात् । *तत्समुत्थापकानामिति* । दौःशील्यसमुत्थापकानाम् ।

अत एव 'स्याद्ध्यानसंवरो न प्रहाणसंवरः' इति चतुष्कोटिकं क्रियते— प्रथमा कोटिरनागम्यानन्तर्यमार्गवर्ज्यः सास्रवो ध्यानसंवरः, द्वितीया अनागम्यानन्तर्यमार्गेष्वनास्रवः, तृतीया अनागम्यानन्तर्यमार्गेषु सास्रवः, चतुर्थी अनागम्यानन्तर्यमार्गवर्ज्योऽनास्रवसंवरः ।

एवं 'स्यादनास्रवसंवरो न प्रहाणसंवरः' इति चतुष्कोटिकं यथायोगं वेदितव्यम् ।

यत्तर्हि भगवतोक्तम्—

"कायेन संवरः साधु साधु वाचाथ संवरः ।
मनसा संवरः साधु साधु सर्वत्र संवरः ॥" (          ) इति,

यच्चोक्तम्—"चक्षुरिन्द्रियेण संवरसंवृतो विहरति" (          ) इति, एतौ मनइन्द्रियसंवरौ किंस्वभावौ ? नैतावविज्ञप्तिशीलस्वभावौ । किं तर्हि ?

**सम्प्रजानस्मृती द्वे तु मनइन्द्रियसंवरौ ॥ १८ ॥**

प्रत्येकं द्विस्वभावज्ञापनार्थं पुनर्द्विग्रहणम्, मा यथासंख्यं विज्ञायीति; मनःसंवरोऽपि स्मृतिसम्प्रज्ञानस्वभाव इति । इन्द्रियसंवरोऽपि ॥ १८ ॥

---

*अतएवेति* । यस्मादनागम्यानन्तर्यमार्गेष्वेव तद्व्यवस्थानम् । तस्माच्चतुःकोटिकं क्रियते । *प्रथमा कोटिरनागम्यानन्तर्यमार्गवर्ज्यो ध्यानसंवरः* । अनागम्यभूमिकेषु विमुक्तिप्रयोगविशेषमार्गेषु मौलप्रथमध्यानादिषु वा चतुर्थाद् ध्यानादानन्तर्यविमुक्तिप्रयोगविशेषमार्गेषु यो ध्यानसंवरः । अयं ध्यानसंवरः, न प्रहाणसंवरः; तेन दौःशील्यस्य तत्समुत्थापकानां च क्लेशानामप्रहाणात् । *द्वितीया—अनागम्यानन्तर्यमार्गेष्वनास्रवसंवरः* । अयं प्रहाणसंवरः; तेनैव दौःशील्यादिप्रहाणात् । न ध्यानसंवरः; अनास्रवत्वात् । *तृतीया—अनागम्यानन्तर्यमार्गेषु सास्रवसंवरः* । अयं प्रहाणसंवरश्च; तेन दौःशील्यादिप्रहाणात् । ध्यानसंवरश्च; सास्रवसमाधिजत्वात् । *चतुर्थी—अनागम्यानन्तर्यमार्गवर्ज्योऽनास्रवसंवरः* । अयं न ध्यानसंवरः; आस्रवत्वात् । नापि प्रहाणसंवरस्तेन दौःशील्याद्यप्रहाणात् । स पुनस्तथैवानागम्यभूमिकेषु विमुक्तिप्रयोगविशेषमार्गेषु विस्तरेण योऽनास्रवसंवरः । संवरनियमेनैवमुक्तम् । अन्यथाप्यन्ये धर्मा वक्तव्याः स्युः ।

*एवं स्यादनास्रवसंवरो न प्रहाणसंवर इति चतुष्कोटिकम्* । प्रथमा कोटिरनागम्यानन्तर्यमार्गवर्ज्योऽनास्रवसंवरः ।

*मनःसंवरोऽपि स्मृतिसम्प्रज्ञानस्वभावः* । *इन्द्रियसंवरोऽपि* स्मृतिसम्प्रज्ञानस्व-

इदं विचार्यते—कः कतमया विज्ञप्त्या, अविज्ञप्त्या वा कियन्त कालं समन्वागत इति ? तत्र—

**प्रातिमोक्षस्थितो नित्यमत्यागाद् वर्तमानया ।**

**अविज्ञप्त्यान्वितः,**

यः प्रातिमोक्षसंवरस्थः पुद्गल उक्तः, स यावत् तामविज्ञप्तिं न त्यजति तावत् तया **वर्तमानया नित्यं** समन्वागतः ।

**पूर्वात् क्षणादूर्ध्वमतीतया ॥ १९ ॥**

प्रथमात् **क्षणादूर्ध्वमतीतयापि** समन्वागतः । 'अत्यागात्' इति सर्वत्राधिकृतं वेदितव्यम् ॥ १९ ॥

यथा प्रातिमोक्षसंवरस्थ उक्तः,

**तथैवासंवरस्थोऽपि,**

**असंवरस्थोऽपि** यावदसंवरं न त्यजति तावन्नित्यमविज्ञप्त्या वर्तमानया एव[1] समन्वागतो भवति[1] । क्षणादूर्ध्वमतीतयापि ।

**ध्यानसंवरवान् सदा ।**

**अतीताजातया,**

ध्यानसंवरस्य लाभी नित्यमतीतानागतया[2] अविज्ञप्त्या[2] समन्वागतः;

---

भाव इति । *द्विस्वभावज्ञापनार्थं द्विग्रहणम्;* [illegible] हि द्वित्वसिद्धिः । कथं पुनर्गम्यते—एतावेवंस्वभावाविति ? आगमात् । "अन्यतरा किल देवता भिक्षुं विषयेष्विन्द्रियाणि विचारयन्तमवोचत्—भिक्षो भिक्षो व्रणं मा कार्षीरिति ? भिक्षुराह—पिधास्यामि देवते । देवताह—कुम्भमात्रं भिक्षो व्रणं कृत्वा केन पिधास्यसि ? भिक्षुराह—स्मृत्या देवते पिधास्यामि, सम्प्रजन्येन वा" (        ) इति ॥ १८ ॥

*स यावत्तामविज्ञप्तिं न त्यजतीति* । शिक्षानिक्षेपादि ।

*"पूर्वात् क्षणादूर्ध्वमतीतया"* इति । प्रथमे क्षणे *वर्तमानयैव समन्वागतो भवतीत्युक्तं* भवति ॥ १९ ॥

*"ध्यानसंवरवान् सदा अतीताजातया"* इति । ध्यानसंवरवान् किं पृथग्जनोऽथार्यः ? उभय इत्याह; अविशेषितत्वात् । सो*ऽतीतानागतया अविज्ञप्त्या समन्वागतः* ।

---

१. का० पुस्तके नास्ति ।    २–२. ०नागताभ्यामविज्ञप्तिभ्या—का० ।

अत्यागात्[1] । प्रथमे हि क्षणे स जन्मान्तरत्यक्तं ध्यानसंवरमतीतं लभते ।

**आर्यस्तु प्रथमे नाभ्यतीतया ॥ २० ॥**

**आर्यस्तु** पुद्गलोऽप्येवमनास्रवया । अयं तु विशेषः— **स प्रथमे** तु[2] क्षणे **नाभ्यतीतया**[3] समन्वागतः; मार्गस्य पूर्वमनुत्पादितत्वात् ॥ २० ॥

**समाहितार्यमार्गस्थौ तौ युक्तौ वर्तमानया ।**

**तौ** ध्यानानास्रवसंवरान्वितौ **समाहितार्यमार्ग**समापन्नौ **वर्तमानया**

---

किंलक्षणया ? ध्यानसंवराधिकाराद् ध्यानसंवरलक्षणयेति गम्यते । *स जन्मान्तरत्यक्तमिति* । उदाहरणप्रदर्शनपरमेतत् । इदं जन्म त्यक्तमपि हि गृह्यते ।

*"आर्यस्तु प्रथमेनाभ्यतीतया" इति* । आर्यः सदातीताजातया अविज्ञप्त्या समन्वागतः । किंलक्षणया—अनास्रवया । आर्याधिकारात् । अत एवाह—*आर्यपुद्गलोऽप्येवमनास्रवयेति* । *अयं तु विशेष* इति । तु-शब्दार्थं दर्शयति । स च भिन्नक्रमः । *प्रथमे तु क्षणे* दुःखधर्मज्ञानक्षान्तिक्षणे । *नाभ्यतीतया* अविज्ञप्त्या *समन्वागत* इत्यर्थः । कस्मात् ? अनादिमति संसारे *मार्गस्य पूर्वमनुत्पादितत्वात्* ।

ननु च फलप्राप्तिकाले, इन्द्रियसञ्चारकालेऽपि वा पूर्वमार्गत्यागे नैवातीतया अविज्ञप्त्या समन्वागम इष्यते ? एवं तर्हि स चापि फलमार्गस्य प्रथमक्षणो भवति । तत्र नातीतयाऽविज्ञप्त्या समन्वागतो भवति; फलमार्गस्य पूर्वमनुत्पादितत्वादिति व्याख्यातव्यम् ।

[illegible] चोद्यस्य परिहारमाह—अनास्रवसंवरोऽत्र प्रकृतः । स च दुःखधर्मज्ञानक्षान्तिकाल एव लब्धः । अतस्तेन प्रथमे क्षणे नातीतेन समन्वागतो द्वितीयादिष्वतीतानागतेनेति । ऊर्ध्वं तु यो मार्गान्तरलाभस्तत्रानास्रवसंवरसादृश्यमस्तीति न तदुच्यते इति ।

तदिह 'सादृश्यमस्ति' इति न बुध्यामहे—किं सास्रवसंवरोऽस्तीत्यपेक्ष्येदमुच्यते, आहोस्विदनास्रवोऽस्तीति ? यदि सास्रवोऽस्तीत्यभिप्रेयते ? दुःखधर्मज्ञानक्षान्तिकालेऽपि सोऽस्तीति नातीतया समन्वागत इति प्रतिषेधानुपपत्तिः । अथ फलप्राप्तिकालेऽतीतानास्रवसंवरोऽस्तीत्यभिप्रेयते ? विहीनः स कथमस्तीति शक्यं वक्तुमिति चिन्त्योऽस्याभिप्रायः ॥ २० ॥

*"समाहितार्यमार्गस्थौ" इति* । समाहितमार्गस्थश्च लौकिकसमाहितमार्गस्थ आर्यमार्गस्थश्च *समाहितार्यमार्गस्थौ* । ध्यानानास्रवसंवरान्वितावित्यर्थः । अत्र चार्यमार्गाभिरूढ आर्यमार्गस्थो वेदितव्यः, नौस्थन्यायेन । तद् यथा—यो

---

१. आत्यागात्—का० । २. का० पुस्तके नास्ति । ३. नातीतया—का० ।

अविज्ञप्त्या समन्वागतौ यथाक्रमम्, न तु व्युत्थितौ ।

संवरासंवरस्थानां तावदेष वृत्तान्तः ॥

अथेदानीं मध्यस्थस्य ?

**मध्यस्थस्यास्ति चेदादौ मध्यया,**

यो नैवसंवरनासंवरे[1] स्थितः स मध्यस्थः। तस्य नावश्यमविज्ञप्तिरस्ति। यस्य त्वस्ति दौःशील्यशीलाङ्गादिसंगृहीता स **आदौ मध्यया** समन्वागतः।

वर्तमाना ह्यविज्ञप्तिरतीतानागतयोर्मध्याद्—

**ऊर्ध्वं द्विकालया ॥ २१ ॥**

प्रथमात् क्षणादूर्ध्वमतीतया वर्तमानया च। अत्यागादिति[2] वर्तते ॥२१॥

किमसंवरस्थः कदाचित् कुशलया विज्ञप्त्या समन्वागतो भवति, संवरस्थो वा पुनरकुशलया भवति ? भवन् कदा कियन्तं वा कालम् ? इत्याह—

---

नावमभिरूढः स नौस्थः। एवं य आर्यमार्गमभिरूढः समापन्नः स आर्यमार्गस्थः। अन्यथा ह्यार्यमार्गसमन्वितोऽप्यार्यमार्गस्थ इति कृत्वा प्रकृतिस्थोऽप्यार्यो *वर्तमानया* अनास्रवया *अविज्ञप्त्या समन्वागत* इति प्राप्नोति।

अन्यः पुनरेवं प्रसङ्गं परिहरन् व्याचष्टे—एकशेषोऽत्र क्रियते। समाहितश्च समाहितार्यमार्गश्च मार्गौ समाहितार्यमार्गौ, तयोः स्थितौ *समाहितार्यमार्गस्थौ। तौ यथाक्रमं वर्तमानया* ध्यानसंवराविज्ञप्त्या, अनास्रवसंवराविज्ञप्त्या च *समन्वागतौ। न तु व्युत्थितौ*। न तु तन्मार्गव्युत्थितौ तया। वर्तमानया समन्वागतौ; तस्याः चित्तानुपरिवर्तनीयत्वात्। एवं व्याख्यायते—यच्चोदितमाचार्यमङ्गभद्रेण। कथमविज्ञप्तेः प्रत्युत्पन्नता आर्यमार्गस्थवचनादेव गम्यते, तत्समापन्न एवायम्। न पुनस्तत्समन्वागमवचनप्रसङ्ग इति चेत् ? न; ध्यानाधिकारात्। तत्राविज्ञप्त्यभावाच्च।

*यो नैवसंवरनासंवरस्थितः स मध्यस्थ* इति। *यो* न भिक्ष्वादिः। न च कैवर्तादिः। *स मध्यस्थः। दौःशील्यशीलाङ्गादिसंगृहीतेति। दौःशील्यं* प्राणातिपातादि। *शीलाङ्गं* प्राणातिपातविरत्यादि। यन्नसंवरनासंवरसंगृहीतम्। *आदि*शब्देन स्तूपवन्दना-खटचपेटादिक्रियाविज्ञप्त्यादि गृह्यते ॥ २१ ॥

असंवरसंवरस्थौ पुद्गलावकुशल-कुशलधर्मप्रतिष्ठितौ इत्यनयोर्विपर्ययमसम्भावयन् पृच्छति—*किमसंवरस्थ* इति विस्तरः।

---

१. नैव संवरे नासंवरे—का०। २. आत्यागा०—का०।

**असंवरस्थः शुभयाऽशुभया संवरे स्थितः।**
**अविज्ञप्त्यान्वितो यावत् प्रसादक्लेशवेगजात् ॥ २२ ॥**

येन प्रसादवेगेनासंवरस्थस्य कुशलाविज्ञप्तिरुत्पद्यते स्तववन्दनादिक्रियां कुर्वतः, येन च क्लेशवेगेन संवरस्थस्याकुशलाविज्ञप्तिरुत्पद्यते वधबन्धनताडनादिक्रियां कुर्वतः; तौ यावदनुवर्तेते तावत्ते अप्यविज्ञप्ती। स आद्ये क्षणे वर्तमानयैवाविज्ञप्त्या समन्वागतो भवति। अन्येष्वतीतयाऽपि ॥ २२ ॥

अविज्ञप्त्यधिकारः समाप्तः ॥

**विज्ञप्त्या तु पुनः सर्वे कुर्वन्तो मध्ययान्विताः।**

सर्वे संवरासंवरमध्यस्था यावद् विज्ञप्तिं कुर्वन्ति तावत् तया वर्त्तमानया समन्वागताः।

**अतीतया क्षणादूर्ध्वमात्यागात्,**

प्रथमात् क्षणादूर्ध्वमात्यागादतीतया विज्ञप्त्या समन्वागतो भवति।

**नास्त्यजातया ॥ २३ ॥**

अनागतया तु विज्ञप्त्या न कश्चित् समन्वागतः ॥ २३ ॥

**निवृतानिवृताभ्यां च नातीताभ्यां समन्वितः।**

अतीताभ्यामपि निवृतानिवृताव्याकृताभ्यां विज्ञप्तिभ्यां न कश्चित् समन्वागतः। दुर्बलस्य हि धर्मस्य प्राप्तिरपि दुर्बला नानुबन्धीभवति।

किंकृतं तस्या दौर्बल्यम्? चित्तकृतम्।

---

*तौ यावदनुवर्तेते* इति। प्रसादक्लेशवेगौ। *अन्येष्वतीतयापीति*। द्वितीयक्षणादिषु *अतीतया*॥ २२॥

*"क्षणादूर्ध्वमात्यागाद्" इति*। यो यस्यास्त्यागस्तस्मादात्यागात् तया*तीतया विज्ञप्त्या समन्वागतः*। कथम्? संवरलक्षणायास्तावद् विज्ञप्तेस्त्यागः शिक्षानिक्षेपादिभिः। तस्मादात्यागादनया अतीतया विज्ञप्त्या समन्वागतः। असंवरलक्षणायाः संवरसमादानादिभिस्त्यागः, तस्मादात्यागादनया समन्वागतः। नैवसंवरनासंवरलक्षणायाः प्रसादक्लेशवेगच्छेदादिभिस्त्यागः, तस्मादात्यागादनया समन्वागत इति। यो हि संवराद्यविज्ञप्तिसमन्वागतः सोऽवश्यं मौलकर्मपथस्वभावया *क्षणादूर्ध्व*मतीतयाविज्ञप्त्या समन्वागतः।

*अनागतया तु विज्ञप्त्या न कश्चित् समन्वागत* इति। चित्ताननुपरिवर्तनीयत्वात् ॥ २३ ॥

चित्तस्यापि तर्हि निवृताव्याकृतस्य मा भूत्? नैतदेवम्; जडा हि विज्ञप्तिः, परतन्त्रा च। न चैवं चित्तम्। सा हि निवृतदुर्बलेनोत्थापिता दुर्बलतरा भवति।

असंवरस्थ इत्युक्तम्। कोऽयमसंवरो नाम?

**असंवरो दुश्चरितं दौःशील्यं कर्म तत्पथः ॥ २४ ॥**

असंवरस्येमे पर्यायशब्दाः। तत्र कायवाचोरसंवरणादसंवरः। सद्भिः कुत्सितत्वादनिष्टफलत्वाद् दुश्चरितम्। शीलविपक्षाद् दौःशील्यम्। कायवाक्कर्मत्वात् कर्म। मौलसंगृहीतत्वात् कर्मपथः।

स्याद्विज्ञप्त्या समन्वागतो नाविज्ञप्त्येति चतुष्कोटिकम् ॥ २४ ॥

तत्र तावत्—

**विज्ञप्त्यैवान्वितः कुर्वन्मध्यस्थो मृदुचेतनः।**

मृद्व्या चेतनया कुशलमकुशलं वा कुर्वन्नैवसंवरनासंवरस्थितो विज्ञप्त्यैव समन्वागतो भवति, नाविज्ञप्त्या प्रागेवाव्याकृतम्[1], अन्यत्रौपधिकपुण्यक्रियावस्तुकर्मपथेभ्यः।

---

*चित्तस्यापीति। चित्तस्यापि तर्हि निवृताव्याकृतस्य मा भूत्* प्राप्तिः। अनुबन्धिनी मा भूदित्यर्थः। कस्माद्? इत्याह—*जडा हि विज्ञप्तिः*। अनालम्बनत्वात्। *परतन्त्रा च*। चित्तपरतन्त्रत्वात्। *न चैवं चित्तमिति*। न जडम्, न परतन्त्रं चेत्यर्थः। कस्मात्? तद्विपर्ययात्। *सा दुर्बलेन* निवृताव्याकृतेन *चित्तेनोत्थापिता दुर्बलतरा भवतीति*।

*मौलसंगृहीतत्वादिति*। चेतनायाः तदर्थत्वात् ॥ २४ ॥

*"विज्ञप्त्यैवान्वितः कुर्वन् मध्यस्थो मृदुचेतनः"* इति। *मध्यस्थ*ग्रहणं संवरासंवरस्थनिरासार्थम्। संवरासंवरस्था हि विज्ञप्त्यविज्ञप्तिभ्यामवश्यं समन्वागताः। *मृदुचेतन*ग्रहणं तीव्रचेतननिरासार्थम्। तीव्रचेतनया[2] हि विज्ञप्तिं कुर्वन् विज्ञप्तिं समुत्थापयेत्। *प्रागेवाव्याकृतमिति*। मृद्व्या चेतनया प्रागेवाव्याकृतं कुर्वन्। यत्र हि मृद्व्या चेतनया कुशलमकुशलं वा कुर्वन् नैवसंवरनासंवरे स्थितो विज्ञप्त्यैव समन्वागतो भवति; अविज्ञप्तेरनुत्पादात्। प्रागेवाव्याकृतं कुर्वन् सुतरां विज्ञप्त्यैवासौ समन्वागतः, नाविज्ञप्त्या; अविज्ञप्त्युत्पादाशङ्काया अभावात्। *अन्यत्रेति* विस्तरः। *अन्यत्र* सप्तभ्य *औपधिकेभ्यः पुण्यक्रियावस्तुभ्यः*। *कर्मपथेभ्यश्च* प्राणातिपातादिभ्यः। तत्र ह्यव्याकृतमपि कुर्वन्न विज्ञप्त्या

---

१. प्रागेवाव्याकृते—का०। २. ०चेतना—मुद्रितः पाठः।

**त्यक्तानुत्पन्नविज्ञप्तिरविज्ञप्त्यार्यपुद्गलः ॥ २५ ॥**

**अविज्ञप्त्यैव** समन्वागतो न विज्ञप्त्या; येनार्यपुद्गलेन जन्मान्तरपरिवृत्तौ न तावद् विज्ञप्तं भवति, विज्ञप्तं वा पुनर्विहीनम् ॥ २५ ॥

उक्तं संवरासंवरमध्यस्थानां विज्ञप्त्यविज्ञप्तिसमन्वागमनव्यवस्थानम् ॥

अथैते संवराः कथं लभ्यन्ते ?

**ध्यानजो ध्यानभूम्यैव लभ्यते,**

यदा ध्यानभूमिकं चित्तं प्रतिलभ्यते मौलीयं सामन्तकीयं वा सास्रवम्, तदा ध्यानसंवरोऽपि; सहभूतत्वात् ।

**अनास्रवस्तया ।**

**आर्यया,**

---

समन्वागतो भवति; "सततसमितं चरतो वा तिष्ठतो वा विस्तरेण यावदुपजायत एव पुण्यम्" इति सूत्रे वचनात् । प्राणातिपातादींश्च कर्मपथान् मृदुचेतनयापि कुर्वन् अविज्ञप्त्या समन्वागतो भवति ।

*येनार्यपुद्गलेनेति* विस्तरः । परिवृत्तजन्मनार्यपुद्गलेन *यदा न तावद् विज्ञप्तं भवति* । [illegible]नौ च । *विज्ञप्तं वा पुनर्विहीन*मव्याकृतचित्तोत्थापितविज्ञप्तिविहीनात् च । न हि तस्याः प्राप्तिरनुबन्धिनी भवति । कृतस्तूपादिकस्य वा, तद्वस्तुच्छेदात् । स हि तदानीमविज्ञप्तिमपि परित्यजति प्रागेव विज्ञप्तिमिति । आस्ववस्थासु जन्मान्तरपरिवृत्तावार्यपुद्गलोऽनास्रवयैवाविज्ञप्त्या जन्मान्तरलब्धया समन्वागतः, न विज्ञप्त्या ।

ननु च पृथग्जनस्याप्ययं विधिः सम्भवति ? सम्भवति । अनावश्यकत्वात्तु पृथग्जनो नोक्तः । यो हि ध्यानलाभी परिवृत्तजन्मान्तरः रूपधातावकृतविज्ञप्तिः, कृतविज्ञप्तिविहीनो वा, स एव तथा सम्भवति, नान्य इति; कामावचरसत्त्वाभिसन्धिवचनाद्वा । अथवा उदाहरणरूप आर्यपुद्गल उक्तः, तेन पृथग्जनोऽपि तथा ग्रहीतव्यः। अतएव "विज्ञप्त्यैवान्वितः कुर्वन्मध्यस्थो मृदुचेतनः" इत्यत्रोक्तः—'अन्यत्रौप[illegible]' इति । सावशेषमेतद्वचनमिति कृत्वा । एवं द्वे कोटी सूत्रिते प्रथमद्वितीये । तृतीयचतुर्थ्यौ तु योज्ये—तृतीया संवरासंवरमध्यस्थास्तीव्रया चेतनया कुशलमकुशलं वा कुर्वन्तः; चतुर्थी येन जन्मान्तरपरिवृत्तौ पृथग्जनेन न तावद् विज्ञप्तं भवति, विज्ञप्तं वा विहीनमिति ॥ २५ ॥

*सहभूतत्वादिति* । यस्माद् ध्यानचित्तेन सह भवति ध्यानसंवरः ।

तयैव ध्यानभूम्याऽनास्रवया लभ्यमानयानास्रवः संवरो लभ्यते । तत्र षड् ध्यानभूमयोऽनास्रवा भवन्ति—चत्वारि ध्यानानि अनागम्यस्यानन्तरं चेति पश्चात् प्रवेदयिष्यामः ।

**प्रातिमोक्षाख्यः परविज्ञपनादिभिः ॥ २६ ॥**

प्रातिमोक्षसंवरस्तु परविज्ञप्तितो लभ्यते, यच्चेनं परो विज्ञापयति[1] असौ च परम् । स पुनः सङ्घाद्वा, पुद्गलाद्वा । सङ्घाद् भिक्षुभिक्षुणीशिक्षमाणासंवराः, पुद्गलादन्ये ।

दशविधा उपसम्पदिति **विनयविभाषिकाः** । तस्य उपसंग्रहणार्थमादि-शब्दः ।

१. स्वयम्भूत्वेन बुद्धानां प्रत्येकबुद्धानां च, २. नियमावक्रान्त्या पञ्चकानाम्, ३. एहिभिक्षुकया यशःप्रभृतीनाम्, ४. शास्तुरभ्युपगमात् **महाकाश्यपस्य**, ५. प्रश्नाराधनेन **सोदायिनः**, ६. गुरुधर्माभ्युपगमेन **महाप्रजापत्याः**, ७. दूतेन

---

*परो विज्ञापयतीति* । प्रत्यापयति । *पुद्गलादन्य* इति । श्रामणेरश्रामणेर्युपासकोपासिकोपवाससंवराः ।

*नियमावक्रान्त्या* । आर्यमार्गावतारणेन । *पञ्चकानामाज्ञातकौण्डिन्यादीनाम्* । *एहिभिक्षुकयेति* । 'एहि भिक्षो चर ब्रह्मचर्यम्' इति भगवतो वचने । 'एहीति चोक्तः सुगतेन तायिना मुण्डश्च काषायधरो बभूव' इति । *शास्तुरभ्युपगमान्महाकाश्यपस्येति* । महाकाश्यपः किल यां यां देवताप्रतिमां वन्दते सा सा स्फुटति; तस्य महानुभावात् । स भगवन्तमुपसंक्रम्य न वन्दते—माऽस्य रूपविनाशो भूदिति । तमभिप्रायं विदित्वा भगवांश्चोदयति स्म—वन्दस्व काश्यप तथागतमिति । तेन भगवान् वन्दितः । ततः स भगवतो रूपमविकोपितं दृष्ट्वा—अयं मे शास्तेति स भगवन्तमभ्युपगतः । तदभ्युपगमात् अस्योपसम्पदिति । *प्रश्नाराधनेन सोदायिन इति* । सोदायिना प्रश्नविसर्जनेन भगवानाराधितः, तेनाराधनेन तस्योपसम्पत् । *गुरुधर्माभ्युपगमेनेति* । अष्टौ गुरुधर्माः—१. भिक्षोरन्तिकाद् भिक्षुणीनामुपसम्पत् भिक्षुणीभावः, २. अन्वर्धमासमववादो ग्राह्यो भिक्षोरन्तिकात्, ३. अभिक्षुके आवासे वर्षा नोपगन्तव्याः, ४. प्रवारणायामुभयसङ्घस्त्रिभिः स्थानैः प्रवारयितव्यः, ५. न चोदयितव्यो भिक्षुरापत्तिमापन्नः नाक्रोष्टव्यः, ६. गुरुधर्मापत्तौ मानाप्यमर्धमासं चरितव्यम्, ७. वर्षशतोपसम्पन्नयापि भिक्षुण्या

---

१. विज्ञपयति—का० ।

अभि० को० २ : १६

धर्मदिन्नायाः, ८. विनयधरपञ्चमेन प्रत्यन्तिमेषु जनपदेषु, ९. दशवर्गेण मध्येषु जनपदेषु, १०. शरणगमनत्रैवाचिकेन षष्टिभद्रवर्गपूगोपसम्पादितानामिति । तेषां नावश्यं विज्ञप्त्यधीनः प्रातिमोक्षसंवरः ॥ २६ ॥

स पुनरेष प्रातिमोक्षसंवरः समादीयमानः कियन्तं कालं समादातव्यः ?

**यावज्जीवं समादानमहोरात्रं च संवृतेः ।**

सप्तनैकायिकस्य प्रातिमोक्षसंवरस्य **यावज्जीवं समादानम्**, उपवाससंवरस्य **अहोरात्र**मित्येष नियमः ।

किं कारणम् ? द्वौ हि कालपर्यन्तौ—अहोरात्रपर्यन्तः, जीवितपर्यन्तश्च । अहारोत्राणां पौनरुक्त्येन पक्षादयः ।

कालो नाम क एष धर्मः ? संस्कारपरिदीपनाधिवचनमेतत् । आलोकावस्था हि द्वीपेषु 'दिवसः' इत्युच्यते, तमोऽवस्था 'रात्रिः' । युक्तं तावज्जीवितादूर्ध्वं सत्यपि समादाने संवरस्यानुत्पत्तिः; विसभागत्वादाश्रयस्य तेन च तत्राप्रयोगाद्,

---

तल्लक्षणोपसम्पन्नो भिक्षुर्वन्द्यः, ८. न च भिक्षुण्या कचिद् भिक्षुश्चोदयितव्यः—इत्येवमादयः । एणामभ्युपगमेन तस्या उपसम्पत् । *दूतेन धर्मदिन्नाया इति* । तया किलान्तःपुरगतयैव प्रव्रज्यार्थं बुद्धाय दूतः प्रेषित इति । *विनयधरपञ्चमेनेति* । चत्वारो भिक्षवः=सङ्घः, तत्र च ज्ञप्तिवाचकेन पञ्चमेनोपसम्पाद्यते *प्रत्यन्तिकेषु जनपदेषु* । *मध्यमेषु तु जनपदेषु दशमेन* ज्ञप्तिवाचकेनोपसम्पाद्यते । *षष्टिभद्रवर्ग-पूगोपसम्पादितानामिति* । भद्रो वर्ग एषामिति । *भद्रवर्गाणां* षष्टिः कुलपुत्राः । तेषां *पूगेन* समूहेनोपसम्पादितानाम् । *शरणगमनत्रैवाचिकेन* । 'बुद्धं शरणं गच्छामः' इति त्रिर्वचनेनोपसंपत् । *तेषां नावश्यं विज्ञप्त्यधीन* इति । तेषां विनयधराणामिदं मतम्—*नावश्यं विज्ञप्त्यधीनः प्रातिमोक्षसंवर* इति । बुद्धप्रभृतीनामविज्ञप्त्यधीनत्वात् । अथ वा *तेषामिति* येषां विज्ञप्तिर्नास्त्युपसम्पत्क्रियायाम् ॥ २६ ॥

*"संवृतेः"* इति । संवरस्य । "कालो नित्यः पदार्थोऽस्ति" इत्येके । तदाशंकया पृच्छति—*कालो नाम क एष धर्म* इति । काल इत्यस्याभिधानस्य किमभिधेयमित्यर्थः । *संस्कारपरिदीपनाधिवचनमेतदिति* । संस्काराणामतीतानागतप्रत्युत्पन्नानामभिद्योतकं नामेति । तद् यथा—अतीतः कालो यावत् प्रत्युत्पन्न इति त्रैयध्विकाः संस्कारा एव गम्यन्ते । *तेन च तत्राप्रयोगादिति* । तेन

अस्मरणाच्च ।

अथाहोरात्रादूर्ध्वं पञ्चरात्रं दशरात्रं वा उपवाससमादानस्य कः प्रतिबन्धो बहूनामुपवाससंवराणामनुत्पत्तौ ? इत्थमस्ति प्रतिबन्धो यद्भगवानाहोरात्रिकमेवोपवासं सूत्रे शास्ति स्म । इदमिदानीं सम्प्रधार्यम्—किं तावदहोरात्रादूर्ध्वं संवरस्यानुत्पत्तिं पश्यता तथागतेनाहोरात्रिक उपवासो देशितः, उताहो दुर्बलेन्द्रियाणामाहोरात्रिकेऽपि संवरसमादानेन सन्नियोजनार्थमिति ।

कुतस्त्वेतदेवं तर्क्यते ? अहोरात्रात् परेणापि संवरोत्पत्तौ युक्त्यविरोधात् ।

तदेतत् कस्यचिदप्यहोरात्रादूर्ध्वमदेशनां नेच्छन्ति **वैभाषिकाः** ॥

असंवरस्येदानीं कः कालनियमः ?

**नासंवरोऽस्त्यहोरात्रम्,**

यावज्जीवं पापकर्माभ्युपगमाद**संवर** उपजायते **नाहोरात्रम्**, यथोपवासः ।

किं कारणम् ?

**न किलैवं प्रगृह्यते ॥ २७ ॥**

न किल कश्चिदेवमसंवरं समादत्ते यथोपवासम्—कच्चिदहमहोरात्रमसंवृतः स्यामिति; कुत्सितत्वात् कर्मणः । एवं चैव न कश्चिदादत्ते—कच्चिदहं यावज्जीवमसंवृतः स्यामिति । यावज्जीवमप्यस्य लाभो न स्यात् । यद्यपि नैवमादत्ते, तथाप्यत्यन्तविपन्नेनाशयेन तां क्रियां प्रकुर्वन्नसंवरं प्रतिलभते, न कालान्तरविपन्नेन । उपवाससंवरस्तु समादानबलाधानादनात्यन्तिकेऽप्याशये लभ्यत एव; संवरार्थित्वात् ।

यदि पुनः कश्चिदसंवरेणाप्यर्थी कालान्तरमसंवरं समाददीत, सोऽवश्यं लभेत । न त्वेतद् दृष्टमिति नैवं व्यवस्थाप्यते ॥

---

विसभागेनाश्रयेण तत्र समादाने अप्रयोगात् । *अस्मरणाच्च* तेनाश्रयेण तत्समादानं न स्मरति ।

*वैभाषिक* आह—*कुतस्त्वेतदेवं तर्क्यते* । यथानन्तरमुक्तम् ।

*आचार्य* आह—*परेणापि संवरोत्पत्तौ युक्त्यविरोधादिति* नात्र युक्तिर्विरुध्यते । यथा जीवितादूर्ध्वं सत्यपि समादाने संवरोत्पत्तौ युक्तिविरोधो विसभागाश्रयत्वात् इत्येवमादि । न कालान्तरविपन्नमेति अहोरात्रादि यावत् क्रियाशयेन ॥

अविज्ञप्तिवदसंवरोऽपि नास्ति द्रव्यत इति सौत्रान्तिकाः। स एव तु पापक्रियाभिसन्धिरसंवरः। सानुबन्धो यतः कुशलचित्तोऽपि तद्वानित्युच्यते[1]; तस्यानिराकृतत्वात् ॥ २७ ॥

अथाहोरात्रं गृह्यमाण उपवासः कथं ग्रहीतव्यः ?

**काल्यं ग्राह्योऽन्यतो नीचैः स्थितेनोक्तानुवादिता ।**

**उपवासः समग्राङ्गो निर्भूषेणानिशाक्षयात् ॥ २८ ॥**

**काल्यं** तावत् सूर्योदयकाले; अहोरात्रिकत्वात् संवरस्य। यस्तु पूर्वकृत-समादानः, 'नित्यमष्टम्यामुपवेष्यामि' इति, स भुक्त्वापि गृह्णीयात्।

**अन्यतश्च** ग्रहीतव्यः, न स्वयमेवापरापेक्षया सत्स्वपि प्रत्ययेष्वनतिक्रमार्थम्।

**नीचैः स्थितेनो**त्कुट्टकेन वा जानुपातेन वा कपोतकमञ्जलिं कृत्वाऽन्यत्र स्थास्यात्। अगौरवस्य हि संवरो नोत्पद्यते।

**दातुश्च वचनमनुब्रुवीत**। न पूर्वं न युगपत्। एवं ह्यसौ परस्माद् गृहीतो भवति। अन्यथा हि दानग्रहणं न सिध्येत।

**समग्राङ्गश्चा**ष्टाङ्ग एव ग्रहीतव्यः, न विकलाङ्गः।

**निर्भूषेण** च। आजस्रिकमभ्यलङ्कारं मुक्त्वा। आजस्रिको ह्यलङ्कारो नात्यर्थं मदमादधाति।

---

*अविज्ञप्तिवदसंवरोऽपि नास्ति द्रव्यत इति*। यथा 'नास्त्यविज्ञप्तिर्द्रव्यतः' इति प्रतिपादितम्, तथा असंवरोऽपि न द्रव्यतोऽस्ति। चेतनाव्यतिरिक्त इत्यभिप्रायः। *पापक्रियाभिसन्धिरिति*। पापक्रियाभिप्राय इत्यर्थः। *सानुबन्ध* इति सवासन इत्यर्थः। सवासनश्चेतनाविशेषोऽसंवर इत्यर्थः। *यतोऽ*नुबन्धात् *तद्वा* संवरवानित्युच्यते। असंवरिक इत्यर्थः। *तस्यानिराकृतत्वात्*। तस्याभिसन्धेः सानुबन्धस्यानिराकृतत्वात्। तद्विरुद्धया चेतनयानुपहतत्वादित्यर्थः ॥ २७ ॥

*स भुक्त्वापि गृह्णीयादिति*। सूर्योदय एव संवर उत्तिष्ठते, समादाननियमचित्तस्योत्थापकत्वात्। *भुक्त्वा* ग्रहणं त्वभिव्यक्त्यर्थम्।

*कपोतकमिति*। अङ्गुष्ठरहितस्याङ्गुलिचतुष्कस्येतरहस्ताङ्गुष्ठप्रदेशिन्योरन्तरालविन्यासनात् *कपोतकः* ॥ २८ ॥

---

१. तद्वानुच्यते—का०।

**आगत्रिपरिक्षयाच्च** ग्रहीतव्यः, यावत् पुनः सूर्योदयात् ।

अतोऽन्यथा गृह्णतः सुचरितमात्रं स्यात्, न तूपवाससंवरः । एवं च कृत्वा औरभ्रिकपारदारिकयो रात्रिदिवसोपवासकयोः साफल्यं प्रयुज्यते ।

अर्हतां समीपे वसन्त्यनेनेति **उपवासः**; तेषामनुशिक्षणात् ।

यावज्जीविकसंवरसमीपे वसन्त्यनेनेत्यपरे ।

अल्पकुशलमूलानां कुशलमूलपोषणात् पोषध इति वा ।

"पोषं दधाति मनसः कुशलस्य यस्मा-
दुक्तस्ततो भगवता किल पोषधोऽयम्" । (  ) इति ॥ २८ ॥

किमर्थं पुनरष्टाङ्गान्युपादीयन्ते ? यस्मात्

**शीलाङ्गान्यप्रमादाङ्गं व्रताङ्गानि यथाक्रमम् ।**
**चत्वार्येकं तथा त्रीणि,**

**चत्वारि** तावच्छीलाङ्गानि यावन्मृषावादविरतिः; प्रकृतिसावद्यविरतित्वात् ।

**एकमप्रमादाङ्गं** मद्यपानाद् विरतिः । समात्तशीलोऽपि मद्यपः प्रमाद्येत ।

**त्रीणि व्रताङ्गानि** यावदकालभोजनाद् विरतिः; संवेगानुगुणत्वात् ॥

किं पुनरेभिरप्रमादाङ्गव्रताङ्गैरनुपात्तैः स्यात् ?

**स्मृतिनाशो मदश्च तैः ॥ २९ ॥**

मद्यं हि पिबतः कार्याकार्यस्मृतिरेव नश्येत् । उच्चशयनमहाशयननृत्यगीतादिकं प्रतिसेवमानस्य **मदः** सम्भवेत् । मत्तस्य च दौःशील्यमदूरं भवेत् । काले पुनर्भुञ्जानस्योचितभक्तकालपरिहारादुपवासस्मृतिः संवेगश्चोपतिष्ठेत् । तदभावादुभयं न स्यादिति ।

**केचित्तु** खल्वकालभोजनात् प्रतिविरतिमेवोपवासं मन्यन्ते । तस्य शेषाण्यष्टाङ्गानीति । नृत्यगीतवादित्रं गन्धमाल्यविलेपनं च द्वयं कृत्वा ।

एवं तु सति **सूत्रपाठो** न युज्येत । अकालभोजनाद् विरतिमुक्त्वा "अनेनाहमष्टमाङ्गेन तेषामार्याणामर्हतां शिक्षायामनुशिक्षे, अनुविधीये" इति ।

---

*शीलं* पाराजिकाभावः सङ्घावशेषाद्यभावः । *व्रतमिति* नियमः । *तदभावादिति* । अकालभोजनात् । *उभयं न स्यादिति* । स्मृतिः, संवेगश्च ।

कस्तर्हि सोऽन्य उपवासो यस्येमान्यङ्गानि ? समुदायस्यावयवा अङ्गानि। यथा रथस्याङ्गानि---चतुरङ्गः, बलकायः, पञ्चाङ्गम्, तूर्यम्; तथाऽष्टाङ्ग उपवासो द्रष्टव्यः---अकालभोजनात् प्रतिविरतिरुपवासः, उपवासाङ्गं च। यथा सम्यग्दृष्टि-र्मार्गः, मार्गाङ्गं च धर्मप्रविचयसम्बोध्यङ्गं बोधिर्बोध्यङ्गं समाधिर्ध्यानं ध्यानाङ्गं चेति **वैभाषिकाः**। न तु तेषामेव सम्यग्दृष्ट्यादीनां त एवाङ्गत्वाय कल्पन्त इति। पूर्वकाः सम्यग्दृष्ट्यादय उत्तरेषामङ्गानि यदि स्युः, प्रथमक्षणोत्पन्न आर्य-मार्गो नाष्टाङ्गः स्यात् ॥ २९ ॥

किं खल्वयमुपवासकस्यैवोपवासः, आहोस्विदन्यस्यापि ?

**अन्यस्याप्युपवासोऽस्ति शरणं त्वगतस्य न।**

अनुपवासकोऽपि यस्तमहोरात्रं बुद्धधर्मसङ्घान् शरणं गत्वोपवासं गृह्णाति, तस्योत्पद्यते उपवाससंवरः, नान्यथा; अन्यत्राज्ञानात्।

सूत्र उक्तम्---"यतश्च महानामन् गृही अवदातवसनः पुरुषः पुरुषेन्द्रियेण समन्वागतो बुद्धं शरणं गच्छति, धर्मम्, सङ्घं शरणं गच्छति, वाचं च भाषते---'उपवासकं च मां धारय', इयता उपवासको भवति" (                ) इति। तत् किं शरणगमनादेवोपवासको भवति ? भवतीति **बहिर्देशकाः**।

---

*न तु तेषामिति*। विस्तरेणाचार्यो *वैभाषिक*मतं युक्त्या विरोधयति। *न तु तेषामेव सम्यग्दृष्ट्यादीनां* सम्यग्दृष्टि-धर्मविचयसम्बोध्यङ्ग-समाधीनाम्। *त एव* सम्यग्दृष्ट्यादयो*ऽङ्गत्वाय कल्प्यन्ते*। युज्यन्त इत्यर्थः। कस्माद् ? युक्तिविरोधात्। *पूर्वकाः सम्यग्दृष्ट्यादयः उत्तरेषां* सम्यग्दृष्ट्यादीना*मङ्गानि यदि स्यु*रिति व्यवस्थाप्यते। एवमस्यां कल्पनायां *प्रथमक्षणोत्पन्न आर्यमार्गो नाष्टाङ्गः स्यात्*। न हि तत्र पूर्वोत्पन्ना सम्यग्दृष्टिरङ्गमस्तीति सप्ताङ्गः स्यात्। बोध्यङ्गेष्वपि पश्चिमः क्षणो न बोध्यङ्गं स्यात्। न ह्यन्या परेण बोधिरस्ति, यस्यास्तदङ्गं स्यात्। अथ मतम्---अनागताया बोधेस्तदङ्गमिति ? अनागतबोधिर्न स्यात्। एवं समाधिर्योज्यः ॥ २९ ॥

*अन्यत्राज्ञानादिति*। दातुर्ग्रहीतुर्वा विस्मरणाद्, अव्युत्पत्तेश्च। सन्दिग्धस्य विपन्नाशयस्य वाऽनादरपूर्वकं शरणमवगच्छतः संवरो नोत्पद्यते इति।

*गृही*ति उद्देशपदम्। *अवदातवसन* इति निर्देशपदम्। *पुरुष* इत्युद्देशपदम्। *पुरुषेन्द्रियेण समन्वागत* इति तन्निर्देशपदम्। यदि न विना संवरेणोपासको भवति।

न विना संवरेणेति काश्मीराः ।

यत्तर्हि सूत्र उक्तम् ? नास्त्यत्र सूत्रविरोधः[1] । यस्मादस्योत्पद्यते, तत एव—

**उपासकत्वोपगमात् संवृत्,**

उपासकत्वाभ्युपगमादेवास्योपासकसंवरो जायते । "यदेवाभ्युपगच्छति—'उपासकं मां धारय' इत्याद्यग्रेण यावज्जीवं प्राणापेतम्" इति । प्राणातिपाताद्यपेतमित्यर्थः; मध्यपदलोपात् ।

लघुसंवरस्यापि व्युत्पादनार्थं शिक्षापदानाम्

**उक्तिस्तु भिक्षुवत् ॥ ३० ॥**

यथैवं भिक्षुर्लब्धसंवरोऽपि पुनः शिक्षापदानि ग्राह्यते, श्रामणेरश्च व्युत्पादनार्थम्—इतश्चामुतश्च तव[2] संवर इति, तथोपवासकोऽपि । न तु विना संवरेणोपासकोऽस्ति ॥ ३० ॥

**सर्वे चेत् संवृता एकदेशकार्यादयः कथम् ?**

*यत्तर्हि सूत्र उक्तम्* । तदुक्तमियतोपासको भवतीति । तत् कथमिति वाक्यशेषः । आह—*नास्त्यत्र सूत्रविरोध इति* । महानामसूत्रस्य ।

*"उक्तिस्तु भिक्षुवद्" इति* । उपासकशिक्षापदोक्तिः भिक्षुरिव । यथैव हि भिक्षुर्लब्धसंवरोऽपि ज्ञप्तिचतुर्थेन कर्मणा *शिक्षापदानि* यथास्थूलं *ग्राह्यते* प्रत्याख्यते—*इतश्चामुतश्च* पाराजिकादिभ्यस्तव *संवरः*, अन्यानि च ते सब्रह्मचारिणः कथयिष्यन्तीति । *श्रामणेरश्च* । किम् ? शिक्षापदानि ग्राह्यते लब्धसंवरोऽपि पूर्वम् । यदैव हि तेनाभ्युपगतम्—'अहमेवंनामा तं भगवन्तं तथागतम् अर्हन्तं सम्यक्सम्बुद्धं शाक्यमुनिं शाक्याधिराजं प्रव्रजितमनुप्रव्रजामि, गृहस्थलिङ्गं परित्यजामि, प्रव्रज्यालिङ्गं समाददामि, श्रमणोद्देशं मां धारय' । एवं यावत् त्रिरपीति । *तथोपसकोऽपि* 'बुद्धशरणं गच्छामि, यावत् संघशरणं गच्छामि', द्विरपि, त्रिरपि इति अनेन लब्धसंवरोऽपि पुनः शिक्षापदानि ग्राह्यते—'प्राणातिपातं प्रहाय प्राणातिपातात् प्रतिविरमामि' इति विस्तरेण ॥ ३० ॥

१. विरोधः—का० ।

२. ते—का० ।

यदि सर्व एवोपासका उपासकसंवरस्थाः, कथं भगवता एकदेशकारी, प्रदेशकारी, यद्भूयःकारी, परिपूर्णकारी चोपासक उक्तः ?

**तत्पालनात् किल प्रोक्ताः,**

यो हि यच्छिक्षापदं पालयति स तत्कारीत्युक्तः । सर्वे तु समं संवरस्थाः ।

इदमुत्सूत्रं वर्तते ?

किमत्रोत्सूत्रम् ? उपासकत्वाभ्युपगमादेव संवरलाभः, यस्मात् प्राणातिपातमित्याहेति ?

न ह्येवं सूत्रपाठः उक्तः, यथा महानामसूत्रपाठः[1] । तत्रैव चोपासकलक्षणापदेशः, नान्यत्र । यत्र त्वेष पाठः—"यावज्जीवं प्राणापेतं शरणगतमभिप्रसन्नम्" इति । ततस्ते[2] दृष्टसत्याः पुद्गलाः[3] "अवेत्यप्रसादान्वयं प्राणैरपि सद्धर्मोपगमनं दर्शयन्ति स्म । जीवितहेतोरप्यभव्या वयमेनं धर्मं परित्यक्तुम्" इति । न त्वेष लक्षणापदेशः[4] संवरस्य ।

प्राणापेतं तु न क्वचित् पठ्यते । कश्चैतदपरिस्फुटार्थं पठेत् ।

---

*एकदेशकारी* । य एकं शिक्षापदं रक्षति । *प्रदेशकारी* । यो द्वे रक्षति । *यद्भूयस्कारी* । यस्त्रीणि चत्वारि वा रक्षति । *परिपूर्णकारी* । यः पञ्चापि रक्षति । *स तत्कारीत्युक्त* इति । एकदेशकारी, यावत् परिपूर्णकारीत्यर्थः । *न ह्येवं सूत्रपाठ* इति । *नह्येवं* महानाम*सूत्रपाठो* यावज्जीवप्राणापेतमिति उक्तः । *यथा महानामसूत्रपाठ इति* । "कियता भदन्त उपासको भवति ? यतश्च महानाम गृही विस्तरेण यावदुपासकं मां धारयेति इयतोपासको भवति" इति । *यत्र त्वेष पाठ इति* । यत्र सूत्रान्तरे एष पाठः । *यावज्जीवं प्राणापेतं शरणगतमभिप्रसन्नमिति* । *ततस्ते* दृष्टसत्याः पुद्गला *अवेत्य प्रसादान्वयमवेत्य* प्रसादहेतुकं *प्राणैरपि* जीवितहेतोरपि *सद्धर्मोपगमनं दर्शयन्ति स्म* । *अभव्या वयमेनं धर्मं परित्यक्तुमिति* । *न त्वेष लक्षणापदेशः* संवरस्य । न त्वनेन सूत्रेण लक्षणमपदिश्यते इत्यर्थः । *प्राणापेतं तु न क्वचित् पठ्यत* इति । नापि महानामसूत्रे, नापि दृष्टसत्यसूत्रे । *कश्चैतदपरिस्फुटार्थं पठेदिति* । मध्यपदलोपविकल्पान्न ज्ञायते—किम् प्राणेभ्योऽपेतम्, प्राणैर्वापेतं प्राणपेतम्, उताहो प्राणातिपातादिभ्योऽपेतं प्राणापेत-

---

१. महानामसूत्रे पाठः—का०
२. तत्र ते—का० ।
३. का० पुस्तके नास्ति ।
४. ०णोपदेश.—का० ।

एकदेशकार्यादींस्तु खण्डितशिक्षानधिकृत्य प्रश्न एव न युज्यते, कुतो विसर्जनमावेणिकधर्माणाम्। को ह्युपासकसंवरं जानन् एतन्न ज्ञास्यते—यो हि यच्छिक्षापदं न खण्डयति स तत्कारी भवतीति।

उपासकसंवरस्य तु परिमाणानभिज्ञांस्तन्मात्रशिक्षाक्षमान् प्रत्येष प्रश्नो युज्यते—"कियता भदन्तोपासक एकदेशकारी भवति यावत् परिपूर्णकारी भवति ?"

यदि तर्हि विना संवरेणोपासकः स्याद्, विकलेन वा, भिक्षुश्रामणेरावपि स्याताम्, कथं तावेदषामुपासकसंवरादीनामङ्गप्रतिनियमो भवति ? शास्त्रप्रज्ञप्तिवशात्। उपासकत्वादिप्रतिनियमोऽपि शास्त्रप्रज्ञप्तिवशादिष्यताम्। विनापि हि संवरेणोपासकः प्रज्ञपितः, न तु भिक्षुश्रामणेराविति। ते त्वेतन्नेच्छन्ति काश्मीराः।

सर्वेषां तु संवराणाम्—

मृद्वादित्वं यथा मनः ॥ ३१ ॥

मृदुमध्याधिमात्रत्वं ससन्तानचित्तवशात्। एवं च कृत्वार्हतोऽपि मृदुः प्रातिमोक्षसंवरः स्यात्, पृथग्जनस्याधिमात्रः।

किं पुनः संवरग्रहणादेवोपासकः स्याद् विना शरणगमनैः ? न स्यादन्यत्राज्ञानात् ॥ ३१ ॥

---

मिति। *प्रश्न एव न युज्यत* इति। योऽयं प्रश्नः—'कियता भदन्तोपासक एकदेशकारी भवति यावत् परिपूर्णकारी' इति, एष प्रश्नो न युज्यते। *कुतो विसर्जनमिति*। "इह महानामन्नुपासकः प्राणातिपातं प्रहाय प्राणातिपातात् प्रतिविरतो भवति। इयता महानामन्नुपासकः शिक्षायामेकदेशकारी भवति। विस्तरेण द्वाभ्यां शिक्षापदाभ्यां प्रतिविरतः प्रदेशकारी भवति। त्रिभ्यः प्रतिविरतश्चतुर्भ्यो वा यद्भूयस्कारी भवति"—इत्येतद् विसर्जनं सुष्ठु न युज्यते। *तन्मात्रशिक्षाक्षमान् प्रत्येष प्रश्नो युज्यते* इति। एकस्य शिक्षापदस्य द्वयोस्ततः परेण वा क्षमानिति।

*विनापि संवरेणोपासकः प्रज्ञपित* इति। महानामसूत्रे। "यतः खलु महानामन् गृही अवदातवसनः" इत्येवमादिना।

*अर्हतोऽपि मृदुः प्रातिमोक्षसंवरः स्यादिति*। यदि समुत्थापकमस्य चित्तं मृदु स्यात्। *पृथग्जनस्याधिमात्र* इति। यद्यस्याधिमात्रं चित्तमिति। *अन्यत्रा-*

योो बुद्धधर्मसङ्घाञ्छरणं गच्छति, किमसौ शरणं गच्छति ?

**बुद्धसङ्घकरान् धर्मानशैक्षानुभयांश्च सः ।**
**निर्वाणं चेति शरणं यो याति शरणत्रयम् ॥ ३२ ॥**

यो बुद्धं शरणं गच्छति, अशैक्षानसौ बुद्धकरकान् धर्माञ्छरणं गच्छति; येषां प्राधान्येन स आत्मभावो बुद्ध इत्युच्यते, येषां वा लाभेन सर्वावबोधसामर्थ्याद् बुद्धो भवति। के पुनस्ते ? क्षयज्ञानादयः सपरिवाराः; रूपकायस्य पूर्वं पश्चाच्चाविशेषात् । किं सर्वबुद्धान्, अथैकम् ? लक्षणतः सर्वबुद्धान्; मार्गस्याविलक्षणत्वात् ।

यः सङ्घं शरणं गच्छति, शैक्षाशैक्षानसौ सङ्घकरकान् धर्मान् गच्छति; येषां लाभेनाष्टौ पुद्गलाः सङ्घीभवन्ति, अभेद्यत्वात्[1] । किं सर्वसङ्घान्, अथैकम् ? लक्षणतः सर्वसङ्घान् मार्गस्याविलक्षत्वात् । यत्तु सूत्र उक्तम्—"योऽसौ[2] भविष्य-

---

*ज्ञानादिति* । दातुर्ग्रहीतुश्च । तदानादरतस्तु शरणगमनैर्विना न स्यादुपासक इति ॥ ३१ ॥

*बुद्धकरकानिति* । बुद्धप्रज्ञप्तिहेतून् । अत एवाह—*येषां प्राधान्येन स आत्मभावो बुद्ध इत्युच्यते* । अन्येऽपि हि गुणाः अप्राधान्येनाश्रिता भवन्ति । *येषां वा लाभेनेति* । *क्षयज्ञानादयः सपरिवारा* इति । *आदि*शब्देनानुत्पादज्ञानमशैक्षी च सम्यग्दृष्टिर्गृह्यते । सपरिवारग्रहणेनानास्रवाः पञ्चस्कन्धा गृह्यन्ते । *रूपकायस्य पूर्वं पश्चाच्चाविशेषादिति* । किम् ? न रूपकायं शरणं गच्छतीति सम्बन्धः । यादृशो बोधिसत्त्वावस्थायां रूपकायस्तादृशः पश्चादपीति ।

*लक्षणतः सर्वबुद्धानिति* । न कण्ठोक्तित इत्यभिप्रायः । *मार्गस्याविलक्षणत्वा*-*दिति* । लौकिकस्य मार्गस्य पुण्यज्ञानसम्भारलक्षणस्य लोकोत्तरस्य च क्षयज्ञानादिलक्षणस्या*विलक्षणत्वात्* तुल्यत्वात्, नायुर्जात्यादिलक्षणानाम् । अतस्तुल्यलक्षणाः सर्वे बुद्धा इति ।

*सङ्घीभवन्त्यभेद्यत्वादिति* । सदेवकेनापि लोकेन मार्गं प्रत्यभेद्यत्वात् सङ्घीभवन्ति । समग्ररूपा भवन्तीति । *लक्षणत* इति । पूर्ववद्व्याख्यातव्यम् । *योऽसौ भविष्यतीति* विस्तरः । यत्र भगवांस्त्रपुसभल्लिकौ वणिजावामन्त्रयते स्म—"एतं युवां बुद्धं शरणं गच्छतं धर्मं च । योऽसौ भविष्यत्यनागतेऽध्वनि सङ्घो नाम, तमपि शरणं गच्छतम्" इति । यदा सङ्घो नास्ति तदैवमुक्तमनागतमेव सङ्घम-

---

१. अभेदत्वात्—का० । २. योऽप्यसौ—का० ।

त्यनागतेऽध्वनि सङ्घो नाम, तमपि शरणं गच्छतम्" इति। तत् प्रत्यक्षभाविनः संवररत्नस्योद्भावनार्थम्।

यो धर्मं शरणं गच्छति, असौ निर्वाणं शरणं गच्छति प्रतिसंख्यानिरोधम्; स्वपरसन्तानक्लेशानां दुःखस्य च शान्त्येकलक्षणत्वात्।

यद्यशैक्षा धर्मा एव बुद्धः, कथं तथागतस्यान्तिके दुष्टचित्तरुधिरोत्पादनादानन्तर्यं भवति? आश्रयविपादनात् तेऽपि विपादिता भवन्तीति वैभाषिकाः।

शास्त्रं तु नैवं वाचकम्—अशैक्षा धर्मा एव बुद्ध इति। किं तर्हि? बुद्धकरका इति। अत आश्रयस्य बुद्धत्वाप्रतिषेधादचोद्यमेवैतत्। अन्यथा हि लौकिकचित्तस्थो न बुद्धः स्यान्न सङ्घः, शीलमेव स[1] भिक्षुकरकं भिक्षुः स्यात्?

---

धिकृत्य। तत् कथं सर्वसङ्घानसौ शरणं गच्छतीत्यनेन विरुध्यते। *तत् प्रत्यक्षभाविन इति*। यत् संघरत्नं तयोस्त्रपुसभल्लिकयोः धर्मचक्रप्रवर्तनानन्तरं प्रत्यक्षीभविष्यति, तस्योद्भावनार्थंगुणतः प्रकाशनार्थं स एवाधिकृतो भविष्यतीत्यर्थः।

*शान्त्येकलक्षणत्वादिति*। *स्व-परसान्तानिकानां क्लेशानां दुःखस्य च* या शान्तिः तल्लक्षणमस्येति *शान्त्येकलक्षणं* निर्वाणम्, तद्भावः। तस्मादसौ सर्वं निर्वाणं गच्छति।

*आश्रयविपादनादिति*। तेषामशैक्षाणां यः *आश्रयो* रूपस्कन्धः तस्य *विपादनाद्* विकोपनात् तदाश्रयिणो*ऽपि ते* बुद्धकरका *धर्मा विपादिता भवन्ति। शास्त्रं तु नैवमिति* विस्तरः। अभिधर्मशास्त्रं नेदं *वाचकम्*। नैवं दर्शकम्। *अशैक्षा धर्मा एव बुद्ध* इति। *किं तर्हि? बुद्धकरका* इति। के ते बुद्धकराः? ये बुद्धत्वस्य बुद्धप्रज्ञप्तेश्च हेतवो लौकिकलोकोत्तरा *धर्माः ते बुद्ध* इति। *अत आश्रयस्य* लौकिकपञ्चस्कन्धलक्षणस्य *बुद्धत्वाप्रतिषेधादचोद्यमेवैतत्*। यदुक्तं यद्यशैक्षा धर्मा एव बुद्धः, कथं तथागतस्यान्तिके दुष्टचित्तरुधिरोत्पादनादानन्तर्यं भवतीति। *अन्यथा हीति* विस्तरः। यद्यशैक्षा एव धर्मा बुद्धः, शैक्षाशैक्षधर्मा एव सङ्घः। *लौकिकचित्तस्थो न बुद्धः स्यात्, न सङ्घः*। कस्मात्? न हि लौकिकं चित्तम् अशैक्षा धर्माः शैक्षाश्चेति। यदि वा शैक्षा धर्मा एव बुद्धकरका बुद्धः स्यात्, नाश्रयोऽपि। *शीलमेव स* भिक्षुसंवराख्यं *भिक्षुकरकं भिक्षुः स्यात्* नाश्रयः। आह—यद्याश्रयस्यापि बुद्धत्वम्, कस्मादेवमाह शास्त्रे—यो बुद्धं शरणं गच्छति अशैक्षानसौ बुद्धकरकान् धर्मान् शरणं गच्छतीत्यशैक्षधर्मानेवावधारयति?

---

१. च—का०।

यथा तु यो भिक्षून् पूजयति, भिक्षुकरकमसौ शीलं पूजयति। एवं यो बुद्धं शरणं गच्छति अशैक्षानसौ बुद्धकरकान् धर्मान् शरणं गच्छति। यो बुद्धं शरणं गच्छति, सोऽष्टादशावेणिकान्। बुद्धधर्मानित्यपरे।

किंस्वभावानि शरणगमनानि? वाग्विज्ञप्तिस्वभावानि। कः पुनः शरणार्थः? त्राणार्थः शरणार्थः; तदाश्रयेण सर्वदुःखात्यन्तनिर्मोक्षात्।

उक्तं हि भगवता—

"बहवः शरणं यान्ति पर्वतांश्च वनानि च।
आरामान् चैत्यवृक्षांश्च[1] मनुष्या भयतर्जिताः[2] ॥
न त्वेतच्छरणं श्रेष्ठं नैतच्छरणमुत्तमम्।
नैतच्छरणमागम्य सर्वदुःखात् प्रमुच्यते॥
यस्तु बुद्धं च धर्मं च सङ्घं च शरणं गतः।
चत्वारि चार्यसत्यानि पश्यति प्रज्ञया यदा॥
दुःखं दुःखमनुत्पादं दुःखस्य समतिक्रमम्।
आर्यं चाष्टाङ्गिकं मार्गं क्षेमं निर्वाणगामिनम्॥
एतद्धि शरणं श्रेष्ठमेतच्छरणमुत्तमम्।
एतच्छरणमागम्य सर्वदुःखात् प्रमुच्यते॥" ( ) इति।

अत एव शरणगमनानि सर्वसंवरसमादानेषु द्वारभूतानि॥ ३२॥

---

एवं वैभाषिकेणोक्ते *आचार्यो* दृष्टान्तेन समाधिमाह—*यथा तु यो भिक्षून् पूजयतीति* विस्तरः। यथा तु यो भिक्षुं पूजयति शीलमुखेन। *भिक्षुकरकमसौ शीलं पूजयति*। न च पुनः शीलमेव भिक्षुः। *एवं यो बुद्धं शरणं गच्छतीति*। अशैक्षमुखेन। *अशैक्षानसौ बुद्धकरकान् धर्मान् शरणं गच्छति*। न पुनः स्वसान्तानिका अशैक्षा एव धर्मा बुद्धः। तस्माददोष एषः। यो बुद्धं शरणं गच्छति अशैक्षानसौ बुद्धकरकान् धर्मान् शरणं गच्छतीति। *सोऽष्टादशावेणिकानिति*। तेषामसाधारणत्वादिति अभिप्रायः।

*[illegible]नीति*। ग्रहणकालमधिकृत्य। चैत्यवृक्षांश्चेति। चैत्यकल्पिता *वृक्षाः चैत्यवृक्षाः*। *तानीति*।

*अत एवेति*। *यस्मादेतच्छरणमागम्य सर्वदुःखात् प्रमुच्यते, अतः सर्वसंवरसमादानेषु* उपासकादिसंवरसमादानेषु द्वारभूतानीत्यर्थः॥ ३२॥

---

१ वृक्षांश्चैत्यांश्च—का०। २. ०वर्जिताः—का०।

किं पुनः कारणमन्येषु संवरेष्वब्रह्मचर्याद् विरतिः शिक्षापदं व्यवस्थापितम्, उपासकस्य तु काममिथ्याचारात् ?

**मिथ्याचारातिगर्ह्यत्वात् सौकर्यादक्रियाप्तितः ।**

काममिथ्याचारो हि लोकेऽत्यन्तं गर्हितः; परेषां दारोपघाताद्, आपायिकत्वाच्च । न तथाऽब्रह्मचर्यम् । सुकरा च काममिथ्याचाराद् विरतिर्गृहानध्यावसताम्, दुष्करा त्वब्रह्मचर्यादिति दुष्करं कर्तुं नोत्सहेरन् । आर्याश्चाकरणसंवरं काममिथ्याचारात् प्रतिलभन्ते; जन्मान्तरेष्वप्यनध्याचरणात्, न त्वब्रह्मचर्यादित्युपासकस्यापि तस्मादेव विरतिः शिक्षापदं व्यवस्थापितं मा भूत् परिवृत्तजन्मान्तरः शैक्ष उपासकसंवराङ्गेष्वसंवृत इति । अक्रियानियमो ह्यकरणसंवरः ।

य उपासकाः सन्तो भार्याः परिणयन्ति, किं तैस्ताभ्योऽपि संवरः प्रतिलब्धः ? अथ न ? प्रतिलब्धः, मा भूत् प्रादेशिकसंवरलाभ इति ।

कथं संवरक्षोभो न भवति ? यस्मात्

**यथाभ्युपगमं लाभः संवरस्य न सन्ततेः ॥ ३३ ॥**

यथा ह्येषामभ्युपगमस्तथा संवरलाभः ।

कथं चैषामभ्युपगमः ? काममिथ्याचाराद्विरमामीति, न त्वत्र सन्ताने मया ब्रह्मचर्यं न कर्तव्यमिति । अत एवैषां तदधिष्ठानात् काममिथ्याचाराङ्गादेव संवरलाभः, नाब्रह्मचर्यादिति नास्ति भार्याभूतायां संवरक्षोभः ॥ ३३ ॥

---

*आपायिकत्वाच्च ।* यस्माच्च काममिथ्याचार एकान्तेनापायिकः अपायसंवर्तनीयो *न तथा ब्रह्मचर्यम् । अक्रियानियमो ह्यकरणसंवर* इति अक्रियायामकरणे नियम एकान्तता *अक्रियानियमः । सोऽकरणसंवर. ।* अकरणलक्षणः संवरः अकरणसंवरः । न समादानिकसंवर इत्यर्थः । स च *सौत्रान्तिकनयेना*वस्थाविशेष एव । *वैभाषिकनयेन* तु शीलागमविज्ञप्तिरिति ।

*य उपासकाः सन्त इति* विस्तरः । ये गृहीतपञ्चशिक्षापदाः सन्तो *भार्याः परिणयन्ति* विवाहयन्ति । *किं तैरुपासकैस्ताभ्योऽपि* स्त्रीभ्यः *संवरः प्रतिलब्धः ।* प्रतिलब्धपूर्वक इत्यर्थः । *अ* । *न* । प्रतिलब्ध इत्यधिकृतम् । *वैभाषिक* आह – *प्रतिलब्ध* इति । *मा भूत् प्रादेशिक* इति सर्वागम्यात् प्रतिविरतेः । काममिथ्याचारात् प्रतिविरमामीति अगम्य आचारात् प्रतिविरमामि, न त्वस्मात् सन्तानागम्याचारात् प्रतिविरमामीत्यभिप्रायः । अत एवाह—*न त्वत्र सन्ताने*

अथ कस्मात् मृषावादाद् विरतिरेवोपासकसंवरशिक्षापदम्, न पैशुन्यादिविरतिः ? एभिरेव च त्रिभिः कारणैः—

मृषावादातिगर्ह्यत्वात् सौकर्यादक्रियाप्तितः ।

**मृषावादप्रसङ्गाच्च सर्वशिक्षाव्यतिक्रमे ।**

सर्वत्र हि शिक्षातिक्रमे समनुयुज्यमानस्योपस्थितमिदं भवति—नाहमेवमहार्षमिति मृषावादस्य प्रसङ्गो भवति, अतो मृषावादाद् विरतिर्विधीयते । कथम् ? कृतातिक्रमोऽप्यात्मनि माविष्कुर्यादिति ।

किं पुनः कारणं प्रतिक्षेपणसावद्याच्छिक्षापदस्य न व्यवस्थापितम् ?

**प्रतिक्षेपणसावद्यान्मद्यादेव,**

किं कारणं **मद्यादेव**, नान्यस्मात् ?

**अन्यगुप्तये ॥ ३४ ॥**

मद्यं पिबतोऽन्यान्यप्यङ्गान्यगुप्तानि स्युः ।

कथं पुनर्मद्यपानं प्रतिक्षेपणसावद्यं गम्यते ? प्रकृतिसावद्यलक्षणाभावात् । प्रकृतिसावद्यं हि क्लिष्टेनैव चित्तेनाध्याचर्यते । शक्यं तु मद्यं प्रतीकारबुद्ध्यैव पातुम्, यावन्न मदयेत् । क्लिष्टमेव तच्चित्तं यन्मदनीयं ज्ञात्वा पिबति ।

न तत् क्लिष्टं यदमदनीयमात्रां विदित्वा पिबति ।

प्रकृतिसावद्यं मद्यमिति **विनयधराः** । "कथं भदन्त ग्लान उपस्थातव्यः ? प्रकृतिसावद्यमुपाले[1] स्थापयित्वा" इत्युक्तं **भगवता** ।

शाक्येषु[2] ग्लानेषु मद्यपानं नाभ्यनुज्ञातम् ।

---

इति विस्तरः ॥ ३३ ॥

*प्रतिक्षेपणसावद्यमिति* । प्रतिषेधसावद्यं भवति । भगवत्प्रतिषिद्धं कर्माचरतः पापं भवति; भगवच्छासनानादरात् । *न तत्क्लिष्टं यदमदनीयमात्रां विदित्वा पिबतीत्याभिधार्मिकेणोक्ते प्रकृतिसावद्यं मद्यमिति विनयधराः* साधयन्ति । *प्रकृतिसावद्यमुपाले स्थापयित्वेति* । प्रकृतिसावद्येन कर्मणा न चिकित्स्यः, प्रज्ञप्तिसावद्येन तु चिकित्सनीय इत्यभिप्रायः । *शाक्येषु ग्लानेषु मद्यपानं नाभ्यनुज्ञातम्* । अतो

---

१. ०मुपालिन्—का० । २. शाक्येषु च—का० ।

इदं चोक्तम्—"मां भिक्षवः शास्तारमुद्दिशद्भिः कुशाग्रेणापि मद्यं न पातव्यम्" (          ) इति । अतः प्रकृतिसावद्यमिति ज्ञायते ।

आर्यैश्च जन्मान्तरगतैरप्यनध्याचारात् । प्राणिवधादिवत् । कायदुश्चरित-वचनाद्, दुर्गतिगमनाच्चेति ।

नेत्याभिधार्मिकाः । उत्सर्गविहितस्यापि ग्लानेषु प्रज्ञप्तिसावद्यस्य पुनर्मद्यस्यापवादः प्रसङ्गपरिहारार्थं मदनीयमात्रानियमनात् ।

अत एव च कुशाग्रपानप्रतिषेधः । आर्यैरनध्याचरणं ह्रीमत्त्वात्,

---

गम्यते—प्रकृतिसावद्यं तदिति । यदि हि तत् प्रज्ञप्तिसावद्यं स्यात्, ग्लानशाक्योपस्थानाय तदनुज्ञायेत । न चानुज्ञायते, तेन तत् प्रकृतिसावद्यमिति ।

इदं चोक्तं *मां शास्तारमुद्दिशद्भिः* 'शाक्यमुनिर्नः शास्ता' इत्युपदिशद्भिः *कुशाग्रेणापि मद्यं न पातव्यमिति । प्रकृतिसावद्यं तदिति* भगवता तत् प्रतिषिद्धम् । न तु मदनीयमित्यवेत्य; कुशाग्रमात्रस्य मद्यस्यामदनीयत्वात् ।

*आर्यैश्चेति* विस्तरः । प्रकृतिसावद्यं मद्यं *जन्मान्तरगतैरप्यार्यैरनध्याचारात्* । *प्राणिवधादिवदिति* साधनम् । *कायदुश्चरितवचनाच्चेत्यपरं* साधनम् । 'प्रकृतिसावद्यं मद्यं कायदुश्चरितवचनात् प्राणिवधादिवत्' । चतुर्विधं हि *नन्दिकसूत्रादिषु* कायदुश्चरितमुक्तम्—प्राणातिपातः, अदत्तादानम्, काममिथ्याचारः, सुरामैरेयमद्यप्रमादस्थानमिति ।

*उत्सर्गविहितस्यापीति* विस्तरः । अनेन भगवद्वचनस्य पूर्वापरविरोधं परिहरन्ति । कथं भदन्तेति विस्तरेण मद्यपानस्य सामान्यवचनमुत्सर्गः, 'शाक्येषु ग्लानेषु मद्यपानं नाभ्यनुज्ञातम्' इत्यपवाद इति मद्यपानं ग्लानावस्थायामपि नानुज्ञातमिति गम्यते । अपवादः पुनः प्रसङ्गपरिहारार्थम्, सकृत् पीतं हि मद्यं व्यसनीभवेत् । उक्तं हि भगवता—त्रीणि स्थानानि प्रतिषेवमाणस्य नास्ति तृप्तिर्वा, अलन्ता वा, पर्याप्तिर्वा—मद्यम्, अब्रह्मचर्यम्, स्त्यानमिद्धं चेति । प्रसंगपरिहारः कस्माद् ? इत्याह—*मदनीयमात्रानियमात्* । सैव हि मात्रा द्रव्यकालप्रकृतिशरीरावस्था अपेक्ष्य मदनीया चामदनीया च भवति ।

*अत एव च कुशाग्रपानप्रतिषेध* इत्यतिशयवचनम् । तदेवं न प्रकृतिसावद्यमिति मनसिकृत्वा भगवता तत्परिहरणीयमुक्तम् । किं तर्हि ? प्रसङ्गदोषादिति दर्शितम् । *आर्यैरनध्याचरणं ह्रीमत्त्वादिति* । पञ्च शैक्षाणि बलानि सूत्रे पठ्यन्ते । कतमानि पञ्च ? श्रद्धाबलम्, वीर्यबलम्, ह्रीबलम्, अपत्राप्यबलम्, प्रज्ञाबलं चेति । अतो ह्रीमत्त्वान्न पिबन्ति, न तु प्रकृतिसावद्यत्वात् । यदि ह्रीमत्त्वात्तद-

तेन च स्मृतिनाशात् । अल्पकस्याप्यपानमनियमाद् विषवत् । दुश्चरितवचनं प्रमादस्थानत्वात् ।

अत एवात्रैव प्रमादस्थानग्रहणम्; नान्येषु; तेषां प्रकृतिसावद्यत्वात् । अत्यासेवितेन दुर्गतिगमनाभिधानम् । तत्प्रसङ्गेनाभीक्ष्णमकुशलसन्ततिप्रवृत्तेरापायिकस्य कर्मण आक्षेपाद्, वृत्तिलाभाद्वा ।

सुरामैरेयमद्यप्रमादस्थानमिति कोऽर्थः ? सुरा = अन्नासवः । मैरेयम् = द्रवासवः । ते वा कदाचिदप्राप्तप्रच्युतमद्यभावे भवत इति, अतो मद्यग्रहणम् ।

---

नध्याचरणमज्ञातमुदकादिवत् कस्मान्न पिबन्ति ? इत्यत आह—*तेन च स्मृतिनाशादिति* । मद्यं हि पिबतः कार्याकार्यस्मृतिर्नश्यतीति । यद्येवम्, अल्पकं तु पिबन्तु यावत्या मात्रया स्मृतिर्न नश्यतीति ? अत आह—*अल्पकस्याप्यपानम् । अनियमाद् विषवदिति* । यथा कालप्रकृतिशक्तियोगादल्पमपि विषं कदाचिन्मारयति, एवं मद्यमपि मदयतीति । *दुश्चरितवचनं प्रमादस्थानत्वादिति* । मदेनाकुशलापरिहारात्, कुशलाकरणाच्च ।

*अत्र प्रमादस्थानग्रहणं नान्येष्विति* । *अत्रैव* शिक्षापदे *प्रमादस्थानग्रहणम्*; 'सुरामैरेयमद्यप्रमादस्थानं प्रहाय सुरामैरेयमद्यप्रमादस्थानात् प्रतिविरमामि' इति वचनात् । नान्येषु शिक्षापदेषु प्राणातिपातविरत्यादिषु प्रमादस्थानग्रहणम् । 'प्राणातिपातप्रमादस्थानं प्रहाय प्राणातिपातप्रमादस्थानात् प्रतिविरमामि' इति प्रमादस्थानं न पठ्यते, किं तर्हि ? 'प्राणातिपातं प्रहाय प्राणातिपातात् प्रतिविरमामि' इति । एवमदत्तादानादि योज्यम् । कस्माद् ? इत्याह—*तेषां प्रकृतिसावद्यत्वात्* । तेषां प्राणातिपातविरत्यादीनां शिक्षापदानां प्रकृतिसावद्यत्वात् । तदुक्तं भवति—प्रमादस्थानमेतदिति मद्यपानात् प्रतिविरन्तव्यम्, न तु प्रकृतिसावद्यमेतदिति । *अत्यासेवितेनेति* विस्तरः । "सुरामैरेयमद्यपानप्रमादस्थानेनासेवितेन भावितेन बहुलीकृतेन कायस्य भेदान्नरकेषूपपद्यते" इति *नन्दिकसूत्रे* वचनात् । *अत्यासेवितेन* मद्यपानेन *दुर्गतिगमनाभिधानम्* । *तत्प्रसङ्गेन* मद्यपानप्रसङ्गेन *अभीक्ष्णमकुशलसन्ततिप्रवृत्तेः* । अकुशलानां या *सन्ततिस्तस्याः* प्रवृत्तेः । *आपायिकस्या*पायप्रयोजनस्यापूर्वस्य *कर्मण आक्षेपा*दावेधः । यतः *वृत्तिलाभाद् वा* फलदानाय वा पूर्वोपचितस्य कर्मणो मरणावस्थायां वृत्तिलाभः । यतः तस्मादाक्षेपाद् वृत्तिलाभाद् वा दुर्गतिगमनाभिधानमिति सम्बन्धनीयम् ।

*अन्नासव* इति । तण्डुलकृतः । *द्रव्यासव* इति । इक्षुरसादिकृतः । *ते वेति* विस्तरः । सुरामैरेये *कदाचिदप्राप्तमद्यभावे* यदा नवे भवतः । कदाचित् *प्रच्युतमद्यभावे*; यदा अतिपुराणे भवतः । इत्यतो *मद्यग्रहणम्* । यदि मदनीयं ततो दोष

पूगफलकोद्रवादयोऽपि मदयन्तीति सुरामैरेयग्रहणम् । प्रज्ञप्तिसावद्यस्याप्यादरेण प्रहेयत्वे कारणज्ञापनार्थं प्रमादस्थानवचनम्; सर्वप्रमादास्पदत्वादिति ॥ ३४ ॥

य इमे त्रयः प्रातिमोक्षध्यानानास्रवसंवराः, किमेषां यत एको लभ्यते ततः शेषौ ? नेत्याह । किं तर्हि ?

**सर्वोभयेभ्यः कामाप्तो वर्तमानेभ्य आप्यते ।**

**वर्तमानेभ्य** एव स्कन्धायतनधातुभ्यः **कामाप्त** इति प्रातिमोक्षसंवरः । **सर्वेभ्य** इति मौलप्रयोगपृष्ठेभ्यः । **उभयेभ्य** इति सत्त्वासत्त्वाख्येभ्यः, प्रकृतिप्रतिक्षेपणसावद्येभ्यश्च वर्तमानेभ्य एव स्कन्धायतनधातुभ्यो लभ्यते; सत्त्वाधिष्ठानप्रवृत्तत्वात् । नातीतानागतेभ्यः; तेषामसत्त्वसंख्यातत्वात् ।

---

इत्यभिप्रायः । *पूगफलकोद्रवादयोऽपीति* । *आदिशब्देन* निष्पावादयो गृह्यन्ते । मद्यपानेनामद्यत्वेऽपि दोषः । सुरामैरेये न भवत इति सुरामैरेयस्वभावस्य मद्यस्य पाने दोष इत्यर्थः । *सर्वप्रमादास्पदत्वादिति* । सर्वप्रमादानां सर्वस्मृतिप्रमोषाणां प्राणातिपाताद्यकुशलानां हेतुभूतानां स्थान*मास्पदं* प्रतिष्ठेति प्रमादस्थानं मद्यपानम् ॥ ३४ ॥

*यत एको लभ्यते इति* । यतो मौलादिभ्यः सत्त्वासत्त्वाख्येभ्यश्च प्रातिमोक्षसंवरो लभ्यते । *ततः शेषौ* ध्यानानास्रवसंवरौ ।

*मौलप्रयोगपृष्ठेभ्य* इति । मौलप्रयोगपृष्ठेभ्योऽकुशलेभ्यः कर्मभ्यः मौलप्रयोगपृष्ठस्वभावत्रयाणां यथाक्रमं प्रतिपक्षभूताः प्रातिमोक्षसंवराख्या विज्ञप्त्यविज्ञप्तयो लभ्यन्ते । *सत्त्वासत्त्वाख्येभ्यो* वस्तुभ्यः प्राणिवनस्पत्याद्यधिष्ठानलक्षणेभ्यः *प्रकृतिप्रतिक्षेपणसावद्येभ्यश्च* कर्मभ्यः प्राणातिपातवनस्पतिभङ्गादिलक्षणेभ्यः । तदेतदुभयमप्युभयाधिष्ठानम्, भवति—प्रकृतिसावद्यमपि सत्त्वाधिष्ठानमसत्त्वाधिष्ठानं च, प्रज्ञप्तिसावद्यमपि सत्त्वाधिष्ठानमसत्त्वाधिष्ठानं च । न पुनरेवं ग्रहीतव्यम्—प्रकृतिसावद्यं सत्त्वाधिष्ठानं प्रतिक्षेपणसावद्यमसत्त्वाधिष्ठानमिति । तत्र तावत् प्रकृतिसावद्यं सत्त्वाधिष्ठानं प्राणिवधादि, प्रज्ञप्तिसावद्यमपि सत्त्वाधिष्ठानं भिक्षोः स्त्रीहस्तादिग्रहणं सहागारशय्यादि च । प्रकृतिसावद्यमसत्त्वाधिष्ठानं जातरूपाद्यवहरणम्, प्रज्ञप्तिसावद्यमसत्त्वाधिष्ठानं वृक्षपत्रादिच्छेदो भिक्षो आहारादिषु च *विनयोक्तः* उपदेशः । *सत्त्वाधिष्ठानप्रवृत्तत्वादिति* । सत्त्वप्रज्ञप्त्यधिष्ठानप्रवृत्तत्वादित्यभिप्रायः । वर्तमाना एव हि धर्माः सत्त्वप्रज्ञप्त्यधिष्ठाना नातीतानागताः, तेषां निरूपाख्यकल्पत्वात् । अतएवाह—*नातीतानागतेभ्यः; तेषामसत्त्वसंख्यातत्वादिति* । ननु चासत्त्वप्रज्ञप्त्य-

**मौलेभ्यः सर्वकालेभ्यो ध्यानानास्रवसंवरौ ॥ ३५ ॥**

**मौलेभ्य** एव कर्मपथेभ्यो **ध्यानानास्रवसंवरौ** लभ्येते, न प्रयोगपृष्ठेभ्यः; कुत एव प्रज्ञप्तिसावद्येभ्यः **सर्वकालेभ्यश्च** स्कन्धायतनधातुभ्यो लभ्येते अतीतानागतेभ्योऽपि ।

अत एव चतुष्कोटिकं क्रियते—सन्ति तानि स्कन्धधात्वायतनानि येभ्यः प्रातिमोक्षसंवरः एव लभ्यते, न ध्यानानास्रवसंवराविति विस्तरः । प्रथमा कोटिः—प्रत्युत्पन्नेभ्यः सामन्तकपृष्ठेभ्यः प्रतिक्षेपणसावद्याच्च । द्वितीया—अतीतानागतेभ्यो मौलेभ्यः कर्मपथेभ्यः । तृतीया—प्रत्युत्पन्नेभ्यो मौलेभ्यः कर्मपथेभ्यः । चतुर्थी—अतीतानागतेभ्यः सामन्तकपृष्ठेभ्य इति ।

---

धिष्ठानप्रवृत्तोऽपि प्रातिमोक्षसंवरो भवति; सत्त्वासत्त्वाख्येभ्यः प्राप्यत इति वचनात् ? स चाप्येवं न प्रतिषिध्यते, यथैव हि सत्त्वाख्येभ्यो वर्तमानेभ्य एव लभ्यते इत्युच्यते, तथा वर्तमानेभ्य एवासत्त्वाख्येभ्योऽपि लभ्यते इति वक्तव्यम् । वर्तमानाधिष्ठानतामेव ह्यनेन वचनेनातिदिशति ।

न *प्रयोगपृष्ठेभ्यः* इति । समाहितावस्थायामेकान्तमौलत्वात्, असमाहितावस्थायां च न संवराभावात् । *कुत एव प्रज्ञप्तिसावद्येभ्य* इति । अभ्युपगमाभावात् । *सर्वकालेभ्यश्चेति* । अतीतानागतयोरपि संवरयोर्लाभात्तत्सहभूचित्तवत् :

*अत एवेति* । यस्मादेते संवरा एवं लभ्यन्ते । यथा विस्तरेणोक्तम्, *अतश्चतुष्कोटिकं क्रियते* । *विस्तर* इति । सन्ति तानि स्कन्धधात्वायतनानि येभ्यो ध्यानानास्रवसंवरौ लभ्येते, न प्रातिमोक्षसंवरः; सन्ति तानि येभ्यः प्रातिमोक्षसंवरः, न ध्यानानास्रवसंवरौ; सन्ति तानि येभ्य उभयं लभ्यते; सन्ति तानि येभ्यो नोभयं लभ्यते इति विस्तरार्थः । *प्रथमा कोटिः*—वर्तमानेभ्यः प्राणातिपातादिकर्मपथ*प्रयोगपृष्ठेभ्यः प्रतिक्षेपणसावद्याच्च* वृक्षभङ्गादिकाद् यः संवरः स प्रतिमोक्षसंवरः; "सर्वोभयेभ्यः" इति वचनात् । प्रयोगपृष्ठत्वात्तु न ध्यानानास्रवसंवरौ । *द्वितीया—अतीतानागतेभ्यो मौलेभ्यः कर्मपथेभ्यः* प्राणातिपातादिभ्यः कायिकवाचिकेभ्यः सप्तभ्यः संवरः यः, तौ ध्यानानास्रवसंवरौ; "मौलेभ्यः सर्वकालेभ्यः" इति वचनात् । न प्रातिमोक्षसंवरः अतीतानागतत्वात् । *तृतीया—प्रत्युत्पन्नेभ्यो मौलेभ्यः कर्मपथेभ्य* इति । प्रत्युत्पन्नकर्मपथत्वात् प्रातिमोक्षसंवरो भवति । मौलकर्मपथत्वाच्च ध्यानानास्रसंवरौ । *चतुर्थी—अतीतानागतेभ्यः सामन्तकपृष्ठेभ्य* इति । अतीतानागतत्वान्न प्रातिमोक्षसंवरः, सामन्तकपृष्ठत्वान्न ध्यानानास्रवसंवरौ ।

न तु संवरकाले वर्तमानाः कर्मपथाः सन्तीति वर्तमानाधिष्ठानेभ्य इति वक्तव्यम् । अनागतानामेव संवरणं युज्यते, नातीतवर्तमानानाम् ॥ ३५ ॥

अथ किं संवरासंवरौ सर्वसत्त्वेभ्य एव लभ्येते सर्वाङ्गेभ्यः, सर्वकारणैश्च ? आहोस्विदस्ति भेदः ? नियतं तावत् लभ्यते

**संवरः सर्वसत्त्वेभ्यो विभाषा त्वङ्गकारणैः ।**

**सर्वसत्त्वेभ्यः** एव संवरो लभ्यते । केभ्यश्चिद् अङ्गेभ्यस्तु **विभाषा** । कश्चित् सर्वेभ्यो लभ्यते, भिक्षुसंवरः । कश्चिच्चतुर्भ्यः, ततोऽन्यः । कर्मपथा हि संवरस्याङ्गानि ।

कारणैरपि केनचित् पर्यायेण सर्वैः, केनचिदेकेन ।

केन तावत् सर्वैः ? यद्यलोभाद्वेषामोहाः कारणानीष्यन्ते ।

---

स्वसन्ताने वर्तमानेभ्यः कर्मपथेभ्यः संवरो न युज्यते इति पश्यन्नाह—*न तु संवरलाभकाले वर्तमानाः कर्मपथाः सन्तीति । वर्तमानाधिष्ठानेभ्यस्तेभ्यः* कर्मपथेभ्य *इति वक्तव्यमि*ति शिक्षयत्याचार्यः । यतो वस्तुनः प्रतिविरमति; तस्य वर्तमानत्वासम्भवात् । *नातीतवर्तमानानामि*ति । उत्पन्नत्वादेषां *संवरणं न युज्यते* । न ह्युत्पन्नानामनुत्पत्तिः शक्यते कर्तुम् । *अनागतानां* तु शक्यत इति । तेषामेव संवरणं युज्यत इत्याचार्याभिप्रायः ।

*वैभाषिकाणां* तु तथा वचनेऽयमभिप्रायो लक्ष्यते—प्राणातिपातादिप्रयोगमौलपृष्ठानां यथाक्रमं संवरणात् प्रातिमोक्षसंवरप्रयोगमौलपृष्ठानि प्रवर्तन्ते । मैतानि प्रवर्तिष्यन्त इति । अर्थत एवैतानि प्रतिपक्षभूतानि, तानि रुन्धन्तीवोत्पद्यन्ते । प्रयोगः—प्रयोगमेवं ब्रवीतीव त्वामहं संवृणोमि । मा त्वमुत्था इत्येवं यावत् । पृष्ठः—पृष्ठमेवं ब्रवीतीवेति योज्यम् । तथा स्कन्धधात्वायतनानां कर्मपथप्रयोगमौलपृष्ठस्वभावानां वर्तमानानां रुन्धानो वर्तमानेभ्यस्तेभ्यो लभ्यते । प्रातिमोक्षसंवर इत्युच्यत इति । तस्मान्नैवं वक्तव्यमिति ॥ ३५ ॥

*कश्चित् सर्वेभ्य* इति विस्तरः । *भिक्षुसंवरः* सर्वेभ्यः कर्मपथेभ्यो लभ्यते । सर्वकर्मपथा वर्जनीया इत्यर्थः । *कश्चिच्चतुर्भ्यस्ततोऽन्यः । ततो* भिक्षुसंवरा*दन्यः । संवरः* श्रामणेरादिसंवरः चतुर्भ्य एवाङ्गेभ्यो *लभ्यते* । कायिकेभ्यः प्राणातिपातादिभ्यस्त्रिभ्यः, वाचिकाच्च मृषावादात् ।

*यद्यलोभाद्वेषामोहाः कारणानी*ति । संवरकारणानि द्विधा इष्यन्ते—अलोभाद्वेषामोहा वा कारणानि, मृदुमध्याधिमात्राणि वा चित्तानीति । यदि पूर्वः

केनैकेन ? यदि मृदुमध्याधिमात्राणि चित्तानि कारणानीष्यन्ते ।

पश्चिमं पर्यायं नियमय्योच्यते —

अस्ति संवरस्थायी सर्वसत्त्वेषु संवृतो न सर्वाङ्गैः, न सर्वकारणैः । यो मृदुना चित्तेन मध्येनाधिमात्रेण वा उपासकोपवासश्रामणेरसंवरं समादत्ते ।

अस्ति सर्वसत्त्वेषु संवृतः सर्वाङ्गैश्च, न तु सर्वकारणैः । यो मृदुना चित्तेन मध्येनाधिमात्रेण वा भिक्षुसंवरं समादत्ते ।

अस्ति सर्वसत्त्वेषु सर्वाङ्गैः, सर्वकारणैश्च । यस्त्रिविधेन चित्तेन त्रीन् संवरान् समादत्ते ।

अस्ति सर्वसत्त्वेषु सर्वकारणैश्च, न तु सर्वाङ्गैः । य उपासकोपवासश्रामणेर-संवरान् मृदुमध्याधिमात्रैः समादत्ते ।

यस्तु न सर्वसत्त्वेषु स्यादीदृशो नास्ति; यस्मात् सर्वसत्त्वानुगते कल्याणाशये स्थितः संवरं प्रतिलभते, नान्यथा; पापाशयस्यानुपरतत्वात् ।

पञ्च नियमान् कुर्वन् प्रातिमोक्षसंवरं प्रतिलभते, सत्त्वाङ्गदेशकालसमय-नियमात् । १. अमुष्मात् सत्त्वाद्विरमामीति सत्त्वनियमः । २. अमुष्मादङ्गादिति अङ्गनियमः । ३. अमुष्मिन् देश इति देशनियमः । ४. मासाद्यावदिति काल-नियमः । ५. अन्यत्र युद्धादिति समयनियमः । सुचरितमात्रं तु स्यात् तथा गृह्णतः ।

---

पर्यायोऽभिप्रीयते, *सर्वैः* कारणैरलोभादिस्वभावै*र्लभ्यते* संवरः; कुशले समुत्थापके चेतसि तेषां युगपद्भावात् । *यदि मृद्वादीनीति चित्तानि कारणानि इष्यन्ते* । एकेन कारणेन लभ्यते; तेषामयुगपद्भावात् ।

*पश्चिमं पर्यायमिति* । मृदुतादिकारणपक्षम् ।

*अस्ति संवरस्थायी*ति विस्तरः । *सर्वसत्त्वेषु संवृतः* सर्वसत्त्वानुगते कल्याणाशये सति संवरोत्पत्तेः । *न सर्वाङ्गैः*; उपासकादिसंवरस्य सर्वाङ्गाप्रतिविरतत्वात् । *न सर्वकारणैः*, मृद्वादीनां कारणत्वेन युगपदसम्भवात् । भिक्षुसंवरस्तु सर्वाङ्गैरपि सर्वाङ्गप्रतिविरतत्वात् ।

*यस्त्रिविधेन चित्तेन त्रीन् संवरान् समादत्त* इति । तद्यथा—मृदुना चित्तेन उपासकसंवरं समादत्ते, मध्येन श्रामणेरसंवरम्, अधिमात्रेण भिक्षुसंवरमिति ।

*सर्वकारणैश्च न तु सर्वाङ्गैरिति* । उपासकादिसंवराणामेकैकस्य मृद्वाद्येकैक-कारणत्वात् । *तथा गृह्णत* इति पञ्चनियमक्रियया गृह्णतः ।

कथमशक्येभ्यः संवरलाभः ? सर्वसत्त्वजीवितानुपघाताध्याशयेनाभ्युपगमात्।

यदि पुनः शक्येभ्य एव संवरो लभ्यते, चयापचययुक्तः स्यात्, शक्याशक्यानामितरेतरसञ्चारात् । एवं च सति विनापि लाभत्यागकारणाभ्यां संवरस्य लाभत्यागौ स्यातामिति **वैभाषिकाः** ।

नैवं भविष्यति । यथा ह्यपूर्वतृणाद्युत्पत्तौ शोषे वा संवरस्य वृद्धिह्रासौ न भवतः, तथा शक्याशक्यसंचारेऽपि न स्याताम् ।

न सत्त्वानां पूर्वं पश्चाच्च भावात्, तृणादीनां चाभावात्[1] ।

को न्वत्र विशेषः—न वा भवेदसत्सु तृणादिषु संवरः, तद्वदशक्यो वा भवेत् ?

यदा[2] परिनिर्वृता न भवन्त्येव, तदा कथं संवरह्रासो न स्यादिति नैष युक्तः परिहारः । तस्मात् पूर्वक एव हेतुः[3] साधुः ।

---

*कथमशक्येभ्य* इति । ये हन्तुमेव न शक्यास्तेभ्योऽशक्येभ्यः सत्त्वेभ्यः कथं संवरलाभः ? अत्र *आचार्यः* समाधिमाह—*सर्वसत्त्वजीवितानुपघाताध्याशयेनाभ्युपगमादिति* । सर्वसत्त्वानां जीवितस्यानुपघातेनाध्याशयेन संवराभ्युपगमात् ।

*वैभाषिका* अप्यस्यैव प्रश्नस्य परिहारान्तरमाहुः—*यदि पुनः शक्येभ्य एवेति* विस्तरः । *चयापचययुक्तः स्यात्* । शक्यतामागतेषु सत्त्वेषु संवरश्चीयेत, अशक्यतामागतेषु अपचीयेत । *शक्याशक्यानां* मनुष्यादिदेवादीना*मितरेतरसञ्चारात्* । देवादयो मनुष्यादीन् सञ्चरन्ति, मनुष्यादयश्च देवादीनिति ।

इमं *वैभाषिक*परिहारं सावकाशं पश्यन्नाचार्य आह—*नैवं भविष्यतीति* विस्तरः । नैवं चयापचयुक्तः संवरो भविष्यति । कथं कृत्वा ? *यथा ह्यपूर्वतृणाद्युत्पत्तौ । शोषे वा* । तृणादीनाम् । यद्यपि तृणादिभ्योऽपि संवरो लभ्यते तथापि *संवरस्य वृद्धिह्रासौ न भवतः । एवं शक्याशक्यसंचारेऽपि न स्यातां वृद्धिह्रासौ* । चयापचयावित्यर्थः । तस्माच्छक्येभ्य एव संवरो लभ्यते । न चायं दोषः स्यादिति ।

*वैभाषिका* आहुः—*न सत्त्वानामिति* विस्तरः । न तदेवम्, यथा ह्यपूर्वतृणाद्युत्पत्ताविति विस्तरेण यदुक्तम् । किं कारणम् ? सत्त्वानां *पूर्वं* सञ्चारात् *पश्चाच्च भावात् । तृणादीनां* स्वभावात् पूर्वं पश्चाच्चाभावात् । अतो न तृणादिदृष्टान्तेन चयापचयदोषो निवार्यते । एवं वैधर्म्यमात्रमुक्तम्, न साध्यसाधनार्थं इति ।

*आचार्यः* पुनराह—*यदा परिनिर्वृता न सन्त्येवेति* विस्तरः । *तस्मात् पूर्वक*

---

१. स्वभावात्—का० । २. यदा च—का० । ३. परिहारः—का० ।

एवं तर्हि पूर्वबुद्धपरिनिर्वृतेभ्य उत्तरेषां बुद्धानां प्रातिमोक्षसंवरस्यालाभात् कथं शीलन्यूनता न प्रसज्येत ? सर्वेषां सत्त्वेभ्यो लाभात्। यदि हि तेऽप्यभविष्यन्, तेभ्योऽपि तेऽलप्स्यन्त।

उक्तं यतः संवरो लभ्यते॥

**असंवरस्तु सर्वेभ्यः सर्वाङ्गेभ्यो न कारणैः॥ ३६॥**

असंवरस्तु सर्वसत्त्वेभ्यो लभ्यते, सर्वकर्मपथेभ्यश्च। नास्ति हि विकलेनासंवरेणासंवरिकः। न तु सर्वकारणैः; युगपत् मृद्वादिचित्तासम्भवात्। यो मृदुना चित्तेनासंवरं प्रतिलभते सोऽधिमात्रेणापि चित्तेन प्राणिनं जीविताद् व्यपरोपयन् मृदुनैवासंवरेण समन्वागतो भवति, अधिमात्रया तु प्राणातिपातविज्ञप्त्या।

एवं मध्याधिमात्रेण योज्यम्।

तत्रेमे आसंवरिकाः, तद्यथा—औरभ्रिकाः, कौक्कुटिकाः, सौकरिकाः, शाकुनिकाः, मात्सिकाः, मृगलुब्धकाः, चौराः, वध्यघातकाः, बन्धनपालकाः,

---

एव हेतुः साधुरिति। सर्वसत्त्वजीवितानुपघाताध्याशयेनाभ्युपगमादिति। अतः शक्याशक्येभ्यः संवरो लभ्यत इति सिद्धम्।

*एवं तर्हि* यदि सर्वसत्त्वेभ्यो लभ्यते प्रतिमोक्षसंवरः। *पूर्वबुद्धपरिनिर्वृतेभ्य*स्तस्यालाभाच्छी*लन्यूनता स्यात्*। सत्त्वानां पूर्वेभ्यो न्यूनत्वाद्। *आचार्य* आह—*सर्वेषां* बुद्धानां पूर्वं पश्चाच्चोत्पन्नानामविशेषेण *सर्वसत्त्वेभ्यो लाभाद्*। *यदि हि तेऽपि* अपरिनिर्वृता *अभविष्यन् सम्प्रति तेभ्योऽपि तेऽलप्स्यन्त* इति।

*सर्वकर्मपथेभ्य* इति। कायिकवाचिकेभ्यः। *नास्ति हि विकलेनासंवरेणेति*। प्राणातिपातेनैव, नादत्तादानेनेत्येवमादि। *मृदुनैवासंवरेण समन्वागत* इति। पूर्वप्रतिलब्धत्वात्। *अधिमात्रया तु प्राणातिपातविज्ञप्त्या*। किम् ? समन्वागत इति वर्तते। नं विपाकफलविशेष इति। *एवं मध्याधिमात्रेण च योज्यमिति*। यो मध्येन चित्तेनासंवरं प्रतिलभते सोऽधिमात्रेणापि चित्तेन प्राणिनो जीवताद् व्यवरोपयन् मध्येनैवासंवरेण समन्वागतो भवति, अधिमात्रया तु प्राणातिपातविज्ञप्त्या। एवं योऽधिमात्रेण यावदधिमात्रेणैवासंवरेण समन्वागतो भवति, अधिमात्रया च प्राणातिपातविज्ञप्त्या। इत्थमपि च योज्यम्—योऽधिमात्रचित्तेनासंवरं प्रतिलभते स मृदुनापि चित्तेन प्राणिनो जीविताद् व्यवरोपयन् अधिमात्रेणैवासंवरेण समन्वागतो भवति, मृद्व्या तु प्राणपतिपातविज्ञप्त्या इत्येवमादि।

नागबन्धाः[1], श्वपाकाः, वागुरिकाश्च ।

राजानो दण्डनेतारो व्यावहारिकाश्च अर्थत आसंवरिकाः । असंवरे भवत्वात् तत्रस्थतया असंवर एषामस्तीति आसंवरिका वा । उरभ्रान् घ्नन्तीति औरभ्रिकाः । एवमन्येऽपि योज्याः ।

युक्तस्तावत् संवरस्य सर्वसत्त्वेभ्यो लाभः, सर्वसत्त्वहिताध्याशयेन ग्रहणात्; औरभ्रिकादीनां तु मातापितृपुत्रदारादिष्वविपन्नाशयानां जीवितहेतोरप्यहन्तुकामानां कथमसंवरः सर्वसत्त्वेभ्यो युज्यते ? मात्रादीनपि हि त उरभ्रीभूतान् हन्युः ।

न हि तावत्ते एव[2] त[2] इति विद्वांसो हन्युः । आर्यीभूतानां च पुनः पशूभवितुं नास्त्यवकाश इति तेभ्यः कथं स्यात् ।

यदि वानागतात्मभावापेक्षया वर्त्तमानादसंवृतः स्याद्, उरभ्रादीनपि ते पुत्रीभूतान् सर्वथा न हन्युरिति न स्यात् तेभ्योऽसंवरः ।

कथं हि नाम जिघांसतामेव तेभ्यो न स्यादसंवरः ?

एतन्मात्रादिषु समानम् । कथं हि नामाजिघांसतामेव तेभ्यः स्यादसंवर इति ? यश्चौरभ्रिको जन्मनाप्यादत्ते स्वदारपरितुष्टो मूकश्च, कथमस्य पूर्वाङ्गेभ्यो

---

*नागबन्धा* हस्तिपकाः । *वागुरिका* इति । पम्पा नाम प्राणिजातिर्वागुराख्या, तां घ्नन्तीति वागुरिकाः ।

*अर्थत आसंवरिका* इति । राजानश्चाधिकरणस्थाश्च दण्डनेतृत्वादिहापठिता अपि आसंवरिका एव द्रष्टव्याः । *एवमन्येऽपि योज्या* इति । कुक्कुटान् घ्नन्तीति कौक्कुटिका इत्येवमादीनि ।

*युक्तस्तावदिति* विस्तरेणोक्त्वा यावत् *कथमसंवरः सर्वसत्त्वेभ्यो युज्यत* इति प्रश्निते *वैभाषिकः* परिहारमाह—*मात्रादीनपि हीति* विस्तरः । *आचार्य आह—न हि तावत् त एव त* इति । ते मात्रादय इति जानाना हन्युरित्यघात्येभ्यस्तेभ्योऽसंवरः कथं युज्यते । किञ्च—*आर्यीभूतानां पुनः पशूभवितुं नास्त्यवकाशः* । तेषामुरभ्राद्युपपत्त्यसम्भवाद् । *तेभ्यः कथमसंवरः स्यात्* । *यदि वा अनागतात्मभावापेक्षया* उरभ्रादयो भविष्यन्तीति *वर्तमानान्मात्रादेरसंवरः स्यात्* । उरभ्रानपि ते *औरभ्रिकाः पुत्रीभूताननागते* जन्मनि *सर्वथा न हन्युरिति न स्यात्तेभ्योऽसंवरः* ।

*वैभाषिक* आह—*कथं हि नाम जिघांसतामिति* विस्तरः । *आचार्य* आह—*एतन्मात्रादिषु समानमिति* विस्तरः । *कथं हि* नामा*जिघांसतां* पुत्रादिभूतानामौरभ्रिकादीनां *तेभ्यो* मात्रादिभ्यः *स्यादसंवर* इति ।

---

१. नागबन्धकाः—का० ।　　　　२–२. त एव—का० ।

ऽसंवरः स्यात् ? आशयस्याविपन्नत्वात् । मूकोऽपि च वाक्प्रापणीयमर्थं कायेन प्रापयितुं शक्त इति ।

यस्तर्हि द्वे त्रीणि वा शिक्षापदानि समादत्ते । सर्वथा नास्ति विकलः प्रादेशिकश्चासंवरिक इति **वैभाषिकाः** ।

यथाभ्युपगमं विकलोऽपि स्यात् प्रादेशिकोऽप्यसंवरः संवरश्च, अन्यत्राष्टविधादिति **सौत्रान्तिकाः**; तन्मात्रशीलदौःशील्यप्रतिबन्धात् ॥ ३६ ॥

उक्तमिदमसंवरस्य येभ्यो लाभः ॥

कथं तु लाभ इति नोक्तम्, तत इदमुच्यते—

**असंवरस्य क्रियया लाभोऽभ्युपगमेन वा ।**

द्वाभ्यां कारणाभ्यामसंवरो लभ्यते— १. वधप्रयोगक्रियया तत्कुलीनैः; २. तत्कर्माभ्युपगमाच्चान्यत्र कुलीनैः—वयमप्यनया जीविकया जीविष्याम इति ।

**शेषाविज्ञप्तिलाभस्तु क्षेत्रादानादरेहणात् ॥ ३७ ॥**

क्षेत्रं वा तद्रूपं भवति, यत्रारामादिप्रदानमात्रेणाविज्ञप्तिरुत्पद्यते ; यथा—औपधिकेषु पुण्यक्रियावस्तुषु । अथ वा समादानमादत्ते—बुद्धमवन्दित्वा न भोक्ष्ये, तिथिमासार्धमासभक्तानि वा नित्यं करिष्यामीत्यादि । आदरेण वा तद्रूपेण क्रियामीहते कुशलामकुशलां वा, यतोऽस्याविज्ञप्तिरुत्पद्यते ॥ ३७ ॥

उक्तमेतद्यथा संवरासंवरेतराणां प्रतिलाभः ॥

---

*विकलः* । कर्मपथाङ्गतः । *प्रादेशिकोऽपि स्यात्* । एकस्यापि अङ्गस्य अविरमात् । सत्त्वदेशकालसमयनियमयोगेन प्रदेशविरतत्वात् ।

*संवरश्च* तथैव विकलोऽपि प्रादेशिकोऽपि स्यात् । *अन्यत्राष्टविधात्* पूर्वोक्तात् प्रातिमोक्षसंवरात् । कस्माद् ? इत्याह—*तन्मात्रशीलदौःशील्यप्रतिबन्धादिति* । असंवरस्तन्मात्रं शीलं प्रतिबध्नाति, संवरश्च तन्मात्रं दौःशील्यं प्रतिबध्नातीति ॥ ३६ ॥

*तत्कुलीनैरिति* आसंवरिककुलीनैः ।

"*क्षेत्रादानादरेहनात्*" इति । *आदरेण* ईहनं क्रियारम्भः । *क्षेत्रं चादानं च आदरेहनं* चेति समासः । तस्मादविज्ञप्तिरुत्पद्यते । *तिथीति* विस्तरः । तिथिभक्तम् । यावदर्धमासभक्तमित्यर्थगतिः । *आदिशब्देन* मण्डलकरणादि गृह्यते । *आदरेण वा तद्रूपेणेति* । तीव्रक्लेशतया, तीव्रप्रसादतया चेत्यर्थः ॥ ३७ ॥

त्याग इदानीं वक्तव्यः । तत्र तावत्—

**प्रातिमोक्षदमत्यागः शिक्षानिक्षेपणाच्च्युतेः ।**

**उभयव्यञ्जनोत्पत्तेर्मूलच्छेदान्निशात्ययात् ॥ ३८ ॥**

दाम्यन्त्यनेनेति दमः संवरोऽभिप्रेतः; तेनेन्द्रियदमनात् । चतुर्भिः कारणैः प्रातिमोक्षसंवरस्य त्यागः, स्थापयित्वोपवासम्—१. शिक्षापदानां विज्ञपुरुषस्यान्तिके प्रत्याख्यानाद्, २. आशयतः निकायसभागत्यागात्, ३. युगपदुभयव्यञ्जनप्रादुर्भावात्, ४. कुशलमूलसमुच्छेदाच्च ।

उपवाससंवरस्य त्वेभिश्चतुर्भिः, ५. आरात्रिक्षयाच्च । तान्येतान्यभिसमस्य पञ्च त्यागकारणानि भवन्ति ।

किं पुनः कारणमेभिः कारणैस्त्यागो भवति? समादानविरुध्यविज्ञप्त्युपादात्, आश्रयत्यागाद्, आश्रयविकोपनात्, निदानच्छेदात्, तावदेवाक्षेपाच्च ॥ ३८ ॥

**पतनीयेन चेत्येके,**

अन्ये पुनराहुः—चतुर्णां पतनीयानामन्यतमेन भिक्षुश्रामणेरसंवरत्याग इति ।

**सद्धर्मान्तर्धितोऽपरे ।**

सद्धर्मस्यान्तर्धानादित्यपरे; यस्मादन्तर्हिते सद्धर्मे सर्वशिक्षासीमाकर्मान्ताः प्रतिप्रस्रभ्यन्त इति ।

---

*समादानविरुद्धविज्ञप्त्युत्पादादिति* । यावज्जीवं प्राणातिपातादिभ्यः प्रतिविरमामीति यत् समादानं तेन विरुद्धाया विज्ञप्तेरुत्पादादिति प्रथमेन कारणेन प्रातिमोक्षसंवरत्यागः । *आश्रयत्यागादिति* । येनाश्रयेण संवरो गृहीतस्तस्य त्यागान्मरणादिति द्वितीयेन कारणेन तत्त्यागः । *आश्रयविकोपनादिति* । यादृशेन आश्रयेण संवर उपात्तस्तादृशो न भवति विकोपनात् इति तृतीयेन कारणेन तत्त्यागः । *निदानच्छेदादिति* । निदानं कुशलमूलानि, तस्य च्छेदात्, चतुर्थेन कारणेन तत्त्यागः । *तावदेवाक्षेपाच्चेति* । उपवाससंवरस्याहोरात्रमाक्षेपः, इति पञ्चमेन कारणेन तस्योपवाससंवरस्य त्यागः पूर्वोक्तैश्चतुर्भिः कारणैरिति ॥ ३८ ॥

*पतनीयेन* चेति । एभिश्च यथोक्तैः पञ्चभिः कारणैः । पतनीयेन चेति पतन्त्यनेनेति पतनीयम् । तच्च*तुर्विधम्*—अब्रह्मचर्यं यथोक्तप्रमाणम्, अदत्तादानम्, मनुष्यवधः, उत्तरिमनुष्यधर्ममृषावादश्चेति ।

धनर्णवत्तु काश्मीरैरापन्नस्येष्यते द्वयम् ॥ ३९ ॥

काश्मीरास्तु खलु वैभाषिकाः एवमिच्छन्ति—न मौलीमप्यापत्तिमापन्नस्यास्ति भिक्षुसंवरत्यागः। किं कारणम्? न ह्येकदेशक्षोभात् कृत्स्नसंवरत्यागो युक्त इति। नैव चान्यामप्यापत्तिमापन्नस्यास्ति शीलच्छेदः। किं तर्हि? द्वयमस्य भवति—शीलम्, दौःशील्यं च। यथा कस्यचिद्धनं स्याद्, ऋणं च। आविष्कृतायां तु तस्यामापत्तौ शीलवान् भवति, न दुःशीलः; यथा ऋणं शोधयित्वा धनवान् भवति, न त्वृणवान् इति।

यत्तर्हि भगवतोक्तम्—"भिक्षुर्भवत्यश्रमणोऽशाक्यपुत्रीयो ध्वस्यते भिक्षुभावात्, क्षतमस्य भवति श्रामण्यं ध्वस्तं पतितं पराजितम्" इति? परमार्थभिक्षुत्वं सन्धायैतदुक्तम्।

इदमभिसाहसं वर्तते? किमत्राभिसाहसम्? यद् भगवता नीतार्थं पुनरन्यथा नीयते, दौःशील्याय च बहुक्लेशेभ्यः प्रत्यया दीयन्ते।

कथमेतन्नीतार्थम्? एष हि विनये निर्देशः—"चतुर्विधो भिक्षुः—१. संज्ञाभिक्षुः, २. प्रतिज्ञाभिक्षुः, ३. भिक्षत इति भिक्षुः, ४. भिन्नक्लेशत्वात् भिक्षुः।

---

*"धनर्णवत्तु काश्मीरैरापन्नस्येष्यते"*। आगमाद्, युक्तितश्च। तत्रायमागमः। *विनय* उक्तम्—"दुःशीलश्चेत् भिक्षुर्भिक्षुणीमनुशास्ति संघावशेषमापद्यते" (          ) इति। आपन्नपाराजिको हि भिक्षुर्दुःशीलोऽभिप्रेतः, नानापन्नपाराजिकः; प्रकृतस्थः शीलवानिति विपर्ययेण वचनात्। अतोऽवगम्यते—अस्त्यस्य दुःशीलस्यापि सतो भिक्षुभावः, यस्मात् सङ्घावशेषमापद्यत इत्युक्तमिति। युक्तिरपि—*न ह्येकदेशक्षोभात् सकलसंवरत्यागो युक्त* इति। *न मौलीमप्यापत्तिम् आपन्नस्येति*। पतनीयामप्यापत्तिमापन्न-[illegible]। *नैव चान्यापत्तिमिति*। सङ्घावशेषादिकम्। *आविष्कृतायामिति*। देशितायाम्।

*यत्तर्हि भगवतोक्तमिति* विस्तरेण यावत् *पराजितमिति*। तत् कथमिति वाक्याध्याहारः। *परमार्थभिक्षुत्वं सन्धायैतदुक्तमिति*। सत्यदर्शना[illegible]भव्यत्वेन तस्यापन्नस्य परमार्थभिक्षुत्वाप्राप्तेः।

बहुक्लेशेभ्यो नन्दप्रभृतिभ्यो मौल्यप्यापत्त्या न भिक्षुत्वं नश्यति इति विदित्वा तां कुर्युरिति वाक्यार्थः।

*संज्ञाभिक्षुरिति*। यस्यानुपपसम्पन्नस्य भिक्षुरिति नाम। *प्रतिज्ञाभिक्षुरिति*। अब्रह्मचर्यादिप्रवृत्तो दुःशीलः। *भिक्षत इति भिक्षुरिति*। याचनकः। *भिन्नक्लेश-*

अस्मिंस्त्वर्थे ज्ञप्तिचतुर्थकर्मोपसम्पन्नो भिक्षुः" (　　　) इति । न चासौ पूर्वं परमार्थभिक्षुरासीद्यतः पश्चादभिक्षुर्भवेत् ।

यच्चोक्तम्—एकदेशक्षोभादिति, अत्र शास्त्रैव दत्तोऽनुयोगः—"तद्यथा तालो मस्तकाच्छिन्नोऽभव्योऽङ्कुरितत्वाय, अभव्यो विरूढिं वृद्धिं विपुलतामाप्तुम्" (　　　) इत्युपमां कुर्वता ।

कः पुनरुपमार्थः ? एकमेकदेशस्यापि मूलभूतस्य च्छेदादभव्यः संवरशेषो विरोढुमिति । स च गुर्वीं भिक्षुभावमर्यादाभेदिनीं मौलीमापत्तिमापद्यमानस्तीव्रानपत्राप्ययोगात् संवरस्य मूलं च्छिनत्तीति युक्तः कृत्स्नसंवरत्यागः ।

यस्य चैकग्रासपरिभोगोऽपि, एकपादपार्ष्णिप्रदेशपरिभोगोऽपि च नाभ्यनुज्ञायते साङ्घिकयोराहारविहारयोः, सर्वभिक्षुसंभोगबहिष्कृतश्च शास्त्रा; यं चाधिकृत्योक्तम्—

"नाशयत　कारण्डवकं　कशंवकमपकर्षत ।
अथोत्प्लाविनं वाहयत अभिक्षुं भिक्षुवादिनम्" ॥ (　　　) इति ।

तस्य कीदृशो भिक्षुभावः ? यादृशोऽस्तु, अस्ति तु भिक्षुभावः । तथा हि—"चत्वारः श्रमणा न पञ्चमोऽस्ति चुन्द" इति ।

---

त्वाद् *भिक्षुरिति* । अर्हन् ।

*अस्मिंस्त्वर्थ* इति । यद् भगवतोक्तम्—'*अभिक्षुर्भवत्यश्रमणः*' इति विस्तरेण, एतस्मिन्नर्थे । यथोक्तेभ्यश्चतुर्भ्यो भिक्षुभ्योऽन्य एवायं पञ्चमो *ज्ञप्तिचतुर्थोपसम्पन्नो भिक्षुरिति* । यदप्युक्तम्—परमार्थभिक्षुत्वं सन्धायैतदुक्तम्, तत् प्रत्याह—*न चासौ पूर्वं परमार्थभिक्षुरासीद्, यतः पश्चादभिक्षुर्भवेत्* । "अभिक्षुर्भवत्यश्रमणः" इति वचनात् ।

*इत्युपमां कुर्वतेति* । *मस्तकच्छिन्नतालोपमां कुर्वता* शास्त्रैव दत्तोऽनुयोग इति सम्बन्धनीयम् । परिहृतः प्रश्न इत्यर्थः । *एकग्रासपरिभोग* आहारस्य । *एकपार्ष्णिप्रदेशपरिभोगो* विहारस्येति सम्बन्धः । *सर्वभिक्षुसम्भोगबहिष्कृतश्च शास्त्रेति* । सर्वस्मात् भिक्षुभिः सहसम्भोगादेकपंक्तिभोजनादिकाद् बहिष्कृतो बुद्धेन ।

*नाशयत कारण्डवकमिति* । *कारण्डवको* यवाकृतित्वात् यवस्तृणविशेषो यो यवदूषीत्युच्यते । एवमसावभिक्षुर्भिक्ष्वाकृतिरिति । *कशंवकं* नाम पूतिकाष्ठम् । एवमसौ पूतिभूतो भिक्षुः । तं शीलवत् सङ्घाद् *यूयमपकर्षतेति* भगवान् भिक्षून् आज्ञापयामास । *अथोत्प्लाविनं वाहयतेति* । *उत्प्लावी* नाम व्रीहिमध्येऽभ्यन्तर-

**भगवानवोचत्**—

'मार्गजिनो मार्गदेशिको मार्गे जीवति यश्च मार्गदूषी" इति ? अस्त्येतदुक्तम्; स त्वेष आकृतिमात्रावशेषत्वाच्छ्रमण उक्तो दग्धकाष्ठ-शुष्कह्रद-शुकनाशा-पूतिबीजालातचक्र-मृतसत्त्ववत् ।

यदि हि दौःशील्यादभिक्षुः स्यात् शिक्षादत्तको न स्यात् ?

न वयं ब्रूमः—सहाध्यापत्त्या सर्वः पाराजिको भवति । यस्तु पाराजिकः सोऽवश्यमभिक्षुः । कश्चित्तु सन्तानविशेषान्न पाराजिक एकचित्तेनाप्यप्रतिच्छादनादिति व्यवस्थापितं **धर्मस्वामिना** ।

यदि तर्हि पाराजिको न भिक्षुः, किं पुनर्न प्रव्राज्यते ? तीव्रानपत्राप्यविपादितत्वात् सन्ततेः संवराभव्यात्, न तु खलु भिक्षुभावापेक्षया । तथा ह्यसौ

---

तण्डुलहीनो व्रीहिरेव । तथासौ शीलसारहीनो भिक्ष्वाकृतिः, तं प्रवाहयत । निष्कामयतेत्यर्थः । इदमत्रोदाहरणम् ।

*मार्गजिनः* शैक्षाशैक्षः । *मार्गदेशिको* बुद्धः । *मार्गे जीवति* शीलवान् भिक्षुः, मार्गनिमित्तं जीवनात् । *मार्गदूषी* दुःशीलः । *दग्धकाष्ठेति* विस्तरः । यथा यद् दग्धं न तत् काष्ठम्; पूर्वकाष्ठाकृतिमात्रावशेषसाधर्म्यात् तद् दग्धकाष्ठम् इत्युच्यते । ह्रदश्च *शुष्कोऽपि* ह्रद इत्युच्यते । *शुकनासा* गृहादिषु रूण्कारकृता शुकनासाकृतित्वात् शुकनासेत्युच्यते । एवमसौ भिक्ष्वाकृतिसामान्यमात्रावशेषा*च्छ्रमण उक्तः । पूतिबीजम् ।* अङ्कुराजनकत्वात् अबीजमपि बीजमित्युच्यते; तदाकारमात्रावशेषत्वात् । *अलातचक्रं* चक्रमिति । चक्राकृतित्वात् । *मृतसत्त्वश्च ।* असत्त्वोऽपि सत्त्व इत्युच्यते; सत्त्वाकृतिमात्रावशेषत्वात् । तद्वदेष द्रष्टव्यः ।

*शिक्षादत्तको नाम भिक्षुरधिमात्ररागतया* स्त्रिया अब्रह्मचर्यं कृत्वा तदनन्तरमेव जातसंवेगः कष्टं मया कृतमित्येकस्मिन्नपि प्रतिच्छादनचित्तेऽनुत्पन्ने भिक्षुसङ्घमुपगम्याविष्करोति—इदं मया पापं कृतमिति । स आर्यसङ्घोपदेशात् सर्वभिक्षुनवकान्तिकत्वादि दण्डकर्म कुर्वाणः शिक्षादत्तक इत्युच्यते । तद् *यदि दौःशील्यादभिक्षुरेव स्यात् ।* स न स्यात् । न हि तस्य पुनरुपसम्पादनं क्रियते, भिक्षुश्च स व्यवस्थाप्यते । तस्मात् न दौःशील्यात् अभिक्षुत्वमिति । *न ब्रूम* इति विस्तरः । *न वयं ब्रूमः—सहाध्यापत्त्याऽब्रह्मचर्यादेव सर्वः पाराजिको भवति । किं तर्हि ?* प्रतिच्छादनचित्तेन ।

*किं न पुनः प्रव्राज्यते ।* अनिक्षिप्तशिक्ष इत्यध्याहार्यम् । *तीव्रानपत्राप्यविपादितत्वात् ।* तीव्रेणानपत्राप्येन विपादितास्य सन्ततिः, तस्याः *सन्ततेरेवं*

निक्षिप्तशिक्षोऽपि न प्रव्राज्यते ।

कश्चायमनर्थे निर्बन्धो यद्यसौ तथाभूतोऽपि भिक्षुः, नमोऽस्तु तस्मै तादृशाय भिक्षुत्वाय !

सद्धर्मान्तर्धाने तु विनयकर्माभावादपूर्वसंवरलाभो नास्ति । लब्धस्य तु नास्ति त्यागः ॥ ३९ ॥

अथ ध्यानानास्रवसंवरयोः कथं त्यागः ?

**भूमिसञ्चारहानिभ्यां ध्यानाप्तं त्यज्यते शुभम् ।**

सर्वमेव ध्यानाप्तं कुशलं द्वाभ्यां कारणाभ्यां परित्यज्यते—१. उपपत्तितो वा भूमिसञ्चारादूर्ध्वं चावश्यम्, २. परिहाणितो वा समापत्तेः, निकायसभागत्वाच्च किञ्चित् ।

यथा च रूपाप्तं कुशलं भूमिसञ्चारहानिभ्यां त्यज्यते,

**तथारूप्याप्तमार्यं तु फलाप्त्युत्तप्तिहानिभिः ॥ ४० ॥**

अनास्रवं तु कुशलं त्रिभिः कारणैः परित्यक्ष्यते—१. फलप्राप्तितः पूर्वको मार्गः परित्यक्ष्यते, २. इन्द्रियोत्तापनेन मृद्विन्द्रियमार्गः, ३. परिहाणित उत्तरो मार्गः—फलम्, फलविशिष्टो वा । एवं यावत् संवरास्त्यज्यन्ते ॥ ४० ॥

---

विपादितत्वात् *संवरस्याभव्यत्वम् ।* तस्मान्न पुनः प्रव्राज्यत इत्यधिकारः । *न तु खलु भिक्षुभावापेक्षया ।* न तु खलु तस्य भिक्षुभावोऽस्तीत्यपेक्षया न प्रव्राज्यते । *तथा ह्यसौ* पराजयिको *निक्षिप्तशिक्षोऽपि न प्रव्राज्यते ।* तीव्रानपत्राप्यविपादितत्वात् सन्ततेः ॥ ३९ ॥

*"ध्यानाप्तम्" इति ।* रूपस्वभावं कुशलमरूपस्वभावं चाभिप्रेतम् । अत एव च *सर्वमेवेति* व्याचष्टे । *द्वाभ्यामिति ।* उपपत्तितो वा, परिहाणितो वा । तेनाह—*उपपत्तितो* वेति विस्तरः । ऊर्ध्वमुपपद्यमानोऽधरं परित्यजति, अधश्चोपपद्यमान उपरिभूमिकमिति । *परिहाणितो वा समापत्तेः ।* तत्समापत्तिसंगृहीतं कुशलं त्यज्यते । *निकायसभागत्यागाच्च किञ्चिदिति ।* निर्वेधभागीयं यत् पृथग्जनावस्थायामुत्पादितं यावत् क्षान्तिरिति । तदसत्यपि भूमिसञ्चारे निकायसभागत्यागेन त्यज्यते । यदा कामधातौ मृत्वा तत्रैवोपपद्यते । वक्ष्यति हि—'भूमित्यागात् त्यजत्यार्यस्तान्यनार्यस्तु मृत्युतः' ( अभि० को० ६.२२ ) इति । *पूर्वको मार्ग इति ।* प्रयोगानन्तर्यविमुक्तिमार्गस्वभावः प्रतिपन्नकमार्गः । *फलं फलविशिष्टो*

**असंवरः संवराप्तिमृत्युद्विव्यञ्जनोदयैः ।**

त्रिभिः कारणैरसंवरच्छेदः—१. संवरप्राप्तितः । यदि संवरं समादत्ते ध्यानसंवरं वा लभते, हेतुप्रत्ययबलेन समाधिलाभात्; तेनासंवरश्छिद्यते, प्रतिद्वन्द्वबलीयस्त्वात् । २. मरणेनाश्रयत्यागात् । ३. द्विव्यञ्जनोत्पादेनाश्रयविकोपनादिति ।

शस्त्रजालत्यागेऽप्यकरणाशयतः । संवरमन्तरेणासंवरच्छेदो नास्ति, निदानपरिवर्जनेऽप्यौषधमन्तरेण प्रवृद्धरोगाविनिवृत्तिवत् ।

य आसंवरिक उपवासं गृह्णाति, किमसौ तस्मात् संवरात् पुनरसंवरं गच्छति ? आहोस्विन्नैवसंवरं नासंवरम् ?

असंवरमित्येके; त्यागाशयस्यानात्यन्तिकत्वात् ।

प्रदीप्त इवायःपिण्डः पुनः श्यामतां नाप्रयुज्यमानो गच्छतीत्यपरे; तल्लाभस्य विज्ञप्त्यधीनत्वात् ।

अथ संवरासंवरविनिर्मुक्ता कथमविज्ञप्तिस्त्यज्यते ?

**वेगादानक्रियार्थायुर्मूलच्छेदैस्तु मध्यमा ॥ ४१ ॥**

---

वेति । उत्तरो मार्गोऽधिकृतः । तद् यथानागामी यद्यनागामिफलात् परिहीयते तेनानागामिफलमुत्तरो मार्गस्त्यज्यते । यदि त्वनागामी द्वितीयं ध्यानं लभते तस्माच्च परिहीयते, स तस्य फलविशिष्टो मार्गो द्वितीयभूमिकस्त्यज्यते ॥ ४० ॥

*हेतुप्रत्ययबलेनेति* । सभागहेतुबलेन, परतो घोषबलेन चेत्यर्थः । *ध्यानसंवरं वा लभत* इति । अनास्रवसंवरं वा लभत इति नोच्यते; ध्यानासंवरपूर्वोत्पादेनैव तत्त्यागात् । *अकरणाशयत* इति । एतत् कर्म न करिष्यामीत्याशयतोऽपि *शस्त्रजालत्यागे विना संवरग्रहणेनासंवरच्छेदो न भवति* । तद्यथा—*रोगनिदानपरिहारेऽपि* तस्य *प्रवृद्धस्य रोगस्यौषधेन* विना विनिवृत्तिर्न भवति, तद्वत् । तदुक्तं भवति—असंवरत्यागेच्छायां संवरो ग्रहीतव्यः, नान्यथेति ।

*तल्लाभस्येति* । असंवरलाभस्य ।

*कथमविज्ञप्तिरिति* । विज्ञप्तिरपीति वक्तव्यम् । स्वसमुत्थापिताया अतीताया विज्ञप्तेस्तत्काल एव प्राप्तिच्छेदात् ।

"*वेगादानक्रियार्थायुर्मूलच्छेदैस्तु मध्यम*" इति च पठितव्यम् । नैवसंवरनासंवर इत्यर्थः । अथाप्यविज्ञप्तिरपि केवलोच्यते ? तत्र विज्ञप्तेरवचने कारणं वक्तव्यमित्युच्यते; विज्ञप्तेरनावश्यकत्वात् । तथा हि वक्ष्यति—"अशुभाः षड-

येन ह्यसौ प्रसादक्लेशवेगेनाविज्ञप्तिराक्षिप्ता भवति, तस्य च्छेदात् सापि च्छिद्यते । कुम्भकारचक्रेषुगतिवत् ।

आदानत्यागादपि च्छिद्यते । यदि समादानं त्यजति, अलं समादानेनेति ।

क्रियाविच्छेदादपि विच्छिद्यते यथासमात्तमकुर्वतः ।

अर्थविच्छेदादपि विच्छिद्यते । कतमस्यार्थस्य ? चैत्यारामविहारशयनासन-यन्त्रजालादिनो वस्तुनः ।

आयुषोऽपि, कुशलमूलानामपि च्छेदाद् विच्छिद्यते । यदा कुशलमूलानि समुच्छेत्तुमारभत इति । एभिः षड्भि कारणैरविज्ञप्तिर्मध्यमा त्यज्यते ॥ ४१ ॥

**कामाप्तं कुशलारूपं मूलच्छेदोर्ध्वजन्मतः ।**

कामावचरं कुशलमरूपस्वभावं द्वाभ्यां कारणाभ्यां परित्यज्यते—१. कुशलमूलसमुच्छेदाद्, २. रूपारूप्यधातूपपत्तितो वा ।

**प्रतिपक्षोदयात् क्लिष्टमरूपं तु विहीयते ॥ ४२ ॥**

क्लिष्टं त्वरूपस्वभावं सर्वमेव प्रतिपक्षोदयाद् विहीयते । यस्योपक्लेश-

---

विज्ञप्तिर्द्विधैक" ( अभि० को० ४.६८ ) इति । अविज्ञप्तिवचनेन च विज्ञप्ति-वचनसिद्धेस्तदवचनम् ।

अन्ये त्वाहुः—न निरुद्धाया नैवसंवरनासंवरसंगृहीताया विज्ञप्तेरनुबन्धिनी प्राप्तिरिति, अत एतदविज्ञप्तेरेव त्यागकारणमुच्यत इति ।

*कुम्भकारचक्रेषुगतिवदिति* । यथा कुम्भकारचक्रस्य इषोश्च गतिः । येन कारणेन संस्कारविशेषेण आक्षिप्तो भवति, तस्य छेदात् सापि विद्यते; तद्वत् ।

*अलं समादानेनेति* । प्रत्याख्यानवचनेन । *यथा समात्तमकुर्वत* इति । तद् यथा बुद्धमवन्दित्वा मण्डलकमकृत्वा वा न भोक्ष्ये इति, तदकृत्वा भुञ्जानस्य सा मध्यमा अविज्ञप्तिश्छिद्यते ।

*यन्त्रजालादीति* । *आदिशब्देन* शस्त्रविषादि गृह्यते ।

*कुशलमूलानि समुच्छेत्तुमारभत* इति । कुशलमूलसमुच्छेदप्रारम्भावस्थायामेव छिद्यते, न समुच्छेदावस्थायामिति दर्शयति ॥ ४१ ॥

*"कुशलारूपम्" इति* । अरूपग्रहणं रूपच्छेदस्योक्तत्वात् । *मूलच्छेदोर्ध्वजन्मत* इति । अत्र वैराग्यतश्च किञ्चिदिति वक्तव्यम् । यथा कुशलं दौर्मनस्येन्द्रियमिति ।

*सर्वमेवेति* । कामरूपारूप्यावचरम् । *यः प्रहाणमार्ग* इति । दर्शनमार्गः, भावनामार्गश्च । लौकिको वा लोकोत्तरो वा यथासम्भवम् । *असौ सपरिवार*

प्रकारस्य यः प्रहाणमार्गस्तेनासौ सपरिवारः परित्यज्यते, नान्यथा ॥ ४२ ॥

अथ केषां सत्त्वानामसंवरो भवति ? केषां संवरः ?

**नृणामसंवरो हित्वा षण्ढपण्डद्विधाकृतीन्**[1] ।

**कुरूंश्च,**

मनुष्यगतावेवासंवरः, नान्यत्र । तत्रापि षण्ढपण्डकोभयव्यञ्जनानुत्तर-कौरवांश्च हित्वा ।

**संवरोऽप्येवं देवानां च,**

**संवरो** हि मनुष्याणामेव यथोक्तं हित्वा **देवानां** चेति गतिद्वये संवरः ।

षण्ढादीनां संवरो नास्तीति कथं गम्यते ? सूत्राद्, विनयाच्च ।

सूत्र उक्तम्—"यतश्च महानामन् गृही अवदातवसनः पुरुषः पुरुषेन्द्रियेण समन्वागतो बुद्धं शरणं गच्छति यावद्वाचं भाषते—'उपासकं मा धारय', इयता चोपासको भवति" ( ) इति ।

विनयेऽपि तद्रूपो नाशयितव्य उक्तः ।

किं पुनः कारणमेषां संवरो नास्ति ? उभयाश्रयक्लेशाधिमात्रतया प्रति-संख्यानाक्षमत्वात्, तीव्रह्रीव्यपत्राप्याभावाच्च ।

असंवरस्तर्हि कस्मान्नास्ति ? पापेऽप्यस्थिराशयत्वात् ।

यत्रैव च संवरः, तत्रासंवरोऽपि; प्रतिद्वन्द्वभावात् ।

---

इति । असावुपक्लेशप्रकारः स तत्सहभूप्राप्त्यनुचरः । *उपक्लेशप्रकारस्येति* ग्रहणं क्लेशस्याप्युपक्लेशशब्देन सर्वसंग्रहार्थम् । तथा हि शास्त्रे उक्तम्—"ये यावत् क्लेशा उपक्लेशा अपि ते स्युः, उपक्लेशा न क्लेशाः" इति ॥ ४२ ॥

*उभयाश्रय* इति विस्तरः । स्त्रीपुरुषाश्रयस्य *क्लेशस्याधिमात्रतया* । *प्रति-संख्यानस्य* तत्प्रतिपक्षभावनालक्षणस्याक्षमत्वात् । *तीव्रस्य* च *ह्रीव्यपत्राप्यस्या-भावा*देषां संवरो नास्तीति ।

*प्रतिद्वन्द्वभावादिति* । यस्मात् संवरस्यासंवरः प्रतिद्वन्द्वभूतः, तस्मात् *यत्रैव संवरस्तत्रैवासंवर* इति । तेषां षण्ढादीनामसंवराभावे द्वितीयं कारणम् ।

---

१ शण्ढ०—का० ।

उत्तरकौरवाणां समादानसमाध्यभावात्, पापक्रियाशयाभावाच्च संवरासंवराभावः ।

आपायिकानामपि तीव्रं ह्रीव्यत्राप्यं नास्ति; यद्योगाद् यद्विपादनाच्च संवरासवरौ स्याताम् ।

अपि खल्वाश्रय एव स तेषां तादृश ऊषरक्षेत्रभूतः षण्ढपण्डकोभयव्यञ्जनोत्तरकौरवापायिकानाम्, यत्राश्रये संवरोऽपि न विरोहति, असंवरोऽपि, ऊषर इव क्षेत्रे शस्यमप्यतिमात्रं कक्वमपीति ।

यत्तर्हि सूत्र उक्तम्—"अण्डजो भिक्षवो नागोऽष्टम्यां पक्षस्य भावनादभ्युद्गम्याष्टाङ्गसमन्वागतमुपवासमुपवसति" (                ) इति ! सुचरिमात्रं तत् तेषाम्, न संवरः । तस्मादेव मनुष्याणामेव संवरः ।

तत्र पुनः—

**नृणां त्रयः ॥ ४३ ॥**

मनुष्याणां सर्वे **त्रयः** प्रातिमोक्षादिसंवराः संविद्यन्ते ॥ ४३ ॥

**कामरूपजदेवानां ध्यानजः,**

ध्यानसंवरः कामरूपधातूपन्नानां देवानामूर्ध्वं नास्ति ।

**अनास्रवः पुनः ।**

**ध्यानान्तरासंज्ञिसत्त्ववर्ज्यानामप्यरूपिणाम् ॥ ४४ ॥**

अनास्रवसंवरस्तु कामरूपधातूपपन्नानामप्यस्ति ध्यानान्तरिकासंज्ञिसत्त्वोपपन्नान् वर्जयित्वा ।

आरूप्योपपन्नानामपि तेषां तु समन्वागमतोऽस्ति, न सम्मुखीभावतः ॥४४॥

---

*समादानसमाध्यभावादिति* । समादानाभावात् प्रातिमोक्षसंवरो नास्ति, समाध्यभावाच्च ध्यानानास्रवसंवरौ न स्तः । तदभावस्तु मान्द्येन कुशलेष्वव्युत्पत्तेः । *पापक्रियाशयाभावाच्चासंवरो नास्ति* ।

*यद्योगाद् यद्विपादनाच्चेति* । येन ह्रीव्यपत्राप्येण योगाद्, यस्य ह्रीव्यपत्राप्यस्य विपादनाच्च । यथाक्रमं *संवरासंवरौ स्याताम्* । *तत्तीव्रं ह्रीव्यपत्राप्यमापायिकानां नास्तीति* । यद्यापायिकानां संवरासंवरौ न स्तः ।

*यत्तर्हि सूत्र उक्तमिति* विस्तरः । तत् कथम् ? प्रातिमोक्षसंवरो मनुष्याणामेव न देवानाम्; असंवेगात् । ध्यानानास्रवसंवरौ तु हेतुकर्मधर्मभावनाद् यथासम्भवम् ॥ ४३–४४ ॥

अतः परमिदानीं कर्मनिर्देशाधिकारात् सूत्रोद्दिष्टानां कर्मणां निर्देश आरप्स्यते—

त्रीणि कर्माणि—कुशलं कर्म, अकुशलम्, अव्याकृतं कर्मेति। तत्र—

**क्षेमाक्षेमेतरत् कर्म कुशलाकुशलेतरत्।**

इदं कुशलादीनां लक्षणम्। क्षेमं कर्म कुशलम्, यदिष्टविपाकं निर्वाणप्रापकं च; दुःखपरित्राणात्।

तत्कालमत्यन्तं च अक्षेममकुशलम्, क्षेमप्रतिद्वन्द्वभावेन यस्यानिष्टो विपाकः।

ताभ्यामितरत् कर्म नैव क्षेमं नाक्षेमम्, यत्तत् कुशलाकुशलाभ्यामितरद् वेदितव्यम्। अव्याकृतमित्यर्थः। पुनः—

**पुण्यापुण्यमनिञ्जं च सुखवेद्यादि च त्रयम्॥ ४५॥**

त्रीणि कर्माणि—पुण्यम्, अपुण्यम्, आनिञ्ज्यं च। पुनः त्रीणि—सुखवेदनीयं कर्म, दुःखवेदनीयम्, अदुःखासुखवेदनीयं च॥ ४५॥

तत्र तावत्—

**कामधातौ शुभं कर्म पुण्यमानिञ्ज्यमूर्ध्वजम्[1]।**

'शुभम्' इति वर्तते। रूपारूप्यावचर कुशलं कर्म आनिञ्जम्।

ननु च त्रीणि ध्यानानि सेञ्जितान्युक्तानि भगवता—"यदत्र वितर्कितं विचारितमिदमत्रार्या इञ्जितमित्याहुः" इत्येवमादि ? समाधौ सापक्षालतां तेषामधिकृत्यैवमुक्तम्। आनिञ्ज्यान्यपि तु तान्युक्तान्यानिञ्ज्यसूत्रे। आनिञ्ज्यप्रत्यय[2]-गामिनीं प्रतिपदमारभ्य।

---

*तत्कालमत्यन्तं चेति।* यदिष्टविपाकं तत् तत्कालम्; दुःखपरित्राणात् क्षेमम्। यन्निर्वाणप्रापकं तदत्यन्तं दुःखपरित्राणात् क्षेमम्। परिनिर्वृतस्य यन्नित्यकालं दुःखं नास्ति॥ ४५॥

*ननु च त्रीणि ध्यानानि सेञ्जितान्युक्तानि भगवता। यदत्र वितर्कितं विचारितमिदमत्रार्या इञ्जितमित्याहुरिति।* आदिशब्देन द्वितीय उक्तं यदत्र प्रीतिरविगता, इदमत्रार्या इञ्जितमित्याहुः। तृतीयेऽपि यदत्र सुखं सुखमिति चेतस आभोगः, इदमत्रार्या इञ्जितमित्याहुरिति। अथ कस्मात् सर्वमेव रूपारूप्यावचरं कुशलं कर्मानिञ्जयमुच्यते ? *आनिञ्ज्यप्रत्ययगामिनीमिति।* आनिञ्ज्यानुकूलभागिनम्

---

१. ०मानेञ्ज०—का०। एवमुपर्यपि। २. आनिञ्जसम्प्रेय—का०।

किं पुनः कारणं सेञ्जितमेवान्यत्रानिञ्ज्यमुक्तम् ?

**तद्भूमिषु यतः कर्मविपाकं प्रति नेञ्जति ॥ ४६ ॥**

कामावचरं हि कर्म विपाकं प्रति कम्पते । कथं कम्पते ? अव्यवस्थानात् । अन्यगतिकमपि ह्यन्यस्यां गतौ विपच्यते । अन्यदेवनैकायिकं चान्यदेवनिकाये । यदेव हि प्रमाणबलवर्णकर्मान्यभूमिकसुखभोगादि संवर्तनीयं कर्म देवेषु विपच्यते, तदेव कदाचिदन्यप्रत्ययवशान्मनुष्यतिर्यक्प्रेतेषु विपच्यते ।

रूपारूप्यावचरं तु कर्मान्यभूमिकमन्यस्यां भूमौ विपक्तुं न जातूत्सहते । तस्माद् व्यवस्थितविपाकत्वाद् 'आनेञ्ज्यम्' इत्युच्यते । अपुण्यं तु कर्माकुशलमिति प्रसिद्धं लोके । यश्च लोकतोऽर्थः प्रसिद्धः, किं तत्र यत्नेन ॥ ४६ ॥

कृतः पुण्यादीनां कर्मणां निर्देशः ॥

सुखवेदनीयादीनां कर्तव्यः । स एष क्रियते—

**सुखवेद्यं शुभं ध्यानादातृतीयात्,**

कुशलं कर्म सुखवेदनीयं यावत् **तृतीयाद् ध्यानात्** । एषा हि भूमिः सुखाया वेदनाया यदुत कामधातुस्त्रीणि च ध्यानानि ।

**अतः परम्** ।

**अदुःखासुखवेद्यं तु,**

---

अकम्प्यानुकूलभागिनं *मार्गमारभ्येति* अर्थः ।

*किं पुनः कारणं* समाधिसापक्षालतया *सेञ्जितमेवान्यत्रानिञ्ज्यमुक्तम् ?* इत्याह—*"तद्भूमिषु यतः कर्म विपाकं प्रति नेञ्जति"* इति ।

*भोगादि संवर्तनीयमिति* । भोगः = द्रव्यसम्पत् । *आदिशब्देन* सौरूप्य-सौस्वर्यादिर्गृह्यते । *तदेवेति* विस्तरः । यत्तद् देवेषु *विपच्येत* । तद्बहुलीकृतमेवं शीलमयं भावनामयम् । तस्य चैवं भवति—'अहो बताहं देवसुभगानां मनुष्यसुभगानां वा सभागतायामुपपद्येय' इति । यावत् स तत्रोपपद्यत इति ॥ ४६ ॥

*कामधातुस्त्रीणि च ध्यानानीति* । कामधातुप्रथमध्यानयोः कायिकं सुखं चैतसिकं च सौमनस्यं सुखा वेदना । द्वितीये ध्याने सौमनस्यं सुखा वेदना । तृतीये ध्याने चैतसिकं सुखमिति ।

'शुभम्' इति वर्तते। तृतीयध्यानात् परेण कुशलं कर्मादुःखासुखवेदनीयम्; सुखदुःखवेदनाभावात्।

**दुःखवेद्यमिहाशुभम् ॥ ४७ ॥**

अकुशलं कर्म दुःखवेदनीयम्। इहग्रहणं कामधातावेव तद्भावज्ञापनार्थम्। न चैषां वेदनैव फलम्। किं तर्हि? ससम्भारा ॥ ४७ ॥

**अधोऽपि मध्यमस्त्येके,**

अन्ये पुनराहुः—तदेतन्मध्यमदुःखासुखवेदनीयं कर्मोक्तम्, एतच्चतुर्थध्यानादधोऽप्यस्ति। किं कारणम्?

**ध्यानान्तरविपाकतः।**

इतरथा हि ध्यानान्तरकर्मणो विपाको न स्याद्, ध्यानान्तरे वा कस्यचित् कर्मणः; तत्र सुखदुःखयोरभावात्।

ध्यानान्तरकर्मणो ध्यान एव सुखेन्द्रियं विपाक इत्येके।

नैव तस्य वेदना विपाक इत्यपरे।

---

*तद्भावज्ञापनार्थमिति*। तच्छब्देन दुःखमभिसम्बुध्यते। तस्य दुःखस्य कामधातावेवास्तित्वज्ञापनार्थमिहग्रहणम्। *ससम्भारेति*[1]। सम्भ्रियते उत्पाद्यतेऽनेनेति सम्भारः=इन्द्रियविषयाश्रयलक्षणः, तेन ससम्भारा वेदना फलम् ॥ ४७ ॥

*"ध्यानान्तरविपाकतः"* इति। *ध्यानान्तरकर्मणो* ध्यानान्तरोत्पत्तौ *विपाकेन* वेदितेन भवितव्यम्। तत्र सुखा दुःखा वा वेदना नास्ति। तस्मादस्यादुःखासुखा वेदना विपाक इति। चतुर्थाद् ध्यानादधोऽप्यदुःखासुखवेदनीयं कर्मास्तीति। *ध्यानान्तरे वा कस्यचित् कर्मणो*ऽन्यस्य *विपाको* वेदना *न स्यात्* न सम्भवति। न हि सुखवेदनीयस्य मौलप्रथमध्यानभूमिकस्य कर्मणो ध्यानान्तरे स विपाक इति युज्यते वक्तुम्; सवितर्कत्वेन ध्यानान्तरतो मौलस्य निहीनत्वात्। नापि कामावचरस्य दुःखवेदनीयस्य कर्मणः; भूम्यन्तरत्वात्। अत एव चतुर्थध्यानादिभूमिकस्य। ततो वीतरागत्वाच्च। एतद्दोषपरिजिहीर्षया *ध्यानान्तरकर्मणो ध्यान एव सुखेन्द्रियं विपाक इत्येके ब्रुवते*।

*नैव तस्य* ध्यानान्तरकर्मणो *वेदना विपाकः*। किं तर्हि? रूपादीत्यपरे। किं तेषां ध्यानान्तरोपपत्तौ वेदना नास्ति? अस्ति। न तु सा विपाकस्वभावा। किं तर्हि? नैष्यन्दिकीति।

---

१. ससम्भारैरिति—मुद्रितः पाठः।

तदेतदुच्छास्त्रम् । शास्त्रे हि पठितम्—"स्यात् कर्मणश्चैतसिक्येव वेदना विपाको विपच्येत । स्यात् कुशलस्यावितर्कस्य कर्मणः" इति ।

**अपूर्वाचरमः पाकस्त्रयाणां चेष्यते यतः ॥ ४८ ॥**

यतश्चोक्तं सूत्रे—"स्यात् त्रयाणां कर्मणामपूर्वाचरमो विपाको विपच्येत । स्यात् सुखवेदनीयस्य रूपं दुःखवेदनीयस्य चित्तचैत्ता धर्माः । अदुःखासुखवेदनीयस्य चित्तविप्रयुक्ताः" इति, अतोऽप्यस्त्यदुःखासुखवेदनीयं कर्माधस्तात् । न हि कामधातोरन्यत्रास्ति युगपत् कर्मत्रयस्य विपाके संयोगः ।

किमिदानीं तत् कुशलम् ? आहोस्विदकुशलम् ? दुर्बलं तु तत् ।

एवं तर्हि "सुखवेद्यं शुभं ध्यानादातृतीयात्" ( अभि० को० ४.४७ ), "इष्टविपाकं च कुशलम्" इत्यस्य विरोधः ? बाहुलिक एष निर्देशो द्रष्टव्यः ।

---

अत्राचार्य आह—*तदेतदुच्छास्त्रम्* । यदेतदुक्तम्—'ध्यानान्तरकर्मणो ध्यान एव सुखेन्द्रियं विपाकः' इति, यच्चोक्तम्—'नैव तस्य वेदना विपाकः' इति, तदेतदुभयमप्युच्छास्त्रम् । तत् प्रतिपादयन्नाह—*शास्त्रे हि पठित*मिति विस्तरः । *अवितर्कस्य कर्मण* इति । ध्यानान्तरकर्मण इत्यर्थः । अतः कुशलस्यावितर्कस्य कर्मणश्चैतसिक्येव वेदना विपाको विपच्यत इत्यवधारणान्न तस्य कर्मणो ध्यान एव सुखेन्द्रियं विपाकः, नापि वेदनातोऽन्य इति गम्यते । अवितर्कं हि कर्म ध्यानान्तरात् प्रभृत्यूर्ध्वमिति ।

*"अपूर्वाचरमः"* इति । न पूर्वम्, न पश्चाद् । युगपदित्यर्थः ।

*सुखवेदनीयस्य रूपमिति* चक्षुरादिकम् । *दुःखवेदनीयस्य चित्तचैत्ता* इति । पञ्चविज्ञानकायिकाः; दौर्मनस्यस्याविपाकत्वात् । *अदुःखासुखवेदनीयस्य चित्तविप्रयुक्ता* इति । जीवितेन्द्रियादयः । *न हि कामधातोरन्यत्रेति* । दुःखवेदनीयस्य कर्मणोऽन्यत्राभावात् ।

*किमिदानीं* तदिति । अदुःखासुखवेदनीयम् । *एवं तर्ही*ति विस्तरः । यद्यधोऽपि चतुर्थाद् ध्यानाददुःखासुखवेदनीयं कर्मास्ति कुशलम् । *सुखवेद्यं शुभं ध्यानादातृतीयादिति अस्य विरोधः* । न हि केवलं सुखवेदनीयं कुशलमातृतीयाद्ध्यानात् । किं तर्हि ? अदुःखासुखवेदनीयमप्यस्तीति । *इष्टविपाकं च कुशलमित्यस्य विरोधः* । न हि केवलमिष्टविपाकं कुशलम्, इष्टानिष्टविपरीतविपाकमकुशलमस्तीति । *बाहुलिक एष निर्देश* इति । बाहुल्येनैवं निर्दिष्टमित्यर्थः—सुखवेद्यं शुभं ध्यानादातृतीयादिति, इष्टविपाकं च कुशलमिति ।

कथं पुनरवेदनास्वभावं कर्म सुखवेदनीयमित्युच्यते ? सुखवेदनायै हितं सुखवेदनीयम्, सुखोऽस्य वेदनीय इति वा ।

कश्च वेदनीयः ? यो विपाकः । स ह्यसौ विद्यते सुखस्य वा वेदनीयं येन सुखं वेदयते, स्नानीयकषायवत् ।

एवं दुःखवेदनीयम्, अदुःखासुखवेदनीयं च द्रष्टव्यम् ॥ ४८ ॥

अपि च—

**स्वभावसम्प्रयोगाभ्यामालम्बनविपाकतः ।**
**सम्मुखीभावतश्चेति पञ्चधा वेदनीयता ॥ ४९ ॥**

१. स्वभाववेदनीयता वेदनानाम्; स्वभावेनैव वेदनीयत्वात् ।

२. सम्प्रयोगवेदनीयता स्पर्शस्य; "सुखवेदनीयः स्पर्शः" इति ।

३. आलम्बनवेदनीयता विषयाणाम् । **यथोक्तम्**—"चक्षुषा रूपाणि दृष्ट्वा रूपप्रतिसंवेदी भवति, नो तु रूपरागप्रतिसंवेदी" (        ) इत्येवमादि । वेदनया हि तामालम्बमानः प्रतिसंवेदयते ।

---

*कथं पुनरवेदनास्वभावमिति* । सुखमनुभूयते, न कर्मेत्येवमभिसमीक्ष्य इति । *सुखवेदनायै हितं सुखवेदनीय*मिति । सुखवेदनोत्पत्त्यनुकूलमित्यर्थः । *सुखोऽस्य वेदनीय इति वेति* । सुखोऽस्य विपाकोऽनुभवनीय इत्यर्थः ।

*स्नानीयकषायवदिति* । यथा येन स्नाति स *स्नानीयः कषायः* । एवं येन सुखं विपाकं वेदयते तत् कर्म वेदनीयम् । *सुखस्य* विपाकस्य *वेदनीयं* कर्म सुखवेदनीयम् । करणेऽपि कृत्यविधानादेतत् । *एवं दुःखवेदनीय*मिति । दुःखवेदनाहितं दुःखवेदनीयमिति विस्तरेण पूर्ववद् योज्यम् । *एवमदुःखासुखवेदनीय*मिति ॥ ४८ ॥

*स्वभाववेदनीयते*ति । स्वभाववेदनानुभवलक्षणेन वेदनीयस्वभावः । एवं यावत् सम्मुखीभावेन वेदनीयतेति योज्यम् ।

*सुखवेदनीयः स्पर्श* इति । सुखवेदनाहितं सुखं वेदनीयमस्मिन्निति सुखवेदनीयः स्पर्शः ।

*आलम्बनवेदनीयते*ति । वेदनीया विषयाः । आलम्बनीया इत्यर्थः ।

*रूपप्रतिसंवेदी नो तु रूपरागप्रतिसंवेदी*ति । रूपं प्रत्यनुभवति । नो तु रूपरागं प्रत्यनुभवतीत्यर्थः । अथवा नो तु स रूपं रागेण प्रत्यनुभवति, आलम्बत इति ।

४. विपाकवेदनीयता कर्मणः; "दृष्टधर्मवेदनीयं कर्म" इति विस्तरः।

५. सम्मुखीभाववेदनीयता। यथोक्तम्—"यस्मिन् समये सुखां वेदनां वेदयते, द्वे अस्य वेदने तस्मिन् समये निरुद्धे भवतः" इति। नहि यस्मिन् समये सुखा वेदना वर्तते तस्मिन् पुनरन्या वेदनास्ति, स यां तां वेदयते। सम्मुखीकुर्वंस्तु तां वेदयत इत्युच्यते। अतो विपाकस्य वेदनीयत्वात् कर्माप्युच्यते सुखवेदनीयमित्येवमादि ॥ ४९ ॥

**नियतानियतं तच्च,**

**तच्चै**तत् सुखवेदनीयादि त्रिविधं कर्म **नियतं** चा**नियतं** च वेदितव्यम्।

नावश्यवेदनीयमनियतम्।

**नियतं त्रिविधं पुनः।**

**दृष्टधर्मादिवेद्यत्वात्,**

दृष्टधर्मवेदनीयम्, उपपद्यवेदनीयम्, अपरपर्यायवेदनीयं च—इत्येतत् **त्रिविधं कर्म नियत**मिति। एतच्चतुर्विधं कर्म भवति सहानियतवेदनीयेन।

**पञ्चधा कर्म केचन ॥ ५० ॥**

**अपरे** पुनः पञ्चविधं **कर्मे**च्छन्ति—अनियतवेदनीयं द्विधा कृत्वा, **विपाकेन** नियतमनियतं चेति।

तत्र दृष्टधर्मवेदनीयम्—यत्र जन्मनि कृतं तत्रैव विपच्यते। उपपद्यवेदनीयम्—द्वितीये जन्मनि। अपरपर्यायवेदनीयम्—तस्मात् परेण।

जन्मान्तरेऽप्यस्ति दृष्टधर्मवेदनीयस्य कर्मणो विपाक आरम्भवशात् तन्नामव्यवस्थानमित्यपरे।

---

*दृष्टधर्मवेदनीय*मिति। दृष्टे जन्मनि वेदनीयं विपाकलक्षणमस्येति दृष्टधर्मवेदनीयं कर्मेति विस्तरः।

*यस्मिन् समय* इति विस्तरः। *यस्मिन् समये सुखां वेदनां वेदयते* अनुभवति। *द्वे अस्य* वेदने[1] दुःखा, अदुःखासुखा च, *तस्मिन् समये निरुद्धे भवत* इति ॥४९॥

*आरम्भवशादिति*। दृष्ट एव जन्मनि विपाकारम्भादित्यर्थः। *तन्नामव्यवस्थान*मिति। 'दृष्टधर्मवेदनीयम्' इत्येवं नामव्यवस्थानमित्यर्थः।

१. वेदना—मुद्रितः पाठः।

मा भूद् यदेवमिष्टकर्म तस्यानिष्टो विपाक इति ? तदेवं नेच्छन्ति **वैभाषिकाः**। अस्ति हि कर्म सन्निकृष्टफलं न विप्रकृष्टफलम्, अस्ति विपर्ययाद्, बाह्यबीजवत्। यथा त्रिपक्षा सुवर्चला त्रिभिः पक्षैः फलं दधाति, यवगोधूमादयः षड्भिर्मासैरिति ॥ ५० ॥

**चतुष्कोटिकमित्यन्ये,**

**दार्ष्टान्तिकास्तु** चतुष्कोटिकं कुर्वन्ति—१. अस्ति कर्मावस्थानियतं न विपाके नियतम्। यत् कर्म दृष्टधर्मादिवेदनीयं विपाकेऽनियतम्। २. अस्ति विपाके नियतं नावस्थायाम्। यत् कर्मानियतवेदनीयं विपाके नियतम्। ३. अस्त्युभयनियतं यद् दृष्टधर्मादिवेदनीयं विपाके नियतम्। ४. अस्ति नोभयनियतं यत् कर्मानियतवेदनीयं विपाके अनियतम्।

तेषां तत् कर्माष्टविधं दृष्टधर्मवेदनीयं नियतमनियतं च। एवं यावदनियतवेदनीयम्। नियतमेव तु दृष्टधर्मादिवेदनीयमनियतं चतुर्थमिति वर्णयन्ति।

स्यादेकस्मिन् क्षणे चतुर्विधं कर्माक्षिपेत्। स्यात् त्रिषु परं प्रयोज्य काममिथ्याचारे स्वयं प्रयुक्तस्तेषां युगपत् परिसमाप्तौ[1]।

एषां च पुनश्चतुर्णां कर्मणां

**निकायाक्षेपणं त्रिभिः।**

---

*अस्ति हीति* विस्तरः। *सन्निकृष्टफलस्य कर्मणः सुवर्चला* दृष्टान्तः। विप्रकृष्टफलस्य *यवगोधूमादयः*॥ ५० ॥

*दार्ष्टान्तिकाः* सौत्रान्तिकाः। *तेषा*मेवं प्रथमद्वितीये कोट्यौ वर्णयतां *कर्माष्टविधम्। दृष्टधर्मवेदनीयं नियतमनियतं च* विपाकं प्रति। *एवं यावदनियतवेदनीय*मिति। उपपद्यवेदनीयं नियतमनियतं च विपाकं प्रति, अपरपर्यावेदनीयमपि नियतमनियतञ्च, अनियतवेदनीयमपि यो दृष्टधर्माद्यनियतवेदनीयं तन्नियतम्, अनियतञ्च—इत्यष्टविधम्।

*चतुर्विधं कर्माक्षिपेदि*ति। दृष्टधर्मादिवेदनीयं चतुर्विधं कर्माक्षिपेदित्यर्थः। *कथम्?* इत्याह—*स्यात् त्रिषु* प्राणातिपातादत्तादानमृषावादेषु *परं प्रयोज्य काममिथ्याचारे स्वयम*ात्मना *प्रयुक्तः*। तेषां कर्मणां *युगपत् परिसमाप्तौ*। एकं दृष्टधर्मवेदनीयम्, अपरमुपपद्यवेदनीयम्, अपरं चापरपर्यायवेदनीयम्, अन्यच्चानियतवेदनीयमिति।

---

१. समाप्तौ—का०।

नहि दृष्टधर्मवेदनीयेन कर्मणा निकायसभाग आक्षिप्यते ।

कतमस्मिन् धातौ कतिविधं कर्माक्षिप्यते ? कस्यां वा गतौ ?

**सर्वत्र चतुराक्षेपः,**

सर्वेषु त्रिषु धातुषु सर्वासु च गतिषु चतुर्णां कर्मणामाक्षेपः कुशलानामकुशलानां च यथासम्भवम् ।

अस्योत्सर्गस्यायमपवादः—

**शुभस्य नरके त्रिधा ॥ ५१ ॥**

नरकेषु कुशलस्य कर्मणस्त्रिविधस्यैवाक्षेपः[1], न दृष्टधर्मवेदनीयस्य; अत्रेष्टविपाकाभावात्[2] ॥ ५१ ॥

**यद्विरक्तः स्थिरो बालस्तत्र नोत्पद्यवेद्यकृत् ।**

यतो भूमेः वीतरागपृथग्जनो भवति, असौ च स्थिरो भवत्यपरिहाणधर्मा, स तत्रोत्पद्यवेदनीयं कर्म न करोति ।

किमन्यत् करोति ?

**नान्यवेद्यकृदप्यार्यः**

---

*कुशलानामकुशलानां च यथासम्भवमि*ति । यत्राकुशलस्य सम्भवः कामधातावेव, नान्यत्र ।

'सर्वासु गतिषु' इत्यस्योत्सर्गस्यायमपवादः—"*शुभस्य नरके त्रिधा*[3]" इति । त्रिधैवेत्यवधारणम् । *नरकेषु* कुशलस्य कर्मणः त्रिविधस्यैवाक्षेपः, न चतुर्विधस्य । *दृष्टधर्मवेदनीयं* स्थापयित्वा । *अत्र* नरकेष्विष्ट*विपाकाभावात्* । शुभग्रहणमशुभनिरासार्थम् । अकुशलस्य हि चतुर्विधस्यापि नरकेष्वाक्षेपः सम्भवति ॥ ५१ ॥

"*यद्विरक्तः स्थिरो बालः*" इति । यतो विरक्तो यद्विरक्त इति समासः । *स्थिर*ग्रहणं परिहाणधर्मणो निरासार्थम् । तस्य हि तस्यां भूमौ उपपद्यवेदनीयं कर्म सम्भवति । *बाल*ग्रहणमार्यनिवृत्त्यर्थम् । आर्यस्य हि तत्रोपपद्यवेदनीयम्, अपरपर्यायवेदनीयं च *न* सम्भवति; अनागामित्वात् ।

*नान्यवेद्यकृदपी*ति । नापरपर्यायवेदनीयकृदपि । नोपपद्यवेदनीयकृदपीत्यर्थः ।

---

१. ०विधस्याक्षेपो—का० ।　　　२. तत्रे०—का० ।

३. त्रिविधेति—मुद्रितः पाठः ।

'स्थिरः' इति वर्तते । आर्यपुद्गलस्तु यतो वीतरागो न च परिहाणधर्मा, स तत्रोपपद्यवेदनीयं चापरपर्यायवेदनीयं च कर्म न करोति । न ह्यसौ भव्यः पुनराधस्तीं[1] भूमिमायातुमनियतं कुर्याद् दृष्टधर्मवेदनीयं चात्रोपपन्नः ।

**कामेऽग्रे वाऽस्थिरोऽपि न ।। ५२ ।।**

परिहाणधर्मापि त्वार्यपुद्गलः कामधातोर्भवाग्राद् वा[2] वीतरागः तयोरुपपद्यापर-पर्यायवेदनीयं कर्माभव्यः कर्तुम् । किं कारणम् ? फलाद्धि स परिहीणो भवति । न चास्ति फलपरिहीणस्य कालक्रियेति पश्चात् प्रवेदयिष्यामः ।। ५२ ।।

किमन्तराभवेऽप्यस्ति कर्मण आक्षेपः ? अस्तीत्याह—

**द्वाविंशतिविधं कामेष्वाक्षिपत्यन्तराभवः ।**

कामावचरो ह्यन्तराभवो द्वाविंशतिविधं कर्माक्षिपति । कथं कृत्वा ? पञ्च हि गर्भावस्थाः—कलल-अर्वुद-पेशी-घन-प्रशाखावस्थाः । पञ्च जातावस्थाः—बाल-कुमार-युव-मध्य-वृद्धावस्थाः । तत्रान्तराभवः कललवेदनीयं कर्माक्षिपति अनियतं नियतं च । एवं यावद् वृद्धवेदनीयमन्तराभववेदनीयं च ।

**दृष्टधर्मफलं तच्च,**

तच्चैतदन्तराभविकं कर्म यन्नियतमेकादशविधमुक्तं दृष्टधर्मवेदनीयं तद् वेदितव्यम् । किं कारणम् ?

---

तत्र युक्तिं दर्शयन्नाह—*न ह्यसौ भव्यः पुनराधस्तीं भूमिमायातुमि*ति । न ह्यसावार्योऽपरिहाणधर्मा यतो वीतरागस्तत *आधस्ती*मधस्ताद्भवां *भूमिमायातुं भव्यः*। परिहाणधर्मा तु भव्यः। तद् यथा— यो भवाग्रलाभी परिहाणधर्मा यः परिहाय रूपधातावुपपद्येत । तस्योपपद्यवेदनीयमपरपर्यायवेदनीयं चापि सम्भवति, यथोक्तमुदायिसूत्रे *अनियतं कुर्यादि*ति । अनियतवेदनीयमपरिहाण-धर्माप्यार्यो दृष्टधर्मवेदनीयं च *यत्रोपपन्नस्तत्र कुर्यात्* ।

*कामधातोर्भवाग्राद्वा वीतराग* इति । कामवीतरागः, भवाग्रवीतरागोऽर्हन् । तयोरिति कामधातुभवाग्रयोः। *पश्चात् प्रवेदयिष्याम* इति । 'म्रियते न फलभ्रष्टः' ( अभि० को० ६.६० ) इत्यादि ॥ ५२ ॥

*अन्तराभववेदनीयं* च । किम् ? *नियतमनियतं* चेति ।

*यन्नियतमेकादशविधमुक्तम्* । *दृष्टधर्मवेदनीयं यत्तदि*ति । कललवेदनीयं नियतम्, यावदन्तराभववेदनीयं नियतमिति ।

---

१. ०रधस्तनीं—का० । २. का० पुस्तके नास्ति ।

**निकायो ह्येक एव सः ॥ ५३ ॥**

**एक एव ह्यसौ निकायसभाग एककर्माक्षिप्तः,** यश्चान्तराभवो याश्च तदन्वया दशावस्थाः ।

अत एवान्यदन्तराभववेदनीयं कर्म नोक्तम्; उपपद्यवेदनीयेन एव[1] तस्याक्षेपात् ॥ ५३ ॥

कीदृशं पुनः कर्म नियतं वेदितव्यम् ?

**तीव्रक्लेशप्रसादेन सातत्येन च यत्कृतम् ।**
**गुणक्षेत्रे च नियतं तत् पित्रोर्घातकं च यत् ॥ ५४ ॥**

**यद्धि कर्म तीव्रेण क्लेशेन कृतम्, यच्च तीव्रेण प्रसादेन, यच्च सातत्येन, गुणक्षेत्रे च, तन्नियतं** वेदितव्यम् ।

तत्र गुणक्षेत्रम्—त्रीणि रत्नानि । पुद्गलविशेषो वा कश्चित् फलसमापत्तिविशेषप्राप्तः । तत्र ह्यन्तरेणापि तीव्रक्लेशप्रसादानां सातत्यं च कुशलमकुशलं च कर्म नियतं सम्पद्यते ।

**पितरौ** पुनर्माता च पिता च, तयोश्चापि यत्[2] **घातिकं** कर्म यथा तथा च[3] तन्नियतं सम्पद्यते, नान्यत् ॥ ५४ ॥

---

*याश्च तदन्वया दशावस्था* इति । अन्तराभवपूर्विका इत्यर्थः ।

*अत एवान्यदन्तराभववेदनीयं कर्म नोक्तमिति* । चतुर्विधं कर्म—दृष्टधर्मवेदनीयम्, उपपद्यवेदनीयम्, अपरपर्यायवेदनीयम्, अनियतवेदनीयं चेति अत्र *नोक्तम्; उपपद्यवेदनीयेनैव तस्यान्तरा भवस्याक्षेपात्* ॥ ५३ ॥

"नियतानियतं कर्म" ( अभि० को० ४.५० ) इत्युक्तम्, अतो ब्रवीति—*कीदृशं पुनः कर्म नियतमिति* विस्तरः ।

*फलसमापत्तिविशेषप्राप्त* इति । दर्शनमार्गफलप्राप्तः, अर्हत्त्वफलप्राप्तश्च *फलविशेषप्राप्त* इष्यते । विशेषग्रहणमनास्रवमार्गप्राप्यफलग्रहणार्थम् । समापत्तिविशेषप्राप्तो निरोधारणामैत्रीसमापत्तिलाभी । अत्रापि विशेषग्रहणं तदन्यलौकिकसमापत्तिविशेषणार्थम् । *यथा तथा चेति* । यदि पुण्यबुद्धया, यदि द्वेषादिना । योऽपि हि पारसिकः पुण्यबुद्धया *मातरं* मारयति *पितरं* वा । तदकुशलमानन्तर्यं कर्म नियतं सम्पद्यते । *नान्यदिति* । यदतो विपरीतं मन्दक्लेश-

---

१. च—का० ।　　२. यत्र—का० ।　　३. वा—का० ।

अथ दृष्टधर्मवेदनीयं कर्म कीदृशं वेदितव्यम् ?

**दृष्टधर्मफलं कर्म क्षेत्राशयविशेषतः ।**

दृष्टधर्मवेदनीयं कर्म क्षेत्रविशेषाद् वा भवति । यथा—सङ्घस्त्रीवादसमुदाचाराद् व्यञ्जनपरिवृत्तिः श्रूयते ।

आशयविशेषाद् वा । यथा—षण्ढस्य गवामपुंस्त्वप्रतिमोक्षणात् पुम्भावः ।

अथ वा—

**तद्भूम्यत्यन्तवैराग्यात्,**

तस्य वा कर्मणो या भूमिः कुशलस्याकुशलस्य वा, ततोऽत्यन्तवैराग्यात् तत् कर्म दृष्टधर्मवेदनीयं कर्म सम्पद्यते ।

तस्यां भूमौ जातस्य कीदृशं कर्म ? इत्याह—

**विपाके नियतं हि यत् ॥ ५५ ॥**

यद्धि कर्म नियतं विपाके न त्ववस्थायां नाप्यनियतम्, तस्यैष नियमः ।

यत् पुनरवस्थान्तरे नियतं तस्य तत्रैव नियतो विपाकः; तद्वतोऽत्यन्तवैराग्या-

---

प्रसादकृतमित्यादि ॥ ५४ ॥

*सङ्घस्त्रीवादसमुदाचारा*दिति । भिक्षुणा किल केनचिद् व्यवहारपराजितेन सङ्घः 'स्त्रियो यूयम्' इति समुदाचरितः; तस्य दृष्ट एव धर्मे पुरुषव्यञ्जनमन्तर्हितम्, स्त्रीव्यञ्जनञ्च प्रादुर्भूतमिति । तदिदं क्षेत्रविशेषाद् दृष्टधर्मवेदनीयं भवति ।

*आशयविशेषा*दिति । षण्ढेन *गवामपुंस्त्वं करिष्यमाण*मभिवीक्ष्य ममेदृशमपुंस्त्वे दुःखमिति तीव्रेणाशयेन तेषां गवामपुंस्त्वं *प्रतिमोक्षितम्* । तस्य दृष्ट एव धर्मे पुरुषेन्द्रियं प्रादुर्भूतम् । इदमाशयविशेषाद् दृष्टधर्मवेदनीयं कर्म संवृत्तम् ।

*"तद् भूम्यत्यन्तवैराग्यात्"* इति । *ततो भूमेरत्यन्तवैराग्यात् तद्* अदृष्टधर्मवेदनीयमपि *कर्म दृष्टधर्मवेदनीय सम्पद्यते* । यथा अनागाम्यर्हतामवीतरागावस्थाकृतम्; पुनरधरभूम्यनागमनात्, अनुपादाय च परिनिर्वाणात् ।

*न त्ववस्थाया*मिति । यदनियतं दृष्टधर्माद्यवस्थासु । न चानियतं विपाके; नियतत्वात् । तदेव दृष्टधर्मवेदनीयं भवति । अत एवाह—*यत् पुनरवस्थान्तरे* दृष्टधर्मादिके *नियतम्* । *तस्य तत्रैवावस्थान्तरे विपाकः* । *तद्वतोऽत्यन्तवैराग्या-*

सम्भवात् ।

यच्चानियतं तस्याविपाक एव, अत्यन्तवैराग्यात् ॥ ५५ ॥

कीदृशं पुनः क्षेत्रं यत्रावश्यं दृष्टधर्मवेदनीयं कर्म सम्पद्यते ? आह—
बुद्धप्रमुखो भिक्षुसङ्घः, पुद्गलास्तु पञ्च ।

ये निरोधारणामैत्रीदर्शनार्हत्फलोत्थिताः ।
तेषु कारापकाराणां फलं सद्योऽनुभूयते ॥ ५६ ॥

निरोधसमापत्तिव्युत्थितः परां चित्तशान्तिं लभते; निर्वाणसदृशत्वात् समापत्तेः । स हि गतप्रत्यागत इव निर्वाणाद् भवति ।

अरणाव्युत्थितस्याप्रमाणसत्त्वारणाहिताध्याशयानुगतात्युदग्राप्रमाणपुण्यपरिभावनानुगता च सन्ततिर्वर्तते ।

मैत्रीव्युत्थितस्याप्रमाणसत्त्वसुखाध्याशयानुगतात्युदग्राप्रमाणपुण्यपरिभावनानुगता च सन्ततिर्वर्तते ।

दर्शनमार्गव्युत्थितस्याशेषदर्शनप्रहातव्यप्रहाणात् प्रत्यग्राश्रयपरिवृत्तिनिर्मला सन्ततिर्वर्तते ।

अर्हत्फलव्युत्थितस्याशेषभावनाप्रहातव्यप्रहाणात् प्रत्यग्राश्रयपरिवृत्तिशुद्धा सन्ततिर्वर्तते ।

---

सम्भवादिति । एवमस्थान्तरनियतविपाकेन कर्मणा तद्वत् पुद्गलस्यात्यन्तं तस्या भूमेर्वैराग्यासम्भवादित्यर्थः ॥ ५५ ॥

क्षेत्रविशेषादित्युक्तम्, अतः पृच्छति—*कीदृशं पुनः क्षेत्रमिति* ।

*अरणाव्युत्थितस्येति* विस्तरः । *अप्रमाणेषु सत्त्वेषु अरणया हितोऽध्याशयो*ऽभिप्रायः, तेना*नुगता* । *अत्युदग्रेण* तीक्ष्णेन, *अप्रमाणेन* पुण्येन *परिभावनानु*गता *सन्ततिर्वर्तते* । अरणामुत्तरत्र वक्ष्यति—"अरणा प्रणिधिज्ञान०" (अभि० को० ७.३५ ) इत्यत्र ।

*मैत्रीव्युत्थितस्येति* विस्तरः । *अप्रमाणेषु सत्त्वेषु सुखमुत्पद्यतामित्याशयः*, तेना*नुगता* अत्युदग्रेति पूर्ववच्च ।

*प्रत्यग्राश्रयपरिवृत्तिनिर्मले*ति । प्रत्यग्रा अभिनवा; अचिरव्युत्थितत्वात् । *प्रत्यग्राश्रयस्य* शरीरस्य परिवृत्त्या निर्मला *सन्ततिः* ।

अत एतेषु कृतानां **कारापकाराणां फलं दृष्ट एव धर्मे नियतं प्राप्यते ।**

शेषस्य तु भावनामार्गस्यापरिपूर्णस्वभावफलत्वाच्च तद्व्युत्थितानां न तथा प्रत्ययाश्रयपरिवृत्तिशुद्धाशयसन्ततिर्वर्तत इति न ते तथा पुण्यक्षेत्रं भवन्ति[1] ॥५६॥

विपाकः पुनर्वेदनाप्रधानः । तदिदानीं विचार्यते—स्यात् कर्मणश्चैतसिक्येव वेदना विपाको विपच्येत न कायिकी, स्यात् कायिक्येव न चैतसिकी स्याद् ? इत्याह—

**कुशलस्यावितर्कस्य कर्मणो वेदना मता ।**
**विपाकश्चैतसिक्येव,**

अवितर्कं कर्म ध्यानान्तरात् प्रभृति यावद् भवाग्रे । **तस्यावितर्कस्य कुशलस्य कर्मणश्चैतसिक्येव वेदना विपाकः** । कस्मान्न कायिकी ? तस्या अवश्यं सवितर्कसविचारत्वात्[2] ।

**कायिक्येवाशुभस्य तु ॥ ५७ ॥**

---

*एतेषु* पुद्गलेषु *कृतानां कारापकाराणा*मुपकारापकाराणां कुशलाकुशलानाम् *फलं दृष्ट एव धर्मे* इहैव जन्मनि *प्राप्यत* इति । सद्योऽर्थं दर्शयति, सद्य इवेति कृत्वा ।

*शेषस्य त्विति* विस्तरः । *शेषो भावनामार्गः* सकृदागाम्यनागामिफलप्रापकः । अपरिपूर्णः स्वभावः फलं वा अस्येत्यपरिपूर्णस्वभावफलः, तस्य भावः, तस्मात् *अपरिपूर्णस्वभावफलत्वात्* । का पुनस्तस्य परिपूर्णस्वभावता, परिपूर्णफलता च ? अशैक्षत्वं परिपूर्णस्वभावता । स हि मार्गोऽशैक्षस्वभावश्च, येनार्हत्त्वं प्राप्यते । परिपूर्णफलताप्यर्हत्त्वाप्राप्तिः । स हि फलमार्गस्त्रिभिः फलैः फलवानिति । अथ वा—क्षयज्ञानं संगृहीतो मार्गः परिपूर्णस्वभावफलः । परिपूर्णस्वभावो यस्मादशैक्षमार्गः । परिपूर्णफलो निरवशेषफलत्वात् । *तद्व्युत्थितानामिति* । शेषभावनामार्गव्युत्थितानाम् । *न ते* तद्व्युत्थितास्*तथा पुण्यक्षेत्रं भवन्ति* । यथार्हत्त्वव्युत्थिताः । प्रागेव लौकिकमार्गव्युत्थिताः । भावनाप्रहातव्यानां हि क्लेशानां सावशेषनिरवशेषप्रहाणादयं विशेष उक्त इत्यवगन्तव्यम् ॥ ५६ ॥

*तस्या अवश्यं सवितर्कसविचारत्वादिति* । "सवितर्कविचारा हि पञ्चविज्ञानधातवः" ( अभि० को० १,३२ ) इति नियमात्, वितर्कविचारयोश्च

---

१. भवति—का० । २. सवितर्कविचारत्वात्—का० ।

अकुशलस्य कर्मणः कायिक्येव वेदना विपाकः । कस्मान्न चैतसिकी ? तस्य हि दुःखा वेदना विपाकः । चैतसिकी च दुःखा वेदना दौर्मनस्यम् । न च दौर्मनस्यं विपाक इति व्याख्यातमेतत् ॥ ५७ ॥

यत् तर्हि सत्त्वानां चित्तक्षेपो भवति, कतमस्मिन्नसौ चित्ते भवति, केन वा कारणेन ?

**चित्तक्षेपो मनश्चित्ते,**

मनोविज्ञान इत्यर्थः । नहि पञ्चसु विज्ञानकायेषु चित्तं क्षिप्यते; अविकल्पकत्वात् ।

**स च कर्मविपाकजः ।**

**स चैष** चित्तक्षेपः सत्त्वाना **कर्मजः** । ये हि द्रव्यमन्त्रप्रयोगेण वा परेषां चित्तं क्षेपयन्ति, अकामकं वा विषं मद्यं वा पाययन्ति, त्रासयन्ति वा, मृगयादिष्वग्निं वा दावेषूत्सृजन्ति, प्रपाताद्वा पातयन्ति, अन्येन वा केनचित् परेषां स्मृतिं भ्रंशयन्ति, तेषां तस्य कर्मणो विपाकेनायत्यां चित्तं क्षिप्यते ।

---

ध्यानान्तरादिस्वभावात् । न चावितर्कस्य कर्मणः सवितर्कविचारोऽधरभूमिको विपाको युज्यत इति ।

*तस्य हि दुःखा वेदना विपाक* इति विस्तरः । तस्याकुशलस्य दुःखा वेदना विपाक इष्यते ; तस्यानिष्टफलत्वाच्च । *चैतसिकी च दुःखा वेदना दौर्मनस्यम्,* नान्यदस्ति । *न च दौर्मनस्यं विपाक इति व्याख्यातमेतदि*ति । *इन्द्रियनिर्देशे* 'विपाको जीवितं द्वेधा द्वादशान्त्याष्टकादृते दौर्मनस्याच्च'' ( अभि० को० २.१० ) इति ॥ ५७ ॥

'दौर्मनस्यं न विपाकः' इत्येतदमृष्यन्नाह—*यत्तर्हीति* विस्तरः । यदि दौर्मनस्यं न विपाकः । *यत्तर्हि सत्त्वानां चित्तक्षेपो भवति । कतमस्मिन्नसौ चित्ते भवति केन वा कारणेने*ति । तस्यायमभिप्रायः—चित्तक्षेपो न पञ्चसु विज्ञानकायेषु; तेषामविकल्पकत्वात् । स चाकुशलहेतुकोऽनिष्टत्वादित्यतो विपाकेन दौर्मनस्येन भवितव्यमिति ।

*अविकल्पकत्वादि*ति । अभिनिरूपणानुस्मरणविकल्पाभ्यामविकल्पकत्वात् पञ्चानां विज्ञानकायानाम् । चित्तक्षेपस्य चासद्विकल्पलक्षणत्वात् ।

*अग्निं वा दावेषूत्सृजन्ती*ति । दावः=तृणादिगहनान्वितो देशविशेषः । *अन्येन वा केनचिदि*ति । अनिष्टवेदनादिना ।

**भयोपघातवैषम्यशोकैश्च,**

कथं तावद् भयेन ? अमनुष्यादयो मनुष्यान् विरूपेण रूपेणोपसंक्रामन्ति, तेभ्यो भीतानां चित्तं क्षिप्यते ।

कथमुपघातेन ? अमनुष्या एव कुपिता मनुष्याणां मर्मसु प्रहरन्ति ।

कथं महाभूतवैषम्येण ? वातपित्तश्लेष्माणः प्रकोपमापद्यन्ते ।

कथं शोकेन ? यथा वासिष्ठीप्रभृतीनाम् । यदि मनो विक्षिप्यते कर्मविपाकजश्च चित्तक्षेपः ।

*वासिष्ठीप्रभृतीनामिति* ।

"भगवान् मिथिलिकायां विहरति स्म मिथिलाम्रवणे । तेन खलु पुनः समयेन वशिष्ठसगोत्राया ब्राह्मण्याः षट् पुत्राः कालगताः । सा तेषां कालक्रियया नग्नोन्मत्ता क्षिप्तचित्ता तेन तेनानुहिण्डन्ती येन मिथिलाम्रवणं तेनोपसंक्रान्ता । तेन खलु पुनः समयेन भगवाननेकशताया भिक्षुपर्षदः पुरस्तान्निषण्णो धर्मं देशयति स्म । अद्राक्षीद् वसिष्ठसगोत्रा ब्राह्मणी भगवन्तं दूरादेव । दृष्ट्वा च पुनर्जेह्रीयमाणरूपा उत्कुटकाऽस्थात्, स्मृतिं च लब्धवती । अद्राक्षीद् भगवान् वसिष्ठगोत्रां ब्राह्मणीं दूरादेव । दृष्ट्वा च पुनरायुष्मन्तमानन्दमामन्त्रयते स्म—'अनुप्रयच्छानन्द वसिष्ठसगोत्रायै ब्राह्मण्यै उत्तरासङ्गम् । धर्ममस्यै देशयिष्यामि' । आयुष्मान् आनन्दो वसिष्ठसगोत्रायै ब्राह्मण्यै उत्तरासङ्गमदात् । अथ वसिष्ठसगोत्रा ब्राह्मणी उत्तरासङ्गं प्रावृत्य येन भगवांस्तेनोपसंक्रान्ता । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषण्णा । एकान्तनिषण्णां वसिष्ठसगोत्रां ब्राह्मणीं धर्म्यया कथया सन्दर्शयति समादापयति समुत्तेजयति सम्प्रहर्षयति" इत्येवमादि । विस्तरग्रन्थभयात् सर्वसूत्रं न लिखितम् । अयं तत्रार्थः—भगवांस्तस्यै दानकथादि कृत्वा चत्वार्यार्यसत्यानि देशितवान् यावत्तया स्रोतआपत्तिफलमधिगतम् । अधिगम्य च भगवतोऽन्तिकात् प्रक्रान्ता । तस्या अपरेण समयेन सप्तमः पुत्रः कालगतः । सा तत्कालक्रियया न शोचति । तामशोचन्तीं स्वभर्ताब्रवीत्—'त्वं पूर्वं पुत्रमरणेन परितप्तासि, इदानीं नासि परितप्ता, नूनं ते पुत्रास्त्वया भक्षिता यतो न परितप्यसे' ? इति सा तं प्रत्युवाच—

पुत्रपौत्रसहस्राणि ज्ञातिसङ्घशतानि च ।
दीर्घेऽध्वनि मया ब्रह्मन् खादितानि तथा त्वया ॥
पुत्रपौत्रसहस्राणां परिमाणं न विद्यते ।
अन्योन्यं खाद्यमानानां तासु तासूपपत्तिषु ॥

कथं न चैतसिकी वेदना विपाकः प्राप्नोति? नहि ब्रूमः—तदेव चित्तविपाक इति, अपि तु यो महाभूतानां प्रकोपः स विपाकः, तस्माज्जातम्, अतो विपाकजं चित्तम्[1]।

कर्मजेन हि धातुना वैषम्येण व्याकुलमवशं भ्रष्टस्मृतिकं चित्तं वर्तत इति क्षिप्तमित्युच्यते। एवं चेदं चतुष्कोटिकं युज्यते—अस्ति चित्तं क्षिप्तं न विक्षिप्तमिति विस्तरः। १. क्षिप्तं तावन्न क्षिप्तं विक्षिप्तचित्तस्य। २. क्लिष्टं चित्तं विक्षिप्तं न क्षिप्तं स्वस्थचित्तस्य क्लिष्टम्। ३. उभयं क्षिप्तचित्तस्य क्लिष्टम्। ४. नोभयं स्वस्थचित्तस्याक्लिष्टम्।

कतमेषां पुनः सत्त्वानां चित्तं क्षिप्यते?

अकुरूणां कामिनाम् ॥ ५८ ॥

अकुरूणां कामिनाम्। देवेष्वपि हि देवा उन्मत्ताः सन्ति प्रागेव मनुष्यतिर्यक्प्रेतेषु। नारकास्तु नित्यं क्षिप्तचित्ता एव। ते हि विविधयातनासहस्रव्यतिभिन्नमर्माणस्तीव्राभिर्वेदनाभिरभिनुन्ना[2] आत्मानमपि नाभिचेतयन्ति, किं पुनः कार्यमकार्यं वा! हाचित्तपरिदेवकश्चात्र नारक उदाहार्यः।

---

कः शोचेत् परितप्येत परिदेवेत वा पुनः।
ज्ञात्वा निःसरणं लोके जातेश्च मरणस्य च॥
साहं निःसरणं ज्ञात्वा जातेश्च मरणस्य च।
न शोचामि न तप्यामि कृते बुद्धस्य शासने" ॥ (　　　)

इत्येवमादि।

*कथं न चैतसिकी वेदना विपाकः प्राप्नोति*। तस्याकुशलस्य कर्मण इति वाक्यशेषः। *महाभूतानां प्रकोपो विपाक* इति। विपक्तिः=*विपाकः*। *तस्माज्जातमतो विपाकजं चित्तम्*। अत एव स च कर्मज इति।

*एवं चेद*मिति विस्तरः। यस्मात् कर्मजेन यावद् भ्रष्टस्मृतिकं चित्तं वर्तते तस्मादिदं *चतुष्कोटिकं युज्यत* इति। *उभयं क्षिप्तचित्तस्य क्लिष्टं चित्त*मित्येव तत्रोदाहरणम्। न हि क्लिष्टं चित्तं विपाको युज्यते; 'विपाकोऽव्याकृतो धर्मः' (अभि० को० २.५८) इति वचनात्।

*अभिनुन्ना* अभिपीडिताः। *हाचित्तपरिदेवकश्चात्र नारक इहोदाहार्यः*। क्षिप्तचित्ता नारका भवन्तीति।

---

१. का० पुस्तके नास्ति।　　　　२. अभितुन्ना—का०।

आर्याणामपि चित्तं क्षिप्यते भूतवैषम्येण, अन्यत्र बुद्धात्। न कर्मणा; नियतस्य पूर्वं विपाकाद्, अनियतस्याविपाकात्। न भयेन; पञ्चभयसमतिक्रमात्। नोपघातेन; मनुष्यप्रकोपकारणस्याप्रासादिकस्याकरणात्। न शोकेन; धर्मताभिज्ञत्वात् ॥५८॥

पुनस्त्रयो वङ्का उक्ताः सूत्रे—कायवङ्कः, वाग्वङ्कः, मनोवङ्कः। त्रयो दोषाः—कायदोषः, वाग्दोषः, मनोदोषः। त्रयः कषायाः—कायकषायः, वाक्कषायः, मनःकषाय इति। तत्र यथाक्रमं वेदितव्याः।

**वङ्कदोषकषायोक्तिः शाठ्यद्वेषजरागजे।**

शाठ्यजं कायकर्म कायवङ्क इत्युक्तम्; कुटिलान्वयत्वात्। एव वाङ्मनोवङ्कौ।

द्वेषजं कायकर्म कायदोष इत्युक्तम्; चित्तप्रदोषान्वयत्वात्। एवं वाङ्मनोदोषौ।

रागजं कायकर्म कायकषाय इत्युक्तम्, रञ्जनान्वयत्वात्। एवं वाङ्मनःकषायौ।

**कृष्णशुक्लादिभेदेन पुनः कर्म चतुर्विधम् ॥ ५९ ॥**

१. अस्ति कर्म कृष्णं कृष्णविपाकम्। २. अस्ति कर्म शुक्लं शुक्लविपाकम्। ३. अस्ति कर्म कृष्णशुक्लं कृष्णशुक्लविपाकम्। ४. अस्ति कर्म अकृष्णमशुक्लमविपाकम्। यत् तत्कर्म कर्मक्षयाय संवर्तते इति ॥ ५९ ॥

---

*अन्यत्र बुद्धादिति*। महापुण्यसम्भारत्वान्न बुद्धस्य। तद्वद् *भूतवैषम्येणापि चित्तं क्षिप्यते*। न कर्मणेति। किम्? *आर्याणां क्षिप्यते चित्तम्* अन्यत्र भूतवैषम्यादेव। किं कारणम्? इत्याह—*नियतस्य कर्मणः पूर्वं* पृथग्जनावस्थायामेव *विपाकात्। अनियतस्याविपाका*दार्यावस्थायाम्। अतएव चैतदनियतमित्युच्यते।

*पञ्चभयसमतिक्रमा*दिति। पञ्च भयानि—आजीविकाभयम्, अश्लोकभयम्, पर्षच्छारद्यभयम्, मरणभयम्, दुर्गतिभयं च। तत्राश्लोकभयमकीर्तिभयम्। पर्षच्छारद्यभयं सभायां साङ्कुचित्यम्। *अप्रासादिकस्ये*ति। अप्रसादनीयस्य कर्मणः। *धर्मता अभिज्ञत्वा*दिति। सर्वं सास्रवं दुःखम्, सर्वे संस्कारा अनित्याः, सर्वे धर्मा अनात्मान इति धर्मस्वभावाभिज्ञत्वात् ॥ ५८ ॥

*कुटिलान्वयत्वा*दिति। *कुटिल*हेतुकत्वात्। साध्यं हि कौटिल्यम्।

*रञ्जनान्वयत्वा*दिति। यथा कषायो रञ्जनहेतुस्तथा रागोऽपीत्यतस्तत्साधर्म्यादेवमुक्तम् ॥ ५९ ॥

तत्र—

**अशुभं रूपकामाप्तं शुभं चैव यथाक्रमम्।**
**कृष्णशुक्लोभयं कर्म तत्क्षयाय निरास्रवम्॥ ६०॥**

अशुभं कर्म एकान्तेन कृष्णं क्लिष्टत्वात्, कृष्णविपाकं चामनोज्ञविपाकत्वात्। रूपाप्तं शुभमेकान्तेन शुक्लम्; अकुशलेनाव्यतिभेदात्। शुक्लविपाकं च मनोज्ञविपाकत्वात्।

आरूप्याप्तं कस्मान्नोच्यते, यत्र किल द्विविधोऽस्ति विपाकः—आन्तराभविकः, औपपत्तिभविकश्च? त्रिविधस्य च[1] कायवाङ्मनस्कर्मणो यत्रैव सम्भवस्तत्रैवोक्तमिति।

तदपि तूक्तं सूत्रान्तरे—"कामाप्तं शुभं कर्म कृष्णशुक्लमकुशलव्यवकीर्णत्वात्, कृष्णशुक्लविपाकं व्यवकीर्णविपाकत्वात्"? सन्तानत एतद्व्यवस्थापितम्, न स्वभावतः। न ह्येवञ्जातीयकमेकं कर्मास्ति विपाको वा यत् कृष्णं च स्यात्, शुक्लं च; अन्योन्यविरोधात्।

ननु चैवमकुशलस्यापि कर्मणः कुशलव्यवकीर्णत्वात् कृष्णशुक्लत्वं प्राप्नोति?

---

*कामाप्तमिति*। अनेन शुभं विशिष्यते, नाशुभम्; तस्यावश्यं कामाप्तत्वात्। *आरूप्याप्तं कस्मान्नोच्यत* इति। तदपि ह्यकुशलेन न व्यतिभिद्यते। न व्यतिमिश्रयत इत्यर्थः। *यत्र किलेति* विस्तरः। किलशब्दः परमते। *यत्र किलान्तराभविकः* अन्तराभवे भवो *विपाकः*। एवमौपपत्तिभविकोऽपि। *त्रिविधस्य च कायवाङ्मनस्कर्मणो* विपाको ध्यानसंवरसंगृहीतयोः कायवाक्कर्मणोः द्वितीयादिष्वपि ध्यानेषु सद्भावादस्ति। *तत्रैवोक्तम्*। शुक्लं शुक्लविपाकमिति।

*तदपि तूक्तं सूत्रान्तर* इति। तदप्यारूप्याप्तम्। अस्ति कर्म शुक्लं शुक्लविपाकम्। तद्यथा—प्रथमे ध्याने। एवं यावद् भवाग्र इति। अनेन स्वाभिप्रायं दर्शयति। येन *किल*-शब्दं प्रयुक्तवान्। *सन्तानत एतद् व्यवस्थापितमिति*। एकस्मिन् सन्ताने कुशलं चाकुशलं च समुदाचरतीति कृत्वा कुशलमकुशलेन व्यवकीर्यते। *अन्योन्यविरोधादिति*। कुशलमकुशलेन विरुध्यते, अकुशलञ्च कुशलेनेति द्विरूपता न युज्यते।

---

१. का० पुस्तके नास्ति।

नावश्यमकुशलं कुशलेन व्यवकीर्यते; कामधातौ तस्य बलवत्त्वात्। कुशलं तु व्यवकीर्यते; दुर्बलत्वादिति।

अनास्रवं कर्मैषां त्रयाणां कर्मणां क्षयाय प्रहाणाय संवर्तते। तद्धयकृष्णमक्लिष्टत्वाद्, अशुक्लं विपाकशुक्लताभावात्।

आभिप्रायिको ह्येषोऽशुक्लशब्दः। उक्तं तु भगवता महत्यां शून्यतायामशैक्षान् धर्मानारभ्य –"इमे ते आनन्द धर्मा एकान्तकुशला एकान्तानवद्याः" इति। शास्त्रे च—"शुक्ला धर्माः कतमे ? कुशला धर्मा अनिवृताव्याकृताश्च" ( ) इति। अविपाकं धात्वपतितत्वात्, प्रवृत्तिविरोधाच्च ॥ ६० ॥

किं पुनः सर्वमनास्रवं कर्म सर्वस्यास्य त्रिविधस्य कर्मणः क्षयाय संवर्तते ? नेत्युच्यते। किं तर्हि ?

**धर्मक्षान्तिषु वैराग्ये चानन्तर्यपथाष्टके।**
**या चेतना द्वादशधा कर्म कृष्णक्षयाय[1] तत् ॥ ६१ ॥**

*नावश्यमकुशलं कुशलेन व्यवकीर्यत* इति विस्तरः। व्यवकीर्यते, न त्ववश्यम्। यस्मात् *कामधातौ* प्रतिपक्षभूतस्य समाधेरभावादकुशलस्य *बलवत्त्वम्*। अत एव च कुशलस्य दुर्बलत्वम्। तथा हि कामधातौ मिथ्यादृष्ट्या कुशलमूलसमुच्छेदो भवति, न तु सम्यग्दृष्ट्या मिथ्यादृष्टिसमुच्छेदो भवति।

*आभिप्रायिको ह्येषोऽशुक्लशब्द* इति। विपाकशुक्लताभावादशुक्लम्, न तु नैव शुक्लमित्यर्थः। अपि च—यच्छुक्लमुक्तं तन्न भवतीत्यशुक्लम्। *महत्यां शून्यतायामि*ति। महाशून्यतार्थसूत्रे। *अनिवृताव्याकृताश्च शुक्लाः*। अक्लिष्टत्वात्। *अविपाकं धात्वपतितत्वा*दिति। अनास्रवा धर्माः, न धातुपतिताः। धातुपतितश्च विपाक इत्यतोऽनास्रवं कर्माविपाकम्। कस्माद् ? इत्याह—*प्रवृत्तिविरोधत* इति। अनास्रवं हि कर्म धातुपतितानां धर्माणां प्रवृत्तिं विरुणद्धि, न तु जनयतीत्यविपाकम् ॥ ६० ॥

*"कर्म-कर्मक्षयाय"* इति। द्विः कर्मग्रहणं यत्तत् कर्मास्तीत्यपदिष्टम्। तत् कर्म सत् संविद्यमानमप्रच्युतस्वभावम्। *कर्मक्षयाय* संवर्तत इत्यस्य चतुर्थस्य कर्मणो द्योतनार्थम्। अथवा वीप्साप्रयोग एषः। कर्मणः कर्मणः क्षयाय संवर्तत

---

१. कर्मक्षयाय—इति स्फुटार्थासम्मतः पाठः प्रतिभाति।

दर्शनमार्गे चतसृषु धर्मज्ञानक्षान्तिषु कामवैराग्ये चाष्टास्वानन्तर्यमार्गेषु या चेतना सेयं द्वादशविधा चेतना कृष्णस्य कर्मणः प्रहाणाय कर्म ॥६१॥

**नवमे चेतना या सा कृष्णशुक्लक्षयाय च ।**

**नवमे** कामवैराग्यानन्तर्यमार्गे या चेतना सा कृष्णशुक्लस्य कुशलस्य कर्मणः कृष्णस्य चाकुशलस्य नवमस्य प्रकारस्य प्रहाणाय ।

**शुक्लस्य ध्यानवैराग्येष्वन्त्यानन्तर्यमार्गजा ॥ ६२ ॥**

ध्यानाद्ध्यानाद् वैराग्यं कुर्वतो योऽन्त्यो नवम आनन्तर्यमार्गस्तत्र या चेतना इयं चतुर्विधा चेतना शुक्लस्य कर्मणः प्रहाणाय ।

किं पुनः कारणमन्त्येनैवानन्तर्यमार्गेण कुशलस्य कर्मणः प्रहाणम्, नान्येन ? न हि तस्य स्वभावप्रहाणम्; प्रहीणस्यापि सम्मुखीभावात् । किं तर्हि ? तदालम्बनक्लेशप्रहाणात् । अतो यावदेकोऽपि तदालम्बनक्लेशप्रकार आस्ते, तावदस्य प्रहाणं नोपपद्यते ॥ ६२ ॥

**अन्ये नरकवेद्यान्यकामवेद्यं द्वयं विदुः ।**

**अन्ये** पुनराचार्याः पश्यन्ति—नरकवेदनीयं नरकाच्चान्यकामधातुवेदनीयं कर्म यथाक्रमं कृष्णं कृष्णशुक्लं चेति । नरके ह्यकुशलस्यैव कर्मणो विपाकस्तेन

---

इत्यर्थः । *चतसृष्विति* विस्तरः । *धर्मक्षान्ति*ग्रहणम्, *कामवैराग्ये चानन्तर्यमार्ग*ग्रहणं कामावचरस्य *कृष्णस्य कर्मणः प्रहाण*मार्गत्वात् । अनास्रवमार्गस्यैवेहाभिकृतत्वाल्लौकिका आनन्तर्यमार्गास्तत्प्रहाणभूता अपि न गृह्यन्ते ॥ ६१ ॥

"*शुक्लस्य ध्यानवैराग्येषु*" इति । कुशलस्यैवेत्यवधार्यते; तत्र कृष्णाभावात् । क्लिष्टसंस्कारप्रहाणमष्टाभिः । नवमेन तु कुशलस्यापि ।

*न हि तस्य स्वभावप्रहाणमिति* । प्राप्तिच्छेदप्रहाणम् । *प्रहीणस्यापि* कुशलस्य *सम्मुखीभावात्* । *तदालम्बनक्लेशप्रहाणादिति* । तदालम्बनस्य क्लेशस्य प्रहाणात् तस्य कुशलस्य प्रहाणं भवति, तदालम्बनक्लेशप्रहाणं च नवमस्य तदालम्बननरकवेदनीयक्लेशप्रकारस्य प्रहाणे सति भवतीति नवमानन्तर्यमार्गचेतनैव कृष्णशुक्लस्य कर्मणः क्षयाय भवति । तदा हि नवमस्य क्लेशप्रकारस्य प्राप्तिच्छेदे विसंयोगप्राप्तिरुत्पद्यते । तस्य च कृष्णशुक्लस्य कर्मणोऽन्यस्यापि चानिवृताव्याकृतस्य सास्रवस्य धर्मस्य विसंयोगप्राप्तिरुत्पद्यते इति वर्णयन्ति । एवं चतुर्ध्यानवैराग्येष्वपि वक्तव्यम् ॥ ६२ ॥

तद्वेदनीयं कृष्णमित्युच्यते। अतोऽन्यत्र कामधातौ कुशलाकुशलस्य कर्मणो विपाकः, तेन तद्वेदनीयं कृष्णशुक्लमित्युक्तम्।

**दृग्घेयं कृष्णमन्ये,**

**अन्ये** पुनराहुः—दर्शनप्रहातव्यं कर्म **कृष्णम्**; कुशलेनामिश्रत्वात्।

**अन्यत् कृष्णशुक्लं तु कामजम्॥ ६३॥**

**अन्यत्तु** कामावचरं कर्म **कृष्णशुक्लम्**। किं तदन्यत्? भावनाप्रहातव्यम्। तद्धि कुशलं च, अकुशलं च सम्भवति॥ ६३॥

**सूत्र** उक्तम्—"त्रीणि मौनेयानि—कायमौनेयम्, वाङ्मौनेयम्, मनोमौनेयं[1]"। तत्र—

**अशैक्षं कायवाक्कर्म मनश्चैव यथाक्रमम्।**

**मौनत्रयम्,**

अशैक्षे **कायवाक्कर्मणी** काय-वाङ्मौनेये। अशैक्षं तु **मन एव** मनोमौनम्,

---

*तेन तद्वेदनीयमिति*। तेन नरकगतिनैयम्यकारणेन। तद्वेदनीयं नरकवेदनीयमित्यर्थः। *अतोऽन्यत्रेति* विस्तरः। ततो नरकगतेरन्यत्र *कामधातौ* मनुष्यादिगतावकुशलस्य *कुशलस्य च कर्मणो विपाकः। तेन* गतिनैयम्यकारणेन तदन्यकामधातुवेदनीयमुभयमप्यविशेष्य मिश्रीकृत्य *कृष्णशुक्लमित्युक्तम्*। न पुनरेवं ग्रहीतव्यम्—कुशलमपि कृष्णशुक्लमेवमकुशलमपीति।

*कुशलेनामिश्रत्वादिति*। न हि कुशलं दर्शनप्रहातव्यमस्ति।

"न दृष्टिहेयमक्लिष्टम्" ( अभि० को० १.३९ ) इति नियमादत्र चोद्यते—कामावचरं दृग्घेयं कृष्णमिति विशेष्यं वक्तव्यम्, इतरथा हि रूप्यारूप्यावचरस्यापि दर्शनहेयस्य कृष्णविपाकत्ववचनप्रसङ्ग इति?

न वक्तव्यम्; *"अन्यत् कृष्णशुक्लं तु कामजम्"* इति। *कामजमित्यस्योभयविशेषणत्वात्*। *कामजं दृग्घेयं कृष्णम्*। कामजमन्यत् कृष्णशुक्लमिति। *तद्धीति* विस्तरः। तद्धि कामावचरं भावनाप्रहातव्यम्। *कुशलं चाकुशलं च सम्भवति*। तन्मिश्रीकृत्योभयमपि कृष्णशुक्लमित्युक्तम्। न पुनः प्रत्येकम्॥ ६३॥

*त्रीणि मौनेयानीति*। मुनिता वा मुनिकर्म वा *मौनेयम्*, कापेयवत्। *मौनत्रयमिति*। मुनेरिदं मौनम्। *अशैक्ष* इति विस्तरः। *अशैक्षं कायकर्मा*विज्ञप्तिस्वभावं *कायमौनम्*। एवं *वाङ्मौनम्*। अथ कस्मादविज्ञप्तिरेव गृह्यते, न पुनर्विज्ञप्तिरपि?

---

१. मनोमौनेयं—का०।

न मनस्कर्मेति । किं कारणम् ? चित्तं हि परमार्थमुनिः । तत् किल कायवाक्कर्मभ्यामनुमीयत इति ।

अपि खलु कायवाक्कर्मणी विरतिस्वभावम्,[1] न मनस्कर्म; चित्ताविज्ञप्त्यभावात् । विरमार्थेन च मौनम् । अतो मन एव विरतं मौनमित्युच्यते ।

कस्मादशैक्षमेव, नान्यत्? अर्हतः परमार्थमुनित्वात्; सर्वक्लेशजल्पोपरतेः ॥

त्रीणि शौचेयानि उक्तानि सूत्रे—"कायशौचेयम्, वाक्शौचेयम्, मनःशौचेयं च" । तदेतत्—

त्रिधा शौचं सर्वं सुचरितत्रयम् ॥ ६४ ॥

सर्वं कायसुचरितं कायशौचम् । सर्वं वाङ्मनःसुचरितं वाङ्मनःशौचम् । दुश्चरितमलापकर्षणात् तावत्कालमत्यन्तं च[2] ।

एषा च देशना मिथ्यामौनशौचाधिमुक्तानां[3] विवेचनार्थम् ॥ ६४ ॥

---

विज्ञप्तेः सास्रवत्वेनाशैक्षात्वासम्भवात् । *मन एव मनोमौन*मिति । स्वार्थे वृद्धिविधानात् । *चित्तं हि परमार्थमुनि*रिति । सर्वक्लेशजल्पोपरतेरिति कारणं वक्ष्यते । *तत् किल कायवाक्कर्मभ्याम*शैक्षाभ्या*नुमीयते* अशैक्षमिति । कथं तथागतोऽनुमातव्यः ? "प्रशान्तेन कायकर्मणा प्रशान्तेन वाक्कर्मणा" इति सूत्रे वचनात् ।

*किल*शब्देन वैभाषिकमतं द्योतयित्वा*चार्यः* स्वमतमाह—*अपि खल्वि*ति विस्तरः । *चित्ताविज्ञप्त्यभावा*दिति । यस्माच्चित्तस्याविज्ञप्तिर्नास्त्यतो *न मनस्कर्म विरतिस्वभावम् । विरमार्थेन* च *मौन*मिति । *विरमो* विरतिः । सर्वाकुशलविरमार्थेन मौनमित्यभिप्रायः । *अतो मन एव* सर्वाकुशलेभ्यो *विरतं मौनमित्युच्यते* ।

*सर्वक्लेशजल्पोपरते*रिति । वितथालम्बनजल्पनात् क्लेशा *जल्पा* इत्युच्यन्ते । ते चार्हत उपरता इत्य*र्हन् परमार्थमुनिः* ।

*शौचेयानी*ति । शुचिभावः शौचेयम्, शौचमित्यर्थः । *सर्व*ग्रहणं सास्रवानास्रवसुचरितपरिग्रहार्थम् । *तावत्कालमत्यन्तं* चेति । तावत्कालं दुश्चरितमलापकर्षकं सास्रवेण सुचरितत्रयेण । *अत्यन्तम्* । अनास्रवेण । तद्धि "भिक्षवः प्रहीणं यदार्यया प्रज्ञया" (　　　) इति सूत्रात् ।

*मिथ्यामौनशौचाधिमुक्तानां विवेचनार्थ*मिति । तूष्णीम्भावमात्रेण शुद्धिदर्शिनो

---

१. ०स्वभावेन—का० ।　　　२. वा—का० ।

३. ०धिमुक्तिकानां—का० ।

त्रीणि दुश्चरितान्युक्तानि । तत्र—

**अशुभं कायकर्मादि मतं दुश्चरितत्रयम् ।**

अकुशलं कायवाङ्मनस्कर्म, यथाक्रमं कायवाङ्मनोदुश्चरितम् ।

**अकर्मापि त्वभिध्यादि मनोदुश्चरितं त्रिधा ॥ ६५ ॥**

अकर्मस्वभावमप्यस्ति त्रिविधं मनोदुश्चरितं चेतनार्थान्तरभूतम्–अभिध्या, व्यापादः, मिथ्यादृष्टिश्च ।

अभिध्यादय एव मनस्कर्मेति **दार्ष्टान्तिकाः; सञ्चेतनीयसूत्रे** वचनात् ।

एवं तु सति कर्मक्लेशयोरैक्यं स्यात् ? किं स्याद्यदि कश्चित् क्लेशोऽपि कर्म स्यात् ? नैतदस्ति; सूत्रं विरुद्धं स्यात् । सूत्रे तु चेतनायास्तन्मुखेन प्रवृत्तेस्तैस्तां दर्शयतीति **वैभाषिकाः** । अनिष्टफलत्वात् कुत्सितः कायवाङ्मनश्चारो दुश्चरितम् ॥ ६५ ॥

**विपर्ययात् सुचरितम्,**

इष्टं कुशलं कायवाङ्मनस्कर्म—अनभिध्याऽव्यापादसम्यग्दृष्टयश्च ।

---

मिथ्यामौनाधिमुक्ताः । कायमलापकर्षणमात्रेण शुद्धिदर्शिनो मिथ्याशौचाधिमुक्ताः । तेषां विवेचनं ततो दर्शनात् प्रच्यावनम्, तदर्थमेतानीति ॥ ६४ ॥

*सञ्चेतनीयसूत्रे वचनादि*ति । "सञ्चेतनीयं कर्म कृत्वोपचित्य नरकेषूपपद्यते । कथं च भिक्षवः सञ्चेतनीयं कर्म कृतं भवत्युपचितम् ? इह भिक्षव एकत्यः सञ्चित्य त्रिविधं कायेन कर्म करोत्युपचिनोति, चतुर्विधं वाचा, त्रिविधं मनसा" इति विस्तरेणोक्त्वाह—"कथं भिक्षवस्त्रिविधं मनसा सञ्चेतनीयं कर्म कृतं भवत्युपचितम् ? यथापीहैकत्योऽभिध्यालुर्भवति व्यापन्नचित्तो यावन्मिथ्यादृष्टिः । खलु भिक्षव इहैकत्यो भवति विपरीतदर्शी" (          ) इति विस्तरः । न चान्यदभिध्यादिव्यतिरिक्तं तत्र मनस्कर्मोक्तमिति *अभिध्यादय एव मनस्कर्मे*ति । *दार्ष्टान्तिकाः* सौत्रान्तिकविशेषा इत्यर्थः ।

*एवं तु सति कर्मक्लेशयोरैक्यं स्यादि*ति । अभिध्याव्यापादमिथ्यादृष्टयः क्लेशाः, त एव कर्मेति तदैक्यं स्यात् । *नैतदस्ति । कश्चित् क्लेशोऽपि कर्म स्या*दिति । "चेतना कर्म चेतयित्वा च" इति वचनात् । यद्येवं सञ्चेतनीयं सूत्रं कथं नीयते ? इत्याह–*सूत्रे त्वि*ति विस्तरः । *सूत्रे तु चेतनायास्तन्मुखेना*भिध्यादिमुखेन *प्रवृत्तेस्तै*रभिध्यादिभि*स्तां* चेतनां *दर्शयति* । "अभिध्यालुः खलु भिक्षवो भवति" इति विस्तरेण । *अन्यथा* "चेतनामतं भिक्षवः कर्म वदामि चेतयित्वा

परानुग्रहोपघाताभिसन्ध्यभावे कथं सम्यग्दृष्टिमिथ्यादृष्ट्योः कुशलाकुशलत्वम् ? तन्मूलत्वात् ।

यानि चैतानि दुश्चरितसुचरितान्युक्तानि,

**तदौदारिकसंग्रहात् ।**

**दश कर्मपथा उक्ता यथायोगं शुभाशुभाः ॥ ६६ ॥**

तेषामेव सुचरितदुश्चरितानां चौदारिकसंग्रहेण दश कर्मपथाः **सूत्र उक्ताः यथायोगम्**—कुशलाः सुचरितेभ्यः, अकुशला दुश्चरितेभ्यश्च[1] ।

किमत्र दुश्चरितमसंगृहीतम् ? किं वा सुचरितम् ? अकुशलेषु तत्कर्मपथेषु कायदुश्चरितस्य प्रदेशो न संगृहीतः प्रयोगपृष्ठभूतः क्लिष्टश्चान्योऽपि वधबन्धनादिः[2]; तस्य नात्यौदारिकत्वात् ।

यद्धि कायदुश्चरितं परेषां जीवितभोगदारेभ्यश्च्यावकं तत् कर्मपथ उक्तं ततो विवेचनार्थम् । वाग्दुश्चरितमपि यदेव प्रशस्तं[3] तत्कर्मपथ उक्तं तदर्थमेव । मनोदुश्चरितस्य च प्रदेशश्चेतना[4] ।

कुशलेष्वपि कायसुचरितस्य प्रदेशः प्रयोगपृष्ठमद्यादिविरतिदानेज्यादिकः, वाक्सुचरितस्य प्रियवचनादिकः, मनःसुचरितस्य चेतना ॥ ६६ ॥

---

च" (　　　) इत्येतद्विरुध्यते । कर्मक्लेशयोश्चैक्ये अभिधर्मविरोधः स्यात् ।

*परानुग्रहोपघाताभिसन्ध्यभाव* इति विस्तरः । *परेषामनुग्रहोपघातयोरभिसन्ध्यभावे कथं सम्यग्दृष्टिमिथ्यादृष्ट्योर्यथाक्रमं कुशलाकुशलत्व*मिति । अतो ब्रवीति—*तन्मूलत्वा*दिति । यस्मात् परानुग्रहाभिसन्धेः परोपघाताभिसन्धेश्च सम्यग्दृष्टिमिथ्यादृष्टी मूलं कारणमित्यर्थः । अतस्तयोः कुशलाकुशलत्वम् ॥ ६५ ॥

*यथायोग*मिति । यथासम्भवम् । कथम् ? इत्याह—*कुशलाः सुचरितेभ्यः, अकुशला दुश्चरितेभ्यश्चे*ति ।

*क्लिष्टश्चान्योऽपी*ति । वधबन्धनादिः । *तस्य नात्यौदारिकत्वा*दिति । तस्य प्रयोगपृष्ठभूतस्य [illegible] अनत्यौदारिकत्वात् । *मनोदुश्चरितस्य च प्रदेशश्चेतना* । न संगृहीतेति वर्तते ।

*मद्यादिविरतिदानेज्यादिक* इति । प्रथमेनादिशब्देन ताडनबन्धनादिविरतिं गृह्यते । द्वितीयेनापि स्नपनोद्वर्तनविषमहस्तप्रदानादिर्गृह्यते । *प्रियवचनादिक*

---

१. दुश्चरितेभ्यः—का० ।　　२. बन्धादिः—का० ।

३. प्रशादं—का० ।　　४. प्रदेशचेतना—का० ।

एषां च कर्मपथानाम्

**अशुभाः षडविज्ञप्तिः,**

अकुशलाः षट् कर्मपथा अवश्यमविज्ञप्तिस्वभावाः प्राणातिपातादत्तादान-मृषावाद-पैशुन्य-पारुष्य-सम्भिन्नप्रलापाः; परेण कारयतो मौलविज्ञप्त्यभावात् ।

**द्विधैकः,**

काममिथ्याचारो नित्यं विज्ञप्त्यविज्ञप्तिस्वभावः; तस्य स्वयमेव निष्ठापनात् । न हि तं परेण कारयतस्तादृशी प्रीतिर्भवतीति ।

**तेऽपि कुर्वतः ।**

**तेऽपि** षट् कर्मपथाः स्वयं **कुर्वतो** द्विविधा भवन्ति—विज्ञप्तिः, अविज्ञप्तिश्च । तत्कालमरणे पश्चान्मरणे त्वविज्ञप्तिरेव ।

कुशलानां पुनः कर्मपथानां

**द्विविधाः सप्त कुशलाः,**

**कुशलाः सप्त** रूपिणः कर्मपथा अवश्यं द्विप्रकाराः—विज्ञप्तिः, अविज्ञप्तिश्च; विज्ञप्त्यधीनत्वात् समादानशीलस्य ।

**अविज्ञप्तिः समाधिजाः ॥ ६७ ॥**

ध्यानानास्रवसंवरसंगृहीताः **समाधिजा** उच्यन्ते । ते ह्यविज्ञप्तिरेव;

---

इति । आदिशब्देन धर्मदेशनादिमार्गकथनादिर्गृह्यते । *मनःसुचरितस्य चेतना न संगृहीतेति* वर्तते ॥ ६६ ॥

*षडविज्ञप्तिरिति* । षडविज्ञप्तिरवश्यम्, न त्वविज्ञप्तिरेव षडित्यवधारणम् । *मौलविज्ञप्त्यभावादि*ति । यस्मान्मौली कर्मपथसंगृहीता विज्ञप्तिर्नास्ति । आज्ञापन-विज्ञप्तिस्त्वस्ति प्रयोगसंगृहीतेति *वैभाषिक*सिद्धान्तः ।

*"द्विधैकः"* इति । द्विधैवैक इत्यवधारणार्थ आरम्भः ।

*तत्कालमरण* इति । विज्ञप्तिकालमरणे । कालान्तरमरणे त्वविज्ञप्तिरेव भवति ।

*"द्विविधाः सप्तकुशलाः"* इति । द्विविधा एवेत्यवधारणम् । *विज्ञप्त्यधीन-त्वात् समादानशीलस्येति* । शीलं हि द्विविधम्—समादानशीलम्, प्रातिमोक्ष-संवरः । धर्मताशीलं च ध्यानानास्रवसंवरौ । समादानशीलं विज्ञप्त्यधीनम्, तद्धि परस्मादादीयते । धर्मताशीलं तु न विज्ञप्त्यधीनम्; चित्तमात्राधीनत्वात् ।

चित्तमात्राधीनत्वात् ॥ ६७ ॥

**सामन्तकास्तु विज्ञप्तिः,**

**कर्मपथसामन्तकास्तु विज्ञप्तिस्वभावा अवश्यम् ।**

**अविज्ञप्तिर्भवेन्न वा ।**

यदि तीव्रेण पर्यवस्थानेन प्रमादेन वा घनरसेन प्रयोगमारमेत, स्यादविज्ञप्तिः, अन्यथा न स्यात् ।

**विपर्ययेण पृष्ठानि,**

सामन्तकेभ्यो **विपर्ययेण** कर्मपथानां **पृष्ठानि** वेदितव्यानि। तानि अवश्यमविज्ञप्तिस्वभावानि । विज्ञप्तिस्तु भवेन्न वा । यदि कर्मपथं कृत्वा पुनस्तस्यानुधर्मं चेष्टेत; तस्य स्याद् विज्ञप्तिः, अन्यथा न स्यात् ।

अथ कुतो यावदेषां प्रयोग-मौल-पृष्ठानां व्यवस्थानम् ?

यदा तावदिह कश्चित् पशुं हन्तुकामो मञ्चकादुत्तिष्ठति, मूल्यं गृह्णाति, गच्छति, आमृशति, पशुं क्रीणाति, आनयति, कुष्णाति[1], प्रवेशयति, निहन्तुं शस्त्रमादत्ते, प्रहारमेकं ददाति, द्वौ वा यावन्न जीविताद् व्यपरोपयति तावत् **प्रयोगः** ।

येन तु प्रहारेण जीविताद् व्यपरोपयति तत्र या विज्ञप्तिः, तत्क्षणिका वाऽविज्ञप्तिरयं **मौलः** कर्मपथः ।

द्वाभ्यां हि कारणाभ्यां प्राणातिपातावद्येन स्पृश्यते—प्रयोगतः, मृते सति फलपरिपूरितश्च । ततः परमविज्ञप्तिक्षणाः[2] **पृष्ठं** भवन्ति । यावच्च तं पशुं

---

अत एवाह—"*अविज्ञप्तिः समाधिजा*" इति ॥ ६७ ॥

"*सामन्तकास्तु विज्ञप्तिः*" इति । कामावचरकर्मपथप्रयोगा अवश्यं विज्ञप्तिः, न त्ववश्यमविज्ञप्तिरिति ।

अत एवाह—"*अविज्ञप्तिर्भवेन्न वा*" इति । *पर्यवस्थानेनेति*। आह्रीक्यादिना । *घनरसेनेति* । घनवेगेन । *तस्यानुधर्मं चेष्टेतेति* । तस्य कर्मपथस्यानुधर्ममनुसदृशं कर्म । तद्यथा—मृतेऽपि प्राणिनि पुनः प्रहारदानम्, कोषणम्, मांसच्छेदनमित्येवमादि ।

द्वौ *कुष्णातीति* शब्दौ । परस्य चर्मापनयनमर्थः । पूर्वस्यार्थान्तरं द्रष्टव्यम् ।

*फलपरिपूरितश्चेति* । प्रयोगस्य मौलः कर्मपथः फलपरिपूरिः । यो हि प्रयुज्यते मौलं कर्मपथं न जनयति, तस्य प्रयोगफलमस्ति; न तु फलपरिपूरिः ।

---

१. पृष्णाति—का० । २. ऊर्ध्व०—का० ।

कृष्णाति, शोधयति, विक्रीणीते, पचति, खादयति, अनुकीर्तयति वा, तावदस्य विज्ञप्तिक्षणा अपि पृष्ठं भवन्ति ।

एवमन्येष्वपि यथासम्भवं योज्यम् ।

अभिध्यादीनां नास्ति प्रयोगः, न पृष्ठम्; सम्मुखीभावमात्रात् कर्मपथः ।

इदमत्र वक्तव्यम्—किं तावत् मरणभवस्थे तस्मिन् प्राणिनि ये विज्ञप्त्यविज्ञप्ती ते कर्मपथः ? आहोस्विन्मृते ? किं चातः ? यदि तावन्मरणभवस्थे, सहमृतस्यापि हन्तुर्घातयितुर्वा प्राणातिपातावद्येन योगः प्राप्नोति, न चैष सिद्धान्तः ? अथ मृते, यदुक्तम्—"येन तु प्रहारेण जीविताद् व्यपरोपयति तत्र या विज्ञप्तिस्तत्क्षणिका चाविज्ञप्तिरयं[1] मौलः कर्मपथः" इति तन्न वक्तव्यम् ? यच्चापीदं शास्त्र उक्तम्—"स्यात् प्राणी हतः प्राणातिपातश्चानिरुद्धः । स्याद्यथा हि स[2] प्राणी[2] जीविताद् व्यपरोपितो भवति प्रयोगश्चाप्रतिप्रस्रब्धः" इति, अत्र पृष्ठं प्रयोगशब्देनोक्तमिति वैभाषिकीयोऽर्थविरोधः, मौलस्यैव तदानीमनिरुद्धत्वात् ?

---

*एवमन्येष्वपीति* । यथा तावदिह कश्चित् परस्वं हर्तुकामो मञ्चादुत्तिष्ठति, शस्त्रं गृह्णाति, परगृहं गच्छति, सुप्तो न वेत्याकर्णयति, परस्वं स्पृशति, यावन्न स्थानात् प्रच्यावयति तावत् प्रयोगः । यस्मिंस्तु क्षणे स्थानात् प्रच्यावयति तत्र या विज्ञप्तिस्तत्क्षणिका चाविज्ञप्तिरयं मौलः कर्मपथः । द्वाभ्यां हि कारणाभ्यामदत्तादानावद्येन स्पृश्यते—प्रयोगतः, फलपरिपूरितश्च । ततः परमविज्ञप्तिक्षणाः पृष्ठं भवन्ति । यावत्तत् परस्वं विभजते, विक्रीणीते, गोपायति, अनुकीर्तयति वा, तावदस्य विज्ञप्तिक्षणा अपि पृष्ठं भवन्तीति । एवमन्येष्वपि पञ्चसु यथासम्भवं योज्यम् ।

*मरणभवस्थ* इति । मृत एव । न चैष *सिद्धान्त* इति । "समं प्राक् च मृतस्यास्ति न मौलोऽन्याश्रयोदयात्" (अभि० को० ४.७२) इति सिद्धान्तात् । *तन्न वक्तव्यमिति* । व्यपरोपयतीति । विप्रकृतावस्थायामयोगात् । एवं तु वक्तव्यं स्यात्—मृते प्राणिनि या विज्ञप्तिस्तत्क्षणिका चाविज्ञप्तिरयं मौलः कर्मपथ इति । *यच्चापीदमिति* विस्तरः । *वैभाषिकैरस्य* शास्त्रवाक्यस्यैवमर्थो व्याख्यातः । *अत्र शास्त्रे प्रयोगशब्देन पृष्ठमुक्तमिति* । प्रयोग इव प्रयोगः । प्रयोगसदृशी या क्रियेत्यर्थः । अस्यार्थस्य *विरोधः* । कस्मात् ? *मौलस्यैव तदानीम*-

---

१. वा०—का० । २-२. तत्प्राणी—का० ।

यथा न दोषस्तथास्तु ।

कथं च न दोषः ? मौल एवात्र प्रयोगशब्देनोक्त इति ।

विज्ञप्तिस्तर्हि तदा कथं मौलः कर्मपथो भवति ? कथं च न भवितव्यम् ? असामर्थ्यात् ।

अविज्ञप्तिरिदानीं कथं भवति ? तस्मात् प्रयोगफलपरिपूरिकाले तदुभयं कर्मपथः स्यात् । कर्मपथोऽप्यन्यस्य प्रयोगः पृष्ठं च भवति । प्राणातिपातस्य दशापि कर्मपथाः प्रयोगः । यथा च शत्रोर्वधार्थं कृत्यं समुपस्थापयन् पशुना बलिं कुर्यात्, परकीयं कृत्वा दारेषु चास्य विप्रतिपद्येत तैरेव तद्घातनार्थम् । अनृतपिशुनपरुषसान्त्वैश्चास्य मित्रभेदं कुर्याद्, यान्यस्य परित्राणाय कल्पेरन् । अभिध्यां च तत्स्वे[1] कुर्यात् तत्रैव च व्यापादं तद्वधार्थं च मिथ्यादृष्टिं बृंहयेदिति ।

एवमन्येष्वपि यथायोगं योज्यम् ।

---

*निरुद्धात्* । मृते प्राणिनि मौलकर्मपथव्यवस्थापनादित्यत्राभिप्रायः ।

*वैभाषिक* आह—*यथा न दोषस्तथास्त्विति* । *कथं च न दोष* इत्याचार्यः ।

*वैभाषिकः* पुनराह—*मौल एवात्र प्रयोगशब्देनोक्त* इति । कुत्र ? योऽयं प्रश्नः स्यात्—'प्राणी हतः प्राणातिपातश्चानिरुद्धः' इत्यत्र । 'पृष्ठं प्रयोगशब्देनोक्तम्' इति किमयं पक्षः परित्यक्त एव ? स च न परित्यक्त एव । उभयमपि हि सम्भवति । यदि मरणभवानन्तरक्षणवर्ती प्राणी भवति अत्र प्रयोगशब्देन मौल उक्त इतीष्यते । ततः परेण तु पृष्ठ इति ।

*आचार्य* आह—*विज्ञप्तिस्तर्हि तदा कथं मौलः कर्मपथो भवती*ति । मृते हि प्राणिनि विज्ञप्तिरकिञ्चित्करी । न हि तेन विज्ञप्तिप्रहारेण मृतस्य मारणं पुनरस्तीति मन्यमानोऽयं पृच्छति । कस्मादविज्ञप्तिं न पृच्छति ? यस्मादसावनिदर्शनत्वादप्रतिघत्वाच्च प्रहाराख्या न भवति । *कथं च न भवितव्यमि*ति *वैभाषिके*णोक्ते । स्वाभिप्रायमाचार्यो विवृणोति—*असामर्थ्या*दिति । प्राणिनि मृते तस्याः सामर्थ्यं न दृश्यत इति ।

*वैभाषिक* आह—*अविज्ञप्तिरिदानीं कथं भवति* । असति सामर्थ्ये *मौलः कर्मपथ* इति । यस्मादेवमविज्ञप्तिरसामर्थ्येऽपि मौलः कर्मपथो भवति, *तस्मात् प्रयोगफलपरिपूरिकाले* मौलकर्मपथपरिसमाप्तिकाले प्राणिनो मृतत्वावस्थायाम् । *तदुभयं* विज्ञप्त्यविज्ञप्त्याख्यं *कर्मपथः स्याद्* । युज्येतेत्यर्थः ।

*एवमन्येष्वपि यथायोगं योज्यमि*ति । यथा परस्वं हर्तुकामः कोर्यसिद्धये

---

१. स्व०—का०[1]।

न ह्यभिध्यादयः प्रयोगा युज्यन्ते । न हि चित्तोत्पादमात्रेण प्रयुक्तो भवति; क्रियानारम्भात् ।

सूत्र उक्तम् —"प्राणातिपातो भिक्षवस्त्रिविधः— लोभजः, द्वेषजः, मोहजो यावन्मिथ्यादृष्टिः" (　　　　) इति । तत्र कीदृशः प्राणातिपातो लोभज इत्येवमादि वक्तव्यम् । नात्र सर्वेषां कर्मपथानां लोभादिभिर्निष्ठा ?

**प्रयोगस्तु त्रिमूलजः ॥ ६८ ॥**

प्रयोगस्तेषामकुशलमूलत्रयाज्जात इत्यादिसमुत्थानवचनादेवमुक्तः ।

तत्र लोभजप्राणातिपातो यथा—तच्छरीरावयवार्थमर्थार्थं क्रीतार्थं च प्राणिनं जीविताद् व्यपरोपयति आत्मसुहृत्परित्राणाय ।

द्वेषजो यथा—वैरनिपीडनार्थम् ।

मोहजो यथा— याज्ञिकानां धर्मबुद्ध्या राज्ञां च धर्मपाठकप्रामाण्याद्धिंसताम् । दुष्टानां किल निग्रहं कुर्वन्तो राजानः पुण्यभाजो भवन्तीति । पारसीकानां च । ते ह्येवमाहुः—"मातापितरौ जीर्णौ वा, ग्लानौ वा हन्तव्यौ" इति । ये चान्ये-ऽप्येवमाहुः—"अहिवृश्चिकत्र्यम्बुकादयो मनुष्याणामुपघातातापका हन्तव्याः; मृगपशुपक्षिमहिषादयश्चोपभोगार्थत्वाद्" इति । यश्च मिथ्यादृष्टिप्रवर्तितः प्राणातिपातः ।

लोभजमदत्तादानम्—यो येनार्थी स तद्धरति, अन्यलाभसत्कारयशोऽर्थं वा, आत्मसुहृत्परित्राय वा । द्वेषजम्—यद्वैरनिपीडनार्थम् । मोहजं यथा—राज्ञां धर्म-

---

परकीयं हृत्वा तेन पशुना बलिं कुर्यात् । दारेषु चास्य विप्रतिपद्येत तैरेव तदपहारार्थम् । अनृत-पिशुन-परुष सान्त्वभेदैश्चास्य मित्रभेदं कुर्यात्, यान्यस्य परित्राणाय कल्पेरन् । अभिध्यां च तत् स्वे कुर्यात् । तद्द्रव्यस्वामिनि च व्यापादं मिथ्यादृष्टिं बृंहयेत् । एवं काममिथ्याचारादिषु यथासम्भवं योज्यम् । एषा दिक् ।

*नात्र सर्वेषां कर्मपथानां लोभादिभिर्निष्ठेति* । न च सर्वेषां लोभेन, किं तर्हि ? केषाञ्चिदेव काममिथ्याचारादीनाम् । नापि सर्वेषां व्यापादेन, किं तर्हि ? केषाञ्चिदेव प्राणातिपातादीनाम् । एवं न सर्वेषां मोहेन, किं तर्हि ? केषाञ्चिदेव मिथ्यादृष्ट्यादीनामेवेति ।

*त्र्यम्बुकाः* वरटाः । *आदिशब्देन* व्याघ्रादयः । *यश्च मिथ्यादृष्टिप्रवर्तित इति* ।

पाठकप्रामाण्यात् दुष्टनिग्रहार्थम्। यथा ब्राह्मणा आहुः—"सर्वमिदं ब्रह्मणा ब्राह्मणेभ्यो दत्तं ब्राह्मणानां दौर्बल्याद् वृषलाः परिभुञ्जते। तस्मादपहरन् ब्राह्मणः स्वमादत्ते, स्वमेव ब्राह्मणो भुङ्क्ते, स्वं वस्ते, स्वं ददाति च" ( ) इति। न चैषामपरस्वसंज्ञा भवति। यच्च मिथ्यादृष्टिप्रवर्त्तितम्।

लोभजः काममिथ्याचारः—परदारादिषु तत्संरागादब्रह्मचर्यं लाभसत्कारार्थमात्मसुहृत्परित्राणाय। द्वेषजः—वैरनिपीडनार्थम्। मोहजो यथा—पारसीकानां मात्रादिगमनम्, गोसवे च यज्ञे। यथोक्तम्—"ब्राह्मणो गोसवेनेष्ट्वा संवत्सरगोव्रती भवति। उपहा उदकं चूषति, तृणानि च्छिनत्ति, उपैति मातरम्, उप स्वसारम्, उप सगोत्राम्" ( ) इति। ये चाहुः—"उदूखलपुण्यफलपक्वान्नतीर्थमार्गप्रख्यो मातृग्रामः" इति। मृषावादादयो लोभजा द्वेषजाश्च पूर्ववत्। मोहजो मृषावादः, यथाह—

"न नर्मयुक्तमनृतं हिनस्ति न स्त्रीषु राजन् न विवाहकाले।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि"॥
( ) इति।

यश्च मिथ्यादृष्टिप्रवर्तितो मृषावादः। पैशुन्यादयस्तु मिथ्यादृष्टिप्रवर्तिता

---

नास्ति परलोक इति कृत्वा निरपेक्षो हन्ति। *अयमपि मोहजः—अन्यलाभसत्कारयशोऽर्थमिति।* *अन्यलाभस्यार्थे* परस्वं हरति। यथाश्वहारिकः। *सत्कारस्य यशसो वार्थं* हरति। इदमपि लोभजमदत्तादानम्। *यच्च मिथ्यादृष्टिप्रवर्तितं* तदपि मोहजमदत्तादानम्, तत्र मोहप्रधान्यात्।

*उपैति मातरम्।* अब्रह्मचर्यार्थे। *उपस्वसारम्।* उपैतीति वर्तते। उपस्वसारं भगिनीमित्यर्थः। *[illegible]।* समानगोत्रामित्यर्थः। उपहा=यजमानः। *ये चाहुरिति* विस्तरः। *उदूखलादितुल्यो मातृग्रामः।* यथोदूखलादयः साधारणा उपभोग्याः, एवं स्त्रीजनः। तस्मान्न दोषोऽस्त्यभिगच्छतामिति। *मृषावादादयो लोभजा द्वेषजाश्च पूर्ववदिति।* मृषावादपैशुन्यपारुष्यसम्भिन्नप्रलापा लोभजा अन्यलाभसत्कारयशोऽर्थं वा, आत्मसुहृत्परित्राणार्थं वा। द्वेषजा वैरनिर्यातनार्थम्।

*न नर्मयुक्तम्।* न परिहासयुक्तम्।

*मिथ्यादृष्टिप्रवर्तित* इति। 'नास्ति परलोकः' इति निर्मर्यादस्य यो मृषा-

मोहजाः । यश्च वेदाद्यसच्छास्त्रप्रलापः ॥ ६८ ॥

अभिध्यादयः कथं लोभजाः ?

**तदनन्तरसम्भूतेरभिध्याद्यास्त्रिमूलजाः**

लोभादनन्तरमुत्पन्ना लोभजाः, द्वेषादनन्तरं द्वेषजाः, मोहादनन्तरं मोहजाः।

उक्ता अकुशलाः कर्मपथाः ॥

कुशलाः कथम् ? इत्याह—

**कुशलाः सप्रयोगान्ता अलोभद्वेषमोहजाः ॥ ६९ ॥**

सप्रयोगपृष्ठाः कुशलाः कर्मपथा अलोभद्वेषमोहजाः; कुशलचित्तसमुत्थितत्वात् । तस्य च अवश्यमलोभादिभिः सम्प्रयोगात् तत्राकुशलकर्मपथप्रयोगाद् विरतिः कुशलकर्मपथप्रयोगः । मौलाद् विरतिः मौलः । पृष्ठाद् विरति पृष्ठः ।

तद्यथा श्रामणेर उपसम्पाद्यमानो नानावासं प्रविशति, भिक्षून् वन्दते, उपाध्यायं याचते, यावदेकं कर्मवाचनं क्रियते द्वितीयं च— अयं प्रयोगः । तृतीयकर्मवाचने या विज्ञप्तिस्तत्क्षणिका चाविज्ञप्तिः—अयं मौलः कर्मपथः । तत ऊर्ध्वं यावन्निश्रया आरोच्यन्ते, तदधिष्ठानं च विज्ञपयति अविज्ञप्तिश्च यावदनुवर्तते—इदं पृष्ठम् ॥६९॥

---

*वादोऽयं मोहजः । पैशुन्यादयस्तु । पैशुन्यपारुष्याबद्धप्रलापाः ।* मृषावादवत् *मोहजाः । यश्चेति* विस्तरः । *यश्च* वेद-*सांख्य-वैशेषिकाद्यसत्प्रलापः,* स चापि मोहजः *सम्भिन्नप्रलापः* ॥ ६८ ॥

*तस्य चेति* कुशलचित्तस्य । *नानावासं प्रविशतीति* । मण्डलं प्रविशतीत्यर्थः । *नानावासा* हि तस्मिन् महासीमामण्डले भवन्ति । *तृतीये कर्मवाचन* इति । ज्ञप्तिचतुर्थेन कर्मणा श्रामणेर उपसम्पाद्यते । तत्र ज्ञप्त्या इदन्नामानमुपसम्पादयेत् सङ्घ इति । लिङर्थ उच्यते । कर्मवाचनेन लडर्थ उच्यते—इमं सङ्घ उपसम्पादयतीति । तत्र कर्मवाचनं त्रिरुच्यते । तृतीयस्य कर्मवाचनस्यापरिसमाप्तेः प्रयोगः कर्मपथस्यावगन्तव्यः । तस्यावसाने तु *या विज्ञप्तिस्तत्क्षणिका वाऽविज्ञप्तिरयं मौलः कर्मपथः । तत ऊर्ध्वं यावन्निश्रया आरोच्यन्त* इति । चत्वारो निश्रयाश्चीवरपिण्डपात-शय्यासनग्लानप्रत्ययभैषज्यलक्षणा यथोक्तेन विधिना तस्योपसम्पादितस्यारोच्यन्ते । *तदधिष्ठानं च विज्ञापयति* । निश्रयाधिष्ठानं च विज्ञप्तिं करोतीत्यर्थः । *अविज्ञप्तिश्च यावदनुवर्तते* । यावत् संवरो न त्यज्यत इत्यर्थः । इदं पृष्ठम् ॥ ६९ ॥

यदुक्तम्—"न सर्वेषां कर्मपथानां लोभादिभिर्निष्ठा" इति, अथ कस्य केन निष्ठा ?

**वधव्यापादपारुष्यनिष्ठा द्वेषेण,**

एषां प्राणातिपात-व्यापाद-पारुष्याणां द्वेषेण समाप्तिः; परित्यागपरुषचित्त-सम्मुखीभावात् ।

**लोभतः ।**

**परस्त्रीगमनाभिध्याऽदत्तादानसमापनम् ॥ ७० ॥**

लोभेन काममिथ्याचाराभिध्याऽदत्तादानानां समाप्तिः ॥ ७० ॥

**मिथ्यादृष्टेस्तु मोहेन,**

अधिमात्रभूतो हि तां निष्ठापयति ।

**शेषाणां त्रिभिरिष्यते ।**

के पुनः शेषाः ? मृषावादपैशुन्यसम्भिन्नप्रलापाः । एषां त्रिभिरपि निष्ठा—लोभेन, द्वेषेण, मोहेन वा ।

य एते कर्मपथाश्चतुर्भिः काण्डैरुक्तास्त्रयस्त्रय एकस्त्रयश्च, एषां यथाक्रमम्—

**सत्त्वभोगार्वाधिष्ठानं नामरूपं च नाम च ॥ ७१ ॥**

सत्त्वाधिष्ठाना वधादयः । भोगाधिष्ठानाः परस्त्रीगमनादयः । नामरूपाधिष्ठाना मिथ्यादृष्टिः । नामकायाधिष्ठाना मृषावादादयः ॥ ७१ ॥

---

*"वधव्यापादपारुष्यनिष्ठाद्वेषेण" इति ।* द्वेषेणेवेत्यवधारणम् । *परित्यागपरुषचित्तसम्मुखीभावादिति ।* परित्यागचित्तसम्मुखीभावात् । प्राणातिपातस्य निष्ठा द्वेषेण । *परुषचित्तसम्मुखीभावात्तु* व्यापादपारुष्ययोः ॥ ७० ॥

*चतुर्भिः काण्डैरुक्ता इति ।* चतुर्भिर्भागैरुक्ता । कथम् ? "वधव्यापादपारुष्यनिष्ठा द्वेषेण" इत्येकः काण्डः । "लोभतः परस्त्रीगमनाभिध्यादत्तादानसमापनम्' इति" द्वितीयः । "मिथ्यादृष्टेस्तु मोहेन" इति तृतीयः । "शेषाणां त्रिभिरिष्यते" इति चतुर्थः काण्डः । *भोगाधिष्ठाना इति ।* विषयाधिष्ठानाः । *नामरूपाधिष्ठानेति ।* पञ्चस्कन्धाधिष्ठानेत्यर्थः । नाम हि वेदनादयः स्कन्धाः । रूपं रूपस्कन्धः । अधिष्ठानम्, अधिकरणम्, विषय इत्यर्थान्तरम् । *नामकायाधिष्ठाना मृषावादादयो* वाङ्नाम्नि प्रवर्तन्त इति कृत्वा ॥ ७१ ॥

यः परं मरणान् नियमय्य समं तेन पूर्वं वा म्रियते, किमस्य मौलः कर्मपथो भवति ? उताहो न ?

**समं प्राक् च मृतस्यास्ति न मौलः,**

अत एवोच्यते—"स्यात् प्रयोगं कुर्यात् फलं च परिपूरयेन्न च प्राणातिपातावद्येन स्पृश्यते ? आह—स्यात्, यथापि तद्व्यपरोपकः पूर्वं स वा कालं कुर्यात्" ( ) इति । किं पुनस्तत् कारणम् ?

न हि वध्ये जीवति हन्तुः प्राणातिपातावद्येनास्ति योगः, नापि सहमृतस्य हन्तुः ।

**अन्याश्रयोदयात् ।**

येनाश्रयेण तत्प्रयोगः कृतः स उच्छिन्नः, अन्य एवाश्रयो निकायसभागभिन्न उत्पन्नः, तस्य प्रयोक्तृत्वात् कर्मपथेन योगो न उक्तः ।

यत्सेनापातमृगयावस्कन्धेषु परेषां वधार्थं बहवः समग्राः पतन्ति, एकश्च प्राणातिपातं करोति, कस्तेन समन्वागतो भवति ?

**सेनादिष्वेककार्यत्वात्[1] सर्वे कर्तृवदन्विताः[1] ॥ ७२ ॥**

यथैव हि कर्त्ता, तथा सर्वे समन्वागता भवन्ति; एककार्यत्वात् । अर्थतो हि तेऽन्योन्यं प्रयोक्तारो भवन्ति ।

यस्तर्हि बलान्नीयते, सोऽपि समन्वागतो भवति ? अन्यत्र य एवं निश्चित्य यायात्—'यावज्जीवितहेतोरपि प्राणिनं न हनिष्यामि' इति ॥ ७२ ॥

कियता पुनः प्राणातिपातं स्वयं कुर्वतः कर्मपथो भवति ? कियता यावन्मिथ्यादृष्टिः कर्मपथः—इति लक्षणं वक्तव्यम् ? तदुच्यते—

---

*"न मौलः"* इति । प्रतिषेधात् पृष्ठमपि न भवतीति गम्यते । मौलपूर्वत्वात् पृष्ठस्य ।

*न च प्राणातिपातावद्येन स्पृश्यत* इति । न मौलेनेत्यभिप्रायः ।

*"अन्याश्रयोदयात्" इति ।* विसभागाश्रयोदयादित्यर्थः ।

*अर्थतो हि तेऽन्योन्यं प्रयोक्तार* इति । न वाचा तेऽन्योन्यं प्रयोक्तारः, किं तर्हि ? प्राणातिपातकारणाभ्युपगमादर्थत इति दर्शयति । *एककार्यत्वात्* ॥ ७२ ॥

---

१–१. सेनादेश्चैककार्यत्वात् सर्वंकर्तृवदस्ति सः—इति पाठान्तरम् ।

**प्राणातिपातः सञ्चिन्त्य परस्याभ्रान्तिमारणम् ।**

यदि 'मारयिष्याम्येनम्' इति संज्ञाय परं मारयति, तमेव च मारयति नान्यं भ्रमित्वा—इयता **प्राणातिपातो** भवति । यस्तर्हि सन्दिग्धो मारयति—किमयं प्राणी न प्राणीति, स एवान्यो वेति, सोऽप्यवश्यमेतं निश्चयं लब्ध्वा तत्र प्रहरति । योऽस्तु सोऽस्त्विति कृतमेवानेन त्यागचित्तं भवति ।

कथं क्षणिकेषु स्कन्धेषु प्राणातिपातो भवति ? प्राणो नाम वायुः कायचित्तसन्निश्रितो वर्तते, तमतिपातयति[1] । यथा प्रदीपं निरोधयति, घण्टास्वनं वा ।

जीवितेन्द्रियं वा प्राणः, तन्निरोधयति । यद्येकस्यापि जीवितक्षणस्योत्पद्यमानस्यान्तरायं करोति, प्राणातिपातावद्येन स्पृश्यते, नान्यथा ।

कस्य तज्जीवितं यस्तदभावान्मृतो भवति ? 'कस्य' इति षष्ठीं **पुद्गलवादे** चिन्तयिष्यामि[2] । उक्तं तु **भगवता**—

---

*संज्ञाय* परिच्छिद्येत्यर्थः । *नान्यं भ्रमित्वेति* । न भ्रान्त्या *अन्यं* मारयतीत्यर्थः । *क्षणिकेषु स्कन्धेष्विति* । स्वरसेनैव विनश्वराणां स्कन्धानां कथमन्येनैषां निरोधः क्रियते इत्यभिप्रायः । *प्राणो नाम वायुः कायचित्तसन्निश्रितो वर्तत* इति । कथं चित्तसन्निश्रितो वायुः प्रवर्तते ? चित्तप्रतिबद्धवृत्तित्वात् । तथा हि—निरोधासंज्ञिसमापत्तिसमापन्नस्य मृतस्य च न प्रवर्तते । *शास्त्रे*ऽप्युक्तम्—"य इमे आश्वासप्रश्वासाः, किं ते कायसन्निश्रिता वर्तन्त इति वक्तव्यम् ? चित्तसन्निश्रिता वर्तन्त इति वक्तव्यम् ? नैव कायचित्तसन्निश्रिता वर्तन्त इति वक्तव्यम् ? कायचित्तसन्निश्रिता वर्तन्त इति वक्तव्यम् ? आह—कायचित्तसन्निश्रिता वर्तन्त इति वक्तव्यमिति विस्तरः । *तमतिपातयति* इति । *तं* प्राणं विनाशयतीत्यर्थः । उत्पन्नस्य स्वरसनिरोधादनागतस्योत्पत्तिं प्रतिबध्नन् निरोधयतीत्युच्यते । *यथा प्रदीपं निरोधयति । घण्टास्वनं वा ।* क्षणिकमपि सन्तम् । कथं च स निरोधयति ? अनागतस्योत्पत्तिप्रतिबन्धात् ।

*जीवितेन्द्रियं वा प्राण* इति । चित्तविप्रयुक्तस्वभावमेनं दर्शयति ।

*कस्य तज्जीवितम् । यस्तदभावान्मृत* इति । यः प्राणी जीवितस्याभावान्मृतो भवति स बौद्धानां नास्ति; नैरात्म्यवादित्वात् । अत एवं पृच्छति । *कस्येति* षष्ठीम् पुद्गलवादे पुद्गलप्रतिषेधप्रकरणे—"असत्यात्मनि कस्येयं स्मृतिः ?

---

१. तमभिपातयति—का० । २. विचारयिष्यामः—का० ।

"आयुरूष्माऽथ विज्ञानं यदा कायं जहत्यमी ।
अपविद्धस्तदा शेते यथा काष्ठमचेतनम्" ॥ ( ) इति

तस्मात् सेन्द्रियः कायो जीवतीत्युच्यते, अनिन्द्रियो मृत इति ।

"अबुद्धिपूर्वादपि प्राणिवधात् कर्तुरधर्मः, यथा—अग्निसंयोगाद् दाहः" इति निर्ग्रन्थाः ।

तेषां परस्त्रीदर्शनसंस्पर्शने[1] एष[1] प्रसङ्गः । निर्ग्रन्थशिरोलुञ्चने च कष्टतपोदेशने च शास्तुः, तद्विसूचिकामरणे च दातुः, वैद्यानां चातुरपीडने, मरणे च मातृ-गर्भस्थयोश्च; अन्योन्यदुःखनिमित्तत्वात् । वध्यस्यापि च तत्क्रियासम्बन्धाद्, अग्निस्वाश्रयदाहवत् । कारयतश्चाप्रसङ्गः; तदसम्बन्धात् । परेणाग्निं स्पर्शयतस्तेनादाहवत् । अचेतनानां च काष्ठादीनां गृहपाते प्राणिनां वधात्

---

किमर्थैषा षष्ठी" इत्यत्र प्रदेशे *चिन्तयिष्यामि* । आस्तां तावदेतत् सामान्यासिकमित्यभिप्रायः ।

*तस्मात् सेन्द्रियः कायो जीवतीति* । सेन्द्रियस्यैव कायस्य तज्जीवितं नात्मन इति दर्शयति । *स एव चानिन्द्रियो मृत* इति ।

*अबुद्धिपूर्वादिति* विस्तरः । असञ्चिन्त्यकृतादपि *प्राणातिपातं कर्तुरधर्मो यथाग्निसंस्पर्शाद*बुद्धिपूर्वादसञ्चिन्त्यकृताद् *दाह इति* । *निर्ग्रन्था* नग्नाटकाः । *तेषां* निर्ग्रन्थानामेवंवादिनाम् । अबुद्धिपूर्वेऽपि *परस्त्रीदर्शनसंस्पर्शन एष प्रसङ्गः* । पापप्रसङ्ग इत्यर्थः । अग्निदृष्टान्तात् । *निर्ग्रन्थशिरोलुञ्चने* वा निर्ग्रन्थशिरःकेशोत्पाटने च । दुःखोत्पादनबुद्ध्यभावेऽप्यधर्मप्रसङ्गः । *कष्टतपोदेशने च* । निर्ग्रन्थशास्तुरधर्मप्रसङ्गो बुद्ध्यपेक्षयाम् । परस्य दुःखोत्पादनमधर्माय भवतीति कृत्वा । *तद्विसूचिकामरणे*[2] च । निर्ग्रन्थानां विसूचिकया अजीर्णेन मरणे । *दातु*रन्नदातुर*धर्मप्रसङ्गः* । अन्नदानेन मरणकारणात् । अबुद्धिपूर्वोऽपि हि प्राणिवधः कारणमधर्मस्येति । *मातृगर्भस्थयोश्च* मातुः, गर्भस्थस्य च । *अन्योन्यदुःखनिमित्तत्वात्* । अधर्मप्रसङ्गः; तत एवाग्निदृष्टान्तात् । *वध्यस्यापि च तत्क्रियासम्बन्धात्* । प्राणातिपातक्रियासम्बन्धात् अधर्मप्रसङ्गः । वध्ये हि सति प्राणातिपातक्रिया वधकस्य भवति । *अग्निस्वाश्रयदाहवत्* । अग्निर्हि न केवलमन्यजनं दहति, किं तर्हि ? स्वाश्रयमपि इन्धनं दहतीति । तद्वत् । न हि तेषां चेतनाविशेषोऽपेक्ष्यते । *कारयतश्च* परेण वधादि अधर्मस्य*प्रसङ्गः* । *परेणाग्निं स्पर्शयतः* स्पर्शयितु*स्तेनादाहवत्* । आग्नेयधर्माभ्युपगमात् । *अचेतनानां च काष्ठादीनां* काष्ठ

---

१-१. परदारदर्शनेऽप्येष—का० । २. ०मरणेन—मुद्रितः पाठः ।

पापप्रसङ्गः । न वा दृष्टान्तमात्रात् सिद्धिरिति ।

उक्तः प्राणातिपातः ॥

**अदत्तादानमन्यस्वस्वीक्रिया बलचौर्यतः ॥ ७३ ॥**

'अभ्रान्त्या' इति वर्तते । यदि बलाद् वा चौर्येण वा परस्वं स्वीकरोति यत्रैव च बलचौर्याभिप्रायेणान्यत्र संज्ञाविभ्रमात्, इयताऽदत्तादानं भवति ।

स्तूपादपहरतो बुद्धाददत्तादानम् । सर्वं हि तद् भगवता परिनिर्वाणकाले परिगृहीतमिति । येषां संरक्ष्यमित्यपरे ।

अस्वामिकं च निधिमुद्धरतो विषयस्वामिकात् परिवर्तकं हरतः कृते कर्मणि सीमाप्राप्तेभ्यः, अकृते सर्वबुद्धशैक्षेभ्यः ॥ ७३ ॥

**अगम्यगमनं काममिथ्याचारश्चतुर्विधः ।**

**चतुष्प्रकारमगम्यगमनं काममिथ्याचारः**—१. अगम्यां गच्छति परपरिगृहीतां वा मातरं दुहितरं वा मातृपितृसम्बधिनीं वा, २. अनङ्गे वा गच्छति स्वामपि भार्याम् अपाने मुखे वा, ३. अदेशे वा गच्छति प्रकाशे चैत्येविहारे वा, ४. अकाले वा गच्छति ।

कः पुनः अकालः ? गर्भिणीं वा गच्छति, पाययन्तीं वा, सनियमां वा । यदि भर्तुरनुज्ञया सनियमा भवतीत्येके ।

'अभ्रान्त्या' इति वर्तते । यदि स्वसंज्ञी परस्त्रियं यायात्, न स्यात् कर्म-

---

लोष्टवंशादीनाम् । *गृहपाते* तत्रान्तःस्थितानां *प्राणिनां वधात् पापप्रसङ्गः ।* न हि बुद्धिविशेषः प्रमाणीक्रियते । *न वा दृष्टान्तमात्रा*दहेतुकात् *सिद्धि*रस्यार्थस्येति ।

*अन्यत्र संज्ञाविभ्रमादिति ।* यदि देवदत्तद्रव्यं हरामीति अभिप्रायमाणो यज्ञदत्तद्रव्यं हरति, नादत्तादानमित्यभिप्रायः ।

*परिनिर्वाणकाले परिगृहीतमिति ।* दातृजनपुण्यानुग्रहार्थम् । अपरिग्रहे हि स्तूपे दानमफलं स्यात्; प्रतिग्राहकाभावात् । *परिवर्तकम् ।* मृतस्य भिक्षोः चीवरादि द्रव्यम् । *कृते कर्मणि* ज्ञप्तिकर्मणि ॥ ७३ ॥

*गर्भिणीगमने* गर्भोपरोधः । *पाययन्ती* स्तन्योपभोगावस्थपुत्रिका स्त्री । अब्रह्मचर्यकरणे हि तस्याः स्तन्यं क्षीयते । बालकस्य वा पुष्टये तत् स्तन्यं न भवतीति ।

पथः। यद्यन्यः परस्त्रीसंज्ञयान्यामभिगच्छेत् परदारप्रयोगाद्, वस्तुपरिभोगाच्च स्यादित्येके। अन्यत्र प्रयोगान्न स्यात् प्राणातिपातवदित्यपरे।

भिक्षुणीं गच्छतः कस्यान्तिकात् काममिथ्याचारः? विषयस्वामिनः। तस्य हि तन्न मर्षणीयम्। तस्यापि सनियमा स्वभार्येव तु सा न गम्या।

कुमारीं गच्छतो यस्य निसृष्टा। नो चेद्यस्य रक्षा, अन्ततो राज्ञः।

**अन्यसंज्ञोदितं[1] वाक्यमर्थाभिज्ञे मृषावचः॥ ७४॥**

यदि यमर्थं ब्रवीति तस्मिन्नन्यथासंज्ञी भवति, यं चाधिकृत्य ब्रवीति स तस्य वाक्यस्यार्थाभिज्ञो भवति, तद्वाक्यं मृषावादः। अनभिज्ञे किं स्यात्? सम्भिन्नप्रलापः स्यात्।

'वाक्यम्' इत्युच्यते, कदाचिच्च बहवो वर्णा वाक्यं भवन्तीति कतमस्तत्र कर्मपथः? पश्चिमः सहाविज्ञप्त्या, यत्र चार्थाभिज्ञो भवति। पूर्वे तु वर्णाः प्रयोगः।

'अर्थाभिज्ञे' इत्युच्यते, किं तावदभिज्ञातार्थे श्रोतरि? आहोस्विद् अभिज्ञातुं समर्थे? किं चातः? यद्यभिज्ञातार्थे मनोविज्ञानविषयत्वाद्, वाक्यार्थस्य श्रोतृविज्ञानेन सह निरोधाच्च वाग्विज्ञप्तेरविज्ञप्तिरेव स्यात् कर्मपथः? अथाभिज्ञातुं समर्थे; एवं दोषो न भवति। कथं चाभिज्ञातुं समर्थोऽप्युत्पन्नभाव उत्पन्ने श्रोत्रविज्ञाने? यथा न दोषस्तथास्तु॥ ७४॥

---

*प्राणातिपातवदिति।* यथा देवदत्तं मारयामीत्यभिप्रायेण यज्ञदत्तं मारयतो प्राणातिपातो भवति, तद्वत्। इहान्यस्मिन् वस्तुनि प्रयोगोऽभिप्रेतः, अन्यच्च वस्तु परिभुक्तमिति *न स्यात्* काममिथ्याचार *इत्यपरे।*

*अन्ततो राज्ञ* इति। यद्यन्यः कश्चिद् रक्षिता नास्ति। अन्ततः सर्वपश्चाद् राज्ञोऽन्तिकात् स काममिथ्याचारः। तस्य हि तन्न मर्षणीयमिति।

*आहोस्विदभिज्ञातुं समर्थ* इति। योऽपि ह्यर्थमभिज्ञातुं समर्थः सोऽप्यर्थाभिज्ञ इति शक्यते वक्तुम्—अर्थमभिजानीत इति; विप्रकृतावस्थायामभिप्रेतत्वात्। *मनोविज्ञानविषयत्वाद् वाक्यार्थस्येति।* 'नास्त्यत्र देवदत्तः', 'अस्ति वा' इत्युच्यमाने शब्दः श्रोत्रा विज्ञायते। तदनन्तरं तु चक्षुरादिसमूहो देवदत्तो वाक्यार्थो विकल्पेन मनोविज्ञानेन विज्ञायते, तेन*ाविज्ञप्तिरेव* मौलः *कर्मपथः स्यात्। वाग्विज्ञप्तेः श्रोत्रविज्ञानेन सह निरोधात्।* इष्यते च विज्ञप्त्यविज्ञप्ति-

---

१. अन्यथासंज्ञिनो—का।

षोडश व्यवहाराः सूत्र उक्ताः—"अदृष्टे दृष्टवादिता, अश्रुते, अमते, अविज्ञाते विज्ञातवादिता, दृष्टे अदृष्टवादिता, यावद् विज्ञातेऽविज्ञातवादिता इतीमेऽनार्या अष्टौ व्यवहाराः। दृष्टे दृष्टवादिता, यावद्विज्ञाते विज्ञातवादिता, अदृष्टेऽदृष्टवादिता, यावदविज्ञातेऽविज्ञातवादिता इतीमे आर्या अष्टौ व्यवहाराः। तत्रैषां दृष्टश्रुतमतविज्ञातानां किं लक्षणम् ?

**चक्षुःश्रोत्रमनश्चित्तैरनुभूतं त्रिभिश्च यत्।**
**तद् दृष्टश्रुतविज्ञातं मतं चोक्तं यथाक्रमम्॥ ७५॥**

यच्चक्षुर्विज्ञानेनानुभूतं तद् दृष्टमित्युक्तम्। यच्छ्रोत्रविज्ञानेन तच्छ्रुतम्। यन्मनोविज्ञानेन तत् **विज्ञातम्**। यत् घ्राणजिह्वाकायविज्ञानैस्तन्मतम्। किं कारणम् ? गन्धरसस्प्रष्टव्यान्यव्याकृतत्वान्मृतकल्पानि। अत एतेषु मताख्येति **वैभाषिकाः**।

किमत्र ज्ञापकम् ? सूत्रम्, युक्तिश्च।

सूत्रं तावत्—"तत्किं मन्यसे माहकीमातः यानि त्वया चक्षुषा रूपाणि न दृष्टानि न दृष्टपूर्वाणि न पश्यसि, नापि ते एवं भवति पश्येयमिति; अपि नु ते तन्निदानमुत्पन्नम्, छन्दो वा रागो वा स्नेहो वा येन वा आलयो वा नियतिरध्यवसानं वा ? नो भदन्त। ये त्वया श्रोत्रेण शब्दा न श्रुता न श्रुतपूर्वाः, विस्तरेण यावन्मनसा धर्मा न विज्ञाताः ? विस्तरेण यावन्नो भदन्त। अत्र च ते माहकीमातर्दृष्टे दृष्टमात्रं भविष्यति, श्रुते मते विज्ञाते विज्ञातमात्रम्" ( ) इत्युक्तम्। अतस्त्रिषु विषयेषु दृष्टश्रुतविज्ञातशब्दापदेशाद् गन्धादिषु मताख्या गम्यते।

---

स्वभावो मौलः कर्मपथ इति॥ ७४॥

*मृतकल्पानि। अत एतेषु मताख्येति*। नैरुक्तं विधिमालम्ब्य *वैभाषिका* व्याचक्षते। स्वेन्द्रियैः प्राप्ता मता इत्याचार्य*सङ्घभद्रः*।

*विस्तरेण यावन्मनसा धर्मा* इति। ये त्वया घ्राणेन गन्धा न घ्राताः, जिह्वया रसा नास्वादिताः, कायेन स्प्रष्टव्यानि न स्पृष्टानि, यावत् ये त्वया मनसा धर्मा न विज्ञाता इति।

*त्रिषु विषयेषु* रूपशब्दधर्मेषु *दृष्टश्रुतविज्ञातापदेशाद्* यथाक्रमम्। *गन्धादिषु* गन्धरसस्प्रष्टव्येषु *मताख्या गम्यते*। ते मतशब्देनोच्यन्ते।

अत एवं चानिष्यमाणे दृष्टादिभावबाह्यत्वात् गन्धादिषु व्यवहारो न स्यादित्येषा युक्तिः।

सूत्रं तावज्ज्ञापकम्, अन्यार्थत्वात्। न ह्यत्र सूत्रे भगवान् व्यवहाराणां लक्षणं शास्ति स्म। किं तर्हि? 'अत्र च तव' षड्विधे विषये चतुर्षु व्यवहारेषु दृष्टादिव्यवहारमात्रं भविष्यति। न हि[2] प्रियाप्रियनिमित्ताध्यारोप.' इत्ययमत्र सूत्रार्थो दृश्यते।

किं पुनर्दृष्टम्? किं च यावद्विज्ञातम्?

केचित् तावदाहुः—यत् पञ्चभिरिन्द्रियैः प्रत्यक्षं तद् दृष्टम्। यत् परत आगमितं तच्छ्रुतम्। यद्[3] युक्त्यनुमानतो रुचितं तन्मतम्। यन्मनःप्रत्यक्ष-

---

*एवं चानिष्यमाणं*। गन्धादिषु मताख्येत्यनिष्यमाणे। *दृष्टादिभावबाह्यत्वात्*। गन्धादीनामरूपलक्षणत्वेन दृष्टभावबाह्यत्वाद्, अशब्दधर्मायतनलक्षणत्वेन च श्रुतविज्ञातभावबाह्यत्वात्। *गन्धादिषु व्यवहारो न स्यात्*। दृष्ट इति वा, यावद्विज्ञात इति वेत्येषा *युक्तिः*। तेषु मताख्येति।

*आचार्य* आह—*सूत्रं तावदिति* विस्तरः। *अन्यार्थत्वादिति*। यस्मात् सूत्रस्यान्य एवार्थः। सूत्रार्थं ब्रवीति—*अत्र च तव षड्विधे विषये* रूपादौ *चतुर्षु दृष्टादिव्यवहारेषु* दृष्ट-श्रुत-मत-विज्ञातव्यवहारेषु *दृष्टादिव्यवहारमात्रं भविष्यतीति*। रूपे दृष्टमिति व्यवहारो भविष्यति, यावद्विज्ञातमिति। एवं शब्दादिषु अत्र च ते माहकीमातर्दृष्टे[4] विषयषट्के दृष्टमात्रं भविष्यति। श्रुते विषयषट्के, मते, विज्ञाने विषयषट्के एवं विज्ञातमात्रमित्येवं तत् सूत्रपदं व्याख्यायत इत्यभिप्रायः। *न हि प्रियाप्रियनिमित्ताध्यारोपस्तव भविष्यतीति* सूत्रार्थः। ननु च यानि त्वया चक्षुषा रूपाणि न दृष्टानीत्येवोक्तानि, न तु न श्रुतानि यावन्न विज्ञातानीत्येवोक्तानि; एवं शब्दा न श्रुता इत्येवोक्ताः, न तु न दृष्टा यावन्न विज्ञाता इत्युक्ताः; एवं यावद्धर्मा न विज्ञाता इत्येवोक्ताः, न तु न दृष्टा यावन्न स्पृष्टा इति? नैष दोषः; उदाहरणरूपमेतदुक्तं भगवता। यथा हि रूपाणि न दृष्टानीत्युक्तानि, तथा न श्रुतानि यावन्न विज्ञातानीति वक्तव्यानि। एवं शब्दादिषु वक्तव्यम्। तेनैवं लक्षणमुच्यते।

*यत् पञ्चभिरिन्द्रियैरिति* विस्तरः। *यत् पञ्चभिरिन्द्रियैः प्रत्यक्षं* रूपादि *तद् दृष्टम्*। *यत् परत आगमितं* विषयषट्कमपि *तच्छ्रुतम्*। *यद् युक्त्यनुमानतो रुचित*मभिप्रेतं *तन्मतम्*। *युक्त्यनुमान*मित्यव्यभिचार्यनुमानम्। तच्च षड्विषय-

---

१. ते—का०।
२. का० पुस्तके नास्ति।
३. यत् स्वयं—का०।
४. मालकीमात०—मुद्रितः पाठः।

भावेनाधिष्ठितं प्रत्यात्मवेद्यं तद् विज्ञातमिति ।

एते च पञ्च विषयाः प्रत्येकं दृष्टा इति वा कृत्वा व्यवह्रियन्ते, श्रुता मता विज्ञाता इति वा । षष्ठोऽन्यत्र दृष्टादिति नास्ति गन्धादिषु व्यवहाराभावप्रसङ्गः । तस्मात्किद् युरप्येषा युक्तिर्न भवति ।

**पूर्वाचार्या** एवमाहुः—तद् दृष्टं यत् प्रत्यक्षीकृतं चक्षुषा । श्रुतं यच्छ्रोत्रेण परतश्चागमितम्[1] । मतं यत् स्वयं चिन्तितम् । विज्ञातं यत् प्रत्यात्मं[2] प्रतिसंवेदितमधिगतं चोत्पन्नम् ।

प्रसङ्गेन शास्त्रं प्रवर्तयताम् । यः कायेनान्यथात्वं प्रापयेत् स्यान्मृषावादः ? स्यात् । अत एवोच्यते—"स्यान्न कायेन पराक्रमेत, प्राणातिपातावद्येन च स्पृश्येत । स्याद् वाचा पराक्रमेत स्यान्न वाचा पराक्रमेत, मृषावादावद्येन च स्पृश्येत । स्यात् कायेन पराक्रमेत, स्यान्न कायेन न वाचा पराक्रमेत, उभयावद्येन वा[3] स्पृश्येत । स्यात् ऋषीणां मनःप्रदोषेण । पोषधनिदर्शनं चात्र" इति ।

---

गोचरम् । *षष्ठोऽन्यत्र दृष्टादिति* । *षष्ठो विषयो* धर्माः । स दृष्टव्यवहारं वर्जयित्वा त्रिभिः श्रुतादिभिर्व्यवहारैर्व्यवह्रियते । *अतो नास्ति गन्धादिषु व्यवहाराभावप्रसङ्गः । तस्माद् युक्तिरप्येषा न युक्तिर्भवति* । या वैभाषिकैरुक्ता—'एवं चानिष्यमाणे' इत्येवमादिका; यस्मादन्यथापि गन्धादिषु व्यवहारो भवतीति ।

*यत् प्रत्यक्षीकृतं* चक्षुषेति । न पञ्चभिरिन्द्रियैः । यच्छ्रोत्रेण श्रुतं *परतश्चागमितमिति* उभयमप्यभीष्टम् । *प्रत्यात्मं प्रतिसंवेदितम्* । सुखाद्यसमाहितेन चित्तेन । *अधिगतं* तु समाहितेन । लौकिकेनैव, न लोकोत्तरेण । लौकिकं व्यवहाराधिकारात् । तदेवं *योगाचारनये*नापि षडप्येते विषयाः प्रत्येकं यथासम्भवं दृष्टा इति वा व्यवह्रियन्ते, श्रुताः, मताः, विज्ञाता इति वेत्यतो नास्ति गन्धादिषु व्यवहाराभावप्रसङ्ग इति ।

*यः कायेनान्यथेति* । कायसंज्ञया योऽर्थं गमयति, तस्यापि *मृषावादः* । *पराक्रमेत* व्यायच्छेत । *वाचा पराक्रमेतेति* । वाचा परं मारयेदित्यर्थः । इह तु प्राणातिपातस्य कायिकत्वात् कायिक्येवाविज्ञप्तिर्मौलसंगृहीता, न वाचिकी । नाप्यत्र कायिकी विज्ञप्तिः स्यात् । *कायेन पराक्रमेतेति* । अत्र मृषावादस्य वाचिकत्वात् वाचिक्येवाविज्ञप्तिर्मौलसंगृहीतेत्यवगन्तव्यम् । *उभयावद्येन वेति* । काय-वागवद्येन । *ऋषीणां मनःप्रदोषेण* कायावद्येन योगो भवति । *पोषधनिदर्शनं*

---

१. ०श्चाखरितम्—का० । २. प्रत्यात्म०—का० । ३. च—का० ।

यद्युभयथापि न पराक्रमेत न चाविज्ञप्तिकास्त्यविज्ञप्तिः कामावचरी, कथं तयोः कर्मपथः सिद्ध्यति ? कर्तव्योऽत्र यत्नः ॥ ७५ ॥

गतो मृषावादः ॥

**पैशुन्यं क्लिष्टचित्तस्य वचनं परभेदने ।**

यत् क्लिष्टचित्तस्य परेषां भेदाय वचनमप्रीतये तत् पैशुन्यम् । 'अर्थाभिज्ञे' इति वर्तते, 'अभ्रान्त्या' इति च ।

**पारुष्यमप्रियम्**

वचनम् । 'क्लिष्टचित्तस्य' इति वर्तते । 'अर्थाभिज्ञे' 'अभ्रान्त्या' इति च । यत् क्लिष्टचित्तस्य परेषामप्रियवचनमर्थाभिज्ञे तत्रैव च यद् विवक्षितं तत् पारुष्यम् ।

**सर्वं क्लिष्टं भिन्नप्रलापिता ॥ ७६ ॥**

'वाक्यम्' इत्यधिकारो वर्तते । सर्वं क्लिष्टं वचनं सम्भिन्नप्रलापः । सैव च

---

चात्रेति । वागवद्येन योगो भवति । भिक्षुपोषधे हि 'कच्चित्थ परिशुद्धाः' इति विनयधरेणानुश्राविते यदि कश्चिद् भिक्षुः सतीमापत्तिं नाविष्कुर्यात्, तूष्णीम्भावेनैवाधिवासयेत्, स मृषावादी भवेदिति ।

*कथं तयोः कर्मपथः सिध्यतीति* । कथं तयोर्ऋषिभिक्ष्वोः कायवाग्भ्यामपराक्रममाणयोः प्राणातिपातो मृषावादश्च यथाक्रमं कर्मपथः सिध्यतीति ? *कर्तव्योऽत्र यत्नः* । *वैभाषिकैः* कर्तव्यः समाधिरित्यर्थः ।

*अत्राचार्यसङ्घभद्रः* समाधिमाह—ऋषयोऽर्थंत आज्ञापयितारो भवन्ति । तेषां हि सत्त्वपरित्यागप्रवृत्तं पापाशयमवेत्यामनुष्यास्तदभिप्रसन्नाः कायेन पराक्रमन्ते । येन तेषामृषीणां कर्मपथ उत्पद्यते । कथम् ? परविज्ञप्त्येति । अवश्यं तथाविधस्य कायवाग्विकारा भवन्ति । अपि च शपन्ति ते तथा । तत्र चावश्यं काय-वाक्चेष्टया भवितव्यम् ।

अन्ये त्वाहुः—न कामधातावश्यमविज्ञप्तिः सर्वैव विज्ञप्त्यधीना भवति; फलप्राप्त्यैव सहपञ्चकादीनां प्रातिमोक्षसंवरोत्पत्तिसम्भवात् । इत्यकुशलाप्येवञ्जातीया काचिद् विज्ञप्तिमन्तरेणापि स्यात् । पूर्वविज्ञप्तं तैरिति अवश्यमितरत्रापि भविष्यति । ऋषीणां तावदुक्तं पोषधमृषावादेऽपि । यदपरिशुद्धः सङ्घमध्यं प्रविशति, निषीदति, स्वयमीर्यापथं कल्पयति, तत्सम्बद्धं वा यत्किञ्चिद् भाषते, सास्य पूर्वविज्ञप्तिरिति ॥ ७५ ॥

*सर्वं क्लिष्टं वचनं सम्भिन्नप्रलाप* इति । मृषावादादि त्रयमपि । न केवलः स-

सम्भिन्नप्रलापिता । तद्योगेन हि सम्भिन्नप्रलापी भवति ॥ ७६ ॥

**अतोऽन्यत् क्लिष्टमित्यन्ये,**

अतो मृषावादादित्रयात्[1] यदन्यत् क्लिष्टं वचनं स[2] सम्भिन्नप्रलाप इत्यपरे ।

**लपनागीतनाट्यवत् ।**

**कुशास्त्रवच्च,**

तद्यथा भिक्षुर्मिथ्याजीवी लपनां करोति, रक्ताश्च केचिद् गायन्ति, नाट्ये च नटाः परेषां रञ्जनार्थं प्रलपन्ति, कुशास्त्राणि च तद्दृष्टयोऽपि गदन्ति; एवं परिदेवसङ्गणिकादिकमपि यदन्यन्मृषावादादिभ्यः क्लिष्टं वाक्कर्म तत् सम्भिन्नप्रलापः ।

कथं चक्रवर्तिकाले गीतं चास्ति न च सम्भिन्नप्रलापः ? नैष्कर्म्योपसंहितानि हि तदानीं गीयन्ते स्म, न ग्राम्यरसोपसंहितानि ।

तदाप्यावाहविवाहाद्यभिलापसद्भावादस्ति सम्भिन्नप्रलापो न कर्मपथ इत्यपरे ।

---

क्लिष्टम् । *सैव च सम्भिन्नप्रलापितेति* । यस्य गुणस्य हि भावाद् द्रव्ये शब्द-निवेशस्तस्य तदभिधाने त्वतलाविति । तत्प्रत्ययेन क्लिष्टवचनलक्षणः सम्भिन्न-प्रलाप उच्यते । *तद्योगेन हि* । सम्भिन्नप्रलापप्रयोगेन हि । स पुद्गलः *सम्भिन्नप्रलापी भवति* ॥ ७६ ॥

*मृषावादादित्रयात् यदन्यत्*[3] *क्लिष्टं वचनं स सम्भिन्नप्रलाप* इत्युक्त्वोदाहरणं दर्शयन्नाह—

*लपनागीतनाट्यवत् कुशास्त्रवच्चेति* । *लपनां करोतीति* । लाभ-यशस्कामतया सेवाभिद्योतिकां वाचं निश्चारयतीत्यर्थः । *परिदेवसङ्गणिकादिकमिति* । आदि-शब्देन परिदेवसङ्गणिकाभ्यां योऽन्यः क्लिष्टचित्तानां कश्चिदालापः ।

*आवाहविवाहाद्यभिलापसद्भावादिति* । आवाहः = दारिकाया दारकगृहगमनम् । विवाहः=दारकस्य दारिकागृहागमनम् । आवाहः=प्रवेशनकः, विवाहः= परिणयनमित्यपरे । *आदि*शब्देन रक्तचित्तानामालापः ।

---

१. ०वादादिकात् वाक्कर्मणोः—का० ।　२. तत्—का० ।

३. यदन्य०—मुद्रित. पाठः ।

**अभिध्या तु परस्वविषमस्पृहा ॥ ७७ ॥**

'अहो बत यत् परेषां तन्मम स्यात्' इति **परस्वेभ्यो** या **विषमेणा**न्यायेन **स्पृहा** स्वीकरणेच्छा बलाद्वा चोपायाद्वा, साऽ**भिध्या** कर्मपथः ।

सर्वैव कामावचरी तृष्णा अभिध्येत्यपरे । तथा **निवरणाधिकारे** कामच्छन्दमधिकृत्योक्तं **सूत्रे**—"सोऽभिध्यां लोके प्रहाय" इत्येवमादि ।

यद्यपि सर्वाभिध्या न तु सर्वा कर्मपथः; औदारिकदुश्चरितसंग्रहादित्यपरे । मा भूच्चक्रवर्तिनामुत्तरकौरवाणां[1] चाभिध्या कर्मपथ इति ॥ ७७ ॥

**व्यापादः सत्त्वविद्वेषः,**

सत्त्वेषु विद्वेषो **व्यापदः** परपीडाकारप्रवृत्तः ।

**नास्तिदृष्टिः शुभाशुभे ।**

**मिथ्यादृष्टिः,**

शुभे चाशुभे च कर्मणि या नास्तीति दृष्टिः सा **मिथ्यादृष्टिः** । तद्यथा—"नास्ति दत्तम्, नास्तीष्टम्, नास्ति हुतम्, नास्ति सुचरितम्, नास्ति दुश्चरितमित्येवमादि यावन्न सन्ति लोकेऽर्हन्तः" इति । सैषा साकल्येन कर्मफलार्थापवादिका

---

*विषमेणान्यायेने*ति । उद्देशनिर्देशरूपौ पर्यायौ ।

*तथा ही*ति विस्तरः । यस्मात् पञ्चानां निवरणानामधिकारेण । *कामच्छन्दं* कामतृष्णास्वभावम*धिकृत्योक्तम्*—"*सोऽभिध्यां लोके प्रहाय* विगताभिध्येन चेतसा बहुलं विहरति । व्यापादं स्त्यानमिद्धमौद्धत्यकौकृत्यं विचिकित्सां लोके प्रहाय तीर्णकांक्षो भवति, तीर्णविचिकित्सः । अकथङ्कथी कुशलेषु धर्मेषु । स पञ्चनिवरणानि प्रहाय" इत्येवमादि । अतो ज्ञायते—*सर्वैव कामावचरी तृष्णाभिध्ये*ति ।

*औदारिकदुश्चरितसंग्रहा*दिति । दशस्वकुशलेषु कर्मपथेषु यदौदारिकं दुश्चरितं तत् संगृहीतम्, न सर्वम् । एवं कुशलेषु । अतो *न सर्वा*भिध्या *कर्मपथः* । किं तर्हि ? या परस्वे विषमस्पृहा सा कर्मपथ इत्यपरेषामभिप्रायः । *मा भूच्चक्रवर्तिनामुत्तरकौरवाणां चाभिध्या कर्मपथ* इति । न हि तत्र कामावचरी तृष्णा नास्ति । न च तत्राकुशलाः कर्मपथा इष्यन्ते ॥ ७७ ॥

*सैषा साकल्येन कर्मफलार्थापवादिके*ति । तथा ह्येषा पठ्यते—"नास्ति दत्तम्, नास्तीष्टम्, नास्ति पूतम्, नास्ति सुचरितम्, नास्ति दुश्चरितम्, नास्ति

---

१. ०तिनामप्युत्तर०—का० ।

मिथ्यादृष्टिर्भवति। आदिमात्रं तु श्लोके दर्शितम्। एवंलक्षणा एते दश कर्मपथाः।

**कर्मपथा इति कोऽर्थः ?**

**त्रयो ह्यत्र पन्थानः, सप्त कर्म च ॥ ७८ ॥**

अभिध्यादयो हि **त्रयः** कर्मणः **पन्थान** इति कर्मपथाः। तत्सम्प्रयोगिणी हि चेतना तेषां वाहेन वहति, तेषां गत्या गच्छति; तद्वशेन तथाभिसंस्करणात्।

**सप्त** तु प्राणातिपातादयः **कर्म च**; कायवाक्कर्मस्वभावत्वात्[1]। कर्मणश्च पन्थान इति कर्मपथाः; तत्समुत्थानचेतनायास्तानधिष्ठाय प्रवृत्तेरिति।

कर्मपथाश्च कर्म च कर्मपथाश्चेति कर्मपथाः; असरूपाणामप्येकशेषसिद्धेः।

---

सुचरितदुश्चरितानां कर्मणां फलविपाकः, नास्त्ययं लोकः, नास्ति परलोकः, नास्ति माता, नास्ति पिता, नास्ति सत्त्व उपपादुकः, न सन्ति लोकेऽर्हन्तः" इति। तत्र नास्ति दत्तं यावन्नास्ति दुश्चरितमिति कर्मापवादिका। तथा नास्ति माता, नास्ति पितेति कर्मापवादिकैव। नास्ति सुचरितदुश्चरितानां कर्मणां फलविपाकः, नास्त्ययं लोकः, नास्ति परलोकः, तथा नास्ति सत्त्व उपपादुक इति फलापवादिका। न सन्ति लोकेऽर्हन्त इत्यार्यापवादिका। *आदिमात्रं तु श्लोके दर्शितमिति*। "नास्तिदृष्टिः शुभाशुभे" इति उदाहरणमात्रत्वात्।

*कर्मणः पन्थान* इति। चेतनाख्यस्य कर्मणः पन्थानः। कथम्? इत्याह—*तत्सम्प्रयोगिणी हि चेतना*। अभिध्यादिसम्प्रयोगिणी। *तेषामभिध्यादीनां वाहेन गत्या वहति* गच्छतीत्यर्थः। *तद्वशेन तथाभिसंस्करणात्*। यस्मादभिध्यादीनां यथाक्रमं सक्तिप्रतिकूलमिथ्यानितीरणाकाराणां वशेन। तदनुरूपा चेतनाभिसंस्करोति। चेतयत इत्यर्थः। अतस्तेषां वाहेन वहति।

*कर्म च, कायवाक्कर्मस्वभावत्वात्*। *कर्मणश्च* चेतनाख्यस्य *पन्थान* इति कर्मपथाः। *तत्समुत्थानचेतनायाः* कायवाक्कर्मसमुत्थानचेतनायाः। *तानधिष्ठाय*। तान् प्राणातिपातादीनधिष्ठाय *प्रवृत्तेः*। *असरूपाणामप्येकशेषसिद्धेरि*ति। शब्दसरूपाणामर्थसरूपाणां वा एकशेष इष्यते, यथा—वृक्षश्च वृक्षश्च वृक्षौ, वक्रश्च कुटिलश्च वक्राविति। इह तु कर्म च कर्मपथश्चेति न कर्मशब्दस्य कर्मपथशब्दस्य च सारूप्यं शब्दतः; नाप्यर्थतः, कर्मार्थस्य कर्मपथार्थस्य च भिन्नत्वादेकशेषो न प्राप्नोति; यस्मात्त्वसरूपाणां साकल्येनैकदेशेन तु सरूपाणामेकशेषः सिध्यति। इष्यत इत्यर्थः। तद्यथा—"गुणो यङ्लुकोः" ( पा० सू० ७.४.८२ )।

---

१. ०कर्मत्वात्—का०।

एवमनभिध्यादयः प्राणातिपातविरत्यादयश्च ज्ञेयाः ।

प्रयोगपृष्ठानि कर्माणि कर्मपथाः; यस्मात् तदर्थं तन्मूलिका च तेषां प्रवृत्तिः । "तदौदारिकसंग्रहात्[1]" ( अभि० को० ४.६६ ) इत्युक्तं प्राक् । येषां चोत्कर्षापकर्षेणाध्यात्मिकबाह्यानां भावानामुत्कर्षापकर्षौ लोके भवतः ।

ये तर्हि दार्ष्टान्तिका अभिध्यादीनेव मनस्कर्मेच्छन्ति, तेषां ते कथं कर्मपथाः ? त एव[2] प्रष्टव्याः । अपि तु शक्यं वक्तुम्—कर्म च ते पन्थानश्च

---

इति यङ् च यङ्लुक् यङ्लुकौ, तयोरिति ? न शक्यते वक्तुम्—यङ् च लुक् च यङ्लुकौ इत्ययम्, लुकोऽनिष्टत्वात्, एकदेशसारूप्यात् तु यङो यङ्लुगेकदेशस्य च यङ् इति सारूप्यात् सिध्यत्येकशेषो यङ्लुकोरिति । अतो ज्ञापकात् अयमपि सिध्यति–कर्म च कर्मपथाश्च कर्मपथा इति, पश्चात् पुनः सरूपैकशेषः । कर्मपथाश्चाभिध्यादयः, कर्मपथाश्च प्राणातिपातादय इति कर्मपथाः । अथवैवं योजना—कर्मणः पन्थानः कर्मपथाः, कर्म च ते कर्मपथाश्च कर्मकर्मपथाः । कर्मपथाश्चभिध्यादयः, कर्मकर्मपथाश्च प्राणातिपातादयः कर्मपथा इति ।

*एवमनभिध्यादय* इति विस्तरः । कुशला अपि कर्मपथा एवमेव योज्याः । अनभिध्यादयो हि कर्मणः पन्थान एव । *प्राणातिपातविरत्यादयश्च* । कर्म च कर्मणश्च पन्थान इति ।

*यस्मात्तदर्थं* इति विस्तरः । यस्मान्मौलकर्मपथार्थं *तेषां* तत्प्रयोगाणां *प्रवृत्तिः । यस्माच्च* मौलकर्मपथ*मूलिका* तेषां तत्पृष्ठानां *प्रवृत्तिः;* अतो न तानि कर्मपथाः । यद्यपि कर्मपथोऽपि कर्मपथस्य प्रयोग उक्तः, स तु मौलत्वात् कर्मपथः, न तु प्रयोगपृष्ठभूतत्वादिति । *तदौदारिकसंग्रहादित्युक्तं[3] प्रागिति* । "तदौदारिकसंग्रहाद्दश कर्मपथा उक्ताः" (अभि० को० ४.६६) इति वचनात् । यानि प्रयोगपृष्ठानि तानि न संगृहीतानि । *येषां* चेति विस्तरः । *येषां मौलानामुत्कर्षापकर्षेणाध्यात्मिकबाह्यानां भावानामुत्कर्षापकर्षौ लोके भवतः ।* न तु प्रयोगपृष्ठानाम् । *अतस्त एव कर्मपथाः ।* तेषां चोत्कर्षापकर्षेण तदुत्कर्षापकर्षेण तदुत्कर्षापकर्षं वक्ष्यति—'सर्वेऽधिपतिनिष्यन्दविपाकफलदा मताः' ( अभि० को० ४. ८५ ) इत्यत्र । अतो न तानि प्रयोगपृष्ठानि कर्मपथाः ।

*तेषां ते कथं कर्मपथा* इति । न हि तेषामभिध्यादिभ्योऽन्यत् मनस्कर्मास्ति चेतना, यस्य कर्मणस्तेऽभिध्यादयः पन्थान इति कर्मपथाः स्युः । *त एव प्रष्टव्या* इति । तैरेव परिहारो वक्तव्यो य एवं मन्यन्ते । *अपि तु शक्यमिति*

---

१. यथौदारिक च ग्रहणादि—का० । २. एव हि—का० ।

३. यथौदारिकसंग्रहादि०—मु० पाठः ।

सुगतिदुर्गतीनामिति कर्मपथाः । इतरेतरावाहनाद् वा ॥ ७८ ॥

य एते दशाकुशलाः कर्मपथाः सर्वे एतेऽकुशलानां[1] कर्मणां समुदाचारविरोधिनः ।

**मूलच्छेदस्त्वसद्दृष्ट्या**

कुशलमूलच्छेदस्तु मिथ्यादृष्ट्या भवत्यधिमात्रपरिपूर्णया ।

किं[2] तर्हि शास्त्र उक्तम्—"कतमान्यधिमात्राण्यकुशलमूलानि ? यैरकुशलमूलैः कुशलमूलानि समुच्छिनत्ति कामवैराग्यं चानुप्राप्नुवन् यानि तत् प्रथमत उपलिखति" इति ? अकुशलमूलाध्याहृतत्वात् मिथ्यादृष्टेस्तेष्वेव तत्कर्मोपदेश एष क्रियते । तद्यथाग्निरेव ग्रामं दहति, चौरास्तु तस्याध्याहारका इति चौरैर्ग्रामो दग्ध इत्युच्यते ।

कतमेषां कुशलमूलानां समुच्छेदो भवति ?

**कामाप्तोत्पत्तिलाभिनाम् ।**

कामावचराणि कुशलमूलानि समुच्छिद्यन्ते; रूपारूप्यावचरैरसमन्वागतत्वात् ।

---

विस्तरः । स्वमतेन तत्पक्षं समर्थयति—*इतरेतरावाहनाद् वेति* । किम् ? तेऽभिध्यादयः कर्मपथा इति प्रकृतम् । अभिध्या व्यापादमिथ्यादृष्टी आवाहयति । ते च तामिति, कर्म च ते । कर्मणश्चैषामेकतरस्य पन्थान इति *कर्मपथाः* ॥ ७८ ॥

मिथ्यादृष्ट्या कुशलमूलसमुच्छेद इत्येतमर्थं वक्तुकाम उपोद्घातं ब्रवीति—*सर्व एतेऽकुशलानामि*ति विस्तरः । *अधिमात्रपरिपूर्णये*ति । अधिमात्राधिमात्रयेत्यर्थः ।

*किन्तर्हि शास्त्र उक्तमि*ति । यदि मिथ्यादृष्ट्या कुशलमूलसमुच्छेदो नाकुशलमूलैः । यत्तच्छास्त्र उक्तम् । *यैरकुशलमूलैः कुशलमूलानि समुच्छिनत्तीत्यादि* । तानि हि लोभादिस्वभावानि । न मिथ्यादृष्टिस्वभावानीत्यर्थः । *अकुशलमूलाध्याहृतत्वादि*ति विस्तरः । अकुशलमूलैर्लोभादिभिरधिमात्रैर्मिथ्यादृष्टिरध्याहृता अपनीता, तस्मात् अकुशलमूलाध्याहृतत्वाद् *मिथ्यादृष्टेः । तेष्वेव तत्कर्मोपदेशः ।* तेष्वेवाकुशलमूलेषु । मिथ्यादृष्टेः कुशलमूलसमुच्छेदकं यत् कर्म तस्योपदेशः ।

---

१. एते कुशलानां—का० ।　　　२. यत्—का० ।

प्रज्ञप्तिभाष्यं तर्हि कथं नीयते—"इयता अनेन पुद्गलेन त्रैधातुकानि कुशलमूलानि समुच्छिन्नानि भवन्ति" इति ? तत्प्राप्तिदूरीकरणमभिसन्धायै-तदुक्तम्; सन्ततेस्तद्भाजनत्वापादनात् ।

उपपत्तिप्रतिलाभिकान्येव च समुच्छिद्यन्ते; प्रायोगिकेभ्यः पूर्वं परिहीणत्वात् ।

किमालम्बनया मिथ्यादृष्ट्या समुच्छिद्यन्ते ?

**फलहेत्वपवादिन्या,**

या च हेतुमपवदते—नास्ति सुचरितं नास्ति दुश्चरितमिति, या च फलम्—नास्ति सुचरितदुश्चरितानां कर्मणां फलविपाक इति ।

आनन्तर्यविमुक्तिमार्गस्थानीये एते इत्यपरे ।

सास्रवालम्बनयैव नानास्रवालम्बनया, सभागधात्वालम्बनयैव च न विसभाग-धात्वालम्बनया; सम्प्रयोगमात्रानुशायित्वेन दुर्बलत्वादित्येके ।

---

*प्रज्ञप्तिभाष्यं तर्हि कथं नीयते* । यदि कामावचराणि कुशलमूलानि समु-च्छिद्यन्ते । रूपारूप्यावचरैरसमन्वागतत्वादिति वर्ण्यन्ते । *तत्प्राप्तिदूरीकरण-मिति* । रूपारूप्यावचराणां प्राप्तेर्दूरीकरणमभिप्रेत्य तस्य पुद्गलस्य एतदुक्तम्—त्रैधातुकानि कुशलमूलानि समुच्छिन्नानीति । कथं च पुनस्तत्प्राप्तिदूरीकरणम् *सन्ततेस्तदभाजनत्वापादनात्* । यस्मादसौ तत्सन्ततिः पूर्वं भाजनभूता तत्प्रा-नाम् । कुशलमूलसमुच्छेदादिदानीं तत्प्राप्तीनामभाजनमापादितेति । अतस्तत्-प्राप्तिर्दूरीकृता भवति ।

*प्रायोगिकेभ्यः पूर्वं परिहीणत्वादिति* । श्रुतचिन्ताभावनामयेभ्यः प्रायोगिकेभ्यः पूर्वमेवासौ मृदुमृद्ववस्थायां तेभ्यः परिहीणः । तदैव तस्य प्राप्तिच्छेद इत्यर्थः ।

*आनन्तर्यविमुक्तिमार्गस्थानीये* इति । हेत्वपवादिनी *आनन्तर्यमार्गस्थानीया* । फलापवादिनी *विमुक्तिमार्गस्थानीया* । तदुक्तं भवति—उभे अपि एते हेतुफला-पवादिन्यौ मिथ्यादृष्टी कुशलमूलसमुच्छेदे व्याप्रियेते, नैकैवेति ।

अपरः पक्षः—*सास्रवालम्बनयैवेति* । दुःखसमुदयालम्बनया । *नानास्रवालम्ब-नया* निरोधमार्गालम्बनया इत्यर्थः । *सभागधात्वालम्बनयैव* चेति । कामधात्वा-लम्बनयैवेत्यर्थः । न *विसभागधात्वालम्बनया* । न रूपारूप्यधात्वालम्बनया । कुशलमूलानि समुच्छिद्यन्त इत्यधिकृतम्, कस्माद् ? इत्याह—*सम्प्रयोगमात्रानु-शायित्वेन दुर्बलत्वादिति* । अनास्रवालम्बना विसभागधात्वालम्बना च या मिथ्यादृष्टिः सा सम्प्रयोगमात्रेण सम्प्रयुक्तेषु धर्मेष्वनुशेते, नालम्बनतः । तस्मा-दसौ दुर्बला भवति, अतो न तया समुच्छिद्यन्ते ।

एवं तु वर्णयन्ति—

**सर्वथा**[1]

नवप्रकाराण्यपि कुशलमूलानि सकृत् समुच्छिद्यन्ते ।

दर्शनप्रहातव्या[2] इवेत्येके[2] । एवं तु वर्णयन्ति—

**क्रमशः,**

नवप्रकारया मिथ्यादृष्ट्या नवप्रकाराणि कुशलमूलानि समुच्छिद्यन्ते । भावनाहेयक्लेशवत् यावदधिमात्राधिमात्रया मृदुमृदूनीति ।

एवमयं ग्रन्थः पालितो भवति—"कतमान्यणुसहगतानि कुशलमूलानि ? आह—यैरकुशलमूलैः कुशलानि समुच्छिन्नानि सर्वपश्चात् विजहाति, यैः विकीर्णैः समुच्छिन्नकुशलमूल इति संख्यां गच्छति" (　　) इति ।

अस्य तर्हि ग्रन्थस्य को नयः—"कतमान्यधिमात्राण्यकुशलमूलानि ? यैरकुशलमूलैः कुशलमूलानि समुच्छिनत्ति" (　　) इति ? समाप्तिमेतत् सन्धायोक्तम्; तैर्निरवशेषच्छेदात् ।

---

*एवं तु वर्णयन्ति । वैभाषिकाः । "सर्वथा"* इति । या च हेतुमपवदते या च फलम्, या च सभागं धातुमालम्बते या च विसभागम्, या च सास्रवं या चानास्रवमालम्बते, सर्वथैव तया समुच्छिद्यन्ते ।

*दर्शनप्रहातव्या इवेति* । यथा दुःखादिदर्शनहेयाः क्लेशा नवप्रकारा अपि दुःखादिसत्यदर्शनात् सकृत् प्रहीयन्ते, तद्वन्नवप्रकाराण्यपि कुशलमूलानि सकृत् समुच्छिद्यन्त इत्येके ।

*भावनाहेयक्लेशवदिति* । यथा नवप्रकारेण मार्गेण नवप्रकारः क्लेशः प्रहीयते । मृदुमृदुना मार्गेण अधिमात्राधिमात्रक्लेशप्रकारः प्रहीयते, यावदधिमात्राधिमात्रेण मृदुमृद्व्या मिथ्यादृष्ट्या अधिमात्राधिमात्रः कुशलमूलप्रकारः समुच्छिद्यते । *यावदधिमात्राधिमात्रया मृदुमृदुः* कुशलमूलप्रकार इति । *एवमयं ग्रन्थः परिपालितो भवति* । यदि भावनाहेयक्लेशवद् यथोक्तं तानि समुच्छिद्यन्ते । *अणुसहगतानि* । मृदुमृदूनि । *यैरकुशलमूलैः कुशलमूलानि समुच्छिनत्तीति* । अधिमात्रैरकुशलमूलैः कुशलमूलसमुच्छेद उक्तः, न मृदुमृद्वादिभिरित्यभिप्रायः । यदि क्रमशः समुच्छिद्यन्ते, *अस्य तर्हीत्यादि* कथम् ? *समाप्तिमेतत् सन्धायोक्तमिति* ।

---

१. सर्वथा—का० ।　　२–२. ०लक्ष्यवदित्येके—का० ।

एकोऽपि हि प्रकारस्तेषामसमुच्छिन्नः सर्वेषां पुनरुत्पत्तौ हेतुः स्यादिति । दर्शनमार्गवदव्युत्थानेन च्छिनत्तीत्येके । एवं तु वर्णयन्ति—उभयथेति ।

पूर्वं संवरं विजहाति पश्चात् कुशलमूलानि समुच्छिनत्तीत्येके । एवं तु वर्णयन्ति—यस्य चित्तस्य फलसंवरस्तत्त्यागात् तस्य त्याग इति ।

**अथ कुशलमूलानि समुच्छिद्यन्ते**

**नृषु ॥ ७९ ॥**

मनुष्येष्वेव नापायेषु; क्लिष्टाक्लिष्टयोः प्रज्ञयोरदृढत्वात् । न देवेषु; कर्मफले[1] प्रत्यक्षत्वात्[1] । त्रिषु द्वीपेषु, नोत्तरकुरौ ।

अपापाशयत्वात् जम्बूद्वीप एवेत्यपरे । तेषामयं ग्रन्थो विरुध्यते—

"जाम्बूद्वीपकः सर्वाल्पैरष्टाभिरिन्द्रियैः समन्वागतः । एवं पौर्व-

---

कुशलमूलसमुच्छेदसमाप्तिं सन्धाय कतमानि अधिमात्राणीति विस्तरेण एतदुक्तम् । मृदुमृद्वादिसमुच्छेदस्त्वनुक्तोऽपि ग्रहीतव्यः । तस्मात् समाप्तिमेव सन्धायैतदुक्तम् । *तैर्निरवशेषच्छेदात्* । यस्मात्तैर्नवभिर्मिथ्यादृष्टिप्रकारैः कुशलमूलानां निरवशेषच्छेदो भवति ।

*एकोऽपि हि प्रकारस्तेषामसमुच्छिन्न* इति । मृदुमृदुनवमः प्रकारः *सर्वेषां* नवानामपि प्रकाराणां *पुनरुत्पत्तौ हेतुः स्या*दिति । अतः समाप्तिमेतत् सन्धायोक्तम् ।

*उभयथे*ति[2] । व्युत्थानेन च, अव्युत्थानेन च । *तत्त्यागात् तस्य त्याग* इति । यो मृदुमृदुना चित्तेन संवरः समात्त आसीत्, तस्य मृदुमृदोश्चित्तस्य मृदुमृदुकुशलमूलसम्प्रयुक्तस्य त्यागे समुच्छेदे तस्य संवरस्य त्यागो भवति । एवं यावद् योऽधिमात्राधिमात्रेण चित्तेन समात्तः संवरः । तत्त्यागात् तस्य त्याग इति ।

*कर्मफले प्रत्यक्षत्वा*दिति । अचिरोपपन्नस्य देवपुत्रस्य त्रीणि चित्तानि समुदाचरन्ति—कुतोऽहं च्युतः, कुत्रोपपन्नः, केन कर्मणेति । एवं कर्मफलप्रत्यक्षत्वान्न देवेषु कुशलमूलानि समुच्छिद्यन्ते ।

*जम्बुद्वीप एवे*ति । तत्र विशेषेण तार्किकत्वादित्यभिप्रायः । *सर्वाल्पैरष्टाभिरिन्द्रियैः समन्वागतः* । पञ्चभिर्वेदनेन्द्रियैः कायजीवितमनइन्द्रियैश्च । समुच्छिन्नकुशलमूल एव । तस्य हि श्रद्धादीनि समुच्छिन्नानि । पृथग्जनत्वाच्च नाज्ञा-

---

१–१. कर्मफल०—का० । २. उभयेनेति—मुद्रितः पाठः ।

विदेहको[1] गौदानीयकः[2]" (  ) इति ॥ ७९ ॥

तानि पुनः

**छिनत्ति स्त्री पुमान्,**

स्त्री च समुच्छिनत्ति, पुरुषश्च; मन्दच्छन्दवीर्यप्रज्ञत्वात् ।

**न क्लीत्यपरे ।**

अयं ग्रन्थो विरुध्येत—"यः स्त्रीन्द्रियेण समन्वागतो नियतमसावष्टाभिरिन्द्रियैः समन्वागतः" (  ) इति ?

तेषामपि तृष्णाचरितो न समुच्छिनत्ति; चलाशयत्वात् । कस्तर्हि ?

**दृष्टिचरितः,**

दृढगूढपापाशयत्वात् । अत एव न षण्ढादयः[3]; तृष्णाचरितपक्षत्वात्[4] । आपायिकवच्च ।

किंस्वभावः कुशलमूलसमुच्छेदः ?

**सोऽसमन्वयः ।**

---

स्यामीन्द्रियाणि सन्ति । चक्षुरादीन्यपि न सन्ति । वैकल्ययोगे, क्रममरणावस्थायां वा । एवं *पौर्वविदेहको गौदानीयक* इति । अतिदेशादस्त्यनयोरपि कुशलमूलसमुच्छेद इति दर्शयति ॥ ७९ ॥

*"छिनत्ति स्त्री पुमान्"* इति । स्त्री पुमांश्चेति च-शब्दो लुप्तनिर्दिष्टः । *यः स्त्रीन्द्रियेण समन्वागतो नियतमसावष्टाभिरिन्द्रियैः समन्वागतः ।* चतुर्भिर्वेदनेन्द्रियैः, त्रिभिश्च कायजीवितमनइन्द्रियैः, स्त्रीन्द्रियेणाष्टमेन । श्रद्धादीनि समुच्छिन्नकुशलमूलावस्थायां व्यभिचार्यन्त इत्यभिप्रायः । *अयमेव* चात्रार्थो *विरुध्यते ।* चक्षुरादीन्यपि व्यभिचार्यन्ते पूर्ववत् ।

*तेषामपीति ।* तेषामपि समुच्छेत्तृणामुक्तानां *तृष्णाचरितो न समुच्छिनत्ति ।*

*दृढगूढपापाशयत्वादि*ति । दृढो गूढः पापश्चाशयोऽभिप्रायोऽस्येति समासः । दृढः=स्थिरः । गूढः = प्रच्छन्नः । पापः = अकल्याणः । *तृष्णाचरितपक्षत्वादि*ति । तृष्णाचरितजातीयत्वादित्यर्थः । यथा तृष्णाचरितश्चलाशयः, तद्वत्ते षण्ढादय इति । *आपायिकवच्च ।* यथा—आपायिकाः क्लिष्टाक्लिष्टयोः प्रज्ञयोरदृढत्वात् न कुशलमूलानि समुच्छिन्दन्ति, एवं शण्ठादयः ।

---

१. पूर्व०—का० ।  २. गोदानीयक—का० ।

३ शण्ढा०—का० ।  ४. ०चरिते पक्षात्वात्—का० ।

यदा हि कुशलमूलानां प्राप्तिर्न पुनरुत्पद्यते, अप्राप्तिरप्युत्पद्यते। तस्मिन्नसमन्वागम उत्पन्ने समुच्छिन्नानि कुशलमूलान्युच्यन्ते।

तेषां समुच्छिन्नानां कथं पुनः प्रतिसन्धिः ?

**सन्धिः काङ्क्षास्तिदृष्टिभ्यां**

यदा अस्य हेतुफले विचिकित्सा चोत्पद्यते, अस्तिदृष्टिर्वा, सम्यग्दृष्टिरित्यर्थः, तदा पुनः तत्प्राप्तिसमुत्पादात् प्रतिसन्धितानि कुशलमूलान्युच्यन्ते। नवप्रकाराणां युगपत् प्रतिसन्धानं क्रमेण तु सम्मुखीभावः, आरोग्यबललाभवत्। स पुनस्तेषां प्रतिसन्धिः।

**नेहानन्तर्यकारिणः ॥ ८० ॥**

अन्यस्यैवेह स्यात्, आनन्तर्यकारिणस्तु नेह स्यात्। तमेव सन्धायोक्तम्—"अभव्योऽयं पुद्गलो दृष्ट एव धर्मे कुशलमूलानि प्रतिसन्धातुम्, नियतमयं नरकेभ्यश्च्यवमानो वा उपपद्यमानो वा कुशलमूलानि प्रतिसन्धास्यति" (    ) इति। उपपद्यमानोऽन्तराभवस्थः, च्यवमानश्च्युत्यभिमुखः। तत्र पुनर्यो हेतुबलेन समुच्छिनत्ति स च्यवमानः प्रतिसन्दधाति, यः प्रत्ययबलेन स उपपद्यमानः। एवं यः स्वबलेन परबलेन।

पुनराह—य आशयविपन्नः समुच्छिनत्ति स दृष्टे धर्मे प्रतिसन्दधाति। य आशयप्रयोगविपन्नः स भेदात् कायस्येति। एवं यो दृष्टिविपन्नो दृष्टिशील-

---

*प्रतिसन्धितानी*ति। प्रतिसन्धिकृतानि प्रतिसन्धितानि। प्रातिपदिकधातुः। *प्रतिसंहितानी*त्यपरे पठन्ति। *आरोग्यबललाभव*दिति। यथा *आरोग्यं* पूर्वं भवति क्रमेणैव तु *बल-लाभो* भवति, तद्वत्।

*"नेहानन्तर्यकारिणः"* इति। आनन्तर्यकारिण एव नेह प्रतिसन्धिर्भवति—अर्थत एतदुक्तम्—अनानन्तर्यकारिण इह प्रतिसन्धिर्भवतीति। *अन्तराभवस्थ* इति। नरकगमनायान्तराभवस्थः। *च्युत्यभिमुख* इति। नरकात् च्युत्यभिमुखः। *हेतुबलेने*ति। सभागहेतुबलेन। यस्माद् येषां मिथ्यादृष्टी स्वयं रोचते। *प्रत्ययबलेने*ति। परतो घोषबलेन। यस्माद् येषां मिथ्यादृष्टी रोचते; हेतुबलस्य सारत्वात्। *एवं यः स्वबलेने*ति। *यः* स्वतर्कबलेन। स च्यवमानः। *यः परबलेन*। परतः श्रुतबलेन। स उपपद्यमानः। *य आशयविपन्न* इति। मिथ्यादृष्टिसम्मुखीभावेन *विपन्नो* विनष्टः। *स दृष्टे धर्मे* जन्मनि *प्रतिसन्दधाति*। *य आशयप्रयोगविपन्नः*। यो

विपन्न इति ।

स्यात् समुच्छिन्नकुशलमूलो न मिथ्यात्वनियत इति चतुष्कोटिकम् । प्रथमा कोटिः—**पूरणादयः**। द्वितीया—**अजातशत्रुः**। तृतीया—**देवदत्तः** । चतुर्थी—**एतानाकारान् स्थापयित्वा** ।

**कुशलमूलसमुच्छेदिकाया मिथ्यादृष्टेरवीचौ विपाकः । आनन्तर्यकारिणां तु तत्र वा, अन्यत्र वा नरके ॥ ८० ॥**

कर्मपथप्रसङ्ग एवायं वर्तते । तत्र वक्तव्यम्—कतिभिः कर्मपथैः सह चेतना युगपदुत्पन्ना वर्तत इति ?

**युगपद् यावदष्टाभिरशुभैः सह वर्तते ।**
**चेतना,**

एकेन तावत् सह वर्तते । विनाऽन्येनाभिध्यादिसम्मुखीभावे अक्लिष्टचेतसो वा तत्प्रयोगेण रूपिणामन्यतमनिष्ठागमने ।

---

मिथ्यादृष्टिसम्मुखीभावेनानन्तर्यक्रियया च *विपन्नः* । *स भेदात् कायस्य प्रतिसन्दधाति* । अत्र च यः स्वबलेन परबलेनेति पूर्वोक्तस्यैवायं पर्यायः । *एवं यो दृष्टिविपन्नो यो दृष्टिशीलविपन्न* इति अनन्तरपूर्वोक्तस्यैवायं पर्याय इत्यवगन्तव्यम् ।

*पूरणादय* इति । *आदि*शब्देन षट् शास्तारो गृह्यन्ते । तद्यथा—*मस्करी* गोशालीपुत्रः, *सञ्जयो* वैरटीपुत्रः, *अजितः* केशकम्बलः, *ककुदः* कात्यायनः, *निर्ग्रन्थो* ज्ञातिपुत्र इति । ते समुच्छिन्नकुशलमूलाः; नास्तिकत्वात् । न मिथ्यात्वनियताः, अनानन्तर्यकारित्वात् । आनन्तर्यकारिणो हि मिथ्यात्वनियताः । *अजातशत्रुस्तु* मिथ्यात्वनियतः; आनन्तर्यकारित्वात् । न समुच्छिन्नकुशलमूलः; सम्यग्दृष्टिकत्वात् । देवदत्तः समुच्छिन्नकुशलमूलश्च मिथ्यात्वनियतश्च; सङ्घभेदकत्वात्, तथागतदुष्टचित्तरुधिरोत्पादकत्वाच्च । *चतुर्थ्येतानाकारान् स्थापयित्वेति* । अस्मदादयः ॥ ८० ॥

*विनान्येनाभिध्यादिसम्मुखीभाव* इति । विनान्येन कर्मपथेन प्राणातिपातादिनाऽभिध्यादीनामन्यतमसम्मुखीभावे । *सा चेतना एकेन* कमपथेन *सह वर्तत* । अभिध्यया वा, व्यापादेन वा, मिथ्यादृष्ट्या वा । *अक्लिष्टचेतसो वे*ति । कुशलाव्याकृतचित्तस्य । *तस्य* प्रयोक्तुः *प्रयोगेण* । *रूपिणां* प्राणातिपातादीनां काममिथ्याचारवर्ज्यानाम*न्यतमस्य निष्ठापने* । तेनेकेन सह चेतना वर्तते । अभिध्यादिव्यतिरिक्तक्लिष्टचित्तस्य वेति वक्तव्यम् । तस्यापि ह्ययं विधिः सम्भवति ।

द्वाभ्यां सह वर्तते । व्यापन्नचित्तस्य प्राणिवधे, अभिध्याविष्टस्य वाऽदत्तादाने, काममिथ्याचारे, सम्भिन्नप्रलापे च[1] ।

त्रिभिः सह वर्तते । व्यापन्नचित्तस्य प्राणिमारणापहरणे[2] युगपत् । न तर्हीदानीमदत्तादानस्य लोभेनैव निष्ठा सिध्यति ? अनन्यचित्तस्य तत्परिसमाप्तौ[3] स नियमो ज्ञेयः । अभिध्याद्याविष्टस्य च तत्प्रयोगेण रूपिद्वयनिष्ठागमने त्रिभिरेव ।

---

*व्यापन्नचित्तस्य प्राणिवध* इति विस्तरः । व्यापादेन प्राणातिपातेन चेति *द्वाभ्यां सह वर्तते । काममिथ्याचारे, सम्भिन्नप्रलापे* च द्वाभ्यां सह वर्तते । अभिध्यया काममिथ्याचारेण चेति द्वाभ्याम् । सम्भिन्नप्रलापेनाभिध्यादीनां चान्यतमेन चेति द्वाभ्यामेव ।

इदं चोद्यते—व्यापन्नचित्तस्य प्राणिवध इत्यभिध्याविष्टस्य चादत्तादान इति, किमिदं स्वयं कुर्वत उच्यते ? उताहो परेण कारयतः ? यदि स्वयं कुर्वतः; व्यापन्नचित्तस्याभिध्याविष्टस्य चेति विशेषणं न युज्यते; प्राणिवधे व्यापादस्यावश्यकत्वात्, अदत्तादाने चाभिध्यायाः, व्यभिचारे हि विशेषणमिष्यते ? अथ परेण कारयतः; अभिध्याव्यापादमिथ्यादृष्ट्यन्यतमचित्तस्य प्राणिवधे, अदत्तादानकाममिथ्याचारसम्भिन्नप्रलापेषु वेति वक्तव्यम् ? उच्यते—स्वयं कुर्वत इति । ननु चोक्तं विशेषणं न युज्यत इति ? नैष दोषः; न हीदं विशेषणमुच्यते, किं तर्हि ? स्वरूपाख्यानमेतत् । व्यापादाभिध्ययोर्द्वितीयभूतयोस्तत्रास्तित्वं कथ्यत इति । एवमप्यभिध्याद्यन्यतरचित्तस्य तान् प्राणातिपातादीन् कारयतो द्वाभ्यां सह चेतना वर्तत इति सम्भवेत्, तस्मात्तदपि वक्तव्यम् ? सत्यं वक्तव्यमेतत् । उदाहरणमात्रं त्वेतदुक्तमित्यदोषः ।

*व्यापन्नचित्तस्य प्राणिमारणापहरणे युगपदि*ति । यत्र मारणेनैवापहरणं सिध्यति, तत्र हि व्यापादप्राणिवधादत्तादानकर्मपथा युगपद् भवन्तीति । *न तर्ही*ति विस्तरः । यदि परकीयद्रव्यापहरणकाले व्यापादो भवति । *न तर्हीदानीमदत्तादानस्य लोभेनैव निष्ठा सिध्यती*ति । लोभद्वेषयोर्युगपदभावात् । *अनन्यचित्तस्ये*ति विस्तरः । अपहरणचित्तस्यैव *तत्परिसमाप्ताव*दत्तादानपरिसमाप्तौ *स नियमो ज्ञेयः* । "लोभतः परस्त्रीगमनाभिध्यादत्तादानसमापनम्" ( अभि० को० ४.७० ) इति । अन्यचित्तस्य तु मारणचित्तस्य नायं नियमः ।

---

१. वा०—का० ।  २. परकीयप्राणि०—का० ।

३. तत्समाप्तौ—का० ।

चतुर्भिः सह वर्तते—भेदाभिप्रायस्यानृतवचने, परुषवचने वा। तत्र हि मानस एको भवति, वाचिकास्त्रयः।

अभिध्यादिगतस्य वा तत्प्रयोगेणान्यरूपित्रयनिष्ठागमने।

एवं पञ्चषट्सप्तभिर्योजयितव्या।

**अष्टाभिः सह वर्तते। षट्सु प्रयोगं कृत्वा स्वयं काममिथ्याचारं कुर्वतः समं निष्ठागमने। एवं तावदकुशलैः।**

**दशभिर्यावच्छुभैः,**

**कुशलैः पुनः कर्मपथैर्यावद् दशभिः सह** चेतना वर्तत इति।

उत्सर्गं कृत्वाऽपवादं करोति—

**नैकाष्टपञ्चभिः। ८१॥**

---

*भेदाभिप्रायस्यानृतवचन* इति। भेदाभिप्रायत्वात् तदेवानृतं पैशुन्यं भवति। तदेव सम्भिन्नप्रलापः, "सर्वं क्लिष्टं सम्भिन्नप्रलापिता" ( अभि० ४.७६ ) इति सिद्धान्तात्। एवं भेदाभिप्रायत्वात्तदेव परुषवचनं पैशुन्यं तथैव च सम्भिन्नप्रलाप इति। *चतुर्भिः सह वर्तते।* कथम्? इत्याह—*तत्र हि मानस एको भवति, वाचिकास्त्रय* इति। अनृतवचनेऽभिध्याव्यापादो वा भवेत्। वाचिकास्त्रयः—मृषावादपैशुन्यसम्भिन्नप्रलापाः। परुषवचनेऽपि मानस एको व्यापादः, वाचिकास्त्रयः—पारुष्यपैशुन्यसम्भिन्नप्रलापाः। नामत एवं त्रयो भवन्ति, न तु स्वभावतः। तदेव ह्यनृतवचनं पैशुन्यं सम्भिन्नप्रलाप इति चोच्यते। न तु त्रयः स्वभावा भवन्ति। एवं परुषवचनमपि त्रिनामकं भवतीति योज्यम्।

अपरे पुनर्व्याचक्षते—स्वभावभेदोऽप्यस्तीति। मृषावादपैशुन्यसम्भिन्नप्रलापाविज्ञप्तयो हि भिद्यन्ते, तथा पारुष्य-पैशुन्य-सम्भिन्नप्रलापाविज्ञप्तयो भिद्यन्त इति। *अभिध्यादिगतस्येति* विस्तरः। अभिध्यादिगतस्य वा चतुर्भिः सह वर्तते। तत्र मानस एकोऽभिध्यादीनामन्यतमः। *तत्प्रयोगेणा*भिध्यादिगतप्रयोगेणायं कर्मपथत्रयस्य प्राणिवधादिकस्य *निष्ठागमने* समाप्तिकाले।

*एवं पञ्चषट्सप्तभिर्योजयितव्या।* का? चेतना। कथम्? *पञ्चभिस्तावत्* सह वर्तते। अभिध्यादिगतस्य तत्प्रयोगेणान्यचतुष्टयनिष्ठागमने। एवमभिध्यादिगतस्यान्यपञ्चषट्निष्ठागमने *षड्भिः, सप्तभिश्च* सह वर्तते।

*अष्टाभिः सह वर्तते।* षट्सु प्राणातिपातादिषु *प्रयोगं कृत्वा* अभिध्यागतस्य *स्वयं काममिथ्याचारं कुर्वतः समं निष्ठागमने।* नवभिः सह वर्तत इति नास्त्येतत्; मानसानां कर्मपथानां युगपदसम्भवात्।

एकेनाष्टाभिः पञ्चभिश्च कर्मपथैः सह न वर्तते ।

तत्र द्वाभ्यां सह वर्तते—कुशलेषु पञ्चसु विज्ञानेषु, आरूप्यसमाप्तौ च क्षयानुत्पादज्ञानयोः ।

त्रिभिः—सम्यग्दृष्टिसम्प्रयुक्ते मनोविज्ञाने ।

चतुर्भिः—अकुशलाव्याकृतचित्तस्योपासकश्रामणेरसंवरसमादाने ।

---

*"नैकाष्टपञ्चभिः"* इति । *नैकेनेव* मानसेन; कुशले चेतस्यनभिध्याव्यापादयोरवश्यम्भावात् । नापि रूपिणैकेन संवरसंगृहीतेन कर्मपथेन सह चेतना वर्तते; क्लिष्टाव्याकृतचित्तावस्थायामपि उपासकसंवरादिषु प्राणातिपातादत्तानकाममिथ्याचारमृषावादानामवश्यं सहभावात् । *न पञ्चभिरेव*; कुशले चेतस्यनभिध्याव्यापादयोर्द्वयोरवश्यं सहभावात् । संवरसंगृहीतानां च प्राणातिपातादीनामेषां चतुर्णामवश्यं सहभावात् । *नाष्टाभिरेव*; भिक्षुसंवरसंगृहीतानां कायिकवाचिनां क्लिष्टाव्याकृतावस्थायां सप्तानामेव सम्भवात् । कुशलचित्तावस्थायां च नवानां दशानां वा सम्भवात् । पारिशेष्याद् द्व्यादिभिः सह वर्तते इत्युक्तं भवति ।

*तत्र द्वाभ्यामि*ति विस्तरः । *तत्र द्वाभ्यां सह* वर्तते । *कुशलेषु पञ्चसु विज्ञाने*ष्वनभिध्या चाव्यापादश्च स्तः, न सम्यग्दृष्टिः । 'पञ्चविज्ञानसहजा धीर्न दृष्टिरतीरणात्'' ( अभि० १.४१ ) इति सिद्धान्तात् । अतोऽनभिध्याव्यापादाभ्यां द्वाभ्यामेवात्र सह वर्तते । *आरूप्यसमापत्तौ च क्षयानुत्पादज्ञानयोरि*ति । आरूप्यसमापत्तिसंगृहीतयोश्च क्षयानुत्पादज्ञानयोराभ्यामेव द्वाभ्यां सह वर्तते; 'क्षयानुत्पादधीर्न दृक्'' ( अभि० ७.१ ) इति तत्र सम्यग्दृष्ट्यभावात् । आरूप्यसमापत्तिग्रहणं ध्यानासमापत्तिसंगृहीतयोः क्षयानुत्पादज्ञानयोः सप्तविधकायिकवाचिकानास्रवसंवरस्वभावकर्मपथनिवृत्त्यर्थम् । क्षयानुत्पादज्ञानग्रहणं सम्यग्दृष्टिनिरासार्थं च; क्षयानुत्पादज्ञानयोरसम्यग्दृष्टिस्वभावत्वात् ।

*त्रिभिः सह* वर्तते । *सम्यग्दृष्टिसम्प्रयुक्ते मनोविज्ञाने* । रूपिकर्मपथाभाव इति वाक्यशेषः । तत्र ह्यनभिध्याव्यापादसम्यग्दृष्टय एव त्रयः कर्मपथा भवन्तीति ।

*चतुर्भिरि*ति विस्तरः । *अकुशलाव्याकृतचित्तस्ये*ति विशेषणान्मानसा न सन्तीति दर्शितं भवति । *उपासकश्रामणेरसंवरसमादाने च* । प्राणातिपातादत्तादानकाममिथ्याचारमृषावादविरतिलक्षणाश्चत्वार एव कर्मपथा भवन्ति; मद्यपानादिविरतीनां दशकर्मपथानन्तर्भावात् । पैशुन्यविरत्यादीनां चोपासकश्रामणेरसंवरासंग्रहात् । श्रामणेरसंवरसमादानवचनात् चोपवाससंवर-

षड्भिः—कुशलेषु पञ्चषु विज्ञानेषु[1], तत्समादाने ।

सप्तभिः—कुशले मनोविज्ञाने, तत्समादान एव, अकुशलाव्याकृतचित्तस्य च भिक्षुसंवरसमादाने ।

नवभिः—कुशलेषु पञ्चषु विज्ञानेषु, तत्समादाने, क्षयानुत्पादज्ञानसम्प्रयुक्ते च मनोविज्ञाने, तस्मिन्नेव च ध्यानसंगृहीते ।

दशभिः—ततोऽन्यत्र कुशले मनोविज्ञाने भिक्षुसंवरसमादान एव ।

सर्वा च ध्यानानास्रवसंवरसहवर्तिनी चेतना, अन्यत्र क्षयानुत्पादज्ञानाभ्याम् । संवरनिर्मुक्तेन त्वेकेनापि सह स्यादन्यचित्तस्यैकाङ्गविरतिसमादाने ।

---

समादानमुक्तरूपमवगन्तव्यम् । श्रामणेरसंवरसमादाने त्वब्रह्मचर्याद् विरतिस्तृतीयः कर्मपथः । तत्र च का[illegible]रोऽन्तर्भूत एव ।

*षड्भिः कुशलेषु पञ्चसु विज्ञानेषु तत्समादाने* । उपासकश्रामणेरसंवरसमादाने तैश्चतुर्भिर्यथोक्तैरनभिध्याव्यापादाभ्यां चेति षड्भिः; पञ्चसु विज्ञानेषु सम्यग्दृष्ट्यभावात् ।

*सप्तभिः कुशले मनोविज्ञाने तत्समादान एव* । उपासकश्रामणेरसंवरसमादान एव तैरेव यथोक्तैः सम्यग्दृष्ट्या च सप्तमेन कर्मपथेन । मनोविज्ञाने हि कुशले सम्यग्दृष्टिरस्तीति । *अकुशलाव्याकृतचित्तस्य च भिक्षुसंवरसमादाने* सप्तभिरेव रूपिभिः, न मानसैः; अकुलाव्याकृतचित्तत्वात् ।

*नवभिः कुशलेषु पञ्चसु विज्ञानेषु तत्समादाने* । भिक्षुसंवरसमादाने । सम्यग्दृष्टेरेवाभावात् । *क्षयानुत्पादज्ञानसम्प्रयुक्ते च मनोविज्ञाने* तैरेव नवभिः सह वर्तते; तत्रापि सम्यग्दृष्ट्यभावात् । *तस्मिन्नेव चेति* । क्षयानुत्पादज्ञानसम्प्रयुक्त एव ध्यानसंगृहीते मनोविज्ञाने । नवभिरेव + ध्यानसंवरसंगृहीते रूपिभिः सप्तभिः, अनभिध्याव्यापादाभ्यां च ।

*दशभिस्ततोऽन्यत्रेति* । क्षयानुत्पादज्ञानवर्जिते *कुशले मनोविज्ञाने भिक्षुसंवरसमादान एव* । *सर्वा चेति* विस्तरः । *सर्वा च ध्यानास्रवसंवरसहवर्तिनी* क्षयानुत्पादज्ञानासम्प्रयुक्ता *चेतना* सप्तभिः कायिकवाचिकैर्ध्यानानास्रवसंवरसंगृहीतैः, त्रिभिश्च मानसैरिति दशभिः सह वर्तते । संवरसंगृहीतैः कर्मपथैः सहैव चेतना वर्तत इति दर्शितम् ।

*संवरनिर्मुक्तेन तु* । अष्टविधसंवरनिमुक्तेन तु । *एकेनापि सह स्यात्* । कथम् ? इत्याह—*अन्यचित्तस्येति* । तत्संवरनिर्मुक्तकुशलकर्मपथसमुत्थापकाच्चित्तादन्य-

---

१. विज्ञानकायेषु—का० ।

पञ्चाष्टाभिरपि स्यात्, कुशले मनोविज्ञाने द्विपञ्चाङ्गसमादाने युगपत् ॥ ८१ ॥

कस्यां गतौ कति कर्मपथा अकुशलाः कुशला वा सम्मुखीभावतः, समन्वागमतो वा ?

**सम्भिन्नालापपारुष्यव्यापादा[1] नरके द्विधा ।**

इत्येते त्रयः कर्मपथा नरके द्वाभ्यां सप्रकाराभ्यां सन्ति—सम्मुखीभावतः, समन्वागमभावतश्च । परिवेदनात् सम्भिन्नप्रलापः । परस्परपरितापनात् पारुष्यं रूक्षसन्तानतया । परस्परद्वेषाद् व्यापादः ।

**समन्वागमतोऽभिध्यामिथ्यादृष्टी,**

न सम्मुखीभावतः । रञ्जनीयवस्त्वभावात्, कर्मफलप्रत्यक्षत्वाच्च । कर्मक्षयेण मरणान्न प्राणातिपातः, द्रव्यस्त्रीपरिग्रहाभावान्नादत्तादानकाममिथ्याचारौ, प्रयोजनाभावान्न मृषावादः । अत एव न पैशुन्यम्; नित्यभिन्नत्वाच्च ।

**कुरौ त्रयः ॥ ८२ ॥**

'समन्वागमतः' इति वर्तते । अभिध्याव्यापादमिथ्यादृष्टयो न सम्मुखीभावतः । अममपरिग्रहत्वात्[2] स्निग्धसन्तानत्वादाघातवस्त्वभावादपापाशयत्वाच्च ॥ ८२ ॥

---

चित्तस्य । क्लिष्टाव्याकृतचित्तस्येत्यर्थः । *एकाङ्गविरतिसमादाने ।* प्राणातिपाताद्विरतेः, अदत्तादानविरतेर्वा समादाने । तेनैकेन कर्मपथेन सह वर्तते । *पञ्चाष्टाभिरपीति ।* कुशलमनोविज्ञानस्य पुद्गलस्य द्व्यङ्गसमादाने युगपन्मानसैस्त्रिभिः । रूपिभ्यां द्वाभ्यामिति पञ्चभिः । *पञ्चाङ्गसमादाने ।* युगपत्तैश्च रूपिभिः पञ्चभिः । मानसैश्च त्रिभिरित्यष्टाभिः । उदाहरणरूपं चैतदुक्तम् । अतोऽन्यथापि शक्यते वक्तुम्—क्लिष्टाव्याकृतचित्तस्य संवरासंगृहीतपञ्चाङ्गसमादाने पञ्चभिः सह वर्तते इति ॥ ८१ ॥

*रञ्जनीयवस्त्वभावादिति ।* नरके रञ्जनीयवस्त्वभावात् न सम्मुखीभावतोऽभिध्यास्ति । कर्मफलप्रत्यक्षत्वाच्च न मिथ्यादृष्टिः । *अत एवेति ।* प्रयोजनाभावान्न पैशुन्यम् । *नित्यभिन्नत्वाच्च ।* अन्योन्यसौहार्दाद्यभावतः ।

*अममपरिग्रहत्वान्न* कुरौ सम्मुखीभावतोऽस्त्यभिध्याकर्मपथः । *स्निग्धसन्तानत्वादाघातवस्त्वभावाच्च* न व्यापादः । *अपापाशयत्वाच्च* न मिथ्यादृष्टिः । त्रयोऽप्येतेऽभिध्यादयो न सन्ति ॥ ८२ ॥

---

१. भिन्नप्रला०—का० । २. अममा०—का० ।

**सप्तमः स्वयमप्यत्र,**

असम्भिन्नप्रलापः सम्मुखीभावतोऽप्यस्ति । ते हि क्लिष्टचित्ताः कदाचिद् गायन्ति । अपापाशयत्वात् न प्राणातिपातादयः । नियतायुष्कत्वाद्, द्रव्यस्त्रीपरिग्रहाभावात्, प्रयोजनाभावाच्च ।

कथमेषामब्रह्मचर्यम् ? ते खलु यथा स्त्रिया सार्धं रन्तुकामा भवन्ति तां बाहौ गृहीत्वा वृक्षमूलमुपसर्पन्ति । गम्या चेद्, वृक्षश्छादयति तां ते गच्छन्ति । अगम्या चेन्न छादयति, तां ते न गच्छन्ति ॥

**कामेऽन्यत्र दशाशुभाः ।**

'स्वयमपि' इति वर्तते । नरकोत्तरकुरुभ्यामन्यत्र कामधातौ दशाकुशलाः कर्मपथाः सम्मुखीभावतोऽपि विद्यन्ते । तिर्यक्प्रेतदेवेष्वसंवरनिर्मुक्ताः । मनुष्येष्वसंवरसंगृहीता अपि ।

यद्यपि देवो देवं न मारयति, अन्यगतिस्थं तु मारयति ।

देवा अपि शिरोमध्यच्छेदाद् म्रियन्त इत्यपरे ।

उक्ता अशुभाः ॥

**शुभास्त्रयस्तु सर्वत्र सम्मुखीभावलाभतः ॥ ८३ ॥**

पञ्चसु गतिषु त्रैधातुके सर्वत्रानभिध्याऽव्यापादसम्यग्दृष्टयः सम्मुखीभावतः समन्वागमतश्च विद्यन्ते ॥ ८३ ॥

---

*"स्वयमपि"* इति । अस्य सम्मुखीभावत इति व्याख्यानम् । *अपापाशयत्वान्न प्राणातिपातादयः* । षडपि सम्मुखीभावतः सन्ति । *नियतायुष्कत्वात्* न प्राणातिपातः । *द्रव्यस्त्रीपरिग्रहाभावाद्* यथाक्रमं नादत्तादानम्, काममिथ्याचारश्च । *प्रयोजनाभावाच्च* न मृषावादपैशुन्यपारुष्याणि ।

यदि परिग्रहो नास्ति *कथमेषामब्रह्मचर्य*मिति पृच्छति ।

*संवरनिर्मुक्ता* इति । नैवसंवरसंगृहीता इत्यर्थः । *अन्यगतिस्थं तु मारयती*ति । प्रेतादिगतिस्थम् ।

देवा *अपि शिरोमध्यच्छेदान्म्रियन्त* इति । शिरश्छेदान्मध्यच्छेदाद् देवा अपि म्रियन्ते । 'देवो देवं न मारयति' इत्युक्ते अवध्या देवा इत्यभिप्रेतम् । देवानां ह्यङ्गप्रत्यङ्गानि छिन्नानि छिन्नानि पुनर्जायन्ते । यद्यप्येवम्, तथापि शिरोमध्यच्छेदाच्छिरश्छेदान्मध्यच्छेदाच्च न पुनः प्रतिसन्धानमित्यस्ति देवानां वधः इत्यभिप्रायः ॥ ८३ ॥

**आरूप्यासंज्ञिसत्त्वेषु लाभतः सप्त,**

कायिकवाचिकाः सप्त कुशला आरूप्येष्वसंज्ञिसत्त्वेषु समन्वागमत एव। आरूप्योपपन्नानामार्याणामतीतानागतानास्रवसंवरसमन्वागमात्। असंज्ञिसत्त्वानां च ध्यानसंवरसमन्वागमात्।

यद्भूम्याश्रयमार्येणानास्रवं शीलमुत्पादितं निरोधितं भवति, तेनारूप्येष्वतीतेन समन्वागतो भवति। पञ्चभूम्याश्रयेण त्वनागतेन।

**शेषिते।**

**सम्मुखीभावतश्चापि हित्वा सनरकान् कुरून्॥ ८४॥**

शेषः कृतः शेषितः। योऽन्यो धातुः शेषितो गतिर्वा, तत्रैते सप्त कुशलाः कर्मपथाः **सम्मुखीभावतोऽपि** संविद्यन्ते, अन्यत्र **नरकोत्तरकुरुभ्यः**। ते पुनस्तिर्यक्प्रेतेषु संवरनिर्मुक्ता रूपधातौ तु संवरसंगृहीताः, अन्यत्रोभयथा॥ ८४॥

त एते दशाकुशलाः कर्मपथाः कुशलाश्च

**सर्वेऽधिपतिनिष्यन्दविपाकफलवा मताः।**

अकुशलैस्तावत् सर्वैरेवासेवितभावितबहुलीकृतैः नरकेषूपपद्यते। तदेषां विपाकफलम्। स चेदित्थन्त्वमागच्छति मनुष्याणां सभागतां प्राणातिपातेनाल्पायुर्भवति, अदत्तादानेन भोगव्यसनी भवति, काममिथ्याचारेण ससपत्नदारः, मृषावादेनाभ्याख्यानबहुलः, पैशुन्येन मित्रभेदोऽस्य भवति, पारुष्येणामनोज्ञ-

---

*यद्भूम्याश्रयमि*ति विस्तरः। पञ्च भूमयो यावच्चतुर्थध्यानभूमिः। यद् भूमिराश्रयोऽस्येति यद्भूम्याश्रयम्। *अनास्रवं शीलमार्येणोत्पादितं निरोधितम्।* *उत्पादितं* वर्तमानमध्वानं गमितम्। *निरोधित*मतीतमध्वानं गमितम्। एकभूम्याश्रयं यावच्चतुर्भूम्याश्रयं वा। *तेनारूप्येष्वतीतेन समन्वागतो भवति। पञ्चभूम्याश्रयेण त्वनागतेन।* कामावचराश्रयेण यावच्चतुर्थध्यानाश्रयेण च। यत्रोपपन्नो यत्र वा नोपपन्नस्तदाश्रयेण।

*अन्यत्र नरकोत्तरकुरुभ्य* इति। तत्र समादानशीलाभावात्। *अन्यत्रोभयथेति।* अन्यत्र कामधातौ देवेषूत्तरकुरुवर्ज्येषु च मनुष्येषु उभयथा—संवरनिर्मुक्ताः, संवरगृहीताश्च। त्रिविधः संवरः—प्रातिमोक्षसंवरः, ध्यानसंवरः, अनास्रवसंवरश्च यथासम्भवं ग्रहीतव्यः॥ ८४॥

*आसेवितभावितबहुलीकृतैरि*ति। प्रयोग-मौल-पृष्ठावस्थासु।

शब्दश्रवणम्, सम्भिन्नप्रलापेनानादेयवाक्यः, अभिध्यया तीव्ररागः, व्यापादेन तीव्रद्वेषः, मिथ्यादृष्ट्या तीव्रमोहः । तस्या मोहभूयस्त्वात् । इदमेषां निःष्यन्दफलम् ।

अल्पमप्यायुर्मनुष्येषु कुशलफलम् । तत् कथं प्राणातिपातस्य निःष्यन्दफलं भवति ? नोच्यते तदेवायुस्तस्य फलम्, किं तर्हि ? तेनाल्पायुर्भवतीति । अतोऽन्तरायहेतुः प्राणातिपातस्तस्यायुषो भवतीति वेदितव्यम् । प्राणातिपातेनात्यासेवितेन बाह्या भावा अल्पौजसो भवन्तीति । अदत्तादानेनाशनिरजोबहुलाः, काममिथ्याचारेण रजोऽवकीर्णाः, मृषावादेन दुर्गन्धाः, पैशुन्येनोत्कूलनिकूलाः, पारुष्येणोषरजाङ्गला प्रतिक्रुष्टाः पापभूमयः, सम्भिन्नप्रलापे विषमर्तुपरिणामाः, अभिध्यया शुष्कफलाः, व्यापादेन कटुकफलाः, मिथ्यादृष्ट्या अल्पफला अफला वा । इदमाधिपतिफलम् ।

किं तेनैव कर्मणायमिहाल्पायुर्भवति, अथान्येन ? तेनैवेत्येके । तद् विपाकफलम्, इदं निष्यन्दफलमिति ।

तत्र प्रयोगेणेह मौलेनेत्येके ।

---

*किं तर्हि* । *तेनाल्पायुर्भवतीति* । आयुषोऽल्पत्वात् निष्यन्दफलमिति दर्शयति। *बाह्या भावाः* । ओषधिभूम्यादयः । *अल्पौजसः* अल्पवीर्याः । *अशनिरजोबहुला* इति । *अशनिः* शिलावर्षम् । *रजो* धूलिवृष्टिः, क्षारवृष्टिर्वा, यतः शस्यादिविनाशः। *रजोऽवकीर्णा* इति । धूलिव्युत्थिताः । *उत्कुलनिकुलाः* । उन्नतनिम्नाः । *ऊषरजङ्गलाः* । ऊषराश्च जङ्गलाश्च ते । बाह्या भावा इत्यधिकृताः । ता भूमय इहाभिप्रेताः । *प्रतिक्रुष्टा* विगर्हिताः । *विषमर्तुपरिणामा* इति । विषम ऋतुपरिणाम एषामिति विषमर्तुपरिणामाः शस्यादय ओषधयः । यस्मिन्नृतौ वर्षितव्यं तत्र न वर्षति, यस्मिन् शीतेन भवितव्यं तस्मिन् न शीतम्, यस्मिन्नुष्णेन भवितव्यं तत्र तन्न भवतीति योज्यम् ।

*तद्विपाकफलमिति* सत्त्वसन्ताने । *इदं निष्यन्दफलमिति* । बाह्यं तद्वस्त्विति न तद्विपाकफलम् ।

*तत्र प्रयोगेणेति* विस्तरः । नरके प्राणातिपातप्रयोगेण तीव्रं दुःखमनुभवति । प्राणातिपातप्रयोगेण हि वध्यस्य प्राणिनोऽतीव-तीव्रं दुःखं भवति । *इह मौलेनाल्पायुर्भवति* । यथा तस्य वध्यस्य प्राणिन आयुरुपद्रूयत इति, तादृशमेवैतत् ।

परे सपरिवारग्रहणात्तु प्राणातिपातेनेत्युक्तमिति ।

यद्यप्येतन्निःष्यन्दफलमुक्तं नैतद् द्वयमतिवर्तते—विपाकफलमधिपतिफलं च । सादृश्यविशेषात्तु तथोक्तम् ।

किं पुनः कारणमेषां कर्मपथानामेतत् त्रिविधफलमभिनिर्वर्तते ? प्राणातिपातं हि तावत् कुर्वता मार्यमाणस्य दुःखमुत्पादितम्, मारितम्, ओजो नाशितम्, अतोऽस्य

**दुःखनान्मारणादोजोनाशनात् त्रिविधं फलम् ॥ ८५ ॥**

परस्य **दुःखनाद्** विपाकफलेन नरके दुःखितो भवति । **मारणान्निःष्यन्द-**फलमाल्पायुर्भवति । **ओजोनाशनाद**धिपतिफलेनाल्पौजसो बाह्या ओषधयो भवन्ति । एवमन्येष्वपि योज्यम् ।

---

क्षणिको हि मौलः कर्मपथः । तत्र च न दुःखा वेदनास्तीति युक्तमिह मौलेनेति वक्तुम् ? आह—यदि तत्र प्रयोगेणेह मौलेन, कस्मादेवमुक्तम्—प्राणातिपातेनासेवितेन भावितेन बहुलीकृतेन नरकेषूपपद्यते, प्राणातिपातेन मौलेनेति सूत्रार्थं पश्यन्नेवं पृच्छति । *सपरिवारग्रहणा*दिति । मौल एव प्राणातिपातः, तस्य प्रयोगः परिवारः । तस्मिन् प्रयोगे प्राणातिपातोपचारं कृत्वैवमुक्तम्—प्राणातिपातेनेति विस्तरः ।

*नैतद् द्वयमतिवर्तते* । विपाकफलम्, अधिपतिफलं चेति । स्वसन्ताने विपाकफलमन्यत्राधिपतिफलमिति कृत्वा । *सादृश्यविशेषात्तु तथोक्त*मिति । इष्टजीवितोपच्छेद भोगव्यसनादिलक्षणात् सादृश्यविशेषात्तु तथोक्तम् । स चेदित्थन्त्वमागच्छति मनुष्याणां सभागतां प्राणातिपातेनाल्पायुर्भवत्यदत्तादानेन भोगव्यसनो भवतीति विस्तरेण । भवति ह्यत्र हेतुविपाकफलयोः सादृश्यमिति । एवं कुशलेष्वपि वक्तव्यम् । निष्यन्दफलं फलद्वयं नातिवर्तते । सादृश्यविशेषात्तु तथोक्तम् । स चेदित्थन्त्वमागच्छति मनुष्याणां सभागतां प्राणातिपातविरत्या दीर्घायुर्भवतीति विस्तरेण ।

*ओजो नाशितमि*ति । ओजो हृदयप्रदेशे भवति । *एवमन्येषामपि योज्यमि*ति । अदत्तादानं हि कुर्वता द्रव्यस्वामिनो दुःखमुत्पादितम्, भोगव्यसनं कृतम्, ओजो नाशितम् । अतोऽस्य दुःखनाद्, भोगत्यजनाद्, ओजोनाशनाच्च त्रिविधं फलम् । कथमोजो नाशितम् ? तद्धेतुनाशनात्, भोगव्यसनेन च तस्योपघातात् । अत एवोक्तम्—अदत्तादानेनाशनिरजोबहुला इति तेन तदोजसः सोपघातता भवतीति । एवं परदारमभिगच्छता परस्य दुःखमुत्पादितम्, ससपत्नदारता, कृता, ओजो नाशितम् । येनौजसा तेजस्वीति लोके निरुच्यते । अत एवोक्तम्—

एवं कुशलानामपि कर्मपथानां फलत्रयं वेदितव्यम्। प्राणातिपातविरत्या आसेवितया भावितया बहुलीकृतया देवेषूपपद्यते। स चेदित्थन्त्वमागच्छति मनुष्याणां सभागतां दीर्घायुर्भवतीत्यकुशलविपर्ययेण सर्वं योजयितव्यम् ॥ ८५ ॥

यद् भगवता—"मिथ्यावाङ्मिथ्याकर्मान्तो मिथ्याजीवः" इत्युक्तम्, कोऽयमन्यस्ताभ्यां मिथ्याजीवः ? नायमन्योऽस्ति। तदेव तु

लोभजं कायवाक्कर्म मिथ्याजीवः,
द्वेषमोहजौ तु कायवाक्कर्मान्तौ। स चैष ताभ्याम्
पृथक् कृतः।
दुःशोधत्वात्,

हारी हि लोभधर्मः। तत्समुत्थात् कर्मणश्चित्तं न सुरक्ष्यम्। अत आजीवो दुःखशोध इत्यादरोत्पादनार्थं तत्रासौ पृथग्निर्दिष्टः। आह चात्र—

"दुःशोधा गृहिणां दृष्टिर्नित्यं विविधदृष्टिना।
आजीवो भिक्षुणा चैव परेष्वायत्तवृत्तिना॥ (　　　) इति।

---

काममिथ्याचारेण रजोऽवकीर्णा इति। एवमन्येषामपि योज्यम्। एषा दिक्।

*अकुशलविपर्ययेण सर्वं योजयितव्यमिति*। कथम् ? अदत्तादानविरत्यासेवितया भावितया बहुलीकृतया देवेषूपपद्यते। स चेदित्थन्त्वमागच्छति मनुष्याणां सभागतां स न भोगव्यसनो भवतीति। एवं काममिथ्याचारविरत्यासेवितया भावितयेति विस्तरेणोक्त्वा यावन्मनुष्याणां सभागतां नाभ्याख्यानबहुलो भवतीति अनया दिशा सर्वं योजयितव्यम्। प्राणातिपाताद् विरमता—परस्य दुःखं नोत्पादितम्, न मारितः, नौजो नाशितमित्यतस्त्रिविधं फलम्। एवमदत्तादानात् प्रतिविरमता—नार्थस्वामिनो दुःखमुत्पादितम्, न भोगव्यसनं कृतम्, नौजो नाशितमतोऽस्य त्रिविधं फलम्। काममिथ्याचाराद् विरमता—न परस्य दुःखमुत्पादितम्, न ससपत्नदारः कृतः, नाप्योजो भ्रंसितम्। अतोऽस्य त्रिविधं फलम्। एवमन्यत्रापि योजयितव्यम् ॥ ८५ ॥

*विविधदृष्टिनेति*। कौतुकमङ्गलतिथिमुहूर्तनक्षत्रादिदृष्टिना। *परेष्वायत्तवृत्तिनेति*। कायस्थितिहेतवश्चीवरपिण्डपातशयनासनादयो भिक्षोः परप्रतिबद्धाः। पिण्डपातं निःश्रित्येति वचनात्। तस्य पराधीनवृत्तेर्भिक्षोर्मिथ्याजीवा भवेयुः—कुहना, लपना, नैमित्तिकता, नैष्पेषिता, लाभेन लाभनिश्चिकीर्षा च। ते *दुःशोधा* भवन्ति। आजीवयोगा इति।

**परिष्कारलोभोत्थं चेत्,**

यो मन्यते—जीवित[illegible]मोत्थमेव कायवाक्कर्म मिथ्याजीवः, नान्यत्; न ह्यात्मरतिनिमित्तं नृत्तगीतादि आजीवयोग इति, तत्

**न सूत्रतः ॥ ८६ ॥**

शीलस्कन्धिकायां हि भगवता हस्तियुद्धदर्शनादीन्यपि मिथ्याजीवे न्यस्तानि । किं कारणम्? मिथ्याविषयपरिभोगात् ॥ ८६ ॥

गतमेतत् ॥

यानि पूर्वं पञ्च फलान्युक्तानि, तेषां कतमत् कर्म कतिभिः फलैः प्रहाणम्?

**प्रहाणमार्गे समले सफलं कर्म पञ्चभिः ।**

प्रहाणार्थं मार्गः, प्रहीयन्ते वाऽनेन क्लेशा इति प्रहाणमार्ग आनन्तर्यमार्गः, तस्मिन् सास्रवे यत् कर्म तत् पञ्चभिः फलैः सफलम् । तस्य हि

---

*शीलस्कन्धिकायामि*ति । *शीलस्कन्धिका* नाम निपातः । तत्रोक्तम्—"यथा त्रिदण्डिन् एके श्रमणब्राह्मणाः श्रद्धादेयं परिभुज्य विविधदर्शनसमारम्भानुयोगमनुयुक्ता विहरन्ति । तद्यथा—हस्तियुद्धे, अश्वयुद्धे, रथयुद्धे, पत्तियुद्धे, यष्टियुद्धे, मुष्टियुद्धे, सारसयुद्धे, वृषभयुद्धे, महिषयुद्धे, अजयुद्धे, मेषयुद्धे, कुक्कुटयुद्धे, वर्तकयुद्धे, लावकयुद्धे[1], स्त्रीयुद्धे, पुरुषयुद्धे, कुमारयुद्धे, कुमारिकायुद्धे, इक्षलवशे, उत्सतिकायाम्, ध्वजाग्रे, बलाग्रे, सेनाव्यूहे, अनीकसन्दर्शने, महासमाजं वा प्रत्यनुभवन्त्येके । इत्यप्येवंरूपाच्छ्रमणो विविधदर्शनसमारम्भानुयोगात् प्रतिविरतो भवति । तथापि तत्र त्रिदण्डिन् एके श्रमणब्राह्मणाः श्रद्धादेयं परिभुज्य विविधशब्दश्रवणसमारम्भानुयोगयुक्ता विहरन्ति, तद्यथा—हस्तिशब्दे, अश्वशब्दे, रथशब्दे, पत्तिशब्दे, शङ्खशब्दे, भेरीशब्दे, आडम्बरशब्दे, नृत्यशब्दे, गीतशब्दे, शय्याशब्दे, अच्छटशब्दे, पाणिस्वरे, कुम्भतूणीरे, खचिते, चित्राक्षरे, चित्रपदव्यञ्जने, लोकायतप्रतिसंयुक्ते, आख्यायिका वा श्रोतुमिच्छन्त्येके । इत्यप्येवंरूपाच्छ्रमणो विविधशब्दश्रमणसमारम्भानुयोगात् प्रतिविरतो भवति' (   ) इत्येवमादि । *मिथ्याविषयपरिभोगात्* । असम्यग्विषयपरिभोगात् ॥ ८६ ॥

*यानि पूर्वं पञ्च फलान्युक्तानी*ति । अधिपतिफलम्, पुरुषकारफलम्, निष्यन्दफलम्, विपाकफलम्, विसंयोगफलञ्च । *प्रहाणार्थं मार्ग* इति । भावसाधनम्—प्रहाणाय मार्गः प्रहाणमार्ग इति । *प्रहीयतेऽनेने*ति । करणसाधनम् ।

---

१. लोचकयुद्धे—इति मुद्रितः पाठः ।

विपाकफलम्—स्वभूमाविष्टो विपाकः । निष्यन्दफलम्—समाधिजा उत्तरे सदृशा धर्माः । विसंयोगफलम्—विसंयोग एव यत्तत् प्रहाणम् । पुरुषकारफलम्—तदाकृष्टा धर्माः, तद्यथा— अधिमुक्तिमार्गस्तत्सहभुवश्च, यच्चानागतं भाव्यते तच्च प्रहाणम् । अधिपतिफलम्— स्वभावादन्ये सर्वसंस्काराः पूर्वोत्पन्नवर्ज्याः ।

**चतुर्भिरमले,**

अनास्रवे प्रहाणमार्गे यत् कर्म तच्चतुर्भिः फलैः सफलम्, विपाकफलं हित्वा ।

**अन्यच्च सास्रवं यच्छुभाशुभम् ॥ ८७ ॥**

यच्चान्यत् प्रहाणमार्गात् सास्रवं कुशलं कर्म यच्चाकुशलं तदपि, चतुर्भिर्विसंयोगफल हित्वा ॥ ८७ ॥

**अनास्रवं पुनः शेषं त्रिभिरव्याकृतं च यत् ।**

---

*प्रहाणो मार्ग* इति च विग्रहः । *समाधिजा उत्तरे सदृशा धर्मा* इति । समाधिजग्रहणमसमाधिजनिरासार्थम् । सदृशग्रहणमनास्रवाव्याकृतनिरासार्थम् । *सहभुव* इति । सम्प्रयुक्ताश्च तत्र वेदनादयः, विप्रयुक्ताश्च जात्यादयः । *यच्चानागतं भाव्यत* इति । अनागतो धर्मस्तद्बलेन प्राप्यत इति । तस्य तत् *पुरुषकारफलम्* । अत एव *तच्च प्रहाणं* पुरुषकारफलं व्यवस्थाप्यते । न केवलं विसंयोगफलमिति । *पूर्वोत्पन्नवर्ज्या* इति । पूर्वोत्पन्नं फलं न युज्यत इति कृत्वा । तथा ह्युक्तम्—'अपूर्वः संस्कृतस्यैव संस्कृतोऽधिपतेः फलम्" ( अभि० को० २.५८ ) इति ।

*विपाकफलं हित्वेति* । अनास्रवस्याविपाकत्वात् । तस्य हि निष्यन्दफलं समाधिजा उत्तरे सदृशा धर्माः । विसंयोगफलं विसंयोग एव यत्तत् प्रहाणम् । पुरुषकारफलं तदाकृष्टा धर्माः । तद्यथा—विमुक्तिमार्गः, सहभुवः । यच्चानागतं भाव्यते, तच्च प्रहाणम् अधिपतिफलम् । स्वभावादन्ये सर्वे संस्कृता पूर्वोत्पन्नवर्ज्याः ।

*"यच्छुभाशुभम्"* इति । प्रहाणमार्गाद् यदन्यसास्रवं कर्म समाहितम्, असमाहितञ्च । *तदपि चतुर्भिः फलैः* सफलम्, *विसंयोगफलं हित्वा* । अप्रहाणमार्गत्वादस्य विसंयोगफलं नास्ति । तस्य हि विपाकफलं स्वभूमाविष्टोऽनिष्टो वा विपाकः । निष्यन्दफलमुत्तरे सदृशा धर्माः । पुरुषकारफलं तदाकृष्टाः धर्माः, सहभुवोऽनन्तरभुवो वा । अधिपतिफलं शेषं पूर्ववत् ॥ ८७ ॥

*"अनास्रवं पुनः शेषम्"* इति । शेषग्रहणं प्रहाणमार्गनिरासार्थम् । तत् पुनः कथम् ? शेषं प्रयोगविमुक्तिविशेषमार्गेषु । तस्याप्रहाणमार्गत्वाद् विसंयोग-

प्रहाणमार्गादन्यदनास्रवं कर्म अव्याकृतं च कर्म त्रिभिः, विपाकविसंयोगफले हित्वा ।

**चत्वारि द्वे तथा त्रीणि कुशलस्य शुभादयः ॥ ८८ ॥**

'अनुक्रमम्' इति पश्चाद् वक्ष्यति। कुशलस्य कर्मणः कुशला धर्माश्चत्वारि फलानि, विपाकफलं हित्वा । अकुशला द्वे—पुरुषकाराधिपतिफले । अव्याकृतास्त्रीणि[1], निःष्यन्दविसंयोगफले हित्वा ॥ ८८ ॥

**अशुभस्य शुभाद्या द्वे त्रीणि चत्वार्यनुक्रमम् ।**

यथाक्रममित्यर्थः । अकुशलस्य कर्मणः कुशला धर्मा द्वे पुरुषकाराधिपतिफले । अकुशलास्त्रीणि, विपाकविसंयोगफले हित्वा । अव्याकृताश्चत्वारि, विसंयोगफलं हित्वा । अव्याकृते हि सत्कायान्तग्राहदृष्टी अकुशलानां सर्वत्रगाणां दुःखदर्शनहेयानां च निःष्यन्दफलम् ।

---

फलं नास्ति । अनास्रवत्वाच्च न विपाकफलम् । शेषं पूर्ववत् । *अव्याकृतञ्च* यन्निवृत्ताव्याकृतमनिवृत्ताव्याकृतं च तदपि *त्रिभिः* सफलम् । अप्रहाणमार्गत्वान्न तस्य विसंयोगफलम् । अव्याकृतत्वाच्च न विपाकफलम् । शेषं पूर्ववदेवास्ति ।

*"चत्वारि द्वे तथा त्रीणि कुशलस्य"* इति । *यथाक्रममेतत्* । कथम् ? *कुशलस्य कुशला धर्माश्चत्वारि फलानि* । तस्यैवाकुशला द्वे फले । तस्यैवाव्याकृता त्रीणि[1] फलानीति । *विपाकफलं हित्वेति* । विपाकस्याव्याकृतत्वात् ॥ ८८ ॥

*अकुशला द्वे* इति । *पुरुषकाराधिपतिफले* । न निष्यन्दफलम्; यस्मात् कुशला धर्मा अकुशलानां न सभागहेतुरिति । न विपाकफलम्; अव्याकृतत्वाद् विपाकस्य, यस्माच्चाकुशला विपाकं प्रति व्याक्रियन्ते । न विसंयोगफलम्; अकुशलत्वात् । पारिशेष्यात् पुरुषकाराधिपतिफले एव । ते च पूर्ववद् व्याख्यातव्ये । *अव्याकृताश्चत्वारी*ति । कथमकुशलस्याव्याकृता धर्मा निष्यन्दफलम् ? कथं च न भवितव्यम् ? विसदृशत्वात्, विसदृशा ह्यकुशलाव्याकृता धर्माः; सविपाकाविपाकत्वात् ? नैष दोषः; अकुशलनिवृताव्याकृतानां हि धर्माणां [illegible] सादृश्यम् । तस्मादकुशलानां निवृताव्याकृताः, निवृताव्याकृतानां चाकुशलाः निष्यन्दफलं युज्यन्ते । तेनाह—*अव्याकृते हीति विस्तरः* । *अकुशलानां सर्वत्रगाणां* दुःखसमुदयदर्शनप्रहातव्यानाम् । *दुःख-*

---

१. अव्याकृत०—मुद्रितः पाठः ।

**अव्याकृतस्य द्वे त्रीणि त्रीणि चैते शुभादयः ॥ ८९ ॥**

अव्याकृतस्य कर्मणः कुशला धर्मा द्वे पुरुषकाराधिपतिफले। अकुशलाः त्रीणि, विपाकविसंयोगफले हित्वा। अकुशला हि दुःखादिदर्शनहेया[1] अव्याकृतयोर्दृष्ट्योर्निःष्यन्दफलम्। अव्याकृता धर्मा एतान्येव त्रीणि ॥ ८९ ॥

**सर्वेऽतीतस्य चत्वारि,**

सर्व इति त्रैयध्विकाः। अतीतस्य कर्मणस्त्रैयध्विकाः धर्माश्चत्वारि फलानि, विसंयोगफलं हित्वा।

**मध्यमस्याप्यनागताः।**

प्रत्युत्पन्नस्यापि कर्मणोऽनागता धर्माश्चत्वारि फलान्येतान्येव।

**मध्यमा द्वे,**

प्रत्युत्पन्ना धर्माः प्रत्युत्पन्नस्य द्वे पुरुषकाराधिपतिफले।

---

*दर्शनहेयानाञ्च* रागादीनाम्। सत्कायान्तग्राहदृष्टी *निष्यन्दफलम्*। सभागसर्वत्रगयोर्निष्यन्दफलमिति।

*अकुशला* हीति विस्तरः। *अकुशला* दुःखादिदर्शनहेयाः पञ्च नैकायिकाः। *अव्याकृतयोः* सत्कायान्तग्राहदृष्टयोः *निष्यन्दफलम्*। *एतान्येव त्रीणि*। विपाकविसंयोगफले हित्वा ॥ ८९ ।'

*अतीतस्य कर्मणस्त्रैयध्विकाः*। अतीतानागतप्रत्युत्पन्ना *धर्माः*। *प्रत्येकं चत्वारि फलानि*। *विसंयोगफलं हित्वा*। तस्यानध्वपतितत्वात्। कथं कृत्वा ? अतीतस्य कर्मणः पश्चादतीतस्तद्विपाको विपाकफलम्, तदाकृष्टाः सहजातीताः पश्चादनन्तरातीता वा पुरुषकारफलम्, स्वभाववर्ज्याः तेन सहोत्पन्नाः पश्चादुत्पन्नाश्चातीताः अधिपतिफलम्, पश्चादुत्पन्नातीताः सदृशा धर्मा निष्यन्दफलम्। अतीतस्यानागतस्तद्विपाको विपाकफलम्, यद्बलेन प्राप्यतेऽनागतो धर्मस्तत् पुरुषकारफलम्, अधिपतिफलं यदनागतं तस्य फलम्, निष्यन्दफलं तत्सदृशमनागतम्। एवं प्रत्युत्पन्ना अपि तस्यातीतस्य चत्वारि फलानि योज्यानि।

*"मध्यमस्याप्यनागताः"* इति। *प्रत्युत्पन्नस्याप्यनागता धर्माश्चत्वारि फलानि एतान्येव*। विसंयोगफलं हित्वेत्यर्थः। तान्यप्येवमेव योज्यानि।

*प्रत्युत्पन्ना धर्माः प्रत्युत्पन्नस्य द्वे पुरुषकाराधिपतिफले* इति। तस्य हि सहोत्पन्नं तद्बलाज्जातमिति पुरुषकारफलम्, अधिपतिफलं च भवत्येव। अवि-

---

१. दुःखदर्शनादि०—का०।

**अजातस्य फलानि त्रीण्यनागताः ॥ ९० ॥**

अनागतस्यानागतानि **त्रीणि फलानि**, निःष्यन्दविसंयोगफले हित्वा ॥९०॥

**स्वभूमिकस्य[1] चत्वारि,**

**स्वभूमिकस्य** कर्मणः स्वभूमिका धर्माश्चत्वारि फलानि विसंयोगफले हित्वा।

**त्रीणि द्वे वाऽन्यभूमिकाः।**

**अन्यभूमिका** धर्मा अनास्रवाश्चेत् **त्रीणि** फलानि, विपाकविसंयोगफले हित्वा; धात्वपतितत्वात्। सास्रवाश्चेद्, **द्वे** पुरुषकाराधिपतिफले।

**शैक्षस्य त्रीणि शैक्षाद्याः,**

**शैक्षस्य** कर्मणः **शैक्षा** धर्मा**स्त्रीणि** फलानि, विपाकविसंयोगफले हित्वा। **अशैक्षा** अप्येवम्। **नैवशैक्षनाशैक्षा** अपि विपाकनिःष्यन्दफले हित्वा

---

संयोगस्वभावान्न विसंयोगफलम्। पूर्वोत्तरताभावान्न निष्यन्दफलम्। प्रवाहा-पेक्षत्वाद् विपाकस्य न वर्तमानं वर्तमानस्य विपाकफलम्।

*निष्यन्दविसंयोगफले हित्वेति*। अनागतोऽनागतस्य न निष्यन्दफलम्; यस्मात् सभागसर्वत्रगहेतू नानागतौ भवतः, तस्य विप्रकीर्णत्वात्। सादृश्येन च 'अस्येदं फलम्' इति परिछेत्तुमशक्यत्वात्। न विसंयोगफलम्; यस्मादनागतो विसंयोगो न भवति। विपाकफलं तु भवेद्; अनागतस्य ह्यकुशलस्य कुशलसास्रवस्य वानागतं पश्चादुत्पत्स्यमानञ्च विपाकफलम्। पुरुषकारफलं सहजमनागतमनन्तरभावि चानागतम्। अधिपतिफलं तु सुगममिति न पुनरुच्यते ॥ ९० ॥

*स्वभूमिका धर्मा न विसंयोगफलम्*। विसंयोगस्याभूमिस्वभावत्वात्।

*अनास्रवाश्चेत् त्रीणि फलानीति*। निष्यन्दफलस्य तृतीयस्य सम्भवात्। "अन्योन्यं नवभूमिस्तु मार्गः" ( अभि० को० २.५२ ) इति हि सिद्धान्तः।

*शैक्षस्य कर्मणः शैक्षा धर्मास्त्रीणीति*। यस्माद् विपाकफलं न शैक्षम्। विसंयोगश्चापि न शैक्षः। *नैवशैक्षनाशैक्षा अपि* त्रीणि। न *विपाकफलमस्यास्ति*; शैक्षस्याविपाकत्वात्। न *निष्यन्दफलम्*। नैवशैक्षनाशैक्षस्य शैक्षेणासदृशत्वाद् विसंयोगफलं तु भवति; विसंयोगस्य नैवशैक्षनाशैक्षस्वभावत्वात्। पुरुषकार-

---

१. स्वभूमिधर्माः—का०।

**अशैक्षस्य तु कर्मणः ॥ ९१ ॥**

**धर्माः शैक्षादिका एकं फलं त्रीण्यपि च द्वयम् ।**

**अशैक्षस्य** कर्मणः **शैक्षा धर्मा** एकमधिपतिफलम् । **अशैक्षास्त्रीणि**, विपाकविसंयोगफले हित्वा । नैवशैक्षनाशैक्षा द्वे पुरुषकाराधिपतिफले ।

**ताभ्यामन्यस्य शैक्षाद्या द्वे द्वे पञ्च फलानि च ॥ ९२ ॥**

**शैक्षाशैक्षाभ्यामन्यस्य** कर्मणो नैवशैक्षनाशैक्षस्य[1] **शैक्षा** धर्मा **द्वे** पुरुषकाराधिपतिफले। अशैक्षा अप्येवम्। नैवशैक्षनाशैक्षाः **पञ्च फलानि** ॥९१-९२॥

**त्रीणि चत्वारि चैकं च दृग्घेयस्य तदादयः ।**

दर्शनहेयस्य कर्मणो दर्शनहेया धर्मा**स्त्रीणि** फलानि, विपाकविसंयोगफले हित्वा । भावनाहेयाश्चत्वारि, विसंयोगफलं हित्वा । अप्रहेया **एक**मधिपतिफलम् ।

**ते द्वे चत्वार्यथ त्रीणि भावनाहेयकर्मणः ॥ ९३ ॥**

भावनाहेयस्य कर्मणो दर्शनहेया धर्मा द्वे पुरुषकाराधिपतिफले । भावनाहेयाश्चत्वारि, विसंयोगफलं मुक्त्वा । अप्रहेया**स्त्रीणि**, विपाकनिःष्यन्दफले मुक्त्वा ॥ ९३ ॥

---

फलमपि भवति; शैक्षेण नैवशैक्षनाशैक्षाकृष्टिसम्भवात्। अधिपतिफलं चास्त्येव इति त्रीणि सम्भवन्ति ।

*"अशैक्षस्य तु"* इति विस्तरः। *अशैक्षस्य शैक्षा धर्मा एकमधिपतिफलम् ।* न निष्यन्दफलम्; न्यूनत्वात्। "समविशिष्टयोः" ( अभि० को० २.५२ ) इति वचनात्। न पुरुषकारफलम्, सहानन्तरोत्पादाभावात्। न ह्यशैक्षानन्तरं शैक्षमुत्पद्यते; परिहाणिकालेऽपि क्लेशसमुदाचारव्यवहितत्वात्। विपाकफलं विसंयोगफलं च नैवशैक्षनाशैक्षस्वभावमिति । न चाशैक्षस्य विपाको भवतीत्यतो न विपाकफलम्। *अशैक्षास्त्रीणी*ति, पुरुषकाराधिपतिनिष्यन्दफलानि। *न विपाकविसंयोगफले।* तयोर्नैवशैक्षनाशैक्षस्वभावत्वात् । यच्चाशैक्षस्वभावं तदिह चिन्त्यते। *नैवशैक्षनाशैक्षा द्वे पुरुषकाराधिपति*फले इति । पुरुषकारफलम् । तद्यथा—तदाकृष्टा अनन्तरभाविनो धर्माः । अधिपतिफलं पूर्ववत्। यथोक्तकारणत्वान्न फलत्रयम् ।

*अशैक्षा अप्येवमि*ति। द्वे पुरुषकाराधिपतिफले इत्यर्थः ॥ ९१-९२ ॥

*"तदादयः"* इति । दर्शनहेयादयः। *"ते"* इति । दर्शनहेयादयः ॥ ९३ ॥

---

१. नैवशैक्षा०—का० । एवमुपर्यपि ।

**अप्रहेयस्य ते त्वेकं द्वे चत्वारि यथाक्रमम् ।**

**अप्रहेयस्य कर्मणो** दर्शनहेया धर्मा एकमधिपतिफलम् । भावनाहेया **द्वे** पुरुषकाराधिपतिफले । अप्रहेयाश्चत्वारि, विपाकफलं मुक्त्वा ।

पुनर्यथाक्रमग्रहणमाद्यन्तवन्मध्येऽपि ज्ञापनार्थम् । एष हि पेयालधर्मः ।

कर्मनिर्देशप्रसङ्गेनेदमपि परिप्रश्यते—शास्त्रेषु अयोगविहितम्, योगविहितम्, नैवयोगविहितं नायोगविहितं च कर्मोक्तम्, तस्य किं लक्षणम् ?

**अयोगविहितं क्लिष्टं विधिभ्रष्टं च केचन ॥ ९४ ॥**

**क्लिष्टं कर्मायोगविहितम्**; अयोनिशोमनस्कारसम्भूतत्वादित्येके ।

**विधिभ्रष्टमपीत्यपरे** । येन यथा गन्तव्यं स्थातव्यं भोक्तव्यं प्रविचरितव्यमित्येवमादि, तच्चान्यथा विदधाति, तदयुक्तविधानादयोगविहितमिति ।

कुशलं कर्म योगविहितम्, अविधिभ्रष्टं चेत्यपरे ।

तदुभाभ्यामन्यत्[1] नोभयथा—नैवयोगविहितं नायोगविहितम् ॥ ९४ ॥

*भावनाहेया द्वे* इति । अनास्रवमार्गव्युत्थाने भावनाहेयाः कुशलाः पुरुषकारफलम् ।

*आद्यन्तवदिति* विस्तरः । आद्यन्तयोरिवाद्यन्तवत् । मध्येऽपि ज्ञापनार्थम् *पुनर्यथाक्रमग्रहणम्* । कथम् ? आदौ यथाक्रमार्थोऽनुक्रमशब्दः प्रयुक्तः; 'अशुभस्य शुभाद्या द्वे त्रीणि चत्वार्यनुक्रमम्'' (अभि० को० ४.८९) इति वचनात् । अन्तेऽपि प्रयुक्तः; 'अप्रहेयस्य ते त्वेकं द्वे चत्वारि यथाक्रमम्' (अभि० को० ४.९२) इति । यथैवमाद्यन्तयोर्यथाक्रमार्थं उक्तः, तथा मध्येऽप्यवगन्तव्यः । *एष हि पेयालधर्म* इति । एषोऽभिसंक्षेपन्यायः । अन्यथा हि 'अव्याकृतस्य द्वे त्रीणि त्रीणि चैते शुभादयः'' (अभि० को० ४.८६) इत्येवमादिषु यथाक्रममिति सर्वत्र वक्तव्यम् ।

*अयोनिशो मनस्कारसम्भूतत्वादिति* । अयोन्या अन्यायेन क्लेशयोगेन यः प्रवृत्तो मनस्कारः, तत्र सम्भूतः, तद्भावः, तस्मादिति ।

*येन यथा गन्तव्यम्* । येन पुद्गलेन यथा गन्तव्यं तथा न गच्छतीत्यस्यायोगविहितं कर्म ।

*विधिभ्रष्टमपीति* । अपि-शब्देन क्लिष्टं चापीति गृह्यते । *तदुभाभ्यामन्यन्नो-*

---

१. उभाभ्या०—का० ।

किमेकं कर्म एकमेव जन्माक्षिपति ? अथ नैकमपि ? तथा किमेकमपि कर्मैकं जन्माक्षिपति ? अथानेकम् ? एष हि सिद्धान्तः—

एकं जन्माक्षिपत्येकम्,

एकमेव जन्माक्षिपति एकमेव च कर्म, नानेकम्। जन्मेति निकाय-सभागस्याख्या। तत्र हि लब्धे जात इत्युच्यते।

यत्तर्हि स्थविरानिरुद्धेनोक्तम्—"सोऽहं तस्यैकपिण्डपातस्य विपाकेन सप्तकृत्वस्त्रयस्त्रिंशेषु देवेषूपपन्नो यावदेतर्ह्यपि शाक्यकुले जातः" ( ) इति ? तेन ह्यसौ समृद्धिं लब्ध्वा जातिस्मरः पुनरन्यत् पुण्यं कृतवान्। तत उत्थानं दर्शयति स्म। यथा मनुष्यो दीनारोत्थोऽनेनेन सहस्रं निर्वर्त्याह[1]—'एकेन दीनारेणाहमेतदैश्वर्यं[2] प्राप्तः' इति।

अपरे त्वाहुः—तस्य तं पिण्डपातमधिष्ठानं कृत्वा दानचेतनानां प्रवाहो महानुत्पन्नः कयाचित् किञ्चित् फलं परिगृहीतमिति। अनेकेनाप्येकमाक्षिप्यते— मा भूत् खण्डशो निकायसभागस्याक्षेप इति। एकेन तु कर्मणा विक्लिष्टस्य निकायसभागस्येष्यते कर्म।

अनेकं परिपूरकम्।

यथा चित्रकर एकया वर्त्या रूपमालिख्य बह्वीभिः परिपूरयति; तथा हि तुल्येऽपि मानुष्ये कश्चित् सकलेन्द्रियाङ्गप्रत्यङ्गो भवति वर्णाकृतिप्रमाणबलसम्पदा विभ्राजमानः, कश्चिदेषां केनचिद् विकलः।

---

भयथेति। न योगविहितः, नायोगविहितः। किञ्च तदन्यदव्याकृतं कर्म विधिभ्रष्टाविधिभ्रष्टाभ्यां चान्यदव्याकृतमिति ॥ ९४ ॥

*जन्मेति निकायसभागस्याख्येति*। चित्तविप्रयुक्तस्य संस्कारस्य, न तु जातेरित्यभिप्रायः।

*यत्तर्हीति*। यद्येकमेव कर्मैकमेव जन्माक्षिपति। *यत् स्थविरानिरुद्धेनोक्तं सोऽहं तस्येति* विस्तरेण। तत् कथं न विरुध्यत इति वाक्यार्थः। तेन जन्मान्तरे *तगरशिखिने* प्रत्येकबुद्धाय पिण्डपातो दत्तः। तेनैवमुक्तम्—"सोऽहं तस्य" इति विस्तरेण। *निर्वर्त्येति*। निठपित्वेत्यर्थः।

*तुल्येऽपि मानुष्ये कश्चित् सकलेन्द्रियो भवति, कश्चिद् विकलेन्द्रियः*। परिपूर-

---

१. निर्विश्याह—का०। २. ०दीश्वर्यं—का०।

न च केवलं कर्मैवाक्षेपकं जन्मनः । किं तर्हि ? अन्यदपि सविपाकम् । सर्वथा तु—

**नाक्षेपिके समापत्ती अचित्ते प्राप्तयो न च ॥ ९५ ॥**

सविपाकाभ्यामप्यचित्तसमापत्तिभ्यां निकायसभागो नाक्षिप्यते; कर्मासहभूत्वात्[1], प्राप्तिभिश्च, कर्मणानेकफलत्वात्[2] ॥ ९५ ॥

त्रीण्यावरणान्युक्तानि भगवता—कर्मावरणम्, क्लेशावरणम्, विपाकावरणं च; तेषां कः स्वभावः ?

**आनन्तर्याणि कर्माणि तीव्रक्लेशोऽथ दुर्गतिः ।**
**कौरवासंज्ञिसत्त्वाश्च मतमावरणत्रयम् ॥ ९६ ॥**

**पञ्चानन्तर्याणि** कर्मावरणम् । तद्यथा—मातृवधः, पितृवधः, अर्हद्वधः, सङ्घभेदः, तथागतशरीरे दुष्टचित्तरुधिरोत्पादनम् ।

**तीव्रक्लेशता** क्लेशावरणम् । द्विविधो हि क्लेशः–तीव्रश्च य आभीक्ष्णिकः, तीक्ष्णश्च योऽधिमात्रः । तत्र यस्तीव्रः स आवरणम्, यथा षण्ढादीनाम् । शक्यो ह्यधिमात्रवेगोऽपि क्लेशः कादाचित्को निहन्तुम्, न तु समूहोऽप्याजस्रिकः । आजस्रिके हि क्लेशे तन्निर्घाताय पराक्रमकालं न लभते । तस्य मृदुं प्रतीत्य मध्य उपजायते । मध्यं प्रतीत्याधिमात्रः । तस्माद् एवावरणम् ।

**त्रिविधा दुर्गतिः** विपाकावरणम्—सुगतेश्च प्रदेशः, औत्तरकौरवाः,

---

कस्य कर्मणो भेदात् तदनुपपन्नम् । आक्षेपकर्मफलत्वाच्चक्षुरादीनाम् । षडायतनं त्वाक्षिप्यत इति । *वर्णादय*स्तु परिपूरकस्य कर्मणः फलमिति । युक्तं वक्तुम्—तुल्येऽपि मानुष्ये कश्चिद्वर्णवान्, कश्चिन्नेति । तदुत्पत्तिविरोधिप्रत्ययपरिहारे परिपूरककर्मसामर्थ्यान्न विरोधः । अन्यथा हि न कश्चिद् विकलेन्द्रियः स्यात् सति जन्माक्षेप इति ।

*अन्यदपि सविपाकमिति* । वेदनादिकम् । *कर्मासहभूत्वादिति* । यस्मात् कर्मणा चेतनाख्येन सह ते समापत्ती न भवतः । नापि कायवाक्कर्मभ्याम्; अचित्तकत्वात् । *प्राप्तिभिश्च* नाक्षिप्यते सविपाकाभिरपि । *कर्मणाऽनेकफलत्वात्* । तदाक्षेपकेण कर्मणा सह भवन्त्योऽपि प्राप्तयो न तेन सहैकफला इति । वृक्षप्रपटिका इव हि प्राप्तयो बहिरवस्थायिन्यो भवन्ति ॥ ९५ ॥

*कर्मावरणमिति* । कर्मैवावरणम्, क्लेश एवावरणम्, विपाक एवावरणमिति ।

---

१. ०भूतत्वात्—का० ।    २. कर्मणोऽ०—का० ।

असंज्ञिसत्त्वाश्च ।

कस्यैतान्यावरणानि ? आर्यमार्गस्यार्यमार्गप्रायोगिकाणां च कुशलमूलानाम्।

अन्यान्यपि अपायादिनियतानि अण्डजसंस्वेदजस्त्रीत्वाष्टमभवनियतानि कर्माणि वक्तव्यानि स्युः ? यान्येव तु पञ्चभिः कारणैः सुदर्शकानि सुप्रज्ञकानि—अधिष्ठानतः, फलतः, गतितः, उपपत्तितः, पुद्गलतश्च, तान्येवोक्तानि, नान्यानि ।

क्लेशावरणं चैषां सर्वजघन्यम् । ततः कर्मावरणम् । ताभ्यां हि द्वितीयेऽपि जन्मन्यचिकित्सो भवति; उत्तरोत्तरावाहनादिति वैभाषिकाः ।

---

*आर्यमार्गप्रायोगिकाणां च कुशलमूलाना*मिति । ऊष्मगतादीनाम् । *अपायादिनियतानी*ति । नरक-तिर्यक्-प्रेतनियतानि । *आदि*शब्देनासंज्ञिसमापत्तिमहाब्रह्मसंवर्तनीयं च नियतं कर्म गृह्यते । षण्ढपण्डकोभयव्यञ्जनसंवर्तनीयं च वक्तव्यम् । *तथा अण्डज-संस्वेदज-स्त्रीत्वाष्टमभवनियतानि कर्माणि वक्तव्यानि ।* आर्या हि नरकादिषु नोपपद्यन्ते । अण्डजां संस्वेदजां च योनिं न प्रतिपद्यन्ते । स्त्रीत्वमष्टमं च भवं न निवर्तयिष्यन्ति; सप्तकृत्वो भवपरमत्वात् । *सुदर्शकानी*ति । सुखेन दृश्यन्ते परेभ्य इति सुदर्शानि, सुदर्शान्येव सुदर्शकानि । एवं सुखेन प्रज्ञाप्यन्ते आत्मनेति सुप्रज्ञेयानि, सुप्रज्ञेयान्येव *सुप्रज्ञपकानि ।* स्वार्थे कः । पर्याये द्वयं चैतत्—सुदर्शकानि सुप्रज्ञपकानीति । *अधिष्ठानत* इति । कर्मपथोऽधिष्ठानम् । त्रयाणामानन्तर्याणां प्राणातिपातः कर्मपथोऽधिष्ठानम् । एकस्य मृषावादः कर्मपथोऽधिष्ठानम् । पञ्चमस्य प्राणातिपातप्रयोगोऽधिष्ठानम् । एवमधिष्ठानतः सुदर्शकानि सुप्रज्ञपकानि । *फलतः* । सर्वेषामनिष्टफलत्वात् । *गतितः* । नरकगतिप्रापकत्वात् । *उपपत्तितः* । उपपद्य वेदनीयत्वात् । *पुद्गलतः* । गरिष्ठक्लेशसमुदाचारात् सुप्रज्ञातः पुद्गलः । अयं पितृघातको यावदयं तथागतशरीरे दुष्टचित्तरुधिरोत्पादक इति ।

अपरे पुनर्व्याचक्षते—*अधिष्ठानतः* । पूर्ववत् । *फलतः* । नरकफलत्वात् । *गतितः* । मनुष्यगतिकरणात् । 'त्रिषु द्वीपेष्वानन्तर्यम्' ( अभि० को० ४.९७ ) इति वचनात् । *उपपत्तितः* । तथैवोपपद्यवेदनीयत्वात् । *पुद्गलतः* । स्त्रीपुंसौ, न षण्ढः पण्डको वा । इत्येवं पञ्चभिः कारणैः सुदर्शकानि सुप्रज्ञपकानि । न तु पुनस्तान्यपायादिनियतानि कर्माणि पञ्चभिः कारणैः सुदर्शकानीति । *न तान्युक्तानि ।*

*उत्तरोत्तरवाहनादि*ति । यस्मात् क्लेशावरणं सर्वपापिष्ठम् । ततः कर्मावरणं लघु । ततो विपाकावरणम् । विपाकावरणस्य हि दृष्ट एव धर्मे व्यापारः, न द्वितीय इति ।

आनन्तर्याणीति कोऽर्थः ? नान्तरायितुं शक्यानि विपाकं प्रति जमान्तरफलेन कर्मान्तरेणेत्यानन्तर्याणि । न तिरस्कर्तुमित्यर्थः । न वा तत्कारिणः पुद्गलस्येतश्च्युतस्यानन्तरमस्ति नरकोपपत्तिगमनं प्रतीत्यनन्तरः । तद्भाव आनन्तर्यम् । यस्य धर्मस्य योगात् सोऽनन्तरो भवति, श्रामण्यवत् ॥ ९६ ॥

अथैषामावरणानां कतमत् कस्यां गतौ वेदितव्यम् ? एकान्तेन तावत्

**त्रिषु द्वीपेष्वानन्तर्यम्,**

नोत्तरकुरौ, नान्यासु गतिषु। कुत एवान्यत्र घातौ ? तेष्वपि स्त्रीपुरुषाणामेव।

**षण्ढादीनां तु नेष्यते ।**

किं कारणम् ? यदेवासंवराभावे[1] कारणमुद्दिष्टम् । अपि च—

**अल्पोपकारालज्जित्वात्,**

यथाक्रमं मातापित्रोः, तेषां च । अल्पोपकारौ किलैषां मातापितरौ; विकलात्मभावाधिपतित्वाद्, अल्पस्नेहत्वाच्च । तेषामपि न तीव्रं ह्यपत्राप्यं मातापित्रोरन्तिके प्रत्युपस्थितम्, यद्विपादनादानन्तर्येण स्पृश्येरन् ।

अत एव तिर्यक्प्रेतानामपि नेष्यते ।

---

*यस्य धर्मस्य योगात्* पितृवधादेः *सोऽनन्तरो भवति* । तस्याभिधाने भावप्रत्ययः—आनन्तर्यमिति । *श्रामण्यवत्* । यथा येनानास्रवेण योगाच्छ्रमणो भवति तदभिधाने भावप्रत्ययः—'श्रामण्यममलो मार्गः' ( अभि० को० ६.५१ ) इति, तद्वत् ॥ ९६ ॥

नोत्तरकुराविति। नियतायुष्कत्वात्, प्रकृतिशीलत्वात्, तत्र शासनाभावाच्च ।

*यदेवासंवराभावे करणमिति* । पापेऽप्यस्थिराशयत्वात् । यत्रैव च संवरस्तत्रासंवरोऽपि । प्रतिद्वन्द्वभावादित्यसंवरः । *षण्ढादीनां* न भवतीति ।

*यद्विपादनादिति* । यस्य ह्रीव्यपत्राप्यस्य विपादनाद् विकोपनादानन्तर्येण स्पृश्येरन् षण्ढादयः। *तेषां मातापित्रोरन्तिके न तीव्रं* भवतीति । अतस्तेषामानन्तर्यं नेष्यते। यदि *विकलात्मभावहेतुत्वादल्पोपकारत्वमिति*। अतस्तेषामानन्तर्यं नेष्यते। जात्यन्धादीनामपि स्त्रीपुंसानां मात्रादिवधादानन्तर्यं न स्यात् ? न; अधिगमधर्मविरुद्धस्यात्मभाववैकल्यस्य विवक्षितत्वात् । यद्वैकल्यमधिगमधर्मविरोधि, तदधिकृतम् । तेनैव मात्राल्पस्नेहत्वम्, न जात्यन्धादिवैकल्येन ।

*अतएव तिर्यक्प्रेतानामपि नेष्यते* । अल्पोपकारालज्जित्वादेव ।

---

१. तदेवा०—का० ।

पटुबुद्धीनां स्यादश्वाजानेयवदिति भदन्तः। मनुष्यस्याप्यमानुषं[1] मातापितरं[1] मारयतो न स्यादानन्तर्यम् ॥

उक्तं कर्मावरणम् ॥

**शेषे गतिषु पञ्चसु ॥ ९७ ॥**

के पुनः शेषे? क्लेशविपाकावरणे। मनुष्येषु विपाकावरणम्। कौरवा देवेष्वसंज्ञिसत्त्वाः।

किंस्वभावान्यानन्तर्याणि? चत्वारि कायकर्म, एकं वाक्कर्म, त्रीणि प्राणातिपातः, एकं मृषावादः, एकं प्राणातिपातप्रयोगः। अनुपक्रमधर्माणो हि तथागताः ॥ ९७ ॥

हेतौ फलोपचारात् सङ्घभेद आनन्तर्यमुक्तम्, भिद्यते वा अनेनेति कृत्वा।

**सङ्घभेदस्त्वसामग्री स्वभावो विप्रयुक्तकः।**

---

*अश्वाजानेयवदिति*। *पटुबुद्धीनां स्यादानन्तर्यम्*। तिर्यक्प्रेतानामपीत्यधिकृतम्। *अश्वाजानेयवदिति*। श्रूयते यथा—कश्चिदेव विशिष्टाश्व आजानेयो मातरं न गच्छतीति वाससा मुखं प्रच्छाद्य मातरं गमितस्तेन पश्चात् ज्ञात्वा स्वमङ्गजातमुत्पाटितमिति। एवमाजानेयोऽश्वः पटुबुद्धिः। अस्यानन्तर्यं स्यादित्यभिप्रायः। *मनुष्यस्याप्यमानुषं मातापितरं मारयतो न स्यादानन्तर्यम्*। नैव भवेदानन्तर्यमित्यर्थः। कथम्? अल्पोपकारालज्जित्वादेव। न हि मनुष्यानुरूपमुपकारममनुष्ययोर्मातापित्रोरन्तिके तीव्रं ह्रीव्यपत्राप्यं सन्तिष्ठते; गतिदौर्बल्यात्मभावदौर्बल्यात्।

*चत्वारि कायकर्मेति*। मातृवधादीनि। *एकं वाक्कर्मेति*। सङ्घभेदः। *त्रीणि प्राणातिपात इति*। मातृवधादीनि। *एकं मृषावादः*। सङ्घभेदः। *एकं प्राणातिपातप्रयोगः*। तथागतशरीरे दुष्टचित्तरुधिरोत्पादनं कस्मान्न प्राणातिपातः? इत्याह—*अनुपक्रमधर्माणो हि तथागता* इति। अपरोपक्रम-मरणधर्माण इत्यर्थः ॥ ९७ ॥

*हेतौ फलोपचारादिति*। मृषावादो हेतुः सङ्घभेदस्य चित्तविप्रयुक्तलक्षणस्य, तस्मिन् *हेतौ फलोपचारः*। चित्तविप्रयुक्तो धर्मः फलमुपचर्यते। *सङ्घभेद इति*। *भिद्यते वानेनेति*। करणसाधनपरिग्रहाद्वा मृषावादः सङ्घभेद इत्युच्यते। मृषावादेन हि सङ्घो भिद्यते, न तु सङ्घभेद इति भावसाधनपरिग्रहः।

*"सङ्घभेदस्त्वसामग्री"* इति। मुख्यवृत्त्या वैभाषिकाणां द्रव्यसत्ता। तेनाह—

---

१. अमानुषौ मातापितरौ—का०।

**अक्लिष्टाव्याकृतो धर्मः,**

**असामग्री** नानाचित्तविप्रयुक्तः[1] संस्कारोऽनिवृताव्याकृतः **सङ्घभेदः** । स किमानन्तर्यं भविष्यति ! नैव च तेन भेत्ता समन्वागतः । किं तर्हि ?

**सङ्घस्तेन समन्वितः ॥ ९८ ॥**

यो हि भिन्नस्तस्य भेदः, न भेत्तुः ॥ ९८ ॥

अथ भेत्ता केन समन्वागतः

**तदवद्यमृषावादस्तेन[2] भेत्ता समन्वितः ।**

सङ्घभेदावद्येन भेत्ता समन्वागतः । तत् पुनर्मृषावादः । स पुनः सङ्घभेदसहजे वाग्विज्ञप्त्यविज्ञप्ती । स च तेनावद्येन समन्वागतो भेत्ता ।

**अवीचौ पच्यते कल्पम्,**

अन्तरकल्पमवीचौ महानरके विपच्यते । अन्यैस्तु नावश्यमवीचौ ।

अथ येन बहून्यानन्तर्याणि कृतानि भवन्ति, अनन्तरमेव तानि विपच्यन्ते । किन्तु तैस्तस्य भवन्ति[3]

**अधिकैरधिका रुजः ॥ ९९ ॥**

स हि भूयोभिरानन्तर्यैस्तस्मिन्नवीचौ घनतरं सुकुमारतरं चाश्रयं लभते, कारणाश्च बहुतरास्तीव्रतराश्च, येन द्वित्रिचतुष्पञ्चगुणां वेदनां वेदयते ॥ ९९ ॥

कः पुनरेष सङ्घं भिनत्ति ?

**भिक्षुर्दृक्चरितो वृत्ती भिनत्ति,**

**भिक्षुर्भिनत्ति,** न गृही न भिक्षुण्यादयः । स च दृष्टिचरित एव, न

---

"*स्वभावोऽपि विप्रयुक्तकः । अक्लिष्टाव्याकृतो धर्मः*" इति । *स किमानन्तर्यं भविष्यतीति* । नैवासावेवंलक्षणमानन्तर्यं भवतीत्यर्थः । *नैव च तेन* विप्रयुक्तेन धर्मेण *भेत्ता समन्वागतः* । तेन नासावानन्तर्यमित्यभिप्रायः ॥ ९८ ॥

*स पुनर्मृषावादः सङ्घभेदसहजो* विप्रयुक्तधर्मसहजो *वाग्विज्ञप्त्यविज्ञप्ति*स्वभाव इत्यर्थः ॥ ९९ ॥

*भिक्षुर्भिनत्तीति* । बुद्धस्य भिक्षुत्वात् । तत्प्रतिस्पर्धिवृत्तित्वाच्च भेत्तुः । *न गृही न*[4] *भिक्षुण्यादय* इति । तेषामनादेयाश्रयत्वात् । *स च दृष्टिचरित एव* । दृढगूढाशयत्वात् । सत्कायदृष्ट्यादिषु पञ्चसु चरितः प्रवृत्तो *दृष्टिचरितः* ।

---

१. नान०—का० । २. तदवद्यं—पाठा० ।
३. भवति—का० । ४. मुद्रितपुस्तके नास्ति ।

तृष्णाचरितः । वृत्तस्थो न भिन्नवृत्तः, तस्यानादेयवाक्यत्वात् ।

क्व भिनत्ति? यत्र भगवान् सन्निहितस्ततः

**अन्यत्र,**

नहि शास्तुरेव सन्निधौ शक्यो भेत्तुम्; तथागतानां दुष्प्रसहत्वाद्, आदेयवाक्यत्वाच्च ।

कान् भिनत्ति?

**बालिशान् ।**

पृथग्जनानेव, नार्यान्; प्रत्यक्षधर्मत्वात् ।

तानपि न क्षान्तिलाभिन इत्यपरे ।

कियता भिन्नः सङ्घो भवति?

**शास्तृमार्गान्तरक्षान्तौ[1] भिन्नः,**

यदा तेभ्यस्तथागतादन्यः शास्ता क्षमते, तदुपदिष्टाच्च मार्गादन्यो मार्ग इयता भिन्नः सङ्घो वक्तव्यः ।

कियन्तं कालं भिन्न आस्ते? तामेव रात्रिं

**न विवसत्यसौ ॥ १०० ॥**

अपर्युषित एव हि सङ्घभेदे सङ्घोऽवश्यं प्रतिसन्धीयते ॥ १०० ॥

योऽयं सङ्घभेद उक्तः

**चक्रभेदः स च मतः,**

---

दृष्टिर्वा चरितमस्येति दृष्टिचरितः । स ह्यूहापोहसामर्थ्यादन्यं शास्तारं मार्गान्तरञ्च ग्राहयितुं समर्थः । न *तृष्णाचरित* इति । संक्लेशव्यवदानपक्षयोरस्थिराशयत्वात् ।

*दुष्प्रसहत्वा*दिति । दुरभिभवत्वात् ।

*प्रत्यक्षधर्मत्वा*दिति । आगमाधिगमधर्मयोः साक्षात्कारित्वादित्यर्थः ।

*न क्षान्तिलाभिन* इति । न निर्वेधभागीयक्षान्तिलाभिन इत्यर्थः । दृष्टिसत्यकल्पत्वात् ।

*"न विवसत्यसौ"* । न तां रात्रिं परिवसतीत्यर्थः ॥ १०० ॥

---

१. ०न्तरक्-शान्तौ—स्फु० मु० पाठः ।

धर्मचक्रं हि तदा भगवतो भिन्नं भवति; मार्गप्रवृत्तिविष्ठापनात् । अत एव चक्रभेदश्चोच्यते, सङ्घभेदश्च ।

क्व पुनश्चक्रभेदो भवति ?

**जम्बूद्वीपे,**

नान्येषु द्वीपेषु ।

कतिभिर्भिक्षुभिः ?

**नवादिभिः ।**

नवादि कृत्वा । परेणानियमः । अष्टौ भिक्षवः संघो भवति । नवमो भेत्ता । अवश्यं हि संघेन द्वयोः पक्षयोः स्थातव्यम् । एवं भिन्नो भवति ।

अन्यस्तु संघभेदः कर्मभेदाद् भवति । यद्येकसीमायां व्यग्राः कर्माणि[1] कुर्वन्ति । स चैष —

**कर्मभेदस्त्रिषु द्वीपेषु,**

येष्वेव शासनम् ।

कतिभिर्भिक्षुभिः ?

**अष्टाभिरधिकैश्च सः ॥ १०१ ॥**

चक्रभेदस्तु षट्सु कालेषु न भवति ॥ १०१ ॥

---

*भिन्नं भवती*ति । कथं भिन्नम् ? इत्याह—*मार्गप्रवृत्तिविष्ठापनादि*ति । मार्गप्रवृत्तिविबन्धनादित्यर्थः । यावद्धि सङ्घो न प्रतिसन्धीयते, तावन्मार्गप्रवृत्तिर्विष्ठिता भवति । न कस्यचित् सन्ताने मार्गः सम्मुखीभवतीत्यर्थः ।

चक्रभेदनिमित्तत्वात् *सङ्घभेदश्चक्रभेद* इत्युच्यते ।

*अवश्यं हि सङ्घेन द्वयोः पक्षयोः स्थातव्यमि*ति । बुद्धपक्षे भेत्तृपक्षे च *स्थातव्य*मित्यर्थः । संघो हि चत्वारो भिक्षवः । संघद्वयेन च भवितव्यमित्यष्टाभिर्भिक्षुभिर्भेद्यैर्भवितव्यम्, नवमेन च भेत्रा ।

*अन्यस्तु सङ्घभेद* इति । चक्रभेदादन्यः । नात्रानन्तर्यमित्यभिप्रायः । यस्मादसौ *कर्मभेदाद् भवति* । *व्यग्रा* इति । नानामतयः । *कर्माणि* । पोषधादीनि सङ्घकर्माणि ।

"*अष्टाभिरधिकैश्च सः*" इति । सङ्घद्वयेनात्रापि भवितव्यम् । न भेत्ता शास्तृमानी भवतीत्यष्टाभिरेव भिक्षुभिर्भवितव्यम्, न नवादिभिरिति ॥१०१॥

---

१. कर्म—का०।

**कतमेषु ?**

**आदावन्तेऽर्बुदात् पूर्वं युगाच्चोपरते मुनौ।**
**सीमायां चाप्यबद्धायां चक्रभेदो न जायते ॥ १०२ ॥**

**आदाव**चिरप्रवर्तिते धर्मचक्रे।

**अन्ते** परिनिर्वाणकाले भगवतः। एतयोर्हि द्वयोरवस्थयोः संघ एकरसो भवति।

**मध्येऽप्यर्बुदात् पूर्वं** न भिद्यते, यावच्छासने शीलार्बुदं दृष्टयर्बुदं च नोत्पन्नं भवति।

**युगाच्च पूर्वं** न भिद्यते यावच्छ्रावकाग्रयुगं नोत्पन्नं भवति। भिन्नन्याय-परिवासात् तेन च प्रतिसन्धानीयत्वात्।

**उपरते मुनौ,** शास्तरि परिनिर्वृते प्रतिद्वन्द्वाभावात्।

**सीमायामबद्धायाम्,** यावत् सीमा न बद्धा भवति। एकसीमायां हि

---

*एकरसो भवती*ति। अव्यग्र एकमतिर्भवतीत्यर्थः। पूर्वस्यामवस्थायां प्रीति-प्रामोद्यजातः, पश्चिमायामतीव मनसि उद्विग्नसञ्जातसंवेगः।

*अर्बुदात् पूर्वमि*ति। दोषः = *अर्बुदम्, दृष्टयर्बुदं शीलार्बुदं वा।* अत्र दृष्टयर्बुदं यथोक्तम्—"यथाहं भगवतो भाषितस्यार्थमाजानामि। य इमे भगवता-ऽऽन्तरायिका धर्मा आख्याताः ते प्रतिषेव्यमाणा नालमन्तराय" इति। तथा "तदेव चित्तं सन्धावति संसरति" ( ) इत्यादि। *शीलार्बुदम्।* दौःशील्यम्।

*तेन च प्रतिसन्धानीयत्वादि*ति। तेन च श्रावकयुगेन यस्मात् प्रतिसन्धानीय इत्यर्थः। अवश्यं च सर्वेषां बुद्धानां श्रावकयुगं भवति। एकः प्रज्ञावतामग्रः, द्वितीय ऋद्धिमताम्। इह शाक्यमुनेरार्य*शारद्वतीपुत्रः* प्रज्ञावतामग्रः। आर्यो *महामौद्गल्यायन* ऋद्धिमताम्।

*प्रतिद्वन्द्वाभावादि*ति। यस्मात् परिनिर्वृते भगवति तस्य भेत्तुः प्रतिद्वन्द्व-भूतो नास्ति।

*सीमायामबद्धायामि*ति। मण्डलसीमायाम्। एकस्यां हि सीमायां पृथक्कर्म-करणात् सङ्घद्वैधं भवति। ननु च प्रकृतिसीमास्ति ग्रामनगरादि ? सत्यमस्ति; ज्ञप्तिसीमायां सत्यां सा प्रकृतिसीमा व्यवस्थाप्यत इति। तस्या अपि बन्धो

पक्षद्वयावस्थानात् संघभेद इति। एषु कालेषु चक्रभेदो न भवति। न च पुनः सर्वेषां बद्धानां चक्रभेदः; कर्माधीनत्वात् ॥ १०२ ॥

कस्मात् मातृवधादिष्वानन्तर्यम्, नान्यत्र ?

उपकारिगुणक्षेत्रनिराकृतिविपादनात् ।

मातापितृवधे तावदुपकारिणो निराकरणात्। कथं तावुपकारिणौ ? आत्मभावस्य तत्प्रभवत्वात्। किं तयोर्निराकरणम् ? परित्यागः। गुणक्षेत्रत्वादर्हद्वधाद् आनन्तर्यम्।

यदि पुनर्मातुर्व्यञ्जनं परिवृत्तं स्यात्, पितुर्वा, तत्रैकस्मिन्नाम्नायो

व्यञ्जनान्तरितोऽपि स्यात्,

अत एवोच्यते—"स्यात् पुरुषं जीविताद् व्यपरोपयेन्न पितरम्, नार्हन्तम्। आनन्तर्यावद्येन च स्पृश्येत। स्यान्मातुर्व्यञ्जनं परिवृत्तं स्यादिति। स्यात् स्त्रीं जीविताद् व्यपरोपयेन्न मातरम्, नार्हन्तीम्, आनन्तर्यावद्येन च स्पृश्येत। स्यात् पितुर्व्यञ्जनं परिवृत्तं स्यात्" (                ) इति।

अन्यस्याः स्त्रियाः कललं प्रसुतमन्यया योन्या पीतम्। कतरा तस्य माता

---

व्यवस्थाप्यत एवेति वेदितव्यम्। *कर्माधीनत्वादिति*। येन शिष्यसङ्घभेद-संवर्तनीयं कर्म कृतं भवति, तस्यैव तद्भेदो भवति, नान्यस्य। *शाक्यमुनिना* च किल बोधिसत्त्वावस्थायां पञ्चाभिज्ञस्य ऋषेः पर्षद्भेदः कृत आसीत्। येनास्य देवदत्तेन सङ्घो भिन्न इति ॥ १०२ ॥

*गुणक्षेत्रत्वादिति*। गुणानामाश्रयत्वादित्यर्थः। अथवा—गुणैः क्षेत्रं गुणक्षेत्रम्। गुणयोगाद्धि तत् पुण्यस्य क्षेत्रं भवति। यथा क्षेत्रे बीजमुप्तं महाफलं भवति, एवं पुण्यबीजमत्रोप्तं महाफलं भवति। *नान्यत्रेति*। न सामान्यस्त्रीवधादिषु।

*उपकारि-गुणक्षेत्रनिराकृति-विपादनाद्*" इति। उपकारिक्षेत्रस्य, गुणक्षेत्रस्य वा निराकृतेः परित्यागान् मातृपितृवधादिष्वानन्तर्यम्। तस्य विपादनाच्च विकोपादानन्तर्यम्। तथागतशरीरे दुष्टचित्तरुधिरोत्पादनम्। संघस्यापि यद् भेदनं तदपि तद्विपादनम्। तदेतदुक्तं भवति—उपकारिक्षेत्रत्वात् गुणक्षेत्रत्वाच्च। तन्निराकरणविपादानान् मातृवधादिष्वेवानन्तर्यम्, नान्यत्रेति।

यदि *पुनर्मातुर्व्यञ्जनपरिवृत्तं स्यात्, पितुर्वेति*। व्यंजनपरावृत्त्या तन्मातृत्वं तत्पितृत्वं वा विनष्टमिति।

यां घ्नतः स्यादानन्तर्यम् ?

**माता यच्छोणितोद्भवः ॥ १०३ ॥**

यस्याः शोणितादसावुद्भूतः सत्त्वः, सास्य माता। द्वितीया तु सर्वकृत्येष्ववलोक्या। सा ह्याप्यायिका[1], पोषिका, संवर्धिका च।

यदि मातरि प्रयोगं कृत्वाऽन्यां मारयेत्, न स्यादानन्तर्यम्। अमातृप्रयोगेण मारयेत्, तथापि न स्यात्। मञ्चतलावलीनमातृमारणं चात्रोदाहार्यम्, धावकस्य च पुत्रेण मशकप्रयोगेण पितुर्मारणं च।

एकेन प्रहारेण मातरमन्यां च मारयतो द्वे अविज्ञप्ती भवतः। विज्ञप्तिस्त्वानन्तर्यमेव; तस्य कर्मणो बलीयस्त्वात्।

परमाणुसञ्चितत्वाद् विज्ञप्तिरपि द्विधेति भदन्तघोषकः। अनर्हत्संज्ञयाऽपि अर्हद्घाते भवत्यानन्तर्यम्, 'अहम् हन्मि' इत्याश्रयावधारणात्। यः पितरमर्हन्तं हिंस्यात्, तस्याप्येकमेव स्यादानन्तर्यम्; आश्रयैकत्वात्।

इदमवदानं कथं नीयते—"गच्छ शिखण्डिनं ब्रूहि, द्वे आनन्तर्ये भवता कृते—यच्च पिता जीविताद् व्यपरोपितः, यच्चार्हन्" (                ) इति।

---

मातुर्मारणाभावात् पितुर्मारणाभावाद्वा न स्यादानन्तर्यमिति, तदभावाशङ्कया पृच्छति। *"यच्छोणितोद्भवः"* इति। यस्याः शोणितादुद्भवोऽस्येति यच्छोणितोद्भवः। *सर्वकृत्येष्ववलोक्येति*। सर्वमातृयोग्येषु कार्येषु द्रष्टव्येत्यभिप्रायः; मातृकल्पत्वात्। *आपायिका* कटाहारिका। *पोषिका* स्तन्यदायिका। *संवर्द्धिका* औदारिकाहारादिकल्पिका। अपरे व्याचक्षते—*आप्यायिका* स्तन्यधात्र्केति योऽर्थः। *पोषिका* औदारिकाहाराभ्यासतः। *संवर्द्धिका* स्नानोद्वर्तविषमपरिहारत इति।

*मञ्चतलावलीनेति*। मञ्चोपरि प्रावरणकल्पनेन पुरुषोऽत्र सुप्त इति मन्यमानेन पुत्रेण तत्र शस्त्रप्रहारेण *मञ्चतलावलीना माता मारितेत्युदाहार्यम्*। *धावकस्य* च राजकस्य *पुत्रेण* 'मशकं मारयामि' इति *मशकप्रयोगेण पितुर्मारणमिति*। *द्वे अविज्ञप्ती*। आनन्तर्याविज्ञप्तिः, केवलप्राणातिपाताविज्ञप्तिश्च। *विज्ञप्तिस्त्वानन्तर्यमेव*। तत्संगृहीतैव, सा नान्येत्यर्थः। *तस्याप्येकमेवेति*। अर्हद्वधाख्यम्।

*गच्छ शिखण्डिनं ब्रूहीति*। रौरुके नगरे उद्रायणो नाम राजा शिखण्डिनं नाम पुत्रमभिषिच्य प्रव्रजितः। प्रव्रज्य अर्हत्त्वमधिगतवान्। स रौरुकाभ्यासमा-

---

१. ह्यापायिका—का०।

अभि० को० २ : २३

द्वाभ्यां कारणाभ्यामिति वक्तव्यम्। द्वाभ्यां वा मुखाभ्यां परिभाषितः ॥ १०३ ॥

किमवश्यं तथागतस्यास्ति कुदुष्टचित्तरुधिरोत्पादनादानन्तर्यम्? वधाभिप्रायस्य स्यात्।

**बुद्धे न ताडनेच्छस्य,**

यदि ताडनाभिप्राय उत्पादयेत्, न स्यात्।

यद्यनर्हति प्रहरेत्, स च प्रहारादूर्ध्वमर्हन् स्यात्

**प्रहारान्नोर्ध्वमर्हति।**

'स्यादानन्तर्यम्' इति वर्तते। न हि तेन तत्र प्रयोगः कृतः।

किमानन्तर्ये प्रयोगं कृत्वा तस्मिन्नव्यावर्तिते वैराग्यम्, फलं वा न प्राप्नुयात्?

**नानन्तर्यप्रयुक्तस्य वैराग्यफलसम्भवः ॥ १०४ ॥**

-अन्यकर्मफलपथप्रयोगं तु कृत्वार्यमार्गोत्पत्तौ न पुनः कर्मपथोत्पत्तिः, आश्रयस्यात्यन्तं तद्विरुद्धत्वात् ॥ १०४ ॥

एषामानन्तर्याणां कतमत् महासावद्यम्?

**सङ्घभेदे मृषावादो महावद्यतमो मतः।**

यः सङ्घभेदनिमित्तं मृषावादो धर्माधर्मज्ञस्य विपर्ययद्योतनात्, स सर्वेषां

---

गतवान्। पुना राज्यमाकांक्षतीति अमात्यप्रक्रामितेन तेन शिखण्डिना राज्ञा स्वपिता मारितः। तेन तु मार्यमाणावस्थायां स मारको मनुष्य उक्तः—गच्छ शिखण्डिनं ब्रूहीत्येवमादि। *द्वाभ्यां कारणाभ्यामिति वक्तव्यमिति*। 'गच्छ शिखण्डिनं ब्रूहि—द्वाभ्यामानन्तर्यकारणाभ्यां भवता कृतमानन्तर्यम्' इति तेन वक्तव्यम्। *द्वाभ्यां वा मुखाभ्यां परिभाषित* इति। मुखद्वित्वादानन्तर्यद्वित्वोपचार इत्यभिप्रायः। कारणद्वित्वाद्धि गुरुतरं तदानन्तर्यम् ॥ १०३ ॥

*आश्रयस्यात्यन्तं तद्विरुद्धत्वादिति*। उत्पन्नार्यमार्गस्य आश्रयस्य तैः कर्मपथैर्विरुद्धत्वात्। एकावदानं चात्रोदाहरणम्—छेकः किल शाक्यमनुष्यो विरूढकभयाद् विषमं वनप्रदेशमाश्रित्य लुब्धकवृत्तिमशिश्रियत्। भगवता च त्रायस्त्रिंशेषु त्रैमास्यं कुर्वता ततोऽवतीर्य छेकाय सपरिजनाय धर्मो देशितः। तेन स्रोतआपत्तिफलमधिगतम्। तत्पुत्रैश्च फलप्राप्तैः पूर्वं प्रतानितानि कूटजालादीनि मृगेभ्यः। तत्प्रयोगेण च मार्यमाणेष्वपि मृगेषु फलप्राप्तया न ते पुनरकुशलैः कर्मपथैः स्पृष्टा इति ॥ १०४ ॥

दुश्चरितानां **महावद्यतमः** । किं कारणम् ? तथागतधर्मशरीरप्रहारितत्वात्, लोकानां च स्वर्गापवर्गमार्गान्तरायकत्वात् । संघे हि भिन्ने लोकस्य नियामावक्रान्तिफलप्राप्तिवैराग्यास्रवक्षयाः प्रतिबध्यन्ते, ध्यानाध्ययनस्वाध्यायचिन्ताकर्माण्यपि न प्रवर्तन्ते, सदेवनागमनुष्यं जगच्चाकुलं विमनस्कं वर्तते, यावत् पुनर्न प्रतिसन्धितो भवति, यस्माच्चावीचौ कल्पं विपाकः ।

शेषाणामानन्तर्याणां यथाक्रमं पञ्चमतृतीयप्रथमानि गुरुतराणि, सर्वलघुः पितृवधः ।

यत्तर्हि भगवता त्रयाणां दण्डानां मनोदण्डो महासावद्य उक्तः, पुनर्मिथ्यादृष्टिः परमवद्यानामित्युक्तम्, आनन्तर्याणि नियमस्य सङ्घभेदो महासावद्य उक्तः ? त्रीणि कर्माणि नियमस्य मनोदण्डः, दृष्टीर्नियमस्य मिथ्यादृष्टिः । अथ वा विपाकविस्तरम्, महाजनव्यापादनम्, कुशलमूलसमुच्छेदं चाधिकृत्य यथाक्रमम् ।

सुचरितानां पुनः कतमत् महाफलतमम् ?

**भवाग्रचेतना लोके महाफलतमा शुभे ।। १०५ ।।**

कुशले पुनः कर्मणि **भवाग्रचेतना** सर्वेषां **महाफलतमा** । तस्या अशीतिकल्पसहस्राण्यतिप्रशान्तो विपाकः । विपाकफलं चाधिकृत्यैतदुक्तम् ।

विसंयोगफलं त्वधिकृत्य वज्रोपमसमाधिचेतना सर्वेषां महाफला; सर्वसंयोजनपर्यादानफलत्वात् । अत एव **लोक** इत्युक्तम् ।

---

*पञ्चमतृतीयप्रथमानि गुरुतराणी*ति । इयमानन्तर्यकर्मपथानुपूर्वी—मातृवधः, पितृवधः, अर्हद्वधः, संघभेदः, तथागते दुष्टचित्तरुधिरोत्पादनमिति । पञ्चमं दुष्टचित्तरुधिरोत्पादनम्, तत् सङ्घभेदवर्जेभ्योऽवशिष्टेभ्यश्चतुर्भ्यो गुरुतरम् । तृतीयमर्हद्वधः, तन्मातृपितृवधाभ्यां गुरुतरम् । प्रथमं मातृवधः, तत् पितृवधाद् गुरुतरम् । तेनाह—*सर्वलघुः पितृवध* इति ।

*नियमस्ये*ति । तदेवावधार्यत्यर्थः । *विपाकविस्तर*मधिकृत्य संघभेदो महासावद्य उक्तः; अन्तरकल्पविपाकदानात् । *महाजनव्यापादन*मधिकृत्य मनोदण्डः; दण्डकारण्यादिशून्यकरणात् । न ह्यन्येन कायकर्मणा वाक्कर्मणा वा तावतो महाजनस्य व्यापादः सम्भवतीति । *कुशलमूलसमुच्छेद*मधिकृत्य मिथ्यादृष्टिर्महासावद्या । न ह्यन्यदकुशलमूलं कुशलमूलानि समुच्छिनत्ति; समुदाचारमात्रविरोधित्वादिति ।

किमानन्तर्यैरेवावश्यं नरकेषूपपद्यते ? आनन्तर्यसभागैरप्यवश्यमुपपद्यते । न त्वनन्तरमेवेत्यपरे ॥ १०५ ॥

कतमानि तानि ? इत्याह—

**दूषणं मातुरर्हन्त्या नियतिस्थस्य मारणम् ।**
**बोधिसत्त्वस्य शैक्षस्य सङ्घायद्वारहारिका ॥ १०६ ॥**
**आनन्तर्यसभागानि पञ्चमं स्तूपभेदनम् ।**

एतानि पञ्च पञ्चानामानन्तर्याणां यथाक्रमं सभागानि—१. यदि मातरमर्हन्तीं दूषयत्यब्रह्मचर्यकरणात्, २. नियतिपतितं बोधिसत्त्वं मारयति, ३. शैक्षं मारयति, ४. संघस्य सुखायद्वारिकं हरति, ५. स्तूपभेदं करोति ।

अन्यदपि तु कर्म सविपाकं त्रिषु कालेष्वत्यर्थं विघ्नयति ॥

कतमेषु त्रिषु ?

**क्षान्त्यनागामितार्हत्त्वप्राप्तौ कर्मातिविघ्नकृत् ॥ १०७ ॥**

मूर्धभ्यः क्षान्तिमाकिरत आपायिकानि कर्माणि विघ्नायोपतिष्ठन्ते; तद्विपाकभूम्यतिक्रमात् । यथा पुरुषस्य देशत्यागं कुर्वतो धनिका उत्तिष्ठन्ते[1] ।

---

*न त्वनन्तरमेवेति* । नरकेऽवश्यमुत्पत्त्या तानि तत्सादृश्यात् सभागान्युच्यन्ते, न तु तत्रानन्तरोत्पत्त्या । अन्यथा ह्यानन्तर्याण्येव स्युरित्यपरेषामभिप्रायः । अनन्तरभावित्वेऽपि न तान्यानन्तर्याण्येव सम्भवन्ति; अतुल्यकालविपाकत्वादिति प्रथमपाक्षिकाणां परिहारः ॥ १०५ ॥

"*दूषणं मातुरर्हन्त्याः*" । मातृवधानन्तर्यसभागम् ॥ १०६ ॥

*नियतिपतितबोधिसत्त्वमारणं* पितृवधानन्तर्यसभागम् । *शैक्षमारणम*र्हद्वधानन्तर्यसभागम् । *सङ्घायद्वारहारिका* सङ्घभेदानन्तर्यसभागम् । *स्तूपभेदनं* तथागतदुष्टचित्तरुधिरोत्पादनानन्तर्यसभागम् ।

*सङ्घायद्वारहारिका* पुनरक्षयनीव्यपहार इत्याचार्यवसुमित्रः । एवं तु व्याचक्षते—सुखायद्वारहारिकेति । यत् सुखोपयोगिकं येन सङ्घो जीविकां कल्पयति तस्यापहार इति ।

*तद्विपाकभूम्यतिक्रमादिति* । क्षान्तिलाभ्यनपायग इत्यप[illegible]त् ।

---

१. उपतिष्ठन्ते—का० ।

अनागामिफलं प्राप्नुवतः कामावचराणि विपाकायोपतिष्ठन्ते, तथैव स्थापयित्वा दृष्टधर्मवेदनीयं कर्म ।

अर्हत्त्वं प्राप्नुवतो रूपारूप्यावचराणि तथैव ॥ १०६–१०७ ॥

यदुक्तम्—"बोधिसत्त्वस्य मारणम्" इति,

**बोधिसत्त्वः कुतो यावत्,**

कुत उपादाय बोधिसत्त्वो वक्तव्यः ?

**यतो लक्षणकर्मकृत् ।**

यतः प्रभृति लक्षणविपाकानि कर्माण्यारभते कर्तुम्, स हि तदानीं नियतिपतितो भवति । कथं कृत्वा ? स हि तस्मात् कालात् प्रभृति नित्यं भवति ।

**सुगतिः कुलजोऽव्यक्षः पुमान् जातिस्मरोऽनिवृत् ॥ १०८ ॥**

प्रशस्ता गतिरस्येति सुगतिः; देवमनुष्योपपत्तेः ।

तस्यां च सुगतौ क्षत्रिय-ब्राह्मण-गृहपतिमहाशालकुलजो भवति, नान्यः कुलीनः ।

विकलान्यक्षाण्यस्येति व्यक्षः, न व्यक्षोऽव्यक्षः । अविकलेन्द्रियः इत्यर्थः । पुरुष एव न स्त्री, कुत एव षण्ढादिः । जातिस्मरश्च भवति ।

सर्वस्यां जातौ निवर्तत इति निवृत्, न निवृदनिवृत् । अनिवर्तक इत्यर्थः । सत्त्वहितार्थं सर्वदुःखप्रकारैः सर्वसत्त्वविप्रतिपत्तिभिश्चाखेदितत्वात् । यत्तल्लोक उच्यते—'आपणक्रीतो दासः' इति । बोधिसत्त्वास्ते ते हि महात्मनः सर्वसम्पत्प्रकर्षविशेषप्राप्ता अपि सन्तो निष्कारणकरुणापारतन्त्र्यात् सर्वसत्त्वेषु चण्डालकुमारकसदृशमात्मानं निर्मानतया व्यवस्थाप्य सत्त्वेभ्यः सर्वकदर्थनानां[1] सोढारो भवन्ति, सर्वश्रमयन्त्रणानां चोद्वोढारः । यच्चैतल्लक्षणविपाकं कर्मेत्युक्तम् ॥ १०८ ॥

---

तथैवेति । तद्विपाकभूम्यतिक्रमात् । यथा पुरुषस्य देशत्यागं कुर्वतो धनिका उत्तिष्ठन्ते, तथैवेत्यर्थः ॥ १०७ ॥

*महाशालकुलज* इति । महाप्राकारकुलज इत्यर्थः । क्षत्रियमहाशालकुलजो यावद् गृहपतिमहाशालकुलज इति । महागृहपतिकुलज इत्यर्थः । *कदर्थना* । महापरिभवपूर्विका विहेठना । ययोः कायवाचोः प्रवृत्त्या परस्य दुःखदौर्मनस्ये

---

१. सर्वकदर्थनं—का० ।

**जम्बूद्वीपे पुमानेव सम्मुखं बुद्धचेतनः ।**
**चिन्तामयं कल्पशते शेष आक्षिपते हि तत् ॥ १०९ ॥**

जम्बूद्वीप एव बोधिसत्त्वो लक्षणविपाकं कर्माक्षिपति, नान्यत्र; जाम्बूद्वीपकानां तीक्ष्णबुद्धित्वात् ।

**पुरुष एव,** न स्त्री ।

**सम्मुखीभूत एव** शास्तरि, **बुद्धा**लम्बनयैव **चेतनया** ।

**चिन्तामयं** तत्कर्म; न श्रुतमयम्, न भावनामयम् ।

**कल्पशते च शेष आक्षिपति** न बहुभवेषु । भगवता तु शाक्यमुनिनोत्तसवीर्यतया नव कल्पा अपावर्तिता एकनवत्या कल्पैराक्षिप्तम् ।

अत एव चोक्तम्—"इतोऽहं ग्रामणि[1] एकनवतं[1] कल्पमुपादाय न समनुस्मरामि नाभिजानामि यदेककुलमपि पक्षभिक्षाप्रदानहेतोः क्षतं वा स्यादुपहतं वा" (                ) इति ।

ततः प्रभृति प्रकृतिजातिस्मरत्वात् प्रथमकल्पासंख्येयनिर्यात एव बोधिसत्त्व एतांश्चतुरो दोषान् व्यावर्तयति, द्वौ च गुणौ प्रतिलभत इति **पूर्वाचार्याः** ॥१०९॥

तेषां च लक्षणानाम्

**एकैकं पुण्यशतजम्,**

किं पुण्यस्य परिमाणम् ?

---

भवतः, तदपेक्षया तन्निग्रहो *यन्त्रणे*त्युच्यते ॥ १०८ ॥

*एकनवतं कल्पमुपादाये*ति । एकनवतेः पूरणः कल्प एकनवतः, तदुपादाय । असिबद्धकेन ग्रामण्या निर्ग्रन्थश्रावकेण भगवानुक्तः—"किमनर्थायासि भो गौतम कुलानां प्रतिपन्नो यस्त्वमीदृशे दुर्भिक्ष इयता भिक्षुसंघेन सार्द्धमशनिवदुत्सादयन् भिक्षामटसि" इति । स भगवताभिहितः—"इतोऽहं ग्रामणि *एकनवतं कल्पमुपादाय*" (                ) इति विस्तरः ।

*एतांश्चतुरो दोषान् व्यावर्तयती*ति । दुर्गतिदोषम्, अकुलीनतादोषम्, विकलेन्द्रियतादोषम्, स्त्रीभावदोषं चेति । *द्वौ च गुणौ प्रतिलभते* । जातिस्मरतागुणम्, अनिवर्तकतागुणं चेति ॥ १०९ ॥

१–१. ग्रामणीरेक०—का० ।

सन्निकृष्टं बोधिसत्त्वं स्थापयित्वा यावत् सर्वसत्त्वानां भोगफलमित्येके ।

यावत् सर्वसत्त्वानां कर्माधिपत्येन त्रिसाहस्रमहासाहस्रको लोको निवर्तत[1] इत्यपरे ।

बुद्धा एव च तत्परिमाणज्ञा इत्यपरे ।

अन्य बोधिसत्त्वभूतो भगवान् कियतो बुद्धान् पर्युपासयामास ? प्रथमे कल्पासंख्येये पञ्चसप्ततिसहस्राणि, द्वितीये षट्सप्ततिम्, तृतीये सप्तसप्ततिम् ।

अथ कस्य कल्पासंख्येयस्यान्ते कतमो बुद्ध आसीत् ? प्रतिलोमानुक्रमेण यथाक्रमम्—

---

*सन्निकृष्टं बोधिसत्त्वं स्थापयित्वेति* । यो लक्षणविपाककर्मकारी । *त्रिसाहस्रमहासाहस्रको निवर्तत* इति । येन सर्वसत्त्वकर्माधिपत्येन त्रिसाहस्रमहासाहस्रप्रादुर्भावः, तस्य तत् परिमाणमिति । उक्तं पुण्यस्य परिमाणम् ।

तेषामेवं कृतपरिमाणानां शतेनैकं महापुरुषलक्षणं निर्वर्तते । एवं यावद् द्वात्रिंशत्तममपीति । केचित् तं व्याचक्षते—बुद्धालम्बनमनस्कारसम्मुखीभावात् पञ्चाशच्चेतना भवन्ति । 'अहमपीत्थं स्याम्' इत्यपराः पञ्चाशदित्येवं पुण्यशतं भवतीति ।

अपरे वर्णयन्ति—कामधातुर्विंशतिस्थानानि, रूपधातुः षोडश, आरूप्याश्चत्वारः, अष्टौ च शीतनरका इत्यष्टचत्वारिंशद्विकल्पं त्रैधातुकं भवति । तदालम्बनमस्य बोधिसत्त्वस्य करुणाचित्तमुत्पद्यते । ततस्तत्सम्प्रयुक्ताश्चेतना अष्टचत्वारिंशद् भवन्ति । अतोऽनन्तरं बुद्धालम्बनचेतनोत्पद्यते । यथानेनास्मात् त्रैधातुकात् सत्त्वा मोचिता इत्येका चेतना । अतोऽनन्तरं द्वितीया चेतनोत्पद्यते । 'अहमप्येवं मोचयेयम्' इत्यात्मालम्बनेति पञ्चाशच्चेतना भवन्ति । तासां पुनर्द्विःसम्मुखीभावाच्चेतनाशतं भवतीति ।

अन्य आहुः—प्राणातिपातविरतिर्बुद्धस्य भगवतः पञ्चभिः कारणैरुपेता भवति । पञ्च कारणानि—मौलकर्मपथपरिशुद्धिः, सामन्तकपरिशुद्धिः, वितर्कानुपघातः, स्मृत्यनुपरिगृहीतत्वम्, निर्वाणपरिणामितत्वं चेति । तदालम्बना अपि चेतनाः पञ्च भवन्ति । एवं दश कर्मपथालम्बना दश पञ्चकाश्चेतनानां पञ्चाशच्चेतना भवन्ति । तासां द्विःसम्मुखीभावाच्चेतनाशतं भवतीत्येतत् पुण्यशतम् । 'यथा अयमसाधारणदशकुशलकर्मपथनिर्जातो भगवान्, एवमहमपि स्याम्' इति कृत्वा । तदेवं सत्येकैकं पुण्यशतजमित्येतत् सिध्यति ।

*पर्युपासयामासेति* । लिट्याम्-प्रत्ययान्तस्यासेरेतद्रूपम् । पर्युपासितवा-

---

१. ०ऽभिनिवर्तत—का० ।

असंख्येयत्रयान्त्यजाः[1] ।

**विपश्यी दीपकृद् रत्नशिखी,**

रत्नशिखिनि सम्यक्सम्बुद्धे प्रथमोऽसङ्ख्येयः समाप्तः । दीपङ्करे भगवति द्वितीयः । विपश्यिनि तथागते तृतीयः ।

सर्वेषां तु तेषां—

**शाक्यमुनिः पुरा ॥ ११० ॥**

शाक्यमुनिर्नाम सम्यक्सम्बुद्धः पूर्वं बभूव । यत्र भगवता बोधिसत्त्वभूतेन आद्यं प्रणिधानं कृतम्—'एवम्प्रकार एवाहं बुद्धो भवेयम्' इति, नोऽप्येवं कलियुग एवोत्पन्नवानार्यवत्, तस्याप्येवं वर्षसहस्रान्तं शासनं बभूव ॥ ११० ॥

अथ कस्यामवस्थायां बोधिसत्त्वः कां पारमितां परिपूरयते ?

**सर्वत्र सर्वं ददतः कारुण्याद् दानपूरणम् ।**

यदा सर्वस्मै सर्वं ददाति आ अक्ष्णः, आ मज्जायाः, कारुण्यात् नाभ्युदयविशेषं लिप्समानः—इयता दानपारमिता परिपूर्णा भवति ।

**अङ्गच्छेदेऽप्यकोपात्तु रागिणः क्षान्तिशीलयोः ॥ १११ ॥**

यदायमवीतरागोऽपि च्छिद्यमानेष्वङ्गेषु नाल्पमपि कुप्यति, तदा अस्य क्षान्तिशीलपारमिते परिपूर्णे भवतः ॥ १११ ॥

**तिष्यस्तोत्रेण वीर्यस्य,**

तिष्यं तथागतरत्नगुहायां तेजोधातुसमापन्नदृष्ट्वा भगवान् बोधिसत्त्वभूत एकेन पादेन स्थित्वा सप्त दिवसान् स्तुतवानेकगाथया—

"न दिवि भुवि वा नास्मिन् लोके न वैश्रवणालये ।

---

नित्यर्थः । *यत्र भगवतेति* विस्तरः । प्रभासनाम्ना कुम्भकारकुमारभूतेनासुखोदरकाभ्यञ्जपरिचर्याभिरुपस्थानं कृत्वाद्यं प्राणिधानं कृतम् ॥ ११० ॥

*तदास्य क्षान्तिशीलपारमिते परिपूर्णे* इति । चेतसा तावदकोपतः क्षान्तिपारमितापरिपूरिः, कायवाग्भ्यां दुश्चरिताकरणाच्छीलपारमितापरिपूरिरिति ॥

*न दिवि भुवि* वेति विस्तरः । दिवि. भुवि वेति उद्देशपदन्यायेनोक्तम् ।

---

१. ०न्तजाः—स्फु० मुद्रितः पाठः ।

न मरुभवने दिव्यस्थाने[1] न दिक्षु विदिक्षु च[2] ॥

चरतु वसुधां स्फीतां कृत्स्नां सपर्वतकाननाम् ।

पुरुषवृषभस्त्वत्तुल्योऽन्यो महाश्रमणः कुतः" ॥ ( ) इति ।

तदा किल वीर्यपारमिता परिपूर्णा, नव च कल्पाः प्रत्युदावर्तिताः ।

**धीसमाध्योरनन्तरम् ।**

बोधेः पूर्वसमनन्तरं ध्यानप्रज्ञापारमितयोः परिपूरिः । वज्रोपमसमाधौ स्वस्याः सम्पदः पारगमनात् पारमिताः ।

सूत्र उक्तम्—"त्रीणि पुण्यक्रियावस्तूनि । दानमयं पुण्यक्रियावस्तु, शीलमयम्, भावनामयम्" ( ) इति । कथमेतत् त्रयं पुण्यक्रियावस्तु ?

**पुण्यं क्रियाऽथ तद्वस्तु त्रयं कर्मपथा यथा ॥ ११२ ॥**

पुण्यमप्येतत् त्रयं क्रियापि, वस्त्वपि, यथायोगमिति पुण्यक्रियावस्तु । तद्यथा—कर्म च ते पन्थानश्च पन्थान एव च कर्मण इति कर्मपथा उक्ताः ।

---

*नास्मिंल्लोके न वैश्रवणालये न मरुभवने दिव्यस्थान* इति । तद्वयक्त्यर्थनिर्देशपदानि । *अस्मिन् लोक* इति । मनुष्यलोके । *वैश्रवणालय* इति । चातुर्महाराजिकस्थाने । *मरुभवन* इति । मरूद्भवे । त्रायस्त्रिंशभवन इत्यर्थः । *दिव्यस्थाने* । यामादिस्थाने । लोकधात्वन्तरेष्वपि तत्सदृशस्याभावज्ञापनार्थमाह—*न दिक्षु विदिक्षु* चेति ।

अथ न श्रद्धीयते, *चरतु* नरः कश्चिद् *वसुधामिमां कृत्स्नां स्फीतां* बहुसत्त्वाध्यासितां सह पर्वतैः काननैश्च । सपर्वतकाननां स्वयं प्रत्यवेक्ष्यताम् इत्यभिप्रायः ।

*नव च कल्पाः प्रत्युदावर्तिता* इति । तेन वीर्यारम्भेणैकनवत्या कल्पैः *परिपूर्णा वीर्यपारमिते*ति कृत्वा । अत एवोक्तम्—एकनवत्यां कल्पेष्वाक्षिप्तमिति ।

*बोधेः पूर्वसमनन्तरमि*ति । क्षयानुत्पादज्ञानलक्षणाया बोधेः पूर्वसमनन्तरम् । किं कारणम् ? परिपूर्णपारमितो हि बोधिमधिगच्छति, नापरिपूर्णपारमित इति ।

*यथायोगमि*ति । किञ्चित् पुण्यञ्च क्रिया च वस्तु च, किञ्चित् पुण्यं च क्रिया च, किञ्चित् पुण्यमेव क्रिया च, किञ्चित् पुण्यं च वस्तु च, किञ्चिद्वस्त्वेवेति । कथम् ? इत्याह—तद्यथेति विस्तरः । *कर्म च ते पन्थानश्च* । प्राणातिपातादयः

---

१. दिव्ये स्थाने—का० । २. वा—का० ।

तत्र दानमये तावत् पुण्यक्रियावस्तुनि कायवाक्कर्म त्रिधा भवति—तत्-समुत्थापिका चेतना, पुण्यं च, क्रिया च। तत्सहभुवो धर्माः पुण्यमेव।

शीलमयं तु—कायवाक्कर्मैवेति त्रिधा भवति।

भावनामयम्—मैत्री, पुण्यं च, पुण्यक्रियायाश्च वस्तु। तत्सम्प्रयुक्तायाश्चेतनाया मैत्रीमुखेनाभिसंस्करणात् तत्सहभूश्चेतना, शीलं च, पुण्यं च, क्रिया च। अन्ये तत्सहभुवः पुण्यमेव, पुण्यस्य वा कारणं पुण्यक्रिया पुण्यप्रयोगस्तस्या एतानि त्रीणि वस्तूनि। एषां सम्पादनार्थं पुण्यप्रयोगारम्भादिति।

कुशलचेतनापरमार्थेन पुण्यक्रिया। तस्या एतानि वस्तूनीत्यपरे ॥११२॥

किमिदं दानं नाम? यदपि दीयते तद् दानम्। इह तु

**दीयते येन तद्दानम्,**

---

सप्त कर्मपथाः, कर्मस्वाभाव्यात् चेतनापथत्वाच्च। त्रयस्त्वभिध्यादयः *पन्थान एव* कर्मणश्चेतनाख्यस्येति कर्मपथाः।

*कायवाक्कर्म त्रिविधेति*। पुण्यं तावदिष्टविपाकत्वात्। क्रिया कर्मस्वभावत्वात्। वस्तु तत्समुत्थानचेतनायास्तदधिष्ठाय प्रवृत्तेः। *तत्समुत्थापिका चेतना* कायवाक्कर्मसमुत्थापिका। *पुण्य*मिष्टविपाकत्वात्। *क्रिया* मनस्कर्मत्वात् न वस्तु, क्रियानधिष्ठानत्वात्। *तत्सहभुवो* वेदनादयः। इष्टविपाकत्वात् *पुण्यमेव*, न तु क्रियाधिष्ठानं वा; तल्लक्षणाभावात्।

*शीलमयमिति*। पूर्ववत् त्रैधं योज्यम्।

*मैत्री पुण्यमिति* पूर्ववद् योज्यम्। *पुण्यक्रियायाश्च वस्तु*। *तत्सम्प्रयुक्ताया* मैत्री-सम्प्रयुक्तायाश्चे*तनाया मैत्रीमुखेन* मैत्रीवशेना*भिसंस्करणाद्* अभिसञ्चेतनात् *तत्सहभूः* मैत्रीसहभूश्चे*तना शीलञ्च* ध्यानसंवरसंगृहीतम्, *पुण्यं च क्रिया च पूर्ववत्*। 'न हि ध्यानसंवरं प्रवर्तयेयम्' इत्यधिष्ठाय चेतना प्रवर्तते। तेन न क्रियाधिष्ठानम्। *अन्ये तत्सहभुवो* वेदनादयः *पुण्यमेव* पूर्ववत्। तदेवम् दानमये—पुण्यं च क्रिया च वस्तु च, पुण्यं क्रिया च, पुण्यं च, पुण्यक्रियावस्तु। शीलमये—पुण्यं च क्रिया च क्रियावस्तु च पुण्यक्रियावस्तु। भावनामये—पुण्यक्रियावस्तु च, पुण्यं क्रिया च, पुण्यं चेति पुण्यक्रियावस्तु। अवयवसरूपाणामप्येकशेष इष्यते; "गुणो यङ्लुकोः" (पा० सू० ७.४.८२) इति यथा॥ ११२॥

*यदपि दीयते तद्दानमिति*। देयं वस्तु, कर्मणि ल्युडिति कृत्वा। "*दीयते येन तद्दानम्*" इति। इह तु कुशलमिष्टं *दानमिति*। देयस्य हि वस्त्रादेरव्याकृतत्वम्।

भवति स्म । रागादिभिरपि दीयते, न चात्र तदिष्टम्, अतो विशेषणार्थमाह—

**पूजानुग्रहकामया**[1] ।

परेषां पूजानुग्रहकामताभ्यां येन दीयते । किं पुनस्तत्त्यागेन दीयते ?

**कायवाक्कर्म सोत्थानम्,**

किं पुनस्तदुत्थानम् ? येन कलापेन तदुत्थाप्यते । आह चात्र—

"शुभेन मनसा द्रव्यं स्वं ददाति यदा पुमान् ।
तत् क्षणं कुशलाः स्कन्धाः दानमित्यभिधीयते ॥" (      ) इति ।

**महाभोग्यफलं च तत् ॥ ११३ ॥**

तच्चैतद् दानमयं पुण्यक्रियावस्तु **महाभोग्यफलम्** । स्वभावे चैष मयड् वेदितव्यः । तद्यथा—तृणमयं गृहम्, पर्णमयं भाजनमिति ॥ ११३ ॥

तत् खल्वेतद् दानम्—

**स्वपरार्थोभयार्थाय नोभयार्थाय दीयते ।**

तत्र यदवीतरागः आर्यः पृथग्जनो वा वीतरागश्चैत्ये दानं ददाति, तदस्यात्मन एवार्थाय; परेषां तेनानुग्रहाभावात् ।

यदार्यो वीतरागः परसत्त्वेभ्यो दानं ददाति स्थापयित्वा दृष्टधर्मवेदनीयं तत्र दानं परेषामर्थाय; तेन तेषामनुग्रहात् । नात्मनोऽर्थाय; तद्विपाकभूमेरत्यन्तसमतिक्रान्तत्वात् ।

---

*रागादिभिरपीति* । *आदिशब्देन* क्रोधेर्ष्यादीनां ग्रहणम् । *पूजानुग्रहकामतयेति* । चैत्यापरिनिर्वृतेभ्यः पूजा । [illegible]

*येन कलापेनेति* । चित्तचैत्तकलापेन । *कुशलाः स्कन्धा इति* । पञ्च स्कन्धाः । कायवाग्विज्ञप्तिस्तदविज्ञप्तिरपि वा रूपस्कन्धो द्रष्टव्यः ।

*स्वभावे चैष मयडिति* । न विकारादिषु । *तद् यथा तृणमयं गृहमिति* । न तृणानां विकारोऽस्ति । तैस्तु निर्विकारैरेव तत्कृतमित्यतस्तृणमयं तृणस्वभावं तदिति गम्यते । तत्स्वाभाव्येऽपि सति तद्विकारतां परिकल्प्य मयट् क्रियत इत्यभिप्रायः । "तत्प्रकृतिवचने मयट्" ( पा० सू० ५.४.२० ) इत्यनेन वा लक्षणेन मयड् विधीयते । *एवं पर्णमयं भाजनमित्येतदपि* वक्तव्यम् ॥ ११३ ॥

---

१. ०काम्यया—का० ।

यद्वीतरागः पृथग्जनो वा वीतरागः परसत्त्वेभ्यो ददाति तद्दानमुभयेषामर्थाय।

यदार्यो वीतरागश्चैत्ये ददाति स्थापयित्वा दृष्टधर्मवेदनीयम्, तद्दानमुभयेषां नार्थाय। तद्धि केवलं गौरवं कृतज्ञाभ्यां दीयते।

सामान्येन दानं महाभोग्यफलमुक्तम्।

**तद्विशेषः पुनर्दातृवस्तुक्षेत्रविशेषतः ॥ ११४ ॥**

तत्र तावत्—

**दाता विशिष्टः श्रद्धाद्यैः,**

श्रद्धाशीलश्रुतादिगुणयुक्तो **दाता विशिष्टो** भवति। तद् दानदातृविशेषेण फलदानं प्रति विशिष्यते।

स च तादृशो दाता

**सत्कृत्यादि ददाति,**

सत्कृत्य स्वहस्तं काले परानुपहत्य **ददाति।**

अतः।

**सत्कारोदाररुचिता कालानाच्छेद्यलाभिता ॥ ११५ ॥**

अतोऽस्य दातुस्तत् तादृशं दानं दत्त्वा यथाक्रमं चत्वारो विशेषा भवन्ति— १. सत्कारलाभी भवति। २. उदारेभ्यो[1] भोगेभ्यो[1] रुचिं लभते। ३. काले[2] भोगान् लभते नातिक्रान्तिकालात्[3]। ४. अनाच्छेद्यांश्च भोगान् लभते। नास्य भोगाः परैराच्छाद्यन्ते, नाप्यग्न्यादिभिर्विनाश्यन्ते। उक्तं यथा—दाता विशिष्यते, तद्विशेषाच्च दानविशेषः ॥ ११५ ॥

---

*स्थापयित्वा दृष्टधर्मवेदनीयमिति*। तदुभयार्थमिति कृत्वा स्थाप्यते। *तद्विपाकभूमेरत्यन्तसमतिक्रान्तत्वात्*। कामधातोरत्यन्तसमतिक्रान्तत्वादित्यर्थः। कामधातुर्हि दानस्य विपाकभूमिरिति ॥ ११४ ॥

*श्रुतादिगुणयुक्त इति*। आदि-शब्देन त्यागप्रज्ञाल्पेच्छतादिगुणयुक्तः। "*सत्कृत्यादि ददाति*" इति। सत्कृत्येत्यादिरस्येति सत्कृत्यादि। क्रियाविशेषणमेतत्।

*यथाक्रमं चत्वारो विशेषा इति*। सत्कृत्य दाता *सत्कारलाभी भवति*। स्वहस्तदाता *उदारेभ्यो भोगेभ्यो रुचिं लभते*। कालदाता *काले भोगान् लभते; नातिक्रान्तकालात्*। यद् भोक्तुमेवासमर्थः। परानुपहत्य दाता अनाच्छेद्यान्

---

१-१. उदारेषु च भोगेषु—का०। २. कालेन च—का०। ३. ०कालेन—का०।

अथ वस्तु कथं विशिष्यते ?

**वर्णादिसम्पदा वस्तु**

'विशिष्टम्' इति वर्तते। यदि यद्दीयते तद् वर्णगन्धरसस्पर्शानामन्यतमेनापि सम्पन्नं भवति। एवं वस्तु विशिष्यते।

तादृशं वस्तु दत्त्वा किं भवति ? यथाक्रमम्

**सुरूपत्वं यशस्वि वा।**
**प्रियता सुकुमारर्तुसुखस्पर्शाङ्गता ततः ॥११६॥**

वर्णसम्पन्नं दत्त्वा **सुरूपो** भवति।

गन्धसम्पन्नं दत्त्वा **यशस्वी** भवति; गन्धवद् यशसो दिक्षु विधारणात्।

रससम्पन्नं दत्त्वा **प्रियो** भवति। रस इव स्वादुः।

स्पर्शसम्पन्नं दत्त्वा **सुकुमाराङ्गश्च** भवति, **ऋतुसुखस्पर्शानि** चास्याङ्गानि भवन्ति, यथा स्त्रीरत्नस्य॥ ११६ ॥

अथ क्षेत्रं कथं विशिष्यते ?

**गतिदुःखोपकारित्वगुणैः क्षेत्रं विशिष्यते।**

**गतिविशेषाद्** तावद् विशिष्यते। तथा ह्युक्तं भगवता—"तिर्यग्योनिगताय दानं दत्त्वा शतगुणो विपाकः प्रतिकाङ्क्षितव्यः। दुःशीलाय मनुष्यभूताय दानं दत्त्वा सहस्रगुणः" (　　　　) इति।

**दुःखविशेषाद्** विशिष्यते। तथा ह्यौपधिकेषु पुण्यक्रियावस्तुषु, ग्लाने दानम्, ग्लानोपस्थापके दानम्, शीतलिकादिषु च दानमुक्त्वोक्तम्—"एभिः सप्तभिः औपधिकैः पुण्यक्रियावस्तुभिः समन्वागतस्य श्राद्धस्य कुलपुत्रस्य वा कुलदुहितुर्वा न लभ्यं पुण्यानां प्रमाणमुद्ग्रहीतुम्" (　　) इति।

---

*भोगान् लभते* ॥ ११५ ॥

*ऋतु-सुख-स्पर्शानि चास्याङ्गानी*ति। शीते उष्णानि, उष्णे शीतानि, साधारणे साधारणानि ॥ ११६ ॥

*शीतलिकादिषु* चेति। आदि-शब्देन वर्दनिका-वर्षलिकादिषु यथासूत्रमुक्तमेतत्।

**उपकारित्वविशेषाद्** यथा—मातापित्रोरन्येषां चोपकारिणाम्; **ऋक्षमृगजातकाद्युदाहरणात्** ।

**गुणविशेषाद्** यथा—"शीलवते दत्त्वा शतसहस्रगुणो विपाकः" ( ) इत्येवमादि ।

सर्वेषां तु दानानाम्

**अग्रं मुक्तस्य मुक्ताय,**

"यद्वीतरागो वीतरागाय दत्त्वाऽतिदानम्, इदं श्रेष्ठमामिषदानेषु दानम्" ( ) इत्युक्तं **भगवता** ।

**बोधिसत्त्वस्य च,**

यद्वा दानं बोधिसत्त्वे ददाति सर्वसत्त्वहितहेतोः, तदमुक्तस्याप्यमुक्तेऽभ्यादानम**ग्रम्** । तत् स्थापयित्वा यानि भगवतोऽन्यान्यष्टौ दानान्युक्तानि, तेषाम्—

**अष्टमम्** ॥ ११७ ॥

'अग्रम्' इति वर्तते । कतमान्यष्टौ ? १. आसाद्य दानम्, २. भयदानम्, ३. 'अदान्मे दानम्, ४. दास्यति मे दानम्, ५. दत्तपूर्वं मे दानं पितृभिश्च पितामहैश्च' इति दानं ददाति, ६. स्वर्गार्थं दानम्, ७. कीर्त्यर्थं दानम्, ८. चित्तालङ्कारार्थं दानम्, चित्तपरिष्कारार्थम्, योगसम्भारार्थमुत्तमार्थस्य प्राप्तये दानं ददाति ।

तत्रासाद्य दानं यत् आसन्नेभ्य उपगतेभ्यो दानं ददातीति **पौराणाः** ।

भयदानं यद् विनाशाभिमुखं दृष्ट्वा वरं ददामीति ददाति ।

---

*यथा मातापित्रोरिति* । उपकारित्वविशेषात् कारापकारौ महाफलौ तयोर्भवतः—इत्यर्थोऽवगन्तव्यः । *ऋक्षमृगजातकाद्युदाहरणाद्* विपाक इति । एवम् ऋक्षमृगयोर्गुहां प्रविश्य गात्रोष्मैशीतोपनयेनोह्यमाननद्युत्तारणेन चोपकारिणोरपकारकरणेन सद्योऽङ्गपातात् । *आदि*शब्देन कपिजातकाद्युदाहार्यम् ।

*शीलवते दत्त्वा शतसहस्रगुणो विपाक इत्येवमादी*ति । *आदि*शब्देन स्रोतआपत्तिफलप्रतिपन्नकाय दत्त्वा अप्रमेयो भवति विपाकः, ततोऽप्रमेयतरः स्रोतआपन्नायेत्यादि ।

*तत् स्थापयित्वे*ति । अनन्तरोक्तं बोधिसत्त्वदानम् । तद्धि सम्यक्सम्बोध्यर्थं

शेषं सुगमत्वान्न विभक्तम् ॥ ११७ ॥

स्रोतआपत्तिफलप्रतिपन्नकाय दानं दत्त्वा अप्रमेयविपाकः, ततोऽप्रमेयतरः स्रोतआपन्नायेति विस्तरेणोक्तं सूत्रे ।

अपि तु—

**मातृपितृग्लानधार्मकथिकेभ्योऽन्त्यजन्मने ।**
**बोधिसत्त्वाय चामेया अनार्येभ्योऽपि दक्षिणा ॥ ११८ ॥**

एभ्यः पञ्चभ्यः पृथग्जनभूतेभ्योऽप्यप्रमेया फलतो **दक्षिणा** भवति । तत्रान्त्यजन्मा बोधिसत्त्वश्चरमभविकः ।

धार्मकथिकश्चतुर्विधे क्षेत्रविशेषे कतमस्मिन् पक्षे निक्षेप्तव्यः ? उपकारिपक्षे । स हि महाकल्याणमित्रम् अविद्यान्धायां प्रजायां प्रज्ञाचक्षुषो दाता, समविषमस्य प्रकाशयिता, अनास्रवस्य धर्मकायस्य निर्वर्तयिता, समासतो बुद्धकृत्यस्य कर्ता ॥ ११८ ॥

कर्मणां तु गुरुलघुत्वं ज्ञातुकामेन समासतः षट् कारणानि ज्ञेयानि । तद्यथा—

**पृष्ठं क्षेत्रमधिष्ठानं प्रयोगश्चेतनाशयः ।**
**एषां मृद्वधिमात्रत्वात् कर्ममृद्वधिमात्रता ॥ ११९ ॥**

---

सर्वसत्त्वार्थञ्च । *शेषं सुगमत्वान्न विभक्तमिति* । यदेतददान्मे दानमित्येवमादिकम् । *अदान्मे दानमिति* । दत्तमनेन पूर्वमिति दानं तृतीयम् । *दास्यति मे दानमिति* चतुर्थम् । दत्तपूर्वं मे *पितृभिश्च पितामहैश्चेति दानमिति* पञ्चमम् । *स्वर्गार्थं* दानं षष्ठम् । *कीर्त्यर्थं* सप्तमम् । *चित्तालङ्कारार्थं यावदुत्तमार्थस्य प्राप्तये दानमित्यष्टमम्* । *चित्तालङ्कारार्थमृद्ध्यर्थम्* । *चित्तपरिष्कारार्थम्* । अष्टौ चित्तपरिष्कारा मार्गाङ्गानि, तदर्थम् । *योगसम्भारार्थम्* । योगनिदानार्थम् । *उत्तमार्थस्य प्राप्तिः* । अर्हत्त्वं निर्वाणस्य वा प्राप्तिः, तस्यै प्राप्तये *दानम्* । चतुर्भेदमप्येकमष्टमं भवति । निर्वाणप्रापकमेवैतदिति कृत्वा सुगममुक्तमा*चार्येण* ॥ ११७ ॥

*चतुर्विधे क्षेत्रविशेष* इति । गतिदुःखोपकारिगुणक्षेत्रे *कतमस्मिन् पक्ष* इति । यस्मादस्य गतिक्षेत्रता च न सम्भवति । तस्मात् पृच्छति । *समविषमस्य प्रकाशयितेति* । धर्माधर्मस्य ॥ ११८ ॥

पृष्ठं नाम यत् कृतस्य पुनरनुक्रिया। क्षेत्रं नाम यत्र कारापकाराः क्रियन्ते। अधिष्ठानं कर्मपथः। प्रयोगस्तदर्थं कायवाक्कर्म। चेतना यया कर्मपथं निष्ठापयति। आशयस्तदभिप्रायः—'एवं चैवं च कुर्याम्', 'एवं चैवं च न करिष्यामि' इति।

कस्यचित् पृष्ठपरिग्रहेणैव तत्कर्म गुरु सम्पद्यते; विपाकनैयम्यावस्थानात्[1]। कस्यचित् क्षेत्रवशेनैव। तत्रैव क्षेत्रे पुनरधिष्ठानवशात् गुरु सम्पद्यते, नान्यथा। यथा—मातापित्रोः प्राणातिपातात्, न त्वेवमदत्तादानादिकात्।

एवमन्यदपि योज्यम।

यस्य तु सर्वाण्यधिमात्राणि भवन्ति, तस्यात्यर्थमधिमात्रं गुरु कर्म वेदितव्यम्। यस्य मृदूनि, तस्यात्यर्थं मृदु वेदितव्यम्॥ ११९॥

कृतं च, उपचितं च कर्मोच्यते। कथं कर्मोपचितं भवति? पञ्चभिः करणैः।

**सञ्चेतनसमाप्तिभ्यां निष्कौकृत्यविपक्षतः।**
**परिवाराद् विपाकाच्च कर्मोपचितमुच्यते॥ १२०॥**

**कथं सञ्चेतनतः?** सञ्चिन्त्य कृतं भवति नाबुद्धिपूर्वम्, न सहसा कृतम्।

**कथं समाप्तितः[2]?** कश्चिदेकेन दुश्चरितेनापायान्याति, कश्चिद् यावत् त्रिभिः। कश्चिदेकेन कर्मपथेन, कश्चिद् यावद् दशभिः। तत्र यो यावता गच्छति तस्मिन्नसमाप्ते कृतं तत् कर्म नोपचितम्, समाप्ते तूपचितम्।

---

*विपाकनैयम्यावस्थानादिति*। नियतविपाकदानावस्थानादित्यर्थः। *कस्यचित् क्षेत्रवशेनैवेति*। तद् यथा सामान्यपुरुषवधात् पितृवधः। *तत्रैव क्षेत्रे पुनरधिष्ठानवशादिति*। कर्मपथवशात्। कथम्? इत्याह—*मातापित्रोः प्राणातिपातनात्* गुरु कर्म, *न त्वेवमदत्तादानादिकात्* गुरु। न हि मातापित्रोर्द्रव्यापहरणकर्म तद्वधवद् गुरु भवति; तद्वधस्यानन्तर्यस्वभावत्वात्। *आदि*शब्देन मृषावादपैशुन्यादिग्रहणम्।

*एवमन्यदपि योज्यमिति*। कस्यचित् प्रयोगविशेषेण गुरु सम्पद्यते; विपाकनैयम्यावस्थानात्। कस्यचिच्चेतनाविशेषेण। कस्यचिदाशयविशेषेण॥ ११९॥

*नाबुद्धिपूर्वं न सहसा कृतमिति*। अथ वा—*नाबुद्धिपूर्वं कृतम्* इदं कुर्यामित्यसञ्चित्य कृतम्। तन्नोपचितम्। अव्याकृतं हि तत् कर्म। *न सहसा कृतमिति*। बुद्धिपूर्वमपि न सहसा कृतम्। यदभ्यासेन भाष्याक्षेपान्मृषावादाद्यनुष्ठानं कृतं तदकुशलम्, न पुनरुपचित्तम्। *यावत् त्रिभिरिति*। कायवाङ्मनोदुश्चरितैः।

---

१. ०नैयम्येनाव०—का०। २. समापत्तितः—का०।

**कथं निष्कौकृत्यविपक्षतः ?** निर्विप्रतिसारं च तत् कर्म भवति, निष्प्रतिपक्षं च ।

**कथं परिवारतः ?** अकुशलं चाकुशलपरिवारं च भवति ।

**कथं विपाकतः ?** विपाकदाने नियतं भवति ।

एवं कुशलमपि योज्यम् । अतोऽन्यथा कर्म कृतं भवति, नोपचितम् ॥ १२० ॥

चैत्ये सरागस्यात्मार्थं दानमित्युक्तम् । तत्रासत्युपभोक्तरि कथं पुण्यं भवति ? द्विविधं हि पुण्यम्—१. त्यागान्वयम्, त्यागादेव यदुपपद्यते; २. परिभोगान्वयं च, देयधर्मपरिभोगाद् यदुत्पद्यते ।

**चैत्ये त्यागान्वयं पुण्यम्,**

परिभोगान्वयं पुण्यं नास्ति । कथं तत्राप्रतिगृह्णति कस्मिंश्चित् पुण्यम् ? किं पुनः कारणं सति प्रतिग्रहीतरि भवितव्यम्, नासतीति ? कस्यचिदप्यनुग्रहाभावात् ?

इदमकारणम् । यदि हि पुण्यं परानुग्रहादेव स्यात्, मैत्र्याद्यप्रमाणसम्यग्दृष्टिभावनायां न स्यात् । तस्मादेष्टव्यं चैत्येऽपि पुण्यम् ।

---

*निष्प्रतिपक्षं* चेति । प्रतिदेशनादिप्रतिपक्षाभावतः ।

*अकुशलं चाकुशलपरिवारं* चेति । यः कृत्वाप्यनुमोदत इति ।

*विपाकदाने नियतमि*ति । पुष्टाकुशललक्षणसमुत्पादात् ।

*एवं कुशलमपि योज्यमि*ति । कथम् ? सञ्चेतनतः सञ्चिन्त्य कृतं भवति, नाबुद्धिपूर्वं कृतं भवति । तद्यथा—अव्याकृतेन चित्तेन पाषाणं ददामीति सुवर्णपिण्डं दद्यात् । कृतं तत्, न पुनरुपचितम् । अव्याकृतं हि तत् कर्म, न सहसा कृतम् । यथा भाष्याक्षेपात् सत्यवचनं कृतं तत् कुशलम्, न पुनरुपचितम् । कश्चिदेकेन सुचरितेन सुगतिं याति, कश्चिद् यावत् त्रिभिः; कश्चिदेकेन कर्मपथेन, कश्चिद् यावद्दशभिः । तत्र यो यावता गच्छति, तस्मिन्नसमाप्ते कृतं कर्म, नोपचितम् । समाप्ते तूपचितम् । एवं यावद् विपाकदाने नियतमिति सम्भवतो योज्यम् ॥ १२० ॥

*चैत्ये सरागस्ये*ति विस्तरः । "स्वपरार्थोभयार्थाय" (अभि० को० ४.११४) इत्यत्र । पुण्यमेव त्यागान्वयमपश्यन्नाह—*कस्यचिदप्यनुग्रहाभावादि*ति । सति हि प्रतिग्रहीतरि युक्तं त्यागान्वयं पुण्यम् । तत्र हि प्रीत्यनुग्रहेण ग्रहीता युज्यत

**मैत्र्यादिवदगृह्णति ।**

यथा मैत्र्यादिष्वन्तरेणापि प्रतिग्राहकं परानुग्रहं वा पुण्यं भवति स्वचित्तप्रभवम्, तथा ह्यतीतेऽपि[1] गुणवति तद्भक्तिकृतं स्वचित्तात् पुण्यं भवति ।

दानमानक्रिया तर्हि व्यर्था प्राप्नोति ? न; तत्कर्मसमुत्थापिकाया भक्तेः प्रकृष्टतरत्वात् । यथा हि शत्रुवधाभिप्रायस्य तत्समुत्थितं[2] कायवाक्कर्म शत्रुसंज्ञया तस्मिन् मृतेऽपि कुर्वतो बहुतरमपुण्यं जायते, नाभिप्रायमात्रेण; तथा ह्यतीतेऽपि[1] शास्तरि तद्भक्तिसमुत्थां दानमानक्रियां कुर्वतो बहुतरं पुण्यं जायते, न भक्तिमात्रेण ।

यदि स्वक्षेत्रे दानक्रियाबीजमिष्टफलं भवति, कुक्षेत्रे[3] तर्ह्यनिष्टफलं भविष्यति ?

**कुक्षेत्रेऽपीष्टफलता फलबीजाविपर्ययात् ॥ १२१ ॥**

---

इति । *"मैत्र्यादिवदगृह्णति"* इति । मैत्र्यादिष्वेव मैत्र्यादिवत् । अगृह्णति *असति प्रतिग्राहके पुण्यं भवति ।* असत्यपि परानुग्रहे; कुशलमूलादिबलाधानात् । *तथा ह्यतीतेऽपि गुणवति* तथागतादौ *तद्भक्तिकृतं* चैत्यदानं *पुण्यं भवति ।*

*दानमानक्रिया तर्हि व्यर्था प्राप्नोती*ति । यदि स्वचित्तादेव पुण्यं भवेत् चित्तेनैव दानमानाकृतौ; तत एव पुण्यप्राप्तेः । *न; तत्कर्मसमुत्थापिकया भक्तेः प्रकृष्टतरत्वात् ।* नैतदेवम् । कस्मात् ? यस्माद् दानमानौ भगवतश्चित्तमात्रेण चिन्तयतो या भक्तिः, तत इयं दानमानौ कुर्वतो भक्तिः प्रकृष्टतरा; कायवाक्कर्मणोरपि प्रवर्तनात् । चित्तमात्रेण हि चिन्तयतो भक्तिः कायवाक्कर्मणी न प्रवर्तयतः । *यथा ही*ति विस्तरः । यथा हि 'शत्रून् हन्मि' इति कृताभिप्रायस्य कस्यचित् *तत्समुत्थितं* तदभिप्रायसमुत्थितं *कायवाक्कर्म शत्रुसंज्ञया* 'शत्रुरयं न तावन्म्रियते' इत्यनया *संज्ञया तस्मिन् मृतेऽपि कुर्वतो बहुतरमपुण्यं जायते;* चेतनानुबन्धात् । *नाभिप्रायमात्रेण* क्रियाशून्येन । *तथा ह्यतीतेऽपि* परिनिर्वृतेऽपि *भगवति तद्भक्तिसमुत्थां* शास्तृभक्तिसमुत्थां *दानमानक्रियां* पूर्वभूतामिव *कुर्वतो बहुतरं पुण्यं जायते । न भक्तिमात्रेण ।* क्रियाशून्येनेति ।

*कुक्षेत्रे तर्ह्यनिष्टफलं भविष्यती*ति । तस्करादिभ्यो दानमनिष्टफलमिति *निर्ग्रन्थाः ।* सुक्षेत्रे हीष्टफलम्, कुक्षेत्रे तु विपरीतमिति ? अतो ब्रवीति—*"कुक्षेत्रेऽपीष्टफलता फलबीजाविपर्ययात्"* इति । न क्षेत्रविशेषादिष्टं फलमिति ब्रूमः । किं तर्हि ? विशिष्टमिति । न हि सुक्षेत्रे प्राणातिपातादिबीजस्येष्टं फलं भवतीति ।

---

१–१. ०ग्यतीते०—का० । २. तत्समुत्थापि०—का० । ३. तत्क्षेत्रे—का० ।

**कुक्षेत्रेऽपि** हि फलस्य बीजादविपर्ययो दृष्टः—मृद्वीकाबीजान्मृद्वीकाफलमेवोत्पद्यते मधुरम्, निम्बबीजान्निम्बमेव तिक्तम्। एवं कुक्षेत्रेऽपि परहिताध्याशयप्रवृत्तस्य दानबीजस्येष्टमेव फलं निर्वर्तते, नानिष्टम्। क्षेत्रदोषात् तु तद्बीजमल्पफलं वा भवति, अफलं वा ॥ १२१ ॥

गतं दानमयपुण्यक्रियावस्तु सप्रसङ्गम् ॥

शीलमयं वक्तव्यम्? तदुच्यते—

**दौःशील्यमशुभं रूपं शीलं तद्विरतिः,**

अकुशलं हि **रूपं दौःशील्यमुच्यते**। तस्माद् **विरतिः शीलम्**।

सा पुनर्विरतिः—

**द्विधा।**

यया च विरम्यते विज्ञप्त्या, यच्च तद्विरमणम् अविज्ञप्तिः।

न च केवलं दौःशील्याद् विरतिः शीलम्, किं तर्हि?

**प्रतिक्षिप्ताच्च बुद्धेन,**

यदपि न प्रकृत्या दौःशील्यम्, भगवता च **बुद्धेन** प्रतिक्षिप्तमकालभोजनादिकम्, तस्मादपि द्विधा विरतिः शीलम्।

समात्तशिक्षस्य तु तदध्याचाराद् दौःशील्यं जायते ॥

उक्तं समासेन शीलम् ॥

**विशुद्धं तु चतुर्गुणम्** ॥ १२२ ॥

तत्तु शीलं **चतुर्गुणं** भवति। विपर्ययादविशुद्धम् ॥ १२२ ॥

---

*कुक्षेत्रेऽपि हि फलस्य* मृद्वीकाफलस्य *बीजात्* मृद्वीकाबीजात् *अविपर्ययो दृष्टः। मृद्वीकाफलमेव मधुरं* दृष्टमित्यर्थः। न तु निम्बफलमेवम्। *निम्बबीजान्निम्बफलमेवेति*। *तिक्तमिति*। मृद्वीकाबीजं कुशलस्योदाहरणम्, निम्बबीजमकुशलस्य ॥ १२१ ॥

"*दौःशील्यमशुभं रूपम्*" इति। प्राणातिपातादिलक्षणं प्रकृतिसावद्यं रूपं *दौःशील्यम्* ॥

"*प्रतिक्षिप्ताच्च बुद्धेन*" इति। प्रज्ञप्तिसावद्यत्वात्। *समात्तशिक्षस्य तु तदध्याचाराद् दौःशील्यमिति*। गृहीततद्विरमणस्य भगवद्वचनानादराद् दौःशील्यं जायते। अर्थादुक्तं भवति—असमात्तशिक्षस्य न दौःशील्यमिति।

अथ कथं चतुर्गुणम् ? इत्याह—

**दौःशील्यतद्धेत्वहतं तद्विपक्षसमाश्रितम्[1] ।**

दौःशील्येन तावदनुपहतं भवति यथोक्तेन दौःशील्येन। हेतुनाप्यनुपहतं भवति। लोभादिभिः क्लेशोपक्लेशैः दौःशील्यविपक्षाश्रितं च भवति। स्मृत्युपस्थानसन्निश्रितत्वात् समाश्रितं च भवति। नोपपत्तिविशेषाश्रितम्; निर्वाणपरिणामितत्वात्।

पञ्चभिः कारणैः इत्यपरे। १. मौलैः कर्मपथैर्विशुद्धं भवति, २. सामन्तकैर्विशुद्धम्, ३. वितर्कैरनुपहतम्, ४. स्मृत्यानुपरिगृहीतम्, ५. निर्वाणपरिणामितं चेति।

चतुर्विधं शीलमित्यपरे। १. भयशीलम्—यदाजीविकाश्लोकदण्डदुर्गतिभयात् पाल्यते। २. आशास्तिशीलम्—यद्भवभोगसत्कारतृष्णाकृतम्। ३. बोध्यङ्गानुलोमं शीलम्—यन्मोक्षार्थं सम्यग्दृष्टिकानाम्। ४. परिशुद्धं शीलम्—अनास्रवशीलम्; निर्मलत्वादिति॥

गतं शीलम्॥

**समाहितं तु कुशलं भावना,**

---

*"विशुद्धं तु चतुर्गुणम्"* इति। चत्वारो गुणा अस्येति चतुर्गुणम्॥ १२२॥

*दौःशील्येन यथोक्तेनेति*। "दौःशील्यमशुभं रूपम्" इत्यनेन। *लोभादिभिरिति*। न तैर्दौःशील्यहेतुभिः समुदाचरद्भिरुपहतं *भवति*। *दौःशील्यविपक्षाश्रितमित्यर्थः*।

*मौलैः कर्मपथैर्विशुद्धमिति*। प्राणातिपातादिभिर्मौलैरखण्डितमित्यर्थः। *सामन्तकैर्विशुद्धमिति*। प्राणातिपातादिप्रयोगैरदूषितमित्यर्थः। *वितर्कैरिति*। कामवितर्कादिभिः। *स्मृत्यानुपगृहीतमिति*। कायादिस्मृत्युपस्थानैर्दृढीकृतम्। शीलस्मृत्या वानुपरिगृहीतम्।

*आशास्तिशीलमिति*। *आशास्तिः*=प्रार्थना। *यद्भवभोगसत्कारतृष्णाकृतमिति*। भवे भोगे च सत्कारे च या तृष्णा, तया यत् समात्तमित्यर्थः। *सम्यग्दृष्टिकानामिति*। बुद्धशासनप्रतिपन्नानाम्। अन्यतीर्थिकानां हि न बोध्यङ्गानुकूलम्; असद्दृष्टिकत्वात्।

*"समाहितं तु कुशलम्"* इति। समाहित–ग्रहणमसमाहितनिवृत्त्यर्थम्।

---

१. ०शमाश्रितम्—का०।

किमिदं **समाहितं** नाम ? समाधिस्वभावं सहभू यत्। किमर्थमेतत् **भावने**त्युच्यते ?

**चित्तवासनात्** ॥ १२३ ॥

तद्धि समाहितं कुशलमत्यर्थं चित्तं वासयति; गुणैस्तन्मयीकरणात् सन्ततेः। पुष्पैस्तिलवासनावत्। दानं तावन्महाभोगतायैः संवर्तत इत्युक्तम् ॥ १२३ ॥

अथ शीलं भावना च ?

**स्वर्गाय शीलं प्राधान्याद् विसंयोगाय भावना।**

दानमपि **स्वर्गाय शीलं प्राधान्यात्**। शीलमपि **विसंयोगाय**। **भावना** तु **प्राधान्यात्**।

सूत्र उक्तम्—"चत्वारः पुद्गला ब्राह्मं पुण्यं प्रसवन्ति" (          )

---

कुशल-ग्रहणं समाहितास्वादनासम्प्रयुक्तक्लिष्टध्याननिवृत्त्यर्थम्। तत् समाहितं कुशलसदृशमुत्पद्यते।

*समाधिस्वभाव-सहभू यदिति*। *समाधिस्वभावं* तेन च सह भवति *यदि*त्यर्थः।

*तद्धि समाहितमिति* विस्तरः। *तत् समाहितं कुशलमत्यर्थं चित्तं संवासयति*। भावयति। असमाहितमपि वासयति। न त्वेवमत्यर्थमिति दर्शयति। कथम् ? इत्याह—*गुणैस्तन्मयीकरणात् सन्ततेः*। यस्मात् समाधि*गुणैस्तन्मयी*क्रियते चित्त*सन्ततिः*। अत्र दृष्टान्तमाह—*पुष्पैस्तिलवासनावदिति*। यथा *पुष्पैस्तिला* भाव्यन्ते पुष्पगन्धमयीकरणात्, तद्वत्। तदिदमुक्तं भवति—भावना=वासना, तत्स्वभावं पुण्यं भावनामयमिति ॥ १२३ ॥

*अथ शीलं भावना च*। 'कस्मै संवर्तते' इति वाक्यशेषतोऽर्थं पृच्छति। *स्वर्गाय शीलं प्राधान्यादिति*। *शीलं प्राधान्येन स्वर्गाय* भवति। अन्यत्तु न प्राधान्येन स्वर्गाय भवति। किमन्यत् ? दानम्। *दानमपि हि स्वर्गाय* सम्भवति। *शीलमपि विसंयोगाय* सम्भवति; शमथविपश्यनयोः शीलप्रतिष्ठानत्वात्। *भावना प्राधान्येन विसंयोगाय*। साक्षाद् विसंयोगप्रापकत्वात्, प्रहाणमार्गसंगृहीतत्वाद् वा।

पुण्यक्रियावस्तुप्रसङ्गेनेदमुपन्यस्यते—

*सूत्र उक्तम्—चत्वारः पुद्गलाः ब्राह्मं पुण्यं* प्रसवन्ति। अप्रतिष्ठिते पृथिवीप्रदेशे तथागतस्य शारीरं स्तूपं प्रतिष्ठापयति—अयं प्रथमः पुद्गलः ब्राह्मं पुण्यं प्रसवति। चातुर्दशे भिक्षुसंघे आरामं निर्यातयति, तत्रैव चारामे विहारं प्रतिष्ठापयति—अयं द्वितीयः पुद्गलो ब्राह्मं पुण्यं प्रसवति। भिन्नं तथागत-

इति। कतमत् तद् ब्राह्मपुण्यम्? यत्तल्लक्षणविपाकस्य कर्मणः परिमाणज्ञापनायोक्तमिति **वैभाषिकाः**।

**पूर्वाचार्यास्तु** व्याचक्षते—

**चतुर्णां ब्राह्मपुण्यत्वं कल्पं स्वर्गेषु मोदनात् ॥ १२४ ॥**

यावता पुण्येन **कल्पं स्वर्गेषु** मोदते, इदं ब्राह्मं पुण्यम्; ब्रह्मपुरोहितानां कल्पायुष्कत्वात्। **निकायान्तरे** गाथां पठन्ति—

"ब्राह्मं पुण्यं प्रसवति कल्पं स्वर्गेषु मोदते" (          ) इति ॥१२४॥

आमिषदानमुक्तम् ॥

धर्मदानं वक्तव्यम्। तदिदमुच्यते—

**धर्मदानं यथाभूतं सूत्राद्यक्लिष्टदेशना।**

सूत्रादीनां **यथाभूतमक्लिष्टदेशना धर्मदानम्**। अतो महतीं त आत्मनः

---

श्रावकसंघं प्रतिमन्दधाति—अयं तृतीयः पुद्गलः ब्राह्मं पुण्यं प्रसवति। मैत्रीसहगतेन चित्तेनावैरेणासपत्नेनाव्याबाधेन विपुलेन महद्गतेनाप्रमाणेन सुभावितेनैकां दिशमधिमुच्य स्फरित्वोपसम्पद्य विहरति, तथा द्वितीयाम्, तथा तृतीयाम्, तथा चतुर्थीम्, इत्यूर्ध्वमधस्तिर्यक् सर्वतः सर्वमिमं लोकं स्फरित्वोपसम्पद्य विहरति—अयं चतुर्थः पुद्गलो ब्राह्मं पुण्यं प्रसवति" (          ) इति। *यत्तल्लक्षणविपाकस्य कर्मणः परिमाणज्ञापनायोक्तमिति*। यदुक्तम्—सन्निकृष्टं बोधिसत्त्वं स्थापयित्वा यावत् सर्वसत्त्वानां भोगफलमित्येवमादि।

इदं *ब्राह्मं पुण्यमिति*। ब्रह्मणामिदं ब्राह्मम्। ब्रह्मपुरोहिताश्चात्र ब्रह्मशब्देनोच्यन्ते। कस्मात्? *ब्रह्मपुरोहितानां कल्पायुष्कत्वात्*। ब्रह्मपुरोहितानां हि कल्पमायुरुक्तम्। अनेन च कर्मणा कल्पं स्वर्गेषु मोदते। *ब्राह्मं पुण्यं प्रसवति कल्पं स्वर्गेषु मोदत* इति *निकायान्तर*पाठवचनात्। तत्साधर्म्यादेतद् ब्राह्मं पुण्यमुच्यते। ननु च कामधातौ नास्ति कुशलस्य कर्मणः कल्पं विपाक इति? सत्यमेकस्य नास्ति; एकाधिष्ठानास्तु बह्व्यश्चेतना भवन्ति। यासां क्रमेण कल्पप्रमाणं स्वार्गिकं फलमभिनिर्वर्तते; च्युतस्य पुनस्तत्रैव जन्मसन्धानात्। बृहत् पुण्यं ब्राह्ममित्यपरे॥ १२४॥

*सूत्रादीनामिति*। *आदिशब्देन* द्वादशानामङ्गानां ग्रहणम्। सूत्र-गेय-व्याकरण-गाथा-उदान-निदानावदान-इतिवृत्तक-जातक-वैपुल्याद्भुतधर्मोपदेशा

पुण्यज्यानिं कुर्वन्ति, ये विपरीतधर्मं देशयन्ति। क्लिष्टचित्ता वा लाभसत्कारयशांसि वाञ्छन्तः।

उक्तं पुण्यक्रियावस्तुभेदेन त्रिविधं कुशलम्॥

पुनः—

**पुण्यनिर्वाणनिर्वेधभागीयं कुशलं त्रिधा॥ १२५॥**

पुण्यभागीयं यदिष्टविपाकं मोक्षभागीयम्, यस्मिन्नुत्पन्ने नियतं परिनिर्वाणधर्मा भवति। यस्य संसारादीनवनैरात्म्यनिर्वाणगुणद्योतिकां कथां श्रुत्वा रोमहर्षाश्रुपातौ भवतः, तस्यास्ति मोक्षभागीयं कुशलमूलमित्यवसेयम्। प्रावृषीवाङ्कुरप्ररोहात् खलेविलेषु बीजास्तित्वम्।

निर्वेधभागीयमूष्मादि चतुर्विधं पश्चाद् व्याख्यास्यामः॥ १२५॥

यदिदं लोक उच्यते लिपिमुद्रागणना काव्यं संख्येति, क एषां स्वभावः?

**योगप्रवर्तितं कर्म ससमुत्थापकं त्रिधा।**

**लिपिमुद्रे सगणनं काव्यं संख्या यथाक्रमम्॥ १२६॥**

**योगप्रवर्तित**मिति उपायविशेषप्रवर्तितम्। **त्रिधा कर्मे**ति कायवाङ्मनस्कर्म। तत्र **लिपिमुद्रे** तावद् योगप्रवर्तितं कायकर्म ससमुत्थानम्[1]। **गणना काव्यं** च

---

इति द्वादशानामङ्गानाम्। *अक्लिष्टदेशने*ति। अक्लिष्टचित्तसमुत्थापितेत्यर्थः।

*पुण्यभागीयमि*ति। पुण्यस्य भागः प्राप्तिरिति पुण्यभागः। इष्टफलप्राप्तिरित्यर्थः। तस्मै हितं पुण्यभागीयम्। अतएवोक्तम्—*यदिष्टविपाकमि*ति। तत्प्राप्त्यनुकूलमिति। अथवा त्रयो भागाः—पुण्यो भागः, अपुण्यो भागः, अनिञ्ज्यो भागः; तस्मै हितं पुण्यभागीयम्। अथवा—पुण्यं भजत इति पुण्यभाक्, पुण्यभागेव पुण्यभागीयम्। स्वार्थे क-प्रत्ययः। एवं *मोक्षभागीयम्*। अथ वा संसारभागः, मोक्षभागश्चेति द्वौ भागौ। तत्र यन्मोक्षभागाय हितं *तन्मोक्षभागीयम्*। मोक्षप्राप्तिर्वा मोक्षभागः, तस्मै हितम् तत्प्राप्त्यनुकूलमिति मोक्षभागीयम्। तस्य लक्षणं पश्चाद् वक्ष्यते। एवं *निर्वेधभागीयमपि* योज्यम्। *पश्चाद् व्याख्यास्याम* इति। "तत ऊष्मगतोत्पत्तिः" (अभि० को० ६.१७) इत्यत्र। कर्माधिकारेणैषां कर्मस्वभावानां लक्षणमुच्यते॥ १२५॥

*यदिदं लोक* इत्यादि। *ससमुत्थानमि*ति। सचित्तचैतसिककलापम्। येन तत् कायकर्मोत्थाप्यते। *तत् कायकर्मससमुत्थानं योगप्रवर्तितम्। लिपिर्मुद्रा*

---

१. समुत्थापनम्—का०।

वाक्कर्म । इत्येतानि पञ्चस्कन्धस्वभावानि । संख्या मनस्कर्म, यन्मनसा सङ्कलनं धर्माणाम् ॥ १२६ ॥

धर्माणामिदानीं केचित् पर्याया उच्यन्ते—

**सावद्या निवृता हीनाः क्लिष्टा धर्माः,**

क्लिष्टानां धर्माणां **सावद्या निवृता हीना** इति पर्यायाः ।

**शुभामलाः ।**

**प्रणीताः,**

कुशलानास्रवाणां **प्रणीता** इति पर्यायः ।

हीनप्रणीतेभ्योऽन्ये मध्या इति सिद्धं भवति ।

**संस्कृतशुभाः सेव्याः,**

---

च । कारणे कार्योपचारात् । येन हि कायकर्मणा लिपिर्लिख्यते, मुद्रा वा खन्यते, सा *लिपिर्मुद्रा* च शास्त्रेऽभिप्रेते; न यथा लोके ह्यक्षरचिह्नं पुस्तकादौ लिपिरिष्यते । अक्षरानक्षरचिह्नं च मुद्रेति । *गणना काव्यञ्च वाक्कर्म ।* योगप्रवर्तितं ससमुत्थानमिति वर्तते । *पञ्चस्कन्धस्वभावानीति* । लिपिमुद्रयोः कायकर्म रूपस्कन्धः । गणनाकाव्ययोर्वाक्कर्म रूपस्कन्धः । वेदनादयस्तूभयत्रापि समुत्थानभूताश्चत्वारः स्कन्धा इति । पञ्चस्कन्धस्वभावान्येतानि भवन्ति । *यन्मनसा संकलनं धर्माणामिति* । एकं द्वे त्रीणीत्येवमादि सा संख्या । यत्तु वाचा न मनसा सा गणनेत्या*भिधार्मिकाः ।* इयं च संख्या सपरिवारग्रहणाच्चतुःस्कन्धस्वभावा ॥ १२६ ॥

लिप्यादिलक्षणनिर्देशानुषङ्गेण सावद्यादीनामपि *धर्माणां* लक्षणनिर्देशोपन्यासः । धर्मस्कन्धक*विभाषाया*मेते पर्याया निर्दिष्टाः । तत्प्रत्यासन्नेयमिति । इमे *पर्याया* उपन्यस्यन्त इत्यपरः सम्बन्धः । सहावद्येन क्लेशलक्षणेन वर्तन्त इति *सावद्याः ।* क्लेशच्छादितत्वा*न्निवृताः ।* क्लेशा अपि हि सम्प्रयोगिणा क्लेशान्तरेण निवृताः । निष्कृष्टत्वादार्यैस्त्यक्तत्वाद् वा *हीनाः । क्लिष्टास्तु* क्लेशयोगतोऽवगन्तव्याः ।

*शुभामलाः ।* कुशलानास्रवाः । ते *प्रणीताः ।* शुद्धिप्रकर्षगतत्वात् । *हीनप्रणीतेभ्योऽन्ये मध्या इति सिद्धमिति* । क्लिष्टा एव हीनाः । शुभामला एव च प्रणीता इत्यवधारणादतोऽन्ये न हीनाः । न प्रणीता इति मध्याः सिद्धाः ।

*संस्कृतशुभाः सेव्या* इति । अविशेषेण सास्रवा अनास्रवा वा सेवितव्याः ।

---

कुशलसंस्कृतानां **सेवितव्या** इति पर्यायः। शेषा असेवितव्या इति सिद्धं भवति।

कस्मादसंस्कृतं न सेव्यम्? अनभ्यसनीयत्वाद्, अफलत्वाच्च। फलार्थं हि सेवा भवति॥

सोत्तरा अन्ये सर्वधर्माः।

**मोक्षस्त्वनुत्तरः॥ १२७॥**

नहि निर्वाणाद् विशिष्टतरमस्ति। तच्च सर्वेभ्यो विशिष्टम्; कुशलनित्यत्वात्॥ १२७॥

अभिधर्मकोशभाष्ये कर्मनिर्देशो नाम
चतुर्थं कोशस्थानमिति॥

---

पर्युपासितव्याः। सन्तानाध्यारोपणतः। *शेषा असेवितव्या* इति। के शेषाः? असंस्कृताश्च, ये च न कुशलाः। क्लिष्टा निवृताव्याकृता इत्यर्थः।

*अनभ्यसनीयत्वादि*ति। पौनःपुन्येन कर्तुमशक्यत्वादित्यर्थः। अनुत्पाद्यत्वादित्यपरे। *अफलत्वाच्चे*ति। संस्कृतस्य हि हेतुफले। नासंस्कृतस्य ते इति। *सोत्तरा* इति सातिशया। अकुशला निवृताव्याकृतानामनिष्टविपाकाभावात्। निवृताव्याकृता अनिवृताव्याकृतैः संस्कृताः सोत्तरा; तेषामक्लिष्टत्वात्। तेऽपि कुशलसास्रवैः सोत्तराः; कुशलसास्रवाणामिष्टफलत्वात्। तेऽप्यनास्रवैः सोत्तराः; निष्क्लेशत्वात्। अनास्रवा अपि संस्कृता असंस्कृतैः सोत्तरा; असंस्कृतानां नित्यत्वात्। संस्कृतावप्याकाशाप्रतिसंख्यानिरोधौ प्रतिसंख्यानिरोधेन सोत्तरौ; प्रतिसंख्यानिरोधस्य कुशलनित्यत्वात्।

*मोक्षस्त्वनुत्तरः। न हि निर्वाणाद् विशिष्टतममस्ति।* तथा ह्युक्तम्—"ये केचिद् भिक्षवो धर्माः संस्कृता वा असंस्कृता वा विरागस्तेषामग्र आख्यायते" (          ) इति। प्रतिसंख्यानिरोधो हि नित्यत्वात् सर्वसंस्कृतेभ्य उत्कृष्टः। कुशलत्वाच्चासंस्कृताभ्यामाकाशाप्रतिसंख्यानिरोधाभ्यामुत्कृष्टतर इति॥१२७॥

*आचार्ययशोमित्रकृतायां स्फुटार्थायामभिधर्मकोशव्याख्यायां*
*चतुर्थकोशस्थानं समाप्तम्॥*

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवंवादी महाश्रमणः ॥

॥ ॐ नमो बुद्धाय ॥

# पञ्चमं कोशस्थानम्

## (अनुशयनिर्देशः)

"कर्मजं लोकवैचित्र्यम्" (अभि. ४.१) इत्युक्तम्। तानि[१] च[१] कर्माण्यनुशयवशादुपचयं गच्छन्ति, अन्तरेण चानुशयान् भवाभिनिर्वर्त्तने न समर्थानि भवन्ति। अतो वेदितव्याः—

---

## स्फुटार्थाव्याख्यायां

### पञ्चमं कोशस्थानम्

*'कर्मजं लोकवैचित्र्यम्'* इत्युक्तमिति। चतुर्थस्यादावुक्तम्। अतोऽनेन सम्बन्धेनानुशयोपन्यास इति सम्बन्धं दर्शयति। *तानि च कर्माणि* यथोक्तलक्षणप्रभेदानि *अनुशयवशादुपचयं गच्छन्ति*। विपाकनैयम्येनात्र उत्तिष्ठन्ते। विपाकदानाय नियतीभवन्तीत्यर्थः। *अन्तरेण चानुशयान्* विनानुशयैर्भवस्य जन्मनोऽ*भिनिर्वर्तने* उत्पादने *न समर्थानि भवन्ति* कुशलान्यकुशलानि वा कर्माणि। न ह्यर्हतः पौनर्भविकानि कर्माण्यनित्यानि न सन्ति, अनुशयाभावात्तु पुनर्भवाभिनिर्वर्तने न समर्थानि भवन्ति। अत एवैषामनित्यत्वं सिद्ध्यति।

ह्यर्थे चायं चः पठितव्यः; यस्मादन्तरेणानुशयान् भवाभिनिर्वर्तने न समर्थानि भवन्ति, तस्मादनुशयवशादुपचयं गच्छन्तीत्यभिप्रायः।

*अपरे* पुनरेतद् व्याख्याद्वयमेवं व्याचक्षते—तानि च कर्माण्यनुशयवशादुपचयं गच्छन्ति। यान्यकृतानि कर्माणि, तान्यनुशयवशात् पुनर्भवाभिनिर्वर्तन उपचीयन्त इत्यर्थः। न ह्यर्हतां कर्माणि पुनर्भवाभिनिर्वर्तन उपचीयन्ते, अन्तरेण चानुशयान् भवाभिनिर्वर्तने न समर्थानि भवन्तीति। यानि च कृतानि, तान्यप्यन्तरेणानुशयान् भवाभिनिर्वर्तने न शक्तानि भवन्ति। न ह्यर्हतां पृथग्जनावस्थायां कृतानि कुशलाकुशलानि पौनर्भविकान्यनित्यानि कर्माणि न सन्ति, अनुशयवैकल्यात्तु तानि भवाभिनिर्वर्तने न समर्थानि—इत्येवं पृथगर्थाभिधानात् समुच्चयेऽयं चकार इति।

१-१. तानि—का०

**मूलं भवस्यानुशयाः,**

**क्लेशो हि प्रवर्तमानो दश कृत्यानि करोति—मूलं[1] दृढीकरोति, सन्ततिमवस्थापयति, क्षेत्रमापादयति, निःष्यन्दं निर्वर्तयति, कर्मभवमभिनिर्हरति, स्वसम्भारं परिगृह्णाति, आलम्बने संमोहयति, विज्ञानस्रोतो नमयति, कुशलपक्षाद्व्युत्क्राम्यति[2], बन्धनार्थं च स्फरति धात्वनतिक्रमणयोगेनेति[3] ।**

**कति चेमेऽनुशयाः ? समासेन षट् ।**

**कतमे ?**

---

*मूलं भवस्यानुशया* इति । पुनर्भवस्य कर्मभवस्य वा मूलम् अनुशया इत्यभिप्रायः । *मूलं दृढीकरोतीति* । प्राप्तिर्हि मूलम् । तामनुच्छेदार्थेन दृढीकरोतीत्यर्थः । *सन्ततिमवस्थापयतीति* । परम्परया क्लेशप्रबन्धं स्थापयतीत्यर्थः । *क्षेत्रमापादयतीति* । आश्रयमात्मोत्पत्त्यनुकूलं करोतीत्यर्थ । *निष्यन्दं निर्वर्तयतीति* । स्वनिष्यन्दमुपक्लेशं जनयति । तद्यथा—राग आह्रीक्यौद्धत्यमत्सरान् जनयति, द्वेषः क्रोधेर्ष्ये इत्यादि । *कर्मभवमभिनिर्हरतीति* । कर्म एव भवः = कर्मभवः, तं पुनर्भवाभिनिर्वृत्तये जनयतीत्यर्थः । इदमस्य 'मूलं भवस्यानुशयाः' इत्यर्थसन्दर्शनार्थम् । *स्वसम्भारं परिगृह्णातीति* । स्वसम्भारः = क्लेशस्यायोनिशो मनस्कारः, तं परिगृह्णाति । तस्यानागतस्य हेतुभावेनावतिष्ठत इत्यर्थः । *आलम्बने सम्मोहयतीति* । यथाभूताग्रहणात्, बुद्ध्युपघाताद् वा सम्मोहयतीति । *विज्ञानस्रोतो नमयतीति* । विज्ञानसन्ततिमालम्बने पुनर्भवे वा नमयति ।

यदि 'मूलं भवस्य' इति पुनर्भवग्रहणम्, इदमस्योदाहरणम् । *कुशलपक्षाद् व्युत्क्राम्यतीति* । कुशलपक्षात् परिहापयति । *बन्धनार्थं च स्फरति* ; बन्धनकार्यं व्याप्नोति, तनोतीत्यर्थः । कथम् ? इत्याह—*धात्वनतिक्रमणयोगेन* । धात्वनतिक्रमणप्रकारेणेत्यर्थः । तदिदमुक्तं भवति—यः क्लेशो यद्धातुकः स तं धातुं नातिक्राम्यतीति ।

षोडशेत्यन्यः । एषु षट् प्रक्षिप्य । आश्रयदौष्ठुल्यं जनयति, अकर्मण्यतापादनात् । गुणान् द्वेष्टि, तद्विरोधित्वात् । अपवादानास्पदीकरोति, विद्वद्विगर्हितकायकर्मोत्थापनात् । सत्पथादुद्वर्तयति, विपरीतदैशिकसंसेवाभिमुखीकरणात् । विविधानर्थबीजं रोपयति सर्वसंसारव्यसनानां तत्प्रभवत्वात् । आधिपत्यफलेन च लोकस्यानिष्टमुपसंहरति, तद्वेगेन बाह्यभावविकारापत्तेः ।

---

१. मूलं च—का० । २. व्युत्क्रामति—का० । ३. ०नतिक्रमयो०—का० ।

**षड्रागः प्रतिघस्तथा ।**

**मनोऽविद्या च दृष्टिश्च विचिकित्सा च,**

तथाग्रहणं रागवशेनान्येषामप्यालम्बनानुशायितज्ञापनार्थम्[१] । एतच्च पश्चात् प्रवेदयिष्यामः ।

**ते पुनः ॥ १ ॥**

**षड्रागभेदा सप्तोक्ताः,**

त एते षडनुशयाः सूत्रे रागस्य द्विधा भेदं कृत्वा **सप्तोक्ताः**—कामरागानुशयः, प्रतिघानुशयः, भवरागानुशयः, मानानुशयः, दृष्ट्यनुशयः, विचिकित्सानुशय इति ।

कथमिदं ज्ञातव्यम्—कामराग एवानुशयः कामरागानुशयः, अहोस्वित् कामरागस्यानुशयः कामरागानुशयः ? किं चातः ? कामराग एवानुशयश्चेत् सूत्रविरोधः—"इहैकत्यो न कामरागपर्यवस्थितेन चेतसा बहुलं विहरति । उत्पन्नस्य कामरागपर्यवस्थानस्योत्तरनिःसरणं[२] यथाभूतं प्रजानाति । तस्य तत्कामरागपर्यवस्थानं स्थामशः सम्यक्त्वसुसमवहतं[३] सानुशयं प्रहीयते" इति ।

---

*रागवशेनान्येषामपीति* । यत्र रागः तत्रालम्बनेऽन्ये प्रतिघादयोऽप्यनुशेरते । "प्रेमाद् द्वेषो जायते, मानादयोऽपि" (        ) इति सूत्रम् । अत एव च रागानुशयनाभावाद् अनास्रवविसभागधात्वोः क्लेशा नानुशेरत इति । *एतच्च पश्चात् प्रवेदयिष्याम* इति । "यद्धि वस्तु आत्मदृष्टितृष्णाभ्यां स्वीकृतम्, तत्रान्येऽप्यनुशया अनुशयितुमुत्सहन्ते, आर्द्रे इव पटे रजांसि संस्थातुम्" (        ) इत्येतत् ज्ञापयिष्यामः ॥ १ ॥

*आहोस्वित् कामराग एवानुशय* इति । वैभाषिकनयेन पर्यवस्थानमेवानुशयः । वात्सीपुत्रनयेन प्राप्तिरनुशयः । सौत्रान्तिकनयेन बीजम् । *उत्तरनिःसरणमिति* । पश्चान्निःसरणमित्यर्थः । *स्थामशः सुसमवहतम्* । बलशः सुष्ठु सम्यग् अवहतमित्यर्थः । *सानुशयं प्रहीयत* इति । इदमत्रोदाहरणम् । इदमत्र विरुद्ध्यते । सहयोगसमासे हि अन्यत्वं दृष्टम्, तद्यथा—सपुत्रो देवदत्त इति ।

---

१. ०षामालम्बना०—का० । २. ०स्योत्तरि—का० ।
३. ०क्त्वसम०—का० ।

कामरागस्यानुशयश्चेद् विप्रयुक्तानुशयप्रसङ्गादभिधर्मविरोधः---"कामरागा-नुशयस्त्रिभिरिन्द्रियैः सम्प्रयुक्तः" इति ?

कामराग एवानुशय इति वैभाषिकाः। एवं यावद्विचिकित्सैवानुशय इति।

ननु चोक्तम्---एवं सूत्रविरोध इति ? नास्ति विरोधः। सानुशयं सानु-बन्धमित्यर्थात्[1]। औपचारिको वा सूत्रेऽशयनुशब्दः प्राप्तौ। तद्यथा--दुःखोऽग्निरिति। लाक्षणिकस्त्वभिधर्मे क्लेश एवानुशयशब्दः। तस्मात् सम्प्रयुक्ता एवानुशयाः।

कथमिदं गम्यते ? अनुशयानां

"चित्तक्लेशकरत्वादावरणत्वाच्छुभैर्विरुद्धत्वात्"।

यस्मादनुशयैः क्लिष्टं चित्तं भवत्यपूर्वं कुशलं नोत्पद्यते, उत्पन्नाच्च परि-हीयते, तस्मान्न विप्रयुक्ताः। अथ विप्रयुक्तैरप्येवं स्यात्, कुशलं न कदा-चिदप्युपलभ्येत[2], तेषां नित्यं सन्निहितत्वात्। उपलभ्यते च, अतः

"कुशलस्य चोपलम्भादविप्रयुक्ता इहानुशयाः[3]" ॥ ( ) इति।

---

तथा च सति *सूत्रविरोधः*। *अभिधर्मविरोध* इति। *कामरागानुशयास्त्रिभिरिन्द्रियैः* सम्प्रयुक्ताः, कतमैस्त्रिभिः ? सुख-सौमनस्य उपेक्षेन्द्रियैः सम्प्रयुक्ता इति। न हि विप्रयुक्तस्य प्राप्तिलक्षणस्य एभिरिन्द्रियैः सम्प्रयोगो युज्यत इति शास्त्र-विरोधः।

*सानुशयं सानुबन्धमित्यर्थादिति*। कामरागस्यानुबन्धोऽनुशयशब्देनोक्त अनुबन्धः पुनः क्लेशान्तरस्योत्पादानुकूल्येनावस्थानम्। अनुवृत्तिर्वा अनुशयः सानुशयं प्रहीयते, न पुनरनुवर्तते संक्लेश इत्यर्थः। *औपचारिको वा सूत्रेऽनु-शयशब्दः*। उपचारे भव औपचारिकः। कुत्रौपचारिकः ? इत्याह---*प्राप्तौ*। मुख्यवृत्त्या पर्यवस्थानेऽनुशयशब्दो वर्तते, उपचारेण तु प्राप्तौ; तस्यानुशय-हेतुभावात्। *तद्यथा* दुःखवेदनाहेतुत्वाद् *अग्निर्दुःख* इत्युच्यते, तद्वत्। *लाक्षणिकस्त्वभिधर्मेऽनुशयशब्दः*। लक्षणे भवः, लक्षणेन वा दीप्यत लाक्षणिक इत्याह---*क्लेश एवेति*। आलम्बनसम्प्रयोगतश्चानुशेरत इत्यनुशया इति। तस्मात् *सम्प्रयुक्ता* एवानुशयाः। अत्र चार्थे श्लोकमुदाहरन्ति---

*चित्तक्लेशकरत्वादावरणत्वाच्छुभैर्विरुद्धत्वात्।*
*कुशलस्य चोपलम्भादविप्रयुक्ता इहानुशयाः॥ इति॥*

---

१. ०मित्यर्थः--का०। २. कदाचिदुपल०--का०।

३. अथ इहा०--का०।

तदिदमज्ञापकम्; यस्माद्यो हि[1] विप्रयुक्तमनुशयमिच्छति स एतत् सर्वमनुशयकृतं नेच्छति, क्लेशकृतमेवेच्छति। एवं तु साधु यथा सौत्रान्तिकानाम्। कथं च सौत्रान्तिकानाम्? कामरागस्यानुशयः कामरागानुशय इति। न चानुशयः सम्प्रयुक्तो न विप्रयुक्तः, तस्याद्रव्यान्तरत्वात्। प्रसुप्तो हि क्लेशोऽनुशय उच्यते, प्रबुद्धः पर्यवस्थानम्। का च तस्य प्रसुप्तिः? असम्मुखीभूतस्य बीजभावानुबन्धः। कः प्रबोधः? सम्मुखीभावः।

कोऽयं बीजभावो नाम? आत्मभावस्य क्लेशजा क्लेशोत्पादनशक्तिः।

---

*चित्तक्लेशकरत्वादिति*। अस्य विवरणम्—यस्मादनुशयैः क्लिष्टं चित्तं भवति, न विप्रयुक्तैः क्लिष्टं चित्तं भवति। *आवरणत्वादिति*। अस्य पदस्य विवरणम्—अपूर्वं कुशलं नोत्पद्यत इति। सानुशये चित्ते कुशलमपूर्वं नोत्पद्यत इति। अनुशयाः शुभैविरुद्धाः। यस्मादुत्पन्नात् कुशलात् परिहीयते, तस्मात् कुशलैर्विरुद्धा अनुशयाः। तस्मान्न *विप्रयुक्ता* इति। यस्माच्चैतस्यविद्यमानैस्तैर्यथोक्तक्लिष्टादि न सम्भवति, सम्प्रयुक्तैः पुनः सर्वमेतद् युज्यत इति।

*अथ विप्रयुक्तैरप्येवं स्यादिति*। विप्रयुक्तैः क्लिष्टं चित्तं भवति। अपूर्वं कुशलं नोत्पद्यते, उत्पन्नाच्च परिहीयत इति। *यद्येवम्, कुशलं कदाचिदप्युपलभ्येत, तेषां* विप्रयुक्तानां *नित्यसन्निहितत्वात्*। यस्मात् क्लिष्टावस्थायां कुशलावस्थायामन्यस्यां वा ते विप्रयुक्ता वर्तन्त इति *उपलभ्येत* च *कुशलम्*, अथ 'कुशलस्य चोपलम्भादविप्रयुक्ता इहानुशयाः' इति स्थितमेतद्।

*आचार्य* आह—*तदिदमज्ञापकम्*। यदिदं वैभाषिकैरुक्तम्—'चित्तक्लेशकरत्वाद्' इत्यादि। *यो हि विप्रयुक्तमनुशयमिच्छतीति* वात्सीपुत्रीयः। *सर्वमेतदिति*। चित्तक्लेशादि। *क्लेशकृतमेवेच्छतीति*। पर्यवस्थानकृतमेवेत्यर्थः। पर्यवस्थानं च न नित्यसन्निहितं भवतीति कुशलोपलम्भसिद्धिः। *कामरागस्यानुशया* इति पक्षपरिग्रहे सानुशयं परिहीयत इति नास्ति सूत्रविरोधः; किन्तु विप्रयुक्तोऽनुशय इति प्राप्नोति। अत आह *न चानुशयः सम्प्रयुक्तो न विप्रयुक्त* इति। कथम्? इत्याह—*तस्याद्रव्यान्तरत्वादिति*। शक्तिरूपस्य बीजस्य रागादिभ्योऽनर्थान्तरत्वात्।

*आत्मभावस्य* आश्रयस्य। *क्लेशजा* पूर्वोत्पन्नक्लेशजनिता। *क्लेशोत्पादनशक्तिः*।

१. का० पुस्तके नास्ति।

यथानुभवज्ञानजा स्मृत्युत्पादनशक्तिः, यथा चाङ्कुरादीनां शालिफलजा शालिफलोत्पादनशक्तिरिति । यस्तु क्लेशानां बीजार्थमर्थान्तरं विप्रयुक्तमनुशयं कल्पयति तेन स्मृतिबीजमप्यर्थान्तरं कल्पयितव्यं जायते ।

यत्तर्हि सूत्रे क्लेश एवानुशय उक्तः षट्षट्के—"सोऽस्य[1] पुद्गलस्य भवति सुखायां वेदनायां रागानुशयः" इति । भवतीति वचनान्नासौ तदैवानुशयः । कदा तर्हि भवति ? यदा प्रसुप्तो भवति । हेतौ वा तदुपचार एष द्रष्टव्यः ॥

तिष्ठतु प्रसङ्गः । शास्त्रं प्रवर्त्तताम् ।

य एष सूत्रे रागस्य भेदः कृतः—'कामरागो भवरागः' इति, कोऽयं भवरागः ?

**भवरागो द्विधातुजः ।**

---

*यथानुभवज्ञानजा स्मृत्युत्पादनशक्तिर्न* द्रव्यान्तरभूता, तद्वत् । स्मृत्युत्पादनहेतुर्द्रव्यान्तरभूतः कश्चिद् विप्रयुक्त इत्याशङ्क्य दृष्टान्तान्तरमुपन्यस्यति—*यथा चाङ्कुरादीनामिति* । विस्तरः—यथा चाङ्कुरादीनां पूर्वोत्पन्ना शालिफलजा शालिफलान्तरोत्पादनाय शक्तिर्न द्रव्यान्तरभूता, तद्वत् ।

*यस्त्विति* । *वात्सीपुत्रीयः* । यदि 'क्लेशस्यानुशयः' इतीष्यते । यत्तर्हि सूत्र एव क्लेशोऽनुशय उक्त षट्षट्के[2] सूत्रे—"अस्य पुद्गलस्य भवति सुखायां वेदनायां रागानुशयाः" (      ) इति ? राग एव अनुशयः । सुखवेदनावस्थायां हि रागः समुदाचरन्नेवमुक्तः, न तु तस्य बीजमित्यभिप्रायः । *भवतीति वचनान्नासौ तदैवानुशय* इति । अनुशय एव रागस्यायमुक्तः, न रागः; भवतीति वचनात् । तस्यामवस्थामुत्पद्यमानस्य रागस्यानुशयो भवतीति । बीजमुत्पद्यते, न तूत्पन्नमिति । बीजप्रकृतावस्थात्र कथ्यते इत्यभिप्रायः । *कदा तर्हि भवतीति* । कदानुशयोऽस्तीत्यर्थः । *यदा प्रसुप्तो भवति* । यदोपरतो भवतीत्यर्थः । *हेतौ वा तदुपचार* इति । हेतौ = रागे अनुशयोपचारः । रागो हि रागानुशयस्य हेतुः । तथा हि रागजा रागोत्पादनशक्ती रागानुशय इत्युक्तमिति । तदिदमुक्तं भवति—क्वचिदनुशयशब्देन बीजमुच्यते, क्वचित् पर्यवस्थानमिति ।

---

१. का० पुस्तके नास्ति । २. सट्पट्के—जा० ।

रूपारूप्यधातुजो रागो भवरागः कृतः । किं कारणमेवं कृतः ?

**अन्तर्मुखत्वात्तन्मोक्षसंज्ञाव्यावृत्तये कृतः ॥ २ ॥**

समापत्तिरागो हि तेषां प्रायेण । स चान्तर्मुखप्रवृत्तः, तस्माद् भवरागः उक्तस्तयोः किल धात्वोर्मोक्षसंज्ञाविच्छन्दनार्थमेकेषामिति[1] । आत्मभाव एव तु भवः । ते च सत्त्वाः समापत्तिं साश्रयामास्वादयन्त आत्मभावमेवास्वादयन्ति; कामवीतरागत्वात् । अतः स रागो भवराग इत्युक्तः ॥ २ ॥

पुनरेते षडनुशया अभिधर्मे दश क्रियन्ते । कथं कृत्वा ?

**दृष्टयः पञ्च सत्कायमिथ्यान्तग्राहदृष्टयः ।**
**दृष्टिशीलव्रतपरामर्शाविति पुनर्दश ॥ ३ ॥**

षण्णामनुशयानां दृष्टिं पञ्चधा कृत्वा दश भवन्ति । पञ्च दृष्टिस्वभावाः—सत्कायदृष्टिः, अन्तग्राहदृष्टिः, मिथ्यादृष्टिः, दृष्टिपरामर्शः, शीलव्रतपरामर्शश्च । यथा दृष्टिस्वभावाः—रागः, प्रतिघः, मानः, अविद्या, विचिकित्सा ॥ ३ ॥

एते पुनरेते दशानुशया अभिधर्मेऽष्टानवतिः क्रियन्ते—कामावचराः षट्त्रिंशद्, रूपावचरा एकत्रिंशत्, आरूप्यावचरा एकत्रिंशत् । कथं कृत्वा ? समासतो ह्येतेऽनुशयास्त्रैधातुका दर्शनप्रहातव्या भावनाप्रहातव्याश्च । तत्र तावत् कामावचरा दर्शनप्रहातव्या द्वात्रिंशत् । कतमे ते ? इत्याह—

**दशैते सप्तसप्ताष्टौ त्रिद्विदृष्टिविवर्जिताः ।**
**यथाक्रमं प्रहीयन्ते कामे दुःखादिदर्शनैः ॥ ४ ॥**

---

*समापत्तिरागो हि तेषां प्रायेणेति* । आस्वादनासम्प्रयुक्ते ध्याने प्रायेण तेषां रागः । विमानादिष्वपि तेषां रागोऽस्तीत्यतः प्रायेणेतिग्रहणम् । *स चान्तरमुखप्रवृत्तः*, समाहितरूपत्वाद् । तथा च सति *मोक्षसंज्ञोपतिष्ठते* । *तद्विच्छन्दनार्थं* भगवान् देशयामास—'कामरागो भवरागः' इत्येवमादि । भवे *रागेषः*, नैष मोक्षे । मोक्षे कुशलो धर्मच्छन्द इति । *आत्मभाव एव तु भव* इत्याचार्यमतम् । *समापत्तिं साश्रयामिति* । समापत्तिम् = सात्मभावम् । *आस्वादयन्त* आत्मभावमेवास्वादयन्ति; न कामगुणान् । *कामवीतरागत्वात्* । अतः स रागो भवराग इत्युक्तो न कामराग इति दर्शयति ॥ २ ॥

*अभिधर्म* इति । न सूत्र इत्यभिप्रायः ॥ ३ ॥

---

१. ०संज्ञाव्यावर्तनार्थ०—का० ।

य एते दशानुशया उक्ता एते कामधातौ दशापि दुःखदर्शनहेया: सन्ति। एभ्य एव सप्त समुदयदर्शनहेयाः[1]। सप्त निरोधदर्शनहेयाः, सत्कायदृष्टिमन्तग्राहदृष्टिं शीलव्रतपरामर्शं च वर्जयित्वा। अष्टौ मार्गदर्शनहेयाः[2], सत्कायदृष्टिमन्तग्राहदृष्टिं च वर्जयित्वा। इत्येते कामावचरा द्वात्रिंशदनुशया दर्शनप्रहातव्याः; सत्यानां दर्शनमात्रेण प्रहाणात् ॥ ४ ॥

## चत्वारो भावनाहेयाः

तद्यथा—रागः, प्रतिघः, मानः, अविद्या च। दृष्टसत्यस्य पश्चात् मार्गाभ्यासेन प्रहाणात्। तदेवं सत्कायदृष्टिरेकप्रकारा भवति दुःखदर्शनहेया। एवमन्तग्राहदृष्टिः। मिथ्यादृष्टिश्चतुष्प्रकारा भवति चतुःसत्यदर्शनहेया। एवं दृष्टिपरामर्शो विचिकित्सा च। शीलव्रतपरामर्शो द्विप्रकारः दुःखमार्गदर्शनहेयः। रागप्रतिघमानाविद्याः पञ्चप्रकाराश्चतुःसत्यदर्शनहेयाः, भावनाहेयाश्च।

---

*सप्त समुदयदर्शनहेया* इति। *सत्कायदृष्टिः* फलभूतान् पञ्चोपादानस्कन्धान् आलम्बत इति दुःखदर्शनहेयैव। *एवमन्तग्राहदृष्टिः* तेषामेव स्कन्धानां शाश्वतोच्छेदान्तग्रहणात्। *शीलव्रतपरामर्शो*ऽपि तानेव स्कन्धान् शुद्धितो मुक्तितो नैर्याणिकतश्चालम्बत इति न समुदयदर्शनहेयः।

एवं *निरोधदर्शनहेया* अपि योज्याः।

*अष्टौ मार्गदर्शनहेया* इति। शीलव्रतपरामर्शमधिकं प्रक्षिप्य। मार्गेण शुद्ध्यति, तमपास्यान्येन शीलव्रतेन शुद्धिं प्रत्येतीति विप्रतिपन्नत्वात् मार्गदर्शनप्रहातव्यो भवति। यो हि क्लेशो यस्य सत्यस्यापवादाय प्रवृत्तः, स तस्मिन् दृष्टे प्रहीयते; सर्पभ्रान्तिरिव रज्जुदर्शनात्। *सत्यानां दर्शनमात्रेण प्रहाणादि*ति। नाभ्यासेन प्रहाणादित्यभिप्रायः। *दृष्टसत्यस्य पश्चान्मार्गाभ्यासेन प्रहाणात्*। किमेते भावनाहेया इत्यधिकारः। तदेवमभ्यासो भावना, पुनः पुनरुत्पादनमित्यर्थः। *सत्कायदृष्टिरेकप्रकारे*ति। आत्मात्मीयाकारेण दुःखे विप्रतिपन्नत्वाद् *दुःखदर्शनहेयैव। एवमन्तग्राहदृष्टिरि*ति। असावप्यात्माभिमतस्य वस्तुनः शाश्वतोच्छेदान्तारोपाद् दुःखा एव विप्रतिपन्नेति दुःखदर्शनहेयैव। *मिथ्यादृष्टिश्चतुष्प्रकारे*ति। दुःखादिसत्यलक्षणापवादप्रवृत्तत्वात् सत्यचतुष्टयेऽपि विप्रतिपन्नेति। *चतुःसत्यदर्शनहेया*। एवं *दृष्टिपरामर्शो*ऽपि

---

१. ०दर्शनप्रहेयाः—का०। २. दुःखसमुदयनिरोधदर्शनहेया—का०।

कीदृशा एते दुःखदर्शनहेयाः ? कीदृशा यावद् भावनाहेयाः ? ये यद्दर्शनहेयालम्बनास्ते तद्दर्शनहेयाः । अवशिष्टा भावनाहेयाः ।

---

चतुष्प्रकार एव । स हि हीनेऽग्रदर्शनम् । तत्र समुदय-निरोध-मार्गप्रहेयालम्बनाः समुदय-निरोध-मार्गदर्शनहेयाः । शेषो दुःखदर्शनहेयः । *एवं विचिकित्सा* सर्वत्र संशयाकारेति सर्वत्र विप्रतिपन्नत्वाच्चतुःसत्यदर्शनहेया । *शीलव्रतपरामर्शो द्विप्रकार* इति । ईश्वरादिष्वहेतुषु हेतुग्रहो नित्यात्मविपर्यासात् प्रवर्तत इति दुःखदर्शनहेयाः । अमार्गे मार्गदर्शनं मार्गदर्शनहेयः ।

*कीदृशा एता* इति । रागादयश्चत्वारः क्लेशाः । पर्यनुयुज्यन्ते हि रागप्रतिघ-मानाविद्या इत्यनन्तराधिकृताः । ते चेमे दर्शनहेयाः । इमे भावनाहेया इति दुःपरिच्छेदाः । न तु सत्कायदृष्ट्यादयश्चिन्त्यन्ते । ये हि दुःखसत्यविप्रतिपन्नाः, ते दुःखदर्शनहेया इति । एवं यावद् ये मार्गसत्यविप्रतिपन्ना ते मार्गदर्शनहेया इति सुपरिच्छेदमेतत् । तत्र *य* इति रागादयः । यस्य सत्यस्य दर्शनम् = यद्दर्शनम् । यद्दर्शनेन हेयाः त आलम्बनमेषाम् त इमे *यद्दर्शनहेयालम्बनाः* । *ते तद्दर्शनहेयाः* । ते रागादयः । तस्य सत्यस्य दर्शनं तद्दर्शनम्, तद्दर्शनेन हेयास्*तद्दर्शनहेयाः* । एतदुक्तं भवति—ये रागादयो दुःखदर्शनहेयम्, यावन्मार्गदर्शनहेयं क्लेशमालम्बन्ते, ते तद्दर्शनहेया इति ।

यदालम्बना यद्दर्शनहेयालम्बनाश्चेति वक्तव्यम्; चतुरार्यसत्यालम्बनोऽप्यविद्यानुशयो भवतीति ? न वक्तव्यम्; एकशेषविधानसिद्धेः । यच्च सत्यम्, यद्दर्शनहेयाश्च क्लेशा आलम्बनमेषाम्, त इमे दर्शनहेयालम्बनाः, ते तद्दर्शनहेया इति ।

ननु च समुदयदर्शनप्रहातव्यः सर्वत्रगोऽविद्यानुशयो दुःखनिरोधादिसत्यदर्शनहेयाद्यालम्बनोऽपि भवति, पञ्चनिकायालम्बनत्वात्, ततश्चास्य दुःखनिरोधादिसत्यदर्शनहेयत्वप्रसङ्गः स्यादिति ? न दोषः; यद्यपि हि स पञ्चनिकायालम्बनः, समुदयरूपाकारतस्तु तान् निकायानालम्बते; तेन तथालम्बनतः समुदयदर्शनप्रहातव्य एव स इति । एवं दुःखदर्शनप्रहातव्योऽपि संयोज्यः । एवं च सति येऽपि व्याचक्षते—'ये यद्दर्शनहेयालम्बना इति सर्वे एव दर्शनहेया अधिक्रियन्ते, न केवला रागादय इति; तेषामपि व्याख्याने इमावेव चोद्यपरिहारौ वक्तव्यौ ।

रूपारूप्यधात्वोर्दुःखाभावात् प्रतिघाभावः । दुःखायां हि वेदनायां प्रतिघोऽनुशेते । सा चोपरि नास्तीति । द्वेषश्च रूक्षो वातव्याधिवत् । ते च सत्त्वाः शमथस्निग्धसन्ततय इति । विपाकाभावाच्च । अनिष्टो ह्यस्य विपाकः । तौ धातू विगतानिष्टविपाकौ । आघातवस्त्वभावाच्च । न हि तत्र बाह्याः कुश-क्षार-

ता एव द्वादश दृष्टयो भवन्ति, चतस्रो विचिकित्साः, पञ्च रागाः, पञ्च प्रतिघाः, पञ्च मानाः, पञ्चाविद्या इत्येते कामावचराः षट्त्रिंशदनुशया भवन्ति ।

त एवाप्रतिघाः पुनः ।

रूपधातौ,

पञ्चप्रकारं प्रतिघमपहाय त एव रूपावचरा एकत्रिंशदनुशया भवन्ति । यथा रूपधातौ

तथारूप्ये

एकत्रिंशदनुशया भवन्ति ।

इत्यष्टानवतिर्मताः ॥ ५ ॥

त एवमेते षडनुशया आकारप्रकारधातुभेदैरष्टानवतिर्मता आभिधार्मिकाणाम् ॥ ५ ॥

य इमे दर्शनप्रहातव्यानुशया उक्ताः किमेते नियतं दर्शनेनैव प्रहीयन्ते ? नेत्याह । किं तर्हि ?

भवाग्रजाः क्षान्तिवध्या दृग्घेया एव,

---

कण्टकादयोऽनाध्यात्मिकाः तापापस्मारादयः सन्ति । मैत्र्यादिकुशलमूलसम्भूतत्वात्, परिग्रहाभावाच्च ।

*आकार-प्रकारधातुभेदैरि*ति । आकारभेदो दशानामनुशयानाम्—'आत्मात्मीयध्रुवोच्छेदनास्तिहीनाग्रहेतुषु" (अभि० को० ५.७) इत्येवमादिकः । प्रकारभेदो दुःखदर्शनप्रहातव्यो निकायो यावद् भावनाप्रहातव्य इति । तत्र *रागानुशयः* प्रकार-धातुभेदाभ्यां पञ्चदशविध इति । तस्य परस्परमाकारभेदो नास्ति । सर्वो हि रागः सक्त्याकारः, तस्मान्नाकारभेदेन व्यवस्थाप्यते । *प्रतिघानुशयः* प्रकारभेदात् पञ्चविधः । न परस्परमाकारभेदोऽस्ति; सर्वस्य प्रतिघाकारत्वात् । धातुभेदोऽपि नास्ति; रूपारूप्यधात्वोस्तदभावात् । *मानानुशयः* प्रकार-धातुभेदाभ्यां पञ्चदशविधः । नाकारभेदोऽस्तिः सर्वस्योन्नत्याकारत्वात् । तथा *अविद्या* पञ्चदशविधा, ताभ्यामेव । नाकारभेदोऽस्ति; सर्वस्या असम्प्रख्यानाकारत्वात् । *विचिकित्सा* द्वादशविधा, ताभ्यामेव । नाकारभेदः; सर्वस्याः संशयाकारत्वात् । *दृष्ट्यनुशय* आकार-प्रकार-धातुभेदैः षट्त्रिंशद्विधः । एवमेते षडनुशया इति विस्तरः ॥ ५ ॥

ये भवाग्रभूमिजा अन्वयज्ञानक्षान्तिहेया अनुशयास्ते दर्शनहेया एव, न भावनाहेयाः।

शेषजाः।

**दृग्भावनाभ्याम्,**

'क्षान्तिवध्याः' इति वर्त्तते। शेषासु भूमिषु यथायोगं धर्मान्वयज्ञानक्षान्तिहेया अनुशया आर्याणां दर्शनहेयाः, पृथग्जनानां भावनाहेयाः।

**अक्षान्तिवध्या भावनयैव तु ॥ ६ ॥**

सर्वासु भूमिषु येऽनुशया ज्ञानवध्यास्ते उभयेषां नित्यं भावनाहेयाः। नैव हि बाह्यकानां दर्शनप्रहातव्याः प्रहीयन्त इत्यपरे। तथाहि—महाकर्मविभागसूत्रे

---

"*भवाग्रजा क्षान्तिवध्याः*" इति। *क्षान्तिवध्या*ग्रहणं भावनाहेयनिवृत्त्यर्थम्। *भवाग्रजा*ग्रहणं तदन्यभूमिकविशेषणार्थम्। न हि लौकिकोऽस्ति भवाग्रप्रतिपक्षभूतो भावनामार्ग इति।

*शेषासु भूमिष्व*ति। कामधातौ यावत् आकिञ्चन्यायतनभूमौ। *यथायोगमि*ति। कामधातौ *धर्मज्ञानक्षान्तिहेयः*। तत ऊर्ध्वमवशिष्टासु भूमिष्व*न्वयज्ञानक्षान्तिहेयः*। त एते *आर्याणां दर्शनहेया*स्त एव च *पृथग्जनानां भावनाहेयाः*। द्विविधो हि भावनामार्गः—लौकिकः, लोकोत्तरश्च। तथा हि *शास्त्र* उक्तम्—"भगवतः श्रावको दर्शनेन जहाति, पृथग्जनो भावनया जहाति" (  ) इति।

"*अक्षान्तिवध्या भावनयैव तु*" इति। *अक्षान्तिवध्या*ग्रहणं भावनाहेयोपसंग्रहार्थम्। *सर्वासु भूमिषु*। कामधातौ यावद् भवाग्रे। ये राग-प्रतिघमानाविद्यानुशया यथायोगं भवन्ति अक्षान्तिवध्याः, ज्ञानवध्याः, ते *उभयेषाम्* आर्याणां पृथग्जनानां च *नित्यं भावनाहेया एव* लौकिकेन लोकोत्तरेण वा भावनामार्गेण। भवाग्रे तु लोकोत्तरेणैव; ऊर्ध्वभूमिकस्य लौकिकस्य मार्गस्याभावात्।

*नैव हि बाह्यकानां दर्शनप्रहातव्याः प्रहीयन्त* इति। भावनाप्रहातव्या एव तेषां विष्कभ्यन्ते। दर्शनहेयास्तु सर्वास्वपि भूमिषु लोकोत्तरमार्गवध्या एव। तथा हि *महाकर्मविभङ्गसूत्रे* वीतरागाणां कामधात्वालम्बनानां दृष्टीनां समुदाचार उक्तः—"इहानन्द एकत्यः प्राणातिपातात् प्रतिविरतो भवति, यावन् मिथ्यादृष्टेः। इहाचारतः प्रतिविरतः, कायस्य भेदात् परं मरणाद् अपाय-दुर्गतिविनिपात-नरकेषूपपद्यते। तमेवं यः पश्यति श्रमणो वा ब्राह्मणो वा बाह्यतीर्थिक ऋद्धिमान् दिव्यचक्षुः परचित्तवित्, तस्यैवं भवति—नास्ति कायसुचरितम्, नास्ति कायसुचरितस्य विपाकः; नास्ति वाङ्मनःसुचरितस्य विपाकः"

पूर्वान्तकल्पकानां च शाश्वतवादिनामेकत्यशाश्वतिकानाम् अहेतुसमुत्पत्तिकानां च

(        ) इति विस्तरः। इयं मिथ्यादृष्टिः कामधात्वालम्बना; तस्य कर्मणः कामावचरत्वात्, तत्रैव च नरकसम्भवादिति। *पूर्वान्तकल्पकानां च शाश्वतवादिनाम्।* *ब्रह्मजालसूत्रे* (दी० नि० १.१) वीतरागाणां कामधात्वालम्बनानां दृष्टीनां समुदाचार उक्तः। पूर्वजन्मदर्शनानुसारेण य एवमुत्पन्नदृष्टिकाः, ते पूर्वान्तकल्पकाः। शाश्वतवादिनो बहवस्तत्रोक्ताः। तेषामुदाहरणमेकं दर्शयिष्यामः—"इहैकत्यः श्रमणो वा ब्राह्मणो वा अरण्यगतो वा वृक्षमूलगतो वा शून्यागारगतो वा आतप्तान्वयात्, प्रहाणान्वयात्, भावनान्वयात्, बहुलीकारान्वयात् सम्यङ्मनसिकारान्वयात् तद्रूपं शान्तं चेतःसमाधिं स्पृशति। यथासमाहिते चित्ते विंशतिं संवर्तविवर्तकल्पान् समनुस्मरति। तस्यैवं भवति—शाश्वतोऽयमात्मा, लोकश्चेति। तदेवं सर्व एवैते पूर्वान्तकल्पाः शाश्वतवादिनः अनया शाश्वतदृष्ट्या आत्मानं लोकं चालम्बमानाः कामधातुमप्यालम्बन्ते।" इत्येवं कामधात्वालम्बमानानां दृष्टीनां समुदाचार उक्तः।

तथा तस्मिन्नेव *ब्रह्मजालसूत्रे* पूर्वान्तकल्पकानामेकत्यशाश्वतिकानां वीतरागाणां कामधात्वालम्बनानां दृष्टीनां समुदाचार उक्तः। कथम्? "भवति भिक्षवः स समयो यदयं लोकः संवर्तते, संवर्तमाने लोके यद्भूयसा सत्त्वा आभास्वरे देवनिकाय उपपद्यन्ते। ते तत्र भवन्ति रूपिणो मनोमया अविकला अहीनेन्द्रियाः सर्वाङ्गप्रत्यङ्गोपेताः शुभा वर्णस्थायिनः स्वयम्प्रभाः विहायसङ्गमाः प्रीतिभक्षाः प्रीत्याहारा दीर्घायुषा दीर्घमध्वानं तिष्ठन्ति। भवति भिक्षवः स समयो यदयं लोको विवर्तते, विवर्तमाने लोके आकाशे शून्यं ब्राह्मं विमानमभिनिर्वर्तते। अथान्यतरः सत्त्व आयुःक्षयात् पुण्यक्षयात् कर्मक्षयात् आभास्वराद् देवनिकायाच्च्युत्वा शून्ये ब्राह्मे विमान उपपद्यते। स तत्रैकाकी अद्वितीयोऽनुपस्थायको दीर्घायुर्दीर्घमध्वानं तिष्ठति। अथ तस्य सत्त्वस्य दीर्घस्याध्वनोऽत्ययात् तृष्णोत्पन्ना, अरतिः सञ्जाता—'अहो बतान्येऽपि सत्त्वा इहोपपद्येरन् मम सभागतायाम्'। एवं च तस्य सत्त्वस्य चेतःप्रणिधिः। अन्ये च सत्त्वा आयुःक्षयात् पुण्यक्षयात् कर्मक्षयात् आभास्वराद् देवनिकायाच्च्युत्वा तस्य सत्त्वस्य सभागतायामुपपन्नाः। अथ तस्य सत्त्वस्यैतदभवत्—'अहमस्म्येकाकी अद्वितीयोऽनुपस्थायको दीर्घायुः' यावद् 'अन्येऽपि सत्त्वा इहोपपद्येरन् मम सभागतायाम्'। एवं चेतःप्रणिधिः। 'इमे च सत्त्वा इहोपपन्ना मम सभागतायाम्, मयैते सत्त्वा निर्मिताः, अहमेषां सत्त्वानामीश्वरः कर्ता निर्माता स्रष्टा सृजः पितृभूतो भावानाम्' इति। तेषामपि सत्त्वानामेवं भवति—'इमं वयं सत्त्वमद्राक्ष्म एकाकिनमद्वितीयमनुपस्थायकं दीर्घायुषं दीर्घमध्वानं तिष्ठन्तम्, तस्यास्य

वीतरागाणां च कामधात्वालम्बनानां दृष्टीनां समुदाचार उक्तः । न च रूपावचराणां क्लेशानां कामधातुरालम्बनम्; वीतरागत्वात् । तस्मात् कामप्रतिसंयुक्ता

---

सत्त्वस्य दीर्घस्याध्वनोऽत्ययात् तृष्णोत्पन्ना, अरतिः सञ्जाता—'अहो बतान्येऽपि सत्त्वा इहोपपद्येरन् मम सभागतायाम्' । एवं चास्य सत्त्वस्य चेतसः प्रणिधिः । वयं चेहोपपन्ना अस्य सत्त्वस्य सभागतायाम् । अनेन वयं सत्त्वेन निर्मिताः । एषोऽस्माकं सत्त्व ईश्वरो यावत् पितृभूतो भावानाम्' । अथान्यतरः सत्त्व आयुःक्षयात् पुण्यक्षयात् कर्मक्षयात् तस्मात् स्थानाच्च्युत्वा तेषामित्थन्त्वमागच्छति मनुष्याणां सभागतायाम् । स वृद्धेरन्वयाद् इन्द्रियाणां परिपाकात् केशश्मश्रूण्यवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया अगारादनागारिकां प्रव्रजति । सोऽरण्यगतो वा वृक्षमूलगतो वा विस्तरेण यावत् तद्रूपं शान्तं चेतःसमाधिं स्पृशति । यथासमाहिते चित्ते पूर्वकमात्मभावं समनुस्मरति, तस्यैवं भवति—'योऽसौ ब्रह्मा, येन वयं निर्मिताः, स नित्यो ध्रुवः शाश्वतोऽविपरिणामधर्मा । ये तु वयं तेन ब्रह्मणा निर्मिताः, ते वयमनित्या अध्रुवा अशाश्वता विपरिणामधर्माणः" इति । तदेवं कामधातुरपि तयाऽन्तग्राहदृष्ट्याऽऽलम्बितो भवति । अतः कामधात्वालम्बनानां दृष्टीनां समुदाचार उक्तः ।

तथा तत्रैव *ब्रह्मजालसूत्रे* अहेतुसमुत्पत्तिकानां पूर्वान्तकल्पानामिति प्रकृतम् । *वीतरागाणां कामधात्वालम्बनानां दृष्टीनां समुदाचार उक्तः ।* कथम्? "सन्ति रूपधातावसंज्ञिसत्त्वा नाम देवाः । संज्ञोत्पादात् तेषां सत्त्वानां तस्मात् स्थानाच्च्युतिर्भवति । अतोऽन्यतमः सत्त्वस्तस्मात् स्थानाच्च्युत्वा इत्थन्त्वमागच्छति मनुष्याणां सभागतायाम् । पूर्ववद् यावत् पूर्वकमात्मभावं समनुस्मरति । तस्यैवं भवति—'अहेतुसमुत्पन्न आत्मा लोकश्च' । तदनेनैवमेव भवति—अहेतुसमुत्पन्न आत्मा लोकश्च । अहमस्मि पूर्वं नाभूवम्, सोऽस्म्येतर्हि सम्भूत इत्यहेतुसमुत्पन्न आत्मा लोकश्च । इत्येवमात्मानं लोकं चालम्बमानास्तया मिथ्यादृष्ट्या कामधातुमप्यालम्बन्ते" इत्येनेषां कामधात्वालम्बनानां दृष्टीनां समुदाचार उक्तः ।

कथं च पुनरेषामात्मा लोकश्चाहेतुसमुत्पन्न इत्येवं मिथ्यादृष्टिर्भवति । पूर्वकृतं कुशलसास्रवमकुशलं वा न हेतुरात्मनो लोकस्येत्येवमपवदति । इति कामधातुवीतरागाणां तेषां रूपावचर्यस्ता दृष्टयो भविष्यन्तीति वचनावकाशं मत्वाह—*न च रूपावचराणां क्लेशानां कामधातुरालम्बनं वीतरागत्वादिति ।* नैताः कामावचर्यो दृष्टयः, मिथ्याज्ञानानि पुनरेतानि इति केचित् परिहरन्ति, तदेषामयुक्तम्; तद्दृष्टिरूपत्वात् ।

एव ता अप्रहीणा इति। दृष्ट्युत्पादसमकालं ते परिहीणा देवदत्त इवेति वैभाषिकाः ॥ ६ ॥

दृष्टयः पञ्च नामतो निर्दिष्टाः, न तु स्वभावतः, तत् कस्तासां स्वभावः ?

**आत्मात्मीयध्रुवोच्छेदनास्तिहीनाग्रदृष्टयः ।**
**अहेत्वमार्गे तद्दृष्टिरेतास्ताः पञ्च दृष्टयः ॥ ७ ॥**

१. आत्मदृष्टिरात्मीयदृष्टिर्वा सत्कायदृष्टिः। सीदतीति सत्। चयः कायः संघातः, स्कन्ध इत्यर्थः। सच्चायं कायश्चेति सत्कायः=पञ्चोपादानस्कन्धाः। नित्यसंज्ञां पिण्डसंज्ञां च त्याजयितुमेवं द्योतिता। एतत्पूर्वको हि तेष्वात्मग्रहः। सत्काये दृष्टिः सत्कायदृष्टिः। सर्वैव सास्रवालम्बना दृष्टिः सत्काये। आत्मात्मीयदृष्टिरेव तु सत्कायदृष्टिरुक्ता। यथा गम्येत सत्कायदृष्टिरियं नात्मनि नात्मीये वेति। यथोक्तम्—"ये केचिद् भिक्षवः श्रमणा वा ब्राह्मणा वा आत्मेति समनुपश्यन्तः समनुपश्यन्ति सर्वे त इमानेव पञ्चोपादानस्कन्धान्" ( ) इति।

२. तस्यैवात्माभिमतस्य वस्तुनो ध्रुवदृष्टिरुच्छेददृष्टिर्वा अन्तग्राहदृष्टिः, शाश्वतोच्छेदान्तग्रहणात्।

३. सति दुःखादिसत्ये नास्तीति दृष्टिर्मिथ्यादृष्टिः। सर्वैव हि विपरीतस्वभावप्रवृत्ता दृष्टिर्मिथ्यादृष्टिः एकैव तूक्ता; अतिशयवत्त्वात् दुर्गन्धक्षतवत्। एषा ह्यपवादिका, अन्यास्तु समारोपिकाः।

---

*परिहीणाः*। (कथं तर्हि वीतरागाणां कामालम्बनदृष्टिसमुदाचार इत्याह—*दृष्ट्युत्पादेत्यादि*।) *देवदत्त इवेति वैभाषिकः*। यथा देवदत्तो भगवतोऽल्पोत्सुकविहारिताशयस्य भिक्षुसङ्घपरिकर्षणाय पापकेच्छासमुत्पादादृद्धेः परिहीणः; सूत्रे वचनात्। एवं हि सूत्रे पठ्यते—"अथ देवदत्तस्य लाभसत्कारेणाभिभूतस्य इदमेवंरूपं पापकमिच्छागतमुत्पन्नम्—अहो बत मे भगवान् भिक्षुसङ्घं प्रतिनिःसृजेत्, अहं भिक्षुसङ्घं परिकर्षयन्...भगवानल्पोत्सुको विहरेत् दृष्टधर्मसुखविहारयोगमनुयुक्तः। सहचित्तोत्पादाद् देवदत्तस्तस्या ऋद्धेः परिहीण इति विस्तरः। एवं तेऽपि दृष्ट्युत्पादसमकालं *परिहीणा* इति ॥ ६ ॥

*एतत्पूर्वको हि तेष्वात्मग्राह* इति। नित्यपिण्डसंज्ञापूर्वकः। *सर्वैवेति*। पञ्चप्रकारापि। *सत्काय* इति। पञ्चसूपादानस्कन्धेषु। *सर्वैव हि विपरीतदृष्टिस्वभावप्रवृत्ता दृष्टिर्मिथ्यादृष्टिः* सत्कायदृष्ट्यादिका; मिथ्योपनिध्यानात्।

४. हीने अग्रदृष्टिर्दृष्टिपरामर्शः। किं हीनम् ? सर्वं सास्रवम् ; आर्यैः[1] प्रहीणत्वात्। तस्याग्रतो ग्रहणं दृष्टिपरामर्शः। 'दृष्ट्यादिपरामर्शः' इति वक्तव्ये आदिशब्दलोपः कृतः।

५. अहेतौ हेतुदृष्टिरमार्गे च[2] मार्गदृष्टिः शीलव्रतपरामर्शः। तद्यथा—महेश्वरो न हेतुर्लोकानाम्, तं च हेतुं पश्यति प्रजापतिमन्यं वा। अग्निजलप्रवेशादयश्च न हेतुः स्वर्गस्य, तांश्च हेतुं पश्यति। शीलव्रतमात्रकं सांख्ययोगज्ञानादयश्च न मार्गो मोक्षस्य, तांश्च मार्गं पश्यति। अत्रापि किलादिशब्दलोपः कृत इत्येतास्ताः पञ्च दृष्टयो वेदितव्याः। सत्यकारणे कारणदृष्टिः शीलव्रतपरामर्शः ॥ ७ ॥

कस्मादयं न समुदयदर्शनप्रहातव्यः। यो हि कश्चिदीश्वरं प्रजापतिमन्यं वा कारणं पश्यति स तन्नित्यमेकं चात्मानं कर्तारमभिनिविश्य। तद्यस्मात् सः—

**ईश्वरादिषु नित्यात्मविपर्यासात् प्रवर्तते।**
**कारणाभिनिवेशोऽतो दुःखदृग्घेय एव सः ॥ ८ ॥**

दुःखदर्शनादेव हि तेषु तौ नित्यात्मग्राहौ प्रहीयेते। तस्मात् तत्कृतोऽपि कारणाभिनिवेशस्तत एव प्रहीयते।

---

*अन्यास्तु समारोपिका* इति। कथमुच्छेददृष्टिः समारोपिका ? बाहुलिक एष निर्देशः। *आर्यैः प्रहीणत्वादिति*। त्यक्तत्वात्। "ओहाक् त्यागे"(पा० धा० जु०) इत्येतस्य धातोर्ग्रहणात्। *आदिशब्दलोपः कृत इति*। दृष्ट्यादीनामुपादानस्कन्धानां परत्वेन प्रधानत्वेनामर्शो दृष्टिपरामर्श इति। परशब्दप्रयोगेण चायमतिशयार्थो लभ्यत इत्याचार्यसङ्घभद्रः।

*अहेतौ हेतुदृष्टिरिति*। दुःखदर्शनप्रहातव्य उच्यते। *अमार्गे च मार्गदृष्टिरिति*। मार्गदर्शनप्रहातव्यः। *शीलव्रतमात्रकमिति*। शीलव्रतमपि बुद्धानां मोक्षप्राप्तये भवति, न तु तन्मात्रकमित्यतस्तदन्येषां दृष्टिः। *अत्रापि किल आदिशब्द इति*। शीलव्रतादिपरामर्शः शीलव्रतपरामर्शः। किं कारणम् ? शीलव्रतं हि रूपस्कन्धसंगृहीतम्। अतोऽन्यस्कन्धग्रहणार्थमादिशब्द इति ॥ ७ ॥

*कस्मादयं न समुदयदर्शनप्रहातव्य* इति। हेतौ विप्रतिपन्नत्वादित्यभिप्रायः। *तत्कृतोऽपि कारणाभिनिवेश* इति। नित्यैकात्मकर्तृग्राहकृतोऽपीत्यर्थः। *तत एव*

---

१. आर्यः–जा०। २. का० पुस्तके नास्ति।

यस्तर्हि जलाग्निप्रवेशादिभिः स्वर्गोपपत्तिं पश्यति शीलव्रतेन वा शुद्धिम्, सोऽपि दुःखदर्शनप्रहातव्य एव। एष हि शास्त्रपाठः—"ये चैवन्दृष्टय एवंवादिनो यदयं पुरुषपुद्गलो गोशीलं समादाय वर्तते मृगशीलं कुक्कुरशीलम्, स तेन शुध्यति मुच्यते, सुखदुःखं व्यतिक्रामति, सुखदुःखव्यतिक्रमं चानुप्राप्नोति। अकारणं कारणतः प्रत्येति शीलव्रतपरामर्शो दुःखदर्शनप्रहातव्यः" ( ) इति विस्तरः।

किं पुनः कारणमसौ दुःखदर्शनप्रहातव्यः? दुःखे विप्रतिपन्नत्वादतिप्रसङ्गः; सर्वेषां सास्रवालम्बनानां दुःखे विप्रतिपन्नत्वात्।

कीदृशो वाऽन्यः शीलव्रतपरामर्शो मार्गदर्शनप्रहातव्यः? यो मार्गदर्शनप्रहातव्यालम्बनः। सोऽपि हि नाम दुःखे विप्रतिपन्नः। यस्य च मार्गालम्बना

---

*प्रहीयत* इति। दुःखदर्शनादेव प्रहीयते। *यस्तर्हि जलाग्निप्रवेशादिभिः स्वर्गोपपत्तिं पश्यति, शीलव्रतेन वा शुद्धिमिति*। नायं तत्कर्तृकः कारणाभिनिवेशः, कथं दुःखदर्शनात् प्रहीयते! तस्मात् समुदयदर्शनप्रहातव्य एवायं भविष्यतीत्यभिप्रायः।

*वैभाषिक* आह—*सोऽपि दुःखदर्शनप्रहातव्य* इति। विस्तरः—*दुःखे विप्रतिपन्नत्वाद्* इति *वैभाषिकः*। कथं च पुनर्दुःखे विप्रतिपन्नः? तेन स्वर्गे गमनाच्छुद्धिदर्शनाद्वा। *अतिप्रसङ्ग* इति विस्तरेणा*चार्यः*। *सर्वेषां सास्रवालम्बनानाम*दृष्टिस्वभावानां च दुःखादिदर्शनप्रहातव्यानां *दुःखे विप्रतिपन्नत्वात्*। 'सर्वं हि सास्रवं वस्तु दुःखम्' इति दुःखदर्शनप्रहातव्यप्रसङ्गः। तथा च सति न कश्चित् समुदयादिदर्शनप्रहातव्यः स्यात्।

इदं चापरं वक्तव्यम्- *कीदृशो वान्यः शीलव्रतपरामर्शो मार्गदर्शनप्रहातव्यः स वक्तव्यः*। योऽपि हि 'गोशीलादिना शुद्ध्यति, यावत् सुखदुःखव्यतिक्रमं चानुप्राप्नोति' इति पश्यति, तस्याप्ययमकारणं कारणतः प्रत्येतीति दुःखदर्शनप्रहातव्यः शीलव्रतपरामर्श इति पठ्यते।

*वैभाषिक* आह—*यो मार्गदर्शनप्रहातव्यालम्बन* इति। यो मार्गदर्शनहेयानष्टौ मिथ्यादृष्ट्यादीनालम्बते, स मार्गदर्शनप्रहातव्यः शीलव्रतपरामर्श इति। *सोऽपि हि नाम दुःखे विप्रतिपन्न* इत्याचार्यः। मिथ्यादृष्ट्यादयो हि मार्गदर्शनप्रहातव्या अष्टावनुशयाः शीलव्रतपरामर्शस्यालम्बनम्। ते च सास्रवत्वाद् दुःखसत्यसंगृहीताः। तत्र च स विप्रतिपन्न इति दुःखदर्शनप्रहातव्य

मिथ्यादृष्टिर्विचिकित्सा वाऽस्ति, स नास्ति मोक्षमार्ग इति पश्यन् विचिकित्सन् वा कथं तया शुद्धिं प्रत्येष्यति !

अथान्यं मोक्षमार्गं परामृश्य एष मोक्षमार्गो नास्तीत्याह, सोऽपि तेनैवान्येन शुद्धिं प्रत्येति न तथा मिथ्यादृष्ट्येति। तस्याप्यसौ मार्गदर्शनप्रहातव्यालम्बनो न सिध्यति।

यश्चापि समुदयनिरोधदर्शनप्रहातव्यालम्बनया मिथ्यादृष्ट्या शुद्धिं प्रत्येति स कस्मान्न तद्दर्शनहेयः ! तस्मात् परीक्ष्य एषोऽर्थः ॥ ८ ॥

---

एव स्यादित्यभिप्रायः। *यस्य* चेति। विस्तरः—यस्य च पुद्गलस्य नास्ति मार्ग इति मार्गालम्बना नित्या दृष्टिरस्ति विचिकित्सा वा, स पुद्गलः 'नास्ति मोक्षमार्गः' इति पश्यन्। *विचिकित्सा वा*। किमस्ति मार्गः, नास्तीति सन्दिहान्। कथं *तया* मिथ्यादृष्ट्या *शुद्धि प्रत्येष्यति* प्रतिपत्स्यते, एतया वा विचिकित्सयेति। मिथ्यादृष्टिविचिकित्सायोगाद् एव हि तस्य शुद्धिप्रतिपत्तिर्नास्ति।

*अथान्यमिति*। विस्तरः—अथान्यं *साङ्ख्यादिपरिकल्पितं मोक्षमार्गं परामृश्य* गृहीत्वा। एष मोक्षमार्गो बौद्धीयो नास्तीत्याह—*सोऽपीति*। तीर्थिकः। *तेनैवान्येन* साङ्ख्यादिपरिकल्पितेन *शुद्धि प्रत्येति*। *न तथा मिथ्यादृष्ट्येति* कृत्वा। *तस्याप्यसौ* शीलव्रतपरामर्शो *मार्गदर्शनप्रहातव्यालम्बनो न सिद्ध्यति*। किं तर्हि ? साङ्ख्यादिपरिकल्पितमार्गालम्बन एवेति।

अयं चान्यो दोषः—*यश्चापीति*। विस्तरः—यश्चापि मिथ्यादृष्टिकः समुदयनिरोधदर्शनप्रहातव्यया मिथ्यादृष्ट्या सिद्धि प्रत्येति, स कस्मान्न तद्दर्शनहेयः। स शीलव्रतपरामर्शः कस्मान्न समुदयनिरोधदर्शनहेय इत्यर्थः। *तस्मात् परीक्ष्य एषोऽर्थ* इति। यस्मादयं दुःखदर्शनप्रहातव्यः शीलव्रतपरामर्शो न सम्भवति, मार्गदर्शनप्रहातव्यश्च अतिप्रसङ्गादिदोषात्; तस्मात् परीक्ष्य एषोऽर्थः—शीलव्रतपरामर्शो दुःखदर्शनप्रहातव्यः मार्गदर्शनप्रहातव्यश्चेति। तदिदमाचार्येण संशयावद्यं कृतम्, न स्वमतं दर्शितम्।

अन्य आहुः—*योगाचारमतिमपेक्ष्यैवं* कृतम्। *योगाचारा* हि अष्टाविंशत्युत्तरं क्लेशशतं वर्णयन्ति। यथैव हि दुःखदर्शनप्रहातव्या इमे दशानुशया भवन्ति—सत्कायदृष्टिः, अन्तग्राहदृष्टिः, मिथ्यादृष्टिः, दृष्टिपरामर्शः, शीलव्रतपरामर्शः, विचिकित्सा, रागः, प्रतिघः, मानः, अविद्या चेति; तथैवेमे दश समुदयदर्शनप्रहातव्याः; तथैव च दश निरोधदर्शनप्रहातव्याः,

यदुक्तम्—"नित्यात्मविपर्यासात्" इति। किमेतावेव द्वौ विपर्यासौ ?

---

दृश मार्गदर्शनप्रहातव्या इति चत्वारिंशत् कामावचरा दर्शनहेया भवन्ति। भावनाहेयास्तु षट्—आकल्पिका सत्कायदृष्टिः, उच्छेददृष्टिः, सहजो रागः, प्रतिघः, मानः, अविद्या चेति; षट्चत्वारिंशत् कामावचरा अनुशया भवन्ति। रूपावचरास्त्वेकचत्वारिंशत्, एत एव प्रतिघवर्ज्याः। यथा रूपावचरा एवमरूपावचरा इति।

अत्र कश्चित् समाधिमाह—

यदुक्तम्—'अतिप्रसङ्गः, सर्वेषां सास्रवलम्बनानां दुःखे विप्रतिपन्नत्वात्' इति, अत्र ब्रूमः—नातिप्रसङ्गः; दुखादिमुखेन विप्रतिपत्तेः। यद्यपि सास्रवालम्बना दुःखसत्यविप्रतिपन्नाः, तथापि तु केचिद् दुःखमुखेन विप्रतिपन्नाः, केचित् समुदयमुखेन, केचिन्निरोधविप्रतिपन्नविप्रतिपन्नाः, केचिन्मार्गविप्रतिपन्नविप्रतिपन्नाः। तत्र ये दुःखमुखेन दुःखे विप्रतिपन्नाः ते दुःखदर्शनप्रहातव्याः। शीलव्रतपरामर्शश्च दुःखमुखेन दुःखे विप्रतिपन्नः, नित्यात्मग्रहणात्; तस्माद् दुःखदर्शनप्रहातव्यः। यस्तु मार्गदर्शनविप्रतिपन्नः, तद्यथा—*साङ्ख्यनिर्ग्रन्थादयः* स्वपरिकल्पितं मार्गं गृहीत्वा 'नास्ति बुद्धानां मोक्षमार्गः' इति मिथ्यादृष्टिमुत्पादयन्ति, तां च मिथ्यादृष्टिं शीलव्रतपरामर्शोऽग्रतः पश्यति, अयमेषां शीलव्रतपरामर्शो मार्गदर्शनप्रहातव्यः; मार्गविप्रतिपन्नविप्रतिपन्नत्वात्। नास्ति तु स शीलव्रतपरामर्शो यः समुदयमुखेन विप्रतिपद्यते। नापि यो निरोधमुखेन विप्रतिपन्नविप्रतिपन्नः स्यात्। तस्माद् दुःखमार्गदर्शनप्रहातव्य एवायं शीलव्रतपरामर्श इति।

कथं पुनः समुदयनिरोधमुखेन विप्रतिपद्येत ?

अत्राचार्यः *सङ्घभद्र* आह—शीलव्रतपरामर्शः समुदयनिरोधदर्शनप्रहातव्यः, तच्छरीरानुपपत्तेः। अकारणे हि कारणाभिनिवेशः, अमार्गे च मार्गाभिनिवेशः शीलव्रतपरामर्शशरीरम्। समुदयापवादिकायां मिथ्यादृष्टयां शुद्ध्यभिनिवेशे नन्वाकस्मिकाऽजन्मदर्शनमस्य स्यात्, क्वचिदपि कारणबुद्ध्यभावात्। दुःखसमुदययोर्हि द्रव्यतोऽव्यतिरेकात्। ईश्वरादिस्कन्धा अपि तेनापोदिताः स्युः। निरोधापवादिकायां तु मिथ्यादृष्टौ शुद्धिप्रत्यागमनान्निरोधोपायकल्पनैव न सम्भवति। कथम्? 'नास्ति निरोधः' इति तद्दर्शनपृष्ठेन तदुपायकल्पना व्यर्था भवेत्। एवं च शीलव्रतपरामर्शशरीरानुपपत्तिः। मार्गदर्शनप्रहातव्योऽपि शीलव्रतपरामर्श एवं न सम्भवेत्, 'नास्ति मार्गः' इति दर्शनपृष्ठेन मार्गपरिकल्पनानुपपत्तेः; यस्य हि मार्गालम्बना मिथ्यादृष्टिर्विचिकित्सा वास्ति, स

चत्वारो विपर्यासाः—अनित्ये नित्यमिति, दुःखे सुखमिति, अशुचौ शुचीति, अनात्मन्यात्मेति ।

अथैतद् विपर्यासचतुष्कं किंस्वभावम् ?

---

'नास्ति मोक्षमार्गः' इति पश्यन् विचिकित्सन् वा कथं तया शुद्धिं प्रत्येष्यतीति ? उपपद्यत एवैष आर्यमार्गापवादिकायां मिथ्यादृष्टथां शुद्धयभिनिवेशः; न्यायतस्तद्ग्रहणात् । अन्यो हि तेन मोक्षमार्गो हृदि निवेशितो भवति, यतोऽस्य सद्भूतमार्गापवादिकायां मिथ्यादृष्टौ न्यायबुद्धिरुत्पद्यते । एष न्यायो यद् अन्यो मोक्षमार्गो नास्ति । यच्च 'स्यान्न वा' इति अन्यं मोक्षमार्गं विचिकित्सतीति न्यायतो हि शुद्धयुपायग्रहणमुपपद्यते । यश्चैवान्यो मोक्षमार्गस्तेन हृदि निवेशितः, स नैव तस्य मार्गदर्शनहेयस्य शीलव्रतपरामर्शस्य विषयः; स्वनैकायिकमात्रालम्बनत्वात् ।

अथ मतम्—निरोधदर्शनहेयोऽपि प्रयुज्यते, तत्कल्पनासामर्थ्यात् । अन्यद्धि तेन मोक्षस्थानं हृदि निवेशितं भवति; यतोऽस्य सद्भूतमोक्षापवादिकायां मिथ्यादृष्टौ न्यायतो ग्रहणम् । अथ समानमेतदिति ? तन्न; नित्यशान्तग्रहणसामान्येन तदपवादे शुद्धयभिनिवेशानुपपत्तेः । द्रव्याद्रव्यसम्प्रतिपत्तिभेदे हि कश्चिन्मोक्षोपायमन्वेषते, 'ध्रुवं तस्यास्ति मोक्षः' इति निश्चयः । यस्य चास्ति मोक्षनिश्चयो ध्रुवम्, तस्य तत्र नित्यशान्तग्रहणम् । अन्यथा तत्र प्रार्थनानुपपत्तेः । तत्र यथेहधार्मिकाणां निर्वाणे द्रव्याद्रव्यसम्प्रतिपत्तिभेदोऽपि नित्यशान्तग्रहणसामान्यात् तदपवादे दोषो दर्शनमेव । येनापि किञ्चन मोक्षस्थानं हृदि निवेशितं स्यात्, तस्यापि नित्यशान्तग्रहणसामान्येन मोक्षापवादे न्यायग्रहणमुपपद्यते । भिन्ना हि शीलव्रतादयः स्वभावतश्चाकारतश्च आर्यमार्गात् । नास्ति तु नित्यशान्तग्रहणभेद इति नास्ति कल्पनासामान्यम् । अतो मार्गदर्शनप्रहातव्य एव शीलव्रतपरामर्शः, न निरोधदर्शनप्रहातव्य इति ।

इह शीलव्रतपरामर्शो द्विःप्रकार इष्यत *आभिधर्मिकैः*, तत्र कीदृशः शीलव्रतपरामर्शो दुःखदर्शनप्रहातव्यो व्यवस्थाप्यते, कीदृशो मार्गदर्शनप्रहातव्यः ? योऽपि हि गोशीलादिना शुद्धिं प्रत्येति, सोऽप्यमार्गे मार्गं पश्यति । यः शीलव्रतादिदुःखालम्बनः शीलव्रतपरामर्शः, स दुःखदर्शनप्रहातव्यः । यो मार्गविप्रतिपत्त्यालम्बनः, स मार्गदर्शनप्रहातव्यः । यः शीलव्रताद्यालम्बनः, स न मार्गविप्रतिपत्तिः । तथा न बाधते यथा मार्गविप्रतिपत्त्यालम्बनः; यस्माच्छीलव्रताद्यालम्बन औदरिकः, न दूरगतः, न दृढाशयः, अल्पयत्नघात्यः । तद्विपर्ययात् मार्गविप्रतिपत्त्यालम्बन इति ॥ ८ ॥

**दृष्टित्रयाद् विपर्यासचतुष्कम्,**

अन्तग्राहदृष्टेः शाश्वतदृष्टिर्नित्यविपर्यासः। दृष्टिपरामर्शात् सुखशुचिविपर्यासौ। सत्कायदृष्टेरात्मविपर्यासः।

**सकलेत्यपरे।**

कथमात्मीयदृष्टिर्विपर्यासः। कथं च न भवितव्यम्[1] ? **विपर्याससूत्राद्।** आत्मानमेव तत्र वासिनं[2] पश्यन्नात्मीयं पश्यतीत्यात्मदृष्टिरेवासौ द्विमुखी अथाहमित्येतस्मात् ममेति दृष्ट्यन्तरं स्यात्। मया मह्यमित्येतदपि स्यात्।

कस्मादन्ये क्लेशा न विपर्यासाः ? यस्मात् त्रिभिः कारणैर्विपर्यासानां व्यवस्थानम्।

कतमैस्त्रिभिः ?

**विपरीततः।**

**नितीरणात् समारोपात्,**

---

"*दृष्टित्रयाद्विपर्यासचतुष्कम्*" इति। दृष्टित्रयस्वभावा विपर्यासा इति दर्शयति। *सत्कायदृष्टेरात्मविपर्यास* इति। नात्मीयदृष्टिरित्यभिप्रायः।

*सकलेत्यपर* इति। सकला सत्कायदृष्टिरात्मदृष्टिरात्मीयदृष्टिश्च आत्मविपर्यास इत्यर्थः।

*वैभाषिक* आह– *कथमात्मीयदृष्टिर्विपर्यास* इति। न ह्यात्मीयविपर्यास इत्युच्यते। *कथं च न भवितव्यमिति* परः। *विपर्याससूत्रादिति* वैभाषिकः। "अनात्मनि आत्मेति विपर्यासः" इति सूत्रवचनात्। न पुनरात्मीय इति। अस्त्येवं सूत्रनिर्देशः, न पुनरसावात्मदृष्टेरर्थान्तरभूता। कथं कृत्वा ? *आत्मानमेव तत्र* पञ्चोपादानस्कन्धेषु *वासिनं पश्यन् आत्मीयं पश्यतीति*। न केवलमात्मानं पश्यति, आत्मीयमपि पश्यतीत्यर्थः। *आत्मदृष्टिरेवासौ द्विमुखीति*। आत्मात्मीयमुखी एका द्रव्यतोऽस्तीति अहङ्कार-ममकारमुखद्वयवतीत्यर्थः। *अथाहमिति*। एतस्मात् प्रथमानिर्देशान्*ममेति* षष्ठीनिर्दिष्टं स्यात्। *मया, मह्यमित्येतदपि स्यात्*। दृष्ट्यन्तरमिति प्रकृतम्। मयेति तृतीयानिर्देशात्, मह्यमिति च चतुर्थीनिर्देशात्। अनिष्टं चैतत्। तस्मात् सकलेति सिद्धम्।

*कस्मादन्ये क्लेशा न विपर्यासा* इति। सत्कायदृष्ट्यन्तग्राहदृष्टिपरामर्शे-

---

१. विपर्यासः–का०। २. वशिनं–का० ; वाशिनं—जा०।

एकान्तविपर्यस्तत्वादालम्बने नितीरकत्वात्, समारोपणाच्च । उच्छेददृष्टि-र्मिथ्यादृष्टिश्च न समारोपिके; अभावमुखप्रवृत्तत्वात् । शीलव्रतपरामर्शो नैकान्त-विपर्यस्तः; तन्मात्रशुद्ध्यालम्बनत्वात् । अन्ये क्लेशा न सन्तीरकाः, अतो न विपर्यासाः ।

यत्तर्हि सूत्रे उक्तम्—"अनित्ये नित्यमिति संज्ञाविपर्यासः चित्तविपर्यासो दृष्टिविपर्यासः" (   ) इति ? दृष्टिरेवात्र विपर्यासः ।

**संज्ञाचित्ते तु तद्वशात् ।। ९ ।।**

दृष्टिविपर्यासवशादेव तत्सम्प्रयुक्ते संज्ञाचित्ते विपर्यासावुक्तौ ।

वेदनादयोऽपि कस्मान्नोक्ताः ? लोकप्रसिद्ध्या । लोके हि विपर्यस्तसंज्ञो विपर्यस्तचित्त इति प्रसिद्धम्, न पुनर्विपर्यस्तवेदन इति ।

त एते विपर्यासाः सर्वेऽपि स्रोतआपन्नस्य प्रहीणा भवन्ति; दर्शनप्रहेय-त्वाद् दृष्टीनां ससम्प्रयोगाणाम् । द्वादश विपर्यासाः—अनित्ये नित्यमिति संज्ञादृष्टिचित्तविपर्यासास्त्रयः, एवं यावदनात्मन्यात्मेति । तत्राष्टौ दर्शनप्रहातव्याः,

---

भ्योऽन्ये उच्छेद-मिथ्यादृष्टिशीलव्रतपरामर्शरागादयः । *त्रिभिः कारणैरिति* । *विपरीत-नितीरण-समारोपैः* । विपर्यासानां व्यवस्थापनम् । यत्रैतानि समस्तानि कारणानि सन्ति, ते विपर्यासाः स्थापिताः; यत्र तु न समस्तानि ते न विपर्यासाः—इत्युक्तं भवति ।

*तन्मात्रशुद्ध्यालम्बनादिति* । यस्माच्छीलव्रतमात्रेण शुद्धिरित्यालम्बते नितीरयति, तस्मान्नैकान्तविपर्यस्तः शीलव्रतपरामर्शः । न हि शीलव्रतं शुद्धिकारणं न भवति, केवलं तु न भवतीति । कथमस्य समारोपकत्वम् ? तन्मात्रेण शुद्धिकारणभावसमारोपात् । यद्यसन्तीरको न विपर्यासः, *यत्तर्हि सूत्र उक्तं तत् कथम् ?* न हि संज्ञा सन्तीरिका, नापि चित्तम् ।

*द्वादश विपर्यासा* इति । चतुर्षु विपर्यासेषु प्रत्येकं संज्ञा-चित्त-दृष्टिविपर्यासा इति । कथम् ? इत्युच्यते–*अनित्ये नित्यमिति विस्तरः* । *एवं यावदनात्मन्यात्मे*ति । दुःखे सुखमिति संज्ञा-दृष्टि-चित्तविपर्यासास्त्रयः । अशुचौ शुचीत्येत एव त्रयः । यावदनात्मन्यात्मेति एत एव त्रय इति । *तत्राष्टौ दर्शनप्रहातव्या* इति । अनित्ये नित्यमिति संज्ञा-चित्त-दृष्टिविपर्यासास्त्रयः । अनात्मन्यात्मेति पुनस्त्रयः । दुःखे सुखमिति दृष्टिविपर्यासः । अशुचौ शुचीति दृष्टिविपर्यास

**चत्वारो भावनाप्रहातव्याः । दुःखे च संज्ञाचित्तविपर्यासावशुचौ चेति निकायान्तरीयाः । इतरथा हि कथमन्तरेण सुखशुचिसंज्ञामवीतरागस्यार्यस्य कामरागः सम्भवेदिति ।**

**तदेतन्नेच्छन्ति वैभाषिकाः । यदि हि सुखशुचिसंज्ञाचित्तसमुदाचारादार्यस्य तद्विपर्यासावीक्ष्येते, सत्त्वसंज्ञाचित्तसमुदाचारात् तद्विपर्यासावपि किं नेष्येते ! न हि स्त्रियामात्मनि च विना सत्त्वसंज्ञया कामरागो युक्त इति ।**

**सूत्रेऽपि चोक्तम्—"यतश्च श्रुतवानार्यश्रावक इदं दुःखमार्यसत्यमिति यथाभूतं प्रजानाति । यावत् तस्य तस्मिन् समये योऽनित्ये नित्यमिति संज्ञाविपर्यासः चित्तविपर्यासो दृष्टिविपर्यासः स प्रहीयते" इति ( ) विस्तरः । तस्माद् दृष्टिसमुत्थे एव संज्ञाचित्ते विपर्यासौ, नान्ये; तत्कालभ्रान्तिमात्रत्वादलातचक्र-चित्रयक्षभ्रान्तिवत् ।**

---

इति । *चत्वारो भावनाप्रहातव्याः ।* कथम् ? इत्याह—*दुःखे च संज्ञाचित्तविपर्यासावशुचौ* चेति । दुःखे सुखमिति संज्ञाचित्तविपर्यासौ द्वौ । अशुचौ शुचीति संज्ञाचित्तविपर्यासावपरौ द्वाविति चत्वारः । *अवीतरागस्यार्यस्येति* । स्रोतआपन्नस्य सकृदागामिनश्च ।

*तद्विपर्यासापीति* । सत्त्वसंज्ञासमुदाचारात्, सत्त्वचित्तसमुदाचाराच्च । *तद्विपर्यासावपि किं नेष्येते* इति । सत्त्वालम्बनसंज्ञाचित्तविपर्यासावपि किं नेष्येते । आत्मविपर्यासावपि किं नेष्येते इत्यभिप्रायः । किं कारणम् ? इत्याह—*नहि स्त्रियामात्मनि च विना सत्त्वसंज्ञया* कामरागो युक्त इति । तस्मादेतावप्यनात्मनि आत्मेति संज्ञाचित्तविपर्यासौ भावनाप्रहातव्याविति प्राप्तम् । *विस्तर* इति वचनादेवं नेयम्—दुःखे सुखमिति अशुचौ शुचीति यावदनात्मन्यात्मेति संज्ञाविपर्यासः, चित्तविपर्यासः, दृष्टिविपर्यासः प्रहीयत इति । तस्माद् *दृष्टिसमुत्थे एव* दृष्टिसम्प्रयुक्तक एव *संज्ञाचित्ते विपर्यासौ, नान्ये* । नादृष्टिसम्प्रयुक्तके इत्यर्थः । एतदुक्तं भवति—अस्त्यसौ संज्ञाचित्तविभ्रमः, न तु विपर्यासः; यस्मादसौ दृष्टिसमुत्थो न भवति । कस्माद् ? इत्याह—*तत्कालभ्रान्तिमात्रत्वादिति* । स्त्रीदर्शनकाले भ्रान्तिमात्रत्वादित्यभिप्रायः । यस्मात् तत्कालमेव दर्शनकालमेवार्याणां भ्रान्तिः । तथा मिथ्याज्ञानं भवति । *अलातचक्र-चित्रयक्षभ्रान्तिवत्* । यथा अलात आशु भ्रम्यमाणे तत्कालमात्रं चक्रमिति भ्रान्तिरुत्पद्यते, न पश्चात् । चित्रलिखितं च यक्षं दृष्ट्वा तत्काले भ्रान्तिरुत्पद्यते—यक्ष इति ।

**यत्तर्हि स्थविरानन्देनार्यवागीशमधिकृत्योक्तम्—**

**"विपर्यासेन[1] संज्ञानां चित्तं ते परिदह्यते।**
**निमित्तं वर्ज्यतां तस्माच्छुभं रागोपसंहितम्" ॥**

**तस्मात् सर्व एवाष्टौ संज्ञाचित्तविपर्यासाः शैक्षस्याप्रहीणा इत्यपरे। तेऽपि चार्यसत्यानां यथाभूतज्ञानात्[2] प्रहीयन्ते। न विना तेनेत्युपायसमाख्यानान्नास्ति सूत्रविरोधः ॥ ९ ॥**

---

तद्वत्। आर्यस्यात्र परिध्यानान्मुहूर्तं सुखशुचिभ्रान्तिः, सत्त्वभ्रान्तिर्वा, न त्वसौ विपर्यासः। उक्तं हि *भगवता* "धन्याः खलु भिक्षव श्रुतवत आर्यश्रावकस्य स्मृतिसम्प्रमोषा उत्पद्यन्ते, अथ च पुनः क्षिप्रमेवास्तं परिक्षयं पर्यादानं गच्छन्ति" (　　　) इति।

यद्यसौ संज्ञाचित्तभ्रमो न विपर्यासः, *यत्तर्हि स्थविरानन्देनेति* विस्तरः। आर्येण *वागीशेन* स्थविर *आनन्द* उक्तः—

कामरागाभिभूतत्वाच्चित्तं मे परिदह्यते।
अङ्ग मे गौतम ब्रूहि शान्तित्वमनुकम्पय ॥ (　　　) इति।

आर्य *आनन्दस्तं* प्रत्याह—

*विपर्यासेन संज्ञानां चित्तं ते परिदह्यते।*
*निमित्तं वर्ज्यतां तस्माच्छुभं रागोपसंहितम्* ॥ (　　　) इति।

स हि स्रोतापन्नः। तस्य चानया गाथया विपर्यासास्तित्वं परिदीपितमिति।

*तस्मादिति* विस्तरः। यस्मान्निकायान्तरीयमतं *वैभाषिकैरागमेन* विरुद्ध्यते, वैभाषिकमतं च निकायान्तरीयैः; तस्मात् सर्व एवाष्टौ संज्ञा*चित्तविपर्यासाः शैक्ष्याप्रहीणा इत्यपरे*। केचित् तृतीयपाक्षिकाः। सूत्रविरोधं च परिहरन्ति। कतरस्य सूत्रस्य? यदिदं वैभाषिकैः सूत्रमानीतम्—'यश्च श्रुतवान् आर्यश्रावक इति विस्तरेण यावत् प्रहीयते' इति। *तेऽपि चार्यसत्यानामिति* विस्तरः। तेऽपि चाष्टौ संज्ञा चित्त-विपर्यासा आर्यसत्यानां दुःखादीनां यथाभूतज्ञानात् प्रहीयन्ते। *न विना तेन* यथाभूतज्ञानेन। *इत्युपायसमाख्यानात्* उपायप्रवर्तनात् *नास्ति तस्य सूत्रस्य विरोधः*। यदिदमुक्तम्—"इदं दुःखम् आर्यसत्यम्, अयं दुःखसमुदयः, अयं दुःखनिरोधः, इयं दुःखनिरोधगामिनी प्रतिपद् आर्यसत्यम्" (　　　) इति, तन्न दर्शनमार्गमेवाधिकृत्य, किं तर्हि? भावनामार्गमपि। भावनामार्गोऽपि ह्यनास्रवश्चतुरार्यसत्यालम्बन एवेति ॥ ९ ॥

---

१. विपर्यासे च—का०।　　　२. ०परिज्ञानात्—का०।

अथ किं दृष्ट्यनुशयस्य एव भेदः, नान्यस्य ? मानस्याप्यस्ति । कथम् ? इत्याह—

**सप्त मानाः,**

मानः, अतिमानः, मानातिमानः, अस्मिमानः, अभिमानः, ऊनमानः, मिथ्यामानश्च ।

अभेदेन चित्तस्योन्नतिर्मान उक्तः । स प्रवृत्तिभेदात् सप्तधा भवति—१. हीनाद् विशिष्टः समेन वा समोऽस्मीति मन्यमानस्योन्नतिर्मानः । २. समाद्विशिष्टोऽस्मीत्यतिमानः[1] । ३. विशिष्टाद्विशिष्टोऽस्मीति मानातिमानः । ४. पञ्चोपादानस्कन्धानात्मत आत्मीयतो वा मन्यमानस्यास्मिमानः । ५. अप्राप्ते विशेषाधिगमे प्राप्तो मयेत्यभिमानः । ६. बह्वन्तरविशिष्टादल्पान्तरहीनोऽस्मीत्यूनमानः । ७. अगुणवतो गुणवानस्मीति मिथ्यामानः ।

यत्तर्हि शास्त्रे नव मानविधा उक्ताः—"श्रेयानस्मीति मानविधा, सदृशोऽस्मीति मानविधा, हीनोऽस्मीति मानविधा, अस्ति मे श्रेयान्, अस्ति मे सदृशः, अस्ति मे हीनः, नास्ति मे श्रेयान्, नास्ति मे सदृशः, नास्ति मे हीनः" इति ? एभ्य एव मानेभ्य एताः

**नवविधास्त्रिभ्यः,**

कतमेभ्यस्त्रिभ्यः ? मानातिमानोनमानेभ्यः । तत्र प्रथमं त्रयम्—दृष्टिसंनि-

---

*प्रवृत्तिभेदादिति* । आकारभेदादित्यर्थः । *अप्राप्ते विशेषाधिगमे* इति । समाधिसन्निश्रिताः सास्रवाश्च धर्मा *विशेषास्तस्याधिगमः* प्राप्तो मयेत्यभिमानः । *अगुणवतो गुणवानहमिति* । अगुणान्वित गुणवानहमस्मीति विपरीतविषयो मानो *मिथ्यामानः* । मिथ्यामानाभिमानयोः कः प्रतिविशेषः ? प्रतिलाभ-विशेषाधिगम-प्रतिरूपकगुणस्याभिप्राय इति सवस्तुकोऽभिमानः । मिथ्यामानस्तु निर्गुणस्य सतो गुणवानहमस्मीति निर्वस्तुकः । *मानविधा* इति । मानप्रकारः । सदृशो हीनोऽस्तीति मानविधा । सदृशोऽस्मीति मानविधा, हीनोऽस्मीति मानविधेति वक्तव्यम् ।

*दृष्टिसन्निश्रितास्त्रय* इति । पृथग्जनमधिकृत्य 'दृष्टिसन्निश्रिताः' इत्युच्यन्ते । आत्मदृष्टिः 'पूर्वमहम्' इति । पश्चाद् = अनन्तरम् इमे मानाः ।

---

१. ०त्यभिमानः—का० ।

श्रितास्त्रयो मानाः अतिमानमानोनमानाः। द्वितीयं त्रयम्—ऊनमानमानातिमानाः। तृतीयम्—मानातिमानोनमानाः।

युक्तस्तावद् बह्वन्तरविशिष्टादल्पान्तरहीनोऽस्मीत्यूनमानः; उन्नतिस्थानत्वात्। 'नास्ति मे हीनः' इत्यत्र किमुन्नतिस्थानम्? अस्ति सदृशो योऽभिप्रेते वरे सत्त्वराशौ निहीनमप्यात्मानं बहु मन्यते।

अपि चास्त्येव **ज्ञानप्रस्थान**विहितो विधिः। प्राकरणं तु निर्देशं परिगृह्य श्रेयानस्मीत्येकेषु मानोऽपि स्याद्, अतिमानोऽपि मानातिमानोऽपि, हीनसमविशिष्टापेक्षया।

अथैते सप्त मानाः किम्प्रहातव्याः? इत्याह—

**दृग्भावनाक्षयाः।**

दृग्भावनाभ्यामेषां क्षयः। एतदुक्तं भवति—**सर्वे** दर्शनभावनाप्रहातव्या इति यद् भावनाहेयमप्रहीणं किमवश्यं तदार्याणां समुदाचरति? नावश्यम्, तद्यथा

---

*अतिमान-मानोन्मानाः* यथाक्रममेते भवन्ति। कथम्? श्रेयानहमस्मीति मानविधा दृष्टिसन्निश्रितोऽतिमानः। सदृशोऽस्मीति मानविधा दृष्टिसन्निश्रितो *मानः*। हीनोस्मीति मानविधा दृष्टिसन्निश्रित *उन्मानः*। *द्वितीयं त्रयमेतत्* प्रातिलोम्येन यथाक्रमं नेयम्। 'अस्ति मे श्रेयान्' 'अस्ति मे सदृशः', 'अस्ति मे हीनः' इति दृष्टिसन्निश्रिता *उन्मान-मानातिमानाः*। *तृतीयम्* 'नास्ति मे श्रेयान्', 'नास्ति मे सदृशः', 'नास्ति मे हीनः' इति। यथाक्रमं दृष्टिसन्निश्रिता *मानातिमानोन्मानाः*। *प्राकरणं तु निर्देशं परिगृह्येति*। प्रकरणपादनिर्देशः। कोऽसौ? योऽसौ पूर्वमुक्तः—'हीनाद्विशिष्टोऽस्मि, समेन वा' इत्यादिनिर्देशः। श्रेयानस्मीति मानोऽपि स्याद् *हीनापेक्षया*; हीनाद्विशिष्टोऽस्मि समेन वा इति मानलक्षणनिर्देशात्। *अतिमानोऽप्ययं* स्यात् *समापेक्षया*। 'समाद् विशिष्टोऽस्मि' इत्यतिमानलक्षणनिर्देशात्। मानातिमानोऽप्ययं स्याद् *विशिष्टापेक्षया*; 'विशिष्टाद् विशिष्टोऽस्मि' इति मानातिमानलक्षणनिर्देशात्।

*सर्वे* इति ग्रहणमस्मिमानोऽपि भावनाप्रहातव्यः, न केवलं शेषाः। शेषा अपि दर्शनप्रहातव्याः, न केवलमस्मिमान इति प्रदर्शनार्थम्। *नावश्यमिति*। प्रहीणं न समुदाचरतीति नियमः। तथा हि—श्रद्धादिमिद्धदुःखेन्द्रियचक्षुरादयः प्रहीणा अपि समुदाचरन्ति; दर्शनहेयानामन्तर्मुखत्वात्। भावनाहेयालम्बनैव रागद्वेषमोहैर्विज्ञप्तिरुत्थाप्यत इति। भावनाहेयमेव वधादिपर्यवस्थानम्।

**वधादिपर्यवस्थानं हेयं भावनया,**

येन क्लेशपर्यवस्थानेन सञ्चिन्त्य प्राणिवधं कुर्याद् यावन्मृषावादम्, तद् भावनाहेयम्; भावनाहेयधर्मालम्बनत्वात् ।

**तथा ।। १० ।।**

**विभवेच्छा;**

विभवतृष्णाऽपि भावनाहेया । विभवो नाम क एष धर्मः ? त्रैधातुकी अनित्यता । तत्र प्रार्थना विभवतृष्णा । तथाशब्देन भवतृष्णायाः प्रदेशो गृह्यते । "अहो बताहमैरावणो नागराजः स्याम्" इत्येवमादि ।

मानविधा अपि भावनाप्रहातव्याः सन्तीत्युक्तमस्मिमानश्च ।

**न चार्यस्य सम्भवन्ति विधादयः ।**

**नास्मिता,**

---

"*वधादिपर्यवस्थानम्*" इति । आदिशब्देनादत्तादान-काम-मिथ्याचार-मृषावादग्रहणम् । *तद् भावनाहेयम्, भावनाहेयधर्मालम्बनत्वादिति* । भावनाहेया वधादिकसत्त्वादय एव धर्मा अस्यालम्बनमिति कृत्वा । सत्यदृष्ट्यादयोऽपि हि यद्यपि भावनाहेयान् धर्मानालम्बन्ते, न तु केवलं भावनाहेया इत्यतो न ते भावनाहेयाः । *तत्र प्रार्थनेति* । तत्र त्रैधातुक्यामनित्यतायां प्रार्थना । किं तत्रापि प्रार्थना भवति ? भवतीत्याह । यथोक्तं सूत्रे —"यावदयमात्मा जीवति, तिष्ठति, ध्रियते, यापयति ; तावत् सरोगः, सगन्धः, सशल्यः, सज्वरः, सपरिदाहकः । यतश्चायमात्मा उच्छिद्यते विनश्यति न भवति । इयताऽयमात्मा सम्यक् समुच्छिन्नो भवति" (    ) इति । *भवतृष्णायाः प्रदेशो गृह्यत* इति । अहो बताहमैरावणो नागराजः स्यामित्येवमादिका भवतृष्णा न समुदाचरति । आदिशब्देन 'कुबेरः स्याम्', 'स्त्री स्याम्' इत्येवमादिका गृह्यते । प्रदेशग्रहणात् 'इन्द्रः स्याम्' इत्येवमादिका समुदाचरतीति दर्शितं भवति ।। १० ।।

*मानविधा अपि भावनाप्रहातव्याः सन्तीत्युक्तमिति* । 'दृग्भावनाक्षयाः" (अभि० को० ५.१०) इति वचनात् ।

"*न चार्यस्य सम्भवन्ति विधादयो नास्मिता*" इति । पूर्वं भावनाहेयपरिग्रहणं कृतम्, "दृग्भावनाक्षयाः वधादिपर्यवस्थानं हेयं भावनया तथा विभवेच्छा" (अभि० ५.१०) इत्यनेन ग्रन्थेन । सम्प्रति तेषां विधादीनामार्यस्यासमुदाचार उच्यते—*न चार्यस्य सम्भवन्ति विधादयो नास्मितेति* ।

आदिग्रहणेन यावद् भवतृष्णाया[१] ग्रहणम् ।

किं कारणमप्रहीणा अप्येते न सम्भवन्ति[२] ?

दृष्टिपुष्टत्वात्

सत्कायदृष्टिपुष्टा हि मानविधा अस्मिमानश्च, अतो भग्नपृष्ठत्वात् नोत्थातु पुनरुत्सहन्ते । वधादिपर्यवस्थानं मिथ्यादृष्टिपुष्टत्वात् । विभवतृष्णा उच्छेद-दृष्टिपुष्टत्वात् । भवतृष्णायाः प्रदेशः शाश्वतदृष्टिपुष्टत्वात् ।

कौकृत्यं नापि चाशुभम् ॥ ११ ॥

अकुशलं चापि कौकृत्यं भावनाप्रहातव्यम् । न चार्यस्य तद् सम्भवति विचिकित्सासमुत्थितत्वात् ॥ १०–११ ॥

अथैषामष्टानवतेरनुशयानां कति सर्वत्रगाः ? कत्यसर्वत्रगाः ?

**सर्वत्रगा दुःखहेतुदृग्घेया दृष्टयस्तथा ।**
**विमतिः सह ताभिश्च याऽविद्याऽऽवेणिकी च या ॥ १२ ॥**

दुःखसमुदयदर्शनप्रहातव्या दृष्टयो विचिकित्सा च, ताभिश्च सम्प्रयुक्ता अविद्या आवेणिकी च दुःखसमुदयप्रहातव्ये चाविद्या । इतीमे एकादशानुशयाः सभागधातुसर्वत्रगाः—सप्त दृष्टयः, द्वे विचिकित्से, द्वे अविद्ये; सकलस्वधात्वा-लम्बनत्वात् ।

---

*आदिग्रहणेन यावद् भवतृष्णाया ग्रहणमिति* । वधादिपर्यवस्थानस्य विभवतृष्णायाः प्रदेशस्य भवतृष्णायाश्च ग्रहणमित्यर्थः । न *सम्भवन्ति* न समुदा-चरन्ति । *दृष्टिपुष्टत्वादिति* । तत्पूर्वकत्वेन तदुपबृंहितत्वात् *वधादिपर्यवस्थानं मिथ्यादृष्टिपुष्टम्* ; तदध्यासेन कर्मफलापवादित्वात् । *भग्नपृष्ठत्वात्* । तत्पोषका-भावेन भग्नपृष्ठत्वादित्यर्थः ।

*कौकृत्यं भावनाप्रहातव्यम्*, भावनाहेयधर्मालम्बनत्वात् ॥ ११ ॥

"*सर्वत्रगाः*" इति । सर्वत्र गच्छतीति सर्वत्रगः, पञ्चापि निकायान् आलम्बत इत्यर्थः । पञ्चानामपि निकायानां हेतुभावेनावतिष्ठन्त इत्यपरे । वक्ष्यति हि—"एषां प्रभावेणान्यनैकायिका अपि क्लेशा उपजायन्ते" इति । *एकादशानुशया* इति विस्तरः । *सप्त दृष्टयो* दुःखदर्शनप्रहातव्याः सत्कायदृष्ट्यादयः पञ्च, समुदयदर्शनप्रहातव्ये द्वे दृष्टीमिथ्यादृष्टि-परामर्शदृष्टीति—सप्त । *द्वे विचिकित्से*

---

१. विभवतृष्णायाः–का० ।  २. समुदाचरन्ति–का० ।

किमेभिर्युगपदालम्बते, आहोस्वित् क्रमेण ? यदि क्रमेण, अन्येषामपि प्रसङ्गः ? अथ युगपत्, कः सकलेन कामधातुना शुद्धिं प्रत्येत्यकारणं वा कारणतः ? नोच्यते[1] सकलं[1] स्वधातुं युगपदालम्बन्त इति, अपि तु पञ्चप्रकारमपि सर्वं युगपत् ।

एवमपि यत्रात्मदृष्टिस्तत्रात्मतृष्णा, यत्राग्रशुद्धिदृष्टी तत्र प्रार्थना[2], तेन च मान इति तृष्णामानयोरपि सर्वत्रगत्वं प्राप्नोति, एवं सति दर्शनभावनाहेयालम्बनत्वादेतदुभयं किम्प्रहातव्यं स्यात् ? भावनाप्रहातव्यम् ; व्यामिश्रालम्बनत्वात् ।

---

दुःख-समुदयदर्शनप्रहातव्ये । *द्वे अविद्ये* दुःख-समुदयदर्शनप्रहातव्ये एव । एकदेशतो न साकल्यतः । ये ह्यविद्ये एतत्सर्वत्रगसम्प्रयुक्ते, आवेणिक्यौ च ते सर्वत्रगे भवतः, न रागादिसम्प्रयुक्ते । इत्येवमेकादशानुशयाः सर्वत्रगाः । नवानुशयाः साकल्यतः, द्वावेकदेशत इति कृत्वा । धातुभेदेन तु त्रयस्त्रिंशत् ।

*आवेणिकीति* कोऽर्थः ? एवमाहुः— सम्पर्को वेणीत्युच्यते, न वेणिरवेणिः पृथग्भव इत्यर्थः । एवं ह्युक्तम् 'अवेणिर्भगवान्, अवेणिर्भिक्षुसङ्घः' इति । पृथग् भगवान्, पृथग् भिक्षुसङ्घ इत्यभिप्रायः । अवेण्या चरतीत्यावेणिकी । नान्यानुशयसहचारिणीत्यर्थः । *सकलस्वधात्वालम्बनत्वादिति* । यस्मादेते सकलं स्वधातुमालम्बन्ते, तस्मात् सर्वत्रगा इत्युच्यन्ते ।

कः *सकलेनेति* विस्तरः । कः सकलेन कामधातुना शुद्धिं प्रत्येति । अकारणं वा कारणतः सकलं कामधातुं प्रत्येतीत्यधिकृतम् । तस्माच्छीलव्रतपरामर्शो न सर्वत्रग इत्यभिप्रायः । *नोच्यते सकलं* निरवशेषमनेकं भेदभिन्नं *स्वधातु युगपद् आलम्बन्ते, अपि तु पञ्चप्रकारमपि सर्वं युगपदालम्बन्ते* । दुःखदर्शनप्रहातव्यं यावद् भावनाप्रहातव्यमिति । प्रकारसर्वतायां सर्वशब्दोऽयं द्रष्टव्यः—इत्येष वैभाषिकाणां परिहारः ।

*यत्रात्मदृष्टिरिति* । पञ्चसूपादानस्कन्धेषु । *तत्रात्मतृष्णा* तेषामात्माभिनिवेशवस्तुत्वात् । *यत्राग्रशुद्धदृष्टी* । यत्र वस्तुनि पञ्चोपादानस्कन्धलक्षणेऽग्रदृष्टिर्दृष्टिपरामर्शः, *शुद्धिदृष्टिश्च* शीलव्रतपरामर्शः । तत्र *प्रार्थना* तृष्णालक्षणा । *तत्र तत्प्रार्थनेति* केचित् पठन्ति । तत्र = वस्तुनि तस्य = पुद्गलस्य प्रार्थना = तत्प्रार्थनेत्यर्थः । *तेन च मान* इति । तेन च वस्तुना मानः । तद्द्वारेणोन्नतिरित्यर्थः । *एवं सतीति* । एवं तृष्णामानयोः सर्वत्रगत्वे *सति* । सत्कायदृष्ट्यादिवद् *दर्शनभावनाहेयालम्बनत्वादेतदुभयं* तृष्णामानलक्षणं *किम्प्रहातव्यं* केन प्रहातव्यम्—

---

१–१. सकलं नोच्यते सकलं–का० । २. तत्प्रार्थना–का० ।

अथवा पुनरस्तु दर्शनप्रहातव्यम् ; दृष्टिबलाधानवर्तित्वात् ।

स्वलक्षणक्लेशावेतौ न सामान्यक्लेशौ । तस्मान्न सर्वत्रगाविति **वैभाषिकाः** ॥१२॥

य एते सभागधातुसर्वत्रगा एकादशानुशया उक्ताः,

**नवोर्ध्वालम्बना एषां दृष्टिद्वयविवर्जिताः ।**

सत्कायदृष्टिमन्तग्राहदृष्टिं च वर्जयित्वाऽन्ये नवानुशया विसभागधातुसर्वत्रगाः । कदाचित्[1] विसभागमेकं धातुमालम्बन्ते[2], कदाचिद् द्वौ ; "येऽनुशयाः कामप्रतिसंयुक्ता रूपप्रतिसंयुक्तालम्बनाः, कामप्रतिसंयुक्ता आरूप्यप्रतिसंयुक्तालम्बनाः, कामप्रतिसंयुक्ता रूपारूप्यप्रतिसंयुक्तालम्बनाः" ( ) इति वचनात् ।

यदा कामधातौ स्थितो ब्रह्मणि सत्त्वदृष्टिं नित्यदृष्टिं चोत्पादयति, तदा कथं

---

किं दर्शनप्रहातव्यम् ? उताहो भावनयेति ? ये यद्दर्शनहेयालम्बनास्ते तद्दर्शनहेया इति नियमं मनसिकृत्वा पृच्छति । अन्यथा हि सत्कायदृष्ट्यादिवदेवैतदुभयं दर्शनप्रहातव्यमेव स्यादिति किमत्र प्रष्टव्यं स्यात् । नहि सत्कायदृष्ट्यादयो न दर्शनभावनाहेयालम्बनाः, न च ते न दर्शनहेया भवन्तीति । अत्राचार्यः समाधिमाह--*भावनाप्रहातव्यम्, व्यामिश्रालम्बनत्वा*दिति । यदि तृष्णामानौ दर्शनप्रहातव्यालम्बनावेव, स्यातां दर्शनप्रहातव्यौ; न त्वेवम्, अतो व्यामिश्रालम्बनत्वाद् भावनाप्रहातव्यौ ; अवशिष्टा भावनाहेयाः' इति लक्षणनियमात् ।

*अथ वेति* । स एवाचार्यः परावृत्य पुनर्ब्रवीति । *पुनरस्तु दर्शनप्रहातव्या*विति । किम् ? एतदुभयमिति वर्तते । कस्माद् ? इत्याह—*दृष्टिबलाधानवर्तित्वा*दिति । दृष्टेर्बलाधानम् = सामर्थ्यम्, दृष्टिबलाधानेन वर्तितुं शीलमस्येति दृष्टिबलाधानवर्ति तदुभयं दर्शनप्रहातव्यमस्त्विति ।

*वैभाषिका* इदानीं स्वपक्षं स्थापयन्ति—*स्वलक्षणक्लेशावेतौ, न सामान्यक्लेशौ भवतः, तस्मान्न सर्वत्रगा*विति । यत्रात्मदृष्टिस्तत्र तृष्णामानौ, न तु युगपत् सर्वस्मिन्; स्वलक्षणक्लेशत्वात् । एकदेशालम्बनौ हि तौ, तस्मान्न सर्वत्रगौ । न चेत् सर्वत्रगौ, तेन यौ यद्दर्शनहेयालम्बनौ तौ तद्दर्शनहेयौ । परिशिष्टौ भावनाहेयौ—इति सिद्धम् ॥ १२ ॥

*कदाचिद् विसभागमेकं धातुमालम्बन्ते, कदाचिद् द्वे* इति । कदाचित् त्रीन्

---

१. कदाचित्तु—का० । २. ०मालम्बते—जा० ।

सत्कायान्तग्राहदृष्टी विसभागधात्वालम्बने न भवतः ? आत्मात्मीयत्वेनाग्रहणात् । अन्तग्राहदृष्टिश्च ? तत्समुत्थितत्वात् ।

का तर्हीयं दृष्टिः ? नेयं दृष्टिः, मिथ्याज्ञानं पुनरेतदित्याभिधार्मिकाः ।

कुतो नु खल्वेतदन्या तदालम्बना दृष्टिः ! एषा न दृष्टिरिति सिद्धान्तस्तु प्रमाणयितव्यः ।

किं खल्वनुशयाः एव सर्वत्रगाः ? नेत्याह ।

**प्राप्तिवर्ज्याः सहभुवो येऽप्येभिस्तेऽपि सर्वगाः ।। १३ ।।**

सर्वत्रगैरनुशयैः सहभुवो येऽप्यन्ये धर्मास्तेऽपि सर्वत्रगाः । प्राप्तयस्तु नैवम्; अनेकफलत्वात् ।

अत एव 'स्युः सर्वत्रगानुशया न हेतुः' इति चतुष्कोटिकं क्रियते । प्रथमा कोटिः—अनागताः सर्वत्रगा अनुशयाः। द्वितीया—अतीतप्रत्युत्पन्नास्तत्सहभुवः । तृतीयचतुर्थ्यौ[1] योज्ये ॥ १३ ॥

धातून् इति नोक्तमेतत् । कामधातुस्थास्तु कदाचिद् विसभागमेकरूपधातुमारूप्यधातुं वालम्बन्ते, कदाचिद् रूपारूप्यौ द्वाविति ।

*आत्मात्मीयत्वेनाग्रहणादि*ति । यस्मात्तं ब्रह्माणमात्मत्वेन आत्मीयत्वेन न गृह्णाति, अथ सत्कायदृष्टिर्न भवति ब्रह्मणि सत्त्वदृष्टिः । *यस्माच्चान्तग्राहदृष्टिः सत्कायदृष्टिसमुत्थिता*, अतो नित्यदृष्टिरपि ब्रह्मणि नान्तग्राहदृष्टिरिति । *का तर्हीयं दृष्टिरि*ति । येयं ब्रह्मणि सत्त्वदृष्टिः, नित्यदृष्टिश्च, *नेयं दृष्टिः, मिथ्याज्ञानं पुनरेतदि*ति । विपरीतालम्बनत्वात् मिथ्याज्ञानमेतत् । नहि सर्वा विपरीतालम्बना प्रज्ञा दृष्टिरिष्यते, अनात्मन्येवात्मनि विपरीता प्रज्ञा सत्कायदृष्टिरिष्यते । तत्समुत्थापिता च नित्यदृष्टिरन्तग्राहदृष्टिः, नान्या । यैव ह्यहङ्कारस्य सन्निश्रयीभवति, सैव सत्कायदृष्टिः । महाब्रह्मणि च सत्त्वदृष्टिरहमित्यहङ्कारस्य न सन्निश्रयीभवति । तेनोक्तम्—आत्मात्मीयत्वेनाग्रहणादिति ।

*"प्राप्तिवर्ज्याः सहभुवः"* इति । वेदनादयः । *प्राप्तयस्तु नैवम्, अनेकफलत्वादि*ति । अनेकफलविपाकनिष्यन्दा हि प्राप्तयः प्राप्तिमतेत्युक्तम् । अतो न सर्वत्रगधर्मप्राप्तयः सर्वत्रगाः व्यवस्थाप्यन्ते । *अत एवे*ति । यस्मात् सहभुवोऽपि सर्वत्रगा व्यवस्थाप्यन्ते, तस्माच्चतुष्कोटिकं क्रियते । *प्रथमा कोटिरनागताः सर्वत्रगा अनुशया* इति । एते सर्वत्रगस्य स्वासामान्यात् । न सर्वत्रगहेतुरनागता-

१. तृतीया०–का०; तृतीयचतुष्ठ्यौ–जा० ।

एषामष्टानवतेरनुशयानां कति सास्रवालम्बनाः ? कत्यनास्रवालम्बनाः ?

**मिथ्यादृग्विमती ताभ्यां युक्ताऽविद्याऽथ केवला ।**
**निरोधमार्गदृग्घेयाः षडनास्रवगोचराः ।। १४ ।।**

निरोधदर्शनप्रहातव्यास्त्रयोऽनुशया मिथ्यादृष्टिविचिकित्साऽविद्या च, ताभ्यां सम्प्रयुक्ताऽऽवेणिकी च । मार्गदर्शनप्रहातव्या अप्येत एव त्रयः ।

इत्येते षडनास्रवालम्बनाः, शेषाः सास्रवालम्बना इति सिद्धम् ॥ १४ ॥

तत्र पुनः—

**स्वभूम्युपरमो मार्गः षड्भूमिनवभूमिकः ।**

---

वस्थायां सर्वत्रगहेतोरनवस्थापनात् । *द्वितीया अतीतप्रत्युत्पन्नाः तत्सहभुवः ।* सर्वत्रगसहभुवोऽतीतप्रत्युत्पन्नत्वात् सर्वत्रगहेतुर्भवन्ति । न सर्वत्रगा अनुशयाः, अननुशयस्वभावत्वात् । *तृतीयचतुर्थ्यौ*[1] *योज्ये ।* तृतीया—अतीतप्रत्युत्पन्नाः सर्वत्रगा अनुशयाः । चतुर्थी—तानाकारान् स्थापयित्वा । तद्यथा—अनागतास्तत्सहभुवः, प्राप्त्यादयश्च ।। १३ ।।

"*षडनास्रवगोचराः*" इति । षडेवेत्यवधारणम् । तस्मान्न रागादयोऽनास्रवालम्बना युज्यन्ते । 'न रागस्तस्य वर्ज्यत्वान्न द्वेषोऽनपकारतः' (अभि० को० ५.१६) इत्यादिवचनात् । *अविद्या च ताभ्यामिति ।* मिथ्यादृष्टिविचिकित्साभ्यां या सम्प्रयुक्ता । *या चावेणिकी अविद्या ।* स एकोऽविद्यानुशय इति । *त्रयो निरोधदर्शनप्रहातव्या* अनास्रवालम्बनाः । एवं *मार्गदर्शनप्रहातव्या अप्येत एव त्रय* इति । षड् भूमौ भूमौ भवन्ति ।। १४ ।।

"*तद्गोचराणां विषयः*" इति । तौ निरोधमार्गौ गोचर एषामिति तद्गोचराः, तेषां यथाक्रमं त्रयाणाम् ।

"*स्वभूम्युपरमः*" । स्वभूमिनिरोधः । *गोचरः* आलम्बनम् । *मार्गस्तु* धर्मज्ञानपक्ष्यः षड्भूमिकोऽन्वयज्ञानपक्ष्यो नवभूमिको मार्गगोचराणामपरेषां त्रयाणामनुशयानामालम्बनम् । कथं कृत्वा ? निरोधालम्बना एते त्रयोऽनुशया[2] नवभूमिका भवन्ति कामावचरा यावद् भवाग्रिकाः । तेषां कामावचराणां कामावचरधर्मनिरोध एवालम्बनम् । प्रथमध्यानभूमिकानां प्रथमध्यानभूमिकधर्मनिरोध एवालम्बनम् । तेषां यावद् भवाग्रभूमिकानां भवाग्रभूमिकधर्मनिरोध एवालम्बनम् । मार्गस्तु धर्मज्ञानपक्ष्यः षड्भूमिकः । अनागम्यध्यानान्तरभूमिकः,

---

१. ०चतुष्ट्यौ—जा० ।　२. त्रयानुशया—जा० ।

अभि० को० ३:३

**तद्गोचराणां विषयो मार्गो ह्यन्योऽन्यहेतुकः ।। १५ ।।**

निरोधालम्बनानां मिथ्यादृष्ट्यादीनां स्वभूमिनिरोध एवालम्बनं कामावचराणां कामधातोरेव, यावद् भवाग्रभूमिकानां भवाग्रस्यैव । मार्गालम्बनानां कामावचराणां षड्भूमिको धर्मज्ञानपक्षो मार्गः सर्व एवालम्बनम् । योऽपि रूपारूप्यप्रतिपक्षः रूपारूप्यावचराणामध्यदृष्टभूमिकानां नवभूमिकः, स एवान्वयज्ञानपक्ष्यो मार्ग आलम्बनम्; मार्गस्यान्योन्यहेतुकत्वात् ।

यद्यपि धर्मज्ञानान्वयज्ञाने अप्यन्योन्यहेतुके अन्वयज्ञानं[१] न[१] कामधातुप्रतिपक्ष इति; न कामावचरा मार्गालम्बना अन्वयज्ञानपक्षानालम्बन्ते ।

धर्मज्ञानं तर्हि रूपारूप्यप्रतिपक्षत्वात् तद्भूमिकानां मार्गालम्बनामालम्बनं

---

चतुर्ध्यानभूमिकश्च । स सर्व एव कामावचराणामेषां त्रयाणामनुशयानामालम्बनम् । अन्वयज्ञानपक्ष्यः पुनर्नवभूमिकः । अनागम्यध्यानान्तरचतुर्ध्यानाकाशविज्ञानाकिञ्चन्यायतनभूमिकः । स सर्व एव प्रथमध्यानभूमिकानामेषां त्रयाणामनुशयानामालम्बनम् । एवं यावद् भवाग्रभूमिकानामिति ।

कस्मात् पुनः स्वभूमिनिरोध एव तद्गोचरालम्बनम्, मार्गस्तु षड्भूमिकोऽपि वा नवभूमिकोऽपि वा तेषामालम्बनमिति? अत्र हेतुं दर्शयति—"*मार्गो ह्यन्योन्यहेतुकः*" इति । कथमन्योन्यहेतुकः? षड्भूमिको धर्मज्ञानपक्ष्यो मार्गोऽधरभूमिकस्योर्ध्वभूमिकस्य वा, समस्य विशिष्टस्य वा धर्मज्ञानपक्ष्यान्तरस्यान्वयज्ञानपक्ष्यस्यापि च मार्गस्य हेतुर्भवति । सोऽपि तस्यान्वयज्ञानपक्ष्यो[२] नवभूमिको योज्यः । विस्तरेणैतद् व्याख्यातम्—"अन्योन्यनवभूमिस्तु मार्गः समविशिष्टयोः" (अभि० को० २. ५३) इत्यत्र ।

तदेवं कामावचराणां मार्गालम्बनानामनागम्यभूमिको धर्मज्ञानपक्ष्यो यावच्चतुर्थध्यानभूमिक आलम्बनम् । अन्वयज्ञानपक्ष्योऽपि मार्गोऽनागम्यभूमिको यावदाकिञ्चन्यायतनभूमिकः प्रथमध्यानभूमिकानामेषां मार्गालम्बनानामालम्बनम् । एवं यावद् भवाग्रभूमिकानामिति ।

यदि कामावचरा मार्गालम्बना मिथ्यादृष्ट्यादयो रूपारूप्यप्रतिपक्षमपि निरोधमार्गाख्यं धर्मज्ञानमालम्बन्ते, सकलोऽपि हि धर्मज्ञानपक्ष्योऽन्योन्यहेतुक इति; कस्मात् त एव मिथ्यादृष्ट्यादयोऽन्वयज्ञानपक्ष्यमपि मार्गं नालम्बन्ते; धर्मज्ञानान्वयज्ञानयोरन्योन्यहेतुकत्वाद्? इत्याह--*यद्यपि धर्मज्ञानान्वयज्ञान*

---

१-१. नत्वन्वयज्ञान–का० । २. ०पक्षो–जा० ।

भविष्यति। न तत् सकलं प्रतिपक्षः, दुःखसमुदयधर्मज्ञानयोरेतदप्रतिपक्षत्वात्[1]। नापि सकलयो रूपारूप्ययोर्दर्शनप्रहातव्यानामप्रतिपक्षत्वादित्याद्यभावान्न भवत्यालम्बनम् ॥ १५ ॥

अथ कस्माद्रागप्रतिघमाना दृष्टिशीलव्रतपरामर्शौ चानास्रवालम्बना नेष्यन्ते?

**न रागस्तस्य वर्ज्यत्वात्**

वर्जनीयो हि रागः यदि चानास्रवालम्बनः स्यान्न वर्जनीयः स्यात्; कुशलधर्मच्छन्दवत्।

---

इति। विस्तरः—*अन्वयज्ञानं न कामधातुप्रतिपक्ष* इति। न ते तदालम्बन्ते। *धर्मज्ञानं तर्ही*ति विस्तरः।

"धर्मज्ञानं निरोधे यन्मार्गे वा भावनापथे।

त्रिधातुप्रतिपक्षस्तद्" (अभि० को० ३.९) इति सिद्धान्ताद् *धर्मज्ञानं रूपारूप्यप्रतिपक्षस्तदभावात् तद्भूमिकानां* रूपारूप्यभूमिकानां मिथ्यादृष्ट्यादीनाम*ालम्बनं भविष्यति। न तत्सकलमिति* विस्तर.। न तद् धर्मज्ञानं सकलं *प्रतिपक्षो* रूपारूप्यधात्वोः। *किं तर्हि?* किं कारणम्। *दुःखसमुदयधर्मज्ञानयो*र्भावनामार्गसंगृहीतयो*रेतदप्रतिपक्षत्वात्।* रूपारूप्यधात्वोरप्रतिपक्षत्वादित्यर्थः। अतो न रूपारूप्यावचराणां मिथ्यादृष्ट्यादीनां तद्धर्मज्ञानमालम्बनम्। *किञ्च नापि सकलयोरि*ति विस्तरः। नापि सकलयो *रूपारूप्यधात्वो*स्तद्धर्मज्ञानं *प्रतिपक्षः*। किं कारणम्? *दर्शनप्रहातव्यानामप्रतिपक्षत्वात्* "धर्मज्ञानं निरोधे यन्मार्गे वा भावनापथे" (अभि० को० ३.९) इति वचनात्।

अत्र निगमनं करोति—*इत्याद्यभावान्न भवत्यालम्बनमि*ति। दुःख-समुदय-निरोधमार्गाणाम*ाद्ययो*र्दुःखसमुदयधर्मज्ञानयोर्यथोक्तरूपारूप्यप्रतिपक्षत्वं प्रत्य*भावात्*। रूपारूप्यावचराणां दर्शनभावनाप्रहातव्यानां चाद्येषु दर्शनप्रहातव्येषु प्रतिपक्षत्वं प्रति तस्य धर्मज्ञानस्याभावात्। न तद्भूमिकानां मिथ्यादृष्ट्यादीनां मार्गालम्बनानां रूपारूप्यभूमिकानां धर्मज्ञानमालम्बनं भवति। तदेव त्रैधातुकानष्टादशानास्रवालम्बनानपास्य शेषा अशीतिरनुशयाः सर्वालम्बनाः—इति स्थापितम् ॥ १५ ॥

*न वर्जनीयः स्या*दिति। न प्राप्तिच्छेदेन प्रहेयः स्यादित्यर्थः। यथा *कुशलो धर्मच्छन्दो*ऽभिलाषरूपः सम्यग्दृष्टिरिति न प्राप्तिच्छेदेन प्रहेयः, *तद्वदयं* स्यात्। अतो नाऽनास्रवालम्बनः।

---

१. ॰रतदप्रतिपक्ष॰—का॰।

**न द्वेषोऽनपकारतः ।**

अपकारवस्तुनि हि प्रतिघ उत्पद्यते । न चैवं निरोधमार्गौ ।

**न मानो न परामर्शौ शान्तशुद्ध्यग्रभावतः ।। १६ ।।**

निरोधमार्गयोः शान्तत्वान्न ताभ्यामुन्नतिर्भवितुमर्हति । भूतार्थशुद्धित्वान्न तयोः शुद्धिग्राहः शीलव्रतपरामर्शः । अग्रौ च तौ । हीने चाग्रग्राहो दृष्टिपरामर्शः । तस्मादयुक्तमेषामनास्रवालम्बनत्वम् ॥ १६ ॥

एषामष्टानवतेरनुशयानां कत्यालम्बनतोऽनुशेरते ? कति सम्प्रयोगत एव ?

**सर्वत्रगा अनुशयाः सकलामनुशेरते ।**

**स्वभूमिमालम्बनतः स्वनिकायमसर्वगाः ।। १७ ।।**

ये सर्वत्रगा अनुशयास्ते सकलां पञ्चप्रकारामपि स्वां भूमिमालम्बनतोऽनुशेरते । असर्वत्रगास्तु स्वस्यां भूमौ स्वमेव निकायमालम्बनतोऽनुशेरते, नान्यम् । तद्यथा—दुःखदर्शनप्रहातव्या दुःखदर्शनप्रहातव्यमेव निकायम्, एवं यावद्भावनाप्रहातव्या भावनाप्रहातव्यमेव, नान्यम् ॥ १७ ॥

उत्सर्गं कृत्वाऽपवादं करोति—

**नानास्रवोर्ध्वविषयाः,**

---

"*न द्वेषोऽनपकारतः*" इति । नवाघातवस्तुलक्षणव्यतीतत्वान्निरोधमार्गयोर्नात्र द्वेषः; *भूतार्थशुद्धित्वादि*ति । भूतार्थेन शुद्धिः = निरोधः । क्लेशमलप्रहीणत्वात् । मार्गोऽपि परमार्थशुद्धिः, परमार्थेन शुद्ध्यत्यनयेति कृत्वा । यस्तयोः शुद्धिरिति ग्राहो न शीलव्रतपरामर्श इति युज्यते व्यवस्थापयितुम् । *अग्रौ च ताविति* । भूतार्थशुद्धित्वात् *तौ* निरोधमार्गौ *अग्रौ* । अपि च—परामर्शौ यद्यनास्रवालम्बनौ स्याताम्, सम्यग्दृष्टिलक्षणं भजेताम्; शुद्धत्वादग्रत्वाच्चानास्रवाणाम् । अतश्च न दर्शनहेयौ स्यातामग्रौ । *हीने च* वस्तुन्यग्र इति *ग्राहो दृष्टिपरामर्शो* युज्यते, न चैवं निरोधमार्गाविति । न तयोरग्रग्राहो दृष्टिपरामर्शो भवति ॥ १६ ॥

*कत्यालम्बनतोऽनुशेरते, कति सम्प्रयोगत* एवेति । कत्यालम्बनत एवेति नावधारणेन पृच्छति; यस्माद् य आलम्बनतोऽनुशेरते, तेऽवश्यं सम्प्रयोगतोऽनुशेरत इति । ये तु सम्प्रयोगत एवानुशेरते, ते नालम्बनतोऽनास्रवविसभागभूम्यालम्बना अनुशया इति ॥ १७ ॥

अनास्रवालम्बना अनुशया नैवालम्बनतोऽनुशेरते । नाप्यूर्ध्वभूम्यालम्बनाः । किं कारणम् ? तदालम्बनस्य वस्तुनः

**अस्वीकाराद्विपक्षतः ।**

यदि वस्त्वात्मदृष्टितृष्णाभ्यां स्वीकृतं भवति तत्रान्येऽप्यनुशया अनुगमयितुमुत्सहन्ते । आर्द्रे इव पटे रजांसि संस्थातुम् । न चैवमनास्रवाः, नाप्येवमूर्ध्वा भूमिः । अतो न तदालम्बनास्तेष्वनुशेरते । यस्त्विहस्थस्तां भूमिं प्रार्थयते, कुशलोऽसौ धर्मच्छन्दः विपक्षभूतौ च निर्वाणमार्गौ तदालम्बनानां क्लेशानामूर्ध्वा च भूमिरधराणाम् । अतो न तेषु प्रतिष्ठां लभन्ते तप्त इवोपले तलानि पादानाम् ।

आनुगुण्यार्थोऽत्रानुशयार्थः । न च ते तदनुगुणा इत्यपरे । वातिकस्य रूक्षाननुशयनवत् । अत उक्ता आलम्बनतोऽनुशेरते ।

**येन यः सम्प्रयुक्तस्तु स तस्मिन् सम्प्रयोगतः ।। १८ ।।**

'अनुशेरते' इति वर्तते । योऽनुशयो येन धर्मेण संप्रयुक्तस्तस्मिन् संप्रयोगतोऽनुशेते । यावदप्रहीण इति विशेषणार्थस्तुशब्दः । स्युरनुशया नानास्रवालम्बना न विसभागधातुसर्वत्रगाः । ते चानुशयाः सम्प्रयोगतोऽनुशयीरन्नालम्बनतः, न स्युर्विसभागभूमिसर्वत्रगा अनुशयाः ॥ १८ ॥

एषामष्टानवतेरनुशयानां कत्यकुशलाः ? कत्यव्याकृताः ?

**ऊर्ध्वमव्याकृताः सर्वे,**

रूपारूप्यावचरास्तावत् सर्व एवाव्याकृताः । किं कारणम् ? क्लिष्टानां धर्माणां दुःखविपाकः स्यात् । तच्च तयोर्नास्ति ; परव्याबाधहेत्वभावात् ।

---

आनुगुण्यार्थोऽत्रानुशयार्थः । न तद्धर्मिकाः प्रत्ययास्तदुपपत्तये आनुगुण्येन वर्तन्त इति । न च ते *तदनुगुणा* इति । न च ते निरोधादयः तेषां मिथ्यादृष्ट्यादीनामनुगुणाः. *वातिकस्य रूक्षाननुशयनवत् ।* यथा 'वातिकस्य रूक्षं नानुशेते' इत्युक्ते 'न कायस्यानुगुण्येन वर्तते' इति गम्यते । पूर्वस्मिंस्तु पक्षे प्रतिष्ठालाभार्थः न तेषु प्रतिष्ठां लभत इति वचनात् ।

*येन धर्मेणेति* । वेदनादिना ॥ १८ ॥

*तच्च तयोर्नास्तीति* । तच्च दुःखं तयोः रूपारूप्यधात्वोर्नास्ति । कस्मात् ? *परव्याबाधाहेत्वभावात्* । परव्याबाधस्य हेतुर्व्यापादादिः, तस्याभावात् ।

**कामे सत्कायदर्शनम् ।**

**अन्तग्राहः सहाभ्यां च मोहः,**

कामधातौ सत्कायान्तग्राहदृष्टी तत्सम्प्रयुक्ता चाविद्या अव्याकृताः । किं कारणम् ? दानादिभिरविरुद्धत्वात् । 'अहं प्रेत्य सुखी भविष्यामि' इति दानं ददाति शीलं रक्षति । उच्छेददृष्टिरपि मोक्षानुकूला ।

अतएवोक्तं *भगवता*—"एतदग्रं दृष्टिगतानां[1] यदुत नो च स्यां नो च मे स्यात् न भविष्यामि न मे भविष्यति" ( ) इति ।

अपि चानयोर्दृष्ट्योः स्वद्रव्यसम्मूढत्वादपरपीडाप्रवृत्तत्वाच्च स्वर्गतृष्णाऽस्मिमानयोरप्येष[2] प्रसङ्गः ।

सहजा सत्कायदृष्टिरव्याकृता । या मृगपक्षिणामपि वर्तते । विकल्पिता त्वकुशलेति पूर्वाचार्याः ।

**शेषास्त्विहाशुभाः ॥ १९ ॥**

---

*एतदग्रं दृष्टिगतानामिति* । एतद् विशिष्टं दृष्टिप्रकारेभ्यः । नातिसावद्यमित्यर्थः । मोक्षो मार्गोपनिषत्, उच्छेदस्तु निर्हेतुकोऽभिप्रेत इति, भ्रान्तेः सावद्यमुच्छेददर्शनमिति विशेष. । *स्वद्रव्यसम्मूढत्वादिति* । स्वसन्ततिपतितानामुपादानस्कन्धानामात्मात्मीयत्वेन ग्रहणात् स्वद्रव्यसम्मूढा सत्कायदृष्टिः । तेषामेव शाश्वतोच्छेदग्राहदृष्टिरपि तथैव । यथा च ते दृष्टी तथा तत्सम्प्रयोगिण्यप्यविद्येति ।

*अपरपीडाप्रवृत्तत्वाच्च* । किम् ? अव्याकृते सत्कायान्तग्राहदृष्टी इति प्रकृतम् । ते हि न काचिदपि परपीडां कुरुतः । *स्वर्गतृष्णास्मिमानयोरप्येष प्रसङ्ग* इति । स्वर्गतृष्णाया अस्मिमानस्य च दानादिभिरविरोधात् स्वद्रव्यसम्मूढत्वाद्[3] अपरपीडाप्रवृत्तत्वाच्चाव्याकृतत्वप्रसङ्गः । न चेष्यते ।

तस्मान्नैभिः कारणैरनयोरव्याकृतत्वमित्यनेनाभिप्रायेण *पूर्वाचार्यमतमुप*स्थापयति—*सहजा सत्कायदृष्टिरित्यादि* । *विकल्पिता त्वकुशलेति* । या आत्मवादिभिः *कपिलोलूकादिभिर्विकल्पिता* सा नाव्याकृता, किं तर्हि ? अकुशलेति । अन्तग्राहदृष्टिरपि । या तैर्विकल्पिता, साऽप्यकुशला । तत्पूर्वकत्वात्तु सा तुल्यवार्तेत्यनुक्तापि गम्यत एव ।

---

१. बाह्यकानां दृष्टि०—का० । २. ०रप्येवं—का० ।
३. °सम्मूढात्वाद्—जा० ।

शेषास्त्वशुभा अनुशयाः कामधातावकुशलाः ॥ १९ ॥

कत्यकुशलमूलानि ? कति न ?

**कामेऽकुशलमूलानि रागप्रतिघमूढयः ।**

कामधातौ सर्वरागः सर्वप्रतिघः सर्वो मोहोऽन्यत्र सत्कायान्तग्राहदृष्टिसम्प्रयुक्ताद् यथाक्रमम् ।

**त्रीण्यकुशलमूलानि,**

लोभोऽकुशलमूलम्, द्वेषो मोहोऽकुशलमूलम् । यद्यकुशलं[1] चाकुशलस्यैव मूलमिष्टम्[1], एत एवाकुशलमूलानि । शेषा अनुशया नाकुशलमूलानीति सिद्धम् ।

कत्यव्याकृतमूलानि ? कति न ? त्रीण्यव्याकृतमूलानि । कतमानि त्रीणि ?

**तृष्णाविद्या मतिश्च सा ॥ २० ॥**

'सा' इत्यव्याकृततां दर्शयति । या काचिदव्याकृता तृष्णा अविद्या प्रज्ञा चान्ततो विपाकजा अपि सर्वाऽसावव्याकृतमूलमिति काश्मीराः ॥ २० ॥

---

"*शेषास्त्विहाशुभाः*" इति । इहेति कामावचरशेषाभिसङ्ग्रहार्थम् । कामधातौ सत्कायदृष्ट्यादिशेषाः क्लेशा अकुशला एवेत्यवधार्यते ॥ १९ ॥

*कत्यकुशलमूलानि, कति* नेति । एषामष्टानवतेरनुशयानामित्यनुवृत्तत्वेनैवं विवर्जनं क्रियते ।

"*कामेऽकुशलमूलानि रागप्रतिघमूढयः*[2]" इति । कामधातौ ये राग-प्रतिघ-मोहाः ते सर्व एव पञ्चप्रकाराः अप्यकुशलमूलानि; कुशलमूलविपक्षेण व्यवस्थापनात् । नान्येऽनुशया इति । मूढिरिति मोहपर्यायः । *सर्वो मोहः अन्यत्र सत्कायान्तग्राहदृष्टिसम्प्रयुक्तान्*मोहादिति । कथमिह न सूत्रितं लभ्यते ? "अशुभाः" (अभिः ५.१९) इत्यधिकाराद्, एकदेशनिर्देशात् । अत एवोच्यते—*यद्यकुशलं चाकुशलस्यैव च मूलम्, इष्टमि*ति । *एतदेवे*त्यवधारणाच्छेषा *अनुशया* मिथ्यादृष्ट्यादयो नाकुशलमूलानीति सिद्धम् ॥

"*त्रीण्यव्याकृतमूलानि*" इति । एषामेवाष्टानवतेरनुशयानां त्रीणि अव्याकृतमूलानीति । त्रिग्रहणं बहिर्देशकमताद् विशेषणार्थः । त्रीण्येव, न चत्वारीति । *कतमानि त्रीणि ?* इत्याह— "*तृष्णाऽविद्या मतिश्च सा । सेति अव्याकृततां दर्शयति । अव्याकृतमूलानी*ति । अनेनाव्याकृतशब्देन केवलेन तृष्णाविद्या-

---

१-१. यद्यकुशलं चाकुशलस्य च मूलं तदेवाकुशलमूलमिष्टम्—का० ।

२. °मूढया—जा० ।

**द्वैधोर्ध्ववृत्तेर्मातोऽन्यौ,**

विचिकित्सा किल द्वैधवृत्तेर्न मूलं भवितुमर्हति; चलत्वात् । उन्नतिलक्षणेनोर्ध्ववृत्तेर्न मानो मूलम् । विविधस्मृतिमूलानि हि स्थिराण्यधोवृत्तीनि च लोके दृष्टानीति ।

**चत्वार्येवेति बाह्यकाः ।**

बाह्यकाश्चत्वार्यव्याकृतमूलानीच्छन्ति ।

**तृष्णादृङ्मानमोहास्ते,**

त इत्यव्याकृता इति दर्शयति । अव्याकृता तृष्णा दृष्टिर्मानोऽविद्या च ।

किं कारणमेतान्यव्याकृतमूलानीच्छन्ति ?

**ध्यायित्रित्वादविद्यया ॥ २१ ॥**

यस्मत् त्रयो ध्यायिनः । तृष्णादृष्टिमानोत्तरध्यायिनः । ते चाविद्यावशाद् भवन्तीति ॥ २१ ॥

---

मतयो विशेषिता इति दर्शयति । अत्र च मतिरक्लेशस्वभावाप्यव्याकृतमूलमितीष्यते वैभाषिकैः । *या काचिदव्याकृता तृष्णेति* । आस्वादनासम्प्रयुक्तेषु ध्यानारूप्येषूपपत्तिकाले वा विमानादिषु सम्भवतः । या काचिदविद्या रूपारूप्यधात्वोः कामधातौ च सत्कायान्तग्राहदृष्टिसम्प्रयोगिनीति । एवं प्रज्ञा च या काचिदव्याकृता । *अन्ततो विपाकजापि* । कामधातौ विपाकजैर्यापथिकशैल्पस्थानिक-निर्माणचित्तसम्प्रयुक्ता सत्कायान्तग्राहदृष्टिसम्प्रयुक्ता च रूपारूप्यधात्वोः सर्वक्लेशसम्प्रयुक्ता प्रज्ञा । विपाकजादिसम्प्रयुक्ता च यथासम्भवमव्याकृता प्रज्ञा । द्वैधवृत्तेरिति । द्विधाभावो द्वैधम्, द्वैधे वृत्तिः तस्याः ॥ २० ॥

*न विचिकित्सा मूलं भवितुमर्हति;* द्विधावृत्तितश्चलत्वात् । *उन्नतिलक्षणेनेति* । उन्नतेर्लक्षणम्, तेन ऊर्ध्ववृत्तिर्भवति । तस्मान्न *मानो मूलं भवितुमर्हति । मूलानि स्थिराण्यधोवृत्तीनि* चेति । मूलवैधर्म्यान्न *विचिकित्सा* मूलम्; अस्थिरत्वात् । न मानः; अनधोवृत्तित्वादिति वक्तव्यम् ।

*ते इत्यव्याकृताः । अव्याकृता तृष्णेति* । रूपारूप्यधात्वोः । दृष्टिरपि तयोश्च कामधातौ च सत्कायान्तग्राहदृष्टिस्वभावा । अविद्यापि कामधातौ तत्सम्प्रयोगिन्येव । रूपारूप्यधात्वोश्च सर्वा । *तृष्णादृष्टिमानोत्तरध्यायिन* इति । य आस्वादनासम्प्रयुक्तध्यानध्यायी, स तृष्णोत्तरध्यायी । यो ध्याननिश्रयेण शाश्वतादिदृष्टिमुत्पादयति, स दृष्ट्युत्तरध्यायी, मानोत्तरध्यायी च । यश्च मन्यते–

यानि सूत्रे चतुर्दशाव्याकृतवस्तूनि, किं तानि अव्याकृतत्वात् ? नेत्याह। किं तर्हि ? स्थापनीयः प्रश्नोऽव्याकृत इत्युक्तम्। चतुर्विधो हि प्रश्नः—एकांशव्याकरणीयः, विभज्यव्याकरणीयः, परिपृच्छ्य व्याकरणीयः, स्थापनीयश्च। तत्र यथाक्रमं वेदितव्यम्—

**एकांशतो व्याकरणं विभज्य परिपृच्छ्य च।**
**स्थाप्यं च मरणोत्पत्तिविशिष्टात्माऽन्यतादिवत् ॥ २२ ॥**

'किं सर्वसत्त्वा मरिष्यन्ति' इत्येकांशेन व्याकर्त्तव्यम्—मरिष्यन्तीति।

'किं सर्वे जनिष्यन्ते' इति विभज्य व्याकर्त्तव्यम्—सक्लेशा[1] जनिष्यन्ते, न निःक्लेशा इति।

'किं मनुष्यो विशिष्टो हीनः' इति परिपृच्छ्य व्याकर्त्तव्यम्—कानधिकृत्य प्रश्नयसीति। यदि ब्रूयाद्—देवानिति। हीन इति व्याकर्त्तव्यम्। अथ ब्रूयाद्—अपायानिति। विशिष्ट इति व्याकर्त्तव्यम्।

---

'लाभी अहमस्य ध्यानस्य, नान्ये तथा' इति, स मानोत्तरध्यायी। तत्र *तृष्णोत्तरम्* तृष्णोपरिकम्, ध्यातुं शीलमस्येति तृष्णोत्तरध्यायी। अथ वा—*तृष्णोत्तरश्च* तृष्णाधिक इत्यर्थः, ध्यायी च तृष्णोत्तरध्यायी। एवं दृष्ट्युत्तरध्यायी च, मानोत्तरध्यायी च। *ते चाविद्यावशाद् भवन्तीति*। ते च त्रयो ध्यायिनोऽविद्यावशाद् अविद्यायोगात् तथा भवन्ति। अतोऽविद्याप्यव्याकृतमूलमिति। समापत्तिसमापन्नानां च एताः क्लेशसमुदाचारावस्थाः अव्याकृतानां धर्माणां मूलं कारणमिति ॥ २१ ॥

अव्याकृतसम्बन्धेन पर्यनुयुङ्क्ते—*यानि सूत्रे चतुर्दशाव्याकृतवस्तूनीति*। विस्तरः—शाश्वतो लोकः, अशाश्वतो लोकः—इत्येवमादि। *किं तान्यव्याकृतत्वादिति*। किं तानि नैव कुशलानि, नाकुशलानीत्यव्याकृतत्वात्। नाव्याकृतवस्तून्यपदिश्यन्ते। *स्थापनीयः प्रश्नोऽव्याकृत* इति। यः स्थापनीयत्वेन न व्याकृतो न कथितः, सोऽव्याकृतः प्रश्नः, तस्य वस्त्वधिष्ठानमित्य*व्याकृतवस्तु*।

तत्प्रसङ्गेनेदमुपन्यस्यते—*चतुर्विधो हि प्रश्नः* इति विस्तरः।

*मरणोत्पत्तिविशिष्टात्मान्यतादिवदिति*। मरणवत्, उत्पत्तिवत्, विशिष्टवत्, आत्मान्यतादिवदिति। यथासङ्ख्यमेकांशव्याकरणादिषूदाहरणानि। *मरि-*

---

१ संक्लेशाः-का०।

'किमन्यः स्कन्धेभ्यः सत्त्वोऽनन्यः' इति स्थापनीयः; सत्त्वद्रव्यस्याभावात्, बन्ध्यापुत्रश्यामगौरतादिवत् ।

कथमेतद् व्याकरणं भवति—अव्याकृतमेतदिति ? एवं व्याकरणात् ।

अपर आह—इदमप्येकांशेन[1] व्याकरणं[1] यन्न सर्वे जनिष्यन्त इति । यस्तु पृच्छेद् ये मरिष्यन्ति किं ते जनिष्यन्त इति[2], तस्य विभज्यव्याकरणीयं[2] स्यात् । मनुष्येषु चोभयमस्ति—हीनत्वं विशिष्टत्वं चापेक्षिकमित्युभयमेकांशेन व्याकर्त्तव्यम् । तद्यथा

ष्यन्तीति मरणोदाहरणमेकांशव्याकरणे । 'सक्लेशा जनिष्यन्ते न निःक्लेशाः' इत्युत्पत्त्युदाहरणं परिपृच्छाव्याकरणे । 'किमन्यः स्कन्धेभ्यः सत्त्वः' इति आत्मान्यतोदाहरणं स्थापनीयव्याकरणे इति । 'किं सर्वसत्त्वाः मरिष्यन्ति' इत्येकांशेन व्याकर्तव्यमिति । यथोक्तं *भगवता*—"अल्पकं भिक्षवो मनुष्याणां जीवितम्, गमनीयः सम्परायः, चरितव्यं कुशलम्, नास्ति जातस्यामरणम्" इति । 'किमन्यः स्कन्धेभ्यः सत्त्वोऽनन्यः' इति स्थापनीय इति । यथोक्तं *भगवता*—"किन्नु भो गौतम, स करोति, स प्रतिसंवेदयते ? अव्याकृतमेतद् ब्राह्मण ! अन्यः करोति, अन्यः प्रतिसंवेदयते ? अव्याकृतमेतद् ब्राह्मण । 'सः करोति, स प्रतिसंवेदयते' इति पृष्टः 'अव्याकृतमेतद्' इति वदसि, 'अन्यः करोति, अन्यः प्रतिसंवेदयते' इति पृष्टः 'अव्याकृतमेतद्' इति वदसि; तत् कोऽत्र खल्वस्य भवतो गौतमस्य भाषितस्यार्थः ? 'स करोति, स प्रतिसंवेदयते' इति ब्राह्मण ! शाश्वताय परैति, 'अन्यः करोति, अन्यः प्रतिसंवेदयते' इति उच्छेदाय परैति; एतावन्तावनुगम्य तथागतो मध्यमया प्रतिपदा धर्मं देशयति" (      ) इति ।

*अपर आहे*ति । *भदन्तरामः* । इदमप्येकांशेन व्याकर्तव्यम्—न सर्वे जनिष्यन्त इति । न केवलमिदमेकांशेन व्याकर्तव्यम्—सर्वे सत्त्वा मरिष्यन्तीति । *यस्तु पृच्छेदि*ति विस्तरेणाचार्यः । यस्तु पृच्छेद्—अनेन प्रकारेण ये मरिष्यन्ति किं ते जनिष्यन्त इति । तस्य *विभज्यव्याकरणं स्यात्*—न सर्वे जनिष्यन्ते, किं तर्हि ? सक्लेशा जनिष्यन्ते, न निःक्लेशा इति । तस्माद्यदुक्तम्—इदमेकांशेन व्याकर्तव्यम् 'न सर्वे जनिष्यन्ते' इति, तन्नोपपद्यते । तेन युज्यत एव *वैभाषि*कोदाहरणमित्यभिप्रायः ।

स एव *भदन्तराम* आह—"*मनुष्येषु चोभयमस्ति—हीनत्वं विशिष्टत्वं च । एतदुभयमापेक्षिकमस्तीत्युभयं व्याकर्तव्यम् । तद्यथा*—किं *विज्ञानं कार्यं*

२-२. ०प्येकांशव्याकरणम्—का० । ३-३. इत्येतद्विभज्य०—का० ।

'किं[1] विज्ञानं कार्यं कारणं च' इति एकान्तेन तु पृच्छतो नैकान्तव्याकरणाद् विभज्यव्याकरणं युज्यते । स्कन्धेभ्योऽन्यः सत्त्व इत्येतदव्याकृतमेव । न चाव्याकरणमेव व्याकरणं युज्यत इति ।

यस्तु स्थापनीयः प्रश्नः स्थापनीयत्वेन व्याक्रियते, कथं न व्याकृतो भवति ?

**आभिधर्मिका आहुः**—तथागतो भगवानर्हन् , सम्यक् स्वाख्यातोऽस्य धर्मः, सुप्रतिपन्नः श्रावकसंघः रूपमनित्यं यावद्विज्ञानं दुखप्रज्ञप्तिर्यावन्मार्गप्रज्ञप्तिरेकांशेन व्याकर्त्तव्यमर्थोपसंहितत्वात् । विभज्यव्याकरणं नाम यदि कश्चिद् ब्रूयाद्—धर्मान् वदेति, स वक्तव्यः—बहवो धर्मा अतीता अनागताः प्रत्युत्पन्नाः कतमान् वदामीति । यदि ब्रूयादतीतानिति, स वक्तव्यः—अतीता अपि बहवो रूपं यावद्विज्ञानमिति । अथ ब्रूयाद् रूपमिति, स वक्तव्यः—रूपमपि त्रिविधं कुशलमकुशलमव्याकृतं च । यद्याह—कुशलमिति, तदपि सप्तप्रकारं प्राणातिपाताद्विरतिर्यावत्संभिन्नप्रलापादिति । यद्याह—प्राणातिपाताद्विरतिमिति, साऽपि त्रिप्रकारा—अलोभजा, अद्वेषजा, अमोहजा । यद्याह—अलोभजामिति, अलोभजापि द्विविधा - विज्ञप्त्यविज्ञप्तिभेदादित्येवं विभज्य वक्तव्यमिति । एतदेव[2] शठस्य परिपृच्छ्य व्याकरणम् । तस्य

*कारणम्*—इति प्रश्न एकांशेन व्याक्रियते—हेतुफलापेक्षया कारणं कार्यं चेति । तत्र यदुक्तम्—'किं मनुष्यो हीनो विशिष्टः' इति परिपृच्छया व्याकर्तव्यम्—'कानधिकृत्य प्रश्नयसि' इति, तदयुक्तम्; यस्मादयमेकांशेन व्याकरणीयः प्रश्न इति । 'एकान्तेन तु पृच्छतः' इत्याचार्यो *वैभाषिकपक्षं* समर्थयति । 'एकान्तेन तु पृच्छतः किं मनुष्यो हीन एव विशिष्ट एवेति नैकान्तव्याकरणाद् हीन इति वा, विशिष्ट इति वा विभज्यव्याकरणं युज्यते—कानधिकृत्य प्रश्नयसीति । तत्र यदुक्तम्—मनुष्येष्वेवोभयमस्तीति विस्तरेण; तदयुक्तम् । स एवाह—*स्कन्धेभ्योऽन्यः सत्त्वः* इति सर्वम् ।

*यस्तु स्थापनीय* इत्याचार्यः । *वैभाषिक*नयेनोक्तमेतच्चतुर्विधस्योदाहरणम् । *आभिधर्मिका आहुरि*ति । षट्पादाभिधर्ममात्रपाठीनाः । *दुःखप्रज्ञप्तिर्यावन्मार्गप्रज्ञप्तिरि*ति । चतुर्णामार्यसत्यानां प्रज्ञप्तिः यथासूत्रम् । *अर्थोपसंहितत्वादि*ति । अर्थप्रतिसंयुक्तत्वादित्यर्थः । *एतदेव शठस्ये*ति । एतदेव विभज्यव्याकरणीयप्रश्नवचनम् । *शठस्य* विहेठनाभिप्रायस्य प्रष्टुः परिपृच्छाव्याकरणं वेदित-

१. का० पुस्तके नास्ति । २. एतदेव च—का० ।

वक्तव्यम्—धर्मा बहव इति। न तु विभक्तव्या यावत्तूष्णीं वा तिष्ठति स्वयं वा व्याकरोतीति।

यदा तौ न किञ्चित् पृच्छतः केवलमध्येषयतः, तयोश्च न किंचित् व्याक्रियते केवलं परिपृच्छ्यते[1], तत् कथमनयोः प्रश्नो भवति कथं वा व्याकरणम्? यो हि पन्थानं ब्रूहीत्याह, किं तेन पन्था न पृष्टो भवति! परिपृच्छयैव च[2] व्याकरणात् कथं न परिपृच्छाव्याकरणं भवति। स्थापनीयस्तु यथा—अन्तवान् लोकोऽनन्तवानित्येवमादि।

सूत्रान्तादेव तु प्रश्नव्याकरणानां लक्षणं द्रष्टव्यम्। भदन्तमहासाङ्घिका सूत्रं पठन्ति—"चत्वारीमानि भिक्षवः प्रश्नव्याकरणानीति। कतमानि चत्वारि? अस्ति भिक्षव एकांशव्याकरणीयः प्रश्नः, अस्ति यावत् स्थापनीयः। कतमश्च भिक्षवः एकांशव्याकरणीयः प्रश्नः? 'सर्वे संस्कारा अनित्याः' इत्ययं भिक्षव एकांश-

---

व्यम्। *भदन्तराम* आह—*यदा ताविति* विस्तरः। यदा तौ शठाशठौ न किञ्चित् पृच्छतः, केवलमध्येषयतः—'धर्मान् वद' इति। तयोश्च शठाशठयोर्न किञ्चत् व्याक्रियते—इमे धर्माः रूपादयः सविस्तरप्रभेदा इति, केवलं परिपृच्छ्यते—कतमान् वदामीति। *तत्कथमनयोः* शठाशठयोः *प्रश्नो भवति*, कथं च व्याकरणमाभिधर्मिकस्य? *यो हीति* विस्तरेण *आचार्यः*। यो हि पन्थानं ब्रूहीति, तदनभिज्ञ आह। कि तेन पन्था न पृष्टो भवति। अध्येषणमुखेनैवास्य इत्यभिप्रायः। यथा 'पन्थानं ब्रूहि' इति ब्रुवतोक्तं भवति - 'कतमः पन्थाः' इति; एवं 'धर्मान् वद' इति ब्रुवतोक्तं भवति—'कतमे धर्माः' इति। *परिपृच्छयैव च व्याकरणात्*। बहवो धर्माः, कतमान् वदामीति परिपृच्छयैव तस्य प्रश्नस्य तेषां वा धर्माणां व्याकरणात्, धर्मबहुत्वं व्याकृतमिति कृत्वा। कथं न *परिपृच्छाव्याकरणमि*ति। परिपृच्छ्य व्याकरणमित्यर्थः। तत्र यदुक्तम्—'तयोश्च न किञ्चिद् व्याक्रियते, केवलं परिपृच्छ्येत यावत् कथं च व्याकरणम्' इति, तदयुक्तम्।

*आचार्य* आह—*सूत्रान्तादेवे*ति। एवं तु सूत्रे व्याकृतम्। संस्कृतेन व्यवस्थाप्य पठ्यते। सञ्चेतनीयं कर्म कृत्वा किं प्रतिसंवेदयते—'किं

---

१. परिप्रश्न्येते—का०।

२. का० पुस्तके नास्ति।

व्याकरणीयः प्रश्नः। कतमश्च भिक्षवो विभज्यव्याकरणीयः प्रश्नः? 'सञ्चेतनीयं कर्म कृत्वा किं प्रतिवेदयते' इत्ययं विभज्यव्याकरणीयः प्रश्नः। कतमश्च भिक्षवः परिपृच्छ्यव्याकरणीयः प्रश्नः? संज्ञासु पुरुषस्यात्मा, उताहोऽन्या संज्ञा अन्य आत्मेति पृष्टेन सता परिप्रष्टव्यः—कतमं पुनरायुष्मानात्मानं प्रत्येति? स चेदेवं वदेद्—औदारिकं खल्वहयायुष्मन्नात्मानं प्रत्येमि। एवं सत्यन्या संज्ञा अन्य आत्मेत्येवं वचनीयः। अयं हि परिपृच्छ्य व्याकरणीयः प्रश्नः। कतमश्च भिक्षवः स्थापनीयः प्रश्नः? तद्यथा—शाश्वतो लोकोऽशाश्वतः, शाश्वतश्चाशाश्वतश्च, नैव शाश्वतो नाशाश्वतः; अन्तवानन्तश्च नैवान्तवान्नानन्तवान्। भवति तथागतः परं मरणान्न भवति तथागतः परं मरणात्, यावदन्यो जीवोऽन्यच्छरीरमित्ययं भिक्षवः स्थापनीयः प्रश्नः" इति ॥ २२ ॥

यस्य पुद्गलस्य योऽनुशयो यस्मिन्नालम्बनेऽनुशेते स तेन तस्मिन् सम्प्रयुक्तः। इदं तु वक्तव्यम्—अतीते न कस्मिन् यावत् प्रत्युत्पन्ने न कस्मिन्निति?

समासत इमे द्विविधाः क्लेशाः—स्वलक्षणक्लेशाश्च, रागप्रतिघमानाः। सामान्यक्लेशाश्च दृष्टिविचिकित्साऽविद्याः[1]। तत्र तावत्

---

सुखं दुःखम् अदुःखासुखम्' इत्येवं पृष्टेन विभज्य व्याकरणीयः प्रश्नः। सञ्चेतनीयस्य कुशलादिभेदात्। कुशलसास्रवं सञ्चेतनीयं कर्म कृत्वा सुखमदुःखासुखं वा प्रतिसंवेदयते। अकुशलसञ्चेतनीयं कर्म कृत्वा दुःखं प्रतिसंवेदयते इति। *स चेदेवं वदेत्*–*औदारिकमिति* रूपि। *विस्तरः* प्रभेदः। *न भवति यावदन्यो जीव* इति। यावच्छब्देन सर्वं वक्तव्यम्—"न भवति तथागतः परं मरणात्, भवति च न भवति तथागतः परं मरणात्। स जीवस्तच्छरीरम्, अन्यो जीवः, अन्यच्छरीरम्" इति ॥ २२ ॥

*स तेन तस्मिं संयुक्त* इति। स पुद्गलस्तेनानुशयेन बद्ध इति ज्ञायत एवेत्यर्थः। *स्वलक्षणक्लेशाश्चे*ति। स्वलक्षणम्–सुखवेदनीयादि वस्तु, तत्र रागः सुखवेदनीय एव वस्त्वालम्ब्योत्पद्यत इति *स्वलक्षणक्लेश* इत्युच्यते। तेन सुखवेदनीयेनालम्ब्यमानेनोन्नतिर्भवतीति मानोऽपि स्वलक्षणक्लेशः। तथा दुःखवेदनीयं वस्त्वालम्ब्य *प्रतिघ* उत्पद्यते इति प्रतिघोऽपि स्वलक्षणक्लेश इत्युच्यते। *सामान्यक्लेशाश्च*। दृष्टिविचिकित्सादयः। सामान्याः सामान्येन वा

---

१. ०कित्साऽविद्याः–का०।

**रागप्रतिघमानैः स्यादतीतप्रत्युपस्थितैः ।**

**यत्रोत्पन्नाऽप्रहीणास्ते तस्मिन् वस्तुनि संयुतः ॥ २३ ॥**

अतीता प्रत्युत्पन्नाश्च रागप्रतिघमाना यस्मिन् वस्तुन्युत्पन्ना न च प्रहीणास्तस्मिन् वस्तुनि तैः संयुक्तः । एते हि स्वलक्षणक्लेशत्वान्न सर्वस्यावश्यं सर्वत्रोत्पद्यन्ते ॥ २३ ॥

**सर्वत्रानागतैरेभिर्मानसैः,**

'यत्राप्रहीणास्ते' इति वर्तते । अनागतैरेभिरेव रागप्रतिघमानैर्मनोभूमिकैः सर्वत्र वस्तुनि संयुक्तस्त्रैयध्विके ; मानसानां त्र्यध्वविषयत्वात् ।

**स्वाध्विकैः परैः ।**

अन्यै रागप्रतिघैरनागतैरनागत एव वस्तुनि संयुक्तः । के पुनरन्ये ? ये पञ्चविज्ञानकायिका रागाश्च प्रतिघाश्च । उत्पत्तिधर्मभिरेव । तैरेव तु

**अजैः सर्वत्र,**

अनुत्पत्तिधर्मभिः पञ्चविज्ञानकायिकैरपि सर्वत्र वस्तुनि संयुक्तः । त्रैयध्विकेऽपि

---

क्लेशाः सामान्यक्लेशाः । एते ह्यविशेषेण सुखवेदनीयादिके वस्तुन्युत्पद्यते इति, अतस्तदालम्ब्य उत्पन्नाः क्लेशाः 'सामान्यक्लेशाः' इत्युच्यन्ते ।

*अतीतप्रत्युपस्थितै*रिति । अतीतवर्तमानैः । *रागप्रतिघमाना यस्मिन् वस्तुन्युत्पन्ना* इति विस्तरः । एते रागादयः षड्विज्ञानकायिका अप्यविशेषाभिध्यानाद् यथायोगं यस्मिन् वस्तुन्युत्पन्नाः त्रैयध्विके दुःखदर्शनप्रहातव्ये यावद् भावनाप्रहातव्ये । *न च प्रहीणाः, तस्मिन् वस्तुनि तैः* रागादिभिः *संयुक्ताः*, दाम्नेव बलीवर्दाः कीलके । *एते हि स्वलक्षणक्लेशत्वान्न सर्वस्य* पुद्गलस्यावश्यं *सर्वत्रोत्पद्यन्ते* इति । कस्यचित् कस्मिंश्चिदुत्पद्यन्त इत्यर्थः । अतो *यत्रोत्पन्नाप्रहीणास्ते* इति । तद्विशेषणम् । अप्रहीणा इति विशेषणम् । यस्माद् यै रागादिभिर्यस्मिन् वस्तुनि संयुक्त आसीत्, यदि ते प्रहीणा भवेयुः न तैः सर्वत्र प्रहीणेन निरनुशयविषयत्वात् ॥ २३ ॥

*"सर्वत्रानागतैरेभिर्मानसैः"* इति । मानसग्रहणम् ।

*स्वाध्विकैः परै*रिति । पञ्चविज्ञानकायिकानामन्यथा व्यवस्थाप्यमानत्वात् । राग-प्रतिघ-विशेषणं चैतत् । मानस्यावश्यं मानसत्वात् । एभि*रनागतैः सर्वत्र त्रैयध्विके* पञ्चनैकायिकेऽपि यथास्वं *संयुक्तः* । नहि तत् सास्रवं वस्तु, यत्

**शेषैस्तु सर्वैः सर्वत्र संयुतः ॥ २४ ॥**

के पुनः शेषाः ? दृष्टिविचिकित्साऽविद्यास्त्रैयध्विकाः। तैः सर्वैरपि सर्वस्मिन् वस्तुनि संयुक्तः, सामान्यक्लेशत्वात्। 'यावदप्रहीणा.' इत्यधिकारोऽनुवर्त्तत एव ॥ २४ ॥

किं पुनरिदमतीतानागतमुच्यतेऽस्ति, अथ न ? यद्यस्ति सर्वकालास्तित्वात्, संस्काराणां शाश्वतत्वं प्राप्नोति; अथ नास्ति, कथं तत्र तेन च[1] संयुक्तो भवति विसंयुक्तो वा ? न संस्काराणां शाश्वतत्वं प्रतिज्ञायते वैभाषिकैः संस्कृतलक्षणयोगात्। प्रतिज्ञायते तु विशादम्—

स्वलक्षणक्लेशेनापि रागेण न सरागम्, द्वेषेण च न सद्वेषम्। मानेन च न समानम्। सर्वसास्रववस्त्वालम्बना हि यथास्वमपरिमिता अनागता रागादयो भवन्ति। *अन्यै रागप्रतिघैरनागतैरनागत एव वस्तुनि संयुक्त* इति। सर्वे चित्तचैत्ता आलम्बने नियता इति तैरुत्पत्तिधर्मिभिरनागत एव वस्तुनि संयुक्तः; वर्तमानविषयत्वात् पञ्चानां विज्ञानकायानाम्। *रागप्रतिघैरि*ति। मानावचनं म नसत्वात्। "समानमिद्धा दृग्घेया मनोविज्ञानभूमिकाः" (अभि० ५.५३) इति वचनात्। पञ्चविज्ञानकायिकैरपि न केवलं मानसैरित्यपिशब्दो द्योतयति। *तैरनुत्पत्तिधर्मिभिः सर्वत्र वस्तुनि त्रैयध्विके संयुक्तः*। एते ह्यनुत्पत्तिधर्मिणोऽनागता एवाध्वनि व्यवस्थाप्यन्ते। एषां चालम्बनानि सञ्चरन्ति। ससम्प्रयोगा हि क्लेशा सुवर्चलावदनुत्पत्तिधर्मिणो विषयाभिमुखा एवावतिष्ठन्ते। तथा ह्यनुत्पत्तिधर्मिणो नैवालम्बनमालम्ब्योत्पद्यन्त इति। अथ केषाञ्चिदालम्बनमतीतम्, केषाञ्चिद् वर्तमानम्, केषाञ्चिदनागतं भवति; न ह्यालम्बनानुत्पत्तिः ? न ह्यालम्बनानुत्पत्तित एव तेषामनुत्पत्तिः, किं तर्हि ? प्रत्ययवैकल्यात्। अवस्थाफलं हि सामग्र्यां न द्रव्यफलम्—इति सिद्धान्तः।

'*शेषैस्तु सर्वैः सर्वत्र संयुतः*" इति। त्रैयध्विकैरपि दृष्ट्यादिभिरनेकनैकायिकैरपि *त्रैयध्विके* पञ्चप्रकारेऽपि वस्तुनि *संयुतः* संयुक्त इत्यर्थः। किं कारणम् ? इत्याह—*सामान्यक्लेशत्वा*दिति। एते हि सर्वस्य सर्वस्मिन् संभवन्ति; पञ्चोपादानस्कन्धालम्बनत्वात् ॥ २४ ॥

*कथं तत्र तेन च संयुक्त* इति। कथमतीतानागते वस्तुनि। तेन चातीतानागतेनानुशयेन संयुक्त इति। *विसंयुक्तो वा*। कथं वा अप्रहीण-प्रहीणावस्थायां

१. वा—का०।

**सर्वकालास्तिता,**

किं कारणम् ?

**उक्तत्वात्,**

उक्तं हि भगवता—"अतीतं चेद् भिक्षवो रूपं नाभविष्यन्न श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षोऽभविष्यत् । यस्मात्तर्ह्यस्त्यतीतं रूपं तस्माच्छ्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षो भवति । अनागतं चेद्रूपं नाभविष्यत् न श्रुतवानार्यश्रावकोऽनागतं रूपं नाभ्यनन्दिष्यत् । यस्मात्तर्ह्यस्त्यनागतं रूपम्" इति विस्तरः ।

**द्वयात्,**

"द्वयं प्रतीत्य विज्ञानस्योत्पादः" इत्युक्तम् । द्वयं कतमत् ? चक्षू रूपाणि यावत् मनोधर्मा इति । असति वाऽतीतानागते तदालम्बनं विज्ञानं द्वयं प्रतीत्य न स्यात् । एवं तावदागमतोऽस्त्यतीतानागतम् । युक्तितोऽपि—

**सद्विषयात्,**

---

व्यवस्थाप्यन्ते ? *संस्कृतलक्षणयोगादि*ति । यस्मात् संस्कृतलक्षणानि जात्यादीनि संस्कृतानामर्थसञ्चाराय प्रवर्तन्ते, अतस्तेषामशाश्वतत्वं प्रतिज्ञायते । रूपं चेद् *भिक्षव* इत्यस्य सूत्रस्यायमादितः पाठः—"रूपमनित्यमनागतम् । कः पुनर्वादः प्रत्युत्पन्नस्य ! एवंदर्शी श्रुतवान् आर्यश्रावकोऽतीते रूपेऽनपेक्षो भवति, अनागतं रूपं नाभिनन्दति, प्रत्युत्पन्नस्य रूपस्य निर्विदे विरागाय निरोधाय प्रतिपन्नो भवति । अतीतं चेद् भिक्षवो रूपं नाभविष्यत्, न श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षोऽभविष्यत् । यस्मात् तर्ह्यस्त्यतीतं रूपम्, तस्माच्छ्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षो भवति । अनागतं चेद्रूपं नाभविष्यत्, न श्रुतवानार्यश्रावकोऽनागतं रूपं नाभ्यनन्दिष्यत् । यस्मात् तर्हि अस्त्यनागतं रूपम्, तस्मात् श्रुतवानार्यश्रावकोऽनागतं रूपं नाभिनन्दिष्यति । प्रत्युत्पन्नं चेद् भिक्षवो रूपं नाभविष्यदिति विस्तरः, न श्रुतवानार्यश्रावकोऽतीते रूपेऽनपेक्षोऽभविष्यद्" इति । निर्विषयत्वाद् वैराग्यकालेऽतीतविषयापेक्षार्यश्रावकस्यानपेक्षा मतिर्न स्यादित्यर्थः। यदातीतं रूपमपेक्ष्यते तदा तत्रासक्तिरिति । अभ्यनन्दिष्यदिति अभ्यलषिष्यत् । प्रत्युत्पन्नं चेद् भिक्षवो रूपं नाभविष्यत्, न श्रुतवानार्यश्रावकः प्रत्युत्पन्नस्य रूपस्य निर्विदे वैराग्याय निरोधाय प्रतिपन्नोऽभविष्यदित्येतन्नोक्तम्; उभयपक्षप्रसिद्धत्वात् ।

सति विषये विज्ञानं प्रवर्तते, नासति। यदि चातीतानागतं न स्यादसदालम्बनं विज्ञानं स्यात्। ततो विज्ञानमेव न स्याद्; आलम्बनाभावात्।

**फलात्।**

यदि चातीतं न स्यात् शुभाशुभस्य कर्मणः फलमायत्यां कथं स्यात्! न हि फलोत्पत्तिकाले वर्तमानो विपाकहेतुरस्तीति। तस्मादस्त्येवातीतानागतमिति **वैभाषिकाः**।

अवश्यं च किलैतत् सर्वास्तिवादेन सताऽभ्युपगन्तव्यम्। यस्मात्

**तदस्तिवादात् सर्वास्तिवादा इष्टाः,**

ये हि सर्वमस्तीति वदन्ति अतीतमनागतं प्रत्युत्पन्नं च, ते **सर्वास्तिवादाः**। ये तु केचिदस्ति यत् प्रत्युत्पन्नमदत्तफलं चातीतं कर्म, किञ्चिन्नास्ति यद्दत्तफलमतीतमनागतं चेति विभज्य वदन्ति, ते **विभज्यवादिनः**।

कति चैते सर्वास्तिवादाः? इत्याह—

**चतुर्विधाः ॥ २५ ॥**

**ते भावलक्षणावस्थाऽन्यथाऽन्यथिकसंज्ञिताः।**

भावान्यथिको **भदन्तधर्मत्रातः**। स किलाह—धर्मस्याध्वसु प्रवर्तमानस्य भावान्यथात्वं भवति, न द्रव्यान्यथात्वम्। यथा सुवर्णभाजनस्य भित्त्वाऽन्यथा क्रियमाणस्य संस्थानान्यथात्वं भवति, न वर्णान्यथात्वम्। यथा च क्षीरं दधित्वेन

---

*स्यादिति*। पूर्वं कण्ठत उक्तमिति प्रदर्शितम्, इदानीमर्थतो न कण्ठत इति विशेषः। *न द्वयं प्रतीत्य मनोविज्ञानं स्यात्।* यदतीतानागतालम्बनमिति विशेषः।

*ततो विज्ञानमेव न स्यादालम्बनाभावादिति*। विज्ञेये सति विज्ञानमिति कृत्वा। साधनं चात्र—'सदालम्बनमेव मनोविज्ञानम्; उपलब्धिस्वभावत्वात्, चक्षुर्विज्ञानवत्' इति।

*फलादिति*। विद्यमानस्वलक्षणं *शुभाशुभ*मतीतं *कर्म*, विपाककाल उत्पद्यमानफलत्वात्, वर्तमानधर्मवदिति ॥ २५ ॥

*भावान्यथात्वं भवतीति*। अतीतानागतप्रत्युत्पन्नस्य भावस्यान्यथात्वं भवतीत्यर्थः। *न द्रव्यान्यथात्वम्।* न रूपादिस्वलक्षणस्यान्यथात्वं भवतीत्यर्थः।

परिणमद् रसवीर्यविपाकान् परित्यजति, न वर्णम्। ए ं धर्मोऽप्यनागतादध्वनः प्रत्युत्पन्नमध्वानमागच्छन्ननागतभावं जहाति, न द्रव्यभावम्। एवं प्रत्युत्पन्नादतीतमध्वानं गच्छन् प्रत्युत्पन्नभावं जहाति, न द्रव्यभावमिति।

लक्षणान्यथिको भदन्तघोषकः। स किलाह—धर्मोऽध्वसु प्रवर्त्तमानोऽतीतोऽतीतलक्षणयुक्तः, अनागतप्रत्युत्पन्नाभ्यामवियुक्तः। एवं प्रत्युत्पन्नोऽप्यतीतानागताभ्यामवियुक्तः। तद्यथा--पुरुष एकस्यां स्त्रियां रक्तः, शेषास्वविरक्त इति।

अवस्थाऽन्यथिको भदन्तवसुमित्रः। स किलाह—धर्मोऽध्वसु प्रवर्तमानोऽवस्थामवस्थां प्राप्यान्योऽन्यो निर्दिश्यते अवस्थान्तरतः, न द्रव्यान्तरतः। यथैका गुलिका[1] एकाङ्के निक्षिप्ता एकमित्युच्यते, शताङ्के शतम्, सहस्राङ्के सहस्रमिति।

---

*अनागतो हि वर्तमानमध्वानं प्रतिपन्नोऽनागतभावं जहाति।* वर्तमानभावं प्रतिलभते। वर्तमानोऽप्यतीतम्। सुवर्णं क्षीरं चेति दृष्टान्तद्वयं यथाक्रममाकृतिगुणान्यथात्वज्ञापनार्थम्।

लक्षणान्यथिकस्य लक्षणवृत्तिलाभापेक्षो व्यवहारः। अत एव आह—*धर्मोऽध्वसु प्रवर्तमानोऽतीतलक्षणयुक्तः, अनागतप्रत्युत्पन्नाभ्यां लक्षणाभ्यामवियुक्त* इति विस्तरः। यद्यनागतम् अतीतप्रत्युत्पन्नाभ्यां वियुक्तं स्यात्, एवं सति नानागतमेवोत्पन्नमतीतं वेति स्यात्। अथातीतम् अनागतप्रत्युत्पन्नाभ्यां वियुक्तं स्यात्, नानागतं वर्तमानं चातीतं स्यात्। वर्तमानम् अतीतानागताभ्यां वियुक्तं अनागतमेव वर्तमानम्, वर्तमानमेवातीतं स्यात्। लब्धवृत्तिना हि लक्षणेन युक्तो व्यवस्थाप्यते, तदन्येनावियुक्तो न विरहित इत्यर्थः। अत एवोदाहरति—*तद्यथा पुरुष एकस्यां स्त्रियां रक्तः, शेषास्वविरक्त* इति। एकस्यां स्त्रियामस्य रागाध्यवसानं वर्तते। शेषासु स्त्रीषु रागप्राप्तिरेवास्ति, न समुदाचार इति।

अवस्थान्यथिकस्यावस्थापेक्षो व्यवहारः, यस्यामवस्थायां यो धर्मः कारित्रं न करोति तस्याम् 'अनागतः' उच्यते, यस्यां करोति तस्यां 'वर्तमानः', यस्यां कृत्वा निरुद्धः तस्याम् 'अतीतः' इत्यवस्थामवस्थां *प्राप्य अन्योऽन्यो* निर्दिश्यते। अनागतावस्थां प्राप्यानागतो यावदतीतावस्थां प्राप्यातीत इति। *अवस्थान्तरतो न द्रव्यान्तरत* इति। अभिन्नलक्षणोऽनागताद्यवस्थाप्राप्तोऽनागतादिशब्दनिर्देशः केवलं भवतीत्यर्थः। अत एवोदाहरति—*यथैका गुलिकेति* विस्तरः। यथैका

---

१ वर्तिका—का०।

अन्यथान्यथिको भदन्तबुद्धदेवः । स किलाह--धर्मोऽध्वसु प्रवर्तमानः पूर्वापरमपेक्षयान्योऽन्य उच्यते अवस्थान्तरतः, न द्रव्यान्तरतः । यथैका स्त्री माता चोच्यते दुहिता चेति[1] ।

इत्येते चत्वारः सर्वास्तिवादाः ।

एषां तु प्रथमः परिणामवादित्वात् सांख्यपक्षे निक्षेप्तव्यः । द्वितीयस्याध्वसङ्करः प्राप्नोति, सर्वस्य सर्वलक्षणयोगात् । पुरुषस्य तु कस्याञ्चित् स्त्रियां रागः समुदाचरति कस्याञ्चित् केवलं समन्वागम इति किमत्र साम्यम् ! चतुर्थस्याप्येकस्मिन्नेवाध्वनि त्रयोऽध्वानः प्राप्नुवन्ति । अतीतेऽध्वनि पूर्वपश्चिमौ क्षणावतीतानागतौ, मध्यमः क्षणः प्रत्युत्पन्न इति । एवमनागतेऽपि ।

---

गुलिका एकाङ्के निक्षिप्ता एकस्थाने स्थापिता *एकमित्युच्यते, एवं शताङ्के शतम्, सहस्राङ्के सहस्रम्* इत्युच्यते, अवस्थान्तरापेक्षया । न पुनस्तस्याः स्वभावान्यथात्वम्, किं तर्हि ? स्थानान्तरविशेषात् संख्याभिद्योतकं संज्ञामात्रमुत्पद्यत इति ।

*पूर्वापरमपेक्ष्या अन्योन्य उच्यते* इति । पूर्वम् अपरम् चापेक्षया अतीतानागतवर्तमाना उच्यन्त इत्यर्थः । पूर्वमेवातीतं वर्तमानं वापेक्षयाऽनागत इति, पूर्वं वाऽतीतम्, अपरं वाऽनागतम् अपेक्षया वर्तमान इति, अपरमेव वर्तमानमनागतं वा अपेक्षयाऽतीत इति पूर्वापरापेक्षोऽन्यथिकस्य व्यवहारः । अत एवोदाहरति—*यथैका स्त्री माता वोच्यते दुहिता* चेति । यथैका स्त्री दुहितरमपेक्षया मातेत्युच्यते, मातरमपेक्षया दुहिता चेति । पूर्वापरापेक्षया, न द्रव्यान्तरतः ।

*साङ्ख्यपक्षे निक्षेप्तव्य इति* । यः साङ्ख्यपक्षे प्रतिषेधः, स एव तत्पक्षस्य प्रतिषेधः । साङ्ख्यपक्षः पूर्वं प्रतिषिद्ध इत्यभिप्रायः[2] ।

*द्वितीयस्यापि भदन्तघोषकस्यापि* अध्वसङ्करः प्राप्नोति । योऽतीताध्वाभिप्रेतः, स वर्तमानः अनागतोऽपि प्राप्नोति । कथं कृत्वा ? अतीतेऽतीतलक्षणयुक्तो भवन्ननागतवर्तमानलक्षणाभ्यामवियुक्तः । युक्त एवेत्यर्थः । अनागतोऽप्यनागतलक्षणयुक्तोऽतीतवर्तमानलक्षणाभ्यामवियुक्त इति कृत्वा । एकैकस्य त्रिलक्षणयोगात् अतीतोऽनागतो वर्तमानश्च प्राप्नोति । इत्येवमनागतवर्तमानावपि योज्यौ । *किमत्र साम्यमिति* । पुरुषस्य कस्याञ्चित् केवलं समन्वागमः । किमेवं धर्मस्यैकं लक्षणं विद्यते ? इत एव लक्षणे न विद्यते, यत एवमुदाह्रियते वस्त्यसाम्यम् ।

---

१. वो०—का० । २. द्र०—अभि० को० २. ३६; ३.२७ का० ।

अत एषां सर्वेषां

**तृतीयः शोभनः,**

योऽयमवस्थाऽन्यथिकः । तस्य किल

**अध्वानः कारित्रेण व्यवस्थिताः ॥ २६ ॥**

यदा स धर्मः कारित्रं न करोति तदा अनागतः। यदा करोति तदा प्रत्युत्पन्नः । यदा कृत्वा निरुद्धस्तदा अतीत इति । परिगतमेतत् सर्वम् ।

इदं तु वक्तव्यम्—यद्यतीतमपि द्रव्यतोऽस्त्यनागतमिति कस्मात् तदतीतमित्युच्यते, अनागतमिति वा ? ननु चोक्तमध्वानः कारित्रेण व्यवस्थिता इति ? यद्येवम्, प्रत्युत्पन्नस्य तत्सभागस्य चक्षुषः किं कारित्रम् ? फलदानप्रतिग्रहः । अतीतानामपि तर्हि सभागहेत्वादीनां फलदानात् कारित्रप्रसङ्गोऽर्धकारित्रस्य वेति लक्षणसंकरः ॥ २६ ॥

---

*चतुर्थस्यापि भदन्तबुद्धदेवस्यापि एकस्मिन्नेवाध्वनि त्रयोऽध्वानः प्राप्नुवन्ति । एकस्मिन्नेवातीतेऽध्वनि पूर्वापरक्षणव्यवस्थास्ति* । तत्र पूर्वपश्चिमौ क्षणावतीतानागतौ । पूर्वः क्षणोऽतीतः, पश्चिमः क्षणोऽनागत. *मध्यमः* प्रत्युत्पन्नः । इत्यतीतेऽध्वनि त्रयोऽध्वानः प्राप्नुवन्ति ।

*अत एषां सर्वेषां "तृतीयः शोभनः"* इति वैभाषिकः । कथं कृत्वा शोभ... इत्याह—यस्मात् तस्य *"अध्वानः कारित्रेण व्यवस्थिताः"* । कारित्रं पुनः चक्षुरादीनां दर्शनादीनीति । रूपादीनामपि स्वेन्द्रियगोचरत्वं कारित्रम् । *यद्येवमिति* विस्तरः । यदि कारित्रेण व्यवस्थापिताः, *तत्सभागस्य चक्षुषः किं कारित्रम्* । यद्धि कारित्रलक्षणं स्वकर्म न करोति, तत् तत्सभागः । तस्य च नास्ति कारित्रं दर्शनलक्षणम् । कथं तत् प्रत्युत्पन्नमित्यभिप्रायः । *फलदानप्रतिग्रह* इति तच्चक्षुः स्वनिष्यन्दफलं परिगृह्णाति, आक्षिपति, फलं च ददाति, निष्यन्दफलमनन्तरं ददाति । पुरुषकारफलं च यद्यपि दर्शनकारित्रं न करोति, अन्यत् फलं करोति । तस्य फलदानपरिग्रहसद्भावात् तत्प्रत्युत्पन्नमिति व्यवस्थाप्यते *अतीतानामपि तर्हि सभागहेत्वादीनामिति* । आदिशब्देन विपाकहेत्वादीनां परिग्रहणम्; तेषां फलदानात् । "वर्तमानाभ्यतीतौ द्वावेकोऽतीतः प्रयच्छति" (अभि० को० २.५९) इति वचनात् ।

*कारित्रप्रसङ्गः* । कारित्रमस्तीति । ततश्चैषां सभागहेत्वादीनामतीतानां वर्तमानत्वप्रसङ्गः, वर्तमानवत् कारित्रसद्भावात् इति लक्षणसङ्करः ।

**इदं च वक्तव्यम्—तेनैवात्मना सतो धर्मस्य नित्यं कारित्रकरणे किं विघ्नम्?**

येन कदाचित् कारित्रं करोति कदाचिन्नेति। प्रत्ययानामसामग्र्यमिति चेत्? न; नित्यमस्तित्वाभ्युपगमात्। यच्च तत् कारित्रमतीतानागतं प्रत्युत्पन्नं चोच्यते

**तत् कथम्?**

किं कारित्रस्याप्यन्यदस्ति कारित्रम्! अथ तन्नैवातीतं नाप्यनागतं न प्रत्युत्पन्नमस्ति च। तेनासंस्कृतत्वान्नित्यमस्तीति प्राप्तम्। अतो न वक्तव्यम्—यदा कारित्रं न करोति धर्मस्तदानागत इति।

स्यादेष दोषो यदि धर्मात् कारित्रमन्यत् स्यात्, तत्तु खलु—

ब्रूयास्त्वम्—'येषां फलपरिग्रहः, फलदानं चाभयमस्ति, ते वर्तमानाः; येषां त्वेकतरम्, न ते वर्तमानाः' इति, तत इदमुच्यते--*अर्धकारित्रस्य वेति*। प्रसङ्ग इत्यधिकृतम्। अर्धकारित्रस्य वा प्रसङ्गः। अर्धवर्तमाना इति वा तेऽतीताः प्रसज्यन्ते। उपरतफलपरिग्रहकारित्रत्वाद्धि तेऽतीतलक्षणयुक्ता, वर्तमानफलदानकारित्रत्वाच्च वर्तमानलक्षणयुक्ता इति स एव लक्षणसङ्करदोषः। एतद्ध्यतीतादीनामध्वनां लक्षणमिष्टम्—उपरतकारित्रमतीतम्, अप्राप्तकारित्रमनागतम्, प्रत्युत्पन्नकारित्रं वर्तमानमिति ॥ २६ ॥

*किं विघ्नमिति*। नपुंसकलिङ्गमेतच्छब्दरूपम्। को विबन्ध इत्यर्थः। को विघ्नोऽस्येति किंविघ्नं कारित्रमित्यपरे। *प्रत्ययानामसामग्र्यमिति चेत्*। तत्र तत् स्यात्—प्रत्ययानां हेतुसमनन्तरादीनामसामग्र्यम्, अतो न सर्वदा कारित्रं करोति। *न, नित्यमस्तित्वाभ्युपगमात्*। न प्रत्ययानामसामग्र्यं कल्पयितुं युज्यते; यस्मादिह भवद्भिर्नित्यं प्रत्ययानामस्तित्वमभ्युपगम्यते; सतामविनाशात्।

*यच्च तत्कारित्रमतीतमिति* विस्तरः। यच्च कारित्रमतीतमुच्यते, अनागतं प्रत्युत्पन्नमिति चोच्यते; सिद्धान्ते 'उपरतकारित्रमतीतम्' इत्येवमादिवचनात्। *किं कारित्रस्याप्यन्यत् कारित्रमस्ति*; यतस्तस्यातीतादित्वं कथ्यते? यद्यस्ति, अनवस्थाप्रसङ्गः। न चेदस्ति, यथानागतादित्वं कारित्रस्य स्वरूपसत्तापेक्षया, एवं भावानामप्यनागतादित्वं भविष्यति, किं कारित्रकल्पनया! कथं तदतीतमित्यादि! *अथ तन्नैवातीतमिति* विस्तरः। यन्नैवातीतम्, नाप्यनागतम्, न प्रत्युत्पन्नम्, तदसंस्कृतमिति असंस्कृतत्वान्नित्यमस्तीति प्राप्तम्। *न करोति धर्मस्तदानागत* इति। कारित्रस्य कर्तुमसख्यत्वप्राप्तेः।

*स्यादेष दोष* इति विस्तरः। स्यादेष दोषः कारित्रस्यान्यत् कारित्रमित्यनि·

नान्यत्,

अतो न भवत्येष दोषः ।

एवं तर्हि स एव

अध्वायोगः,

यदि धर्म एव कारित्रं कस्मात्स एव धर्मस्तेनैवात्मना विद्यमानः कदाचिदतीत इत्युच्यते, कदाचिदनागत इत्यध्वनां व्यवस्था न सिध्यति । किमत्र न सिध्यति ? यो ह्यजातो धर्मः सोऽनागतः, यो जातो भवति न च विनष्टः स वर्त्तमानः, यो विनष्टः सोऽतीत इति । एतदेवात्र वक्तव्यम्—यदि यथा वर्त्तमानं द्रव्यतोऽस्ति तथाऽतीतमनागतं चास्ति । तस्य

तथा सतः ।

अजातनष्टता केन ?

तेनैव स्वभावेन सतो धर्मस्य कथमिदं सिध्यत्यजात इति यो विनष्ट इति वेति। किमस्य पूर्वं नासीद् यस्याभावादजात इत्युच्यते ! किं च पश्चान्नास्ति यस्याभावाद् विनष्ट इत्युच्यते ! तस्मान्न सिध्यति सर्वथाप्यत्राध्वत्रयम्, यद्यभूत्वा भवतीति नेष्यते भूत्वा च पुनर्न भवतीति । यदप्युक्तम्—"संस्कृतलक्षणयोगान्न शाश्वतत्वप्रसङ्गः" इति । तदिदं केवलं वाङ्मात्रमुत्पादविनाशयोरयोगात । नित्यं च नामास्ति स धर्मो न च नित्य इत्यपूर्वैषा वाचोयुक्तिः । आह खल्वपि—

---

प्रसङ्गोऽसंस्कृतत्वप्रसङ्गो वा। *यदि धर्मात् कारित्रमन्यत् स्यात् ? तत्तु खलु नान्यदिति* । नैष दोषः ।

*तेनैवात्मने*ति । यः प्रत्युत्पन्नस्य स्वभावस्तेनेत्यर्थः ।

*किमस्य पूर्वं नासी*दित्यनागतावस्थायां यदि कारित्रम्, अनन्यत्वाद्धर्म एव नासीदित्युक्तं भवेत् । *किञ्च पश्चान्नासी*दित्यतीतावस्थायां यदि कारित्रम्, धर्म एव नासीदित्युक्तं भवेत्; धर्मकारित्रयोरनन्यत्वात् । *यद्यभूत्वा भवतीति नेष्यते*, प्रत्युत्पन्नो न सिद्ध्यति । भूत्वा च पुनर्नभवतीति यदि नेष्यते, अतीतोऽध्वा न सिद्ध्यति । अनागतस्तु यो न तावदभूत्वा भवतीत्यर्थाद् गम्यते । एवं अध्वत्रयं सिद्ध्यति, अतोऽन्यथा न सिद्ध्यतीति वाक्यार्थः ।

*उत्पादविनाशयोरयोगा*दिति । सर्वकालास्तित्वादुत्पादविनाशयोरयोगः, तस्माद् वाङ्मात्रमेतत्—संस्कृतलक्षणयोगान्न शाश्वतत्वप्रसङ्ग इति । *अपूर्वैषा*

**"स्वभावः सर्वदा चास्ति भावो नित्यश्च नेष्यते ।**
**न च स्वभावाद् भावोऽन्यो व्यक्तमीश्वरचेष्टितम्" ॥**

यदुक्तम्—उक्तत्वादिति। वयमपि ब्रूमोऽस्त्यतीतानागतमिति। अतीतं तु यद् भूतपूर्वम्, अनागतं यत्सति हेतौ भविष्यति। एवं हि[1] कृत्वाऽस्तीत्युच्यते न तु पुनर्द्रव्यतः। कश्चैवमाह—वर्तमानवत्तदस्तीति? कथमन्यथाऽस्ति? अतीतानागतात्मना। इदं पुनस्तवोपस्थितम्—कथं तदतीतमनागतं चोच्यते यदि नित्यमस्तीति। तस्मात् भूतपूर्वस्य च हेतोर्भाविनश्च फलस्य भूतपूर्वतां भावितां च ज्ञापयितुं हेतुफलापवाददृष्टिप्रतिषेधार्थमुक्तं भगवता—"अस्त्यतीतमस्त्यनागतम्" इति। अस्तिशब्दस्य निपातत्वात्। यथाऽस्ति दीपस्य प्रागभावोऽस्ति पश्चादभाव

---

*वाचोयुक्तिरि*ति। पूर्वापरविरुद्धैषा वाचोयुक्तिरित्यर्थः। सर्वदा चास्ति, उत्पादविनाशाभ्यां च युज्यत इति।

*स्वभावः सर्वदा चास्ती*ति। यद् रूपादेः स्वलक्षणम्, तत् सर्वस्मिन् काले विद्यत इतीष्यते।

यदि रूपादेः स्वभावः सर्वदास्ति, तेन रूपादिभावो नित्यः प्राप्नोति? अत आह—*भावो नित्यश्च नेष्यते*। एवं सति तस्मात् स्वभावाद् भावो नूनमन्य इति? अत आह—*न च स्वभावाद् भावोऽन्य* इति। तदिदमिच्छामात्रत्वात् *व्यक्तमीश्वरचेष्टितम्*। नात्र युक्तिरस्ति।

*अतीतं तु यद् भूतपूर्वमिति*। न स्वलक्षणेनास्तीति दर्शयति। *अनागतं यत् सति हेतौ भविष्यतीति*। अविद्यमानमपि हेतुसद्भावाद् व्यवस्थाप्यत इति दर्शयति। *एवं हि कृत्वाऽस्तीत्युच्यत* इति। भूतपूर्वम्, भविष्यति चेति कृत्वा। *न तु पुनर्द्रव्यत एवं भवति*। *हेतुफलापवाददृष्टिप्रतिषेधार्थमि*ति। हेत्वपवाददृष्टिप्रतिषेधार्थम् 'अस्त्यतीतम्' इत्युक्तम्। फलापवाददृष्टिप्रतिषेधार्थमस्त्यनागतमिति। 'आसीदतीतम्' 'भविष्यत्यनागतम्' इति वक्तव्ये 'अस्ति' इति वचनम्; *अस्तिशब्दस्य निपातत्वात्*। त्रिकालविषयो हि निपातः। आसीदर्थे भविष्यदर्थेऽपि वर्तते।

*यथास्ति दीपस्येति* विस्तरः। यथा 'अस्ति दीपस्य प्रागभावः, अस्ति

---

1. च—का०।

इति वक्तारो भवन्ति, यथा चास्ति निरुद्धः स प्रदीपो[1] न तु मया निरोधित इति। एवमतीतानागतमस्तीत्युक्तम्[2]। अन्यथा ह्यतीतानागत[3] एव न सिध्येत्।

यत्तर्हि लगुडशिखीयकान् परिव्राजकानधिकृत्योक्तं भगवता—"यत् कर्माभ्यतीतं क्षीणं निरुद्धं विगतं विपरिणतं तदस्ति" इति, किं ते तस्य तस्य कर्मणो भूतपूर्वत्वं नेच्छन्ति स्म? तत्र पुनस्तदाहितं तस्यां सन्ततौ फलदानसामर्थ्यं सन्धायोक्तम्। अन्यथा हि स्वेन भावेन विद्यमानमतीतं न सिध्येत्। इत्थं

---

पश्चादभावः' इति *वक्तारो भवन्ति*, न च द्रव्यतोऽस्ति। यथा च 'अस्ति निरुद्धः स प्रदीपः, न तु मया निरोधितः' इति वक्तारो भवन्ति, न च 'अस्ति' प्रयोगान्निरुद्धोऽप्यसावस्तीति। ननु च *वैभाषिकस्य* निरुद्धोऽप्यसावस्तीति? सत्यमस्ति, न तु प्रदीपरूपतामेव बिभ्राणः सोऽस्ति। *एवमतीतागतमस्तीत्युक्तम्* असत्यपि द्रव्यसत्त्वे; *अन्यथा हि अतीतानागत एव न सिद्ध्येत्*। यदि तेनैव लक्षणेन विद्येत, अतीतानागत एव न सिद्ध्येदित्यर्थः। यद्यतीतं भूतपूर्वम्, *यत्तर्हि लगुडशिखीयकानिति* विस्तरः। लगुडशिखीयकैः परिव्राजकैर्नार्यो निदानम्। *नालन्दायां* बुद्धभाषितं च सूत्रम्, संयुक्तकागमे च। आर्यमहामौद्गल्यायनश्च मारित इत्याहुरभियुक्ताः। यतो न मारित इत्यत्र सूत्र एवं पठ्यते—लगुडशिखीयकाः परिव्राजका आनन्तर्यकारिणो यत्कर्माभ्यतीतं तन्नास्तीत्येवंवादिन इति विस्तरः। *किं ते* लगुडशिखीयकाः परिव्राजकाः *तस्य कर्मणः* आनन्तर्यस्य *भूतपूर्वत्वं नेच्छन्ति*। एतदुक्तं भवति—इच्छन्ति स्म ते तस्य कर्मणो भूतपूर्वत्वम्, किन्तु न द्रव्यमिति ते तस्मिन् कर्मणि विप्रतिपन्नाः। नास्ति तत् कर्माभ्यतीतमिति। यतो भगवता यत्र ते विप्रतिपन्नाः स्वभावे तत्कर्माभ्यतीतमस्तीति विस्तरेण। तस्माद् अस्ति स्वभावेनातीतमिति विस्तरः।

*तत्र पुनः* सूत्रे यद् भूतपूर्वं कर्म न तदेवातीतमित्यभिसन्धायोक्तम्—तत्कर्मास्तीति, किं तर्हि? *तदाहितम्*। भूतपूर्वेण कर्मणा आहितम् = अर्पितम्। *तस्यां सन्ततौ फलदानसामर्थ्यं सन्धायोक्तमित्य*नेनाभिप्रायेणोक्तमिति। कथं गम्यते? इत्याह—*अन्यथा हि स्वेन भावेन विद्यमानमतीतं न सिद्ध्येदिति*। स्वलक्षणेन *विद्यमानं* तत् कर्म प्रत्युत्पन्नलक्षणेन *विद्यमानमतीत*मिति *न सिद्ध्येत्*। प्रत्युत्पन्नमेव सिद्ध्येदित्यभिप्रायः। तदाहितमिति विस्तरेणैवमुच्यमानेऽभ्यतीतं तत् कर्मास्तीति सिद्ध्यति।

---

१. दीपो—का०। २. °मप्यस्ती०—का०।
३. °नागतभाव—का०।

चैतदेवं यत् परमार्थशून्यतायामुक्तं भगवता—"चक्षुरुत्पद्यमानं न कुतश्चिदागच्छति निरुध्यमानं न क्वचित् संनिचयं गच्छति। इति हि भिक्षवश्चक्षुरभूत्वा भवति भूत्वा च प्रतिगच्छति" इति। यदि चानागतं चक्षुः स्यान्नोक्तं स्याद्—भूत्वा न भवतीति। वर्तमानेऽध्वन्यभूत्वा भवतीति चेत्? न; अध्वनो भावादनर्थान्तरत्वात्। अथ स्वात्मन्यभूत्वा भवति? सिद्धमिदमनागतं चक्षुर्नास्तीति।

यदप्युक्तम्—"द्वयं प्रतीत्य विज्ञानस्योत्पादात्" इति, इदं तावदिह सम्प्रधार्यम्— यन्मनः प्रतीत्य धर्मश्चोत्पद्यते मनोविज्ञानम्, किं तस्य यथा मनोजनकः प्रत्यय एवं धर्माः, आहोस्विदालम्बनमात्रं धर्मा इति। यदि तावत् जनकः प्रत्ययो धर्माः, कथं यदनागतं सहस्रैर्भविष्यति[1] वा, न वा तदिदानीं विज्ञानं जनयिष्यति। निर्वाणं च सर्वप्रवृत्तिनिरोधाज्जनकं नोपपद्यते। अथालम्बनमात्रं धर्मा भवन्ति? अतीतानागतमप्यालम्बनं भवतीति ब्रूमः। यदि नास्ति कथमालम्बनम्? अत्रेदानीं ब्रूमः—यदा तदालम्बनं तथास्ति, कथं तदालम्बनम् अभूत् भविष्यति चेति। न हि कश्चिदतीतं रूपं वेदनां वा स्मरन्नस्तीति पश्यति। किं तर्हि?

इत्थं चैतदेवमिति। यथाऽनागतं द्रव्यतो नास्त्यतीतं चेति। *वर्तमानेऽध्वनीति* विस्तरः। वर्तमानभावेनाभूत्वा भवतीत्यर्थः। *न, अध्वनो भावादनर्थान्तरत्वात्*। नैव तदेवम्। अध्वनः प्रत्युत्पन्नस्य भावाच्चक्षुःसंज्ञकाद*नर्थान्तरत्वाद्*। अद्रव्यान्तरत्वादित्यर्थः। य एव वर्तमानोऽध्वा स एव भावः, तत् कथं स एव वर्तमानः स्वात्मन्यध्वन्यभूत्वा भविष्यति। तथा ह्युक्तम्—"त एवाध्वा कथावस्तु" (अभि० को० १.७) इति।

अथ स्वात्मनि चक्षुषि चक्षुर्भूत्वा भवति, सिद्धमिदम्—अनागतं चक्षुर्नास्ति। *आलम्बनमात्रमिति*। मात्र-शब्दो जनकत्वव्यावर्तनार्थः। तद्रूपोत्पत्तेरालम्बनम् धर्मा इत्यभिप्रायः। *यदनागतं सहस्रैरिति*। सन्निकृष्टमप्यनागतं जनकं न युज्यते, किमङ्ग अतिचिरेण कालेन यद् भविष्यति! नहि पूर्वकालीनस्य फलस्य पश्चात्कालीनो हेतुर्युज्यत इति। *निर्वाणं चेति*। निर्वाणं हि विज्ञानं निरुद्धं न जनयेत्। संसारप्रवृत्तिनिरोधादित्यभिप्रायः। *अभूद् भविष्यति चेति*। यद् वर्तमानावस्थायां रूपमभूत्, भविष्यति च तदालम्बनमित्यर्थः। कथं ज्ञायते

१. कल्पमहस्रेण०—का०।

अभूदिति। यथा खल्वपि वर्त्तमानं रूपमनुभूतं तथा तदतीतं स्मर्यते। यथा चानागतं वर्तमानं भविष्यति तथा बुद्धया गृह्यते। यदि च तत्तथैवास्ति वर्त्तमानं प्राप्नोति, अथ नास्ति असदप्यालम्बनं भवतीति सिद्धम्। तदेव तद्विकीर्णमिति चेत्? न; विकीर्णस्याग्रहणात्। यदि च तत्तदेव रूपं केवलं परमाणुशो विभक्तम्? एवं सति परमाणवो नित्याः स्युः[१]। परमाणुसञ्चयविभागमात्रं चैवं सति प्राप्नोति। न तु किञ्चिदुत्पद्यते नापि निरुध्यत इत्याजीविकवादः परिगृहीतो[२] भवति।

सूत्रं चापविद्धं भवति—"चक्षुरुत्पद्यमानं न कुतश्चिदागच्छति" इति

---

एवम्—तदालम्ब्यते, न पुनरस्तीति? अत आह—*नहि कश्चिदतीतं रूपं वेदनां वा स्मरन्नस्तीति पश्यति*, किं तर्हि? *अभूदिति* स्मरति तद्रूपं यथा दृष्टं यथानुभूतां च वेदनां चक्षुर्विज्ञानानुभवबलेन। *यथा खल्वपी*ति। विस्तरेणा*चार्य* एवोपचयहेतुमाह। वर्तमानरूपमिव भूतं भविष्यच्च गृह्यत इत्यभिप्रायः। *यदि च तथैवास्ती*ति। यथा वर्तमानम्। *वर्तमानं तत् प्राप्नोति*। *अथ नास्ति तत्तथैव, असदप्यालम्बनं भवती*ति सिद्धम्; वर्तमानवद् रूपस्याभावात्। तस्य च स्मर्यमाणत्वात्। *तदेव तद्विकीर्णमिति*। यदेव तद् वर्तमानम्, तदेव विकीर्णमतीतानागतम्। *न, विकीर्णस्याग्रहणादि*ति। न युक्तमेतत्; विकीर्णस्याग्रहणात्। पूर्वं न विकीर्णम्, इदानीं विकीर्णमेतद्रूपम्—इत्येवमस्याग्रहणात्। *यदि च तत् तदेवे*ति विस्तरः। यदि च वर्तमानावस्थायां पिण्डीभूतं रूपम्, तदतीतावस्थायामनागतावस्थायां च परमाणुषु विभक्तम्, अतो न वर्तमानवद् गृह्यते। *एवं सति* तादवस्थ्या*न्नित्याः* परमाणवः स्युः। अनागताः प्रत्युत्पन्ना अतीताश्च त एव त इति। एवं च सति परमाणुसञ्चयविभागमात्रमेव प्राप्नोति, न तु कश्चिदुत्पादो नापि निरोध इत्या*जीवका*नां पाषण्डिनां वादः परिगृहीतो भवति।

*तथा चेष्यमाणे सूत्रमपास्तं भवति*—"चक्षुर्भिक्षवः उत्पद्यमानं न कुतश्चिदागच्छति। निरुध्यमानं न क्वचित् सन्निचयं गच्छति। इति हि भिक्षवः चक्षुरभूत्वा भवति, भूत्वा च प्रतिविगच्छति" (    ) इति।

कथं पुनरिदं सूत्रमपविद्ध विरोधितं भवति? यस्माच्चक्षुरुत्पद्यमानं रूपेण न कुतश्चिद् आगच्छतीत्येतत्पदं बाधितं भवति। निरुध्यमानं न क्वचित् सन्निचयं गच्छतीत्येतदपि पदं बाधितं भवति; अतीतेऽध्वनि तत्परमाणूनां

---

१. प्राप्नुवन्ति—का०। २. आलम्बितो—का०।

विस्तरः । अपरमाणुसंचितानां वेदनादीनां कथं विप्रकीर्णत्वम्[1] । तेऽपि च यथोत्पन्नानुभूताः स्मर्यन्ते । यदि च ते तथैव सन्ति, नित्याः प्राप्नुवन्ति । अथ न सन्ति, असदप्यालम्बनमिति सिद्धम् । यद्यसदप्यालम्बनं स्यात्, त्रयोदशमप्यालम्बनमायतनं[2] स्यात् ।

अथ त्रयोदशमायतनं नास्तीत्यस्य विज्ञानस्य किमालम्बनम् ? एतदेव नामालम्बनम् । एवं तर्हि नाम एव नास्तीति प्रतीयते । यश्च शब्दस्य प्रागभावमालम्बते किं तस्यालम्बनम् ? शब्द एव । एवं तर्हि यः शब्दाभावं प्रार्थयते तस्य शब्द एव कर्तव्यः स्यात । अनागतावस्थ इति चेत् ? सति कथं नास्तिबुद्धिः । वर्तमानो नास्तीति चेत् ? न; एकत्वात् । यो[3] वा[3] तस्य विशेषस्तस्याभूत्वाभावसिद्धिः । तस्मादुभयं विज्ञानस्यालम्बनम्—भावश्च, अभावश्च ।

---

विप्रकीर्णसञ्चितत्वाभ्युपगमात् । *अपरमाणुसञ्चितानामिति* । वेदनादीनामपरमाण्वात्मनां कथं विप्रकीर्णत्वम् ? मूर्तानां हि सञ्चितत्वं विप्रकीर्णत्वं वा अभवत् भवेत्, नामूर्तानाम् । *तेऽपि च यथोत्पन्नानुभूताः स्मर्यन्ते* इति । वर्तमानरूपा एव स्मर्यन्ते । यदि च ते तथैव सन्ति यथा वर्तमानाः, नित्याः प्राप्नुवन्ति । अथ न सन्ति तद्रूपाः, असदप्यालम्बनमिति सिद्धम् ।

*त्रयोदशमप्यायतनमालम्बनं स्यादिति* । त्रयोदशानामायतनानां पूरणं त्रयोदशमायतनम् । तद्विज्ञानस्यालम्बनं स्यात् । असदालम्बनत्व इष्यमाणे तदालम्बनं वा विज्ञानं स्यात् । एवं *वैभाषिकेनोक्ते आचार्य* आह—*अथ त्रयोदशमिति* विस्तरः । *एतदेव नामेति वैभाषिकः* । यदेतन्नाम त्रयोदशमायतनमिति तदालम्बनम् । *एवं तर्हि नामैव नास्तीति प्रतीयते* । नाभिधेयं त्रयोदशायतनाभावलक्षणम् । *किञ्च यश्च शब्दस्य प्रागभावमालम्बते, कि तस्यालम्बनम्* । भवतीति वाक्यशेषः । एवं प्रकृते *वैभाषिक* आह—*शब्द एव* । *आलम्बनमिति* प्रकृतम् । *एवं तर्हीति* विस्तरेणाचार्यः । यः शब्दस्य प्रागभावमालम्बते, शब्द एव तेनालम्बितो भवति, न प्रागभावः । प्राप्तमिदं भवति—यः शब्दाभावं प्रार्थयते, तस्य शब्द एव कर्तव्यः स्यादिति । *अनागतावस्था इति चेत्* । *स्यान्मतम्*—यस्यासौ प्रागभावः, सोऽनागतावस्थस्तेनालम्ब्यते । तस्माद् यः शब्दाभावं प्रार्थयते, तस्य न शब्द एव कर्तव्यः स्यादिति । तदुच्यते—*सति कथं नास्तीति बुद्धिरिति* । विद्यमाने तस्मिन् शब्दे यस्यासौ प्रागभावः कथमस्य नास्तिबुद्धिः, या प्रागभावमालम्बते । *वर्तमानो नास्तीति* चेत् । तत्रैतत् स्यात्—

---

१. विकीर्णत्वम्—का० । २. °मप्यायतनं—का० । ३–३. यावता—का० ।

**यत्तर्हि बोधिसत्त्वेनोक्तम्**—"यल्लोके[1] नास्ति तदहं ज्ञास्यामि वा द्रक्ष्यामि वा नेदं स्थानं विद्यते" इति। अपरे आभिमानिका भवन्त्यसन्तमप्यवभासं सन्तं पश्यन्ति। अहं तु सन्तमेवास्तीति पश्यामीत्ययं तत्राभिप्रायः। इतरथा हि सर्वबुद्धीनां सदालम्बनत्वे कुतोऽस्य विमर्शः स्यात्, को वा विशेषः! इत्थं चैतदेवम्।

यदन्यत्र भगवतोक्तम्—"एतत् भिक्षुर्मम श्रावको यावत्स मया कल्पमवोदितः सायं विशेषाय परैष्यति। सायमवोदितः कल्पं विशेषाय परैष्यति। सच्च सतो ज्ञास्यति, असच्चासतः, सोत्तरं च सोत्तरतः, अनुत्तरं चानुत्तरतः" इति। तस्मादयमप्यहेतुः; सदालम्बनत्वाद् विज्ञानस्येति।

---

वर्तमानो नास्तीत्येवं तदालम्बनात् नास्तिबुद्धिस्तस्योत्पद्यत इति। न, एकत्वात्। यदेव तदनागतम् तदेव वर्तमानं भवति, न तस्मादन्यदिति कथं तस्मिन्नेव वर्तमाने नास्तिबुद्धिरुत्पद्यते। *यो वा तस्य विशेषः*। यो वा तस्यानागतस्य पश्चाद्विशेषो वर्तमानावस्थायां भवति, तत्र विशेषे वर्तमानो नास्तीति तद्बुद्धिरुत्पद्यते। *तस्याभूत्वाभावसिद्धिः*। तस्य विशेषस्याभूत्वा पूर्वं पश्चाद् भावः, तस्य सिद्धिरिति। *भावश्चाभावश्चेति*। भावो वर्तमानावस्थायाम्, अभावोऽतीतानागतावस्थयोः। *इति विज्ञानस्योभयमालम्बनं भवति*।

यद्यभावो विज्ञानस्या लम्बनम्, *यत्तर्हीति* विस्तरः। *बोधिसत्त्वेन* चरमभविकेनैवमुक्तम्—"*यल्लोकेनास्ति, तज्ज्ञास्यामीत्येष सम्भवो नास्ति*" इति वचनात् अभावालम्बनं न भवतीति दर्शितं भवति।

*आचार्योऽन्याभिप्रायतामस्य* सूत्रस्य दर्शयन्नाह—*अपरे आभिमानिका* इति विस्तरः। अपरिशुद्धसमाधयोऽपरे आभिमानिका भवन्ति। *असन्तमप्यवभासम्*। दिव्यचक्षुरवभासम् प्रयोगावस्थायां सन्तमित्येव पश्यन्ति। अहं तु सन्तमेवावभासं पूर्वरूपं दिव्यचक्षुषोऽस्तीति पश्यामीति अयं तत्र सूत्रेऽभिप्रायः। *कुतोऽस्य विमर्श* इति। सर्वबुद्धीनां सद्विषयत्वे व्यवस्थाप्यमाने कुतोऽस्य विमर्शः विचारः सन्देहो वा स्यात् यदुत लोके नास्तीति विस्तरेण य उक्तः। सदसदालम्बने तु बुद्धीनामयं विमर्शः सम्भवति, नान्यथा। *को वा विशेष इति*। को वा बोधिसत्त्वस्यान्येभ्यो विशेषो यदि तेऽपि सन्तमेवावभासं पश्यन्ति, नासन्तम्। सदसदालम्बनत्वे हि बुद्धीनामयं विशेषो भवति। *इत्थं चैतदेवं* सत्। *असदालम्बना बुद्धय* इति। सच्च सतो ज्ञास्यति, असच्चासन इतीदमत्रोदाहरणम्।

---

१. यत्तत् लोके—का०।

यदप्युक्तम्—फलादिति। नैव हि सौत्रान्तिका अतीताद् कर्मणः फलोत्पत्तिं वर्णयन्ति। किं तर्हि? तत्पूर्वकात् सन्तानविशेषादित्यात्मवादप्रतिषेधे सम्प्रवेदयिष्यामः।

यस्य त्वतीतानागतं द्रव्यतोऽस्ति तस्य फलं नित्यमेवास्तीति किं तत्र कर्मण. सामर्थ्यम्? उत्पादने सामर्थ्यम्। उत्पादस्तर्ह्यभूत्वा भवतीति सिद्धम्। अथ सर्व[1] एवास्ति[1], कस्येदानीं क्व सामर्थ्यम्? वार्षगण्यवादश्चैवं द्योतितो भवति—"यदस्त्यस्त्येव तत्। यन्नास्ति नास्त्येव तत। असतो नास्ति सम्भवः, सतो नास्ति विनाशः" इति। वर्तमानीकरणे तर्हि सामर्थ्यम्। किमिदं वर्त्तमानीकरणं नाम? देशान्तराकर्षणं चेत्, नित्यं प्रसक्तम्। अरूपिणां च कथं तत्? यच्च तदाकर्षणं तदभूत्वाभूतम्। स्वभावविशेषणं चेत, सिद्धमभूत्वाभवनम्।

---

सच्च वस्तु सत्त्वतः परैष्यति, ज्ञास्यति; असच्चासत्त्वत इत्यसदालम्बना बुद्धय इति सिद्धम्। [illegible] । यदेतद् बोधिसत्त्वेनोक्तमिति।

*तत्पूर्वकादिति*। कर्मपूर्वकात् चित्तसन्तानविशेषात्। *आत्मवादप्रतिषेध* इति। शास्त्रावसाने वात्सीपुत्रीयमतप्रतिषेधे। *उत्पादस्तर्हि अभूत्वा भवतीति*। उत्पादः पूर्वं नास्ति, इदानीं भवतीति सिद्धोऽपूर्वप्रादुर्भावः। उत्पादस्योत्पादवता सह तुल्यवार्तत्वात्। *अथ सर्व एवास्तीति*। उत्पादोऽपि यद्यस्ति, न केवलं हेतुः, अनागतं च फलमित्यभिप्राय। *कस्येदानीं क्व सामर्थ्यमिति*। कस्य हेतो. क्व फले सामर्थ्यम्। हेतुश्च यथोक्त उत्पाद. फलं चानागतमस्तीति। *वर्तमानीकरण इति* वैभाषिकः। *किमिदानीं वर्तमानीकरणमिति* विस्तरेणाचार्यः। नोत्पादो वर्तमानीकरणम्; तस्य वर्तमानत्वात्। अत एवं पृच्छति। *देशान्तराकर्षणं चेत्*। यदि मन्यसे—हेतुना फलस्य देशान्तराकर्षणं वर्तमानीकरणमिति? अत्र ब्रूमः—*नित्यं प्रसक्तम्*। फलमिति वाक्यशेषः। केवलं देशान्तराद् देशान्तराकर्षणम्। न किञ्चिदपूर्वमुत्पद्यत इति। *नित्यं प्रसक्तम् अरूपिणां च* वेदनादीनाम्। कथं तद्देशान्तराकर्षणम्। अमूर्तत्वेनादेशस्थत्वान्न तद्युज्यत इत्यभिप्रायः। *यच्च तदाकर्षणम्* क्रियासंज्ञकम्, तदभूत्वा भूतमित्यभूत्वा-भावसिद्धिरित्यभिप्रायः। *स्वभावविशेषणं चेत्*। यदि मन्यसे—हेतुना स्वभावोऽस्य फलस्य

---

१-१. सर्वमेव चास्ति—का०—।

तस्मान्नैवं **सर्वास्तिवादः** शासने साधुर्भवति यदतीतानागतं द्रव्यतोऽस्तीति वदति।

एवं तु साधुर्भवति—यथा सूत्रे सर्वमस्तीत्युक्तं तथा वदति। कथं च सूत्रे सर्वमस्तीत्युक्तम्? "सर्वमस्तीति ब्राह्मण यावदेव द्वादशायतनानि" इति। अध्वत्रयं वा। यथात्र[1] तदस्ति तथोक्तम्।

अथासत्यतीतानागते कथं तेन तस्मिन् वा संयुक्तो भवति? तज्जतद्धेत्वनुशयभावात् क्लेशेन तदालम्बनक्लेशानुशयभावाद्[2] वस्तुनि संयुक्तो भवति। अस्त्येव त्वतीतानागतमिति **वैभाषिकाः**। यत्र नेतुं शक्यते तत्रात्मकात्मनैवं वेदितव्यम्।

**गम्भीरा खलु धर्मता ॥२७॥**

नावश्यं तर्ह्यसाध्या भवतीति। अस्ति पर्यायो यदुत्पद्यते तन्निरुध्यते। रूपमुत्पद्यते रूपं निरुध्यते। अस्ति पर्यायोऽन्यदुत्पद्यतेऽन्यन्निरुध्यते। अनागत-

---

विशेष्यते, तेन फलविशेषणं भवति? अत्र ब्रूमः—*सिद्धमभूत्वाभवनमिति*। सिद्धमभूत्वा विशेषणस्य भवनम् = प्रादुर्भाव इति।

*अध्वत्रयं वा*। किम्? सर्वमस्तीत्यधिकृतम्। *यथात्र तदस्ति तथोक्तमिति*। यद् भूतपूर्वं तदतीतम्। यत् सति हेतौ भविष्यति तदनागतम्। यद् भूत्वाऽविनष्टम् तत्प्रत्युत्पन्नम्—इत्येवं *सर्वास्तिवादः* शासने साधुर्भवति।

*कथं तेन तस्मिन् वा संयुक्त* इति। कथं तेनातीतानागतेन क्लेशेन तस्मिन् वा अतीतानागते वस्तुनि कथं संयुक्त इति। *तज्ज-तद्धेत्वनुशयभावात् क्लेशेनेति*। तस्मात् अतीताज्जातास्तज्जाः, तस्यानागतस्य हेतुस्तद्धेतुः, तज्जश्चासौ तद्धेतुश्च तज्जतद्धेतुः, तज्जतद्धेतोरनुशया बीजं तज्जतद्धेत्वनुशयः, तस्य भावात्। अतीतानागतेन च क्लेशेन यथाक्रमं संयुक्तः। तद् अतीतानागतं वस्त्वालम्बनमस्येति *तदालम्बनः क्लेशस्तस्यानुशयः*। तस्य भावादतीतेऽनागते च वस्तुनि यथाक्रमं संयुक्त इति।

*धर्मतेति*। धर्माणां स्वभावः। अतीतादिकाध्वव्यवस्थाने सति तत्संव्यवहारव्युत्पादनार्थमाह—*अस्ति पर्याय* इत्यादि। अस्ति वचनक्रमः—यदुत्पद्यते तन्निरुद्ध्यते इत्युक्त्वा दृष्टान्तमाह—*रूपमुत्पद्यते रूपं निरुद्ध्यते*, द्रव्यानन्यत्वात्। *अन्यदुत्पद्यते, अन्यन्निरुद्ध्यते, अनागतमुत्पद्यते*, अन्यदुत्पादाभिमुखत्वात्। वर्तमानं निरुद्ध्यते; अन्यन्निरोधाभिमुखत्वात्। अध्वाप्युत्पद्यते; उत्पद्यमानस्य धर्मस्याध्वसंगृहीतत्वात्। अध्वस्वभावत्वादित्यर्थः। "त एवाध्वा कथावस्तु"

---

1. यथा तु—का०। 2. ...ने क्लेशा०—का०।

मुत्पद्यते वर्तमानं निरुध्यते । अध्वाऽप्युत्पद्यते; उत्पद्यमानस्याध्वसंगृहीतत्वात् । अध्वनोऽप्युत्पद्यते; अनेकक्षणिकत्वादनागतस्याध्वनः ॥ २७ ॥

गतमेतत् यत्प्रसङ्गेनागतम् ॥

इदानीमिदं विचार्यते—यद्वस्तु प्रहीणं विसंयुक्तः स तस्मिन् वस्तुनि; यत्र वा विसंयुक्तः प्रहीणं तस्य तद्वस्त्विति । यत्र तावद्विसंयुक्तः प्रहीणं तस्य तद्वस्तु । स्यात्तु प्रहीणं न च तत्र विसंयुक्तः, तद्यथा—

**प्रहीणे दुःखदृग्घेये संयुक्तः शेषसर्वगैः ।**

**प्राक् प्रहीणे प्रकारे च शेषैस्तद्विषयैर्मलैः ॥ २८ ॥**

दुःखज्ञाने समुत्पन्ने समुदयज्ञानेऽनुत्पन्ने दुःखदर्शनप्रहातव्यो निकायः प्रहीणो भवति । तस्मिन् प्रहीणे तदालम्बनैः समुदयदर्शनप्रहातव्यैः सर्वत्रगैः संयुक्तः । भावनाप्रहातव्येऽपि निकाये नवानां प्रकाराणां यः प्रकारः प्राक् प्रहीणस्तस्मिन प्रहीणेऽपि शेषैस्तदालम्बनैः क्लेशैः संयुक्तो वेदितव्यः ॥ २८ ॥

कस्मिन् वस्तुनि कत्यनुशया अनुशेरत इति एतत्प्रतिपदमभिधीयमानं बहुतरं वक्तव्यं जायते, तस्मात् पिण्डविभाषां कुर्वन्ति—कथमल्पेनाल्पेन यत्नेन महतो महतः प्रश्नौघान् प्रतिपाद्येमहीति ? समासत इमे षोडश धर्माः कामरूपा·

---

(अभि० को० १.७) इति लक्षणात् । *अध्वनोऽप्युत्पादनरूपादुत्पद्यते धर्मः* । कस्माद् ? इत्याह—*अनेकक्षणिकत्वादनागतस्याध्वन* इति । यस्मादनेकेषां क्षणानां राशिरूपाणां कश्चिदेव क्षण उत्पद्यते, अतोऽध्वनोऽप्युत्पद्यते—इत्युच्यते ॥ २७ ॥

*प्रसङ्गेनागत*मिति । "शेषैस्तु सर्वैः सर्वत्र" (अभि० को० ५.२४) इति प्रसङ्गेनागतमतीतानागतविचारणम् ।

*यद् वस्तु प्रहीण*मित्यादि । इह *प्रहाणम्*, प्राप्तिविगमात्, *विसंयोगः* तदालम्बनक्लेशप्रहाणात्, दर्शनभावनामार्गावधिकृत्य । *प्रहीणे दुःखदृग्घेय* इत्यादि । प्राक् *प्रहीण* इत्यादि । *शेषसर्वगै*रिति । समुदयदर्शनप्रहातव्यैः सर्वगैः । *शेषैस्तद्विषयैर्मलै*रिति । प्रहीणप्रकारविषयानुशयैरित्यर्थः । तद्यथा—अधिमात्राधिमात्रे. प्रकारे प्रहीणेऽधिमात्रमध्यादिभिः शेषैरपरिहीणैरनुशयैः संयुक्तः । तथा हि असावधिमात्राधिमात्रेण प्रहीणेन क्लेशप्रकारेण विसंयुक्तोऽपि संयुक्त एव तैः शेषैरिति ॥ २८ ॥

*पिण्डविभाषां कुर्वन्ति* । संक्षेपव्याख्यां कुर्वन्तीत्यर्थः । के ? वैभाषिकाः ।

रूप्यावचराः पञ्चप्रकाराः अनास्रवाश्च । चित्तान्यपि षोडश एतान्येव । तत्र कतमो धर्मः कस्य चित्तस्यालम्बनमिति ज्ञात्वा 'अमुष्मिन्नियन्तोऽनुशया अनुशेरते' इत्येतदभ्यूहितव्यम् । तत्र तावत्—

दुःखहेतुदृगभ्यासप्रहेयाः कामधातुजाः ।
स्वकत्रयैकरूपाप्तामलविज्ञानगोचराः ।। २९ ।।

स्वकं च तत् त्रयं च स्वकत्रयम्, एकं च तद्रूपाप्तं च एकरूपाप्तम्—एषा विग्रहजातिः ।

कामावचरास्तावद् दुःखसमुदयदर्शनहेया भावनाहेयाश्च धर्माः पञ्चानां

---

षोडशेति । *कामावचराः पञ्चप्रकाराः*—दुःख-समुदय-निरोध-मार्गदर्शनप्रहातव्याः चत्वारः, भावनाप्रहातव्यश्च पञ्चमः । एवं यावद् *आरूप्यावचरा पञ्चप्रकाराः* इति पञ्चदश । *अनास्रवश्च षोडश* इति *षोडश* धर्माः । इमे च धर्मा ये दर्शनप्रहातव्याः, ते चतुःस्कन्धस्वभावाः । ये भावनाप्रहातव्यास्ते पञ्चस्कन्धस्वभावाः । कथम्? या वेदना यैर्दर्शनप्रहातव्यैरनुशयैः सम्प्रयुक्ता, स वेदनास्कन्धः । याः संज्ञाः संज्ञास्कन्धः । येऽनुशयाः, ये च तत्सम्प्रयुक्ताश्चेतनादयो यश्चैषां वेदनादीनां सर्वेषां चैतसिकानां प्राप्तयो जाति-जरा-स्थित्य-नित्याश्च विप्रयुक्ताः, स संस्कारस्कन्धः । यच्चैभिः सम्प्रयुक्तं मनोविज्ञानम्, स विज्ञानस्कन्धः । इति चतुःस्कन्धस्वभावाः दर्शनप्रहातव्याः । भावनाप्रहातव्याः पुनरतोऽन्ये सास्रवा धर्माः । कथम्? बाह्याध्यात्मिकं सर्वं सास्रवं रूपं रूपस्कन्धः । अनास्रवदर्शनप्रहातव्यवर्ज्याश्च वेदना-संज्ञा-संस्कार-विज्ञानस्कन्धा इति पञ्चस्कन्धस्वभावा भावनाप्रहातव्या वेदितव्याः ।

*चित्तान्यपि षोडशैतान्येवे*ति । कामावचरं दुःखदर्शनप्रहातव्यं यावद् भावनाप्रहातव्यमिति पञ्च चित्तानि । एवं रूपावचराणि अरूपावचराणि च पञ्च पञ्च, अनास्रवं च चित्तमिति षोडश चित्तानि । तानि तत्षोडशधर्मालम्बनानि वर्ण्यन्ते । *अमुष्मिन्नियन्ताऽनुशया* इति । अमुष्मिन् धर्मे इयन्तोऽनुशयाः, ये तेन चित्तेन सम्प्रयुक्ता आलम्बनतः सम्प्रयोगतो वाऽनुशेरते—इत्येतदभ्यूहितव्यम् ।

*"दुःखहेतुदृगभ्यासप्रहेयाः कामधातुजाः"* इति । दुःखसमुदयदर्शनभावनाप्रहातव्याः कामावचरा इत्यर्थः ।

*एषा विग्रहजातिरि*ति । स्वकत्रयं चैकरूपाप्तं चामलं च स्वकत्रयैकरूपाप्तामलानि विज्ञानानि । *स्वकत्रयैकरूपाप्तामलविज्ञानानि* तेषां *गोचराः* । *कामावचरास्तावदि*ति विस्तरः । कामावचराः दुःखसमुदयदर्शनप्रहातव्या दश-सप्तानुशयाः ।

चित्तानामालम्बनम्। स्वधातुकानां त्रयाणां तेषामेव ऊर्ध्वधातुकस्यैकस्य भावनाहेयस्यैव, अनास्रवस्य चेति ॥ २९ ॥

**स्वकाधरत्रयोर्ध्वैकामलानां रूपधातुजाः ।**

रूपावचरास्त एव त्रिप्रकारा धर्मा अष्टानां चित्तानामालम्बनम्। स्वधातुकानां त्रयाणां तेषामेव। अधरधातुकानां त्रयाणां तेषामेव। ऊर्ध्वधातुकस्यैकस्य भावनाहेयस्यैव, अनास्रवस्य चेति।

---

तत्सहभुवस्तत्प्राप्तयश्च सानुचराः। भावनाहेयाश्चतुरनुशयाः, तत्सहभुवः, तत्प्राप्तयश्च सानुचराः। सर्वं सास्रवं रूपम्, अन्ये चाक्लिष्टा धर्माः। *एते धर्माः पञ्चानां चित्तानामालम्बनम्।* केषाम्? इत्याह—*स्वधातुकानां त्रयाणां तेषामेवेति*। कामावचराणां दुःख-समुदयदर्शन-भावनाहेयानाम्। कथं कृत्वा? दुःखदर्शनहेयास्तावद् दुःखदर्शनहेयस्य सर्वत्रगासर्वत्रगसम्प्रयुक्तस्य। समुदयदर्शनप्रहातव्यस्य च सर्वत्रगसम्प्रयुक्तस्य, भावनाहेयस्य च कुशलस्य। *रूपावचरस्यैकस्य भावनाहेयस्यैव*। लौकिकेन मार्गेण कामधातूपपन्नस्य कामावचरधर्मालम्बनावस्थायाम्। रूपधातूपपन्नस्य च कामधातुदर्शनावस्थायाम्। *अनास्रवस्य च* धर्मज्ञानपक्षस्य चेति पञ्चानां चित्तानामालम्बनं भवन्ति। न कामावचरयोर्निरोध-मार्गदर्शनहेययोश्चित्तयोरालम्बनम्; अनास्रवालम्बनयोश्चित्तयोर्निरोधमार्गालम्बनत्वात्। सास्रवालम्बनयोश्च निरोधमार्गदर्शनहेयमात्रालम्बनत्वात्। नोर्ध्वभूमिकानां क्लिष्टनाम्; अधरभूमिकानालम्बनत्वात्। नारूप्यावचरस्य कुशलस्य; चतसृभिर्दूरताभिर्दूरत्वात्। एवं समुदयदर्शनहेया अपि द्विप्रकारस्य समुदयदर्शनहेयस्य। दुःखदर्शने हेयस्य च सर्वत्रगसम्प्रयुक्तस्य, भावनाहेयस्य कुशलस्य, रूपावचरस्यैकस्य भावनाहेयस्यैव, अनास्रवस्य चेति पञ्चानामेवालम्बनानां भवन्ति। व्याख्यानं च पूर्ववदेव कर्तव्यम्। भावनाहेया अपि पञ्चानामेवालम्बनानां भवन्ति। दुःखसमुदयदर्शनहेययोः सर्वत्रगसम्प्रयुक्तयोश्चित्तयोर्भावनाहेयस्य च कुशलाकुशलाव्याकृतस्य यथासम्भवम्। रूपावचरस्यैकस्य भावनाहेयस्यैव, अनास्रवस्य चेति पूर्ववदेव वाच्यम् ॥ २९ ॥

"*स्वकाधरत्रयोर्ध्वैकामलानाम्*" इति। स्वकानामधराणां च त्रयं स्वकाधरत्रयम् च ऊर्ध्वैकं चामलं चेति विग्रहः। *रूपावचरास्त एव त्रिप्रकारा धर्मा* इति। दुःख-समुदयदर्शन-भावनाहेयाः, तेषामधिकृतत्वात्। *तेऽष्टानां चित्तानामालम्बनम्*। स्वधातुकानां त्रयाणां तेषामेव दुःख-समुदयदर्शन-भावनाहेयानाम्। पूर्ववदेव व्याख्येयम्। अधरधातुकानां त्रयाणां तेषामेव। तेषां दुःखदर्शनसमुदयहेययोर्विसभागधातुसर्वत्रगसम्प्रयुक्तयोश्चित्तयोर्भावनाहेययोश्च, श्रुतमयस्य च चिन्तामयस्य वा। *ऊर्ध्वधातुकस्यैकस्य भावनाहेयस्यैव*, आकाशा-

**आरूप्यजास्त्रिधात्वाप्तत्रयानास्रवगोचराः ॥३०॥**

आरूप्यावचरास्त एव त्रिप्रकारा धर्मा दशानां चित्तानामालम्बनम् । त्रैधातु-त्रिप्रकाराणां तेषामेव । अनास्रवस्य चेति ॥ ३० ॥

**उक्तास्त्रैधातुका दुःखसमुदयदर्शनहेयाश्च धर्माः ॥**

**निरोधमार्गदृग्घेयाः सर्वस्वाधिकगोचराः[1] ।**

निरोधमार्गदर्शनहेयानां स्वं चित्तं निरोधमार्गदर्शनहेयमेव । तस्याधिकस्य ते धर्मा आलम्बनं ज्ञेयाः । कथं कृत्वा ? कामावचरा हि निरोधदर्शनहेया धर्माः षण्णां विज्ञानानामालम्बनम्—पूर्वोक्तानां पञ्चानाम्, तस्यैव च निरोधदर्शनप्रहातव्यस्याधिकस्य । मार्गदर्शनप्रहातव्या अप्येवम् —पञ्चानां पूर्वोक्तानां तस्यैव च मार्गदर्शनप्रहातव्यस्याधिकस्य । एवं रूपारूप्यावचराणि । निरोधमार्गदर्शनप्रहातव्यास्तस्यैव निरोधमार्गदर्शनप्रहातव्यस्याधिकस्य चित्तस्यालम्बनमिति नवानामेकादशानां च चित्तानामालम्बनं भवन्ति ।

---

नन्त्यायतनसामग्र्यसंगृहीतस्य, *अनास्रवस्य* चान्वयज्ञानपक्षस्येति ।

"*त्रिधात्वाप्तत्रयानास्रवगोचराः*" इति । त्रिधात्वाप्तानां त्रयाणामनास्रवस्य च गोचराः । *त एवेति* । त एव दुःखसमुदयदर्शनभावनाहेया अधिकृताः । *त्रिप्रकाराणां तेषामेवेति* । काम-रूपावचराणां दुःख-समुदयदर्शनहेयानां विसभागधातु-सर्वत्रग-सम्प्रयुक्तकानां चतुर्णां भावनाप्रहातव्ययोर्द्वयोर्यथायोगम् । स्वधातुकानां च त्रयाणाम् । कतमेषाम् ? सर्वत्रगासर्वत्रगसम्प्रयुक्तयोर्यथायोगं द्वयोर्भावनाप्रहातव्यस्य चा*नास्रवस्य* चेति *दशानां चित्तानामालम्बनं भवन्ति* ॥ ३० ॥

"*निरोधमार्गदृग्घेयाः सर्वस्वाधिकगोचराः*" इति । सर्व-ग्रहणं त्रिधातुकोपसंग्रहार्थम्; "स्वस्याधिकस्य गोचराः" इति वचनात् पूर्वोक्तानां च गोचरा इत्यर्थादुक्तं भवति । अथ वा—स्वेनाधिकानि स्वाधिकानि, स्वाधिकानां गोचराः स्वाधिकगोचरा इति । *तस्याधिकस्येति* । रागादिसम्प्रयुक्तस्य । न मिथ्यादृष्ट्यादिसम्प्रयुक्तस्य । तस्य नित्यं निरोधमार्गालम्बनत्वात् । *पूर्वोक्तानां पञ्चानामिति* । कामावचराणां त्रयाणाम्, द्विनिकायसर्वत्रगसम्प्रयुक्तकभावनाप्रहातव्यानाम् । रूपावचरस्य भावनाप्रहातव्यस्यैव, अनास्रवस्य चेति । *मार्गदर्शनप्रहातव्या अप्येवमिति* । किमेवम् ? षण्णां चित्तानामालम्बनमिति । *नवानामेकादशानां च चित्तानामालम्बनं भवतीति* । रूपावचरा निरोधमार्गदर्शन-

---

१. सर्वे स्वाधिक०—का० ।

उक्तास्त्रैधातुकाः पञ्चप्रकारा धर्माः ॥

**अनास्रवास्त्रिधात्वन्त्यत्रयानास्रवगोचराः ॥ ३१ ॥**

अनास्रवा धर्मा दशानां चित्तानामालम्बनम् । त्रैधातुकानामन्त्यानां त्रिप्रकाराणां निरोधमार्गदर्शनभावनाहेयानामनास्रवस्येति । पुनरस्यैवार्थस्याध्यर्धेन श्लोकेन संग्रहो भवति—

"दुःखहेतुदृगभ्यासहेया धातुत्रयेऽमलाः ।

पञ्चाष्टदशविज्ञानदशविज्ञानगोचराः ।

---

प्रहातव्या नवानां चित्तानामालम्बनं भवन्ति । आरूप्यावचरा एकादशानामिति । कथम्? रूपावचरा निरोधमार्गदर्शनप्रहातव्या धर्माः कामावचराणां विसभाग-धातु-सर्वत्रगसम्प्रयुक्त-भावनाहेयानां त्रयाणाम् । स्वधातुकानां च त्रयाणां द्विनिकाय सर्वत्रगसम्प्रयुक्तकभावनाप्रहातव्यानाम् । आरूप्यावचरस्य भावना-प्रहातव्यस्य आकाशानन्त्यायतनसंगृहीतस्य अनास्रवस्य चान्वयज्ञानपक्षस्य । तस्यैव चाधिकस्य निरोधदर्शनप्रहातव्यस्य मार्गदर्शनप्रहातव्यस्य वा चित्तस्य । इति नवानां प्रत्येकमालम्बनं भवन्ति । आरूप्यावचरा अपि निरोधमार्ग-दर्शनप्रहातव्या धर्माः प्रत्येकमेकादशानां चित्तानामालम्बनं भवन्ति—कामरूपावचराणां विसभाग-धातु-सर्वत्रग-सम्प्रयुक्तभावनाप्रहातव्यानां षण्णाम्, स्वधातुकानां च त्रयाणां द्विनिकायसर्वत्रगसम्प्रयुक्तकभावनाप्रहातव्यानाम्, निरोधमार्गदर्शनप्रहातव्यस्य च प्रत्येकमधिकस्य, अनास्रवस्य चान्वयज्ञान-पक्षस्य—इत्येकादशानामालम्बनं भवन्ति ।

"*अनास्रवास्त्रिधात्वन्त्यत्रयानास्रवगोचराः*" इति । अनास्रवाः निरोधादयः । *त्रिषु धातुषु यानि अन्त्यानि त्रयाणि* निरोधमार्गदर्शनभावनाप्रहातव्यलक्षणैः । तेषां यथायोगमनास्रवस्य च गोचराः । कथम्? प्रतिसङ्ख्यानिरोधार्यमार्गौ तावत् तदालम्बनानां मिथ्यादृष्टिविचिकित्साऽविद्यासम्प्रयुक्तानां भावनाप्रहा-तव्यानामनास्रवस्य च धर्मज्ञानान्वयज्ञानपक्षस्य यथायोगमालम्बनम् । आकाशा-प्रतिसङ्ख्यानिरोधौ तु भावनाप्रहातव्यस्यैवाक्लिष्टस्य चित्तस्यालम्बनमिति वेदितव्यम् ।

आचार्य*गुणमति-वसुमित्रौ* तु व्याचक्षाते—आकाशाप्रतिसंख्यानिरोधौ भावनाप्रहातव्यस्य क्लिष्टाक्लिष्टस्यालम्बनमिति, तदयुक्तम्;

"मिथ्यादृग्विमती ताभ्यां युक्ताऽविद्याऽथ केवला ।

निरोधमार्गदृग्घेयाः षडनास्रवगोचरा ॥" (अभि० को० ५.१४)

इति नियमात् । अतो न क्लिष्टचित्तस्य भावनालम्बनमिति सिद्धान्तः ।

निरोधमार्गदृग्घेयाः सर्वस्वाधिकगोचराः" ॥ इति ॥

एवमेषां षोडशानां चित्तानां षोडशधर्मालम्बनव्यवस्थां विदित्वा कथमनुशयकार्यं योजयितव्यम् ? दिङ्मात्रं दर्शयिष्यामः—

'सुखेन्द्रियालम्बने विज्ञाने कत्यनुशया अनुशेरते' इति प्रश्न आगते विचारयितव्यम्—सुखेन्द्रियं सप्तविधं कामावचरं भावनाप्रहातव्यं रूपावचरं च पञ्चप्रकारमनास्रवं चेति ।

तदेतत् समासतो द्वादशधर्मस्य विज्ञानस्यालम्बनं भवति; कामावचरस्य चतुष्प्रकारस्यान्यत्र निरोधदर्शनहेयात् । रूपावचरस्य पञ्चप्रकारस्यारूप्यावचरस्य

---

*"पञ्चाष्टदशविज्ञानदशविज्ञानगोचराः"* इति । दुःखसमुदयदर्शनभावनाहेयाः पञ्चानां गोचराः । रूपावचरा अष्टानाम् । आरूप्यावचरा दशानाम् । अमला अपि दशानामेवेति पूर्वव्याख्यानुसारेण योज्यम् । *एतान्येव षोडश चित्तानि* षट्त्रिंशत् भवन्ति । कामधातुदुःखसमुदयदर्शनहेयमसर्वत्रगसम्प्रयुक्तं च । एवं रूपधातौ दुःखसमुदयदर्शनहेयं प्रत्येकं त्रिप्रकारम् । आरूप्यधातौ अन्यत्रविसभागधातुभूमिसर्वत्रगसम्प्रयुक्तात् । निरोधमार्गदर्शनहेयं धातुत्रयेऽपि प्रत्येकं द्विधा, सास्रवानास्रवालम्बनत्वात् । भावनाहेयमपि क्लिष्टाक्लिष्टभेदात् द्विप्रकारम् । अनास्रवमपि धर्मज्ञानपक्षम्, अन्वयज्ञानपक्षं चेति द्विधा ।

*कामावचरं भावनाप्रहातव्यमि*ति । पञ्चविज्ञानकायिकं सुखेन्द्रियम् । *रूपावचरं पञ्चप्रकारमि*ति । प्रथमध्यानभूमिकं त्रिविज्ञानकायिकम् । तृतीयध्यानभूमिकं मानसमित्यभिसमस्य यथायोगं पञ्चप्रकारं दुखदर्शनप्रहातव्यम्, यावद् भावनाप्रहातव्यम् । अनास्रवं च तृतीयध्यानभूमिकमेव ।

*कामावचरस्य चतुःप्रकारस्ये*ति । दुःखसमुदयमार्गदर्शनभावनाप्रहेयस्य । दुःखसमुदयदर्शनहेययोः सुखेन्द्रियमालम्बनं भवति । यस्माद् दुःखसमुदयसत्यसंगृहीतं स्वभूमिकम्, ऊर्ध्वभूमिकं वा सुखेन्द्रियं सत्कायमिथ्यादृष्ट्यादीनामालम्बनं भवति । मार्गदर्शनहेयस्य च मिथ्यादृष्ट्यादिसम्प्रयुक्तस्य मार्गसत्यसंगृहीतं सुखेन्द्रियमालम्बनम् । भावनाहेयरागादिसम्प्रयुक्तस्य च चित्तस्य तत्पञ्चविज्ञानकायिकं सुखेन्द्रियमालम्बनम् । इति चतुःप्रकारस्यास्य तदालम्बनम् । न तु निरोधदर्शनहेयस्य चित्तस्य; तत्र मिथ्यादृष्ट्यादीनां निरोधालम्बनत्वात् । दृष्टिपरामर्शादीनां च स्वनिकायालम्बनत्वात, तत्र च सुखेन्द्रियाभावात् । तेनोच्यते—*अन्यत्र निरोधदर्शनहेयादि*ति ।

*रूपावचरस्य पञ्चप्रकारस्ये*ति । यस्मात् तृतीयध्यानसंगृहीतं पञ्चप्रकारं

द्विप्रकारस्य मार्गदर्शनभावनाहेयस्यानास्रवस्य च। इदं द्वादशविधं सुखेन्द्रियालम्बनं विज्ञानम्।

तत्र यथासम्भवं कामावचराश्चत्वारो निकाया रूपावचराश्च संस्कृतालम्बनाः, आरूप्यावचरौ च द्वौ निकायौ, सर्वत्रगाश्चानुशया अनुशेरत इति विज्ञातव्यम्[१]।

---

सुखेन्द्रियं भवति। *मार्गदर्शनभावनाहेयस्येति*। आरूप्यावचरस्य मार्गदर्शनहेयस्य मिथ्यादृष्ट्यादिसम्प्रयुक्तस्य चित्तस्य मार्गसंगृहीतं सुखेन्द्रियमालम्बनम्। तदेव च भावनाहेयस्य कुशलस्य चित्तस्यालम्बनम्। अनास्रवस्य च सर्वमप्यालम्बनं भवति।

*तत्र यथासम्भवमिति*। यस्माद् अनास्रवेऽनुशया अनुशेरते, यस्मात् क्वचिदेव केचिदनुशेरते, तस्माद् 'यथासम्भवम्' इत्युच्यते। तत्र विज्ञाने कामावचराश्चत्वारो निकायाः। तद्यथा—मिथ्यादृष्टिसम्प्रयुक्ते सुखेन्द्रियालम्बने दशापि दुःखदर्शनप्रहातव्या अनुशया आलम्बनतोऽनुशेरते, सम्प्रयोगतो वा यथासम्भवम्। एवं समुदयदर्शनप्रहातव्याः। मार्गदर्शनप्रहातव्या अपि तत्र सुखेन्द्रियालम्बने विज्ञानेऽनुशेरते। मार्गसुखेन्द्रियालम्बने हि मिथ्यादृष्ट्यादिसम्प्रयुक्ते विज्ञाने मिथ्यादृष्ट्यादयः सम्प्रयोगतोऽनुशेरते। दृष्टिपरामर्शादयोऽप्यालम्बनतोऽनुशेरते। तस्मात् सोऽपि निकायस्तत्रानुशेते। भावनाहेयोऽपि निकायोऽप्यत्रानुशेते; तत्र रागादीनां सुखेन्द्रियालम्बनविज्ञानालम्बनयोगात्। निरोधदर्शनप्रहातव्यनिकायस्तु तत्र नानुशेते; सुखेन्द्रियालम्बनविज्ञानाभावात्।

*रूपावचराः संस्कृतालम्बना इति*। रूपावचरं सुखेन्द्रियालम्बनं पञ्चप्रकारमस्ति। तत्र चत्वारो निकाया अनुशेरत इति सुगममेतत्। निरोधदर्शनप्रहातव्यास्तु संस्कृतालम्बनाः कथमनुशेरते? तृतीये ध्याने दृष्टिपरामर्शादयः सुखेन्द्रियेण सम्प्रयुज्यन्ते, ते चान्यान्यालम्बनाः। ते तत्र सुखेन्द्रियालम्बनविज्ञाने सम्प्रयोगत आलम्बनतो वाऽनुशेरते।

*आरूप्यावचरौ द्वौ निकायाविति*। मार्गदर्शन-भावनाहेयनिकायौ। मार्गसुखेन्द्रियालम्बने मिथ्यादृष्ट्यादिसम्प्रयुक्ते मिथ्यादृष्ट्यादयः सम्प्रयोगतोऽनुशेरते। दृष्टिपरामर्शादयस्तु तत्रालम्बनतोऽनुशेरते। भावनाहेयोऽपि निकायोऽनुशेते। भावनाहेयं हि कुशलं चित्तं मार्गमालम्बते। तत्र स रागादिनिकायोऽनुशेते। *सर्वत्रगाश्चारूप्यावचरा अनुशयास्तत्रैव* विज्ञाने, मार्गालम्बनमिथ्यादृष्ट्यादिसम्प्रयुक्ते वा विज्ञानेऽनुशेरते—*इति विज्ञातव्यम्*।

---

१. ज्ञातव्यम्—का०।

सुखेन्द्रियालम्बनालम्बने विज्ञाने कत्यनुशया अनुशेरते ? तत् पुनः सुखेन्द्रियालम्बनं द्वादशविधं विज्ञानं कतमस्य विज्ञानस्यालम्बनम् ? तस्यैव द्वादशविधस्यारूप्यावचरस्य च भूयो द्विप्रकारस्य दुःखसमुदयदर्शनप्रहातव्यस्य । इदं चतुर्दशविधं सुखेन्द्रियालम्बनं विज्ञानम् । तत्रारूप्यावचरौ[1] दुःखसमुदयदर्शनहेयौ वर्धयित्वा कामावचरा आरूप्यावचराश्चत्वारो निकाया रूपावचराः संस्कृतालम्बना अनुशया अनुशेरत इति ज्ञातव्यम् ।

अनया वर्तन्याऽन्यदपि गन्तव्यम्[2] । यैरनुशयैर्यच्चित्तं सानुशयं तेऽनुशया-

---

*तस्यैव द्वादशविधस्येति* । कामावचरस्य चतुःप्रकारस्यान्यत्र निरोधदर्शनहेयात् । रूपावचरस्य पञ्चप्रकारस्य, अरूपावचरस्य च द्विप्रकारस्य मार्गदर्शनभावनाहेयस्यानास्रवस्य चेति अन्योन्यालम्बनयोगतस्तस्य सुखेन्द्रियालम्बनं विज्ञानमालम्बनं भवति । आरूप्यावचरस्य च भूयो द्विप्रकारस्य तत् सुखेन्द्रियालम्बनं विज्ञानमालम्बनं भवति । कतमस्य ? इत्याह—*दुःखसमुदयदर्शनप्रहातव्यस्येति* । आरूप्यावचरस्य सर्वत्रगसम्प्रयुक्तस्य हि दुःखसमुदयदर्शनहेयभेदाद् द्विप्रकारस्य चित्तस्य आरूप्यावचरमार्गदर्शनहेय-मिथ्यादृष्ट्यादिसम्प्रयुक्तं विज्ञानं मार्गालम्बनं चारूप्यावचरं भावनाहेयं कुशलमालम्बनं भवति । *एवमिदं चतुर्दशविधं सुखेन्द्रियालम्बनविज्ञानालम्बनम् । तत्रारूप्यावचरौ दुःखसमुदयदर्शनहेयौ वर्धयित्वेति* । पूर्वं सर्वत्रगा एवारूप्यावचरा सुखेन्द्रियालम्बने विज्ञानेऽनुशेरते । सुखेन्द्रियालम्बनालम्बने तु सकलावप्यारूप्यावचरौ दुःखदर्शनसमुदयहेयौ निकायावनुशयाते । तस्मात् तत्र सर्वत्रगसम्प्रयुक्ते चित्ते दुःखसमुदयदर्शनहेया अनुशयाः सम्प्रयोगत आलम्बनतो वा यथायोगमनुशेरते । शेषास्तु पूर्ववद् योज्याः ।

*अनया वर्तन्या अन्यदपि गन्तव्यमिति* । अनेन वर्त्मना अन्यदपि बोद्धव्यम् । कथम् ? 'दुःखेन्द्रियालम्बने कत्यनुशयाः अनुशेरते'--इति प्रश्ने आगते विचारयितव्यम्—दुःखेन्द्रियमेकविधं कामावचरं भावनाप्रहातव्यम् ; पञ्चविज्ञानकायिकत्वात् । तत् समासतः पञ्चविधस्य विज्ञानस्यालम्बनं भवति । कामावचरस्य त्रिप्रकारस्य, दुःखसमुदयदर्शनहेययोः सर्वत्रगसम्प्रयुक्तयोर्विज्ञानयोर्भावनाप्रहातव्यस्य च । रूपावचरस्य च भावनाप्रहातव्यस्य, अनास्रवस्य च । इदं पञ्चविधं दुःखेन्द्रियालम्बनं विज्ञानम् । तत्र यथासम्भवं कामावचरास्त्रयो निकाया दुःख-समुदयदर्शनभावनाहेयाः । तत्र हि सर्वत्रग-

---

१. ०वचरौ द्वौ—का० । २. अनुगन्तव्यम्—का० ।

स्तस्मिंश्चित्तेऽनुशेरते । स्युरनुशेरते । येऽनुशयास्तेन चित्तेन संप्रयुक्ता अप्रहीणास्तदालम्बनाश्चाप्रहीणाः । स्युर्नानुशेरते । येऽनुशयास्तेन चित्तेन सम्प्रयुक्ताः प्रहीणास्तदालम्बनाश्च ॥३१॥

---

सम्प्रयुक्ते चित्ते भावनाहेये च दुःखसमुदयदर्शनहेयौ निकायौ सम्प्रयोगत आलम्बनतो वा यथासम्भवमनुशयाते । भावनाहेये च भावनाहेयो निकायोऽनुशेते । रूपावचर एको भावनाहेयः । तत्र भावनाहेये चित्तेऽनुशेते । सर्वत्रगाश्च रूपावचरास्तत्रैव—इत्यवगन्तव्यम् ।

दुःखेन्द्रियालम्बनालम्बने विज्ञाने कत्यनुशया अनुशेरते ? तत् पुनर्दुःखेन्द्रियालम्बनं पञ्चविज्ञानं कतमस्य विज्ञानस्यालम्बनम् ? तस्यैव पञ्चविधस्यान्योन्यालम्बनयोगेन । कामावचरस्य च भूयो मार्गदर्शनहेयस्यानास्रवालम्बनस्य । रूपावचरस्य च सर्वत्रगसम्प्रयुक्तस्यालम्बनं भवति । तेन हि रूपावचरं दुःखेन्द्रियालम्बनं कुशलं भावनाप्रहातव्यमालम्बते । आरूप्यावचरमप्याकाशानन्त्यायतनसामन्तकसंगृहीतौदारिकाद्याकारं दुःखेन्द्रियालम्बनमालम्बते । तदिदमष्टविधं दुःखेन्द्रियालम्बनालम्बनं विज्ञानम् । तत्र कामावचराश्चत्वारो निकायाः—दुःख-समुदय-मार्गदर्शन-भावनाहेयाः । रूपावचरास्त्रयो निकायाः—दुःख-समुदयदर्शन-भावनाप्रहातव्याः । आरूप्यावचर एकः—भावनाप्रहातव्यः । सर्वत्रगाश्चानुशया अनुशेरत इति विज्ञातव्यम् ।

सौमनस्येन्द्रियालम्बने विज्ञाने कत्यनुशयाः अनुशेरते ?—इति प्रश्ने विचारयितव्यम् । तत् पुनः सौमनस्येन्द्रियालम्बनं विज्ञानं एकादशविधम् । काम-रूपावचरं पञ्च-पञ्चप्रकारम्, अनास्रवं च । तदेतत् समासतस्त्रयोदशविधस्य विज्ञानस्यालम्बनं भवति । कामावचरस्य पञ्चप्रकारस्य संस्कृतालम्बनस्य; तस्य संस्कृतत्वात् । एवं रूपावचरस्य । आरूप्यावचरस्य तु द्विप्रकारस्य मार्गदर्शनभावनाहेयस्य, अनास्रवस्य च । इदं त्रयोदशविधं सौमनस्येन्द्रियालम्बनविज्ञानम् । तत्र यथासम्भवं कामावचर-रूपावचराः पञ्चनिकायाः संस्कृतालम्बनाः, आरूप्यावचरौ द्वौ निकायौ, सर्वत्रगाश्चानुशया अनुशेरते—इति विज्ञातव्यम् ।

सौमनस्येन्द्रियालम्बनालम्बने विज्ञाने कत्यनुशया अनुशेरते ? तत् पुनः सौमनस्येन्द्रियालम्बनं त्रयोदशविज्ञानं कतमस्य विज्ञानस्यालम्बनम् ? तस्यैव त्रयोदशविज्ञानस्य । आरूप्यावचरस्य च भूयो द्विप्रकारस्य दुःख-समुदयदर्शनप्रहातव्यस्य । इदं पञ्चदशविधं सौमनस्येन्द्रियालम्बनं विज्ञानम् । तत्रारूप्यावचरौ द्वौ—दुःख-समुदयदर्शनहेयौ वर्धयित्वा । कामावचर-रूपावचराः संस्कृतालम्बनाः । आरूप्यावचराश्चत्वारो निकायाः, अन्यत्र निरोधदर्शनहेयात् ।

तदेवं कृत्वा भवति—

**द्विधा सानुशयं क्लिष्टमक्लिष्टमनुशायकैः ।**

क्लिष्टं चित्तमनुशयानैश्चानुशयैः सानुशयम्; तत्सम्प्रयुक्ततदालम्बनैरप्रहीणैरननुशयानैश्च तत्सम्प्रयुक्तैः प्रहीणैस्तत्सहितत्वात् । अक्लिष्टं तु चित्तमनुशयानैरेव तदालम्बनैरप्रहीणैरिति ।

अथैषां दशानामनुशयानां कथं प्रवृत्तिरिति? आदित एव तावदविद्यायोगात् सत्येषु स मुह्यति, दुःखमस्मै न रोचते यावत् मार्गः । ततः

**मोहात्काङ्क्षा,**

मूढस्य पक्षद्वयं श्रुत्वा विचिकित्सोत्पद्यते—दुःखं न्विदम्, न त्विदं दुःखमित्येवमादि ।

**ततो मिथ्यादृष्टिः,**

विचिकित्साया मिथ्यादृष्टिः प्रवर्तते । संशयितस्य मिथ्याश्रमणचित्तानां मिथ्यानिश्चयोत्पत्तेः—नास्ति दुःखमित्येवमादि ।

**सत्कायदृक् ततः ।। ३२ ।।**

मिथ्यादृष्टेः किल सत्कायदृष्टिः प्रवर्तते; दुःखतः स्कन्धानपोह्यात्मतोऽभिनिवेशात् ।

**ततोऽन्तग्रहणम्,**

सत्कायदृष्टेरन्तग्राहदृष्टिः प्रवर्तते; आत्मनः शाश्वतोच्छेदान्तग्रहणात् ।

**तस्माच्छीलामर्शः,**

---

अनुशया अनुशेरत इति विज्ञातव्यम् । अनया दिशा अन्यदपि गन्तव्यमिति ।। ३१ ।।

"*द्विधा सानुशयं क्लिष्टम्*" इति । अनुशयानैरननुशयानैश्चानुशयैः *सानुशयं* क्लिष्टमित्यर्थः । *तत्सहितत्वात्* । सदावस्थितत्वादित्यर्थः । *अक्लिष्टं चित्तमनुशयानैरेव* सानुशयं विवेचयितुं शक्यत्वात् । तथा हि वक्ष्यति—'प्रहातव्यः क्लेश आलम्बनात्मतः' (अभि० को० ६.६०) इति ।। ३२ ।।

सर्वस्य सर्वानन्तरमुत्पत्तिसम्भवादन्यस्येषामुत्पत्तौ सार्वजन्यः क्रमनियमः । *दुःखतः स्कन्धानपोह्येति । नेदं दुःखमित्यात्मतोऽभिनिवेशात्* । 'रूपमात्मा' इत्येवन्दृष्टिकस्य वेदनाद्यात्मग्राहदृष्टिः प्रत्यनीका ।। ३३ ।।

अन्तग्रहाच्छीलव्रतपरामर्शः। यमेवान्तं गृह्णाति तेन शुद्धिप्रत्यागमनात्।

**ततो दृशः।**

'आमर्शः' इति वर्तते। शीलव्रतपरामर्शाद् दृष्टिपरामर्शः प्रवर्तते। येन शुद्धिं प्रत्येति तस्याग्रतो ग्रहणात्। ततः—

**रागः स्वदृष्टौ मानश्च**

तस्यामभिष्वङ्गात्, तया चोन्नतिगमनात्।

**द्वेषोऽन्यत्र**

स्वदृष्ट्यध्यवसितस्य तत्प्रत्यनीकभूतायां परदृष्टौ द्वेषः प्रवर्तते।

अपरे स्वदृष्टावेवान्यत्र गृहीते त्यक्तायां द्वेषमिच्छन्ति। दर्शनहेयानां रागादीनां स्वसान्तानिकदृष्ट्यालम्बनत्वात्।

**इत्यनुक्रमः॥ ३३॥**

एष एषां दशानां क्लेशानां प्रवृत्तिक्रमः॥ ३२॥

उत्पद्यमानस्तु त्रिभिः कारणैरुत्पद्यते—

**अप्रहीणादनुशयाद् विषयात् प्रत्युपस्थितात्।**

**अयोनिशो मनस्कारात् क्लेशः,**

तद्यथा—रागानुशयोऽप्रहीणो भवत्यपरिज्ञातः कामरागपर्यवस्थानीयाश्च धर्मा आभासगता भवन्ति। तत्र चायोनिशो मनस्कार एवं कामराग उत्पद्यते। तान्येतानि यथाक्रमं हेतुविषयप्रयोगबलानि।

---

*अप्रहीणो भवत्यपरिज्ञात* इति। अप्रहीणः; तत्प्राप्त्यनुच्छेदात्। अपरिज्ञातः; तत्प्रतिपक्षस्य चानुत्पत्तेः। *कामरागपर्यवस्थानीया* इति। पर्यवतिष्ठत एभिरिति पर्यवस्थानीयाः स्नानीयवत्। कामरागस्य पर्यवस्थानीया अनुकूला इति। कामराग एव वा पर्यवस्थानम् कामरागपर्यवस्थानम, तस्मै हिताः कामरागपर्यवस्थानीयाः। ते पुनः रूपादयो *विषया आभासगता भवन्तीति*। विषयरूपतामापन्ना भवन्तीत्यर्थः। *तत्र चायोनिशोमनस्कार* इति। तत्र चाभासगतेषु विषयेषु विपरीतः समनन्तरप्रत्यय इत्यर्थः। *हेतुविषयप्रयोगबलानिति*। हेतुबलम्—कामरागोत्पत्तये कामरागानुशयोऽप्रहीणो भवत्यपरिज्ञातः। कामरागपर्यवस्थानीया विषयबलम्। तत्र चायोनिशोमनस्कारः—प्रयोगबलम्। एव-

एवमन्योऽपि क्लेश उत्पद्यत इति वेदितव्यः, यः—

**सम्पूर्णाकारणः ॥ ३४ ॥**

कदाचित्किल विषयबलेनैवोत्पद्यन्ते, न हेतुबलेन । यथा—परिहाणधर्मकस्यार्हत इति ॥ ३४ ॥

एत एवानुशयाः सूत्रे भगवता त्रय आस्रवा उक्ताः—कामास्रवः, भवास्रवः, अविद्यास्रव इति । चत्वार ओघाः—कामौघः, भवौघः, दृष्ट्योघः, अविद्यौघश्च । चत्वारो योगा एत एव । चत्वार्युपादानानि—कामोपादानम्, दृष्ट्युपदानम्, शीलव्रतोपादानम्, आत्मवादोपादानमिति । तत्र तावत्

**कामे सपर्यवस्थानाः क्लेशाः कामास्रवो विना ।**

**मोहेन,**

अविद्यां वर्जयित्वाऽन्ये कामावचराः क्लेशाः सह पर्यवस्थानैः कामास्रवो वेदितव्य एकचत्वारिंशद् द्रव्याणि । एकत्रिंशदनुशयाः पञ्चप्रकारामविद्यां हित्वा दश पर्यवस्थानानि ।

**अनुशया एव रूपारूप्ये भवास्रवः ॥ ३५ ॥**

'विना मोहेन' इति वर्तते । रूपारूप्यावचरा अविद्यावर्ज्या अनुशया भवास्रवो द्वापञ्चाशद् द्रव्याणि—रूपावचराः षड्विंशतिरनुशयाः पञ्चप्रकारामविद्यां हित्वा, आरूप्यावचराः षड्विंशतिः ।

---

*मन्योऽपि क्लेश उत्पद्यत* इति । प्रतिघानुशयोऽप्रहीणो भवत्यपरिज्ञातः, प्रतिघपर्यवस्थानीया धर्मा आभासगता भवन्ति, तत्र चायोनिशोमनस्कार इत्येष नयः ॥ ३४ ॥

*चत्वारो योगा एत एवेति* कामयोगः, भवयोगः, दृष्टियोगः, अविद्यायोगश्चेति ।

*"विना मोहेन"* इति । अविद्यास्रवस्य पृथगुक्तत्वात् । *सह पर्यवस्थानै*-राह्रीक्यादिभिर्वक्ष्यमाणैः *एकचत्वारिंशद् द्रव्याणि एकत्रिंशदनुशया* इति । द्वादश दृष्टयः—दुःखदर्शनप्रहातव्याः पञ्च, समुदयदर्शनप्रहातव्ये द्वे, निरोधदर्शनप्रहातव्ये द्वे एव, तिस्रो मार्गदर्शनप्रहातव्याः । चतस्रो विचिकित्साः । पञ्च रागाः । एवं प्रतिघाः, मानाश्च दश पर्यवस्थानानि - इत्येवमेकचत्वारिंशत् ।

*"अनुशया एव"* इति । एवकारः पर्यवस्थाननिरासार्थः । *षड्विंशतिरनुशया* इति । द्वादश दृष्टयः, चतस्रो विचिकित्साः, पञ्च रागाः, पञ्च माना इति ।

ननु च तत्राप्यस्ति पर्यवस्थानद्वयम्—स्त्यानमौद्धत्यं च, प्रकरणेषु चोक्तम्
"भवास्रवः कतमः ? अविद्यां स्थापयित्वा यानि तदन्यानि रूपारूप्यप्रति-
संयुक्तानि । संयोजनबन्धनानुशयोपक्लेशपर्यवस्थानानि" (　　) इति, कस्मा-
दिह तस्याग्रहणम् ? अस्वातन्त्र्यादिति काश्मीराः ॥ ३५ ॥

किं पुनः कारणं रूपारूप्यवचरा अनुशयाः समस्यैको भवाग्र उक्तः ?

**अव्याकृतान्तर्मुखा हि ते समाहितभूमिकाः ।**

**अत एकीकृताः**

ते ह्युभयेऽप्यव्याकृता अन्तर्मुखप्रवृत्ताः समाहितभूमिकाश्चेति त्रिविधेन साधर्म्येणैकीकृताः । येनैव च कारणेन भवराग उक्तस्तेनैव भवास्रव इत्यविद्येदानीं त्रैधातुक्यविद्यास्रव इति सिद्धम् । तानि पञ्चदश द्रव्याणि ।

किं कारणमसौ पृथग्व्यवस्थाप्यते ? सर्वेषां तेषाम्[1]—

**मूलमविद्येत्यास्रवः पृथक् ॥ ३६ ॥**

यथा चैते आस्रवा उक्ता वेदितव्या,

---

ननु च *तत्राप्यस्ति पर्यवस्थानद्वयमिति* । तत्र रूपारूप्यधात्वोः । "स्त्यानौद्धत्यमदा धातुत्रये" (अभि० ५.५३) इति वचनात् । *कस्मादिह तस्याग्रहणमिति* । तस्य पर्यवस्थानद्वयस्य । *अस्वातन्त्र्यादिति* । कथमस्वातन्त्र्यम् ? रागादिसम्प्रयोगित्वादीर्ष्यावद् अविद्यामात्रासम्प्रयोगित्वाच्च । एतद्धि द्वयं रागादिभिः सम्प्रयुज्यते । न तथा ईर्ष्यामात्सर्यकौकृत्यक्रोधम्रक्षाः स्वतन्त्राः, अविद्यामात्रेण सम्प्रयोगादिति ॥ ३५ ॥

*ते ह्युभयेऽपीति* । रूपारूपावचरा अपीत्यर्थः । *अन्तर्मुखप्रवृत्ता इति* । न विषयप्रधाना इत्यर्थः । *येनैव च कारणेन भवराग* उक्त इति । "अन्तर्मुखत्वात्तन्मोक्षसंज्ञाव्यावृत्तये कृतः" (अभि० ५.२) इति । *अनेन च भवास्रव इति* । *अविद्यास्रव इति सिद्धमिति* । अविद्या पूर्वोक्ताभ्यामास्रवाभ्यां बहिष्कृता । तस्मात् सा त्रैधातुकी अपि अविद्यास्रव इति सिद्धमेतत् । *पञ्चदश द्रव्याणीति* । त्रिष्वपि धातुष्वविद्यायाः प्रत्येकं पञ्चप्रकारत्वात् । *सर्वेषां तेषामिति* । कामास्रवादीनां संसारस्य च । उक्तो ह्यविद्याहेतुः संरागायेत्यादि ।

"याः काश्चन दुर्गतयो ह्यस्मिन् लोके परत्र च ।

---

१. हि तेषाम्—का० ।

**तथौघयोगा दृष्टीनां पृथग्भावस्तु पाटवात् ।**

कामास्रव एव कामौघः कामयोगश्च । एवं भवास्रव एव भवौघो भवयोगश्च, अन्यत्र दृष्टिभ्यः । ताः किल पटुत्वादोघयोगेषु पृथक् स्थापिताः ।

**नास्रवेष्वसहायानां न किलास्यानुकूलता ।। ३७ ।।**

आसयन्तीत्यास्रवाणां निर्वचनं पश्चाद्वक्ष्यति ।´ न च किल केवला दृष्टय आस्यानुकूलाः; पटुत्वात् । अत आस्रवेषु न पृथक् स्थापिताः । मिश्रीकृत्य स्थापिता इति । तदेवं कामौघ एकान्नत्रिंशद् द्रव्याणि । रागप्रतिघमानाः पञ्चदश विचिकित्साश्चतस्रो दश पर्यवस्थानानीति । भवौघोऽष्टाविंशतिद्रव्याणि । रागमाना विंशतिः । विचिकित्साऽष्टौ । दृष्ट्योघः षट्त्रिंशद् द्रव्याणि । अविद्यौघः पञ्चदश द्रव्याणि ।

---

अविद्यामूलिकाः सर्वा इच्छालोभसमुत्थिताः ।।" (  ) इति च ।। ३६ ।।

"*तथौघयोगा*" इति । आस्रवा एवौघा योगाश्च भवन्ति । केवलम् दृष्टयः *पृथग् अवस्थाप्यन्ते* । कथम् ? इति विक्रियते—कामास्रव एव कामौघः, कामयोगश्च । एवं भवास्रव एव भवौघः, भवयोगश्च । अविद्यौघयोगस्तु पूर्ववदेवावगन्तव्यः । दृष्टियोग इह चतुर्थ उक्तः । तेनाह—*अन्यत्र दृष्टिभ्य* इति । *ताः किलेति* । किल-शब्दः परमतद्योतकः । विनेयजनवशात्तु दृष्टियोगः पृथगुक्त इत्यभिप्रायो युज्यते ।

आस्रवेषु दृष्टयः किमर्थं न पृथक् स्थापिताः ? इत्याह—"*नास्रवेष्वसहायानाम्*" इत्यादि । असहायानां दृष्टीनाम् आस्यानुकूलता = अवस्थानानुकूलता, चलत्वात् पटुत्वाच्च न भवति । नासनानुकूलतेत्यर्थः । आसेति रूपे प्राप्ते, *आपिशलेष्ट्या* 'आस्या' इति रूपं भवति । तदिदमुक्तं भवति—यस्मादेता दृष्टयोऽसहायाः, नासनानुकूलाः । ससहायास्त्वासनानुकूला भवन्ति । तस्मात् ससहाया एवैता आस्रवेषूक्ताः । मिश्रीकृत्योक्ता इत्यर्थः । किमर्थम् ? इत्याह—*आसयन्तीत्यास्रवाणां* निवर्चनं पश्चाद् वक्ष्यतीत्यत आसनार्थमास्रवेषु भवितव्यमित्यभिप्रायः । *तदेवं कामौघ एकान्नत्रिंशद् द्रव्याणीति* । द्वादशदृष्ट्यपनयनात् नास्रववद् एकचत्वारिंशद् द्रव्याणि भवन्ति, किं तर्हि ? एकान्नत्रिंशद् द्रव्याणि भवन्ति । कथम् ? इत्याह—*राग-प्रतिघ-माना* इति सर्वम् । *भवौघोऽष्टाविंशतिद्रव्याणीति* । भवास्रवो द्वापञ्चाशद् द्रव्याण्युक्तानि, ततश्चतुर्विंशतिर्दृष्टीरपनीय अष्टाविंशतिर्द्रव्याणि । *राग-माना विंशतिरिति* । द्विधा कृत्वा रागा दश भवन्ति, माना अपि दशेति विंशतिः । *दृष्ट्योघः षट्त्रिंशद् द्रव्याणीति* । त्रिषु धातुषु त्रिद्वादश दृष्टय इति । *अविद्यौघः पञ्चदशद्रव्याणि* । पूर्ववत् ।

ओघवद् योगा वेदितव्याः ॥ ३७ ॥

**यथोक्ता एव साऽविद्या द्विधा दृष्टेर्विवेचनात् ।**

**उपादानानि,**

कामयोग एव सहाविद्यया कामोपादानं चतुस्त्रिंशद् द्रव्याणि—**रागप्रतिघ-मानाऽविद्या** विंशतिः, विचिकित्साश्चतस्रः, दश **पर्यवस्थानानि । भवयोग एव सहा-**विद्यया आत्मवादोपादानमष्टत्रिंशद् द्रव्याणि । रागमानाविद्यास्त्रिंशद्विचिकित्सा **अष्टौ** । दृष्टियोगाच्छीलव्रतं निष्कृष्य दृष्ट्युपादानं त्रिंशद् द्रव्याणि । **शीलव्रतो-**पादानं षड्द्रव्याणि **कर्मदृष्टिभ्यो** निष्कृष्टम् । मार्गप्रतिद्वन्द्वाद्[1], **उभयपक्षविप्रलम्भ-नाच्च** । गृहिणोऽप्यनेन विप्रलब्धा अनशनादिभिः स्वर्गमार्गसंज्ञया । **प्रव्रजिता** अपीष्टविषयपरिवर्जनेन शुद्धिप्रत्यागमनादिति ।

किं कारणमविद्यां मिश्रयित्वोपादानमुक्तं न **पृथक्** ? भवग्रहणादुपादानानि ।

---

*ओघवद् योगा* इति । कामयोग एकान्नत्रिंशद् द्रव्याणि । राग-प्रतिघ-**मानाः** पञ्चदश, विचिकित्साश्चतस्रो दश पर्यवस्थानानि । भवयोगोऽष्टाविंशतिर्द्रव्याणि । राग-मानाः विंशतिः, विचिकित्सा अष्टौ । दृष्टियोगः षट्त्रिंशद् द्रव्याणि । अविद्यायोगः पञ्चदश द्रव्याणि ॥ ३७ ॥

"*यथोक्ता एव साऽविद्या*" इति विस्तरः । के यथोक्ताः ? 'योगाः' इत्यधिकृतम् । तस्माद् विक्रियते—कामयोग एव सहाविद्यया कामोपादानमिति । अविद्या कामोपादान-आत्मवादोपादानयोर्यथास्वमन्तर्भाव्यते ।

*द्विधा दृष्टेः* । पृथक्करणाच्चतुष्ट्वम्—कामोपादानम्, दृष्ट्युपादानम्, शीलव्रतोपादानम्, आत्मवादोपादानमिति । *दृष्टियोगाच्छीलव्रतं निष्कृष्येति* । षट्त्रिंशद्द्रव्यकाद् दृष्टियोगाद् धातुभेदेन षच्छीलव्रतपरामर्शान्निष्कृष्य । दृष्ट्युपादानं *त्रिंशद् द्रव्याणि* । *शीलव्रतोपादानं षड् द्रव्याणि* । कामधातौ द्वे, एवं रूपधातौ आरूप्यधातौ चेति । *मार्गप्रतिद्वन्द्वादिति* । सांख्य-योगज्ञानादिभिर्मोक्षप्राप्तिदर्शनान्मार्गप्रतिद्वन्द्वभूतं शीलव्रतोपादानम् । *उभयपक्षविप्रलम्भ-*नाच्चेति विस्तरः । गृहिप्रव्रजितपक्षविप्रलम्भनाच्चेत्यर्थः । *अनशनादिभिरिति* । आदि-शब्देन जलाग्निप्रपतन-मौनवीरादानादिर्गृह्यते । अनशनादीनि शीलव्रत-संगृहीतानि, इष्टविषयपरिवर्जनं च । *इष्टविषयपरिवर्जनेनेति* । रसपरित्याग-भूमिशय्यामलपङ्कधारण-नग्नचर्या-केशोल्लुञ्चनादिना *शुद्धिप्रत्यागमनात्* ।

---

१. प्रतिद्वन्द्वित्वात्—का० ।

**अविद्या तु ग्राहिका नेति मिश्रिता ॥ ३८ ॥**

असम्प्रख्यानलक्षणतयाऽपटुत्वादविद्या न ग्राहिका भवति, अतः किल मिश्रिता। सूत्रे तु भगवतोक्तम्—"कामयोगः कतमः ? विस्तरेण यावद्योऽस्य भवति कामेषु कामरागः कामच्छन्दः कामस्नेहः कामप्रेम कामेच्छा काममूर्छा कामगृद्धः कामपरिगर्द्धः कामनन्दी कामनियन्तिः कामाध्यवसानम्, तदन्यचित्तं पर्यादाय तिष्ठति। अयमुच्यते कामयोगः। एवं यावद् भवयोगः" । ( )। छन्दरागश्चोपादानमुक्तं सूत्रान्तरेषु, अतो विज्ञायते कामा ह्युपादानमपि कामादिषु यश्छन्दराग[1] इति ॥ ३८ ॥

उक्तमिदमनुशया एवास्रवौघयोगोपादानसंशब्दिताः सूत्रेष्विति।

अथ कोऽयमनुशयार्थः ? कश्च यावदुपादानार्थः ?

**अणवोऽनुगताश्चैते द्विधा चाप्यनुशेरते ।**

**अनुबध्नन्ति यस्माच्च तस्मादनुशयाः स्मृताः ॥ ३९ ॥**

तत्राणवः सूक्ष्मप्रचारत्वात् दुर्विज्ञानतया। अनुगताः प्राप्त्यनुषङ्गतः। अनुशेरते द्वाभ्यां प्रकाराभ्याम्—आलम्बनतः, संप्रयोगतश्च। अनुबध्नन्ति; अप्रयोगेण प्रतिनिवारयतो[2]ऽपि पुनः पुनः सम्मुखीभावात्। एभिः करणैरनुशया उच्यन्ते ॥

---

"*अविद्या तु ग्राहिका नेति मिश्रिता*" इति। न केवलम् अविद्या भवमुपाददाति। कस्मात् ? इत्याह—*असम्प्रख्यानलक्षणतया अपटुत्वादिति*। मिश्रिता त्वन्यक्लेशसम्पर्कवशादुपाददतीत्यभिप्रायः। *अथ किलेति*। किल-शब्दः परमतद्योतकः। तेन स्वमतमुच्यते। *सूत्रे तु भगवतोक्तमिति* विस्तरेण। *एवं यावद् दृष्टियोग* इति। कथम् ? 'दृष्टियोगः कतमः ? विस्तरेण यावद् योऽस्य दृष्टिषु दृष्टिरागो दृष्टिच्छन्दो दृष्टिस्नेह.' इति पूर्ववत्। *छन्दरागश्चोपादानमुक्तं सूत्रान्तरेषु*। कथम् ? "उपादानं कतमत् ? योऽत्र छन्दरागः" इति। एतदाचार्यमतम्। तदुक्तं भवति—राग एवात्र योगः, उपादानं वा, नान्ये क्लेशा इति। तेनोच्यते—कामादिषु यश्छन्दराग इति ॥ ३८ ॥

"*अणवः*" इति विस्तरेण। अणवः शेरते इत्यनुशयाः। नैरुक्तेन विधिनाऽस्य सिद्धिः। *सूक्ष्मप्रचारत्वादिति*। सूक्ष्मप्रवृत्तित्वादित्यर्थः। कथं पुनः सूक्ष्मा प्रवृत्तिः ? अरूपिणां दुर्विज्ञानतया। *आलम्बनतश्छिद्राण्वेशिशत्रुवत्*, दृष्टिविषवच्च। *सम्प्रयोगतोऽयोगुडोदकसन्तापवत्*, स्पर्शवच्च। उभयतो धात्र्यः

---

1. छन्दराग—का०। 2. प्रतिवारयतोऽपि—का०।

**आसयन्त्यास्रवन्त्येते हरन्ति श्लेषयन्त्यथ ।**
**उपगृह्णन्ति चेत्येषामास्रवादिनिरुक्तयः ॥ ४० ॥**

आसयन्ति संसारे आस्रवन्ति भवाग्राद् यावदवीचिं षड्भिरायतनव्रणैरित्यास्रवाः । हरन्तीत्योघाः । श्लेषयन्तीति योगाः । उपगृह्णन्तीति उपादानानि ।

एवं तु साधीयः स्याद्—आस्रवत्येभिः संततिर्विषयेष्वित्यास्रवाः । "तद्यथा आयुष्मन्तो नौर्महद्भिरभिसंस्कारैः प्रतिस्रोतो नीयते । सा तेषामेव संस्काराणां प्रतिप्रस्रब्ध्याऽल्पकृच्छ्रेणानुस्रोत उह्यते" इति सूत्रवाबानुसारात् । अधिमात्रवेगत्वादोघाः । तर्हि तद्वानुह्यते तदनुविधानात् । नाधिमात्रसमुदाचारि-

---

कुमारकमनुशेरते, एवमेनेऽप्यालम्बनात् सम्प्रयुक्तेभ्यो वा स्वां सन्ततिं वर्धयन्तः प्राप्तिभिरुपचिन्वन्ति । *अनुबध्नन्तीति* । अनुक्रान्तेश्चातुर्थकज्वरवत् मूषिकाविषवदित्यन्ये । *अप्रयोगेण* अनाभोगेन । *प्रतिनिवारयतोऽपि* निषेधयतोऽपि पुद्गलस्य *पुनः पुनः सम्मुखीभावादनुबध्नन्तीत्यतोऽनुशया* इति ॥ ३९ ॥

*आसयन्ति संसार इति आस्रवा* इति । नैरुक्तो विधिः । आसनार्थो वा । *आस्रवन्ति भवाग्राद् यावदवीचिमिति* । *षड्भिरायतनव्रणैश्चक्षुरादिभिरायतनैर्व्रण*भूतैरास्रवन्ति क्षरन्ति । भवाग्राद् यावदवीचि गच्छन्ति । भवाग्रावीतरागस्यापि आवीचिकक्लेशसमुदाचाराद्, तदुत्पन्नस्य वा तत्रोत्पत्तिसम्भवात् । के आस्रवन्ति ? अनुशयाः । आस्रवन्तीत्यास्रवा इत्यच्-प्रत्ययः । *हरन्तीत्योघाः* । *श्लेषयन्तीति योगाः* । *उपगृह्णन्तीति उपादानानी*त्यर्थप्रदर्शनम् ।

एतदुक्तं *वैभाषिकैः*—वहने एतद् रूपम्—ओघ इति । *वहन्ति* = हरन्ति गत्यन्तरं विषयान्तरं वेत्योघाः । *योजयन्ति* = श्लेषयन्ति गत्यन्तरे विषयान्तरे *वेति योगाः* । *उपाददति* = उपगृह्णन्ति *पुनर्भवे कामादिषु वा* विज्ञानसन्ततिमि*त्युपादानानीति* ।

*एवं तु साधीयः स्यादिति* । एवं तु साधुतरं स्यादित्या*चार्यः* । कथम् ? इत्याह—*आस्रवन्ति* गच्छन्ति *एभिरनुशयैर्विज्ञानसन्ततिर्विषयेष्वित्यास्रवाः* । करणसाधनम् । *महताभिसंस्कारेण* कुशलैर्धर्मैश्छिन्नसन्तानः *प्रतिस्रोतो नीयत* विषयेभ्यो निवार्यते । *तेषामेव संस्काराणां प्रतिप्रश्रब्ध्येति* । तेषामेव प्रयत्नानां व्युपरमेणेत्यर्थः । *अधिमात्रवेगत्वादोघा* इति । ओघसाधर्म्यं दर्शयति, ओघ इवौघ इति कृत्वा । *तदनुविधानादिति* । रागाद्यनुविधानात् । *नाधिमात्रसमुदाचारिणो हि योगा* इति । ओघयोगानां नानाकरणं दर्शयति । ये हि नाधिमात्र-

णोऽपि[1] योगाः; विविधदुःखयोजनात्[2]। अभीक्ष्णानुषङ्गतो[3] वा कामाद्युपादानादुपादानानीति ॥ ४० ॥

**संयोजनादिभेदेन पुनस्ते पञ्चधोदिताः ।**

त एवानुशयाः पुनः संयोजनबन्धनानुशयोपक्लेशपर्यवस्थानभेदेन पञ्चधा भित्त्वोक्ताः। तत्र नव संयोजनानि—अनुनयप्रतिघमानाविद्यादृष्टिपरामर्शविचिकित्सेर्ष्यामात्सर्यसंयोजनानि। तत्रानुनयसंयोजनं त्रैधातुको रागः। एवमन्यानि यथासम्भवं योज्यानि। दृष्टिसंयोजनं तिस्रो दृष्टयः। परामर्शसंयोजनं द्वे दृष्टी।

अत एवोच्यते—स्याद् दृष्टिसम्प्रयुक्तेषु धर्मेष्वनुनयसंयोजनेन संयुक्तो

---

समुदाचारिणस्ते योगाः, ये त्वधिमात्रसमुदाचारिण एव ते ओघा इति। कथं च ते योगाः? इत्याह—*विविधदुःखयोजनात्*। जात्यादिभिर्विविधैर्दुःखैर्योजनादित्यर्थः। *अभीक्ष्णानुषङ्गतो वा*। यस्माद् वा सन्ततावभीक्ष्णं युज्यते, तस्माद् योगा इति। *कामाद्युपादानादिति*। यैः कामादय उपादीयन्ते, तानि कामाद्युपादानानिच्छन्दरागात्मकानि ॥ ४० ॥

*ते एवानुशयाः पुनर्यावत् पर्यवस्थानभेदेन पञ्चधाभित्त्वोक्ताः* इति। त एवानुशया आस्रवादिभेदेन चतुर्धोक्ताः संयोजन-बन्धनानुशयोपक्लेश-पर्यवस्थान-भेदेन पुनः पञ्चधा भित्त्वोक्ताः *सूत्रेऽभिधर्मे* च। ननु चानुशयव्यतिरिक्तान्याह्रीक्यादीनि पर्यवस्थानानि निर्दिश्यन्ते, कथमिदमुच्यते—अनुशया एव पर्यवस्थानानि? सत्यं भवन्ति तद्व्यतिरिक्तानि, अव्यतिरिक्तान्यपि त्विष्यन्ते। तथा हि वक्ष्यति—"क्लेशोऽपि हि पर्यवस्थानम्; 'कामरागपर्यवस्थानप्रत्ययं दुःखं प्रतिसंवेदयते' इति सूत्रे वचनात्" (अभि० को० ५.४७) इति।

*एवमन्यान्यपि यथासम्भव योज्यानीति*। प्रतिघेर्ष्यामात्सर्यसंयोजनानि कामावचराणि। मानाविद्यादृष्टिपरामर्शविचिकित्सासंयोजनानि त्रिधातुकानि। *दृष्टिसंयोजनं तिस्रो दृष्टयः* इति। सत्कायान्तग्राहमिथ्यादृष्टयः। *परामर्शसंयोजनं द्वे दृष्टीति*। दृष्टि-शीलव्रतपरामर्शौ। *अत एवोच्यत* इति। यत एव तिस्रो दृष्टयः—दृष्टिसंयोजनम्, द्वे दृष्टी—परामर्शसंयोजनम् अत एवोच्यते।

---

१. नातिमात्र०—का०। २. दुःखसंयोजनात्—का०।
३. आभीक्ष्ण्या०—का०।

न दृष्टिसंयोजनेन; न च तत्र दृष्ट्यनुशयो नानुशयिता। आह—स्यात् समुदयज्ञाने उत्पन्ने निरोधज्ञानेऽनुत्पन्ने निरोधमार्गदर्शनप्रहातव्येषु दृष्टिशीलव्रतपरामर्शसम्प्रयुक्तेषु यावद्[1] धर्मेषु। तेषु ह्यनुनयसंयोजनेन[2] संयुक्तस्तदालम्बनेन दृष्टिसंयोजनेनासंयुक्तः; सर्वत्रगस्य प्रहीणत्वादसर्वत्रगस्य च तदालम्बनसंप्रयोगिणो दृष्टिसंयोजनस्याभावात्। दृष्ट्यनुशयश्च तेष्वनुशेते। ते एव परामर्शदृष्टी सम्प्रयोगतः।

---

*स्याद् दृष्टिसम्प्रयुक्तेष्विति* विस्तरेण प्रश्नः। *दृष्टिसम्प्रयुक्तेष्विति* परामर्शदृष्टिसम्प्रयुक्तेषु वेदनादिषु। *अनुनयसंयोजनेन संयुक्तो* रागेण। *न दृष्टिसंयोजनेन* सत्कायदृष्ट्यादिलक्षणेन। *नच तत्र दृष्ट्यनुशयो नानुशयितेति*। न च तत्र दृष्टिसम्प्रयुक्तेषु धर्मेषु दृष्ट्यनुशयो नानुशयिता, किं तर्हि? अनुशयिता। द्विःप्रतिषेधः प्रकारान्तरं गमयति। *आह स्यादिति* विस्तरेण प्रश्नविसर्जनम्। *समुदयज्ञाने उत्पन्न इति* विशेषणं सर्वत्रगदृष्टिसंयोजनप्रहाणसन्दर्शनार्थम्। *निरोधज्ञानेऽनुत्पन्न इति* परामर्शदृष्टिद्वयाप्रहाणेन तत्सम्प्रयोगसत्ताप्रदर्शनार्थम्। *निरोध-मार्गदर्शनप्रहातव्येषु यावद् धर्मेष्विति*। वेदनादिषु। *तेषु ह्यनुनयसंयोजनेन* निरोधदर्शनहेयेन, मार्गदर्शनहेयेन वा *संयुक्तः*। कीदृशेन? *तदालम्बनेन*। यस्मादसावेतान् निरोधदर्शनमार्गप्रहातव्यान् दृष्टिपरामर्श-शीलव्रतपरामर्शसम्प्रयुक्तान् वेदनादिधर्मान् आलम्ब्य राग उत्पद्यते, तस्मादालम्बनतस्तेन संयुक्तः। *दृष्टिसंयोजनेनासंयुक्तः*। कस्माद्? इत्याह-*सर्वत्रगस्य* दुःख-समुदयदर्शनहेयस्वभावस्य समुदयज्ञानोत्पत्तेः *प्रहीणत्वात्*। *असर्वत्रगस्य च तदालम्बनसम्प्रयोगिणो दृष्टिसंयोजनस्याभावादिति*। यद्यपि ह्यसर्वत्रगं मिथ्यादृष्टिस्वभावं निरोधमार्गदर्शनप्रहातव्यं दृष्टिसंयोजनमस्ति, न तु तत् परामर्शदृष्टिसम्प्रयुक्तवेदनादिधर्मालम्बनम्; अनास्रवालम्बनत्वात्। तस्मान्नालम्बतो दृष्टिसंयोजनेन संयुक्तः। न चापि तत् तैर्वेदनादिभिः सम्प्रयोगि, तत्पृथक्कलापत्वात्। तस्मात् सम्प्रयोगतोऽपि न तेन संयुक्तः। दृष्ट्यनुशयश्च तेष्वनुशेते। कीदृशः सः? इत्याह—*ते एव परामर्शदृष्टी सम्प्रयोगत* इति। दृष्टिपरामर्शः, शीलव्रतपरामर्शो वा तेषु वेदनादिषु धर्मेषु सम्प्रयोगतोऽनुशेते; स्वकलापसम्भूतत्वात्। न च तत्र दृष्टिसंयोजनमनुशेते; तयोर्दृष्टिसंयोजनमित्यसंज्ञितत्वान्न दृष्ट्यनुशयग्रहणे पञ्चदृष्टिग्रहणं भवति। दृष्टिसंयोजनग्रहणे तु सत्कायान्तग्राहमिथ्यादृष्टीनामेव ग्रहणम्, न परामर्शदृष्ट्योः—इत्यवगन्तव्यम्।

---

१. का० पुस्तके नास्ति। २. तेष्वनुनय०—का०।

किं पुनः कारणं संयोजनेषु तिस्रो दृष्टयो दृष्टिसंयोजनं पृथगुक्तम्, द्वे तु दृष्टी परामर्शसंयोजनं पृथक् ?

**द्रव्यामर्शनसामान्याद् दृष्टिः संयोजनान्तरम् ॥ ४१ ॥**

अष्टादश द्रव्याणि तिस्रो दृष्टयः। अष्टादशैव द्वे परामर्शदृष्टी। अतः किल द्रव्यसामान्यादेते संयोजनान्तरं कृते। एते च द्वे परामर्शस्वभावे[1], न[1] शेषा इति परामर्शनसामान्यादप्येते पृथग्व्यवहिते; ग्राह्यग्राहकभेदात् ॥ ४१ ॥

अथ कस्मादीर्ष्यामात्सर्ये संयोजने पृथक् संयोजनद्वयमुक्तं नान्यत् पर्यवस्थानम् ?

**एकान्ताकुशलं यस्मात् स्वतन्त्रं चोभयं यतः।**
**ईर्ष्यामात्सर्यमेषूक्तं पृथक् संयोजनद्वयम् ॥ ४२ ॥**

---

*"दृष्टिः संयोजनान्तरम्"* इति। परामर्शदृष्टिः। अष्टादश द्रव्याणि तिस्रो दृष्टयो भवन्तीति वाक्यशेषः। अष्टादशसंख्येयद्रव्याः सत्कायान्तग्राहमिथ्यादृष्टय इति वाक्यार्थः। *अष्टादशैव*। द्रव्याणीति प्रकृतम्। *द्वे परामर्शदृष्टी* भवन्ति। कथम्? कामधातौ सत्कायान्तग्राहान्तग्राहदृष्टी द्वे, ते च दुःखदर्शनप्रहातव्ये एवेष्टे। मिथ्यादृष्टिस्तु चतुःप्रकारा—दुःखदर्शनप्रहातव्या, यावत् मार्गदर्शनप्रहातव्या। इत्येवं कामधातौ षड् भवन्ति। यथा कामधातौ षट्, एवं रूपधातौ, आरूप्यधातौ चेति अष्टादश भवन्ति।

अष्टादशैव द्वे परामर्शदृष्टी। कथम्? कामधातौ दृष्टिपरामर्शो दुःखदर्शनप्रहातव्यो यावत् मार्गदर्शनप्रहातव्यः—इति चतुःप्रकारः; शीलव्रतपरामर्शोऽपि दुःखदर्शनप्रहातव्यः, मार्गदर्शनप्रहातव्यश्चेति द्विप्रकारः—इत्येवं षड् भवन्ति। यथा कामधातौ, एवं रूपधातावारूप्यधातौ च इत्येवमष्टादश द्रव्याणि भवन्ति।

*न शेषा* इति द्रष्टव्यः। *ग्राह्यग्राहकभेदादिति*। दृष्टिसंयोजनं ग्राह्यम्, परामर्शसंयोजनं ग्राहकमिति ॥ ४१ ॥

*"यतः"* इति। यतः कारणात्। एकान्तकुशलत्वस्वातन्त्र्यलक्षणात्।

*"एषूक्तम्"* इति। एषु आह्रीक्यादिषु पर्यवस्थानेषु निष्कृष्योभयम् ईर्ष्या-

---

१-१. ०स्वभावेन—का०।

नह्यन्यत् पर्यवस्थानमेवञ्जातीयकमस्ति यत्रैतदुभयं स्याद्—एकान्ताकुशलत्वं स्वतन्त्रत्वं चेति ।

यस्याष्टौ पर्यवस्थानानि तस्यैवं स्यात् । यस्य पुनर्दश तस्य क्रोधम्रक्षावप्युभयप्रकारौ । तस्मान्न भवत्ययं परिहार इत्यपरे ॥ ४२ ॥

पुनरन्यत्र भगवता संयोजनमुक्तम्—

**पञ्चधाऽवरभागीयम्,**

तद्यथा सत्कायदृष्टिः, शीलव्रतपरामर्शः, विचिकित्सा, कामच्छन्दः, व्यापाद

---

*मात्सर्यम्* उक्तम् । *न ह्यन्यत् पर्यवस्थानमेवञ्जातीय*कमिति । अनाह्रीक्यानपत्राप्यमप्येकान्तकुशलम्, न तु स्वतन्त्रम्; रागादिक्लेशसम्प्रयोगात् । कौकृत्यमपि स्वतन्त्रम्; अविद्यामात्रसम्प्रयोगात् । न त्वेकान्तकुशलम्, तदधिकुशलमपि । स्त्यानौद्धत्यमिद्धान्यपि अस्वतन्त्राणि, रागादिसम्प्रयोगात् । न त्वेकान्तकुशलानि । कुशलाव्याकृतान्यपि हि तानि भवन्ति । *यत्रैतदुभयमि*ति । यत्रैकान्ताकुशलत्वं च स्वातन्त्र्यं चेति एतदुभयं स्यात् । तदेवञ्जातीयकमन्यत् प्रत्यवस्थानं नास्तीत्यभिसम्बन्धः ।

*यस्य पुनर्दशे*ति । यस्य *वैभाषिक*स्य दश पर्यवस्थानानि, तस्य क्रोधम्रक्षावपि उभयप्रकाराविति । एकान्तकुशलौ स्वतन्त्रौ चेति । *तस्मान्न भवत्ययं परिहार* इति । कस्तर्हि परिहारस्तस्येति ? अत्राचार्य*सङ्घभद्र* आह—अभीक्ष्णसमुदाचारित्वाद् ईर्ष्यामात्सर्ययोः पृथक्संयोजनमिति । अत एव च षट्त्रिंशत्संयोजनत्वेऽपि कामधातूपपन्नानामीर्ष्या-मात्सर्य-संयोजनाः कुशला देवमनुष्या इत्युक्तम् । आधिक्येन हि सुगतावेतत् क्लेशद्वयं बन्धनमिति ।

अथवा—

अल्पेशाख्याल्पभोगकारणत्वात् सर्वसूचनात् ।
द्विपक्षसंक्लेशत्वाच्च मात्सर्येर्ष्ये पृथक् कृते ॥

यदयं सुगतावप्युपपन्नः प्रगाढं परिभवमुद्वहति, तन्नेर्ष्यामात्सर्ये कारणम् । तथा हि—

"अल्पेशाख्योऽल्पभोगश्च बन्धनावप्युभयान्मतः" इति । द्विविधाश्चोपक्लेशाः सन्तापसहगताः । ते आभ्यां सर्वे सुचिता भवन्ति । गृहिपक्षश्चाभ्यां भोगाधिष्ठानाभ्यामतीव क्लिश्यते । प्रव्रजितपक्षोऽपि धर्माधिष्ठानाभ्याम् । देवासुरपक्षौ वा भिन्नोदरहेतोरत्यन्तं क्लिश्यतः । अत एवोक्तं भगवता—

इति । कस्मादेतान्यवरभागीयान्युच्यन्ते ? अवरभागहितत्वात् । अवरो हि भागः कामधातुः, एतानि च तस्यानुगुणानि । यस्मात्—

द्वाभ्यां कामानतिक्रमः ।

त्रिभिस्तु पुनरावृत्तिः,

कामच्छन्दव्यापादाभ्यां कामधातुं नातिक्रामति । सत्कायदृष्ट्यादिभिरतिक्रान्तोऽपि पुनरावर्त्यते; दौवारिकानुचरसाधर्म्यात् । त्रिभिः सत्त्वावरतां नातिक्रामति पृथग्जनत्वम्, द्वाभ्यां धात्ववरतां कामधातुम् । तस्माद्[1] एव तान्यवरभागीयानीत्यपरे ।

यदा स्रोतआपन्नस्य पर्यादाय त्रिसंयोजनप्रहाणात् षट्क्लेशाः प्रहीणाः, किमर्थं तिस्रो दृष्टीरपहाय त्रयमेवाह—सत्कायदृष्टिं शीलव्रतपरामर्शं विचिकित्सां च ? सर्वमेतद्वक्तव्यं स्यात्, किन्तूक्तम्—

"ईर्ष्या-मात्सर्यसंयोजनाः कौशिका देवमनुष्याः" इति । तस्माद् दशभ्यः पर्यवस्थानेभ्य एतदेव संयोजनमिति ॥ ४२ ॥

*अवरो हि भागः कामधातुरिति* । त्रैधातुकसमुदयापेक्षस्य कामधातुरवरो निहीनो धातुः, एकान्तसमाहितत्वात् । अकुशलधर्मापायगतिदुःखदौर्मनस्यसद्भावात् । घनक्लेशत्वाच्च ।

"*द्वाभ्यां कामानतिक्रमः*" इति । तद्प्रहाणे कामधात्वनतिक्रमात् । *दौवारिकानुचरसाधर्म्यादि*ति । दौवारिकसधर्माणौ[2] कामच्छन्दव्यापादौ । तौ हि कामधातुबन्धनागारान् निष्क्रमणं न दत्तः, दौवारिकवत् । अनुचरसधर्माणः सत्कायदृष्ट्यादयः । यथा हि दौवारिकप्रसादे बन्धनागारात् पुरुषो निष्क्रान्तोऽपि दौवारिकानुचरैर्निवर्त्यते । *तथेहापि अमीभिरिति* । *त्रिभिः* । *सत्त्वावरतामिति* । पृथग्जनत्वलक्षणं सत्त्वावरतां सत्कायदृष्टि-शीलव्रतपरामर्शविचिकित्सासंयोजनै*र्नातिक्रामति* । *द्वाभ्याम्* कामच्छन्दव्यापादाभ्याम् । *धात्ववरताम्* कामधातुस्वभावां *नातिक्रामति* नातिवर्तते । आर्येभ्यो ह्यवराः पृथग्जनाः, धातुषु च कामधातुरवरः । *तस्मादेव तान्यवरभागीयानि* । *अपरे* योगाचराः ।

*पर्यादाय त्रिसंयोजनप्रहाणादि*ति । निरवशेषतः सत्कायदृष्टि-शीलव्रतपरामर्श-विचिकित्सासंयोजनप्रहाणादित्यर्थः । *षट् क्लेशाः प्रहीणा* इति । पञ्च दृष्टयो विचिकित्सा च । न तु रागादय उक्ताः, सावशेषत्वात् । *तिस्रो दृष्टीरपहायेति* ।

१. अत—का० । २. ०सधर्मणौ—जा० ।

**मुखमूलग्रहात् त्रयम् ॥ ४३ ॥**

त्रिप्रकाराः किल क्लेशाः—एकप्रकारा द्विप्रकाराश्चतुष्प्रकाराश्च । तेषामेभिस्त्रिभिर्मुखं गृहीतमिति ।

अपि चान्तग्राहदृष्टिः सत्कायदृष्टिप्रवर्तिता, दृष्टिपरामर्शः शीलव्रतपरामर्शप्रवर्तितः, मिथ्यादृष्टिर्विचिकित्सा प्रवर्तिता । अतो[1] मूलं गृहीतमिति ॥ ४३ ॥

अपरे पुनराहुः—

---

अन्तग्राह-मिथ्यादृष्टि-दृष्टिपरामर्शदृष्टीः । त्रयमेवाहेति । सत्कायदृष्टि-शीलव्रतपरामर्श-विचिकित्सात्रयमेवाह । क आह ? भगवान् । तथा हि सूत्रे पठ्यते—"कियता भदन्त स्रोतापन्नो भवति ? यतश्च महानामन् आर्यश्रावकः 'इदं दुःखमार्यसत्यम्' इति यथाभूतं प्रजानाति, 'अयं दुःखसमुदय....', 'अयं दुःखनिरोधः...', 'इयं दुखनिरोधगामिनी प्रतिपदा आर्यसत्यम्' इति यथाभूत प्रजानाति; त्रीणि चास्य संयोजनानि प्रहीणानि भवन्ति, प्रज्ञातानि, तद्यथा—सत्कायदृष्टिः, शीलव्रतपरामर्शः, विचिकित्सा च । स एषां त्रयाणां संयोजनानां प्रहाणात् स्रोतापन्नो भवति अविनिपातधर्मा सम्बोधिपरायणः सप्तकृद्भवपरमः सप्तकृत्वो देवाँश्च मनुष्याँश्च संसृत्य सन्धाव्य दुःखस्यान्तं करिष्यति" (　　) इति ।

*सर्वमेतद् वक्तव्यं स्यात्* । भवेदित्यर्थः । *त्रिःप्रकाराः किल क्लेशा* इति । दर्शनहेया इहाधिकृताः । *एकप्रकाराः* सत्कायान्तग्राहदृष्टयः, दुःखदर्शनमात्रप्रहेयत्वात् । *द्विप्रकाराः* शीलव्रतपरामर्शाः । *चतुष्प्रकाराः* विचिकित्सा-मिथ्यादृष्टि-दृष्टि-परामर्शाः । तत्र सत्कायदृष्टिर्मुखमेकप्रकाराणाम् । अतः सत्कायदृष्टिग्रहणात् अन्तग्राहदृष्टिरपि गृहीता भवति । विचिकित्सा मुखं चतुःप्रकाराणाम् । अतस्तद्ग्रहणात् मिथ्या-दृष्टि-परामर्शाणां ग्रहणं भवति । शीलव्रतपरामर्शास्तु साक्षादेव गृहीताः । ये तु रागादयो दर्शनहेयाः, तेऽपि तदालम्बनत्वाद् गृहीता एवेति शक्यते वक्तुमिति । *अन्तग्राहदृष्टिः सत्कायदृष्टिप्रवर्तितेति* । आत्मनः शाश्वतोच्छेदानुग्रहणात् । *दृष्टिपरामर्शः शीलव्रतपरामर्शप्रवर्तित* इति । येन शुद्धिं प्रत्येति, तस्याग्रतो ग्रहणात् । *मिथ्यादृष्टिर्विचिकित्साप्रवर्तितेति* । संशयितस्य मिथ्याश्रवणचिन्तनान्मिथ्यानिश्चयोत्पत्तेः । अतो मूलग्रहणात् *मूलसम्भूतग्रहणसिद्धि*रित्यन्तग्राहदृष्ट्यादयोऽप्युक्तरूपा वेदितव्याः ॥ ४३ ॥

*अपरे पुनराहु*रिति । अयमेवाचार्यः ।

---

१. का० पुस्तके नास्ति ।

**अगन्तुकामता मार्गविभ्रमो मार्गसंशयः ।**

**इत्यन्तराया मोक्षस्य गमनेऽतस्त्रिदेशना ।। ४४ ।।**

त्रयोऽन्तराया देशान्तरगमने भवन्ति—अगन्तुकामता, मार्गविभ्रमोऽन्य-मार्गसंश्रयणात्, मार्गसंशयश्च । एवं मोक्षगमनेऽप्येत एव त्रयोऽन्तरायाः । तत्र सत्कायदृष्ट्या मोक्षादुत्त्रासमापन्नस्यागन्तुकामता भवति । शीलव्रतपरामर्शेनान्य-मार्गसंश्रयणान्मोक्षविभ्रमः । विचिकित्सया मार्गसंशयः । एषां मोक्षगमनान्तरायाणां प्रहाणं द्योतयन् भगवान् क्लेशत्रयस्यैव प्रहाणं देशितवान् ॥ ४४ ॥

यथा भगवता पञ्चविधमवरभागीयं संयोजनमुक्तम् । एवं पुनः—

**पञ्चधैवोर्ध्वभागीयम्,**

कथम् ? इत्याह—

**द्वौ रागौ रूप्यरूपिजौ ।**

तौ

**औद्धत्यमानमोहाश्च,**

इत्येतानि पञ्चोर्ध्वभागीयानि संयोजनानि । तद्यथा—रूपरागः, आरूप्य-रागः, औद्धत्यम्, मानः, अविद्या च । एषामप्रहाणेनोर्ध्वधात्वनतिक्रमात् ।

समाप्तः संयोजनप्रसङ्गः ॥

बन्धनानि कतमानि ? त्रीणि बन्धनानि । रागो बन्धनं सर्वः, द्वेषो बन्धनं सर्वः, मोहो बन्धनं सर्वः ।

कस्मादेतदेव त्रयं बन्धनमुक्तं भगवता ?

**विद्वशाद् बन्धनत्रयम् ।। ४५ ।।**

---

मार्गविभ्रमः कथम् ? इत्याह—*अन्यमार्गसंश्रयणादि*ति ॥ ४४ ॥

अवरभागीयसंयोजनवचनादन्यभागीयमप्यस्तीत्यर्थादुक्तं भवति । अतः इदमुच्यते—*पञ्चधैवोर्ध्वभागीय*मिति । संयोजनप्रसङ्गः ।

"संयोजनादिभेदेन पुनस्ते पञ्चधोदिताः" (अभि० को० ५.४०) इत्यनेन सम्भेदेन संयोजननिर्देशानन्तरं बन्धननिर्देशावसरोऽपरपर्यायः । *रागो बन्धनं सर्व*मिति । सर्व इति प्रकारतो धातुतश्च । सर्वद्वेषः । किं सर्वः ? प्रकारत एव ।

त्रिवेदनावशात् त्रीणि बन्धनानि । सुखायां हि वेदनायां रागोऽनुशेते आलम्बनसम्प्रयोगाभ्याम् । दुःखायां द्वेषः । अदुःखासुखायां मोहो न तथा रागद्वेषौ । स्वसान्तानिकालम्बनतो वा नियमः ॥ ४५ ॥

अनुशया पूर्वमेवोक्ताः ॥

उपक्लेशाः वक्तव्याः । तत्र ये यावत् क्लेशा उपक्लेशा अपि ते; चित्तोपक्लेशनात् ।

**येऽप्यन्ये चैतसाः क्लिष्टाः संस्कारस्कन्धसंज्ञिताः ।**
**क्लेशेभ्यस्तेऽप्युपक्लेशास्ते तु न क्लेशसंज्ञिताः ॥ ४६ ॥**

येऽप्यन्ये क्लेशेभ्यः क्लिष्टा धर्माः संस्कारस्कन्धसंगृहीताश्चैतसिकास्त

---

मोहः सर्वः। प्रकारतो धातुतश्च । *आलम्बन-सम्प्रयोगाभ्या*मिति । स्व-परसान्तानिकयां *सुखायां वेदनायां* यथायोगं *रागोऽनुशेते । दुःखायां वेदनायां द्वेषः*, आलम्बनसम्प्रयोगाभ्यामित्येव । *अदुःखासुखायां मोहः*, ताभ्यामित्येव ।

ननु च रागद्वेषावप्यदुःखासुखायां यथायोगं तथैवानुशयाते, कस्मान्मोह इत्येवोच्यते ? इत्याह—*न तथा रागद्वेषा*विति । रागद्वेषावप्यनुशयाते, न तु तथा यथा मोहः । मोहो हि अपटुत्वादपटुव्थामदुःखासुखायां वेदनायामनुकूलत्वात् सुतरामनुशेत इति *स्वसान्तानिकालम्बनतो वा नियम* इति । स्वसान्तानिकसुखाद्यनुभूतिसामर्थ्यात् तथा नियमः । स्वसन्तानवेदनायां हि सुखायां रागः, दुःखायां द्वेषः, अदुःखासुखायां मोहः सम्प्रयोगत इति ।

अपरे तु व्याचक्षते—*न तथा रागद्वेषा*विति । सुखायां यथा रागोऽनुशेते, न तथा द्वेषः । किं पुनः सुखायामपि द्वेषोऽनुशेते ? अनुशेते शत्रुसुखे आलम्बनतः । यथा च दुखायां द्वेषोऽनुशेते, न तथा रागः । किं पुनःदुंखायामपि रागोऽनुशेते ? अनुशेते शत्रुदुःखे आलम्बनतः ।

*स्वसान्तानिकालम्बनतो वा नियम* इति । अथवा—स्वसान्तानिके सुखे आलम्बनतः सम्प्रयोगतो वा रागोऽनुशेते, न परसान्तानिके शत्रुसुखे । एवं दुःखे स्वसान्तानिके द्वेषोऽनुशेते आलम्बनतः सम्प्रयोगतो वा, न पारसान्तानिके शत्रुदुःखे—इत्येवं स्वसान्तानिकालम्बनतो नियमः । सुखायां वेदनायां रागोऽनुशेते, आलम्बनसम्प्रयोगाभ्याम्, दुःखायां द्वेष इति ॥ ४५ ॥

*चित्तोपक्लेशनादि*ति । चित्तक्लिष्टकरणात् । *येऽप्यन्ये चैतसा* इति । क्लेशेभ्योऽन्य इत्यर्थः । *त उपक्लेशा एवे*ति । क्लेशसमीपरूपाः । क्लेशो वा समीपवर्त्येषामिति । क्लेशप्रवृत्त्यनुवृत्तेरपरिपूर्णक्लेशलक्षणत्वाच्चोपक्लेशः । उप-

उपक्लेशा एव[1]। ते पुनर्ये क्षुद्रवस्तुके पठिताः। इह तु पर्यवस्थानक्लेशमल-संगृहीतानेव निर्देक्ष्यामः ॥ ४६ ॥

कानि पुनः पर्यवस्थानानि ? इत्याह—क्लेशा अपीहि पर्यवस्थानम् ; कामरागपर्यवस्थानप्रत्ययदुःखमिति सूत्रे वचनात्। प्रकरणशास्त्रे तु—

**आह्रीक्यमनपत्राप्यमीर्ष्यामात्सर्यमुद्धवः।**

**कौकृत्यं स्त्यानमिद्धं च पर्यवस्थानमष्टधा ॥ ४७ ॥**

वैभाषिकन्यायेन पुनर्दश पर्यवस्थानानि—एतानि चाष्टौ,

**क्रोधम्रक्षौ च,**

तत्राह्रीक्यानपत्राप्ये व्याख्याते। परसम्पत्तौ चेतसो व्यारोष ईर्ष्या। धर्मामिषकौशलप्रदानविरोधी चित्ताग्रहो मात्सर्यम्। औद्धत्यं चेतसोऽव्युपशमः। कौकृत्यं स्त्यानं च व्याख्याते। कायसन्धारणासमर्थश्चित्ताभिसंक्षेपो मिद्धम्। तच्च क्लिष्टमेव पर्यवस्थानम्, कौकृत्यं च। व्यापादविहिंसावर्जितः सत्त्वासत्त्वयोराघातः क्रोधः। अवद्यप्रच्छादनं म्रक्षः।

---

क्लेशाश्चैतसा एव, ते न चित्तविप्रयुक्ताः। *ये क्षुद्रवस्तुके पठिता* इति। क्षुद्रवस्तुके प्रवचनभागे ये पठिताः। न तु चेतनादय एवेत्यभिप्रायः। तद्यथा—अरतिः, विजृम्भिका, चेतसो लीनत्वम्, तन्द्री,[2] भक्षेऽसमता, नानात्वसंज्ञा, अमनसिकारः, कायदौष्ठुल्यम्, शृङ्गी, भिञ्चिरीका, अनार्जवम्, अमार्दवता, अस्वभावानुवृत्तिता, कामवितर्कः, व्यापादवितर्कः, विहिंसावितर्कः, ज्ञातिवितर्कः, जनपदवितर्कः, अवमन्यनाप्रतिसंयुक्तो वितर्कः, कुलोदयताप्रतिसंयुक्तो वितर्कः, शोकः, दुःखम्, दौर्मनस्यम्, उपायास इति ॥ ४६-४७ ॥

*तत्राह्रीक्यानपत्राप्ये व्याख्याते* इति। "अह्रीरगुरुतावद्ये भयादर्शित्वमत्रपा" (अभि० को० २.३२) इति। *धर्मामिषे*ति विस्तरः। *धर्मस्यामिषस्य च प्रदाने विरोधी चित्तस्याग्रहो मात्सर्यम्।* 'मा मत्तः सरतु' इत्याकारो मत्सरः। मत्सर एव मात्सर्यम्। मत्सरिणो वा भावो मात्सर्यम्। *कौकृत्यं स्त्यानं च व्याख्याते* इति। कुकृतभावः कौकृत्यम्। इह तु तदालम्बनधर्मः कौकृत्यम्। कायचित्ताकर्मण्यता स्त्यानमिति। चित्ताभिसंक्षेपो मिद्धमित्येतावत्युच्यमाने समापत्तावपि प्रसङ्गः इत्यतो विशेष्यते—*कायसन्धारणासमर्थ* इति। तच्च *क्लिष्टमेव पर्य-*

---

१. का० पुस्तके नास्ति।

२. तन्द्रीति जड़ता—इत्ययं जा० पुस्तके कोष्ठके पाठः।

एषां च दशानां पर्यवस्थानां

**रागोत्था आह्रीक्यौद्धत्यमत्सराः ।**

एते त्रय उपक्लेशा रागनिःष्यन्दाः ।

**म्रक्षे विवादः,**

तृष्णानिःष्यन्द इत्येके । अविद्यानिःष्यन्द इत्यपरे । उभयोरित्यन्ये । यथाक्रमं ज्ञाताज्ञातानामिति ।

**अविद्यातः स्त्यानमिद्धनपत्रपाः ॥ ४८ ॥**

एते त्रयोऽविद्यानिःष्यन्दाः ॥ ४८ ॥

**कौकृत्यं विचिकित्साजं[1] क्रोधेर्ष्ये प्रतिघान्वये ।**

प्रतिघसमुत्थे इति । एते च दश क्लेशनिःष्यन्दा उपक्लेशाः ।

**अन्ये च षट्क्लेशमलाः**

तद्यथा—

**माया शाठ्यं मदस्तथा ॥ ४९ ॥**

**प्रदाश उपनाहश्च विहिंसा चेति,**

तत्र परवञ्चना माया । चित्तकौटिल्यं शाठ्यम्, येन यथाभूतं नाविष्करोति विक्षिपत्यपरिस्फुटं वा प्रतिपद्यते । मदः पूर्वोक्तः । सावद्यवस्तुदृढग्राहिता प्रदाशः,

---

*वस्थानम् । कौकृत्यं चेति* । यत् क्लिष्टं मिद्धम्, तत् पर्यवस्थानम् । यत्तु कुशलमव्याकृतं वा, न तत् पर्यवस्थानम् । त्रिविधं हि मिद्धमिष्यते, कौकृत्यं च । यत् क्लिष्टं तत् पर्यवस्थानम्, न कुशलम् । कुशलाकुशलं हि तदिष्यते । *व्यापादविहिंसावर्जितः* सत्त्वासत्त्वयोराघातः *क्रोधः* । सत्त्वविषये आघातविशेषो व्यापादः । 'अमी भवन्तः सत्त्वाः हन्यन्तां वा, वध्यन्तां वा, शीर्यन्तां वा, अनयेन व्यसनेन आपद्यन्ताम्' इत्याकारप्रवृत्तो व्यापादः । सत्त्वाकर्षणसन्त्रासन-तर्जनादिकर्मप्रवृत्ता विहिंसा । ताभ्यामन्यः *सत्त्वासत्त्वयोराघातः क्रोधः* । तद्यथा—शिक्षाकामस्य भिक्षोश्चित्तप्रकोपः, कण्टकादिषु च प्रकोप इति ।

*यथाक्रमं ज्ञाताज्ञातानामिति* । राजादिभिर्ज्ञातानां म्रक्षवतां पुद्गलानां म्रक्षस्तृष्णानिष्यन्दः 'मा मे लाभसत्कारो न भविष्यति' इति । अज्ञातानाम-

---

१. विचिकित्सातः—का० ।

येन न्यायसंज्ञप्तिं न गृह्णाति। आघातवस्तुबहुलीकार उपनाहः। विहेठनं विहिंसा, येन प्रहारपारुष्यादिभिः परान् विहेठयते।

एषां पुनः षण्णां क्लेशमलानां

**रागजौ।**

**मायामदौ प्रतिघजे उपनाहविहिंसने॥ ५०॥**

**दृष्टयामर्शात् प्रदाशस्तु शाठ्यं दृष्टिसमुत्थितम्।**

"किं कुटिलम्? पापिका दृष्टिः" इति गाथावचनाद् युज्यते। शाठ्यं दृष्टिनिःष्यन्दः॥ ४९-५०॥

क एषां किंप्रहातव्यः? यानि तावत् दश पर्यवस्थानान्युक्तानि,

**तत्राह्रीक्यानपत्राप्यस्त्यानमिद्धोद्धवा द्विधा॥ ५१॥**

एते पञ्च धर्मा द्विविधा दर्शन-भावनाप्रहातव्याः; उभयप्रकारक्लेशसंप्रयोगात्। यश्च यद्दर्शनहेयसंप्रयुक्तः स तद्दर्शनप्रहातव्यः॥ ५१॥

**तदन्ये भावनाहेयाः,**

तेभ्योऽन्ये पर्यवस्थानसंगृहीता उपक्लेशा भावनाहेया एव। ईर्ष्यामात्सर्य-

---

*विद्यानिष्यन्दः* कर्मस्वकतामश्रद्दधानस्तदवद्यं प्रच्छादयति। न परस्यान्तिके विशुद्ध्यर्थं देशयतीति एवमुभयनिष्यन्दो म्रक्ष इत्येके।

कथमनपत्राप्यमविद्यानिष्यन्दः? यस्मात् 'अवद्ये भयदर्शित्वमत्रपा' (अभि० को० २.३३) इति। यत् क्लिष्टं तदेव पर्यवस्थानाधिकारात्॥ ४८॥

*"क्लेशमलाः"* इति। यथा शरीरान्मला जायन्ते, एवमिमे मायादयो मला इव क्लेशेभ्य उत्पद्यन्ते। *क्षिपति* प्रेरयति। *मदः पूर्वोक्तः*। "मदः स्वधर्मे रक्तस्य पर्यादानं तु चेतसः" (अभि० को० २.३४) इति॥ ४९-५०॥

*यश्च यद्दर्शनहेयसम्प्रयुक्त* इति। यस्य सत्यस्य दर्शनम् = यद्दर्शनम्, यद्दर्शनेन हेयः = यद्दर्शनहेयः, तेन सम्प्रयुक्तः = यद्दर्शनहेयसम्प्रयुक्तः। *स तद्दर्शनहेयः*। स तस्य दर्शनस्य दर्शनेन हेयः। कः? आह्रीक्यादिः। तदन्ये भावनाहेया एव॥ ५१॥

*तेभ्योऽन्य* इति। आह्रीक्यादिभ्योऽन्ये ईर्ष्यादयो भावनाहेया एव। न दर्शनहेयाः।

कौकृत्यक्रोधम्रक्षाः स्वतन्त्राश्च । स्वतन्त्राश्चैते पञ्चोपक्लेशाः; अधिमात्रसम्प्रयोगित्वात् । यथैते ईर्ष्यादयः पञ्चोपक्लेशा भावनाहेयाः,

**स्वतन्त्राश्च तथा मलाः ।**

षट्क्लेशमलास्तथैव । एते पुनर्यथोक्ता उपक्लेशाः

**कामेऽशुभाः,**

कामधातावकुशलाः । तत्रापि

**त्रयो द्विधा,**

स्त्यानौद्धत्यमिद्धानि अकुशलाव्याकृतानि ।

**परेणाव्याकृतास्ततः ॥ ५२ ॥**

कामधातोरूर्ध्वमव्याकृताः उपक्लेशा यथासम्भवम् ॥ ५२ ॥

कति पुनरेषां कुतस्त्या वेदितव्याः ?

**माया शाठ्यं च कामाद्यध्यानयोः,**

एतौ द्वौ कामधातौ प्रथमे च ध्याने । कथं ब्रह्मलोके माया ?

**ब्रह्मवचनात् ।**

स हि तत्र महाब्रह्मा वितथात्मसन्दर्शनतया आयुष्मन्तमश्वजितं वञ्चयितुं प्रवृत्तः । उक्तमपि शाठ्यं प्रसङ्गेणागतं[१] पुनरेवोक्तम् ।

---

*स्वतन्त्राश्चैते* । न रागादिपरतन्त्रा इत्यर्थः ।

*स्त्यानौद्धत्यमिद्धान्यकुशलाव्याकृतानी*ति । पर्यवस्थानाधिकारात् मिद्धं कुशलमपीति नोच्यते ।

"*परेणाव्याकृतास्ततः*" इति । *यथासम्भव*मिति । कामधातोः परेण यावन्तः सम्भवन्ति, ते पुनर्मायाशाठ्यादयः ॥ ५२ ॥

*वितथात्मसन्दर्शनतये*ति । वितथस्यात्मनः सन्दर्शनतया महाब्रह्मा आयुष्मन्तमश्वजितं वञ्चयितुं प्रवृत्तः 'कुत्रेमानि ब्रह्मन् ! महाभूतानि अपरिशेषं निरुध्यन्ते" इति पृष्टोऽप्रजानन् क्षेपमकार्षीत्—"अहमस्मि ब्रह्मा महाब्रह्मा ईश्वरः कर्ता निर्माता स्रष्टा सृजः पितृभूतो भावानाम्'' इति मायया वञ्चयितुमारब्धः । अथ स महाब्रह्मा आयुष्मन्तमश्वजितं करे गृहीत्वा एकान्तेऽस्थात् ।

---

१. प्रसङ्गागतं—का० ।

**स्त्यानौद्धत्यमदा धातुत्रये,**

एते त्रयस्त्रैधातुकाः ।

**अन्ये कामधातुजाः ।। ५३ ।।**

षोडशभ्यः पञ्चापनीयान्य एकादशोपक्लेशाः कामावचरा एव ॥ ५३ ॥

उक्ताः क्लेशा उपक्लेशाश्च ॥

अथैषामनुशयानां कति मनोभूमिकाः ? कति षड्विज्ञानकायिकाः ? संक्षेपतः

**समानमिद्धा दृग्घेया मनोविज्ञानभूमिकाः ।**

दर्शनप्रहातव्याः सर्वे मनोभूमिकाः सह मानसिद्धाभ्यां भावनाहेयाभ्यामपि । ते हि सकले मनोभूमिके ।

**उपक्लेशाः स्वतन्त्राश्च,**

ये च केचिदुपक्लेशाः स्वतन्त्रास्ते भावनाहेया अपि सन्तो मनोभूमिका एव द्रष्टव्याः ।

**षड्विज्ञानाश्रयाः परे ।। ५४ ।।**

अन्ये क्लेशोपक्लेशाः षड्विज्ञानभूमिकाः वेदितव्याः । के पुनरन्ये ? भावनाप्रहातव्या रागप्रतिघाविद्या उपक्लेशाश्च तत्सम्प्रयुक्ताः, आह्रीक्यानपत्राप्य-स्त्यानौद्धत्यानि, ये च क्लेशमहाभूमिकेषूक्ताः ॥ ५४ ॥

यानीमानि सुखादीनि पञ्चेन्द्रियाणि, एषां कतमेनेन्द्रियेण कतमः क्लेश उपक्लेशो वा सम्प्रयुक्तः ?

**सुखाभ्यां सम्प्रयुक्तो हि रागः,**

---

एकान्ते स्थितश्चेदमुक्तवान्—'विद्यमाने तथागते मां प्रष्टव्यं मन्यसे'—इतीदमस्य शाठ्यं दृश्यते । स्वपरिषल्लज्जया ह्यात्मीयाज्ञानतां निगूहमानः स तथा कृतवानिति । *उक्तमपि शाठ्यमिति* । तथा हि—"कौकृत्यमिद्धाकुशलान्याद्ये ध्याने न सन्त्यतः" (अभि० को० २.३१) इति । *अत्रोक्तमपि प्रसङ्गेनेति* । "परेणाव्याकृतास्ततः" इति प्रसङ्गेनेति । *पञ्चापनीयेति* । माया-शाठ्य-स्त्यानौद्धत्य-मदान् ॥ ५३ ॥

*ते हि सकले मनोभूमिके* इति । मानमिद्धे ।

"*उपक्लेशाः स्वतन्त्राश्च*" इति । ईर्ष्यामात्सर्यादयः । ये च *क्लेशमहाभूमि-*

सुखसौमनस्याभ्यां रागः सम्प्रयुक्तः ।

**द्वेषो विपर्ययात् ।**

दुःखाभ्यामित्यर्थः । दुःखेन दौर्मनस्येन च । हर्षदैन्याकारवर्तित्वात् षड्-विज्ञानभूमिकत्वाच्च रागद्वेषयोः ।

**मोहः सर्वैः**

अविद्यायाः सर्वक्लेशसम्प्रयोगित्वात् पञ्चभिरपीन्द्रियैः सम्प्रयोगः ।

**असद्दृष्टिर्मनोदुःखसुखेन तु ।। ५५ ।।**

मनोदुःखं दौर्मनस्यम्, मनःसुखं सौमनस्यं च । ताभ्यां मिथ्यादृष्टिः सम्प्रयुक्ता पुण्यकर्मणां पापकर्मणां च यथाक्रमम् ॥ ५५ ॥

**दौर्मनस्येन काङ्क्षा,**

संशयितो हि निश्चयेनार्थी दुर्मनायते ।

**अन्ये सौमनस्येन,**

अन्येऽनुशयाः सौमनस्येनैव संप्रयुक्ताः । के पुनरन्ये ? चतस्रो दृष्टयः, मानश्च । हर्षाकारवर्तित्वात् ।

किंप्रतिसंयुक्ता इमेऽनुशया निर्दिष्टाः ? आह—

**कामजाः ।**

एवं प्रतिनियतं सम्प्रयोगमुक्त्वा सामान्येनाह—

**सर्वेऽप्युपेक्षया,**

---

केषूक्ता इत्याश्रद्धय-कौशीद्य-प्रमादा एव, नान्ये, स्त्यानौद्धत्ययोरिहैव पूर्वं गृहीतत्वात् । मोहस्य क्लेशग्रहणेन ग्रहणात् ।। ५४ ।।

"*सुखाभ्याम्*" इति । सुखवेदनास्वभावाभ्यामिन्द्रियाभ्यामित्यर्थः । *हर्षदैन्याकारवर्तित्वादिति* । *हर्षाकारवर्ती* रागः *दैन्याकारवर्ती* द्वेष इति यथासङ्ख्येन । *षड्विज्ञानभूमिकत्वाच्चेति* । पञ्चविज्ञानभूमिकत्वाद् रागः सुखेन्द्रियेण । मनोविज्ञानभूमिकत्वात्तु रागः सौमनस्येन्द्रियेण, द्वेषश्च दौर्मनस्येन्द्रियेण सम्प्रयुक्तः । *पुण्यकर्मणां पापकर्मणां च यथाक्रममिति* । पुण्यकर्मणां मिथ्यादृष्टिर्दौर्मनस्येन सम्प्रयुक्ता, पुण्यक्रियाया नैरर्थक्यदर्शनात् । पापकर्मणां मिथ्यादृष्टिः सौमनस्येन सम्प्रयुक्ता, स्वकृतपापवैफल्यदर्शनात् ।

*चतस्रो दृष्टय इति* । सत्कायदृष्टिः, अन्तग्राहदृष्टिः, दृष्टिपरामर्शः,

सर्वेऽप्येतेऽनुशया उपेक्षेन्द्रियेण सम्प्रयुक्ताः । प्रवाहच्छेदकाले किल क्लेशानामवश्यमुपेक्षा संतिष्ठते ।

अधोभूमिकाः कथम् ? इत्याह—

**स्वैः स्वैर्यथाभूम्यूर्ध्वभूमिकाः ।। ५६ ।।**

स्वैः स्वैरिन्द्रियैरूर्ध्वभूमिका अनुशयाः सम्प्रयुज्यन्ते । यस्यां भूमौ यावन्तीन्द्रियाणि, तत्रापि चातुर्विज्ञानकायिकाश्चातुर्विज्ञानकायिकैः, मनोभूमिका मनोभूमिकैरेव यथासंभवम् ॥ ५६ ॥

उक्तः क्लेशानामिन्द्रियसम्प्रयोगः ॥

उवक्लेशानां पुनः

**दौर्मनस्येन कौकृत्यमीर्ष्या क्रोधो विहिंसनम् ।**
**उपनाहः प्रदाशश्च,**

'सम्प्रयुक्तानि' इति वर्तते । दैन्याकारवर्तित्वादेषाम्, मनोभूमिकत्वाच्च ।

**मात्सर्यं तु विपर्ययात् ।। ५७ ।।**

सौमनस्येनेत्यर्थः । लोभान्वयत्वेन हर्षाकारवर्तित्वात् ॥ ५७ ॥

**माया शाठ्यमथो म्रक्षो मिद्धं चोभयथा,**

सौमनस्यदौर्मनस्याभ्याम् । कदाचिद्धि सुमनाः परं वञ्चयते, कदाचिद् दुर्मनाः । एवं यावत् स्वपिति ।

---

शीलव्रतपरामर्शश्च । कथमुच्छेददृष्टिः सौमनस्येन सम्प्रयुक्ता ? तस्याभिनतत्वात् । *उपेक्षा सन्तिष्ठत* इति । विनाशावस्थायां मन्दत्वात् । *यस्यां भूमौ यावन्तीन्द्रियाणीति* ।

सौमनस्यसुखोपेक्षाः उपेक्षा सुमनस्कजे ।
सुखोपेक्षे उपेक्षा च विदो ध्यानोपपत्तिषु ॥ इत्यवगन्तव्यम् ।

तत्राप्यूर्ध्वभूमिषु । चतुर्विज्ञानकायिकाः प्रथम एव ध्याने । चक्षुः-श्रोत्र-काय-मनोविज्ञानभूमिकाः । प्रथमे हि ध्याने त्रिविज्ञानकायिकं सुखेन्द्रियमस्ति । मनोविज्ञानकायिकं सौमनस्येन्द्रियम् । चतुर्विज्ञानकायिकमुपेक्षेन्द्रियम् । तत ऊर्ध्वं मनोभूमिकमेव । द्वितीये ध्याने सौमनस्योपेक्षेन्द्रिये । तृतीये सुखोपेक्षेन्द्रिये । चतुर्थे ध्याने आरूप्येषु चोपेक्षेन्द्रियमेव । तत्र सर्वेऽप्यनुशया यथायथं वेदनेन्द्रियेण सम्प्रयुक्ताः । तत्र शमथस्निग्धसन्तानत्वात् हर्षदैन्याकारव्यवस्था नास्ति । दैन्याकारवर्तित्वादेषां कौकृत्यादीनां न सौमनस्येन सम्प्रयोगः । मनोभूमिकत्वान्न दुःखेन्द्रियेण ॥ ५६ ॥

**मदः ।**

**सुखाभ्याम्,**

तृतीये ध्याने सुखेनाधस्तात्, सौमनस्येन ऊर्ध्वमुपेक्षया । यस्मात्

**सर्वगोपेक्षा,**

अतस्तया सर्वेऽनुशयाः सम्प्रयुज्यन्ते । न हि तस्याः कचित् प्रतिषेधोः, यथाऽविद्यायाः ।

**चत्वार्यन्यानि पञ्चभिः ।। ५८ ।।**

आह्रीक्यमनपत्राप्यं स्त्यानमौद्धत्यं चैतानि चत्वारि पर्यवस्थानानि पञ्चभिरपीन्द्रियैः संप्रयुज्यन्ते; अकुशलमहाभूमिकत्वात्, क्लेशमहाभूमिकत्वाच्च ।। ५८ ।।

यानि सूत्रे पञ्च निवरणानि उक्तानि—कामच्छन्दः, व्यापादः, स्त्यानमिद्धम्, औद्धत्यकौकृत्यम्, विचिकित्सा च । किं[1] त्रैधातुक्यः स्त्यानौद्धत्यविचिकित्सा गृह्यन्ते ? अथ कामप्रतिसंयुक्ता एव ? "केवलोऽयं परिपूर्णोऽकुशलराशिर्यदुत पञ्च निवरणानि" इत्येकान्ताः; कुशलत्ववचनात् सूत्रे ।

**कामे निवरणानि,**

---

*लोभान्वयत्वेनेति* । लोभहेतुकत्वेन । लोभसमुत्थेनेत्यर्थः ।। ५७ ।।

"*मदः सुखाभ्याम्*" इति । सुख-सौमनस्याभ्याम् । *तृतीये ध्याने सुखेनेति* । मदस्य मानसत्वात् । *यथा अविद्याया* इति । न क्वचित् क्लेशे उपक्लेशे वा सम्प्रयोगप्रतिषेधोऽस्ति । एवमुपेक्षाया अपीति । *अकुशलमहाभूमिकत्वात्* आह्रीक्यानपत्राप्ययोः । "अकुशले त्वाह्रीक्यमनपत्रपा" (अभि० को० २.२७) इति वचनात् । *क्लेशमहाभूमिकत्वाच्च* स्त्यानौद्धत्ययोः । षड्विज्ञानकाया अकुशलाः क्लिष्टाः सम्भवन्तीत्यतः पञ्चभिरपीन्द्रियैः सम्प्रयोग एषां सम्भवतीति ।। ५८ ।।

*कि त्रैधातुक्यः स्त्यानमिद्धविचिकित्सा गृह्यन्त* इति । आसां त्रिधातुकत्वात् ता एव निष्कृष्य पृच्छ्यन्ते । *केवलोऽयमिति* विस्तरः । *अकुशला राशिरिति* । "भिक्षवो यदुत पञ्चनिवरणानीति ते सम्यग् वदमाना वदेयुः । तत् कस्य हेतोः ? केवलोऽयं भिक्षवः परिपूर्णाकुशलराशिर्यदुत पञ्च निवरणानि" इति विस्तरेणैकान्ताकुशलत्ववचनात् । *कामे निवरणानि नान्यत्रेति* । वृत्तिसूत्रपदयोरेकवाक्यता । निवरणानीति ध्यानसम्पत्त्यादीनामावरणानीत्यर्थः ।

---

१. तत्र०—का० ।

नान्यत्र धातौ। किं पुनः कारणं द्वे स्त्यानमिद्धे एकं निवरणमुक्तम्, द्वे चौद्धत्यकौकृत्ये एकम् ?

**एकविपक्षाहारकृत्यतः ।**

**द्व्येकता**[१]

द्वयोरेकता द्व्येकता। विपक्षः प्रतिपक्षोऽनाहार इत्येकोऽर्थः। स्त्यानमिद्धयोरेक आहारः सूत्रे, अनाहारश्च। कः स्त्यानमिद्धनिवरणस्याहारः ? पञ्च धर्माः—तन्द्रा, अरतिः, विजृम्भिका, भक्तेऽसमता, चेतसो लीनत्वमिति। अथ स्त्यानमिद्धनिवरणस्यानाहारः ? आलोकसंज्ञेति। कृत्यमनयोरप्येकम्। उभे अपि ह्येते चित्तं लयं चोदयतः। औद्धत्यकौकृत्ययोरप्येक आहार उक्तः, एकोऽनाहारः। कश्चौद्धत्यकौकृत्यनिवरणस्याहारः ? चत्वारो धर्माः—ज्ञातिवितर्कः, जनपदवितर्कः, अमरवितर्कः, पौराणस्य च हसितक्रीडितरमितपरिभावितस्यानुस्मर्ता भवतीति। कश्चौद्धत्यकौकृत्यनिवरणस्यानाहारः ? शमथ इति। कृत्यमप्यनयोरेकम्। उभे अपि ह्येते चित्तमव्युपशान्तं वर्तयतः। अत एकविपक्षाहारकृत्यत्वात् द्वयोरप्येकत्वमुक्तम्।

यदि सर्वक्लेशा निवरणम्, कस्मात् पञ्चैवोक्तानि ?

**पञ्चता स्कन्धविघातविचिकित्सनात् ॥ ५९ ॥**

कामच्छन्दव्यापादाभ्यां शीलस्कन्धविघातः। स्त्यानमिद्धेन प्रज्ञास्कन्धस्य,

---

"*एकविपक्षाहारकृत्यतः*" इति। एकविपक्षाहारकृत्यत्वादित्यर्थः। अन्तरेणापि हि भावप्रत्ययं भावप्रधाने निर्देशो भवेत्। अथवा—एकं विपक्षाहारकृत्यम् = एकविपक्षाहारकृत्यम्, तत इति। विपक्षः प्रतिपक्ष इति। श्लोकबन्धानुगुण्येन प्रतिपक्ष इह विपक्षोऽभिप्रेतः। क्लेशविरुद्धः पक्षो विपक्ष इति कृत्वा। *अभिधर्मे* तु कृष्णः पक्षो विपक्षः, अशुक्लविरुद्धः पक्षो विपक्षः, शुक्लविरुद्धः पक्षो विपक्ष इति प्रतीतम्।

*भक्ते असमतेति*। अति बहु भुक्त्वा आहारस्य यः कायोपरोधः। अनाहार इति प्रतिपक्षः।

*स्त्यानमिद्धेन प्रज्ञास्कन्धस्य*। किम् ? विघात इति प्रकृतम्।

---

१. कता—का०।

औद्धत्यकौकृत्येन समाधिस्कन्धस्य । समाधिप्रज्ञयोरभावे सत्येषु विचिकित्सको भवतीत्यतः पञ्चोक्तानि ।

एतस्यां तु कल्पनायां समाधिस्कन्धविरोधिन औद्धत्यकौकृत्यानवरणस्य पूर्वं ग्रहणं प्राप्नोति । अतो यथासंख्यमेताभ्यां समाधिप्रज्ञास्कन्धोपघात इत्यपरे । समाधिप्रयुक्तस्य हि स्त्यानमिद्धाद् भयम् , धर्मप्रविचयप्रयुक्तस्यौद्धत्यकौकृत्यादिति ।

अन्ये त्वन्यथा वर्णयन्ति । कथं वर्णयन्ति ? चारगतस्य प्रियाप्रियरूपेषु विषयेषु निमित्तग्राहाद् विहारगतस्य तत्पूर्वकौ कामच्छन्दव्यापादौ समाधिप्रवेशस्यादितोऽन्तरायं कुरुतः । ततः समाधिप्रविष्टस्याप्रयोगेण शमथविपश्यनासेवनात् स्त्यानमिद्धमौद्धत्यकौकृत्यं विचिकित्सा च यथाक्रमं शमथविपश्यनयोरन्तरायं कुरुतः । व्युत्थितस्यापि धर्मनिध्यानकाले विचिकित्सा अन्तरायं करोति । अतः पञ्च निवरणान्युक्तानि ॥ ५९ ॥

---

*एतस्यां तु कल्पनायामिति* विस्तरः । शीलस्कन्धः, समाधिस्कन्धः, प्रज्ञास्कन्ध इति यथानुपूर्व्या स्कन्धा व्यवस्थिताः, तथैवानुपूर्व्या तद्विपक्षभूतानि निवरणानि पठ्येरन्—कामच्छन्द , व्यापादः, औद्धत्य-कौकृत्यम् , स्त्यानमिद्धम् , विचिकित्सा चेति । *औद्धत्यकौकृत्यनिवरणस्य पूर्वं ग्रहणं प्राप्नोति* । समाधिस्कन्धस्य प्रज्ञास्कन्धत्वात् । न चैवम् , अतो नैतत् कारणमित्यभिप्रायः । किं पुनरत्र कारणम् ? इत्याह—*अतो यथासंख्यस्य एताभ्यां* स्त्यानमिद्धेन औद्धत्यकौकृत्येन च निवरणाभ्यां *समाधिप्रज्ञास्कन्धयोरुपघात* इति । कथम् ? इत्याह—*समाधिप्रयुक्तस्य हि स्त्यानमिद्धाद् भयम्;* समानरूपकल्पत्वात् । एवं *धर्मप्रविचयप्रयुक्तस्यौद्धत्यकौकृत्याद् भयमिति* ।

*अन्ये त्वन्यथा वर्णयन्तीति* । *पूर्वाचार्याः । चारगतस्येति* । पिण्डपातार्थं परिभ्रमतः । *विहारगतस्य* प्रतिसल्लीनस्य स्थितस्य वा निषण्णस्य वा चंक्रम्यमाणस्य वा । *तत्पूर्वकौ* प्रियाप्रियविषयनिमित्तग्राहपूर्वकौ, प्रियाप्रियविषयपूर्वकौ वा । *यथाक्रमं शमथविपश्यनयोरन्तरायं कुरुत* इति । शमथस्य स्त्यानमिद्धमन्तरायं करोति; प्रत्यासन्नरूपतया स्त्यानमिद्धोपस्थानात् । विपश्यनायां औद्धत्यकौकृत्य-विचिकित्से अन्तरायं कुरुतः । औद्धत्यकौकृत्यस्य कृतद्वन्द्वैकवद्भावस्य विचिकित्सया सह पुनर्द्वन्द्वः -औद्धत्यकौकृत्यं च विचिकित्सा च = औद्धत्यकौकृत्यविचिकित्से इति । विचिकित्सा तु पुनर्व्युत्थितस्यापि तस्य धर्मनिध्यानकालेऽन्तरायं करोति ।

*अपरे* पुनरेवं पाठं पठन्ति—*स्त्यानमिद्धमौद्धत्यकौकृत्यं विचिकित्सा चेति* । एवं च व्याचक्षते—स्त्यानमिद्धं शमथस्यान्तरायं करोति, औद्धत्यकौकृत्यं

इदं विचार्यते—विसभागधातुसर्वत्रगाणां निरोधमार्गदर्शनप्रहातव्यानां च सास्रवालम्बनानां यदालम्बनं परिज्ञायते ते[1] तदा न[1] प्रहीयन्ते, यदा प्रहीयन्ते तदालम्बनं न परिज्ञायते इति कथमेषां प्रहाणम्? नावश्यमालम्बनपरिज्ञानात् क्लेशानां क्षयो भवति। किं तर्हि? चतुर्भिः प्रकारैः। कतमैश्चतुर्भिः? दर्शनहेयानां तावत्—

**आलम्बनपरिज्ञानात्, तदालम्बनसंक्षयात्।**

**आलम्बनप्रहाणाच्च,**

तत्रालम्बनपरिज्ञानाद् दुःखसमुदयदर्शनहेयानां स्वभूम्यालम्बनानामास्रवालम्बनानां च। तदालम्बनसंक्षयाद् विसभागधातुसर्वत्रगाणाम्। तदालम्बना[2] सभागधातुसर्वत्रगाः। तेषु प्रहीणेषु तेऽपि प्रहीणा भवन्ति। आलम्बनप्रहाणात्

---

विपश्यनायाः। विचिकित्सा च व्युत्थितस्य धर्मनिध्यानकालेऽन्तरायं करोति ॥ ५६ ॥

*विसभागधातुसर्वत्रगानामि*ति विस्तरः। विसभागधातुसर्वत्रगानां दुःखसमुदयदर्शनहेयत्वेन द्विभेदानां मिथ्यादृष्ट्यादीनां *यदालम्बनं परिज्ञायते* दुःखसमुदयान्वयज्ञानपक्षेण मार्गेण रूपारूप्य-धात्वालम्बनावस्थायाम्, *न ते तदा प्रहीयन्ते*। दुःखधर्मज्ञानेन समुदयधर्मज्ञानेन च यथायोगं पूर्वमेव प्रहीणत्वात्। धर्मज्ञानवध्या हि ते, कामावचरत्वात्। *निरोधमार्गदर्शनप्रहातव्यानां च सास्रवालम्बनानां* दृष्टिप्रहातव्यानां *यदालम्बनं* निरोधमार्गदृग्घेयं मिथ्यादृष्ट्यादिकं दुःखसमुदयसत्यस्वभावं दुःखसमुदयधर्मज्ञानपक्षेणान्वयज्ञानपक्षेण वा यथाधातु *परिज्ञायते*। *न ते तदा परिहीयन्ते*। निरोध-मार्गदर्शनप्रहेयत्वादिति। न च तथा *तेषामालम्बनं परिज्ञायते*; पूर्वमेव ज्ञातत्वात्। *कथमेषां प्रहाणम्* आलम्बनपरिज्ञानात् तत्प्रहाणं न युज्यत इत्यभिप्रायः। *तत्रालम्बनपरिज्ञानात्* कामावचराः स्वधात्वालम्बना रूपारूप्यावचराश्च दुःखसमुदयदृग्घेयाः प्रहीयन्ते। तत्र विसभागधात्वालम्बनानामालम्बनपरिज्ञया शमथप्रहाणम्;[3] दुःखसमुदयान्वयज्ञानक्षान्त्योर्युगपत् द्विधात्वालम्बनत्वात्।

*स्वभूम्यालम्बनानामि*ति विशेषणम् विसभागधातुसर्वत्रगनिरासार्थम्। *तदालम्बनसंक्षयादि*ति। विसभागधातुसर्वत्रगा आलम्बनमेषां सत्कायदृष्ट्यादीनामिति। *तदालम्बनाः सभागधातुसर्वत्रगाः*। *तेषां क्षयात्* प्रहाणात्। ते विसभागधातुसर्वत्रगाः प्रहीयन्ते। (तद्धेतुत्वेनोपस्तम्भप्रहाणाद्

---

१-१. तदा न—का०। २. तदालम्बना हि—का०। ३. पश्यथ०—जा०।

निरोधमार्गहेयानां सास्रवालम्बनानाम् । ते ह्यनास्रवालम्बनास्तेषामालम्बनम् । अतस्तेषु प्रहीणेषु तेऽपि प्रहीणा भवन्ति । भावनाहेयानां पुनः—

**प्रतिपक्षोदयात् क्षयः ॥ ६० ॥**

यस्य हि क्लेशप्रकारस्य प्रतिपक्षो मार्ग उत्पद्यते स प्रहीयते ।

कस्य पुनः कः प्रतिपक्षः ? अधिमात्राधिमात्रस्य मृदुमृदुरिति विस्तरेण पश्चात् प्रवेदयिष्यामः ॥ ६० ॥

कतिविधश्च प्रतिपक्षः ? इत्याह—

**प्रहाणाधारदूरत्वदूषणाख्यश्चतुर्विधः ।**
**प्रतिपक्षः,**

प्रहाणप्रतिपक्षः आनन्तर्यमार्गः ।

आधारप्रतिपक्षस्तस्मात् परेणार्यो मार्गो येन तत्प्रापितं प्रहाणमाधार्यते ।

दूरीभावप्रतिपक्षो विमुक्तिमार्गात् परेण यो मार्गश्छिन्नप्राप्तिदूरीकरणात् ।

---

विसभागधातुसर्वत्रगानां प्रहाणमालम्बनप्रहाणात्) । *आलम्बनप्रहाणादिति* । दृष्टिपरामर्शाद्यालम्बनानां *निरोधमार्गदर्शनहेयानां* मिथ्यादृष्ट्यादीनां प्रहाणात् । तेऽपि दृष्टिपरामर्शादयः सास्रवालम्बनाः प्रहीयन्ते ।

"*प्रतिपक्षोदयात् क्षयः*" इति । भावनाहेयानां प्रतिपक्षोदयादेव, नालम्बनपरिज्ञानादिभ्य इति दर्शयति । *पश्चात् प्रवेदयिष्याम* इति । "नवप्रकारा दोषा हि भूमौ भूमौ तथा गुणाः" (अभि० को० ६.३५) इत्यत्र वक्ष्यति ॥ ६० ॥

*प्रहाणप्रतिपक्ष आनन्तर्यमार्ग* इति । विपक्षप्रतिद्वन्द्वी पक्षः = प्रतिपक्षः । प्रहाणाय प्रतिपक्षः = प्रहाणप्रतिपक्षः । विमुक्तिमार्गोऽपि हि प्रतिपक्षो न तु प्रहाणायेत्यत इत्थं विशेषणम् । प्रहीयते वाऽनेनेति प्रहाणम्, प्रहाणश्चासौ प्रतिपक्षः = प्रहाणप्रतिपक्षः । तद्यथा—दुःखधर्मज्ञानक्षान्तिः । *आधारप्रतिपक्षस्तस्मात् परेणेति* । तस्मात् = आनन्तर्यमार्गात् परेण यो मार्गो विमुक्तिमार्गः, स ह्याधारप्रहाणस्य तत्प्राप्त्याधारणात् । आधार्यतेऽनेनेत्याधारः, स एव प्रतिपक्षः आधारप्रतिपक्षः । तद्यथा—दुःखधर्मज्ञानक्षान्तेः परं दुःखधर्मज्ञानमिति । तेनोच्यते *येन तत्प्रापितमिति* । विस्तरः—येन = मार्गेण तत्प्रापितम् = आनन्तर्यमार्गप्रापितम् प्रहाणमाधार्यते, तत्प्राप्त्यनुच्छेदात् आधारप्रतिपक्ष इति । *दूरीभावप्रतिपक्ष* इति । विस्तरः—क्लेशप्राप्तिर्दूरीभवति येन सः = दूरीभावः, स एव प्रतिपक्षो दूरीभावप्रतिपक्षः । दूरीभवनं वा दूरीभावः, तस्मिन् प्रतिपक्षो दूरीभावप्रतिपक्षः । *विमुक्तिमार्गात् परेण यो मार्ग*

विमुक्तिमार्गोऽपीत्यपरे। सोऽपि हि तां क्लेशप्राप्तिं[1] दूरीकरोति।

विदूषणप्रतिपक्षो येन मार्गेण तं धातुं दोषतो दर्शनाद् विदूषयति। अपि त्वियमानुपूर्वी[2] साध्वी भवेत्।

विदूषणप्रतिपक्षो दुःखसमुदयालम्बनः प्रयोगमार्गः। प्रहाणप्रतिपक्षः सर्व आनन्तर्यमार्गः। आधारप्रतिपक्षो विमुक्तिमार्गः। दूरीभाव प्रतिपक्षो विशेषमार्ग इति।

प्रहीयमाणः क्लेशः कुतः प्रहातव्यः ?

**प्रहातव्यः क्लेश आलम्बनात् मतः ॥ ६१ ॥**

न हि सम्प्रयोगात् क्लेशो विवेचयितुं शक्यते। आलम्बनाच्च शक्यते; यस्मान्न पुनस्तदालम्ब्योत्पद्यते। अनागतस्तावच्छक्येतालम्बनाद् विवेचयितुम्, अतीतस्तु कथम्? अथालम्बनपरिज्ञानात् प्रहातव्य इत्ययमस्यार्थः? एषोऽपि

---

इति। योऽसौ विमुक्तिमार्गः—दुःखे धर्मज्ञानम्, तस्मात् परेण यो मार्गो दुःखेऽन्वयज्ञानक्षान्त्यादिः, स दूरीभावप्रतिपक्ष इति दर्शयति।

*विमुक्तिमार्गोऽपीत्यपर* इति। स चाप्याद्यो विमुक्तिमार्गो दूरीभावप्रतिपक्ष इत्युच्यते। *सोऽपि हि तां क्लेशप्राप्तिं दूरीकरोति*। एवं च सति विमुक्तिमार्ग आधारप्रतिपक्षो दूरीभावप्रतिपक्ष इति वचनमद्वयं लभत इत्युक्तं भवति। *तं धातुं दोषतो दर्शनात् विदूषयतीति*। अनित्यादिभिराकारैर्येन तं धातुं विदूषयतीत्यर्थः। तदेवं सति योऽपि दुःखसमुदयालम्बनः प्रहाणप्रतिपक्षः, स चापि विदूषणप्रतिपक्ष इति दर्शितं भवति। *अपि त्वियमानुपूर्वी साध्वी भवेदित्याचार्यः*। सोपानन्यायसमाश्रयात्, लक्षणासाङ्कर्याच्चेयमानुपूर्वी साध्वीति दर्शयति।

*दुःखसमुदयालम्बनः प्रयोगमार्ग* इति। प्रयोगमार्ग एवोष्मगतादि गृह्यते, नानन्तर्यमार्गादि; प्रहाणप्रतिपक्षादित्वेन तद्व्यवस्थापनात्। *सर्वानन्तर्यमार्ग* इति। पश्चात्कालीनोऽपि योऽन्यः। *विमुक्तिमार्गः सर्व* इत्येव चाधिक्रियते। *विशेषमार्गस्तु* य एतत्त्रयव्यतिरिक्तः, स इह गृह्यते।

*न हि सम्प्रयोगात् क्लेशो विवेचयितुं शक्यते* इति। स्वकलापाद् विवेचनाशक्यत्वात्। *अनागतस्तावच्छक्यत आलम्बनाद् विवेचयितुम्*। विवेचितस्य तस्य न पुनस्तद् वस्त्वालम्ब्योत्पत्तिरित्यतः कारणात्। *अतीतस्तु कथम्*। यद्वस्त्वालम्ब्योत्पन्नः, न ह्यालम्बितं वस्त्वनालम्बनीकर्तुं शक्यते। *एषोऽपि नैकान्त* इति।

---

१. प्राप्ति—का०। २. त्वेषामिय०—का०।

नैकान्तः। तस्माद् वक्तव्यमेतत्—कियता क्लेशः प्रहीणो वक्तव्यः? स्वासान्तानिकः प्राप्तिच्छेदात्। पारसान्तानिकस्तु क्लेशः सर्वं च रूपमक्लिष्टश्च धर्मः; तदालम्बनस्वासान्तानिकक्लेशप्रहाणात् ॥ ६१ ॥

चतुर्भिः प्रकारैः क्लेशानां क्षय इष्यते—

आलम्बनपरिज्ञानात् तदालम्बनसंक्षयात्।
आलम्बनप्रहाणाच्च प्रतिपक्षोदयात् क्षयः॥ (अभि० को० ५.६०)

इति। तस्मात् आलम्बनपरिज्ञानादिति नायमेकान्तः। तस्माद् वक्तव्यमेतदिति। ...दित्यर्थः।

अत्राचार्यसङ्घभद्रः परिहरति—आलम्बनात् क्लेशाः प्रहातव्याः। आलम्बनपरिज्ञानबलेन हि क्लेशाः प्रहीयन्ते। द्विविधं चानुशयालम्बनम्—संयोगवस्तु, असंयोगवस्तु च। तत्र संयोगवस्तुविषयाणामनुशयानां तदनुशयबलोत्पादितानामतद्विषयाणामपि पुद्गलस्य सन्ताने प्राप्तिः अक्लिष्टचित्तस्याप्यविच्छेदेन प्रवृत्ताः अनागतातीतक्लेशहेतुफलभूता। एवम् असंयोगवस्तुविषयाणाम्, अतद्विषयाणामपि च तद्विषयक्लेशपृष्ठसमुदाचारिणां क्लेशानां प्राप्तिर्वेदितव्या। स अनागतानामुत्पत्तौ प्रत्ययगमाद्धेतुभूता भवति। अतीतानां च निष्यन्दभावात् फलभूता। स च तत्प्रहाणप्रतिपक्षनिष्यन्दप्राप्तिसमवधानविरुद्धा; तदाधारितत्वात् क्लेशानाम्। अतो येनालम्बनेनोत्पन्नाः क्लेशा अन्यालम्बनानपि क्लेशान् प्रवर्तयन्ति, तदालम्बनप्रहाणप्रतिपक्षनिष्यन्दोत्पत्तौ तत्प्राप्तिविगमे ते क्लेशा... अपि सन्तो हेतुफलापक्रान्ता प्रहीणा इत्युच्यन्ते। तद् यस्माद् परिज्ञाते कस्मिंश्चित् क्लेशविषयेऽतद्विषयाणामपि क्लेशानां तद्विषयक्लेशबलेनाप्राप्तिरनागतातीतक्लेशहेतुफलभूता सन्ततौ प्रवर्तते यथावस्तु। तस्माद् आलम्बनात् क्लेशाः प्रहातव्या इत्यभिमतमिति।

ननु च तदालम्बनप्रहाणादिभिरपि क्लेशाः प्रहीयन्त इत्यभिप्रेतम्, किमिदमुक्तम्—आलम्बनपरिज्ञानबलेन क्लेशाः प्रहीयन्त इति? तेऽपि दुःखसत्यादिपरिज्ञानबलेनैव प्रहीयन्ते। तद्भावाभावयोगे तद्भावाभावयोगात्। येषामपि हि प्रतिपक्षोदयात् प्रहाणमुच्यते, तेऽपि भावनाहेयाः। क्लेशा आलम्बनदुःखसत्यादिपरिज्ञानबलेनेव प्रहीयन्ते—इत्यवगन्तव्यम्। व्यवस्थामात्रं तु तद्, यदुक्तम्। तदालम्बनप्रहाणादिभिरपि क्लेशाः प्रहीयन्ते—...अभिप्रायो लक्ष्यते।

*स्वासान्तानिकः प्राप्तिच्छेदादिति*। विस्तरः—स्वसन्तानक्लेशः प्राप्तिविगमात् प्रहीणो वक्तव्यः। परसन्तानक्लेशास्तु न प्राप्तिच्छेदात्; स्वसन्ताने तत्प्राप्त्यभावात्। किं तर्हि? [illegible] आलम्बनस्वासान्तानिकक्लेशप्रहाणात्। पारसान्तानिक-

दूरीभाव इत्युच्यते, कतिविधो दूरीभावः ? चतुर्विधा किल दूरता ।

**वैलक्षण्याद् विपक्षत्वाद् देशविच्छेदकालतः ।**
**भूतशीलप्रदेशाध्वद्वयानामिव दूरता ।। ६२ ।।**

१. विलक्षणदूरता, यथा महाभूतानाम् । वैलक्षण्यात् सहजानामपि दूरता ।

२. विपक्षदूरता, यथा शीलस्य दौःशील्यम् ।

३. देशविच्छेददूरता, यथा विप्रकृष्टदेशानां देशविच्छेदात् पूर्वपश्चिमसमुद्रवत् ।

४. कालदूरता, यथा अतीतानागतदूरमुच्यते । कुतस्तद् दूरम् ? वर्तमानात् ।

यदनन्तरातीतमुत्पद्यमानं च[1] तत् कथं दूरम् ? अध्वनानात्वेन तद् दूरं न चिरभूतभावित्वेन । वर्तमानमप्येवं दूरं प्राप्नोति ? अकारित्रात् तर्हि तद् दूरम् ।

---

क्लेशालम्बनस्वासान्तानिकप्राप्तिच्छेदादित्यर्थः । सर्वं रूपं कुशलाकुशलाव्याकृतम् । *अक्लिष्टाश्च धर्मा* इत्यरूपी कुशलास्रवम्, अनिवृताव्याकृतश्च सः । तथैव तदालम्बनस्वासान्तानिकक्लेशप्रहाणात् प्रहीणो वक्तव्य इति ।। ६१ ।।

"*भूतशीलप्रदेशाध्वद्वयानामिव*[2] *दूरता*" इति । इवशब्दोऽत्रोदाहरणम् । तद्यथार्थे द्रष्टव्यः । *वैलक्षण्यात् लक्षणदूरता* । तद्यथा—भूतानाम् । भिन्नलक्षणो हि पृथ्वीधातोरब्धातुः, तस्मात् पृथ्वीधातोरब्धातुर्दूरे भवति । *विपक्षत्वाद् विपक्षदूरता* । तद्यथा—शीलस्य दौःशील्यम् । *देशविच्छेदाद् देशदूरता* । तद्यथा—प्रदेशस्य पश्चिमसमुद्रस्य पूर्वसमुद्रात् । *कालतः कालदूरता* । तद्यथा—अध्वद्वयस्यातीतानागतलक्षणस्य । तद्धि अतीतानागतं दूरमुच्यते । क्वोच्यते ? अभिधर्मे । एवं ह्याह—"दूरेधर्माः कतमे ? अतीतानागता धर्माः । सन्तिकेधर्माः कतमे ? प्रत्युत्पन्नाः धर्माः, असंस्कृतं च" इति । तद् दूरमिति । अतीतानागतम् ।

*उत्पद्यमानं* चेति । उत्पादाभिमुखम्, अनागतं चेत्यर्थः । *न चिरभूतभावित्वेनेति* । न चिरभूतत्वेनातीतम्, नापि चिरभावित्वेनागतं दूरमित्यर्थः । *वर्तमानमप्येवं दूरं प्राप्नोति* । अध्वनानात्वेन प्रत्युत्पन्नाध्वतया[3] वर्तमानमपि एवं दूरं प्राप्नोति । यथा अतीतानागतमतीतानागताध्वतया । *अकारित्रात् तर्हि*

---

१. वा—का० । २. भूत्वा शील०—जा० । ३. ०न्नोऽध्व०—जा० ।

असंस्कृतस्य कथमन्तिकत्वं सिध्यति ? सर्वत्र तत्प्राप्तेः । अतीतानागतेऽपि प्रसङ्गः[१] । आकाशं च कथम् ? एवं तह्यतीतानागतमन्योन्यं वर्त्तमानव्यवहितत्वाद् दूरम् । वर्त्तमानमुभयोरासन्नत्वादन्तिकम् । असंस्कृतं चाप्यव्यवहितत्वादिति । एवमप्यतीतानागतं वर्त्तमानस्यान्तिकत्वादुभयं प्राप्नोति ?

एवं तु युक्तं स्यात्—धर्मस्वलक्षणादनागतं दूरमसम्प्राप्तत्वात्, अतीतं च प्रच्युतत्वादिति ॥ ६२ ॥

किं मार्गविशेषगमनात् क्लेशानां पुनः प्रहाणविशेषो भवति ? नैतदस्ति । सर्वेषां हि क्लेशानाम्—

---

*तद् दूरमिति* । उपरतकारित्रमतीतम्, अप्राप्तकारित्रमनागतमिति तदतीतानागतं दूरमुच्यते ।

*असंस्कृतस्य कथमन्तिकत्वमिति* । तस्य कारित्राभावादन्तिकत्वं न स्यात्, तच्चेष्यते "अन्तिकेधर्माः कतमे ? प्रत्युत्पन्ना धर्माः, असंस्कृतं च" इति शास्त्रपाठात् । *सर्वत्र तत्प्राप्तेरिति* । सर्वत्र देशे तस्यासंस्कृतस्य प्रतिसंख्यानिरोधस्य प्राप्त्युत्पादात् । *अतीतानागतेऽपि प्रसङ्ग* इति । कुशलादेरतीतानागतस्य सर्वत्र देशे प्राप्तिः सम्भवतीति अतीतानागतेऽपि अन्तिकत्वप्रसङ्गः ।

*आकाशं च कथमिति* । आकाशं च कथमन्तिकम्, न हि तस्य प्राप्तिरस्तीति ? *अतीतानागतमन्योन्यमिति* । अतीतादनागतं दूरम् । अनागताच्चातीतं दूरमित्यर्थः । *असंस्कृतं चाव्यवहितत्वादिति* । न केनचिद् व्यवहितम् । यथा वर्तमानेनातीतानागतमिति, एवं तस्यान्तिकत्वम् ।

*एवमपीति* । अस्यामपि कल्पनायाम् । यदनन्तरमतीतानागतम्, तद्धयतीतम्, वर्तमानान्तरितत्वाद् अनागताद् दूरम् । वर्तमानाच्चाव्यवहितत्वादन्तिकमिति प्राप्नोति । इत्येवमनागतमपि नेयम् ।

*एवं तु युक्तं स्यादिति* । स्वमतमाचार्यस्य । *धर्मस्वलक्षणादनागतं दूरम्* । कस्मात् ? असम्प्राप्तत्वात् । यस्मादनागतेन स्वलक्षणं न सम्प्राप्तमिति । अथवा—यस्मात् तत् स्वलक्षणमसम्प्राप्तम् = अनुपस्थितमिति । *अतीतं च* । किं धर्मस्वलक्षणाद् दूरम्, *तत्प्रच्युतत्वात्* । यस्मात् तद्धर्मस्वलक्षणं तस्मादतीतात् प्रच्युतम् । तद्धयतीतं यद् धर्मस्वलक्षणात् प्रच्युतमिति ॥ ६२ ॥

"प्रतिपक्षोदयात् क्षयः" (अभि० को० ५.६०) इत्युक्तम्, अथ पृच्छति—*किं मार्गविशेषगमनादिति* । विस्तरः—*प्रहाणविशेष* इति । विशिष्यते प्रहाणमित्यर्थः ।

---

१. तत्प्रसङ्गः—का० ।

**सकृत् क्षयः,**

यस्य यः प्रहाणमार्गस्तेनैव तस्य क्षयः ।

**विसंयोगलाभस्तेषां पुनः पुनः ।**

कतिषु कालेषु ? इत्याह—षट्सु कालेषु ।

**प्रतिपक्षोदयफलप्राप्तीन्द्रियविवृद्धिषु ॥ ६३ ॥**

प्रतिपक्षो विमुक्तिमार्ग एतस्मिन्नभिप्रेतः, फलानि चत्वारि श्रामण्यफलानि, इन्द्रियविवृद्धिरिन्द्रियसंचारः—एतेषु कालेषु क्लेशस्य विसंयोगलाभः ।

स पुनरेष यथायोगं द्रष्टव्यः । केषाञ्चित् षट्सु कालेषु, केषाञ्चिद् यावद् द्वयोः ॥ ६३ ॥

---

*प्रतिपक्षो विमुक्तिमार्ग एतस्मिन्नभिप्रेत* इति । तस्य विसंयोगप्राप्ति-सहोत्पादानन्तर्यमार्गे हि न तावत् विसंयोगप्राप्तिरस्ति ; उत्पादाभिमुखत्वात् । विमुक्तिमार्गोऽपि हि प्रतिपक्ष इति शक्यते व्यवस्थापयितुम् । मुख्यप्रतिपक्षेणा-नन्तर्यमार्गेण सहैककार्यत्वात् । तथा ह्युक्तम्—'उभयाभ्यां हि तस्य प्राप्तिर्वि-संयोगप्राप्तेरावाहकसन्निश्रयत्वाद्' इति । *फलानि चत्वारीति* । चतुर्ग्रहण-मेकान्नवतिफलप्रतिपत्तिनिरासार्थम् । पुरुषकारादिपञ्चफलप्रतिपत्तिनिरासार्थं वा । फलप्राप्तिरपि विमुक्तिमार्गावस्थायामेव गृह्यते, विसंयोगलाभास्तित्वयोगात् *इन्द्रियविवृद्धिरिन्द्रियसञ्चार* इति । इन्द्रियाधिक्यप्रतिपत्तिनिरासार्थमेतदर्थ-प्रदर्शनम् 'इन्द्रियविवृद्धिः' इत्युच्यते ।

फलप्राप्तिवचनेनैव सिद्धिः—इत्याचार्यसङ्घभद्रः । अत्र ब्रूमः—सत्यं फलप्राप्ति-रेवेन्द्रियविवृद्धिः, फलप्राप्तिविशेषस्तु प्रदर्शयितव्यो यत्र पुनर्विसंयोगफललाभो भवति । अन्यथा हि फलप्राप्तिवचनमपि न कर्तव्यं स्यात् ; प्रतिपक्षोदयवचनेनैव तत्सिद्धेः । इत्यलमनया खलिनिकया ।

*केषाञ्चित् यावद् द्वयोरिति* । *केषाञ्चित्* क्लेशानां षट्सु, केषाञ्चित् त्रिषु, केषाञ्चिद् द्वयोरिति । 'केषाञ्चिदेकस्मिन् काले' इति नोक्तम् ; पुनः प्राप्तस्य विसंयोगस्याधिकृतत्वात् । सम्भवति हि भावाग्रिकस्य नवमस्य प्रकार-स्यैकस्मिन्नेव काले तीक्ष्णेन्द्रियस्य विसंयोगलाभः । स तु न पुनर्लाभ इति नोच्यते । तत्र तावन्मृद्विन्द्रियस्य षट्सु कालेषु विसंयोगलाभः । दुःख-समुदय-निरोधदर्शनहेयानां कामावचराणां मार्गदर्शनहेयानां प्रतिपक्षोदयकाले, स्रोत-आपत्तिफलकाले, सकृदागामिफलकाले, अनागामिफलकाले, अर्हत्त्वफलकाले, इन्द्रियसञ्चारकाले चेति षट्सु कालेषु विसंयोगलाभः । सम्भवं च प्रत्येकमुच्यते ।

स एव विसंयोगास्तासु तास्ववस्थासु परिज्ञासंज्ञां लभते। द्वे हि परिज्ञे—ज्ञानपरिज्ञा, प्रहाणपरिज्ञा च। तत्र ज्ञानपरिज्ञा सास्रवं ज्ञानम्। प्रहाणपरिज्ञा तु प्रहाणमेव। फले हेतूपचारात्।

किमेकैव परिज्ञा सर्वप्रहाणम्? नेत्याह। किं तर्हि?

---

न हि मृद्विन्द्रियोऽवश्यमिन्द्रियाणि सञ्चरति। तस्यैव मृद्विन्द्रियस्य रूपारूप्यावचराणां मार्गदर्शनहेयाना मार्गान्वयज्ञानकाले प्रतिपक्षोदयकाल इति वा, फलप्राप्तिकाल इति वा गृह्यते प्रथमतो विसंयोगलाभः। पुनः सकृदागामिफलप्राप्तिकाले यावद् इन्द्रियसंचारकाले इति पञ्चसु फलेषु। भावनाहेयानामपि तस्यैव कामावचराणां पञ्च प्रकाराणामधिमात्राधिमात्रस्य यावन्मध्यस्य तेष्वेव स्रोतआपत्तिफलकालवर्ज्येषु पञ्चसु कालेषु विसंयोगलाभः। मध्यमृदोस्तु षष्ठस्य प्रकारस्य तस्यैव चतुर्षु कालेषु प्रतिपक्षोदयफलप्राप्तिकालयोरेकत्वात्। तस्मिन् अन्यतरस्मिन्। अनागामिफलकाले, अर्हत्त्वफलप्राप्तिकाले, इन्द्रियसञ्चारकाले चेति। तस्यैव मृद्वधिमात्रस्य मृदुमध्यस्य च सप्तमाष्टमयोः प्रकारयोः प्रतिपक्षोदयकाले, अनागामिफलकाले यावद् इन्द्रियसञ्चारकाले वेति चतुर्षु एव कालेषु विसंयोगलाभः। तस्यैव मृदुमृदोरन्त्यस्य प्रकारस्य प्रतिपक्षोदयकाल इति वा फलप्राप्तिकाल इति वैकतरस्मिन् अर्हत्त्वफलकाले इन्द्रियसञ्चारकाले चेति त्रिषु कालेषु विसंयोगलाभः। तस्यैवार्हत्त्वफलं प्राप्नुवतो ये नवप्रकारा रूपारूप्यावचराः क्लेशा भावनाप्रहातव्याः प्रहीणा अधिमात्राधिमात्रो यावन्मृदुमृदुरिति। तेषां भावाग्रिकं मृदुमृदुप्रकारमन्त्यं हित्वा सर्वेषां त्रिष्वेव कालेषु विसंयोगलाभः—प्रतिपक्षोदयकाले, अर्हत्त्वफलकाले, इन्द्रियसंचारकाले चेति। यस्त्वस्यैवारूप्यावचरो मृदुमृदुरन्त्यः क्लेशप्रकारः, तस्य प्रतिपक्षोदयार्हत्त्वफलप्राप्तिकालैकत्वात् प्रतिपक्षोदयकाल इति वा अर्हत्त्वफलकाल इति वा, अन्यतरस्मिन् इन्द्रियसञ्चारकाले चेति द्वयोः कालयोर्विसंयोगलाभ इति। एवं तावत् मृद्विन्द्रियस्योक्तम्।

तीक्ष्णेन्द्रियस्य पुनः केषाञ्चित् क्लेशानां पञ्चसु कालेसु। केषाञ्चित् यावद् द्वयोरिति वक्तव्यम्। इन्द्रियसञ्चारकालमेकमपास्य। तस्य हि सर्वत्रेन्द्रियसञ्चारो नास्ति। तस्यैकस्मिन् एव काले क्लेशानां विसंयोगलाभोऽस्ति। भावाग्रिकस्य भावनाहेयस्य मृदुमृदोः प्रकारस्य। स तु पुनर्लाभो न भवतीति न वक्तव्यः—इति पश्यामः॥ ६३॥

फले हेतूपचारादिति। प्रहाणं फलं परिज्ञा ज्ञानस्वभावो हेतुः, तस्मिन् प्रहाणे फले हेतूपचारः—प्रहाणं परिज्ञेति। तद्यथा—"षडिमानि स्पर्शायतनानि पूर्वमभिसंस्कृतानि अभिसञ्चेतितानि पौराणं कर्म वेदितव्यम्" (    ) इति।

**परिज्ञा नव,**

तत्र तावत्,

**कामाद्यप्रकारद्वयसंक्षयः ।**

**एका,**

कामधातावाद्यस्य प्रकारद्वयस्य दुःखसमुदयदर्शनहेयस्य प्रहाणमेका परिज्ञा ।

**द्वयोः क्षये द्वे ते,**

कामधातावेव निरोधदर्शनहेयस्य प्रकारस्य प्रहाणमेका परिज्ञा । मार्गदर्शनहेयस्यैका ।

यथा कामावचराणां दर्शनप्रहातव्यानां प्रहाणं तिस्रः परिज्ञाः,

**तथोर्ध्वं तिस्र एव ताः ।। ६४ ।।**

रूपारूप्यावचराणां दर्शनप्रहातव्यानां प्रहाणं तथैव तिस्रः परिज्ञा भवन्ति, दुःखसमुदयदर्शनप्रहातव्यानां प्रहाणमेका, निरोधदर्शनहेयानां प्रहाणं द्वितीया, मार्गदर्शनहेयानां प्रहाणं तृतीया—इति त्रैधातुकानां दर्शनहेयानां प्रहाणं षट् परिज्ञा भवन्ति ।। ६४ ।।

**अन्या अवरभागीयरूपसर्वास्रक्षयाः ।**

**तिस्रः परिज्ञाः**

अवरभागीयप्रहाणमेका परिज्ञा । रूपास्रवप्रहाणमेका रूपरागक्षयपरिज्ञा । आरूप्याप्तानां सर्वास्रवप्रहाणमेका सर्वसंयोजनपर्यादानपरिज्ञा[1] ।

---

कः पुनः प्रहाणं परिज्ञाशब्देनापदिष्टः ? सूत्रे एवं हि पठ्यते—"परिज्ञेयांश्च वो भिक्षवो धर्मान् देशयिष्यामि, परिज्ञां च, परिज्ञावन्तं च पुद्गलम् । परिज्ञेयाः धर्माः कतमे ? पञ्चोपादानस्कन्धाः । परिज्ञा कतमा ? यदत्र छन्दरागप्रहाणम्, छन्दरागसमतिक्रमः—इयमुच्यते परिज्ञा" (          ) इति विस्तरः ।

"*कामाद्यप्रकारद्वयसंक्षय*:" इति ।

"अनास्रववियोगाप्तेर्भवाग्रविकलीकृतेः ।
हेतुद्वयसमुद्घातान् परिज्ञा धात्वतिक्रमात्" । (अभि० को० ५.६८)

इत्यत्र परिज्ञाव्यवस्थापने कारणं वक्ष्यते ।

---

1. इत आरभ्य षट्षष्टितमकारिकायाः तृतीयपादपर्यन्तं स्फुटार्था संस्कृतभाषायां नोपलब्धा इति मनश्चेखिद्यत एव—सं० ।

कस्माद् रूपारूप्यावचराणां भावनाहेयानां प्रहाणं पृथक् परिज्ञा, न दर्शनहेयानाम् ? भावनाहेयानामतुल्यप्रतिपक्षत्वात् । इत्येता नव परिज्ञाः ।

आसां पूर्विकाः

**षट् क्षान्तिफलम्,**

या एव दर्शनहेयप्रहाणस्वभावाः ।

**ज्ञानस्य शेषिताः ॥६५॥**

अवरभागीयप्रहाणादिपरिज्ञा भावनामार्गत्वात् ॥ ६५ ॥

कथं क्षान्तिफलं परिज्ञा भवन्ति ? क्षान्तीनां ज्ञानपरिवारत्वात् । राजपरिवारे राजोपचारवत् । ज्ञानैकफलत्वाच्च ।

**अनागम्यफलं सर्वा ध्यानानां पञ्च वाथ वा ।**

**अष्टौ,**

वैभाषिकमतेन मौलध्यानफलं पञ्च परिज्ञा या रूपारूप्यावचरक्लेशप्रहाणस्वभावाः ; कामावचरक्लेशप्रहाणस्यानागम्यफलत्वात् ।

भदन्तघोषकस्य मतेनाष्टौ । स हि वीतरागस्यापि कामावचराणां दर्शनहेयानां प्रहाणं दर्शनमार्गफलमिच्छति, अनास्रवविसंयोगप्राप्तिलाभात् । अवरभागीयप्रहाणपरिज्ञा त्वनागम्यफलमेव । ध्यानान्तरं ध्यानवद् द्रष्टव्यम् ।

आरूप्याणां तु

**सामन्तकस्यैका,**

आकाशानन्त्यायतनसामन्तकस्यैका रूपरागक्षयपरिज्ञा फलम्[२] ।

---

*अवरभागीयप्रहाण*मिति कामधात्वास्रवप्रहाणमित्यर्थः । इयमेव चास्य संज्ञा । *रूपास्रवप्रहाण*मिति । रूपधात्वास्रवप्रहाणमित्यर्थः । *रूपरागक्षयपरिज्ञे*ति अस्य नाम । यद्यपि अन्येषां क्लेशोपक्लेशानां मानादीनां रूपावचराणां प्रहाणम्—इयं परिज्ञा व्यवस्थाप्यते । रागस्य तु तत्र प्राधान्याद् ऊर्ध्वभागीयस्य संयोजनस्य प्रहाणं रूपरागक्षयपरिज्ञेत्युक्तम् । *सर्वसंयोजनपर्यादान*···

···ध्यानान्तरं भवतीति । आकाशानन्त्यायतनसामन्तकस्येति । लौकिकस्यापि तस्य परिज्ञा फलं व्यवस्थाप्यते; आर्यस्यैवानास्रवविसंयोगप्राप्तिसम्भवात् ।

**मौलारूप्यत्रयस्य च ॥ ६६ ॥**

मौलानां च त्रयाणामारूप्याणामेकैव सर्वसंयोजनपर्यादानपरिज्ञा फलम् ॥६६॥

**आर्यमार्गस्य सर्वाः,**

नव परिज्ञाः फलम् ।

**द्वे लौकिकस्य,**

लौकिकस्य मार्गस्य द्वे अवरभागीयरूपरागक्षयपरिज्ञे फलम् ।

**अन्वयस्य च ।**

अन्वयज्ञानस्यापि द्वे परिज्ञे फलं पश्चिमे ।

**धर्मज्ञानस्य तिस्रस्तु,**

पश्चिमा एव त्रैधातुकभावनाहेयप्रतिपक्षत्वात् ।

**षट् तत्पक्षस्य पञ्च वा ॥ ६७ ॥**

धर्मज्ञानस्य षट् परिज्ञाः फलम्, या एव धर्मज्ञानक्षान्तिज्ञानानाम् । अन्वय-

---

"*मौलारूप्यत्रयस्य च*" इति । अनास्रवस्य ॥ ६६ ॥

*लौकिकस्य मार्गस्य द्वे* इति । आर्यस्य लौकिकेन मार्गेण काम-रूपधातु-वैराग्य ।

*अन्वयज्ञानस्यापि द्वे* इति । भावनामार्गसंगृहीतस्य । *पश्चिमे* रूपरागक्षय-सर्वसंयोजनपर्यादानपरिज्ञे ।

"*धर्मज्ञानस्य तिस्रः*" इति । भावनामार्गसंगृहीतस्य ।

"धर्मज्ञानं निरोधे यन्मार्गे वा भावनापथे ।
त्रिधातुप्रतिपक्षस्तद्" (अभि० को० ७.६९) इति ।

*तस्य पश्चिमास्तिस्रः फलम् ।* अवरभागीयप्रहाणरूपरागक्षयसर्वसंयोजन-पर्यादानपरिज्ञाः । कस्माद् ? इत्याह—*त्रैधातुकभावनाहेयप्रतिपक्षत्वादिति* ।

"*षट् तत्पक्षस्य पञ्च वा*" इति । तयोर्धर्मज्ञानान्वयज्ञानयोः *पक्षस्य* । षट् पञ्च च यथायोगम् । पक्षग्रहणेन क्षान्ति-ज्ञानयोर्ग्रहणम् ।

*या एव धर्मज्ञान-क्षान्तिज्ञानानामिति* । धर्मज्ञानक्षान्तीनां धर्मज्ञानानां चेति समासः । धर्मज्ञानक्षान्तीनां कामावचरदर्शनहेयप्रहाणस्वभावा यथोक्तास्तिस्रः परिज्ञाः फलम् । धर्मज्ञानानामिति भावनामार्गे । दुःखसमुदयज्ञानसंगृहीतानामेका अवरभागीयप्रहाणपरिज्ञा । निरोधमार्ग-संगृहीतानां तु तिस्रोऽप्यवरभागीयप्रहाणरूपरागक्षयसर्वसंयोजनपर्यादान-

ज्ञानपक्षस्य पञ्च, या एवान्वयक्षान्तिज्ञानानाम्। पक्षग्रहणेन हि क्षान्तिज्ञानानि गृह्यन्ते ॥ ६७ ॥

कस्मान्नैकैकं प्रहाणं परिज्ञा व्यवस्थाप्यते ? यस्मात् क्षान्तिफलं तावत् प्रहाणं व्यवस्थाप्यते।

**अनास्रववियोगाप्तेर्भवाग्रविकलीकृतेः।**

**हेतुद्वयसमुद्घातात् परिज्ञा,**

यत्रैतानि त्रीणि कारणानि भवन्ति तत् प्रहाणं परिज्ञोच्यते। पृथग्जनस्य तावदनास्रवा विसंयोगप्राप्तिर्नास्ति भवाग्रविकलीकरणं चेति नास्य प्रहाणं परिज्ञाख्यां लभते। आर्यस्यापि यत् क्षान्तिफलं तावत् प्रहाणम्। तत्र तावद् दुःखेऽन्वयज्ञानक्षान्तावनास्रवा विसंयोगप्राप्तिरस्ति, न तु भवाग्रविकलीकृतम्। दुःखेऽन्वयज्ञाने उभयमस्ति, न तु हेतुद्वयसमुद्घातः। समुदयदर्शनप्रहातव्यस्य सर्वत्रगहेतोरप्रहीणत्वात्। अन्येषु धर्मान्वयज्ञानेषु सर्वं त्रयमस्ति। अतस्तास्ववस्थासु प्रहाणं परिज्ञाख्यां लभते। ज्ञानफलं तु प्रहाणम्। अतश्च कारणत्रयात् परिज्ञाख्यां लभते। चतुर्थाच्च[1]—

---

पर्यादानपरिज्ञाः। *या एवान्वयक्षान्तिज्ञानानामिति*। अन्वयज्ञानक्षान्तीनाम्, अन्वयज्ञानानां च। ताश्च रूपारूप्यावचरदर्शनहेयप्रहाणस्वभावा यथोक्तास्तिस्रः परिज्ञाः, द्वे च पश्चिमे इति ॥ ६७ ॥

*कस्मान्नैकैकं प्रहाणमिति*। दुःखदर्शनहेयप्रहाण-समुदयदर्शनहेयप्रहाणं विस्तरेण यावद् भावाग्रिकस्य मृदुमृदोः प्रकारस्य प्रहाणमिति कस्मान्न गृह्यते ?

"*अनास्रववियोगाप्तेः*" इति। अनास्रवविसंयोगप्राप्तेरित्यर्थः।

"*भवाग्रविकलीकृतेः*" इति। भवाग्रप्रदेशप्रहाणादित्यर्थः।

"*हेतुद्वयसमुद्घाताद्*" इति। दुःखसमुदय-दर्शनहेयसर्वत्रगहेतुद्वयप्रहाणादित्यर्थः।

*तत्प्रहाणं परिज्ञेति*। एभिः कारणैः प्रकृष्टं तत्प्रहाणमित्यत्र परिज्ञेति व्यवस्थाप्यत इत्यभिप्रायः। *अन्येषु धर्मान्वयज्ञानेष्विति*। समुदयधर्मज्ञानमारभ्य यावत् क्षयज्ञानमित्येतेषु धर्मज्ञानान्वयज्ञानेषु। *ज्ञानफलं तु प्रहाणमिति*। भावनामार्गे। तद्धि न क्षान्तिफलमिति।

---

1. च—का०।

**धात्वतिक्रमात् ।। ६८ ।।**

यदा धातुं समतिक्रामति । कृत्स्नधातुवैराग्यात् उभयसंयोगविसंयोगपञ्चमं[1] कारणमाहुराभिधर्मिकाः[2] । यः प्रकारः प्रहीणो यदि तत्रान्येन तदालम्बनेन क्लेशेन विसंयुक्तो भवतीति ।

स तु नान्यत्[3] उभयहेतुसमुद्धातात् धातुसमतिक्रमाच्चेति न ब्रूमः।। ६८ ॥

कः कतिभिः परिज्ञाभिः समन्वागतः ?

**नैकया पञ्चभिर्यावद् दर्शनस्थः समन्वितः ।**

पृथग्जनस्तावन्नैव समन्वागतः । आर्योऽपि दर्शनमार्गस्थो यावत्समुदय-

"*धात्वतिक्रमात्*" इति । च-शब्दो लुप्तनिर्दिष्टः । धात्वतिक्रमाच्चेति । अत एव विव्रियते—चतुर्थाच्चेति । *यदा धातुं समतिक्रामति* । कामधातुं वा समतिक्रामति, तदा परिज्ञाख्यां लभते—इति वाक्यशेषः । कस्मात् ? *कृत्स्नधातुवैराग्यात्* । कृत्स्नस्य धातोर्वैराग्यात्, न विकलीकरणमात्रत्वात् । तदा हि सुष्ठु प्रहाणमित्यभिप्रायः ।

*उभयसंयोगविसंयोग*मिति । आलम्ब्यालम्बकक्लेशलक्षणः संयोगः = उभयसंयोगः । तस्माद् विसंयोगः = उभयसंयोगविसंयोगः । *तत्पञ्चमं कारण-माहुराभिधर्मिकाः* । अनेन च कारणेन प्रहाणं परिज्ञेत्युच्यते इति ।

*यः प्रकारः प्रहीण* इति । दुःखदर्शनप्रहातव्यो यावन् मार्गदर्शनप्रहातव्यो भावनाप्रहातव्यश्च । *यदि तत्र* प्रहीणे प्रकारे, अन्येन तदालम्बनेन क्लेशेन दर्शनप्रहातव्येन भावनाप्रहातव्येन विसंयुक्तो भवति । एवमिदमपि पञ्चमं कारणं प्रहाणस्य परिज्ञाविधाने आहुरपरे ।

*स तु नान्यदिति* विस्तरः । स तूभयसंयोग *उभयहेतुसमुद्घातात्* दुःखदर्शन-प्रहातव्यस्य समुदयदर्शनप्रहातव्यस्य च सर्वत्रगहेतोः समुद्घाताद् *धातुसमति-क्रमाच्च नान्यः* । तथा हि दुःखदर्शनप्रहातव्येषु प्रहीणेष्वपि न तावदस्ति हेतु-द्वयसमुद्घातो यावत्तदालम्बनः समुदयदर्शनप्रहातव्यः सर्वत्रगहेतुरप्रहीणो भवति । भावनाप्रहातव्येषु च प्रहीणेष्वपि यावदष्टासु प्रकारेषु न तावद् धात्वतिक्रमोऽस्ति, यावन्न नवमस्यापि प्रकारस्य प्रहाणमित्यतो न पुनर्ब्रूमः ।। ६८ ।।

*नैकयेति* । विस्तरः—*पृथग्जनस्तावन्नैव समन्वागतः* । अनास्रवं विसंयोग-

१. °वियोगं—का० । २. ०माहुरपरे—का० । ३. नान्यस्य—का० ।

धर्मज्ञानक्षान्तौ[1] नैव समन्वागतः। समुदयधर्मज्ञान एकया समन्वागतः। समुदयान्वयज्ञाने[2] द्वाभ्याम्, निरोधधर्मज्ञाने[3] तिसृभिः, निरोधान्वयज्ञाने चतसृभिः, मार्गधर्मज्ञाने पञ्चभिः।

**भावनास्थः पुनः षड्भिरेकया वा द्वयेन वा ।। ६९ ।।**

भावनामार्गस्थः पुनरार्यपुद्गलो मार्गान्वयज्ञाने षड्भिः परिज्ञाभिः समन्वागतो यावत् कामवैराग्यं न प्राप्तः। परिहीणोऽपि ततः कामवैराग्यं प्राप्तः पूर्वं पश्चाद् वा एकया अवरभागीयप्रहाणपरिज्ञया। अर्हत्त्वप्राप्त[4] एकयैव सर्व-

प्राप्त्यभावात्। *आर्योऽपि दर्शनमार्गस्थो यावत् समुदयधर्मज्ञानक्षान्तौ।* यावच्छब्देन दुःखधर्मान्वयज्ञानक्षान्तिज्ञानेषु समुदयधर्मज्ञानक्षान्तौ च नैव *समन्वागतः।* हेतुद्वयस्याप्रहीणत्वात्। *समुदयधर्मज्ञान एकया समन्वागतः।* समुदयान्वयज्ञानक्षान्तावप्येकयैव समन्वागत इत्यवगन्तव्यम्। *समुदयान्वयज्ञाने द्वाभ्याम्।* पूर्वोक्तया एकया कामावचरदुःखसमुदयदर्शनहेयप्रहाणपरिज्ञया, रूपारूप्यावचरदुःखसमुदयदर्शनप्रहाणपरिज्ञया च। निरोधधर्मज्ञानक्षान्तावपि द्वाभ्यामेव। *निरोधधर्मज्ञाने तिसृभिरिति* नेयम्, यावत् *पञ्चभिः।* दर्शनस्थः समन्वागतो न षड्भिः; षोडशस्य क्षणस्य भावनामार्गसंगृहीतत्वात्।

*मार्गान्वयज्ञाने षड्भिरिति।* पूर्वोक्ताभिश्च रूपारूप्यावचरमार्गदर्शनप्रहाण-परिज्ञया च।

ननु च पश्चाद् वक्ष्यति—

"चतुःफलव्यवस्था तु पञ्चकारणसम्भवात्।
पूर्वत्यागोऽन्यमार्गाप्तिः क्षयसंकलनं फले॥
ज्ञानाष्टकस्य लाभोऽथ षोडशाकारभावना।" (अभि० को० ६.५२)

इति? भवति प्रहाणसङ्कलनम्, न तु परिज्ञासंकलनम्—इत्यविरोधः। *यावत् कामवैराग्यं न प्राप्त इति।* यावच्छब्देन भावनाहेयक्लेशप्रथमप्रकारप्रहाणे यावत् अष्टमप्रकारप्रहाणेऽपि षड्भिरेव समन्वागतः। *परिहीणोऽपि तत इति।* कामवैराग्यपरिहाण्या हि तत्संकलनविगतः। *कामवैराग्यं प्राप्तः पूर्वं पश्चाद् वेति।* अभिसमयात् पूर्वं पश्चाद् वा। कथम्? लौकिकेन मार्गेण कामवीतरागो भूत्वा नियाममवक्रान्तो मार्गान्वयज्ञाने *एकया अवरभागीयप्रहाणपरिज्ञया*

---

१. °क्षान्ति–का०। २. समुदयेऽ°–का०।
३. निरोधे–का०। ४. अर्हत्त्वं°–का०।

संयोजनपर्यादानपरिज्ञया। परिहीणोऽपि रूपावचरेण पर्यवस्थानेनैकया अवरभागीयप्रहाणपरिज्ञया। रूपवैराग्यं प्राप्तो द्वाभ्यामवरभागीयप्रहाण-रूपरागक्षय-परिज्ञाभ्याम्। परिहीणोऽप्यारूप्यावचरेण[1] पर्यवस्थानेनाभ्यामेव ॥ ६९ ॥

किं पुनः कारणमनागाम्यर्हतोरेकैव परिज्ञा व्यवस्थाप्यते, न भूयस्यः? यस्मात्

**तासां संकलनं धातुवैराग्यफललाभतः।**

द्वाभ्यां कारणाभ्यां परिज्ञानां संकलनं भवति, एकत्वेन व्यवस्थापनम्—

---

*समन्वागतः।* यस्मादसावार्यः षोडशक्षणं प्राप्तोऽनागामी एव भवति, न स्रोतआपन्नः सकृदागामी वा। पञ्चावरभागीयप्रहाणाच्चानागामीति पठ्यते। तस्माद् दर्शनहेयप्रहाणानां पञ्चावरभागीयप्रहाणस्य च संकलनाद् एकयैवावरभागीयप्रहाणपरिज्ञया समन्वागतः। पश्चाद् वा अभिसमयाद् आनुपूर्वीकः कामवैराग्यप्राप्तः एकयैवावरभागीयप्रहाणपरिज्ञया समन्वागतः। *अर्हत्वप्राप्त एकयैवेति।* तदा परिज्ञासंकलनात्। *परिहीणोऽपि रूपावचरेणेति* विशेषणं कामावचरेण परिहाणौ षट्परिज्ञासमन्वागमपरिहारार्थम्, आरूप्यावचरेण च परिहाणौ द्विपरिज्ञासमन्वागमपरिहारार्थमिति। *रूपवैराग्यं प्राप्तो द्वाभ्यामिति।* अनागामी रूपवीतराग इत्यर्थः।

धातुवैराग्येण कस्मान्न संकलनं भवति? फलप्राप्त्यभावात्। धातुवैराग्य-फलप्राप्तिभ्यां समस्ताभ्यां कारणाभ्यां परिज्ञासंकलनमिष्यते, न केवलेन परिहीणोऽपि। *आरूप्यावचरेणेति।* अर्हत्वप्राप्तिसङ्कलितयोरवरभागीयप्रहाण-रूपरागक्षयपरिज्ञयोरारूप्यावचरेण क्लेशेनार्हत्वात् परिहाणौ पुनर्लाभात्। रूपावचरेण तु परिहाणावेकया समन्वागतः स्यात्, कामावचरेण च षड्भिः समन्वागतः स्याद् इत्यारूप्यावचरपर्यवस्थानग्रहणम् ॥ ६९ ॥

*अनागाम्यर्हतोरिति।* कामवीतरागानागामी इह विवक्षितः, रूपवीतरागानागामिनः परिज्ञाद्वयसमन्वागमवचनात्। *न भूयस्य इति।* न बहुतराः। आनुपूर्वीकस्रोतआपन्नत्वादित्यभिप्रायः। *द्वाभ्यां कारणाभ्यामिति।* व्याख्यातम्। *सङ्कलनमिति* कोऽर्थः? *एकत्वेन व्यवस्थापनमिति* योऽर्थः। तयोश्चावस्थयोरिति। कामवीतरागानागाम्यर्हत्वावस्थयोरेतदुभयम्—*धातुवैराग्यं फलप्राप्तिश्चेति।* *एकपरिज्ञोच्यत* इति। रूपावीतरागस्यानागामिन एकावरभागीयप्रहाणपरिज्ञा अर्हतोऽप्येका सर्वसंयोजनपर्यादानपरिज्ञेति।

---

१. प्रहीणो°–का०।

धातुवैराग्यात्, फलप्राप्तितश्च। तयोश्चावस्थयोरेतदुभयं भवति। अतः सर्वं प्रहाणं संकलय्यैकपरिज्ञोच्यते[१]।

अथ कः कति परिज्ञास्त्यजति? लभते वा?

**एकां द्वे पञ्च षट् कश्चिज्जहात्याप्नोति पञ्च न ॥७०॥**

एकां त्यजति अर्हत्त्वात् कामवैराग्याद् वा परिहीयमाणः। द्वे परिज्ञे त्यजति अनागामी रूपवीतरागः कामवैराग्यात् परिहीयमाणः। पञ्च त्यजति वीतरागपूर्वी मार्गान्वयज्ञाने। स ह्यवरभागीयप्रहाणपरिज्ञालाभे पूर्विकाः पञ्च परिज्ञास्त्यजति। षट् परिज्ञास्त्यजत्यानुपूर्विकः; कामवैराग्यात्।

लाभोऽप्येवमेव[२]। कश्चिदेकां[३] लभते, यः कश्चिदपूर्वं[४] लभते।

"एकां द्वे" इति विस्तरः। एकां *कश्चित् जहाति*, त्यजतीत्यर्थः। कश्चित् द्वे, कश्चित् पञ्च। कश्चित् षट् *जहाति आप्नोति वा*। 'कश्चिदेकम्, कश्चिद् द्वे, कश्चित् षट्, कश्चित् पञ्च आप्नोति' इत्येतन्नास्ति, अत आह—*पञ्च* नेति। पञ्च नैव कश्चिदाप्नोति इति सूत्रार्थनयः।

वृत्तिस्तु विव्रियते—*अर्हत्त्वात् परिहीयमाणो* येन केनचित् चित्तेन सर्वसंयोजनपर्यादानपरिज्ञामेकां त्यजति, सङ्कलने तस्या एकैकस्या अर्हत्त्वावस्थायामस्तित्वात्। एवं *कामवैराग्यात् परिहीयमाणो* रूपवीतरागोऽनागामी एकामेवावरभागीयप्रहाणपरिज्ञाम्। *द्वे परिज्ञे त्यजतीति*। अवरभागीयप्रहाणपरिज्ञाम्, रूपरागक्षयपरिज्ञां च। कोऽसौ? इत्याह—*अनागामी रूपवीतरागः कामवैराग्यात् परिहीयमाण* इति। *पञ्च त्यजति वीतरागपूर्वी मार्गान्वयज्ञान* इति। अभिसमयचित्ते षोडश। *स ह्यवरभागीयप्रहाणपरिज्ञालाभे*। लौकिकमार्गप्राप्तस्य तस्यानास्रवविसंयोगप्राप्त्या पूर्विकाः पञ्च परिज्ञाः पञ्चदशक्षणलाभात्त्यजति। षष्ठीं तु रूपारूप्यावचरमार्गदर्शनहेयप्रहाणपरिज्ञां न त्यजति। किन्तु धातुवैराग्यफललाभतोऽत्रावरभागीयप्रहाणपरिज्ञायां सङ्कलितेति नष्टरूपेव सा नोपन्यस्यते। *आनुपूर्विको यो* न वीतरागपूर्वी कामवैराग्यात् कारणात् षट् त्यजति यस्त्रैधातुकानां दर्शनप्रहातव्यानां प्रहाणपरिज्ञाः।

*लाभोऽप्येवमिति*। *कश्चिदेकं लभते* पञ्च मुक्त्वा। यावत् षट् लभते। *यः कश्चिदपूर्वं लभत* इति। दर्शनमार्गस्थो भावनामार्गस्थो वा नवानां

१. एका परिज्ञो°–का०।　　२. लाभे०–का०।
३. °परिज्ञां–का०।　　४. °दपूर्वां–का०।

कश्चिद् द्वे, यः केवलादारूप्यवैराग्यात्[1] परिहीयते । कश्चित् षट्, योऽनागामिफलात् परिहीयते । पञ्च तु नैव कश्चिल्लभते ॥ ७० ॥

समाप्तः परिज्ञाप्रसङ्गः ॥

अभिधर्मकोशभाष्येऽनुशयनिर्देशो नाम

पञ्चमं कोशस्थानं समाप्तमिति[2] ॥

---

परिज्ञानां योऽप्रतिलब्धपूर्वा प्रतिलभते प्रथमतः, स तामेकां लभते । भावनामार्गेऽपि हि वीतरागपूर्वी दर्शनमार्गान्तेऽवरभागीयप्रहाणपरिज्ञामेकां लभते । आनुपूर्विकोऽपि कामवैराग्ये नवमे विमुक्तिमार्गे तामेव लभते । अर्हन्नप्यन्यामेकां लभत इति । *केवलादारूप्यवैराग्यात् परिहीयत* इति । नान्यवैराग्यादिति दर्शयति । स ह्यवरभागीयप्रहाणपरिज्ञाम्, रूपरागक्षयपरिज्ञां च लभते । *कश्चित् षड् योऽनागामिफलात् परिहीयत* इति । आनुपूर्विकोऽनागामी । न हि वीतरागपूर्विणः परिहाणिरस्ति; तद्वैराग्यस्य द्विमार्गप्रापणात् । अत एव च *नैव कश्चित् पञ्च लभते* । वीतरागपूर्विणो हि यदि परिहाणिरभविष्यत्, स एव युगपत पञ्च परिज्ञा अलप्स्यतेति ॥ ७० ॥

आचार्ययशोमित्रकृतायाम् अभिधर्मकोशव्याख्यायाम्
अनुशयनिर्देशो नाम पञ्चमं कोशस्थानं

समाप्तम्

---

१. ०आरूप्यधातुवैराग्यात्—का० । २. श्रीलामावाकस्य यदत्र पुण्यम्—का० ।

* नमो बुद्धाय *

# षष्ठं कोशस्थानम्

## (मार्गपुद्गलनिर्देशः)

उक्तं यथा प्रहाणं परिज्ञां[1] लभते। तदपि च—

**क्लेशप्रहाणमाख्यातं सत्यदर्शनभावनात्।**

दर्शनहेया भावनाहेयाश्च क्लेशा इति विस्तरेणोक्तम्[2]। ताविदानीं दर्शनभावनामार्गौ किमनास्रवौ? सास्रवौ? इति वक्तव्यम्। अत इदमुच्यते—

**द्विविधो भावनामार्गो दर्शनाख्यस्त्वनास्रवः ॥१॥**

द्विविधो भावनामार्गः—लौकिकः, लोकोत्तरश्च। दर्शनमार्गस्तु लोकोत्तर एव, त्रैधातुकप्रतिपक्षत्वात्। नवप्रकाराणां दर्शनहेयानां सकृत्प्रहाणाच्च। न हि लौकिकस्य एषा शक्तिरस्ति ॥ १ ॥

---

स्फुटार्थाव्याख्यायाम्

## षष्ठं कोशस्थानम्

**पञ्चमस्य षष्ठस्य च कोशस्थानयोः सम्बन्धमुपदर्शयन्निदमुपन्यस्यति—** *उक्तं यथा प्रहाणमित्यादि। यथा प्रहाणं परिज्ञा लभत इति।* **फले हेतूपचारादिति वचनात्। तदपि च** *"क्लेशप्रहाणमाख्यातम्"* **उक्तम्। कथम्? इत्याह—** *"सत्यदर्शनभावनाद्"* **इति। द्वन्द्वैकवद्भावनिर्देशः। सत्यानां दर्शनाद् भावनाच्च भावनाया इति वा सत्यदर्शनभावनात् कारणाद्** *दर्शनहेया भावनाहेयाश्च क्लेशा इति* **विस्तरेणोक्तम्।**

"दर्शैताः सप्त सप्ताष्टौ त्रिद्विदृष्टिविवर्जिताः।
यथाक्रमं प्रहीयन्ते कामे दुःखादिदर्शनैः।
चत्वारो भावनाहेयाः" (अभि० को० ५. ४)

**इत्यादिना। सत्यदर्शनं च दर्शनमार्गेण, सत्यभावनं च भावनामार्गेणेत्यत इदमुच्यते।** *ताविदानीं* **दर्शनभावनामार्गौ** *किमनास्रवौ सास्रवाविति।*

---

१. परिज्ञाख्यां—का०। २. विस्तरेणाख्यातम्—का०।

'सत्यदर्शनात्' इत्युक्तम् । कानीमानि सत्यानि ? कति च ?

**सत्यान्युक्तानि चत्वारि,**

क्वोक्तानि ? सास्रवानास्रवधर्मनिर्देशे[1] । "अनास्रवा मार्गसत्यम्" इति स्वशब्देन "प्रतिसंख्यानिरोधो यो विसंयोगः" इति निरोधसत्यम्, "दुःखं समुदयो लोकः" इत्यत्र दुःख-समुदयसत्ये ।

किमेष एवैषामनुक्रमः ? नेत्याह । किं तर्हि ?

**दुःखं समुदयस्तथा ।**

**निरोधमार्ग इति,**

एष एषामनुक्रमः । स्वभावस्तु यथा पूर्वमुक्तस्तथैवेतिप्रदर्शनार्थस्तथाशब्दः । स पुनरयम्—

**एषा यथाऽभिसमयं क्रमः ॥२॥**

यस्य हि सत्यस्याभिसमयः पूर्वस्तस्य[2] पूर्वनिर्देशः । इतरथा हि पूर्वं हेतुनिर्देशोऽभविष्यत्, पश्चात् फलनिर्देशः । केषांचिदुत्पत्त्यनुकूला देशना, यथा स्मृत्युपस्थानध्यानादीनाम् । केषांचित् प्ररूपणानुकूला देशना, यथा सम्यक्

मार्गनिर्देशोपन्यास इति सम्बन्धः । *त्रैधातुकप्रतिपक्षत्वादिति* । दर्शनमार्गस्य । लौकिकत्वे सति भवाग्रप्रतिपक्षो न स्यादिति । *किं च नवप्रकाराणां दर्शनहेयानां सकृत्प्रहाणाच्च* । न भावनामार्गवत् । *न हि लौकिकस्यैषा शक्तिरस्ति* । त्रैधातुकप्रहाणे च प्रकारप्रहाणे च । यदि लोकोत्तरस्य नवप्रकारसकृत्प्रहाणे शक्तिः, भावनाहेयानामपि लोकोत्तरेण सकृत्प्रहाणप्रसङ्गः । लोकोत्तरेणैव सकृत्प्रहाणमित्यवधार्यते । न तु सकृत्प्रहाणमेव लोकोत्तरेणेति, अतो न तत्प्रसङ्गः । भावनाहेया हि क्लेशा दृढाः; सवस्तुकत्वात् । अतो लोकोत्तरेणाप्येषां न सकृत्प्रहाणम् ॥ १ ॥

*इतरथा हीति* । यदि यथाभिसमयं निर्देशो नाभिप्रीयेत । *पूर्वं हेतुनिर्देशः* समुदयसत्यनिर्देशः । हेतूनां लोके पूर्वं दृष्टत्वात् । *यथा स्मृत्युपस्थानध्यानादीनामिति* । *तद्यथा स्मृत्युपस्थानादीनामुपपत्त्यनुकूला देशना* । कायस्मृत्युपस्थानं

१. द्र० अभि० को० प्र० को०, ४-८ का० । २. पूर्वस्य—का० ।

प्रहाणानाम्। न ह्येष नियमो यत् पूर्वमुत्पन्नानां प्रहाणाय छन्दं जनयति, पश्चादनुत्पन्नानामनुत्पादायेति। सत्यानां त्वभिसमयानुकूला देशना।

किं पुनः कारणमेवमेवैषां सत्यानामभिसमयः? यत्र हि सक्तो येन च बाध्यते यतश्च मोक्षं प्रार्थयते, तदेवादौ व्यवचारणावस्थायां दुःखसत्यं परीक्ष्यते। पश्चात् कोऽस्य हेतुरिति समुदयसत्यम्, कोऽस्य निरोध इति निरोधसत्यम्, कोऽस्य इति मार्गसत्यम्। व्याधिं दृष्ट्वा तन्निदानक्षयभेषजान्वेषणवत्।

सूत्रेऽप्येष एव सत्यानां दृष्टान्तो दर्शितः। कतमस्मिन् सूत्रे? "चतुर्भिरङ्गैः समन्वागतो भिषक् शल्यापहर्ता[1]" इत्यत्र। यथा च व्यवचारणावस्थायां सत्यपरीक्षा

---

हि पूर्वमुत्पद्यते यथौदारिकालम्बनतः, सूक्ष्मौदारिकप्रचारतो वा, पूर्वोत्तरहेतुफलभावतो वा। ततो वेदनास्मृत्युपस्थानम्, ततश्चित्तस्मृत्युपस्थानमित्येषामुपपत्त्यनुकूला देशना। एवं ध्यानानाम्। आदिशब्देन विमोक्षाभिभ्वायतनकृत्स्नायतनादीनामप्युपपत्त्यनुकूला देशना। केषाञ्चित् *प्ररूपणानुकूलेति*। प्रदर्शनानुकूला। अवबोधानुकूलेत्यर्थः। *यथा सम्यक्प्रहाणानामिति*। कृष्णशुक्लपक्षयोः प्रत्येकमुत्पन्नानुत्पन्नभेदतः। उत्पन्नं हि सुखावबोधम् नानुत्पन्नम्। कृष्णपक्षो वा विनेयजनेन सुखमवबुध्यते। कथम्? उत्पन्नानां पापकानामकुशलानां धर्माणां प्रहाणाय छन्दं जनयति व्यायच्छते वीर्यमारभते चित्तं प्रगृह्णाति प्रणिदधाति। अनुत्पन्नानामनुत्पादाय छन्दं जनयतीति पूर्ववत्। अनुत्पन्नानां कुशलानां धर्माणामुत्पादाय छन्दं जनयतीति पूर्ववत्। उत्पन्नानां स्थितये असम्मोषतायै छन्दं जनयतीति पूर्ववत्। *न ह्येष नियमो यत्पूर्वमुत्पन्नानां प्रहाणाय छन्दं जनयतीति। पश्चादनुत्पन्नानामनुत्पादायेति*। किं तर्हि? पूर्वं चानुत्पन्नानामनुत्पादाय छन्दं जनयति, पश्चाच्चोत्पन्नानां प्रहाणायेत्येदुदाहरणम्। एवं शुक्लपक्षोऽपि योज्यः। *सत्यानां त्वभिसमयानुकूलेति*। हेतुफलयोः पूर्वपश्चाद्भावेन दुःखसमुदयसत्ययोः पश्चात्पूर्वनिर्देशप्रसङ्ग इति दर्शयति।

*यत्र हि सक्त* इति। दुःखसत्ये। येन बाध्यत इति तेनैवम्। *यतश्च मोक्षमिति*। तत एव दुःखसत्यात्। तदेवादौ प्रयोगावस्थायाम्। कस्मात्? इत्याह—*व्यवचारणावस्थायां* परीक्षावस्थायाम्। निर्वेधभागीयावस्थायामित्यर्थः। *व्याधिं दृष्ट्वेति*। व्याधिर्दुःखसत्यस्योपमानम्। *तन्निदानं* समुदयसत्यस्य। *तत्क्षयो* निरोधसत्यस्य। तद्भेषजं मार्गसत्यस्योपमानम्।

सूत्रेऽप्येष सत्यानां दृष्टान्त इति। *व्याध्यादिसूत्रे*। कथम्? "चतुर्भिरङ्गैः

---

१. तल्पसर्ता—का०।

तथाभिसमयावस्थायां सत्याभिसमयः । पूर्वविधात्, दृष्टभूमिनिःसंगाश्वप्रसरणवत्[1] ।

अभिसमय इति कोऽर्थः ? अभिसंबोधः । इणो बोधनार्थत्वात् । कस्मादनास्रव एव, न सास्रवः ? स हि निर्वाणाभिमुखः सम्यग्बोधः । सम्यगिति तत्त्वेन । तत्र फलभूता उपादानस्कन्धा दुःखसत्यम् । हेतुभूताः समुदयसत्यम्, समुदेत्यस्मदिति कृत्वा । अत एव तयोः फलहेतुभावान्नामतो भेदः, न द्रव्यतः । निरोधमार्गयोस्तु द्रव्यतोऽपि ।

आर्यसत्यानीति सूत्र उच्यन्ते । कोऽस्यार्थः ? आर्याणामेतानि सत्यानि तस्मादार्यसत्यानीति सूत्र एवोक्तम् । किमन्येषामेतानि मृषा ? सर्वेषामेतानि सत्यानि; अविपरीतत्वात् । आर्यैस्तु यथैतानि तथा दृष्टानि, नान्यैः । अत आर्याणामेतानि सत्यान्युच्यन्ते न त्वनार्याणाम्; विपरीतदर्शनात् ।

---

*समन्वागतो भिषक् शल्यापहर्ता* राजार्हश्च भवति राजयोग्यश्च, राजाङ्गत्वे च संख्यां गच्छति । *कतमैश्चतुर्भिः ? आबाधकुशलो भवति, आबाधसमुत्थानकुशलः, आबाधप्रहाणकुशलः*, प्रहीणस्य चाबाधस्यायत्यामनुत्पादकुशलः । एवमेव चतुर्भिरङ्गैः समन्वागतस्तथागतोऽर्हन् सम्यक्सम्बुद्धोऽनुत्तरो भिषक् शल्यापहर्तेत्युच्यते । कतमैश्चतुर्भिः ? इह भिक्षवस्तथागतोऽर्हन् सम्यक्सम्बुद्ध इदं दुःखमार्यसत्यमिति यथाभूतं प्रजानाति । अयं दुःखसमुदयः, अयं दुःखनिरोधः, इयं दुःखनिरोधगामिनी प्रतिपदार्यसत्यमिति यथाभूतं प्रजानाति" इति । *पूर्वविधादिति* । पूर्वाक्षेपात् । *दृष्टभूमिनिःसङ्गाश्वप्रसरणवदिति* । यथा भूमौ दृष्टायां निःसङ्गमश्वस्य प्रसरणम्, तद्वत् । *अश्वधावनवदिति* केचित् पठन्ति । 'धावि' प्रकृत्यन्तरं व्याचक्षते । *इणो बोधनार्थत्वादिति* । सर्वो गत्यर्थो बोधनार्थोऽपि भवतीति ।

*द्रव्यतोऽपीत्यपिशब्दात्* नामतोऽपीति दर्शितम् ।

*अविपरीतत्वादिति* । यस्मात् तदार्याणामन्येषां चाविपरीतम् । दुःखमेव नान्यथा । *आर्यैस्तु यथैतानि* सत्यानि *तथा दृष्टानि* । दुःखसत्यं दुःखतः अनित्यतः शून्यतोऽनात्मतश्च । एवं यावन्मार्गो मार्गतः न्यायतः प्रतिपत्तितो नैर्याणिकतश्च । *नान्यैरनार्यैः एवं दृष्टानि । अत आर्याणामेतानि सत्यान्युच्यन्ते । न त्वनार्याणां* सत्यान्युच्यन्ते । कस्मात् ? *विपरीतदर्शनात्* । ते हि दुःखमदुःखत

---

१. धावनवत्—का० ।

"यदार्याः सुखतः प्राहुस्तत् परे दुःखतो विदुः ।
यत् परे सुखतः प्राहुस्तदार्या दुःखतो विदुः ॥" (　　)

इति गाथा । द्वे आर्याणां सत्ये द्वे आर्ये चार्याणां च सत्ये इत्यपरे ॥२॥

यदा वेदनैकदेशो दुःखस्वभावः, कथं सर्वे सास्रवाः संस्कारा दुःखमित्युच्यन्ते ?

**दुःखास्त्रिदुःखतायोगाद् यथायोगमशेषतः ।**
**मनापा अमनापाश्च तदन्ये चैव सास्रवाः ॥३॥**

तिस्रो हि दुःखताः—दुःखदुःखता, विपरिणामदुःखता, संस्कारदुःखता च । ताभिर्यथायोगमशेषतः सर्वे सास्रवाः संस्कारा दुःखाः ।

तत्र मनापा विपरिणामदुःखतया, अमनापा दुःखदुःखतया । तेभ्योऽन्ये संस्कारदुःखतया ।

के पुनर्मनापाः ? केऽमनापाः ? के नोभयथा ?

---

इत्येवमादिभिराकारैर्दुःखसत्यं पश्यन्ति, समुदयमसमुदयत इत्येवमादिभिः, निरोधमनिरोधत इत्येवमादिभिः, मार्गममार्गत इत्येवमादिभिरिति ।

*तत् परे दुःखतो विदुरिति* । तद्यथा निरोधसत्यं व्यथन्तेऽपुनर्भवात् प्रपातादिव बालिशा इति ।

*आर्यास्तु दुःखतो विदुरिति* उपादानस्कन्धपञ्चकः ।

*द्वे आर्याणां सत्ये* इति । दुःखसमुदयसत्ये ; अविपरीतदर्शनात् । *द्वे आर्ये* । कुशलतया, अनास्रवतया च । आर्याणां च सत्ये, अविपरीतदर्शनात् । एवमेकशेषनिर्देशाच्चार्यसत्ये इति भवति ॥ २ ॥

*यदा वेदनैकदेशो दुःखस्वभाव* इति । वेदनास्कन्धैकदेशो दुःखदौर्मनस्यस्वभावः ।

*"यथायोगमशेषतः"* इति । *मनापा अपि विपरिणामदुःखतया संस्कारदुःख*तया च *दुःखा* । *अमनापा दुःखदुःखतया* संस्कारदुःखतया च । *तदन्ये* दुःखाः संस्कारदुःखतयैवेति *यथायोगार्थः* । मन आप्नुवन्तीति मनापाः । पुनः सन्धिकरणं चात्रेति व्याख्यातम् । *तेभ्योऽन्य* इति मनापामनापेभ्योऽन्य इति ।

तिस्रो वेदना यथाक्रमं तद्वशेन सुखवेदनीयादयोऽपि संस्कारा मनापादिसंज्ञां लभन्ते। सुखाया हि वेदनाया विपरिणामेन दुःखता। सूत्र उक्तम्—"सुखा वेदना उत्पादसुखा स्थितिसुखा विपरिणामदुःखा" इति। दुःखायाः दुःखस्वभावेनैव दुःखता। "दुःखा वेदना उत्पाददुःखा स्थितिदुःखा" ( ) इति सूत्रे। अदुःखासुखा-वेदनायाः संस्कारेणैव दुःखता। "प्रत्ययाभिसंस्करणाद्यदनित्यं तद्दुःखम्" इति।

वेदनावत् तद्वेदनीया अपि संस्कारा वेदितव्याः[१]।

---

*तिस्रो वेदना यथाक्रममिति*। सुखा वेदना मनापा, दुःखा अमनापा, अदुःखासुखा नैव मनापा नामनापेत्यर्थः। *तद्वशेनेति*। वेदनावशेन। अवेदना-स्वभावा अपि रूपशब्दादयस्तदनुकूलत्वात् *मनापादिसंज्ञां लभन्ते*। *विपरिणामेन दुःखतेति*। अनित्यताविपरिणामेनेत्यर्थः। यथोक्तम्—

"हा चैत्ररथ हा वापि हा मन्दाकिनि हा प्रिये।
इत्यार्त्ता विलपन्तोऽपि गां पतन्ति दिवौकसः"॥ ( )

इति। *दुःखस्वभावेनैवेति*। उपघातस्वभावेनेत्यर्थः। *दुःखा वेदना उत्पाददुःखा स्थितिदुःखेति*। नन्वेषा अर्थापत्तितो विपरिणामसुखा प्राप्नोति, तथा च सति लक्षणसङ्करः स्यात्? नेदमस्या लक्षणम्। किं तर्हि? विदूषणार्थमयमुपदेश इति। अथ वा भवत्वेव सात्र। येन रूपेण विदूष्यते, तदेवेहापेक्ष्यते[२] इति दुःखैव भवति। यथा—सुखा वेदना उत्पादस्थितिसुखत्वात् सुखापि सती विपरिणाम-दुःखतया दुःखेत्येव विदूष्यते; विदूषणीयत्वेनाभिप्रीयमाणत्वादिति। *संस्कारेणैव दुःखतेति*। संस्करणेनैव जननेनैवेत्यर्थः। यदनित्यम् तद् दुःखम्, यन्न नियतस्थितम् तद् दुःखम्, यज्जायते विनश्यति च तद् दुःखमित्यर्थः। तेनोक्तम्—*प्रत्ययाभिसंस्करणादिति*। प्रत्ययैरभिसंस्क्रियते यस्मात्। तस्मात् तद् दुःखमिति। *वेदनावत्तद्वेदनीया अपि संस्कारा वेदितव्या* इति। सुखवेदनीयानां संस्काराणां विपरिणामेन दुःखता। सुखवेदनीयाः संस्कारा उत्पादसुखाः स्थितिसुखा विपरिणामदुःखा इति। दुःखवेदनीयानां संस्काराणां दुःखवेदनीय-स्वभावेनैव दुःखता। दुःखवेदनीयाः संस्कारा उत्पाददुःखा स्थितिदुःखा इति। अदुःखासुखवेदनीयानां संस्काराणां संस्कारेणैव दुःखता; प्रत्ययाभिसंस्करणात्। यदनित्यं तद् दुःखमिति।

---

१. उच्यन्ते—का०। २. तदेवेपेक्षते—जा०।

दुःखमेव दुःखता दुःखदुःखता । एवं यावत् संस्कारा एव दुःखतेत्यपरे । असाधारणत्वात् मनापामनापानां विपरिणामदुःखदुःखते उक्ते । सर्वे तु संस्काराः संस्कारदुःखतया दुःखाः । तांस्त्वार्या एव पश्यन्ति ।

आह चात्र—

"ऊर्णापक्ष्म यथैव हि करतलसंस्थं न वेद्यते पुम्भिः ।
अक्षिगतं तु तथैव हि जनयत्यरतिं च पीडां च ॥
करतलसदृशो बालो न वेत्ति संस्कारदुःखतापक्ष्म ।
अक्षिसदृशस्तु विद्वांस्तेनैवोद्विज्यते गाढम्" ॥ इति

न हि बालानामावीचिकेष्वपि स्कन्धेषु तथा दुःखबुद्धिः प्रवर्तते, यथार्याणां भावाग्रिकेष्वपीति । एवं तर्हि मार्गेऽपि[1] संस्कारदुःखताप्रसङ्गः ? संस्कृतत्वात् । प्रतिकूलं हि दुःखमिति लक्षणान्न मार्गो[2] दुःखम् । न हि तस्योत्पाद आर्याणां

---

*दुःखमेव दुःखता दुःखदुःखता । यावदिति* वचनात् विपरिणाम एव दुःखता विपरिणामदुःखता, संस्कार एव दुःखता *संस्कारदुःखतेति* वाच्यम् । अयं पर्यायो विग्रहेणैव विशिष्टो नार्थेन । स एव ह्यत्रार्थो ग्रहीतव्यः । *असाधारणत्वादिति* विस्तरः । मनापाः संस्कारा असाधारणा दुःखदुःखतायाः । अतस्तेषामसाधारणत्वाद् विपरिणामदुःखतोक्ता । *अमनापाश्चा*साधारणा विपरिणामदुःखतायाः । अतस्तेषा*मसाधारणत्वाद्* दुःखदुःखतोक्तेति । *सर्वे तु* मनापादयः *संस्कारदुःखतया दुःखाः*; तस्या व्यापिनीत्वात् । यदि सर्वेऽपि तथा दुःखाः, कस्मात् सर्वे (विपरिणामदुःखतया) न पश्यन्तीति ? अत आह—*तां त्वार्या एव पश्यन्ति* । नान्ये । कथमिदमुपन्यस्यते ? *आह चात्रेति* सर्वम् ।

*एवं तर्हीति* । यदि संस्कारदुःखतया सर्वेऽपि संस्कारा दुःखाः, *मार्गेऽपि संस्कारदुःखताप्रसङ्गः* । *संस्कृतत्वात्* । प्रत्ययजनितत्वादित्यर्थः । *प्रतिकूलं हि दुःखमिति लक्षणान्मार्गो न दुःखमिति* । किमिदमन्यदेवोच्यते, पूर्वमुक्तम्—प्रत्ययाभिसंस्करणात् सर्वसंस्कारा अनित्याः । यच्चानित्यम् तद् दुःखमिति मार्गश्च प्रत्ययाभिसंस्कृतत्वादनित्यः । तस्माद् दुःखमिति प्रसज्येत । यदि हि प्रतिकूलतैव दुःखलक्षणमिष्येत् तत्पूर्वोक्तमलक्षणं स्यात्; तच्चेद् दुःखतालक्षणम् इदमलक्षणमिति ? नैष दोषः । कथम् ? यदनित्यमार्याणां प्रतिकूलं

---

१. मार्गस्यापि—का० । २. मार्गो न—जा० ।

प्रतिकूलः; सर्वदुःखक्षयावाहनात्। यदापि ते निर्वाणं शान्ततः पश्यन्ति, तदापि यदेव दुःखतो दृष्टं तस्यैव निरोधं शान्ततः पश्यन्ति, न मार्गस्य। यदापि दुःखमप्यत्रास्ति तस्माद् दुःखमेवार्यसत्यमुच्यते, सुखस्याल्पत्वात्; मुद्गादिभावेऽपि माषराश्यपदेशवदित्येके। को हि विद्वान् परिषेकसुखाणुकेन गण्डसुखमिति व्यवस्येत्! आह खल्वपि—

"दुःखस्य च हेतुत्वात् दुःखैश्चानल्पकैः समुदितत्वात्।
दुःखे च सति तदिष्टेर्दुःखमिति[1] सुखं[1] व्यवस्यन्ति" ॥ इति

सहैव तु सुखेन सर्वं भवमार्या दुःखतः पश्यन्ति; संस्कारदुःखतैकरसत्वात्। अतो दुःखमेवार्यसत्यं व्यवस्थाप्यते, न सुखम्। कथमिदानीं सुखस्वभावां वेदनां

---

तद् दुःखमित्ययमत्राभिप्रेतोऽर्थः। किं चानित्यमार्याणां प्रतिकूलम्? यत्सास्रवं वस्तु। कस्मात् पुनरनास्रवो मार्गस्तथैवानित्योऽपि न चार्याणां प्रतिकूलः? इत्यत आह - *न हि तस्योत्पाद आर्याणां प्रतिकूलः; सर्वदुःखक्षयावाहनादिति*। अविशेषाभिधानेऽपि हि लोके विशेषप्रतिपत्तिर्दृष्टा। तद्यथा—गमनाद् गौः, न च गमनान्महिषोऽपि गौर्भवति। एवं ह्यर्थे नियते गौः (कस्मिंचिद्भवति) कस्माद्भवति? यस्माद् गच्छतीति। एवमिहापि यत् सास्रवं वस्तु तत्प्रतिकूलमार्याणाम्। कस्मात्? अनित्यत्वादिति। *यदेव दुःखतो दृष्टमिति*। सास्रवं वस्तु। *तस्यैव निरोधं शान्ततः पश्यन्ति*। *न मार्गस्येत्यवगन्तव्यम्*। *मुद्गादिभावेऽपि माषराश्यपदेशवदिति*। माषराशौ मुद्गमसूरकलायादिसद्भावेऽप्यल्पत्वान् मुद्गादीनां माषराशिरिति लोके व्यपदेशो दृश्यते, तद्वत्। *परिषेकसुखाणुकेनेति*। सुखं च तदणुकं च सुखाणुकम्, परिषेकेण सुखाणुकं *परिषेकसुखाणुकम्, तेन*।

*आह खल्वपीति*। *भदन्तकुमारलातः दुःखसन्तत्याम्*। *दुःखस्य च हेतुत्वाद् इति*। सुखं दुःखस्य हेतुर्दुःखवेदनीयेन कर्मणा सम्प्रयुक्तत्वादिति।

*दुःखैश्चानल्पकैः समुदितत्वात्*। यस्माच्चातिबहुभिर्दुःखैः परसेवाकृत्यादिकृतैः समुदितं सुखमुत्पद्यते। *दुःखे च सति तदिष्टेः*। यस्माच्च क्षुत्पिपासादिकृते दुःखे सति भोजनपानादिकृतं सुखमिष्टम्, नान्यथा। अत एभ्यः कारणेभ्यो *दुःखमिति सुखं व्यवस्यन्तीति*।

*सहैव तु सुखेनेति*। तुशब्दः पूर्वपक्षव्यावर्तनार्थः। *संस्कारदुःखतैकरसत्वादिति*। *संस्कारदुःखतैकप्रकारत्वात्*। *कथमिदानीं सुखस्वभावामिति*। कथमदुःखस्वभावां

---

१-१. दुःखं सुखमिति—का०।

दुःखतः पश्यन्ति ? अनित्यतया प्रतिकूलत्वात् । यथा रूपसंज्ञादीन्यपि दुःखतः पश्यन्ति । न च तान्येवं दुःखानि, यथा दुःखा वेदनेति ।

यस्तु मन्यते—दुःखहेतुत्वादिति । तस्यासौ समुदयाकारः स्यान्न दुःखाकारः । आर्याणां च रूपारूप्योपपत्तौ कथं दुःखसंज्ञा प्रवर्तते[1] ! न हि तेषां[2] दुःखवेदनाहेतुः स्कन्धा भवन्ति । संस्कारदुःखता च सूत्रे किमर्थमुक्ता[3] भवेत् !

यदि तर्ह्यनित्यत्वात् दुःखतः पश्यन्ति, अनित्यदुःखाकारयोः कः प्रतिविशेषः ? उदयव्ययधर्मित्वादनित्यं पश्यन्ति । यथा[4] प्रतिकूलत्वाद् दुःखम् । अनित्यं तु दृश्यमानं प्रतिकूलं भवतीत्यनित्याकारो दुःखाकारमाकर्षति ।

---

वेदनां दुःखतः *पश्यन्ति । अनित्यतया प्रतिकूलत्वादिति* । अनित्यत्वात् प्रतिकूलं प्रतिकूलत्वाद् दुःखतः पश्यन्तीत्यर्थः । *यथा रूपसंज्ञादीन्यपीति* । यथा रूपसंज्ञासंस्कारविज्ञानान्यपि *दुःखतः पश्यन्ति । न च तान्येवं दुःखानि । यथा दुःखा वेदना* । तस्या उपघातकस्वभावत्वात्, तेषां वा तल्लक्षणत्वात् ।

*यस्तु मन्यत इति* । भदन्तकुमारलातः । *तस्य* भदन्तस्यासौ *समुदयाकारः स्यान्न दुःखाकारः* । दुःखहेतुतो दर्शनात् । *किञ्च—आर्याणां* चानागामिनां *रूपारूप्योपपत्तौ कथं दुःखसंज्ञा प्रवर्तते* । नैव प्रवर्तते इत्यर्थः । *न हि तेषाम*नागामिनां दुःखवेदनाहेतुः दुःखाया वेदनाया हेतुः । के ? स्कन्धा रूपारूप्यावचराः । कस्मान्न हेतुः ? पुनर्दुःखस्थानानागमनात् । *संस्कारदुःखता च सूत्रे किमर्थमुक्ता भवेदिति* । यदि दुःखहेतुत्वात् सुखमपि दुःखतः पश्यन्ति, येयं संस्कारदुःखतोक्ता—'यदनित्यम् तद् दुःखम्' इति, सा किम्प्रयोजना ? दुःखहेतुत्वेनैव तत्प्रयोजनसिद्धेः ।

दुःखहेतुवाद्याह—*यदि तर्हीति* । *यदि* यदनित्यम् तद् दुःखमित्य*नित्यत्वाद् दुःखतः पश्यन्ति* न दुःखहेतुत्वाद*नित्यदुःखाकारयोः कः प्रतिविशेषः* ।

अत्राचार्य आह—*उदयव्ययधर्मित्वादिति* विस्तरः । यथा प्रतिकूलत्वाद् दुःखम् तथा तत्प्रतिपादयन्नाह—*अनित्यं तु दृश्यमानं प्रतिकूलं भवतीत्यनित्याकारो दुःखाकारमाकर्षतीति* । तदुक्तं भवति—यदिदमुक्तं 'यदनित्यम् तद् दुःखम्' इति, नाकारैकत्वादेवमुक्तम्; अपि त्वनित्यं तत् सुखं पश्यतां प्रतिकूलं भवति । प्रतिकूलत्वाद् दुःखतः पश्यन्तीति ।

---

१. प्रवर्तेत—का० । २. पुनस्तेषां—का० ।
३. पृथगुक्ता—का० । ४. का० पुस्तके नास्ति ।

नास्त्येव सुखा वेदनेत्येकीयाः, दुःखैव तु सर्वा। कथमिदं गम्यते ? सूत्राद्, युक्तितश्च। कथं तावत् सूत्रात् ? उक्तं हि भगवता—"यत् किंचिद्वेदितमिदमत्र दुःखस्य" इति, "सुखा[1] वेदना दुःखतो द्रष्टव्या" इति, "दुःखे सुखमिति संज्ञाविपर्यासः" इति। एवं तावत् सूत्रात्। कथं[2] युक्तितः ? सुखहेत्वव्यवस्थानात्। य एव हि केचित् पानभोजनशीतोष्णादय इष्यन्ते सुखहेतवः, त एवात्युपयुक्ता अकालोपयुक्ताश्च पुनर्दुःखहेतवः संपद्यन्ते। न च युक्ता सुखहेतुवृद्ध्या समेन वाऽन्यस्मिन् काले दुःखोत्पत्तिरित्यादित एव ते दुःखहेतवः, न सुखस्य। अन्ते तु तद् दुःखं वृद्धिमापन्नं व्यक्तिमापद्यत इति। एवमीर्यापथविकल्पेऽपि वक्तव्यम्। दुःखप्रतिकारे च सुखबुद्धेर्दुःखविकल्पे च। न हि तावत् सुखमिति वेद्यते किञ्चिद् यावन्न दुःखान्तरेणोपद्रुतो भवति क्षुत्पिपासाशीतोष्णश्रम[illegible]। तस्मात् प्रतीकार एवाविदुषां सुखबुद्धिः, न सुखे दुःखविकल्पे च बालाः सुखबुद्धिमुत्पादयन्ति, यथा—अंशादंशं भारं सञ्चारयन्तः।

अस्त्येवेत्याभिधार्मिकाः। एष एव च न्यायः। कथं कृत्वा ? इदं हि तावदयं प्रष्टव्यः सुखापवादी—किमिदं दुःखं नाम, यद् बाधनात्मकं चेत्,

---

*एकीया* इति। भदन्तश्रीलातादयः। *इदमत्र दुःखस्येति*। इदमत्र दुःखस्य लक्षणमित्यर्थः। *सुखा वेदना दुःखतो द्रष्टव्येति*। अपरं सूत्रपदम्। *शीतोष्णादय* इति। *आदिशब्देनाम्लमधुरादयो गृह्यन्ते*। *अत्युपयुक्ता* अतिपरिभुक्ताः। *अकालोपयुक्ताश्चेति*। तद्यथा शीता हेमन्ते, उष्णा ग्रीष्मे। *समेन वेति*। सुखहेतुना। *एवमीर्यापथविकल्पेऽपि वक्तव्यमिति*। य एव हि शयनादय इष्यन्ते सुखहेतवः त एवेति सर्वं यावद् व्यक्तिमापद्यन्त इति वक्तव्यम्। *दुःखप्रतीकारे च सुखबुद्धेः*। किम् ? नास्ति सुखा वेदनेति प्रकृतम्। *दुःखविकल्पे च*। किम् ? सुखबुद्धेः। तथैव नास्ति सुखा वेदनेति। दुःखप्रतीकारे सुखबुद्धिं प्रतिपादयन्नाह—*न हि तावत्सुखमिति* विस्तरः। दुःखविकल्पेनेति प्रतिपादयन्नाह—*दुःखविकल्पे च बाला* इति विस्तरः। *अंशादंशं भारं सञ्चारयन्तो भारवाहका* दुःख एवावस्थिते भारातिक्रामणे सुखमिति बुद्धिमुत्पादयन्ति।

---

1. दुःखा—का०। 2. कथः—का०।

कथमिति वक्तव्यम् ? उपघातकं चेत् , अनुग्राहकं सुखमिति सिद्धम् । अनभिप्रेतं चेत् , अभिप्रेतं सुखमिति सिद्धम् । तदेव ह्यभिप्रेतं पुनरनभिप्रतं[1] भवत्यार्याणां नैवाल्पकाले । तस्मादनिष्पन्नमभिप्रेतत्वं चेत् ? न; अन्यथाऽनभिप्रेतत्वात् । या हि वेदना स्वेन लक्षणेनाभिप्रेता, नासौ पुनस्तेनैव जात्वनभिप्रेता भवति । तथा ह्येनामाकारान्तरेण विदूषयन्त्यार्याः, प्रमादपदं चैनां पश्यन्ति महाभिसंस्कारसाध्यां च विपरिणामिनीं चानित्यां च, येनानभिप्रेता भवति । न तु खलु स्वलक्षणाकारेण । यदि चासौ स्वेनात्मनानभिप्रेता भवेन्नैव तस्यां कस्यचिद्रागो भवेद्, यतो वैराग्यार्थमाकारान्तरेणापि[2] दोषवतीं पश्येयुः । तस्मादस्त्येव स्वलक्षणतः सुखा वेदना ॥

यत्तु भगवतोक्तम्—"यत् किञ्चिद्वेदितमिदमत्र दुःखस्य" इति तद्भगवतैव नीतार्थम्—"संस्कारानित्यतामानन्द मया सन्धाय भाषितं संस्कारविपरिणामतां च, यत् किञ्चिद्वेदितमिदमत्र दुःखस्य" इति । अतो न दुःखदुःखतां सन्धायैतदुक्तमिति सिद्धं भवति । यदि च स्वभावत एव सर्वं वेदितव्यं दुःखमभविष्यत्, किमर्थमार्यानन्द एवं भगवन्तमप्रक्ष्यत्—'तिस्र इमे वेदना उक्ता भगवता सुखा दुःखाऽदुःखासुखा च । उक्तं चेदं भगवता—यत् किञ्चिद्वेदितमिदमत्र दुःखस्य इति । किं नु सन्धाय भगवता भाषितम्—यत्किञ्चिद्वेदितमिदमत्र दुःखस्य' इति । एवं हि

---

एष एव च न्याय इति । आचारः । *अनभिप्रेतं भवत्यार्याणामिति* कामसुखम् । *अन्यथानभिप्रेतत्वादिति* । प्रमादपदत्वादीनाकारान्तरेण । तदर्थं दर्शयन्नाह—*या हि वेदनेति* विस्तरः । *प्रमादपदमिति* । कुशलप्रच्युतिकारणमित्यर्थः । *महाभिसंस्कारसाध्यां च विपरिणामिनीं च* । समनन्तरदुःखोत्पादिनीमदुःखासुखोत्पादिनीं चेत्यर्थः । न्यूनरूपत्वमापन्नामिति वा । *अनित्यां च* विनाशिनीं चेत्यर्थः । *न तु खलु स्वलक्षणाकारेणेति* । अनुग्राहकस्वलक्षणाकारेण आर्याणामपि हि सुखवेदनानुग्राहकेभ्यो विसंवादः । *यदि चासौ* सुखा वेदना स्वेनात्मनानुग्राहकात्मनानभिप्रेता भवेत् नैव तस्यां सुखायां वेदनायां *कस्यचिद्रागो भवेत्* । दुःखवेदनावदित्यभिप्रायः । *यतो वैराग्यार्थमिति* । *यतः* कारणात् *वैराग्यार्थमाकारान्तरेणापि दोषवतीं पश्येयुः* । अन्यथानायासेनैव रागभावसिद्धेः वैराग्यार्थं प्रयत्नोऽनर्थकः स्यात् ।

*उक्तं चेदं भगवतेति* । *स्थविरानन्दवचनमेवैतत् सूत्रपदम्* । *एवं हि*

---

१. मनभिप्रीतं—जा० । २. प्रकारान्तरेणापि—का० ।

सोऽप्रक्ष्यत्—'किं नु संधाय भगवता भाषितं तिस्रो वेदनाः' इति। भगवानपि चैवं[1] व्याकरिष्यत्—'इदं मया संधाय भाषितं तिस्रो वेदनाः' इति, न त्वेवमाह। तस्मात् सन्त्येव स्वभावतस्तिस्रो वेदनाः। 'इदं तु संधाय मया भाषितं यत्किंचिद्वेदितमिदमत्र दुःखस्य' इत्याभिप्रायिकमेतद्वाक्यं दर्शयति।

यदप्युक्तम्—"सुखा वेदना दुःखेति द्रष्टव्या" इति। उभयं तस्यामस्ति। सुखत्वं च स्वभावतो मनापत्वाद्, दुःखत्वं च पर्यायतो विपरिणामानित्यधर्मित्वात्[2]। सा तु सुखतो दृश्यमाना बन्धाय कल्पते, तदास्वादनात्। दुःखतो दृश्यमाना मोक्षाय कल्पते, तद्वैराग्यादिति। यथा दृश्यमाना मोक्षाय कल्पते तथैनां द्रष्टुमाज्ञापयन्ति बुद्धाः।

कथमिदं गम्यते—स्वभावतः सा सुखेति? यदाह—

"संस्कारानित्यतां ज्ञात्वा अथो विपरिणामताम्।
वेदना दुःखतः प्रोक्ता सम्बुद्धेन प्रजानता॥ इति ( )।

यदपि चोक्तम्—"दुःखे सुखमिति संज्ञाविपर्यासः" इति? आभिप्रायिक एष निर्देशः। लोकस्य हि सुखसंज्ञा वेदनायां कामगुणेषूपपत्तौ च। तत्र सुखां

---

*सोऽप्रक्ष्यदिति*। यत्किंचिद्वेदितम्। इदमत्र दुःखस्येति एतदयुक्तरूपं वचनमिति पश्यन् स्थविरानन्दस्तदेव पृष्टवान्। यत्किंचिद्वेदितमिदमत्र दुःखस्येति विरुद्धमेवेति कृत्वा। यदि तु *तिस्रो वेदना* इत्येतदयुक्तरूपमद्रक्ष्यत्, तदेवाप्रक्ष्यत्, किं नु सन्धाय भगवता भाषितं तिस्रो वेदना इत्येतद् विरुद्धमेवेति कृत्वा। *भगवानपि चैवं व्याकरिष्यदिदं मया सन्धाय भाषितं तिस्रो वेदना इति*। *न त्वेवं व्याकरिष्यत्*। संस्कारानित्यतामानन्द सन्धाय मया भाषितम्, संस्कारविपरिणामताम्। यत्किंचिद् वेदितमिदमत्र दुःखस्येति। *न त्वेवमाह*। पुनश्च तिसृणां वेदनानां वचनात् *तस्मात् सन्त्येव स्वभावतस्तिस्रो वेदनाः*। इदं तु सन्धाय मया भाषितं यत्किंचिद् वेदितमिदमत्र दुःखस्येति वचनाद*भिप्रायिकमेतद्वाक्यं दर्शयति* भगवान्। यत्किंचिद् वेदितमत्र दुःखस्येति संस्कारविपरिणामताभिप्रायात्। *विपरिणामानित्यधर्मित्वादिति*। विपरिणामधर्मित्वादनित्यधर्मित्वाच्च। विपरिणामः पुनरन्यथात्वम्। *कामगुणा* इति। इष्टानां

---

१. भगवानप्येवं—का०। २. ०धर्मत्वात्—का०।

वेदनां पर्यायेण दुःखां सतीमेकान्तसुखां पश्यतो विपर्यासः। एवमुपपत्तिम्। तस्मान्नातः सुखवेदनाऽभावसिद्धिः।

यदि तु स्वभावत एव सर्वं वेदितं दुःखमभविष्यत्, 'तिस्रो वेदनाः' इति वचने को गुणोऽभविष्यत्। लोकानुवृत्त्येति चेत् न? सर्ववेदितदुःखत्वस्य संस्कारविपरिणामानित्यतां संधायभाषितवचनात्, यथाभूतवचनाच्च। "यच्च सुखेन्द्रियं यच्च सौमनस्येन्द्रियं सुखैषा वेदना द्रष्टव्या" इति विस्तरेणोक्त्वा "येनेमानि पञ्चेन्द्रियाण्येवं यथाभूतं सम्यक् प्रज्ञया दृष्टानि, त्रीणि चास्य संयोजनानि प्रहीणानि भवन्ति"इत्येवमादि। लोकोऽपि च कथं दुःखां वेदनां त्रिविधां व्यवस्येत्!

मृद्वधिमात्रमध्यासु यथाक्रमं सुखादिबुद्धिरिति चेत्? न; सुखस्यापि त्रिविधत्वात् मृद्वादिषु दुःखेष्वधिमात्रादिसुखबुद्धिः स्यात्। यदा च गन्ध-

---

रूपशब्दगन्धरसस्प्रष्टव्यानामियं संज्ञा। *उपपत्तेरपीष्टस्य* जन्मनः संज्ञा। एवमुपपत्तिमल्पसुखां बहुदुःखामेकान्तसुखां पश्यतो विपर्यासः।

*लोकानुवृत्त्येति* चेत्। अथ मतं लोकस्य वेदनां व्यवस्यतोऽ*नुवृत्त्या* तिस्रो वेदना इति वचनम्। *तन्न भवति। सर्ववेदितदुःखत्वस्य सन्धाय भाषितमिति* भगवतो वचनात्। "संस्कारानित्यतामानन्द मया सन्धाय भाषितं संस्कार-विपरिणामताम्। यत्किञ्चिद् वेदितमिदमत्र दुःखस्य" इति। अतो न लोकानुवृत्त्या तिस्रो वेदना इति वचनम्, किं तर्हि? स्वलक्षणतो निधार्येत्यभिप्रायः। *यथाभूत-वचनाच्च*। न लोकानुवृत्त्या तिस्रो वेदना इति वचनम्। कथमित्याह—*यच्च सुखेन्द्रियं यच्च सौमनस्येन्द्रियम्, सुखैषा वेदना द्रष्टव्येति। विस्तरेणोक्त्वेति।* 'यच्च दुःखेन्द्रियं यच्च दौर्मनस्येन्द्रियम्, दुःखैषा वेदना। यदुपेक्षेन्द्रियम्, अदुःखासुखैषा वेदना" इत्येवमादिना विस्तरेणोक्त्वा *येनेमानि पञ्चेन्द्रियाण्येवं यथाभूतं सम्यक्प्रज्ञया दृष्टानीति*। इदमत्र वेदनात्रयसद्भावे ज्ञापकम्। *यथाभूत*-मिति। अध्यारोपापवादाभावात्। *लोकोऽपि* च *कथं दुःखां वेदनां त्रिविधां* दुःखामदुःखासुखां व्यवस्येद्; दुःखस्वाभाव्येन दुःखव्यवसायस्यैव प्राप्तेः। *मृद्वधिमात्रमध्यास्विति* विस्तरः। अथ मतम्—मृदुनि दुःखे सुखबुद्धिः, अधिमात्रे दुःखबुद्धिः, मध्ये अदुःखासुखबुद्धिरिति। अत्र ब्रूमः—*सुखस्यापि त्रिविधत्वादिति* विस्तरः। मृदुमध्याधिमात्रभेदेन *मृद्वादिषु* दुःखेषु मृदुमध्याधिमात्रेषु।

रसस्प्रष्टव्यविशेषजं सुखं वेदयते, तदा कतमत् दुःखं मृदुभूतम्, यत्रास्य सुखबुद्धिर्भवति ! अनुत्पन्नविनष्टे च तस्मिन् मृदुनि दुःखे सुतरां सुखबुद्धिः स्यात्; अशेषदुःखापगमात् ।

एवं कामसुखसम्मुखीभावेऽपि वक्तव्यम् ।

कथं च नामैतद्[1] योक्ष्यते[2] यन्मृदुनि वेदिते सुव्यक्तस्तीव्रोऽनुभवो[3] गृह्यते, मध्ये पुनरव्यक्त इति । त्रिषु च ध्यानेषु सुखवचनात् मृदु दुःखं स्यात् ।

---

*अधिमात्रादिसुखबुद्धिः स्यादधिमात्रमध्यममृदुः सुखबुद्धिः स्यादित्यर्थः ।* कथम् ? मृदुनि दुःखे अधिमात्रसुखबुद्धिः । मध्ये मध्यसुखबुद्धिः । अधिमात्रे मृदुसुखबुद्धिरिति । न चाधिमात्रे दुःखे मृदुसुखबुद्धिर्युक्ता, किं कारणम् ? अधिमात्रमेव तद् दुखं न स्याद्, यदि तत्र मृदुसुखबुद्धिः स्यात् । मृदुनि च दुःखे यद्यधिमात्रसुखबुद्धिः, कथं तस्य दुःखस्य मृदुत्वम् ! न हि तथा व्यक्तस्यानुभवस्य मृदुत्वं युज्यत इति । अदुःखासुखानन्तरं सुखानुभवं पश्यन्नाह—*यदा गन्धरसस्प्रष्टव्यविशेषजमिति* । मध्यं हि दुःखमदुःखासुखं भवताम्, न मृदुप्रकारम् । अतो वक्तव्यम्—*तदा कतमद् दुःखं मृदुभूतं यत्रास्य सुखबुद्धिर्भवतीति* । विषयबलादेव हि तत् सुखमुत्पद्यते । मृदुदुःखसमनन्तरप्रत्ययबलादधिमात्रदुःखसमनन्तरप्रत्ययबलाद्वेति । *कि च*—यदि मृदुनि दुःखे सुखबुद्धिरिति मन्यसे, *अनुत्पन्नविनष्टे च तस्मिन् मृदुनि दुःख* इति । *अनुत्पन्ने विनष्टे च तस्मिन् मृदुनि दुःखे । सुतरां सुखबुद्धिः स्यात्; अशेषदुःखापगमात्* । यस्मादशेषं दुःखमपगतम्, सशेषापगतेऽपि हि दुःखे सुखबुद्धिमिच्छसि, किमङ्गाशेषापगत इत्यभिप्रायः ।

*एवं कामसुखसम्मुखीभावेऽपि वक्तव्यमिति* । यथा गन्धरसस्प्रष्टव्यविशेषजं सुखमुक्तम्, एवं कामसुखसम्मुखीभावेऽपि वक्तव्यम् । कथम् ? मृदुनि रागदुःखे कामसुखबुद्धिर्भवति । अनुत्पन्ने विनष्टे च तस्मिन् रागदुःखे सुतरां कामसुखं स्यात् । न चैवं दृष्टमिति ।

*कथं च नामेति* विस्तरः । कथं च नामैतद्योक्ष्यते । *यन्मृदुनि वेदिते* । यन्मृदुनि दुःख इत्यर्थः । *तीव्रानुभवो गृह्यत इति* । वक्तव्यम् सुखं गृह्यते । *मध्ये पुनरव्यक्त इति* । मध्यदुःखे अदुःखासुखा वेदना गृह्यते इत्यर्थः । मृदुनि दुःखे तेनाव्यक्तेन भवितव्यमित्यभिप्रायः । *त्रिषु चेति* विस्तरः । *त्रिषु च ध्यानेषु* प्रथमद्वितीयतृतीयेषु *सुखवचनात्* । सुखा वेदना तत्रेति सूत्रे वचनात् । *मृदु दुःखं स्यात्* ।

---

१. नामेदं—का० । २. योज्यते—का० । ३. तीव्रानु०—का० ।

ऊर्ध्वमदुःखसुखवचनान्मध्यं दुःखमिति न युज्यते मृद्वादिष्वदुःखेषु सुखादिवेदना-व्यवस्थानम्। उक्तं च भगवता—"रूपं चेन्महानामन् एकान्तदुःखमभविष्यन्न सुखं न सुखानुगतम्" इत्येवमादि। तस्मादप्यस्ति किञ्चित् सुखम्। एवं तावन्न सूत्रात् सुखवेदनाऽभावः सिध्यति।

यत् पुनः सुखहेत्वव्यवस्थानादित्युक्तम्, हेत्वपरिज्ञानादिदमुच्यते। आश्रय-विशेषापेक्षो हि विषयः सुखहेतुर्वा भवति, दुःखहेतुर्वा। न केवलो विषयः। स यां कामवस्थां प्राप्य सुखहेतुर्भवति न तां पुनः प्राप्य कदाचिन्न भवतीति व्यवस्थित एव सुखहेतुः। तद्यथा—स एवाग्निः पाक्यभूतविशेषापेक्षः स्वादुपाक-हेतुर्भवति स एवास्वादपाकहेतुः, न तु यां पाक्यभूतावस्थां प्राप्य स्वादुपाकहेतुस्तां पुनः प्राप्य न हेतुरित्येष दृष्टान्तः। ध्यानेषु च कथं न व्यवस्थितः सुखहेतुः!

यत्तु पुनः दुःखप्रतिकारे सुखबुद्धिरित्युक्तम्, तत्र विहितः प्रतीकारः। यदा

---

किं कारणम्? मृदुनि दुःखे सुखबुद्धिरिति तवाभिप्रायात्। *ऊर्ध्वं* चतुर्थे ध्याने आरूप्येषु चादुःखासुखवचनात् सूत्रे। *मध्यं दुःखं स्यात्*। कस्मात्? मध्ये दुःखे अदुःखासुखमिति तवैवाभिप्रायात्। *इत्यतो न युज्यते मृद्वादिष्वदुःखेषु सुखादि-वेदनाव्यवस्थानम्*। कथं हि नामाधोध्यानेषु मदु दुःखम् ऊर्ध्वे पुनर्मध्यमिति युज्यते। *रूपं चेन्महानामन्निति*। "*रूपं चेन्महानामन्नेकान्तदुःखमभविष्यत् न सुखं न सुखानुगतं* न सौमनस्यं न सौमनस्यानुगतं न सुखवेदितं हेतुरपि प्रज्ञायते रूपे संरागाय। यस्मात् तर्हि अस्ति रूपं सुखं सुखानुगतं पूर्ववदतो रूपे हेतुः प्रज्ञायते यदुत संरागाय" इति।

*सुखहेत्वव्यवस्थानादिति*। अत्र ब्रूमः—यदि सुखहेत्वव्यवस्थानान्न सुखमस्ति वः, दुःखमप्यसत्स्यात्; दुःखहेत्वव्यवस्थानात्। अपि च व्यवस्थित एव सुखहेतुः। कथम्? इत्याह—*आश्रयविशेषापेक्षो हीति* विस्तरः। यदि हि केवल एव विषयो हेतुः स्यात् स्यादेवाव्यवस्थितो हेतुः, न तु केवलो विषयो हेतुः। यस्मादाश्रय-विशेषोऽपि हेतुरिति। *स एवाग्निरिति*। तद्यथा—स एवाग्निः पाक्यभूतविशेष ईषत्पक्वावस्थे तण्डुलसमूहे *स्वादुपाकहेतुर्भवति*; अभिमतौदनपाकहेतुत्वात्। *स एवास्वादुपाकहेतुः*। तद्दाहहेतुत्वादित्यर्थः। *न तु यां पाक्यभूतावस्थां प्राप्य स्वादुपाकहेतुरासीत्*। *तां पुनः प्राप्य* पश्चान्न हेतुः *स्वादुपाकस्य* तादृशस्येत्यर्थः। एष दृष्टान्तः तस्य पूर्वोक्तस्य दार्ष्टान्तिकस्यार्थस्य। *ध्यानेषु च कथं न व्यवस्थितः सुखहेतुरिति*। न हि तदेव ध्यानं प्रथमं यावत् तृतीयं चिरकालमपि समापन्नानां

गन्धादिविशेषजं सुखं वेदयते तदा कस्य प्रतीकारेषु सुखबुद्धिर्भवति ! अनुत्पन्न-विनष्टे च तस्मिन् दुःखे सुतरां सुखबुद्धिः स्यात् । ध्यानजे सुखे कः कस्य प्रतीकार इत्येवमादि ।

भावसञ्चारेऽपि चावस्थान्तरजं सुखमेवोत्पद्यते । यावदसौ तादृशी कायावस्था नान्तर्धीयते । अन्यथा हि पश्चाद् भूयसी सुखबुद्धिः स्यात् ।

एवं श्रान्तस्येर्यापथविकल्पेषु वेदितव्यम् ।

"अन्ते कुतो दुःखबुद्धिरारम्भो यदि नादितः" इति चेत् ? कायपरिणाम-विशेषान्मद्यादीनामन्ते माधुर्यशुक्ततावत् । तस्मादस्त्येव सुखा वेदनेति सिद्धम् । त्रिदुःखतायोगाद् वा सर्वं सास्रवं दुःखमिति ।

यत्तु समुदयसत्यं तदेवोच्यते । इदमुत्सूत्रम्, सूत्रे हि तृष्णैवोक्ता ?

---

दुःखहेतुर्भवतीति । *ध्यानजे च सुखे कस्य प्रतीकार* इति । न हि ध्यानेषु दुःख-मस्तीति । आदिशब्देनेदमपि वक्तव्यम्—*यदि दुःखप्रतीकारेषु सुखबुद्धिः स्यात्* । "रूपं चेन्महानामन्नेकान्तदुःखमभविष्यत्, न सुखं न सुखानुगतम्" इत्येवमादि नोक्तं स्यादिति । *सुखमेवोत्पद्यत* इति । सुखैव सा वेदनोत्पद्यते । न सा दुःखा वेदना सुखत्वेन कल्पितेति । *यावदसौ तादृशी कायावस्थेति* । सुखोत्पत्त्यनुकूला । अन्यथा हि यद्यवस्थान्तरजं सुखमेव नोत्पद्यते यावदसौ तादृशी कायावस्था *नान्तर्धीयते*[1] । *अन्यथा पश्चाद् भूयसी सुखबुद्धिः स्यात्* ।

*अन्ते कुत* इति विस्तरः । अथ मतम्—पानभोजनाद्यन्ते कुतो दुःखबुद्धिः *स्यात् यदि तस्यादितस्तत्प्रारम्भो नासीदिति* । अत्र ब्रूमः— *कायपरिणामविशेषात्* । कायस्य तादृशः परिणामविशेषः पश्चादुत्पद्यते पानाद्यासेवनात् यत्सुखोत्पत्त्य-वस्थायां दुःखं नोत्पद्यते, अन्ते तूत्पद्यत इति । किमिव ? इत्याह—*मद्यादीनामन्ते माधुर्यशुक्ततावदिति* । यथा मद्यक्षीरादीनां तादृशः पश्चात्परिणामविशेषो भवति यत्पूर्वं मधुरतावस्थायां माधुर्यस्याविद्यमाना शुक्तता अम्लता अन्ते उत्पद्यते । अथ वा—यथा मद्यादीनां परिणामविशेषान् माधुर्यमेषामादौ भवति, आम्लं वा ; तच्चिकित्सौषधकृतात् परिणामविशेषान्माधुर्यं भवति । परिणामविशेषा-देव च पश्चाच्छुक्तता । माधुर्यमिह सुखस्योदाहरणम्, शुक्तता दुःखस्येति ।

*यत्तु समुदयसत्यम् तदेवोच्यत* इति । हेतुभूताः समुदयसत्यमिति वचनात् ।

---

1. नान्तरीयते—जा० ।

प्राधान्यादसौ सूत्र उक्ता, अन्येऽपि तु समुदयः। कथमिदं प्रत्येतव्यम्? अन्यत्रान्यस्यापि वचनात्। उक्तं हि भगवता—

"कर्म च तृष्णा च अथो अविद्या संस्काराणां हेतुरभिसंपराये" इति।

पुनश्चोक्तम्—"पञ्च बीजजातानीति सोपादानस्य विज्ञानस्यैतदधिवचनम्। पृथिवीधातुरिति चतसृणां विज्ञानस्थितीनामेतदधिवचनम्" इति। तस्मादाभिप्रायिकः सूत्रेषु निर्देशः। लाक्षणिकस्त्वभिधर्मे।

अपि त्वभिनिर्वृत्तिहेतुं ब्रुवता समुदयसत्यं तृष्णैवोक्ता। उपपत्त्यभिनिर्वृत्तिहेतुं सहेतुकं ब्रुवता गाथायां कर्म च तृष्णा चाविद्योक्ता। "कर्महेतुरुपपत्तये,

---

प्रथमे वा कोशस्थाने "दुःखं समुदयो लोकः" (अभि० को० १. ८) इति वचनात्। सूत्रे हि तृष्णैवोक्तेति। समुदयसत्यं कतमत्? यासौ तृष्णा नन्दीरागसहगता तत्र तत्राभिनन्दिनीति। *वैभाषिक आह—प्राधान्यादिति*। *अन्यत्रान्यस्यापि वचनात्*। अन्यत्र सूत्रे अन्यस्यापि कर्माविद्यादेर्वचनादन्येऽपि समुदय इति।

*अभिसम्पराये*। आयत्यां परलोक इत्यर्थः।

*पुनश्चोक्तम्*। अन्यत्र सूत्रे—"यतश्च भिक्षवः पञ्च बीजजातान्यखण्डानि अच्छिद्राणि अपूतीनि अवातातपहतानि नवानि साराणि सुखशयितानि १-पृथिवीधातुश्च भवत्यब्धातुश्च। एवं तानि बीजानि वृद्धिं विरूढिं विपुलतामापद्यन्ते। इति हि भिक्षव उपमेयं कृता यावदेवास्यार्थस्य विज्ञप्तयः" इतीमं दृष्टान्तमुपन्यस्येदमुक्तम्—"पञ्च बीजजातानीति भिक्षवः सोपादानस्य विज्ञानस्यैतदधिवचनम्। *पृथिवीधातुरिति चतसृणां विज्ञानस्थितीनामेतदधिवचनम्*" इति। बीजं पुनर्हेतुः। यश्च हेतुः स समुदयः। विज्ञानस्थितोऽपि प्रतिष्ठाहेतुः। *तस्मादिति*। यतः कर्मादीनामपि हेतुत्ववचनात् समुदयसत्यत्वं सिद्धम्, *तस्मादाभिप्रायिकः*। अभिप्राये भवः, अभिप्रायेण वा दीव्यतीत्याभिप्रायिकः *सूत्रे निर्देशः*। तृष्णाधिकृतं पुद्गलमधिकृत्य कृत इत्यभिप्रायः। *लाक्षणिकस्त्वभिधर्मे*। लक्षणे भवो *लाक्षणिको* निर्देशोऽभिधर्मे; 'सर्वं सास्रवं वस्तु समुदयः' इति सास्रवस्य स्कन्धपञ्चकस्य समुदयसत्यत्वलक्षणयोगात्।

स एव *वैभाषिक*स्तृष्णादीनामाभिप्रायिकं समुदयसत्यत्वं विवक्षुराह—*अपि त्विति* विस्तरेण। अभिनिर्वृत्तिहेतुं *ब्रुवता समुदयसत्यं तृष्णैवोक्ता सूत्रे*। *उपपत्त्यभिनिर्वृत्तिहेतुं सहेतुकं ब्रुवता यावत् कर्म च तृष्णा चाविद्या चोक्ता*।

तृष्णाहेतुरभिनिर्वृत्तये" इति सूत्रात्[1] । सहेतुसप्रत्ययसनिदानसूत्रे क्रमेण वा बीजक्षेत्रभावं प्रतिपादयता विज्ञानादयोऽप्युक्ताः ।

का पुनरुपपत्तिः ? का चाभिनिर्वृत्तिः ? धातुगतियोन्यादिप्रकारभेदेनात्मभावस्योपपदनमुपपत्तिः । अभेदेन पुनर्भवप्रतिसन्धानमभिनिर्वृत्तिः । तयोर्यथाक्रमं कर्म च भवतृष्णा च हेतुः । तद्यथा—बीजं शालियवादिजातिप्रकारभेदेनाङ्कुरोप-

उपपत्तिहेतुः कर्म । अभिनिर्वृत्तिहेतुस्तृष्णा भवेषु । तयोः पुनस्तद्धेत्वोः कर्मतृष्णयोरविद्या हेतुरित्याह । कथमेतद्गम्यते—गाथायामुपपत्तिहेतुः कर्माभिनिर्वृत्तिहेतुस्तृष्णेति ? *कर्म हेतुरुपपत्तये तृष्णा हेतुरभिनिर्वृत्तय इति सूत्रात्* । सूत्रान्तरे वचनादिति । *सहेतुसप्रत्यय* इति विस्तरः । *अत्र सूत्रे क्रमेण वा* । कारणपरम्पराक्रमणेन *वा* । गाथायामेष निर्देशः । कर्मतृष्णाविद्यासंस्काराणां चक्षुरादीनां हेतुरभिसम्पराय इति । तदेतदुक्तं भवति—कर्म हेतुरुपपत्तय इति । अतो वा सूत्रात्, सहेतुसप्रत्ययकर्मसूत्राद्वा अयमीदृशः गाथार्थ इति । "कथं चक्षुर्भिक्षवः सहेतु सप्रत्ययं सनिदानम् ? कश्च भिक्षवः चक्षुषो हेतुः ? कः प्रत्ययः ? किं निदानम् ? चक्षुषो भिक्षवः कर्म हेतुः, कर्म प्रत्ययः, कर्म निदानम् । कर्मापि भिक्षवः सहेतु सप्रत्ययं सनिदानम् । कश्च भिक्षवः कर्मणो हेतुः ? कः प्रत्ययः ? किं निदानम् ? कर्मणो भिक्षवस्तृष्णा हेतुः, तृष्णा प्रत्ययः, तृष्णा निदानम् । तृष्णा भिक्षवः सहेतुका सप्रत्यया सनिदाना । कश्च भिक्षवस्तृष्णाया हेतुः ? कः प्रत्ययः ? किं निदानम् ? तृष्णाया भिक्षवोऽविद्या हेतुः, अविद्या प्रत्ययः, अविद्या निदानम् । अविद्यापि भिक्षवः सहेतुका सप्रत्यया स निदाना । कश्च भिक्षवोऽविद्याया हेतुः ? कः प्रत्ययः ? किं निदानम् ? अविद्याया भिक्षव अयोनिशोमनस्कारो हेतुः, अयोनिशोमनस्कारः प्रत्ययः, अयोनिशोमनस्कारो निदानम्" ( ) इति । *बीजक्षेत्रभावं प्रतिपादयता विज्ञानादयोऽप्युक्ताः* । विज्ञानं बीजम् । तस्य क्षेत्रं वेदनादयः स्कन्धाः । तेऽप्युक्ताः समुदयसत्यम् । न केवलं तृष्णादय इत्याभिप्रायिकः सूत्रे निर्देश इति साधितम् । सर्वस्य च दुःखस्य लाक्षणिकः समुदयभाव इति ।

*योन्यादिप्रकारभेदेनेति* । आदिशब्देन जातिस्त्रीपुरुषादिप्रकारभेदेनेति गृह्यते । *अभेदेनेति* । धातुगतियोन्यादीनाम् । *तयोर्यथाक्रममिति* । उपपत्तेः कर्म हेतुरभिनिर्वृत्तेस्तृष्णेति । *तद्यथा बीजमिति* विस्तरः । शालिबीजं शाल्यङ्कुरोप-

१. सूत्रे वचनात्—का० ।

पदनस्य हेतुः । आपः पुनरभेदेन सर्वाङ्कुरप्ररोहमात्रस्य—इत्येव दृष्टान्तः ।

तृष्णा अभिनिर्वृत्तिहेतुरिति कात्र युक्तिः ? १. वीततृष्णस्य जन्माभावात् । उभयेऽपि म्रियन्ते सतृष्णा वीततृष्णाश्च । सतृष्णा एव जाता दृश्यन्ते, न वीततृष्णा इति ; विना तृष्णया जन्माभावात् । भवस्याभिनिर्वृत्तौ तृष्णाहेतुं प्रतीमः । २. सन्ततिनामनाच्च[1] । यत्र च सतृष्णा चित्तसन्ततिः[2] तत्राभीक्ष्णं चित्तसन्ततिं नमन्तीं पश्यामः । तस्मात् पुनर्भवेऽप्येवमिति व्यवस्यामः । न चात्मभाव एवं केनचिदागृहीतो यथा तृष्णया । शुष्कमसूरोपस्नानलेपाङ्गवत् । न चान्यो हेतुरेवमनुषक्तो यथात्मस्नेह इत्येषा युक्तिः ॥ ३ ॥

चत्वार्यपि सत्यान्युक्तानि भगवता, द्वे अपि सत्ये संवृतिसत्यं परमार्थसत्यं च । तयोः किं लक्षणम् ?

**यत्र भिन्नेन तद्बुद्धिरन्यापोहे धिया च तत् ।**
**घटाम्बुवत्[3] संवृतिसत्, परमार्थसदन्यथा ॥ ४ ॥**

---

पादनस्य हेतुः, *यवबीजं यवाङ्कुरोपपादनस्येत्यादि* । *आपः पुनरभेदेन* । यथा शाल्यङ्कुरप्ररोहस्य हेतुः । एवं यवाङ्कुरस्यापीत्यादि । अतस्ताः *सर्वाङ्कुरप्ररोहमात्रस्य हेतुरिति* । *विना तृष्णया जन्माभावादिति* । अत्र साधनम्—'हेतुर्जन्मनस्तृष्णा ; तद्भावाभावभाव्यभावित्वात् । तद्यथा बीजमङ्कुरस्य' । *सन्ततिनामनाच्चेति* । अस्यार्थं विवृण्वन्नाह—*यत्र च सतृष्णेति* विस्तरः । यत्र विषये रूपादौ *सतृष्णा* । का ? *चित्तसन्ततिः* । *तत्राभीक्ष्णं चित्तसन्ततिं नमन्तीं पश्यामः* । *तस्मात् पुनर्भवेऽप्येवमिति* । पुनर्भवेऽप्येवं सतृष्णा चित्तसन्ततिः, तस्मात् तन्नमतीति । यत्र च नमति तत्र च प्रवर्तत इति व्यवस्यामः । साधनं चात्र प्रवर्तते—'पुनर्भवे चित्तसन्ततिः; सतृष्णानमनात्, रूपादिविषयवत्' । *शुष्कमसूरोपस्नानलेपाङ्गवदिति* । मसूर उपस्नानम्, तस्य लेपः शुष्कः । मसूरोपस्नानलेपोऽस्येति शुष्कमसूरोपस्नानलेपमङ्गम्, तद्वद् । यथा शुष्केण मसूरोपस्नानलेपेनागृहीतमङ्गम्, एवं तृष्णयात्मभाव इति दर्शितं भवति । *एषा युक्तिरिति* । तृष्णाभिनिर्वृत्तिहेतुरिति ॥ ३ ॥

अत्रार्थे *द्वे अपि सत्ये* इति सत्यप्रसङ्गेनेदमुच्यते ।

---

१. ०नमनाच्च—का० ।		२. का० पुस्तके नास्ति ।
३. घटार्थवत्—का० ।

यस्मिन्नवयवशो भिन्ने न तद्बुद्धिर्भवति तत् संवृतिसत् । तद्यथा—घटः । तत्र हि कपालशो भिन्ने घटबुद्धिर्न भवति । यत्र चान्यानपोह्य धर्मान् बुद्ध्या तद्बुद्धिर्न भवति, तच्चापि संवृतिसद् वेदितव्यम् । तद्यथा—अम्बु । तत्र हि बुद्ध्या रूपादीनधर्मानपोह्याम्बुबुद्धिर्न भवति । तेष्वेव तु संवृतिसंज्ञा कृतेति संवृतिवशात् घटश्चाम्बु चास्तीति ब्रुवन्तः सत्यमेवाहुर्न मृषा—इत्येत् संवृतिसत्यम् ।

अतोऽन्यथा परमार्थसत्यम् । तत्र भिन्नेऽपि तद्बुद्धिर्भवत्येव । अन्यधर्मापोहेऽपि बुद्ध्या तत् परमार्थसत् । तद्यथा—रूपम् । तत्र हि परमाणुभिन्ने वस्तुनि रसादीनपि च धर्मानपोह्य बुद्ध्या रूपस्य स्वभावे[१] बुद्धिर्भवत्येव[१] । एवं वेदनादयोऽपि द्रष्टव्याः । एतत् परमार्थेन भावात् परमार्थसत्यमिति । यथा लोकोत्तरेण ज्ञानेन गृह्यते तत् पृष्ठलब्धेन वा लौकिकेन तथा परमार्थसत्यम् । यथाऽन्येन तथा संवृतिसत्यमिति पूर्वाचार्याः ॥ ४ ॥

उक्तानि सत्यानि ॥

---

"*घटाम्बुवद्*" इति । दृष्टान्तद्वयोपन्यासो भेदद्वयोपप्रदर्शनार्थः । उपक्रमभेदिनश्च घटादयः, बुद्धिभेदिनश्च जलादय इति । जलादिषूपक्रमेण रसाद्यपकर्षणानुपपत्तेः । अथ वा द्विविधा संवृतिः—संवृत्यन्तरव्यपाश्रया, द्रव्यान्तरव्यपाश्रया च । तत्र यासौ संवृत्यन्तरव्यपाश्रया, तस्यां भेदोऽपि सम्भवति, अन्यापोहोऽपि । या त्वसौ द्रव्यान्तरव्यपाश्रया, तस्यामन्यापोह एव सम्भवति, न भेदः । न हि परमाणोरष्टद्रव्यकस्यावयवविश्लेषः शक्यते कर्तुमिति । *संवृतिसदि*ति । संव्यवहारेण सत् । *परमार्थसदि*ति । परमार्थेन सत् । स्वलक्षणेन सदित्यर्थः ।

*एवं वेदनादयोऽपि द्रष्टव्या* इति । वेदनाचेतनासंज्ञादयोऽपि द्रव्यसन्त एव द्रष्टव्याः । कथम् ? वेदनादीन् धर्मानपोह्य बुद्ध्या वेदनास्वभावे बुद्धिर्भवतीति । द्रव्यसती वेदना । एवं संज्ञाचेतनादयोऽपि योज्याः । *घटश्चाम्बु चास्तीति ब्रुवन्तः सत्यमेवाहुः, न मृषेति* । संवृतिसत्यस्य वचने प्रयोजनं दर्शयति । उक्तं च—

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोकसंवृतिसत्यं च सत्यं च परमार्थतः ॥ (म० शा० २४.८) इति ।

*तथा परमार्थसत्यमिति* । परमस्य ज्ञानस्यार्थः परमार्थः, परमार्थश्च

---

१-१. स्वभावबुद्धिर्भव०—का० ।

कथं पुनस्तेषां दर्शनं भवति, वक्तव्यम् ? अत आदिप्रस्थानमारभ्योच्यते—

**वृत्तस्थः श्रुतचिन्तावान् भावनायां प्रयुज्यते ।**

सत्यानि ह द्रष्टुकाम आदित एव शीलं पालयति । ततः सत्यदर्शनस्यानुलोमं श्रुतमुद्गृह्णाति, अर्थं वा शृणोति । श्रुत्वा चिन्तयति । अविपरीतं चिन्तयित्वा भावनायां प्रयुज्यते । समाधौ तस्य श्रुतमयीं प्रज्ञां निश्रित्य चिन्तामयी जायते । चिन्तामयीं निश्रित्य भावनामयी जायते ।

किं पुनरासां प्रज्ञानां लक्षणम् ?

**नामोभयार्थविषया श्रुतमय्यादिका धियः ।। ५ ।।**

नामालम्बना किल श्रुतमयी प्रज्ञा । नामार्थालम्बना चिन्तामयी । कदाचिद् व्यञ्जनेनार्थमाकर्षति, कदाचिदर्थेन व्यञ्जनम् । अर्थालम्बनैव भावनामयी । सा हि व्यञ्जननिरपेक्षा अर्थे प्रवर्तते । तद्यथा—अम्भसि प्लोतुमशिक्षितः प्लवन्नेव मुञ्चति । किंचिच्छिक्षितः कदाचित् मुञ्चेत्, कदाचिदालम्बते । सुशिक्षितः प्लवन् निरपेक्षस्तरति—इत्येष दृष्टान्त इति वैभाषिकाः ।

---

सत्यं च तत् परमार्थसत्यं *यथान्येन ज्ञानेन लौकिकेन गृह्यते । तथा संवृतिसत्यम् ।* संवृत्या संव्यवहारेण ज्ञानेन वा क्लिष्टेनाक्लिष्टेन वा गृह्यत इति संवृतिसत्यम् । त्रिविधं हि *योगाचाराणां* सत्—परमार्थसंवृतिसत्, द्रव्यसच्च । द्रव्यतः स्वलक्षणतः सद् द्रव्यसदिति ।। ४ ।।

"*वृत्तस्थः*" इति विस्तरः । वृत्तं शीलम् । तद् अभ्यासङ्गकारणम्, अविक्षेपकारणम्, आचारकारणं च । *सत्यदर्शनस्यानुलोममिति* । यच्छ्रुतं सत्यदर्शनाधिकारिकम्, *तच्छ्रुतमुद्गृह्णाति* पठति । *अर्थं वा शृणोति* । तदर्थं श्रोत्रद्वारेण विजानाति । कथम् ?

उभयालम्बना चिन्तामयीति दर्शयन्नाह—*कदाचिद् व्यञ्जनेनार्थमाकर्षति* । व्यञ्जननिर्वचनेन नाम्नार्थमाकर्षति—अयमस्य नाम्नोऽर्थ इति । *कदाचिदर्थेन व्यञ्जनमाकर्षति* । इदमस्याभिधेयस्यार्थस्य व्यञ्जनं नामेत्यर्थः । अयं हि व्यञ्जनशब्दो नाम्नि प्रयुक्तः । सूत्रेऽपि चोक्तम्—"स्वर्थं सुव्यञ्जनम्" इति ।

अस्यां तु कल्पनायां चिन्तामयी प्रज्ञा न सिद्ध्यतीत्यपरे। या हि नामालम्बना श्रुतमयी प्राप्नोति, याऽर्थालम्बना भावनामयीति। इदं तु लक्षणं नानिरवद्यं विद्यते। आप्तवचनप्रामाण्यजातनिश्चया श्रुतमयी, युक्तिनिध्यानजा चिन्तामयी, समाधिजा भावनामयीति; हेतौ मयड्विधानात्। तद्यथा—अन्नमयाः प्राणाः, तृणमय्यो गाव इति ॥ ५ ॥

तस्य पुनरेवं भावनायां प्रयुक्तस्य कथं भावना सम्पद्यते ? इत्याह—

**व्यपकर्षद्वयवतः,**

यदि हि कायचित्ताभ्यां व्यपकृष्टो भवति, संसर्गाकुशलवितर्कदूरीकरणात्। तत्तर्हि व्यपकर्षद्वयं कस्य सुकरं भवति ? योऽल्पेच्छः, सन्तुष्टश्च।

**नासन्तुष्टमहेच्छयोः।**

का पुनरियमसन्तुष्टिः ? का च महेच्छता ?

**लब्धे भूयःस्पृहाऽतुष्टिरलब्धेच्छा महेच्छता ॥६॥**

लब्धेषु किल प्रणीतेषु चीवरादिषु भूयस्कामता असन्तुष्टिः। अलब्धेषु तत्कामता महेच्छतेत्याभिधार्मिकाः।

---

*अस्यां तु कल्पनायामिति* विस्तरेणाचार्यः। *चिन्तामयी प्रज्ञा न सिध्यतीति*। श्रुतभावनामयीलक्षणसङ्कीर्णं लक्षणमुच्यते। नासङ्कीर्णमिति न सिध्यति। *युक्तिनिध्यानजा इति*। *युक्त्या निध्यानं* नितीरणम्, ततो *जात* इति। *हेतौ मयड्विधानादिति*। आप्तवचनं श्रुतं सहेतु श्रुतं सहेतु श्रुतमय्याः प्रज्ञायाः। अत्र मयड्विधानम्। श्रुतहेतुका प्रज्ञा श्रुतमयीति। एवं युक्तिनिध्यानं चिन्ता सहेतुश्चिन्तामय्याः। अत्र मयड्विधानात्। समाधिर्भावना सहेतुर्भावनामय्याः। अत्र मयड्विधानम्। "तत्प्रकृतवचने मयट्" (पा० सू० ५.४ २१) इति लक्षणात्। "तस्य विकारः" (पा० सू० ४.३.१३४) इति वा लक्षणात्। औपचारिकस्तु विकारः। श्रुतविकार इव श्रुतमयीति लक्षणान्तरं चोपसंख्यातव्यम्। *अन्नमयाः प्राणास्तृणमय्यो गाव इति* लोके प्रयोगदर्शनात् ॥ ५ ॥

*संसर्गाकुशलवितर्कदूरीकरणादिति*। *संसर्गदूरीकरणं* यदद्वितीयविहारित्वम्। तस्मात् कायेन व्यपकृष्टो भवति। अकुशलवितर्कदूरीकरणं यत्क्लिष्टवितर्कविवर्जनम्। तस्माच्चित्तेन व्यपकृष्टो भवति।

ननु च साऽतिभूयस्कामताऽलब्ध एव, न लब्धे भवतीति कोऽनयोर्विशेष इति वक्तव्यमेतद् ? एवं तु युज्यते—लब्धेनाप्रणीतेनाप्रभूतेन परितासोऽसन्तुष्टिः । अलब्धप्रणीतप्रभूतेच्छा महेच्छता ॥ ६ ॥

**विपर्यासात् तद्विपक्षौ,**

असन्तुष्टिमहेच्छताविपर्ययेण तत्प्रतिपक्षौ वेदितव्यौ—सन्तुष्टिश्च, अल्पेच्छता चेति ।

**त्रिधात्वाप्तामलौ च तौ ।**

'तद्विपक्षौ' इति वर्तते । त्रिधातुकौ च प्रतिसंयुक्तौ च ; सास्रवानास्रवत्वात् । असन्तुष्टिमहेच्छते च कामावचर्यावेव ।

कः पुनरनयोरल्पेच्छतासन्तुष्ट्योः स्वभावः ? इत्याह—

**अलोभः,**

अलोभस्वभावे होते ।

**आर्यवंशाश्च,**

'अलोभः' इति वर्तते । आर्याणामेभ्यः प्रसवादार्यवंशाश्चत्वारः । तेऽप्यलोभस्वभावाः ।

**तेषां तुष्ट्यात्मकास्त्रयः ॥ ७ ॥**

सन्तुष्टिस्वभावाः । चीवर-पिण्डपात-शयनासनसन्तुष्टयः ।

प्रहाणभावनारामता चतुर्थ आर्यवंशः कथमलोभस्वभावः ? भवकामरागवैमुख्यात् ॥ ७ ॥

---

*लब्धेनाप्रणीतेनाप्रभूतेन परितास* इति । *परितासो* दौर्मनस्यम् । तेन हि परितस्यति । उपक्षीयत इत्यर्थः । अप्रणीतत्वाद्, अप्रभूतत्वाद्वा । तेन लब्धेन परितासोऽसन्तुष्टिः । *अलब्धे तु प्रणीतेऽपि वा प्रभूतेऽपि वा* इच्छाभिलाषो महेच्छतेत्याचार्यमतम् । *कामावचर्यावेवे*ति । लोभाकुशलस्वभावत्वात् ॥ ६ ॥

*प्रहाणभावनारामता* । निरोधमार्गरामता । सा न सन्तुष्टिस्वभावेति *कथं चतुर्थोऽप्ययमार्यवंशो भवत्यलोभस्वभावः?* इत्यत आह— *भवकामरागवैमुख्यादि*ति । भवरागवैमुख्यात्, कामरागवैमुख्याच्च । वैमुख्यं चालोभ इति ॥ ७ ॥

अथ चतुर्भिरार्यवंशैः किं दर्शितं भगवता ?

**कर्मान्तेन त्रिभिर्वृत्तिः,**

धर्मस्वामिना हि भगवता परित्यक्तस्ववृत्तिकर्मान्तेभ्यः शिष्येभ्यो मोक्षार्थमभ्युपगतेभ्यो द्वयं प्रज्ञप्तम्—वृत्तिश्च, कर्म च। त्रिभिरार्यवंशैर्वृत्तिः, चतुर्थेन कर्म। 'अनया वृत्त्येदं कर्म कुर्वाणा भवन्तो न चिरान्मोक्षं प्राप्स्यन्ति' इति।

कस्मात् पुनरियमीदृशी वृत्तिरिदं च कर्म प्रज्ञप्तम् ?

**तृष्णोत्पादविपक्षतः।**

चत्वारस्तृष्णोत्पादाः सूत्र उक्ताः—"चीवरहेतोर्भिक्षोस्तृष्णोत्पद्यमाना उत्पद्यते, प्रतितिष्ठन्ती प्रतितिष्ठति, अभिनिविशमानाऽभिनिविशते। पिण्डपातहेतोः, शय्यासनहेतोरिति। भवविभवहेतोर्भिक्षोस्तृष्णोत्पद्यमाना उत्पद्यते" इति विस्तरः। एषां प्रतिपक्षेण चत्वार आर्यवंशा देशिताः।

**ममाहङ्कारवस्त्विच्छातत्कालात्यन्तशान्तये ॥ ८ ॥**

स एवार्थः पुनः परिशेषेणोच्यते। ममकारवस्तु चीवरादयोऽहंकारवस्त्वात्मभावः। तत्रेच्छा तृष्णा। तत्र ममकारवस्त्विच्छायास्तत्कालशान्तये त्रय आर्यवंशा भवन्ति। उभयेच्छात्यन्तशान्तये चतुर्थ इति ॥ ८ ॥

उक्तमिदं यथा भूतस्य भावना सम्पद्यते ॥

तस्य त्वेवं पात्रीभूतस्य कथं तस्यां भावनायामवतारो भवति ?

**तत्रावतारोऽशुभया चानापानस्मृतेन च।**

---

*परित्यक्तस्ववृत्तिकर्मान्तेभ्य* इति। परित्यक्तस्ववृत्तिभ्यः, परित्यक्तस्वकर्मान्तेभ्यश्च। तत्र वृत्तिः = जीविका, यया जीव्यते अन्नपानादिना। कर्मान्तः = कृषिशिल्पादिः।

*इति भवविभवहेतोरिति*। *इतिशब्दो* भवविभवप्रकाराभिद्योतकः। तत्र भवप्रकारे तृष्णा 'अहो बताहं इन्द्रः स्यां चक्रवर्ती स्याम्' इत्येवमादि। विभवतृष्णापि विनाशतृष्णा[1]—'अहो बतोच्छिद्येयं परं मरणात्' इत्यादि ॥ ८ ॥

---

१. विणाश०—जा०।

स्मृतिरेव स्मृतम् ।

केषां पुनरशुभया ? केषामानापानस्मृत्या ? यथाक्रमम्—

**अधिरागवितर्काणाम्,**

अधिको रागो वितर्कश्चैषां त इमे अधिरागवितर्काः । यो हि प्रत्यासन्नमत्यर्थं रागचरितः, तस्याशुभया । यो हि वितर्कचरितः, तस्यानापानस्मृत्येति ।

अविचित्रालम्बनत्वादेषां वितर्कोपच्छेदाय संवर्तत इत्येके ।

अशुभा तु यत्र संस्थानविशेषलम्बनत्वाद् वितर्कमावहतीति; अबहिर्मुखत्वादित्यपरे । अशुभा हि चक्षुर्विज्ञानवद् बहिर्मुखी; तद्विषयोपनिध्यानात् ।

तत्र पुनश्चतुर्विधो रागः—वर्णरागः, संस्थानरागः, स्पर्शरागः, उपचाररागश्च । प्रथमस्य प्रतिपक्षेण विनीलकाद्याकारालम्बनामशुभां[1] वर्जयन्ति । द्वितीयस्य विखादितकविक्षिप्तालम्बनाम् , तृतीयस्य विपटुमकं[2] पूयनिबद्धास्थ्यालम्बनाम्, चतुर्थस्य निश्चेष्टमृतकायालम्बनाम् । अभेदेन तु शस्यते

**शंकला सर्वरागिणाम् ।। ९ ।।**

अस्थिशंकलायां हि सर्वमेतच्चतुर्विधं रागम्तु नास्तीति अधिमुक्तिप्रादेशिकमनसिकारत्वादशुभया[3] न क्लेशप्रहाणं विष्कम्भणं तु । स पुनरयमशुभां भावयन्

---

*स्मृतिरेव स्मृतमिति* । भावे क्तविधानमिति दर्शयति । *अवतारः* = *तीर्थं* येनावतरति । *प्रत्यासन्नमत्यर्थं रागचरित* इति । यस्याल्पेन रागः शीघ्रमुपतिष्ठते, स प्रत्यासन्नं रागचरितः । यस्याधिमात्रो रागः, सोऽत्यर्थं रागचरितः ।

*अविचित्रालम्बनत्वादिति* । वायौ वर्णसंस्थानवैचित्र्यानुपलब्धेः[4] ।

*अबहिर्मुखत्वादन्तर्मुखत्वात्* । एषा वितर्कोपच्छेदाय संवर्तत इति प्राकृतम् । *तद्विषयोपनिध्यानादिति* । चक्षुर्विषयनिरूपणादित्यर्थः ।

*विनीलकाद्याकारालम्बनामिति* । आदिग्रहणेन विपूयकादिग्रहणम् । *विपटुमकमिति* । यदुत्पन्नक्रिमिकम् । *चतुर्विधं रागवस्तु नास्तीति* वर्णसंस्थानस्पर्शोपचारात्मकम् । *अधिमुक्तिप्रादेशिकमनसिकारत्वादिति* । अधिमुक्तिमनसिकारत्वात्, प्रादेशिकमनसिकारत्वाच्चेत्यर्थः । अधिमुक्तिप्रधानोऽयं मनसिकारः । प्रादेशिक-

---

१. विनीलकाद्यालम्बनाम०—का० । २. विपटुम्ना—का० ।
३. ०मनस्कार०—का० । ४. संस्थान०—जा० ।

योगाचारस्त्रिविध उच्यते—१. आदिकर्मिकः, २. कृतपरिजयः, ३. अतिक्रान्तमनस्कारश्च ॥ ९ ॥

तत्र—

आसमुद्रास्थिविस्तारसंक्षेपादादिकर्मिकः ।

१. अशुभां भावयितुकाम आदितो योगाचारः स्वाङ्गावयवे चित्तं निबध्नाति पादाङ्गुष्ठे ललाटे यत्र चास्याभिरतिः । स तत्र मांसक्लेदपीताधिमोक्षक्रमेणास्थि विशोधयन् सकलामस्थिशंकलां पश्यति । तथैव च पुनर्द्वितीयामधिमुच्यते यावद् विहारारामक्षेत्रक्रमेण समुद्रपर्यन्तां पृथिवीमस्थिसंकलां पूर्णामधिमुच्यतेऽधिमोक्षाभिवर्धनार्थम् । पुनश्च संक्षिपन् यावदेकामेव स्वामस्थिशंकलामधिमुच्यते चित्तसंक्षेपार्थम् । इयता किल कालेनाशुभा परिनिष्पन्ना भवति । अयमादिकर्मिको योगाचारः ।

पादास्थ्न आकपालार्धत्यागात् कृतजयः स्मृतः ।। १० ।।

२. स पुनः चित्तसंक्षेपविशेषार्थं तस्यामस्थिशंकलायां पादास्थीनि हित्वा शेषं मनसिकरोति । एवं क्रमेण यावत् कपालस्यार्धं हित्वाऽर्धं मनसि करोति यः स कृतपरिजयः ॥ १० ॥

---

अयमव्यापीत्यर्थः । न ह्यशुभा पञ्चस्कन्धालम्बना, सकलभूम्यालम्बना वा । किं तर्हि ? रूपस्कन्धैकदेशालम्बना; तद्भावात् । *नाशुभया क्लेशप्रहाणं विष्कम्भणामात्रं तु* भवतीत्यर्थः ॥ ९ ॥

*स्वाङ्गावयवे चित्तमुपनिबध्नातीति* वचनात् न तावत् स्त्र्यङ्गावयवे; प्रयोगकाल एव संरागहेतुपरिहारात् । *अस्थि विशोधयन्निति* । अस्थिनो मांसमपयन् *सकलामस्थिशङ्कलां पश्यति* । यथोक्तम्—

"यो भवेन् नवको भिक्षुः शैक्षोऽसम्प्राप्तमानसः ।
गच्छेदसौ शिविपथिकां हन्तुं रागं यदीच्छति ॥
ततो विनीलकं पश्येत् ततः पश्येद् विपूयकम् ।
ततो व्याध्मातकं पश्येदस्थिशङ्कलिकामपि" ॥ ( ) इति ।

अत्र समासतोऽशुभायां वर्तमानो योगाचारस्त्रिविधः—आदिकर्मिकः, कृतपरिजयः, अतिक्रान्तमनसिकारश्च । तत्र संक्षेपचित्त आदिकर्मिको योगाचार एकस्मिन् पादांगुष्ठे मन उपनिबध्य पादांगुष्ठं क्लिद्यमानं पश्यति—एतन्मांसम्, एवं यावत् सर्वं शरीरमस्थिशङ्कलमधिमुच्यते । कृतपरिजयस्तु तथैव यावत् कपालार्धम् ॥ १० ॥

**अतिक्रान्तमनस्कारो भ्रूमध्ये चित्तधारणात् ।**

३. सोऽर्धमपि कपालस्य मुक्त्वा भ्रुवोर्मध्ये चित्तं धारयति । अयं किलाशुभायामतिक्रान्तमनस्कारो योगाचारः । अस्त्यशुभा आलम्बनपरीत्ततया परीत्ता न वशितापरीत्ततया परीत्तेति चतुष्कोटिकम् ; जिताजितमनस्कारयोरजितजितमनस्कारयोश्च स्वकायसमुद्रपर्यन्तालम्बनात् ।

अथ किंस्वभावेयमशुभा ? कतिभूमिका ? किमालम्बना ? क्व चोत्पद्यते ? यथाक्रमम्—

**अलोभो दशभूः कामदृश्यालम्बा नृजाऽशुभा ।। ११ ।।**

अलोभस्वभावा दशभूमिका ससामन्तकध्यानान्तरेषु चतुर्षु ध्यानेषु कामधातौ च कामावचरदृश्यालम्बना, किं पुनर्दृश्यवस्तुसंस्थाने । अत एवार्थालम्बनेति सिद्धम् । मनुष्येष्वेवोत्पद्यते, नान्यस्यां गतौ, कुत एव धातौ ! तत्रापि नोत्तरकुरौ । नाम्नैव सिद्धमशुभाकारेति । यदध्विका तदध्वालम्बना । अनुत्पत्ति-

---

*अतिक्रान्तमनसिकारस्तथैव यावद् भ्रुवोर्मध्ये चित्तं धारयति* । विस्तरश्चित्तस्तु "आसमुद्रास्थिविस्तारः संक्षेपादादिकर्मिकः" इत्येवमादिस्त्रिविध इति । एवं च कृत्वा चतुष्कोटिकः प्रश्नो भवतीति । *जिताजितमनस्कारयोरि*ति विस्तरः । प्रथमा कोटिः—जितमनस्कारस्य *स्वकायालम्बना* अशुभा आलम्बनपरीत्ततया परीत्ता, कायस्याल्पत्वात् , न वशितापरीत्ततया । जितमनस्कारत्वादतिक्रान्तत्वादित्यर्थः । द्वितीया कोटिः— अजितमनस्कारस्य *समुद्रपर्यन्तालम्बना* अशुभा । वशितापरीत्ततया परीत्ता; अजितमनस्कारत्वात् । नालम्बनपरीत्ततया, समुद्रपर्यन्तालम्बनत्वात् । तृतीया कोटिः—अजितमनस्कारस्य स्वकायालम्बना अशुभा । आलम्बनपरीत्ततयापि परीत्ता; कायस्याल्पत्वात् । वशितापरीत्ततयापि; अजितमनस्कारत्वात् । चतुर्थी कोटिः—जितमनस्कारस्य समुद्रपर्यन्तालम्बना अशुभा । नाप्यालम्बनपरीत्ततया परीत्ता; समुद्रपर्यन्तालम्बनत्वात् । नापि वशितापरीत्ततया ; जितमनस्कारत्वात् ।

*ससामन्तकध्यानान्तरेष्वि*ति । सामन्तकेषु ध्यानान्तरे चतुर्षु ध्यानेषु कामधातौ चेति *दशभूमिका* । ध्यानसामन्तकानां चतुष्ट्वात् । *अत एवार्थालम्बने*ति । वर्णसंस्थानालम्बनत्वादर्थालम्बना । न तु नामालम्बनेत्यभिप्रायः ।

*नाम्नैव सिद्धमशुभाकारे*ति । आकारार्थं न सूत्रयितव्यमित्यभिप्रायः । *यदध्विका तदध्वालम्बने*ति । चक्षुर्विज्ञानवदतीताया अतीतमालम्बनम् , एवं यावत्

धर्मिणी तु ऽध्वालम्बना। अधिमुक्तिमनस्कारत्वात् सास्रवा। वैराग्यलाभिकी च प्रायोगिकी च, उचितानुचितत्वात् ॥११॥

॥ उक्तमशुभायाः सप्रभेदं लक्षणम् ॥

**आनापानस्मृतिः प्रज्ञा पञ्चभूर्वायुगोचरा।**

**कामाश्रया,**

आननमानः = आश्वासः, यो वायुः प्रविशति। अपाननमपानः = प्रश्वासः, यो वायुः निष्क्रामति। तयोः स्मृतिरानापानस्मृतिः। सैव प्रज्ञास्वभावा। स्मृतिवचनं तु स्मृत्युपस्थानवत्; तद्बलाधानवृत्तित्वात्। पञ्चसु भूमिसु त्रिषु सामन्तकेषु ध्यानान्तरे कामधातौ चोपेक्षासम्प्रयोगित्वात्। वितर्कानुगुणत्वात् किल सुखदुःख-योस्तत्प्रतिपक्षस्य ताभ्यामसम्प्रयोगः। सुखसौमनस्ययोश्चावधानपरिपन्थित्वात्। तस्याश्चावधानसाध्यत्वादिति[१]।

---

प्रत्युत्पन्नायाः प्रत्युत्पन्नमिति। स्वालम्बननियतत्वात्। *अधिमुक्तिमनसिकारत्वाच्च* सूत्रितम्। *उचितानुचितत्वादिति*। अनादिमतिसंसारे उचितत्वाद् *वैराग्य-लाभिकी*। अनुचितत्वात् *प्रायोगिकी* ॥ ११ ॥

कायस्मृत्युपस्थानादीनि प्रज्ञास्वभावानि। *तद्बलाधानवृत्तित्वात्*। तस्याः स्मृतेर्बलस्याधानेन वृत्तिरेषामिति स्मृतिबलाधानवृत्तीनि कायस्मृत्युपस्थानादीनि कायप्रज्ञाद्रव्यादीनि स्मृत्युपस्थानानीत्युच्यन्ते। तद्वदानापानप्रज्ञा स्मृतिबला-धानवृत्तित्वादानापानस्मृतिरित्युच्यते। *पञ्चसु भूमिष्विति*। *त्रिषु सामन्तकेषु* चतुर्थसामन्तकवर्ज्येषु। *ध्यानान्तरे कामधातौ चेति* पञ्चसु भूमिषु। किं कारणम्? *उपेक्षासम्प्रयोगित्वात्*। यस्मात् प्रथमध्याने सामन्तकादिषूपेक्षा-वेदना भवति। चतुर्थध्याने सामन्तके तु यद्यप्युपेक्षास्ति, सा स्वभूमिरा-श्वासप्रश्वासानाम्। अथ किमर्थमेवोपेक्षा सम्प्रयोगिण्येवावधार्यत इति? अतो ब्रवीति - *वितर्कानुगुणत्वादिति*। *तत्प्रतिपक्षस्य* वितर्कप्रतिपक्षस्यानापानस्मृ-तेस्ताभ्यां सुखदुःखाभ्यामसम्प्रयोगः। *सुखसौमनस्ययोश्चावधानप्रतिपन्थित्वात्*। आभोगप्रत्यनीकत्वात्। *तस्याश्चानापानस्मृतेरवधानसाध्यत्वात्* ताभ्यामसम्प्रयोग इति वितर्कानुगुणत्वात्।

---

१. अवधाने०—का०।

ये तु मौलेष्वपि ध्यानेषु समापन्नस्योपेक्षामिच्छन्ति, तेषामष्टभूमिका; परेणाश्वासप्रश्वासानामभूमित्वात् । वाय्वालम्बना चैषा कामधात्वाश्रया । देवमनुष्येषु प्रायोगिकी वैराग्यलाभिकी च ।

तत्त्वमनस्कारश्चैषा इदन्धर्माणामेव,

**न बाह्यानाम्,**

उपदेशाभावात् । स्वयं च सूक्ष्मधर्मानभिसम्बोधात् ।

सा चेयम्—

**षड्विधा गणनादिभिः ॥ १२ ॥**

षट्कारणयुक्ता चैषा परिपूर्णा भवति—गणनया, अनुगमेन, स्थापनया, उपलक्षणया, विवर्त्तेन, परिशुद्ध्या च । तत्र च गणना नाम आश्वासप्रश्वासेषु चित्तं दत्वाऽनभिसंस्कारेण कायं चित्तं नाध्युपेक्ष्य[1] स्मृतिमात्रेण गणयति—एकं द्वौ यावद्दश । चित्ताभिसंक्षेपविक्षेपभयान्नाल्पबहुतरा । तस्यां तु त्रयो दोषाः— १. ऊनगणना, यदि द्वावेकं गृह्णाति । २. अधिकगणना, यद्येकं द्वाविति । ३. संकरः, यद्याश्वासं प्रश्वासतो गृह्णाति विपर्ययाद्वा । अतोऽन्यथा सम्यग्गणना । अन्तरविक्षेपे पुनरादितो गणयितव्यं तावद् यावत् समाधिं लभते ।

अनुगमो नाम अनभिसंस्कारेणाश्वासप्रश्वासानां गतिमनुगच्छति—कियद् दूरमेते प्रविशन्ति वा, निष्क्रामन्ति वा, किमेते सर्वशरीरव्यापिन एकदेश-

---

*किलेति* । *किल*शब्दः परमतद्योतकः । तेनेदं पक्षान्तरमुपन्यस्यते—*ये तु मौलेष्विति* विस्तरः । *परेणेति* । चतुर्थाद् ध्यानादारभ्य ।

*कामधात्वाश्रयेति* । तत्र वितर्कभूयस्त्वात् । *प्रायोगिकी* । अनुचितत्वात् । *वैराग्यलाभिकी* । उचितत्वात् ।

*इदन्धर्माणामिति* । अयं धर्मो बुद्ध एषामिति इदन्धर्माणः, तेषामेव । बौद्धानामित्यर्थः । *उपदेशाभावादिति* । *बाह्यानां* हि प्राणायामोपदेशोऽस्ति, नानापानस्मृत्युपदेश इति । *स्वयं च सूक्ष्मधर्मानभिसम्बोधादिति* । उपदेशमन्तरेण यस्माद् बाह्यानां नास्ति स्वयं सूक्ष्मधर्माभिसम्बोधः । सूक्ष्मत्वं पुनरस्याः षट्कारणयुक्तत्वात् । *कायं चित्तं वाध्युपेक्ष्येति* । अनासज्येत्यर्थः ।

---

१. चा०—का० ।

न्नारिण इति । तान् प्रविशतः कण्ठहृदयनाभिकट्यूरुजङ्घाप्रवेशक्रमेण यावत् पादावनुगच्छति ।

निष्क्रामतो वितस्तिव्यामान्तरं यावद्वायुमण्डलं वैरम्भाश्च वायव इत्यपरे । तदेतत् तत्त्वमनसिकारत्वान्न युक्तमेतत्[1] ।

स्थापना नाम नासिकाग्रे यावत् पादाङ्गुष्ठे स्थितां पश्यति, मणिसूत्रवत् ।

किमनुग्राहका एते उपघातकाः शीता उष्णा इति ? उपलक्षणा नाम । नैते केवला वायव एव, चत्वार्येतानि महाभूतानि महाभूताभिनिर्वृत्तमुपादायरूपं तदाश्रिताश्चित्तचैत्ता इति पञ्चस्कन्धानुपलक्षयति ।

विवर्तो नाम वाय्वालम्बनां बुद्धिं विवर्त्योत्तरोत्तरेषु[2] कुशलमूलेषु संनियोजनं यावदग्रधर्मेषु ।

परिशुद्धिर्दर्शनमार्गादिष्ववतारः ।

स्मृत्युपस्थानादिवज्रोपमसमाध्यन्ता विवर्त इत्यपरे । क्षयज्ञानादि-विशुद्धिरिति[3] ।

गणनानुगमः स्थानं लक्षणार्थविवर्त्तना ।
परिशुद्धिश्च षोढेयमानपानस्मृतिर्मता ॥

इति संग्रहश्लोकः ॥ १२ ॥

---

*वितस्तिव्यामान्तरमिति* । बलवद्दुर्बलप्राणियोगात् ।

*यावद्वायुमण्डलमिति* अधस्तादनुगच्छति । *वैरम्भाश्च वायव* इत्युपरिष्टात् । *तत्त्वमनसिकारत्वान्न युक्तमेतत्* । यावद्वायुमण्डलं वैरम्भाश्च वायव इति । अधिमुक्तिमनस्कारस्यैषा कल्पना युज्येत ।

*किमनुग्राहका एते यावदुष्णा* इति । स्थापनैवेयं द्रष्टव्या । कायप्रदेश एवानुग्राहकादिविशेषस्थापनतः । *तदाश्रिताश्चित्तचैत्ता* इति । तत्प्रतिबद्धवृत्तय इत्यर्थः । *उत्तरोत्तरेषु कुशलमूलेष्विति* । स्मृत्युपस्थानोष्मगतादिष्विति । *दर्शनमार्गादिष्विति* । आदिशब्देन भावनामार्गग्रहणम् ।

*क्षयज्ञानादिविशुद्धिरिति* । *आदिशब्देन* अनुत्पादज्ञानाशैक्षसम्यग्दृष्टि-ग्रहणम् ॥ १२ ॥

---

१. युक्तम्—का० । २. विवर्त्योत्तरेषु—का० । ३. ०शुद्धिरिति—का० ।

तत्र पुनर्वेदितव्यौ—

**आनापानौ यतः कायः,**

यद्भूमिको हि कायः तद्भूमिकावेतौ ; कायैकदेशत्वात् । कायचित्तविशेषसंनिश्रिता आश्वासप्रश्वासा वर्तन्ते, आरूप्यकललादिगतानामभावात्, अचित्तचतुर्थध्यानसमापन्नानां च । यदि हि कायः शुषिरो भवति आश्वासप्रश्वासभूमिकं च चित्तं संमुखीभूतम् , एवं ते वर्तन्ते। जायमानस्य चतुर्थध्यानाद् व्युत्तिष्ठमानस्य च ऽविशन्ति, म्रियमाणस्य चतुर्थं च ध्यानं समापद्यमानस्य निष्क्रामन्ति

एतौ चानापानौ

**सत्त्वाख्यौ,**

नासत्त्वसंख्यातौ ।

**अनुपात्तकौ ।**

इन्द्रियविनिर्भागित्वात् ।

**नैःष्यन्दिकौ,**

नौपचयिकविपाकजौ । कायोपचयेनापचयात्[1] उच्छिन्नानां[2] पुनः प्रतिसन्धानाच्च । न ह्येतद् विपाकरूपस्यास्ति ।

---

"*आनापानौ यतः कायः*" इति । आनापानस्मृतिसम्बन्धेन सर्वभूमिकावानापानौ निर्दिश्येते । *यद्भूमिको हि काय* इति । कामावचरः यावत् तृतीयध्यानभूमिकः । *तद्भूमिकावेतौ* । नान्यभूमिकौ । *कायचित्तविशेषसंनिश्रिता* इति । कायविशेषसंनिश्रिताः, चित्तविशेषसंनिश्रिताश्चाश्वासप्रश्वासाः । कस्माद् ? इत्याह—*आरूप्यकललादिगतानामभावादिति* । कायभावादारूप्यगतानां न भवन्ति, कललादिगतानां च । कललार्बुदपेश्यादिगतानां च न भवन्ति; कायविशेषाभावात् , सुषिरकायाभावादित्यर्थः । *अचित्तानां च न भवन्ति* । चित्ताभावात् । *चतुर्थध्यानसमापन्नानामपि न भवन्ति* । आश्वासप्रश्वासभूमिचित्तविशेषाभावात् । अत एवाह—*यदि कायः सुषिर* इति विस्तरः ।

*इन्द्रियविनिर्भागित्वादि*ति । इन्द्रियपृथग्वृत्तित्वादित्यर्थः । कायोपचयेनापचयान्नौपचयिकौ । *उच्छिन्नानां* चाश्वासप्रश्वासानां *पुनःप्रतिसन्धानान्न विपाकजौ* ।

---

१. °नानुपचयात्—का० ।　　　　२. छिन्नानां—का० ।

अभि० को० ३ : १०

**नाधरेण लक्ष्येते मनसा च तौ ॥ १३ ॥**

स्वभूम्युपरिभूमिकेन च तयोश्चित्तेनोपलक्षणम्। नाधरेणैर्यापथिक-नैर्माणिकेन[1]। उक्ते द्वे अवतारमुखे। ताभ्यां तु समाधिर्लभ्या ॥१३॥

**निष्पन्नशमथः कुर्यात् स्मृत्युपस्थानभावनाम्।**

विपश्यनायाः सम्पादनार्थम्।

कथं च पुनः कुर्यात् ?

**कायविच्चित्तधर्माणां द्विलक्षणपरीक्षणात् ॥ १४ ॥**

कायं स्वसामान्यलक्षणाभ्यां परीक्षते, वेदनां चित्तं धर्मांश्च। स्वभाव एवैषां स्वलक्षणम्। सामान्यलक्षणं तु अनित्यता संस्कृतानाम्, दुःखता सास्रवाणाम् शून्यताऽनात्मते सर्वधर्माणाम्।

कायस्य पुनः कः स्वभावः ? भूतभौतिकत्वम्। धर्मास्त्रिभ्योऽन्ये। समाहितस्य किल कायं परमाणुशः क्षणिकतश्च पश्यतः कायस्मृत्युपस्थानं निष्पन्नं भवति ॥ १४ ॥

---

न ह्येतद्विपाकरूपस्यास्ति। विपाकात्मकस्य रूपस्य चक्षुरादेरेतत् पुनः प्रतिसन्धानं नास्ति। अरूपस्य तु चित्तचैत्तस्य पुनः प्रतिसन्धानं न वार्यते।

*नाधरेणैर्यापथिकनैर्माणिकेनेति*। ऐर्यापथिकं नैर्माणिकं च चित्तमधरभूमिकं सम्मुखीभवति, यावच्चतुर्थध्यानोपपन्नस्येत्यत आशंक्योच्यते—नाधरभूमिकाभ्यां ताभ्यामुपलक्षणमिति ॥ १३ ॥

*विपश्यनायाः सम्पादनार्थमिति*। प्रज्ञायाः सम्पादनार्थमित्यर्थः। निष्पन्नसमाधेरपि हि प्रज्ञामन्तरेण क्लेशा न प्रहीयन्ते। "*ज्ञानवध्याः क्लेशाः*" इति वचनात्। कुतः पुनरेतत् स्मृत्युपस्थानभावनया विपश्यना सम्पद्यत इति ? सूत्रात्। "एकायनोऽयं भिक्षवो मार्गो यदुत स्मृत्युपस्थानानि। केवलोऽयं कुशलराशिः यदुत चत्वारि स्मृत्युपस्थानानि" ( ) इति वचनात्।

"*कायविद्*" इति। वेदनावित्। *स्वभाव एवैषां स्वलक्षणमिति*। कः स्वभावः ? कायस्य भूतभौतिकत्वम्, वेदनाया अनुभवत्वम्, चित्तस्योपलब्धित्वम्। एभ्यस्त्रिभ्योऽन्येषां यथास्वं स्वभावः। *दुःखता सास्रवाणामिति*।

---

१. °णेर्यापथिक—का०।

अथ स्मृत्युपस्थानानां कः स्वभावः ? त्रिविधस्मृत्युपस्थानं स्वभावसंसर्गालम्बनस्मृत्युपस्थानम् ।

तत्र स्वभावस्मृत्युपस्थानम्

**प्रज्ञा,**

कीदृशी प्रज्ञा ?

**श्रुतादिमयी,**

श्रुतमयी, चिन्तामयी, भावनामयी च । त्रिविधानि स्मृत्युपस्थानानि श्रुत-चिन्ता-भावनामयानि ।

**अन्ये संसर्गालम्बनात्**[1]**,**

अन्ये तत्सहभुवो धर्माः संसर्गस्मृत्युपस्थानम् । तदालम्बनात्[2] आलम्बन-स्मृत्युपस्थानम् ।

स्वभावस्मृत्युपस्थानं प्रज्ञेति कुत एव तत् ? "काये[3] कायानुपश्यना स्मृत्युपस्थानम्" इति वचनात् ।

---

आर्यप्रतिकूललक्षणं दुःखमिति व्याख्यातमेतत् । धर्मास्त्रिभ्योऽन्य इति असम्भिन्नव्यवस्थामभिसन्धायैवमुच्यते । सम्भिन्नव्यवस्थायां तु कायादयोऽपि निगृह्यन्ते । पुन सर्वे संस्कृता असंस्कृताश्च धर्मा द्रष्टव्याः ॥ १४ ॥

*स्वभावस्मृत्युपस्थानं प्रज्ञे*ति । यस्मात् संसर्गालम्बनपमेदयेयं प्रज्ञोपतिष्ठते, तस्मात् स्मृत्युपस्थानमित्युच्यते ।

"*श्रुतादिमयी*" इति । विशेषणम् । यस्मात् स्मृत्युपस्थानानि प्रायोगिकाणि नोपपत्तिलभ्यानि कस्मात् प्रज्ञास्वभावमित्युच्यते, किमन्यथापि स्मृत्युपस्थानमस्ति ? इति उच्यते—"*अन्ये संसर्गालम्बनाद्*" इति । *अन्ये* तत्सह-भुवो वेदनादयः । संसर्गेण स्मृत्युपस्थानं *संसर्गस्मृत्युपस्थानम्* । स्वभावस्मृत्यु-पस्थानसंसर्गात् । *तदालम्बनादि*ति । स्वभावसंसर्गस्मृत्युपस्थानालम्बनाद् *आलम्बनस्मृत्युपस्थानम्* । *तदालम्बना आलम्बनस्मृत्युपस्थान*मित्यपरे पठन्ति । आलम्ब्यन्त इत्यालम्बनाः । के ? कायवेदनाचित्तधर्माः । तदेवं सति तदालम्बनस्मृत्युपस्थानं सर्वधर्मस्वभावं भवति । उक्तं च भगवता—"सर्वे धर्मा इति भिक्षवश्चतुर्णां स्मृत्युपस्थानानामेतदधिवचनम्" इति ।

---

१. लम्बनाः—का० । २. तदालम्बना—का० । ३. कामे—का० ।

का पुनरनुपश्यना ? प्रज्ञा । तया हि तद्वाननुपश्यः क्रियते । यतश्चोक्तम् "अध्यात्मं काये कायानुपश्यी विहरति" इति । अनुपश्यमस्यास्ति दर्शनमित्यनुपश्यी, कायेऽनुपश्यी कायानुपश्यी ।

कस्मात् प्रज्ञा 'स्मृत्युपस्थानम्' इत्युक्ता भगवता ? स्मृत्युद्रेकत्वादिति **वैभाषिकाः** । स्मृतिबलाधानवृत्तित्वादिति योऽर्थः । दारुपाटकीलसन्धारणवत्[1] ।

एवं तु युज्यते—स्मृतिरनयोपतिष्ठत इति स्मृत्युपस्थानं प्रज्ञा; यथा-

---

तया हि प्रज्ञया तद्वान् *प्रज्ञावान्* । *अनुपश्यः क्रियत* इति । अनुपश्यतीत्यनुपश्यः । "पाघ्राध्माधेट्दृशः शः" (पा० सू० ३.१.१३७) इति शप्रत्ययः । अनुपश्यं पुद्गलं करोतीत्यनुपश्ययति । प्रज्ञास्वभावे त्वेवं विग्रहः—अनुपश्यस्य करणमनुपश्यनेति । तया हि प्रज्ञया तद्वान् प्रज्ञावाननुपश्यः क्रियते । यथा प्रज्ञायोगात् प्राज्ञः पुद्गल उच्यते, एवमनुपश्यनायोगादनुपश्य इत्यतोऽनुपश्यना प्रज्ञेति सिद्धम् । *यतश्चोक्तं भगवता—अध्यात्मं* प्रत्यात्मं *काये कायानुपश्यी* कायानुदर्शी *विहरती*ति । तेनापि ज्ञायतेऽनुपश्यना प्रज्ञेति । कथमिति ? साधयति—*अनुपश्यमस्यास्ति* । किं तद् ? दर्शनम् । दर्शनलक्षणं ह्यनुपश्यम् । अतोऽनुपश्यी पुद्गलः, दण्डिवत् । ततः सप्तमीतत्पुरुषः—*कायेऽनुपश्यी कायानुपश्यी*ति । कायमनुपश्यितुं शीलमस्येति *कायानुपश्यी*ति णिनिरपि (पा० सू० ३.२.७८) यदि विधीयेत, तथाप्येतद्रूपं सिद्ध्यतीति पश्यामः ।

*स्मृत्युद्रेकत्वादि*ति । स्मृत्यधिकत्वादित्यर्थः । *स्मृतिबलाधानवृत्तित्वादि*ति । बलस्याधानम् स्मृतेर्बलाधानं स्मृतिबलाधानम्, स्मृतिबलाधानेन वृत्तिरस्या इति स्मृतिबलाधानवृत्तिः प्रज्ञा, तद्भावः तस्मात् । *दारुपाटकीलसन्धारणवत्* । यथा दारुपाटेन तीक्ष्णकीलेन दारुपाटस्य सन्धारणम्, एवमस्याः प्रज्ञायाः स्मृतिबलाधानेनालम्बने वृत्तिरिति । यदि हि स्मृतिरालम्बनं धारयत्येवं प्रज्ञा प्रजानातीति, तदेवं स्मृत्योपतिष्ठत इति स्मृत्युपस्थानं प्रज्ञेति *वैभाषिकीयो*ऽर्थः । "कृत्यल्युटो बहुलम्" (पा०सू० ३.३.११३) इति कर्तर्यपि ल्युड् भवतीति ।

*एवं तु युज्यत* इत्याचार्यः । करणसाधनमेतत् । *स्मृतिरनयोपतिष्ठत* इति । अर्थप्रदर्शनमात्रमेतत् । विग्रहस्त्वेवं कर्तव्यः—उपतिष्ठतेऽनेनेत्युपस्थानम्, स्मृतेरुपस्थानं स्मृत्युपस्थानमिति । कथं स्मृतिरनयोपतिष्ठते ?

---

1. °पाटग०—का० ।

दृष्टस्याभिलपनात् । तद्यथा ह्युक्तमायुष्मता अनिरुद्धेन—"तस्य काये कायानुपश्यिनो विहरतः कायालम्बनानुस्मृतिस्तिष्ठति सन्तिष्ठते" इति विस्तरः ।

भगवताऽपि चोक्तम्—"तस्य काये कायानुपश्यिनो विहरत उपस्थिता स्मृतिर्भवत्यसम्मूढा" इति ।

यत्र तूक्तम्—"कथं भिक्षवश्चतुर्णां स्मृत्युपस्थानानां समुदयश्च भवत्यस्तङ्गमश्च । आहारसमुदयात् कायस्य समुदयो भवति, आहारनिरोधात् कायस्यास्तङ्गमः" इति । अत्रालम्बनमेव स्मृत्युपस्थानमुक्तम्, स्मृतिरत्रोपतिष्ठत इति कृत्वा । यथालम्बनं चैषां नाम स्वपरोभयसन्तत्यालम्बनत्वात् प्रत्येकमेषां त्रैविध्यम् ।

---

इत्याह—*यथादृष्टस्याभिलपनादि*ति । यस्माद् यथादृष्टोऽर्थः प्रज्ञया, तथैवाभिलप्यते । स्मृत्योद्गृह्यत इत्यर्थः । क्व पुनरुपतिष्ठते ? काये, यावद्धर्मेषु । काये स्मृत्युपस्थानं कायस्मृत्युपस्थानम् । एवं यावद् धर्मेषु स्मृत्युपस्थानं धर्मस्मृत्युपस्थानमिति । यथा च स्वभावस्मृत्युपस्थानस्य, एवं संसर्गस्मृत्युपस्थानस्यापि । यथैव हि प्रज्ञया स्मृतिरुपतिष्ठते कायादिषु, ए˙ तत्सम्प्रयुक्तैरपीति ।

इदानीं सूत्रोक्तानां स्मृत्युपस्थानानां करणसाधनत्वमसम्बध्यमानं दृष्ट्वा कारकान्तरेणार्थं विवक्षुराह—*यत्र तूक्तमि*ति विस्तरः । यथा *कायस्य समुदयास्तङ्गतावुक्तौ*, एवं वेदनादीनामपि वक्तव्यौ । कथम् ? स्पर्शसमुदयात् वेदनायाः समुदयो भवति, स्पर्शनिरोधाद्वेदनाया अस्तङ्गमः । नामरूपसमुदयाच्चित्तस्य समुदयो भवति, नामरूपनिरोधाच्चित्तस्यास्तङ्गमः । मनसिकारसमुदयाद्धर्माणां समुदयो भवति, मनसिकारनिरोधाद् धर्माणामस्तङ्गम इति । *अत्र सूत्रे आलम्बनमेव* कायवेदनाचित्तधर्माः *स्मृत्युपस्थानम्* । *स्मृतिरत्र कायादिषूपतिष्ठत इति कृत्वा* । तदेत्रमधिकरणसाधनं दर्शितं भवति—उपतिष्ठते स्मृतिरस्मिन्नित्युपस्थानम्, स्मृतेरुपस्थानं स्मृत्युपस्थानम् । एवं यावद्धर्मा एव स्मृत्युपस्थानं धर्मस्मृत्युपस्थानमिति विग्रहः । यदि चात्र सूत्रे आलम्बनं स्मृत्युपस्थानं नाभिप्रेतमभविष्यत्, न *भगवानेवमवक्ष्यत्*—'कथं च भिक्षवश्चतुर्णां स्मृत्युपस्थानानां समुदयश्च भवत्यस्तङ्गमश्च । आहारसमुदयात् कायस्य समुदयो भवति, आहारनिरोधात् कायस्यास्तङ्गमः" इति विस्तरः । कायादीनां हि स्मृत्युपस्थानत्वे सति तथा वचनं युज्येत । तस्मात् कायादय आलम्बनस्मृत्युपस्थानमिति सिद्धम् ।

*यथालम्बनं चैषां नामे*ति । एषां कायस्मृत्युपस्थानादीनां आलम्बनापेक्षया कायस्मृत्युपस्थानं यावद्धर्मस्मृत्युपस्थानमिति नाम व्यवस्थाप्यते । *स्वपरोभयसन्तत्यालम्बनत्वात्* । स्वसन्तत्यालम्बनत्वात्, परसन्तत्यालम्बनत्वात्, उभय-

क्रमः ।

यथोत्पत्ति,

कस्मात् पुनरेवमुत्पत्तिः ? औदारिकस्य पूर्वं दर्शनात् । यतो वा कामरागस्य कायोऽधिष्ठानम्, स च वेदनाभिलाषात्, स च चित्तस्यादान्तत्वात्, तत् क्लेशाप्रहाणादिति वैभाषिकाः ।

चतुष्कं तु विपर्यासविपक्षतः ।। १५ ।।

शुचिसुखनित्यात्मविपर्यासानां चतुर्णां प्रतिपक्षेण चत्वारि स्मृत्युपस्थानान्युक्तानि यथाक्रमम्, नाधिकन्यूनानि । एवं च त्रीण्यसम्भिन्नालम्बनानि, चतुर्थमुभयथा । यदि धर्मानेव पश्यत्यसम्भिन्नालम्बनम्, अथ कायादीनां द्वे त्रीणि चत्वारि वा समस्तानि पश्यति सम्भिन्नालम्बनम् ।। १५ ।।

---

सन्तत्यालम्बनत्वाच्च *प्रत्येकमेकैकश एषां* कायस्मृत्युपस्थानादीनां *त्रैविध्यं भवति* । सूत्रे वचनात् । कथम् ? "अध्यात्मं काये कायानुपश्यी विहरति, आतापी सम्प्रजानन् स्मृतिमान् विनीय लोकेऽभिध्यादौर्मनस्ये । बहिर्धा काये कायानुपश्यी विहरति आतापीति पूर्ववत् । अध्यात्मबहिर्धा काये कायानुपश्यी विहरतीति पूर्ववत् । एवं तावत् कायस्मृत्युपस्थानस्य त्रैविध्यम् । वेदनास्मृत्युपस्थानादीनामप्यध्यात्मं वेदनायां वेदनानुपश्यी विहरति" इति विस्तरेण त्रैविध्यं योज्यम् ।

*औदारिकस्य पूर्वं दर्शनादि*ति । *कायस्त्रिभ्य औदारिकः*, षड्विज्ञानविज्ञेयत्वादिति तस्य पूर्वं दर्शनम् । द्वाभ्यां वेदना प्रकारौदारिकतयेति तदनन्तरं तस्या दर्शनम् । सूक्ष्मप्रचारत्वाद् दुर्विज्ञतया धर्माः सूक्ष्मा इत्यतस्तेभ्यः पूर्वं चित्तस्य दर्शनम् । अन्ते धर्माणामिति । *स चेति* । कामरागः । *स च चित्तस्येति* । स वेदनाभिलाषः । *तत् क्लेशाप्रहाणात्* । तददान्तत्वम् ।

*यथाक्रममि*ति । *शुचिविपर्यासस्य प्रतिपक्षेण* कायस्मृत्युपस्थानम् । *सुखविपर्यासस्य प्रतिपक्षेण* वेदनास्मृत्युपस्थानम् । यत्किञ्चिद् वेदितमिदमत्र दुःखस्येति । *नित्यविपर्यासस्य प्रतिपक्षेण* चित्तस्मृत्युपस्थानम्; चित्तस्य लघुपरिवर्तित्वात् । *आत्मविपर्यासस्य प्रतिपक्षेण* धर्मस्मृत्युपस्थानम् । पिण्डविभागतो धर्माणामनात्मकारित्वाद्धर्ममात्रं रहितमात्मनेति धर्मनिर्वचनतः । धर्मा इमे पृथक्पृथगवस्थिताः । न च कश्चित् स्वतन्त्र आत्मेति । तद्दर्शनाद्वा । *चतुर्थमुभयथेति* । धर्मस्मृत्युपस्थान*मसम्भिन्नालम्बनम*मिश्रालम्बनं *भवति* । कायवेदनाचित्तव्यतिरिक्तधर्मालम्बनत्वसम्भवात् । सम्भिन्नालम्बनमपि भवति । *कायादीनां द्वे त्रीणि चत्वारि वा समस्तानि पश्यतीति* । यदि कायं वेदनां च

एवं कायाद्यालम्बनानि स्मृत्युपस्थानान्यभ्यस्य

**स धर्मस्मृत्युपस्थाने समस्तालम्बने स्थितः ।**

**अनित्यदुःखतः शून्यानात्मतस्तान् विपश्यति ।। १६ ।।**

सम्भिन्नालम्बने धर्मस्मृत्युपस्थाने स्थितस्तान् कायादीन् सर्वानभिसमस्य चतुर्भिराकारैः पश्यति—अनित्यतः, दुःखतः, शून्यतः, अनात्मतश्च ॥ १६ ॥

**तत ऊष्मगतोत्पत्तिः,**

तस्माद्धर्मस्मृत्युपस्थानादेवमभ्यस्तात् क्रमेणोष्मगतं नाम कुशलमूलमुत्पद्यते । ऊष्मगतमिवोष्मगतम् ; क्लेशेन्धनदहनस्यार्यमार्गाग्नेः पूर्वरूपत्वात् ।

**तच्चतुःसत्यगोचरम् ।**

तदूष्मगतं प्राकर्षिकत्वाच्चतुःसत्यालम्बनम् ।

**षोडशाकारम्,**

दुःखं चतुर्भिराकारैः पश्यति--अनित्यतः, दुःखतः, शून्यतः, अनात्मतश्च । समुदयं चतुर्भिः—हेतुतः, समुदयतः, प्रभवतः, प्रत्ययतश्च । निरोधं चतुर्भिः—निरोधतः, शान्ततः, प्रणीततः, निःसरणतश्च । मार्गं चतुर्भिः—मार्गतः, न्यायतः, प्रतिपत्तितः, नैर्याणिकतश्च । एषां तु विशेषणं पश्चाद् वक्ष्यामः ।

**ऊष्मभ्यो मूर्धानः,**

मृदुमध्याधिमात्रक्रमाभिवृद्धेभ्य ऊष्मभ्यो मूर्धान उत्पद्यन्ते ।

**तेऽपि तादृशाः ।। १७ ।।**

---

द्वौ पश्यति धर्मस्मृत्युपस्थानम्, तत् सम्भिन्नालम्बनम् । यदि कायं यावद्धर्मांश्च पश्यति, तदपि तथैव । यदपि कायं वेदनां चित्तं धर्मांश्च समस्तान् पश्यति, तदपि सम्भिन्नालम्बनं धर्मस्मृत्युपस्थानमिति ॥ १५ ॥

"*समस्तालम्बने स्थितः*" इति । कायवेदनचित्तधर्मानभिसमस्य ॥ १६ ॥

*ऊष्मगतमिति* । उष्मप्रकारं कुशलमूलम् । *पूर्वरूपत्वादिति* । प्रथमनिमित्तत्वात् । पूर्वस्वभावत्वाद्वा ।

*प्राकर्षिकत्वादिति* । प्राबन्धिकत्वादित्यर्थः ।

*एषां तु विशेषणं पश्चाद्वक्ष्याम* इति । सप्तमे कोशस्थाने "द्रव्यतः षोडशाकाराः" (अभि० को० ७.१३) इत्यर्थः ।

यादृशा ऊष्माणश्चतुःसत्यालम्बनाः षोडशाकाराश्च । उत्कृष्टतरत्वात्तु नामान्तरम् । चलकुशलमूलमूर्धत्वात् मूर्धानः । एभ्यो हि पातः, अतिक्रमो वा ॥ १७ ॥

**उभयाकरणं धर्मेण,**

एषां पुनरुभयेषामूष्मगतमूर्ध्नां धर्मस्मृत्युपस्थानेनाकरणम् ।

किमिदमाकरणम् ? सत्येष्वाकाराणां प्रथमतो विन्यसनम् ।

**अन्यैरपि तु वर्धनम् ।**

चतुर्भिरपि स्मृत्युपस्थानैरेषां वर्धनम् । विवर्धयतः पूर्वप्रतिलब्धानामसम्मुखीभावः; अबहुमानात्[1] ।

**मृदुमध्याधिमात्रक्रमाभिवृद्धेभ्यः पुनरुत्पद्यते**

**तेभ्यः क्षान्तिः,**

---

यदि तेऽपि तादृशाः, अथ किमर्थमुपदिश्यन्ते ? इत्यत आह—*उत्कृष्टतरत्वात्तु नामान्तरमिति* । अथ कस्मान्मूर्धान इत्युच्यन्ते ? इत्याह—*चलकुशलमूलमूर्धत्वादिति* । मूर्धशब्दोऽयं प्रकर्षपर्यन्तवाची । तथा हि लोके वक्तारो भवन्ति—'मूर्धगता खल्वस्य श्रीः' इति । द्वे हि कुशलमूले चले उष्मगतमूर्धलक्षणे; परिहाणिसम्भवात् । द्वे अचले क्षान्तिलौकिकाग्रधर्मलक्षणे; विपर्ययात् । तत्र तयोर्यन्मृदु, तदूष्मगतम् । यदधिमात्रम्, ते मूर्धानः । अचलयोरपि यन्मृदु सा क्षान्तिः । यदधिमात्रम् ते लौकिकाग्रधर्माः । *एभ्यो हि पातोऽतिक्रमो* वेति । मूर्ध्नो चलत्वात् । वृक्षादिमूर्धभ्यो हि लोके पातो वा भवेद्, अतिपातो वा । उपरिष्ठानुप्राप्तिरिति मूर्धसाधर्म्यम् ॥ १७ ॥

*सत्येष्वाकाराणां प्रथमतो विन्यसनमिति* । सत्येष्वनित्याद्याकाराणामादित उपनिपातनम् । तदालम्बनानां प्रवर्तनमित्यर्थः ।

"*अन्यैरपि*" इति । धर्मस्मृत्युपस्थानादन्यैरपीत्यर्थः । "*वर्धनम्*" । अभ्यासेनोत्तप्तीकरणम् ।

*विवर्धयत* इति विस्तरः । विवर्धयतो योगिनो वर्धनेन विशिष्टानां कुशलमूलानां सम्मुखीभावः । *पूर्वप्रतिलब्धानामिति* । अविशिष्टानामसम्मुखीभावः ।

---

१. अबहुमानत्वात्—का० ।

अधिमात्रसत्यक्षमणादपरिहाणितः[१]। साऽपि त्रिप्रकारा—मृद्वी, मध्या, अधिमात्रा च।

**द्विधा तद्वत्,**

यथा मूर्धान उक्ताः, एवं मृदुमध्ये क्षान्ती ; तथैवाकरणात्।

विवर्धने त्वयं विशेषः—सर्वस्याः

**क्षान्त्या धर्मेण वर्धनम् ॥ १८ ॥**

स्मृत्युपस्थानेनैव, नान्येन ॥ १८ ॥

**कामाप्तदुःखविषया त्वधिमात्रा,**

'क्षान्तिः' इति वर्त्तते। अग्रधर्मश्लेषादसौ[२] कामावचरदुःखालम्बनैव। अत एवोष्मगतादीनां त्रैधातुकदुःखाद्यालम्बनत्वसिद्धिः; नियमावचनात्।

---

कस्मात्? *अबहुमानात्।* न्यूनत्वेनाबहुमानादित्यर्थः। *अधिमात्रसत्यक्षमणादि*ति। ऊष्मगतावस्थायां मृदु सत्यं क्षमते रोचते। मूर्धावस्थायां मध्यम्। तदनन्तरमिदानीमधिमात्रसत्यक्षमणात्क्षान्तिरुत्पद्यते। कथम्? इत्यत आह—*अपरिहाणित* इति। यस्मात् क्षान्तिर्न परिहीयते, मूर्धभ्यस्तु परिहीयत इत्यस्ति सम्भवः।

'*द्विधा तद्वद्*'' इति। *मृदुमध्ये क्षान्ती तथैव*। *यथा मूर्धान उक्ताः* तथैवा*कारणात्* धर्मस्मृत्युपस्थानेन। सत्येष्वाकाराणामाकरणादित्यर्थः। *सर्वस्या* इति। मृदुमध्याधिमात्रभेदभिन्नायाः *सर्वस्याः क्षान्तेः*। धर्मस्मृत्युपस्थानेनैवं वचनम्। *नान्येन* कार्यस्मृत्युपस्थानादिना ॥ १८ ॥

कस्मात्? *अग्रधर्मश्लेषात्।* अग्रधर्मा हि दर्शनमार्गश्लेषात् धर्मस्मृत्युपस्थानात्मका एवेति। *अग्रधर्मश्लेषा*दिति। अग्रधर्माणां *कामावचरदुःखसत्यालम्बनानामनन्तरोत्पादात्* क्षान्तेः कामावचरत्वदुःखसत्यालम्बनम्। अग्रधर्मश्लेषाद्धि तत्सादृश्यमिति। *नियमावचना*दिति। अधिमात्रक्षान्तिवदूष्मगतादीनामालम्बनं प्रतिनियमावचनात्। अधिमात्रक्षान्त्यवधारणेनैव हि त्रैधातुकदुःखाद्यालम्बनत्वमेषामूष्मगतादीनां सिद्ध्यति। कथम्? कामाप्तमेव दुःखं विषयोऽस्याम्। सेयं कामाप्तदुःखविषया अधिमात्रक्षान्तिः। क्षान्तेरेवेत्यवधारणात् अन्यान्यूष्मगतादीनि त्रैधातुकदुःखाद्यालम्बनानीति सिद्धम्।

---

१. अधिमात्रस्य क्षम०—का०। २. °संश्लेषादसौ—का०।

यदा किल रूपारूप्यप्रतिपक्षादीनामेकैकसत्याकारालम्बनापह्रासेन[1] यावत् कामावचरमेव दुःखं द्वाभ्यां क्षणाभ्यां मनसि करोति, एषा सर्वैव मध्या क्षान्तिः। यदैकमेव क्षणम्, तदधिमात्रेति।

---

*यदा किलेति* विस्तरः। यदा किल *रूपारूप्यप्रतिपक्षादीनाम्*। आदिशब्देन रूपारूप्यनिरोधसमुदयदुःखानां कामावचरप्रतिपक्षादीनां च ग्रहणम्। *एकैकसत्याकारालम्बनापह्रासेन*। एकैकस्य सत्याकारस्य एकैकस्य सत्यालम्बनस्य चापह्रासेन *यावत् कामावचरमेव दुःखं द्वाभ्यां क्षणाभ्यां मनसिकरोति*। *एषा सर्वैव* रूपारूप्यप्रतिपक्षाकारह्रासात् प्रभृति *मध्या क्षान्तिः*। कथम्? अन्वयज्ञानपक्षं तावन्मार्गं मार्गतो न्यायतः प्रतिपत्तितो नैर्याणिकतश्चेति तैश्चतुर्भिराकारैराकारयति। ततस्त्रिभिरेकं हित्वा। ततो द्वाभ्यां द्वौ हित्वा। तत एकेन। ततो मार्गसत्यं हित्वा। रूपारूप्यनिरोधं चतुर्भिः स्वैराकारैराकारयति, ततस्त्रिभिः द्वाभ्यामेकेनैव चाकार्य निरोधसत्यं चापास्य। समुदयसत्यं चतुर्भिः स्वैराकारैः, त्रिभिः द्वाभ्यामेकेन चाकार्य, तथैव तदपास्य। दुःखसत्यं स्वैराकारैर्यावदेकेनाकार्य। तदपि सत्यमपास्य। कामावचरप्रतिपक्षं स्वैश्चतुर्भिराकारैः त्रिभिः द्वाभ्यामेकेन चाकारयति, तदपास्य। कामावचरनिरोधसमुदयसत्ये तथैव स्वाकारह्रासक्रमेणाकार्यापास्य च। कामावचरं दुःखसत्यं चतुर्भिराकारैराकारयति, ततस्त्रिभिः, ततो द्वाभ्यामाकारयतीति। एवं हि ह्रासारम्भात् प्रभृति सर्व एते क्षणा मध्या क्षान्तिरित्युक्तं भवति।

तृतीये क्षणे *तदालम्बनैवाधिमात्रा* क्षान्तिः। चतुर्थे अग्रधर्मास्तदालम्बना एव।

मृद्वी तु क्षान्तिर्या पुरस्तादधिमात्रेभ्यो मूर्धभ्योऽनन्तरं कामावचरं दुःखसत्यं यावन्मार्गसत्यम्। रूपारूप्यावचरं च। स्वैः स्वैः सर्वैराकारैरनपह्रासं मनसिकुर्वत इत्यवगन्तव्यम्।

एवं तावदेके व्याचक्षते—आकारापह्रासपूर्वक आलम्बनापह्रास इति।

अपरे पुनर्व्याचक्षते—एकैकसत्याकारालम्बनापह्रासेनेति। नैवं ग्रहीतव्यम्—एकैकसत्याकारापह्रासेनैकैकालम्बनापह्रासेन चेति। किं तर्हि? रूपारूप्यप्रतिपक्षादीनामेकैकेषां सत्यानां ये आकाराः, तेषाम् आलम्बनह्रासेनेति व्याख्यातव्यमिति।

एकान्नविंशतिक्षणशतं मध्या क्षान्तिरिति वर्णयन्ति। आकारापह्रासपूर्वके ह्यालम्बनापह्रासे सति अतिबहवश्चित्तक्षणा विसर्पन्ति। न चैतन्न्याय्यम्।

---

१. ०पक्षादयेकैकसत्याल०—का*।

**क्षणं च सा ।**

**क्षणिका चासौ, न प्राकर्षिकी ।**

**तथाग्रधर्माः,**

---

न हि सत्येषु विद्यमानेषु आकारत्यागो युज्यते। यदा तु सत्यानि त्यक्तानि भवन्ति, तदाकारत्याग इति युक्तम्। एवं च सति पूर्वं सत्यालम्बनह्रासं करोति, पश्चादाकारह्रासम्। न हि मौले विषयेऽनपाकृते तदालम्बनापाकरणं न्याय्यम्। समाहितासमाहितदुःख-समुदय-निरोध-मार्गा अष्टौ व्यवस्थाप्यन्ते। एषामाकारा द्वात्रिंशद्भवन्तीत्येतदधुना न्यायान्तरमुपदिश्यते। कथं कृत्वा? यदा कामावचरं दुःखं चतुर्भिराकारैर्मनसिकरोति, एवं यावद्रूपारूप्यावचराणां प्रतिपक्षं चतुर्भिराकारैर्मनसिकरोतीयं मृद्वी क्षान्तिः। यदा पुनः कामावचरदुःखं चतुर्भिराकारैर्मनसिकरोतीत्येवं यावत् कामावचराणां संस्काराणां प्रतिपक्षं मनसिकरोति चतुर्भिराकारैः। रूपारूप्यावचराणां संस्काराणां प्रतिपक्षं परित्यजतः प्रभृति मध्या क्षान्तिरारब्धा। तत्र च रूपारूप्यावचरप्रतिपक्षपरित्यागेऽष्टाविंशतिश्चित्तक्षणा भवन्ति। कामावचरसंस्कारप्रतिपक्षपरित्यागे चतुर्विंशतिः। रूपारूप्यावचरसंस्कारनिरोधपरित्यागे विंशतिः। कामावचरनिरोधपरित्यागे षोडश। रूपारूप्यावचरसमुदयपरित्यागे द्वादश। कामावचरसमुदयपरित्यागेऽष्टौ। रूपारूप्यावचरदुःखपरित्यागे चत्वारः। कामावचरं दुःखं चतुर्भिराकारैर्मनसिकरोति। तस्य भवन्त्याकाराश्चत्वारः। स च योगाचारो द्विविधः—दृष्टिचरित, तृष्णाचरितश्च। दृष्टिचरितोऽपि द्विविधः, आत्मदृष्टिचरितः, आत्मीयदृष्टिचरितश्च। यो ह्यात्मदृष्टिचरितो भवति, सोऽनात्माकारेण नियाममवक्रामति। यस्त्वात्मीयदृष्टिचरितः, स शून्याकारेण। तृष्णाचरितोऽपि द्विविधः—अस्मिमानोपहतः, कौसीद्याधिकश्च। तत्र योऽस्मिमानोपहतः, सोऽनित्याकारेण नियाममवक्रामति। यः कौसीद्याधिकः, स दुःखाकारेण। तत्रात्मदृष्टिचरितो योगाचारः पुनस्तत्कामावचरं दुःखं त्रिभिराकारैर्मनसिकरोति, एकमाकारं हित्वा। ततो द्वाभ्यामनात्मशून्यताकाराभ्याम्। तत एकमनात्माकारं द्विः संमुखीकरोति। दुःखधर्मज्ञानक्षान्तिदुःखधर्मज्ञानसदृशमिति। एषा मध्या क्षान्तिरित्येवमेकान्नविंशं चित्तशतं भवति। एवमात्मीयाधिमुक्तस्य तु शून्यानात्माकाराभ्यामाकारयतः शून्याकारं द्विः संमुखीकरोति। एषास्य मध्या क्षान्तिः। एवमेकान्नविंशक्षणशतम्। एवं तृष्णाचरितो द्विप्रकारः—अस्मिमानोपहतः, कौसीद्याधिकश्च वक्तव्य इति। अधिमात्रा तु क्षान्तिरेकमेव क्षणम्। सा यथापुद्गलंचरितमनित्याकारेण वा दुःखाकारेण वा शून्याकारेण वा अनात्माकारेण वा सम्प्रयुक्तेति।

यथैवाधिमात्रा क्षान्तिः। तेऽपि हि कामावचरदुःखालम्बनाः क्षणिकाश्च लौकिकाश्चैतेऽग्राश्च धर्माः सर्वलौकिकश्रेष्ठत्वादिति लौकिकाग्रधर्माः। विना सभागहेतुना मार्गस्य ततपुरुषकारेण[1] मार्गाकर्षणात्[1]। त एत ऊष्मगतादय स्मृत्युपस्थानस्वभावत्वात् प्रज्ञात्मका उच्यन्ते।

**सर्वे तु पञ्चस्कन्धाः,**

सपरिवारग्रहणात्।

**विनाप्तिभिः ॥ १९ ॥**

प्राप्तयो नोष्मगतादिभिः संगृह्यन्ते। मा भूदार्यस्य तत्सम्मुखीभावादूष्मगतादीनां सम्मुखीभाव इति।

तत्र त्रिसत्यालम्बनोष्मगताकरणे धर्मस्मृत्युपस्थानं प्रत्युत्पन्नमनागतानि चत्वारि भाव्यन्ते। निरोधसत्यालम्बने तदेवोभयथा। सर्वत्राकाराः सभागाः।

---

अथ किमर्थमेकैकसत्याकारालम्बनह्रासः क्रियते? पूर्वं हि तेन त्रैधातुकं विदूषयता समस्तः प्रतिपक्ष आलम्बितः। पश्चात् कामधातोः पूर्वं प्रहेयपरिज्ञेयत्वात् कामावचर एव दुःखेऽवतिष्ठत इति। *ततपुरुषकारेण मार्गाकर्षणादिति*। *विना सभागहेतुना*। पूर्वस्यानास्रवस्याभावात्। लौकिकाग्रधर्मपुरुषकारेण मार्गसत्यस्याकर्षणात्। *सर्वलौकिकश्रेष्ठत्वम*ग्रधर्माणां गम्यते।

*सर्वे तु पञ्चस्कन्धाः सपरिवारग्रहणादिति*। समाहितभूमिकत्वादूष्मगतादीनामविज्ञप्तिलक्षणो रूपस्कन्धोऽस्तीति पञ्च स्कन्धा ऊष्मगतादयः सपरिवारग्रहणात् सपरिवारा गृह्यन्ते इति।

*मा भूदार्यस्येति*। *प्राप्तिसम्मुखीभावादार्य*पुद्गलस्योष्म*गतादीनां* फलप्राप्तिप्रयोगभूतानां *सम्मुखीभावो मा भू*दिति प्राप्तयो नोष्मगतादिषु गृह्यन्ते। न हि प्राप्तप्रयोगफलस्यार्यस्य प्रयोगसम्मुखीकरणं न्याय्यमिति।

*त्रिसत्यालम्बनोष्मगताकरण* इति। दुःखसमुदयमार्गालम्बनोष्मगताकरणे। *धर्मस्मृत्युपस्थानं प्रत्युत्पन्नम्*। यत्नजन्यस्य कार्यस्याकरणे समस्तालम्बत्वेन धर्मस्मृत्युपस्थानस्यैव समर्थत्वात्। प्रतिनियतालम्बनत्वेन हि कायस्मृत्यु-

---

१-१. ०कारेणाकर्षणात्—का०।

विवर्धने चतुर्णामन्यतमदनागतानि चत्वारि । तत्रैव निरोधालम्बनेऽन्त्यमनागतानि चत्वारि आकाराः सर्वे ; लब्धत्वाद् गोत्राणाम् ।

मूर्धाकरणे चतुःसत्यालम्बनेऽपि निरोधालम्बनविवर्धनेऽपि[1] चान्त्यम् । अनागतानि चत्वारि आकाराः सर्वे ।

त्रिसत्यालम्बनविवर्धने[2] तु[2] चतुर्णामन्यतमत् । अनागतानि चत्वारि आकाराः सर्वे ।

क्षान्तीनां सर्वत्र अन्त्यम्[3] । अनागतानि चत्वारि आकाराः सव ।

---

पस्थानादीन्यसमर्थानीति । *अनागतानि चत्वारि भाव्यन्त* इति । यस्मात् स्मृत्युपस्थानेन कायवेदनादयोऽपि दुःखसत्यादिसंगृहीता गृह्यन्ते । कायस्मृत्युपस्थानादीनि च पूर्वं प्रतिलब्धानि भवन्तीत्यश्रत्वार्यपि भाव्यन्ते प्राप्त्युत्पादादिति । *निरोधसत्यालम्बने तदेवोभयथेति* । निरोधसत्यालम्बने ऊष्मगताकरणे । धर्मस्मृत्युपस्थानं प्रत्युत्पन्नम् । तदेव चानागतं भाव्यते, न कायस्मृत्युस्थानादीनि; निरोधसत्ये कायाद्यभावात् । *सर्वत्राकाराः सभागा* इति । त्रिसत्यालम्बनस्य निरोधसत्यालम्बनस्य चोष्मगतस्याकरणे सदृशा एवाकारा भाव्यन्ते । दुःखसत्यालम्बने दुःखसत्याकारा एव चत्वारो भाव्यन्ते, न समुदयसत्याद्याकाराः । समुदयसत्याद्याकारालम्बने समुदयसत्याद्याकारा एव चत्वारो भाव्यन्ते, नान्य इत्यादि । *विवर्धन* इति । त्रिसत्यालम्बने । कायस्मृत्युपस्थानादीनाम*न्यतमत् प्रत्युत्पन्नं सम्भवति । निरोधसत्यालम्बनेऽन्त्यं* प्रत्युत्पन्नम् । उभयत्रा*नागतानि चत्वारि । आकाराः सर्वेऽपि* षोडशापि *भाव्यन्ते* । किं कारणम्? *लब्धत्वात् गोत्राणां* सम्भवतश्चतुःसत्यालम्बनकायस्मृत्युपस्थानादिजातीनां लब्धत्वादित्यर्थः । *मूर्धाकरण* इति विस्तरः । मूर्धाकरणे सर्वत्रापि धर्मस्मृत्युपस्थानमेव प्रत्युत्पन्नम् । कायादिस्मृत्युपस्थानानामाकरणेऽसामर्थ्यात् । *निरोधालम्बनविवर्धनेऽपि अन्त्यं* धर्मस्मृत्युपस्थानं प्रत्युत्पन्नम्; इतरेषामयोगात् ।

*त्रिसत्यालम्बनविवर्धने तु चतुर्णामन्यतमत् प्रत्युत्पन्नम् । अनागतानि सर्वत्र चत्वारि । आकारा अपि सर्वे* । लब्धत्वात् गोत्राणामित्यवगन्तव्यम् । *क्षान्तीनां सर्वत्रान्त्यमिति* । आकरणे विवर्धने चान्त्यं धर्मस्मृत्युपस्थानं प्रत्युत्पन्नम् । तथा ह्युक्तम् -- सर्वस्याः क्षान्त्या धर्मेण वर्धनमिति ।

---

१. ०लम्बनवर्धने—का० । २-२. ०लम्बनवर्धने—का० ।

३. चान्त्यम्—का० ।

अग्रधर्मेष्वन्त्यमनागतानि चत्वारि, आकाराश्चत्वार एव; अन्याभावाद् दर्शनमार्गसादृश्याच्च ॥ १९ ॥

**इति निर्वेधभागीयं चतुर्धा,**

इत्येतानि चत्वारि निर्वेधभागीयानि कुशलमूलानि यदुतोष्मगतं मूर्धानः क्षान्तयोऽग्रधर्माश्च। एषां द्वे मृदुनी चलत्वात् परिहाणितः क्षान्तयो मध्यमग्रधर्मा अधिमात्रम्।

निर्वेधभागीयानीति कोऽर्थः? "विध विभागे"। निश्चितो वेधो निर्वेधः आर्यमार्गः, तेन विचिकित्साप्रहाणात्, सत्यानां च विभजनादिदं दुःखमयं यावत् मार्ग इति। तस्य भागो दर्शनमार्गैकदेशः। तस्यावाहकत्वेन हितत्वान्निर्वेधभागीयानि।

---

*अग्रधर्मेष्वन्त्यमिति*। अग्रधर्मेषु सम्मुखीक्रियमाणेष्वन्त्यं धर्मस्मृत्युपस्थानं प्रत्युत्पन्नम्। *अनागतानि चत्वारि* अनुत्पत्तिधर्माण्येव प्राप्यन्ते। *आकाराश्चत्वार एवेति*। अनित्यदुःखशून्यानात्माकाराः। *अन्याभावादिति*। यस्मादन्यसमुदयाद्याकारा अग्रधर्मा न सन्ति; दुःखमात्रालम्बनत्वात्। यथा तर्ह्यग्रधर्मास्वभावकायस्मृत्युपस्थानाद्यसम्मुखीभावेऽप्यग्रधर्मसमुदाचारावस्थायामनागतानि कायस्मृत्युपस्थानादीनि भाव्यन्ते; एवमग्रधर्मास्वभावसमुदयाद्याकारा अनागता भाव्यन्त इति किं नेष्यते? इत्यतः पुनराह—*दर्शनमार्गसादृश्याच्चेति*। दुःखाकारा एव चत्वारो भाव्यन्ते। कस्मात्? दर्शनमार्गसादृश्यात्। दर्शनमार्गे हि यस्य सत्यस्य दर्शनं भवति, तदाकारा एव भाव्यन्ते। दर्शनमार्गसदृश्या ह्यग्रधर्माः, किं पुनरेषां दर्शनमार्गेण सादृश्यमनुश्लेषात्। तथैव प्रथमतः कामावचरदुःखालम्बनत्वं तुल्यभूमिकत्वं वा। तथा हि दर्शनमार्गमधिकृत्य वक्ष्यति—"सोऽग्रधर्मैकभूमिकः" (अभि० को० ६.२७) इति। यद्वा—पृथग्ज ... घाताया दुःखधर्मज्ञानक्षान्तेरानन्तर्यमार्गभूता अग्रधर्मा भवन्ति, तदेषां दर्शनमार्गेण सादृश्यम्। सदृशा ह्यानन्तर्यमार्गा विमुक्तिमार्गैरिति ॥ १९ ॥

*विध विभाग* इति विस्तरः। तस्य धातोरेतद् यञ्ञि (घञि?) रूपम्। *निश्चित* इति। *निःशब्दस्यार्थं* दर्शयति। कथं पुनर्निश्चितो वेधः? इत्याह—*तेन विचिकित्साप्रहाणान्निश्चितः*। *सत्यानां च विभजनात्*। *इदं दुःखमयं यावन्मार्ग* इति। *निर्वेध आर्यमार्गः*। *तस्य भागो दर्शनमार्गैकदेशः*। *तस्यावाहकत्वेनाक-*

तच्चैतच्चतुर्विधमपि निर्वेधभागीयम्

भावनामयम् ।

न श्रुतचिन्तामयम् ।

अनागम्यान्तरध्यानभूमिकम्,

अनागम्यं ध्यानान्तरं चत्वारि च ध्यानान्यस्य भूमिः; तत्संगृहीतत्वात् । नोर्ध्वम्; दर्शनमार्गपरिवारत्वात् । तदभावः कामधात्वालम्बनत्वात् । तस्य[1] पूर्वपरिज्ञेयप्रहेयत्वात् । तेषां रूपधातौ पञ्चस्कन्धको विपाकः । परिपूरकाण्येव[2] नापेक्षेपकाणि; भवद्वेषित्वात् ।

द्वे त्वधोऽपि वा ॥ २० ॥

वाशब्दो मतविकल्पार्थः । भदन्तघोषकस्य तु द्वे प्रथमे निर्वेधभागीये सप्तभूमिके कामावचरे अपि ताः ॥ २० ॥

---

धकत्वेन *हितत्वात्* "तस्मै हितम्" (पा० सू० ५.१५) इति छः । *तेन निर्वेधभागीयमिति* भवति ।

"*अनागम्यान्तरध्यानभूमिकम्*" इति । अनागम्यं चान्तरं च ध्यानानि च भूमयोऽस्येत्यनागम्यान्तरध्यानभूमिकम् ।

*नोर्ध्वमिति* । नारूप्येषु निर्वेधभागीयमस्ति । *दर्शनमार्गपरिवारत्वात्* । दर्शनमार्गप्रयोगत्वादित्यर्थः । *तदभावः कामधात्वालम्बनत्वादिति* । तस्य दर्शनमार्गस्याभावस्तद्भावः । क्व ? ऊर्ध्वमिति वर्तते । आरूप्येष्वित्यर्थः । कस्मात् ? कामधात्वानालम्बनात् । यस्मादारूप्याः कामधातुं नालम्बन्ते । आह—किं कामधात्वालम्बनेन दर्शनमार्गेण प्रयोजनमिति ? अत उच्यते—*तस्य पूर्वं परिज्ञेयप्रहेयत्वादिति* । तस्य कामधातोर्दुःखरूपस्य पूर्वं परिज्ञेयत्वात्, समुदयरूपस्य च प्रहेयत्वात् । अत्र च हेतुर्यस्मात् स योगी कामावचरेण दुःखेन विहन्यते, तेन स पूर्वं ततो मोक्षमन्वेषत इति । *तेषां रूपधातौ पञ्चस्कन्धको विपाक इति* । तेषां निर्वेधभागीयानां रूपावचरत्वात् यदि स योगी रूपधातावुपपद्येत, ततस्तस्य तत्र पञ्चस्कन्धको विपाकोऽभिनिर्वर्तते । *परिपूरकाण्येव च तानीष्टवेदनीयजननात्* । *नाक्षेपकाणि* निकायसभागस्य । *भवद्वेषित्वात्* । अनित्यादिभिराकारैर्भवं द्विषन्तीति ।

*द्वे प्रथमे* इति । ऊष्मगतमूर्धस्वभावे ॥ २० ॥

---

१. तस्य च—का० । २. परिपूरिकाण्येव—जा० ।

सर्वाण्यपि त्वेतानि चत्वारि

**कामाश्रयाणि,**

त्रीणि मनुष्येष्वेवोत्पद्यन्ते, त्रिषु द्वीपेषु। उत्पादितपूर्वाणि तु देवेषु सम्मुखीभावः। चतुर्थं देवेष्वपि त्रीणि स्त्रीपुरुषा उभयाश्रयाणि लभन्ते।

**अग्रधर्मान् द्वयाश्रयान् लभतेऽङ्गना।**

अग्रधर्मास्तु स्त्र्येव द्वयाश्रयान् लभते। पुरुषः पुरुषाश्रयानेव, स्त्रीत्वस्याप्रतिसंख्यानिरोधलाभात्।

कथं निर्वेधभागीयानां त्यागः?

**भूमित्यागात् त्यजत्यार्यस्तानि,**

---

"*कामाश्रयाणि*" इति। यस्मादिहैव सत्याभिसमयो नान्यधातौ। नोर्ध्वं हि दृक्पथः असंवेगात्। इह विधा तत्र निष्ठेति चागमादिति। *त्रिषु द्वीपेषु*। उत्तरकुरुवर्ज्येष्विति व्याख्यायते; उत्तरकौरवाणां मृद्विन्द्रियत्वात्। *देवेषु सम्मुखीभाव* इति। कामावचरेषु। चतुर्थं निर्वेधभागीयं *देवेष्वपि*। तेष्वेव च नान्यत्र।

*त्रीणि* निर्वेधभागीयान्यन्यत्र अग्रधर्मेभ्यः। इहैव जन्मानि स्त्रीपुरुषेन्द्रियपरावृत्तौ *उभयाश्रयाणि* स्त्रीपुरुषेन्द्रियाश्रयाणि *स्त्रियः पुरुषाश्च लभन्ते*। स्त्रियो ह्येतान्युत्पाद्य जन्मान्तरस्त्रीभावप्रादुर्भावे स्त्र्याश्रयाणि सम्मुखीकुर्वन्ति। जन्मान्तरपुरुषभावप्रादुर्भावे तु पुरुषाश्रयाणि संमुखीकुर्वन्ति। न हि तल्लाभिनीनां स्त्रीभावो न सम्भवति। पुरुषा अपि तथैव स्त्रीभावे जन्मान्तरे सति स्त्र्याश्रयाणि सम्मुखीकुर्वन्ति, पुरुषभावे पुरुषाश्रयाणीति।

अग्रधर्मान् प्रत्याह—"*अग्रधर्मान् द्वयाश्रयान् लभतेऽङ्गना*" इति।

स्त्र्येवोभयाश्रयानग्रधर्मान् लभते, न पुरुषः। तथा हि—स्त्री तान् लब्ध्वा स्त्र्याश्रयैस्तैस्तदानीन्तनैः समन्वागता भवति। जन्मान्तरपरावृत्तौ च कामधातौ पुरुषाश्रयप्रादुर्भावे पुरुषाश्रयैः स पुरुषः समन्वागत इति। पुरुषस्तु पुरुषाश्रयानेव लभते। कस्मात्? इत्याह—*स्त्रीत्वस्याप्रतिसंख्यानिरोधलाभादिति*। तस्मिन् जन्मनि स्त्रीत्वं जन्मान्तरेऽपि पुनर्नास्तीत्यस्याप्रतिसंख्यानिरोधलाभः। यो ह्यग्रधर्मानुत्पादयति, सोऽवश्यमनन्तरं दर्शनमार्गमुत्पादयेत्। न च दृष्टसत्यस्य पुनः स्त्रीत्वप्रादुर्भाव इति सिद्धान्तः।

यद्भूमिकान्यनेन प्रतिलब्धानि भवन्ति तां भूमिं त्यजन्नार्यस्तान्यपि त्यजति, नान्यथा । भूमित्यागः पुनर्भूमिसञ्चारात् ।

**अनार्यस्तु मृत्युना ॥ २१ ॥**

पृथग्जनस्तु निकायसभागत्यागेनैव त्यजति सत्यसति वा भूमिसंचारे ॥२१॥

**आद्ये द्वे परिहाण्या च,**

त्यजति मृत्युना च पृथग्जन एव । आर्यस्य तु नास्ति ताभ्यां परिहाणिः । क्षान्त्यग्रधर्माभ्यां तु पृथग्जनस्यापि नास्ति परिहाणिः ।

---

"*भूमित्यागाद्*" इति विस्तरः । *यद्भूमिकानि निर्वेधभागीयानि प्रतिलब्धानि* प्रथमध्यानभूमिकानि यावच्चतुर्थध्यानभूमिकानि । *तां भूमिं त्यजन्* प्रथमं ध्यानं यावच्चतुर्थं *त्यजन्नार्यस्तान्यपि* यथास्वं प्रथमध्यानभूमिकानि यावच्चतुर्थध्यानभूमिकानि *त्यजति* । *नान्यथा* । न मृत्युना, परिहाण्या वा । यथा पृथग्जन इत्यर्थः । *भूमित्यागः पुनर्भूमिसञ्चारादिति* । न वैराग्यत इति दर्शयति ।

*पृथग्जनस्त्विति* विस्तरः । *पृथग्जनस्तु निकायसभागत्यागेनैव त्यजति* निर्वेधभागीयानि *सत्यसति वा भूमिसञ्चारे* । तथा हि—पृथग्जनो यद्भूमिकनिर्वेधभागीयलाभी भवति, तत ऊर्ध्वमुपपद्यमानस्तानि भूमिसञ्चारेऽपि मृत्युनैव त्यजति । अवीतरागस्त्वसति भूमिसञ्चारे मृत्युना त्यजति । कामधातावेवोपपद्यते । न त्वेवमार्यपुद्गलः; तत्कुशलमूलसन्ततेर्दर्शनमार्गोपबृंहितत्वात् । पृथग्जन एव तथा त्यजतीति कथं गम्यते ? 'अण्डकललादिगतः पृथग्जनः कायेन समन्वागतः, न कायकर्मणा' इति शास्त्रे वचनात् ।

*आचार्यवसुमित्रस्तु* व्याचष्टे—*पृथग्जनस्तु निकायसभागत्यागेनैव त्यजति सत्यसति वा भूमिसञ्चार* इति । सकलं ध्यानमत्र भूमिग्रहणेन गृह्यते । तत्र पृथग्जनो यदा ब्राह्मकायिकेभ्यश्च्युत्वा ब्रह्मपुरोहितेषूपपद्यते, तदा निकायसभागत्यागेन त्यजति । यदा तु प्रथमात् ध्यानाच्च्युत्वा द्वितीय उपपद्यते, तदा भूमित्यागनिकायसभागत्यागाभ्यामिति ।

तदयुक्तम् ; ब्रह्मलोकोपपन्नानां निर्वेधभागीयाभावात् । कामधातौ हि निर्वेधभागीयान्युत्पद्यन्ते । कामधातुच्यवनादेव च तेषां निर्वेधभागीयत्याग इति ।

**मौलेस्तत्रैव सत्यदृक् ।**

यो मौलध्यानभूमिकानि निर्वेधभागीयान्युत्पादयति स तत्रैव जन्मनि सत्यान्यवश्यं पश्यति; तीव्रसंवेगत्वात् ।

**अपूर्वाप्तिर्विहीनेषु,**

यदा विहीनेषु पुनर्लाभो भवत्यपूर्वाण्येव तदा लभ्यन्ते, न पूर्वं त्यक्तानि; प्रतिमोक्षसंवरवदनुचितयत्नसाध्यत्वात् । सति प्रतिसीमादैशिके परेणोत्पादयति, असति मूलादेव ।

एते पुनर्विहानि-परिहाणी किंस्वभावे ?

**हानी द्वे असमन्वितिः ।। २२ ।।**

उभे अप्येते असमन्वागमस्वभावे । परिहाणिस्तु दोषकृता, नावश्यं

---

*आचार्यसङ्घभद्रेणापि* दर्शितमेतत्—'ननु च पृथग्जनोऽपि यद्भूमिक-निर्वेधभागीयलाभी भवति, तत ऊर्ध्वमुपपद्यमानो निर्वेधभागीयानि विजह्यात्' इति । नास्त्येतत्; निकायसभागत्यागादेव त्यक्तत्वात् । मरणभवावस्थितो हि तानि त्यजति । अन्तराभवस्थितेन तु त्यक्तानि । अत ऊर्ध्वमुपपद्यमानस्य तन्नास्ति यद्विजह्यादिति । मृत्युर्नैवेत्युच्यत इति ॥ २१ ॥

*प्रातिमोक्षसंवरवदिति* । यथा प्रातिमोक्षसंवरस्त्यक्तः पुनरादीयमानोऽपूर्व एव लभ्यते । कस्मात् ? *अनुचितयत्नसाध्यत्वात्* । अनुचितत्वात्, यत्नसाध्यत्वाच्च । यस्मादनादिमतिसंसारे नोचितानि भवन्ति, आर्यमार्गपरिवारत्वात्; तस्मान्न वैराग्यलभ्यानि । यस्माद्यत्नसाध्यानि, तस्मान्न पूर्वत्यक्तानि लभ्यन्त इति । *सति प्रतिसीमादैशिक* इति । *सीमा* नाम मर्यादा, तस्या दैशिको देशयिता प्रणिधिज्ञानलाभी । तस्मिन् सति लब्धविहीनात् परेणोत्पादयति । यदनुत्पादितम्, तदुत्पादयतीत्यर्थः । *असति* प्रतिसीमादैशिके *मूलादे*वोष्मगतात् प्रभृतीत्यर्थः ।

*एते पुनर्विहानिपरिहाणी* इति । "भूमित्यागात् त्यजत्यार्यः" (अभि० को० ६.२१) इत्यादि वचनाद् विहानिरुक्ता । "आद्ये द्वे परिहाण्या च" (अभि० को० ६.२२) इति वचनात् परिहाणिरप्युक्ता । तेनैते इति निर्दिशति ।

*हानी* इति । विहानि-परिहाण्योः सामान्यरूपपरिग्रहादुभयोर्ग्रहणम् ।

विहानिः । गुणविशेषकृता च सा । परिहीणोऽप्यूष्मगतलाभी नियतं परिनिर्वाणधर्मा भवति ।

मोक्षभागीयात् को विशेषः ? सत्यदर्शनासन्नतरत्वमसत्यन्तराये ॥२२॥

**मूर्धलाभी न मूलच्छित्,**

परिहीणोऽपि मूर्धलाभी कुशलमूलानि न समुच्छिनत्ति । अपायांस्तु यायादानन्तर्याण्यपि[1] कुर्यात् ।

**क्षान्तिलाभ्यनपायगः ।**

विहीनायामपि क्षान्तौ न पुनरपायान् याति; तद्भूमिककर्मक्लेशदूरीकरणात् । क्षान्तिलाभादेव हि गतियोन्युपपत्त्याश्रयाष्टमादिभवक्लेशानां केषांचिदनुत्पत्तिधर्मतां प्रतिलभते । अपायगतीनामण्डजसंस्वेदजयोन्योरसंज्ञिसत्त्वोत्तरकुरुमहाब्रह्मोपपत्तीनां षण्ढपण्डकोभयव्यञ्जनाश्रयाणामष्टमादिभवानां[2] दर्शनहेयक्लेशानां च । तां तु यथायोगं मृद्व्यधिमात्रायां च । मृद्व्यामपायगतीनाम् । अधिमात्रायामितरेषाम् ।

निर्वेधभागीयानि त्रिगोत्राणि श्रावकादिगोत्रभेदात् । तत्र

**शिष्यगोत्रान्निवर्त्य द्वे बुद्धः स्यात्,**

ऊष्मगतं मूर्धानं च श्रावकगोत्रादुत्पन्नं व्यावर्त्य पुनर्बुद्धः स्यादित्यस्ति सम्भवः ।

---

*परिहाणिस्तु दोषकृता* । क्लेशकृतेत्यर्थः । *नावश्यं विहानिरिति* । सा हि गुणकृतापि भवति, न केवलं दोषकृता । गुणकृता तद्यथा—दर्शनमार्गोत्पत्तौ पृथग्जनत्वस्य विहानिः । दोषकृता तु तद्यथा—मिथ्यादृष्ट्या कुशलमूलविहानिः । प्रतिसन्धिचित्तेन वा केषाञ्चिद् धर्माणां विहानिरिति । तदेवं या परिहाणिः, विहानिरपि सा । या तु विहानिः, नावश्यमसौ परिहाणिः । गुणविशेषेभ्य एव हि परिहाणिरिति ॥ २२ ॥

*अनुत्पत्तिधर्मतां प्रतिलभत* इति । अपरिसंख्यानिरोधं तेषां गत्यादीनां प्रतिलभत इत्यर्थः । *तां तु यथायोगमिति* । तां त्वनुत्पत्तिधर्मताम् । यथासम्भवं मृद्व्यामधिमात्रायां च क्षान्तौ प्रतिलभत इति वर्तते । कथं कृत्वा ? *मृद्व्या* क्षान्त्याम*पायगतीना*मनुत्पत्तिधर्मतां प्रतिलभते । *अधिमात्रायामण्डजसंस्वेदज-*

---

१. पापादा०—का० । २. शण्ढ०—का० ।

**मौलेस्तत्रैव सत्यदृक् ।**

यो मौलध्यानभूमिकानि निर्वेधभागीयान्युत्पादयति स तत्रैव जन्मनि सत्यान्यवश्यं पश्यति; तीव्रसंवेगत्वात् ।

**अपूर्वाप्तिर्विहीनेषु,**

यदा विहीनेषु पुनर्लाभो भवत्यपूर्वाण्येव तदा लभ्यन्ते, न पूर्वं त्यक्तानि; प्रतिमोक्षसंवरवदनुचितयत्नसाध्यत्वात् । सति प्रतिसीमादेशिके परेणोत्पादयति, असति मूलादेव ।

एते पुनर्विहानि-परिहाणी किंस्वभावे ?

**हानी द्वे असमन्वितिः ॥ २२ ॥**

उभे अप्येते असमन्वागमस्वभावे । परिहाणिस्तु दोषकृता, नावश्यं

---

*आचार्यसङ्घभद्रेणापि* दर्शितमेतत्—'ननु च पृथग्जनोऽपि यद्भूमिक-निर्वेधभागीयलाभी भवति, तत ऊर्ध्वमुपपद्यमानो निर्वेधभागीयानि विजह्यात्' इति। नास्त्येतत् ; निकायसभागत्यागादेव त्यक्तत्वात्। मरणभवावस्थितो हि तानि त्यजति । अन्तराभवस्थितेन तु त्यक्तानि । अत ऊर्ध्वमुपपद्यमानस्य तन्नास्ति यद्विजह्यादिति । मृत्युनैवेत्युच्यत इति ॥ २१ ॥

*प्रातिमोक्षसंवरवदिति* । यथा प्रातिमोक्षसंवरस्त्यक्तः पुनरादीयमानोऽपूर्व एव लभ्यते । कस्मात् ? *अनुचितयत्नसाध्यत्वात्* । अनुचितत्वात्, यत्नसाध्यत्वाच्च । यस्मादनादिमतिसंसारे नोचितानि भवन्ति, आर्यमार्गपरिवारत्वात् ; तस्मान्न वैराग्यलभ्यानि । यस्माद्यत्नसाध्यानि, तस्मान्न पूर्वत्यक्तानि लभ्यन्त इति । *सति प्रतिसीमादेशिक* इति । *सीमा* नाम मर्यादा, तस्या देशिको देशयिता प्रणिधिज्ञानलाभी । तस्मिन् सति लब्धविहीनान् परेणोत्पादयति । यदनुत्पादितम्, तदुत्पादयतीत्यर्थः । *असति* प्रतिसीमादेशिके *मूलादेवो*ष्मगतात् प्रभृतीत्यर्थः ।

*एते पुनर्विहानिपरिहाणी* इति । "भूमित्यागात् त्यजत्यार्यः" (अभि० को० ६.२१) इत्यादि वचनाद् विहानिरुक्ता । "आद्ये द्वे परिहाण्या च" (अभि० को० ६.२२) इति वचनात् परिहाणिरप्युक्ता । तेनैते इति निर्दिशति ।

*हानी* इति । विहानि-परिहाण्योः सामान्यरूपपरिग्रहादुभयोर्ग्रहणम् ।

विहानिः । गुणविशेषकृता च सा । परिहीणोऽप्यूष्मगतलाभी नियतं परिनिर्वाणधर्मा भवति ।

मोक्षभागीयात् को विशेषः ? सत्यदर्शनासन्नतरत्वमसत्यन्तराये ॥२२॥

**मूर्धलाभी न मूलच्छित्,**

परिहीणोऽपि मूर्धलाभी कुशलमूलानि न समुच्छिनत्ति । अपायांस्तु यायादानन्तर्याण्यपि[1] कुर्यात् ।

**क्षान्तिलाभ्यनपायगः ।**

विहीनायामपि क्षान्तौ न पुनरपायान् याति; तद्भूमिककर्मक्लेशदूरीकरणात् । क्षान्तिलाभादेव हि गतियोन्युपपत्त्याश्रयाष्टमादिभवक्लेशानां केषांचिदनुत्पत्तिधर्मतां प्रतिलभते । अपायगतीनामण्डजसंस्वेदजयोन्योरसंज्ञिसत्त्वोत्तरकुरुमहाब्रह्मोपपत्तीनां षण्ढपण्डकोभयव्यञ्जनाश्रयाणामष्टमादिभवानां[2] दर्शनहेयक्लेशानां च । तां तु यथायोगं मृद्वधिमात्रायां च । मृद्व्यामपायगतीनाम् । अधिमात्रायामितरेषाम् ।

निर्वेधभागीयानि त्रिगोत्राणि श्रावकादिगोत्रभेदात् । तत्र

**शिष्यगोत्रान्निवर्त्य द्वे बुद्धः स्यात्,**

ऊष्मगतं मूर्धानं च श्रावकगोत्रादुत्पन्नं व्यावर्त्य पुनर्बुद्धः स्यादित्यस्ति सम्भवः ।

---

*परिहाणिस्तु दोषकृता* । क्लेशकृतेत्यर्थः । *नावश्यं विहानिरिति* । सा हि गुणकृतापि भवति, न केवलं दोषकृता । गुणकृता तद्यथा—दर्शनमार्गोत्पत्तौ पृथग्जनत्वस्य विहानिः । दोषकृता तु तद्यथा—मिथ्यादृष्ट्या कुशलमूलविहानिः । प्रतिसन्धिचित्तेन वा केषाञ्चिद् धर्माणां विहानिरिति । तदेवं या परिहाणिः, विहानिरपि सा । या तु विहानिः, नावश्यमसौ परिहाणिः । गुणविशेषेभ्य एव हि परिहाणिरिति ॥ २२ ॥

*अनुत्पत्तिधर्मतां प्रतिलभत* इति । अपरिसंख्यानिरोधं तेषां गत्यादीनां प्रतिलभत इत्यर्थः । *तां तु यथायोगमिति* । तां त्वनुत्पत्तिधर्मताम् । यथासम्भवं मृद्व्यामधिमात्रायां च क्षान्तौ प्रतिलभत इति वर्तते । कथं कृत्वा ? *मृद्व्यां क्षान्त्यामपायगतीनामनुत्पत्तिधर्मतां प्रतिलभते* । *अधिमात्रायामण्डजसंस्वेदज-*

---

१. पापाद्या०—का० । २. शण्ढ०—का० ।

क्षान्तौ तु लब्धायां नास्त्येव सम्भवः। किं कारणम्? अपायानां किल व्यावृत्तत्वात्। बोधिसत्त्वाश्च परहितक्रियापारतन्त्र्यादपायानप्यवगाहन्त इति। तस्यैव तु गोत्रस्याविवर्त्यत्वादसम्भवः।

त्रीण्यपीतरः ॥ २३ ॥

विवर्त्य स्यादिति वर्तते। त्रीण्यपि निर्वेधभागीयानि श्रावकगोत्राद्व्यावर्त्य बुद्धादिभवः स्यात्। प्रत्येकबुद्ध इत्यर्थः। प्रत्येकबुद्धगोत्राणि तु व्यावर्तयितुमशक्यानि ॥ २३ ॥

आबोधेः सर्वमेकत्र ध्यानान्त्ये शास्तृखड्गयोः।

शास्ता बुद्धः, खड्गविषाणकल्पः प्रत्येकबुद्धः। तयोरेकत्रैवासने चतुर्थमेव ध्यानं निश्रित्यानिञ्ज्यपटुसमाधित्वान्निर्वेधभागीयान्यारभ्य यावद् बोधिरुत्पद्यते। क्षयानुत्पादज्ञाने हि बोधिरिति पश्चादुपपादयिष्यामः।

अशुभामारभ्य यावद् बोधिरित्यपरे।

येषां तु खड्गादन्योऽपि प्रत्येकबुद्धोऽस्ति, तेषां[1] तद्गोत्राणां व्यावर्तनस्याप्रतिषेधः[2]।

---

*योन्योः*। मृद्व्यामसंज्ञिसत्त्वोत्तरकुरुमहाब्रह्मोपपत्तीनाम्। अधिमात्रायां षण्ढपण्डकोभयव्यञ्जनाश्रयाणाम्। अधिमात्रायामष्टमादिभवानाम्। अष्टमादिनवमादिभवानाम्। *दर्शनहेयक्लेशानां* चानुत्पत्तिधर्मतामेवेति।

*तस्यैव तु गोत्रस्येति*। क्षान्तिपरिभावितस्य श्रावकगोत्रस्येति। *आचार्यमतम्*। तस्य क्षान्तिपरिभावितत्वेनाविवर्त्यत्वादित्यभिप्रायः।

"*त्रीण्यपीतर*" इति। प्रत्येकबुद्धः क्षान्तिमपि श्रावकगोत्राद्विवर्त्य स्यात्। न हि ते परार्थमपायानवगाहन्त इत्यभिप्रायः॥ २३॥

*आनिञ्ज्यपटुसमाधित्वादिति*। अष्टापक्षालमुक्तत्वादानिञ्ज्यः समाधिः। अत एव पटुः, उत्तप्ततीक्ष्णेन्द्रियत्वाद्वा।

*येषां तु खड्गादन्योऽपीति*। येषाम् आभिधार्मिकाणां मतेन खड्गादन्योऽपि *प्रत्येकबुद्धोऽस्ति*। उत्पादितनिर्वेधभागीयमात्रोऽपि वर्गचारी प्रत्येकबुद्ध इत्यभि-

---

१. का० पुस्तके नास्ति। २. ०र्तनाप्रतिषेधः—का०।

किं पुनः प्रथम एव जन्मनि कृतयोगो निर्वेधभागीयान्युत्पादयेत् ? नैतदस्ति । अवश्यं हि

**प्राक्तेभ्यो मोक्षभागीयम्**

उत्पादयितव्यम् । सर्वस्वल्पं हि

**क्षिप्रं मोक्षस्त्रिभिर्भवैः ॥ २४ ॥**

एकस्मिन् जन्मनि मोक्षभागीयं कुशलमूलमुत्पादयेत् । द्वितीये निर्वेधभागीयानि । तृतीये आर्यमार्गम् । बीजावरोपणशस्याभिवृद्धिफलोत्पत्तिक्रमवत्[१] । क्रमेण हि सन्तानस्यास्यां धर्मतायामवतारपरिपाकविमुक्तयो भवन्तीति ॥ २४ ॥

तच्च पुनर्मोक्षभागीयं वर्णयन्ति—

**श्रुतचिन्तामयम्,**

न भावनामयम् ।

कति कर्माणि ?

**त्रीणि कर्माणि,**

प्राधान्येन तु मनस्कर्म । तत्प्रणिधानपरिग्रहणात्तु[२] कायवाक्कर्मापि मोक्ष-

---

प्रायः । तेषामूष्मगतमूर्धभ्यां तद्गोत्राणां व्यावर्तनस्याप्रतिषेधः । खड्गविषाणकल्पस्यैवावधारणात् ।

"*क्षिप्रं मोक्षस्त्रिभिर्भवैः*" इति । यः क्षिप्रं मोक्षं प्राप्नोति, स *एकस्मिन् जन्मनि मोक्षभागीयमुत्पादयेत् । द्वितीये निर्वेधभागीयानि । तृतीये आर्यमार्ग*मिति । यस्तु पूर्वस्मिन् जन्मनि सम्भृतमोक्षभागीयो भवति, स एकस्मिन्नपि जन्मनि निर्वेधभागीयान्यार्यमार्गं चोत्पादयतीत्यवगन्तव्यम् । *बीजावरोपणे*त्यादि । बीजावरोपणं मोक्षभागीयोत्पादनम् । *शस्याभिवृद्धिर्नि*र्वेधभागीयोत्पत्तिः । *फलोत्पत्ति*रार्यमार्गः । *अस्यां धर्मतायामि*ति । प्रवचनधर्मतायाम् । *अवतारपरिपाकविमुक्तयो भवन्ती*ति । *अवतारो* मोक्षभागीयेन । *परिपाको* निर्वेधभागीयैः । *विमुक्ति*रार्यमार्गेणेति ॥ २४ ॥

*तत्प्रणिधानपरिग्रहणादि*ति । मनःप्रणिधानपरिग्रहात् । प्रणिधानं

---

१. बीजविरोपण०—का० ।　　२. ०परिग्रहात्त—

भागीयं भवति । कश्चिदेकभिक्षामपि दत्त्वा, एकशिक्षामपि चादाय मोक्षाभिलाष-बलाधानान्मोक्षभागीयान्याक्षिपति ।

तत्त्वेतत्

आक्षिप्यते नृषु ।

मनुष्येष्वेव त्रिषु द्वीपेषु, नान्यत्र । प्रज्ञानिर्वेदयोरभावाद्यथायोगम् ।

उक्तं प्रसङ्गेन मोक्षभागीयम् ॥

अभिसमयक्रमस्तु वक्तुमारब्धः । तत्र च यावदग्रधर्मा उक्ताः । शेषं वक्तव्यम् । अत इदमुच्यते—

**लौकिकेभ्योऽग्रधर्मेभ्यो धर्मक्षान्तिरनास्रवा ॥ २५ ॥**

लौकिकाग्रधर्मानन्तरमनास्रवधर्मज्ञानक्षान्तिरुत्पद्यते ॥ २५ ॥

कस्मिन्नालम्बने ?

**कामदुःखे,**

कामावचरदुःखमस्या आलम्बनम् । सेयं दुःखे धर्मज्ञानक्षान्तिरित्युच्यते । अनास्रवज्ञानार्थं निःष्यन्देन विशेषणम् । धर्मज्ञानार्थं[1] क्षान्तिः । पुष्पफलवृक्षवत् ।

---

पुनश्चेतनाविशेषः । *एकभिक्षामपि दत्त्वेति* । कायकर्म । *एकशिक्षामपि चादायेति* । वाक्कर्म । तच्च मनस्कर्मोत्थानमिति । त्रिकर्मस्वभावमल्पकमप्येतत् *मोक्षाभिलाषबलाधानान्मोक्षभागीयमाक्षिपति* । मोक्षस्य भागः प्राप्तिर्मोक्षभागः, तस्मै हितं *मोक्षभागीयमिति* ।

*नान्यत्र प्रज्ञानिर्वेदयोरभावाद्यथायोगमिति* । कुरुषु तावदुभयं नास्ति । अपायेषु निर्वेदोऽस्ति, प्रज्ञा नास्ति । देवेषु प्रज्ञास्ति, निर्वेदो नास्तीति । अतो *मनुष्येष्वेव त्रिषु द्वीपेष्वाक्षिप्यते, नान्यत्र* ।

*अभिसमयक्रमस्तु वक्तुमारब्ध* इति । "वृत्तस्थः श्रुतचिन्तावान् भावनायां प्रयुज्यते" (अभि० को० ६. ५) इत्यारभ्य निर्वेधभागीयानुक्रमः । तत्प्रसङ्गेन मोक्षभागीयोपन्यास इति ।

*"धर्मक्षान्तिरनास्रवा"* इति । निर्वेधभागीयैरपि धर्मक्षमणम् । अतो *निष्यन्देन विशेषणम्* । यस्या धर्मज्ञानं निष्यन्दः, सा धर्मज्ञानक्षान्तिः । धर्मज्ञानार्थं क्षान्ति-

---

१. कर्मज्ञाना०—का० ।

सैव च नियामावक्रान्तिरित्युच्यते; सम्यक्त्वनियामावक्रमणात् । "सम्यक्त्वं निर्वाणम्" इत्युक्तं सूत्रे । तत्र नियमो नियाम एकान्तीभावः, तस्याभिगमनमवक्रमणम् । तस्यां चोत्पन्नायामार्यपुद्गल उच्यते । अनागतया पृथग्जनत्वं व्यावर्त्यते । एतदेव तस्याः कारित्रमनागतायामभ्युपगम्यते नान्यत्, प्रदीपजातिवत् ।

लौकिकैरग्रधर्मैरित्यपरे[2] । न; तद्धर्मत्वात् तद्विरोधित्वाददोषः, शत्रुस्कन्धारूढतद्घातनवत् ।

उभयैरित्यपरे । आनन्तर्यमुक्तिमार्गसाधर्म्यादिति ।

---

धर्मज्ञानक्षान्तिः । *पुष्पफलवृक्षवत्* । यथा—पुष्पार्थं वृक्षः पुष्पवृक्षः । फलार्थं वृक्षः फलवृक्षः । कारिकायां तु धर्मक्षान्तिरिति वचनमेकदेशग्रहणतः, देवदत्तो दत्त इति यथा । *सम्यक्त्वं निर्वाणमित्युक्तमि*ति । सम्यक्त्वं कतमत् ? यत्तत्पर्यादाय रागप्रहाणमिति विस्तरः । *तत्र नियमो नियाम* इति । तत्र सम्यक्त्वे नियम *एकान्तीभावो नियाम* इति घञि रूपम् । अपि तु नियम इति ; "यमः समुपनिविषु च" (पा० सू० ३.३.६३) इत्यप्प्रत्ययस्य विभाषितत्वात् । *तस्याभिगमनमवक्रमणमि*ति । तस्यैकान्तीभावस्याभिगमनं प्राप्तिः । तदेव विपर्यासस्यापक्रमाज्नियामावक्रान्तिरित्युच्यते । *तस्यां चे*ति । धर्मज्ञानक्षान्तौ । *प्रदीपजातिवदि*ति । प्रदीपस्येव जातेरिव चेत्यर्थः । यथा प्रदीपस्यानागतस्य तमोविनाशने सामर्थ्यम्, जातेश्चानागताया जन्यजनने, तथा पृथग्जनत्वव्यावर्तने सामर्थ्यमनागताया धर्मज्ञानक्षान्तेरभ्युपगम्यते । *नान्यदि*ति । क्लेशप्रहाणं कारित्रम् ।

*लौकिकैरग्रधर्मैरित्यपर* इति । 'पृथग्जनत्वं व्यावर्तते' इति प्रकृतम् । *न तद्धर्मत्वा*दिति । न युक्तमेतल्लौकिकैरग्रधर्मैस्तद्व्यावर्तत इति । कस्मात् ? तेऽपि हि पृथग्जनधर्माः, कथं पृथग्जनधर्मस्य पृथग्जनधर्मं व्यावर्तिष्यन्त इति । *तद्विरोधित्वाददोषः* अग्रधर्माणां पृथग्जनत्वविरोधित्वाददोष एषः । किं *यथा ?* इत्याह—*शत्रुस्कन्धारूढतद्घातनव*दिति यथा शत्रुस्कन्धारूढ एव कश्चिच्छत्रुं घातयेत् । एवं किलाधर्माः । पृथग्जनत्वशत्रुस्कन्धारूढास्तदेव पृथग्जनत्वं घातयेयुरिति ।

*उभयैरि*ति । लौकिकैरग्रधर्मैः क्षान्त्या च पृथग्जनत्वं व्यावर्त्यते । कथम् ? इत्याह—*आनन्तर्यविमुक्तिमार्गसाधर्म्या*दिति । लौकिकानामग्रधर्माणामानन्तर्यमार्गेण साधर्म्यम् । क्षान्तेर्विमुक्तिमार्गेण । यथा ह्यानन्तर्यमार्गेण क्लेशः प्रहीयते

---

१. युक्तं—का० ।　　२. लौकिकाग्र०—का ।

ततोऽत्रैव धर्मज्ञानम्,

ततः पुनर्दुःखे धर्मज्ञानक्षान्तेरनन्तरमत्रैव कामावचरे दुःखे धर्मज्ञानमुत्पद्यते । तद् दुःखे धर्मज्ञानमित्युच्यते । अनास्रवाधिकारः सर्वत्र वेदितव्यः ।

यथा च कामावचरे दुःखे धर्मज्ञानक्षान्तिर्धर्मज्ञानं चोत्पद्यते

तथा पुनः ।

शेषे दुःखेऽन्वयक्षान्तिज्ञाने,

दुःखे धर्मज्ञानानन्तरं रूपारूप्यावचरे दुःखे समस्तालम्बनान्वयज्ञानक्षान्तिरुत्पद्यते । सा दुःखे अन्वयज्ञानक्षान्तिरित्युच्यते । ततः अन्वयज्ञानमुत्पद्यते । तत् दुःखेऽन्वयज्ञानमित्युच्यते । प्रथमतो धर्मतत्त्वज्ञानाद्धर्मज्ञानम्, तदन्वयादूर्ध्वं दुःखालम्बनमन्वयज्ञानम्; तथैवानुगगमात् ।

यथा चैतानि दुःखसत्ये चत्वारि क्षान्तिज्ञानान्युत्पद्यन्ते,

सत्यत्रये तथा ॥ २६ ॥

दुःखान्वयज्ञानादनन्तरं कामावचरे समुदये धर्मज्ञानक्षान्तिरुत्पद्यते । ततः समुदये धर्मज्ञानम् ।

एवं समनन्तरोत्पत्तिक्रमेण शेषे समुदयेऽन्वयज्ञानक्षान्तिः समुदयेऽन्वयज्ञानम्, कामावचरदुःखनिरोधे धर्मज्ञानक्षान्तिर्निरोधे धर्मज्ञानम्, शेषे निरोधेऽन्वयज्ञानक्षान्तिर्निरोधेऽन्वयज्ञानम्, कामावचरदुःखप्रतिपक्षमार्गे धर्मज्ञानक्षान्तिर्मार्गे धर्मज्ञानम्, शेषे मार्गेऽन्वयज्ञानक्षान्तिर्मार्गेऽन्वयज्ञानम् ॥ २६ ॥

---

विमुक्तिमार्गेण प्रहीणाः, एवं लौकिकैरग्रधर्मैः पृथग्जनत्वं विहीयते क्षान्त्या विहीनमिति ।

*अनास्रवाधिकारः सर्वत्रेति* । तेन ततोऽत्रैव धर्मज्ञानमनास्रवमिति गम्यते । *तद् दुःखे धर्मज्ञानमित्युच्यते* इति । शास्त्रे तेन नाम्ना व्यवहार इति दर्शयति ।

*समस्तालम्बना* रूपारूप्यावचरदुःखालम्बनत्वात् । *प्रथमतो धर्मतत्त्वज्ञानादिति* । आदितो दुःखादिधर्मतत्त्वज्ञानादित्यर्थः । *तदन्वयत्वादिति* । तद्धेतुकत्वादित्यर्थः । *तथैवानुगमादिति* । यथैव धर्मज्ञानेनानुगतं परिज्ञातं दुःखादिसत्यं दुःखादिभिराकारैः, तथैव रूपारूप्यावचरदुःखाद्यनुगमादन्वयज्ञानमेतदिति विस्तरः ।

*एवं समनन्तरोत्पत्तिक्रमेण शेषे समुदये* रूपारूप्यावचरेऽन्वयज्ञानक्षा*न्तिरिति* विस्तरेण योज्यम् ॥ २६ ॥

**इति षोडशचित्तोऽयं सत्याभिसमयः,**

इत्यनेन क्रमेणायं सत्यानामभिसमयः षोडशचित्तको भवति ।

ये तर्हि ।नका।य।..रीयाः सत्यानामेकाभिसमयं वर्णयन्ति । अभिप्राय एष द्रष्टव्यः—अभेदेन ह्यभिसमय उच्यते सत्येषु ।

**त्रिधा ।**

**दर्शनालम्बकार्याख्यः,**

दर्शनाभिसमयोऽनास्रवया प्रज्ञया सत्यानाम् । आलम्बनाभिसमयस्तत्सम्प्रयुक्तैर्वेदनादिभिरपि । कार्याभिसमयो विप्रयुक्तैरपि शीलजात्यादिभिः । दुःखे हि दृश्यमाने तस्य त्रिविधोऽभिसमयः समुदयादीनां कार्याभिसमयः; प्रहाण-साक्षात्करण-भावनात् ।

तद्यदि सत्यानां दर्शनाभिसमयं प्रत्येकाभिसमयं ब्रूयात् ? अयुक्तं ब्रूयाद्; आकारभेदात् ।

---

*निकायान्तरीयाः* । आर्यधर्मगुप्तप्रभृतयः । *अभेदेन ह्यभिसमय उच्यत* इति । षोडशचित्तोऽयं सत्याभिसमय इति । दर्शनाभिसमयः, आलम्बनाभिसमयः, कार्याभिसमयश्च—एवं षोडशचित्तक इत्यभेदः ।

*दर्शनाभिसमय* इति । दर्शनमेवाभिसमयः । एवमालम्बनाभिसमयः, कार्याभिसमयश्च । *दर्शनाभिसमयोऽनास्रवया प्रज्ञया* । "तद्धि भिक्षवो दृष्टम्, यदनास्रवया प्रज्ञया दृष्टम्" इति वचनात् । प्रज्ञैव दर्शनमिति व्यवस्थाप्यते । *आलम्बनं* ग्रहणं *तत्सम्प्रयुक्तैरपि वेदनादिभि*र्भवति । *अपिशब्दात्* प्रज्ञयापि । यस्माच्चित्तचैत्तैः सत्यान्यालम्बन्ते । *कार्यं* यस्य सत्यस्य यत्कर्तव्यम् । तद्यथा—दुःखस्य परिज्ञानम्, समुदयस्य प्रहाणम्, निरोधस्य साक्षात्करणम्, मार्गस्य भावनम् । तद् *विप्रयुक्तैरपि शीलजात्यादिभि*र्भवति । *अपिशब्दात्* प्रज्ञा-तत्सम्प्रयुक्तैरपि । प्रज्ञासम्प्रयुक्तविप्रयुक्तैर्हि तत्कार्यचतुष्टयं क्रियते । *जात्यादिभिरिति* । *आदिशब्दा*ल्लक्षणान्तराणि प्राप्तयश्च गृह्यन्ते । *दुःखे हीति* विस्तरः । दुःखे हि दृश्यमाने प्रज्ञया । *तस्याभिसमयितु*र्दुःखस्य वा *त्रिविधोऽभिसमयो* यथोक्तः । कथम् ? इत्याह—*समुदयादीनां* समुदयनिरोधमार्गाणाम*भिसमयः प्रहाणसाक्षात्करणभावनाद्* । यथाक्रमम्—प्रहाणं समुदयस्य क्लेशप्राप्तिच्छेदात्,

अथाप्यनात्माकारेण सर्वेषां सत्यानां[1] दर्शनमिति ब्रूयात् ? न तर्हि सत्यानां दुःखादितो दर्शनं स्यात् । तथा[2] च सति[2] सूत्रविरोधः—"इहार्यश्रावकस्य दुःखं वा दुःखतो मनसिकुर्वतः समुदयं वा समुदयतो यावत् मार्गं वा मार्गतो मनसि कुर्वतोऽनास्रवेण मनसिकारेण सम्प्रयुक्तो यो धर्माणां विचयः[3]" ( ) इति ।

भावनामार्ग एवमिति चेत् ? न ; यथादर्शनं भावनात् ।

अथाप्येकस्य दर्शनाच्छेषेषु वशित्वलाभादेकाभिसमयं ब्रूयान्न दोषः स्यात् । अन्तरा तु व्युत्थानमस्ति, नास्तीति विचार्यं स्यात् ।

---

साक्षात्करणं निरोधस्य तत्प्राप्त्युत्पादात् , भावनं मार्गस्य सम्मुखीभावात् । *आकारभेदादिति*। प्रत्येकमेषां दुःखादीनामाकारभेदात् । न च दुःखाकारेण समुदयादीनां दर्शनं युज्यते; तदाकारार्थभेदतः ।

*अथाप्यनात्माकारेण सर्वेषां सत्यानां दर्शनमिति ब्रूयात्* निकायान्तरीयः, शून्यतानात्मते सर्वसत्यानां सामान्यं लक्षणमिति कृत्वा । *न तर्हि सत्यानां दुःखादितो दर्शनं स्यात्* । दुःखतः समुदयतो निरोधतो मार्गत इति । *तथा च* सत्यनात्माकारेण सर्वेषां दर्शनमिति ब्रुवन् *सूत्रविरोधः*। यस्मात् *सूत्र एवमुक्तम् आर्यश्रावकस्येति* विस्तरः ।

अथ मन्यसे—नास्ति सूत्रविरोधो यस्मादभिसमयावस्थायाः पूर्वं प्रयोगावस्थायामार्यश्रावकस्य *दुःखं वा दुःखतो मनसिकुर्वत* इत्येवमादि, अतोऽनात्माकारेण सर्वेषां दर्शनादेकाभिसमय एवेति ? तच्चायुक्तम् ; *अनास्रवेण मनसिकारेण सम्प्रयुक्तो धर्माणां विचय* इति वचनात् । न हि प्रयोगावस्थायामनास्रवमनसिकारः सम्भवति ।

*भावनामार्ग एवमिति* चेत् । य आर्यश्रावकस्य दुःखं वा दुःखतो मनसिकुर्वत इति विस्तरेण । न; *यथादर्शनं भावनात्* । नैतदेवम् ; यथैव हि पूर्वं सत्यानां दर्शनम्, तथैव तेषां पश्चाद्भावनम् । भावनामार्गो भवतीत्यर्थः ।

*शेषेषु वशित्वलाभादिति* । अन्तरेण प्रयोगं समुदयादिदर्शनसम्मुखीभावशक्तिलाभो वशित्वलाभः, तस्मादिति । *अन्तरा तु व्युत्थानमस्ति नास्तीति विचार्यं स्यादिति* । शेषेषु वशित्वलाभादन्तरा व्युत्थानं प्राप्नोतीति दोषः स्यादित्य-

---

१. का० पुस्तके नास्ति । २-२. एवं च—का० । ३. प्रविचय—का० ।

अथ पुनर्ब्रूयात्—दुःखमेव परिजानन् समुदयं प्रजहाति, निरोधं साक्षात् करोति, मार्गं भावयति, अत एकाभिसमय इति ? एवमपि न दोषः स्याद् ; एकस्य दर्शने शेषाणां कार्याभिसमयवचनात् । दर्शनाभिसमयं तु प्रति सूत्रे सत्यानां क्रमेणाभिसमय उक्तो लक्ष्यते ।

"न हैव गृहपते सत्यानामेकाभिसमयोऽनुपूर्वाभिसमयः[1]" इति विस्तरेण सदृष्टान्तानि त्रीणि सूत्राणि ।

---

भिप्रायः । उभयथापि च विचार्यमाणे बहूनां सूत्राणां विरोधः । यथा च तेषां विरोधः, तथा आगमेषु श्रोतव्यः ।

*एकस्य दर्शने शेषाणां कार्याभिसमयवचनादिति* । यस्मादस्त्येतद् वचनम्—"दुःखे हि दृश्यमाने तस्य त्रिविधोऽभिसमयः । समुदयादीनां कार्याभिसमयः । प्रहाणसाक्षात्करणभावनात्" इत्यतोऽस्माभिरप्येवमभ्युपगमान्नास्ति दोषः । आह—यद्यप्यभ्युपगम्यत इत्यभिसमयः । *सूत्रे सत्यानां क्रमेणाभिसमयो* विरुध्यते । अत उच्यते—*दर्शनाभिसमयं तु प्रतीति* विस्तरः ।

*सदृष्टान्तानि त्रीणि सूत्राणीति* । *संयुक्तागमे* पठ्यन्ते । कथम् ?

१. "अनाथपिण्डद आह—'किं नु भदन्त चतुर्णामार्यसत्यानामनुपूर्वाभिसमयः, आहोस्विदेकाभिसमयः' इति ? 'चतुर्णां गृहपते आर्यसत्यानामनुपूर्वाभिसमयः, न त्वेकाभिसमयः । यो गृहपते एवं वदेत्—अहं दुःखमार्यसत्यमनभिसमेत्य, समुदयमार्यसत्यमभिसमेष्यामीति, विस्तरेण यावद् दुःखनिरोधगामिनीं प्रतिपदमार्यसत्यमभिसमयेष्यामीति । मैवं वोच इति स्याद् वचनीयः । तत् कस्य हेतोः ? अस्थानमनवकाशो यद् दुःखमार्यसत्यमनभिसमेत्य समुदयमार्यसत्यमभिसमेष्यति पूर्ववत् । यावन्नेदं स्थानं विद्यते । स्थानमेतदिति पूर्ववत् । तद्यथा गृहपते य एवं वदेद्—अहं कूटागारस्य वा कूटागारशालाया वा मूलपादमप्रतिष्ठाप्य भित्तिं प्रतिष्ठापयिष्यामि, भित्तिमप्रतिष्ठाप्य तलकम् , तलकमप्रतिष्ठाप्य च्छदनं प्रतिष्ठापयिष्यामीति । मैवं वोच इति स्याद्वचनीयः । तत् कस्य हेतोः ? अस्थानमनवकाशो यत् कूटागारस्येति पूर्ववत् । यावत् स्थानमेतद्विद्यते यन्मूलपादं प्रतिष्ठाप्य भित्तिं प्रतिष्ठापयिष्यामीति पूर्ववत् । यावदेवमेव गृहपते नेदं स्थानं विद्यते यद् दुःखसत्यमदृष्ट्वा समुदयसत्यं द्रक्ष्यति'" इति विस्तरः ।

---

१. ०मकाभिसमयोऽपि पूर्वा०—का० ।

"यो दुःखे निष्काङ्क्षो निर्विचिकित्सो बुद्धेऽपि स" इति सूत्रादेकाभिसमय इति चेत् ? न; असमुदाचारावश्यम्प्रहाणाभिसन्धिवचनात् ।

य एष उक्तः षोडशचित्तकोऽभिसमयः,

सोऽग्रधर्मैकभूमिकः ।। २७ ।।

यद्भूमिकोऽग्रधर्मस्तद्भूमिकान्येतानि षोडश चित्तानि । ते पुनः षड्भूमिका इत्युक्तं प्राक् ॥ २७ ॥

---

२. "अथान्यतरो भिक्षुराह—'किं नु भदन्त चतुर्णामार्यसत्यानामनुपूर्वाभिसमयः, आहोस्विदेकाभिसमयः' इति ? भगवानाह—'चतुर्णां भिक्षो सत्यानामिति । पूर्ववद्यावत् तद्यथा भिक्षो य एवं वदेदहं चतुष्कलेवरस्य सोपानस्य प्रथमसोपानकलेवरमनभिरुह्य द्वितीयमभिरोक्ष्यामीति । द्वितीयमनभिरुह्य तृतीयम् । तृतीयमनभिरुह्य चतुर्थमभिरोक्ष्यामीति । मैवं वोच इति स्याद् वचनीयः । तत्कस्य हेतोः ? अस्थानमनवकाशो यच्चतुष्कलेवरस्य सोपानस्य प्रथमसोपानकलेवरमनभिरुह्य द्वितीयकलेवरमभिरोक्ष्यति । एवं यावत् तृतीयमभिरुह्य चतुर्थमभिरोक्ष्यति । एवमिहापि नेदं स्थानं विद्यते यद् दुःखसत्यमदृष्ट्वा समुदयसत्यं द्रक्ष्यति'" इत्यादि ।

३. तथा—"आर्यानन्द आह—'किं नु भदन्त चतुर्णामार्यसत्यानामनुपूर्वाभिसमयः, उताहो एकाभिसमयः' इति ? पूर्वसूत्रवत् । यावत् 'तद्यथानन्द य एवं वदेदहं चतुष्पदिकाया निःश्रेण्याः प्रथमं निःश्रेणीपदमनभिरुह्य प्रासादमभिरोक्ष्यामीति । मैवं वोच इति स्याद्वचनीयः । विस्तरेण यावदेवमेवानन्द य एवं वदेदहं दुःखमार्यसत्यमनभिसमेत्य समुदयसत्यमभिसमेष्यामीति विस्तरेण यावन्नेदं स्थानं विद्यते'" इति । एतानि त्रीणि सूत्राणि ।

*यो दुःख* इति विस्तरः । अथ मतं स्याद्—*यो दुःखे निष्कांक्षो निर्विचिकित्सो बुद्धेऽपि स इति सूत्रादेकाभिसमय* इति । कथम् ? अशैक्षा हि धर्मा बुद्धः । स एवाशैक्षा धर्मा मार्गः । तस्माद् दुःखाभिसमयान्मार्गोऽपि तेनाभिसमितः, यस्माद् दुःखवद्बुद्धेऽपि निष्कांक्षो निर्विचिकित्स इति । कांक्षा विचिकित्सेत्यनर्थान्तरम् । अथ वा निश्चयाभिलाषः कांक्षा, विमतिर्विचिकित्सा यथोक्तलक्षणा । *नासमुदाचारावश्यम्प्रहाणाभिसन्धिवचनादिति* । नैतदेवं सूत्रादेकाभिसमय इति; असमुदाचारस्यावश्यम्प्रहाणस्य चाभिसन्धिवचनात् । दुःखेऽभिसमिते बुद्धविषये विचिकित्साया असमुदाचारोऽवश्यं प्रहाणं च भवति । अतो यो दुःखे निष्कांक्षो निर्विचिकित्सो बुद्धेऽपि स इत्युक्तमभिसन्धिः ।

कस्मात् पुनः क्षान्तयो ज्ञानानि चावश्यं भवन्ति ? यस्मात्

**क्षान्तिज्ञानान्यनन्तर्यमुक्तिमार्गा यथाक्रमम् ।**

अनन्तर्यमार्गाः क्षान्तयः क्लेशप्राप्तिविच्छेदं प्रत्यनन्तर्यशक्यत्वात्[1] । विमुक्तिमार्गास्तु ज्ञानानि; क्लेशप्राप्तिविमुक्तानां विसंयोगप्राप्तिसहोत्पादात् । अत उभयैरवश्यं भवितव्यम् । द्वाभ्यां चौरनिष्कासनकपाटपिधानवत् ।

यदि पुनर्द्वितीयेनानन्तर्यमार्गेणैव सह विसंयोगप्राप्तिरुत्पद्येत, किं स्यात् ? प्रहीणविचिकित्सं ज्ञानं तत्रैवालम्बने नोत्पन्नं स्यात् ।

क्षान्तिभिः क्लेशप्रहाणान्नव संयोजननिकाया ज्ञानवध्या इति शास्त्रविरोध

---

*ते पुनः षड्भूमिका इत्युक्तम् प्रागिति ।* "अनागम्यान्तरध्यानभूमिकम्" (अभि० को० ६. २०) इति वचनात् ॥ २७ ॥

*अनन्तर्यशक्यत्वादिति ।* "कृत्याश्च", "शकि लिङ् च" (पा०सू० ३.३.१७२) इति शक्यार्थे कृत्यप्रत्ययः । अन्तरयितुं शक्या अन्तर्याः, नान्तर्याः अनान्तर्याः । क्लेशप्राप्तिं ते विच्छन्दन्ति । विप्रकृतावस्था सा तेषामिष्यते । अनन्तर्यमार्गेणेति भावे स्वार्थे वृद्धिविधानम् । अनन्तरभावो अनन्तरमार्गो वा आनन्तर्यम्, तस्य मार्गा आनन्तर्यमार्गाः । *विमुक्तिमार्गा* इति । विमुक्तौ मार्गा विमुक्तिमार्गाः । क्लेशविमुक्त्यवस्थामार्गा इत्यर्थः । *द्वाभ्यां चौरनिष्कासनकपाटविधानवदिति ।* यथा द्वाभ्यामेकेन चौरो निष्कास्यते । द्वितीयेन तदप्रवेशाय कपाटः पिधीयते । एवमानन्तर्यमार्गेण क्लेशचौरो निष्कास्यते; तत्प्राप्तिच्छेदतः । विमुक्तिमार्गेण च विसंयोगप्राप्तिकपाटं पिधीयते; वर्तमानीकरणतः ।

*यदि पुनरिति* विस्तरः । यदि पुनर्द्वितीयेनान्तर्यमार्गेणैव दुःखेऽन्वयज्ञानक्षान्त्या सह *विसंयोगप्राप्तिरुत्पद्यते ।* नैव दुःखे धर्मज्ञानमुत्पद्यते, यदनेन कर्तव्यम् । तद् दुःखेऽन्वयज्ञानक्षान्त्यैव क्रियेतेत्यभिप्रायः । *प्रहीणविचिकित्सं ज्ञानं तत्रैवालम्बने* कामावचरदुःखे प्रहीणविचिकित्सं ज्ञानं *नोत्पन्नं स्यात् ।* तत्र हि दुःखे धर्मज्ञानक्षान्तिः सविचिकित्सैव वर्तते; विचिकित्साया अप्रहीणत्वात् । न च तत्र दुःखेऽन्वयज्ञानक्षान्तिः प्रहीणविचिकित्सेति शक्यते व्यवस्थापयितुम्; तद्विषयत्वात् ।

*क्षान्तिभिरिति* विस्तरः । *क्षान्तिभिः क्लेशप्रहाणाद् योऽयं शास्त्रपाठः ।*

---

१. प्रत्यन्तरयितुमशक्य०—का० ।

इति चेत् ? न; क्षान्तीनां ज्ञानपरिवारत्वात् । राजपरिवारकृतस्य राजकृत-व्यपदेशवत् ।

किं पुनः सर्वाणि षोडशचित्तानि सत्यदर्शनाद् दर्शनमार्गः ? नेत्याह । किं तर्हि ?

**अदृष्टदृष्टेर्दृङ्मार्गस्तत्र पञ्चदश क्षणाः ॥ २८ ॥**

दुःखधर्मज्ञानक्षान्तिमारभ्य यावत् मार्गेऽन्वयज्ञानक्षान्तिरेते पञ्चदश क्षणा दर्शनमार्गः । किं कारणम् ? अदृष्टसत्यदर्शनात् । षोडशे तु नास्त्यपूर्वं द्रव्यमिति यथादृष्टाभ्यसनाद् भावनामार्ग एव ।

ननु च तेनाप्यदृष्टं पश्यति मार्गान्वयज्ञानक्षान्तिम्[1] । सत्यं प्रति चिन्ता,

---

*नवसंयोजननिकायाः* । दुःखधर्मज्ञानप्रहातव्यः संयोजननिकायः, समुदयधर्म-ज्ञानप्रहातव्यः, निरोधधर्मज्ञानप्रहातव्यः, मार्गधर्मज्ञानप्रहातव्यः, दुःखान्वय-ज्ञानप्रहातव्यः, समुदयान्वयज्ञानप्रहातव्यः, निरोधान्वयज्ञानप्रहातव्यः, मार्गान्वयज्ञानप्रहातव्यः, भावनाप्रहातव्यश्च संयोजननिकाय इति । सूत्रेऽप्युक्तम्—"इति हि भिक्षवो ज्ञानवध्याः क्लेशाः । विद्युदुपमं चित्तम्" इति । तस्य *विरोधः* । न हि तत्र क्षान्तिप्रहातव्यः संयोजननिकाय इत्युक्तम् । न ; *क्षान्तीनामिति* विस्तरः । नैतदेवम् । कस्मात् ? *क्षान्तीनां ज्ञानपरिवारत्वात्* । क्षान्तयो ज्ञानस्य परिवारा इत्यर्थः । क्षान्तिप्रहातव्यः संयोजननिकायो ज्ञानप्रहातव्य उच्यते । *राजपरिवारकृतस्य राजकृतव्यपदेशवत्* । यथा राजपरिवारकृतस्य कस्यचिदर्थस्य राजकृत इति व्यपदेशो भवति, तद्वद् भावनाप्रहातव्यस्तु संयोजननिकायो ज्ञानप्रहातव्य एव । तत्र आनन्तर्य-मार्गोऽपि ज्ञानस्वभाव इति । क्लेशप्रहाणे ह्यानन्तर्यमार्ग एव विशेषेणाधिक्रियते ।

*अदृष्टसत्यदर्शनादिति* । ज्ञानेन कथमदृष्टसत्यदर्शनं भवति ? तदप्यदृष्टे सत्यान्तरे सति भवतीति दर्शनमार्गान्तरालवर्ति ज्ञानं दर्शनमार्गः पारम्पर्यमभि-सन्धाय । तेनाप्यदृष्टमिव पश्यतीति । अथ वा—अदृष्टदृष्टेरदृष्टदर्शनात् । पञ्चदशक्षणा दर्शनमार्गो यावदस्य पुद्गलस्यादृष्टदर्शनं प्रवर्तते, तावदस्य क्षणा दर्शनमार्गः । तस्य दृष्टेऽपि दुःखे अदृष्टदर्शनमस्य समुदये प्रवर्तत एवेत्याह—*भावनामार्ग एव* । षोडशक्षण इति वाक्याध्याहारः ।

---

१. मार्गेऽन्वय०—का० ।

न तु क्षणं प्रति। न हि क्षणेनादृष्टेन सत्यमदृष्टं भवति। यथा नैकेलुञ्जेनाल्लेन[1] केदारमलूनं भवति। फलत्वादष्टज्ञानषोडशाकारभावनात् पूर्वमार्गविहानेः प्राबन्धिकत्वाच्च मार्गान्वयज्ञानं भावनामार्गः।

---

ननु च तेनाप्यदृष्टं पश्यति, किं तददृष्टम्? इत्याह—*मार्गान्वयज्ञानक्षान्तिमिति*। मार्गान्वयज्ञानक्षान्तिरात्मानं विरहय्य शेषमन्वयज्ञानपक्ष्यं मार्गमालम्बते; स्वात्मनि वृत्तिविरोधात्। तेनोच्यते—*मार्गान्वयज्ञानक्षान्तिमदृष्टां पश्यतीति*। *सत्यं प्रति चिन्तेति* विस्तरः। सत्यं प्रति चिन्ता—दृष्टं न दृश्यमिति। *न तु क्षणं प्रति*। दृष्टः क्षणो न वेति। कस्मात्? पञ्चदशेन क्षणेन यदन्वयज्ञानपक्षलक्षणं सत्यं दृष्टम्, तदेव षोडशेनापीति। *नास्त्यपूर्वदृष्टसत्यदर्शनमिति*। न षोडशक्षणो दर्शनमार्ग इति व्यवस्थाप्यते। न ह्येकक्षणेनादृष्टेन मार्गान्वयज्ञानक्षान्तिलक्षणेन सत्य तन्मार्गसत्यमदृष्टं भवति। लौकिकं दृष्टान्तमाह—*यथा नैकलुञ्जेन* एकसस्यशलाकया दात्रेणालूनेनाच्छिन्नेन *केदारमलूनं भवति*। किं तर्हि? लूनमेवेत्यर्थः। तथा हि—केचित् प्रमादादलूनेऽपि एकलुञ्जे वक्तारो भवन्ति—लूनमस्माभिः केदारमिति। *फलत्वादिति* विस्तरः। फलत्वादित्यादिहेतुभिर्भावनामार्गमेव षोडशक्षण साधयति। भावनामार्गः षोडशः क्षणः; संस्कृतश्रामण्यफलत्वात्, सकृदागामिफलवत् यावदर्हत्त्वफलवद्वा। तथा *भावितानष्टज्ञानषोडशाकारत्वाद् विहीनाप्रतिपन्नमार्गत्वात् प्राबन्धिकत्वाच्च*। फलान्तरवदेव भावनामार्गः। षोडशे हि क्षणेऽष्टौ ज्ञानानि भाव्यन्ते—दुःखे धर्मज्ञानम्, दुःखेऽन्वयज्ञानम्, यावन्मार्गेऽन्वयज्ञानमिति। आकारा अपि षोडशानित्याद्या भाव्यन्ते। तद्वदेव च दर्शनमार्गेऽष्टज्ञानषोडशाकारभावना नास्ति। तत्र हि सभागज्ञानाकारभावनैव। "यथोत्पन्नानि भाव्यन्ते क्षान्तिज्ञानानि दर्शने" (अभि० को० ७.२०) इति वचनात्। मार्गान्वयज्ञाने च पूर्वमार्गस्य प्रतिपन्नकमार्गस्य विहानिः। न च दर्शनमार्गे पूर्वमार्गविहानिरिति। प्राबन्धिकं चेदं मार्गान्वयज्ञानम्। न च दर्शनमार्गे क्षान्तिर्ज्ञानं वा किञ्चित् प्राबन्धिकमस्तीत्यतोऽपि मार्गान्वयज्ञानं भावनामार्ग इति।

इतरः प्रत्यवस्थानं करोति—दर्शनमार्गः षोडशः क्षणः; आवश्यकापरिहाणित्वात्, दुःखधर्मज्ञानक्षान्त्यादिवदिति। पूर्वपक्षं वा दूषयति—अनुमानपतितधर्मस्वरूपविपर्ययापक्षालोऽयं पक्ष इति। भावनामार्गत्वेऽपि साध्यमाने तदपरिहाणित्वमनेनानुमानेनापततीति। तदिदमन्तर्नीतमभिसमीक्ष्य पुनराह—

---

१. नैकेन०—का०।

अपरिहाणिस्तु दर्शनहेयक्लेशप्रहाणसन्धारणात् ।

अत एव दर्शनमार्ग इति चेत्? न; अतिप्रसङ्गात् । सप्त ज्ञानानि कस्माद्दर्शनमार्गः ? दर्शनस्यासमाप्तत्वात् । न हि सर्वं सत्यदर्शनं समाप्तमिति तदन्तरालत्वाचान्यपि दर्शनमार्गः ॥२८॥

उक्तं यथा दर्शनमार्गो भावनामार्गश्चोत्पद्यते ॥

अथेदानीमुत्पन्नार्यमार्गाणां[1] पुद्गलानां व्यवस्थानं तथा वक्ष्यामः—

य एते दर्शनमार्गस्वभावाः पञ्चदशक्षणा[2] उक्ताः, वेदितव्यौ

---

*अपरिहाणिस्त्वि*ति विस्तरः । *यस्माद् दर्शनहेयानां क्लेशानां प्रहाणं* मार्गान्वयज्ञानेनाधारप्रतिपक्षेण *सन्धार्यते* । यदि च तस्मात् फलमार्गात् षोडशात् क्षणात् परिहाणिः स्यात्, स्रोतआपत्तिफलात् परिहाणिः स्यात् । न च स्रोतआपत्तिफलात् परिहाणिरित्यतो न तस्मात् परिहीयते ।

इतर आह—*अत एवेति* । किमयम् अपरिहाणिहेतुरेवोच्यते ? वयमप्येतमर्थमभिदध्महे, किमयमुपलब्धिसममिति चोत्तरमुद्भाव्यते । *आचार्य* आह—*अत एव दर्शनमार्ग इति चेत्* । यदि मन्यसे—यत एव दर्शनहेयप्रहाणसन्धारणं मार्गान्वयज्ञानेन, अत एव दर्शनमार्ग इति । *तन्न* । *अतिप्रसङ्गात्* । यदि मार्गान्वयज्ञानेन दर्शनहेयप्रहाणसन्धारणमित्यतो दर्शनमार्गः स्यात्, एवं सत्यतिप्रसङ्गः स्यात् । तस्मान्मार्गान्वयज्ञानात् परेण सर्वेण भावनामार्गेण दर्शनहेयप्रहाणसन्धारणमिति सर्व एव दर्शनमार्गः स्यात् । अनिष्टं चैतत् । षोडश एव हि क्षणो दर्शनमार्गो भवद्भिरिष्यते, न सप्तदशाष्टादश इत्यादिकः क्षणः प्रवाहन्यायेनोत्पद्यते । द्वितीये तृतीये वा दिवसे य उत्पाद्यते तज्जातीयो विशेषमार्गसंगृहीतः । तन्नास्ति । ततोऽपि हि नास्ति परिहाणिः । तदेवं सत्यावश्यकापरिहाणित्वं यो हेतुरुक्तः, सोऽनैकान्तिक इति दर्शितं भवति । तदनैकान्तिकत्वाच्चाप्रतिसाधनं तत् । न पूर्वपक्षदूषणं चेति । आह—*सप्त ज्ञानानि* दुःखे धर्मज्ञानं यावन्मार्गे धर्मज्ञानं *कस्माद् दर्शनमार्गो* न पुनरष्टमं मार्गेऽन्वयज्ञानमित्यभिप्रायः । *दर्शनस्यासमाप्तत्वादि*ति । मार्गान्वयज्ञानक्षान्तौ दर्शनं समाप्तम्; सर्वेषां सत्यानां तदानीं दृष्टत्वात् । दुःखे धर्मज्ञान उत्पन्ने यद्यपि कामावचरं दुःखं दृष्टम्, रूपारूप्यावचरदुःखादि तु न तावद् दृष्टम् । एवं यावत् मार्गे धर्मज्ञान उत्पन्ने रूपारूप्यप्रतिपक्षो न तावद् दृष्ट इति ।

---

१. यथेदानी०—का० । २. पञ्चादश०—का० ।

**मृदुतीक्ष्णेन्द्रियौ तेषु श्रद्धाधर्मानुसारिणौ ।**

मृद्विन्द्रियस्तेषु वर्तमानः श्रद्धानुसारीत्युच्यते, तीक्ष्णेन्द्रियो धर्मानुसारीति । श्रद्धयानुसारः श्रद्धानुसारः, सोऽस्यास्तीति श्रद्धानुसारी । श्रद्धयानुसर्तुं शीलमस्येति वा । पूर्वं परप्रत्ययेनार्थानुसरणात्[1] ।

एवं धर्मानुसारी । पूर्वं स्वयमेव सूत्रादिभिर्धर्मैरर्थानुसरणा[त्] ।

तौ पुनः—

**अहीनभावनाहेयौ फलाद्यप्रतिपन्नकौ ।। २९ ।।**

फलानामाद्यं स्रोतआपत्तिफलम्; सर्वफलप्राप्तौ तस्य प्रथमत्वात् । तावेव श्रद्धाधर्मानुसारिणौ, यदि पूर्वं लौकिकेन मार्गेणाप्रहीणभावनाहेयौ भवतः, सकलबन्धनौ तौ स्रोतआपत्तिफलप्रतिपन्नकावुच्येते ।।२९।।

**यावत् पञ्चप्रकारघ्नौ,**

यदि पूर्वं लौकिकेन मार्गेण कामावचराणां भावनाहेयानां यावत् पञ्च प्रकाराः प्रहीणा भवन्ति, तथैव प्रथमफलप्रतिपन्नकावुच्येते ।

---

[स्थ]ावशेषं दर्शनं न समाप्तमिति । *तदन्तरालत्वादिति* । दर्शनमार्गान्तरालत्वात् । तयोर्वा द्वयोः क्षान्त्योरन्तरालत्वात् । तान्यपि सप्त ज्ञानानि दर्शन[म]ार्गः । शेषद्रष्टव्यसाकांक्षत्वात् तस्य योगिन इत्यभिप्रायः ।। २८ ।।

*पूर्वं परप्रत्ययेन* परोदितेन *अर्थानुसरणाद्* दुःखादिसत्यप्रतिपत्तेरित्यर्थः । [पू]र्वमिति विशेषणेन भावनाकाले परोपदेशनिरपेक्षमर्थानुसरणमिति कथितं [भ]वति । *एवं धर्मानुसारीति* । धर्मैरनुसारो धर्मानुसारः, सोऽस्यास्तीति [ध]र्मानुसारी । धर्मैरनुसर्तुं शीलमस्येति वा । *पूर्वं स्वयमेव सूत्रादिभिर्धर्मैर्द्वादशाङ्गैः* [प्र]वचनैर्*अर्थानुसरणात्* । पूर्ववद् व्याख्यानम् ।। २९ ।।

*यावत्पञ्च प्रकाराः प्रहीणा भवन्तीति* । यावच्छब्देन यद्येको द्वौ त्रयश्चत्वारः [प]ञ्च प्रहीणाः प्रकारा भवन्ति । *तथैव प्रथमफलप्रतिपन्नकावुच्येते* । यथा [स]कलबन्धनौ ।

---

१. परसंप्रत्यये०—का० ।

अभि० को० ३ : १२

**द्वितीयेऽर्वाङ्नवक्षयात् ।**

द्वितीयनिमित्तं द्वितीये । यदि तयोस्तस्मात् परेण षट् सप्ताष्टौ वा प्रकाराः पूर्वं प्रहीणा भवन्ति, तौ[1] द्वितीयफलप्रतिपन्नकावुच्येते ।

कतमच्च द्वितीयम् ? सकृदागामिफलम् ।

**कामाद् विरक्तावूर्ध्वं वा तृतीयप्रतिपन्नकौ ॥ ३० ॥**

यदि पुनर्नवमस्यापि प्रकारस्य प्रहाणात् कामधातोर्वीतरागौ भवत ऊर्ध्वं च[2] यावदाकिञ्चन्यायतनात्, तौ तृतीयप्रतिपन्नकावुच्येते ।

कतमच्च तृतीयम् ? अनागामिफलम् ॥ ३० ॥

**षोडशे तु फलस्थौ तौ यत्र यः प्रतिपन्नकः ।**

षोडशे तु चित्त उत्पन्ने तौ न पुनः श्रद्धाधर्मानुसारिणावुच्येते । नापि प्रतिपन्नकौ । किं तर्हि ? फलस्थौ । यत्र फले यः प्रतिपन्नको भूतः स तदानीं तत्र फलस्थितो भवति । स्रोतआपत्तिफले, सकृदागामिफले वा, अनागामिफले वा । अर्हत्त्वं तु न शक्यमादितः प्राप्तुम् ; दर्शनमार्गेण भावनाहेयाप्रहाणात्[3] । पूर्वं च भवाग्रवैराग्यासम्भवात् ।

---

"*द्वितीयेऽर्वाङ् नवक्षयाद्*" इति । *द्वितीये* इति । द्वितीयनिमित्तमित्यर्थः । 'चर्मणि द्वीपनं हन्ति' इति यथा । अर्वाङ् नवक्षयात् नवप्रकारप्रहाणादधरतः नवप्रकारप्रहाणपरिहारेणार्थादुक्तं भवति ।

*यदि तयोः पुद्गलयोस्तस्मात्* पञ्चप्रकारप्रहाणात् *परेण षट् सप्ताष्टौ वा प्रकाराः पूर्वं* लौकिकेन मार्गेण *प्रहीणा भवन्ति* । *तौ द्वितीयफलप्रतिपन्नकाविति* । द्वितीय इति वचनात्, प्रतिपन्नकाविति चाधिकारादेॱ पदार्थव्यवस्था लभ्यते ।

*ऊर्ध्वं चेति* । प्रथमध्यानवीतरागौ । *यावदाकिञ्चन्यायतनाद्वीतरागौ* ॥ ३० ॥

*अर्हत्त्वं तु न शक्यमादितः प्राप्तुमिति* । अनागामिफलमप्राप्यादित एवार्हत्त्वं प्राप्तुं न शक्यते । कस्मादित्याह— *भावनाहेयाप्रहाणात्* । न हि दर्शन-

---

१. द्वौ तौ—का० । २. वा—का० । ३. °हेयानामप्रहाणात्—का० ।

श्रद्धाधि् ्तदृष्टचाप्तौ मृदुतीक्ष्णेन्द्रियौ तदा ।। ३१ ।।

तस्मिन् काले यो मृद्विन्द्रियः श्रद्धानुसारिपूर्वी स श्रद्धाधिमुक्त इत्युच्यते । यस्तीक्ष्णेन्द्रियो धर्मानुसारिपूर्वी स दृष्टिप्राप्त इत्युच्यते; श्रद्धाप्रज्ञाधिकत्वेनाधिमोक्षदृष्टिप्रभावितत्वात् ॥ ३१ ॥

किं पुनः कारणं प्रहीणपञ्चप्रकारोऽपि षोडशे चित्ते स्रोतआपन्न एवोच्यते, न सकृदागामिफलप्रतिपन्नकः ? यस्मात्

फले फलविशिष्टस्य लाभो मार्गस्य नास्त्यतः ।
नाप्रयुक्तो विशेषाय फलस्थः प्रतिपन्नकः ।। ३२ ।।

फले हि लभ्यमाने फलविशिष्टो मार्गो न लभ्यत इत्येष नियमः । अतः

---

मार्गेण भावाग्रिकाणां भावनाहेयानां प्रहाणमस्तीति । यथा दर्शनमार्गस्वभावेषु पञ्चदशसु क्षणेषु वर्तमानः आदितस्तृतीयफलप्रतिपन्नकादर्हत्त्वफलसाक्षात्क्रियायै प्रतिपन्नकः स्यात् । षोडशे तु चित्त उत्पन्ने आदितोऽनागामिनोऽर्हन् स्यात् । भावाग्रिकभावनाहेयप्रहाणाद्धयर्हत्त्वं प्रतिष्ठाप्यते । आह—यदि दर्शनमार्गेण भावाग्रिकाणां भावनाहेयानां प्रहाणं नास्तीत्यतोऽर्हत्त्वं प्राप्तुमशक्यम्, पूर्वमेव तर्हि पृथग्जनावस्थायामेव भावनामार्गेण भावनावैराग्यात् तत्फलप्रतिपन्नकः । तेषु वर्तमानोऽर्हत्त्वफलसाक्षात्क्रियायै प्रतिपन्नको भविष्यति । षोडशे तु चित्तक्षण आदितोऽर्हन्निति । अत उच्यते—पूर्वं च *भवाग्रवैराग्यासम्भवादिति* । न हि पूर्वं पृथग्जनावस्थायां लौकिकेन मार्गेण भवाग्रवैराग्यसम्भवः; उपरिभूम्यभावात् । तस्मादादितः प्रतिपन्नकोऽर्हंश्च न स्यादिति ।

*श्रद्धाप्रज्ञाधिकत्वेनाधिमोक्षदृष्टिप्रभावितत्वादिति* । श्रद्धाधिकत्वेनाधिमोक्षप्रभावितत्वाच्छ्रद्धाधिमुक्तः । श्रद्धाधिको मुक्तः श्रद्धाधिमुक्त इति कृत्वा । न तु तस्य प्रज्ञा नैवास्ति । तया न तु प्रभावित इति न तन्नाम लभते । प्रज्ञाधिकत्वेन दृष्टिप्रभावितत्वात् दृष्टिप्राप्तः । न तु तस्य श्रद्धा नास्तीति पूर्ववद् वाच्यम् । अपरे तु पुनः नैरुक्तविधिमालम्ब्य व्याचक्षते—श्रद्धाधिपत्येन दर्शनहेयेभ्यो मुक्तः श्रद्धाधिमुक्तः । दृष्टयाधिपत्येन प्राप्तफलो (प्राप्तफला) दृष्टिप्राप्त इति ॥ ३१ ॥

"यावत्पञ्चप्रकारघ्नौ" (अभि० को० ६.३०) इति उक्तम् । अतः पृच्छति—*किं पुनः कारणमिति* विस्तरः ।

*फलविशिष्टो मार्गो न लभ्यत इति* । फलाद्विशिष्टो मार्गः सकृदागामि-

फलस्थो यावन्न विशेषाय प्रयुज्यते फलान्तरप्राप्तौ, तावत् प्रतिपन्नको नोच्यते ।

एवमन्यत्रापि फले वेदितव्यम् ।

यस्तु तृतीयध्यानवीतरागोऽधरां भूमिं निश्रित्य नियाममवक्रामति, सोऽवश्यं फलविशिष्टं मार्गं सम्मुखीकरोति । अन्यथा हि स तस्मादूर्ध्वोपपन्नः सुखेन्द्रियेणासमन्वागतः स्यात् ।

एवं तावद् भूयः कामवीतरागाणां नियामावक्रान्तौ पुद्गलव्यवस्थानम् ॥ ३२ ॥

---

फलप्रतिपन्नकादिः । प्रथमादिप्रकारभावनाहेयप्रतिपक्षमार्गो न भाव्यत इत्यर्थः । *यावन्न विशेषाय प्रयुज्यत* इति । यावन्नाप्रहीणक्लेशप्रहाणाय फलान्तरप्राप्तिनिमित्तं प्रयोगं करोति, तावत्प्रतिपन्नको नोच्यते । यदा प्रयुज्यते, तदा प्रतिपन्नक इत्यर्थादुक्तं भवति । तदा हि पूर्वप्रहीणक्लेशप्रतिपक्षस्याप्रतिलब्धपूर्वस्य तत्प्रहाणस्य चानास्रवा प्राप्तिरुत्पद्यत इति सिद्धान्तः । *एवमन्यत्रापि फले वेदितव्यमि*ति । षोडशे चित्ते स्रोतआपन्न एवोच्यत इति वचनात् । स्रोतआपन्न उक्त इत्यतोऽन्यत्रापि सकृदागामिफले अनागामिफले च वेदितव्यम् । लौकिकेन मार्गेण प्रहीणाष्टप्रकारोऽपि षोडशे चित्ते सकृदागाम्येवोच्यते, नानागामिफलप्रतिपन्नकः; यस्मान् फले फलविशिष्टस्य मार्गस्य लाभो नास्तीति । एवं कामवीतराग ऊर्ध्वं वा षोडशे चित्ते नार्हत्त्वफलप्रतिपन्नक उच्यते; यस्मान् फले फलविशिष्टस्येति पूर्ववत् ।

*यस्तु तृतीयध्यानवीतराग* इति विस्तरः । तृतीयध्यानवीतरागः *अधरां भूमिं निश्रित्या*नागम्यं ध्यानान्तरं प्रथमं द्वितीयं वा ध्यानं निश्रित्य *नियाममवक्रामती*त्यस्ति सम्भवः । *सोऽवश्यं फलविशिष्टं मार्गं सम्मुखीकरोति* तृतीयध्यानसंगृहीतं वा; यतस्तृतीयध्यानसंगृहीतमनास्रवं सुखेन्द्रियं लभ्यते । अस्ति हि सम्भावना यदसौ फलविशिष्टमार्गं सम्मुखीकुर्यात्; यस्मादस्य तृतीयध्यानभूमिकः क्लेशः प्रहीण इति । तेन सोऽवश्यं फलविशिष्टं मार्गं सम्मुखीकरोतीति नियम्यते । *अन्यथा हि* । यदि न सम्मुखीकरोतीत्यर्थः । *स तस्मादूर्ध्वोपपन्नः* । स आर्यः तस्मान् तृतीयध्यानादूर्ध्वं चतुर्थे ध्याने आरूप्येषु वा *सुखेन्द्रियेणासमन्वागतः स्यात्* । यद्धि सास्रवं सुखेन्द्रियम्, तद् भूमिसञ्चारात् त्यक्तम् । यदपि चानास्रवम् तदपि । यदि न सम्मुखीकृतं स्यादुभयेनापि सुखेन्द्रियेणासमन्वागत स्याद् । आर्याणां चोर्ध्वोपपन्नानामवश्यं सुखेन्द्रियेणासमन्वागम उक्तः । सुखेन्द्रियेण चतुर्थध्यानारूप्योपपन्नः पृथग्जनो न समन्वागतः; आर्यस्तु

आनुपूर्विकं तु वक्तव्यम्। अत इदं तावद् व्यवस्थाप्यते। यथैते कामधातौ क्लेशा उपदिष्टाः, एवं

**नवप्रकारा दोषा हि भूमौ भूमौ,**

यावद् भवाग्रे।

यथा च दोषाः,

---

ागत इति वचनात्। "यश्चापि सौमनस्येन्द्रियेण समन्वागतः सोऽवश्यं उपेक्षा-जीवित-मनः-सुख-सौमनस्येन्द्रियैः" इत्येवमादिवचनाच्च। अत्र —अस्त्येष *विभाषायां* लिखितपक्षः। स तु न स्थापनापक्षो लक्ष्यते; अपर रिति वचनात्। यो हि चतुर्थध्यानलाभी षण्णां भूमीनामन्यतमां भूमिं नियाममवक्रामति, स षड्भूमिकेनानागामिफलेनानागम्यभूमिकेन च्चतुर्थध्यानभूमिकेन षोडशे चित्ते समन्वागतो भवति; तथा वीतरागत्वात्। तीयध्यानलाभी, स पञ्चभूमिकेन; चतुर्थध्यानभूमिकं हित्वा। एवं यो यध्यानलाभी, स चतुर्भूमिकेन; तृतीयचतुर्थभूमिके हित्वा। यस्तु रागः प्रथमध्यानलाभी वा द्वितीयालाभी, स यद्यनागामिफलं प्राप्नोति, मिकेनासावनागामिफलेन समन्वागतः अनागम्यध्यानान्तरप्रथमध्यान- केन। सर्वजघन्योऽपि ह्यनागाम्यवश्यमेव त्रिभूमिकेनानागामिफलेन न्वागत इति वर्णयन्ति। तस्मादपरपक्षापेक्षयैवमुक्तमाचार्येणेति युक्तं त्।

*एवं तावद् भूयःकामवीतरागाणामिति*। भूयोवीतरागाणाम्, कामवीतरागाणां तत्र भूयोवीतरागो यस्य सप्ताष्टौ वा प्रकाराः पूर्वं लौकिकेन मार्गेण प्रहीणा यस्य नव प्रकाराः प्रहीणाः, स कामवीतरागः। भूयोवीतरागाणां नलव्यवस्था "द्वितीयेऽर्वाङ् नवक्षयाद्" (अभि० को० ६.३०) इति नात्, कामवीतरागाणाम् "कामाद्विरक्तावूर्ध्वे च" इति (अभि० को० ६.३०) नात्॥ ३२॥

*यथैते कामधाताविति*।

"यावत् पञ्चप्रकारघ्नौ द्वितीयेऽर्वाङ् नवक्षयात्।
कामाद् विरक्तौ" (अभि० को० ६.३०)

इति वचनात् *कामधातौ नव प्रकाराः क्लेशा उपदिष्टाः*।

फलस्थो यावन्न विशेषाय प्रयुज्यते फलान्तरप्राप्तौ, तावत् प्रतिपन्नको नोच्यते ।

एवमन्यत्रापि फले वेदितव्यम् ।

यस्तु तृतीयध्यानवीतरागोऽधरां भूमिं निश्रित्य नियाममवक्रामति, सोऽवश्यं फलविशिष्टं मार्गं सम्मुखीकरोति । अन्यथा हि स तस्मादूर्ध्वोपपन्नः सुखेन्द्रियेणासमन्वागतः स्यात् ।

एवं तावद् भूयः कामवीतरागाणां नियामावक्रान्तौ पुद्गलव्यवस्थानम् ॥ ३२ ॥

---

फलप्रतिपन्नकादिः । प्रथमादिप्रकारभावनाहेयप्रतिपक्षमार्गो न भाव्यत इत्यर्थः । *यावन्न विशेषाय प्रयुज्यत* इति । यावन्नाप्रहीणक्लेशप्रहाणाय फलान्तरप्राप्तिनिमित्तं प्रयोगं करोति, तावत्प्रतिपन्नको नोच्यते । यदा प्रयुज्यते, तदा प्रतिपन्नक इत्यर्थादुक्तं भवति । तदा हि पूर्वप्रहीणक्लेशप्रतिपक्षस्याप्रतिलब्धपूर्वस्य तत्प्रहाणस्य चानास्रवा प्राप्तिरुत्पद्यत इति सिद्धान्तः । *एवमन्यत्रापि फले वेदितव्यमि*ति । षोडशे चित्ते स्रोतआपन्न एवोच्यत इति वचनात् । स्रोतआपन्न उक्त इत्यतोऽन्यत्रापि सकृदागामिफले अनागामिफले च वेदितव्यम् । लौकिकेन मार्गेण प्रहीणाष्टप्रकारोऽपि षोडशे चित्ते सकृदागाम्येवोच्यते, नानागामिफलप्रतिपन्नकः; यस्मात् फले फलविशिष्टस्य मार्गस्य लाभो नास्तीति । एवं कामवीतराग ऊर्ध्वं वा षोडशे चित्ते नार्हत्त्वफलप्रतिपन्नक उच्यते; यस्मात् फले फलविशिष्टस्येति पूर्ववत् ।

*यस्तु तृतीयध्यानवीतराग* इति विस्तरः । तृतीयध्यानवीतरागः *अधरां भूमिं निश्रित्या*नागम्यं ध्यानान्तरं प्रथमं द्वितीयं वा ध्यानं निश्रित्य *नियाममवक्रामती*त्यस्ति सम्भवः । *सोऽवश्यं फलविशिष्टं मार्गं सम्मुखीकरोति* तृतीयध्यानसंगृहीतं वा; यतस्तृतीयध्यानसंगृहीतमनास्रवं सुखेन्द्रियं लभ्यते । अस्ति हि सम्भावना यदसौ फलविशिष्टमार्गं सम्मुखीकुर्यात्; यस्मादस्य तृतीयध्यानभूमिकः क्लेशः प्रहीण इति । तेन सोऽवश्यं फलविशिष्टं मार्गं सम्मुखीकरोतीति नियम्यते । *अन्यथा हि* । यदि न सम्मुखीकरोतीत्यर्थः । *स तस्मादूर्ध्वोपपन्नः* । स आर्यः तस्मात् तृतीयध्यानादूर्ध्वं चतुर्थे ध्याने आरूप्येषु वा *सुखेन्द्रियेणासमन्वागतः स्यात्* । यद्धि सास्रवं सुखेन्द्रियम्, तद् भूमिसञ्चारात् त्यक्तम् । यदपि चानास्रवम् तदपि । यदि न सम्मुखीकृतं स्यादुभयेनापि सुखेन्द्रियेणासमन्वागत स्याद् । आर्याणां चोर्ध्वोपपन्नानामवश्यं सुखेन्द्रियेणासमन्वागम उक्तः । सुखेन्द्रियेण चतुर्थध्यानारूप्योपपन्नः पृथग्जनो न समन्वागतः; आर्यस्तु

आनुपूर्विकं तु वक्तव्यम् । अत इदं तावद् व्यवस्थाप्यते । यथैते कामधातौ नवप्रकाराः क्लेशा उपदिष्टाः, एवं

**नवप्रकारा दोषा हि भूमौ भूमौ,**

याबद् भवाग्रे ।

यथा च दोषाः,

---

समन्वागत इति वचनात् । "यश्चापि सौमनस्येन्द्रियेण समन्वागतः सोऽवश्यं पञ्चभिः उपेक्षा-जीवित-मनः-सुख-सौमनस्येन्द्रियैः" इत्येवमादिवचनाच्च । अत्र ब्रूमः—अस्त्येष *विभाषायां* लिखितपक्षः । स तु न स्थापनापक्षो लक्ष्यते ; अपर आहुरिति वचनात् । यो हि चतुर्थध्यानलाभी षण्णां भूमीनामन्यतमां भूमिं निश्रित्य नियाममवक्रामति, स षड्भूमिकेनानागामिफलेनानागम्यभूमिकेन यावच्चतुर्थध्यानभूमिकेन षोडशे चित्ते समन्वागतो भवति; तथा वीतरागत्वात्। यस्तृतीयध्यानलाभी, स पञ्चभूमिकेन ; चतुर्थध्यानभूमिकं हित्वा । एवं यो द्वितीयध्यानलाभी, स चतुर्भूमिकेन ; तृतीयचतुर्थभूमिके हित्वा । यस्तु वीतरागः प्रथमध्यानलाभी वा द्वितीयालाभी, स यद्यनागामिफलं प्राप्नोति, त्रिभूमिकेनासावनागामिफलेन समन्वागतः अनागम्यध्यानान्तरप्रथमध्यानभूमिकेन । सर्वजघन्योऽपि ह्यनागाम्यवश्यमेव त्रिभूमिकेनानागामिफलेन समन्वागत इति वर्णयन्ति । तस्मादपरपक्षापेक्षयैवमुक्तमाचार्येणेति युक्तं स्यात् ।

*एवं तावद् भूयःकामवीतरागाणामिति* । भूयोवीतरागाणाम् , कामवीतरागाणां च । तत्र भूयोवीतरागो यस्य सप्ताष्टौ वा प्रकाराः पूर्वं लौकिकेन मार्गेण प्रहीणा भवन्ति । यस्य नव प्रकाराः प्रहीणाः, स कामवीतरागः । भूयोवीतरागाणां पुद्गलव्यवस्था "द्वितीयेऽर्वाङ् नवक्षयाद्" (अभि० को० ६.३०) इति वचनात् , कामवीतरागाणाम् "कामाद्विरक्तावूर्ध्वं च" इति (अभि० को० ६.३०) वचनात् ॥ ३२ ॥

*यथैते कामधाताविति* ।

"यावत् पञ्चप्रकारघ्नौ द्वितीयेऽर्वाङ् नवक्षयात् ।
कामाद् विरक्तौ" (अभि० को० ६.३०)

इति वचनात् *कामधातौ नव प्रकाराः क्लेशा उपदिष्टाः* ।

**तथा गुणाः ।**

तत्प्रतिपक्षा अप्यानन्तर्यविमुक्तिमार्गाख्या गुणा भूमौ भूमौ नवप्रकारा एव । कथं कृत्वा ?

**मृदुमध्याधिमात्राणां पुनर्मृद्वादिभेदतः ।। ३३ ।।**

मृदुमध्याधिमात्रा हि त्रयो मूलप्रकाराः । तेषां पुनः प्रत्येकं मृदुमध्याधिमात्रत्वेन त्रिविधत्वात् नव व्यवस्थाप्यन्ते । तद्यथा—मृदुमृदुः प्रकारः, मृदुमध्यः, मृद्वधिमात्रः; मध्यमृदुमध्यमध्यः, मध्याधिमात्रः; अधिमात्रमृदुः, अधिमात्रमध्यः, अधिमात्राधिमात्रश्चेति । तत्र मृदुमृदुना मार्गेणाधिमात्रस्य क्लेशस्य प्रहाणम् । एवं यावदधिमात्राधिमात्रेण मृदुमृदोः । आदित एवाधिमात्रमार्गासम्भवादुत्पन्नाधिमात्रमार्गस्य चाधिमात्रक्लेशासम्भवात् । औदारिको हि मलश्चेलात् पूर्वं निर्धूयते, पश्चात् सूक्ष्मः । औदारिकं च तमः सूक्ष्मेणालोकेन हन्यते, सूक्ष्मं चाधिमात्रेणेत्येष दृष्टान्तयोगः । शुक्ला हि धर्मा बलवन्तः, दुर्बलास्तु कृष्णाः । क्षणिकमृदुकेनाप्यार्यमार्गेणानादिसंसारपरम्पराध्यापिताधिमात्राणां[1] क्लेशानामुन्मूलनात्[2] । सुबहुकालसंवर्द्धितानां[3] दोषाणां त्रिवृत्कर्षनिष्कर्षणवत्[4], क्षणिकाल्पप्रदीपमहातमोपघातवच्च[5] ।।३३।।

एवं नवप्रकारेषु क्लेशेषु सर्वत्र—

---

*चेलादिति* वस्त्रात् । *एष दृष्टान्तयोग* इति । दृष्टान्तयुक्तिर्दृष्टान्तयोगः । दृष्टान्तप्रकार इत्यपरे । तदेवमनया युक्त्या, अनेन वा प्रकारेणान्योऽपि दृष्टान्तो वक्तव्य इति सूचयति । अन्यथा ह्येष दृष्टान्त इत्येव ब्रूयात् । *अनादिसंसार* इति । अनादौ संसारे । स्वहेतु*परम्पराध्यापिता* अभिवर्धिताः, ततश्चा*धिमात्रप्रमाण*मेतेषामित्यभिप्राय. । तेषां *क्लेशानामुन्मूलनात्* प्राप्तिच्छेदतः । मूलसधर्मिण्यो हि प्राप्तयस्तत्प्रबन्धधरणात् क्लेशानाम् । *त्रिवृत्कर्षनिष्कर्षणवदि*ति । यथा त्रिवृत्कर्षेण धरणेन *सुबहुकाले संवर्धितानां* वातपित्तादीनां *दोषाणां* निष्कर्षणम्, एवं क्षणिकमृदुकेनाप्यार्यमार्गेण क्लेशानाम् । *यथा च क्षणिकेनाल्पेन प्रदीपेन महतस्तमसो घातः*, तद्वत् क्लेशानामिति ।।३३।।

---

१. °पराध्यायिताधि०—का० । २. °नामुन्मूलत्वात्—का० ।
३. बहु०—का० । ४. त्रिवृत्कर्षवत्—का० । ५. °घातवच्च—का० ।

**अक्षीणभावनाहेयः फलस्थः सप्तकृत् परः ।**

यस्य हि फलस्थस्यैकोऽपि भावनाहेयः प्रकारोऽप्रहीणः, स स्रोतआपन्नः । सप्तजन्मानि करोति सप्तकृत् । परः सर्वान्त्यः । न हि सर्वसप्तकृदिति ।

सप्तकृत्वःपरम इति सूत्रपाठः । सप्तकृत्वः परमं जन्म अस्येत्यर्थः । प्रकर्षे परमशब्दः । निर्वाणस्रोतो हि मार्गः; तेन तत्र गमनात् । तदसावापन्न आगतः प्राप्त इति स्रोतआपन्नः ।

कथमापन्नः ? आद्यमार्गलाभाच्चेत्, अष्टमकोऽपि स्यात् ; आद्यफललाभाच्चेत्, भूयोवीतरागोऽपि स्यात् । एवं कामवीतरागोऽपि स्यात् । सर्वफलप्रापिणमधिकृत्याद्यफललाभात् ।

किं पुनः कारणं स एव, नाष्टमकः ? प्रतिपन्नकफलमार्गलाभात् दर्शन-

---

*सप्तकृत्वः परमं जन्मास्येति ।* सप्तकृत्वो जन्मप्रकर्षेण अस्य । नातः परमित्यर्थः । तेन मार्गेण निर्वाणगमनादित्यर्थः । स्रोतसा हि लोके गम्यते ।

*आद्यमार्गलाभाच्चेत् ।* आद्योऽनास्रवो मार्गो दर्शनमार्गस्तस्य लाभाच्चेत् *स्रोतआपन्नः । अष्टमकोऽपि स्यात् ।* स्रोतआपत्तिफलप्रतिपन्नकोऽपि स्यादित्यर्थः । तथा हि प्रतिलोमक्रमेणार्हत आरभ्याष्टानां पुरुषपुद्गलानामर्हत्प्रतिपन्नकादीनां स्रोतआपत्तिफलप्रतिपन्नोऽष्टमको भवति श्रद्धानुसारी धर्मानुसारी वा, तस्याप्याद्यमार्गलाभात् सोऽपि स्रोतआपन्नः स्यात् । *आद्यफललाभाच्चेत् ।* अथ मतम्—अपूर्वफलस्य लाभात्स्रोतआपन्न इति । *भूयोवीतरागोऽपि स्यात् ।* यः प्रहीणषट्क्लेशप्रकारः षोडशे क्षणे सकृदागामी, सोऽपि स्रोतआपन्नः स्यात् । तस्याप्यपूर्वफललाभात् । एवं *कामवीतरागोऽपि* स्यात् । तस्यापि तदाद्यं फलमिति । इदानीं परिहार उच्यते—*सर्वफलप्रापिणमधिकृत्य आद्यफललाभादिति ।* सर्वफलमिति स्रोतआपत्तिफलादीनि चत्वारि, तत्प्राप्तुं शीलमस्येति सर्वफलप्रापी । सर्वफलप्राप्तिरस्यास्तीति वा सर्वफलप्रापी । तमधिकृत्य तमभिसन्धायाऽऽद्यफललाभादपूर्वफललाभात् *स्रोतआपन्न उच्यते ।*

*किं पुनः कारणमिति* विस्तरः । कस्मात् *स एव* स्रोतआपन्न उच्यते, *नाष्टमकः ।* स चापि ह्यार्यमार्गस्रोतआपन्न इति । *प्रतिपन्नकफलमार्गलाभादिति*

---

१-१. कामवीतरागः—का० । २. माशीर्विष०—का० ।

भावनामार्गलाभात् सकलस्रोतोऽभिसमयाच्च मार्गान्वयज्ञाने । स एव तस्मादन्यान् सप्तोपपत्तिभवान् मनुष्येषु प्रतिसन्दधाति सप्तान्तराभवान् । एवं देवेष्वित्यष्टाविंशतिभवान् प्रतिसन्दधाति । सप्तकसामान्यात्तु सप्तकृत्वः परम उक्तः । सप्तस्थानकौशल-सप्तपर्णवदिति वैभाषिकाः ।

यत्तर्हि सूत्र उक्तम्—"अस्थानमनवकाशो यद् दृष्टिसम्पन्नः पुद्गलोऽष्टमं भवमभिनिर्वर्तयिष्यति । नेदं स्थानं विद्यते" इति । एकस्यां गतावित्यभिप्रायः । यथारुतं वा कल्प्यमानेऽन्तराभवोऽपि न स्यात् ।

---

विस्तरः । यस्मात्तेन सर्वफलप्रापिणा प्रतिपन्नकमार्गः पञ्चदशक्षणस्वभावः, भावनामार्गश्च षोडशक्षणो लब्धः । अष्टमकेन तु प्रतिपन्नकः मार्ग एव लब्ध इति । इतश्च *दर्शनभावनामार्गलाभात्* । यस्माच्च तेन दर्शनमार्गश्च स एव भावनामार्गश्च स एव लब्धः, अष्टमकेन तु दर्शनमार्ग एवेति । *सकलस्रोतोऽभिसमयाच्च मार्गान्वयज्ञाने* । यस्माच्चानेन सकलं स्रोतोऽभिसमितं मार्गान्वयज्ञानक्षान्तिक्षणस्यापि दर्शनान्न त्वष्टमकेन । तस्मादेभिः कारणैः *सर्वफलप्राप्येव स्रोतआपन्न इत्युच्यते नाष्टमकः* । प्रकर्षगतं हि तथा वचनम् । तद्यथा लोके यः प्रकर्षेण भासं करोति स भास्कर उच्यते, न खद्योतकः, तद्वत् । *तस्मादन्यानिति* । तस्मात् साम्प्रतिकाद्भवादन्यान् । *सप्तस्थानकौशलसप्तपर्णवदिति* । यथा सप्तकसामान्यात् सप्तस्थानकुशलो भिक्षुरुक्तः सूत्रे । कथम् ? विस्तरमुक्त्वाह—"कथं च भिक्षवो भिक्षुः सप्तस्थानकुशलो भवति ? रूपं यथाभूतं प्रजानाति, रूपसमुदयं रूपनिरोधं रूपनिरोधगामिनीं प्रतिपदं रूपस्यास्वादमादीनवं निःसरणं यथाभूतं प्रजानाति । एवं वेदनां संज्ञां संस्कारान् विज्ञानं यथाभूतं प्रजानाति । विज्ञानसमुदयं विस्तरेण यावन्निःसरणं यथाभूतं प्रजानाति" इति । एवमनेन न्यायेन पञ्चसप्तकानि पञ्चत्रिंशदिति पञ्चत्रिंशत् कुशलः प्राप्नोति । *सप्तपर्णवच्च* । यथा च पत्रिकायां सप्तपर्णसादृश्यादनेकशतपत्रोऽपि सन् स वृक्षः सप्तपर्ण इत्युच्यते, तद्वत् । प्रथमो दृष्टान्तः प्रवचने सिद्धः, द्वितीयो लोक इति दृष्टान्तद्वयोपन्यासे प्रयोजनम् ।

यदि सप्तकसामान्यात् सप्तकृत्वः परम इति व्याख्यायते, *यत् तर्हि सूत्र उक्तम्*, तद्विरुध्यत इत्यतोऽपव्याख्यानमेतदित्यभिप्रायः । *एकस्यां गतावष्टमं* भवं नाभिनिर्वर्तयतीत्यविरोधः । *यथारुतं वा कल्प्यमान* इति । सप्तकृत्वो देवांश्च मनुष्यांश्च संसृत्य संधाव्य दुःखस्यान्तं करोतीति देवमनुष्यवचनाद*न्तराभवोऽपि न स्यात्* । इष्यते च देवमनुष्यगत्योः सप्त-

एवमप्यूर्ध्वंस्रोतसो भवाग्रपरमस्यैकस्यां गतावष्टम उपपत्तिभवो न प्राप्नोति ? कामधात्वभिसन्धिवचनाददोषः ।

किमत्र ज्ञापकम्—सूत्रम्, युक्तिर्वा ? इह चैव किं ज्ञापकं प्रत्येकं देवमनुष्येषु सप्तकृत्वो न पुनरुभयेष्वेव सप्तकृत्व इति । एवं हि पठ्यते—"सप्तकृत्वो देवांश्च मनुष्यांश्च" इति ? प्रत्येकमपि तु काश्यपीयाः पठन्ति—"सप्तकृत्वो देवान् सप्तकृत्वो मनुष्यान्" इति । नात्राभिनिवेष्टव्यम् । यश्च मनुष्येषु स्रोतआपन्नो भवति स तानेवागम्य परिनिर्वाति, यो देवेषु स तानेव ।

---

भवाभिनिर्वर्तनम् । अन्तराभवास्तु न गण्यन्त इति । यदि अन्तराभवैः सह सप्तभवा गण्येरन्, जन्मचतुष्टयमेवास्य स्यात् । तदेवानेनानिष्टापत्तिवचनेन तदात्मीयं व्याख्यानमेकस्यां गताविति समर्थयति ।

इतर आह—*एवमप्यूर्ध्वंस्रोतस* इति विस्तरः । यद्येकस्यां गतावष्टमं भवं नाभिनिवर्तयतीति व्याख्यापयसि, कथं तर्हि ऊर्ध्वस्रोतसोऽष्टमभवाभिनिर्वृत्तिरेकस्यां गतौ भवति, *भवाग्रपरमस्येति* विशेषणं किमर्थम् ? अकनिष्ठपरमस्यापि अष्टमभवाभिनिर्वृत्तिः सम्भवति । "स प्लुतोऽर्धप्लुतः सर्वच्युतश्चान्यो भवाग्रगः" (अभि० ६.३८) इति वचनात् । स चापि वक्तव्यः, भवप्रकर्षविवक्षायां तु भवाग्रपरमग्रहणमित्यभिप्रायं लक्षयामः । *कामधात्वभिसन्धिवचनादिति* । कामधातौ चैका गतिर्मनुष्यगतिः, देवगतिर्वा । तस्यामष्टमभवं नाभिनिवर्तयति, न तु रूपारूप्यधात्वोरिति । *किमत्र ज्ञापकम्, सूत्रं युक्तिर्वा* । कामधातुमधिकृत्येदमुक्तमिति । सूत्रमागमः, युक्तिरत्रानुमानम् । येन चोदकेनैवं चोदितम्—किमत्र ज्ञापकं सूत्रं युक्तिर्वेति, स एव पुनराह—*इह चैव किं ज्ञापकं प्रत्येकं देवमनुष्येष्विति* विस्तरः । प्रत्येकं देवमनुष्येषु *सप्तकृत्वः* संसृत्येति । न *पुनरुभयेष्वेव देवमनुष्येषु सप्तकृत्व* इति । तदुक्तं भवति—यो मनुष्येषु दृष्टसत्यः, स देवेषु त्रिष्कृत्वः संसृत्य मनुष्येषु च त्रिष्कृत्व एव ततो देवानागम्य परिनिर्वातीति । यो वा देवेषु दृष्टसत्यः, स तथैव । स मनुष्येषु त्रिष्कृत्वो देवेषु च त्रिष्कृत्व एव संसृत्य ततो मनुष्यानागम्य परिनिर्वातीति । *एवं हि पठ्यते—सप्तकृत्वो देवांश्च देवमनुष्यांश्चेति* । सामान्यरूपेण हि पठ्यते । न प्रत्येकमिति विशिष्य पठ्यत इत्यर्थः । एवं *वैभाषिकपक्षे* संशयावस्थे कृते *आचार्यः* समर्थयन्नाह—*प्रत्येकमपि तु काश्यपीया* इति विस्तरः । काश्यपीया निकायान्तरीयाः । त एवं पठन्ति—*सप्तकृत्वो देवान् सप्तकृत्वो मनुष्यानिति* । एवं प्रत्येकमर्थो लभ्यते । तदनेनोभयमपि परिहृतं भवति—'यदुक्तम् किमत्र ज्ञापकं सूत्रं युक्तिर्वा

किं पुनः कारणमष्टमं भवं नाभिनिर्वर्तयति ? तावता कालेनावश्यं सन्तति-परिपाकात्। मार्गो हि स तज्जातीयः; सप्तपदाशीविषदष्टवत्, चातुर्थक-ज्वरवच्च। सप्तसंयोजनावशेषत्वाच्च। द्वे अवरभागीये, पञ्च चोर्ध्वभागीया-नीति।

अन्तरेणाप्यार्यमार्गं सम्मुखीकुर्वाणो न परिनिर्वाति; तावद् भववेदनीयस्य कर्मणो बलाधानात्। असति बुद्धोत्पादग्रहस्थ एवार्हत्त्वं प्राप्नोति। अगारं तु पुनर्नाध्यावसति। धर्मता-प्रतिलम्भिकं तु भिक्षुलिङ्गं प्रतिलभते। अन्याश्रमिकं लिङ्गेनेत्यपरे।

---

कामधातुमधिकृत्येदमुक्तम्' इति, 'यच्चोक्तम् इव चैव किं ज्ञापकम्— प्रत्येकं देवमनुष्येषु सप्तकृत्वः' इति। प्रत्येकमर्थपरिग्रहेणैव हि कामधात्वभिसन्धिरपि सूचितो भवति। न हि रूपारूप्यधात्वोः सप्तकृत्वो देवमनुष्येषु संसरणं युज्यते; तत्रोपपन्नानामनागामिनां मनुष्यानागमनात्। युक्तिरप्यत एव गम्यते। यत्रैव सप्तकृत्वो भवपरम उक्तः, तत्रैव भूमावष्टमभवप्रतिषेध उपपद्यते, नान्यत्रेति। *नात्राभिनिवेष्टव्यमिति*। इह चैव किं ज्ञापकमिति।

*तज्जातीय* इति। तत्प्रकारः। येन *तावता कालेनावश्यं सन्ततिपरिपाकान्नाष्टमं भवमभिनिर्वर्तयति*। *सप्तपदाशीविषदष्टवत्*। सप्तपदाशीविषेण तेन दष्टो यथा सप्तपदानि गत्वा म्रियते, न परेण, नार्वाक्। विषजातिः सा तादृशी। *चातुर्थकज्वरवच्च*। यथा चातुर्थको ज्वरश्चतुर्थ एवाह्नि भवति, न परेण, नार्वाक्। रोगजातिः सा तादृशी। तद्वत्। *द्वे अवरभागीये* इति। कामच्छन्द-व्यापादौ। कामावीतरागत्वादेतौ भवतः। *पञ्चोर्ध्वभागीयानी*ति। "द्वौ रागौ रूप्यरूपिजौ, औद्धत्यमानमोहाश्च" (अभि० को० ५.४५) इति यतोऽर्वाक् निर्वाणं च न प्राप्नोति। न चाष्टमं भवमभिनिर्वर्तयतीति।

*सप्तसंयोजनावशेषत्वादिति*। अहेतुरेष इत्याचार्य*सङ्घभद्रः*। न ह्यूर्ध्वभागी-यानि कामधातौ जन्माभिनिर्वर्तयितुं समर्थान्यूर्ध्वभूमिकत्वादिति। एतद्धेतुवादिनः पुनराहुः—यद्यपि तान्यूर्ध्वभूमिकानि, तत्प्राप्तिसामर्थ्यात् तु तावतां भवानामभि-निर्वृत्तिर्भवति। न हि तानि ऊर्ध्वमपि विपाकहेतुत्वेन व्यवस्थाप्यन्ते; अव्याकृतत्वादिति।

*अन्तरेणे*ति। अन्तरावागित्यर्थः। *धर्मताप्रतिलम्भिकमिति*। अशैक्षमार्ग-सामर्थ्यप्रतिलम्भिकमित्यर्थः। स हि तस्य स्वभावो यद् *भिक्षुलिङ्गेन याजयतीति*।

कस्मादविनिपातधर्मा[1] भवति ? तद्गामिकर्मानुपचयादुपचितविपाकदानवैगुण्याच्च सन्ततेर्बलवत्कुशलमूलाधिवासनात्,[2] प्रयोगाशयशुद्धितः। अपायनिपाते तु कर्मण्यसौ क्षान्तिमपि नोत्पादयेत्। आह चात्र—

"कृत्वा बुधोऽल्पमपि पापमधः प्रयाति,
कृत्वा बुधो महदपि प्रजहात्यनर्थम्।
मज्जत्यघोऽल्पमपि वारिणि संहतं हि,
पात्रीकृतं महदपि प्लवते तदेव" ॥ (　　) इति।

---

*अविनिपातधर्मेति*। सूत्रे पठ्यते—"स्रोतआपन्नो भवत्यविनिपातकधर्मा नियतं सम्बोधिपरायणः सप्तकृत्वःपरमः सप्तकृत्वो देवांश्च मनुष्यांश्च सन्धाव्य संसृत्य दुःखस्यान्तं करोति" इति। कस्मादेवं भवति ? इत्याह—*तद्गामिकर्मानुपचयादिति*। विनिपातः = अपायो नरकादिः, तं गच्छतीति तद्गामि, तद्गाम्येव तद्गामिकम्। किम् ? कर्म। तस्यानागतस्यानुपचयादार्यावस्थायाम्। *उपचितविपाकदानवैगुण्याच्च सन्ततेः*। पृथग्जनावस्थायामुपचितस्यानियतवेदनीयस्य तद्गामिकस्य कर्मणो विपाकदानवैगुण्यात् सन्ततेः। अविनिपातधर्मा भवतीत्युच्यते। ईदृशी तस्य स्कन्धसन्ततिः परावृत्ता, यदसौ तद्गामिकस्य कर्मण उपचितस्य विपाकदानवैगुण्येनावस्थितेति। कस्मात् पुनः सा स्कन्धसन्ततिरुपचिततद्गामिककर्मविपाकदानवैगुण्येनावस्थितेति ? तत उच्यते—*बलवत्कुशलमूलाधिवासनादिति*। यस्मादसौ स्कन्धसन्ततिर्बलवद्भिः कुशलमूलैरधिवासिता परिभाविता। कथं च पुनर्बलवत्कुशलमूलाधिवासिता ? *प्रयोगाशयशुद्धितः*। प्रयोगशुद्धितः, आशयशुद्धितश्च। तत्र प्रयोगशुद्धिरार्यकान्तानि शीलानि। आश्रयशुद्धिर्बुद्धादिष्ववेत्यप्रसाद इति। *क्षान्तिमपि नोत्पादयेदिति*। क्षमणमपि नोत्पादयेत्, चित्तमपि नोत्पादयेत्। प्रागेव प्रयोगमित्यभिप्रायः। अथ वा—अपायनियते तु कर्मणि सत्यसौ पुद्गलः क्षान्तिमपि निर्वेधभागीयलक्षणां नोत्पादयति, किमङ्गानास्रवं मार्गमिति।

यथा बलवत्कुशलमूलाधिवासिता उपचिताकुशलविपाकदानविगुणा भवति, तच्छ्लोकेनोपदर्शयति—*कृत्वा बुधोऽल्पमपीति*। सर्वम्। *अबुधोऽल्पमपि पापं* कृत्वा *अधः प्रयाति* अपायम्। बुधः पुनः *महदपि पापं कृत्वा प्रजहात्यनर्थम्* अपायम्।

तदर्थद्वयं यथाक्रमं दृष्टान्तद्वयेन साधयति—*लोहमल्पमपि* संहतं पिण्ड-

---

१. °निपातकधर्मा—का०।　　२. °कुशलाधि०—का०।

दुःखस्यान्तं करोतीति। को दुःखस्यान्तः ? यस्मात् परेण दुखं नास्ति। अप्रतिसन्धिकं दुःखं करोतीत्यर्थः।

अथवा—निर्वाणमन्तः। कथं निर्वाणं करोति ? तत्प्राप्ति विबन्धापनयनात्। यथाकाशं कुरु मण्डपं पातयेति भवन्ति वक्तारः। अन्योऽपि वा[1] स्यात् सप्तकृत्वः परमो न तु नियत इति नोच्यते।

एवं तावदक्षीणभावनाहेयः फलस्थः सप्तकृत्वः परमो भवति।

**त्रिचतुर्विधमुक्तस्तु द्वित्रिजन्मा कुलंकुलः॥ ३४॥**

स एव स्रोतआपन्नस्त्रिभिः कारणैः कुलंकुलो भवति—

१. क्लेशप्रहाणतः, त्रिचतुःप्रकारप्रहीणत्वात्।

२. इन्द्रियतः, तत्प्रतिपक्षानास्रवेन्द्रियलाभात्।

३. जन्मतः, द्वित्रिजन्मावशेषत्वात्।

---

रूपावस्थितम् *उदके मज्जति*। असंस्कृतत्वात्। *तदेव* पुनर्लोहं *पात्रीकृतं* सत् महज्जातमुदके *प्लवते* तरति; तदभिसंस्कारगुणात्। एवमबुधो गुणैरपात्रीकृतत्वान्मज्जति, न तु बुधः; गुणैः पात्रीकृतत्वादिति।

*यस्मात् परेण दुःखं नास्तीति*। यस्माद् दुःखात् परेण दुःखं नास्ति भवान्तरसंगृहीतम्, स दुःखस्यान्तो दुःखावसानमित्यर्थः। अन्यथा हि मरणकाले दुःखस्यान्तो भवति। सप्रतिसन्धिकं तु तद् दुःखम्। अत आह—*अप्रतिसन्धिकं दुःखं करोतीत्यर्थ* इति। *कथं निर्वाणं करोतीति*। नित्यत्वात् करणं न युज्यत इत्यभिप्रायः। *तत्प्राप्तिविबन्धापनयनादिति*। निर्वाणप्राप्तिविबन्धापनयनात्। तत्प्राप्तेर्विबन्धः क्लेशप्राप्तिरुपधिर्वा, तदपनयनान्निर्वाणं करोति। तद्यथा—आकाशं मण्डपावस्थाने न लभ्यते, सति तस्य विबन्धे, तदपनयनान्नित्यमप्याकाशं करोतीत्युच्यते। तेनाह—*यथाकाशं कुरु मण्डपं पातयेति भवन्ति वक्तार* इति। *अन्योऽपि वेति*। पृथग्जनः परिपक्वसन्तानः। *न तु नियत* इति। कदाचिदिहैव परिनिर्वायात् अन्तराभावेषु चेत्यतो नोच्यते।

*द्वित्रिजन्मेति*। द्वे वा त्रीणि वा जन्मान्यस्येति द्वित्रिजन्मा। केचिदेवं पठन्ति—*द्वित्रजन्मेति* द्वे वा त्रीणि वा द्वित्राणि। "संख्ययाव्ययासन्नादूराधिक-

---

१. च—का०।

श्लोके तु द्वयोर्ग्रहणम्, स्रोतआपन्नस्य पश्चात् प्रहीणे सति तत्प्रतिपक्षानास्रवेन्द्रियस्यानुक्तसिद्धत्वात्। जन्म तु कदाचिदल्पीयः स्यात्; परेण भव्यत्वा द्। अतोऽस्य ग्रहणम्।

कस्मान्न पञ्चप्रकारप्रहणात्? तत्प्रहाणे षष्ठस्यावश्यं प्रहाणात। नहि तस्यैकः प्रकारः फलं विघ्नयितुं समर्थः; एकवीचिकस्येव धात्वनतिक्रमात्।

---

संख्याः संख्येये" (पा० सू० २. २.२५) इति समासः। "बहुव्रीहौ संख्येये डच्" (पा० सू० ५.४.७३) इति समासान्तः। द्वित्राणि जन्मान्यस्येति द्वित्रजन्मेति।

श्लोके तु द्वयोर्ग्रहणमिति। क्लेशप्रहाणजन्मनोः। कस्मात्? इत्याह—*स्रोतआपन्नस्या*नुपूर्वीकस्य दर्शनप्रहातव्येषु प्रहीणेषु। भावनाप्रहातव्यानां क्लेशानामेकस्य प्रकारस्य यावच्चतुर्णां *पश्चात्प्रहाणे सति तत्प्रतिपक्षस्यै*कद्वित्र्यादिक्लेशप्रकारप्रतिपक्षस्या*नास्रवस्ये*न्द्रियस्य लाभस्तस्यानुक्त*सिद्धत्वात्*, श्लोकेन तस्याग्रहणम्। न हि विना प्रतिपक्षेण क्लेशप्रकार प्रहाणमस्ति। लौकिकेनापि हि मार्गेण तस्यार्यस्य क्लेशप्रकारप्रहाणेऽनास्रवस्य तत्प्रतिपक्षस्येन्द्रियस्य लाभो भवति। *जन्म तु कदाचिदल्पीयः स्यात्*। यदीहैव परिनिर्वायात् अन्तराभावे उपपद्य वा। किं कारणम्? *परेण भव्यत्वात्*। स्रोतआपत्तिफलात् परेण सकृदागामित्वस्य यावदर्हत्त्वस्य भव्यत्वात्। *अतोऽस्य जन्मनो ग्रहणम्*।

"*द्वित्रिजन्मा कुलंकुलः*" इति नियमार्थमिदमिह विचार्यते—य एकद्विविधमुक्तः स किं भवति? कुलंकुल इत्येके।

त्रिचतुर्विधमुक्त-ग्रहणं तु उदाहरणार्थम्। परिमाणार्थं वा—नातः परेणेति। एकद्विविधमुक्तः पञ्चषट्जन्मेत्यपरे। त्रिचतुर्विधमुक्त इति विशेषपरिग्रहात्। नैतद् व्याख्यानकारैर्विचारितमिति विचार्यमेतत्।

*कस्मान्न पञ्चप्रकारप्रहाणात्*। किम्? कुलंकुलो भवतीत्यधिकारः। *तत्प्रहाण* इति विस्तरः। पञ्चप्रकारप्रहाणे षष्ठस्या*पि प्रकारस्यावश्यं प्रहाणात्*। कस्मात्? इत्याह—*न हि तस्यैकः प्रकारः* षष्ठः फलं सकृदागामिफलं *विघ्नयितुं समर्थ* इति। *एकवीचिकस्येवे*ति। विपरीतदृष्टान्त एषः। यथैकवीचिकस्यैकः प्रकारो नवमोऽनागामिफलं विघ्नयितुं समर्थः, नैवमस्य स्रोतआपन्नस्य षष्ठः प्रकारः सकृदागामिफलं विघ्नयितुं समर्थ इति। कस्मात्? इत्याह—*धात्वनतिक्रमादि*ति। एकवीचिको हि कामधातुमतिक्रामति। अतोऽस्यैकोऽपि प्रकारो नवमः फलं

---

१. संश्रित्य—का०।

स एव कुलंकुलो द्विविधः—१. देवकुलंकुलः, यो देवेषु द्वे त्रीणि वा कुलानि संसृत्य परिनिर्वाति तत्र वाऽन्यत्र वा देवनिकाये। २. मनुष्यकुलंकुलः, यो मनुष्येषु तत्र वाऽन्यत्र वा द्वीपे परिनिर्वाति ॥ ३४ ॥

स एव पुनः फलस्थः—

आपञ्चमप्रकारघ्नो

यस्य फलस्थस्यैकप्रकारो यावत्पञ्चमः प्रहीणो भवति, असौ द्वितीयफलप्रतिपन्नको वेदितव्यः।

क्षीणषष्ठप्रकारस्तु स..दागाम्यसौ पुनः ॥ ३५ ॥

द्वितीयफलप्राप्तो भवति। देवान् गत्वा सकृन्मनुष्यलोकागमनात् सकृदागामी; परेण जन्माभावात्। रागद्वेषमोहानां च तनुत्वादित्युच्यते; मृदुप्रकारावशेषत्वात् ॥ ३५ ॥

स एव पुनः फलस्थः—

।षांश एकजन्मैकवीचिकः।

त्रिभिः कारणैः स एव सकृदागाम्येकवीचिको वेदितव्य; सप्ताष्टप्रकारप्रहाणात्, तत्प्रतिपक्षानास्रवेन्द्रियलाभात्, एकजन्मावशेषत्वात्।

---

विघ्नयितुं समर्थः; धात्वतिक्रमस्य दुष्करत्वात्। सकृदागामी तु धातुं नातिक्रामतीति न तस्यैकः क्लेशः प्रकारः षष्ठः फलं विघ्नयितुं समर्थ इति।

*तत्र वान्यत्र वा देवनिकाय* इति। तद्यथा—त्रायस्त्रिंशेषु सत्यानि दृष्ट्वा द्वे *त्रीणि वा कुलानि संसृत्य*। तत्रैव त्रायस्त्रिंशेषु *परिनिर्वाति*। अन्यत्र वा चातुर्महाराजकायिकेषु यामेषु वा परिनिर्वाति। एवमन्यत्रापि योज्यम् ॥ ३४ ॥

*रागद्वेषमोहानां तनुत्वादित्युच्यत* इति। सूत्रे। कथम्? 'त्रयाणां संयोजनानां प्रहाणात् रागद्वेषमोहानां च तनुत्वात् सकृदागामी भवति" इति। *मृदुप्रकारावशेषत्वादि*ति। मृद्वधिमात्रो मृदुमध्यो मृदुमृदुरित्येतन्मात्रावशेषत्वात् ॥ ३५ ॥

"*क्षीणसप्ताष्टदोषांश*:" इति। दोषांशो दोषावयवः सप्ताष्टप्रकारलक्षणः। इन्द्रियत इति चात्र तृतीयं कारणं न सूत्रितं तथैव व्याख्येयम्। कथमस्येति

कथमस्यैकः प्रकारः फलं विघ्नयितुं शक्नोति ? धात्वतिक्रमात् ।

'अवस्थात्रये हि कर्माणि विघ्नायोपतिष्ठन्ते" इत्युक्तं प्राक् । यथा कर्माणि, एवं क्लेशा अपि वेदितव्या इति । विपाकनिःष्यन्दफलभूम्यतिक्रमात् । वीचिर्निर्मान्तरम्, तस्य वैकजन्मव्यवहितत्वात्[1], निर्वाणस्य एकक्लेशप्रकारव्यवहितत्वाद्वा अनागामिफलस्य । एको वीचिरस्येत्येकवीचिकः । तृतीयफलप्रतिपन्नकश्चैकवीचिको[2] वेदितव्यः प्रहीणसप्ताष्टप्रकारः । पूर्वप्रहीणप्रकारस्तु फलप्राप्तौ न तावत् कुलंकुलो भवत्येकवीचिको वा यावत्फलविशिष्टो मार्गो न सम्मुखीकृतः ।

**सोऽनागामी नवक्षयात् ।। ३६ ।।**

स एव पुनः फलस्थो नवप्रकारप्रहाणादनागामी उपदिष्टः; कामधात्वनागमनात् । "पञ्चानामवरभागीयानां संयोजनानां प्रहाणात्"इत्युच्यते; प्रहाणसंकलनात्[2] । अवश्यं द्वे त्रीणि वा पूर्वं प्रहीणानि भवन्ति ।। ३६ ।।

---

विस्तरः । कथमस्यैकवीचिकस्यैकप्रकारो नवमः फलं विघ्नयितुं समर्थः, न हि कुलंकुलस्यैकः प्रकारः फलं विघ्नयितुं समर्थ इति ? उच्यते; *धात्वतिक्रमात्* । यस्मादसौ नवमे प्रकारे प्रहीणे कामधातुसमतिक्रान्तो भवति, न पुनस्तत्रोपपद्यते ।

स च नवमः प्रकारः कर्मणा सह तत्रोपपद्यवेदनीय इत्यतस्त*द्विपाकनिष्यन्दफलभूम्यतिक्रमात्* । फलं विघ्नयितुं समर्थो भवति ।

*अवस्थात्रये हि कर्माणि विघ्नायोपतिष्ठन्त इत्युक्तं प्राक्* ।

"क्षान्त्यनागामिताऽर्हत्त्वप्राप्तौ कर्मातिविघ्नकृद्" (अभि० को० ४,१०७)

इति । इह तु क्लेशेषु योजयितव्यम् । अत एवाह—*यथा कर्माणि एवं क्लेशा इत्यादि* । *तस्य वैकजन्मव्यवहितत्वादिति* । तस्य क्षीणसप्ताष्टप्रकारस्य सकृदागामिनः । एकेन जन्मना वाव्यवहितत्वा*न्निर्वाणस्य एकेन वा क्लेशप्रकारेण व्यवहितमस्यानागामिफलमित्येकवीचिकः* । *न तावत्कुलंकुलो भवत्येकवीचिको वेति* । लौकिकेन मार्गेण पूर्वं *त्रिचतुर्विधमुक्तोऽपि* न तावत् कुलंकुलो भवति । *क्षीणसप्ताष्टप्रकारोऽपि* न तावदेकवीचिको भवति । तत्प्रतिपक्षानास्रवेन्द्रियलाभस्याभावात् । अत एवाह—*यावत्फलविशिष्टो मार्गो न सम्मुखीकृत* इति । फलविशिष्टे तु तत्प्रतिपक्षे तदूर्ध्वप्रकारप्रतिपक्षे वा सम्मुखीकृते तदानास्रवेन्द्रियलाभात् । कुलंकुलो भवति, एकवीचिको वेत्यर्थादुक्तं भवति ।

---

१. वैक०—का० ।　　　　२. ०संकुलनात्—का० ।

**सोऽन्तरोत्पन्नसंस्कारासंस्कारपरिनिर्वृतिः ।**
**ऊर्ध्वस्रोताश्च,**

अन्तरा परिनिर्वृतिरस्येत्यन्तरापरिनिर्वृतिः । एवमुत्पन्नेऽस्य संस्कारेणासंस्कारेणेति योज्यम् । स एवानागामी पुनः पञ्चधा भवति—

१. अन्तरापरिनिर्वायी, योऽन्तराभवे परिनिर्वाति ।

२. उपपद्यपरिनिर्वायी, य उपपन्नमात्रो न चिरात् परिनिर्वात्यभियुक्त-

---

*पञ्चानामिति* विस्तरः । *पञ्चानामवरभागीयानां संयोजनानां प्रहाणादनागामीत्युच्यते सूत्रे । प्रहाणसङ्कलनात् ।* सत्कायदृष्ट्यादीनां प्रहाणैकत्वव्यवस्थापनात् । *द्वे त्रीणि वा पूर्वं प्रहीणानीति* । यदि तावत् कामवीतरागो नियाममवक्रामति, द्वे पूर्वं प्रहीणे लौकिकेन मार्गेण—कामच्छन्दः, व्यापादश्च । सत्कायदृष्ट्यादीनामपर्यादाय प्रहाणात् । अथानुपूर्विकः, त्रीणि पूर्वं प्रहीणानि । केन ? दर्शनमार्गेण । सत्कायदृष्टिः, शीलव्रतपरामर्शः, विचिकित्सा च । तस्मात् साकल्येन पञ्चानां प्रहाणादित्युच्यते ॥ ३६ ॥

*"सोऽन्तरोत्पन्नसंस्कारासंस्कारपरिनिर्वृत्तिः"* इति । सोऽनागामी अन्तरा उत्पन्ने संस्कारेणासंस्कारेण परिनिर्वृतिरस्येति अन्तरोत्पन्नसंस्कारासंस्कारपरिनिर्वृतिः । यत्तूक्तम्—*एवमुत्पन्नस्येति*, तन्न बुध्यामहे । कथमुत्पन्नस्यानागामिनः परिनिर्वृतिरस्येति बहुव्रीहिः समासो भवति; अन्यपदार्थे हि बहुव्रीहिरुच्यते, न स्वपदार्थे ? तेनैवमिह पाठं पश्यामः—*एवमुत्पन्नेऽस्येति* । लेखकेनैकारोऽत्र विनाशित इति । तथापाठे ह्ययमर्थः सम्भवति—उत्पन्ने जन्मनि परिनिर्वृतिरस्येति उत्पन्नपरिनिर्वृतिः । अथैवमेव पाठः स्यात्, एवं व्याख्यायेत—अनादरे षष्ठी, तथैवं समासः क्रियेत—उत्पन्नस्य जन्मनः परिनिर्वृतिरस्यानागामिन इत्युत्पन्नपरिनिर्वृतिरनागामीति । अथ वा—उत्पन्नस्येत्युत्पन्नजातिरुच्यते । उत्पन्नानामिति योऽर्थ उत्पन्नस्येति । तेनोत्पन्नानां या परिनिर्वृतिः सा अस्येत्युत्पन्नपरिनिर्वृतिः । अथ परिनिर्वृत्त्यर्थादेव केवलादनागाम्यर्थस्यान्यत्वात् । पूर्वपदार्थानन्यत्वेऽप्यनागामिसमानाधिकरणस्योत्पन्नशब्दस्य परिनिर्वृतिशब्देन सह बहुव्रीहिः समास इतीच्छेयुः, सुभणितमेतत् स्यात् । *स एवानागामी पुनः पञ्चधा भवतीति* । अन्तरापरिनिर्वायी, उपपद्यपरिनिर्वायी, साभिसंस्कारपरिनिर्वायी, अनभिसंस्कारपरिनिर्वायी, ऊर्ध्वस्रोताश्चेति निगमयति ।

*अभियुक्तवाहिमार्गत्वादिति* । अभियुक्तो वीर्यवानारब्धवीर्य इत्यर्थः । वाही

वाहिमार्गत्वात्। सोपधिशेषनिर्वाणेन। सोऽपि निरुपधिशेषनिर्वाणेनेत्यपरे[1]। न, आयुरुत्सर्गावशित्वात्।

३. साभिसंस्कारपरिनिर्वायी किल उपपद्याप्रतिप्रस्रब्धप्रयोगः साभिसंस्कारं परिनिर्वाति; अभियुक्तावाहिमार्गत्वात्।

४. अनभिसंस्कारपरिनिर्वायी त्वनभिसंस्कारेण; अभियोगवाहिमार्गाभावात्।

---

मार्गो अस्येति वाहिमार्गः। कथं मार्गो वाही? विनाभिसंस्कारेण सम्मुखीभावात्। अभियुक्तश्चासौ वाहिमार्गश्चाभियुक्तवाहिमार्गः, तद्भावः, तस्मात्। *उत्पन्नमात्रो न चिरात् परिनिर्वाति। सोपधिशेषेण निर्वाणेनेति*। निर्वाणद्वैविध्याद् विशिनष्टि—सोपधिशेषनिर्वाणेन परिनिर्वाति। सर्वास्रवक्षयं करतीत्यर्थः।

*सोऽपि निरुपधिशेषनिर्वाणेनेति*। न केवलमन्तरापरिनिर्वायी निरुपधिशेषपरिनिर्वाणेन परिनिर्वात्यर्हत्त्वं प्राप्यायुरपरिसमाप्य, उपपद्यपरिनिर्वाय्यपि तत्सदृश *इत्यपरे*। *न*। *आयुरुत्सर्गावशित्वात्*। नैतदेवम्, सोऽपि निरुपधिशेषपरिनिर्वाणेनेति। कस्मात्? आयुरुत्सर्गावशित्वात्। आयुष उत्सर्गे तस्यावशित्वात्। कस्मात् पुनरस्यात्रावशित्वम्? यत्प्रान्तकोटिकचतुर्थध्यानलाभिन आयुरुत्सर्गवशित्वम्, तच्च प्रान्तकोटिकं ध्यानं मनुष्येष्वेव त्रिषु द्वीपेषूत्पाद्यते। स च रूपधातूपपन्न इति। किमन्तरापरिनिर्वायिणोऽस्त्यायुरुत्सर्गवशित्वम्? यत एवमसौ निरुपधिशेषपरिनिर्वाणेन परिनिर्वाति, तस्यापि वशित्वं नास्ति। अन्तराभवावस्थानाय तु तादृशं कर्म नास्ति, यादृशमुपपद्यपरिनिर्वायिण इति अतोऽन्तरापरिनिर्वायी शीघ्रं परिनिर्वाति। उपपद्यपरिनिर्वायी तु यावदायुः स्थित्वा परिनिर्वातीत्युपपद्यपरिनिर्वाय्येव सोपधिशेषनिर्वाणेन परिनिर्वातीत्युच्यते।

*साभिसंस्कारपरिर्वायी किलेति*। किलशब्दो *वैभाषिकमतद्योतकः*। स्वमतं हि सूत्रानुसारेण पश्चाद् वक्ष्यते। *अप्रतिप्रस्रब्धप्रयोग* इति। पूर्वप्रयोगवेगेनानिराकृतप्रयोग इत्यर्थः। *साभिसंस्कारम्* सप्रयत्नम्। *अभियुक्तावाहिमार्गत्वादिति*। अभियुक्तत्वात्, अवाहिमार्गत्वाच्च तस्य योगिनः। अत एवासौ साभिसंस्कारपरिनिर्वायी सिध्यति।

*अनभिसंस्कारेणेति*। पूर्वविपर्ययेण। प्रयोगस्य प्रतिप्रस्रब्धत्वात्। *अभियोगवाहिमार्गाभावादिति*। अभियोगस्य वीर्यस्याभावात्, वाहिमार्गस्य

---

१. निरुपधिशेषेणेत्य०—का०।

अभि० को० ३ : १३

संस्कृतासंस्कृतालम्बनमार्गनिर्वाणादित्यपरे । तत्तु न; अतिप्रसङ्गात् ।

सूत्रे त्वनभिसंस्कारपरिनिर्वायी पूर्वं पठ्यते । तथैव[1] युज्यते; वाह्यवाहिमार्गयोरनभिसंस्काराभिसंस्कारसाध्यत्वादयत्नयत्नप्राप्तितः । उपपद्यपरिनिर्वायिणस्तु वाहितरोऽधिमात्रतरश्च मार्गः, मृदुतराश्चानुशया इति ।

---

चाभावादित्यर्थः । तदेवमभियोगादिनानात्वात् परिनिर्वाणविशेष उक्तो भवति । उपपद्यपरिनिर्वायिणो ह्युभयमस्ति—अभियोगश्च, वाही च मार्ग इति । साभिसंस्कारपरिनिर्वायिणोऽभियोगोऽस्ति, न त्वस्य वाही मार्गः । अनभिसंस्कारपरिनिर्वायिणस्तूभयमपि नास्ति—नाभियोगः, न च वाही मार्ग इति ।

*संस्कृतासंस्कृतालम्बनमार्गपरिनिर्वाणादिति* । संस्कृतं संस्कार इत्येकोऽर्थः । एवमसंस्कृतम् असंस्कार इति । संस्कारालम्बनेन मार्गेण दुःखसमुदयमार्गालम्बनेन मार्गेण यः क्लेशान् प्रजहाति, स साभिसंस्कारपरिनिर्वायी । योऽसंस्कारालम्बनेन निरोधालम्बनेन, सोऽनभिसंस्कारपरिनिर्वायीति ।

*तत्तु न; अतिप्रसङ्गादिति* । तत्तु नैवम् । कस्मात्? अतिप्रसङ्गात् । अन्तरोपपद्यपरिनिर्वायिणोरपि संस्कृतासंस्कृतालम्बनमार्गपरिनिर्वाणात् प्रत्येकं साभिसंस्काराभिसंस्कारपरिनिर्वायित्वप्रसङ्गः । तत्रस्थौ द्वावेव पुद्गलौ स्याताम्, न पञ्चेति ।

*अनभिसंस्कारपरिनिर्वायी पूर्वं पठ्यत* इति । साभिसंस्कारपरिनिर्वायिणः पूर्वमयं पठ्यते—अनभिसंस्कारपरिनिर्वायी, साभिसंस्कारपरिनिर्वायीति । *तथैव युज्यत* इति विस्तरः । अनभिसंस्कार-साभिसंस्कारपरिनिर्वायिणोर्यथाक्रमम् । *वाह्यवाहिमार्गयोः* पुद्गलयोः परिनिर्वाणस्या*नभिसंस्कारसाध्यत्वात्* पूर्वस्य, *अभिसंस्कारसाध्यत्वाच्चे*तरस्य । कथं तथा साध्यत्वम्? इत्याह—*अयत्नयत्नप्राप्तित*स्तत्परिनिर्वाणस्य यथाक्रममित्येव ।

अथ वाह्यवाहिमार्गयोरिति मार्गयोरेव ग्रहणम्, न पुद्गलयोरभिसम्बन्धः? वाहिनो मार्गस्यानभिसंस्कारसाध्यत्वादवाहिनश्चाभिसंस्कारसाध्यत्वात्, अयत्नयत्नप्राप्तितः, अयत्नसम्मुखीभावतः पूर्वमार्गस्य, यत्नप्राप्तित इतरस्येति तदेवमनभिसंस्कारपरिनिर्वायी पूर्वं युज्यते । आह—यद्यनभिसंस्कारपरिनिर्वायिणो वाही मार्गः, अनभिसंस्कारसाध्यत्वादुपपद्यपरिनिर्वायिणोऽपि वाही मार्ग इति कस्तयोर्विशेष इति? अत उच्यते—*उपपद्यपरिनिर्वायिणस्तु मार्गो*

---

१. तथैव च—का० ।

५. ऊर्ध्वस्रोता यस्योर्ध्वं गतिर्न तत्रैव परिनिर्वाणं यत्रोपपन्नः। स्रोतो गतिरित्येकोऽर्थः।

**सध्याने व्यवकीर्णोऽकनिष्ठगः ।। ३७ ।।**

ऊर्ध्वस्रोता द्विविधः—हेतुतः, फलतश्च। हेतुतो व्यवकीर्णाव्यवकीर्णध्यानत्वात्। फलतोऽकनिष्ठभवाग्रपरमत्वात्। तत्र येन ध्यानं व्यवकीर्णं सोऽकनिष्ठान् गत्वा परिनिर्वाति ॥ ३७ ॥

**स प्लुतोऽर्धप्लुतः सर्वच्युतश्च,**

स पुनरेषोऽकनिष्ठपरम ऊर्ध्वस्रोतास्त्रिविधः, प्लुतादिभेदात्।

१. तत्र प्लुतो नाम य इह ध्यानानि व्यवकीर्य ध्यानत्रयात्[1] परिहीणः प्रथमं ध्यानमास्वाद्य ब्रह्मकायिकेषूपपन्नः पूर्वाभ्यासवशाच्चतुर्थं ध्यानं व्यवकीर्य तस्मात् प्रच्युतोऽकनिष्ठेषूपपद्यते। एष हि मध्यानिमज्जनात् प्लुतः।

---

*वाहितरो* जिततरः। नानभिसंस्कारपरिनिर्वायिणः। एव*मधिमात्रतरो* हेतूपचयतः। *मृदुतराश्चानुशयाः* मार्गाधिमात्रतरत्वेन क्षपितत्वात्।

ऊर्ध्व*स्रोता* इति। ऊर्ध्वस्रोतो गतिरस्येति ऊर्ध्वस्रोताः। यत्र ऊर्ध्वमिति पठ्यते—"ऊर्ध्वं दमाच्च देहाच्च" इति, ऊर्ध्वदमिकः ऊर्ध्वदेहिक इति। तत्प्रत्ययसन्नियोगेनोर्ध्वशब्दस्य मान्ततोऽपि निपात्यत इति वेदितव्यम्। यथा चिरशब्दस्य चिरन्तनमित्यूर्ध्वमिति निपातोऽस्तीत्यपरे। अकारान्तोऽपि तूर्ध्वशब्दोऽस्त्येवेति न वार्यते।

*व्यवकीर्णाव्यवकीर्णध्यानत्वा*दिति। मिश्रितामिश्रितध्यानत्वादित्यर्थः। अनास्रवेण सास्रवस्य ध्यानस्य मिश्रितत्वात् ॥ ३७ ॥

*इह ध्यानानि व्यवकीर्य ध्यानत्रयात् परिहीयत* इति। ध्यानव्यवकीर्णं चतुर्थध्यानव्यवकिरणपूर्वकम्। "आकीर्यते चतुर्थं प्राग्" (अभि० को० ६.४२) इति वचनात्। चतुर्थमेव हि ध्यानमादितो व्यवकिरणे समर्थम्, नान्यत्। चतुर्थाच्च ध्यानादपरिहीणस्य प्रथमादिषु ध्यानेषूपपत्तिर्नास्तीत्यत उच्यते—*ध्यानत्रयात् परिहीण* इति। कथं च परिहीणः? इत्याह—*प्रथमं ध्यानमास्वाद्ये*ति। *मध्यानिमज्जनात्*। मध्येऽनिमज्जनात्।

---

१. ध्यानचयात्—का०।

२. अर्धप्लुतो नाम यस्ततः शुद्धावासेषूपपद्य मध्यादेकमपि स्थानान्तरं विलङ्घ्याकनिष्ठान् प्रविशति । महाब्रह्मस्वार्यो नोपपद्यते; दृष्टिस्थानत्वाद्, एकनायकत्वाच्चेति[1] ।

३. सर्वच्युतो नाम यः सर्वाणि स्थानान्तराणि संचर्याकनिष्ठान् प्रविशति । न च कदाचिदनागामी । तत्रैवोत्पत्त्यायतने द्वितीयं जन्माभिनिर्वर्तयति, विशेषगामित्वात् । एवं चास्य परिपूर्णमनागामित्वं भवति । यत्रोपपन्नस्ततस्तत्र[2] चात्यन्तमनागमनात् ।

एवं तावद्ध्याने व्यवकीर्णेऽकनिष्ठगो वेदितव्यः । ततः—

अन्यो भवाग्रगः ।

अव्यवकीर्णध्यान ऊर्ध्वस्रोता भवाग्रनिष्ठो भवति । स हि समापत्त्यन्तराण्यास्वादयन् सर्वस्थानान्तरेषूपपद्याप्रविश्यैव शुद्धावासानारूप्यक्रमोत्पत्तितो भवाग्रं गत्वा परिनिर्वाति । शमथचरितो ह्येषः । पूर्वकस्तु विपश्यनाचरितः ।

---

*अर्धप्लुतो नामेति* विस्तरः । य *एकमपि स्थानान्तरं विलंघ्य शुद्धावासेषूपपद्याकनिष्ठान् प्रविशतीत्येवं* वाक्याभिसम्बन्धः । *दृष्टिस्थानत्वादिति* । महाब्रह्मणां प्रथमोपपन्नानां च महाब्रह्मणि निर्मायकायाभिमानतः । *एकनायकत्वाच्चेति* । किम् ? *महाब्रह्मस्त्वार्यो नोपपद्यते* । आर्यस्य हि प्रभाववतस्तत्रोत्पादे सत्युभयनायकत्वं स्यात् । निःसपत्नेन च कर्मणा तत्राधिपत्यम् । अतः सपत्नं न भवतीति ।

*सर्वाणि स्थानान्तराणीति* । ब्रह्मकायिकेभ्यश्च्युत्वा ब्रह्मपुरोहितादीनि सुदर्शनान्तानि चतुर्दशस्थानान्तराणि सञ्चर्याक*निष्ठान् प्रविशति* । *यत्रोपपन्नस्ततस्तत्र चात्यन्तमनागमनादिति* । यत्रोपपन्नस्तद्यथा—प्रथमध्याने, ततोऽत्यन्तमनागमनात् कामधातौ । तथा यत्रोपपन्नस्तत्र चात्यन्तमनागमनात् । तत्र च पुनः प्रथमे ध्यानेऽत्यन्तमनागमनात् । *परिपूर्णमनागामित्वम्, पुनस्तत्र द्वितीयजन्माकरणात्* ।

*शमथचरितो ह्येष* इति । य एष भवाग्रपरमः, स समाधिप्रियः । आरूप्येषु च समाधिरतिप्रशान्तः । तस्मादयमारूप्यान् प्रविशति । *पूर्वकस्तु विपश्यनाचरित* इति । योऽसावकनिष्ठपरम उक्तः, स प्रज्ञाप्रियः शुद्धावासान्

---

१. ०नामकत्वा०—का० । २. ०न्नस्तस्याधस्तत्र—का० ।

अन्तरा[1] परिनिर्वाणमूर्ध्वस्रोतसो युज्यमानं पश्यामः। अकनिष्ठभवाग्रपरमत्वं तु परेण गत्यभावाद्। यथा सप्तकृत्वःपरमत्वं स्रोतआपन्नस्येति।

इमे तावत् पञ्च रूपोपगा अनागामिनः।

**आरूप्यगश्चतुर्धाऽन्यः,**

अन्य आरूप्यगोऽनागामी, यो रूपवीतराग इतश्च्युत्वारूप्येषूपपद्यते। स पुनश्चतुर्विधः, उपपद्यादिपरिनिर्वायिभेदात्।

त एते षडनागामिनो भवन्ति।

ततः—

**इह निर्वायकोऽपरः ॥ ३८ ॥**

इहैव जन्मन्यपरः परिनिर्वाति। स दृष्टधर्मपरिनिर्वायी सप्तमः ॥ ३८ ॥

**पुनस्त्रींस्त्रिविधान् कृत्वा नव रूपोपगाः स्मृताः।**

पुनस्त्रयाणामनागामिनां त्रिधा भेदाद् रूपोपगा नवानागामिनो भवन्ति। कतमेषां त्रयाणाम्? अन्तरोपपद्यपरिनिर्वायिणोरूर्ध्वस्रोतसश्च।

---

प्रविशति। *अन्तरापरिनिर्वाणमिति* विस्तरः। नैतत् प्रति शास्त्रकारैर्निश्चितम्, न च प्रतिषिद्धम्, अतोऽप्रतिषेधादूर्ध्वस्रोतसोऽकनिष्ठपरमस्य भवाग्रपरमस्य चान्तरा अकनिष्ठं भवाग्रं च प्रविश्य परिनिर्वाणं *युज्यमानं पश्यामः*। सम्भवं तु पश्याम इत्यर्थः। ननु चाकनिष्ठपरमो भवाग्रपरम इति चोक्तम्? अत आह—*अकनिष्ठभवाग्रपरमत्वं तु परेण गत्यभावाद्*। अकनिष्ठेभ्यो भवाग्राच्चोर्ध्वं गत्यभावात्। *तद्यथा स्रोतआपन्नस्य सप्तकृत्वःपरमत्वम्*। न हि तस्य द्वौ त्रीन् वा भवानभिनिर्वर्त्य परिनिर्वाणं न सम्भवतीति। ततः परेण त्वष्टमं भवं नाभिनिर्वर्तयतीति सप्तकृत्वः परम उक्त इति।

*स पुनश्चतुर्विध* इति। अन्तरापरिनिर्वाय्यभावान्न पञ्चविधः। *एते षडनागामिनो भवन्तीति*। अन्तरापरिनिर्वायी, उपपद्यपरिनिर्वायी, साभिसंस्कारपरिनिर्वायी, अनभिसंस्कारपरिनिर्वायी, ऊर्ध्वस्रोतः, आरूप्यगश्च। षष्ठश्चतुर्थाभेदमविगणय्येति।

*दृष्टधर्मपरिनिर्वायी*। दृष्टजन्मपरिनिर्वायीत्यर्थः ॥ ३८ ॥

*कतमेषां*[2] *त्रयाणामिति* विस्तरः। त्रयोऽनागामिन इति निर्भिद्य नोक्ता

---

१. अन्तरापि तु—का०। २. कथमेषां—जा०।

कथं त्रिधा भेदात् ? अन्तरापरिनिर्वायिणस्तावदाश्वनाशुचिरपरिनिर्वाणात् दृष्टान्तत्रयेण। उपपद्यपरिनिर्वायिण उपपद्याभिसंस्कारानभिसंस्कारपरिनिर्वाणात्। सर्वे ह्येते उपपद्यपरिनिर्वाणादुपपद्यपरिनिर्वायिणः[1]। ऊर्ध्वस्रोतसः प्लुतादिभेदात्। सर्वेषां वा त्रयाणामाश्वनाशुचिरपरिनिर्वाणादिति त्रित्वम्।

---

इत्यनवबुध्यमान इतरः पृच्छति। *आचार्योऽपि* अर्थापत्त्या उक्ता एत इति पश्यन् विवृणोति—*अन्तरोपपद्यपरिनिर्वायिणोः*। अन्तरापरिनिर्वायिणः उपपद्यपरिनिर्वायिणश्चेत्यर्थः। *ऊर्ध्वस्रोतसश्च तृतीयस्येति*। *आश्वनाशुचिरपरिनिर्वाणात् दृष्टान्तत्रयेणेति*। आशुपरिनिर्वायी अनाशुपरिनिर्वायी, चिरपरिनिर्वायी च दृष्टान्तत्रयेण योजयितव्याः। तद्यथा परीत्तः शकलिकाग्निरभिनिर्वर्तमान एव निर्वायात्, एवं प्रथमो य आशुपरिनिर्वायी। तद्यथाऽयोगुडानां वायस्फालानां वा दीप्ताग्निसम्प्रतप्तानां अयोघनेन हन्यमानानां अयःप्रपाटिकोत्पतत्येव निर्वायात्, एवं द्वितीयोऽनाशु परिनिर्वायी। तद्यथाऽयोगुडानामिति पूर्ववद्यावदयःप्रपाटिकोत्प्लुत्य पृथिव्यामपतितैव निर्वायात्, एवं तृतीयो यश्चिरपरिनिर्वायी। एतच्च सूत्रं विस्तरेण पुरस्ताल्लिखितमिति[2] न पुनर्लिख्यते। *उपपद्याभिसंस्कारानभिसंस्कारपरिनिर्वाणादिति*। उपपद्य परिनिर्वाणाद्, अभिसंस्कारेण, अनभिसंस्कारेण परिनिर्वाणात् त्रिधाभेदान्नवानागामिनो भवन्तीति सम्बन्धः। उपपद्यपरिनिर्वायी य उपपन्नमात्रः परिनिर्वाति, न त्वभिसंस्कारेणानभिसंस्कारेण वा परिनिर्वाति। साभिसंस्कारपरिनिर्वायी तु नोपपद्यैव परिनिर्वाति, किं तर्हि ? अभिसंस्कारेणाप्रतिप्रस्रब्धस्य पूर्वाभिसंस्कारस्य सामर्थ्यतः परिनिर्वाति। अस्य हि यद्यपि वाही मार्गोऽस्ति, अभियोगेन तु परिनिर्वाति; उपपद्यपरिनिर्वायी तु नाभियोगेनेति विशेषः। अनभिसंस्कारपरिनिर्वायी पुनः प्रतिप्रस्रब्धपूर्वाभिसंस्कारेऽभिसंस्कारमनन्तरेण परिनिर्वातीत्ययमेव एषां विशेषोऽवगन्तव्यः।

यथा तु साभिसंस्कारानभिसंस्कारपरिनिर्वायिणावप्युपपद्यपरिनिर्वाय्याख्यां लभेते, तथा दर्शयन्नाह—*सर्वे ह्येत उपपद्यपरिनिर्वाणादुपपद्यपरिनिर्वायिण* इति। *प्लुतादिभेदादिति*। प्लुतार्धप्लुतसर्वच्युतभेदादित्यर्थः। *सर्वेषां वा त्रयाणामिति*। अन्तरोपपद्यपरिनिर्वाय्यूर्ध्वस्रोतसाम*आश्वनाशुचिरपरिनिर्वाणात्* त्रिधा भेदः। कश्चिदन्तरापरिनिर्वायी आशुपरिनिर्वायी भवति। एवमुपपद्यपरिनिर्वायी, ऊर्ध्वस्रोताश्चेति। अस्माच्च *त्रिधाभेदान्नवानागामिनो भवन्तीति* स एव सम्बन्धो वाच्यः।

---

१. त्रयोऽप्युपपन्न०—का०। २. द्र०—अस्यैव ग्रन्थस्य ४११-४१३ पृ०।

**तद्विशेषः पुनः कर्मक्लेशेन्द्रियविशेषतः ।। ३९ ।।**

तेषां पुनस्त्रयाणां नवानां चानागामिनां कर्मक्लेशेन्द्रियविशेषाद् विशेषः । त्रयाणां तावदभिनिर्वृत्त्युपपद्यापरपर्यायवेदनीयकर्मोपचितत्वाद्यथाक्रमं मृदुमध्याधिमात्रक्लेशसमुदाचारत्वाद् अधिमात्रमध्यमृद्विन्द्रियत्वाच्च ।

तेषामपि[1] प्रत्येकमत एव यथायोगं विशेषः । प्रथमयोस्त्रिकयोः क्लेशेन्द्रियविशेषात् पूर्ववत् । पश्चिमस्य त्रिकस्यापरपर्यावेदनीयकर्मविशेषाच्चेति ।

त एते नवप्रकारक्लेशेन्द्रियत्वान्नवानगामिनो भवन्ति ॥ ३९ ॥

---

"*तद्विशेषः पुनः*" इति विस्तरः । *तेषां पुनस्त्रयाणामन्तरो*पपद्यपरिनिर्वायिणोः, ऊर्ध्वस्रोतसश्च । *नवानां चै*षामेव प्रत्येकं त्रिधाभेदाद् यथावर्णिताद् विशेषः । *कर्मक्लेशेन्द्रियविशेषात् ।* कर्मणः क्लेशस्येन्द्रियस्य च विशेषाद् भवति । कथम्? इत्याह— *त्रयाणामि*ति विस्तरः । *अभिनिर्वृत्तिः* । अन्तराभावः । *अभिनिर्वृत्तिवेदनीयस्य कर्मण* उपचितत्वादन्तरापरिनिर्वायी, *उपपद्यवेदनीयस्य कर्मण* उपचितत्वादुपपद्यपरिनिर्वायी, *अपरपर्यायवेदनीयस्य कर्मणः उपचितत्वा*दूर्ध्वस्रोता इत्येवं तावत्तेषां त्रयाणां कर्मविशेषाद् विशेषः । *मृदुमध्याधिमात्रक्लेशसमुदाचारत्वाद्* यथाक्रममेषामेव *क्लेशविशेषाद् विशेषः* । *अधिमात्रमध्यमृद्विन्द्रियत्वाच्च ।* यथाक्रममेषामेवे*न्द्रियविशेषाद्विशेष* इति ।

*तेषामपि प्रत्येकमत एव यथायोगं विशेष* इति । तेषामपि प्रत्येकं भिन्नानां नवानामित्यर्थः । अत एव कर्मादिविशेषात् यथायोगं न यथाक्रमम्, विशेषोऽवगन्तव्यः । कथमित्याह—*प्रथमयोस्त्रिकयोरि*ति विस्तरः । यच्चान्तरापरिनिर्वायिणां त्रिकम्, यच्चोपपद्यपरिनिर्वायिणाम्, तयोस्त्रिकयोः *क्लेशेन्द्रियविशेषात्*, मृदुमध्याधिमात्रक्लेशसमुदाचारत्वात्, अधिमात्रमध्यमृद्विन्द्रियत्वाच्च यथाक्रमं विशेषः; न तु कर्मविशेषात् । यस्मात् प्रथमस्य त्रिकस्याभिनिर्वृत्तिवेदनीयं कर्म तुल्यम्, द्वितीयस्य चोपपद्यवेदनीयं कर्म तुल्यमिति । *पश्चिमस्य त्रिकस्यापरपर्यायवेदनीयकर्मविशेषाच्च विशेषः ।* ऋजुतादीनां ह्यपरपर्यायवेदनीयं कर्म भिन्नमित्यतोऽपरपर्यायवेदनीयकर्मविशेषात्, क्लेशेन्द्रियविशेषाच्च । चकारानुकृष्टत्वात् विशेषो मृदुमध्याधिमात्रक्लेशसमुदाचारत्वात्, अधिमात्रमध्यमृद्विन्द्रियत्वाच्च । यथाक्रममित्यर्थः । *त एते नवप्रकारक्लेशेन्द्रियत्वादिति* । त

---

१. तेषामपि नवानां—का० ।

**कथं तर्हि सूत्रे सप्त सत्पुरुषगतयो देशिताः ?**

**ऊर्ध्वस्रोतुरभेदेन सप्त सद्गतयो मताः ।**

ऊर्ध्वं स्रवणधर्मा ऊर्ध्वस्रोताः । तस्याभेदनिर्देशात् सप्त सत्पुरुषगतयः सूत्रेऽभिहिताः ।

---

एते नवानागामिनो नवप्रकारक्लेशत्वात्, नवप्रकारेन्द्रियत्वाच्च *नवानागामिनो भवन्ति ।* कर्मणोऽग्रहणमव्यापित्वात् । न हि प्रथमयोस्त्रिकयोः कर्मविशेषाद् विशेषोऽस्तीति कथं पुनरेते नवप्रकारक्लेशा भवन्ति ? इह क्लेशस्त्रिप्रकारः—मृदुमध्याधिमात्र इति । मृदुरन्तरापरिनिर्वायिणाम्, मध्य उपपद्यपरिनिर्वायिणाम्, अधिमात्र ऊर्ध्वस्रोतसाम् । तत्र प्रथमोऽन्तरापरिनिर्वायी मृदुमृदुक्लेशः, द्वितीयो मृदुमध्यक्लेशः, तृतीयो मृद्वधिमात्रक्लेशः । उपपद्यपरिनिर्वायिणां प्रथम उपपद्यपरिनिर्वायी मध्यमृदुक्लेशः, द्वितीयः साभिसंस्कारपरिनिर्वायी मध्यमध्यक्लेशः, तृतीयोऽनभिसंस्कारपरिनिर्वायी मध्याधिमात्रक्लेशः । ऊर्ध्वस्रोतसामपि प्लुतोऽधिमात्रमृदुक्लेशः, अर्धप्लुतोऽधिमात्रमध्यक्लेशः, सर्वस्थानच्युतोऽधिमात्राधिमात्रक्लेश इति । कथं नवप्रकारेन्द्रिया भवन्ति ? तथैवेन्द्रियमपि त्रिप्रकारम्—अधिमात्रं मध्यं मृदु चेति । अधिमात्रमन्तरापरिनिर्वायिणाम्, मध्यमुपपद्यपरिनिर्वायिणाम्, मृदूर्ध्वस्रोतसाम् । तत्र प्रथमोऽन्तरापरिनिर्वायी अधिमात्राधिमात्रेन्द्रियः, द्वितीयोऽधिमात्रमध्येन्द्रियः, तृतीयोऽधिमात्रमृद्विन्द्रियः । उपपद्यपरिनिर्वायिणां प्रथममुपपद्यपरिनिर्वायी मध्याधिमात्रेन्द्रियः, साभिसंस्कारपरिनिर्वायी मध्यमध्येन्द्रियः, अनभिसंस्कारपरिनिर्वायी मध्यमृद्विन्द्रियः । ऊर्ध्वस्रोतसामपि प्लुतो मृद्वधिमात्रेन्द्रियः, अर्धप्लुतो मृदुमध्येन्द्रियः, सर्वस्थानच्युतो मृदुमृद्विन्द्रिय इति ॥ ३६ ॥

*कथं तर्हि सूत्रे सप्त सत्पुरुषगतयो देशिता* इति । 'सप्त वोऽहं भिक्षवः सत्पुरुषगतीर्देशयिष्यामि । अनुपादाय च परिनिर्वाणम्"—इत्येतत् सर्वं सूत्रं "गतिसूत्रतः[1]" इत्यत्र प्रदेशे लिखितमिति न पुनर्लिख्यते । अत्र च सूत्रे सप्त सत्पुरुषगतयो देशिताः—त्रयोऽन्तरापरिनिर्वायिणः, त्रय उपपद्यपरिनिर्वायिण इति षट् गतयः, ऊर्ध्वस्रोतोगतिश्च सप्तमी इति ।

*ऊर्ध्वं स्रवणधर्मेति* । कृदन्तमेतच्छब्दरूपमिति । विधार्थमेतच्छब्दरूपमिति दर्शयति । ऊर्ध्वमिति च क्रियाविशेषणमिति । *तस्याभेदनिर्देशादिति* । तस्योर्ध्वस्रोतसः प्लुतादिभेदानिर्देशादित्यर्थः । विनेयाशयापेक्षो हि सूत्रनिर्देशः ।

---

१. द्र०—पृ० ४११-४१३.

कस्मात् पुनरेता एव सत्पुरुषगतयः, नान्याः शैक्षगतयः ? एता हि गतयो येषाम्, तेषां सति[1] च[1] कर्मणि वृत्तिः कुशले, असत्यवृत्तिरकुशले। एताश्च गतीर्गतानां न पुनः प्रत्यागतिरस्ति। न त्वेतद्यथोक्तमन्यत्रास्ति। अतः—

**सदसद्वृत्त्यवृत्तिभ्यां गताप्रत्यागतेश्च ताः ।। ४० ।।**

सप्त सत्पुरुषगतयो नान्या इति। यत्तर्हि सूत्र एवोक्तम्—"स कतमः ? शैक्ष्यः सम्यग्दृष्ट्या समन्वागतः" इति विस्तरः।

अन्येषामप्यस्ति पार्यायिकं सत्पुरुषत्वम्। पञ्चविधस्य पापस्यात्यन्तमकरण-संवरप्रतिलम्भात्, प्रायेणाकुशलप्रहाणाच्च। येषां तु निष्पर्यायेण तेषामिहाधिकारः ॥ ४० ॥

---

*नान्याः शैक्षा गतय* इति। न स्रोतआपन्नसकृदागामिगतय इत्यर्थः। गतिः, उपपत्तिः, सम्परायः—इत्येते सूत्रे पर्याया उच्यन्ते। *तेषामित्यनागामिनाम्*। *सति च कर्मणि वृत्तिः*। प्राणातिपाताद्यकरणात्। *असति चावृत्तिः*। अब्रह्मचर्याद्यकरणात्। अकुशलेन हि चित्तेनाब्रह्मचर्यादिकरणमिति। तेषां तु वीतरागाणां सत्येव कर्मणि वृत्तिः, नासति; प्रहीणाकुशलत्वात्। *न पुनः प्रत्यागतिरि*ति। यासु गतिषूपपन्नाः, तत्रतत्र चैषामत्यन्तमनागमनमित्यर्थः। *न त्वेतद्यथोक्तमन्यत्रास्तीति*। यदेतत् सत्येव वृत्तिरसति चावृत्तिरेवापुनःप्रत्यागमनं च, तदेतत् स्रोतआपन्ने सकृदागामिनि च नास्तीति।

*अन्येषामपीति*। स्रोतआपन्नसकृदागामिनामपीत्यर्थः। *पार्यायिकमिति*। पर्याये भवं पार्यायिकम्। केनचित् प्रकारेण भवतीत्यर्थः। कथम्? इत्याह—*पञ्चविधस्य पापस्यान्तमकरणसंवरप्रतिलम्भादिति*। पञ्चविधस्य पापस्य प्राणातिपातादत्तादानकामिमिथ्याचारमृषावादमद्यपानलक्षणस्याकरणेनाक्रियया संवरः संवरणम्; तस्य प्रतिलम्भात्। न ह्यार्या जन्मान्तरेऽप्येतत् पञ्चविधं पापमध्याचरन्ति। अकरणसंवरवचनम्; समादानसंवरस्यानावश्यकत्वात्। *प्रायेणेति*। दर्शनप्रहातव्यानामकुशलानां सर्वेषामत्यन्तप्रहाणात्। भावनाप्रहातव्यानां च कामावचराणां केषांचित् सम्भवतः। *येषामिति* विस्तरः। येषां तु निःपर्यायेण न प्रकारान्तरेण स्रोतआपन्नसकृदागामिवत् *सत्पुरुषत्वम्*। किं तर्हि? सर्वस्य पापस्यात्यन्तमकरणसंवरप्रतिलम्भात्। सर्वेषां चाकुशलानां दर्शनप्रहातव्यानां क्लेशानां प्रहाणात्। भावनाप्रहातव्यानां च कामावचराणां सर्वेषां नवप्रकाराणा-

---

१–१. सत्येव—का०।

**किं पुन परिवृत्तजन्मनोऽप्यनागामिन एष भेदोऽस्ति ? यस्मात्**

**न परावृत्तजन्मार्यः कामे धात्वन्तरोपगः ।**

कामधातौ परावृत्तजन्मान्तर आर्यो न धात्वन्तरं गच्छति । अनागामिफलं प्राप्य तत्रैव जन्मनि परिनिर्वाणात् । रूपधातौ तु परावृत्तजन्मा[1] कदाचिदारूप्यान् प्रविशति । य ऊर्ध्वस्रोता भवाग्रपरमः ।

यत्तर्हि शक्रेणोक्तम्—"ये ते देवा अकनिष्ठा इति विश्रुताः, अन्ते मे हीयमानस्य तत्रोपपत्तिर्भविष्यति" ? अभिधर्मलक्षणानभिज्ञत्वादिति[2] **वैभाषिकाः । भगवतापि अनिवारणम् , संहर्षणीयत्वात् इति ।**

---

मपि प्रहाणात् । *तेषां सत्पुरुषाणामनागामिनामिह सूत्रेऽधिकारः ।* सप्त सत्पुरुषगतय इत्यतोऽन्येषां पार्यायिकं सत्पुरुषत्वं न प्रतिषिध्यते ।। ४० ।।

*किं पुनः परिवृत्तजन्मनोऽप्यनागामिन एष भेदोऽस्ति ।* अन्तरापरिनिर्वायीत्येवमादिकः । परिवृत्तजन्मानागामीयः प्रथमे जन्मनि स्रोतआपत्तिफलं सकृदागामिफलं वा प्राप्य द्वितीये जन्मन्यनागामी भवति । *काम* इति विशेषणम् । यस्माद् रूपधातौ *परिवृत्तजन्मा कदाचिदारूप्यान् प्रविशतीति* । *तत्रैव जन्मनि परिनिर्वाणादिति* । कामधातौ दुःखबहुलत्वेनास्य तीव्रसंवेगत्वात् ।

*यत्तर्हीति* विस्तरः । *शक्रेणोक्तम्*—'इतश्च्युतोऽहं मनुष्येषूपपन्नो यद्यर्हत्त्वं प्राप्य न परिनिर्वामि । *ये ते देवा अकनिष्ठा इति विश्रुताः, अन्ते मे हीयमानस्य तत्रोपपत्तिर्भविष्यति'* इति । स हि देवेष्वेव स्रोतआपन्नो मनुष्यांश्चागत्य परिनिर्वास्यामीति वचनात् परिवृत्तजन्मा भवेत् । अन्ते निकायसभागावसाने मम हीयमानस्यार्हत्त्वादप्राप्तिपरिहाण्या परिहीयमाणस्य, तत्राकनिष्ठेषूपपत्तिर्भविष्यतीति प्रार्थनावचनाद् धात्वन्तरगमनमस्तीति गम्यते, तत् कथं कामधातौ परिवृत्तजन्मान्तर आर्यो धात्वन्तरं न गच्छतीत्युच्यत इति ? सूत्रार्थो दृश्यते । ब्रूयास्तम् । *धर्मलक्षणानभिज्ञत्वाच्छक्रेणैवमुक्तम्* , तस्माददोष इति । भगवता तर्ह्येवं शृण्वता कस्मादसौ न निवारितः—मा त्वमेव वोच इति ? अत उच्यते—*भगवताप्यनिवारणम् , संहर्षणीयत्वादिति* । कामदुःखपरित्यागाभिलाषेण संहर्षणीयमित्यभिप्रायः ।

च्युतिनिमित्तोपपत्तिदुःखोद्विग्नस्य संहर्षणीयत्वादित्याचार्य*सङ्घभद्रः* ।

---

१. परिवृत्त०—जा० । २. अभिधर्मानभि०—का० ।

**स चोर्ध्वजश्च नैवाक्षसञ्चारपरिहाणिभाक् ॥ ४१ ॥**

स च कामधातौ परिवृत्तजन्मा ऊर्ध्वधातूपपन्नश्चार्यो नैवेन्द्रियाणि सञ्चरति, नापि कथञ्चित् परिहीयते ।

किं पुनः कारणं परिवृत्तजन्मान्तरस्यार्यस्य रूपारूप्यप्रवेशेन्द्रियसञ्चार-परिहाणयो नेष्यन्ते ? यस्मान्न सन्ति ।

कस्मान्न सन्ति ? जन्मान्तरपरिवासेनेन्द्रियाणां परिपक्वतरत्वाद्, आश्रय-विशेषलाभाच्च ।

अथ कस्मादवीतरागः शैक्षो नान्तराये परिनिर्वायी भवति ? मार्गस्याजित-त्वादसम्मुखीभावतः, अनुशयानां च नातिमन्दत्वात् । दुःसमतिक्रामत्वात् कामधातोरिति वैभाषिकाः । बहु ह्यनेन कर्तव्यं भवति—अकुशलाव्याकृतक्लेशप्रहाणम्, द्वित्रिश्रामण्यफलप्राप्तिः, त्रिधातुसमतिक्रमश्च । तच्चान्तराभवस्थो न शक्तः कर्तुमिति ॥ ४१ ॥

---

*इन्द्रियाणां परिपक्वतरत्वादिति* । प्रज्ञादीनामिन्द्रियाणां निष्यन्दफलपुष्टि-विशेषादित्यर्थः । *आश्रयविशेषलाभाच्च* । यस्माच्चाश्रयविशेषमनुपहतं मार्गसम्मुखीभावानुकूलं प्रतिलभते । दृश्यन्ते हि तीक्ष्णेन्द्रिया अपि सन्त आश्रयवैगुण्याद् गुणेभ्यः परिहीयमाणा इत्यतो *जन्मान्तरपरिवासेनेन्द्रियाणां* परिपक्वतरत्वादिन्द्रियसञ्चारो नास्ति । आश्रयविशेषलाभाच्च परिहाणि-र्नास्ति । अनेनैव जन्मान्तरपरिवासेन धात्वन्तरगमनं न भवतीति ।

*मार्गस्याजितत्वादसम्मुखीभावत* इति । यस्मान् मार्गस्याजितत्वादसम्मुखी-भावः, तस्मात् कारणादवीतरागतः शैक्षः स्रोतआपन्नः सकृदागामी च नान्तरापरिनिर्वायी भवति । *अनुशयानां च नातिमन्दत्वात्* । यस्माच्चानुशया-स्तस्य नातिमन्दाः, अतो नान्तरापरिनिर्वायी भवतीत्ययमाचार्यस्य परिहारः ।

*वैभाषिकाणां* कः परिहारः ? इत्याह—*दुस्समतिक्रमत्वात् कामधातोरिति वैभाषिका* इति । कथम् ? इत्युच्यते—*बहु ह्यनेन कर्तव्यं भवति अकुशलाव्याकृत-क्लेशप्रहाणम्* । अकुशलानां कामावचराणामव्याकृतानां च रूपारूप्यावचराणां क्लेशानां प्रहाणमनेन कर्तव्यम् । वीतरागेण पुनः शैक्षेणाव्याकृतानामेव प्रहाणमिति । *द्वित्रिश्रामण्यफलप्राप्तिरिति* । द्वे वा त्रीणि वा श्रामण्यानि

यदुक्तम्—"स ध्याने व्यवकीर्णेऽकनिष्ठगः" इति, अथ कतमद्ध्यानं प्रथमतो व्यवकीर्यते ?

**आकीर्यते चतुर्थं प्राक्,**

स हि सर्वकर्मण्यः समाधिः; सुखप्रतिपदामग्रत्वात्[1]। एवं च पुनः व्यवकीर्यते—अर्हन्ननागामी वा प्रवाहयुक्तमनास्रवं चतुर्थं ध्यानं समापद्यते। तस्माद्व्युत्थाय प्रवाहयुक्तं तदेव सास्रवं समापद्यते, पुनश्चानास्रवम्।

एवं प्रवाहाप्रहाणेन[2] यदा किल द्वौ क्षणावनास्रवौ समापद्यते, द्वौ सास्रवौ, पुनश्चानास्रवौ—अयं व्यवकिरणस्य प्रयोगः।

**निष्पत्तिक्षणमिश्रणात्।**

यदा त्वनास्रवस्य क्षणस्यानन्तरं सास्रवं सम्मुखीकरोति सास्रवस्यानास्रवम्। एवं सास्रवस्य क्षणस्यानास्रवाभ्यां मिश्रणात् व्यवकिरणं निष्पन्नं भवतीति **वैभाषिकाः।**

द्वौ हि क्षणावानन्तर्यमार्गसदृशौ, तृतीयो विमुक्तिमार्गसदृश इति एवं

---

फलानि प्राप्तव्यानि। सकृदागामिना द्वे श्रामण्यफले प्राप्तव्ये—अनागामिफलम्, अर्हत्त्वफलं च। स्रोतआपन्ने त्रीणि—सकृदागामिफलम्, अनागामिफलम्, अर्हत्त्वफलं च। वीतरागेण पुनरेकमेवार्हत्त्वफलं प्राप्तव्यमिति। *त्रिधातुसमतिक्रमश्चावीतरागेण* कर्तव्यः। वीतरागेण तु रूपावीतरागेणान्तरापरिनिर्वायिणा भवता द्विधातुसमतिक्रमः कर्तव्य इति॥ ४१॥

"*आकीर्यते*" इति। व्यवकीर्यते व्यतिभिद्यते। अनास्रवाभ्यां सास्रवं चतुर्थं *ध्यानं* मिश्रीक्रियत इत्यर्थः। *सुखप्रतिपदामग्रत्वादि*ति। सुखा प्रतिपदश्चत्वारि मौलानि ध्यानानि, "ध्यानेषु मार्गः प्रतिपत् सुखा" (अभि० को० ६.६६) इति वचनात्। तासां चतुर्थं ध्यानमग्रम्, अष्टापक्षालमुक्तत्वात्।

*यदा किले*ति। किलशब्दो वैभाषिकमतद्योतकः। स्वमतं तु पश्चाद् दर्शयिष्यति—*अशक्यं तु क्षणव्यवकिरण*मिति विस्तरेण।

*द्वौ हि क्षणावानन्तर्यमार्गसदृशा*विति। अनास्रवसास्रवौ। *तृतीयो विमुक्तिमार्गसदृश* इत्यनास्रवः।

---

१. ०मग्रचत्वात्—का०। २. ०प्रहासेन—का०।

चतुर्थं ध्यानं व्यवकीर्य तद्बलेनान्यान्यपि व्यवकीर्यन्ते । कामधातौ त्रिषु द्वीपेषु प्रथमं व्यवकीर्यते । पश्चात् परिहीणेन रूपधातौ ।

अशक्यं तु क्षणव्यवकिरणमन्यत्र बुद्धात् । अत इच्छातः प्रवाहत्रयसमापत्तितो निष्पन्नं भवतीति पश्यामः ।

किमर्थं पुनर्ध्यानं व्यवकीर्यते ?

**उपपत्तिविहारार्थं क्लेशभीरुतयापि च ।। ४२ ।।**

त्रिभिः कारणैर्ध्यानं व्यवकिरन्ति—तीक्ष्णेन्द्रिया अनागामिनः शुद्धावासोपपत्त्यर्थं दृष्टधर्मसुखविहारार्थं च, मृद्विन्द्रियाः क्लेशभीरुतया चास्वादनासम्प्रयुक्तसमाधिदूरीकरणादपरिहाण्यर्थम्[1], अर्हन्तस्तु तीक्ष्णेन्द्रिया दृष्टधर्मसुखविहारार्थम्, मृद्विन्द्रियाः क्लेशभीरुत्वाच्चापरिहाण्यर्थम्[1] ।। ४२ ।।

अथ कस्मात् पञ्चैव शुद्धावासोपपत्तयः ? यदेतद् व्यवकीर्णभावितं चतुर्थं ध्यानमुक्तम्,

**तत्पाञ्चविध्यात् पञ्चैव शुद्धावासोपपत्तयः ।**

सा हि व्यवकीर्णभावना पञ्चप्रकारा; मृदुमध्याधिमात्रतरतमभेदात् । प्रथमायां त्रीणि चित्तानि सम्मुखीक्रियन्ते—अनास्रवम्, सास्रवम्, अनास्रवं च । द्वितीयायां षट् । तृतीयायां नव । चतुर्थ्यां द्वादश । पञ्चम्यां पञ्चदश ।

---

*मृद्विन्द्रियाः क्लेशभीरुतया* च व्यवकिरन्ति । चशब्दाच्छुद्धावासोपपत्त्यर्थं दृष्टधर्मसुखविहारार्थं च व्यवकिरन्ति । *तीक्ष्णेन्द्रियास्तु शुद्धावासोपपत्त्यर्थं दृष्टधर्मसुखविहारार्थं* च व्यवकिरन्ति, न क्लेशभीरुतया; तेषां परिहाण्यसम्भवात् । कथं पुनः क्लेशभीरुतया अपरिहाण्यर्थं व्यवकिरन्ति ? इत्याह—*आस्वादनासम्प्रयुक्तसमाधिदूरीकरणात्* । *अपरिहाण्यर्थमिति* । फलान्न परिहीयेमिति ।। ४२ ।।

*पञ्चप्रकारे*ति विस्तरः । *मृद्वी मध्या अधिमात्रा अधिमात्रतरा अधिमात्रत*मेति ।*प्रथमायां त्रीणि चित्तानी*ति । तस्य पुद्गलस्य तावती शक्तिरित्येवमुपरिष्टादपि वक्तव्यम् । *द्वितीयायां षडि*ति । अनास्रवं सास्रवमनास्रवमिति त्रीणि,

---

१. ०परिहीणार्थम्—का० ।

तासां यथासंख्यं पञ्च शुद्धावासाः फलम्। यत्तत्र सास्रवं तद्वशात् तेषूपपत्तिः।

श्रद्धादीन्द्रियाधिक्यात् पञ्चेत्यपरे।

**निरोधलाभ्यनागामी कायसाक्षी पुनर्मतः ॥ ४३ ॥**

निरोधलाभोऽस्यास्तीति निरोधलाभी। यो हि कश्चिदनागामी निरोधसमापत्तिलाभी स कायसाक्षीत्युच्यते; निर्वाणसदृशस्य धर्मस्य कायेन साक्षात् करणात्।

कथं पुनः कायेन साक्षात्करोति? चित्ताभावात् कायाश्रयोत्पत्तेः।

एवं तु भवितव्यम्—स हि तस्माद् व्युत्थायाप्रतिलब्धपूर्वां सविज्ञानकां कायशान्तिं प्रतिलभते। यतोऽस्यैवं भवति—शान्ता बत निरोधसमापत्तिः, निर्वाणसदृशी बत निरोधसमापत्तिरिति। एवमनेन तस्याः शान्तत्वं कायेन साक्षात्कृतं भवति। प्राप्तिज्ञानसाक्षात्क्रियाभ्यां प्रत्यक्षीकारो हि साक्षात्क्रिया।

---

पुनरनास्रवं सास्रवमनास्रवमित्यपराणि त्रीणीति षड् भवन्ति। एवमेव च *तृतीयायां नव, चतुर्थ्यां द्वादश, पञ्चम्यां पञ्चदशेति* योज्यम्।

*तासां यथासंख्यमिति*। तासां व्यवकीर्णभावनानां यथाक्रमं *पञ्च शुद्धावासाः फलम्*। मृद्व्या भावनाया अवृहाः फलम्, एवं यावदधिमात्रतमाया भावनाया अकनिष्ठाः फलमिति।

*श्रद्धादीन्द्रियाधिक्यादिति*। *भदन्तश्रीलात*मतम्। श्रद्धाधिकाया भावनाया अवृहाः फलम्, एवं यावत् प्रज्ञाधिकाया भावनाया अकनिष्ठाः फलमिति।

*यो हि कश्चिदनागामीति*। श्रद्धाधिमुक्तो वा, दृष्टिप्राप्तो वा। *कायेन साक्षात्करणमिति*। *चित्ताभावात्* कायेनैव साक्षात्करोति।

*कथं कायेनैव?* इत्याह—*कायाश्रयोत्पत्तेः*।

*एवं तु भवितव्यमिति*। स्वमतमाचार्यस्य। *प्राप्तिज्ञानसाक्षात्क्रियाभ्यामिति*। समाधिकाले तदनुकूलाश्रयप्राप्तिसाक्षात्करणात्। व्युत्थानकाले च तत्प्रतिसंवेदनाज्ञानसाक्षात्करणात्। *प्रत्यक्षीकारो हि साक्षात्क्रियेति*। सविज्ञानकायशान्तिप्रतिलम्भावस्थायां साक्षात्क्रिया युज्यत इत्यभिप्रायः। सविज्ञानककायशान्तिप्रतिलम्भेन वा अविज्ञानककायशान्त्यवस्थायां तत्प्राप्तिर्गम्यत इति।

"अष्टादश शैक्षाः" इत्यत्र सूत्रे किं कारणं कायसाक्षी नोक्तः ? कारणाभावात् । किं पुनः कारणम् ? अनास्रवास्तिस्रः शिक्षाः[1], तत्फलं च । तद्विशेषेण हि शैक्षाणां व्यवस्थानम् । निरोधसमापत्तिश्च नैवशैक्षानशिक्षा[2] फलम् । अतो न तद्योगाच्छैक्षविशेष उक्तः । एष तावदनागामिनां यथास्थूलं भेदः ।

सूक्ष्मं तु भिद्यमानाः सहस्रशो भिद्यन्ते ।

---

*अष्टादश शैक्षा इत्यत्र सूत्र* इति । "अनाथपिण्डदो गृहपतिर्भगवन्तमपृच्छत्—'कति भदन्त दक्षिणीयाः' इति ? भगवानाह—'अष्टादश गृहपते शैक्षा नैवाशैक्षा दक्षिणीया इति । अष्टादश शैक्षाः कतमे ? स्रोतआपत्तिफलसाक्षात्क्रियायै प्रतिपन्नकः, स्रोतआपन्नः, सकृदागामिफलसाक्षात्क्रियायै प्रतिपन्नकः, सकृदागामी, अनागामिफलसाक्षात्क्रियायै प्रतिपन्नकः, अनागामी, अर्हत्त्वफलसाक्षात्क्रियायै प्रतिपन्नकः, श्रद्धानुसारी, श्रद्धाधिमुक्तः, दृष्टिप्राप्तः, कुलंकुलः, एकवीचिकः, अन्तरापरिनिर्वायी, उपपद्यपरिनिर्वायी, साभिसंस्कारपरिनिर्वायी, अनभिसंस्कारपरिनिर्वायी, ऊर्ध्वस्रोताः—इतीमे गृहपतेऽष्टादश शैक्षाः । नवाशैक्षाः कतमे ? परिहाणधर्मा, चेतनाधर्मा, अनुरक्षणाधर्मा, स्थिताकम्प्यः, प्रतिवेधनाभव्यः, अकोप्यधर्मा, चेतोविमुक्तः, प्रज्ञाविमुक्तः, उभयतोभागविमुक्तः—इतीमे गृहपते नवाशैक्षाः" इति । *तिस्रः शिक्षाः, तत्फलं चेति* । अधिशीलमधिचित्तमधिप्रज्ञमिति तिस्रः शिक्षा आर्यमार्गलक्षणाः । तेषां फलं विसंयोगः । *तद्विशेषेण हि शैक्षाणां व्यवस्थानमिति* । शिक्षाविशेषेण, तत्फलविशेषेण चेत्यर्थः । कथं पुनस्तद्विशेषः ? अन्यादृश्योऽष्टादशानां शिक्षाः, विसंयोगफलं चेति । *निरोधसमापत्तिश्च न शैक्षा* । अप्रहाणमार्गस्वाभाव्यात् । *न शिक्षा फलम*विसंयोगफलस्वाभाव्यात् । *अतो न तद्योगात्* निरोधसमापत्तियोगात् *शैक्षविशेष* उक्तः । यथैतेऽष्टादश शैक्षाः, न पुनरसौ न शैक्षः । तत्र यदिदमुच्यते—अष्टादश शैक्षा इत्यत्र सूत्रे कि कारणं कायसाक्षी नोक्तः, शैक्ष इत्येवं नोक्तः ।

*यथास्थूलं भेद* इति । "रूपोपगा पञ्च, आरूप्यगश्चतुर्धान्यः इह निर्वायकोऽपरः" (अभि० को० ६.३८) इत्येवमादि ।

*सूक्ष्मं तु भिद्यमाना* इति विस्तरः । अत्राचार्यो गणनोपायप्रदर्शनार्थं प्रथममन्तरापरिनिर्वायिण इन्द्रियभूमिगोत्रादिभेदं व्युत्पादयति । किं कारणम् ?

---

१. शैक्षाः—का० । २. °नाशिक्षा—का० ।

अन्तरापरिनिर्वायिणस्त्रयो मृदुमध्याधिमात्रेन्द्रियभेदात् ।

भूमिभेदाच्चत्वारः ।

परिहाणधर्मादिगोत्रभेदात् षट् ।

स्थानान्तरभेदात् षोडश ।

भूमिवैराग्यभेदात् षट्त्रिंशत् । रूपधातौ सकलबन्धनो यावच्चतुर्थ-ध्यानाष्टप्रकारवीतरागः ।

स्थानान्तरगोत्रवैराग्येन्द्रियभेदाद् द्वानवतीनि[1] पञ्चविंशतिः शतानि । कथं

---

तद्भेदे हि गणिते यथान्तरापरिनिर्वायिण इन्द्रियादिभेदाद् भेदः, एवं यावदूर्ध्व-स्रोतस इति सुखमतिदेशं करिष्यामीति ।

*भूमिभेदाच्चत्वार* इति । त एवान्तरापरिनिर्वायिणः । भूमयश्चत्वारि ध्यानानि; रूपोपगानामनागामिनां विवक्षितत्वात् । तत्र प्रथमे ध्यानेऽन्तरा-परिनिर्वायी यावच्चतुर्थं इति चत्वारः ।

*परिहाणधर्मादिगोत्रभेदात्* षडिति । त एव परिहाणधर्मा, चेतनाधर्मा, अनुरक्षणाधर्मा, स्थिताकम्प्यः, प्रतिवेधनाभव्यः, अकोप्यधर्मा चेति ।

*स्थानान्तरभेदात् षोडशेति* । ब्रह्मकायिकादीन्यकनिष्ठान्तानि । महाब्रह्मणो *वैभाषिकनीत्याऽस्थानान्तरः* । *बहिर्देशकनयेनापि* स्थानान्तरत्वे तत्रार्यो नोत्पद्यत इत्यगणनम् । तदेवं स्थानान्तरभेदात् षोडशान्तरापरिनिर्वायिणः ।

*भूमिवैराग्यभेदात् षट्त्रिंशदिति* । भूमिभेदात् तद्वैराग्यभेदाच्च षट्त्रिंश-दन्तरापरिनिर्वायिणः । कथम् ? इति प्रतिपादयति—*रूपधातौ सकलबन्धन* इति विस्तरः । रूपधातौ प्रथमे ध्याने सकलबन्धन एकप्रकारवीतरागो यावदष्ट-प्रकारवीतराग इति नव; द्वितीयोऽपि नव सकलबन्धनो यावदष्टप्रकारवीतराग इति, तथा तृतीये नव, तथा चतुर्थे नवेति—चत्वारो नवकाः षट्त्रिंशद् भवन्ति । *यावच्चतुर्थध्यानाष्टप्रकारवीतराग* इति । यावच्छब्देनायमर्थविस्तरो लभ्यते । चतुर्थध्याननवमप्रकारवीतरागो नोच्यते । यस्मादसावारूप्ये सकलबन्धनो भवति । न चेहारूप्यगोऽधिक्रियते; रूपोपगानामिह विवक्षितत्वात् । अन्तरा-भवसम्बन्धादिति ।

तथा च सति *स्थानान्तरगोत्रवैराग्येन्द्रियभेदादिति* विस्तरः । स्थानान्तराणां गोत्राणां वैराग्याणामिन्द्रियाणां च भेदात् *द्वानवतीनि* द्वानवत्यधिकानि

कृत्वा ? एकस्मिन् स्थाने षट् गोत्राणि, गोत्रे गोत्रे नव पुद्गलाः, सकलबन्धनो यावदष्टप्रकारवीतरागः स्वस्मात् स्थानात् षण्णवकानि चतुष्पञ्चाशत् षोडश चतुष्पञ्चाशत्कानि चतुःषष्ट्यष्टौ शतानि। इन्द्रियभेदात् पुनस्त्रिगुण इत्येवं कृत्वा यो ह्यधरे[1] ध्याने[1] नवप्रकारवीतरागः स उत्तरे सकलबन्धन उक्तः, समगणनार्थम्।

यथान्तरापरिनिर्वायिण एवं यावदूर्ध्वस्रोतस इत्यभिसमस्य सर्वे चत्वारिंशदूनानि त्रयोदशसहस्राण्यनागामिनां भवन्ति ॥ ४३ ॥

---

*पञ्चविंशतिशतानि भवन्ति*; तेषामन्तरापरिनिर्वायिणाम्। *कथं कृत्वा तथा भवन्ति ?* इत्याह—*एकस्मि स्थाने*। तद्यथा—ब्रह्मपुरोहिते *षट्गोत्राणि* परिहाणधर्मादिभेदात्। *गोत्रगोत्र* इति वीप्सा। *नव पुद्गलाः*। *सकलबन्धनो यावदष्टप्रकारवीतरागः*। *स्वस्मात् स्थानात्*। तद्यथा ब्रह्मपुरोहितात्। *षण्णवकानि* गोत्रषट् पुद्गलनवकग्रहणाच्चतुःपञ्चाशत्। *षोडश चतुःपञ्चाशत्कानि*। षोडशस्थानान्तरग्रहणात्। *चतुःषष्टानि*। *चतुःपञ्चधिकानि अष्टौ शतानि*। *इन्द्रियभेदात् तु त्रिगुणा* मृदुमध्याधिमात्रभेदात्। *इत्येवं कृत्वा*। किम् ? द्वानवतीनि पञ्चविंशतिशतानि भवन्ति। येन न्यायेन सकलबन्धनो यावदष्टप्रकारवीतराग इति नव पुद्गला व्यवस्थापिताः, तं न्यायं दर्शयन्नाह—यो ह्यधरे ध्यान इति विस्तरः। यो ह्यधरे ध्याने प्रथमे यावत् तृतीये *नवप्रकारवीतरागः*। *स उत्तरे* ध्याने द्वितीये यावच्चतुर्थे *सकलबन्धन इत्युक्तः*। कस्माद् ? इत्याह—*समगणनार्थमिति*। चतुर्षु ध्यानेषु नवनव यथा स्युरिति। अन्यथा हि विषमा गणना स्यात्। प्रथमे ध्याने दश स्युः सकलबन्धनो यावन्नवप्रकारवीतराग इति। द्वितीये नव एकप्रकारवीतरागो यावन्नवप्रकारवीतराग इति। एवं तृतीये नव। चतुर्थे त्वष्टौ स्युः—एकप्रकारवीतरागो यावदष्टप्रकारवीतराग इति। नवप्रकारवीतरागस्याकृत्स्नसकलबन्धनत्वादित्युक्तम्। *एवं यावदूर्ध्वस्रोतस* इति। एवमुपरिस्थानाभिसंस्कारोर्ध्वस्रोतसामपि। स्थानान्तरगोत्रवैराग्येन्द्रियभेदात् प्रत्येकं द्वानवतीनि पञ्चविंशतिशतानि भवन्तीत्यभिसमस्य पुनः पञ्चभेदाँश्चत्वारिंशदूनानि त्रयोदशसहस्राण्यनागामिनां भवन्ति। आरूप्यगैस्तु सहोपपद्यादिचतुर्भेदभिन्नैर्गण्यमानैरतो बहवो भवन्ति ; अनया तु वर्तन्या गम्यत एवेति न लिख्यते ॥ ४३ ॥

१–१. योऽधरध्याने—का०।

अभि० को० ३ : १४

**आभवाग्राष्टभागक्षिदर्हत्त्वे प्रतिपन्नकः ।**

'अनागामी' इत्यधिकृतम् । स खल्वयमनागामी प्रथमध्यानैकप्रकारवैराग्यात् प्रभृति यावत् भवाग्राष्टप्रकारप्रहाणादर्हत्त्वप्रतिपन्नको भवति[1] ।

**नवमस्याप्यानन्तर्यपथे,**

नवमस्यापि भावाग्रिकस्य प्रकारस्य प्रहाणायानन्तर्यमार्गे सोऽर्हत्त्वप्रतिपन्नक एव ।

**वज्रोपमश्च सः ॥ ४४ ॥**

स चानन्तर्यमार्गः 'वज्रोपमः समाधिः' इत्युच्येत; सर्वानुशयभेदित्वात् । भिन्नत्वादसौ न[2] सर्वान् भिनत्ति । सर्वांस्तु भेत्तुं समर्थः; सर्वानन्तर्यमार्गाणामधिमात्रतमत्वात् ।

वज्रोपमानां तु बहुभेदं वर्णयन्ति—अनागम्यसंगृहीता भावाग्रिकदुःखसमुदयालम्बनैर्दुःखसमुदयान्वयज्ञानाकारैः सम्प्रयुक्ता अष्टौ । निरोधमार्गधर्म-

---

"*आभवाग्राष्टभागछिद्*" इति । आभवाग्रादष्टौ प्रकारान् क्षिणोतीत्याभवाग्राष्टभागक्षिद् । आभवाग्राष्टप्रकारक्षयकृदित्यर्थः ।

*अयमनागामी प्रथमध्यानैकप्रकारवैराग्यात् प्रभृतीति* । यस्मात् कामवैराग्यादनागामी व्यवस्थाप्यते, तस्मात्ततः परेणार्हत्त्वफलप्रतिपन्नको भवति ।

यथा वज्रः सर्वं भिनत्ति, एवमयं समाधिः *सर्वमनुशयं भिनत्तीति* सामर्थ्यात् वज्र उपमा अस्येति वज्रोपमः । *भिन्नत्वादसौ न सर्वान् भिनत्तीति* । त्रैधातुकान् दर्शनप्रहातव्यान् भावनाप्रहातव्यांश्च कामावचरान् यावत् भावाग्रिकानष्टौ प्रकारान् । यदि सर्वान्न भिनत्ति, कस्मात् सर्वानुशयभेदीत्युच्यते ? इत्याह—*सर्वांस्तु भेत्तुं समर्थ* इति । सम्भवमधिकृत्योक्तमित्यभिप्रायः ।

*अनागम्यसंगृहीता* इति विस्तरः । नव भूमीः अनागम्यं ध्यानान्तरं चत्वारि ध्यानानि त्रींश्चारूप्यान् भवाग्रवर्ज्यान्निश्रित्यार्हत्त्वप्राप्तिरित्यत एवं प्रतन्यते । *दुःखसमुदयान्वयज्ञानाकारैः सम्प्रयुक्ता अष्टाविति* । भावाग्रिकदुःखालम्बनान्वयज्ञानाकारैश्चतुर्भिः सम्प्रयुक्ताश्चत्वारो भावाग्रिकसमुदयालम्बनान्वयज्ञानाकारैः चतुर्भिरपरैः सम्प्रयुक्ताश्चत्वार इत्यष्टौ । एवमेव *निरोधमार्गधर्मज्ञानाकारैः सम्प्रयुक्ता अष्टाविति* वक्तव्यम् ।

---

१. भवन्ति—का० । २. न पुनः—का० ।

ज्ञानाकारैः सम्प्रयुक्ता अष्टौ । निरोधान्वयज्ञानाकारैः सम्प्रयुक्ताः प्रथमध्याननिरोधालम्बनाश्चत्वारः । एवं यावद् भवाग्रनिरोधालम्बनाश्चत्वारः । मार्गान्वयज्ञानाकारैः सम्प्रयुक्ताश्चत्वारः; कृत्स्नस्यान्वयज्ञनपक्षस्यालम्बनात् । त इमे ज्ञानाकारालम्बनभेदभिन्ना द्वापञ्चाशद् वज्रोपमा भवन्ति ।

यथाऽनागम्यसंगृहीताः[1], एवं यावच्चतुर्थध्यानसंगृहीताः ।

---

"धर्मज्ञानं निरोधे यन्मार्गे वा भावनापथे ।
त्रिधातुप्रतिपक्षस्तद्" (अभि० को० ७. ९)

इति सिद्धान्तात् तयोरेवेहोपन्यासः, न दुःखसमुदयधर्मज्ञानयोर्ग्रहणम् । *एवं यावदिति* । यावच्छब्देन यथा प्रथमध्याननिरोधालम्बनाकारैः सम्प्रयुक्ताश्चत्वारः । एवं द्वितीयतृतीयचतुर्थध्यानाकाशविज्ञानाकिञ्चन्यायतनभवाग्रनिरोधालम्बनाः प्रत्येकं चत्वारश्चत्वारो वक्तव्याः । *मार्गान्वयज्ञानाकारैः सम्प्रयुक्ताश्चत्वार* इति । अत्र प्रतिभूमिमार्गालम्बनान्वयज्ञानाकारैः सम्प्रयुक्ताश्चत्वारः चत्वार इति नोच्यते । कस्माद् ? इत्याह-*कृत्स्नस्यान्वयज्ञानपक्षस्यालम्बनादिति* । अविशिष्टो ह्यन्वयज्ञानपक्षो मार्गः प्रतिपक्षभावेनान्योन्यहेतुकश्च मार्ग इति समस्तमेवालम्ब्यते । न निरोधवदित्यतश्चत्वार एव मार्गान्वयज्ञानाकारभेदेनान्वयज्ञानाकारैः सम्प्रयुक्ता इति । *त इमे ज्ञानाकारालम्बनभेदभिन्ना* इति । ज्ञानाकारभेदेन, आलम्बनभेदेन च भिन्नाः । अथ वा ज्ञानानामाकाराणामालम्बनानां च त्रिभेदेन भिन्नाः । ज्ञानाकारभेदभिन्नास्तावत्—दुःखसमुदयान्वयज्ञानाकारैरित्येवमादिवचनात् । आलम्बनभेदभिन्ना अपि- *भावाग्रिकदुःखसमुदया*लम्बनैरित्येवमादिवचनात् । *द्वापञ्चाशदिति* । आदितो द्व्यष्टाविति षोडश । प्रथमध्याननिरोधालम्बनाश्चत्वारो यावन्मार्गान्वयज्ञानाकारैः सम्प्रयुक्ताश्चत्वार इति नवचतुष्काणि षट्त्रिंशत् । षोडश च षट् त्रिंशच्च द्वापञ्चाशद्भवन्ति ।

*यथानागम्यसंगृहीता* इति विस्तरः । मौलं ध्यानमनागम्याप्रविश्योत्पद्यत इत्यनागम्यम् । येन प्रकारेणानन्तरोक्तेनानागम्यसंगृहीता द्वापञ्चाशद् वज्रोपमा भवन्ति, तेनैव प्रकारेण ध्यानान्तरसंगृहीता द्वापञ्चाशद् भवन्ति । कथं कृत्वा ? ध्यानान्तरसंगृहीता भावाग्रिकदुःखसमुदयान्वयज्ञानाकारैः सम्प्रयुक्ता अष्टौ, निरोधमार्गधर्मज्ञानाकारैः सम्प्रयुक्ता अष्टौ, निरोधान्वयज्ञानाकारैः सम्प्रयुक्ताः प्रथमध्याननिरोधालम्बनाश्चत्वारः, एवं यावद् भवाग्रनिरोधालम्बनाश्चत्वारः, मार्गान्वयज्ञानाकारैः सम्प्रयुक्ताश्चत्वारः; कृत्स्नस्यान्वयज्ञानपक्षस्यालम्बनात् । त इमे ज्ञानाकारालम्बनभेदभिन्ना द्वापञ्चाशद् भवन्ति । यथा ध्यानान्तर-

---

१. ०नागाम्य०—का० ।

आकाशविज्ञानानन्त्याकिञ्चन्यायतनसंगृहीता यथासंख्यमष्टाविंशतिश्चतुर्विंशतिर्विंशतिश्च[2] भवन्ति; तेषु धर्मज्ञानस्याधोभूमिनिरोधालम्बनस्य चान्वयज्ञानस्याभावात्। अधोभूमिप्रतिपक्षालम्बनं तु भवति, तस्यान्योन्यहेतुत्वादिति।

येषां तु मार्गान्वयज्ञानमप्येकैकभूमिप्रतिपक्षालम्बनमिष्टम्, तेषामाष्टविंशति-

---

संगृहीता एवं प्रथमध्यानसंगृहीता द्वापञ्चाशत्। *यावच्चतुर्थध्यानसंगृहीता* द्वापञ्चाशदिति। *यथासंख्यमिति* विस्तरः।

*आकाशानन्त्यायतनसंगृहीता अष्टाविंशतिः*। *विज्ञानानन्त्यायतनसंगृहीताश्चतुर्विंशतिः*। *आकिञ्चन्यायतनसंगृहीता विंशतिः*। भवाग्र आर्यमार्गो नास्तीति तत्संगृहीता न सन्तीति न चिन्त्यन्ते। *तेषु धर्मज्ञानस्याभावादिति*। तेष्वाकाशानन्त्यायतनादिषु धर्मज्ञानस्याभावात्। धर्मज्ञानस्य षड्भूमिकत्वात्। तस्मान्निरोधमार्गधर्मज्ञानाकारैः सम्प्रयुक्ता अष्टौ न भवन्ति। *अधोभूमिनिरोधालम्बनस्य चान्वयज्ञानस्याभावात्*। निरोधान्वयज्ञानाकारैः सम्प्रयुक्ताश्चतुर्ध्याननिरोधालम्बनाः षोडश पुनर्न भवन्तीत्यष्टाविंशतिर्भवन्ति। द्वापञ्चाशतोऽष्टौ षोडश चैवापनीयेति कृत्वा। कथम्? आकाशानन्त्यायतनसंगृहीता भावाग्रिकदुःखसमुदयान्वयज्ञानाकारैः सम्प्रयुक्ता अष्टौ, निरोधान्वयज्ञानाकारैः सम्प्रयुक्ता आकाशानन्त्यायतनादिनिरोधालम्बनाः षोडश, मार्गान्वयज्ञानाकारैः सम्प्रयुक्ताश्चत्वार इति त इमे ज्ञानाकारालम्बनभेदभिन्ना अष्टाविंशतिर्भवन्ति। एवं विज्ञानानन्त्यायतननिरोधालम्बनाश्चतुरोऽपनीय चतुर्विंशतिर्योज्याः। आकिञ्चन्यायतनसंगृहीता विज्ञानानन्त्यायतननिरोधालम्बनानप्यपरानपीय विंशतिरिति। किं पुनः कारणं स्वभूम्यूर्ध्वभूमिकनिरोधमेवालम्बन्त आरूप्याः; नाधोभूमिकं ध्यानवत्? न ह्यधोभूमिकं दुःखमनालम्ब्य तन्निरोधः शक्यमालम्बितुम्। दुःखं च सर्वं सास्रवमेव। एष च नियमः। "न मौलाः कुशलारूप्याः सास्रवाधरगोचराः" (अभि० को० ८.२१) इत्येतत्कारणम्। ध्यानानां तु समस्तालोचनत्वान्न प्रतिषेधः। वक्ष्यति हि "ध्यानं सद्विषयं शुभम्" (अभि० को० ८.२०) इति। अथ कस्मान्निरोधमेवालम्बन्ते, न पुनर्दुःखं समुदयं वा? भवाग्रादधोभूमेर्वीतरागत्वात्। तस्य हि भावाग्रिक एव नवमः प्रकारो वज्रोपमवध्योऽवशिष्ट इति। *अधोभूमिप्रतिपक्षालम्बनं तु भवतीति*। अन्वयज्ञानमधिकृतम्। तच्च वज्रोपमसमाधिसम्प्रयुक्तं वेदितव्यम्। *तस्य प्रतिपक्षस्य अन्योन्यहेतुत्वादिति*। "अन्योन्यं नवभूमिस्तु मार्गः समविशिष्टयोः" (अभि० को० २.५२) इति वचनात्। सर्वं हि मार्गान्वयज्ञानं नवभूमिकान्वयज्ञानपक्षालम्बनमिति।

मधिकान् प्रक्षिप्यानागम्यसंगृहीता अशीतिर्वज्रोपमा भवन्ति । एवं यावच्चतुर्थध्यान-संगृहीताः ।

आकाशानन्त्यायतनादिषु यथाक्रमं चत्वारिंशत्, द्वात्रिंशत्, चतुर्विंशतिश्च भवन्ति ।

---

*येषां त्विति* विस्तरः । येषामाभिधार्मिकाणां *मार्गान्वयज्ञानमपि न* केवलनिरोधान्वयज्ञानमेकैक*भूमिप्रतिपक्षालम्बनमिष्टम्, तेषामष्टाविंशतिमधिकान् प्रक्षिप्य अनागम्यसंगृहीता अशीतिर्वज्रोपमा भवन्ति* । कथं कृत्वा ? पूर्वकाः कृत्स्नस्यान्वयज्ञानपक्ष्यस्यालम्बना मार्गान्वयज्ञानाकारैः सम्प्रयुक्ताश्चत्वारः ।

इदानीमेक*ीयमते*नैकैकभूमिप्रतिपक्षालम्बना अपि व्यवस्थाप्यन्ते— अनागम्य-संगृहीताः प्रथमध्यानप्रतिपक्षालम्बना मार्गान्वयज्ञानाकारैः सम्प्रयुक्ताश्चत्वारः । एवं यावदाकिञ्चन्यायतनप्रतिपक्षालम्बना मार्गान्वयज्ञानाकारैः सम्प्रयुक्ता-श्चत्वार इत्येवमष्टाविंशतिरधिका भवन्ति । एवमष्टाविंशतिमधिकान् प्रक्षिप्य द्वापञ्चाशदशीतिर्भवन्ति । किं पुनः कारणं भवाग्रप्रतिपक्षालम्बना मार्गान्वय-ज्ञानाकारैः सम्प्रयुक्ताश्चत्वारो न गण्यन्ते ? आह—न भवाग्रसंगृहीतोऽनास्रवो मार्गो भवाग्रप्रतिपक्षोऽस्ति, प्रथमध्यानभूमिकस्त्वस्ति, यावदाकिञ्चन्या-यतनभूमिक इति । तस्मात् तद्भूमिप्रतिपक्षालम्बना एवोक्ताः, न भवाग्रप्रतिपक्षा-लम्बना इति ।

अपरे पुनर्व्याचक्षते—*येषां तु मार्गान्वयज्ञानमप्येकैकभूमिप्रतिपक्षालम्बन-मिष्टम्* । यथा निरोधान्वयज्ञानमिष्टमित्यभिप्रायः । तेषां भावाग्रिकदुःख-समुदयान्वयज्ञानाकारैः सम्प्रयुक्ता अष्टौ । निरोधमार्गधर्मज्ञानाकारैः सम्प्रयुक्ता अष्टौ । निरोधान्वयज्ञानाकारैः सम्प्रयुक्ताः प्रथमध्याननिरोधा-लम्बनाश्चत्वारः । एवं यावद् भवाग्रनिरोधालम्बनाश्चत्वार इति द्वात्रिंशद्भवन्ति । एवं मार्गान्वयज्ञानाकारैरपि सम्प्रयुक्तास्तथैव द्वात्रिंशदिति कृत्वा । *अष्टाविंशति-मधिकान् प्रक्षिप्यानागम्यसंगृहीता अशीतिर्वज्रोपमा भवन्तीति* । तेषां हि ये हि कृत्स्नस्यान्वयज्ञानपक्षस्यालम्बनान्मार्गान्वयज्ञानाकारैः सम्प्रयुक्ताश्चत्वारस्ते न सन्ति । भवाग्रप्रतिपक्षालम्बनास्तु तत्स्थाने भवन्तीत्यतो अशीतिर्वज्रोपमा भवन्तीति ।

*एवं यावच्चतुर्थध्यानसंगृहीताः* । कथम् ? अष्टाविंशतिमधिकान् प्रक्षिप्य ध्यानान्तरसंगृहीता अशीतिर्वज्रोपमा भवन्ति । यथा ध्यानान्तरसंगृहीताः, एवं प्रथमद्वितीयतृतीयचतुर्थध्यानसंगृहीताः प्रतिध्यानमशीतिर्वज्रोपमा भवन्ति ।

पुनर्गोत्रेन्द्रियभेदात् भूयांसो भवन्ति ॥ ४४ ॥

*आकाशानन्त्यायतनादिष्विति*। भवाग्रवर्ज्येषु त्रिष्वारूप्येषु *यथाक्रमं चत्वारिंशत् द्वात्रिंशच्चतुर्विंशतिश्च भवन्ति*। कथं कृत्वा ? आकाशानन्त्यायतने तावदष्टाविंशत्यां वज्रोपमेष्वाकाशानन्त्यायतनप्रतिपक्षालम्बनात् मार्गान्वयज्ञानाकारैः सम्प्रयुक्तांश्चतुरः प्रक्षिप्य यावदाकिञ्चन्यायतनप्रतिपक्षालम्बनांश्चतुर इति द्वादश प्रक्षिप्य चत्वारिंशद्भवन्ति। एवं चतुर्विंशत्यां विज्ञानानन्त्यायतनप्रतिपक्षालम्बनांश्चतुरः प्रक्षिप्य, आकिञ्चन्यायतनप्रतिपक्षालम्बनांश्चतुरः प्रक्षिप्य द्वात्रिंशद्भवन्ति। एवं विंशत्यामाकिञ्चन्यायतनप्रतिपक्षालम्बनांश्चतुरः प्रक्षिप्य चतुर्विंशतिर्भवन्ति।

आह—नन्वपदिष्टमधोभूमिप्रतिपक्षालम्बनं तु भवति, तस्यान्योन्यहेतुत्वादिति; अथ कस्मात् स्वभूम्यूर्ध्वभूमिप्रतिपक्षालम्बना एवोक्ता आकाशानन्त्यायतनादिसंगृहीताः, नाधोभूमिप्रतिपक्षालम्बना इति ? अत्रोच्यते—अविशेष्य नवभूमिकमन्वयज्ञानपक्षं मार्गमधोभूमिप्रतिपक्षालम्बनं भवतीत्युक्तम्। न पुनराकाशानन्त्यायतनादिसंगृहीतस्याधोभूमिप्रतिपक्षालम्बनम्। किं तर्हि ? स्वभूम्यूर्ध्वभूमिकप्रतिपक्षालम्बनमेव। तत्राविशेषरूपेणाधरालम्बनमन्वयज्ञानं भवति, न विशेषस्वरूपेण। स्वभूम्यूर्ध्वभूम्यालम्बनं तु विशेषरूपेणापि भवतीति।

एष तु पूर्वको *वैभाषिकाणां* स्थापनापक्षः। सामान्यरूपेणैव सर्वमन्वयज्ञानपक्षमालम्बतेऽन्वयज्ञानमिति। तथा ह्याचार्य*सङ्घभद्रे*णोक्तम्—"सर्वं हि मार्गान्वयज्ञानं नवभूमिकान्वयज्ञानपक्षालम्बनम्" इति।

अपरे त्वेवं व्याचक्षते—भावाग्रिकदुःखसमुदयान्वयज्ञानाकारैः सम्प्रयुक्ता अष्टौ, निरोधान्वयज्ञानाकारैः सम्प्रयुक्ता आकाशानन्त्यायतननिरोधालम्बनाश्चत्वारः, एवं यावद्भावाग्रिकनिरोधालम्बनाश्चत्वार इति षोडश, मार्गान्वयज्ञानाकारैरपि सम्प्रयुक्ता आकाशानन्त्यायतनप्रतिपक्षालम्बनाश्चत्वारः, एवं यावद्भवाग्रप्रतिपक्षालम्बनश्चत्वार इति षोडश। त एते द्विषोडश, पूर्वोक्ताश्चाष्टाविति चत्वारिंशदाकाशानन्त्यायतनसंगृहीता वज्रोपमा भवन्ति। विज्ञानानन्त्यायतनसंगृहीता द्वात्रिंशत्। आकाशानन्त्यायतननिरोधप्रतिपक्षालम्बनानष्टावपनीयेति आकिञ्चन्यायतनसंगृहीताश्चतुर्विंशतिः। विज्ञानानन्त्यायतननिरोधप्रतिपक्षालम्बनानप्यपरानष्टावपनीयेति। भवाग्रस्यापि हि तेऽधोभूमिकं प्रतिपक्षमार्गमाचक्षत इति।

*पुनर्गोत्रेन्द्रियभेदाद् भूयांसो भवन्तीति*। कथम् ? ये यावदष्टौ सर्वप्रथमा उक्ताः, तेषाम्। यो भावाग्रिकदुःखालम्बनोऽनित्याकारसम्प्रयुक्तो वज्रोपमः,

**यस्त्वसौ भावाग्रिको नवमः प्रकार उक्तो यस्य वज्रोपमेन प्रहाणम्,**

**तत्क्षयाप्त्या क्षयज्ञानम्,**

तस्य पुनर्नवमस्य प्रकारस्य क्षयप्राप्त्या सह क्षयज्ञानमुत्पद्यते। वज्रोपसमाधेरनन्तरं पश्चिमो विमुक्तिमार्गः। अतएव तत्क्षयज्ञानं सर्वास्रवक्षयप्राप्तिसहजत्वात् प्रथमतः।

**अशैक्षोऽर्हन्नसौ तदा।**

उत्पन्ने च पुनः क्षयज्ञाने सोऽर्हत्त्वप्रतिपन्नकः अशैक्षो भवत्यर्हंश्चार्हत्त्वफलप्राप्तः। फलान्तरं प्रति पुनः शिक्षितव्याभावादशैक्षः। अत एव स परार्थकरणार्थत्वात्[1], सर्वसरागपूजार्हत्त्वाच्चार्हन्निति सिद्धं भवति।

अन्ये सप्त पूर्वोक्ताः पुद्गलाः शैक्षा इति।

---

तस्य षड्गोत्रभेदात् षोढा भेदः। एवं दुःखाद्याकारसम्प्रयुक्तानां त्रयाणां प्रत्येकं षोढा भेदः। तेषामपि प्रत्येकं मृदुमध्याधिमात्रेन्द्रियभेदाद्भेदः। यथा चैषां प्रत्येकं गोत्रेन्द्रियभेदाः, एवं भावाग्रिकसमुदयालम्बनानां चतुर्णां प्रत्येकं षड्गोत्रभेदात् षोढा भेदः। इन्द्रियभेदाच्च त्रिधा भेदः। यथा चैषामष्टानां गोत्रेन्द्रियभेदात् प्रत्येकं षोढा त्रिधा च भेदः, एवं सर्वेषामनागाम्यसंगृहीतानां ज्ञानाकारालम्बनभेदभिन्नानां यावदाकिञ्चन्यायतनसंगृहीतानां गोत्रेन्द्रियभेदाद् भेदः। अनया वर्तन्या योज्यः।

एवं वा योज्यः—प्रथमे पक्षे द्वापञ्चाशदनागाम्यसंगृहीताः। यावद्विंशतिराकिञ्चन्यायतनसंगृहीता इत्यभिसमस्य चतुरशीतिरुत्तराणि त्रीणि शतानि वज्रोपमानां भवन्ति, तानि षड्गुणीकृत्य त्रिगुणीकृत्य च षट्सहस्राणि नवशतानि द्वादशोत्तराणि भवन्ति। द्वितीयपक्षे यत्रादितोऽशीतिः, यावदाकिञ्चन्यायतने चतुर्विंशतिरिति एकपिण्डतः षट्सप्तत्युत्तराणि पञ्चशतानि भवन्ति। गोत्रेन्द्रियभेदात् षड्गुणीकृत्य त्रिगुणीकृत्य च दशसहस्राणि अष्टषष्ट्युत्तराणि च त्रीणि शतानि वज्रोपमानां भवन्तीति॥ ४४॥

*अत एव तत्क्षयज्ञानमिति*। कुतः? इत्याह—*सर्वास्रवक्षयप्राप्तिसहजत्वात् प्रथमत* इति। यस्मात् सर्वास्रवक्षयप्राप्त्या सह जातं तत्प्रथमतो ज्ञानम्। तस्मात् क्षयज्ञानमित्युच्यते; मध्यपदलोपात्। नैरुक्तिविधानतो वा। सर्वग्रहणं स्रोतआपन्नादिज्ञानविशेषणार्थम्। प्रथमतोग्रहणमनुत्पादज्ञानादिविशेषणार्थम्। सङ्केतापेक्षया हि शब्दप्रवृत्तिः। *अत एव स* इति। स्वार्थपरिसमाप्तेः। स

---

१. परमार्थ०–का०।

केन ते शैक्षाः ? आस्रवक्षयाय नित्यं शिक्षणशीलत्वाच्छिक्षात्रये। अधिशीलमधिचित्तमधिप्रज्ञं च। ताः पुनः शीलसमाधिप्रज्ञास्वभावाः।

पृथग्जनोऽपि शैक्षः प्राप्नोति ? न; यथाभूतं सत्याप्रज्ञानात् पुनश्चापशिक्षणात्। अत एव द्विरभिधानं सूत्रे—"शिक्षायां शिक्षते, शिक्षायां शिक्षत इति शिवक तस्माच्छैक्ष इत्युच्यते" इति। 'यः शिक्षत एव नापशिक्षते स शैक्षः' इत्यवधारणं यथा विज्ञायेत।

प्रकृतिस्थ आर्यः कथं शिक्षणशीलः ? आशयतः। स्थिताध्वगवत्, प्राप्त्यनुषङ्गतश्च शिक्षात्रयस्य।

---

*परार्थकरणार्हत्वादर्हन्*। परार्थकरणयोग्यत्वादित्यर्थः। *सर्वसरागपूजार्हत्वाच्चेति*। सरागाः पृथग्जनशैक्षाः, तेषां सर्वेषां पूजामर्हतीत्यर्हन्। *सिद्धं भवतीति*। किं सिद्धं भवति ? इत्याह—*अन्ये सप्त पूर्वोक्ताः पुद्गलाः शैक्षा* इति। त्रयः फलस्थाश्चत्वारश्च प्रतिपन्नका उक्ताः। असावेवाशैक्ष इत्यवधारणादेतदन्ये आर्याः शैक्षा इति सिद्धम्।

*केन ते शैक्षा* इति। केन कारणेन ते सप्त पुद्गलाः शैक्षा इत्युच्यन्ते ? इत्याह—*आस्रवक्षयाय नित्यं शिक्षणशीलत्वादि*ति। शिक्षा शीलमेषामिति शैक्षाः। "शीलम्" (४.४.६१) "छत्रादिभ्यो णः (पा० सू० ४.४.६२) इति लक्षणात्। क्व शिक्षणशीलाः ? *शिक्षात्रये*। किं शिक्षात्रयम् ? *अधिशीलमधिचित्तमधिप्रज्ञं च*। किंस्वभावास्ताः ? इत्याह—*ताः पुनः शीलसमाधिप्रज्ञास्वभावा* इति। शीले शिक्षा अधिशीलम्, एवं यावत्प्रज्ञायां शिक्षेत्यधिप्रज्ञमिति। "अव्ययं विभक्ति०" (पा० सू० २.१.६) इत्यव्ययीभावसमासः। शिक्षाक्रियाणां त्वव्यतिरेकाच्छीलादिस्वभावाः शिक्षा इति व्याचष्टे।

*पृथग्जनोऽपि शैक्षः प्राप्नोतीति*। पृथग्जनोऽपि विनयोक्तासु शिक्षासु शिक्षत इति ? *न, यथाभूतं सत्याप्रज्ञानात्*। नैतदेवम् ? यथाभूतं सत्यानां दुःखादीनां अप्रज्ञानादनवबोधात्। "तद्धि भिक्षवो दृष्टं यदार्यया प्रज्ञया" इति वचनात्। तथा हि सूत्रे अधिशीलमधिचित्तं वा शिक्षां विस्तरेणोक्त्वाह—"अधिप्रज्ञं शिक्षा कतमा ? इदं दुःखमार्यसत्यमिति यथाभूतं प्रजानाति, अयं दुःखसमुदयः, अयं दुःखनिरोधः, इयं दुःखनिरोधगामिनी प्रतिपदार्यसत्यम्" इति, यथाभूतसत्याप्रज्ञानात्। यत्र च शिक्षिताः शीलादिषु, तत्र पुनरपशिक्षणात्। प्रातिमोक्षसंवरपरित्यागतः ऊष्मगतादिपरिहाणितश्चार्यः पुनर्यद्यपि किंचित् परित्यजति, न तु सर्वम्। न ह्यार्यस्य कदाचिदपि शिक्षात्रयं नास्तीति।

अथ शैक्षा धर्माः कतमे ? शैक्षस्यानास्रवाः ।

अशैक्षाः कतमे ? अशैक्षस्यानास्रवाः ।

निर्वाणं कस्मान्न शैक्षम् ? अशैक्षपृथग्जनयोरपि तद्योगात् ।

कस्मान्नाशैक्षम् ? शैक्षपृथग्जनयोरपि तद्योगात् ।

त एते सर्व एवाष्टावार्यपुद्गला भवन्ति । प्रतिपन्नकाश्चत्वारश्च फले स्थिताः । तद्यथा—स्रोतआपत्तिफलसाक्षात्क्रियायै प्रतिपन्नकः स्रोतआपन्नः । एवं यावदर्हत्त्वफलसाक्षात्क्रियायै प्रतिपन्नकोऽर्हन्निति ।

नामत एतेऽष्टौ भवन्ति । द्रव्यतस्तु पञ्च । प्रथमः प्रतिपन्नकः, चत्वारश्च फलस्थाः । शेषाणां प्रतिपन्नकानां त्रिफलस्थाव्यतिरेकात् ।

अनुपूर्वाधिगमं प्रत्येवमुच्यते । भूयःकामवीतरागौ तु स्यातां दर्शनमार्गे सकृदागाम्यनागामिफलप्रतिपन्नकौ, न च स्रोतआपन्न-सकृदागामिनाविति ।

---

*प्रकृतिस्थ आर्य* इति । असमाहितावस्था सत्त्वानां प्रकृतिः, तत्रस्थ आर्यः पिण्डपातचारादिगतः । *न शिक्षणशील* इति । न शैक्षः स्यादित्यभिप्रायः । *आशयत* इति । छन्दतः । *स्थिताध्वगवत्* । अध्वग उच्यते योऽध्वानं गच्छति, संस्थितोऽप्यध्वग इत्युच्यते; गमनाशयस्यापरित्यागात् तद्वत् । *प्राप्त्यनुषङ्गतश्च* । शीलसमाधिप्रज्ञानां च प्राप्तयः प्रकृतिस्थस्याप्यनुपद्यन्ते । तस्मात् प्रकृतिस्थोऽपि नाशिक्षणशील एवेति ।

शैक्षाशैक्षनिर्देशप्रसङ्गेनेदमुच्यते—*अथ शैक्षा धर्माः कतमे* इत्यादि । *शैक्षास्यानास्रवा धर्माः* संस्कृतस्वभावाः । एव*मशैक्षस्याशैक्षा धर्माः* ।

*निर्वाणं कस्मान्न शैक्षम्* । यच्छैक्षेण प्राप्तमित्यभिप्रायः । *अशैक्षपृथग्जनयोरपि तद्योगादि*ति । पृथग्जनोऽपि लौकिकमार्गप्राप्तेन निर्वाणेन युज्यते ।

*प्रथमः प्रतिपन्नक* इति । दर्शनमार्गस्थः । *शेषाणामिति* विस्तरः । *शेषाणां प्रतिपन्नकानां* सकृदागाम्यनागाम्यर्हत्त्वफलप्रतिपन्नकानां *त्रिफलस्थाव्यतिरेकात्* । स्रोतआपत्तिसकृदागाम्यनागामिफलस्थेभ्योऽव्यतिरेकात् । सकृदागामिप्रतिपन्नकादयः स्रोतआपन्नादिभ्यो नान्य इत्यर्थः ।

*अनुपूर्वाधिगमं प्रत्येवमुच्यत* इति । अनुपूर्वेण चतुःफलप्राप्तिं प्रत्युच्यते—द्रव्यत पञ्चेति । *भूयःकामवीतरागौ* तु *स्याताम्* । भूतोवीतरागः क्षीणषट्प्रकारः । कामवीतरागः क्षीणनवप्रकारः । *दर्शनमार्गे* दर्शनमार्गावस्थायां यथाक्रमं

द्विविधो हि भावनामार्ग उक्तः—लौकिकः, लोकोत्तरश्चेति। केनायं शैक्षः? कुतो वैराग्यं प्राप्नोति?

**लोकोत्तरेण वैराग्यं भवाग्रात्,**

न लौकिकेन। किं कारणम्? तत ऊर्ध्वं लौकिकाभावात्, स्वभूमिकस्य वा प्रतिपक्षत्वात्। कस्मान्न प्रतिपक्षः? तत्क्लेशानुशयितत्वात्। यो हि क्लेशो यत्र वस्तुन्यनुशेते, न तस्य तद्वस्तु प्रहाणाय संवर्तते। यस्य च यः प्रतिपक्षो न तत्र स क्लेशोऽनुशेत इति।

**अन्यतो द्विधा ॥ ४५ ॥**

भवाग्रादन्यतः सर्वतो भूमेर्लौकिकेनापि वैराग्यम्, लोकोत्तरेणापि ॥ ४५ ॥

तत्र पुनः—

**लौकिकेनार्यवैराग्ये विसंयोगाप्तयो द्विधा।**

लौकिकेन मार्गेणार्यवैराग्यं गच्छतो द्विविधा विसंयोगप्राप्तय उत्पद्यन्ते—लौकिक्यः, लोकोत्तराश्च।

**लोकोत्तरेण चेत्येके,**

---

*सकृदागाम्यनागामिफलप्रतिपन्नक स्याताम्।* न च *स्रोतआपन्नसकृदागामिनौ।* किं तर्हि? तद्व्यतिरिक्तौ। तथा च सति द्रव्यतः सप्त भवन्ति—स्रोतआपत्तिसकृदागाम्यनागामिफलप्रतिपन्नकास्त्रयश्चत्वारश्च फलस्था इति अर्हत्त्वफलप्रतिपन्नक एकोऽनागामिफलस्थान्न व्यतिरिक्त इत्यवगन्तव्यम्।

*द्विविधो हि भावनामार्ग* उक्त इति। "द्विविधो भावनामार्गो दर्शनाख्यस्त्वनास्रवः" (अभि० को० ६.१) इति वचनात्।

*तत्क्लेशानुशयितत्वादिति।* यस्मात् तद्भूमिकः क्लेशस्तत्र लौकिके मार्गे आलम्बनतोऽनुशयितः। *यो हि क्लेश* इति विस्तरेण साधर्म्यवैधर्म्यदृष्टान्तं दर्शयति। यो यद्भूमिको मार्गः न स तद्भूमिकक्लेशप्रतिपक्षः; तत्क्लेशानुशयितत्वात्। असमाहिततद्भूमिकधर्मान्तरवत्। वैधर्म्येण तूपरिसामन्तकमार्गवदनास्रववत् प्रतिपक्षमार्गवद्वा। *लौकिकेनापि वैराग्यमिति।* उपरिभूमिसामन्तकेन। *लोकोत्तरेणापीति।* तत्प्रतिपक्षेण स्वाधरभूमिकेनानास्रवेण मार्गेण ॥ ४५ ॥

"*लौकिकेनार्यवैराग्ये*" इति। तद्यथा स्रोतआपन्नः शमथचरितः लौकिकेन मार्गेण वैराग्यं गच्छतः प्रतिप्रकारं *विसंयोगप्राप्तयः* सास्रवोऽनास्रवश्चोत्पद्यन्ते।

**लोकोत्तरेणाप्येवमित्यपरे । किं कारणम् ?**

**त्यक्ते क्लेशासमन्वयात् ॥ ४६ ॥**

यदि ह्यार्यमार्गेण वैराग्यं प्राप्नुवतो लौकिकी विसयोगप्राप्तिर्नोत्पद्यते, एवं सति य आर्यमार्गेणाकिञ्चन्यायतनाद् वीतरागो ध्यानं निश्रित्येन्द्रियाणि सञ्चरति, स कृत्स्नपूर्वमार्गत्यागात् केवलफलमार्गलाभाच्च ऊर्ध्वभूमिक्लेशविसंयोगेनासमन्वागतः स्यात् । त्यक्ते च तस्मिन् पुनरपि तैः क्लेशैः समन्वागतः स्यादिति ॥ ४६ ॥

**भवाग्रार्धविमुक्तोर्ध्वजातवत्[1] त्वसमन्वयः ।**

असत्यामपि तु तस्यां[2] लौकिक्यां विसंयोगप्राप्तौ न तैः समन्वागमः स्यात् । तद्यथा भवाग्रादर्धप्रकारविमुक्तस्य असत्यामपि तु लौकिक्यां तद्विसंयोगप्राप्तौ त्यक्तायामपि चेन्द्रियसञ्चारेण लोकोत्तरायां न पुनस्तैः क्लेशैः समन्वागमो भवति ।

*ध्यानं निश्रित्येति* । यावच्छैक्षः षड्भूमीर्निश्रित्येन्द्रियाणि सञ्चरति, नारूप्यमिति । "अशैक्षो नव निश्रित्य भूमीः शैक्षस्तु षड्" (अभि० को० ६.६१) इति वचनात् । तेनाह—*यो ध्यानं निश्रित्येन्द्रियाणि सञ्चरति । स कृत्स्नपूर्वमार्गत्यागादा*रूप्यमार्गाणां मृद्विन्द्रियसंगृहीतानां पूर्वलब्धानां त्यागात् । *केवलफलमार्गलाभाच्च* केवलस्यानागामिफलस्य तीक्ष्णेन्द्रियस्वभावस्य लाभात् । "स विशेषं फलं त्यक्त्वा फलमाप्नोति वर्धयन्" (अभि० को० ६.६२) इति वचनात् । *ऊर्ध्वभूमिकक्लेशविसंयोगेन* आरूप्यावचरक्लेशविसंयोगेना*समन्वागतः स्यात्* । अयं चापरो दोषः—*त्यक्ते च तस्मि*न्नूर्ध्वभूमिकक्लेशविसंयोगे *तैः क्लेशै*रूर्ध्वभूमिकैः *समन्वागतः स्यादिति* ॥ ४६ ॥

"*भवाग्रार्धविमुक्तोर्ध्वजातवत् त्वसमन्वयः*" इति । अर्धेन विमुक्तोऽर्धविमुक्तः, भवाग्रादर्धविमुक्तो भवाग्रार्धविमुक्तः; ऊर्ध्वं जात ऊर्ध्वजातः, भवाग्रार्धविमुक्तश्चोर्ध्वजातश्च भवाग्रार्धविमुक्तोर्ध्वजातौ, तयोरिवेति भवाग्रार्धविमुक्तोर्ध्वजातवत् । समन्वयस्तैस्तस्येति वाक्यशेषः । तुशब्दः पूर्वदोषव्यावर्तनार्थम् ।

तमर्थं विवृण्वन्नाह—*असत्यामिति* विस्तरः । *असत्यामपि तस्य पुद्गलस्य लौकिक्यां विसंयोगप्राप्तौ न तैः क्लेशैः समन्वागमः स्यात् । तद्यथा भवाग्रार्धप्रकारविमुक्तस्येति* विस्तरः । तस्य हि *लौकिकी* भवाग्रार्धप्रकार*विसंयोगप्राप्ति*र्नास्ति; तत्प्रतिपक्षलौकिकमार्गाभावात् । *लोकोत्तरा च तद्विसंयोगप्राप्तिर्ध्यानं*

१. भवाग्राध०—का० ।

यथा च पृथग्जनस्य प्रथमध्यानभूमेरूर्ध्वं जातस्य कामावचरक्लेशवि-संयोगप्राप्तित्यागान्न पुनस्तैः समन्वागमो भवतीत्यज्ञापकमेतत् ।

कतमया पुनर्भूम्या कुतो वैराग्यं भवति ?

**अनास्रवेण वैराग्यमनागम्येन[1] सर्वतः ॥ ४७ ॥**

आभवाग्रात् ॥ ४७ ॥

अथ यः सामन्तकं निश्रित्याधरभूमिवैराग्यं प्राप्नोति, किमस्यानन्तर्यमाग-वत् सर्वे विमुक्तिमार्गाः सामन्तकाद् भवन्ति ? नेत्याह । किं तर्हि ?

**ध्यानात् सामन्तकाद् वान्त्यो मुक्तिमार्गस्त्रिभूजये ।**

नव ह्युपपत्तिभूमयः—सर्वकामधातुः, अष्टौ च ध्यानारूप्याः । तत्र यावत् द्वितीयध्यानवैराग्यं त्रिभूमिजयः । तस्मिन् पश्चिमो विमुक्तिमार्गः सामन्त-काद् भवति, ध्यानाद्वा मौलात् ।

**नोर्ध्वं सामन्तकात्,**

---

निश्रित्येन्द्रियसञ्चारेण *त्यक्ता स्यात् । न च पुनस्तैर्भावाग्रिकक्लेशप्रकारैः समन्वागमो भवतीत्यभ्युपगम्यते भवद्भिः* । तद्वदस्य स्यात् ।

*यथा च पृथग्जनस्य प्रथमध्यानभूमेरूर्ध्वं जातस्य* द्वितीयध्यानाद्युपपन्नस्य । *कामावचरक्लेशविसंयोगप्राप्तित्यागात्* । प्रथमध्यानभूमिकाया विसंयोगप्राप्तेः "भूमिसञ्चारहानिभ्यां ध्यानाप्तं त्यज्यते शुभम् । तथारूप्याप्तम्" (अभि० को० ४.४०) इति नियमात् त्यागो भवति । *तस्मान्न पुनस्तैः* कामावचरैः क्लेशैः *समन्वागमो भवतीत्यभ्युपगम्यते । तद्वदस्यापि* पुद्गलस्य *स्यात्* । पृथग्जनस्येति ग्रहणम्—यस्मादार्यस्य लौकिकेन मार्गेण कामधातोरूर्ध्वं वा वैराग्यं गच्छतः क्लेशविसंयोगप्राप्तिर्लौकिकी लोकोत्तरा च भवति, तत्र या लौकिकी कामावचरक्लेशविसंयोगप्राप्तिः, तस्याः प्रथमध्यानभूमेरूर्ध्वजातस्य भूमि-सञ्चारेण त्यागो भवति, न लोकोत्तरायाः; "आर्ये तु फलाप्त्युत्तप्तिहानिभिः" (अभि० को० ४.४०) इति त्यागनियमात् । तस्यां च सत्यां लोकोत्तरायां प्रथमध्यानादूर्ध्वं जातस्याप्यार्यस्य न पुनस्तैः समन्वागमो सम्भवति, न त्वेवं पृथग्जनस्येति पृथग्जनग्रहणम् । *तस्मादज्ञापकमेतत्* । "त्यक्ते क्लेशासमन्व-यात्" (अभि० को० ६.४६) इति यदुक्तम् ।

"*सर्वतः*" इति । स्वोर्ध्वाधोभूमितः । तस्य सास्रवानास्रवत्वात् ॥ ४७ ॥

---

१. ०गाम्येन—का० ।

त्रिभूमिजयादूर्ध्वं मौलादेव, न पुनः सामन्तकाद्; उपेक्षेन्द्रियसामान्यात्। त्रिषु हि ध्यानेषु सामन्तकमौलयोरिन्द्रियभेदात् कश्चिन्न शक्नोति मौलं ध्यानं प्रवेष्टुम्; इन्द्रियसञ्चारस्य दुष्करत्वात्।

अतस्त्रिभूमिवैराग्ये ध्यानसामन्तकादप्यन्यो विमुक्तिमार्गो भवति।

"अनास्रवेण वैराग्यमनागम्येन सर्वतः" (अभि०को० ६.४७), इत्युक्तम्, अन्यैस्तु नोक्तम्। अत उच्यते—

**आर्यैरष्टाभिः स्वोर्ध्वभूजयः ॥ ४८ ॥**

अनास्रवैरष्टाभिर्ध्यानध्यानान्तरारूप्यैः स्वस्या ऊर्ध्वायाश्च भूमेर्वैराग्यं नाधरायाः, वीतरागत्वात्। तत्र लोकोत्तरा आनन्तर्यविमुक्तिमार्गाः सत्यालम्बनत्वात् सत्याकारप्रवृत्ता इति सिद्धम् ॥ ४८ ॥

**विमुक्त्यानन्तर्यपथा लौकिकास्तु यथाक्रमम्।**

**शान्ताद्यौदारिकाद्याकाराः,**

विमुक्तिमार्गाः शान्ताद्याकाराः, आनन्तर्यमार्गा औदारिकाद्याकाराः। ते पुनर्यथाक्रमम्—

**उत्तराधरगोचराः ॥ ४९ ॥**

विमुक्तिमार्गा उत्तरां भूमिं शान्ततः प्रणीततो निःसरणतश्चाकारयन्ति

---

*उपेक्षेन्द्रियसामान्यादि*ति। चतुर्थध्यानादिसमापत्तितत्सामन्तकयोरुपेक्षेन्द्रियं तुल्यमिति। *कश्चिन्न शक्नोती*ति मृद्विन्द्रियः। *इन्द्रियसञ्चारस्य दुष्करत्वा*दिति। उपेक्षेन्द्रियानन्तरं सुखेन्द्रियस्य सौमनस्येन्द्रियस्य वा दुष्करत्वात्।

मौलसामन्तकयोरुपेक्षेन्द्रियसामान्ये सति किमर्थं मौलादेवान्त्यं *विमुक्तिमार्गं सम्मुखीकरोति*। न सामन्तकात् वीतरागभूमिबाहुमान्यात्। *नाधराया वीतरागत्वा*दिति। तत्सामन्तकेन वाधोवैराग्यस्य कृतत्वात्। *सत्याकारप्रवृत्ता* इति। अनित्याद्याकारप्रवृत्ताः ॥ ४८ ॥

*सम्भवत* इति। यद्यधरां भूमिमौदारिकतः पश्यन्त्यूर्ध्वं तद्विपर्ययेण शान्ता इत्येके। अपरे व्याचक्षते—शान्ताद्याकाराणां कदाचिदेकेनाप्याकारेणा...

सम्भवतः । आनन्तर्यमार्गा अधरां भूमिमौदारिकतो दुःखिलतः स्थूलभित्तिकतश्च । अशान्तत्वादौदारिकतः; महाभिसंस्कारतरत्वात् । अप्रणीतत्वात् ; दुःखिलतो बहुदौष्ठुल्यतरत्वेन प्रतिकूलभावात् । स्थूलभित्तिकतः; तयैव तद्भूम्यनिःसरणाद् भित्त्यनिःसरणवत् । तेषां[1] विपर्ययेण शान्तप्रणीतनिःसरणाकाराः ॥ ४९ ॥

गतमानुषङ्गिकम् ॥

इदं[2] वक्तव्यम्—अथ क्षयज्ञानादनन्तरं किमुत्पद्यते ?

**यद्यकोप्यः क्षयज्ञानादनुत्पादमतिः,**

अकोप्यधर्मा चेदर्हन्भवति क्षयज्ञानात् समनन्तरमनुत्पादज्ञानमस्योत्पद्यते ।

**न चेत् ।**

**क्षयज्ञानमशैक्षी वा दृष्टिः,**

---

यन्ति, नावश्यं समस्तैरिति । *औदारिकत* इति । औदारिकमित्यौदारिकतः । *अशान्तत्वादौदारिकतः* । कथमशान्ताधरा भूमिः ? *महाभिसंस्कारतरत्वात्* । इदं महाभिसंस्कारं यत्नसाध्यं मार्गेण महाधरं स्थानम्, इदमपि महाभिसंस्कारं सह मार्गेणोर्ध्वं स्थानम्, इदमनयोरतिशयेनेति महाभिसंस्कारतरम्, तद्भावः तस्मात् । खिलम् दुर्भेदम्, कुत्सितं खिलं दुःखिलमिति *दुःखिलतः* । कथम*प्रणीताधरा भूमिः* ? इत्याह—*बहुदौष्ठुल्यतरत्वेन प्रतिकूलभावादिति* । दौष्ठुल्यं कायचित्तयोरकर्मण्यता. क्लेशानुकूलतेत्यर्थः । बहुदौष्ठुल्यमस्येति बहुदौष्ठुल्यम् । इदमपि बहुदौष्ठुल्यं समार्गमधरं स्थानम्, इदमपि बहुदौष्ठुल्यं समार्गमूर्ध्वं स्थानम्, इदमनयोरतिशयेनेति बहुदौष्ठुल्यतरम्, तद्भावात् । *स्थूलभित्तिकत* इति । स्थूलभित्तिकभावेन । *तयैव तद्भूम्यनिःसरणात्* । तयैव भूम्या तस्या एव भूमेरनिःसरणात् । *भित्त्यनिःसरणवत्* । यथा यथा तयैव भित्त्या तस्या एव भित्तेरनिःसरणम्, तदवष्टब्धाकाशदेशात् । *तेषां विपर्ययेणेति* । अल्पाभिसंस्कारत्वादल्पदौष्ठुल्यतरत्वेनाप्रतिकूलभावात् तया भूम्या तद्भूमिनिःसरणाद् यथाक्रमं शान्तप्रणीतनिःसरणाकाराः ॥ ४९ ॥

*गतमानुषङ्गिकम्* । *इदं वक्तव्यमिति* । क्षयज्ञानान्तराभावि वक्तव्यम् । अनुषङ्गेण तु लौकिकानन्तर्यविमुक्तिमार्गलक्षणनिर्देश इति ।

"*यद्यकोप्यः क्षयज्ञानादनुत्पादमतिः*" इति । अपुनःकर्तव्यताज्ञानम् । तदस्य

---

१. एषां—का० । २. इदं तु—का० ।

न चेदकोप्यधर्मा भवति क्षयज्ञानात् क्षयज्ञानमेवोत्पद्यते, अशैक्षी वा सम्यग्दृष्टिः। न त्वनुत्पादज्ञानम्; परिहाणिसम्भवात्।

किं पुनरकोप्यधर्मणः सा नैवोत्पद्यते?

**सर्वस्य साऽर्हतः ॥ ५० ॥**

अकोप्यधर्मणोऽप्यनुत्पादज्ञानात् कदाचिदनुत्पादज्ञानमेवोत्पद्यते, कदाचिदशैक्षी सम्यग्दृष्टिः ॥ ५० ॥

यान्येतानि चत्वारि फलान्युक्तानि, कस्यैतानि फलानि? श्रामण्यफलानि।

किमिदं श्रामण्यं नाम?

**श्रामण्यममलो मार्गः,**

अनास्रवो मार्गः श्रामण्यम्। तेन हि श्रमणो भवति; क्लेशसंशमनात्। "शमिता अनेन भवन्ति अनेकविधाः पापका अकुशला धर्मा विस्तरेण यावज्जरामरणीयाः, स्तस्माच्छ्रमण इत्युच्यते" इति सूत्रे वचनात्। अनत्यन्तशमनान्न पृथग्जनः परमार्थश्रमणः।

तस्य पुनः श्रामण्यस्य?

**संस्कृतासंस्कृतं फलम्।**

संस्कृतासंस्कृतानि हि श्रामण्यफलानि पुनश्चत्वार्युक्तानि सूत्रे। अपि तु

**एकान्नवतिस्तानि,**

कानि पुनस्तानि?

**मुक्तिमार्गाः सह क्षयैः ॥ ५१ ॥**

दर्शनहेयप्रहाणायाष्टावानन्तर्यमार्गाः, अष्टौ विमुक्तिमार्गा भावनाहेयप्रहाणाय। नवसु भूमिषु प्रत्येकं नवप्रकाराणां क्लेशानां प्रहाणाय तावन्त एवानन्तर्यमार्गाः, विमुक्तिमार्गाश्च।

---

तदानीमुत्पद्यते। *परिहाणिसम्भवा*दिति। क्लेशोत्पादावकाशोऽस्तीति नास्यानुत्पादज्ञानमुत्पद्यते। किं कारणम्? परिहाणिसम्भवात्। यस्मादस्य परिहाणिः सम्भवति। यस्य पुनरनुत्पादज्ञानम्, न तस्य परिहाणिरिति ॥ ५० ॥

*तेन हि श्रमणो भवती*ति। श्रामण्ययोगाच्छ्रमणो भवति। यथा शौक्ल्ययोगाच्छुक्लः पट इति। *शमयति क्लेशानि*ति श्रमणः।

तत्रानन्तर्यमार्गाः श्रामण्यम्, विमुक्तिमार्गाः संस्कृतानि श्रामण्यफलानि। तन्निष्यन्दपुरुषकारफलत्वात्। तेषां क्लेशानां प्रहाणान्यसंस्कृतानि श्रामण्यफलानि। एवमेकान्ननवतिर्भवन्ति ॥ ५१ ॥

एवं तर्हि बुद्धस्योपसंख्यानं कर्तव्यं जायते? न कर्तव्यम्। यद्यपि भूयांसि फलानि,

**चतुष्फलव्यवस्था तु पञ्चकारणसम्भवात्।**

यस्यां हि प्रहाणमार्गावस्थायां पञ्च कारणानि सम्भवन्ति, तस्यां किल भगवता फलं व्यवस्थापितम्।

कतमानि पञ्च?

**पूर्वत्यागोऽन्यमार्गाप्तिः क्षयसंकलनं फले ॥ ५२ ॥**

**ज्ञानाष्टकस्य लाभोऽथ षोडशाकारभावना।**

१. पूर्वमार्गत्यागः, २. अपूर्वमार्गाप्तिः; प्रतिपन्नकफलमार्गत्यागलाभात्। ३. प्रहाणसंकलनम्; सर्वस्यैकप्राप्तिलाभात् ॥ ५२ ॥

---

*तन्निष्यन्दपुरुषकारफलत्वादिति*। तस्य श्रामण्यस्यानन्तर्यमार्गलक्षणस्य यथायोगं विमुक्तिमार्गा असंस्कृतानि च निष्यन्दफलत्वात् पुरुषकारफलत्वाच्च। विमुक्तिमार्गास्तस्य निष्यन्दफलं पुरुषकारफलं च। असंस्कृतानि पुरुषकारफलमेव।

"यद्बलाज्जायते यत् तत् फलं पुरुषकारजम्" (अभि० को० २.५८, यद्बलात् प्राप्यते च यत् तच्च पुरुषकारफलमिति कृत्वा ॥ ५१ ॥

*एवं तर्हीति* विस्तरः। यथा पृथग्जनस्य पाणिनेः प्रवचने उपसंख्यानं क्रियते, एवं सर्वज्ञस्यापि बुद्धस्योपसंख्यानं कर्तव्यमुपजायत इति वाक्यार्थः।

*पूर्वमार्गत्याग* इति विस्तरः। *पूर्वमार्गत्यागः, प्रतिपन्नकमार्गत्यागात्। अपूर्वमार्गप्राप्तिश्च फलमार्गलाभादिति*। सर्वस्य दर्शनहेयप्रहाणस्यैका भावनामार्गसंगृहीता प्राप्तिः स्रोतआपत्तिफलप्राप्तिकाले लभ्यते। तथा सकृदागामिफलप्राप्तिकाले दर्शनहेयप्रहाणस्य षड्विधभावनामार्गहेयप्रहाणस्य च सर्वस्यैका सकृदागामिफलसंगृहीता प्राप्तिर्लभ्यते। एवमनागाम्यर्हत्त्वफलयोरपि योज्यम् ॥ ५२ ॥

४. युगपदष्टज्ञानलाभश्चतुर्विधानां धर्मान्वयज्ञानाम्। ५. षोडशाकारभावना अनित्याद्याकाराणाम्। इमानि हि पञ्च कारणानि फले फले भवन्ति।

यद्यनास्रवो मार्गः श्रामण्यम्, कथं लौकिकमार्गप्राप्तं फलद्वयं श्रामण्यफलं युज्यते?

**लौकिकाप्तं तु मिश्रत्वानास्रवाप्तिः धृतेः फलम्॥ ५३॥**

न हि तत्र लौकिकमार्गफलमेवप्रहाणं सकृदागामिफलं वा भवति, अनागामिफलं वा। किं तर्हि? दर्शनमार्गफलमपि प्रहाणं तत्र मिश्रीक्रियते; सर्वस्य तत्फलसंगृहीतैकविसंयोगप्राप्तिलाभात्। अत एव हि सूत्र उक्तम्—"सकृदागामिफलं कतमत्? यत् त्रयाणां संयोजनानां प्रहाणं रागद्वेषमोहानां च तनुत्वमिति। अनागामिफलं कतमत्? यदुत पञ्चानामवरभागीयानां संयोजनानां प्रहाणम्" इति। अनास्रवया च विसंयोगप्राप्त्या तत्प्रहाणं सन्धार्यते। तद्बलेन परिहीणात्[1]। अतोऽप्यस्य मरणं युक्तं श्रामण्यफलम्॥ ५३॥

---

*चतुर्विधानां धर्मान्वयज्ञानामिति*। सत्यभेदाच्चतुर्विधानां धर्मज्ञानानामन्वयज्ञानानां च तथैव चतुर्विधानामिति। *युगपदष्टज्ञानलाभः*। *लौकिकमार्गप्राप्तं फलद्वयमिति*। सकृदागामिफलमनागामिफलं च। तद्धि लौकिकेनापि मार्गेण प्राप्तं सम्भवति। तत्कथं *श्रामण्यस्यानास्रवमार्गलक्षणस्य फलं युज्यते*?

*दर्शनमार्गफलमपि प्रहाणमिति*। अपिशब्दाद् भावनामार्गफलमपि प्रहाणं गृह्यते। तस्य द्विप्रकारस्यापि प्रहाणस्य सकृदागामिफलसंगृहीता अनागामिफलसंगृहीता वा एका प्राप्तिर्लभ्यते। तस्माद्दर्शनमार्गफलप्रहाणयोगादसंस्कृतं सकृदागामिफलमनागामिफलं वा श्रामण्यफलं भवति। *यत् त्रयाणां संयोजनानां प्रहाणमिति*। त्रिसंयोजनप्रहाणं दर्शनमार्गेण। पञ्चावरभागीयैकदेशानां सत्कायदृष्टिशीलव्रतपरामर्शविचिकित्सानां दर्शनमार्गेणैव प्रहाणम्। तस्य प्रहाणस्य सकृदागाम्यनागामिफलत्वे। किम्? कृतः प्रश्नेपः। तेन ज्ञायते—प्रहाणमिश्रीकरणादेवमुक्तं *भगवतेति*। *तद्बलेन परिहीणादिति*।

"लौकिकेनार्यवैराग्ये विसंयोगाप्तयो द्विधा" (अभि० को० ६.४६) इति तत्रानास्रवया विसंयोगप्राप्त्या तत्प्रहाणं यल्लौकिकमार्गसम्प्राप्तं सन्धार्यते।

---

१. परिहीणमरणात्—का०।

अभि० को० ३ : १५

**यदेव चैतच्छ्रामण्यमुक्तम्,**

**ब्राह्मण्यम्, ब्रह्मचक्रं च तदेव,**

क्लेशानां वाहनाद् ब्राह्मण्यम्। ब्रह्मचक्रं तु

**ब्रह्मवर्तनात्।**

अनुत्तरब्राह्मण्ययोगात् भगवान् ब्रह्मा। "एष हि भगवान् ब्रह्मा इत्यपि, शान्तः शीतीभूत इत्यपि" इति सूत्रात्। तस्येदं चक्रमिति ब्राह्मम्; तेन प्रवर्तितत्वात्।

**धर्मचक्रं तु दृङ्मार्गः,**

चङ्क्रमणाच्चक्रम्, तत्साधर्म्याद् दर्शनमार्गो धर्मचक्रम्।

कथमस्य साधर्म्यम्?

**आशुगत्वाद्यरादिभिः॥ ५४॥**

आशुगत्वात्, त्यजनक्रमणात्, अजितजयजिताध्यवसनाद्, उत्पतन-

---

प्राप्तियोगेनावश्यमुपतिष्ठत इत्यर्थः। *म्रियते न फलभ्रष्ट* इति। तदभावे हि लौकिकस्येव परिहीणस्य मरणं स्यात्। तद्बलेनेति। अनास्रवविसंयोगप्राप्तिबले-नेत्यर्थः। सैव च वर्तमानलौकिकमार्गोपजनितानास्रवा प्राप्तिरनागतश्चाष्टाङ्ग आर्यमार्गो लौकिकबलेन प्राप्यमाणः संस्कृतं श्रामण्यफलं व्यवस्थाप्यमानं न विरुध्यते। सूत्रे त्वसंस्कृतं श्रामण्यफलमुद्ग्राह्यते; प्राधान्यात्। संस्कृतमप्यत्रेष्ट-व्यमिति॥ ५३॥

*क्लेशानां वाहनाद् ब्राह्मण्यमि*ति। वाहिता अनेनानेकविधाः पापका अकुशला धर्मा इति ब्राह्मणः। तद्भावो ब्राह्मण्यम्=अनास्रवो मार्गः। कथं ब्रह्मचक्रम्? इत्याह—*ब्रह्मचक्रं तु ब्रह्मवर्तनादि*ति। यस्माद् ब्रह्मणा प्रवर्तितम्, तस्मात् ब्रह्मचक्रमिति। *अनुत्तरब्राह्मण्ययोगादि*ति। अनुत्तरानास्रवमार्गयोगा-दित्यर्थः। *एष हि भगवान् ब्रह्मेति* एतदुदाहरणम्। *जीवके*नोक्तमेतत्।

"*आशुगत्वाद्यरादिभिः*" इति। आशुगत्वादिभिररादिभिश्चेत्यर्थः। *आशु-गत्वादि*ति विस्तरः। इदं मार्गस्य चक्ररत्नेन साधर्म्यमुच्यते। यथा चक्ररत्न-माशुगम्, एवं दर्शनमार्गः। पञ्चदशभिश्चित्तक्षणैः सत्याभिसमयादाशुग इति। *त्यजनक्रमणात्*। यथा तदन्यं देशं त्यजत्यन्यं देशं क्रामति, एवमयमानन्तर्यमार्गं त्यजति विमुक्तिमार्गं क्रामति सम्मुखीभावतः। सत्यान्तरत्यजनक्रमणाद्वा।

कथं तत् त्रिपरिवर्तं द्वादशाकारं च ? इदं दुःखमार्यसत्यम्, तत् खलु परिज्ञेयम्, तत् खलु परिज्ञातम्—इत्येते त्रयः परिवर्ताः । एकैकस्मिंश्च परिवर्ते चक्षुरुदपादि, ज्ञानम्, विद्या, बुद्धिरुदपादि—इत्येते द्वादशाकाराः । प्रतिसत्यमेवं

---

मयेति पूर्वमननुश्रुतेषु धर्मेषु पूर्ववत् । तत् खलु दुःखमार्यसत्यमभिज्ञया परिज्ञातं मयेति पूर्वमननुश्रुतेषु धर्मेषु पूर्ववत् । तत् खलु दुःखसमुदय आर्यसत्यमभिज्ञया प्रहीणं मयेति पूर्वमननुश्रुतेषु धर्मेषु पूर्ववत् । तत् खलु दुःखनिरोध आर्यसत्यमभिज्ञया साक्षात्कृतं मयेति पूर्वमननुश्रुतेषु धर्मेषु पूर्ववत् । तत् खलु पुनर्दुःखनिरोधगामिनी प्रतिपदार्यसत्यमभिज्ञया भावितं मयेति पूर्वमननुश्रुतेषु धर्मेषु पूर्ववत् । यावच्च मम भिक्षव एषु चतुर्ष्वार्यसत्येष्वेवं त्रिपरिवर्तं द्वादशाकारं न चक्षुरुदपादि, न ज्ञानम्, न विद्या, न बुद्धिरुदपादि; न तावदहमस्मात् सदेवकाल्लोकात् समारकात् सब्रह्मकात् सश्रमणब्राह्मणिकायाः प्रजायाः सदेवमानुषासुराया मुक्तो निःसृतो विसंयुक्तो विप्रयुक्तो विपर्यासापगतेन चेतसा बहुलं व्यहार्षम् । न तावदहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धोऽस्मीत्यध्यज्ञासिषम् । यतश्च मम भिक्षव एषु चतुर्ष्वार्यसत्येष्वेवं त्रिपरिवर्तं द्वादशाकारं चक्षुरुदपादि, यावद् बुद्धिरुदपादि । ततोऽहमस्मात् सदेवकाद्यावत् विप्रयुक्तो विपर्यासापगतेन चेतसा बहुलं व्यहार्षम् । ततोऽहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धोऽस्मीति अध्यज्ञासिषम्' । अस्मिन् खलु पुनर्धर्मपर्याये भाष्यमाणे आयुष्मतः *कौण्डिन्यस्य* विरजो विगतमलं धर्मेषु धर्मचक्षुरुत्पन्नमशीतेश्च देवतासहस्राणाम् । तत्र भगवानायुष्मन्तं कौण्डिन्यमामन्त्रयते स्म— 'आज्ञातस्ते कौण्डिन्य धर्मः' ? 'आज्ञातो मे भगवन् !' 'आज्ञातस्ते कौण्डिन्य धर्मः' ? 'आज्ञातो मे सुगत !' 'आज्ञाता आयुष्मता कौण्डिन्येन धर्मः' इति भौमा यक्षाः शब्दमुदीरयन्ति घोषमनुश्रावयन्ति । एतन्मार्षा भगवता वाराणस्यां ऋषिपतने मृगदावे त्रिपरिवर्तद्वादशाकारं धर्मचक्रं प्रवर्तितम् । अप्रवर्तितपूर्वं श्रमणेन वा ब्राह्मणेन वा वा देवेन वा मारेण वा ब्रह्मणा वा केनचित् पुनर्लोके सहधर्मेण बहुजनहिताय" (     ) इति विस्तरः ।

तदेव*मार्यस्य कौण्डिन्यस्य दर्शनमार्ग उत्पन्ने* देवताभिरुक्तं भगवता प्रवर्तितं धर्मचक्रमिति । सूत्रवचनात् दर्शनमार्गो धर्मचक्रमिति गम्यते ।

कथं *त्रिपरिवर्तमिति* विस्तरः । *इदं दुःखमार्यसत्यमित्येकः* परिवर्तः । *तत् खलु परिज्ञातव्यमिति* द्वितीयः । *तत् खलु परिज्ञातमिति* तृतीयः । इत्येते *त्रयः परिवर्ताः । एकैकस्मिन् परिवर्ते* इदं दुःखमित्यस्मिंश्चक्षुरुदपादि *ज्ञानं विद्या*

भवन्ति । त्रिकद्वादशकसाधर्म्यात्तु त्रिपरिवर्तं द्वादशाकारमुक्तम् । द्वयसप्तस्थान-कौशलदेशनावत्[1] ।

एभिश्च परिवर्तैर्दर्शन-भावनाशैक्षमार्गा यथासंख्यं दर्शिता इति वैभाषिकाः ।

---

*बुद्धिरुदपादीति चत्वार आकाराः*, परिज्ञातव्यमित्यस्मिन् पुनश्चत्वारः, परिज्ञात-मित्यस्मिन् पुनरपि चत्वारः—इत्येते द्वादशाकाराः । तत्र प्रत्यक्षार्थत्वादनास्रवा प्रज्ञा चक्षुः । निःसंशयत्वाज्ज्ञानम् । भूतार्थत्वाद् विद्या । विशुद्धत्वाद् बुद्धिः; विशुद्धा धीर्बुद्धिरिति निरुक्तेः । पुनर्बाह्यकानां सत्येषु दर्शनं कुदृष्टिविचिकित्सा-विद्यानामप्रतिपक्षः सास्रवं चेति ततो विशेषणार्थं चक्षुरादिग्रहणम् पुनस्त्रिषु परिवर्तेषु प्रथमं दर्शनं चक्षुः । यथादृष्टव्यवचारणं ज्ञानम् । यावद्भाविकता-मुपादाय विद्या; यावद्विद्यमानग्रहणात् । यथावद्भाविकतामुपादाय बुद्धिः; यथाभूतार्थावबोधात् । पुनरननुश्रुतेषु धर्मेष्वानुमानिकज्ञानप्रतिषेधार्थं चक्षु-रित्याह । आधिमोक्षिकज्ञानप्रतिषेधार्थं ज्ञानमिति । आभिमानिकज्ञानप्रतिषेधार्थं विद्येति । सास्रवप्रतिषेधार्थं बुद्धिरिति । *प्रतिसत्यमेव भवन्तीति* । अयं दुःख-समुदय आर्यसत्यम्, तत् खलु प्रहातव्यम्, तत् खलु प्रहीणमित्येते त्रयः परिवर्ताः । एकैकस्मिं परिवर्ते चक्षुरुदपादि, ज्ञानम्, विद्या, बुद्धिरित्येते द्वादशाकाराः । एवं निरोधमार्गसत्ये अपि योज्ये । आह—यदि प्रतिसत्यमेवं भवन्ति, त्रयः परिवर्ता द्वादश चाकारा द्वादश परिवर्ताः अष्टचत्वारिंशच्चाकाराः प्राप्नुवन्ति, कस्मात् 'त्रिपरिवर्तं द्वादशाकारम्' इत्युक्तम् ? अत उच्यते—*त्रिकद्वादशकसाधर्म्यात् तु त्रिपरिवर्तं द्वादशाकारमुक्तमिति* । *द्वयसप्तस्थान-कौशलदेशनावदिति* । द्वयदेशनावत्, सप्तस्थानकौशल्यदेशनावच्च । तद्यथा विस्तरमुक्त्वा "तेन हि भिक्षो द्वयं ते देशयिष्यामि, तच्छृणु साधु च सुष्ठु च मनसिकुरु भाषिष्ये । द्वयं कतमत् ? चक्षूरूपाणि यावन् मनोधर्माश्च" इति । यथेह द्वयसाधर्म्याद् द्वयमित्युक्तम्, एवं त्रिकद्वादशकसाधर्म्यात् त्रिपरिवर्तं द्वादशाकारमुक्तम् । यथा च सप्तस्थानकुशलो भिक्षुः रूपं यथाभूतं प्रजानाति, रूपसमुदयम्, रूपनिरोधम्, रूपनिरोधगामिनीं प्रतिपदम्, रूपस्यास्वादं च, आदीनवं च, निःसरणं च यथाभूतं प्रजानातीति सप्तस्थानकुशलो भिक्षुः त्रिविधार्थोपपरीक्षी क्षिप्रमेवास्मिन् धर्मविनये दुःखस्यान्तं प्रजानातीति; प्रत्येकं स्कन्धेषु सप्तस्थानकुशलसाधर्म्यात् । एवमिहापि त्रिकद्वादशकसाधर्म्यात् त्रिपरिवर्तं द्वादशाकारमुक्तमिति ।

---

1. कौशला०—का० ।

यद्येवम्, न तर्हि दर्शनमार्ग एव त्रिपरिवर्त्तो द्वादशाकार इति कथमसौ धर्मचक्रं व्यवस्थाप्यते ? तस्मात् स एव धर्मपर्यायो धर्मचक्रं त्रिपरिवर्तं द्वादशाकारं च युज्यते ।

कथं च पुनस्त्रिपरिवर्तम् ? सत्यानां त्रिःपरिवर्त्तनात् । कथं द्वादशाकारम् ? चतुर्णां सत्यानां त्रिधाकरणात् । दुःखं समुदयो निरोधो मार्ग इति परिज्ञप्तव्यम्[1]; प्रहातव्यम्[2], साक्षात्कर्तव्यम्, भावयितव्यमिति; परिज्ञातम्, प्रहीणम्, साक्षात्कृतम्, भावितमिति ।

तस्य पुनः प्रवर्तनं परसन्ताने गमनम्; अर्थज्ञापनात् ।

---

*एभिश्चेति* विस्तरः । *एभिश्च परिवर्तैर्यथासूत्रनिर्दिष्टैर्दर्शनभावनाशैक्षमार्गा यथासंख्य दर्शिताः* । इदं दुःखमार्यसत्यमित्यारभ्य यावदियं दुःखनिरोधगामिनी प्रतिपदार्यसत्यमिति दर्शनमार्गो दर्शितः । तत् खलु दुःखमार्यसत्यमभिज्ञया परिज्ञातव्यमित्यारभ्य यावत् तत् खलु दुःखनिरोधगामिनी प्रतिपदार्यसत्यम-भिज्ञया भावयितव्यमिति भावनामार्गो दर्शितः । तत् खलु दुःखमार्यसत्यमभि-ज्ञया परिज्ञातमित्यारभ्य यावत् तत् खलु दुःखनिरोधगामिनी प्रतिपदार्य-सत्यमभिज्ञया भावितमित्यशैक्षमार्गो दर्शित इति ।

अत्राचार्य आह - *यद्येवमिति* विस्तरः । यद्येवमेभिः परिवर्तैर्दर्शनादिमार्गा यथासंख्यं दर्शिताः । *न तर्हि दर्शनमार्ग एव त्रिपरिवर्तो द्वादशाकारः* । किं तर्हि ? एकपरिवर्तश्चतुराकार इति । *कथमसौ दर्शनमार्गो धर्मचक्रं व्यवस्थाप्यते* । त्रिपरिवर्ताभावे चक्रसाधर्म्याभावान्न चक्रं युज्यत इत्यभिप्रायः । *स एव धर्मपर्यायो* धर्मचक्रम् । तदेवं सूत्रं धर्मचक्रम्; धर्मचक्रप्रकाशनात् । त्रिपरिवर्तं द्वादशाकारं च युज्यते; तदर्थप्रकाशनात् ।

*त्रिःपरिवर्तनादिति* । दुःखं यावन्मार्ग इत्येकं परिवर्तनम् । परिज्ञातव्यं यावद्भावयितव्यमिति द्वितीयम् । परिज्ञातं यावद्भावितमिति तृतीयम् । *चतुर्णां सत्यानां त्रिधाकरणादिति* । दुःखं *समुदयो निरोधो मार्ग* इति सत्यस्वरूपं प्रथम[3] आकरणप्रकारश्चतुराकारः । *परिज्ञातव्यं प्रहातव्यं साक्षात्कर्तव्यं भावयितव्यं* इति कर्तव्यरूपां परिज्ञानक्रियां प्रति द्वितीय आकरणप्रकारश्चतु-राकारः । *परिज्ञातं प्रहीणं साक्षात्कृतं भावितमिति* परिनिष्ठितां परिज्ञानादिक्रियां प्रति तृतीय आकरणप्रकारश्चतुराकार इति । *तस्य पुनरिति* । धर्मपर्यायस्य ।

---

१. परिज्ञेयं—का० । २. प्रहातव्यम्—का० ।

३. प्रत्येक—जा० ।

अथवा—सर्व एवार्यमार्गो धर्मचक्रम्; विनेयजनसन्ताने[1] क्रमणात्[1]। तत्तु परसन्ताने दर्शनमार्गोत्पादनाद् वर्तयितुमारब्धम्, अतः प्रवर्तितमित्युच्यते ॥ ५४ ॥

अथ कस्मिन् धातौ कति श्रामण्यफलानि प्राप्यन्ते ?

**कामे त्र्याप्तिः,**

कामधातावेव त्रयाणां श्रामण्यफलानां प्राप्तिः, नान्यत्र।

**अन्त्यस्य त्रिषु,**

अन्त्यं श्रामण्यफलमर्हत्त्वं तस्य त्रिषु धातुषु प्राप्तिः।

फलद्वयस्य तावदवीतरागप्राप्यत्वादूर्ध्वमप्राप्तिर्युक्ता, तृतीयस्य तु कस्मादप्राप्तिः ?

**नोर्ध्वं हि दृक्पथः।**

ऊर्ध्वं हि कामधातोर्दर्शनमार्गो नास्ति। न च तेन विनाऽस्ति वीतरागस्यानागामिफलप्राप्तिरित्येतत् कारणम्।

किं पुनः कारणं तत्र दर्शनमार्गो नास्ति ? आरूप्येषु तावत् श्रवणाभावाद्, अधोधात्वनालम्बनाच्च।

---

*प्रवर्तनं* परसन्ताने गमनं विनेयजनसन्ताने प्रेरणम्। कथं गमनम् ? *अर्थज्ञापनात्।*

*अथ वा सर्व एवार्यमार्गो* दर्शनभावनाशैक्षमार्गो *धर्मचक्रम्। विनेयजनसन्ताने क्रमणात्।* क्रमणाच्चक्रमिति कृत्वा। यदि सर्व एवार्यमार्गो धर्मचक्रम्, कथमार्याज्ञातकौण्डिन्यस्य दर्शनमार्गमात्रोत्पादे तत् तत् प्रवर्तितमित्युक्तम् ? अत उच्यते—*तत्तु परसन्ताने आर्यकौण्डिन्य*सन्ताने। दर्शनमार्गोत्पादनाद् वर्तयितुम*ादौ* वर्तितमित्येतत् प्रवर्तितमित्युच्यते। आदिकर्मणि प्रशब्दो वर्तते, प्रभुक्त ओदन इति यथा ॥ ५४ ॥

*तृतीयस्य तु कस्मादप्राप्तिरि*ति। रूपधातूपपन्नो यदि नियाममवक्रामेत्। षोडशे चित्तक्षणे कस्मादनागामिफलप्राप्तिर्न स्यादित्यभिप्रायः।

परिहार उच्यते—

*"नोर्ध्वं हि दृक्पथः"* इति। *श्रवणाभावा*दिति। *आ*रूप्येषु श्रावकबोधिरेव भवन्ती भवेत्; स्वयम्भुबोधेरसम्भवात्। श्रावकाभिसमयश्च परतो घोषमन्तरेण न भवति। किञ्च *अधोधात्वनालम्बनाच्च।*

---

१-१. विनेयसन्तानक्रमणात्—का०।

रूपघातौ तु—

**असंवेगादिह विधा तत्र निष्ठेति चागमात् ।। ५५ ।।**

रूपावचरा हि पृथग्जनाः समापत्तिसुखसङ्गा दुःखवेदनाभावाच्च न संविजन्ते । न च विना संगेनार्यमार्गः शक्यो लब्धुम् । इयं तावद् युक्तिः ।

आगमोऽप्ययम्—"पञ्चानां पुद्गलानामिह विधा तत्र निष्ठा अन्तरापरिनिर्वायिणो यावदूर्ध्वंस्रोतसः" इति ।

विधा हि मार्गारम्भः, निर्वाणोपायत्वात् ॥ ५५ ॥

इदमुक्तम्—"यद्यकोप्यः क्षयज्ञानादनुत्पादमतिः" (अभि० ६.५०) इति । तत्र किमर्हतामप्यस्ति भेदः ? अस्तीत्युच्यते ।

**षडर्हन्तो मताः,**

सूत्र उक्तम्—"षडर्हन्तः—परिहाणधर्मा, चेतनाधर्मा, अनुरक्षणाधर्मा, स्थिताकम्प्यः, प्रतिवेधनाभव्यः, अकोप्यधर्मा चेति ।

**तेषां पञ्च श्रद्धाधिमुक्तजाः[1] ।**

अकोप्यधर्माणं वर्जयित्वाऽन्ये पञ्च श्रद्धाधिमुक्तपूर्वकाः[2] ।

---

"न मौलाः कुशलारूप्याः सास्रवाधरगोचराः" (अभि० को० ८.२१) इति । त्रिधातुकालम्बनेन च दर्शनमार्गेण भवितव्यमित्यतः स तत्र न भवतीति । *विधानं* विधा, उपाय इत्यर्थः ॥ ५५ ॥

. परिहाणं धर्मः स्वभावोऽस्येति *परिहाणधर्मा* । *चेतनाधर्मा* आत्ममारणधर्मा । *अनुरक्षणाधर्मा* यस्तां विमुक्तिमनुरक्षितुं शक्नोति । *स्थिताकम्प्यः* । यस्यां विमुक्तौ स्थितः, तस्यां अकम्प्यः । *प्रतिवेधनाभव्यः* । इन्द्रियसञ्चारभव्यः । *अकोप्यधर्मा* । कोप्योऽनिवार्यो धर्मोऽस्येत्यकोप्यधर्मा । स च द्विविधः—स्वभावतस्तीक्ष्णेन्द्रियः, इन्द्रियसञ्चारतस्तीक्ष्णेन्द्रियश्च ।

"*पञ्च श्रद्धाधिमुक्तजाः*" । एवेत्यवधारणम् । श्रद्धाधिमुक्ता भूत्वा एते जाता इत्यर्थः । *श्रद्धाधिमुक्तपूर्वका* इति यावदुक्तं भवति । षष्ठस्त्वन्यथापि भवतीति व्याख्यातम् ।

---

१. ०मुक्तिजाः—का० । २. ०मुक्तिपूर्वकाः—का० ।

**विमुक्तिः सामयिक्येषाम्,**

एषां च पञ्चानां सामयिकी कान्ता चेतोविमुक्तिर्वेदितव्या; नित्यानुरक्ष्यत्वात्। अत एवैते समयविमुक्ता उच्यन्ते। समयापेक्षाश्चैतेऽधिमुक्ताश्चेति समयविमुक्ताः मध्यपदलोपात्; घृतघटवत्।

एषां हि समयापेक्षासमाधिसम्मुखीभावः, उपकरणारोग्यदेशविशेषापेक्षत्वात्।

**अकोप्याकोप्यधर्मणः ॥ ५६ ॥**

अकोप्यधर्मणस्त्वकोप्या विमुक्तिः; कोपयितुमशक्यत्वादपरिहाणितः ॥५६॥

**अतोऽसमयमुक्तोऽसौ,**

अत एवासमयविमुक्त उच्यते। स ह्यसमयापेक्षाविमुक्तश्च; इच्छातः समाधिसम्मुखीभावात्। कालान्तरात्यन्तविमुक्तितो वा; कोप्याकोप्यधर्मणोः समयासमये विमुक्तत्वं परिहाणिसम्भवासम्भवतः।

---

"*सामयिकी*" इति। समये उपकरणारोग्यदेशविशेषादिलक्षणे भवा सामयिकी। *कान्ता* च। कान्ता चेतोविमुक्तिः। कस्मात् कान्तेति ? *नित्यानुरक्ष्यत्वात्*। कान्तं हि नित्यमनुरक्ष्यमिति लोके दृश्यते। सूत्रेऽप्युक्तम्—"तद्यथा नामैकाक्षस्य पुरुषस्य ज्ञातय एकमक्षि साधु च सुष्ठु चानुरक्षितव्यं मन्येरन्—मास्य शीतं मास्योष्णं मास्य रजोऽशवश्चक्षुषि निपतेयुर्मास्य यद्यप्येकं चक्षुरविनष्टं तदपि विनश्येदिति; एवमेव समयविमुक्तस्यार्हतोऽनुरक्ष्य एष धर्मोऽनुकम्प्योऽनुग्राह्यः। तत एवं समयविमुक्तोऽर्हन् साधु च सुष्ठु चानुरक्षितव्यं मन्यते—कच्चिदहमेतस्माद् धर्मान्न परिहीयेय" इति। स तस्मान्न परिहीयत इति।

*घृतघटवदिति*। यथा घृतस्य पूर्णो घटो घृतघट इति भवति, मध्यगतस्य पूर्णशब्दस्य लोपात्। यथा वा घृतापेक्षो घटो घृतघटः, यत्र घृतं प्रक्षेप्स्यते, अपेक्षशब्दलोपात् घृतघट इति भवति। एवमिहापि *मध्यगतस्यापेक्षशब्दस्य लोपात्* समयापेक्षाश्चैते विमुक्ताश्चेति *समयविमुक्ताः*। समयः पुनरुपकरणादिरित्युक्तम्।

कथं कोपयितुमशक्यत्वात् ? इत्याह -*अपरिहाणित* इति ॥ ५६ ॥

*कालान्तरात्यन्तविमुक्तितो* वेति। कालान्तरविमुक्तितः समयविमुक्तत्वम्, अत्यन्तविमुक्तितोऽसमयविमुक्तित्वमित्यर्थः। कथमेवम् ? इत्याह—*परिहाणि-*

**दृष्टिप्राप्तान्वयश्च सः ।**

स चाकोप्यधर्मा दृष्टिप्राप्तपूर्वको वेदितव्यः ।

किं पुनरेते षडर्हन्त आदित एव तद्गोत्रा भवन्ति ? अथ पश्चात् ?

**तद्गोत्रा आदितः केचित् केचिदुत्तापनागताः ।। ५७ ।।**

कश्चित् प्रथमत एव चेतनाधर्मगोत्रको भवति । कश्चित् पुनः परिहाणधर्मा भूत्वेन्द्रियाणामुत्तापनया चेतनाधर्मतां गतः । एवं यावदकोप्यधर्मतां गतो वेदितव्यः ।

तत्र परिहाणधर्मा यः परिहातुं भव्यः, न च चेत[1]नादिधर्मा । चेतनाधर्मा यश्चेतयितुं भव्यः । अनुरक्षणाधर्मा योऽनुरक्षितुं भव्यः । स्थिताकम्प्यो यः

---

*सम्भवासम्भवतः* । परिहाणिसम्भवात् कालान्तरविमुक्तया समयविमुक्त इत्युच्यते । परिहाण्यसम्भवादत्यन्तविमुक्त्यासमयविमुक्त इत्युच्यते ।

*"दृष्टिप्राप्तान्वयश्च सः"* इति । यदा शैक्षो भूत्वेन्द्रियाणि सञ्चरति, स दृष्टिप्राप्ततामापद्यते । अथ स्वभावतस्तीक्ष्णेन्द्रियः, स षोडशे चित्तक्षणे दृष्टिप्राप्त एव । तस्मादसावकोप्यधर्मा दृष्टिप्राप्तपूर्वक इत्युच्यते । यस्त्वर्हत्त्वावस्थायामिन्द्रियाणि सञ्चरति, नासावकोप्यधर्मा दृष्टिप्राप्तपूर्वक इत्यवगन्तव्यम् ।

*कश्चित् प्रथमत एव चेतनाधर्मगोत्रक* इति । परिहाणधर्मा नोच्यते; यस्मादुत्तापनागतो न भवतीति । *"तद्गोत्रा आदितः केचित्"* इत्यपदिष्टम्, तत् किमिदं परिहाणधर्मगोत्रं नाम यावदकोप्यधर्मगोत्रमिति, न तैः परिहाणधर्मादिगोत्रमपदिष्टम् ? तत्र केचिदेवं वर्णयन्ति—कुशलमूलानि गोत्रमिति । कस्यचिद्धि यादृशानि कुशलानि भवन्ति, यः परिहाणधर्मा यावदकोप्यधर्मा । *अन्ये* पुनराहुः—पृथग्जनावस्थामारुयेन्द्रियभेदो गोत्रमिति । *सौत्रान्तिकाः* पुनर्वर्णयन्ति—बीजं सामर्थ्यं चेतसो गोत्रमिति । पृथग्जनावस्थायां शैक्षावस्थायां तद्बीजवृत्तिलाभात् परिहाणधर्मेत्युच्यते । एवं यावदकोप्यधर्मेति ।

*तत्र परिहाणधर्मेति* विस्तरः । परिहाणधर्मा यः परिहातुं भव्य इति । यद्येतावद् ब्रूयात्, *न च चेतनादिधर्मेत्येतन्न* ब्रूयात्, सर्व एवैते चेतनाधर्मादयश्चत्वारः परिहातुं भव्या इत्येषामेवान्यतरः परिहाणधर्मा स्यात् । न तेभ्योऽन्यः पञ्चमः । अतस्तेभ्योऽन्य एवायं पञ्चम इति विशेषयन्न च चेतनादिधर्मेत्याह । चेतनाधर्मादीनां पुनश्चतुर्णां परिहाणधर्मकत्वेऽसति

---

१. का० पुस्तके नास्ति ।

परिहाणिप्रत्ययं बलवन्तमन्तरेणानुरक्षन्नपि स्थातुं भव्यः, न हातुं नापि वर्धयितुं विनाभियोगेन । प्रतिवेधनाभव्यो योऽकोप्यः प्रतिवेद्धुं भव्यः । अकोप्यधर्मा यो नैव परिहातुं भव्यः ।

प्रथमौ द्वौ पूर्वमेव शैक्षावस्थायां सातत्य-सत्कृत्यप्रयोगविकलौ । तृतीयः सातत्यप्रयोगी । चतुर्थः सत्कृत्यप्रयोगी । पञ्चम उभयथाप्रयोगी मृद्विन्द्रियस्तु । षष्ठ उभयथाप्रयोगी तीक्ष्णेन्द्रियश्च ।

नचावश्यं परिहाणधर्मा परिहीयते, नापि यावत् प्रतिवेधनाभव्यः प्रतिविध्यति । सम्भवं तु प्रत्येवमुच्यते । एवं च[1] कृत्वा धातुत्रयेऽपि षडर्हन्तो युज्यन्ते ।

---

एकैकस्य विशेषलक्षणापदेशादेव पुनरिदं वक्तव्यं जायते । चेतनाधर्मा चेतयितुं भव्यो न चानुरक्षणाधर्मा, यावन् प्रतिवेधनाभव्य इति । एवमनुरक्षणाधर्मा । *परिहाणिप्रत्ययं बलवन्तमन्तरेणेति* । यदि परिहाणिप्रत्ययो बलवान् स्यात्, परिहीयेत स इत्यभिप्रायः । अनेन बलवत्प्रत्ययवचनेन परिहाणधर्मणः पूर्वोक्ताद् विशिनष्टि । परिहाणधर्मा ह्यबलवतापि परिहाणिप्रत्ययेन परिहीयते । परिहाणिप्रत्ययाः पुनर्यथा सूत्रम्—"पञ्च हेतवः, पञ्च प्रत्ययाः समयविमुक्तस्यार्हतः परिहाणाय संवर्तन्ते । कतमे पञ्च ? कर्मान्तप्रसृतो भवति, भाष्यप्रसृतो भवति, अधिकरणप्रसृतो भवति; दीर्घचारिकायोगमनुयुक्तो भवति, दीर्घेण च रोगजातेन स्पृष्टो भवति" इति । *अननुरक्षन्नपीति* । अनेनानुरक्षणाधर्मणो विशिनष्टि । स ह्यनुरक्षन्नेव न परिहीयेत, अयं त्वननुरक्षन्नपीति । अननुरक्षन्नपि तत्फलं *स्थातुं भव्यः* तत्फले । *न हातुं* तत्फलात् । *नापि वर्धयितुं* प्रतिवेधनाभव्यताप्राप्त्या । *विनाभियोगेन* । विना वीर्येण । अनेनार्थादुक्तं भवति—यद्यभियोगं कुर्याद्भव्यः स्यादिति प्रतिवेदनाभव्याच्चायमेवं विशेषितो भवति, स हि विनाप्यभियोगेन प्रतिवेद्धुं भव्य इति ।

*प्रथमौ द्वाविति* विस्तरः । परिहाणधर्मा *सातत्यसत्कृत्यप्रयोगविकलौ* । चेतनाधर्मापि सातत्यप्रयोगेण विकलः । विशेषेण तु सत्कृत्यप्रयोगेण विकल इत्यनयोर्विशेषः । *मृद्विन्द्रियस्त्विति* । षष्ठाद् विशिनष्टि । षष्ठो हि *तीक्ष्णेन्द्रियः* । इन्द्रियकृतो ह्यनयोर्विशेषो न प्रयोगकृत इति ।

*एवं च कृत्वेति* विस्तरः । यस्मान् नावश्यमेवं भवति, तस्माद् रूपारूप्यधात्वोरपि षडर्हन्तः, न केवलं कामधातावेव षडित्यभिप्रायः ।

---

१. का० पुस्तके नास्ति ।

येषां त्ववश्यं परिहीयते यावत् प्रतिविध्यति, तेषां कामधातौ षड् रूपारूप्यधात्वोः स्थिताकम्प्यः अकोप्यधर्मा च; तयोः परिहाणिचेतनेन्द्रियसञ्चाराभावात् ॥ ५७ ॥

कः पुनरेषां कुतः परिहीयते ? फलात् ? गोत्राद्वा ?

**गोत्राच्चतुर्णां पञ्चानां फलाद्धानिः[३],**

चेतनाधर्मादीनां चतुर्णां गोत्रात् परिहाणिः । न हि परिहाणधर्मा पुनः स्वगोत्रात् परिहीयते । परिहाणधर्मादीनां पञ्चानां फलात् परिहाणिः । तेषामपि तु

**न पूर्वकात् ।**

यस्य यत् प्रथमगोत्रं स तस्मान्न परिहीयते; शैक्षाशैक्षमार्गाभ्यां दृढीकृतत्वात् । शैक्षस्तु लौकिकलोकत्तराभ्यां दृढीकृतत्वात् न परिहीयते स्वगोत्रात् ।

---

*रूपारूप्यधात्वोर्द्वौ स्थिताकम्प्य* एकः । *अकोप्यधर्मा च* द्वितीयः । स्थिताकम्प्यस्तावद् बद्धाभिरुचिः स्यात्, न प्रतिवेधनभव्यताक्रियादरवानिति । न कामधातौ स्थिताकम्प्यः प्रतिवेधनाभव्यतामपद्यते । रूपारूप्यधात्वोश्च परिहाणिप्रत्ययो बलवान् नास्तीति नासौ परिहीयते । न चेन्द्रियाणि सञ्चरन्तीति स्थिताकम्प्यगोत्रक एव संस्तत्र भवति । अकोप्यविमुक्तियोगाच्चाकोप्यधर्मापि भवति । एवेति द्वावेव तौ भवतः । नातोऽन्ये ।

*तयो* रूपारूप्यधात्वोः *परिहाणिचेतनेन्द्रियसञ्चाराभावात्* । परिहाणधर्मा तावत् तत्र नास्ति; परिहाण्यभावात् । अनुरक्षणाधर्मापि नास्ति; परिहाण्यभावेनानुरक्षितव्यायोगात् । अत एव चेन्द्रियसञ्चाराभावान् प्रतिवेधनाभव्योऽपि न भवति । तथा चोक्तम्—"स चोर्ध्वजश्च नैवाक्षसञ्चारपरिहाणिभाग्" (अभि० को० ६.४१) इति । तत्र च नात्मसञ्चेतना न परसञ्चेतनास्तीति चेतनाधर्मापि न भवतीति ॥ ५७ ॥

*चेतनाधर्मादीनां चतुर्णामिति* । चेतनानुरक्षणाधर्मस्थिताकम्प्यपरिवेधनाभव्यानाम् । *न हि परिहाणधर्मा पुनः स्वगोत्रात् परिहीयत* इति । तस्य गोत्रस्याकृत्रिमत्वात् । *परिहाणधर्मादीनां पञ्चानामिति* । यस्मात् परिहाणधर्मणोऽपि *फलात् परिहाणिः सम्भवति* । फलस्यागन्तुकत्वात् ।

"*न पूर्वकाद्*" इति । गोत्रात्, फलाच्च ।

*स तस्मान् न परिहीयत* इत्यर्हन् । कस्मात् ? इत्याह—*शैक्षाशैक्षमार्गाभ्यां दृढीकृतत्वादिति* यच्छैक्षावस्थायां गोत्रमस्ति । तच्छैक्षेण मार्गेण भावितम् ।

यत्तु पश्चात् प्रतिलब्धमुत्तापनया तस्मात् परिहीयते ।

---

अशैक्षावस्थायां च पुनर्भावितमिति । ताभ्यां दृढीकृतत्वान्न तस्मात् सोऽर्हन् परिहीयते । शैक्षस्तु कथम् ? इत्याह—*शैक्षस्तु लौकिकलोकोत्तराभ्यां दृढीकृतत्वात्* प्रथमात् गोत्रान्न परिहीयते । यत् तदात्मीयं गोत्रं यल्लौकिकेन मार्गेण पूर्वं भावितम्, शैक्षेण च मार्गेण पुनर्भावितमिति ततो न परिहीयते ।

अत्र कश्चिदाह—"यदुच्यते 'यस्य यत् प्रथमं गोत्रम्, स तस्मान् न परिहीयते शैक्षाशैक्षमार्गाभ्यां दृढीकृतत्वाद्' इति, तदेतदकारणम्; यस्माद् योऽपि चेतनाधर्मा उत्तपनागतस्तस्मात् गोत्रात् परिहीयते । तद् गोत्रं शैक्षाशैक्षाभ्यां मार्गाभ्यां दृढीकृतमिति परिहाणिं प्राप्नोति । तस्मात् गोत्रमेव तत् तादृशं यस्मादाद्यान्न परिहीयते । उत्तापनागोत्रात् तु परिहीयत इति । यदप्युक्तम् 'शैक्षस्तु लौकिकलोकोत्तराभ्यां दृढीकृतत्वान्न परिहीयते' इत्येतदप्यकारणम्; स्रोतआपन्नस्य परिहाणिप्रसङ्गात् । न हि स्रोतआपत्तिफलं लौकिकेन मार्गेण दृढीकृतम्" इति । कर्तव्योऽत्र यत्न इति ।

अत्र वयमाचार्यस्याभिप्रायं दर्शयामो येनैवमुक्तम् । कथमिति ? यत् तावदुक्तं 'चेतनाधर्मा उत्तपनागतस्तस्मात् गोत्रात् परिहीयते' इति तदयुक्तम् । यद्धि चेतनाधर्मगोत्रं शैक्षावस्थायां भावितं पुनश्चाशैक्षावस्थायामपि भावितमिति दृढीकृतम् । नैव स तस्मादर्हत्त्वात् परिहीयमाणः परिहीयते; शैक्षावस्थायां प्रथमीभूतत्वात् । उक्तं चाचार्यसङ्घभद्रेण—'यः शैक्षावस्थायां गोत्रान्तरमधिगम्यार्हत्त्वं प्राप्नोति, असावपि तं मार्गं परित्यजति । न चोत्तापनागत एव गोत्रे नावतिष्ठते' इति । यत्तु चेतनाधर्मगोत्रमशैक्षावस्थायामिदानीमेवाधिगतं न शैक्षावस्थायामधिगतम्, स तस्मात् परिहीयमाणः परिहीयते; तदवस्थाद्वया-दृढीकृतत्वात् । इति न कारणमेवैतद्भवति । यदप्युक्तम्—'शैक्षस्तु लौकिकलोकोत्तराभ्यां मार्गाभ्यां दृढीकृतत्वान्न परिहीयते इत्येतदप्यकारणम्; स्रोतआपन्नस्य परिहाणिप्रसङ्गात् । न हि स्रोतआपत्तिफलं लौकिकेन लोकोत्तरेण दृढीकृतम्' इति । तदप्यनवबुद्ध्यार्भाहितम् । तद्गोत्रं प्रति कारणमुच्यते, न फलं प्रति । तत्र हि कारणान्तरं वक्ष्यते येन प्रथमात् फलान्न परिहीयते । न हि किञ्चिदप्यस्ति फलं यद् युगपदुभाभ्यां लौकिकलोकोत्तराभ्यां प्राप्यते । गोत्रं तु लौकिकलोकोत्तराभ्यां मार्गाभ्यां दृढीकृतं भवति; ऐहजन्मिकेनोष्मगतादिना पारजन्मिकेन वा प्रहाणमार्गेणान्येन वा लौकिकेन मार्गेण लोकोत्तरेण शैक्षावस्थायां भावितत्वात् । *यत्तु पश्चात् प्रतिलब्धमुत्तापनयेति* । यदागन्तुकं गोत्रं पश्चादेव न द्वयोरवस्थयोरधिगतं *तस्मात् परिहीयते* ।

यस्य च यत् प्रथमं फलं स तस्मान्न परिहीयते । शेषात् परिहीयते । अत एव स्रोतआपत्तिफलान्नास्ति परिहाणिः ।

एवं च कृत्वा परिहाणधर्मणस्त्रयः प्रकारा भवन्ति—तदवस्थस्य परिनिर्वाणम्, इन्द्रियसञ्चारः, परिहाय वा शैक्षत्वम् । चेतनाधर्मणश्चत्वारः— एत एव त्रयः, परिहाणधर्मगोत्रप्रत्यागमनं च ।

एवमन्येषां त्रयाणामेकैकप्रकारवृद्ध्या यथाक्रमं पञ्च , षट् , सप्त प्रकारा वेदितव्याः ।

यस्य च यत् प्रथमं गोत्रं स परिहाय शैक्षीभूतस्तत्रैवावतिष्ठते, नान्यस्मिन्; अन्यथा हि गोत्रविशेषलाभाद्[1] वृद्धिरेवास्य स्यात् , न परिहाणिः ।

---

गोत्रं निर्दिश्य फलं निर्दिश्यते—*यस्य च यत् प्रथमं फलमिति* विस्तरः । *अत एव च स्रोतआपत्तिफलान्नास्ति परिहाणि*रिति । यस्मात् स्रोतआपत्तिफलं यदि प्राप्यतेऽवश्यं प्रथमं भवति । सकृदागाम्यनागामिफले तु कदाचित्तु प्रथमे भवतः, यदि भूयोवीतरागकामवीतरागयोः । कदाचिदप्रथमे, यद्यानुपूर्विकस्य । तत्र यद्यत् फलं प्रथमं भवति स्रोतआपत्तिफलम्, सकृदागामिफलम्, अनागामिफलं वा, न तस्मात् परिहीयते । *यत्तु पश्चात्* सकृदागामिफलम्, अनागामिफलम्, अर्हत्त्वफलं वा *ततः परिहीयते । एवं* च कृत्वेति । यस्य च यत्प्रथमं गोत्रं फलं च स तस्मान्न परिहीयत इति कृत्वा । *यथाक्रमं पञ्च षट् सप्त प्रकारा* इति । अनुरक्षणाधर्मणः पञ्च प्रकारा भवन्ति—तदवस्थस्य परिनिर्वाणम् . इन्द्रियसञ्चारः, परिहाय वा शैक्षत्वम्, चेतनाधर्मगोत्रप्रत्यागमनम्, परिहाणधर्मगोत्रप्रत्यागमनं च । स्थिताकम्प्यस्य षट् प्रकारा भवन्ति—त एव पञ्च, अनुरक्षणाधर्मगोत्र-प्रत्यागमनं षष्ठम् । प्रतिवेधनाभव्यस्य सप्त प्रकारा भवन्ति—एत एव च षट् , स्थिताकम्प्यगोत्रप्रत्यागमनं च सप्तमिति । *यस्य च यत्प्रथमं गोत्रं* शैक्षावस्थाया मासीत्, *स शैक्षीभूतः ।* पुनरिति वाक्याध्याहारः । *तत्रैवावतिष्ठते नान्यस्मिन्* । *अन्यथा हि गोत्रविशेषलाभा*च्छैक्षावस्थाद् गोत्राद्विशिष्टं तद् गोत्रं भवतीति । अतो विशिष्टगोत्रलाभात् *वृद्धिरेवास्य* पुद्गलस्य *स्यात्, न परिहाणि*रिति । कथं कृत्वा ? यथा तावत् परिहाणधर्मा अर्हत्त्वावस्थायामिन्द्रियोत्तापनया प्रतिवेधभव्यताप्राप्तः, सोऽर्हत्त्वात् परिहीयते । शैक्षीभूतस्तद् गोत्रादपि परिहीय-

---

१. तद्गोत्र०—का० ।

किं पुनः कारणं प्रथमात्[1] फलात्[1] नास्ति परिहाणिः ? दर्शनहेयानामवस्तुकत्वात् । आत्माधिष्ठानप्रवृत्ता ह्येते; सत्कायदृष्टिमूलकत्वात्[2] । स चात्मा नास्तीति । असदालम्बनास्तर्हि प्राप्नुवन्ति, नासदालम्बनाः; सत्यालम्बनत्वात् । वितथालम्बनास्तु । कतमश्च क्लेशो नैवमस्ति विशेषः । आत्मदृष्टिर्हि रूपादिके वस्तुनि कारकवेदकवशवर्तित्वेनात्मत्वमभूतमध्यारोपयति । तदधिष्ठानानुप्रवृत्ताश्चान्तग्राहादय[3] इत्यवस्तुका उच्यन्ते । भावनाहेयास्तु रागप्रतिघमानाविद्या रूपादिके वस्तुनि केवलं सक्त्याघातोन्नत्यसम्प्रख्यानभावेन वर्तन्त इति सवस्तुका उच्यन्ते ।

अस्ति च तच्छूतादिमात्रं यत्र तेषां प्रवृत्तयः, न त्वात्मादिलेशोऽपि अस्ति[4] ।

---

माणो न स्थिताकम्प्यगोत्रे तिष्ठति । प्रतिलोमतो यावन्न चेतनाधर्मगोत्रे । किं तर्हि ? परिहाणधर्मगोत्र एव तिष्ठतीति । *अन्यथा हीति* । यद्यन्यगोत्रेऽवतिष्ठेत । गोत्रविशेषलाभादिति परिहाणधर्मगोत्रविशिष्टगोत्रलाभात् । तस्मादवश्यमर्हत्त्वात् परिहीयमाण इन्द्रियोत्तापनादपि गोत्रात् परिहीयत इति ।

*किं पुनः कारणं प्रथमात् फलान्नास्ति परिहाणिरि*ति । यस्य यत् प्रथमं फलं स्रोतआपत्तिफलं वा सकृदागामिफलं वा अनागामिफलं वा । *दर्शनहेयानामवस्तुकत्वाद्*, अनधिष्ठानत्वादित्यर्थः । *आत्माधिष्ठानप्रवृत्ता ह्येत* इति विस्तरः । आत्मनोऽधिष्ठानेन प्रवृत्ता एते दर्शनहेयाः । कस्माद् ? इत्याह—*सत्कायदृष्टिमूलत्वात्* । यस्मादात्मदर्शनवशेन दर्शनहेयानां समुदाचारः । उक्तं च—'यानि वा पुनः पृथग्लोके दृष्टिगतानि, तानि सत्कायदृष्टिसमुदयानि सत्कायदृष्टिजातीयानि सत्कायदृष्टिप्रभवानि' इति । *स चात्मा नास्तीत्य*वस्तुकत्वान्नास्ति परिहाणिरिति । *सत्यालम्बनत्वा*दिति । सत्यानां नित्यादिनो ग्रहणात् । *कतमश्च क्लेशो नैवम्* । भावनाप्रहातव्योऽपि हि रागादिर्वितथालम्बनः; शुचिसुखनित्यात्माकारैः सत्यादितत्त्वालम्बनात् । *आत्मत्वमभूतमध्यारोपयती*ति । यथोक्तम्—"ये केचिद् भिक्षव आत्मेति आत्मीय इति समनुपश्यन्तः समनुपश्यन्ति । इमानेव ते पञ्चोपादानस्कन्धानात्मत आत्मीयतश्च समनुपश्यन्ति" (    ) इति । *तदधिष्ठानानुप्रवृत्ताश्चान्तग्राहादय* इति । आत्माधिष्ठानानुप्रवृत्ताः । शाश्वत आत्मा, उच्छेदीति वा; नास्त्यात्मा, अयमेवाग्रः; इयमेव शुद्धिः; किमसावस्ति नास्तीत्येवमाद्याकारप्रवृत्तास्तदन्ये दर्शनहेया *अवस्तुका उच्यन्ते* ।

---

१-१. प्रथमानां–का० । २. ०मूलत्वात्–का० ।
३. ०नानुवृत्ताश्रान्तग्राहदृष्ट्यादयः–का० । ४. का० पुस्तके नास्ति ।

तथा हि भावनाहेयानामस्ति प्रतिनियतं वस्तु मनापामनापादिलक्षणम्[1], न तु दर्शनहेयानामात्मादिलक्षणम्। तस्मादवस्तुका[2] उच्यन्ते।

अपि खल्वार्यस्यानुपनिध्यायतः स्मृतिसंप्रमोषात् क्लेश उत्पद्यते नोपनिध्यायतः, रज्ज्वामिव सर्पसंज्ञा। न चानुपनिध्यायत आत्मदृष्ट्यादीनामुत्पत्तिर्युज्यते[3] सन्तीरकत्वादिति नास्ति दर्शनहेयप्रहाणात्[4] परिहाणिः।

अर्हत्त्वादपि नास्ति परिहाणिरिति सौत्रान्तिकाः। एष एव च न्यायः।

कथमिदं गम्यते? आगमाद्, युक्तितश्च। १. कथमागमात्? "तद्धि भिक्षवः प्रहीणं यदार्यप्रज्ञया[5] प्रहीणम्" इत्युक्तम्। आद्यन्तयोश्च फलयोरार्यैव

---

निरधिष्ठाना उच्यन्त इत्यर्थः। *न त्वात्मादिलेशोऽस्तीति*। आदिग्रहणेनात्मीयग्रहणम्, ईश्वरादिग्रहणं वा। प्रतिनियतं *मनापामनापादिलक्षणमिति*। रागस्य भावनाहेयस्य मनापं केशदन्तशुभादिलक्षणं वस्तु। प्रतिघस्यामनापं तदशुभतादिलक्षणम्। मानस्यापि मनापं अविद्याया अपि तदेव द्वयं सम्मोहनीयं किञ्चिदिति। *न तु दर्शनहेयानामात्मादिलक्षणमिति*। न तु दर्शनहेयानामात्मात्मीयलक्षणं प्रतिनियतं वस्तु किञ्चिदस्ति। अन्यत्र तदालम्बनेभ्यो रागादिभ्यः। *तस्मादवस्तुका उच्चयन्ते*। तस्मान्न प्रतिनियतवस्तुका उच्यन्त इत्यर्थः।

*अपि खल्विति* विस्तरेणाचार्यः। *आर्यस्य* शैक्षस्यानुपनिध्यायतोऽसन्तीरयतः *स्मृतिसम्प्रमोषात्* क्लिष्टस्मृतियोगात् *क्लेश उत्पद्यते*। रागादिकः। *नोपनिध्यायतः*। *रज्ज्वामिव सर्पसंज्ञा*। कस्यचिदनुपनिध्यायतः स्मृतिसम्प्रमोषाज्जायते, नोपनिध्यायतः, तद्वत्। *आत्मदृष्ट्यादीनामिति*। अन्तग्राहदृष्ट्यादीनां ग्रहणम्। किं पुनः कारणम्? *न चानुपनिध्यायत* आत्मदृष्ट्यादीनामुत्पत्तिर्युज्यते। *सन्तीरकत्वात्*। केषाम्? आत्मदृष्ट्यादीनां क्लेशानाम्। *अतोऽनुपनिध्यानादार्यस्या*त्मदृष्ट्यादीनामुत्पत्तिर्न युज्यत इति। परिहाणिकारणाभावान् *नास्ति दर्शनहेयप्रहाणात् परिहाणिरिति*।

*अर्हत्त्वादपि नास्तीति*। न केवलं दर्शनहेयप्रहाणान्नास्ति परिहाणिः, अर्हत्त्वादपि नास्ति परिहाणिरित्य*पि*शब्देन दर्शयति। अप्रथमाभ्यां तु सकृदागाम्यनागामिफलाभ्यां परिहाणिः सम्भवति। लौकिकेन मार्गेण तत्प्राप्तिसम्भवादित्यभिप्रायः। *एष एव च न्याय* इत्याचार्यः समर्थयति। *तद्धि भिक्षवः प्रहीणमिति*।

---

१. °मनापलक्षणं–का०। २. तस्मादप्यव०–का०। ३. °मुपपत्ति०–का०।
४. °हेयक्लेश०–का०। ५. यदार्यया प्रज्ञया–का०।

प्रज्ञयाऽधिगमः। "शैक्षस्य चाप्रमादकरणीयेऽप्रमादकरणीयं प्रवेदयामि" इत्युक्तम्, नार्हतः। "अर्हतोऽप्यहमानन्द लाभसत्कारमन्तरायकरं वदामि" इत्यत्र सूत्रे दृष्टधर्मसुखविहारमात्रादेव परिहाणिरुक्ता। "या त्वनेनाकोप्यचेतोविमुक्तिः कायेन साक्षात्कृता, ततोऽहं न केनचित् पर्यायेण परिहाणं वदामि" इति चोक्तम्।

सामयिक्या अस्तीति चेत्? वयमप्येवं ब्रूमः। सा तु विचार्या—किमर्हत्त्वम्, अहोस्विद्ध्यानानीति। मौलो हि ध्यानसमाधिः समये सम्मुखीभावत् सामयिकी

---

तदेव प्रहीणम् *यदार्यप्रज्ञया प्रहीणम्*। तद्धि न पुनरुत्पद्यते। लौकिक्या तु यत्प्रहीणम्, तत् पुनरुत्पद्यत इत्यभिप्रायः। *शैक्षस्य चाप्रमाद* इति विस्तरेण द्वितीयं सूत्रपदं ज्ञापकम्—अर्हत्त्वान्नास्ति परिहाणिरिति। अयं चास्यार्थः—*शैक्षस्याप्रमादनिमित्तमप्रमादकर्म प्रवेदयाम्यप्रमादः* शैक्षेण कर्तव्य इति।

ननु च शैक्षस्याप्यार्यया प्रज्ञया प्रहाणमस्ति, कथं तस्याप्रमादकरणीयं शास्तीति? यस्मादनधिगतमनेन फलान्तरमभिगन्तव्यम्, लौकिकमार्गगतं च तस्य प्रहाणमस्तीति। अत्र *वैभाषिको* ब्रूयाद्—*अर्हतोऽप्यहमानन्द लाभसत्कार-मन्तरायकरं वदामीति* सूत्रे वचनादस्त्यर्हतोऽपि परिहाणिरित्यत इदमुच्यते। अर्हतोऽपि विस्तरेण यावदत्र सूत्रे *दृष्टधर्मसुखविहारमात्रादेव परिहाणिरुक्तेति*। कथम्? यत्र *भगवानायुष्मन्तमानन्दमामन्त्रयते स्म*—"अर्हतोऽप्यहमानन्द लाभसत्कारमन्तरायकरं वदामीति। आयुष्मान् आनन्द आह—'तत् कस्माद्?' भगवानेवमाह—'अर्हतोऽप्यहमानन्द लाभसत्कारमन्तरायकरं वदामीति। भगवानाह—'न हैवानन्द अप्राप्तस्य प्राप्तये, अनधिगतस्याधिगमाय, असाक्षात्कृतस्य साक्षात्क्रियायै; अपि तु येऽनेन चत्वार आधिचैतसिका दृष्टधर्मसुखविहारा अधिगताः, ततोऽहमस्यान्यतमस्मात् परिहाणिं वदामि। तच्चाकीर्णस्य विहरतः। *या त्वनेनैकाकिनाव्यपकृष्टेनाप्रमत्तेनातापिना प्रहितात्मना विहरता अकोप्या चेतोविमुक्तिः कायेन साक्षात्कृता, ततोऽस्याहं न केनचित् पर्यायेण परिहाणिं वदामि*। तस्मात् तर्ह्यानन्दैवं ते शिक्षितव्यम् यल्लाभसत्कारमभिभविष्यमाणो न चात्यन्तैर्लाभसत्कारैश्चित्तं पर्यादाय स्थास्यति। एवं ते आनन्द शिक्षितव्यम्'" इति।

यदि *वैभाषिक* एवं ब्रूयात्—अकोप्या इति विशेषणात् सामयिक्या अस्ति परिहाणिरिति। तत आह—*सामयिक्या अस्तीति चेदिति*। *वयमप्येवं ब्रूमः*—सामयिक्या अस्ति परिहाणिरिति। *सा तु विचार्या*। सा तु सामयिकी विमुक्तिर्विचार्या। कथम्? इत्याह—*किमर्हत्त्वं सामयिकी विमुक्तिरस्ति, आहोस्वि-*

विमुक्तिरित्युच्यते । दृष्टधर्मसुखविहारार्थं च पुनः पुनरेषणीयत्वात् कान्तेत्युच्यते । आस्वादनीयत्वादित्यपरे ।

अर्हत्त्वविमुक्तिस्तु नित्यानुगतत्वान्न युज्यते सामयिकी, अपुनःप्रार्थनीयत्वान्न कान्तेति । यदि चार्हत्त्वात् परिहाणिसम्भवोऽभविष्यत्, किमर्थं भगवानाधिचैतसिकेभ्य एव दृष्टधर्मसुखविहारेभ्यः परिहाणिमवक्ष्यत् । अतो गम्यते—सर्वस्यैवार्हतो विमुक्तिरकोप्या दृष्टधर्मसुखविहारेति अस्तु । कश्चित् लाभसत्कारव्याक्षेपदोषात् परिहीयते, वशित्वभ्रंशाद् यो मृद्विन्द्रियः । कश्चिन्न परिहीयते यस्तीक्ष्णेन्द्रियः । तत्र यः परिहीयते स परिहाणधर्मा, यो न परिहीयते सोऽपरिहाणधर्मा ।

एवं चेतनाधर्मादयोऽपि योज्याः ।

---

*ध्यानान्येव* लौकिकानि सामयिकी विमुक्तिरिति । कस्मादेवमाशंक्यते ? इत्याह—*मौलो हि ध्यानसमाधिरिति* । ध्यानमेव समाधिर्ध्यानसमाधिः । मौलध्यानग्रहणं सुखप्रतिपदामग्रत्वात् । *समये सम्मुखीभावात्* । कस्मिंश्चित् काले निःशब्दादिके सम्मुखीभावात् । समये भवा *सामयिकी विमुक्तिरित्युच्यते* । *पुनःपुनरेषणीयत्वात्* कान्तेति । परिहाणौ परिहाणौ कमनीयत्वात् प्रार्थनीयत्वादित्यर्थः ।

*आस्वादनीयत्वादित्यपर* इति । *भदन्तरामः* । सास्रवत्वादास्वादनासम्प्रयुक्तध्यानयोगात् कान्तेत्यभिप्रायः । *अर्हत्त्वविमुक्तिस्त्विति* विस्तरः । अर्हत्त्वमेव विमुक्तिरर्हत्त्वविमुक्तिः । *नित्यानुगतत्वात्* प्राप्तियोगेन । *न युज्यते सामयिकीति* । अनेन सामयिक्या विमुक्तेर्विपर्ययेणार्हत्त्वविमुक्तिं दर्शयति । *अपुनःप्रार्थनीयत्वान्न कान्तेति* । अनेन कान्तविपर्ययेऽर्हत्त्वविमुक्तिर्न कान्तेति । नित्यानुगतत्वेनास्तित्वादप्रार्थनीयत्वान्न कान्तेत्यर्थः ।

*आधिचैतसिकेभ्य एवेति* । अधिचेतसि भवा आधिचैतसिका *दृष्टधर्मसुखविहाराः*, तेभ्य एव । *किमर्थं परिहाणिमवक्ष्यदिति* । ये ते चैतसिका दृष्टधर्मसुखविहारा अधिगताः, ततोऽहमस्यान्यतमस्मात् परिहाणिं वदामीति वचनात् । यद्यर्हत्त्वात् सामयिकीविमुक्तिलक्षणात् परिहाणिसम्भवोऽभविष्यत्, किमर्थं तेभ्य एव परिहाणिमवक्ष्यत् । न तेभ्य एव परिहाणिमवक्ष्यदित्यर्थः । *वशित्वभ्रंशादिति* । समाधिसम्मुखीभाववशित्वभ्रंशादित्यर्थः । *सोऽपरिहाणधर्मेति* । अपरिहाणधर्मा अकोप्यधर्मणोऽन्यः सूत्रे पठितः । अष्टादशशैक्षान् विस्तरेणोक्त्वाह—"नवाशैक्षाः कतमे ? परिहाणधर्मा, अपरिहाणधर्मा, चेतनाधर्मा, अनुरक्षणाधर्मा, स्थिताकम्प्यः, प्रतिवेधनाभव्यः, अकोप्यधर्मा, प्रज्ञाविमुक्तः, उभयतोभागविमुक्तः—इम उच्यन्ते नवाशैक्षाः" इति । यः परिहीयते

अपरिहाणधर्मस्थिताकम्प्याकोप्यधर्मणां को विशेषः ? अपरिहाणधर्माऽनुत्तापनागतः, अकोप्यधर्मा तूत्तापनागतः। तौ हि यं यमेव समापत्तिविशेषमुत्पादयतः, तस्मान्न परिहीयेते। स्थिताकम्प्यस्तु यस्मिन्नेव गुणे स्थितस्तस्मात् केवलं न परिहीयते, न त्वन्यमुत्पादयति। उत्पादयति वा तस्मान्न[1] कम्प्यत[2] इत्येव विशेषो लक्ष्यते।

आयुष्मान् गौतिकः[3] शैक्षीभूतः सामयिक्या विमुक्तेरत्यास्वादनान्मृद्विन्द्रियत्वाच्चाभीक्ष्णं परिहीयमाणो निर्विण्णः शस्त्रमाधारयन् कायजीवितनिरपेक्षत्वान्मरणकाल एवार्हत्त्वप्राप्तः परिनिर्वृत्तश्च[4]। तस्मात् सोऽपि नार्हत्त्वात् परिहीणः।

---

दृष्टधर्मसुखविहारेभ्यः, स परिहाणधर्मा। यो न परिहीयते तत एव सोऽपरिहाणधर्मा। एवं चेतनाधर्मादयोऽपि योज्याः। कथम्? यः समाधिभ्रंशभयादात्मानं चेतयते, स चेतनाधर्मा। योऽनुरक्षति कथञ्चिद् गुणविशेषम्, सोऽनुरक्षणाधर्मा। यो यस्मिन्नेव गुणे स्थितः तस्मादननुरक्षन्नपि न कम्प्यते, स स्थिताकम्प्यः। यः परेण प्रतिविध्यति, गुणविशेषमुत्पादयतीत्यर्थः, स प्रतिवेधनाभव्यः। यो न कुप्यति उत्पन्नेभ्यो न परिहीयते. सोऽकोप्यधर्मा।

*को विशेष* इति। अपरिहाणधर्मादीनां त्रयाणामपरिहाणियोगाद्विशेषमपश्यन् प्रश्नयति। *अनुत्तापनागत* इति। स्वभावतस्तीक्ष्णेन्द्रियः। नेन्द्रियोत्तापनां प्राप्त इत्यर्थः। *तस्मान्न कम्प्यत* इति। तस्मात् गुणविशेषादित्यर्थः। *एष विशेषो लक्ष्यत* इति। आचार्यः स्वमतं दर्शयति।

ननु चायुष्मान् *गौतिकोऽर्हत्त्वात्परिहीण* इत्येवं यदि वैभाषिको ब्रूयादिति अस्य प्रतिविधानमारभ्यते—*आयुष्मान् गौतिक* इति विस्तरः। *शैक्षीभूत* इति। न तावदर्हन्। *शस्त्रमाधारयन्निति* शस्त्रं वाहयन्। *कायजीवितनिरपेक्षत्वात्* कारणात् *मरणकाल एवार्हत्त्वं प्राप्तः*। शस्त्राधारादुत्तरकाल इत्यर्थः। *परिनिर्वृत्तश्च*[4] तेनैव शस्त्रप्रहारेण।

*दशोत्तरे चेति*। दशोत्तरनामसूत्रे। किमुक्तम्? इत्याह—*एको धर्म उत्पादयितव्यः*। कतमः? इत्याह—*सामयिकी कान्ता चेतोविमुक्तिरिति*। दृष्टधर्मसुखविहार इत्यभिप्रायः। *एको धर्मः साक्षात्कर्तव्यः*। कतमः? इत्याह—*अकोप्या चेतोविमुक्तिरिति*। अर्हत्त्वमित्यभिप्रायः। पृथग्वचनाद् ध्यकोप्यविमुक्तिलक्षणादर्हत्त्वस्वभावा, न कान्ता चेतोविमुक्तिरुक्तेत्यभिप्रायः।

---

१. तस्मात्त—का०। २. कम्पत—का०।
३. भौतिकः—का०। ४. परिनिर्वृत्तिश्च—जा०।

**दशोत्तरे** चोक्तम्—"एको धर्म उत्पादयितव्यः—सामयिकी कान्ता चेतोविमुक्तिः। एको धर्मः साक्षात्कर्तव्यः—अकोप्या चेतोविमुक्तिः" इति। यदि चार्हत्त्वं सामयिकी कान्ता चेतोविमुक्तिरभविष्यत्, किमर्थं तत्रैव दशकेऽर्हत्त्वस्य द्विग्रहणमकरिष्यत्।

न च क्वचिदर्हत्त्वमुत्पादयितव्यमुक्तम्। किं तर्हि? साक्षात् कर्तव्यम्। मृद्विन्द्रियसंगृहीतं चार्हत्त्वमुत्पादयितव्यमिति। किमनेन ज्ञापितं भवति? यदि तावदुत्पादयितुं शक्यमित्यन्यदपि शक्यम्। अथोत्पादनमर्हतीति, अन्यत् सुतरामर्हति। तस्मान्न सामयिकी विमुक्तिरर्हत्त्वम्।

कथं तर्हि समयविमुक्तोऽर्हन्नुच्यते? यस्य मृद्विन्द्रियत्वात् समयापेक्षः समाधिसम्मुखीभावः। विपर्ययादसमयविमुक्तः। अभिधर्मेऽपि चोक्तम्—"त्रिभिः

---

द्विप्रकारत्वादर्हत्त्वस्य पृथग्वचनमिति *वैभाषिकवचनावकाशं पश्यन्* पुनराह—*यदि चार्हत्त्वमिति* विस्तरः। *यद्यर्हत्त्वमेव सामयिकी कान्ता चेतोविमुक्तिरभविष्यत्, किमर्थं तत्रैव* दशके न सूत्रान्तरे अर्हत्त्वस्य *द्विग्रहणमकरिष्यत्*—एको धर्मः साक्षात्कर्तव्यः, अकोप्या चेतोविमुक्तिरिति। नैवाकरिष्यदित्यर्थः। एवं ह्यवक्ष्यत्—एको धर्मः साक्षात्कर्तव्यश्चेतोविमुक्तिरिति। ब्रूयास्त्वर्हत्त्वं द्विप्रकारम्। अतो वचनविभागेनोच्यते—एकमुत्पादयितव्यम्, द्वितीयं साक्षात्कर्तव्यमिति।

अत्र ब्रूमः—*न च क्वचिदर्हत्त्वमुत्पादयितव्यमुक्तम्। किं तर्हि? साक्षात्कर्तव्यमिति।* तत्रतत्र सूत्रे। अभ्युपेत्यापि ब्रूमः। *मृद्विन्द्रियसंगृहीतं चोत्पादयितव्यमिति। किमनेन* ज्ञापनेन *ज्ञापितं* कथितं *भवति। यदि तावदुत्पादयितुं शक्यमित्येतज्ज्ञापितं भवति।* शकि लिङ् च (पा. सू. ३.३. ७२)इति कृत्यप्रत्ययलक्षणात्। *अन्यदपि शक्यं* यत्तीक्ष्णेन्द्रियसंगृहीतमर्हत्त्वम्। तथा च सत्येवं सूत्रे वक्तव्यं स्यात्—एको धर्म उत्पादयितव्यः, चेतोविमुक्तिरिति। *अथोत्पादनमर्हतीत्येतज्ज्ञापितं भवति।* "अर्हे कृत्यतृचश्च" (पा. सू. ३.३.१७६) इति लक्षणपरिग्रहात्। *अन्यत् सुतरामर्हति।* यत्तीक्ष्णेन्द्रियसंगृहीतमर्हत्त्वम्, तद्ध्यकोप्यत्वात् सुष्ठूत्पादयितुमर्हतीत्यभिप्रायः।

*कथं तर्हीति* विस्तरः। यदि सामयिकी विमुक्तिरर्हत्त्वं भवति, एवं तद्योगान् समयविमुक्तोऽर्हन्निति युज्यत इत्यभिप्रायः। *समयापेक्षः समाधिसम्मुखीभाव*

स्थानैः कामरागानुशयस्योत्पादो भवति। कामरागानुशयोऽप्रहीणो भवत्यपरिज्ञातः कामरागपर्यवस्थानीयाश्च धर्मा आभासगता भवन्ति, तत्र चायोनिशो मनस्कारः" इति। परिपूर्णोत्पत्तिरेवमिति चेत्? कस्य वा परिपूर्णकारणस्योत्पत्तिः।

एवं तावदागमात्।

२. कथं युक्तितः? यदि तावदर्हतस्तद्रूपः प्रतिपक्ष उत्पन्नो येन क्लेशा अत्यन्तमनुत्पत्तिधर्मतामापन्नाः, कथं पुनः परिहीयते! अथ नोत्पन्नः, कथं क्षीणास्रवो भवति! अत्यन्तमनपोद्धृतायां[1] तद्बीजधर्मतायामक्षीणास्रवो वा पुनः कथमर्हन् भवतीत्येवं युक्तिः।

अङ्गारकर्षूपमं तर्हि परिहार्यम्, यत्रेदमुक्तम्—"यस्य खलु श्रुतवत आर्यश्रावकस्यैवं चरत एवं विहरतः कदाचित् कर्हिचित् स्मृतिसम्प्रमोषादुत्पद्यन्ते पापका अकुशला वितर्काः" इति? स हि तत्रार्हन्नेव ज्ञापितः; "दीर्घरात्र

इति। यस्मादस्य समाधिः सास्रवोऽनास्रवोऽपि वा समयमारोग्यदेशविशेषादिलक्षणमपेक्षते। *अभिधर्मेऽपि चोक्तमिति* विस्तरः। कामरागानुशयोऽप्रहीणो भवतीत्येतदुदाहरणम्। इदं चाप्युदाहरणम्—*तत्र चायोनिशोमनस्कार* इति। *परिपूर्णोत्पत्तिरेवमिति* चेत्। स्यान्मता परिपूर्णकारणस्य क्लेशस्यैवमुत्पत्तिः, अपरिपूर्णकारणस्य तु क्लेशस्य विषयबलादेवेति? तदयुक्तम्, कस्माद्? इत्याह—*कस्य वापरिपूर्णकारणस्योत्पत्तिरि*ति। कस्योत्पत्तिः? यतः अपरिपूर्णकारणस्योत्पत्तिरस्ति। यावती हि हेतुप्रत्ययसामग्री कार्यस्योत्पत्तये प्रसिद्धा, सा तदेकदेशविकला सती तस्योत्पत्तये न भवति। तद्यथा—चक्षूरूपालोकमनस्कारसामग्री चक्षुर्विज्ञानस्योत्पत्तये प्रसिद्धा। स तदन्येतरविकला सती तदुत्पत्तये न भवतीति तस्मान्न किञ्चिदेतत्।

*तद्रूप* इति तत्प्रकारः। तत्स्वभाव इति वा। *अथ नोत्पन्न* इति प्रतिपक्षः। *तद्बीजधर्मतायामि*ति। क्लेशबीजस्वभाव इत्यर्थः। *तस्यामनपोद्धृतायाम*नुन्मूलितायां *कथं क्षीणास्रवो भवतीति*। ब्रूयास्त्वम्—न भवतीति। अत आह—*अक्षीणास्रवो वा कथमर्हन् भवती*ति।

*एवं चरत* इति। स्मृतिमतश्चरत इत्यर्थः। अनन्तरं स्मृतिवचनात्। 'शैक्षः सः' इत्यस्य वचनस्य परिहारार्थं स एव परिहाणिवाद्याह—*स हि तत्रार्हन्नेव ज्ञापित*

१. ०मनयो०—का०।

विवेकनिम्नचित्तमुच्यते[1] यावन्निर्वाणप्राग्भारम्" इति वचनात् ।

अर्हतो ह्येतद् बलमन्यत्रोक्तम्—"सर्वैरास्रवस्थानीयैर्धर्मैः शीतीभूतं वान्तीभूतम्" इति चाभिधानात् ? अस्त्येतदेवम् । यावत्तु चारो न सुप्रतिबद्धस्तावदेवं चरतोऽपि शैक्षस्यास्ति सम्भवः क्लेशोत्पत्ताविति शैक्षावस्थामधिकृत्यैवं वचनाददोषः ।

प्रतिज्ञायते हि लौकिकमार्गप्रतिलब्धात् फलद्वयात् परिहाणिः । अर्हत्त्वादपि तु परिहाणिं वर्णयन्ति **वैभाषिकाः** ।

किं पुनरिमेऽर्हन्त एव षड्गोत्रा भवन्ति ? अथान्येऽपि षड्गोत्रा भवन्ति ?

**शैक्षानार्याश्च षड्गोत्राः,**

शैक्षपृथग्जना अप्येवं षड्गोत्राः । तत्पूर्वकाण्येव ह्यर्हतां गोत्राणि । अपि तु—

---

इति । कथं कृत्वा ज्ञापितः ? इत्याह—*दीर्घरात्रमिति* विस्तरः । अपरिहाणिवादिनः स्यादेवं वचनात्रकाशः । शैक्षस्येदं *विवेकनिम्नचित्तमुच्यते यावन्निर्वाणप्राग्भारमिति* । अस्य परिहारार्थं परिहाणिवादी पुनराह—*अर्हतो ह्येतद्बलमन्यत्रोक्तमिति* सूत्रे । कथम् ? "कति भदन्तार्हतो भिक्षोः क्षीणास्रवस्य बलानि ? अष्टौ शारिपुत्रार्हतो भिक्षोर्दीर्घरात्रं विवेकनिम्नं चित्तं यावन्निर्वाणप्राग्भारम् । अङ्गारकर्षूपमाश्चानेन कामा दृष्ट्वा भवन्ति । यथास्य कामान् जानतः कामान् पश्यतो यः कामेषु कामच्छन्दः कामस्नेहः विस्तरेण यावत्कामाध्यवसानम्, तत्रास्य चित्तं न पर्यादाय तिष्ठति" इति विस्तरः । *किञ्च शीतीभूतं वान्तीभूतमिति चाभिधानात्* । तत्रैवाङ्गारकर्षूपमे सूत्रेऽर्हन्नेव ज्ञापति इति ।

*अस्त्येतदेवमिति* । अङ्गारकर्षूपमे यदुक्तमर्हन्नेव ज्ञापित इति । *यावत्तु चारो न सुप्रतिविद्ध* इति । पिण्डपातादिचारः । *शैक्षावस्थामधिकृत्यैवंवचनाददोष* इति । यदेतदुक्तम्—"कदाचित् स्मृतिसम्प्रमोषादुत्पद्यन्ते पापका अकुशला वितर्काः" इति, तच्छैक्षावस्थामधिकृत्योक्तम्, नार्हत्त्वावस्थाम् । यत्तूक्तम्—'दीर्घरात्रं विवेकनिम्नम्' इति, तच्छैक्षस्यापि सम्भवति । अर्हतस्तु प्रकर्षेण भवतीति विशेषः । यच्चाप्युक्तम्—'सावस्रवस्थानीयैर्धर्मैः शीतीभूतं वान्तीभूतम्' इति; तदपि शैक्षावस्थामधिकृत्य सम्भवति, कामावचरास्रवस्थानीयधर्मशीती-

---

१. विवेकनिम्नं चित्तं भवति–का० ।

**सञ्चारो नास्ति दर्शने ।। ५८ ।।**

दर्शनमार्गादन्यत्रेन्द्रियसञ्चारो भवति । प्रयोगासम्भवान्न दर्शनमार्गे । कश्चित् पृथग्जनावस्थायामिन्द्रियाणि सञ्चरति, कश्चिच्छ्रद्धाधिमुक्तावस्थायाम् ॥ ५८ ॥

यदिदं सूत्र उक्तम्—"ये त्वनेन चत्वार आधिचैतसिका दृष्टधर्मसुखविहारा अधिगतास्ततोऽहमस्यान्यतमान्यतमस्मात् परिहाणिं वदामि, या त्वनेनैकाकिना यावदकोप्या चेतोविमुक्तिः कायेन साक्षात्कृता, ततोऽहं न केनचित् पर्यायेण परिहाणिं वदामि" इति, कथमकोप्यधर्मणो दृष्टधर्मसुखविहारेभ्यः परिहाणिः ?

**परिहाणिस्त्रिधा ज्ञेया प्राप्ताप्राप्तोपभोगतः ।**

१. प्राप्तपरिहाणिः, यदि प्रतिलब्धात् गुणात् परिहीयते । २. अप्राप्तपरिहाणिः, यदि प्राप्यं गुणं न प्राप्नोति । ३. उपभोगपरिहाणिः, यदि प्राप्तगुणं न सम्मुखीकरोति ।

आसां पुनः परिहाणीनाम्—

**अन्त्या शास्तुरकोप्यस्य मध्या चान्यस्य तु त्रिधा ।। ५९ ।।**

बुद्धस्योपभोगपरिहाणिरेव, नान्या । अकोप्यधर्मणः सा च, अप्राप्त-

---

भावाभिधानात् । अर्हत्त्वावस्थां चाधिकृत्य तथाभिधानाददोष इति *आचार्यस्या*भिप्रायः ।

*प्रयोगासम्भवान्न दर्शनमार्गे* इति पञ्चदशक्षणो दर्शनमार्गः । तत्रेन्द्रियसञ्चारे प्रयोगावकाशो नास्ति । *कश्चित् पृथग्जनावस्थायामिन्द्रियाणि सञ्चरती*ति । किमनित्याद्याकारपतितेन मार्गेणेन्द्रियाणि सञ्चरति, किमौदारिकाद्याकारेण मार्गेणेन्द्रियाणि सञ्चरति, उताहो शान्ताद्याकारेणेति अविशेषितत्वादुभयथापि सम्भवतीति पश्यामः । तथा ह्येनमर्थमाचार्यः सूचयिष्यति; 'न हि सास्रवेण मार्गेणार्याणामिन्द्रियसञ्चारः' इत्यार्याणामिति विशेषणात् । 'अपि नाम ममेन्द्रियाणि तीक्ष्णानि स्युः' इति प्रयोगमभिसन्धाय । मार्गं लौकिकं लोकोत्तरं चान्यस्यानन्तर्यविमुक्तिमार्गक्रमेणेन्द्रियाणि सञ्चरन्तीति वेदितव्यम् । *कश्चिच्छ्रद्धाधिमुक्तावस्थायामि*त्यत्राशैक्षावचनम् । शैक्षपृथग्जनाधिकारात् । अशैक्षोऽपि त्विन्द्रियाणि सञ्चरतीति बोद्धव्यम् ॥५८॥

*कथमकोप्यधर्मणो दृष्टधर्मसुखविहारेभ्यः परिहाणिरि*ति । तीक्ष्णेन्द्रियत्वादस्य दृष्टधर्मसुखविहारेभ्यः परिहाणिर्न सम्भवेत्, किमुताकोप्याया विमुक्तेरित्य-

परिहाणिश्च; पुद्गलविशेषधर्माप्रापणात् । अन्यस्यार्हतः प्राप्तपरिहाणिरप्यस्ति । अत उपभोगपरिहाणिवचनादकोप्यधर्मणः सूत्रविरोधः । सर्वस्यानास्रवा विमुक्तिर-कोप्या । अकोप्यधर्मव्यवस्थानं तु यथा तथोक्तम् । अत एतदचोद्यमित्य-**परिहाणिवादी** ॥ ५९ ॥

अथ योऽर्हत्फलात् परिहीयते किमसौ पुनर्जायते ? नास्त्येतत्; यस्मात्

**म्रियते न फलभ्रष्टः,**

---

सम्भावयन् पृच्छति । *बुद्धस्योपभोगपरिहाणिरेवेति* । *विनेयकार्यव्यापृतत्वाद्* दृष्टधर्मसुखविहारान्नोपभुंक्ते । न सम्मुखीकरोतीत्यर्थः । *सा चाप्राप्तपरिहाणि-श्चेति* । अकोप्यधर्मणः सा चोपभोगपरिहाणिः; कुतश्चिद्व्यासङ्गात् । अप्राप्ति-परिहाणिश्च *पुद्गलविशेषधर्माप्रापणात्* । यस्मादकोप्यधर्मापि कश्चिन् महा-श्रावकाणामार्यशारिपुत्रमौद्गल्यायनादीनां प्रान्तकोटिकादीन् धर्मान् , स्वयम्भु-वांश्च कांश्चिद्धर्मान्न प्राप्नोति । महाश्रावका अपि स्वयम्भुवान् कांश्चिद्विशेषधर्मान्न प्राप्नुवन्तीत्यादि । *अन्यस्यार्हत* इति परिहाणधर्मादेर्मृद्विन्द्रियस्य *प्राप्तपरिहाणि-रप्यस्ति* । अपि-शब्दात् पूर्वोक्ते अपि परिहाणी स्त इति । *अकोप्यधर्मण उपभोगपरिहाणिवचनात् सूत्राविरोध* इति । यदेतदुक्तम्—"येऽनेन चत्वारः' इति विस्तरेण, यावत् ततोऽहमस्यान्यतमस्मात् परिहाणिं वदामि" इति, तस्य सूत्रस्याविरोधः ।

पण्णामप्यर्हतामकोप्या विमुक्तिरित्युक्ते *वैभाषिको* ब्रूयात्—यदि सर्वस्यैवा-र्हतोऽनास्रवा विमुक्तिरकोप्या, कस्मादसमयविमुक्त एवाकोप्यधर्मा व्यवस्थापितो नान्य इति ? अत इदमुच्यते *सर्वस्यानास्रवा विमुक्तिरकोप्येति* । *सत्यमस्त्येतत्* । *अकोप्यधर्मव्यवस्थानं तु यथा तथोक्तमिति* । दृष्टधर्मसुखविहारेभ्यस्तु कश्चिल्लाभ-सत्कारव्याक्षेपदोषात् परिहीयते वशित्वभ्रंशात् , यो मृद्विन्द्रियः । कश्चिन्न परिहीयते यस्तीक्ष्णेन्द्रियः । स एवाकोप्यधर्मा व्यवस्थापितः । यत एव च दृष्टधर्मसुखविहारेभ्यो लाभसत्कारव्याक्षेपदोषात् परिहीयते मृद्विन्द्रियः, न तीक्ष्णेन्द्रियः । *अत एतदचोद्यम्* । कथम् ? अकोप्यधर्मणो दृष्टधर्मसुख-विहारात् परिहाणिरित्यपरिहाणिवादी । अथ वा—अयमन्यः सम्बन्धः । पूर्व-कोप्यधर्मणो दृष्टधर्मसुखविहारेभ्यः परिहाणिर्नास्तीत्युक्तम्, सूत्रे च यस्या-कोप्या विमुक्तिस्तस्य दृष्टधर्मसुखविहारात् परिहाणिरुक्ता; अविशेष्याभिधानादत इदमुच्यते—सर्वस्यानास्रवा विमुक्तिरकोप्येति । न तयैकोऽकोप्यधर्मा व्यव-स्थाप्यत इत्यभिप्रायः । अत एवोच्यते—अकोप्यधर्मव्यवस्थानं तु यथा

नैव हि कश्चित् फलात् परिहीणः कालं करोति; "धन्धा भिक्षव आर्यश्रावकस्य स्मृतिसम्प्रमोषा, अथ च पुनः क्षिप्रमेवान्तं परिक्षयं सपदि संगच्छति" इति सूत्रे वचनात्। अन्यथा ह्यनाश्वासिकं ब्रह्मचर्यं स्यात्।

यतश्च फलात् परिहीयते तत्फलस्थेन यदकार्यं

**तदकार्यं करोति न।**

परिहीणोऽपि संस्तत्फलविरुद्धां क्रियां न करोति, शूरप्रस्खलनापतनवत्।

अथेन्द्रियाणि सञ्चरतां कत्यानन्तर्यविमुक्तिमार्गा भवन्ति ?

**विमुक्त्यानन्तर्यपथा नवाकोप्ये,**

अकोप्यगोत्रे प्रतिविध्यमाने प्रतिवेधभावनाभव्यस्य नवानन्तर्यमार्गा विमुक्तिमार्गाश्च भवन्ति, यथार्हत्त्वं प्राप्नुवतः। किं कारणम् ?

**अतिसेवनात् ॥ ६० ॥**

तस्य मृद्विन्द्रियगोत्रं भवतीति नाल्पेन व्यावर्त्तयितुं शक्यते; शैक्षाशैक्षमार्गाभ्यां दृढीकृतत्वात् ॥ ६० ॥

**दृष्टयाप्तलायामेकैकः,**

दृष्टिप्राप्तायां प्रतिविध्यमानायामेक एवानन्तर्यमार्गो भवति, एको विमुक्तिमार्गः। प्रयोगमार्गस्तु सर्वत्रैक एव।

ते पुनः सर्व एवानन्तर्यविमुक्तिमार्गाः

---

तथोक्तमिति। अत एतदचोद्यमिति। यदुक्तं सूत्रमाश्रित्य कथमकोप्यधर्मणो दृष्टधर्मसुखविहारेभ्यः परिहाणिरिति ॥ ५९ ॥

धन्धा इति मन्दाः। *अन्यथा ह्यनाश्वसिकमिति*। यद्यर्हत्त्वात् परिहीणः पुनर्जायेत—

"सुचीर्णब्रह्मचर्येऽस्मिन् मार्गे चापि सुभाविते।
तुष्ट आयुःक्षयाद्भवति रोगस्यापगमे यथा" ॥

इत्याश्वासः, एवंविधो न स्यादिति। *तदकार्यमब्रह्मचर्यादिलक्षणम्*। *शूरप्रस्खलनापतनवदिति*। यथा शूरस्य प्रस्खलने अपतनं भवति, शक्तित आत्मधारणात्। तद्वदार्यः फलात् परिहीणोऽपि तत्फलमलब्ध्वा न *म्रियते*। शूरग्रहणमविह्वलत्वात्। बलवान् शूर इत्यपरे।

कथमभ्यस्तम् ? इत्याह—*शैक्षाशैक्षमार्गाभ्यां दृढीकृतत्वादिति* ॥ ६० ॥

*प्रयोगमार्गस्तु सर्वत्रैक एवेति*। अकोप्यप्रतिवेधे, दृष्टिप्राप्यतायां च।

**अनास्रवाः,**

न हि सास्रवेण मार्गेणार्याणामिन्द्रियसञ्चारः ।

क्व पुनरिन्द्रियाणि वर्धन्ते ?

**नृषु वर्धनम् ।**

मनुष्येष्वेवेन्द्रियसञ्चारो नान्यत्र; परिहाण्यसम्भवात् ।

क्व पुनः कतमां भूमिं निश्रित्येन्द्रियाणि सञ्चरति ?

**अशैक्षो नव निश्रित्य भूमीः,**

अनागम्यस्यानन्तरं चत्वारि ध्यानानि, त्रीणि चारूप्याणि ।

**शैक्षस्तु षट्,**

आरूप्यवर्ज्यः ।

किं कारणम् ?

**यतः ॥ ६१ ॥**

**सविशेषं फलं त्यक्त्वा फलमाप्नोति वर्धयन् ।**

इन्द्रियाणि हि सञ्चरन् फलं फलविशिष्टं च मृद्विन्द्रियमार्गं त्यक्त्वा तीक्ष्णेन्द्रियगोत्रं फलमार्गमेव प्रतिलभते । न चानागामिफलमारूप्यसंगृहीतमस्तीत्येतत्[1] कारणम् ॥ ६१ ॥

---

*न हि सास्रवेणेति* । आर्येन्द्रियसञ्चारस्य विवक्षितत्वात् । अन्यथा हि कश्चित् पृथग्जनावस्थायामिन्द्रियाणि सञ्चरतीत्येतद्विरुध्यते ।

*नान्यत्र परिहाण्यसम्भवादिति* । परिहाणिभयाद्धीन्द्रियसञ्चार इष्यते । अन्यत्र षट्सु कामावचरेषु देवनिकायेषु रूपारूप्यधात्वोश्च परिहाणिर्नास्तीत्याह—ऊर्ध्वधातूपपन्न आर्यो नैवेन्द्रियाणि सञ्चरति । नापि कथंचित् परिहीयत इति । उक्तमत्र कारणम्—कालान्तरपरिवासेनेन्द्रियाणां परिपक्वतरत्वात् । आस्रवविशेषलाभाच्चेति । अथ कस्मात् कामावचरेषु देवेषु परिहाणिर्नास्ति ? ये पूर्वमभ्युदारेभ्योऽपि विषयेभ्यः संविजन्तो नियतं सत्यानि पश्यन्ति, ते कथं तानेवालम्ब्य परिहास्यन्ते ? अवश्यं हि ते तीक्ष्णेन्द्रिया भवन्तीत्यभिप्रायः ।

"*अशैक्षो नव निश्रित्य*" इति । तत्फलस्य नवभूमिसंगृहीतत्वसम्भवात् । फलं

---

१. ०मारूप्यभूमि०—का० ।

त एते षडेवार्हन्तो नव भवन्ति; इन्द्रियभेदात् ।

कथं कृत्वा ?

**द्वौ बुद्धौ श्रावकाः सप्त नवैते नवधेन्द्रियाः ।। ६२ ।।**

कतमे सप्त श्रावकाः ? परिहाणधर्मादयः पञ्च । अकोप्यधर्मा च द्विविधः—उत्तापनागतः, आदितश्च तद्गोत्रः अकोप्यभेद एव । द्वौ बुद्धौ—प्रत्येकबुद्धः, बुद्धश्च । इत्येते मृदुमृद्वादिनवप्रकारेन्द्रियभेदान्नव पुद्गला भवन्ति ।। ६२ ।।

सर्व एव त्वार्यपुद्गलाः सप्त भवन्ति—श्रद्धानुसारी, धर्मानुसारी, श्रद्धाधिमुक्तः, दृष्टिप्राप्तः, कायसाक्षी, प्रज्ञाविमुक्तः, उभयतोविमुक्तश्च ।

एते पुनः—

**प्रयोगाक्षसमापत्तिविमुक्त्युभयतः कृताः ।**

**पुद्गलाः सप्त,**

प्रयोगतः श्रद्धाधर्मानुसारिणौ; पूर्वमेव परप्रत्ययधर्मानुसाराभ्यामर्थेषु प्रयोगात् ।

---

*फलविशिष्टं चेति* । फलं सकृदागामिफलम् । फलविशिष्टं प्रथमध्यानादिप्रहाणाय प्रयोगानन्तर्यविमुक्तिविशेषमार्गलक्षणम् । *फलमार्गमेव प्रतिलभत* इति । कामधातुवैराग्यमात्रसंगृहीतम् । *न चानागामिफलमारूप्यसंगृहीतमिति* । 'पञ्चानामवरभागीयानां प्रहाणादनागामी' इति सूत्रे वचनात्, दर्शनमार्गस्य च तत्राभावात् । तदभावः कामधात्वनालम्बनादिति व्याख्यातमेतत् ।। ६१ ।।

*अकोप्यधर्मा च द्विविध* इति । सूत्रे पठितत्वादकोप्यभेद एव । द्वौ बुद्धाविति । अकोप्यधर्मा मृदुमध्याधिमात्रेन्द्रियभेदात् त्रिधा भिद्यते । श्रावको ह्यकोप्यधर्माधिमात्रमृद्विन्द्रियः । प्रत्येकबुद्धोऽधिमात्रमध्येन्द्रियः । सम्यक्सम्बुद्धोऽधिमात्राधिमात्रेन्द्रिय इति । *मृदुमृद्वादिनवप्रकारेन्द्रियभेदादिति* । परिहाणिधर्मा मृदुमृद्विन्द्रियो यावद्भगवानधिमात्राधिमात्रेन्द्रिय इति ।। ६२ ।।

*सप्त भवन्तीति* । प्रत्येकबुद्धसम्यक्सम्बुद्धावुभयतोभागविमुक्तसंगृहीतावेवेति कृत्वा ।

*पूर्वमेवेति* विस्तरः । पूर्वमेव पृथग्जनावस्थायां परप्रत्ययेन परतः श्रुत्वा स्मृत्युपस्थानादीन् धर्मान् पश्चादर्थेषु *प्रयोगात्* । चिन्ताभावनासेवनादित्यर्थः । तथा पूर्वमेव पृथग्जनावस्थायां प्रज्ञया द्वादशाङ्गप्रवचनधर्मानुसारेण स्वयमेवं बोधिपक्षादीन् धर्माननुसरन्नर्थेषु प्रयोगात् । चिन्ताभावनासेवनात् । इत्येवं *प्रयोगतः श्रद्धाधर्मानुसारिणौ भवतः* ।

इन्द्रियतः श्रद्धाधिमुक्तदृष्टिप्राप्तौ ।

मृदुतीक्ष्णेन्द्रियत्वात् श्रद्धाधिमोक्षप्रज्ञाधिक्यतः ।

समापत्तितः कायसाक्षी, निरोधसमापत्तिसाक्षात्करणात् ।

विमुक्तितः प्रज्ञाविमुक्तः ।

समापत्तिविमुक्तितः । उभयतोभागविमुक्तः ।

नामत एते सप्त पुद्गलाः ।

**षट् त्वेते,**

द्रव्यतस्त्वेते षट् भवन्ति ।

**द्वौ द्वौ मार्गत्रये यतः ॥ ६३ ॥**

दर्शनमार्गे हि द्वौ पुद्गलौ, श्रद्धाधर्मानुसारिणौ । तावेव भावनामार्गे द्वौ भवतः, श्रद्धाधिमुक्तदृष्टिप्राप्तौ । तौ पुनरशैक्षमार्गे द्वौ भवतः, समयासमयविमुक्ताविति । तत्रेन्द्रियतस्त्रयः, श्रद्धानुसारिणः । गोत्रतः पञ्च । मार्गतः पञ्चदश । अष्ट क्षान्तिसप्तज्ञानस्थाः । वैराग्यतस्त्रिसप्ततिः । सकलबन्धनः । कामवैराग्या-

---

*श्रद्धाधिमोक्षप्रज्ञाधिक्यत* इति । श्रद्धाधिमोक्षाधिक्यतः, प्रज्ञाधिक्यतश्च । श्रद्धयाधिमोक्षः, श्रद्धाधिमोक्षः, तस्याधिक्यात् मृद्विन्द्रियत्वम् । प्रज्ञाधिक्यात् तीक्ष्णेन्द्रियत्वम् ।

*विमुक्तित* इति । क्लेशविमुक्तितः प्रज्ञया क्लेशाद्विमुक्तः *प्रज्ञाविमुक्त* इति कृत्वा । *समापत्तिविमुक्तित* इति । समापत्तितो विमुक्तितश्च ।

*तत्रेन्द्रियत* इति विस्तरः । यथैते श्रद्धानुसारिणो गण्यन्ते, तथा यथाग्रन्थं प्रदर्शयिष्यामः । *इन्द्रियतस्त्रयः* । मृदुमध्याधिमात्रेन्द्रियत्वात् । अत्र पुनरेवमवगन्तव्यम्—यद्यपि श्रद्धानुसारिणः सर्व एव मृद्विन्द्रियाः, तथापि तारतम्येनावस्थानादेषां पुनस्त्रिधा भेदः मृदुमध्याधिमात्रेन्द्रिया इति । *गोत्रतः पञ्च* । कथम् ? परिहाणधर्मगोत्रको यावत्प्रतिवेधनाभव्यगोत्रक इति पञ्च भवन्ति । पुनरेषां गोत्रेन्द्रियभेदात् पञ्चदेशानामेकैको *मार्गतः पञ्चदश भवन्ति* । कथमिति ? उच्यते—*अष्टक्षान्तिसप्तज्ञानस्था* इति । दर्शनमार्गो हि पञ्चदशक्षणाः । अष्टौ क्षान्तयः—दुःखे धर्मज्ञानक्षान्तिर्यावन्मार्गे अन्वयज्ञानक्षान्तिः । सप्त ज्ञानानि—दुःखे धर्मज्ञानं यावन्मार्गे धर्मज्ञानम् । मार्गेऽन्वयज्ञानस्य भावनामार्गसंगृहीतत्वात् । अष्टौ च सप्त च पञ्चदश भवन्ति । त एवं तत्रस्थाः पञ्चदश

नव । एवं यावदाकिञ्चन्यायतनवैराग्यात् । आश्रयतो नव । त्रिद्वीपषड्देवनिकायजाः । इन्द्रियगोत्रमार्गवैराग्याश्रयतः पिण्डिताः[1] शतसहस्रं सम्पद्यन्ते सहस्राणि च सप्तचत्वारिंशच्छतानि चाष्टौ पञ्चविंशतिश्च ।

एवमन्येऽपि पुद्गलाः सम्भवतः संख्येयाः ॥ ६३ ॥

---

भवन्ति । एवमेषां मार्गतः पञ्चदशधाभिन्नानां पुनरेकैको *वैराग्यतस्त्रिसप्ततिः* । कथम् ? *सकलबन्धन*स्तावत् कामधातावेकः, *कामवैराग्यान्नव* । एकप्रकारवीतरागो यावन्नवप्रकारवीतरागः । एवं *यावदाकिञ्चन्यायतनवैराग्यान्न*वेति । भवाग्रवैराग्यान्नवेति न सम्भवति; लौकिकस्य मार्गस्य भवाग्रप्रतिपक्षस्याभावात् । त एतेऽष्टौ नवका द्विसप्ततिः । सकलबन्धनेन पूर्वोक्तेन सह त्रिसप्ततिर्भवन्ति । पुनरेते वैराग्यतः प्रत्येकं त्रिसप्ततिभिन्नाः । प्रत्येक*माश्रयतो नव* । कथम् ? इत्याह *त्रिद्वीपषड्देवनिकायजा* इति । त्रयो द्वीपा उत्तरकुरुवर्ज्याः, उत्तरकुरौ मार्गाभावात् षड् देवनिकायाः कामावचराः, तत ऊर्ध्वं दर्शनमार्गाभावात् । तेषु जाता इति । प्रत्येकमेते नवगुणा भवन्ति । *इन्द्रियगोत्रमार्गवैराग्याश्रयतः पिण्डिता* इति । नैगमन उच्यते । इयन्त इति वृत्तौ लिखिता ।

*एवमन्येऽपि पुद्गलाः सम्भवतः संख्येया* इति । धर्मानुसारिप्रभृतयः । यथेन्द्रियगोत्रमार्गवैराग्याश्रयतः श्रद्धानुसारिणः संख्याताः, तथैव संख्येयाः सम्भवत इति । धर्मानुसारिदृष्टिप्राप्तसमयविमुक्तानां गोत्रभेदो नास्ति, श्रद्धाधिमुक्त-समयविमुक्तयोस्तु गोत्रभेदोऽप्यस्तीति सम्भवत इत्युच्यते । तत्रेन्द्रियतस्त्रयो धर्मानुसारिणः, गोत्रत एक एवेति भेदो नास्ति । मार्गतः पञ्चदश अष्टक्षान्तिसप्तज्ञानस्थाः । वैराग्यतस्त्रिसप्ततिः । सकलबन्धनः । कामवैराग्यान्नव । एवं यावदाकिञ्चन्यायतनवैराग्यात् आश्रयतो नव । त्रिद्वीपषड्देवनिकायजा इति । एवमिन्द्रियमार्गवैराग्याश्रयतः पिण्डिताः सहस्राण्येकान्नत्रिंशत् सम्पद्यन्ते । शतानि च पञ्च पञ्चषष्टिश्च । एवमिन्द्रियतस्त्रयः श्रद्धाधिमुक्ताः । गोत्रतः पञ्च प्रत्येकम् । वैराग्यतस्त्रिसप्ततिः प्रत्येकमेव पूर्ववत् । आश्रयतो नव । त्रिद्वीपषड्देवनिकायजा इति । एवमिन्द्रियगोत्रवैराग्याश्रयतः पिण्डिताः नव सहस्राणि सम्पद्यन्ते । शतानि चाष्टौ पञ्च पञ्चाशच्च । केवलफलस्थो षोडशचित्तप्राप्तोऽधिकृतः ।

"श्रद्धाधिमुक्तदृष्टयाप्तौ मृदुतीक्ष्णेन्द्रियौ तदा" (अभि० को० ६.३१) इत्यनयोरिह विवक्षितत्वात् ।

---

१. पण्डिताः—का० ।

*भगवद्विशेष*स्त्वाह—"मार्गतो नव भवन्ति । भावनामार्गस्थत्वात्" इति । तन्न बुद्ध्यामहे—केनाभिप्रायेणैवमुक्तमिति । यद्ययमभिप्रायो भवेत्—मार्गतो भूमौ भूमौ नव भवन्तीति, वैराग्यतस्त्रिसप्ततिरिति, स एवार्थो दर्शितो भवेत् तदव्यतिरेकादिपि युक्तं स्यात्, तदेव हि परिमाणं स्यात् अथ नवभूमिकानास्रव-भावनामार्गस्थत्वान्नवत्वमेषां व्यवस्थाप्येत ? तथा सति तत्परिमाणं पुनर्नव-गुणीक्रियेत । एतावन्तश्च भवेयुरष्टाशीतिसहस्राणि, शतानि च षट्, पञ्च-नवतिश्चेत्येवमुत्तरत्रापि वक्तव्यम् । यदि तु श्रद्धाधिमुक्त आ वज्रोपमात् समाधेर्गृह्येत, ततोऽन्यथा गणयितव्यम्—इन्द्रियतस्त्रयः श्रद्धाधिमुक्ताः, गोत्रतः पञ्च प्रत्येकम्, वैराग्यत एकाशीतिः, त्रिसप्ततौ भवाग्राष्टप्रकारवीतरागानष्टावधि-कान् प्रक्षिप्य, आश्रयत एकान्नत्रिंशत् । कथम् ? कामधातौ नवोपपत्तिस्थानानि, रूपधातौ षोडश स्थानानि, चत्वारश्चारूप्या इति । एवमिन्द्रियगोत्रवैराग्याश्रयतः पिण्डिता सहस्राणि पञ्चत्रिंशत्, शते च द्वे पञ्चत्रिंशच्चेति । दृष्टिप्राप्तस्य गोत्रभेदो नास्ति । इन्द्रियवैराग्याश्रयतः पिण्डिताः सहस्रं सम्पद्यन्ते शतानि च नव, एका सप्ततिश्च । यदि त्वा वज्रोपमात् समाधेर्दृष्टिप्राप्तो गृह्यते, तत एवं संख्यातव्याः—इन्द्रियवैराग्याश्रयतः पिण्डिताः सप्तचत्वारिंशदधिकानि सप्त सहस्राणि सम्पद्यन्ते । कायसाक्षी श्रद्धाधिमुक्त-दृष्टिप्राप्तयोरन्तर्भूत इति न गण्यते । यदि पुनर्गण्यते, इन्द्रियतस्त्रयः । यदि श्रद्धाधिमुक्तः स कायसाक्षी, गोत्रतः पञ्च । यदि दृष्टिप्राप्तः, नास्ति गोत्रभेदः । मार्गतः उभयोरपि नास्ति भेदः । आकिञ्चन्यायतनवीतरागत्वात् वैराग्यतोऽपि नास्ति भेदः । यद्यपि भवाग्रे सकलबन्धन[1] एकप्रकारवीतरागो यावदष्टप्रकारवीतराग इति । मार्गतो वैराग्यतो वास्ति भेदः । न तु मार्गवैराग्यकृतं कायसाक्षित्वमिति नास्य तत्कृत-स्तद्भेदो व्यवस्थाप्यते ।

आश्रयतो वा बहुधा भेदः । कामावचराश्रयत्वात् यावद्भवाग्राश्रयत्वादिति *भगवद्विशेषः* ।

कथमाकाशानन्त्यायतनाद्याश्रयः कायसाक्षी भवति ? एवं तु युक्तं पश्यामः आश्रयतः पञ्चविंशति, कामधातौ नवोपपत्तिस्थानानि, रूप धातौ च षोडश स्थानानीति । तत्र ह्यार्यो निरोधसमापत्तिमुत्पादयेत् । यदि तु कामरूपाश्रयो-त्पादितनिरोधसमापत्तियोगात् कायसाक्षीभूतस्यानागामिनः ? तत्समन्वागम-मात्रप्रयोगात् पश्चादपि भवाभाश्रयं कायसाचित्वमिष्येत । भवाग्रं षड्विंशतितम आश्रयः स्यादित्यवगन्तव्यम् ।

---

१. °बन्दनः—जा० ।

कोऽयमुभयतोभागविमुक्त इत्युच्यते ? कश्च प्रज्ञाविमुक्तः ?

**निरोधलाभ्युभयतोविमुक्तः प्रज्ञयेतरः ।**

यो निरोधसमापत्तिलाभी स उभयतोभागविमुक्तः; प्रज्ञासमाधिबलाभ्यां क्लेशविमोक्षावरणविमुक्तत्वात् । इतरः प्रज्ञाविमुक्तः; प्रज्ञाबलेन केवलं क्लेशावरण-विमुक्तत्वात् ।

यदुक्तं भगवता—

"क्लेशान् प्रहायेह हि यस्तु पञ्च अहार्यधर्मा परिपूर्णशैक्षः" इति ।

कियता परिपूर्णः शैक्षो भवति ?

**समापत्तीन्द्रियफलैः पूर्णः शैक्षोऽभिधीयते ।। ६४ ।।**

त्रिविधा शैक्षस्य परिपूरिः—फलतः, इन्द्रियतः, समापत्तितश्च । फलत एव—श्रद्धाधिमुक्तस्याकायसाक्षिणोऽनागामिनः । इन्द्रियत एव—दृष्टिप्राप्तस्यावीत-रागस्य । फलेन्द्रियतः—दृष्टिप्राप्तस्य कायसाक्षिणोऽनागामिनः । फलसमापत्तितः—

---

एवमिन्द्रियगोत्राश्रयतः परिगण्य गणयितव्यः । प्रज्ञाविमुक्तस्यापि भेदः इन्द्रियतस्त्रयः प्रज्ञाविमुक्तः । गोत्रतः पञ्च । यदि समयविमुक्ताः, अथासमय-विमुक्ता नास्ति भेदः ।

एवमुभयतोभागविमुक्तोऽपि योजयितव्यः ।। ६३ ।।

*प्रज्ञासमाधिबलाभ्यां क्लेशविमोक्षावरणविमुक्तत्वादि*ति । प्रज्ञाबलेन क्लेशा-वरणविमुक्तत्वात्, समाधिबलेन च विमोक्षावरणविमुक्तत्वात् । विमोक्षाः पुनरष्टौ वक्ष्यन्ते । रूपी रूपाणि पश्यतीति विस्तरः । तत्र *क्लेशावरण*मिति । क्लेशा एवावरणम् । *विमोक्षावरण*मिति विमोक्षाणामावरणम् । तत्पुनः काय-चित्तयोरकर्मण्यता, यया विमोक्षानुत्पादयितुं न शक्नोतीति ।

*क्लेशान् प्रहायेह हि यस्तु पञ्चेति* । पञ्चावरभागीयानि संयोजनानि सत्कायदृष्ट्यादीन्युक्तानि । *अहार्यधर्मे*त्यपरिहाणिधर्मेत्यर्थः ।

*फलत एवे*ति विस्तरः । श्रद्धाधिमुक्तत्वान्नेन्द्रियतः परिपूर्णत्वम् । *अकाय-साक्षी*त्वान्न समापत्तितः । *अनागामि*त्वात् तु फलतः परिपूर्णत्वमस्ति । *इन्द्रियत एवे*ति । *दृष्टिप्राप्त*त्वादिन्द्रियतः परिपूर्णत्वम् । *अवीतराग*त्वात् तु न फलतो नापि समापत्तितः; अनागामिफलसमापत्त्योरभावात् । एवमन्येषामपि सम्भवतो

श्रद्धाधिमुक्तस्य कायसाक्षिणः । फलेन्द्रियसमापत्तितः—दृष्टिप्राप्तस्य कायसाक्षिणः । समापत्तित एव समापत्तीन्द्रियतश्च परिपूर्णत्वं नास्ति विना फलेन ॥ ६४ ॥

**अशैक्षपरिपूर्णत्वं द्वाभ्याम्,**

इन्द्रियतः, समापत्तिश्च । फलेन त्वपरिपूर्णस्याशैक्षत्वमेव नास्तीति नास्य पुनः फलेन परिपूर्णापरिपूर्णत्वं व्यवस्थाप्यते । इन्द्रियत एव—असमयविमुक्तस्य प्रज्ञाविमुक्तस्य । समापत्तित एव—समयविमुक्तस्योभयभागविमुक्तस्य । इन्द्रिय-समापत्तिभ्याम्—असमयविमुक्तस्योभयतोभागविमुक्तस्य ।

बहव इमे मार्गभेदा उक्ताः—लौकिक लोकोत्तर-दर्शन-भावनाऽशैक्षमार्गाः प्रयोगानन्तर्यविमुक्तिविशेषमार्गा इति । कतिविध एष समासतो मार्ग इति ?

**मार्गः समासतः ।**

**विशेषमुक्त्यानन्तर्यप्रयोगाख्यश्चतुर्विधः ॥ ६५ ॥**

१. प्रयोगमार्गः, यस्मादनन्तरमानन्तर्यमार्गोत्पत्तिः । २. आनन्तर्यमार्गः, येनावरणं प्रजहाति । ३. विमुक्तिमार्गः, यस्तत्प्रहेयावरणविनिर्मुक्तः प्रथमत[1] उत्पद्यते । ४. विशेषमार्गः, य एभ्योऽन्यो मार्गः ।

---

योज्यम् । *समापत्तित एवेति* । समापत्तित एव परिपूर्णत्वं नेन्द्रियफलाभ्यामिति *नास्त्येतत्* । कस्मात् ? न ह्यसत्यामनागामिफलप्राप्तौ निरोधसमापत्तिरस्ति । *समापत्तीन्द्रियतश्च विना फलेनेति* । समापत्तीन्द्रियत एव च परिपूर्णत्वं न फलत इत्येतदपि नास्ति । यस्मादनागामिफलमप्राप्तस्य निरोधसमापत्तिर्नास्तीति ।। ६४ ॥

*इन्द्रियतः समापत्तिश्चेति* । तीक्ष्णेन्द्रियतया निरोधसमापत्तिलाभतया चेत्यर्थः । *इन्द्रियत एवेति विस्तरः । असमयविमुक्तस्येति* वचनात् । अस्येन्द्रियतः परिपूर्णत्वम्; *प्रज्ञाविमुक्तस्येति* वचनात् । न समापत्तितोऽस्य परिपूर्णत्वम् । अनिरोधसमापत्तिलाभी हि प्रज्ञाविमुक्त इत्युक्तम् । *समापत्तित एवेति; समय-विमुक्तस्येति* वचनात् । नेन्द्रियतः परिपूर्णत्वमस्य भवति; *उभयतोभागविमुक्त-स्येति* वचनात् । समापत्तितोऽस्य परिपूर्णत्वम् । निरोधसमापत्तिलाभीत्यु-भयतोभागविमुक्त इत्युक्तम् । इन्द्रियसमापत्तिभ्याम् । किम् ? परिपूर्णत्वम् । *असमयविमुक्त*त्वादिन्द्रियतः उभयतोभागविमुक्तत्वात् समापत्तित इति दर्शयति ।

---

१. तत्प्रथमतः—का० ।

कस्मात् मार्ग इत्युच्यते ? एष हि निर्वाणस्य पन्थाः; तेन[1] तद्गमनात् । निर्वाणं मार्गयन्त्यनेनेति वा ।

विमुक्तिविशेषमार्गयोः कथं मार्गत्वम् ? तज्जातीयाधिमात्रतरत्वाद्[2], उत्तरोत्तरप्रापणात्, निरुपधिशेषप्रवेशाद् वा ॥ ६५ ॥

---

*आनन्तर्यमार्गो येनावरणं प्रजहातीति* । अप्रहाणमार्गसम्भवात् । अस्ति स आनन्तर्यमार्गो येनावरणं न प्रजहाति । इन्द्रियसञ्चारादिषु । *यस्तत्प्रहेयावरण-निर्मुक्तः प्रथमत* इति । य आनन्तर्यमार्गप्रहेयेणावरणेन निर्मुक्तः । *प्रथमत* इति विशेषणम् । यस्मात् तृतीयादिषु क्षणेषु तज्जातीयो मार्गो विशेषमार्ग इतीष्यते । तेन एव चाह—*विशेषमार्गो य एभ्योऽन्यो मार्ग* इति । प्रयोगमार्गादिभ्योऽन्य इत्यर्थः । किञ्च— यदि प्रथमत इति न ब्रूयात्, विमुक्तिमार्गो यस्तत्प्रहेयावरण-निर्मुक्त इत्येतावद् ब्रूयात् । एवं सति दुःखधर्मज्ञानात् परेण सर्वे आनन्तर्य-मार्गादयस्तत्प्रहेयावरणनिर्मुक्ता उत्पद्यन्त इति सर्वे विमुक्तिमार्गाः स्युः । अनिष्टं चैतत्; आनन्तर्यमार्गादिष्वपि विमुक्तिमार्गप्रसङ्गात् । तस्मादानन्तर्यमार्गस्य दुःखधर्मज्ञानक्षान्त्यादेर्यत् प्रहेयमावरणम्, दुःखदर्शनप्रहातव्यो निकायो यावद्भावनाप्रहातव्यः, तेन प्रहेयावरणेन निर्मुक्तो यः प्रथमत उत्पद्यते स विमुक्तिमार्गः । नान्यस्तत्प्रहेयावरणनिर्मुक्तत्वेऽपीति । य एभ्यः प्रयोगमार्गा-दिभ्यस्त्रिभ्योऽन्यः स, विशेषमार्गः । षोडशान्मार्गान्वयज्ञानक्षणात् परेण सप्तदशादयस्तज्जातीया येऽनास्रवाः क्षणाः, ते विशेषमार्गस्वभावा इत्यव-गन्तव्यम् । एवमन्यदपि विमुक्तिज्ञानं यत्प्राकर्षिकं क्षयज्ञानादि, तदपि वक्तव्यम् । यश्च दृष्टधर्मसुखविहाराय वैशेषिकगुणाभिनिर्हाराय वा मार्गः, सोऽपि विशेषमार्ग एव प्रयोगमार्गः; यस्मादानन्तर्यमार्गोत्पत्तिरित्युक्तम् । अतो लौकिका अग्रधर्माः प्रयोगमार्ग इति गम्यते । यस्तु प्रतिलोमतः क्षान्त्यादिमार्गः, स कस्मिन्नन्तर्भवतीति वक्तव्यम् ? आह—प्रयोगमार्ग एवान्तर्भवति । विप्रकृष्ट-स्त्वसौ प्रयोगमार्ग इत्ययं तस्याग्रधर्मेभ्यो विशेषः । उदाहरणार्थत्वाच्चाचार्येण सन्निकृष्ट एव प्रयोगमार्ग उक्त इति ।

*एष हि निर्वाणस्य पन्थाः* । *तेन तद्गमनादि*ति । लोके येन गम्यते स मार्ग इति प्रतीतः । *अनेन च निर्वाणं गम्यते* प्राप्यते, तस्मान्मार्ग इति दर्शयति । *मार्गयन्त्यनेन वे*ति । "मार्गोऽन्वेषणे" इति धातुः पठ्यते । तस्यैद् घञि रूपं मार्ग इति । येन निर्वाणमन्विष्यते स मार्ग इति ।

---

१. एतेन—का० । २. तज्जातीयादधि०—का० ।

अभि० को० ३ : १७

मार्ग एव पुनः प्रतिपदित्युक्तः; निर्वाणप्रतिपादनात् । चतस्रः प्रतिपदः— अस्ति प्रतिपद् दुःखा धन्धाभिज्ञा, अस्ति दुःखा क्षिप्राभिज्ञा । एवं सुखापि द्विविधा । तत्र—

**ध्यानेषु मार्गः प्रतिपत्सुखा,**

चतुर्ध्यानेषु मार्गः सुखा प्रतिपद् ; अङ्गपरिग्रहणशमथविपश्यनासमताभ्यामयत्नवाहित्वात् ।

**दुःखाऽन्यभूमिषु ।**

अन्यास्वनागम्यध्यानान्तरारूप्यभूमिषु मार्गो दुःखा प्रतिपद्; अङ्गापरिग्रहात्, शमथविपश्यनान्यूनत्वाच्च यत्नवाहित्वात् । शमथन्यूने ह्यनागम्यध्यानान्तरे विपश्यनान्यूना आरूप्या इति ।

---

*विमुक्तिविशेषमार्गयोः कथं मार्गत्वमिति* । न हि ताभ्यां निर्वाणं प्राप्यते । प्रयोगानन्तर्यमार्गयोरेव तत्प्राप्तौ सामर्थ्यं न्न तयोरिति अभिप्रायः । *तज्जातीयाधिमात्रतरत्वादिति* । प्रहाणमार्गजातीयौ चालम्बनाकारानास्रवत्वसादृश्यात् । अधिमात्रतरौ च हेतूपचयतः । यथा ह्यानन्तर्यमार्गश्चतुःसत्यालम्बनषोडशाकारोऽनास्रवश्च, एवं विमुक्तिविशेषमार्गावपि । अधिमात्रतरत्वेनैव तु तस्माद्विशेष इति । *उत्तरोत्तरप्रापणात्* । *निरुपधिशेषप्रवेशाद्वेति* । यस्माद्विमुक्तिमार्गेण विशेषमार्गेण च उत्तरोत्तरो मार्गः प्राप्यते, तस्मादनयोर्मार्गत्वमित्यर्थः । यस्माद्वा ताभ्यां निरुपधिशेषं निर्वाणं प्रविशति यदुत्पत्तौ निरुपधिशेषनिर्वाणप्रवेश इति ।

अपरे पुनरेवं व्याचक्षते—उत्तरोत्तरप्रापणान्निरुपधिशेषप्रवेशः, तस्मादनयोर्मार्गत्वमिति ॥ ६५ ॥

*निर्वाणप्रतिपादनादिति* । यस्मादनेन निर्वाणं प्रतिपद्यत इत्यर्थः । *एवं सुखापि द्विविधेति* । अस्ति प्रतिपत्सुखा धन्धाभिज्ञा, अस्ति सुखा क्षिप्राभिज्ञेति । *अङ्गपरिग्रहणशमथविपश्यनासमताभ्यामयत्नवाहित्वादिति* । अङ्गैः परिग्रहः । शमथविपश्यनयोः समत्वम् । अङ्गपरिग्रहश्च शमथविपश्यनासमत्वं च, ताभ्यामयत्नवाहित्वम् । *तस्मात्सुखा प्रतिपत्* । यस्मादङ्गपरिगृहीतानि ध्यानानि शमथविपश्यनाभ्यां समानि च, तस्मादयत्नवाहीनि । अतश्च सुखासौ प्रतिपदिति ।

---

१. ०परिग्रहशमथ०—का० ।

सा पुनर्द्विविधापि प्रतिपत्—

**धन्धाभिज्ञा मृदुमतेः क्षिप्राभिज्ञेतरस्य तु ॥ ६६ ॥**

मृद्विन्द्रियस्य सुखा दुःखा वा प्रतिपद्धन्धाभिज्ञा, तीक्ष्णेन्द्रियस्य क्षिप्राभिज्ञा ।

धन्धाभिज्ञा अस्यां प्रतिपदि सेयं धन्धाभिज्ञा । एवं क्षिप्राभिज्ञा । धन्धस्य वा पुद्गलस्येयमिति धन्धाभिज्ञा ।

पुनरप्येष मार्गो बोधिपक्ष्याख्यां लभते । सप्तत्रिंशद् बोधिपक्षा धर्माः— चत्वारि स्मृत्युपस्थानानि, चत्वारि सम्यक्प्रहाणानि, चत्वार ऋद्धिपादाः पञ्चेन्द्रियाणि, पञ्च बलानि, सप्त बोध्यङ्गानि, आर्याष्टाङ्गो मार्ग इति ॥ ६६ ॥

---

*अङ्गापरिग्रहादिति* विस्तरः । *अङ्गापरिग्रहादनागम्यध्यानान्तरारूप्या यत्नवाहिनः* । *शमथविपश्यनान्यूनत्वाच्च सम्भवतस्ते यत्नवाहिनः* । *शमथन्यूनत्वादनागम्यध्यानान्तरे यत्नवाहीनि* । *विपश्यनान्यूनत्वाच्चारूप्या यत्नवाहिनः* । तद्भावात् । *तेऽनागम्यादयो दुःखा प्रतिपदिति* ।

*धन्धाभिज्ञेति* । *धन्धाभिज्ञास्यामिति* । धन्धाभिज्ञा मन्दप्रज्ञेत्यर्थः । *क्षिप्राभिज्ञेति* तीक्ष्णप्रज्ञा । *धन्धस्य* मन्दस्य *पुद्गलस्येयमभिज्ञा धन्धाभिज्ञेति* । षष्ठीतत्पुरुषेणाप्येतत्सिध्यतीति दर्शयति । एवं क्षिप्रस्य तीक्ष्णस्य पुद्गलस्याभिज्ञा क्षिप्राभिज्ञेति योज्यम् ।

*चत्वारि स्मृत्युपस्थानानि* । कायवेदनाचित्तधर्माः स्मृत्युपस्थानानि यथोक्तानि । *चत्वारि सम्यक्प्रहाणानि* । उत्पन्नानां पापकानामकुशलानां धर्माणां प्रहाणाय छन्दं जनयति, व्यायच्छते, वीर्यमारभते, चित्तं प्रगृह्णाति, प्रदधाति । अनुत्पन्नानां पापकानामकुशलानां धर्माणामनुत्पादाय छन्दं जनयतीति पूर्ववत् । अनुत्पन्नानां कुशलानां धर्माणामुत्पादाय छन्दं जनयतीति पूर्ववत् । उत्पन्नानां कुशलानां धर्माणां स्थितये असम्मोषाय भावनापरिपूर्ये भूयोभावाय वृद्धिविपुलताज्ञानसाक्षात्क्रियायै छन्दं जनयतीति पूर्ववत् । *चत्वार ऋद्धिपादाः* । छन्दसमाधिप्रहाणसंस्कारसमन्वागत ऋद्धिपादः । एवं वीर्य-चित्त-मीमांसासमाधिप्रहाणसंस्कारसमन्वागत ऋद्धिपादः । ऋद्धिपादा ऋद्धिहेतव इत्यर्थः । *पञ्चेन्द्रियाणि* । श्रद्धावीर्यस्मृतिसमाधिप्रज्ञेन्द्रियाणि । *पञ्च बलानि* । श्रद्धादीन्येव बलानि । *सप्त बोध्यङ्गानि* । स्मृति-धर्मप्रविचय-वीर्य-प्रीतिप्रश्रब्धिसमाध्युपेक्षाबोध्यङ्गानि । स्मृतिरेव सम्बोध्यङ्गं स्मृतिसम्बोध्यङ्गम् । एवं यावदुपेक्षैव सम्बोध्यङ्गमुपेक्षासम्बोध्यङ्गमिति । *आर्याष्टाङ्गो मार्गः* । सम्यग्दृष्टिः, सम्यक्सङ्कल्पः, सम्यग्वाक्, सम्यक्कर्मान्तः, सम्यगाजीवः, सम्यग्व्यायामः, सम्यक्स्मृतिः, सम्यक्समाधिरिति ॥ ६६ ॥

तत्र—

**अनुत्पादक्षयज्ञाने बोधिः,**

क्षयज्ञानमनुत्पादज्ञानं च । पुद्गलभेदेन तिस्रो बोधय उत्पद्यन्ते—श्रावकबोधिः, प्रत्येकबोधिः, अनुत्तरा सम्यक्सम्बोधिरिति; अशेषाविद्याप्रहाणात् । ताभ्यां स्वार्थस्य यथाभूतं[1] कृताऽपुनःकर्तव्यतावबोधाच्च ।

**तादनुलोम्यतः ।**

**सप्तत्रिंशद् तु तत्पक्षाः[2],**

बोधेरनुलोमत्वाद् बोधिपक्ष्याः सप्तत्रिंशदुत्पद्यन्ते ।

**नामतो द्रव्यतो दश ।। ६७ ।।**

दश द्रव्याणि सर्वे बोधिपक्ष्याः ॥ ६७ ॥

---

*अशेषाविद्याप्रहाणादिति* । यस्मादशेषत्रैधातुकयविद्याप्रहाणम्, तस्मादुभे बोधिः । अनेन शैक्षपृथग्जनानां प्रज्ञा न बोधिर्व्यवस्थाप्यत इति दर्शयति । किंच यथाक्रमम् ? *ताभ्यां स्वार्थस्य यथाभूतं कृतापुनःकर्तव्यतावबोधाच्च* । क्षयज्ञानेन यथाभूतं कृतावबोधात् तत्क्षयज्ञानं बोधिः । 'दुःखं मे परिज्ञातम्' इति यथाभूतं प्रजानाति, 'समुदयो मे प्रहीणः' इति, निरोधो मे साक्षात्कृतः', 'मार्गो मे भावितः' इति यथाभूतं प्रजानातीति । अनुत्पादज्ञानेन यथाभूतमपुनःकर्तव्यमिति । 'मार्गो मे भावितो न पुनर्भावयितव्यः' तदनुत्पादज्ञानमपि बोधिः । 'दुःखं मे परिज्ञातं न पुनः परिज्ञातव्यम्' इति यथाभूतं प्रजानाति, 'समुदयो मे प्रहीणो न पुनः प्रहातव्यः' इति, 'निरोधो मे साक्षात्कृतो न पुनः साक्षात् कर्तव्यः' इति, 'मार्गो मे भावितो न पुनर्भावयितव्यः' इति यथाभूतं प्रजानातीति । 'दुःखं मे परिज्ञातम्' इत्यनेन क्षयज्ञानम्, 'न पुनः परिज्ञातव्यम्' इत्यनेनानुत्पादज्ञानम्—इत्युभयमपि तीक्ष्णेन्द्रियस्य पुद्गलस्य दर्शयतीति सवमेयम् ।

तदेवं क्षयज्ञानमनुत्पादज्ञानं च बोधिरित्ययमर्थः प्रसाध्य समुदयार्थं प्रसाधयन्नाह—*तादनुलोम्यतः सप्तत्रिंशत्तु तत्पक्षाः* इति । तस्या बोधेरनुलोमस्तदनुलोमः, तद्भावस्तादनुलोम्यम्; तस्मात् तादनुलोम्यतो बोधिपक्षाः । बोधिपक्षे साधवोऽनुलोमा इति बोधिपक्षाः स्मृत्युपस्थानादयः सप्तत्रिंशदुच्यन्ते प्रवचने ।

---

१. यथाभूत०–का० ।

कतमानि दश ?

**श्रद्धा वीर्यं स्मृतिः प्रज्ञा समाधिः प्रीत्युपेक्षणे ।**

**प्रश्रब्धिशीलसङ्कल्पाः,**

इत्येतानि दश द्रव्याणि ।

कथं कृत्वा ?

**प्रज्ञा हि स्मृत्युपस्थितिः ॥ ६८ ॥**

**वीर्यं सम्यक्प्रहाणाख्यमृद्धिपादाः समाधयः ।**

प्रज्ञावीर्यसमाधिस्वभावा हि स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादाः । अत इन्द्रियाणि तावद् बलानि च नामग्राहिकया श्रद्धावीर्यस्मृतिसमाधिप्रज्ञाद्रव्याणि पञ्च । स्मृत्युपस्थानानि धर्मप्रविचयसम्बोध्यङ्गं सम्यग्दृष्टिश्च प्रज्ञैव । सम्यक्प्रहाणानि

---

*दश द्रव्याणीति* । केषाञ्चिन्मतेन । हि "वैभाषिकाणामेकादश कायवाक्कर्मणोरसम्भिन्नत्वात्" इति ॥ ६७ ॥

"*प्रज्ञा हि स्मृत्युपस्थितिः*" इति प्रज्ञा स्मृत्युपस्थानमित्यर्थः । स्मृतिरुपतिष्ठतेऽनयेति कृत्वा । तथा हि सूत्र उक्तम्—"काये कायानुपश्यी" इति विस्तरः ।

"*वीर्यं सम्यक्प्रहाणाख्यम्*" इति । यस्मादुक्तम्—"उत्पन्नानां पापकानामकुशलानां धर्माणां प्रहाणाय छन्दं जनयति, व्यायच्छते, वीर्यमारभते" इति सर्वम् ।

"*ऋद्धिपादाः समाधयः*" इति । यस्मादुक्तम्—"छन्दसमाधिप्रहाणसंस्कारसमन्वागतमृद्धिपादं भावयति" इति सर्वम् । प्रहाणसंस्काराः पुनरत्राष्टौ सूत्रे पठ्यन्ते । कथम् ? तथाभूतस्य यश्छन्दः यो व्यायामः या श्रद्धा या प्रश्रब्धिः या स्मृतिः यत्सम्प्रजन्यम् या चेतना योपेक्षा—इम उच्यन्ते प्रहाणसंस्कारा इति । *इन्द्रियाणि तावदिति* विस्तरः । *स्वनामग्रहणेन* यानीन्द्रियबलस्वभावानि *श्रद्धावीर्यस्मृतिसमाधिप्रज्ञा द्रव्याणि पञ्च* । तेषां *प्रज्ञैव सा यानि* चत्वारि *स्मृत्युपस्थानानि* । यच्च बोध्यङ्गेषु *धर्मप्रविचयसम्बोध्यङ्गम्* । *या च* मार्गाङ्गेषु *सम्यग्दृष्टिः* । न द्रव्यान्तरम् । *वीर्यमेव तद्यानि* चत्वारि *सम्यक्प्रहाणानि* । यच्च बोध्यङ्गेषु *वीर्यसम्बोध्यङ्गम्* । यश्च मार्गाङ्गेषु *सम्यग्व्यायामः* । *समाधिरेव* च सः । ये चत्वार

वीर्यसम्बोध्यङ्गं सम्यग्व्यायामश्च वीर्यमेव । ऋद्धिपादाः समाधिसम्बोध्यङ्गं सम्यक्समाधिश्च समाधिरेव । स्मृतिसम्बोध्यङ्गं सम्यक्स्मृतिश्च स्मृतिरेव ।

किमवशिष्यते ? प्रीतिप्रश्रब्ध्युपेक्षासम्बोध्यङ्गानि, सम्यक्सङ्कल्पः[1], शीलाङ्गानि च । तान्येतानि पञ्च द्रव्याणि । एवमेते बोधिपक्ष्या दश द्रव्याणि भवन्ति ।

वैभाषिकाणामेकादश । कायवाक्कर्मणोरसम्भिन्नत्वात् शीलाङ्गानि द्वे द्रव्ये इति ।

यत्त्वेतदुक्तम्—"प्रज्ञावीर्यसमाधिस्वभावाः स्मृत्युपस्थानादयः" इति । अत्र वेदितव्यम्—

**प्रधानग्रहणं सर्वे गुणाः प्रायोगिकास्तु ते ।। ६९ ।।**

प्रधानग्रहणेनैवमुक्तम् । सर्वे तु प्रायोगिका गुणाः स्मृत्युपस्थानसम्यक्-प्रहाणर्द्धिपादाः ।

---

*ऋद्धिपादाः* । यच्च बोध्यङ्गेषु *समाधिसम्बोध्यङ्गम्*, यच्च मार्गाङ्गेषु *सम्यक्समाधिः* ।

*किमवशिष्यते* । यन्न प्रज्ञेन्द्रियादिस्वभावम् । बोध्यङ्गेषु *प्रीतिप्रश्रब्ध्युपेक्षा-सम्बोध्यङ्गान्य*वशिष्यन्ते; मार्गाङ्गेषु *सम्यक्संकल्पः*, *शीलाङ्गानि* च त्रीणि—सम्यग्वाक्, सम्यक्कर्मान्त, सम्यगाजीव इति ।

*दश द्रव्याणीति* । श्रद्धादीनि पञ्च, प्रीतिसम्बोध्यङ्गादीनि च पञ्चेति शीलाङ्गानि त्रीण्यविज्ञप्तिस्वभावानीति कृत्वैकं द्रव्यं व्यवस्थाप्यते ।

*वैभाषिकाणामेकादश* द्रव्याणि । *कायवाक्कर्मणोरसम्भिन्नत्वाद् द्वे* द्रव्यमिति कृत्वा । अभिप्रायवशात् पक्षद्वयेऽप्यदोषः । यदि तु मुख्यवृत्त्या तस्मिन् कलापे यावन्ति द्रव्याणि सन्ति, तावन्ति गण्येरन्; नैव तानि दश द्रव्याणि, समाहित-विज्ञप्तिरूपाणां सप्तद्रव्यत्वात् । षोडश द्रव्याणीति वक्तव्यं स्यात् ।

*प्रधानग्रहणेनैवमुक्तम्* । प्रज्ञादिस्वभावाः स्मृत्युपस्थानादय इति । *सर्वे तु प्रायोगिकगुणाः* सास्रवानास्रवाः श्रुतचिन्ताभावनामया यथायोगं *स्मृत्युपस्थान-सम्यक्प्रहाणर्द्धिपादाः* । प्राधान्यं पुनस्तद्बलेनान्येषां वृत्तेः । न पुनस्ते न सन्ति ।

---

१. ०सङ्कल्पाः–जा० ।

कस्माद्वीर्यं सम्यक्प्रधानमुक्तम् ? तेन सम्यक्कायवाङ्मनांसि प्रधीयन्ते ।

समाधिः कस्माद् ऋद्धिपाद उक्तः ? तत्प्रतिष्ठितत्वात्[1] सर्वगुणसम्पत्तेः ।

ये त्वाहुः—"समाधिरेवर्द्धिः पादाश्छन्दादयः" इति । तेषां द्रव्यतस्त्रयोदश बोधिपक्षाः[2] प्राप्नुवन्ति; छन्दचित्तयोराधिक्यात् । सूत्रं च विरुध्यते—"ऋद्धिं च वो भिक्षवो दर्शयिष्यामि ऋद्धिपादांश्च यावद् । ऋद्धिः कतमा ? इह भिक्षुरनेकविधमृद्धिविषयं प्रत्यनुभवति । एको भूत्वा बहुधा भवति" इति विस्तरः ।

---

प्रज्ञाप्रधानानि हि स्मृत्युपस्थानानीत्यतः प्रज्ञाग्रहणम् । न तु प्रज्ञैव स्मृत्युपस्थानम् . किं तर्हि ? प्रज्ञावीर्यस्मृतिसमाधिप्रीतिप्रश्रब्ध्युपेक्षासम्यक्सङ्कल्पादयोऽपीति । प्रयोगिकग्रहणमुपपत्तिलभ्यश्रद्धादिनिरासार्थम् । एवं वीर्यप्रधानानि सम्यक्प्रधानानि, समाधिप्रधाना ऋद्धिपादा इति विस्तरेण वक्तव्यम् ।

*ऋद्धिपादाः समाधय इति कुत एतत् ?* सूत्रात् । उक्तं हि—"छन्दं चापि भिक्षवो भिक्षुरधिपतिं कृत्वा लभते समाधिम्, सोऽस्य भवति छन्दसमाधिः । चित्तम्, वीर्यम्, मीमांसां चापि भिक्षवो भिक्षुरधिपतिं कृत्वा लभते समाधिम्, सोऽस्य भवति मीमांसासमाधिः" इति ।

*तेन हि सम्यक्कायवाङ्मनांसि प्रधीयन्त* इति । प्रधीयन्ते = धार्यन्ते, नियम्यन्ते, प्रवर्तन्ते वा कदाचिदनेनेति प्रधानम् । *तत्प्रतिष्ठितत्वादि*ति । यस्मात् सर्वगुणसमापत्तिलक्षणा ऋद्धिस्तस्मिन् समाधौ प्रतिष्ठिता । ऋद्धेः पादः प्रतिष्ठेति ऋद्धिपाद इति ।

*ये त्वाहुः समाधिरेव ऋद्धिः*, पादाश्छन्दादयः, छन्दचित्तवीर्यमीमांसा इति । *तेषामेवंवादिनां वैभाषिकाणां त्रयोदश बोधिपक्षा प्राप्नुवन्ति* । *छन्दचित्तयोराधिक्यादे*कादशसु प्रक्षेपे । वीर्यप्रज्ञे त्वत्र नाधिके; सम्यक्प्रधानस्मृत्युपस्थानेष्वन्तर्भावात् । *बहुधा भवतीति विस्तर* इति । बहुधा भूत्वैको भवति आविर्भावम् तिरोभावं ज्ञानदर्शनेन प्रत्यनुभवति । तिरः कुड्यं तिरः प्राकारमसज्जमानः कायेन गच्छति, तद्यथा आकाशे । पृथिव्यामुन्मज्जननिमज्जनं करोति, तद्यथोदके । उदकेऽभिद्यमानेन स्रोतसा गच्छति, तद्यथा पृथिव्याम् । आकाशे पर्यङ्केण क्रामति, तद्यथा शकुनिः पक्षी । इमौ वा पुनः भूयो चन्द्रमसावेवं महर्धिकावेवंमहानुभावौ पाणिना आमार्ष्टि, परिमार्ष्टि यावद् ब्रह्मलोकं कायेन वशे वर्तयत इति इयमुच्यते ऋद्धिः । ऋद्धिपादाः कतमे ? छन्दसमाधिः,

---

१. तत्प्रतिष्ठत्वात्—का० । २. बोधिपक्ष्याः—का० ।

कस्मादिन्द्रियाण्येव बलान्युक्तानि ? मृद्वधिमात्रभेदादवमर्दनीयानवमर्दनीयत्वात् ।

इन्द्रियाणां किंकृतोऽनुक्रमः ? श्रद्दधानो हि फलार्थं वीर्यमारभते, आरब्धवीर्यस्य स्मृतिरुपतिष्ठते, उपस्थितस्मृतेरविक्षेपाच्चित्तं समाधीयते, समाहितचित्तो यथाभूतं प्रजानातीति ॥ ६८-६९ ॥

कस्यामवस्थायां कतमे ते बोधिपक्ष्याः प्रभाव्यन्ते ?

**आदिकर्मिकनिर्वेधभागीयेषु प्रभाविताः ।**
**भावने दर्शने चैव सप्त वर्गा यथाक्रमम् ॥ ७० ॥**

आदिकर्मिकावस्थायां कायाद्युपलक्षणार्थं स्मृत्युपस्थानानि । विशेषाधिगमेन

---

वीर्यसमाधिः, मीमांसासमाधिः—इम उच्यन्ते ऋद्धिपादा इति। एवंलक्षणः समाधिः । तस्मान्न समाधिरेव ऋद्धिरिति[1] ।

अत्राचार्यसङ्घभद्र आह—न भवत्येष तेषां दोषः, समाधिं हि ते ऋद्धिपादमिच्छन्ति, ऋद्धिरपीति । छन्दादयस्तूच्यन्ते समाधेश्चतुष्ट्वज्ञापनार्थम्[2] । कश्चिद्धि समाधिः कुशलमूलप्रयोगावस्थायां प्रधानीभवति, कश्चित् कुशलमूलनिष्पन्नावस्थायाम् । पूर्वोऽत्रर्द्धिपादः, उत्तरऋद्धिरिति सूत्रविरोधोऽपि चैषां न भवति । ऋद्धिपादफलमृद्धिशब्देनोक्तम्, परिज्ञाफलस्य तच्छब्दाभिधानवदित्यादि ।

*मृद्वधिमात्रभेदादिति* । मृदूनीन्द्रियाणि । अधिमात्राणि बलानि । कथमेषां मृद्वधिमात्रभेदः ? इति हेतुमाह—*अवमर्दनीयानवमर्दनीयत्वादिति* । *तद्विपक्षभूतैराश्रद्ध्यकौसीद्यमुषितस्मृतिताविक्षेपासम्प्रजन्यैरन्तरासमुदाचारादिन्द्रियाण्यवमृद्यन्ते, न त्वेवं बलानीति* । पुनस्तान्युक्तानि ॥ ६८-६९ ॥

"*आदिकर्मिकनिर्वेधभागीयेषु*" इति । पञ्चावस्था इमे उक्ताः ।

"*भावने दर्शने च*" द्वे अवस्थे इति । सप्तस्ववस्थासु—

"*सप्त वर्गा यथाक्रमम्*" प्रभाव्यन्ते, व्यवस्थाप्यन्ते, प्रधानीक्रियन्ते वा । आदिकर्मिकावस्थायां स्मृत्युपस्थानानि । ऊष्मगतावस्थायां सम्यक्प्रधानानि । मूर्धावस्थायामृद्धिपादाः । क्षान्त्यवस्थायामिन्द्रियाणि । लौकिकाग्रधर्मावस्थायां बलानि । भावनामार्गावस्थायां बोध्यङ्गानि । दर्शनमार्गावस्थायामार्याष्टाङ्गो मार्ग इति । *विशेषाधिगमहेतुर्वीर्यसंवर्धनम्* । *तस्मादूष्मगतेषु सम्यक्प्रधानानि* ।

---

१. ऋधिरिति—जा० । २. °चतुस्त्व०—जा० ।

वीर्यसंवर्धनादूष्मगतेषु सम्यक्प्रधानानि । अपरिहाणीयकुशलमूलप्रवेशत्वात् मूर्धस्वृद्धिपादाः । अपुनःपरिहाणित आधिपत्यप्राप्तत्वात् क्षान्तिष्विन्द्रियाणि । क्लेशानवमर्दनीयत्वाद्, अग्रधर्मेषु बलानि लौकिकान्यधर्मानवमर्दनीयत्वाद्वा । बोध्यासन्नत्वात् भावनामार्गे बोध्यङ्गानि । गमनप्रभावित्वाद् दर्शनमार्गे मार्गाङ्गानि; तस्याशुगामित्वात् ।

संख्यानुपूर्वीविधानार्थं तु पूर्वं सप्तोक्तानि, पश्चादष्टौ ।

तत्र धर्मप्रविचयसम्बोध्यङ्गं बोधिर्बोध्यङ्गं च सम्यग्दृष्टिर्मार्गो मार्गाङ्गं चेति वैभाषिकाः ।

अपरे पुनरभित्त्वैव क्रमं बोधिपक्षाणामानुपूर्वीं[1] वर्णयन्ति; "आदित एव तावद् बहुविधविषयव्यासेकविसारिणीनां बुद्धीनां निग्रहार्थं स्मृत्युपस्थानानि चेतस

*अपरिहाणीयकुशलमूलप्रवेशत्वात्* । *मूर्धस्विति* । अपरिहाण्यनुकूलानां कुशलमूलानां प्रवेशो मूर्धतः । "मूर्धलाभी न मूलच्छिद्" (अभि० को० ६.२३) इति वचनात् । प्रविशत्येभिरिति कृत्वा प्रवेशः । अपरिहाणिर्हि क्षान्तिषु भवति । तदवस्थाः समाधयः समृद्धेराश्रयीभवन्तीति । *मूर्धस्वृद्धिपादा* व्यवस्थाप्यन्ते । *अपुनःपरिहाणित* इति विस्तरः । यस्मात् क्षान्तिषु पुनः परिहाणिर्नास्ति, आद्ययोरेव हि परिहाणिसम्भवतः । *तस्मादाधिपत्यप्राप्तानि* श्रद्धादीनि भवन्ति । तद्भावात् *क्षान्तिष्विन्द्रियाणि* व्यवस्थाप्यन्ते । *क्लेशानवमर्दनीयत्वादिति* । यस्मात् क्लेशैर्नावमृद्यन्ते; तस्यामवस्थायां क्लेशासमुदाचारात् । *लौकिकान्यधर्मानवमर्दनीयत्वाद्वा* । अथ वा – लौकिकैरन्यैर्धर्मैरनवमर्दनीयत्वाद*ग्रधर्मावस्थायां* श्रद्धादीनि *बलानीति प्रभाव्यन्ते* । *बोध्यासन्नत्वादिति* । क्षयानुत्पादज्ञानसन्नत्वादित्यर्थः । भावनामार्गो हि क्षयानुत्पादज्ञानासन्नः । दर्शनमार्गस्तु दूरः, तदन्तरालभावनामार्गव्यवहितत्वात् । *गमनप्रभावितत्वादिति* । मार्गो हि लोके गमनप्रभावितः । गच्छन्त्यनेनेति मार्गः, गच्छतीति वा मार्गः, "पाटलिपुत्रमयं पन्था गच्छति' इति लोके वचनात् । दर्शनमार्गश्चातिशयेन गमनप्रभावितो न भावनामार्गः । कथम् ? इत्याह—*तस्याशुगामित्वादिति* । तद्वानपि तेनाशु गच्छति । भावनामार्गेण तु भूमिभेदेन प्रकर्षकत्वात् बहुना कालेन गच्छति ।

*अपरे पुनराहुरिति* । *आचार्यः* । अस्मदादय इत्यभिप्रायात् । यथा *वैभाषिकैर्भिन्नः क्रमः*, तथा तमभित्त्वा बोधिपक्षाणामानुपूर्वीं वर्णयन्ति । दर्शनमार्गे

१. ०पक्ष्याणा०–का० ।

उपनिबद्धानि भवन्ति, यावदेव गर्धाश्रितानां स्मरसंकल्पानां प्रतिविनोदनाय" इति सूत्रे वचनात्। तद्बलेन वीर्यसंवर्धनाच्चतुर्विधकार्यसम्पादनाय सम्यक्चित्तं प्रदधातीति सम्यक्प्रधानानि। ततः समाधिविशोधनाद् ऋद्धिपादाः। समाधिसन्निश्रयेण लोकोत्तरधर्माधिपतिभूतानि श्रद्धादीनीन्द्रियाणि। तान्येव च निर्जितविपक्षसमुदाचाराणि बलानि। दर्शनमार्गे बोध्यङ्गानि। प्रथमतो धर्मतत्त्वावलोकात् उभयोर्मार्गाङ्गानि।

तथा ह्युक्तम्—"आर्याष्टाङ्गे खलु मार्गे भावनापरिपूरिं गच्छति चत्वारि स्मृत्युपस्थानानि भावनापरिपूरिं गच्छन्ति, यावत् सप्त बोध्यङ्गानि" इति।

पुनश्चोक्तम्—"यथाभूतवचनारोचनमिति भिक्षवश्चतुर्णामार्यसत्यानामेतदधि-

---

बोध्यङ्गानीति कृत्वा। *बहुविधे*ति विस्तरः। बहुप्रकारो विषयो रूपादिभेदात् नीलादिभेदाच्च। तस्मिन् *व्यासेको* विक्षेपः। बहुविषयव्यासेकेन विसतुं शीलमासामिति। *बहुविधविषयव्यासेकविसारिण्यो बुद्धयः*। *तासां निग्रहार्थं स्मृत्युपस्थानानि*। *गर्धाश्रितानां* तृष्णाश्रितानामित्यर्थः। *स्मरसङ्कल्पानाम्*इति अनुभूतविषयस्मृतिसङ्कल्पानामित्यर्थः। कामसङ्कल्पानामिति वा। *तद्बलेने*ति। चतुःस्मृत्युपस्थानबलेनेत्यर्थः। *चतुर्विधकार्यसम्पादनायेति*। चतुर्विधं कार्यम्—उत्पन्नानां धर्माणां प्रहाणम्, अनुत्पन्नानामनुत्पादः, तथानुत्पन्नानां कुशलानामुत्पादः, उत्पन्नानां स्थित्यादीनि। *ततः समाधिविशोधनाद्*इति। ततः सम्यक्प्रधानेभ्योऽनन्तरं समाधेर्विशोधनाद्*ऋद्धिपादाः प्रभाव्यन्ते*। *लोकोत्तरधर्माधिपतिभूतानी*ति। तदावाहकत्वादधिपतिभूतानि वेदितव्यानि। तान्येवे*न्द्रियाणि*। यदा *निर्जितविपक्षसमुदाचाराणि*। निर्जिताश्रद्ध्यादिसमुदाचाराणि भवन्ति, तदा *बलानि*। इन्द्रियावस्थायां हि क्लेशसमुदाचारसम्भवति; क्षान्त्यवस्थायाः प्राकर्षिकत्वात्। *दर्शनमार्गे* बोध्यङ्गानीति। अनास्रवा प्रज्ञा बोधिरिति कृत्वा। *उभयोर्मार्गाङ्गानी*ति। दर्शनभावनामार्गयोः।

कथम्? इत्याह—*तथा ह्युक्तमि*ति विस्तरः। भावनया परिपूरिर्भावनापरिपूरिः, तां गच्छत्यार्याष्टाङ्गो मार्गः। *तस्मिन् गच्छति चत्वारि स्मृत्युपस्थानानि भावनापरिपूरिं गच्छन्ति*। *यावत्सप्त बोध्यङ्गानी*ति। भावनापरिपूरिं गच्छन्तीति वचनात् भावनामार्गेऽपि आर्याष्टाङ्गो मार्गो भवतीति गम्यते। न हि दर्शनमार्गे भावना परिपूरिं गच्छति। किं तर्हि? भावनामार्गे इति।

वचनं यथागतेन मार्गेण प्रक्रमणमिति भिक्षो आर्याष्टाङ्गस्य मार्गस्यैतदधिवचनम्" इति। तस्मादुभयोरार्याष्टाङ्गो मार्ग एष्टव्यः ॥ ७० ॥

**सिद्धोऽनुक्रमः ॥**

इदं तु वक्तव्यम्—कति बोधिपक्षा धर्माः सास्रवा इति? कत्यनास्रवा इति?

**अनास्रवाणि बोध्यङ्गमार्गाङ्गाणि[1],**

भावनादर्शनमार्गयोस्तद्व्यवस्थापनात्। लौकिका अपि हि सम्यग्दृष्ट्यादयः सन्ति। ते तु नार्यमार्गशब्दं लभन्ते।

**द्विधेतरे।**

अन्ये बोधिपक्षाः सास्रवानास्रवाः।

कस्यां भूमौ कति बोधिपक्षाः?

**सकलाः प्रथमे ध्याने,**

सर्वे सप्तत्रिंशत् प्रथमे ध्याने।

**अनागम्ये प्रीतिवर्जिताः ॥ ७१ ॥**

कस्मादनागम्ये प्रीत्यभावः? सामन्तकानां बलवाहनीयत्वाद्, अधरभूमिसाशङ्कत्वाच्च ॥ ७१ ॥

*पुनश्चोक्तम्*। उभयोर्मार्गाङ्गानि व्यवस्थाप्यन्त इति। *चतुर्णामार्यसत्यानामेतदधिवचनमिति*। दर्शनमार्गं दर्शयति। *यथागतेन मार्गेण प्रक्रमणमिति* विस्तरेण यावन्*मार्गस्यैतदधिवचनमिति*। भावनामार्गं दर्शयति। यथागतेन यथाप्राप्तेन मार्गेण प्रक्रमणं यावद् बोधिरिति। तदेवं दर्शनमार्गे भावनामार्गे च मार्गाङ्गानि व्यवस्थाप्यन्त इति। *अत उभयोरार्याष्टाङ्गो मार्ग एष्टव्य इति* ॥ ७० ॥

*सिद्धोऽनुक्रमः*। पूर्वं बोध्यङ्गानि, पश्चादार्याष्टाङ्गो मार्ग इति।

"*अनास्रवाणि बोध्यङ्गमार्गाङ्गाणि*" इति। अनास्रवाण्येवेत्यवधारणम्।

"*द्विधेतरे*" इति। स्मृत्युपस्थानादयो बलपर्यन्ताः।

१. ०मार्गाङ्गानि—का०।

**द्वितीयेऽन्यत्र सङ्कल्पात्,**

द्वितीये ध्याने सम्यक्संकल्पवर्ज्याः षट्त्रिंशदेव; तत्र वितर्काभावात्।

**द्वयोस्तद्द्वयवर्जिताः।**

तृतीयचतुर्थयोर्ध्यानयोः प्रीतिसङ्कल्पाभ्यां वर्जिताः पञ्चत्रिंशत्।

**ध्यानान्तरे च,**

ताभ्यामेव द्वाभ्यां वर्जिताः पञ्चत्रिंशदेव।

**शीलाङ्गैस्ताभ्यां च त्रिष्वरूपिषु ॥ ७२ ॥**

'वर्जिताः' इति वर्तते। आरूप्येषु सम्यग्वाक्कर्मान्ताजीवैः प्रीतिसङ्कल्पाभ्यां च वर्जिता द्वात्रिंशत् ॥ ७२ ॥

**कामधातौ भवाग्रे च बोधिमार्गाङ्गवर्जिताः।**

द्वाविंशतिर्बोधिपक्ष्यास्तयोरनास्रवमार्गाभावात्।

बोधिपक्षेषु वर्तमानस्य कस्यामवस्थायामवेत्यप्रसादलाभो वेदितव्यः ?

**त्रिसत्यदर्शने शीलधर्मावेत्यप्रसादयोः ॥ ७३ ॥**

*बलवाहनीयत्वादिति*। बलेन वीर्येण सम्मुखीकरणीयत्वात्। *अनागम्ये प्रीत्यभावः*। सुखाधिगम्यं चित्तं प्रीणाति, नेतरदिति। किञ्च *अधरभूमिसाशङ्कत्वाच्च*। परिहाणिं प्रति साशङ्क इत्यतश्च तत्र प्रीत्यभावः। साशङ्कतायां हि चित्तं न प्रीयते ॥ ७१ ॥

*सङ्कल्पवर्ज्या* इति। सङ्कल्पः = वितर्कः ॥ ७२ ॥

"*कामधातौ भवाग्रे च बोधिमार्गाङ्गवर्जिताः*" इति। कथं भवाग्रे कायस्मृत्युपस्थानं भवति। न हि तत्र कायो विद्यते, कायालम्बना हि प्रज्ञा कायस्मृत्युपस्थानम्, न च भवाग्रं कामधातुं रूपधातुं चालम्बते; "न मौलाः कुशलारूप्याः सास्रवाधरगोचराः" (अभि० को० ८.२१) इति सिद्धान्तात् ?

नैतत् केनचिद् *व्याख्याकारेण* लिखितम्, तदिदमत्र व्यवस्थापयामः— कायस्य कः स्वभावः ? भौतिकत्वमित्युक्तम्। भूतं भौतिकं च काय इत्यर्थः। तत्र यदि केवलभूतालम्बना, केवलभौतिकालम्बना, तदुभयालम्बना वा प्रज्ञा भवेत्, कायस्मृत्युपस्थानमेव तद्भवेत्। भवाग्रे च कुशलसास्रवा प्रज्ञा मार्गेत इति न्यायत इति वानास्रवसंवरमार्गालम्बनत इति। सास्रवाधरालम्बना हि मौलाः कुशलारूप्या नेष्यन्ते। न त्वनास्रवाधरालम्बना इति। अतस्तदत्र कायस्मृत्युपस्थानं वेदितव्यम्।

**लाभो मार्गाभिसमये बुद्धतत्सङ्घयोरपि ।**

दुःखसमुदयनिरोधसत्यान्यभिसमयन् धर्मे चावेत्यप्रसादमार्यकान्तानि च शीलानि प्रतिलभते ॥ ७३ ॥

मार्गसत्यमभिसमयन् बुद्धे तस्य च श्रावकसङ्घेऽवेत्यप्रसादं प्रतिलभते । यो हि तयोः प्रसादः सोऽशैक्ष्येषु बुद्धकरकेषु धर्मेषु शैक्षाशैक्षेषु च सङ्घकरकेषु प्रसादः । अपिशब्दाच्छीलधर्मावेत्यप्रसादौ च प्रतिलभते ।

कोऽयमिह धर्मोऽभिप्रेतः ?

**धर्मः सत्यत्रयं बोधिसत्त्वप्रत्येकबुद्धयोः ॥ ७४ ॥**

**मार्गश्च,**

अतश्चत्वार्यपि सत्यान्यभिसमयतो धर्मेऽवेत्यप्रसादलाभः[1] । सैव श्रद्धा अधिष्ठानभेदान्नामतश्चत्वारोऽवेत्यप्रसादा उच्यन्ते[2] ॥ ७४ ॥

---

चत्वारोऽवेत्यप्रसादाः—बुद्धेऽवेत्यप्रसादः, धर्मे, सङ्घे च, आर्यकान्तानि च शीलानीति । तत्र दुःखसत्यादीनां धर्मत्वाद्, अबुद्धसङ्घस्वभावत्वाच्च । यथाक्रमं *सत्यत्रयमभिसमयन्* पश्यन् *धर्मे चावेत्यप्रसादमार्यकान्तानि च शीलानि* अनास्रवाणि *प्रतिलभते* । न बुद्धे न सङ्घे वा अवेत्यप्रसादम् ॥ ७३ ॥

*मार्गसत्यमभिसमयतो बुद्धे तस्य च श्रावकसङ्घेऽवेत्यप्रसादं प्रतिलभते* । मार्गसत्यस्य बुद्धसङ्घस्वभावत्वात् ।

*कोऽयमिह धर्मोऽभिप्रेत* इति । बहवो धर्माः कुशला धर्मा इत्येवमादयः, तत् कोऽयमिह धर्मोऽभिप्रेतः, यदुक्तं धर्मे चावेत्यप्रसादं प्रतिलभत इति अथ वा बुद्धरत्नं सङ्घरत्नं चेदमुच्यते, तस्मादिदमपि धर्मरत्नमिहाभिप्रेतं भवेत्, रत्नत्रयस्य ह्ययं स्वभाव उक्तः,

"बुद्धसङ्घकरान् धर्मानशैक्षानुभयांश्च सः
निर्वाणं चेति शरणं यो याति शरणत्रयम् ॥" (अभि० को० ४.३२)

इति । तत् किमयं निर्वाणधर्मोऽभिप्रेतः ? पृच्छति—*कोऽयमिह धर्मोऽभिप्रेत* इति ।

"*धर्मः सत्यत्रयम्*" इति विस्तरः । दुःखसमुदयनिरोधसत्यानि । बोधिसत्त्वस्य च शैक्षावस्थायामनास्रवो मार्गः । प्रत्येकबुद्धस्य च शैक्षाशैक्षलक्षणो

**द्रव्यतस्तु द्वे श्रद्धा शीलं च,**

बुद्धधर्मसङ्घावेत्यप्रसादाः श्रद्धास्वभावाः, आर्यकान्तानि च शीलानि शीलमिति द्वे द्रव्ये भवतः।

किं पुनरेते सास्रवानास्रवा एकान्तेनावेत्यप्रसादाः ?

**निर्मलाः।**

अवेत्यप्रसादा इति कोऽर्थः ? यथाभूतसत्यान्यवबुध्य सम्प्रत्ययोऽवेत्यप्रसादः। यथा तु[1] व्युत्थितः सम्मुखीकरोति तथैषामानुपूर्वम्[2]।

कथं व्युत्थितः सम्मुखीकरोति ? सम्यक्सम्बुद्धो बत भगवान्, स्वाख्यातोऽस्य धर्मविनयः, सुप्रतिपन्नोऽस्य श्रावक सङ्घ इति; वैद्यभैषज्योपस्थायकभूतत्वात्। चित्तप्रसादकृतः[3] शीलप्रसाद इत्युच्यते चतुर्थ उक्तः। एवं प्रसन्नस्यैषा प्रतिपत्तिरिति; आरोग्यभूतत्वाद्वा, दैशिकमार्गसार्थिकयानवद्वा[4]।

---

मार्गो धर्म इहाभिप्रेत इति। *अतश्चत्वार्यपीति* विस्तरः। मार्गसत्यमप्यभिसमयन् धर्ममपि बोधिसत्त्वप्रत्येकबुद्धमार्गलक्षणमभिसमयति। तस्माच्चत्वार्यपि *सत्यान्यभिसमयतो धर्मेऽवेत्यप्रसादलाभ* इत्युक्तमिति। बुद्धसङ्घयोर्मार्गो धर्म इति नोच्यते। यस्मात् तदभिसमयतो बुद्धे सङ्घे चावेत्यप्रसादलाभ इति। कथं पुनर्मार्गसत्याभिसमयतः श्रद्धालक्षणानां त्रयाणां बुद्ध-धर्म-सङ्घावेत्यप्रसादानां युगपत् सम्मुखीभाव ? *सैव श्रद्धा अधिष्ठानभेदापेक्षया* नामत्रयं लभत इत्यदोषः। अथ वा धर्मेऽवेत्यप्रसादो वर्तमानः। अनागतास्तु त्रयो भाव्यन्ते। तेनोच्यते—

"लाभो मार्गाभिसमये बुद्धतत्सङ्घयोरपि" इति (अभि० को० ६.७४) ॥७४॥

यद्यधिष्ठानापेक्षयावेत्यप्रसादव्यवस्थानम्, धर्मावेत्यप्रसादः पूर्वं पठितव्यः स्यादित्यत आह—*यथा तु व्युत्थितः सम्मुखीकरोति*। *तथैषामानुपूर्वमिति*। *वैद्यभैषज्योपस्थायकभूतत्वा*दिति। वैद्यभूतो भगवाननुत्तरो भिषक्[5] शल्यहर्तेति सूत्रात्। धर्मभैषज्यदैशिकत्वाच्च। भैषज्यभूतो धर्मः क्लेशव्याधिभैषज्यत्वात् निर्वाणरोग्यसम्प्रापकत्वाच्च। उपस्थायकभूतः सङ्घो निर्वाणरोग्यप्राप्तये परस्परोपस्थानात्। *चित्तप्रसादकृतः शीलप्रसाद* इति। त्रिविधश्चित्तप्रसादः—

---

१. च—का०। २. ०मानुपूर्वीम्—का०। ३. ०कृतश्च—का०।
४. देशिक०—का०। ५. विषक्—जा०।

सूत्र उक्तम्—"अष्टाभिरङ्गैः समन्वागतः शैक्षः, दशभिरङ्गैः समन्वागतोऽशैक्षः" इति। कस्माच्छैक्षस्य सम्यग्विमुक्तिः सम्यग्ज्ञानं च नोक्तम्?

**नोक्ता विमुक्तिः शैक्षाङ्गं बद्धत्वात्,**

बद्धो हि शैक्षः क्लेशबन्धनैरद्यापीति।

कथं बद्धस्यैव सतो विमुक्तिर्व्यवस्थाप्येत? न हि बन्धनैकदेशान्मुक्तो मुक्त इत्युच्यते। विना च विमुक्त्या कथं विमुक्तिज्ञानं व्यवस्थाप्यते! अशैक्षस्तु सर्वक्लेशबन्धनात्यन्तनिर्मोक्षाद् विमुक्तितत्प्रत्यात्मज्ञानाभ्यां प्रभावित इति तस्यैव तद्वचनं न्याय्यम्।

केयं विमुक्तिर्नाम?

**सा पुनर्द्विधा ॥ ७५ ॥**

संस्कृता चासंस्कृता च ॥ ७५ ॥

---

सम्यक्सम्बुद्धो बत भगवान्, स्वाख्यातोऽस्य धर्मविनयः, सुप्रतिपन्नोऽस्य श्रावकसङ्घ इति। तेन कृतः शीलप्रसादः। शीलमेव प्रसादः, शीलस्य वा प्रसादोऽनास्रवत्वं शीलप्रसादः। अन्ते त्रयाणां प्रसादानां चतुर्थ उक्तः शीलप्रसादः। कस्मात्? इत्याह—एवं *प्रसन्नस्य* सम्यक्सम्बुद्धो बत भगवानिति विस्तरेणैषा प्रतिपत्तिः। आर्यकान्तशीलप्रतिपत्तिरित्यर्थः। *आरोग्यभूतत्वाद्वा*। किमन्ते शीलप्रसाद उक्तः? वैद्यभैषज्योपस्थायकारोग्यानुक्रमतः। *दैशिकमार्गसार्थिकयानवद्वा*। किम्? अन्ते चतुर्थ उक्त इत्यधिकृतम्। दैशिकभूतो भगवान्, मार्गभूतो धर्मः, सार्थिकभूतः सङ्घः, यानभूतान्यार्यकान्तानि शीलानीति। आर्याणां कान्तानि प्रियाणीत्यार्यकान्तानीति[1]।

*अष्टाभिरिति*। *अष्टाभिरङ्गैः समन्वागतः शैक्षः*। कतमैरष्टभिः? शैक्ष्या सम्यग्दृष्ट्या यावच्छैक्षेण सम्यक्समाधिनेति। *दशभिरङ्गैः समन्वागतोऽशैक्षः*। कतमैर्दशभिः? अशैक्ष्या सम्यग्दृष्ट्या, यावदशैक्षेण सम्यक्समाधिना, अशैक्ष्या सम्यग्विमुक्त्या अशैक्षेण च सम्यग्ज्ञानेनेति। *विमुक्तितत्प्रत्यात्मज्ञानाभ्यां प्रभावित* इति। तस्यां विमुक्तौ प्रत्यात्मज्ञानं तत्प्रत्यात्मज्ञानम्। विमुक्तिश्च तत्प्रत्यात्मज्ञानं च विमुक्तितत्प्रत्यात्मज्ञानम्, ताभ्यां प्रभावितः। क्लेशविमुक्त्या, क्लेशविमुक्तिप्रत्यात्मज्ञानेन च क्लेशेभ्यो विमुक्तोऽस्मीति प्रभावितः।

---

१. प्रत्याणी०—जा०।

तत्र—

**असंस्कृता क्लेशहानमधिमुक्तिस्तु संस्कृता ।**

क्लेशप्रहाणमसंस्कृता विमुक्तिः । अधिमोक्षः[1] संस्कृता विमुक्तिः ।

**साङ्गः,**

सैवासंस्कृता विमुक्तिरशैक्षाङ्गयुक्ता; अङ्गानां संस्कृतत्वात् ।

**सैव विमुक्ती द्वे,**

सैव संस्कृता विमुक्तिर्द्वे विमुक्ती सूत्र उक्ते—चेतोविमुक्तिः, प्रज्ञाविमुक्तिश्च । विमुक्तिस्कन्धोऽपि स एव द्रष्टव्यः ।

यत्तर्हि सूत्र उक्तम्—"कतमच्च व्याघ्रबोध्यायना विमुक्तिपरिशुद्धिप्रधानम्? इह भिक्षवो रागाच्चित्तं विरक्तं भवति विमुक्तम्, द्वेषात्, मोहाच्चित्तं विरक्तं भवति

---

प्रकर्षित इत्यर्थः । *तस्यैवाशैक्षस्य तद्वचनं* विमुक्तिवचनं विमुक्तिज्ञानवचनं च । *न्याय्यम्* । न शैक्षस्येति ॥ ७५ ॥

*अधिमोक्षः संस्कृता विमुक्तिरिति* । धात्वर्थैकत्वात् ।

*अङ्गानां संस्कृतत्वादिति* । यथा सम्यग्दृष्ट्यादीनि संस्कृतानि, तथा विमुक्तिरपि संस्कृतैव गृह्यते, नासंस्कृता; विसभागत्वाद्विसदृशत्वात् ।

*द्वे विमुक्ती सूत्र उक्ते इति* । रागविरागाच्चेतोविमुक्तिः, अविद्याविरागात् *प्रज्ञाविमुक्तिरिति* । चेतोविमुक्तिः, प्रज्ञाविमुक्तिश्चेत्यर्थः । *विमुक्तिस्कन्धोऽपि स एवेति* । शीलस्कन्धः, समाधिस्कन्धः, प्रज्ञास्कन्धः, विमुक्तिस्कन्धः । विमुक्तिज्ञानदर्शनश्चेत्यत्र द्रष्टव्यः ।

*यत्तर्हि सूत्र उक्तमिति* । "चत्वारीमानि व्याघ्रबोध्यायाना परिशुद्धिप्रधानानि । कतमानि चत्वारि? शीलपरिशुद्धिप्रधानम्, समाधिपरिशुद्धिप्रधानम्, दृष्टिपरिशुद्धिप्रधानम्, विमुक्तिपरिशुद्धिप्रधानं च"( ) इति विस्तरेणोक्त्वाह—*कतमच्च व्याघ्रबोध्यायना विमुक्तिपरिशुद्धिप्रधानम्* । यावद् *यश्छन्दो वीर्यमिति* विस्तरः । व्याघ्रबोध्यायना इति बहुवचनम्; तेषां बहुत्वात् । विमुक्तिपरिशुद्धिप्रधानमिति । विमुक्तेः परिशुद्धिः विमुक्तिपरिशुद्धिः; तस्यै प्रधानं विमुक्तिपरिशुद्धिप्रधानम् । तदेवमत्र विमुक्तिपरिशुद्धिप्रधान इति प्रश्नत्रयम् । तत्र

---

१. अशैक्षाधिमोक्षः—का० ।

विमुक्तमित्यपरिपूर्णस्य वा विमुक्तिस्कन्धस्य परिपूरये परिपूर्णस्य वानुग्रहाय[1] यश्छन्दो[2] वीर्यम्" इति विस्तरः। तस्मान्नाधिमोक्ष एव विमुक्तिः। किं तर्हि? तत्त्वज्ञानापनीतेषु रागादिषु चेतसो वैमल्यं विमुक्तिरित्यपरे।

उक्ता विमुक्तिः॥

सम्यग्ज्ञानं तु सम्यग्दृष्टिः। व्यतिरिक्तं कतमत्?

**ज्ञान बोधिर्यथोदिता ॥ ७६ ॥**

यैव हि पूर्वं बोधिरुक्ता सैवेह सम्यग्ज्ञानं वेदितव्यम्। यदुत क्षयज्ञानम्, अनुत्पादज्ञानं च ॥ ७६ ॥

कतमत् पुनश्चित्तं विमुच्यते—किमतीतम्, अनागतम्, प्रत्युत्पन्नम्?

**विमुच्यते जायमानमशैक्षं[3] चित्तमावृतेः।**

"अनागतं चित्तमुत्पद्यमानं विमुच्यते अशैक्षमावरणेभ्यः" इति शास्त्रपाठः। किं पुनस्तस्यावरणम्? क्लेशप्राप्तिः, तदुत्पत्तिविबन्धत्वात्। वज्रोपमे हि समाधौ सा च प्रहीयते। तच्चोत्पद्यमानमशैक्षं चित्तं विमुच्यते। सा च प्रहीणा भवति। तच्चाशैक्षं चित्तमुत्पन्नं विमुक्तं च। यत्तर्हि नोत्पद्यमानं लौकिकं वा[4], तदपि विमुच्यते। यत्तु नियतमुत्पत्तौ तदेवोक्तम्।

---

इह *भिक्षो रागाच्चित्तं विरक्तं भवति विमुक्तम्।* द्वेषात् *मोहाद्विरक्तं भवति विमुक्तम्।* विमुक्तिरुक्ता। *इत्यपरिपूर्णस्य वा विमुक्तिस्कन्धस्य परिपूरये। परिपूर्णस्य वानुग्रहायेति*[5]। विमुक्तिपरिशुद्धिः परिपूर्यनुग्रहलक्षणोक्ता। *यश्छन्दो वीर्यमिति* विस्तरेण प्रधानमुक्तम्। यत एवं रागादिभ्यो विमुक्तिः प्रहाणमित्येवं-लक्षणा विमुक्तिरुक्ता। सूत्रे नाधिमुक्तिः; *तस्मान्नाधिमोक्ष एव विमुक्तिः। किं तर्हि? तत्त्वज्ञानापनीतेषु रागादिषु चेतसो वैमल्यमनास्रवत्वमनर्थान्तरभूतं* घृतमण्डस्वच्छतावदिति। *अपरे* इति। आचार्यः॥ ७६ ॥

*तदुत्पत्तिविबन्धत्वादिति*। तस्याशैक्षस्य चित्तस्योत्पत्तौ विबन्धत्वात्। क्लेशप्राप्तिर्हि विबन्धः। *यत्तर्हि नोत्पद्यमानमिति*। यदनागतं वज्रोपमात् समाधेरनन्तरं भवत्यशैक्षमेव। *लौकिकं वे*त्यशैक्षसन्तान एव यल्लौकिकम्।

---

१. चानु०—का०। २. च्छन्दो—का०। ३. °मानसशैक्षं—का०।
४. च—का०। ५. °नुग्रहायायेति—जा०।

लौकिकं कुतो विमुच्यते ? तत एवोत्पत्त्यावरणात् ।

ननु चामुक्तस्यापि शैक्षस्य लौकिकमुत्पद्यते ? न तत्तादृशम् । कीदृशं तत् ? क्लेशप्राप्तिसहितम् ।

किमवस्थो मार्गस्तदुत्पत्त्यावरणं प्रजहाति ?

**निरुध्यमानो मार्गस्तु प्रजहाति[1] तदावृतिम् ॥ ७७ ॥**

वर्तमान इत्यर्थः ॥ ७७ ॥

या चासंस्कृता विमुक्तिरुक्ता, ये च त्रयो धातव उच्यन्ते—प्रहाणधातुः, विरागधातुः, निरोधधातुरिति, क एषां विशेषः ?

**असंस्कृतैव धात्वाख्या,**

सैवासंस्कृता विमुक्तिस्त्रयो धातवः । तत्र पुनः—

**विरागो रागसंक्षयः ।**

रागस्य प्रहाणं विरागधातुः ।

---

यत्तु *नियतमुत्पत्तौ तदेवोक्तमिति* । यदुत्पादाभिमुक्तमनागतम् तदेवोक्तं शास्त्रे विमुच्यत इति । तद्विमुच्यमानतया सूपलक्ष्यत्वादित्यभिप्रायः ।

*तत एवोत्पत्त्यावरणादि*ति । तत एव क्लेशप्राप्तितः । तदुत्पत्तिविबन्धादिति तदेवात्र कारण वक्तव्यम् । यद्यशैक्षसन्तानलौकिकमपि विमुच्यत इत्यभ्युपगम्यते, शैक्षस्यापि लौकिकमुत्पद्यते । कस्मान्न विमुच्यत इत्यभ्युपगम्यते ? अत आह—*न तत्तादृशमित्यादि* । क्लेशप्राप्तिसहितं तच्छैक्षस्य लौकिकम्, न त्वशैक्षस्य लौकिकमेवं भवतीत्यसाम्यम् ।

"*निरुध्यमानः*" इति । निरोधाभिमुक्तः ।

"*तदावृतिम्*" इति । अशैक्षचित्तावरणम् ॥ ७७ ॥

*या चासंस्कृता विमुक्तिरुक्ता* शास्त्रे, इहैव वा "असंस्कृता क्लेशहानम्" (अभि० को० ६.७६) इति । *ये च त्रयो धातव उच्यन्ते* । क्वोच्यन्ते ? सूत्रे, शास्त्रेऽपि वा ।

"*विरागो रागसंक्षयः*" इति । भेदविवक्षायामेवमुच्यते । अभेदविवक्षायां तु यो विरागः तत्प्रहाणमप्युच्यते, निरोधोऽपीत्यादि ।

---

१. प्रहजहाति—का० ।

**प्रहाणधातुरन्येषां,**

'संक्षयः' इति वर्तते । रागादन्येषां क्लेशानां प्रहाणं प्रहाणधातुः ।

**निरोधाख्यस्तु वस्तुनः ॥ ७८ ॥**

'संक्षयः' इत्येवानुवर्तते । क्लेशनिर्मुक्तस्य वस्तुनः प्रहाणं निरोधधातुः । येन वस्तु निर्विद्यते, विरज्यतेऽपि तेन वस्तुना । चतुष्कोटिकः[2] ॥ ७८ ॥

कथं कृत्वा ?

**निर्विद्यते दुःखहेतुक्षान्तिज्ञानैः,**

दुःखे समुदयक्षान्तिज्ञानैरेव निर्विद्यते, नान्यैः ।

**विरज्यते ।**

**सर्वैर्जहाति यैः,**

सर्वैरपि दुःखसमुदयनिरोधमार्गक्षान्तिज्ञानैर्विरज्यते, यैः क्लेशान् प्रजहाति ।

**एवं चतुष्कोटिकसम्भवः ॥ ७९ ॥**

एवं चतुष्कोटिकं सिध्यति—१. निर्विद्यत एव, दुःखसमुदयक्षान्तिज्ञानैः क्लेशान् प्रजहत्; निर्वेदवस्त्वालम्बनत्वात् । २. विरज्यत एव, निरोधमार्गक्षान्ति-

---

"*वस्तुनः*" इति । सास्रवस्य रूपादेः । *चतुष्कोटिक* इति । स्यान्निर्विद्यते न वज्यते, स्याद्विरज्यते न निर्विद्यते, स्यादुभयम्, स्यान्नोभयमिति ॥ ७८ ॥

"*निर्विद्यते दुःखहेतुक्षान्तिज्ञानैः*" इति । अनेन वस्तुहेतुकं निर्वेदं दर्शयति ।

"*विरज्यते, सर्वैर्जहाति यैः*" इति । प्रहाणक्रियाहेतुकं विरागं दर्शयति । एवं चतुष्कोटिकं *सिध्यती*ति । एवं निर्वेदविरागकारणं परिच्छिद्य योज्यम् । [अ]नेन चतुष्कोटिकं सिध्यतीत्यभिप्रायः । कथम् ? इत्याह—*निर्विद्यत एवे*ति [वि]स्तरः । *निर्विद्यत एव, दुःखसमुदयक्षान्तिभिर्दुःखसमुदयज्ञानैश्च निर्वेदवस्त्वा*[ल]म्बनत्वात् । दुःखसमुदयौ हि निर्वेदस्य वस्तुनी आलम्बनमिति । न विरज्यते; *क्लेशानप्रजहदिति* वचनेन प्रहाणक्रियाया असम्भवात् । विरज्यत एव *निरोधमार्गक्षान्तिभिर्दर्शनमार्गे* । *निरोधमार्गज्ञानैर्भावनामार्गे* । *क्लेशान्प्रजहदिति* ।

---

२. चतुष्कोटिकम्—का० ।

ज्ञानैः क्लेशान् प्रजहत्; प्रामोद्यवस्त्वालम्बनत्वात् । ३. उभयम्, पूर्वैः क्लेशान् प्रजहत् । ४. नोभयम्, उत्तरैः क्लेशानप्रजहदिति ।

तत्र वीतरागः सत्यानि पश्यन् धर्मज्ञानक्षान्तिभिः क्लेशान्न प्रजहाति । ज्ञानैस्तु प्रयोगविमुक्तिविशेषमार्गैर्न[1] प्रजहातीति ॥ ७९ ॥

अभिधर्मकोशभाष्ये मार्गपुद्गलनिर्देशो नाम

षष्ठं कोशस्थानं समाप्तमिति[2]

---

प्रहाणक्रियासम्भवात् । न निर्विद्यते; *प्रामोद्यवस्त्वालम्बनत्वात्* । निर्वाणमार्गौ हि प्रामोद्यवस्तुनी आलम्बनमिति । उभयपूर्वैः क्लेशान्प्रजहद्दिति *निर्विद्यते च विरज्यते च* पूर्वैर्दुःखसमुदयक्षान्तिज्ञानैः । कथम्? निर्विद्यते, निर्वेदवस्त्वालम्बनत्वात् । विरज्यते, क्लेशान्प्रजहद्दिति वचनेन प्रहाणक्रियासम्भवात् । *नोभयमुत्तरैः* क्लेशानप्रजहदिति । न च निर्विद्यते । उत्तरैर्निरोधमार्गक्षान्तिज्ञानैः प्रामोद्यवस्त्वालम्बनत्वात् न निर्विद्यते । क्लेशानप्रजहद्दिति वचनेन प्रहाणक्रियाया अभावात् न विरज्यते ।

आह—अपदिष्टं प्रथमायां कोट्यां चतुर्थ्यां च क्लेशानप्रजहद्दिति । कः कान् क्लेशान्न प्रजहाति? *तत्र वीतराग* इति विस्तरः । तत्रार्थोपक्षेपार्थम् । वीतरागः कामधातोर्यावदाकिञ्चन्यायतनादपि । *सत्यानि पश्यन्नभिसमयन्* । *धर्मज्ञानक्षान्तिभिर्धर्मज्ञानैर्धर्मज्ञानक्षान्तिभिश्च क्लेशान्न प्रजहाति* । लौकिकेन भावनामार्गेण पूर्वं प्रहीणत्वात् । अनास्रवा तु केवलं विसंयोगप्राप्तिरुत्पद्यते । अन्वयज्ञानक्षान्तिभिस्त्ववश्यं क्लेशान्प्रजहाति । न हि लौकिकेन मार्गेण भवाग्रवैराग्यमस्ति । ज्ञानैस्तु भावनामार्गे । *प्रयोगविमुक्तिविशेषमार्गैरानन्तर्यमार्गैरपि च* कैश्चिदिन्द्रियसञ्चाराद्यवस्थासु *न क्लेशान् प्रजहाति* । केऽवशिष्यन्ते? तदन्ये आनन्तर्यमार्गास्तैः क्लेशान् प्रजहातीति सिद्धम् ॥७९॥

आचार्ययशोमित्रकृतायां स्फुटार्थायाम्

अभिधर्मकोशव्याख्यायां षष्ठं

कोशस्थानं समाप्तम्

---

१. °मार्गसंगृहीतैः—का० । २. ०श्रीलामावाकस्य यदत्र पुण्यम्—का० ।

❀ नमो बुद्धाय ❀

# सप्तमं कोशस्थानम्

## ( ज्ञाननिर्देशः )

क्षान्तयश्चोच्यन्ते,[1] ज्ञानानि च, सम्यग्दृष्टिः, सम्यग्ज्ञानं च।
किं पुनः क्षान्तयो न ज्ञानम्, सम्यग्ज्ञानं च न दृष्टिः ?

**नामला क्षान्तयो ज्ञानम्,**

तत्प्रहेयस्य विचिकित्सानुशयस्याप्रहीणत्वात्। दृष्टयस्तु ताः; सन्तीरणात्मकत्वात्।

---

## स्फुटार्थाव्याख्यायां

### सप्तमं कोशस्थानम्

षष्ठात् कोशस्थानादनन्तरं सप्तमस्योपन्यासे सम्बन्धं दर्शयन्नाह—**क्षान्तयश्चोच्यन्ते, ज्ञानानि चेति** विस्तरः।

"लौकिकेऽभ्योऽग्रधर्मेभ्यो धर्मक्षान्तिरनास्रवा" (अभि० को० ६ २५) इत्यत्राष्टौ क्षान्तय उक्ताः, "कामदुःखे ततोऽत्रैव धर्मज्ञानं तथा पुनः" (अभि० को० ६.२६) इत्यत्र ज्ञानानि, "न[2] चेत् क्षयज्ञानमशैक्षी वा दृष्टिः" (अभि० को० ६.५०) इत्यत्र सम्यग्दृष्टिः, "मैव विमुक्ती द्वे ज्ञानं वोधिर्यथोदिता" (अभि० को० ६-७६) इत्यत्र सम्यग्ज्ञानम्, इहैव वा **षष्ठकोश**स्थानावसाने एतत् सर्वमुक्तम्।

"निर्विद्यते दुःखहेतुक्षान्तिज्ञानैर्विरज्यते। सर्वैर्जहाति यैः" (अभि० को० ६.७६) इति शास्त्रसम्बन्धेन वायमुपन्यस्यते। शास्त्रे हि क्षान्तयश्चोच्यन्ते ज्ञानानि च, सम्यग्दृष्टिः सम्यग्ज्ञानं च। तत्प्रत्यायनार्थ चायमारभ्यते इत्यतः पृच्छति—**किं पुनः क्षान्तयो न ज्ञानमिति** विस्तरः। **नामला क्षान्तयो ज्ञानमिति।** 'अमला एव क्षान्तयो न ज्ञानम्' इत्यवधारणात् 'सास्रवाः क्षान्तयो ज्ञानम्' इत्युक्तं भवति। संवृतिज्ञानं हि तदिष्यते। **तत्प्रहेयस्येति।** क्षान्तिप्रहेयस्य। **विचिकित्सानुशयस्याप्रहीणत्वात्।** प्रहीयते

1. श्रीक्षान्तय०--का०। 2. जा० पुस्तके नास्ति।

यथा च क्षान्तयो दृष्टिर्न ज्ञानम्, एवं पुनः

**क्षयानुत्पादधीर्न दृक् ।**

क्षयज्ञानमनुत्पादज्ञानं च न दृष्टिः; असन्तीरणापरिमार्गणाशयत्वात् ।

**तदन्योभयथार्या धीः,**

क्षान्तिक्षयानुत्पादज्ञानेभ्योऽन्यानास्रवा प्रज्ञा, दृष्टिः ज्ञानं च ।

**अन्या ज्ञानम्,**

लौकिकी प्रज्ञा सर्वैव ज्ञानम् ।

---

हि तास्ववस्थास्वनुशयः, न प्रहीणः; विप्रकृतावस्थत्वात् । निश्चितं च ज्ञानमिष्यते नानिश्चितम्, इति न क्षान्तयो ज्ञानम् । क्षमणरूपेण च क्षान्तय उत्पद्यन्ते, न निश्चयरूपेणेति न ज्ञानमिति वर्णयन्ति ।

'विचिकित्सानुशयस्याप्रहीणत्वात्' इत्येतावति वक्तव्ये 'तत्प्रहेयस्य' इति विशेषणं किमर्थम् ? द्वितीये हि क्षणे प्रथमक्षान्तिप्रहेयो विचिकित्सानुशयो प्रहीणो भवतीति प्रथमैव क्षान्तिर्न ज्ञानमिति गम्यते, न त्वन्याः क्षान्तय इत्यतः 'तत्प्रहेयस्य' इति विशेषणम् । यद्वा—दुःख-धर्म-ज्ञानादीनां ज्ञानत्वप्रतिपादनार्थम् । यदि विचिकित्सानुशयाप्रहीणत्वादित्येतावदुच्यते । एवम् **सन्तीरणात्मकत्वादिति** । उपनिध्यानस्वभावत्वादित्यर्थः । **असन्तीरणापरिमार्गणाशयत्वादिति** । नास्ति सन्तीरणमस्येति असन्तीरणम् । परिमार्गणे आशयः=अभिप्रायः परिमार्गणाशयः, नास्य परिमार्गणाशय इत्यपरिमार्गणाशयम्; असन्तीरणं च तदपरिमार्गणाशयं च असन्तीरणापरिमार्गणाशयम्, तद्भावस्तस्मात् । क्षयज्ञानमनुत्पादज्ञानं च न दृष्टिः इत्यर्थः । यावदयमकृतकृत्यः, तावद् दुःखादीनि सत्यान्युपनिध्यायति, परिमार्गयति चाशयतो यथोक्तैरनित्यादिभिराकारैः । कृतकृत्यस्य पुनर्यथा दृष्टिष्वेव दुःखादिष्वार्यसत्येषु प्रत्यवेक्षणमात्रं ताभ्यां भवतीति 'दुःखं मया परिज्ञातं न पुनः परिज्ञेयम्' इत्यादि । तस्मान्न ते दृष्टिस्वभावे ।

**"तदन्योभयथार्या धीः"** इति । दुःखे धर्मज्ञानं यावन्मार्गेऽन्वयज्ञानम् । सा प्रज्ञोपनिध्यानप्रवृत्ता तद्विषयविचिकित्सा च । **अन्येति** । लौकिकी । **सा सर्वैव ज्ञानमित्यवधारणम्** । न सा प्रज्ञास्ति । यन्न ज्ञानमित्यर्थः । का पुनरसौ प्रज्ञा ? पञ्चविज्ञानकायिका कुशलाकुशलाव्याकृता मानसी या दृष्टिस्वभावक्लेशसम्प्रयुक्ता, अनिवृताव्याकृता च ।

**दृशश्च षट् ॥ १ ॥**

पञ्च दृष्टयः, लौकिकी च सम्यग्दृष्टिः । एषा षड्विधा लौकिकी प्रज्ञादृष्टिः, अन्या न दृष्टिः । ज्ञानं त्वेषा चान्या च ॥ १ ॥

कियता सर्वज्ञानसंग्रहः ? दशभिर्ज्ञानैः । समासेन तु

**सास्रवानास्रवं ज्ञानम्,**

तयोः पुनः

**आद्यं संवृतिज्ञापकम् ।**

यत् सास्रवं तत् संवृतिज्ञानम्, प्रायेण घटपटस्त्रीपुरुषादिसंवृतिग्रहात् । अज्ञानसंवृतत्वात् **इत्यपरे ।**

**अनास्रवं द्विधा धर्मज्ञानमन्वयमेव च ॥ २ ॥**

अनास्रवं ज्ञानं द्विधा भिद्यते—धर्मज्ञानम्, अन्वयज्ञानं च ॥ २ ॥

---

या पुनर्दृष्टिस्वभावा या च मानसी कुशला, सा किं भवति ? इत्याह—"**दृशश्च षट्**" इति ।

**एषा** षड्विधा लौकिकी प्रज्ञा दृष्टिः, अन्या न दृष्टिः; षडेवेत्यवधारणात् । का पुनरन्या ? या पूर्वमुक्ता लौकिकी ।

**ज्ञानं त्वेषा चान्या चेति ।** एषा च षड्विधा दृष्टिस्वभावा प्रज्ञा, ततोऽन्या च पूर्वोक्ता ज्ञानमित्युच्यते । अत एव च 'दृशश्च षड्' इति चकारः पठ्यते । यस्मादेताः षड् ज्ञानानि चोच्यन्ते दृष्टयश्चेति ॥ १ ॥

**दशभिर्ज्ञानैः ।** कथम् ? धर्मान्वयसंवृतिपरचित्तदुःखसमुदयनिरोधमार्गक्षयानुत्पादज्ञानैरवधारणार्थोऽयमारम्भो दशैव ज्ञानानि; च्युत्युत्पादपुद्गलज्ञानादीनामेषामेवान्तर्भावात् । **समासेन तु** द्वे एव—आस्रवम्, अनास्रवं चेति ।

**प्रायेणेति** विशेषणम् । **घटपटादिकं संवृतिसद्वस्तु संवृतिज्ञानमालम्बते ।** स्वसामान्यलक्षणमपि तु कदाचित् गृह्णाति ।

**सांवृतमिति ।** संवृतौ भवं सांवृतम् ।

**अनास्रवमपि** सक्षिप्यमाणं **द्विधा—धर्मज्ञानम्, अन्वयज्ञानं चेति ।** दुःखज्ञानादीनामनयोरेवान्तर्भावात् ॥ २ ॥

एवमते द्वे ज्ञाने त्रीणि भवन्ति—संवृतिज्ञानम्, धर्मज्ञानम्, अन्वयज्ञानं च। तत्र

**सांवृतं सर्वविषयम्,**

संवृतिज्ञानस्य सर्वधर्माः संस्कृतासंस्कृता आलम्बनम्, सम्भवतः।

**कामदुःखादिगोचरम्।**

**धर्माख्यम्,**

धर्मज्ञानस्य कामावचरं दुःखं तत्समुदयनिरोधप्रतिपक्षाश्चालम्बनम्।

**अन्वयज्ञानं तूर्ध्वदुःखादिगोचरम्॥ ३॥**

अन्वयज्ञानस्य रूपारूप्यावचरं दुःखं तत्समुदयनिरोधप्रतिपक्षाश्चालम्बनम्।

**ते एव सत्यभेदेन चत्वारि,**

ते एव धर्मज्ञानान्वयज्ञाने सत्यभेदेन पुनश्चत्वारि ज्ञानानि भवन्ति—दुःख-समुदय-निरोध-मार्गज्ञानानि; तदालम्बनत्वात्।

**एते चतुर्विधे।**

**अनुत्पादक्षयज्ञाने,**

एते एव धर्मान्वयज्ञाने[1] चतुर्विधे अदृष्टिस्वभावे क्षयज्ञानमनुत्पादज्ञानं चोच्येते[2]।

**ते पुनः प्रथमोदिते॥ ४॥**

**दुःखहेत्वन्वयज्ञाने,**

---

**आलम्बनं सम्भवत** इति। यस्य यदालम्बनं तस्य तद् भवति। न हि चक्षुर्विज्ञानस्य षडालम्बनम्॥ ३॥

**तदालम्बनत्वादिति**। दुःखाद्यालम्बनत्वादित्यर्थः।

"**एते चतुर्विधे**" इति। एते एव **धर्मान्वयज्ञाने** द्वे दुःखाद्यालम्बनभेदा-च्चतुर्विधे **अदृष्टिस्वभावे** सती **क्षयज्ञानम्, अनुत्पादज्ञानं चोच्येते**।

"**ते पुनः प्रथमोदिते**"। ते पुनः क्षयानुत्पादज्ञाने प्रथमोत्पन्ने सती **दुःखहेत्वन्वयज्ञाने भवतः**। दुःखसमुदयालम्बने अवश्यं भवत इत्यर्थः।

---

१. धर्मज्ञानान्वयज्ञाने—का०। २. चोच्यते—का०।

प्रथमोत्पन्ने तु क्षयज्ञानानुत्पादज्ञाने दुःखसमुदयान्वयज्ञाने; दुःखसमुदयाकारैर्भावाग्रिकस्कन्धालम्बनत्वात् ॥ ४ ॥

कि[1] वज्रोपमोऽपि ताभ्यामेकालम्बनो भवति[2] ? यदि दुःखसमुदयालम्बनो भवति । अथ निरोधमार्गालम्बनः, नैकालम्बनः ।

**चतुर्भ्यः परचित्तवित् ।**

वेत्तीति वित्=ज्ञानम् । परचित्तज्ञानं चतुर्भ्यो ज्ञानेभ्यो द्रष्टव्यम् । धर्मान्वयज्ञानमार्गः संवृतिज्ञानेभ्यः ।

---

कस्माद् ? इत्याह—**दुःखसमुदयाकारैः भावाग्रिकस्कन्धालम्बनत्वादिति** । तस्य हि सर्वपश्चात् भवाग्रमेव प्रहीयते, तस्माद् येन च पीड्यते येन च बद्धम्, तत एव मोक्षं बहु मन्यमानोऽनन्तरं क्षीणं भवाग्रमालम्बते । तच्च दुःखसमुदयाकारैर्भवाग्रमालम्बते । यस्माद् अवश्यं ते प्रथमोत्पन्नक्षयानुत्पादज्ञाने दुःखाकारैरनित्यादिभिः समुदयाकारैर्वा हेत्वादिभिर्भावाग्रिकान् स्कन्धानालम्बते । अप्रथमोत्पन्ने त्वन्यसत्यालम्बने अपि ते भवत इत्यर्थादुक्तं भवति ॥ ४ ॥

वज्रोपमानन्तरं क्षयज्ञानं भवति, तदनन्तरं चानुत्पादज्ञानमित्यतः पृच्छति—**किं वज्रोपमोऽपि ताभ्यामेकालम्बनो भवतीति** । ताभ्यामिति प्रथमोत्पन्नाभ्यामित्यर्थः । 'यथा क्षयानुत्पादज्ञाने एकालम्बने, किं वज्रोपमोऽपि ताभ्यामेकालम्बनः' इति अपि-शब्दस्यार्थः । **यदि दुःखसमुदयालम्बनो भवतीति** । किम् ? **ताभ्यामेकालम्बनो भवतीति** सम्भवः । **अथ निरोधमार्गालम्बनो भवति नैकालम्बनः**; तयोर्नियमेन भावाग्रिकस्कन्धालम्बनत्वात् । यथा हि विषकाण्डविद्धस्य मृतस्य विषं सर्वमङ्गमभिव्याप्य व्रणदेश एव मरणकालेऽवतिष्ठते, नान्यत्र; तद्वदस्य योगिनः प्रहेय एव भावाग्रिकस्कन्धलक्षणे ज्ञानमवतिष्ठते ।

**"चतुर्भ्यः परचित्तविद्"** इति । चतुर्भ्य एव धर्मज्ञानादिभ्यः; तत्संगृहीतत्वात् । न दुःखज्ञानादिभ्यः; अन्याकारत्वात् । अनास्रवं हि परचित्तज्ञानं मार्गाकारमेव; मार्गज्ञानत्वात् । यत्तु सास्रवम्, तल्लौकिकाकारं सरागं विगतरागमित्यादि ।

---

१. किं खलु—का० ।

२. अस्ति—का० ।

तस्य पुनरयं नियमः—

**भूम्यक्षपुद्गलोत्क्रान्तं नष्टाजातं न वेत्ति तत् ॥ ५ ॥**

भूम्यतिक्रान्तं न जानातीति। अधरध्यानभूमिकेनोत्तरध्यानभूमिकमिन्द्रियातिक्रान्तं न जानाति। श्रद्धाधिमुक्तसमयविमुक्तमार्गेण दृष्टिप्राप्तासमयविमुक्तमार्गं पुद्गलोत्क्रान्तं न जानाति। अनागाम्यर्हत्-प्रत्येकबुद्धबुद्धमार्गाणामधरेणोत्तरं[1] नष्टाजातं न जानाति। अतीतानागतं वर्तमानपरचित्तचैत्तविषयत्वात् ॥ ५ ॥

किं च भूयः—

**न धर्मान्वयधीपक्ष्यमन्योऽन्यम्,**

धर्मज्ञानपक्ष्यं परचित्तज्ञानमन्वयज्ञानपक्ष्यं चित्तं न जानाति, अन्वयज्ञानपक्ष्यं च धर्मज्ञानपक्ष्यं न जानाति; कामधातूर्ध्वधातुप्रतिक्षालम्बनत्वात् तयोः। दर्शनमार्गे परचित्तज्ञानं नास्ति। तदालम्बनं त्वस्ति।

तत्र परचित्तज्ञानेन दर्शनमार्गं ज्ञातुकामः प्रयोगं कृत्वा प्रथमौ

**दर्शनक्षणौ।**

**श्रावको वेत्ति खड्गस्त्रीन् सर्वान् बुद्धोऽप्रयोगतः ॥ ६ ॥**

श्रावको दर्शनमार्गात् परचित्तज्ञानेन द्वौ क्षणौ जानाति। दुःखे धर्मज्ञानक्षान्तिम्, धर्मज्ञानं च; अन्वयज्ञानपक्षालम्बनस्यान्यप्रयोगसाध्यत्वात्।

---

**श्रद्धाधिमुक्त-समयविमुक्तमार्गणे**ति। यथासंख्यं श्रद्धाधिमुक्तमार्गेण **दृष्टिप्राप्तमार्गं न जानाति,** समयविमुक्तमार्गेणा**समयविमुक्तमार्गं न जानाति। अधरेणोत्तर**मिति। **अनागामिमार्गेणार्हन्मार्गं न जानाति।** अर्हन्मार्गेण **प्रत्येकबुद्धमार्ग**मित्यादि ॥ ५ ॥

**कामधातूर्ध्वधातुप्रतिपक्षालम्बनत्वात् तयो**रिति। तयोः धर्मज्ञानपक्षान्वयज्ञानपक्षयोः। धर्मज्ञानपक्षस्य कामधातुप्रतिपक्ष आलम्बनम्, अन्वयज्ञानपक्षस्य ऊर्ध्वधातुप्रतिपक्ष आलम्बनमिति नियमः। **दर्शनमार्गे परचित्तज्ञानं नास्ती**ति। अव्यापारत्वाद् दर्शनमार्गस्य।

दुःखे **धर्मज्ञानक्षान्ति धर्मज्ञानं चे**ति। सम्भवं प्रत्येवमुच्यते। कदाचिद्धि प्रयोगवशाद् दुःखेऽन्वयज्ञानक्षान्ति दुःखेऽन्वयज्ञानं च ज्ञातुं सम्भवति।

---

१. °म्यर्हच्छ्रावकप्रत्येक°—का०।

यावच्च स तत्र प्रयोगमारभते, तावदयं षोडशचित्तमनुप्राप्तो भवतीत्यन्तरा न जानाति ।

प्रत्येकबुद्धस्त्रीन् क्षणान् । प्रथमौ च द्वावष्टमं च समुदयान्वयज्ञानम्; मृदुप्रयोगत्वात् । प्रथमद्वितीयपञ्चदशानित्यपरे ।

बुद्धस्तु सर्वानेव दर्शनमार्गक्षणानप्रयोगेण जानाति ॥ ६ ॥

अथ क्षयज्ञानानुत्पादज्ञानयोः को विशेषः ?

**क्षयज्ञानं हि सत्येषु परिज्ञातादिनिश्चयः ।**
**न परिज्ञेयमित्यादिरनुत्पादमतिर्मता ॥ ७ ॥**

"क्षयज्ञानं कतमत् ? 'दुःखं मे परिज्ञातम्' इति जानाति । 'समुदयः प्रहीणो निरोधः साक्षात्कृतो मार्गो भावितः' इति जानाति । तदुपादाय यत् ज्ञानं दर्शनं विद्या बुद्धिर्बोधिः प्रज्ञा आलोकोऽभिसमयमिदमुच्यते क्षयज्ञानम् । अनुत्पादज्ञानं कतमत् ? 'दुःखं मे परिज्ञातं न पुनः परिज्ञेयम्' इति जानाति, यावत् 'मार्गो भावितो न पुनर्भावयितव्यः' इति । तदुपादाय" (　　) इति विस्तरेणोक्तं **शास्त्रे** ।

कथमनास्रवेण ज्ञानेनैवं जानाति ? तत्पृष्ठलब्धेन व्युत्थित एवं जानाति । अतस्तद्विशेषेण तयोर्विशेषः । शास्त्रे ज्ञापित इति **काश्मीराः** ।

---

**अष्टमं च समुदयान्वयज्ञान**मिति । धर्मज्ञानपक्षौ द्वौ क्षणौ ज्ञात्वा अन्वयज्ञानपक्षं परेण 'चित्तं ज्ञास्यामि' इति प्रयोगं कृत्वा समुदयान्वयज्ञानमष्टमं सम्भावयति । **मृदुप्रयोगत्वादिति** । अल्पप्रयोगत्वादित्यर्थः । श्रावकस्य हि महाप्रयोगसाध्यं तदन्वयज्ञानपक्षालम्बनं परचित्तम्; अतो यावत् स तत्र प्रयोगमारभते तावद् अयं षोडशं चित्तमनुप्राप्तो भवतीति अन्तरा न जानाति । **प्रथम-द्वितीय-पञ्चदशानिति** । एतानेव त्रीन् जानाति । कथम् ? दुःखे धर्मज्ञानक्षान्तिं धर्मज्ञानं च ज्ञात्वा प्रयोगान्तरं च कृत्वा पञ्चदशक्षणं मार्गान्वयज्ञानक्षान्तिं जानातीति ॥ ६ ॥

**कथमनास्रवेण ज्ञानेनैवं जानातीति** । अनास्रवाणां दुःखाद्याकारत्वात् । इदं च संवृत्याकारं दुःखं मे परिज्ञातमित्येवमाद्याकारत्वादतः पृच्छति । **तद्विशेषेण तयोर्विशेष** इति । तस्य संवृतिज्ञानद्वयस्य तत्पृष्ठलब्धस्य विशेषेण 'दुःखं मे परिज्ञातम्' यावत् 'मे मार्गो भावितः' इति जानाति, 'दुःखं मे परिज्ञातं न पुनः परिज्ञेयम्' यावत् 'मार्गो मे भावितो न पुनर्भावयितव्यः' इति च जानाति—इत्येवंरूपेण तयोरनास्रवयोः क्षयानुत्पादज्ञानयोर्विशेषः शास्त्रे

अनास्रवेणाप्येवं जानातीत्यपरे ।

दर्शनवचनं तु भाष्याक्षेपात् । प्रत्यक्षवृत्तित्वाद्वा । अत एवोक्तम्—"यत्[1] तावत्[1] ज्ञानं दर्शनमपि तत्" (      ) इति ।

इत्येतानि दश ज्ञानानि भवन्ति यदुत धर्मज्ञानम्, अन्वयज्ञानम्, संवृतिज्ञानम्, दुःखज्ञानम्, समुदयज्ञानम्, निरोधज्ञानम्, मार्गज्ञानम्, परचित्तज्ञानम्, क्षयज्ञानम्, अनुत्पादज्ञानं च ।

तत्र संवृतिज्ञानमेकं ज्ञानमेकस्य च भागः ।

---

ज्ञापितो दर्शितः । अत एव **तदुपादायेत्युक्तम्** । तदुपादायेति पूर्वीकृत्य । तत्पुरस्कृत्येत्यर्थः । निष्यन्दने तयोर्निर्विकल्पयोर्विशेषोऽनुमीयत इत्यभिप्रायः ।

**अनास्रवेणाप्येवं जानातीति** । षोडशाकारव्यतिरिक्तोऽस्त्यनास्रव आकारः, तेनैवं जानातीत्यपरे ।

यदि 'तदुपादाय यज्ज्ञानं दर्शनम्' इति शास्त्रवचनेन दुःखपरिज्ञानादिसंवृतिज्ञानफलमनास्रवं क्षयानुत्पादज्ञानमुच्यते, यदिदमुच्यते–' क्षयानुत्पादधीर्न दृक्' (अभि० को० ७.१) इति न दृष्टिः" इति, तद्विरुद्ध्यते ? तेनाह—**दर्शनवचनं तु भाष्याक्षेपादिति** । यदेतच्छास्त्रे वचनम् 'यज्ज्ञानं दर्शनम्' इति, तद् भाष्याक्षेपाद् भवति । दुःखज्ञानादिषु हि ज्ञानम् 'दर्शनम्', 'विद्या', 'बुद्धिः', 'बोधिः' इति पठ्यते, तत्पाठाक्षेपेणायमुपतिष्ठते तत्पाठिनां पाठः । न तु ते क्षयानुत्पादज्ञाने दर्शनस्वभावे । न दृष्टिभावे इत्यर्थः । **प्रत्यक्षवृत्तित्वाद्वेति** । प्रत्यक्षा वृत्तिरस्य ज्ञानद्वयस्य तदियं प्रत्यक्षवृत्तिः, तद्भावात् । अनयोर्दर्शनवचनम् । न ह्येतज्ज्ञानद्वये आनुमानिकवद् आगामिकवद् वा परोक्षवृत्तिः । प्रत्यक्षवृत्तिश्च दर्शनमिष्यते । तद्यथा—चक्षुर्विज्ञानम् । तत्साधर्म्यादेतदपि ज्ञानद्वयं दर्शनमित्युक्तम् । **अत एवोक्तमिति** । अत एव प्रत्यक्षवृत्तित्वादुक्तं शास्त्रे—**यत् तावद् ज्ञानं दर्शनमपि तत्** । स्यात्तु दर्शनं न ज्ञानम्, अष्टावभिसमयान्तिकाः क्षान्तयः । तदिदमुक्तं भवति—दर्शनत्वमनयोरिष्यते, न दृष्टित्वमिति ।

**तत्रेति** । तेषु दशसु ज्ञानेषु । **संवृतिज्ञानम्** । संवृतिज्ञानमेव । स्वभावसंग्रहतः । **एकस्य च** परचित्तज्ञानस्य **भाग** एकदेशः । तस्य हि सास्रवानास्रवस्य सास्रवो भागः संवृतिज्ञानम्, नानास्रवो भाग इति । **धर्मज्ञानं** दशसु ज्ञानेष्वेकं

---

१-१. यावत्—का० ।

धर्मज्ञानमेकं ज्ञानं सप्तानां च भागो[1] दुःखसमुदयनिरोधमार्गक्षयानुत्पादपरचित्तज्ञानानाम् ।

एवमन्वयज्ञानम् ।

दुःखज्ञानमेकं ज्ञानं चतुर्णां च भागो धर्मान्वयक्षयानुत्पादज्ञानानाम् ।

एवं समुदयनिरोधज्ञाने चतुर्णां भागः ।

मार्गज्ञानमेकं ज्ञानं पञ्चानां च भागो चतुर्णामनन्तरोक्तानाम् परचित्तस्य च ।

परचित्तज्ञानमेकं ज्ञानं चतुर्णां च भागो धर्मान्वयमार्गसंवृतिज्ञानानाम् ।

---

**ज्ञानं** धर्मज्ञानमेव । **सप्तानां च भागो** दुःख-समुदय-निरोध-मार्ग-परचित्त-क्षयानुत्पादज्ञानानाम् । कथम् ? दुःखज्ञानं धर्मान्वयज्ञानस्वभावम्, तस्य यो धर्मज्ञानभागः तद् धर्मज्ञानम् । एवं समुदयज्ञानस्य, यावद् अनुत्पादज्ञानस्य धर्मान्वयज्ञानस्वभावस्य यो धर्मज्ञानभागः तद् धर्मज्ञानम्; न त्वन्वयज्ञानभाग इति । परचित्तज्ञानस्य तु धर्मान्वयमार्गसंवृतिज्ञानस्वभावस्य धर्मज्ञानभागो धर्मज्ञानमिति ।

**एवमन्वयज्ञानम्** । एकमन्वयज्ञानमेव । **सप्तानां च भागः** । तेषामेव दुःखज्ञानादीनां योऽन्वयज्ञानभागः, तदन्वयज्ञानमिति योज्यम् ।

**दुःखज्ञानं** दशसु ज्ञानेष्वेकं **ज्ञानम्** । तदेव दुःखज्ञानम् । **चतुर्णां च भागो धर्मान्वयक्षयानुत्पादज्ञानानाम्** । एतानि हि धर्मज्ञानादीनि चत्वारि चतुःसत्यालम्बनानि भवन्ति । य एषां दुःखसत्यालम्बनो भागः तद् दुःखज्ञानम्, नान्यो भाग इति ।

**एवं समुदय-निरोधज्ञाने** योज्ये । **प्रत्येकम्** । एकं ज्ञानं समुदयज्ञानम् निरोधज्ञानं वा । **चतुर्णां च भागः** । धर्मान्वयक्षयानुत्पादज्ञानानां यः समुदयालम्बनभागः, निरोधालम्बनभागो वा । तत् समुदयज्ञानम्, निरोधज्ञानं च ।

**मार्गज्ञानं** दशसु ज्ञानेष्वेकं **ज्ञानम्** । तदेव मार्गज्ञानम् । **पञ्चानां च भागः** । धर्मान्वय-क्षयानुत्पाद-परचित्तज्ञानानाम् । एतानि पञ्च मार्गज्ञानानि मार्गज्ञानस्वभावानि भवन्ति । य एषां मार्गज्ञानभागः तत् मार्गज्ञानम्, नेतर इति ।

**परचित्तज्ञानं** दशसु ज्ञानेष्वेकं **ज्ञानं** तदेव परचित्तज्ञानम् । **चतुर्णां च**

---

१. भागः ।—का० । एवमुपर्यपि सर्वत्र ।

क्षयज्ञानमेकं ज्ञानं षण्णां च भागो धर्मान्वयदुःखसमुदयनिरोधमार्गज्ञानानाम् ।

एवमनुत्पादज्ञानम् ॥ ७ ॥

कस्मात् पुनरेतानि त्रीणि सन्ति दश व्यवस्थाप्यन्ते ?

**स्वभावप्रतिपक्षाभ्यामाकाराकारगोचरात् ।**
**प्रयोगकृतकृत्यत्वहेतूपचयतो दश ॥ ८ ॥**

सप्तभिः किल कारणैर्दश ज्ञानानि व्यवस्थाप्यन्ते—

१. **स्वभावतः** संवृतिज्ञानम्; अपरमार्थज्ञानत्वात् ।

**भागो धर्मान्वयमार्गसंवृतिज्ञानानाम्** । एतानि हि चत्वारि ज्ञानानि परचित्तापरचित्तज्ञानस्वभावानि[1] भवन्ति । य एषां परचित्तज्ञानभागः तत् परचित्तज्ञानम्, नेतर इति । **क्षयज्ञानं** दशसु ज्ञानेष्वेकं ज्ञानम्, तदेव क्षयज्ञानम् । स्वभावसंग्रहतः । **षण्णां च भागो धर्मान्वय-दुःख-समुदय-निरोध-मार्गज्ञानानाम्** । 'दुःखं मे परिज्ञातम्' इत्येवमाद्याकारज्ञाननिष्यन्दम् । तत्र यत् कामावचरदुःखाद्यालम्बनं तद् धर्मज्ञानेऽन्तर्भवति । यद् रूपावचरदुःखाद्यालम्बनं तद् अन्वयज्ञानेऽन्तर्भवति । यत् प्रत्येकं दुःखाद्यालम्बनं तद् दुःखज्ञानम्, यावत् मार्गज्ञानं वा भवति । तत्र य एषां एवंलक्षणो भागः तत् क्षयज्ञानम्, नेतर इति 'षण्णां भागः' इत्युच्यते ।

**एवमनुत्पादज्ञानम्** । दशसु ज्ञानेष्वेकं ज्ञानम् तदेवानुत्पादज्ञानम् । षण्णां च भागो धर्मान्वय-दुःख-समुदय-निरोध-मार्गज्ञानानां यो भागः ।

'दुःखं मे परिज्ञातं न पुनः परिज्ञेयम्' इत्येवमाद्याकारनिष्यन्दम्, तदनुत्पादज्ञानम् । रूपारूप्यावचरदुःखाद्यालम्बनम् । तद् अन्वयज्ञानम्, नेतरो भाग इति षण्णां भाग इत्युच्यते ॥ ७ ॥

**"आकाराकारगोचरात्"** इति । आकारश्च गोचरश्च आकारगोचरम्, तस्मात् ।

**स्वभावतः संवृतिज्ञानमिति** । स्वभावेन स्वभावतः संवृतिज्ञानम् । संवृतौ वा ज्ञानं संवृतिज्ञानम् । कस्माद् ? इत्याह—**अपरमार्थज्ञानत्वादिति** ।

---

१. ० ज्ञानं स्वभावानि—जा० ।

२. **प्रतिपक्षतो** धर्मान्वयज्ञाने; कामधातूर्ध्वधातुप्रतिपक्षत्वात् ।

३. **आकारतो** दुःखसमुदयज्ञाने; आलम्बनाभेदात् ।

४. **आकारालम्बनतो** निरोधमार्गज्ञाने; आकारालम्बनभेदात् ।

५. **प्रयोगतः** परचित्तज्ञानम् । न हि तेन चैत्ता न ज्ञायते, चित्तज्ञानार्थं तु प्रयुक्तस्याभिनिष्पत्तेः परचित्तज्ञानमुक्तम् ।

६. **कृतकृत्यतः** क्षयज्ञानं कृतकृत्यसन्तानोत्पत्तेः ।

७. प्रथमतः **हेतूपचयतो**ऽनुत्पादज्ञानं सर्वानास्रवहेतुकत्वादिति ॥ ८ ॥

---

**कामधातुप्रतिपक्षो** धर्मज्ञानम्, **ऊर्ध्वधातुप्रतिपक्षो**ऽन्वयज्ञानम् । तथा हि **शास्त्रे** उक्तम्—"धर्मज्ञानं कतमत् ? कामप्रतिसंयुक्तेषु संस्कारेषु यदनास्रवं ज्ञानम्, कामप्रतिसंयुक्तानां संस्काराणां हेतौ यदनास्रवं ज्ञानम्, कामप्रतिसंयुक्तानां संस्काराणां निरोधे यद् अनास्रवं ज्ञानम्, कामप्रतिसंयुक्तानां संस्काराणां प्रहाणाय मार्गे यदनास्रवं ज्ञानम्–इदमुच्यते धर्मज्ञानम् । अपि खलु धर्मज्ञाने धर्मज्ञानभूमौ च यदनास्रवं ज्ञानम्—इदमुच्यते धर्मज्ञानम् । अन्वयज्ञानं कतमत् ? रूपारूप्यप्रतिसंयुक्तेषु संस्कारेषु यदनास्रवं ज्ञानम्, रूपारूप्यप्रतिसंयुक्तानां संस्काराणां हेतौ यदनास्रवं ज्ञानम्, रूपारूप्यप्रतिसंयुक्तानां संस्काराणां निरोधे यदनास्रवं ज्ञानम्, रूपारूप्यप्रतिसंयुक्तानां संस्काराणां प्रहाणाय मार्गे यदनास्रवं ज्ञानम्—इदमुच्यते अन्वयज्ञानम् । अपि खलु अन्वयज्ञाने अन्वयज्ञानभूमौ च यदनास्रवं ज्ञानम्—इदमुच्यतेऽन्वयज्ञानम्" (          ) इति ।

**आकारतो दुःखसमुदयज्ञाने** इति । आकारत एव, **नालम्बनतः** । पञ्चोपादानस्कन्धलक्षणत्वेन तयोरभेदात् । तथा हि **शास्त्रे** उक्तम्—"दुःखज्ञानं कतमत् ? पञ्चोपादानस्कन्धान् अनित्यतो दुःखतः शून्यतोऽनात्मतश्च मनसिकुर्वतो यद् अनास्रवं ज्ञानम्—इदमुच्यते दुःखज्ञानम् । **समुदयज्ञानं** कतमद् ? सास्रवं हेतुकं हेतुतः समुदयतः प्रभवतः प्रत्ययतश्च मनसिकुर्वतो यदनास्रवं ज्ञानम्—इदमुच्यते समुदयज्ञानम्" (          ) ।

**आकारालम्बनतो निरोध-मार्गज्ञाने** इति । आकारतश्च आलम्बनतश्च निरोधमार्गज्ञाने व्यवस्थाप्येते । तथा हि **शास्त्रे** उक्तम्--"निरोधज्ञानं कतमत् ? निरोधं निरोधतः शान्ततः प्रणीततो निःसरणतश्च मनसिकुर्वतो यदनास्रवं ज्ञानम्—इदमुच्यते निरोधज्ञानमिति । मार्गज्ञानं कतमत् ? मार्गं मार्गतो न्यायतः प्रतिपत्तितो नैर्याणिकतश्च मनसिकुर्वतो यदनास्रवं ज्ञानम्—इदमुच्यते मार्गज्ञानम्" (          ) इति ।

**प्रथमत** इति ग्रहणम् अनुत्पादज्ञानविशेषणार्थम् । तदपि हि **कृतकृत्य**-

सकलस्य सकलप्रतिपक्षत्वात् कामधातुप्रतिपक्षो धर्मज्ञानमित्युक्तम्। अपि तु

**धर्मज्ञानं निरोधे यन्मार्गे वा भावनापथे।**

**त्रिधातुप्रतिपक्षस्तत्,**

निरोधमार्गज्ञाने भावनामार्गसंगृहीते त्रिधातुप्रतिपक्षः।

**कामधातोस्तु नान्वयम्॥ ९॥**

---

सन्तान उत्पद्यते। **सर्वानास्रवहेतुकत्वादिति**। प्रथमोत्पन्नानि दश ज्ञानान्यधिकृत्य सभागहेतुना सर्वानास्रवहेतुकमनुत्पादज्ञानम्। क्षयज्ञानं तु न सर्वानास्रवहेतुकमनुत्पादज्ञानम्। न हि अनुत्पादज्ञानमस्य हेतुर्भवति; विशिष्टत्वात्॥ ८॥

**सकलस्य सकलप्रतिपक्षत्वादिति**। सकलस्य कामधातोः दर्शन-भावना-प्रहातव्यसंगृहीतस्य पञ्चप्रकारस्य सकलं धर्मज्ञानं दर्शन-भावना-मार्गसंगृहीतं चतुरार्यसत्यालम्बनं प्रतिपक्ष इति कृत्वा **कामधातोरेव प्रतिपक्षो धर्मज्ञानमित्युक्तम्**। अपि त्वस्ति सम्भवो यद् रूपारूप्यधातोरपि धर्मज्ञानं प्रतिपक्षः। कतमत् तद् धर्मज्ञानम्? यत् निरोधे मार्गे च धर्मज्ञानम्। निरोध-मार्गौ हि अधातुपतितौ। तावाधारावपि न हीनौ व्यवस्थाप्येते। दुःखसमुदयसत्ये त्वाधारभूमिके निहीने। न तदालम्बनं धर्मज्ञानं रूपारूप्य-धातुप्रतिपक्ष इत्यवगन्तव्यम्।

**भावनापथग्रहणं** तु रूपारूप्यावचराणां दर्शनहेयानामन्वयज्ञानक्षान्ति-बाध्यत्वात्। अन्वयज्ञानं तर्हि निरोधमार्गालम्बनभावनामार्गसंगृहीतं कस्मात् त्रिधातुप्रतिपक्षो न भवति? कामधातोर्जितत्वात्। धर्मज्ञानेनैव कामधातुः पूर्वतरजितो भवति, ततः पश्चादन्वयमुत्पाद्यते, ततः कामधातोर्जितत्वान्न **तत् कामधातुप्रतिपक्ष** इति। धर्मज्ञानं तु रूपारूप्यधातोरजितत्वात् प्रतिपक्षो युज्यते। कस्मात्[1] निरोधमार्गधर्मज्ञानाभ्यामेव त्रैधातुकभावनाप्रहातव्यक्लेशप्रहाणम्, न पूर्वाभ्याम्? शान्तनैर्याणिकतासभागात्[2]। न हि कामावचरसंस्काराणां निरोधात् प्रतिपक्षाद् वा रूपारूप्यावचरसंस्काराणां निरोधस्य प्रतिपक्षस्य वाऽस्ति कश्चिद् विशेषः। सर्वो हि निरोधः कुशलः, असंस्कृतः; मार्गश्च नैर्याणिकः।

---

१. कस्मान्–जा०। २. ०साभागात्–जा०। साभाव्यात्–इत्यन्यपुस्तके।

अन्वयज्ञानं तु सर्वथा नास्ति कामधातुप्रतिपक्षः ॥ ९ ॥

एषां दशानां ज्ञानानां

**धर्मज्ञानान्वयज्ञानं षोडशाकारम्,**

तान् पुरस्तादुपदेक्ष्यामः ।

**अन्यथा ।**

**तथा च सांवृतम्,**

संवृतिज्ञानं षोडशाकारमन्यथाकारं च; सर्वधर्माणां स्वसामान्यलक्षणादिग्रहणात् ।

**स्वैः स्वैः सत्याकारैश्चतुष्टयम् ॥ १० ॥**

दुःखसमुदयनिरोधमार्गज्ञानानि स्वैः स्वैः सत्याकारैः प्रवर्तन्त इत्येकैकं चतुराकारं भवन्ति ॥ १० ॥

**तथा परमनोज्ञानं निर्मलम्,**

अनास्रवं परचित्तज्ञानं तथैव; स्वसत्याकारत्वाच्चतुराकारं मार्गज्ञानत्वात् ।

**समलं पुनः ।**

---

**अन्वयमिति** । अन्वेतीत्यन्वयम् = ज्ञानम् ।

**सर्वथेति** । भावनामार्गसंगृहीतमपि ॥ ९ ॥

**तान् पुरस्तादिति** । तान् अनित्यादीन् आकारान् ऊर्ध्वं **व्याख्यास्यामः** । **षोडशाकारमूष्मगतादिषु** । **स्वसामान्यलक्षणादिग्रहणादिति** । स्वलक्षणग्रहणात्, सामान्यलक्षणग्रहणाच्च । आदिशब्देन 'भुङ्क्ष्व', 'तिष्ठ', 'गच्छ' इत्येवमाकारं च । न ह्येते स्वलक्षणाकाराः, किं तर्हि ? एवमाकारा एवेति ॥ १० ॥

**उभयमपि त्विति** । सास्रवानास्रवम् । **यत्तर्हीति** विस्तरः । रागस्य चित्तस्य च युगपद् ग्रहणमित्यभिप्रायः । **सूत्रं** पुनरेवं पठ्यते—"सरागं चित्तं सरागं चित्तमिति यथाभूतं प्रजानाति, विगतरागं चित्तं विगतरागं चित्तमिति यथाभूतं प्रजानाति । यथा सरागम् विगतरागम्; एवं सद्वेषम् विगतद्वेषम्, समोहम् विगतमोहम्, संक्षिप्तम् विक्षिप्तम्, लीनं प्रगृहीतम्, उद्धतम् अनुद्धतम्, अव्युपशान्तं भावितम्, अविमुक्तं विमुक्तमिति यथाभूतं

**ज्ञेयस्वलक्षणाकारम्,**

सास्रवं परचित्तज्ञानं ज्ञेयानां चित्तचैत्तानां यत् स्वलक्षणं तदाकारयति; स्वलक्षणग्राहकत्वात् ।

उभयमपि तु

**एकैकद्रव्यगोचरम्** ॥ ११ ॥

यदा चित्तं गृह्णाति न तदा चित्तानाम्, यदा वेदनां न तदा संज्ञामित्येवमादि ।

यत्तर्हि **भगवतोक्तम्**—"सरागं चित्तं सरागं चित्तमिति यथाभूतं प्रजानाति" इत्येवमादि । न तयोर्युगपद्ग्रहणम्; वस्त्रमलायुगपद्ग्रहणवत् ।

सरागं चित्तमिति द्विधा सरागता—संसृष्टसरागता, संयुक्तसरागता[1] च । तत्र सरागसंप्रयुक्तं चित्तं द्वाभ्यां सरागं ततोऽन्यत् सास्रवं संयोगसरागतया सरागम् ।

अत्र तु सूत्रे रागसम्प्रयुक्तं सरागं रागप्रतिपक्षो विगतमित्येके । यदि रागेणासम्प्रयुक्तं विगतरागं स्यात्, अन्यक्लेशसम्प्रयुक्तमपि स्यात् ।

---

प्रजानाति । **वस्त्रमलायुगपद्ग्रहणवदिति** । यथा वस्त्रमलयोर्न युगपद् ग्रहणम्, तद्वत् । कथम्? यथा यदा वस्त्रमिति परिच्छिन्नाकारं विज्ञानमुत्पद्यते, न तदा मलं गृह्णाति; यदा च मलमिति परिच्छिन्नाकारं विज्ञानमुत्पद्यते, न तदा वस्त्रं गृह्णाति ।

**संसृष्टसरागता संयुक्तसरागता चेति** । संसृष्टसरागता, सम्प्रयोगात् । संयुक्तसरागता रागप्राप्त्यनुबन्धादित्येके । अनुशयानरागालम्बनत्वादित्यपरे । **द्वाभ्यामिति** । संसृष्टसरागतया, संयुक्तसरागतया चेति । **ततोऽन्यत् सास्रवमिति** । यत् क्लिष्टमव्याकृतं कुशलं च लौकिकम्, तत् **संयुक्तसरागतया सरागम्** ।

तदेवमुभाभ्यामप्येतत् सरागमेवोक्तम्? आह—किं पुनः कारणम् एकीयमतेन रागप्रतिपक्षो विगतरागमित्युच्यते? यतस्ते आहुः—**यदि हि रागेणासम्प्रयुक्तं विगतरागं स्यात्, अन्यक्लेशसम्प्रयुक्तमपि** द्वेषादिसम्प्रयुक्तमपि **स्याद् विगतरागम्**, तदपि रागेणासम्प्रयुक्तं सम्प्रयुक्तमपि । न च सूत्रे द्वेषादिसम्प्रयुक्तं विगतरागमित्युक्तम्; 'सद्वेषं समोहम्' इत्यादिवचनात् । येषां पुना रागप्रतिपक्षो विगतरागमिति, तेषामयमदोषः; न हि रागप्रतिपक्षो द्वेषादिभिः सम्प्रयुज्यत इति ।

---

१. संयोग०—का० ।

एवं तर्हि तदप्रतिपक्षः सास्रवं चित्तमक्लिष्टं नैव सरागं न विगतरागं स्यादित्येवमादि ? तस्माद्रागसम्प्रयुक्ततयापि सरागं चित्तमत्रेष्टव्यमित्य**परे** ।

एवं यावत् समोहं विगतमोहं च वेदितव्यम् ।

संक्षिप्तं कुशलमालम्बनाभिसंक्षेपात् । विक्षिप्तं क्लिष्टं विक्षेपसम्प्रयोगात् ।

संक्षिप्तं मिद्धसंप्रयुक्तं विक्षिप्तमन्यत् क्लिष्टमिति **पाश्चात्याः** । तदेतन्न वर्णयन्ति । तदेव हि चित्तं संक्षिप्तविक्षिप्तं स्यात्; क्लिष्टमिद्धसम्प्रयोगात् ।

**शास्त्रविरोधश्च** स्यात्—"संक्षिप्तं चित्तं यथाभूतं सम्प्रजानाति[1]" ।

---

**एवं तर्हीति** विस्तरः । यदि रागसम्प्रयुक्तं चित्तं सरागम्, रागप्रतिपक्षो विगतरागम् । **तदप्रतिपक्षः** सरागचित्तस्याप्रतिपक्षः । **चित्तमक्लिष्टम्** । अनिवृताव्याकृतम् । **नैव सरागम्** । रागेणासम्प्रयोगात् । **नैव विगतरागम्** । रागस्याप्रतिपक्षत्वात् । **एवमादीति** । आदि-शब्देन 'सद्वेषम्' 'समोहम्' इति तुल्यप्रसङ्गो योज्यः । कथम् ? "अत्र तु सूत्रे द्वेषसम्प्रयुक्तं चित्तं सद्वेषम्, द्वेषप्रतिपक्षो विगतद्वेषमिति । यदि हि द्वेषेणासम्प्रयुक्तं वितगद्वेषं स्यात्, अन्यक्लेशसम्प्रयुक्तमिति स्यादित्य**येके** । एवं तर्हि तदप्रतिपक्षश्चित्तमक्लिष्टं नैव सद्वेषं स्यात्, न विगतद्वेषम् । इत्येवं समोहं चित्तं विगतमोहम्" इति वक्तव्यम् ।

**तस्माद् रागसंयुक्ततयापि सरागं चित्तमत्रेष्टव्यम्** । अपि-शब्दात् रागसम्प्रयुक्ततयापीत्य**परे** । आभिधर्मिकाः ।

**एवं यावत् समोहं विगतमोहं चेति** । तस्माद् द्वेषसंयुक्ततयापि सद्वेषम्, मोहसंयुक्ततयापि समोहमत्र सूत्रे एष्टव्यमिति ।

**आलम्बनाभिसंक्षेपादिति** । कुशलं चित्तं विक्षेपेण न सम्प्रयुज्यते । तस्मात् तदालम्बने तस्याभिसङ्क्षेप इति ।

**संक्षिप्तं विक्षिप्तं च स्यात्, क्लिष्टमिद्धसम्प्रयोगादिति** । द्विविधं मिद्धम्—क्लिष्टम्, अक्लिष्टं च । तदेव हि चित्तं क्लिष्टं मिद्धसम्प्रयुक्तमिति संक्षिप्तं स्यादिति । क्लिष्टमिति च विक्षिप्तं स्यादिति साङ्कर्यदोषः ।

**शास्त्रविरोधश्चेति** । कथम् ? **संक्षिप्तं चित्तं यथाभूतं सम्प्रजानाति**

---

१. प्रजानाति—का० ।

तज्ज्ञानं चत्वारि ज्ञानानि—धर्मज्ञानम्, अन्वयज्ञानम्, संवृतिज्ञानम्, मार्गज्ञानम्" (          ) इति।

लीनं चित्तं क्लिष्टम्; कौसीद्यसम्प्रयोगात्। प्रगृहीतं कुशलम्; वीर्यसम्प्रयोगात्। परीत्तं क्लिष्टम्; व्यवदानपरीत्तैर्निषेवितत्वात्। महद्गतं कुशलम्; तद्विपर्ययात्। मूलमूल्यपरिवारानुपरिवर्तकबलाल्पबहुत्वाच्च। क्लिष्टचित्तं हि[1] द्वाभ्यामकुशलमूलाभ्यां समूलम्। कुशलं त्रिभिः कुशलमूलैः। क्लिष्टमल्पमूल्यम्; अयत्नसाध्यत्वात्। कुशलं बहुमूल्यम्; महाभिसंस्कारसाध्यत्वात्। क्लिष्टं तज्जातीयानागतभावनाऽभावान्न महापरिवारं त्रिभिश्च स्कन्धैः सानुपरिवर्तम्। कुशलं तु महापरिवारं चतुर्भिश्च

---

विस्तरेण यथा **वृत्तौ**। तेषाम**न्वयज्ञानं** तावत् संक्षिप्तचित्तालम्बनं न भवति। कामधातोरूर्ध्वं मिद्धाभावात्, अन्वयज्ञानस्य च कामधात्वनालम्बनत्वात्। **मार्गज्ञानमपि** संक्षिप्तचित्तालम्बनं न सम्भवति। मार्गज्ञानं हि मार्गालम्बनम्। न च मार्गसंगृहीतं चित्तं **मिद्धसम्प्रयोगी**ति। तेनैवं वक्तव्यमभविष्यत्—तज्ज्ञानं द्वे ज्ञाने धर्मज्ञानं संवृतिज्ञानं चेति।

ये तु वर्णयन्ति—संक्षिप्तं चित्तं कुशलम्, आलम्बनाभिसंक्षेपादिति, तेषामेतद् दोषद्वयं न भवति। तद् अक्लिष्टेन मिद्धेन न सम्प्रयुज्यत इति संक्षिप्तं विक्षिप्तं च न प्राप्नोति। नापि शास्त्रविरोधः। कुशलं त्रिधातुकसंगृहीतम् असंगृहीतं च संक्षिप्तं चित्तं तज्ज्ञानं चत्वारि ज्ञानानीति सिद्धम्। रूपारूप्यकुशलचित्तालम्बनमनास्रवं ज्ञानम् अन्वयज्ञानं भवति। मार्गसंगृहीतकुशलालम्बनं मार्गज्ञानमपीति।

**व्यवदानपरीत्तैर्निषेवितत्वादिति**। अल्पकुशलमूलैर्निषेवितत्वादित्यर्थः। **तद्विपर्ययादिति**। व्यवदानमहद्भिर्निषेवितत्वादित्यर्थः। **मूलादीनां बलान्तानामल्पबहुत्वम्**। एकैकस्य मूलस्याल्पबहुत्वाद् यथाक्रमं परीत्तं महद्गतं च वेदितव्यम्। कथम्? इत्याह—**क्लिष्टं हि द्वाभ्यामकुशलमूलाभ्यां समूलं** मोहेन लोभद्वेषयोश्चान्यतरेण; एकस्मिन् कल्पेऽनयोरसमवधानात्। **कुशलं त्रिभिर**लोभाद्वेषामोहैः; एषामविनाभावात्। **तज्जातीयानागतभावनाभावा**दिति। क्लिष्टजातीयस्यानागतस्य भावनायाः प्रतिलम्भस्याभावात् 'कुशलसंस्कृता धर्मा भावयितव्याः' इति न्यायात्। **त्रिभिश्च स्कन्धैः सानुपरिवर्तम्**। **वेदना-संज्ञा-संस्कारस्कन्धैः**। न विज्ञानस्कन्धेन; एकस्मिन कल्पे द्वितीयविज्ञानाभावात्। न च स्वात्मना; स्वात्मनि वृत्तिविरोधात्। **कुशलं तु**

---

१. का० -प्रतके नास्ति।

स्कन्धैः सानुपरिवर्तम् । अल्पबलं खल्वपि क्लिष्टं बहुबलं कुशलम् । एकया हि दुःखधर्मज्ञानक्षान्त्या[1] दशानुशयात्यन्तसमुच्छेदः[2] क्रियते । तस्मादपि क्लिष्टं परीत्तं कुशलं महद्गतम् । उद्धतं क्लिष्टमौद्धत्यसम्प्रयोगात् । अनुद्धतं कुशलं तत्प्रतिपक्षत्वात् । एवमव्युपशान्तं व्युपशान्तं च ।

असमाहितं क्लिष्टं विक्षेपसंप्रयोगात् । समाहितं कुशलं तत्प्रतिपक्षत्वात् । अभावितं क्लिष्टं प्रतिलम्भनिषेवणभावनाभ्यामभावितत्वात् । भावितं कुशलं ताभ्यां भावितत्वात् । अविमुक्तं क्लिष्टं स्वभावसन्तानविमुक्तिभ्यामविमुक्तत्वात् । विमुक्तं कुशलं ताभ्यां विमुक्तत्वादिति **वैभाषिकाः** । एवं तु सूत्रं नानुलोमितं भवति । एषां च पदानां नार्थविशेष उक्तो भवति ।

---

**महापरिवारम्**; तज्जातीयानागतभावनासद्भावात् । **चतुर्भिश्च स्कन्धैः सानुपरिवर्तम्** । तैश्च वेदनादिभिस्त्रिभिः, रूपस्कन्धेन च ध्यानानास्रवसंवरसंगृहीतेन; त्रिधानुपरिवर्तनात्सम्प्रयोगतः । **अल्पबलं खल्वपि क्लिष्टमिति** । ननु च कुशलमपि दुर्बलम्, एकेन मिथ्यादृष्टिक्षणेन कुशलपञ्चस्कन्धसमुद्घातात् । न तदत्यन्तमुच्छिद्यते; **पुनः प्रतिसन्धानात्** । **दुःखधर्मज्ञानक्षान्त्या तु दशानामनुशयानामत्यन्तच्छेद** इति । **तस्मादपीति** । अपि-शब्देन पूर्वोक्तादपीति । **तत्प्रतिपक्षत्वादिति** । औद्धत्यप्रतिपक्षत्वादित्यर्थः । **एवमव्युपशान्तं व्युपशान्तं चेति** । अव्युपशान्तं क्लिष्टम्; औद्धत्यसम्प्रयोगात् । व्युपशान्तं कुशलं तत्प्रतिपक्षत्वादिति । क्लेशसम्प्रयोगासम्प्रयोगतो वा तदव्युपशान्तं व्युपशान्तं च भवति ।

**समाहितं कुशलं** तत्प्रतिपक्षत्वादिति । विक्षेपप्रतिपक्षत्वात् । **प्रतिलम्भनिषेवणभावनाभ्यामिति** । अलब्धपूर्वस्य प्राप्तिः=प्रतिलम्भः । सम्मुखीभावः=निषेवणम् । ते एव भावने । ताभ्यामभावितत्वाद् अभावितम् । न हि क्लिष्टं कुशलवदनागतं भाव्यते । न च निषेवणार्हं भवति, निहीनत्वात् । "प्रतिलम्भनिषेवाख्ये शुभसंस्कृतभावने ।" (अभि० को० ७.२७) इति ।

**ताभ्यामिति** । प्रतिलम्भनिषेवणाभ्यामित्यर्थः । **स्वभावसन्तानविमुक्तिभ्यामविमुक्तत्वादिति** । क्लेशैः सम्प्रयोगान्न स्वभावविमुक्त्या विमुक्तः । क्षीणक्लेशसन्तानानुत्पत्तेश्च न सन्तानविमुक्त्या च विमुक्तम् । कुशलं तु क्लेशसम्प्रयोगात्, क्षीणक्लेशसन्तानोत्पत्तेश्च विमुक्तम् ।

---

१. दुःखे धर्म०—का० । २. °समुद्घातः—का० ।

कथं सूत्रं नानुलोमितं भवति ? सूत्र उक्तम्—"कथं चित्तमध्यात्मं संक्षिप्तं भवति । यच्चित्तं स्त्यानमिद्धसहगतमध्यात्मं सन्निरोधसहगतं न तु विपश्यनया समन्वागतम्। कथं बहिर्विक्षिप्तं भवति ? यच्चित्तं पञ्चसु कामगुणेष्वनुविक्षिप्तं भवत्यनुविसृतम्" इति ।

ननु चोक्तम्—तदेव चित्तं संक्षिप्तं स्याद्विक्षिप्तं चेति ? उक्तमिदम्, अयुक्तं तूक्तम्; मिद्धसहगतस्य क्लिष्टस्य विक्षिप्तत्वाप्रतिज्ञानात् ।

ननु चोक्तं शास्त्रविरोधः स्यादिति। वरं शास्त्रविरोधः, न सूत्रविरोधः। कथम् ? एषा पदानां नार्थविशेष उक्तो भवति। विक्षिप्तलीनोद्धताऽव्युपशान्तासमाहिताभाविताविमुक्तानां चित्तानामभिन्नलक्षणवचनात् संक्षिप्तप्रगृहीतादीनां च । न वै नोक्तः पदानामर्थविशेषो भवति; क्लिष्टसामान्येऽपि तद्दोषविशेषसन्दर्शनात्[1] । इत्यप्येतत् क्लिष्टं चित्तं विक्षिप्तं लीनमिति विस्तरः ।

---

**स्त्यानमिद्धसहगतमिति** । स्त्यानमिद्धसम्प्रयुक्त**मध्यात्मं सन्निरोधसहगतमिति** । एतदेव निगमयति—**न तु विपश्यनया समन्वागतमिति** । **अनुविक्षिप्तमित्यस्य** निर्देशं करोति—**अनुविसृतमिति** ।

**मिद्धसहगतस्य क्लिष्टस्य विक्षिप्तत्वाप्रतिज्ञानादिति** । किमिति कृत्वा विक्षिप्तत्वमत्र न प्रतिज्ञायते, किं मिद्धसहगते क्लिष्टे चित्ते विक्षिप्तत्वं नास्तीति न प्रतिज्ञायते ? आहोस्विद् विद्यमानमप्यत्र विक्षिप्तत्वं संक्षिप्तत्वेनैव स्थापितत्वान्न प्रतिज्ञायते ? उभयथापि व्याचक्षते । केचिद् व्याचक्षते—मिद्धसहगताद्धि क्लिष्टाद्यदन्यत् क्लिष्टम्, तद्विक्षिप्तं प्रतिज्ञायते । मिद्धसहगतं नु क्लिष्टमक्लिष्टं चाविशेषेण संक्षिप्तमेवेति । अपरे पुनः व्याचक्षते—यन्मिद्धसम्प्रयुक्तं तत् संक्षिप्तमेव, न विक्षिप्तम् । यत्तु विषयेषु विसृष्टं तदेव विक्षिप्तमित्यतोऽत्र मिद्धसम्प्रयुक्ते चित्ते न प्रतिज्ञायत इति । **वरं शास्त्रविरोध इति** । अबुद्धोक्तमभिधर्मशास्त्रमित्यभिप्रायः । **अभिन्नलक्षणवचनादिति** । सर्वाणि तानि क्लिष्टानि उक्तानि । क्लिष्टत्वलक्षणमेषां विक्षिप्तादीनामविमुक्तान्तानाम्। क्लिष्टत्वं पुनः क्लेशमहाभूमिकैः सम्प्रयोगः । **संक्षिप्तप्रगृहीतादीनां** चाभिन्नलक्षणवचना**न्नार्थविशेष उक्तो भवतीति** सम्बन्धः आदि-शब्देन महद्गतानुद्धत-व्युपशान्त-समाहित-भावित-विमुक्तानां ग्रहणम् । कुशलमेषामभिन्नम् । किं पुनः कुशलत्वम् ? कुशलं महाभूमिकैः सम्प्रयोगः ।

---

१. तद्दोषदर्शनात्—का० ।

एवं कुशलस्यापि गुणविशेषसन्दर्शनादुक्त एवार्थविशेषो भवति। सूत्रविरोधस्यापरिहारान्नैष एषां पदानामर्थः।

यदि च सूत्रे तदेव लीनं चित्तं तदेवोद्धतमित्यभिप्रेतं स्यात्, इदं नोक्तं स्यात्—"यस्मिन्समये लीनं चित्तं भवति लीनाभिशङ्कि[1] वा, अकालस्तस्मिन् समये प्रस्रब्धिसमाध्युपेक्षासम्बोध्यङ्गानां भावनायाः। यस्मिन् समये उद्धतं चित्तं भवति औद्धत्याभिशङ्कि वा, अकालस्तस्मिन् समये धर्मविचय-

**न वै नोक्त** इति विस्तरः। 'वै' इति निपातः। न नोक्त इति द्वौ प्रतिषेधौ। उक्त एवेत्यर्थः। क उक्त.? पदानामर्थविशेषः। कथम्? इत्याह—क्लिष्टसामान्येऽपि विक्षिप्तादीनां तुल्ये क्लिष्टत्वे **तेषां दोषविशेषसन्दर्शना**दित्यप्येतत् क्लिष्टं चित्तं विक्षेपयोगात् विक्षिप्तं क्लिष्टम्, कौशीद्ययोगाल्लीनम्, औद्धत्ययोगादुद्धतम्—इत्येवमादिदोषे विशेषसन्दर्शनाद् **उक्त एवार्थविशेषो भवति**। एवं कुशलस्यापि संक्षिप्तादे**र्गुणविशेषसन्दर्शना**दित्यप्येतत् कुशलं चित्तं संक्षिप्तं प्रगृहीतमिति विस्तरेण **उक्त एवार्थविशेषो भवति**। **सूत्रविरोधस्यापरिहारा**दिति। सूत्रे हि स्त्यानमिद्धसहगतं संक्षिप्तमुक्तम्। स्त्यानयोगेन यत् क्लिष्टं मिद्धसम्प्रयुक्तम्, तत् संक्षिप्तम्, न कुशलम्; स्त्यानस्य क्लेशमहाभूमिकत्वात्।

**यदि च सूत्रे** इति विस्तरः। यदि युष्मन्नीत्या सूत्रे **लीनमेवोद्धतं** भगवता **अभिप्रेतं स्यात्**, लीनोद्धतयोः पृथग् वचनं नोक्तं स्यात्। कथम्? इत्याह—**यस्मिन् समये चित्तं लीनं** [illegible] **लीनाभिशङ्कि** लीनमेतत् भविष्यतीत्यभिशङ्कतो लीनाभिशङ्कि। **अकालस्तस्मिन् समये प्रस्रब्धिसमाध्युपेक्षासम्बोध्यङ्गानां भावनाया** इत्येष नियमो न स्यात्। एवं च वक्तव्यं स्यात्—अकालस्तस्मिन् समये धर्म-विचय-वीर्य-प्रीतिसम्बोध्यङ्गानां भावनाया अपीति। किं कारणम्? तत एव लीनं चित्तमुद्धतमिति कृत्वा। तथा **यस्मिन् समये उद्धतं चित्तं भवत्यौद्धत्याभिशङ्कि अकालस्तस्मिन् समये धर्मविचय-वीर्य-प्रीतिसम्बोध्यङ्गानां भावनाया** इत्येष नियमो न स्यात्। एवं च वक्तव्यं स्यात्—'अकालस्तस्मिन् समये प्रस्रब्धि-समाध्युपेक्षासम्बोध्यङ्गानां भावनाया अपि' इति। किं कारणम्? तदेवोद्धतं चित्तं लीनमिति कृत्वा। अविभागेन वा वक्तव्यं स्यात्– 'यस्मिन् समये चित्तं लीनं भवति, लीनाभिशङ्कि, उद्धत वा भवति औद्धत्याभिशङ्कि; अकालस्तस्मिन् समये प्रस्रब्धि-

१. लयाभिशङ्कि—का०।

**वीर्यप्रीतिसम्बोध्यङ्गानां भावनायाः" इति। किं पुनरत्र[1] बोध्यङ्गानां व्यग्रा भावना? मनसिकरणं तेषां भावनेष्टा न सम्मुखीभाव इत्यदोष एषः।**

कौसीद्याधिकमत्र चित्तं लीनमित्युक्तम्, औद्धत्याधिकं चोद्धतमित्यविरोधः। तयोस्तु सहभावात्तदेव चित्तं लीनं तदेवोद्धतमिति ब्रूमः। आभिप्रायिकं[2] वचनं वार्यते। सूत्रे तु नायमभिप्राय इति ब्रूमः।

यत्तूक्तम्—"सर्वमेव रागसंप्रयुक्तं चित्तं सरागम्" इति। कतमच्चित्तं

---

समाध्युपेक्षा-धर्मविचय-वीर्य-प्रीति-सम्बोध्यङ्गानां भावनायाः' इति। स्मृतिसम्बोध्यङ्गस्याग्रहणम्, सर्वत्रगत्वात् स्मृतेः। उभयेऽपि चित्तेऽनुक्तसिद्धितः। 'स्मृतिं खल्वहं सर्वत्रगतां वदामि' इति सूत्रे वचनात्। कथं पुनः वैभाषिकेण यदेव लीनं तदेवोद्धतमित्यभीष्टं गम्यते? 'लीनं चित्तं क्लिष्टम्; कौसीद्यसम्प्रयोगात्। उद्धतं चित्तं क्लिष्टम्, औद्धत्यसम्प्रयोगात्" इति वचनात्। **किं पुनरत्र बोध्यङ्गानां व्यग्रा भावनेति** किं? कदाचित् प्रस्रब्ध्यादिभावनैव न धर्मप्रविचयादिभावना, कदाचित् धर्मविचयादिभावनैव न प्रस्रब्ध्यादिभावनेति व्यग्रा भावना। **मनसिकरणं तेषां भावनेष्टा, न सम्मुखीभाव** इति। मनसिकरणम् = आलम्बनीकरणम्। लीने चित्तेऽकालः प्रस्रब्ध्यादीनामालम्बनीकरणस्य। आभोगकरणस्येत्यर्थः। उद्धते च चित्ते अकालो धर्मविचयादीनामिति। न तु सम्मुखीभावो भावनेष्टा। तस्मिन् काले न प्रस्रब्ध्यादयः सम्मुखीकर्तव्याः, धर्मविचयादयस्तु सम्मुखीकर्तव्याः। धर्मविचयादयो वा न सम्मुखीकर्तव्याः, प्रस्रब्ध्यादयस्तु कर्तव्या इति।

**कौसीद्याधिकमत्रेति** विस्तरः। यत्र कौसीद्यमधिकम् औद्धत्यं तु न्यग्भावेन वर्तते, तल्लीनम्; यत्र **औद्धत्यमधिकम्** कौसीद्यं तु न्यग्भावेन, तदुद्धतम्—इत्यनयोर्विशेषादविरोधः सूत्रस्य पृथग्वचने। **तयोस्तु सहभावाद्।** एकस्मिन् कलापे युगपद् भावात् **तदेव लीनं तदेवौद्धत्यमिति ब्रूम** इति। लीनं क्लिष्टम्, कौसीद्यसंयोगात्। उद्धतं क्लिष्टम्, औद्धत्यसंयोगादिति। **आचार्य** आह—**आभिप्रायिकं** यावत्, **सूत्रे तु नायमभिप्राय** इति। कौसीद्याधिकं लीनम्, औद्धत्याधिकमुद्धतमिति। यस्मादाह- यस्मिन् समये लीनं चित्तं भवति, विस्तरेण, न त्वेवं विशिनष्टि—कौसीद्याधिकम्, औद्धत्याधिकमिति वा।

**यत्तूक्तं सर्वमेव रागसंयुक्तं चित्तं सरागमिति।** कथमुक्तम्? "तत्र

---

१. पुन.—का०। २. नाभिप्रायिकं—का०।

रागसंप्रयुक्तम् ? रागप्राप्तिसहितं चेत्, 'अनास्रवमपि'[1] सरागं प्राप्नोति शैक्षं चित्तम्। रागालम्बनं चेत्, अर्हतोऽपि सास्रवं चित्तं सरागमिति गृह्णीयात्; रागालम्बनत्वात्। कथं वा तत्सास्रवम् ? सामान्यक्लेशालम्बनत्वादिति चेत्, एवमपि समोहं गृह्णीयान्मोहालम्बनत्वात्। न च परचित्तज्ञानं प्राप्त्यालम्बनम्, नापि तच्चित्तालम्बनरागालम्बनम्[2]। तस्मादपि[3] न रागसम्प्रयोगात् सरागं चित्तमत्रेष्टम्। किं तर्हि ? रागसम्प्रयुक्तं चित्तं सरागमसम्प्रयुक्तं विगतरागमिति सूत्राभिप्रायो दृश्यते।

**यत् तूक्तम्**—"विगतरागमस्य तच्चित्तं भवति विगतद्वेषं विगतमोह-

---

रागसम्प्रयुक्तं चित्तं द्वाभ्यां सरागम्; 'ततोऽन्यत् सास्रवं संयोगसरागम्' इति वचनात्। तत्र रागसंयुक्ततयापि सरागं चित्तमत्रेष्टव्यमिति वचनात्। **अनास्रवमपि सरागं प्राप्नोति शैक्षं चित्तमिति**। शैक्षस्थाने रागस्य सावशेषत्वात्। **रागालम्बनं चेत्**। अथ मतम्—रागस्य यदालम्बनं तद् रागसंयुक्तं **सरागं च भवति अर्हतोऽपि सास्रवं चित्तं** परकीयस्य रागस्यालम्बनत्वात् रागसंयुक्तमिति कृत्वा **सरागमिति गृह्णीयात्** परचित्तवित् परचित्तज्ञानं वा। अथ मतम्—न तद् रागेणालम्ब्यत इति ? तत उच्यते—**कथं वा तत् सास्रवमिति**। **सामान्यक्लेशालम्बनत्वादिति चेत्**। अथ मतम्—सामान्यक्लेशानां दृष्टिविचिकित्साऽविद्यानामालम्बनं तत्, अतः सास्रवमिति ? **एवमपि समोहं गृह्णीयात्**। अर्हतः सास्रवं चित्तं **मोहालम्बनत्वात्**। मोहोऽपि सामान्यक्लेशः। परकीयस्य च मोहस्यार्हच्चित्तमालम्बनीभवतीति। **न च परचित्तज्ञानं प्राप्त्यालम्बनमिति**। यस्मात् परचित्तज्ञानं चित्तचित्तालम्बनमिष्यते, तस्मान्न रागप्राप्तिसहितत्वेन रागसंयुक्तत्वात् सरागमिति। **नापि तच्चित्तालम्बन-रागालम्बनमिति**। तदिति, यत् परकीयं चित्तं परचित्तज्ञानेन गृह्यते तत् तच्छब्देनोच्यते। तस्यालम्बनः तच्चित्तालम्बनः। तच्चित्तालम्बनो रागः। आलम्बनमस्य परचित्ताज्ञानस्येति तद् भवति तच्चित्तालम्बनरागालम्बनम्। यस्मादेवंविधं रागं नालम्बते परचित्तज्ञानं विप्रकृष्टत्वात्। एकैकद्रव्यगोचरं हि परचित्तज्ञानम्। न च परकीयचित्तज्ञानं तस्य चित्तस्यालम्बनं गृह्णाति; "आकारालम्बननिरपेक्षं हि तत्" इति वचनात्। "रक्तमिदं चित्तं जानाति" इति वचनाच्च। **तस्मादपि न रागसम्प्रयोगात्[4] सरागं चित्तमिति**। असम्प्रयुक्तं

---

१. असास्रवमिति—का०। २. °लम्बनं रागा°—का०।
३. तस्मान्न—का०। ४. रागसंयोगात्—जा०।

मनावर्त्तिकधर्मि कामभवे रूपभवे आरूप्यभवे" इति । तत्र तत्प्राप्तिविगमं सन्धायोक्तम् । ननु चोक्तम्—अन्यक्लेशसम्प्रयुक्तमपि चित्तं रागविप्रयुक्तत्वाद्विगतरागं स्यात्" इति ? एतेनाभिसन्धिना न दोषः । न तु तद्विगतरागमिति कृत्वा गृह्यते । किं तर्हि ? सद्वेषं समोहमित्येवमादि ।

अलं प्रसङ्गेन । सिद्धान्तो वर्ण्यताम् ।

किं परचित्तज्ञानं परचित्तस्याकारमालम्बनं वा गृह्णाति ? न गृह्णाति । आकारालम्बननिरपेक्षं हि तद्रक्तमिदं चित्तमिति जानाति । न त्वमुष्मिन् रूपे रक्तमिति जानाति । अन्यथा हि तद्रूपालम्बनमपि स्यात्, तदालम्बनं च परचित्तं गृह्णतः स्वभावग्रहणं प्राप्नुयात् । सर्वं च परचित्तज्ञानं द्रव्यस्वलक्षणचित्तचैत्तप्रत्युत्पन्नपरसन्ततिकामरूपप्रतिसंयुक्ताप्रतिसंयुक्तविषयं दर्शन-

विगतरागमिति । सत्यामपि रागप्राप्तावित्यभिप्रायः । **तत्र तत्[1] प्राप्तिविगमं सन्धायोक्तमिति[1]** । रागादिप्राप्तिविगमं सन्धायोक्तम्, न सम्प्रयोगमिति दर्शयति—**अनावर्तिकधर्मि कामभवे रूपभवे आरूप्यभवे** इति । त्रैधातुकवैराग्यसन्दर्शनादित्यभिप्रायः । **ननु चोक्तमिति** विस्तरः । क्वोक्तम् ? अत्र तु सूत्रे इति विस्तरेण, यावद्, यदि हि रागेणासम्प्रयुक्तं चित्तं विगतरागं स्यात् अन्यक्लेशसम्प्रयुक्तमपि विगतरागं स्यादित्यत्र । एतेनाभिसन्धिना **रागविप्रयुक्तत्वाद् विगतरागम् अन्यक्लेशसम्प्रयुक्तमपीत्यनेन** । यद्येवम्, 'सद्वेषं समोहम्' इत्येवमादि न वक्तव्यं स्यात् इति ? अत आह—**न तु तद् विगतरागमित्यादि** । न तु तद् द्वेषादिसम्प्रयुक्तं चित्तं विगतरागमपि सत् विगतरागमिति कृत्वा गृह्यते । किं तर्हि ? **सद्वेषं समोहमित्येवमादि** । द्वेषादिसम्प्रयोगितया विशिष्टत्वात् । आदि-शब्देन चात्र संक्षिप्तं विक्षिप्तमित्येवमादिसूत्रोक्तानि पदानि गृह्यन्ते ।

**अन्यथा हीति** विस्तरः । यद् यस्मिन् वस्तुनि रूपादिके रक्तमिति विजानीयात्, **तद् रूपालम्बनमपि स्यात्** । तथा च सति न तत् परचित्तज्ञानं स्यात्; रूपालम्बनत्वात् । **तदालम्बनं च परचित्तं गृह्णतः स्वभावग्रहणं प्राप्नुयादिति** । सालम्बनपरचित्तग्रहणे हीष्यमाणे स्वात्मा परचित्तज्ञानेन गृह्येत । अस्ति हि सम्भवो यत् परचित्तविद् यस्य चित्तं गृह्णाति, असावपि तस्य परचित्तविदश्चित्तमालम्बेत । ततश्च परचित्तज्ञानस्य स्वालम्बनपरिज्ञानात् स्वमेवासौ परचित्तवित् चित्तमालम्बेत । न चैतत् प्राप्यम् यत् तेनैव चित्तेन तदेव गृह्यते । **सर्वं चेति** विस्तरः । **द्रव्यस्य स्वलक्षणं च चित्तचैत्ताश्च प्रत्युत्पन्नाश्च परसन्ततिश्च कामरूपप्रतिसंयुक्ताश्चाप्रतिसंयुक्ताश्च**

१—१. तत्सन्धायो०—जा० ।

मार्गप्रतिषिद्धं भावनामार्ग उपलभ्यते । शून्यताऽनिमित्तविप्रयुक्तं[1] क्षयानु-

उक्तं परचित्तज्ञानम् ।।

**शेषे चतुर्दशाकारे शून्यानात्मविवर्जिते ।**

क्षयानुत्पादज्ञाने शेषे ते चतुर्दशाकारे शून्यानात्माकारौ वर्जयित्वा । पारमार्थिकयोरपि संवृतिभजनात् । क्षीणा मे जातिर्नापरमस्माद्भवं प्रजानामीति तद्‌वलेनानुव्यवहारतः[2] ।

---

**विषयोऽस्येति** समासविग्रहः । द्रव्यग्रहणं संवृतिसन्निरासार्थम् । स्वलक्षणग्रहणं सामान्यलक्षणनिवृत्त्यर्थम् । चित्तचैत्तग्रहणं रूपादिविशेषणार्थम् । प्रत्युत्पन्न-ग्रहणं स्वसन्ततिव्युदासार्थम् । [illegible] आरूप्य-प्रतिसंयुक्तप्रतिषेधार्थम् । **दर्शनमार्गप्रतिषिद्धमिति** । दर्शनमार्गे वर्तमानः परचित्तज्ञानं न सम्मुखीकरोति, अतो दर्शनमार्गसंगृहीतं नास्ति । न हि दर्शनमार्गो व्यवच्छिन्नचित्तचैत्तालम्बनो भवति । **भावनामार्ग उपलभ्यते** इति । भावनामार्गसंगृहीतं भवतीत्यर्थः । **शून्यतानिमित्तविप्रयुक्तमिति** । शून्यतासमाधिना, अनिमित्तसमाधिना च विप्रयुक्तम् । शून्यतासमाधिः दुःखज्ञानसयुक्तः, अनिमित्तसमाधिर्निरोधज्ञानसम्प्रयुक्तः । न च परचित्तज्ञानम् दुःखज्ञानं दुःखनिरोधज्ञानं वा भवति, आकारालम्बनभेदात् । अतस्ताभ्यां विप्रयुक्तमुच्यते । अर्थादुक्तं [illegible] सम्भवतीति । **क्षयानुत्पादज्ञानासंगृहीतमिति** । क्षयज्ञानेनानुत्पादज्ञानेन न संगृहीतम् । न क्षयानुत्पादज्ञानस्वभावमित्यर्थः । किं कारणम् ? द्रव्यस्वलक्षण-सन्तीरण-परिमार्गणाशय परचित्तज्ञानम् । न चैव क्षयज्ञानमनुत्पादज्ञानं चेति ताभ्यामसंगृहीतम् । **आनन्तर्यमार्ग प्रतिषिद्धं चेति** । स हि प्रहाणमार्गो भवति; परचित्तज्ञानं च विमुक्तिविशेषमार्ग इति ।। ११ ।।

**पारमार्थिकयोरपि संवृतिभजनादिति** । परमार्थनिमित्ते, परमार्थेन वा दीव्यतः पारमार्थिके । तयोः संवृतिभजनात् । यस्मादेते संवृति भजेते, अतः शून्यतात्माकारौ न स्तः । कथं पुनरेते संवृतिं भजेते ? **क्षीणा मे जातिः, नापरमस्माद् भवं प्रजानातीति** यथाक्रमम् । कथमेते अनास्रवे सतो एवमाकारे ? **तद्‌बलेनानुव्यवहारतः** । अन्येन ज्ञानेनेति वाक्यशेषः । यस्मात्

---

१. °निमित्तसमाधि० —का० । २. तद्‌बलानुव्य० —का० ।

किमनास्रवः स्वलक्षणाकारोऽस्ति ? अथ न ? **काश्मीराणां** तावत्

**नामलः षोडशेभ्योऽन्य आकारः,**

नास्त्यनास्रवाकारः षोडशाकारनिर्मुक्तः ।

**अन्येऽस्ति शास्त्रतः ॥ १२ ॥**

अन्ये पुनरस्तीत्याहु**र्बहिर्देशकाः** । कथं गम्यते ? **शास्त्रत** इति । **शास्त्रे** ह्येवमाह—"स्यादप्रतिसंयुक्तेन चित्तेन कामप्रतिसंयुक्तान् धर्मान् विजानीयात् । अनित्यतो दुःखतः शून्यतोऽनात्मतः हेतुतः समुदयतः प्रभवतः प्रत्ययतः । अस्त्येतत्स्थानमस्त्येतद्वस्त्विति योगविहिततो विजानीयात्" (          ) इति ।

नास्यायमर्थो यदस्त्येतत् स्थानमस्त्येतद्वस्त्वित्येवं विजानीयादिति, अपि त्वस्त्येतत् स्थानमस्त्येतद्वस्तु यदनित्यादितो विजानीयादिति चेत् ? न ; अन्यत्रावचनात् । एष चेच्छास्त्रार्थोऽभविष्यत्, यदिदं पठ्यते—"स्याद्दर्शनप्रहातव्येन चित्तेन कामप्रतिसंयुक्तान्धर्मान्विजानीयादिति ? आह—विजानीयात् । आत्मत आत्मीयत उच्छेदतः शाश्वततः अहेतुतोऽक्रियातो-

---

तत्पृष्ठनिर्जाते संवृतिज्ञाने एवमाकारे प्रवर्तेते, अतस्तन्निष्यन्देन तयोः संवृतिभाजनमित्युच्यते । न तु मुख्यवृत्या तयोः संवृतिभाजनमित्यभिप्रायः । यतश्चैव निष्यन्देनात्मदृष्टिं भजमाने इव ते प्रवर्तेते, अत्र तस्माच्छून्यानात्माकारविवर्जितैश्चतुर्दशभिरेवाकारैः सम्प्रयुक्ते इति ।

**अप्रतिसंयुक्तेने**ति । अनास्रवेण । **अनित्य**मिति । अनित्यतः । अयं हि तसिप्रत्ययः स्वार्थे प्रयुक्तः । एवं सर्वत्रायं प्रत्ययो ज्ञातव्यः । अथ वा—अन्तरेणापि भावप्रत्ययं भावप्रधानो निर्देशो भवति—अनित्येन रूपेण भावोऽनित्यत इति । एवमन्यत्रापि योज्यम् । **अस्त्येतत् स्थानम्, अस्त्येतद् वस्तु** इति । एतावपि द्वावाकारावनास्रवौ । अस्त्येतत्स्थानमिति अस्त्येतल्लक्षणमित्यर्थः । अस्त्येतद्वस्तु इति, अयं हेतुरित्यर्थः । **योगविहिततो विजानीयादिति** । अविपरीततो विजानीयादित्यर्थः ।

**नास्यायमर्थ** इति विस्तरः । अस्येति, वाक्यस्य पदद्वयस्य वा—अस्त्येतत् स्थानम् अस्त्येतद् वस्तु । अस्त्ययं सम्भवोऽस्त्ययं योगो **यद् अनित्यादितो विजानीयादिति मतं चेत्, न**; नैतदस्ति । **अन्यत्रावचनात्** । अन्यत्र वाक्ये पदद्वयस्यावचनात् । **दर्शनप्रहातव्येने**ति । दर्शनप्रकारेण । **आत्मत आत्मीयतश्चेति** । सत्कायदृष्ट्या सम्प्रयुक्तेन चित्तेन । **उच्छेदतः शाश्वतत**

ऽपवादतोऽग्रतः श्रेष्ठतो विशिष्टतः परमतः शुद्धितो मुक्तितो नैर्याणिकतः काङ्क्षातो विमतितो विचिकित्सातः। रज्येत द्विष्यान्मन्येत मुह्येदयोगविहिततो विजानीयाद्" इति, अत्राप्येवं पाठोऽभविष्यत्—अस्त्येतत्स्थानमस्त्येतद्वस्त्विति, न चैवं पठ्यते। तस्मान्नास्यायमर्थः ॥ १२ ॥

किं पुनरिमे षोडशाकारा नामतः ? आहोस्वित् द्रव्यतः ? सप्त द्रव्यतः, नामतः षोडशेत्येके। दुःखाकाराश्चत्वारः; मेकैकद्रव्यत्वात्। **एवं तु वर्णयन्ति—**

**द्रव्यतः षोडशाकाराः,**

तत्प्रत्ययाधीनत्वात् अनित्यम्। पीडनात्मकत्वात्[1] दुःखम्।

---

इति। अन्तग्राहदृष्ट्या। **अहेतुतः, अक्रियतः, अपवादत** इति। मिथ्यादृष्ट्या। **अग्रतः, श्रेष्ठत विशिष्टतः, परमत** इति। दृष्टिपरामर्शेन। **शुद्धितः, मुक्तितः, नैरात्म्यत** इति। शीलव्रतपरामर्शेन। **कांक्षातः, विमतितः, विचिकित्सात** इति। विचिकित्सातः। **रज्येतेति**। रागेण। **द्विष्यादिति**। द्वेषेण। **मन्येत** इति। मानेन। **मुह्येदिति**। मोहेन। **अयोगविहिततो**[2] **विजानीयादिति**। एवमात्मादिभिर्विपरीततो[3] विजानीयादिति निगमयति। **अत्रापि वाक्ये एवं पाठोऽभविष्यदिति**। **न चैवम्**। अतो गम्यते **नायमस्यार्थ** इति ॥ १२ ॥

**सप्त द्रव्यत** इति। दुःखाकाराश्चत्वारो द्रव्यतो भवन्ति। **समुदयाकाराद्याकारास्त्वेकैक** इति सप्त। य एव हेत्वाकार स एव समुदयः, प्रभवः, प्रत्ययश्च प्रत्ययमात्रं नार्थभेदः। शक्रः, इन्द्रः, पुरन्दर इति यथा। एवं निरोध एव शान्तः प्रणीतो निःशरणम्—इत्येक आकारः। मार्ग एव च न्यायः, प्रतिपत्, नैर्याणिकः—इत्येक आकार इति। तदिदमुक्त भवति—दुःखाकारांश्चतुरः पृथग्योगिनः सम्मुखीकुर्युः, हेत्वाकारास्त्वेकैकमित्येकीयमतम्।

**द्रव्यतः षोडशेति वैभाषिका वर्णयन्ति**। दुःखाकारत्वान् समुदयाद्याकाराणां सर्वेषामपि पृथक् पृथक् सम्मुखीकर्तव्यत्वात्। प्रज्ञास्वभावा ह्याकारा इति ब्रुवते। **प्रत्ययाधीनत्वादिति** विस्तरः। न नियतभाव अ-**नित्यम्**। प्रत्ययाधीनत्वात्। प्रत्ययप्रतिबद्धजन्मत्वादित्यर्थः। **पीडनात्म-**

---

१. पीडात्म०—क०।   २. ०विहितता—ज०।

३. ०विपरीतता—जा०।

आत्मीयदृष्टिविपक्षेण शून्यम्। आत्मदृष्टिविपक्षेणानात्मा। हेतुर्बीजधर्मयोगेन। समुदयः प्रादुर्भावयोगेन। प्रभवः प्रबन्धयोगेन। अभिनिष्पादनार्थेन प्रत्ययः। तद्यथा मृत्पिण्डदण्डचक्रसूत्रोदकसमवायात् घटाभिनिष्पत्तिर्भवति, तद्वदिति। स्कन्धोपरमत्वात् निरोधः। अग्निनिर्वापणात् शान्तः। निरुपद्रवत्वात् प्रणीतः। सर्वापक्षालविमुक्तत्वान्निःसरणमिति[1]। गमनार्थेन मार्गः। योगयुक्तत्वान्न्यायः। सम्यक्प्रतिपादनार्थेन प्रतिपत्। अत्यन्तसमतिक्रमणान्नैर्याणिक इति।

अथवा—अनात्यन्तिकत्वादनित्यम्। अभिन्यासभूतत्वात् दुःखम्। अन्तर्व्यापारपुरुषरहितत्वाच्छून्यम्। अकामकारित्वादनात्मा। हेतुरागमनयोगेन। समुदय उन्मज्जनयोगेन। प्रभवः प्रसरणयोगेन। प्रतिसर-

---

**कत्वादिति**। बाधनात्मकत्वादित्यर्थः। **विपक्षेणेति**। प्रतिपक्षेणेत्यर्थः। विरुद्धः पक्षो विपक्ष इति कृत्वा। **हेतुर्बीजधर्मयोगेनेति**। प्रकृष्टावस्थतां हेतोर्दर्शयति। आदिबीजवत्। योगशब्दोऽत्र न्यायार्थः। **समुदयः प्रादुर्भावयोगेने**ति। सन्निकृष्टावस्थतां हेतोर्दर्शयति। यतः क्षणादनन्तरमुत्पद्यते, समुदेत्यस्मादिति कृत्वा। **प्रभवः प्रबन्धयोगेने**ति। सन्ततियोगेनानुच्छेदं दर्शयति। बीजाङ्कुरकाण्डनालादिवत्। **अभिनिष्पादनार्थेन प्रत्यय** इति। हेत्वादिभ्यो बहुभ्य उत्पद्यत इति दर्शयति। **तद्यथा मृत्पिण्डदण्डादिभ्यो बहुभ्यो निष्पीडयते घटः, तद्वत्**। **अग्निनिर्वापणादिति**। रागद्वेषमोहाग्निनिर्वापणादित्यर्थः। **निरुपद्रवत्वादिति**। निर्दुःखत्वादित्यर्थः। **सर्वापक्षालवियुक्तत्वादिति**। सर्वदुःखकारणविमुक्तत्वात्। **गमनार्थेन**। निर्वाणस्य। **योगयुक्तत्वाद्**। उपाययुक्तत्वाद्वा। **सम्यक्प्रतिपादनार्थेन प्रतिपदिति**। प्रतिपद्यते निर्वाणमनयेति प्रतिपत्। नैर्याणिक इति। **अत्यन्तं निर्याणाय प्रभवतीति नैर्याणिकः**।

**अनात्यन्तिकत्वादनित्यमिति**। पूर्वं प्रागुत्पत्त्यभावेनानित्यमुक्तम्, इदानीं प्रध्वंसाभावेन दर्शयति। **अभिन्यासभूतत्वादिति**। भारभूतत्वादित्यर्थः। दुःखेन भारभूतेन हि स पुद्गलो भिद्यते। आक्रम्यत इत्यर्थः। **अकामकारित्वादिति**। कामतः कर्तुं शीलमस्येति कामकारी, न कामकारी अकामकारी, तद्भावात्। **अनात्मा**। सूत्रेऽप्ययमर्थ उक्तः—"रूपं चेद् भिक्षव आत्माऽभविष्यत् न रूपमात्मव्याबाधाय संवर्तते। लभ्येत च रूपे 'एवं भवतु' 'एवं मा भूत्' इति कामकारो आत्मेति निरुक्तिपरिग्रहात्। **हेतुरागमनयोगेने**ति। "हि गतौ" ( पा० धा० ५.२ )। हिनोत्यस्मादिति।

---

१. °विमुक्त०—का०।

णार्थेन प्रत्यय इति। असम्बन्धः सम्बन्धोपरमान्निरोधः[1]। त्रिसंस्कृत-लक्षणविमुक्तत्वाच्छान्तः। कुशलत्वात् प्रणीतः। परमाश्वासत्वान्निःसरण-मिति। कुमार्गविपक्षेण मार्गः। अन्यायविपक्षेण न्यायः। निर्वाणपुराविरोध-नार्थेन प्रतिपत्। सर्वभवप्रतिपक्षत्वान्नैर्याणिक इति। एषां व्याख्यान-मनेकपर्यायः। यथाभिप्रेतं प्रवक्ष्यामः। उदयव्ययत्वादनित्यम्। प्रतिकूल-भावात् दुःखम्। आत्मरहितत्वाच्छून्यम्। स्वयमनात्मत्वादनात्मा। हेतुसमुदयप्रभवप्रत्ययत्वं तु यदेव सूत्र उक्तम्—"इमे पञ्चोपादानस्कन्धा-श्छन्दमूलकाश्छन्दसमुदयाश्छन्दजातीयाश्छन्दप्रभवाः" इति। प्रभवशब्दः केवलं पश्चात् पठितव्यः शास्त्रे।

कः पुनरेषां छन्दानां विशेषः? चतुर्विधो हि च्छन्दः। अस्मीत्यभेदे-नात्मभावच्छन्दः। स्यामित्यभेदेन पुनर्भवच्छन्दः। इत्थं स्यामिति भेदेन पुनर्भवच्छन्दः। प्रतिसन्धिबन्धच्छन्दश्चतुर्थः। कर्माभिसंस्कारच्छन्दो वा।

---

अस्मादुत्पद्यत इत्यर्थः। **उन्मज्जनयोगेनेति**। अनागताध्वन उन्मज्जतीवेति अर्थः। **प्रसरणयोगेनेति**। प्रबन्धयोगेन। **प्रतिसरणार्थेन प्रत्यय** इति। जनिक्रियाप्रतिप्रधानभूत इत्यभिप्रायः। **असम्बन्धः सम्बन्धोपरमा-दिति**। पूर्वस्य दुःखस्योपरमात्। उत्तरस्य सम्बन्धोपरमो **निरोध** इत्यर्थः। **त्रिसंस्कृतलक्षणविमुक्तत्वात्**। उत्पाद-व्यय-स्थित्यन्यथात्वविमुक्तत्वात्। **परमाश्वासत्वादिति**। सर्वदुःखोच्छित्त्या परमक्षेमत्वात्। **निर्वाणपुरा-विरोधनार्थेन प्रतिपदिति**। यस्मादनेन निर्वाणपुरं न विरोध्यते, न विसंवाद्यते, किं तर्हि? प्रतिपद्यत एवेत्यतः प्रतिपत्। प्रतिपद्यत अनयेति कृत्वा।

**छन्दमूलका** इति। छन्दहेतुका इत्यर्थः। तृष्णापर्याय इह छन्दः। **छन्दसमुदया** इति। छन्दसमुद्गमा इत्यर्थः। **छन्दजातीया** इति। छन्द-प्रत्यया इत्यर्थः। **प्रभवशब्दः केवलं पश्चात् पठितव्यः**। आभिधर्मिकैरिति वाक्याध्याहारः। सूत्रानुसरणं हि कर्तव्यमित्यभिप्रायः। हेतुतः समुदयतः प्रत्ययतः प्रभवतश्चेति।

**कः पुनरेषां छन्दानां विशेषः? अस्मीत्यभेदेनात्मभावच्छन्द** इति। अनवधार्यकं द्रव्यं समस्तेषु पञ्चसूपादानस्कन्धेषु अस्मीत्यभेदेन प्रकारान्तर-विशिष्टस्य प्रत्युत्पन्नस्यात्मभाववस्तुनोऽनालम्बनतः त्रैयध्विकात्मभावाना-लम्बनतो वा आत्मभावप्रार्थना आत्मभावच्छन्द इति प्रथमः। **स्यामित्य-भेदेनेति**। पुनर्भावमात्रप्रार्थना, न विशेषरूपा प्रार्थनेति द्वितीयः। इत्थं

---

१ ०परमत्वा०—का०।

तत्र प्रथमो दुःखस्यादिकारणत्वान्मूलहेतुः। फलस्येव बीजम्। द्वितीयः समुदयः, तेन तत्समुदागमात् फलस्येवाङ्कुरादिप्रसवः। तृतीयस्तज्जातीयदुःखप्रत्ययः। फलस्येव क्षेत्रोदकपांश्यादिकम्। क्षेत्रादिवशेन हि फलस्य गन्धरसवीर्यविपाकप्रभावभेदा भवन्ति। चतुर्थः प्रभवस्तत एव तत्सम्भवात्। फलस्येव पुष्पावसानमिति।

अथ च[1] तृष्णाविचरितानां द्वौ पञ्चकौ, द्वौ चतुष्कौ, चत्वारश्छन्दाः। "अस्मीति भिक्षवः सति इत्थमस्मीति भवति, एवमस्मीति भवति, अन्यथाऽ-

---

**स्यामिति**। इदम्प्रकारः स्यामिति भेदेन **पुनर्भवच्छन्दस्तृतीयः। प्रतिसन्धिबन्धच्छन्दश्चतुर्थ** इति। प्रतिसन्धिरेव बन्धः, प्रतिसन्धेर्वा बन्धः प्रतिसन्धिबन्धः, तत्र छन्दः प्रार्थनेति चतुर्थः। **कर्माभिसंस्कारच्छन्दो वा**। चतुर्थ इत्यधिकृतम्। कर्मणो वाभिसंस्कारः, तत्र छन्दः—एवं चैवं च दानं दास्यामीति। कथं पुनस्ते छन्दा मूलादिशब्दवाच्या इति प्रतिपादयन्नाह—**तत्र प्रथम** इति विस्तरः। आदिः कारणम्, आदौ वा कारणम् **आदिकारणम्**। तद्भावाच्छन्दमूलका। हेत्वर्थो हि मूलशब्दः। **फलस्येव बीजमिति**। यथा फलस्य बीजमादिकारणम्, विप्रकृष्टकारणं तद्वदयमादिच्छन्दो दुःखस्य। **तेन तत्समुदागमादिति**। तेन द्वितीयेन छन्देन पुनर्भवस्य समुदागमात् क्षणपरम्परया। **फलस्येवाङ्कुरादिप्रसवः**। यथा परम्परया अंकुरादिप्रसवः फलस्य समुदयः, तद्वत्। तृतीयश्छन्दः—इत्थं स्यामिति। **तज्जातीयदुःखप्रत्यय** इति। यत्प्रकारः पुनर्भवच्छन्दः तत्प्रकारस्य दुःखस्य प्रत्ययः सम्भवति। तस्य विशेषरूपत्वात् विशेषफलरूपमेव फलमुत्पद्यत इत्यभिप्रायः। **फलस्यैव क्षेत्रोदकपांश्यादिकमिति**। पांशिः = शुष्को गोमयः। आदिशब्देन वातातपादिर्गृह्यते। ततोऽपि हि फलसम्पदिति। **वीर्यम्**। शीतवीर्यता, उष्णवीर्यतेति। **विपाकः**। उष्णपरिणामता, मधुरपरिणामतेति। **प्रभावः**। सामर्थ्यविशेषः। तद्यथा—अम्लत्वे तुल्ये बीजपूरकरसः पित्तं जनयति, आमलकरसस्तु शमयतीति। तत एव तत्सम्भवादिति। तत एव प्रतिसन्धिबन्धच्छन्दात् तस्य प्रतिसन्धिबन्धस्य पुनर्भवलक्षणस्य सम्भवादुत्पादात्। **फलस्येव पुष्पावसानम्**। यथा पुष्पावसानं फलस्य प्रभवः, तद्वत्। अत्र चतुर्थच्छन्दः साक्षाद्धेतुः पुनर्भवस्य, पूर्वकास्त्रयः पारम्पर्येण हेतवः। **अथ चेति** विस्तरः। **तृष्णाविचरितानां द्वौ पञ्चकौ** गणौ **द्वौ चतुष्कौ चत्वारश्छन्दा** यथाक्रमं भवन्ति। प्रथमच्छन्दः पञ्चाकारः, द्वितीयोऽपि पञ्चाकारः, तृतीयः चतुःप्रकारः, चतुर्थोऽपि चतुः-

---

१. वा—का०।

स्मीति, सदस्मीति, असदस्मीति। भविष्यामीत्यस्य भवति—न भविष्यामि, इत्थं भविष्यामि, एवं भविष्यामि, अन्यथा भविष्यामि। स्यामित्यस्य भवति—इत्थं स्याम्, एवं स्याम्, अन्यथा स्याम्, अपितु स्याम्, अपीत्थं स्याम्, अप्येवं स्याम्, अप्यन्यथा स्यामित्यस्य भवति। प्रवृत्त्युपरमत्वान्निरोधः। निर्दुःखत्वाच्छान्तः; "इति हि भिक्षवो दुःखाः संस्काराः शान्तं निर्वाणम्" इति वचनात्। निरुत्तरत्वात् प्रणीतः। अपुनरावृत्तित्वान्निःसरणम्। पथिभूतत्वान्मार्गः। यथाभूतप्रवृत्तत्वान्न्यायः। प्रतिनियतत्वात् प्रतिपत्।

यथोक्तम्—

"एष मार्गो हि नास्त्यन्यो दर्शनस्य विशुद्धये" (       ) इति।

अत्यन्तनिर्याणान्नैर्याणिकः। अथवा नित्यसुखात्मीयात्मदृष्टिचरितानां प्रतिपक्षेणानित्यदुःखशून्यानात्माकाराः। अहेत्वेकहेतुपरिणामबुद्धिपूर्वकृतदृष्टिचरितानां[1] प्रतिपक्षेण हेतुसमुदयप्रभवप्रत्ययाकाराः। 'नास्ति

---

प्रकारः। कथम्? "अस्मीति भिक्षवः सत्यात्मदृष्टौ सत्यां **इत्थमस्मीति भवतीदम्प्रकारोऽस्मीति** भवति। तद्योगात् [illegible]। **एवमस्मीति**। यथापूर्वमेव, नान्यथेत्यर्थः। **अन्यथास्मीति** अन्येन प्रकारेण, वर्ण-बल-प्रतिभानादिदर्शनात्। **सदस्मीति** भवति। विपर्ययात् **असदस्मीति**। अयमभेदेन पञ्चधात्मभावच्छन्दः प्रथमः। **भविष्यामीत्यस्य** भवतीति शाश्वतरूपेण। **न भविष्यामीत्यु**च्छेदरूपेण। **इत्थं भविष्यामीति** विस्तरेण पूर्ववत् व्याख्यानम्। इत्ययमभेदेन पञ्चधापुनर्भवच्छन्दो द्वितीयः। **स्याम् इत्यस्य भवति—इत्थं स्याम्, एवं स्याम्, अन्यथा स्याम् इत्यस्य भवतीति**। अयं भेदेन चतुर्धापुनर्भवच्छन्दस्तृतीयः। **अपितु स्याम्** इत्यस्य भवति—**अपीत्थं स्याम्, अप्येवं स्याम्, अप्यन्यथा स्याम्** इत्यस्य चतुर्धाप्रतिसन्धिबन्धच्छन्दश्चतुर्थः। तत्र प्रथमो दुःखस्यादिकारणत्वान्मूलहेतुरिति विस्तरेण पूर्ववत् योज्यम्। **प्रतिनियतत्वात् प्रतिपदिति**। नियतप्रतिपादनं प्रतिपद्। कथं पुनः प्रतिनियता? अनयैव तद्गमनात्।

**यथोक्तमिति** विस्तरः। **नित्यसुखात्मीयात्मदृष्टिचरितानामिति**। नित्यं सुखं आत्मीयम् आत्मेति वा दृष्टिचरितमेषाम् त इमे नित्यसुखात्मीयात्मदृष्टिचरिताः पुद्गलाः। तेषां **प्रतिपक्षेण** यथाक्रमं **अनित्याद्याकाराः**। नास्ति हेतुरित्यहेतुदृष्टिचरितानां **प्रतिपक्षेण** हेत्वाकाराः। एको हेतुः ईश्वरः प्रधानं चेति **एकहेतुदृष्टिचरितानां** समुदयाकाराः। समुदयो

---

१. ०पूर्वकदृष्टि०—का०।

मोक्षः' इति दृष्टिचरितानां निरोधाकारः। 'दुःखो मोक्षः' इति दृष्टिचरितानां प्रणीताकारः। 'पुनः पुनः परिहाणितो नात्यन्तिको मोक्षः' इति दृष्टिचरितानां निःसरणाकारः। 'नास्ति मार्गः, कुमार्गोऽयम्, अन्यो मार्गः, पुनरावर्ती मार्गः' इति दृष्टिचरितानां मार्गन्यायप्रतिपन्नैर्याणिकाकारा इति।

आकारो नाम क एष धर्मः ?

**प्रज्ञाकारः,**

एवं तर्हि प्रज्ञा साकारा न भविष्यति, प्रज्ञान्तरासंयोगात् ? एवं तु युक्तं स्यात्—सर्वेषां चित्तचैत्तानामालम्बनग्रहणप्रकार आकार इति।

अथ किं प्रज्ञैवाकारयति ? नेत्याह। किं तर्हि ?

**तया सह।**

**आकारयन्ति सालम्बाः,**

प्रज्ञा चान्ये च सर्वे सालम्बना धर्मा आकारयन्ति।

**सर्वमाकार्यते तु सत् ॥ १३ ॥**

यत् किञ्चिदस्ति सर्वमाकार्यते। तदेवं कृत्वा सिद्धं भवति—प्रज्ञा आकारश्चाकारयति चाकार्यते च। अन्ये सालम्बना आकारयन्त्याकार्यन्ते च। आलम्बना आकार्यन्त एवेति ॥ १३ ॥

---

हेतुर्नैकहेतुरिति। परिणमते भाव इति **परिणामदृष्टिचरितानां प्रभवाकाराः**। आदिभवोऽयं न तु पूर्वमवस्थित परिणमत इति। बुद्धिपूर्वकृतोऽयं लोक इति **बुद्धिपूर्वकृतदृष्टिचरितानां प्रत्ययाकाराः**। नेदम् ईश्वरबुद्धिकृतं जगत्। किं तर्हि ? तं तं प्रतीत्य तत् तद्भवतीति वीप्सार्थो हि प्रतिशब्दः। तस्मादनेकप्रत्ययजनितं जगद्—इति ज्ञापितं भवति।

**एवं तु युक्तं स्यात्** इति। **सौत्रान्तिकमतम्। आलम्बनग्रहणप्रकार आकार** इति। नैरुक्तो[1] विधिरिति दर्शयति। आलम्बनशब्दात् आकारं गृहीत्वा प्रकारशब्दाच्च कारशब्दम्, शेषवर्णलोपे च कृते 'आकार' इति रूपं भवति। तदेवं सति प्रज्ञापि साकारा भवतीति सिद्धम्। **सालम्बा** इति। आलम्बेत्याकारान्तमेतच्छब्दरूपम्। घञन्तं वा आलम्ब इति। सहालम्बेन, सहालम्बया वा वर्तन्ते सालम्बाः। सालम्बना इत्यर्थः ॥ १३ ॥

---

१. नैरुक्ता विधि॰—जा॰।

अतः परमेषां ज्ञानानां कुशलादिभेदं निर्देक्ष्यामः।

**त्रिधाद्यं कुशलान्यन्यानि,**

संवृतिज्ञानं श्लोकादौ भवत्वादाद्यम्। तत् त्रिविधम्—कुशलाकुशलाव्याकृतम्। अन्यानि नव ज्ञानानि कुशलान्येव।

**आद्यं सर्वासु भूमिषु।**

कामधातौ यावद् भवाग्रे।

**धर्माख्यं षट्सु,**

धर्मज्ञानं चतुर्षु ध्यानेष्वनागम्ये ध्यानान्तरे च।

**नवसु त्वन्वयाख्यम्,**

अन्वयज्ञानं तास्वेव च षट्सु भूमिष्वारूप्यत्रये च।

**तथैव षट्॥ १४॥**

दुःखसमुदयनिरोधमार्गक्षयानुत्पादज्ञानान्यप्येतास्वेव नवसु भूमिष्वभेदेन। भेदेन पुनर्धर्मज्ञानसंगृहीतानि षट्सु, अन्वयज्ञानसंगृहीतानि नवसु॥ १४॥

**ध्यानेष्वन्यमनोज्ञानम्,**

परचित्तज्ञानं चतुर्ष्वेव ध्यानेषु, नान्यत्र।

**कामरूपाश्रयं च तत्।**

कामरूपधात्वोश्च तत् परचित्तज्ञानं सम्मुखीक्रियते।

**कामाश्रयं तु धर्माख्यम्,**

धर्मज्ञानं तु कामधात्वाश्रयमेव न रूपारूप्यधात्वोः सम्मुखीक्रियते।

---

**कुशलादिभेदमिति।** आदिशब्देन अकुशलाव्याकृतभूम्याश्रयग्रहणम्।

**श्लोकादौ भवत्वादाद्यमिति।** इहाद्यम्, न शास्त्रमिति व्याचष्टे। शास्त्रे हि धर्मज्ञानमाद्यं पठितमिति।

"**धर्माख्यं षट्सु**" इति। कामावचरदुःखाद्यालम्बनत्वात्। आरूप्यत्रये चास्ति भावनामार्गसंगृहीतमेवान्वयज्ञानम्।

"**तथैव षट्**" इति। दुःखज्ञानादीनामन्वयज्ञानस्वभावत्वसम्भवात्। **न रूपारूप्यधात्वोः सम्मुखीक्रियत** इति। युक्तं तावत् आरूप्यधातौ धर्मज्ञानं

**अन्यत् त्रैधातुकाश्रयम् ॥ १५ ॥**

किं पुनरन्यत् ? परिचित्तज्ञानं धर्मज्ञाननिर्मुक्तम् ॥ १५ ॥

कृतो भूम्याश्रयनिर्देशः ॥

स्मृत्युपस्थानसंग्रहो वक्तव्यः, सोऽयमुच्यते—

**स्मृत्युपस्थानमेकं धीर्निरोधे,**

धीः, प्रज्ञा, ज्ञानमिति पर्यायाः । निरोधज्ञानमेकं धर्मस्मृत्युपस्थानम् ।

**परचित्तधीः ।**

**त्रीणि,**

परचित्तज्ञानं त्रीणि वेदनाचित्तधर्मस्मृत्युपस्थानानि ।

**चत्वारि शेषाणि,**

निरोधपरचित्तज्ञानाभ्यामन्यानि ज्ञानानि चत्वारि स्मृत्युपस्थानानि ।

---

न सम्मुखीक्रियत इति । आरूप्याणां कामावचरदुःखाद्यनालम्बनत्वात् । रूपधातौ तु कस्मान्न सम्मुखीक्रियते ? केचिद् आहुः—कामधातुविदूषणपरं धर्मज्ञानम् । रूपधातूपपन्नस्य च धर्मज्ञानं न कामधातुं विदूषयितुमुपजायते ; तस्य वैराग्यभूमिसंस्कारपरित्यक्तत्वात् । कामधातूपपन्नस्तु तद्वीतरागोऽपि तत् सम्मुखीकरोति ; कामधातूपपत्तेः सावशेषत्वादिति । अतो न रूपधातौ धर्मज्ञानं सम्मुखीक्रियते ।

**आचार्यसङ्घभद्र** आह—धर्मज्ञानं कामधातावेव सम्मुखीक्रियते, न रूपारूप्यधात्वोः ; तत्समापत्तिव्युत्थानचित्तानां कामधातावेव सद्भावात्, अनुपरिवर्तकाश्रयाभावाद् वा । धर्मज्ञानानुपरिवर्तकस्य हि शीलस्य कामावचराण्येव भूतान्याश्रयः ; दौःशील्यसमुत्थापकक्लेशप्राप्तिविबन्धकत्वात् प्रातिपक्षिकत्वात् । तानि च तत्र न सन्तीति धर्मज्ञानं कामधात्वाश्रयमेवेति ॥ १४-१५ ॥

**निरोधज्ञानमेकं धर्मस्मृत्युपस्थानम्** । धर्मस्मृत्युपस्थाननिर्देश उक्तम्—'धर्मः कायवेदनाचित्तेभ्योऽन्यः' इति । **अन्यानि ज्ञानानि चत्वारि स्मृत्युपस्थानानीति** । धर्मान्वय-संवृति-दुःख-समुदय-मार्ग-क्षयानुत्पादज्ञानानि चतुःस्मृत्युपस्थानस्वभावानि सन्ति । दुःख-ज्ञानमपि हि कदाचित् कायालम्बनम्,

कतमस्य ज्ञानस्य कति ज्ञानान्यालम्बनम् ?

**धर्मधीगोचरो नव ॥ १६ ॥**

धर्मज्ञानस्य नव ज्ञानान्यालम्बनम् ; अन्यत्रान्वयज्ञानात् ॥ १६ ॥

**नव मार्गान्वयधियोः,**

अन्वयज्ञानस्यापि नव ज्ञानान्यालम्बनम्. अन्यत्र धर्मज्ञानात् । मार्गज्ञानस्यापि नव ज्ञानान्यालम्बनम्, अन्यत्र संवृतिज्ञानात् ।

**दुःखहेतुधियोर्द्वयम् ।**

दुःखसमुदयज्ञानयोर्द्वे संवृतिपरचित्ताने आलम्बनम् ।

**चतुर्णां दश,**

संवृतिपरचित्तक्षयानुत्पादज्ञानानां दश ज्ञानान्यालम्बनम् ।

**नैकस्य,**

एकस्य निरोधज्ञानस्य नैव ज्ञानमालम्बनम् ।

**योज्या धर्माः पुनर्दश ॥ १७ ॥**

कतमे दश ?

**त्रैधातुकामला धर्मा अकृताश्च द्विधा द्विधा ।**

---

कदाचित्... यावत् धर्मालम्बनम् । एवं समुदयज्ञानम् । मार्गज्ञानमपि यदनास्रवसंवरालम्बनम्, कायस्मृत्युपस्थानं तद् भवनि । शेषं सुगमम् ।

**अन्यत्रान्वयज्ञानादिति** । धर्मज्ञानं यद्यनास्रवं ज्ञानमालम्बेत, धर्मज्ञानपक्षमेवालम्बेत । एवमन्वयज्ञानमन्वयज्ञानपक्षमेवालम्बेत—इति नियमः । तत्र धर्मज्ञानस्य मार्गज्ञानभूतस्य धर्मज्ञानान्तरं दुःखज्ञानादीनि चानुत्पादज्ञानान्यान्यालम्बनं सम्भवन्ति । दुःखसमुदयज्ञानभूतस्य तु संवृतिज्ञानमालम्बनं सम्भवति । परचित्तज्ञानभूतस्य परचित्तज्ञानमालम्बनं सम्भवतीति नव ज्ञानानि तस्यालम्बनमिति ॥ १६ ॥

एवमन्वयज्ञानमपि योज्यम् । **मार्गज्ञानस्यापि नवैव अन्यत्र संवृतिज्ञानात्** । न हि मार्गज्ञानं संवृतिज्ञानमालम्बते, अनास्रवमार्गालम्बननियमात् । **द्वे संवृतिपरचित्तज्ञाने** इति । दुःखसमुदयसत्यान्तर्भूते । परचित्तज्ञानं यदनास्र-

संस्कृता धर्मा अष्टधा क्रियन्ते ; कामरूपारूप्यावचरानास्रवाणां सम्प्रयुक्तविप्रयुक्तभेदात् । असंस्कृता द्विधा क्रियन्ते ; कुशलाव्याकृतभेदात् ।

इमे दश धर्माः कथं योज्याः कस्य ज्ञानस्य कत्यालम्बनमिति ? तत्र संवृतिज्ञानस्य सर्वे दश धर्मा आलम्बनम् । धर्मज्ञानस्य पञ्च । कामावचरानास्रवाश्चत्वारः कुशलं चासंस्कृतम् । अन्वयज्ञानस्य सप्त । रूपारूप्यावचरानास्रवाः षट् कुशलं चासंस्कृतम् । दुःखसमुदयज्ञानयोः कामरूपारूप्यावचराः षट् । निरोधज्ञानस्यैकः कुशलमेवासंस्कृतम् । मार्गज्ञानस्य द्वावनास्रवौ । परचित्तज्ञानस्य त्रयः कामरूपावचरानास्रवाः सम्प्रयुक्ताः । क्षयानुत्पादज्ञानयोः नव धर्मा आलम्बनमव्याकृतमसंस्कृतं मुक्त्वा ।

स्यादेकेन ज्ञानेन सर्वधर्मान् जानीयात् ? न स्यात् । अपि तु

**सांवृतं स्वकलापान्यदेकं विद्यादनात्मतः ॥ १८ ॥**

संवृतिज्ञानं स्वस्मात्कलापादन्यान् सर्वधर्माननात्मतो जानीयात्—सर्वधर्मा

---

वम्, तस्य नवानास्रवाणि ज्ञानान्यालम्बनम् । यत सास्रवं तस्य संवृतिज्ञानं परचित्तज्ञानं चालम्बनं सम्भवति । **क्षयानुत्पादज्ञाने** दुःखज्ञानादिस्वभावे इति **दशापि ज्ञानानि तयोरालम्बनानि भवन्ति** ॥ १७ ॥

**सम्प्रयुक्तविप्रयुक्तभेदादिति** । ' सम्प्रयुक्ताश्चित्तचैत्ताः" (अभि० को० २.३४) इति । विप्रयुक्ताः प्राप्त्यादयः । **कुशलाव्याकृतभेदादिति** । कुशलं प्रतिसंख्यानिरोधः, परमक्षेमत्वात् । अव्याकृतौ आकाशाप्रतिसंख्यानिरोधाविति । **कामावचरानास्रवाश्चत्वार** इति । सम्प्रयुक्तविप्रयुक्तभेदात् । **रूपारूप्यावचरानास्रवाः षडिति** । प्रत्येकं सम्प्रयुक्तविप्रयुक्तभेदात् । **कामरूपारूप्यावचरा अपि तत एव भेदात् षट्** । **द्वावनास्रवाविति** । तत एव । **कामरूपावचरानास्रवाः सम्प्रयुक्ता** इति । आरूप्यावचराणां चित्तचैत्तानां विप्रयुक्तासंस्कृतानां च सर्वेषां परचित्तज्ञानाविषयत्वात् । **अव्याकृतमसंस्कृतं मुक्त्वेति** । क्षयानुत्पादज्ञानयोश्चतुःसत्यालम्बनत्वात् अव्याकृतस्य चासंस्कृतस्य तद्व्यतिरिक्तत्वात् ।

**स्याद्—एकेन ज्ञानेन सर्वधर्मान् जानीयात् ? न स्यादिति** । कथं गम्यते ? सूत्रात् । "इहास्माकं भो गौतम ! उपस्थानशालायां सन्निषण्णानां सन्निपतितानाम् एवंरूपान्तराकथासमुदाहारोऽभूत् । श्रमणो गौतमः किलैवमाह—'नास्ति स कश्चिच्छ्रमणो वा ब्राह्मणो वा यः सकृत् सर्वं

अनात्मान इति । स्वभावस्तत्सहभुवश्च धर्मास्तस्य स्वकलापः । तेषामग्रहणं विषयिविषयभेदाद्, एकालम्बनत्वाद्[1], अतिसन्निकृष्टत्वाच्च[2] । तच्च कामावचरं श्रुतचिन्तामयम्, रूपावचरं श्रुतमयम्, भावनामयम्; तस्यैव व्यवच्छिन्नभूम्यालम्बनत्वात् । अन्यथा हि युगपत् सर्वतो वैराग्यं स्यात् ॥ १८ ॥

गतमेतत् ॥

इदं तु वक्तव्यम्—कः कतिभिर्ज्ञानैः समन्वागत इति ? पृथग्जनस्तावदेकेन समन्वागतः—संवृतिज्ञानेन । वीतरागस्तु परचित्तज्ञानेनापि ।

आर्यः पुनः—

---

जानीयात्, सर्वं पश्येत्' इति । तथ्यमिदं भो गौतम ? स्मरामि भवतोऽहमेवं वक्तुम् । अपि तु नास्ति स कश्चित् श्रमणो वा ब्राह्मणो वा यः सकृत् सर्वं ज्ञास्यति वा द्रक्ष्यति वा" (  ) इति ।

**विषयिविषयभेदादिति** विस्तरः । विषयिणो विषयस्य च भेदात् । यस्माद् यो विषयी, न स एव तस्य विषयो भवति ; स्वात्मनि वृत्तिविरोधात् । नहि सैवासिधारा तयैव छिद्यते । तस्मात् तेन संवृतिज्ञानेन स्वभावो न गृह्यते । नापि तेन चैत्ताः सहभुवो गृह्यन्ते । **एकालम्बनत्वात्** । यदेव हि तस्य संवृतिज्ञानस्यालम्बनं तदेव सम्प्रयुक्तानाम् । यदि च ते सम्प्रयुक्ता गृह्येरन् स्वभावालम्बनाः स्युः; संवृतिज्ञानेनैकालम्बनात् । न चैतद् युक्तम्; तस्मान्न ते तेन गृह्यन्ते । **अतिसन्निकृष्टत्वाच्च** । न तेन विप्रयुक्ताः सहभुवोऽपि गृह्यन्ते चक्षुषोऽञ्जनशलाकादर्शनवत् । **तच्चेति** । संवृतिज्ञानम् । **तस्य व्यवच्छिन्नभूम्यालम्बनत्वादिति** । यस्माद् भावनामयं रूपावचरं संवृतिज्ञानं व्यवच्छिन्नमेव भूमिमालम्बते कामधातुं वा, प्रथमं वा ध्यानम्, यावद्, भवाग्रं वा, किं कारणम् ? आनन्तर्यविमुक्तिमार्गाणामधरोत्तरभूम्यालम्बनत्वात् यथाक्रमम् । "शान्तादयुदाराद्याकारा उत्तराधरगोचराः" (अभि० को ६.५०) इति वचनात् । यदि च तत् सर्वभूम्यालम्बनं स्यात्, सर्वतो युगपद् वैराग्यं स्यात् । प्रयोगविशेषमार्गयोरपि यथासम्भवं काचिदेव भूमिरालम्बनम् । कथम् ? निर्वेधभागीयप्रयोगमार्गसंगृहीतस्य हि यस्य कामधातुरालम्बनम्, न तस्येतरौ धातू । यस्येतरौ धातू, न तस्य कामधातुरालम्बनम् । अशुभाप्रमाणाभिभ्वायतनादिविदूषणे विशेषमार्गसंगृहीतस्य कामधातुरेवालम्बनम्, नेतरौ धातू ॥ १८ ॥

---

१. ०लम्बनत्वादिति—का० । २. सन्निकृ० —का० ।

**एकज्ञानान्वितो रागी प्रथमेऽनास्रवक्षणे ।**

कामावीतरागो दुःखधर्मज्ञानक्षान्तावेकेनैव संवृतिज्ञानेन समन्वागतो भवति ।

**द्वितीये त्रिभिः,**

दुःखधर्मज्ञाने त्रिभिः संवृतिज्ञानधर्मज्ञानदुःखज्ञानैः ।

**ऊर्ध्वस्तु चतुर्ष्वेकैकवृद्धिमान् ॥ १९ ॥**

अतः परं चतुर्षु क्षणेषु एकैकज्ञानवृद्धिरस्य ज्ञातव्या—दुःखेऽन्वयज्ञानेऽन्वयज्ञानं वर्धते, समुदयनिरोधमार्गधर्मज्ञानेषु समुदयनिरोधमार्गज्ञानानि वर्धन्त इति । मार्गधर्मज्ञाने सप्तभिर्ज्ञानैः समन्वागतो भवति । वीतरागस्तु सर्वत्राधिकेन परचित्तज्ञानेन समन्वागतो वेदितव्यः ॥ १९ ॥

अथ कस्यामवस्थायां कति ज्ञानानि भाव्यन्ते ?

**यथोत्पन्नानि भाव्यन्ते क्षान्तिज्ञानानि दर्शने ।**

**अनागतानि,**

---

"**एकज्ञानान्वितो रागी प्रथमेऽनास्रवक्षणे**" इति । यस्मात् क्षान्तिज्ञानं न भवत्यन्येनापि अनास्रवेण ज्ञानेन समन्वागतः, न भवति रागीति ग्रहणम् । यस्माद्वीतरागः परचित्तज्ञानेनापि समन्वागतो भवति ।

"**द्वितीये त्रिभिः**" इति । तदेव दुःखे धर्मज्ञानं चोच्यते, दुःखज्ञानं चेति । नामभेदाद् द्वित्वोपचारः । **धर्मज्ञानेन, दुःखज्ञानेन, संवृतिज्ञानेन** चेति त्रिभिः समन्वागतः ।

**चतुर्ष्विति** । **दुःखेऽन्वयज्ञानक्षणे समुदय-मार्ग-निरोध-धर्मज्ञानक्षणेषु** च । क्षान्तिषु पूर्ववदेवासमन्वागमात् दुःखेऽन्वयज्ञानक्षणे हि अन्वयमेव वर्धते, न धर्मज्ञानम्; तेन समन्वागतपूर्वत्वात् । समुदयधर्मज्ञानक्षणे **समुदयज्ञानमेव वर्धते**, न धर्मान्वयज्ञाने, पूर्वमेव ताभ्यां समन्वागतत्वात् । एवं निरोध-मार्ग-धर्मज्ञानक्षणयो**र्निरोधमार्गज्ञाने एव** वर्धेते इति वक्तव्यम् । **वीतरागस्तु सर्वत्राधिकेन** परचित्तज्ञानेनेति दुःखे धर्मज्ञानक्षान्तौ, यावत्, मार्गे धर्मज्ञानक्षणे परचित्तज्ञानेनापि समन्वागतः, तैश्च यथोक्तैर्ज्ञानैरिति वेदितव्यम् । मार्गेऽन्वयज्ञाने तु तैरेव सप्तभिरवीतरागः समन्वागतः । वीतरागस्तु **अष्टाभिः—तैश्च** परचित्तज्ञानेन चेति । क्षयानुत्पादज्ञानाभ्यां त्वर्हन्नेव **समन्वागत** इति सुबोधान्न तदर्थं सूत्रितमित्यवगन्तव्यम् ॥ १९ ॥

"**यथोत्पन्नानि भाव्यन्ते**" इति । इह द्विविधा भावना अधिकृता—

दर्शनमार्गे यद्यदेवोत्पद्यते क्षान्तिर्ज्ञानं वा तज्जातीयमनागतं भावनां गच्छन्ति[1] तदाकाराः[2] चत्वारः ।

कस्माद्दर्शनमार्गे सभागज्ञानाकारभावनैव ? गोत्राणामप्रतिलब्धत्वात् ।

**तत्रैव सांवृतं चान्वयत्रये ॥ २० ॥**

---

प्रतिलम्भभावना, निषेवणभावना च । प्रतिलम्भभावना प्राप्तितः, निषेवण-भावना सम्मुखीभावतः ।

यथोत्पन्नानि भाव्यन्त इति । यानि यान्युत्पन्नानि तानि तानि भाव्यन्त इति । तद्यथा—दुःखधर्मज्ञानक्षान्तावुत्पन्नायां तज्जातीया क्षान्तिरेवानागता भाव्यते । **तदाकाराश्चत्वार** इति । क्षान्त्याकारा अनित्यादयश्चत्वारः; सभागत्वात् । नान्ये । एवं दुःखे धर्मज्ञाने उत्पन्ने तदेवानागतं भाव्यते । तदाकाराश्चत्वार एव भावनां गच्छन्ति । एवं दुःखान्वयज्ञानक्षान्त्यादिषु योज्यम् ।

**सभागज्ञानाकारभावनैवेति** । **कस्मात्** सभागज्ञानभावना सभागाकार-भावना च **दर्शनमार्ग एव** भवति, न भावनामार्गे इति ? क्षान्तीनामपरिप्रश्नः; भावनामार्गे तेषामभावात् । तेषामपि वा प्रश्नः कर्तव्यः, तेषामपि सभागभावनात् । न हि दुःखक्षान्तावुत्पन्नायां समुदयादिदुःखक्षान्त्याकारा भाव्यन्ते । उदाहरणमात्रार्थत्वात्तु ज्ञानपरिप्रश्नः, न क्षान्तिपरिप्रश्न इति । **गोत्राणामप्रतिलब्धत्वादिति** । सभागहेतूनामप्रतिलब्धत्वादित्यर्थः । कथं कृत्वा ? दुःखे धर्मज्ञानक्षान्तौ उत्पन्नायां तद्गोत्रम्, तदाकाराणां च चतुर्णां गोत्राणि लब्धानि भवन्ति, न दुःखधर्मज्ञानादीनाम् । किं पुनः कारणम्—अनित्यादीनामाकाराणाम् एकैकस्मिन्नाकारे सम्मुखीभूते परिशिष्टानामाकाराणां गोत्राणि प्रतिलभ्यन्ते ? यतस्ते भावनानां गोचराणि; तुल्यालम्बनतया सभागत्वात् सर्वेषां गोत्राणि प्रतिलब्धानि भवन्ति । एवं दुःखे धर्मज्ञान उत्पन्ने, यावत्, मार्गेऽन्वयज्ञानक्षान्तावुत्पन्नायां तद्गोत्राणि तदाकाराणि च चतुर्णां गोत्राणि लब्धानि भवन्ति—इति तदेव भावनां गच्छति, नान्यत् । भावनामार्गे तु पुनः सर्वेषां ज्ञानानां सभाग-विषभागानां तदाकाराणां च सम्मुखीभावात् सर्वेषां हेतावलब्धा भवन्तीति । तद्विशिष्टा ज्ञानाकारा भावनां गच्छन्त्यनागताः ।

**"सांवृतं चान्वयत्रये"** इति । अलब्धपूर्वम् ।

---

१. गच्छति—का० । २. तदाकारा एव—का० ।

तत्रैव दर्शनमार्गे संवृतिज्ञानं चापि भाव्यते त्रिषु दुःखसमुदयनिरोधान्वयज्ञानेषु, न धर्मज्ञानेषु; अकृत्स्नसत्याभिसमयात् ।। २० ।।

**अतोऽभिसमयान्त्याख्यम्,**

अत एव तदाभिसमयान्तिकं संवृतिज्ञानमाख्यायते; एकैकसत्याभिसमयान्ते भावनात् । कस्मान्न मार्गान्वयज्ञाने भावनां गच्छति ? मार्गस्य[1] पूर्वं लौकिकेन मार्गेणानभिसमितत्वात्, अकृत्स्नाभिसमयाच्च । कृत्स्नं हि दुःखं शक्यते परिज्ञातुम्, समुदयः प्रहातुम्, निरोधः साक्षात्कर्तुम्, न तु मार्गः शक्यते कृत्स्नो भावयितुमित्यभिसमयान्ताभावान्न तस्मिन्नाभिसमयान्तिकं भाव्यते ।

समुदयोऽपि तदा न सर्वः प्रहीणो भवतीति न स्यादाभिसमयान्तिकम् ? न; तत्सत्यदर्शनहेयः सर्वः प्रहीणो भवति । मार्गस्तद्दर्शनहेयप्रतिपक्षो न सर्वः शक्यते भावयितुम्; बहुगोत्रत्वात्—इत्यस्ति महान् विशेषः । दर्शनमार्गपरिवारत्वादित्यपरे । तदिदं साध्यत्वादज्ञापकम् ।

---

**न धर्मज्ञानेषु अकृत्स्नसत्याभिसमयादिति** । नहि तदानीं रूपारूप्यावचरं दुःखं परिज्ञातम्, समुदयः परिहीणः, तन्निरोधः साक्षात्कृत इति ।। २० ।।

**मार्गस्य पूर्वं लौकिकेन मार्गेणानभिसमितत्वादिति** । लौकिकमार्गेण पूर्वमनादिगतिसंसारे दुःखसमुदयनिरोधा अभिसमिताः, न तु संवृतिज्ञानेन कदाचित् मार्गो मार्गादिभिराकारैरभिसमितः । तस्मात् त्रयाणामेकैकस्य सत्यस्याभिसमयान्ते भावनां गच्छति । न मार्गान्वयज्ञाने । **न तु मार्गः शक्यते कृत्स्नो भावयितुमिति** सम्मुखीकर्तुमित्यर्थः ।

**समुदयोऽपि तदा न सर्वः प्रहीण** इति । निरोधमार्गदर्शनभावनाप्रहातव्यः । दुःखं पुनः सर्वं त्रैधातुकं परिज्ञातम्; तस्य परिज्ञेयत्वात्—इत्यतः समुदयमेव प्रतिचोद्यते । **तत्सत्यदर्शनहेय** इति । समुदयसत्यदर्शनहेय इत्यर्थः । **बहुगोत्रत्वादिति** । [illegible] गोत्रम् । तानि बहूनि गोत्राण्यस्येति बहुगोत्रो मार्गः । श्रावकगोत्रात् प्रत्येकबुद्धगोत्रमन्यत् । तथा बुद्धगोत्रम् श्रावकगोत्रमन्योन्यं भिन्नम्; मृद्वधिमात्रादिभेदात् । तेषां कश्चिदेव दर्शनहेयप्रतिपक्षो भाव्यते । सम्मुखीक्रियत इत्यर्थः ।

न मार्गः शक्यते कृत्स्नो भावयितुम्; **दर्शनमार्गपरिवारत्वादिति** । **दर्शनमार्गस्य परिवारः संवृतिज्ञानम्** । अतः सत्यत्रयान्ते एव दर्शनमार्गो

---

१. मार्गसत्यस्य—का० ।

किं पुनस्तदाभिसमयान्तिकं संवृतिज्ञानं कदाचित् सम्मुखीक्रियते ? न कदाचित् । एकान्तेन हि

**तदानुत्पत्तिधर्मकम् ।**

कथं पुनस्तद्भावितं भवति ? अलब्धलाभात् । कथमिदानीं तत्प्रतिलब्धं यदि नैव सम्मुखीकर्तुं शक्यते ? प्राप्तितः । यस्माल्लब्धं तस्माल्लब्धमित्यपूर्वैषा निर्देशजातिः । तस्मान्नैव भावना सिध्यति ।

एवं तु सिध्यति, यदाहुः **पूर्वाचार्याः** ।

कथं च **पूर्वाचार्या** आहुः ? लोकोत्तरमार्गसामर्थ्यात् संवृतिज्ञान भाव्यते यद्वयु्त्थित' सत्यालम्बनं विशिष्टतरं लौकिकं ज्ञानं सम्मुखीकरोति । एष एव च तस्य लाभो यस्तत्समुखीभावसमर्थाश्रयलाभः[1] । गोत्रेऽभिलब्धे[2] लब्धं गौत्रिकं भवति ।

'एवं तु नेच्छामि' इति[3] **वैभाषिकाः** ।

कतिभूमिकं पुनस्तत्संवृतिज्ञानं भाव्यते ? दर्शनमार्गस्य

**स्वाधोभूमि,**

यद्भूमिको दर्शनमार्गो भवति तद्भूमिकं चाधरभूमिकं च संवृतिज्ञानं भाव्यते । अनागम्यभूमिकश्चेद्भवति द्विभूमिकं भाव्यते—अनागम्यभूमिकम्,

---

भाव्यते, न मार्गसत्यान्ते; तस्य भावनामार्गत्वात् ।

**साध्यत्वादज्ञापकमिति** । साध्यमिदं दर्शमार्गपरिवार एव । न भावनामार्गपरिवारोऽपीति । वयं हि 'भावनामार्गपरिवारोऽपि तत्' इति ब्रूमः ।

**सत्यालम्बनं विशिष्टतरमिति** । दर्शनावस्थायां यल्लौकिकं पूर्वमासीत्, ततो विशिष्टमेव च लौकिकमित्यभिप्रायः । **यस्तत्सम्मुखीभावसमर्थाश्रयलाभ इति** । तस्य सम्मुखीज्ञानस्य सम्मुखीभावे समर्थाश्रयस्य यो लाभः एष एव तस्य लाभः, नार्थान्तरभूत इति । **गोत्रेऽभिलब्धे लब्धं गौत्रिकमिति** । गोत्रं तदुत्पादनसमर्थो हेतुः, तत्र भवं गौत्रिकम्, संवृतिज्ञानम् । एतदुक्तं भवति—तत्सम्मुखीभावसमर्थाश्रयलाभे तदपि तेनाश्रयेणोत्पद्यमानं भवति । अथ कस्माद् **एवं नेच्छामीति वैभाषिकाः** । दर्शनमार्गलभ्यं तत् । तस्य कथं भावनामार्गे सम्मुखीभावो भविष्यतीति । दर्शनमार्गे चोत्पत्त्यनवकाशोऽस्यास्ति तदनुत्पत्तिधर्मकमिति वर्ण्यन्ते ।

---

१. यस्तत्०—का० । २. गोत्रे हि लब्धे—का० । ३. नेच्छन्ति—का० ।

कामावचरं च। एवं यावच्चतुर्थध्यानभूमिके दर्शनमार्गे सप्तभूमिकं संवृतिज्ञानं भाव्यते।

तत्र पुनः कति स्मृत्युपस्थानानि ?

**निरोधेऽन्त्यम्,**

निरोधेऽभिसमिते यत् संवृतिज्ञानं तदन्त्यं स्मृत्युपस्थानं धर्मस्मृत्युपस्थानम्। एकस्य परिसंख्यानात्सिद्धं भवति शेषं चत्वारि स्मृत्युपस्थानानीति। तच्चैतदाभिसमयान्तिकं संवृतिज्ञानं

**स्वसत्याकारम्,**

यत्सत्याभिसमयाल्लभ्यते तत्सत्याकारमेव। तदाकारवचनादालम्बनस्य तदेव सत्यमित्युक्तं भवति। दर्शनमार्गलभ्यत्वाच्च तत्।

**यात्निकम्** ॥ २१ ॥

प्रायोगिकमित्यर्थः। सपरिवारग्रहणात् कामरूपावचाराणि चतुष्पञ्चस्कन्धस्वभावानि ॥ २१ ॥

---

**एवं यावच्चतुर्थध्यानभूमिक** इति। प्रथमध्यानभूमिकश्चेद् भवति, त्रिभूमिकं भावयेत्— प्रथमध्यानभूमिकम्, अनागम्यभूमिकम्, कामावचरं च। ध्यानानन्तरभूमिकश्चेत्, चतुर्भूमिकं भावयेत्— ध्यानान्तरभूमिकम्, प्रथमध्यानभूमिकादीनि च पूर्वोक्तानि। एवं द्वितीयध्यानभूमिकश्चेत्, पञ्चभूमिकम्— द्वितीयध्यानभूमिकम्, यावत् कामावचरम्। तृतीयध्यानभूमिकश्चेत्, षड्भूमिकम— तृतीयध्यानभूमिकम्, यावत् कामावचरम्। चतुर्थध्यानभूमिकश्चेद् भवति, सप्तभूमिकं भावयेत्— चतुर्थध्यानभूमिकम्, यावत् कामावचरं चेति।

**एकस्य परिसंख्यानात् सिद्धं भवति शेषं चत्वारीति।** निरोधेऽन्त्यमेव, **अन्त्यमेव च** निरोध इत्युभयावधारणाच्छेषं चतुःस्मृत्युपस्थानं सिद्धं भवति। दुःखेऽभिसमिते यत् संवृतिज्ञानं भाव्यते, तच्चत्वारि स्मृत्युपस्थानानि; दुःखस्य कायादिस्वभावत्वात्। एवं समुदयेऽपि वक्तव्यम्। **तत्सत्याकारमेवेति।** दुःखेऽभिसमिते यत् संवृतिज्ञानं भाव्यते तत् प्रत्येकमनित्यदुःखशून्यतात्माकारम्। एवं समुदये, निरोधे च वक्तव्यम्। **आलम्बनस्य तदेवेति।** तस्याकारस्य तदालम्बनत्वात्।

**प्रायोगिकमिति।** नोपपत्तिलभ्यः। **चतुःपञ्चस्कन्धस्वभावानीति।**

**षोडशे षट् सरागस्य,**

'भाव्यन्ते' इति वर्तते। अवीतरागस्य षोडशे मार्गान्वयज्ञानक्षणे द्वे ज्ञाने प्रत्युत्पन्ने—मार्गज्ञानमार्गान्वयज्ञाने। अनागतानि[1] षट् भाव्यन्ते—धर्मान्वयदुःखसमुदयनिरोधमार्गज्ञानानि।

**वीतरागस्य सप्त तु।**

वीतरागस्य परचित्तज्ञानं सप्तमं भाव्यते।

**सरागभावना मार्गे तदूर्ध्वं सप्तभावना॥ २२॥**

षोडशात् क्षणादूर्ध्वं भावनामार्गे यावन्न वीतरागो भवति तावत् सर्वेषु प्रयोगानन्तर्यविमुक्तिविशेषमार्गेषु सप्त ज्ञानानि भाव्यन्ते—धर्मान्वयदुःखसमुदयनिरोधमार्गसंवृतिज्ञानानि। लौकिकश्चेत् भावनामार्गः, संवृतिज्ञानं प्रत्युत्पन्नम्। लोकोत्तरश्चेत्, चतुर्णां धर्मज्ञानानामन्यतमत्॥ २२॥

---

कामावचरम् अनुपरिवर्तकरूपाभावाच्चतुःस्कन्धस्वभावम्। वेदना-संज्ञा-संस्कार-विज्ञानस्कन्धस्वभावमित्यर्थः। ऊर्ध्वभूमिकानि तु पञ्च-स्वभावानि—ध्यान-संवर-लक्षण-रूप-स्कन्धस्वभावत्वात्॥ २१॥

**द्वे ज्ञाने प्रत्युत्पन्ने** इति। अन्वयज्ञानम्, मार्गज्ञानं च; मार्गान्वय-ज्ञानस्य तदुभयस्वभावत्वात्। **अनागतानि षडिति।** **धर्मज्ञानादीनि।** न संवृतिज्ञानं भाव्यते; लब्धपूर्वत्वात्। वक्ष्यति हि—"लब्धपूर्वं न भाव्यते" (अभि० को० ७.३२) इति। न परचित्तज्ञानम्, अवीतरागत्वात्।

**"तदूर्ध्वं सप्तभावना"** इति। एकप्रकारप्रहाणे, यावत्, अष्टप्रकार-प्रहाणे।

**यावन्न वीतरागो भवतीति।** यावन्न प्रहीणनवप्रकारो भवति। अत्रान्तरे **प्रयोगानन्तर्यविमुक्तिविशेषमार्गेषु** भाव्यमानेषु **सप्त ज्ञानानि भाव्यन्ते।** धर्मज्ञानादीनि परचित्तज्ञानवर्जितानि भाव्यन्ते। **लौकिकश्चेत्।** यदि शान्ताद्युदाराद्याकारो भावनामार्गः। **संवृतिज्ञानं प्रत्युत्पन्नम्।** **चतुर्णां धर्मज्ञानानामिति।** दुःखसमुदय-निरोध-मार्ग-धर्मज्ञानानामन्यतमत्। अन्वय-ज्ञानानां कामधात्वप्रतिपक्षत्वन्नान्वयज्ञानमन्यतमत्॥ २२॥

---

१. पुरागतानि—का०।

**सप्तभूमिजयाऽभिज्ञाकोप्याप्त्याकीर्णभाविते ।**
**आनन्तर्यपथेषूर्ध्वं मुक्तिमार्गाष्टकेऽपि च ॥ २३ ॥**

'सप्त ज्ञानानि भाव्यते' इति वर्तते । सप्त भूमयः, चत्वारि ध्यानानि, त्रयश्चारूप्याः, तासां जयः=वैराग्यम्, तस्मिन् सप्तभूमिके वैराग्ये पञ्चसु चाभिज्ञासु अकोप्यप्रतिवेधे च व्यवकीर्णभाविते च ध्याने शैक्षस्य यावन्तः आनन्तर्यमार्गास्तेष्वपि सर्वेषु सप्त ज्ञानानि भाव्यन्ते, तान्येव । लौकिकश्चेद् भावनामार्गः संवृतिज्ञानं प्रत्युत्पन्नम् । लोकोत्तरश्चेत्, चतुर्णामन्वयज्ञानानां द्वयोश्च धर्मज्ञानयोरन्यतमत् । अकोप्यप्रतिवेधे तु संवृतिज्ञानं न भाव्यते; भवाग्राप्रतिपक्षत्वात् । तत्र क्षयज्ञानं सप्तमं वेदितव्यम् । सप्तभूमिवैराग्यादपि चोर्ध्वं भवाग्रवैराग्ये विमुक्तिमार्गेष्वष्टासु सप्तैव ज्ञानानि भाव्यन्ते धर्मान्वयदुःखसमुदयनिरोधमार्गपरचित्तज्ञानानि । संवृतिज्ञानं न भाव्यते; भवाग्राप्रतिपक्षत्वात् । प्रत्युत्पन्नं तु चतुर्णामन्वयज्ञानानां द्वयोश्च धर्मज्ञानयोरन्यतमत् ॥ २३ ॥

**शैक्षोत्तापनमुक्तौ वा षट्सप्तज्ञानभावना ।**

शैक्षस्येन्द्रियोत्तापनायां विमुक्तमार्गे सरागस्य षण्णां भावना धर्मान्वयदुःखसमुदयनिरोधमार्गज्ञानानाम् । वीतरागस्य सप्तानाम्, परचित्तज्ञानं प्रक्षिप्य ।

---

**पञ्चसु चाभिज्ञास्विति** । आस्रवक्षयाभिज्ञानमपास्य । **चतुर्णामन्वयज्ञानानामिति** । दुःख-समुदय-निरोध-मार्गज्ञानानाम् । **द्वयोश्च धर्मज्ञानयोरिति** । निरोध-मार्गालम्बनयोः; त्रिधातुप्रतिपक्षत्वयोगात् । **संवृतिज्ञानं न भाव्यते, भवाग्रप्रतिपक्षत्वादिति** । सप्तभूमिवैराग्ये लोकोत्तरेऽपि भाव्यमाने संवृतिज्ञानं न भाव्यते । संवृतिज्ञानमपि हि तस्य क्लेशप्रकारस्य प्रतिपक्षो भवति । न केवलं लोकोत्तरमिति । संवृतिज्ञानमपि तत्र भाव्यते तज्जातीयम् । **अकोप्यप्रतिवेधे तु** न तथा प्रतिपक्षरूपं भूतं संवृतिज्ञानमस्ति । अतोऽत्र न भाव्यते । **तत्र क्षयज्ञानं सप्तममिति** । आनन्तर्यमार्गस्थितत्वात् क्षयज्ञानं तत्र भाव्यते, नानुत्पादज्ञानम् । न ह्यानन्तर्यमार्गस्थितोऽकोप्यधर्मा भवति, अकोप्यधर्मणश्चानुत्पादज्ञानं भाव्यते इति । **भवाग्रवैराग्ये विमुक्तिमार्गेष्वष्टासु सप्तैव ज्ञानानि भाव्यन्त** इति । परचित्तज्ञानं कथं भाव्यते ? आनन्तर्यमार्गे प्रतिषिद्धं परचित्तज्ञानम्, विमुक्तिमार्गे । अथ एकप्रकारे प्रहीणे, यावत्, अष्टप्रकारे प्रहीणे पूर्वपरचित्तज्ञानविशिष्टं परचित्तज्ञानं भाव्यते । यत् स एवंविध आयपुद्गलस्ततो मार्गाद् व्युत्थितः सम्मुखीकुर्यात् । सन्तानविशेषाद्धि परचित्तज्ञानविशेष इष्यते ॥ २३ ॥

संवृतिज्ञानस्याप्युभयोरिति **केचित्**। तत्र मतविकल्पज्ञापनार्थो वाशब्दः। प्रयोगमार्गे तु तयोः संवृतिज्ञानस्यापि भावना।

**आनन्तर्यपथे षण्णाम्,**

वीतरागस्यावीतरागस्य वा शैक्षस्येन्द्रियोत्तापनायामान्तर्यमार्गे षण्णां भावना पूर्ववत्। न संवृतिज्ञानस्य, दर्शनमार्गसादृश्यात्। न परचित्तज्ञानस्य, सर्वानन्तर्यमार्गप्रतिषिद्धत्वात्।

किमर्थं प्रतिषिध्यते ? अप्रतिपक्षत्वात्।

**भवाग्रविजये तथा ॥ २४ ॥**

भवाग्रवैराग्येऽप्यानन्तर्यमार्गेषु षण्णां भावना तथैव ॥ २४ ॥

**नवानां तु क्षयज्ञाने,**

भवाग्रवैराग्ये नवमो विमुक्तिमार्गः क्षयज्ञानम्। तत्र नवानां ज्ञानानां भावना; अन्यत्रानुत्पादज्ञानात्।

---

**उभयोरपि** सरागवीतरागयोः विमुक्तिमार्गे **भावनेति**। प्रयोगमार्गे तु **तयोरिति**। तयोरेव सराग-वीतरागयोः। **संवृतिज्ञानस्यापि** तत्र तदभिसमयान्तिकत्वाद् भाव्यत इत्येके। न चाभिसमयोऽस्ति, दर्शनमार्गसादृश्यं चेत्यपरे। इत्येवं विवादः।

**षण्णां भावना पूर्ववदिति**। धर्मान्वय-दुःख-समुदय-निरोध-मार्गज्ञानानाम्।

**न संवृतिज्ञानस्य, दर्शनमार्गसादृश्यादिति**। किमत्र दर्शनमार्गेण सादृश्यम् ? फलप्राप्तिः। यथा दर्शनमार्गेण स्रोतापत्तिफलं वा, सकृदागाम्यनागामिफलं वा प्राप्यते; एवमनेनाप्यानन्तर्यमार्गेण शैक्षस्य शैक्षेन्द्रियोत्तापनायां तीक्ष्णेन्द्रियसंगृहीतानि संस्कृतानि स्रोतापत्तिफलादीनि प्राप्यन्ते। दर्शनमार्गे चानन्तर्यमार्गावस्थायां न संवृतिज्ञानभावनास्ति। एवमिहापि। इत्येवं दर्शनमार्गसादृश्यादानन्तर्यमार्गे न संवृतिज्ञानस्य भावना।

**तथैवेति**। धर्मान्वय-दुःख-समुदय-निरोधमार्गज्ञानानाम्। अत्रापि संवृतिज्ञानं न भाव्यते; भवाग्राप्रतिपक्षत्वात्। न परचित्तज्ञानम्; सर्वानन्तर्यमार्गे प्रतिषेधत्वात् ॥ २४ ॥

**अकोप्यस्य दशभावना ।**

यस्त्वकोप्यधर्मा भवति, तस्य दशानां ज्ञानानां भावना, अनुत्पादज्ञानलाभात् ।

**तत्सञ्चारेऽन्त्यमुक्तौ च,**

योऽप्यकोप्यतां सञ्चरति, तस्याप्यन्त्ये विमुक्तिमार्गे दशानां भावना ।

**प्रोक्तशेषेऽष्टभावना ॥ २५ ॥**

किं पुनः शेषम् ? कामवैराग्ये नवमो विमुक्तिमार्गः सप्तभूमिवैराग्याभिज्ञाव्यवकीर्णभावितेषु विमुक्तिमार्गः । अकोप्यप्रतिवेधोऽष्टौ विमुक्तमार्गाः । सर्वे च वीतरागस्य प्रयोगविशेषमार्गाः ।

तेषु सर्वेष्वष्टौ ज्ञानानि भाव्यन्ते, अनागतभावनया क्षयानुत्पादज्ञाने हित्वा ।

**शैक्षस्यैवम् ।**

अशैक्षस्य पुनरभिज्ञादिप्रयोगविमुक्तविशेषमार्गेषु नव ज्ञानानि दश वा ।

---

**किं पुनः शेषमिति** विस्तरः । कथं **कामवैराग्ये नवमो विमुक्तिमार्गः शेषः** ? "सरागभावनामार्गे तदूर्ध्वं सप्तभावना" (अभि० को० ७.२२) इति वचनात् । **सप्तभूमिवैराग्याभिज्ञाव्यवकीर्णभावितेषु विमुक्तिमार्गः शेषः ।**

"सप्तभूमिजयाभिज्ञाकोप्याप्त्याकीर्णभाविते ।

आनन्तर्यपथेषु" ( अभि० को० ७.२३) इति वचनात् । तथा योऽकोप्यतां सञ्चरति, तस्याप्यन्ते विमुक्तिमार्गे दशानां भावनेति वचनात् । **अष्टौ** विमुक्तिमार्गाः शेषाः भवन्ति, **सर्वे च वीतरागस्यानागामिनः प्रयोगविशेषमार्गाः** शेषाः; तेषां भावनायामवचनात् ।

**शैक्षस्यैवमिति** । यदपदिष्टं "प्रोक्तशेषेऽष्टभावना" ( अभि० को० ७.२५) इति ।

कथं पुनरेवमविशेषिते विशेषप्रतिपत्तिर्लभ्यते ? अशैक्षस्यावश्यं नव-दशज्ञानभावनायोगात् । अत एवाह—**अशैक्षस्य पुनरभिज्ञादीति** ।

अभिज्ञाव्यवकीर्णभावितानन्तर्यविमुक्तिमार्गेषु तु अष्टौ नव च[1]। द्वयोस्त्वभिज्ञाविमुक्तमार्गयोरव्याकृतत्वान्न किञ्चिदनागतं भाव्यते।

पृथग्जनस्य तु कामत्रिध्यानवैराग्यान्त्यविमुक्तिमार्गे[2] ध्यानभूमिकेषु च प्रयोगाभिज्ञात्रयविमुक्तिमार्गाप्रमाणादिगुणाभिनिर्हारेषु संवृतिज्ञानमनागतं भाव्यते। परचित्तज्ञानं चान्यत्र निर्वेधभागीयेभ्यः।

---

आदिशब्देन व्यवकीर्णभावनाध्यानादिग्रहणम्। अभिज्ञाभिनीहारे व्यवकीर्णभावनायां च ये प्रयोगविमुक्तिविशेषमार्गाः, तेषु यदि समयविमुक्तः, **नव ज्ञानानि भाव्यन्ते**। अनुत्पादज्ञानं हित्वा। यद्यकोप्यधर्मा **दश** तदेव प्रक्षिप्य। **अष्टौ नव चेति**। समयविमुक्तस्याष्टौ, अकाप्यधर्मणो नव, परचित्तज्ञानं हित्वा; तस्यानन्तर्यमार्गेषु प्रतिषेधात्। **द्वयोस्त्वभिज्ञाविमुक्तिमार्गयो**रिति। दिव्यश्रोत्रदिव्यचक्षुरभिज्ञाविमुक्तिमार्गयोः। "अव्याकृते श्रोत्रचक्षुरभिज्ञे" (अभि० को० ७.५०) इति वचनात् तद्विमुक्तिमार्गौ अव्याकृतौ। न चाव्याकृतस्य धर्मस्य अनागतभावनास्ति।

**पृथग्जनस्य तु कामत्रिध्यानवैराग्य** इति। चतुर्थध्यानाग्रहणम्। याऽन्त्यो विमुक्तिमार्ग. तत्र मौलाकाशानन्त्यायतनप्रतिलम्भः। न चारूप्यधातुसंगृहीतं परचित्तज्ञानमस्ति; रूपातीतार्थाभिनिष्पाद्यत्वात्। **प्रयोगाभिज्ञात्रयविमुक्तिमार्गाप्रमाणादिगुणाभिनिर्हारेषु**[3] इति। प्रयोगमार्गाश्च अभिज्ञात्रयविमुक्तिमार्गाश्चाप्रमाणादिगुणाभिनिर्हाराश्चेति विग्रहः। आदिशब्देन अप्रमाणादीनां गुणानामभिनिर्हारा इति। ध्यानभूमिकग्रहणं सामन्तकनिरासार्थम्। तत्र हि परचित्तज्ञानं नास्ति। अभिज्ञात्रयम्—ऋद्धिविषयाभिज्ञा, पूर्वनिवासानुस्मृत्यभिज्ञा, चेतःपर्यायाभिज्ञा चेति। तेषु च कामत्रिध्यानवैराग्यान्तविमुक्तिमार्गेषु ध्यानभूमिकेषु चाभिज्ञात्रयविमक्तिमार्गेषु। अप्रमाणविमोक्षाभिभ्वायतन-कृत्स्नायतनादिगुणाभिनिर्हारेषु च ध्यानभूमिकेष्वेव प्रयोगविमुक्तिविशेषमार्गेषु **संवृतिज्ञानमनागतं भाव्यते**। यत् सत्संगृहीतं **परचित्तज्ञानं च** विशिष्टमेव भाव्यते। यत् तद्गुणविशेषलाभी सम्मुखीकुर्यात्। **अन्यत्र निर्वेधभागीयेभ्यः**। ऊष्मगतादिभ्यः।

---

१. वा—का०।

२. ०विमुक्तिमार्गेषु—का०।

३. ०भिज्ञात्रयो०—जा०।

तेषु हि परचित्तज्ञानं न भाव्यते; दर्शनमार्गपरिवारत्वात् । अन्यत्रापूर्वमार्गलाभे संवृतिज्ञानमेवानागतं भाव्यते ।। २५ ।।

अथ कस्मिन् मार्गे कतिभूमिकं ज्ञानं भाव्यते ? संवृतिज्ञान तावद् यद्भूमिको मार्गो यां च भूमिं[1] प्रथमतो[1] लभते तद्भूमिकमनागतं भाव्यते । अनास्रवं तु न केवलं यद्भूमिको मार्गः, किं तर्हि ?

---

**तेषु हि** निर्वेधभागीयेषु **परचित्तज्ञानं न भाव्यते**। किं कारणम् ? इत्याह—**दर्शनमार्गपरिवारत्वात्** इति । यथा दर्शनमार्गे परचित्तज्ञानं न भाव्यते, तथा तत्परिवारेऽपि न भाव्यते इत्यभिप्रायः । **अन्यत्रेति** विस्तरः । पृथग्जनस्यैवान्यत्रा**पूर्वमार्गलाभे** कामत्रिध्यानवैराग्येऽन्त्यविमुक्तिमार्गान् हित्वा यः प्रयोगानन्तर्यविमुक्तिमार्गलाभः तस्मिन् अन्यत्रापूर्वमार्गलाभे । **संवृतिज्ञानमेवानागतं भाव्यते**, न परचित्तज्ञानम् । तथाभिज्ञात्रयाप्रमाणादिगुणाभिनिर्हारेषु य आनन्तर्यमार्गलाभः, तस्मिन् चान्यत्रापूर्वमार्गलाभे संवृतिज्ञानमेवानागतं भाव्यते । प्रयोगमार्गेषु न परचित्तज्ञानम्; तदप्राप्तिपक्षत्वात् ।। २५ ।।

**अथ कस्मिन् मार्गे** इति ? लौकिके, लोकोत्तरे च । **यद्भूमिको मार्ग** इति । अनागम्यादिकः, सास्रवोऽनास्रवश्च । **यां च भूमिं प्रथमतो लभत** इति । वैराग्यतः प्रथमं ध्यानम्, यावत् भवाग्रम् । तद्भूमिकमित्यर्थः । कथं कृत्वा ? यद्यनागम्यभूमिसन्निश्रयेण हि लौकिकेन मार्गेण कामधातुवैराग्यात् प्रथम ध्यानं लभते अनागम्यभूमिकं सामन्तकस्वभावं प्रथमध्यानभूमिकं च मौलस्वभावम् । नवमे विमुक्तिमार्गे संवृतिज्ञानं भाव्यते । एवं द्वितीयध्यानसामन्तकसन्निश्रयेण प्रथमध्यानवैराग्यात् द्वितीयं ध्यानं लभते । तथैव द्वितीयध्यानसामन्तकसंगृहीतं मौलद्वितीयध्यानसंगृहीतं च भाव्यते । एवं यावत् यदि नैवसंज्ञानासंज्ञायतनसामन्तकसन्निश्रयेणाकिञ्चन्यायतनवैराग्यात भवाग्रं लभते इति विस्तरेण योज्यम् ।

यदाप्यनास्रवानागम्यभूमिसन्निश्रयेण कामधातुवैराग्यात् प्रथमध्यानं लभते, तदापि तथैव तत्संवृतिज्ञानं भाव्यते । यदापि मौलप्रथमध्यानभूमिकसन्निश्रयेण प्रथमध्यानवैराग्यानास्रवं प्रथमं ध्यानं लभते ; तदापि प्रथमध्यानप्रथमप्रकारप्रतिपक्षभूतम्, यावत्, नवमप्रतिपक्षभूतं द्वितीयध्यानसामन्तकसंगृहीतं संवृतिज्ञानं लभते । सा हि प्रथमतो भूमिस्तदा लभ्यते ।

---

१-१. प्रथमतो भूमिं—का० ।

**यद्वैराग्याय यल्लाभस्तत्र चाधश्च भाव्यते ।**

यद्भूमिवैराग्यायापि हि द्विविधोऽपि मार्गो भवति प्रयोगमार्गादिः यां च भूमिं लभते वैराग्यतस्तद्भूमिकान्यधोभूमिकानि वानास्रवाणि[1] ज्ञानानि भावनां गच्छन्ति ।

**सास्रवाश्च क्षयज्ञाने,**

क्षयज्ञाने तु सर्वभूमिकाः सास्रवा अपि गुणाः क्षयज्ञानलाभिका

---

नवमे तु विमुक्तिमार्गे मौलद्वितीयसंगृहीतमपि **संवृतिज्ञानमनागतं भाव्यते** । एवमनास्रवध्यानान्तरभूमिसन्निश्रयेण यावत् अनास्रवाकिञ्चन्यायतनभूमिसन्निश्रयेण संवृतिज्ञानभावना योज्या ।

"**यद्वैराग्याय**" इति । यस्य भूमेर्वैराग्याय । **यल्लाभः** यस्य भूमेर्लाभो यल्लाभः । **तत्र** उभयत्र । **अधः च** ततो **भाव्यते** अनास्रवज्ञानम् । कथमिति ? वृत्त्या व्याचष्टे—**यद्भूमिवैराग्यायापि हि** न केवलं यद्भूमिक इत्यपिशब्दार्थः ।

**द्विविधोऽपि मार्गो भवतीति** । लौकिकः, लोकोत्तरश्च । **प्रयोगमार्गादिः** । आदि-शब्देनानन्तर्यविमुक्तिविशेषमार्गग्रहणम् । **यां च भूमिं लभते वैराग्यत** इति । उपरिभूमिकम् । **तद्भूमिकान्यधोभूमिकानि वानास्रवाणि ज्ञानानि भावनां गच्छन्ति** । तद्यथा—द्वितीयमनास्रवं ध्यानं निःसृत्य तृतीयध्यानवैराग्यं करोति । यद्भूमिको मार्गो द्वितीयध्यानभूमिकस्तद्भूमिकमनास्रवं ज्ञानं भावनां गच्छति । यस्याश्च भूमेर्वैराग्यं करोति तृतीयाया भूमेस्तद्भूमिकं तृतीयध्यानभूमिकं नवमे विमुक्तिमार्गेऽनास्रवं ज्ञानं भावनां गच्छति । अधोभूमिकं च प्रथमध्यानभूमिकं अनागम्यभूमिकं वानास्रवं ज्ञानं भावनां गच्छति । अधोभूमिकमपि हि तत्प्रयोगमार्गादिकं सम्भवामि तज्जातीयमिति भावनां गच्छति । अथ तु तृतीयध्यानसामन्तकं निःसृत्य द्वितीयध्यानवैराग्यं करोति, तत्राष्टास्वानन्तर्यमार्गेषु विमुक्तिमार्गेषु च तस्य सामन्तकस्य सास्रवत्वाद् तद्भूमिकमनास्रवं ज्ञानं न भावनां गच्छति; अभावात् । अधोभूमिकं तु तज्जातीयं द्वितीयध्यानभूमिकं ध्यानान्तरभूमिकं प्रथमध्यानभूमिकमनागम्यभूमिकं च तज्जातीयमनास्रवं ज्ञानं भावनां गच्छति । एवमन्यत्रापि योज्यम् । एषा दिगिति ।

"**सास्रवाश्च क्षयज्ञाने**" इति । अनास्रवाश्चेति च-शब्दः । यान् गुणान् अर्हद्भूत्वा सम्मुखीकुर्यात्, ते सास्रवास्तस्यामवस्थायां भावनां गच्छन्ति ।

---

१. चाना०—का० ।

भावनां गच्छन्ति, अशुभानापानस्मृतिस्मृत्युपस्थानाप्रमाणविमोक्षादयः रज्जुच्छेदादुच्छ्वसन्तीव पेडासाधर्म्येण, स्वचित्ताधिराज्यप्राप्तस्य प्राप्तिभिः सर्वकुशलधर्मप्रत्युद्गमनादाधिराज्ये[1] प्राप्तौ[1] प्राभृतेन विषयप्रत्युद्गमनवत्। यत् किञ्चिल्लभ्यते तत् सर्वं भाव्यते। यदपूर्वं लभ्यते तद् भाव्यते।

**लब्धपूर्वं न भाव्यते ॥ २६ ॥**

यद्विहीनं पुनर्लभ्यते न तद् भाव्यते, भावितोत्सृष्टत्वात् ॥ २६ ॥

---

**अप्रमाणविमोक्षादय** इति। आदिशब्देन अभिभ्वायतन-कृत्स्नायतनादयो गृह्यन्ते। **उच्छ्वसन्तीव पेडासाधर्म्येणे**ति। या पेडा रज्ज्वा निपीड्य बद्धा सा रज्जूच्छेदादुच्छ्वसन्तीव पेडोच्यते। उच्छ्वसतीव प्रतिरूपकशब्दाभिधानात्। तस्य रज्जूच्छेदाद् उच्छ्वसन्तीव पेडायाः साधर्म्येण। यथाऽसौ रज्ज्वा निपीड्य बद्धा पेडा रज्जूच्छेदादुच्छ्वसन्तीव, एवं यथोक्ता अशुभादयो गुणाः वज्रोपमेन समाधिना क्लेशप्राप्तिरज्जूच्छेदादशैक्षसन्ताने वर्त्स्यन्त उच्छ्वसन्तीव। उच्छ्वासस्य प्राणिधर्मत्वादौपमिकम्। कस्माद्? इत्याह—**स्वचित्ताधिराज्यप्राप्तस्ये**ति सर्वम्। सर्वेषां राज्ञामधिको राजा अधिराजः, तद्भावः आधिराज्यम्। स्वचित्ते आधिराज्यं क्लेशपराधीनताविगमात्। स्वचित्तैश्वर्यमित्यर्थः। तत्प्राप्तस्यार्हतः **प्राप्तिभिः** प्राभृतस्थानीयाभिः **सर्वेषां कुशलानां** धर्माणां **प्रत्युद्गमनात्ते** गुणाः भावनां गच्छन्ति। **आधिराज्ये प्राप्तौ** कस्यचिद् राजाधिराजस्य **प्राभृतेन** वस्त्रादिना **विषयाणां** जनपदानाम् **यथा प्रत्युद्गमनम् तद्वत्**। तदेव **क्लेशप्राप्तिरज्जूच्छेदे** सति स्वप्राप्तिलाभादुच्छ्वसन्तीव गुणाः, उत्तप्ततराणां तेषां प्राप्तिरुत्पद्यत इत्यर्थः। कामधातावर्हत्त्वप्राप्तावेवाशुभादयो यथासम्भवं श्रुत-चिन्ता-भावनामयास्त्रैधातुका भावनां गच्छन्ति। रूपारूप्यधात्वोस्त्वर्हत्त्वाप्राप्तौ यथाक्रमं द्विधातुकैकधातुकाः। एवं धातुतोऽपि बोद्धव्यम्। नैवसंज्ञानासंज्ञायतनोपपन्नस्यार्हत्त्वप्राप्तौ तद्भूमिका एवेत्यवगन्तव्यम्। **यत् किञ्चित् लभ्यते** इति विस्तरः।

**यद्विहीनं पुनर्लभ्यते** सम्मुखीक्रियते संसारोचितम्। **न तदनागतं भाव्यते भावितोत्सृष्टत्वात्** संसारे। यदेवात्र ध्यानाप्रमाणाद्यनुचितं संसारे विशिष्टमनास्रवानुगुणम्, तत्सम्मुखीभावे तज्जातीयमेवानागतं विशिष्टं भाव्यत इत्याचार्यो दर्शयति।

**आचार्यसङ्घभद्रोऽप्येतमेवार्थं** व्याचष्टे—लब्धपूर्वं न भाव्यते। यत्

---

१-१. ०राज्य प्राप्तौ—का०।

किं खलु प्रतिलम्भ एव भावना ? नेत्युच्यते। चतुर्विधा हि भावना— प्रतिलम्भभावना, निषेवणभावना, प्रतिपक्षभावना, विनिर्धावनभावना च। तत्र—

**प्रतिलम्भनिषेवाख्ये शुभसंस्कृतभावने।**
**प्रतिपक्षविनिर्धावभावने सास्रवस्य तु ॥ २७ ॥**

---

प्रतिलब्धविहीनं पुनर्लभ्यते, न तद् भाव्यम्। अर्थाद् गम्यते—यद् **अलब्धपूर्वं** लभ्यते तद् भाव्यते; यथाभिमुखीकरणात्। अप्रतिप्रस्रब्धो हि **मार्गो** यत्नेनाभिमुखीक्रियत इति। तदावेधस्य वनवत्त्वादनागतो भावनां गच्छति। प्रतिप्रस्रब्धपूर्वस्त्वयत्नेन सम्मुखीभवति। भावितप्रतिप्रस्रब्धत्वात् कृतकृत्य-दत्तफलत्वाच्च वेगहीन इति तत्सम्मुखीभावादनागतो न भाव्यत इति। योऽनागतो यत्नेन जन्यते स भाव्यत इत्यभिप्रायः।

तदेवं सति यदुक्तम् 'संवृतिज्ञानं तावत्' इति विस्तरेण, तदार्यसन्तान-पतितमेव गृह्यते, संसारानुचितत्वादिति **आचार्यवसुमित्रेणात्र** लिखितम्।

अत्र किल **वैभाषिकाः** आहुः—नैतदेवम्। कुतः ? यस्मादलब्धमेव तद् भवति, त्यक्तत्वात्; तस्मात् भावितोत्सृष्टस्यापि पुनर्लाभे **भवत्येव** भावनेति। कथं तदपूर्वं भवति, यावता लब्धपूर्वमिति ! न **ह्येवंविधं लोके** पूर्वं प्रसिद्धमिति।

**अपरे** पुनर्व्याचक्षते—एकं जन्मेदमधिकृत्योक्तम्, न जन्मान्तरम्। यद्विहीनमस्मिन्नेव जन्मनि पुनर्लभ्यते न तद् भाव्यते; भावितोत्सृष्टत्वात्। जन्मान्तरे तु यल्लभ्यते तद्भाव्यते। न लभ्यते तन्न भाव्यते, विस्मृत-भावनत्वादिति ॥ २६ ॥

**चतुर्विधा हि भावनेति।** प्रतिलम्भ एव भावना **प्रतिलम्भभावना।** अनागतप्राप्तिरेव भावनेत्यर्थः। एवं **निषेवणमेव, प्रतिपक्ष एव, विनिर्धावनमेव** भावनेति वक्तव्यम्। किं निषेवणम् ? किं च यावत् विनिर्धावनमिति ? निषेवणम् = पुनः पुनः सम्मुखीकरणम्। प्रतिपक्षः = मार्ग। यथोक्तं सूत्रे— "भावितकायो भावितचित्त." इति। भावितप्रतिपक्षकायचित्त इत्यर्थः। काय-प्रतिपक्षः पुनः चतुर्ध्यानवैराग्याय यो मार्गः। तथा ह्यागमम्—"भावितकायो भिक्षुरित्युच्यते—भावितचित्तः, भावितशीलः। कथं भावितकायो भवति ? कायाद् विगतरागो विगतस्पृहः विगतपिपासो विगतप्रेमा विगतनियन्तिः। अथवा—योऽसौ रूपरागक्षयानन्तर्यमार्गः सोऽनेन विगतरागो भवति" इति **आगमः**। विनिर्धावनम्=क्लेशप्राप्तिच्छेदः।

**प्रतिलम्भनिषेवणभावने** कुशलसंस्कृतानां धर्माणामनगतानामेका, **प्रत्युत्पन्नानमुभे**। प्रतिपक्षविनिर्धावनभावने **सास्रवाणां** धर्माणाम्।

**तदेवं** कुशलसास्रवाणां चतस्रो भावना भवन्ति। अनास्रवाणां **द्वे**. क्लिष्टाव्याकृतानां च।

**बाह्याभिधार्मिकाणां** षड् भावनाः—एताश्चतस्रः, संवरभावना, विभावनभावना च। इन्द्रियाणां पूर्वा[1] कायस्योत्तरा। "षडिमानीन्द्रियाणि सुदान्तानि यावत्सुभावितानि तथा सन्त्यस्मिन् काये क्लेशाः" ( ) इति विस्तरः।

ते तु प्रतिपक्षनिर्धावनभावनान्तर्भूते[2] इति **काश्मीराः**।

---

**अनागतानामेकेति**। प्रतिलम्भभावना। **प्रत्युत्पन्नानामुभे** इति। प्रतिलम्भनिषेवणभावने।

**तदेवमिति** विस्तरः। यस्मात् प्रतिलम्भनिषेवणभावने कुशलसंस्काराणामित्यविशेषेणोक्तम्, सास्रवाणामनास्रवाणां च। **प्रतिपक्षविनिर्धावनभावने च सास्रवाणां धर्माणामित्यविशेषेणोक्तं** क्लिष्टानामक्लिष्टानां च, तस्मादेवमित्थं **कुशलसास्रवाणां चतस्रो भावना भवन्ति**। येषां भावना इष्यन्ते कुशलत्वात् प्रतिलम्भनिषेवणभावने भवतः, सास्रवत्वाच्च प्रतिपक्षविनिर्धावनभावने भवत इति।

ये तर्हि न कुशलसास्रवाः, ये संस्कृताः, येऽनास्रवाः, ये च क्लिष्टाव्याकृताः, तेषां कति भावना इति ? आह—**अनास्रवाणां द्वे** इति। प्रतिलम्भनिषेवणभावने। **क्लिष्टाव्याकृतानां च**। किम् ? **द्वे भावने भवतः**। प्रतिपक्षविनिर्धावनभावने इति।

**इन्द्रियाणां पूर्वेति**। **चक्षुरादीनां संवरभावनेत्यर्थः**। **कायस्योत्तरेति**। **विभावनभावना**। तत्पुनर्भावनाद्वयम् आगमेन यथाक्रमं दर्शयति—**षडिमानीन्द्रियाणीति** विस्तरः। स पुनरिन्द्रियसंवरः स्मृतिसम्प्रजन्यस्वभाव उक्तः। विभावनापि कायालम्बनस्य क्लेशस्य निर्धावनम्।

**ते त्विति** विस्तरः। ते तु संवरविभावनभावने **प्रतिपक्ष-निर्धावनभावनान्तर्भूते** यथाक्रममुभयमुभयत्रान्तर्भूतमित्यपि न विरुद्ध्यते।

---

१. पूर्वी—का०।

२ ०निर्धाविभावना०—का।

सामान्येन सर्वेषां पुद्गलानां क्षयज्ञाने गुणभावनोक्ता ।। २७ ।।

**अष्टादशावेणिकास्तु बुद्धधर्मा बलादयः ।**

ये बुद्धस्यैव भगवतः क्षयज्ञाने भावनां गच्छन्ति, नान्यस्य। कतमेऽष्टादश ? दश बलानि, चत्वारि वैशारद्यानि, त्रीणि स्मृत्युपस्थानानि,

---

**सामान्येन सर्वेषामिति**[1] । श्रावक-प्रत्येकबुद्ध-सम्यक्सम्बुद्धानां क्षयज्ञानक्षणे **गुणभावनोक्ता**, "सास्रवाश्च क्षयज्ञाने" (अभि० को० ७.२६) इति वचनात् ।। २७ ।।

**दश बलानीति** विस्तरः । एते **बलाद्या महाकरुणान्ता अष्टादशावेणिका** वैभाषिकैर्व्यवस्थाप्यन्ते । बलादिव्यतिरिक्तान् केचिद् अन्यान् अष्टादशावेणिकान् बुद्धधर्मान् वर्णयन्ति । तद्यथा—नास्ति तथागतस्य स्खलितम्, नास्ति रवितम्, नास्ति द्रवता, नास्ति नानात्वसंज्ञा, नास्त्यव्याकृतं मन , नास्त्यप्रतिसंख्यायोपेक्षा, नास्त्यतीतेषु प्रतिहतं ज्ञानदर्शनम्, नास्त्यनागतेषु प्रतिहतं ज्ञानदर्शनम्, नास्ति प्रत्युत्पन्नेषु प्रतिहतं ज्ञानदर्शनम्, सर्वं कायकर्म ज्ञानानुपरिवर्त्ति, सर्वं वाक्कर्म ज्ञानानुपरिवर्त्ति, सर्वं मनस्कर्म ज्ञानानुपरिवर्त्ति, नास्ति छन्दहानि, नास्ति वीर्यहानिः, नास्ति स्मृतिहानिः, नास्ति समाधिहानिः, नास्ति प्रज्ञाहानिः नास्ति विमुक्तज्ञानदर्शनहानिरिति । तत्र रवितं नाम महसा क्रिया । द्रवता=क्रीडाभिप्रायता । नानात्वसंज्ञा सुखदुःखादु खासुखेपु विषयेपु रागद्वेषमोहतो नानात्वसंज्ञा । शेषं सुगमम् । दश बलानि--स्थानास्थानज्ञानबलम्, कर्मविपाकज्ञानबलम्, ध्यानविमोक्षसमाधिसमापत्तिज्ञानबलम्, इन्द्रियपरापरज्ञानबलम, नानाधिमुक्तिज्ञानबलम्, नानाधात्वनुज्ञानबलम्, सर्वत्रगामिनीप्रतिपज्ज्ञानबलम्, पूर्वनिवासानुस्मृतिज्ञानबलम्, च्युत्युपपत्तिज्ञानबलम्, आस्रवक्षयज्ञानबलं च ।

सूत्रं तु—"दश आयुष्मन्तः तथागतबलानि । कतमानि दश ? इहायुष्मन्तः स्थानं च स्थानतो यथाभूतं प्रजानाति, अस्थानं चास्थानतः—**इदं प्रथमं तथागतबलम्** । येन बलेन समन्वागतस्तथागतोऽर्हन् सम्यक्सम्बुद्धः उदारमार्षभस्थानं प्रतिजानाति, ब्राह्मं चक्रं प्रवर्तयति, पर्षदि सम्यक् सिंहनादं नदति । पुनरपरमायुष्मन्तस्तथागतोऽतीतानागतप्रत्युत्पन्नानि कर्मधर्मसमादानानि स्थानतो हेतुतो वस्तुतो विपाकतश्च यथाभूतं प्रजानाति । यदायुष्मन्तस्तथागतः, पूर्ववत्, यावत् विपाकतश्च यथाभूतं प्रजानाति—**इदं**

---

१ सर्वस्वमिति—जा० ।

महाकरुणा च। असाधारणं हि आवेणिकमित्युच्यते। तत्र

---

द्वितीयं तथागतबलम्। येन बलेनेति पूर्ववत्। पुनरपरमायुष्मन्तस्तथागतो ध्यानविमोक्षसमाधिसमापत्तीनां संक्लेश-व्यवदान-व्यवस्थान-विशुद्धि यथाभूतं प्रजानाति। यदायुष्मन्तस्तथागतः पूर्ववत्। इदं तृतीयं०। पुनरपरमायुष्मन्तस्तथागतः परसत्त्वानां परपुद्गलानामिन्द्रियपरापरतां यथाभूतं प्रजानाति। यदायुष्मन्तस्तथागतः पूर्ववत्—इदं चतुर्थं तथागतबलम्। येन बलेनेति पूर्ववत्। पुनरपरमायुष्मन्तस्तथागतो नानाविमुक्तिकं लोकमनेकविमुक्तिकमिति यथाभूतं प्रजानाति। यदायुष्मन्तस्तथागतः पूर्ववत्। इदं पञ्चमं तथागतबलम्। येन बलेनेति पूर्ववत्। पुनरपरमायुष्मन्तस्तथागतो नानाधातुकं लोकमनेकधातुकमिति यथाभूतं प्रजानाति। यदायुष्मन्तस्तथागतः पूर्ववत्—इदं षष्ठं तथागतबलम्। येन बलेनेति पूर्ववत्। पुनरपरमायुष्मन्तस्तथागतः सर्वत्रगामिनीं प्रतिपदं यथाभूतं प्रजानाति। यदायुष्मन्तस्तथागतः पूर्ववत्—इदं सप्तमं तथागतबलम्। येन बलेनेति पूर्ववत्। पुनरपरमायुष्मन्तस्तथागतोऽनेकविधं पूर्वनिवासमनुस्मरति, तद्यथा एकामपि जातिम्, द्वे, तिस्रः, चतस्रः, पञ्च, षट्, सप्त, अष्ट, नव, दश, विंशतिं यावत् अनेकामपि संवर्तविवर्तकल्पामनुस्मरति—अमी नाम ते भवन्तः सत्त्वाः यत्राहमासम् एवंनामा, एवंजातीयः, एवंगोत्रः, एवमाहारः, एवंसुखदुःखप्रतिसंवेदी, एवं दीर्घायुः, एवंचिरस्थितिकः, एवमायुपर्यन्तः; सोऽहं तस्मात् स्थानाच्च्युतोऽमुत्रोपपन्नः, तस्मादपि च्युत इहोपपन्नः—इति साकारं सनिदानं सोद्देशमनेकविधं पूर्वनिवासमनुस्मरति। यदायुष्मन्तस्तथागतः पूर्ववत्—इदमष्टमं तथागतबलम्। येन बलेनेति पूर्ववत्। पुनरपरमायुष्मन्तस्तथागतो दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेन सत्त्वान् पश्यति च्यवमानानप्युत्पद्यमानानपि, सुवर्णान्, हीनान् दुर्वर्णान्, प्रणीतान् सुगतिमपि गच्छतो दुर्गतिमपि गच्छतो यथाकर्मोपगान् यथाभूतं प्रजानाति—अमी भवन्तः सत्त्वाः कायदुश्चरितेन समन्वागताः, वाङ्मनोदुश्चरितेन समन्वागताः, आर्याणामपवादकाः मिथ्यादृष्टयो मिथ्यादृष्टिकर्म-धर्म-समादानहेतोस्तद्धेतुं तत्प्रत्ययं कायस्य भेदात् परंमरणाद् अपायदुर्गतिविनिपाते नरकेषूपपद्यन्ते। अमी पुनर्भवन्तः सत्त्वाः कायसुचरितेन समन्वगताः वाङ्मनःसुचरितेन समन्वागताः आर्याणामनपवादकाः संयोगदृष्टयः संयोगदृष्टिकर्म-धर्मसमादानहेतोस्तद्धेतुं तत्प्रत्ययं कायस्य भेदात् सुगतौ स्वर्गलोके देवेषूपपद्यन्ते। यदायुष्मन्तस्तथागताः, पूर्ववत्—इदं नवमं तथागतबलम्। येन बलेनेति पूर्ववत्। पुनरपरमायुष्मन्तस्तथागत आस्रवाणां क्षयादनास्रवां चेतोविमुक्तिं प्रज्ञाविमुक्तिं दृष्ट एव धर्मे स्वयमभिज्ञाय साक्षात्कृत्वोपसम्पद्य प्रतिवेदयते—क्षीणा मे जातिः, उषितं ब्रह्मचर्यम्, कृतं

**स्थानास्थाने दश ज्ञानानि,**

स्थानास्थानज्ञानबलं दश ज्ञानानि ।

**अष्टौ कर्मफले,**

कर्मविपाकज्ञानबलमष्टौ ज्ञानानि, निरोधमार्गज्ञाने हित्वा ।

**नव ॥ २८ ॥**

---

करणीयम्, नापरमस्माद् भवं प्रजानामीति । यदायुष्मन्तस्तथागतः पूर्ववत्— इदं दशमं तथागतबलम् । येन बलेनेति पूर्ववत्" । (　　)

"**स्थानास्थाने दश ज्ञानानि**" इति । स्थानं चास्थानं च स्थानास्थानम्, तत्र ज्ञानमेव बलं ज्ञानबलम् । तद् दश ज्ञानानि दश-ज्ञानस्वभावमित्यर्थः । कथं कृत्वा ? स्थानास्थानं समासेन संस्कृतं चासंस्कृतं च । तदपि संस्कृतमष्टधा भेत्तव्यम्—कामरूपारूप्यावचरानास्रवाणां सम्प्रयुक्त-विप्रयुक्तभेदात् । तत्र संवृतिज्ञानबलस्य दशापि धर्मा विषयः । दशस्वपि धर्मेषु तस्य वृत्तेरित्यर्थः । धर्मज्ञानस्य पञ्च, कामावचरानास्रवाश्चत्वारः कुशलं चासंस्कृतम् । अन्वयज्ञानस्य सप्त, रूपारूप्यानास्रवाः षट् कुशलं चासंस्कृतम् । दुःखसमुदय-ज्ञानयोः षट् कामरूपारूप्यावचराः । निरोध-ज्ञानस्यैकः कुशलमेवासंस्कृतम् । मार्गज्ञानस्य द्वावनास्रवौ । परचित्तज्ञानस्य त्रयः कामरूपावचरानास्रवाः सम्प्रयुक्ताः । क्षयानुत्पादज्ञानयोर्नव धर्माः विषयः, अव्याकृतमसंस्कृतं मुक्त्वा । एवं कृत्वा स्थानास्थानज्ञानबलं दशज्ञानानि ।

कथं पुनर्दश धर्माः स्थानास्थानमित्युच्यते ? सम्भवः स्थानम्, असम्भवोऽस्थानमिति । अथवा 'अस्थानमनवकाशो यत्[1] स्त्री बुद्धत्वं कारयिष्यति, स्थानमेतद् यत् पुरुषः' इति । 'अस्थानमवकाशो यत्[1] स्त्री ब्रह्मत्वं कारयिष्यति, स्थानमेतद् यः पुरुषः' इति । तथा 'स्थानमेतद् यत् दुःखस्य निरोधः' इति । एवमाद्याकारप्रवृत्तं स्थानास्थानज्ञानबलम-वगन्तव्यम् ।

"**अष्टौ कर्मफले**" इति । कर्मणः सास्रवस्य तद्विपाकस्य च दुःख-समुदय-सत्यसंगृहीतत्वात् । **निरोधमार्गज्ञाने न भवत** इति । अतोऽन्यानि तदालम्बनानि अष्टौ ज्ञानानि सम्भवन्ति ।। २८ ।।

---

१. यः—जा० ।

**ध्यानाध्यक्षाधिमोक्षेषु, धातौ च,**

ध्यानविमोक्षसमाधिसमापत्तिज्ञानबलं नव ज्ञानानि, निरोधज्ञानं हित्वा। एवमिन्द्रियपरापरज्ञानबलं वेदितव्यम्।

**प्रतिपत्सु तु।**

**दश वा,**

'नव वा' इति मतविकल्पार्थो वाशब्दः। यदि सफला प्रतिपद गृह्यते, **सर्वत्रगामिनीप्रतिपज्ज्ञानबलं दश ज्ञानानि।** न चेत्, नव; **अन्यत्र निरोधज्ञानात्।**

---

"**ध्यानाध्यक्षाधिमोक्षेषु**" इति विस्तरः। ध्यानमादिरासामिति। ध्यानादयो **ध्यानविमोक्ष-समाधिसमापत्तयः।** ध्यानानि चत्वारि, **विमोक्षा अष्टौ**, समाधयस्त्रयः शून्यतादयः। समापत्ती द्वे—असंज्ञि-निरोधसमापत्ती। नवानुपूर्वविहारसमापत्तयः। **अक्षाणि** = इन्द्रियाणि। अधिमोक्षश्चैतसिकः। ध्यानादयश्चाक्षाणि चाधिमोक्षश्चेति द्वन्द्वः। **तेषु नव ज्ञानानि**, निरोध-ज्ञानं हित्वा। कथं कृत्वा ? ध्यानादीनां सास्रवानास्रवसम्प्रयुक्तविप्रयुक्तभेदात् तदालम्बनानि नव ज्ञानानि सम्भवन्ति। **निरोधज्ञानं तु न भवति।** तेषां संस्कृतत्वात्। **इन्द्रियेष्वपि** श्रद्धादिषु यत्प्रधानाप्रधानज्ञानं मृदु-मध्याधिमात्रेन्द्रियभेदेन। **तत् परापरज्ञानबलम्।** तेष्वपि सास्रवानास्रव-भेदभिन्नेषु नवज्ञानानि सम्भवन्ति, निरोधज्ञानं हित्वा। प्रधानादिषु रुचयो **नानाधिमुक्तयः।** ताः पुनः सास्रवानास्रवास्त्रिधातुकाश्च तदालम्बनत्वात् निरोधज्ञानं हित्वा। एवं **नानाधातुज्ञानबलम्।** तत्र हि धातुः पूर्वाभ्यास-वासनासमुद्गतः आशयो धातुः—इत्या**चार्यसङ्घभद्रः।** स पुनस्त एव **चित्तचैत्ताः** विशिष्टाः। तेषां तथैव सास्रवानास्रवभेदभिन्नानां निरोधज्ञानं हित्वा नव ज्ञानानि भवन्तीति पूर्ववत् योज्यम्।

"**प्रतिपत्सु**" इति विस्तरः। बह्व्योऽत्र **प्रतिपदो नरकादिगामिन्यः।** नरकगामिनी प्रतिपत्, यावत्, देवगामिनी, निरोधगामिनी च। तत्र या नरकादिगामिन्यः प्रतिपदः, ता हेतुः। प्रतिपद्यन्ते ताभिरिति कृत्वा। मार्गो हि प्रतिपद् उच्यते, तेन हि विसंयोगः प्रतिपद्यते। निरोधस्तु कथम् ? स चापि प्रतिपद्। प्रतिपद्यते तमिति कृत्वा। प्रतिपत्फलं वा प्रतिपदित्युच्यते। अत एवाह—**यदि सफला प्रतिपद् गृह्यत** इति। हेतुर्हि सर्वत्रगामिनो प्रतिपदिहेष्यते। तथा हि व्याचक्षते—**सर्वत्रगामिनीप्रतिपज्ज्ञानबलमिति।**

**संवृतिज्ञानं द्वयोः,**

पूर्वनिवासानुस्मृतिज्ञानबलं च्युत्युपपत्तिज्ञानबलं च संवृतिज्ञानम् ।

**षट् दश वा क्षये ॥ २९ ॥**

आस्रवक्षयज्ञानबलं षड् ज्ञानानि धर्मान्वयनिरोधक्षयानुत्पादसंवृतिज्ञानानि । यदि निरोधज्ञानमेव आस्रवक्षयज्ञानम् ।

अथ क्षीणास्रवसंताने ज्ञानमास्रवक्षयज्ञानम्, ततो दश ज्ञानानि ॥ २९ ॥

उक्तः स्वभावः ॥

भूमिरिदानीमुच्यते—

**प्राङ्निवासच्युतोत्पादबलध्यानेषु[1],**

च्युतिरेव च्युतम् । पूर्वनिवासच्युत्युपपत्तिज्ञानं बलं चतुर्ध्यानभूमिकम् ।

**शेषितम् ।**

**सर्वभूमिषु,**

शेषं बलं सर्वभूमिसंगृहीतम् । ताः पुनरेकादश । कामधातुरनागम्यध्यानान्तरं ध्यानारूप्याश्च । सर्वाणि जम्बूद्वीपपुरुषाश्रयाणि; अन्यत्र

---

सत्कायसमुदयगामिनीत्यर्थ इति । तत्र सत्कायः पञ्चोपादानस्कन्धाः । समुदय उत्पाद इहाभिप्रेतः । "एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति" इति वचनात् । सत्कायनिरोधः = विसंयोगः । तत्र सर्वत्रगन्तुं शीलमस्या इति सर्वत्रगामिनी, सर्वत्रगामिनी चासौ प्रतिपच्च सर्वत्रगामिनी प्रतिपद् । तत् ज्ञानम्, तदेव च बलमिति सर्वत्रगामिनीप्रतिपज्ज्ञानबलम् । **तद् दश ज्ञानानि योज्यानि ।**

**यदि निरोधज्ञानमेवास्रवक्षज्ञानमिति ।** आस्रवाणां क्षये निरोधे ज्ञानम् । आस्रवनिरोधालम्बनं ज्ञानमित्यर्थः । एवं सति षड् ज्ञानानि भवन्ति । निरोधज्ञानजातिरेव धर्मज्ञानादिभेदभेदिनी कृत्वा ।

**अथ क्षीणास्रवसन्तान** इति । आस्रवक्षये सति यज्ज्ञानं तदास्रवक्षयज्ञानमित्यर्थः । क्षीणास्रवसन्ताने सर्वाणि ज्ञानानि समुदाचरन्तीति **दश** ज्ञानानि भवन्ति ॥ २९ ॥

---

१. प्राङ्निविस०—का० ।

बुद्धानुत्पादात्। तदेव[1] दशविधं ज्ञानमन्यस्य बलं नोच्यते। बुद्धस्यैव बलमिति।

**केनास्य बलमव्याहतं यतः ॥ ३० ॥**

यस्मादस्य सर्वत्र ज्ञेये ज्ञानमव्याहतं वर्तते, तस्माद् बलम्। अन्येषां तु व्याहन्यते। ज्ञानं क्वचिदिच्छतामप्यप्रवृत्तेरिति नार्हति तद्बलाख्यां लब्धुम्। **स्थविरशारिपुत्रेण** प्रव्रजनप्रेक्षपुरुषप्रत्याख्यानम्[2], श्येनोपद्रुतस्य पक्षिण उपपत्त्यादिपर्यन्ताज्ञानं चात्रोदाहरणम्। एवं तावदव्याहतज्ञानत्वाद् बुद्धानां ज्ञेयवदनन्तं मानसं बलम् ॥ ३० ॥

---

**अन्यत्र बुद्धानुत्पादादिति।** जम्बूद्वीपादन्यत्र बुद्धानुत्पाद इति **जम्बूद्वीपपुरुषाश्रयाणि** दश बलानि बुद्धाश्रयोत्पत्तेरित्यभिप्रायः।

**तदेव दशविधज्ञानमन्यस्य बलं नोच्यत** इति। अन्यस्यापि एतदस्ति, न तु बलम्; **व्याहतत्वात्**। यत्त्वव्याहतं तद् बलम्। आवेणिक इत्यभिप्रायः। **प्रव्रजनप्रेक्ष-पुरुषप्रत्याख्यानमिति** विस्तरः। प्रव्रजनम्=प्रव्रज्या प्रेक्ष्यते प्रव्रज्याप्रेक्षः। तस्य प्रव्रजनप्रेक्षस्य पुरुषस्य प्रत्याख्यानं प्रव्रजनप्रेक्षपुरुष-प्रत्याख्यानम्। तदुदाहरणम्। यथा अन्यस्य व्याहन्यते ज्ञानं इति। **आर्यशारिपुत्रेण** किल कस्यचित् प्रव्रज्याप्रेक्षस्य पुरुषस्य मोक्षभागीयं कुशलमूलं व्यवलोकयता न दृष्टमिति प्रत्याख्यातः। न प्रव्रजित इत्यर्थः। भगवता तु दृष्टम्, प्रव्रजितश्च। तं चाधिकृत्य भिक्षुभिः पृष्टेन **भगवतोक्तम्**— "अनेनैवेदं कर्म कृतम्, यदर्हत्त्वं प्राप्तः। नहि कर्माणि पृथिवीधातौ विपच्यन्ते, नाब्धातौ, न तेजोधातौ, न वायुधातौ। अपि तूपात्तेष्वेव स्कन्ध-धात्वायत-नेषु" इति विस्तरः। इदं चोक्तम्—

"मोक्षबीजमहं ह्यस्य सुसूक्ष्ममुपलक्षये।
धातुपाषाणविवरे निलीनमिव काञ्चनम् ॥" ( ) इति।

**उपपत्त्यादिपर्यन्ताज्ञानं चेति।** आदि-शब्देन च्युतिपर्यन्ता-ज्ञानम ॥ ३० ॥

---

१. तदेतद्—का०।

२. प्रव्रज्यापेक्ष०—ना०।

**नारायणं[1] बलं[1] काये,**

काये पुनर्बुद्धस्य नारायणं बलं वर्णयति ।

**सन्धिष्वन्ये,**

सन्धौ सन्धौ नारायणबलमित्यपरे ।

मानसवत् कायिकमप्यस्यानन्तं बलमिति भदन्तः । अन्यथा ह्यनन्त-ज्ञानबलसहिष्णुर्न स्यादिति । नागग्रन्थि-शङ्कला-शङ्कुसन्धयश्च बुद्ध-प्रत्येकबुद्ध-चक्रवर्तिनः ।

किं पुनर्नारायणस्य बलस्य प्रमाणम् ?

**दशाधिकम् ।**

**हस्त्यादिसप्तकबलम्,**

यद्दशानां प्राकृतहस्तिनां बलं तदेकस्य गन्धहस्तिनः । एवं महानग्न-प्रस्कन्दिवराङ्गचाणूरनारायणानां[2] दशोत्तरवृद्धिर्वक्तव्या । प्राकृतगन्ध-

---

**नारायणं बलमिति** । बलस्येयं संज्ञा 'नारायणम्' इति । यस्य च तद् बलम् असावपि 'नारायण' इत्युच्यते; चाणूरमहाङ्गत्वात् । **भदन्त** इति । दार्ष्टान्तिकस्थविरः । **अन्यथा हीति** । यदि मानसवत् कायिकबलं नेष्यते, **अनन्तस्य ज्ञानबलस्य सहिष्णुर्न स्यात्** । सहनशीलो भगवान् न भवेदित्यर्थः ।

"**सन्धिष्वन्ये**" इत्युक्तम्, अस्थिसन्धिविशेषोपन्यासः । **नागग्रन्थिरिति** विस्तरः । नागग्रन्थिसन्धयो बुद्धाः । नागपाशो नागग्रन्थिः । शङ्कलासन्धयः प्रत्येकबुद्धाः । शङ्कुसन्धयश्चक्रवर्तिनः ।

"दशाधिकं हस्त्यादिसप्तकबलम्" इति । हस्ति-**गन्धहस्ति-महानग्न-प्रस्कन्दि-वरांग-चाणूर-नारायणानां** सप्तकं तस्य बलं दशभिरधिकम्, दशभ्यो वाधिकम् । कथम् ? इत्याह—**यद् दशानां प्राकृतहस्तिनां** सामान्यहस्तिनां **बलं** तदेकस्य **गन्धहस्तिनो बलम्** । एवं **यद् दशानां गन्धहस्तिनां बलं**

---

१-१. नारायणबल—का० । २. ०चानूर०—का० ।

हस्ति-महानग्नप्रस्कन्दिनां दशोत्तरवृद्ध्यार्धनारायणबलं[1] तद् द्विगुणं नारायण-मित्य रे। यथा तु वहुतरं तथा योज्यम्।

**स्प्रष्टव्यायतनं च तत् ॥ ३१ ॥**

तच्चैतत् कायिकं वलं सर्वस्यैव स्प्रष्टव्यायतनस्वभावं महाभूतविशेष एव। [2]उपादायरूपसप्तभ्योऽर्थान्तरमित्यपरे ॥ ३१ ॥

उक्तानि वलानि ॥

**वैशारद्यं चतुर्धा तु,**

यथासूत्रमेव[3]।

एतानि पुनश्चत्वारि वैशारद्यानि

**यथाद्यदशमे बले।**

---

**तदेकस्य** महानग्नस्य वलम्। यावद् **यद् दशानां चाणूरानां बलं तदेकस्य नारायणस्य बलमिति**।

**दशोत्तरवृद्धिनागः**। **दशोत्तरवृद्ध्यार्धनारायणबलमिति**। आदि-तस्तथैव प्रक्रम्य यद्दशानां प्रस्कन्दिनां वलं तदर्धनारायणम्। **तद् द्विगुणं नारायणमिति**।

**यथा तु बहुतरं तथा योज्यमित्याचार्यः**। पूर्वकमेव पक्षं समर्थयति। अन्यथा ह्यनन्तज्ञानबलसहिष्णुर्न स्यादिति तदेव कारणम्। देवदत्तहतहस्ति-पादांगुष्ठसप्तप्रकारपरिखाक्षेपश्चान्यथा न स्यादिति।

**महाभूतविशेष एवेति**। महाभूतविशेषस्वभावं **बलं** न भौतिकमिति दर्शयति।

**उपादायरूपसप्तभ्योऽर्थान्तरमिति**। श्लक्षणत्वादिभ्यः पूर्वोक्तेभ्योऽन्यदेव बलं नामोपादायरूपमि**त्यपरे** ॥ ३१ ॥

**यथासूत्रमेवेति**। "चत्वारीमानि सारिपुत्र तथागतस्य **वैशारद्यानि**। यैर्वैशारद्यैः समन्वागतस्तथागतोऽर्हन् सम्यक्सम्बुद्धः उदारमार्षभं स्थानं

---

१. ०नारायणं वलं—क।०। २. उपादायरूपं०—का०।

३. यथासूत्रम्—का०।

**द्वितीयसप्तमे चैव,**

यथा स्थानास्थानज्ञानबलम्, एवं "सम्यक्सम्बुद्धस्य बत मे सतः" इत्येतद्वैशारद्यं वेदितव्यम्। यथास्रवक्षयज्ञानबलम्, एवं "क्षीणास्रवस्य बत मे सतः" इत्येतद्वैशारद्यम्। यथा कर्मस्वकज्ञानबलम्, एवं "ये वा पुनर्मया श्रावकाणामन्तरायिका धर्मा आख्याताः" इत्येतद्वैशारद्यम्। यथा सर्वत्रगामिनी

---

प्रतिजानाति, ब्राह्मं[1] चक्रं प्रवर्तयति, पर्षदि सम्यक् सिंहनादं नदति। कतमानि चत्वारि? सम्यक्सम्बुद्धस्य बत मे सतो धर्मा अनभिसम्बुद्धा इत्यत्र मां कश्चिच्छ्रमणो वा ब्राह्मणो वा सह धर्मेण चोदयेत्, स्मारयेत्, तत्राहं निमित्तमपि न समनुपश्यामि। एवं चाहं निमित्तमसमनुपश्यन् क्षेमप्राप्तश्च विहरामि, अभयप्राप्तश्च, वैशारद्यप्राप्तश्च उदारम् आर्षभं स्थानं प्रतिजानामि, ब्राह्मं[1] चक्रं प्रवर्तयामि, पर्षदि सम्यक् सिंहनादं नदामि—इदं प्रथमं वैशारद्यम्। 'क्षीणास्रवस्य बत मे सत इमे आस्रवा अपरिहीणाः' इत्यत्र मां कश्चिदिति पूर्ववत् यावत्, पर्षदि सम्यक् सिंहनादं नदामि—इदं द्वितीयं वैशारद्यम्। ये वा पुनर्मया श्रावकाणामान्तरायिका धर्मा आख्याताः, तान् प्रतिसेवमानस्य नालमन्तरायायेति अत्र मां कश्चित् इति पूर्ववत्—इदं तृतीयं वैशारद्यम्। यो वा पुनर्मया श्रावकाणां मार्ग आख्यातः आर्यो नैर्याणिको नैर्वेधिको निर्याति तत्करस्य सम्यग्दुःखक्षयस्य दुःखस्यान्तक्रियायै स न निर्यास्यतीत्यत्र मां कश्चिदिति पूर्ववत्—इदं चतुर्थं वैशारद्यम्" इति।

**यथा स्थानास्थानज्ञानबलमिति** विस्तरः। यथा स्थानास्थानज्ञानबलं दश ज्ञानानि, सर्वभूमिसंगृहीतं च; **एवं 'सम्यक्सम्बुद्धस्य बत मे सतः' इत्येतद् वैशारद्यम्**। तथैव दशधा धर्माणां भेदं कृत्वा योज्यम्। **यथास्रवक्षयज्ञानबलम्**। षट् दश वा ज्ञानानि दशभूमिसंगृहीतं च। एवं क्षीणास्रवस्येति **द्वितीयं वैशारद्यम्**। अत्रापि तथैव धर्माणां भेदं कृत्वा षट् दश वा ज्ञानानि योज्यम्। **यथा कर्मस्वकज्ञानबलम**ष्टौ ज्ञानानि, निरोध-मार्गज्ञाने हित्वा, सर्वभूमिकसंगृहीतं च। **एवं ये वा पुनर्मया श्रावकाणामान्तरायिका** इति विस्तरेण **तृतीयं वैशारद्यम्**। अत्रापि तथैव धर्माणां भेदं कृत्वा दुःखसमुदयसत्यसंगृहीता एवान्तरायिकाः, न निरोधमार्गसंगृहीता इत्यष्टौ ज्ञानानि योज्यम्। **यथा सर्वत्रगामिनीप्रतिपज्ज्ञानबलम्** दश ज्ञानानि नव वा सर्वभूमिसंगृहीतं च। **एवं यो वा मया श्रावकाणां निर्याणाय मार्ग आख्यातः— इत्येतद्वैशारद्यम्**।

---

१. ब्राह्म्यं—जा०।

प्रतिपज्ज्ञानं बलम्, एवं "यो वा पुनर्मया श्रावकाणां निर्याणाय मार्ग आख्यातः" इत्येतद्वैशारद्यं वेदितव्यम् ।

कथं ज्ञानमेव वैशारद्यम्? निर्भयता हि वैशारद्यम् । एभिश्च ज्ञानैर्निर्भयो भवति । ज्ञानकृतं तु[1] वैशारद्यं युज्यते, न ज्ञानमेव ।

त्रीणि स्मृत्युपस्थानानि पर्षद्भेदात् भवन्ति यथाश्रुतम्[2] । तत्त्वेतत्

---

असफलतद्ग्रहणतो वा नवेति योज्यम् ।

**निर्भयता हि वैशारद्यम् । एभिश्च ज्ञानैर्निर्भयो भवतीति ज्ञानानि वैशारद्यमिति** वैभाषिकाः ।

**आचार्य आह—ज्ञानकृतं तु वैशारद्यम्, न ज्ञानमेवेति** । अथवा **आचार्य-**वचनमेवैतत् सर्वम् । निर्भयता हि वैशारद्यम् । तथा हि तद्भयप्रतिपक्षो धर्मश्चैतसिकः । भयमपि चैतसिको धर्म इति । एभिश्च ज्ञानैर्हेतुभूतैर्निभयो भवतीति तत् कथं ज्ञानमेव वैशारद्यम्! ज्ञानकृतं तु वैशारद्यं युज्यते, न ज्ञानमेवेति ।

**यथाश्रुतमिति** । "त्रीणीमानि भिक्षवः स्मृत्युपस्थानानि । यानार्यः सेवते, यानार्यः सेवमानोऽर्हति गुणमनुशासयितुम् । कतमानि त्रीणि? इह भिक्षवः शास्ता श्रावकाणां धर्मं देशयति, अनुकम्पकः कारुणिकोऽर्थकामो हितैषी करुणायमानः—'इदं वो हिताय, इदं वः सुखाय, इदं वो हितसुखाय' । तस्य मे श्रावकाः शुश्रूषन्ते, श्रोत्रमवदधति, आज्ञाचित्तमुपस्थापयन्ति, प्रतिपद्यन्ते धर्मस्यानुधर्मं प्रति । न व्यतिक्रम्य वर्तन्ते शास्तुः शासने । तेन तथागतस्य न नन्दी भवति, न सौमनस्यम्, न चेतस उत्प्लावितत्वम् । उपेक्षकस्तत्र तथागतो विहरति स्मृतः सम्प्रजानन् । इदं प्रथमं स्मृत्युपस्थानम् । यदार्यः सेवते, यदार्यः सेवमानोऽर्हति गुण-मनुशासयितुम् ।

"पुनरपरं शास्ता धर्मं देशयति पूर्ववत्, तस्य श्रावका न शुश्रूषन्ते, न श्रोत्रमवदधति, नाज्ञाचित्तमुपस्थापयन्ति, न प्रतिपद्यन्ते धर्मस्यानुधर्मम् । व्यतिक्रम्य वर्तन्ते शास्तुः शासने । तेन तथागतस्य नाघातो भवति, नाक्षान्तिः, नाप्रत्ययः, न चेतसोऽनभिराद्धिः । उपेक्षकस्तत्र तथागतो विहरति स्मृतः सम्प्रजानन्—इदं द्वितीयं स्मृत्युपस्थानम् । यदार्यः सेवते, यदार्यः सेवमानोऽर्हति गुणमनुशासयितुम् ।

---

१. का० पुस्तके नास्ति । २. यथासूत्रम्—का० ।

**स्मृतिप्रज्ञात्मकं त्रयम् ॥ ३२ ॥**

स्मृतिसम्प्रजन्यस्वभावान्येतानि[1] त्रीणि स्मृत्युपस्थानानि। यदा श्रावकस्यापि शुश्रूषमाणाशुश्रूषमाणोभयेषु नन्दी[2] न भवति, आघातो वा।

कस्मादेते आवेणिका बुद्धधर्मा उच्यन्ते ? सवासनप्रहाणात्। अथवा यस्य श्रावकास्तस्य तच्छुश्रूषमाणाशुश्रूषमाणोभयेषु सौमनस्याद्यवकाशः सुतरां न तथाऽन्यस्येति तस्यैव तदनुत्पादादाश्चर्यं व्यवस्थाप्यते, नान्यस्येति ॥ ३२ ॥

महाकरुणेदानीं वक्तव्या, सेयमुच्यत—

**महाकृपा संवृतिधीः,**

---

"पुनरपरं भिक्षवः यावच्छासने। तत्र तथागतस्य न नन्दी भवति, न सौमनस्यम्, न चेतस उत्प्लावितत्वम्। नाघातो नाक्षान्तिः नाप्रत्ययो न चेतसोऽनभिराद्धिः। उपेक्षकस्तत्र तथागतो विहरति स्मृतः सम्प्रजानन्—इदं तृतीयं स्मृत्युपस्थानम्। यदार्यः सेवते यदार्यः सेवमानोऽर्हति गुणमनुशासयितुम्" इति। (  )

**स्मृतिसम्प्रजन्यमिति**। उभयस्वभावमिति दर्शयति। 'स्मृतः सम्प्रजानन्' इति वचनात्। **यदा श्रावकस्यापीति** विस्तरः। यदा श्रावकस्यापि हीनक्लेशस्य **शुश्रूषमाणेषु** च शिष्येषु **अशुश्रूषमाणेषु च उभयेषु** च शुश्रूषमाणाशुश्रूषमाणेषु च। **नन्दी** अनुनयो **न भवति आघातो वा** द्वेषो वा।

**कस्मादेते आवेणिका** असाधारणा **बुद्धधर्मा उच्यन्ते। सवासनाप्रहाणादिति**। सवासनानां नन्द्यादीनां[3] प्रहाणात्। का पुनरियं वासना नाम श्रावकाणाम्? यो हि यत्क्लेशचरितः पूर्वम् तस्य तत्कृतः कायवाक्चेष्टाविकारहेतुसामर्थ्यविशेषश्चित्ते वासनेत्युच्यते। 'अव्याकृतश्चित्तविशेषो वासना' इति **भदन्तानन्तवर्मा**।

**अथवेति** विस्तरेणाचार्यः। **यस्य श्रावकाः** बुद्धस्य भगवतः श्रावकाः **भवन्ति** नान्यस्य। किं कारणम्? सर्वे हि श्रावकाः बुद्धमुद्दिश्य प्रव्रजिता

---

१. स्मृतिसम्प्रज्ञान०—का०। २. ०ष्वनन्दी—का०।

३. आनन्द्या० —जा०।

संवृतिज्ञानात्मिका महाकरुणा। अन्यथा हि न सर्वसत्त्वालम्बना सिध्येत्, न च त्रिदुःखताकारा, करुणावत्।

कस्मादियं महाकरुणेत्युच्यते ?

**सम्भाराकारगोचरैः।**

**समत्वादाधिमात्र्याच्च,**

सम्भारेण महापुण्यज्ञानसम्भारसमुदागमात्। आकारेण त्रिदुःखताकरणात्। आलम्बनेन त्रैधातुकासत्त्वालम्बनात्[1]। समत्वेन सर्वसत्त्वेषु समवृत्तित्वात्। अधिमात्रत्वेन ततोऽधिमात्रतराभावात्।

---

इति। तेषां श्रावकाणां **शुश्रूषमाणे चाशुश्रूमाणे चोभयस्मिंश्च** शुश्रूषमाणा-शुश्रू्माणेषु उभयेषु **तस्यैव** श्रावकवतस्त**दनुत्पादः**। नन्द्याघातानुत्पादः। **आश्चर्यम्** अद्भुतं **व्यवस्थाप्यते**, **नान्यस्य** श्रावकस्येत्यर्थः॥ ३२॥

**अन्यथा** **हीति** विस्तरः। यदि संवृतिज्ञानस्वभावा न स्याद् अद्वेषस्वभावा स्यात्, करुणावत्। **न सर्वसत्त्वालम्बना सिद्ध्येत्।** न त्रैधातुकसत्त्वालम्बना, सिद्ध्येदित्यर्थः। यथा करुणा न त्रैधातुकसत्त्वालम्बना, किं तर्हि ? कामावचरसत्त्वालम्बना; दुःखितसत्त्वालम्बनत्वाद् एवं सिद्धं स्यादित्यभिप्रायः। **न च त्रिदुःखाकारा**। सिद्ध्येदिति वर्तते। **करुणावत्**। यथा करुणा दुःखताकारैव, न त्रिदुःखताकारा—दुःख-दुःखता-संस्का्ः तथा न स्यात्। इष्यते च त्रिदुःखताकारेति। अथ संवृतिज्ञान स्वभावेति।

करुणामहाकरुणयोः किं नानाकरणम् ?

**नानाकरणमष्टधा ॥ ३३ ॥**

स्वभावतः; अद्वेषामोहस्वभावत्वात्। आकारतः; एकत्रिदुःखताकारत्वात्। आलम्बनतः; एकत्रिधात्वालम्बनत्वात्। भूमितः; चतुर्ध्यानचतुर्थध्यानभूमिकत्वात्। सन्तानतः; श्रावकादिबुद्धसन्तानजत्वात्। लाभतः; कामभवाग्रवैराग्यलभ्यत्वात्[1]। अपरित्राणपरित्राणतः; अतुल्यतुल्यकरुणायनाच्च ॥ ३३ ॥

---

करुणेति महाकरुणा। **आकारेण त्रिदुःखताकरणात्**। यस्मात् तिसृभिरपि दुःखताभिराकारयति, न दुःखदुःखतयैव, करुणावत्। **आलम्बनेन त्रैधातुकसत्त्वालम्बनत्वात्**। यस्मात् त्रैधातुकोपपन्नान् सत्त्वान् आलम्बते, न च कामधातूपपन्नानेव, करुणावत्। "कामसत्त्वास्तु गोचर" इति वचनात्।

**समत्वेन सर्वसत्त्वेषु समवृत्तित्वात्**। यस्मात् सर्वसत्त्वेषु त्रैधातुकपर्यापन्नेषु समं वर्तते संस्कारदुःखताकारेण, अतोऽपि महाकरुणेत्युच्यते। **ततोऽधिमात्रतराभावादिति**। प्रज्ञास्वभावतया तीक्ष्णतरत्वात्। यथा हि तया करुणायते, न तथा करुणयेति।

**नानाकरणम्** विशेषः।

**अद्वेषामोहस्वभावत्वादिति**। यथाक्रमं करुणाया अद्वेषस्वभावत्वात्, महाकरुणायाश्चामोहस्वभावत्वादित्यर्थः। **एकत्रिदुःखताकारत्वादिति**। एकदुःखताकारत्वात् करुणायाः, त्रिदुःखताकारत्वाच्च महाकरुणायाः— इत्युभयत्रापि सर्वत्र यथासंख्येन योजयितव्यम्।

**चतुर्ध्यानचतुर्थध्यानभूमि**"कत्वा"दिति। करुणा चतुर्ध्यानभूमिका। अनागम्यध्यानान्तरयोः प्रथमध्यानग्रहणेन ग्रहणात्र षड्भूमिकेत्युक्तम्। महाकरुणा तु चतुर्थध्यानभूमिकैव, सर्वसमाधिकर्मण्यत्वेन तस्यैव तदुत्पादनसमर्थत्वात्। **श्रावकादिबुद्धसन्तानजत्वादिति**। आदिशब्देन प्रत्येकबुद्धपृथग्जनानां ग्रहणम्। **कामभवाग्र-वैराग्यलभ्यत्वादिति**। कामवैराग्यलभ्या करुणा। भवाग्रवैराग्यलभ्या महाकरुणा। **अपरित्राणपरित्राणत** इति। करुणया श्रावकादयः करुणायन्त एव। केवलमनुग्लायन्त्येवेत्यर्थः। न संसारभयात् परित्रायन्ते[2]। **अतुल्यतुल्यकरुणायनात्**। करुणया अतुल्यं करुणायते; दुःखितानामेव करुणायनात्। महाकरुणया तु तुल्यम्; सर्वसत्त्वसमकरुणायनात् ॥ ३३ ॥

---

१. कामधातुभवा०—का०। २. परित्रायते—जा०।

किं पुनः सर्वे बुद्धाः सर्वप्रकारसामान्या भवन्ति ? नेत्याह।

**सम्भारधर्मकायाभ्यां जगतश्चार्थचर्यया।**
**समता सर्वबुद्धानाम्, नायुर्जातिप्रमाणतः॥ ३४॥**

त्रिभिः कारणैः साम्यं सर्वबुद्धानाम्—१. पूर्वपुण्यज्ञानसम्भारसमुदागमतः[1], २. धर्मकायपरिनिष्पत्तितः, ३. अर्थचर्यया च लोकस्य।

आयुर्जातिगोत्रप्रमाणकृतस्तु भेदो भवति। चिराल्पजीवनात्[2], क्षत्रियब्राह्मणजातिभेदात्, काश्यपगौतमादिगोत्रभेदात्, अल्पानल्पप्रमाणभेदाच्च यथाकालमिति।

एतामेव च त्रिविधां सम्पदं मनसिकुर्वाणेन विदुषा शक्यं बुद्धानां भगवतामन्तिके तीव्रप्रेम गौरवं चोत्पादयितुं यदुत हेतुसम्पदम्, फलसम्पदम्, उपकारसम्पदं च।

तत्र चतुर्धा हेतुसम्पत्—सर्वगुणज्ञानसम्भाराभ्यासः[3], दीर्घकालाभ्यासः, निरन्तराभ्यासः, सत्कृत्याभ्यासश्च।

---

**पूर्वपुण्यज्ञानसम्भारसमुदागमत** इति। पूर्वेषु ज्ञानेषु पुण्यसम्भारेण, पूर्वोक्तेन ज्ञानसम्भारेण च समुदागमतः। **धर्मकायपरिनिष्पत्तित** इति। अनास्रवधर्मसम्भारसन्तानो धर्मकायः। आश्रयपरिवृत्तिर्वा। **अर्थचर्यया चेति**। स्वर्गापवर्गकारणम् अर्थो लोकस्य, तस्य सम्पादनम् = अर्थचर्या। तुल्या हि सर्वेषां बुद्धानां महाकरुणा परार्थहेतुः। **यथाकालमिति**। सर्वत्राभिसम्बध्यते। कथम् ? **चिराल्पजीवनाद्** यथाक्रमं दीर्घायुषि प्रजायां **दीर्घायुषो** बुद्धा भवति, अल्पायुषि **अल्पायुषः**। यथासम्भवं क्षत्रियगुरुके लोके **क्षत्रिया** भवन्ति, ब्राह्मणगुरुके **ब्राह्मणाः**। **यथाकालमेव च काश्यपादिगोत्राः**। **गौतमगोत्राश्च**। तथाल्पप्रमाणे लोके **अल्पप्रमाणाः**, अनल्पप्रमाणे **अनल्पप्रमाणा** इति।

**हेतुसम्पदम्**। पुण्यज्ञानसम्भारलक्षणाम्। **फलसम्पदम्** धर्मकायलक्षणाम्। **उपकारसम्पदम्** जगदर्थचर्यालक्षणाम्। **सर्वगुणज्ञानसम्भाराभ्यास** इति गुणाः पञ्चपारमितास्वभावाः। ज्ञानानि[4] च प्रज्ञापारमितास्वभावानि। तेषां सर्वेषां गुणज्ञानानां सम्भारः। तस्याभ्यासः=पुनः पुनः प्रयोगः। **दीर्घकालाभ्यासः** त्रिभिरसंख्येयैर्महाकल्पैः। **निरन्तराभ्यासः** असान्तरतया।

---

१. सर्वपुण्य०—का०।   २. ०ल्पतरजी०—का०।
३. सर्वपुण्यज्ञान०—का०।   ४. ज्ञानानि—जा०।

चतुर्विधा फलसम्पत्—ज्ञानसम्पत्, प्रहाणसम्पत्, प्रभावसम्पत्, रूपकायसम्पच्च ।

चतुर्विधमक्कारसम्पत्—अपायत्रयसंसारदुःखात्यन्तनिर्मोक्षसम्पत्, यानत्रयसुगतिप्रतिष्ठापनसम्पद्वा ।

ज्ञानसम्पत् पुनश्चतुर्विधा—अनुपदिष्टज्ञानम्, सर्वत्रज्ञानम्, सर्वथाज्ञानम्, अयत्नज्ञानम् च ।

चतुर्वि प्रहाणसम्पत्—सर्वक्लेशप्रहाणम्, अत्यन्तप्रहाणम्, सवासनप्रहाणम्, सर्वसमाधिसमापत्त्यावरणप्रहाणं च ।

चतुर्विधा प्रभावसम्पत्—बाह्यविषयनिर्माणपरिणामाधिष्ठान-

---

**सत्कृत्याभ्यासः** तीव्रादरतया । **चतुर्विधाः फलसम्पद** इति । धर्मकायपरिनिष्पत्त्या ज्ञानादिसम्पदश्चतस्रो भवन्तीति ता अपि फलसम्पद इति व्यवस्थाप्यन्ते । ज्ञानसम्पत् चतुर्विधेति वक्ष्यति । तथा प्रहाणसम्पत्, प्रभावसम्पत्, रूपकायसम्पत् च चतुर्विधेति वक्ष्यति । तदेवासां व्याख्यानं भविष्यति । **चतुर्विधोपकारसम्पत्** । कथम् ? इत्याह—**अपायत्रयसंसारदुःखात्यन्तनिर्मोक्षसम्पदिति** । अपायत्रयं च नरकादि, संसारश्च, तयोर्दुःखम् । ततोऽत्यन्तनिर्मोक्षः, सैव सम्पदिति । **यानत्रयसुगतिप्रतिष्ठापनसम्पदिति** । यानत्रये च श्रावकयानादौ, सुगतौ च प्रतिष्ठापनम्, सैव सम्पदिति । इयं वा चतुर्विधोपकारसम्पत् ।

**अनुपदिष्टज्ञानमिति** । स्वयमभिसम्बोधनार्थेन । **सर्वत्र ज्ञानमिति** । निरवशेषस्वलक्षणावबोधनार्थेन । **सर्वथाज्ञानमिति** । सर्वप्रकारावबोधनार्थेन । **अयत्नज्ञानमिति** । इच्छामात्रावबोधनार्थेन ।

**सर्वक्लेशप्रहाणमिति** । त्रैधातुकदर्शनभावनाहेयक्लेशोच्छित्तेः । **अत्यन्तप्रहाणमिति** । अपरिहाणितः । **सवासनाप्रहाणमिति** । अनुबन्धाभावतः । **सर्वसमाधिसमापत्त्यावरणप्रहाणमिति** । उभयतोभागविमुक्तेः ।

**बाह्यविषयनिर्माणपरिणामाधिष्ठानवशित्वसम्पदिति** । तत्रापूर्वबाह्यविषयोत्पादनं निर्माणम्, अश्मादीनां सुवर्णादिभावापादनं परिणामः, दीर्घकालावस्थानमधिष्ठानमिति । आयुष उत्सर्गेऽधिष्ठाने च वशित्वसम्पद् **आयुरुत्सर्गाधिष्ठानवशित्वसम्पदिति** । **आवृतेति** विस्तरः । आवृतगमनं च, आकाशगमनं च, सुदूर-क्षिप्रगमनं च ।[1] अल्पे बहूनां प्रवेशः

---

१. ब्राह्मणादिति अनवद् एकशेषः । —इत्येनावानधिकः पाठोऽत्र जा० पुस्तके मुद्रितो दृश्यते ।

वशित्वसम्पत्[1], आयुरुत्सर्गाधिष्ठानवशित्वसम्पत्, आवृताकाशसुदूरक्षिप्रगमनाल्पबहुत्वप्रवेशवशित्वसम्पत्[2], विविधनिजाश्चर्यधर्मसम्पच्च।

चतुर्विधा रूपकायसम्पत्—लक्षणसम्पत्, अनुव्यञ्जनसम्पत्, बलसम्पत्, वज्रसारास्थिशरीरतासम्पत्[3]। इति।

एतत् सामासिकं बुद्धानां माहात्म्यम्।

अनन्तप्रभेदं तु तद्भिद्यमानं जायते। तच्च पुनर्बुद्धा एव सकलं ज्ञातुं वक्तुं च समर्थाः, यद्यनेकासंख्येयकल्पं[4] जीवितमधितिष्ठेयुः। एवं च तावदनन्ताद्भुतगुणज्ञानप्रभावोपकारमहारत्नाकरास्तथागताः।

---

परमाणौ बहूनां हस्त्यादीनां प्रवेशः, स चेति **आवृताकाश-सुदूर-क्षिप्रगमनाल्पबहुप्रवेशः**। तयोर्वशित्वसम्पदिति योज्यम्। **विविधा** नानाप्रकारा **निजाः** स्वाभाविकाः। के? आश्चर्यधर्माः। तेषां सम्पदिति योज्यम्। धर्मतैषा बुद्धानां भगवतां यत् तेषां गच्छतां निम्नस्थलं च समीभवति, यदुच्चं तन्नीचीभवति, यन्नीचं तदुच्चीभवति। अन्धाश्च चक्षूंषि प्रतिलभन्ते, बधिराः श्रोत्रम्, उन्मत्ताः स्मृतिमिति **यथासूत्रं** सर्वमनुसर्तव्यम्।

**लक्षणसम्पदिति**। द्वात्रिंशतां महापुरुषलक्षणानां ऊर्णोष्णीषादीनां सम्पत्। **अनुव्यञ्जन सम्पदिति**। वृत्ताङ्गुलिताम्रतुङ्गनखत्वादीनामशीतेरनुव्यञ्जनानां सम्पत्। **बलसम्पत्**। नारायणं बलम्। वज्रसाराण्यस्थीन्यस्येति वज्रसारास्थि, वज्रसारास्थि शरीरमस्येति वज्रसारास्थिशरीरः, तद्भावः, तस्य सम्पदिति **वज्रसारादिशरीरतासम्पदिति**।

**एतत् सामासिकं** सापेक्षिकम्। ये केचित् प्रसादजाताः सत्पुरुषाः बुद्धं भगवन्तमस्ताविषुः, स्तुवन्ति, स्तोष्यन्ति वा। सर्वे ते एतयैव त्रिविधया सम्पदेति[5]। यद्यनेके असंख्येयाः कल्पा अस्येति **अनेकासंख्येयकल्पं जीवितम्**, तद्यदि **अधितिष्ठेयुर्बुद्धा भगवन्तः एवं ते सकलं तन्माहात्म्यं ज्ञातुं वक्तुं च समर्थाः**। तस्यानन्तप्रभेदत्वेनातिबहुत्वादित्यभिप्रायः। **एवं च तावदिति** विस्तरः। **गुणाश्च ज्ञानानि च प्रभावश्चोपकारश्चेति** द्वन्द्वः। अनन्ताश्च तेऽद्भुताश्चेति पुनः कर्मधारयः। एत एव **महारत्नानि**। तेषामाकारास्तथागताः।

---

१. ०णामना०—का०।

२. ०काशदूर० प्रवेशन०—का०।

३. ०स्थिसम्पत्—का०।

४. ०ख्येयं कल्पं—का०। ५. सम्पदिति—जा०।

अथ च पुनर्बालाः स्वगुणदारिद्र्यहताधिमोक्षाः शृण्वन्तोऽपि तां तादृशीं गुणसमृद्धिं बुद्धं च नाद्रियन्ते, तस्य च धर्मम् ।

पण्डितास्तु पुनर्मज्जाभिरपि तं भगवन्तमभिप्रपद्यन्ते, तस्य च धर्मम् । ते हि श्रद्धामात्रकेणाप्यैकान्तिकेनाभिप्रसन्ना अनियतविपाकानां पापानां राशीनभिभूय दैवीं मानुषीं च श्रियमभिभूय निर्वाणपरायणाः संवर्तन्ते ।

अतएव तथागता अनुत्तरं पुण्यक्षेत्रमुच्यन्ते; अबन्ध्येष्टप्रकृष्टाशुस्वन्तफलत्वात् ।

उक्तं हि **भगवता**–

"येऽन्यानपि जिने कारान् कारष्यन्ति विनायके ।
विचित्रं स्वर्गमागम्य ते लप्स्यन्तेऽमृतं पदम् ॥" (  ) इति ।

इमे तावदष्टादश बुद्धानामावेणिका धर्मा उच्यन्ते ॥ ३४ ॥

**शिष्यसाधारणा अन्ये धर्माः,**

श्रावकसाधारणास्त्वन्ये गुणा बुद्धानाम् ।

**केचित् पृथग्जनैः ।**

के पुनस्ते इति ? यथायोगम्

**अरणाप्रणिधिज्ञानप्रतिसंविद्गुणादयः ॥ ३५ ॥**

---

**अथ च पुनर्बालाः** पृथग्जनाः **स्वगुणदारिद्र्ये**णानुमानभूतेन **हताधिमोक्षाः** हतरुचयः यावत् **बुद्धं नाद्रियन्ते** । बुद्धे नादरं कुर्वन्तीत्यर्थः ।

**श्रद्धामात्रकेणापी**ति । निरधिगमेनेत्यर्थः । **अनियतविपाकानामि**ति । नियतविपाकानामलङ्घनीयत्वादित्यभिप्रायः । देवेषु भवा **दैवी** । **अबन्ध्येष्टप्रकृष्टाशुस्वन्तफलत्वादि**ति । अबन्ध्यफलं फलदाननैयम्येनावस्थानात् । इष्टफलं दिव्यविपाकफलत्वात् । प्रकृष्टफलं प्रभूतफलत्वात् । आशुफलं दृष्टधर्मादिवेदनीयफलत्वात् । स्वन्तफलं निर्वाणफलत्वात् । तद्भावात् । **अनुत्तरं पुण्यक्षेत्रमुच्यते तथागत** इति ।

**कारानि**ति । उपकारान् पूजादिकान् ॥ ३४ ॥

**यथायोगमि**ति । यथासम्भवम् । केचिद् गुणाः **श्रावकसाधारणाः** बुद्धानां भगवतां **अरणा-प्रणिधि-ज्ञानादयः** । केचित् **पृथग्जनसाधारणाः**

अरणाप्रणिधिज्ञानप्रतिसंविदभिज्ञाध्यानारूप्याप्रमाणविमोक्षाभिभ्वायतनकृत्स्नायतनादयः ।। ३५ ।।

तत्रारणा नाम कश्चिदेवार्हन् क्लेशप्रभवं सत्त्वानां दुःखं विदित्वा, आत्मानं च दक्षिणीयविशेषम्, परेषां तदालम्बनं क्लेशोत्पादं परिहर्तुकामस्तादृशं ज्ञानमुत्पादयति येन परेषां सर्वथापि रणं नोत्पादयति। न कस्यचित्तदालम्बनो राग उत्पद्यते, द्वेषः, मानो वा। नैषा प्रतिपत् कञ्चिदेव रणयतीत्यरणा। सा पुनरेषा—

**संवृतिज्ञानमरणा,**

अयमस्याः स्वभावः।

**ध्यानेऽन्त्ये,**

चतुर्थध्यानभूमिका, सुखप्रतिपदामग्रत्वात्।

**अकोप्यधर्मणः।**

नान्यस्यार्हतः। अन्यो हि स्वसन्तानादपि कदाचित् क्लेशरणं परिहर्तुं न शक्नोति।

**नृजा,**

मनुष्येष्वेवोत्पद्यते त्रिषु द्वीपेषु।

---

अभिज्ञा-ध्यानारूप्यादयः। आदिशब्देन शून्यतानिमित्ताप्रणिहितादयो गृह्यन्ते ।। ३५ ।।

**न कस्यचित्तदालम्बनो राग उत्पद्यते द्वेषो मानो वेति।** तेनात्मनो दर्शनादिपरिहारात्। यथा यथा च तेनाभिसमितं भवति अरणासमाधेरभ्युत्थितेनास्य मां दृष्ट्वा राग उत्पत्स्यते, अस्य द्वेषः, अस्य मानः, अस्याप्रसाद उत्पत्स्यत इति; तथा तथा व्युत्थितोऽपि तस्मात् समाधेरनुवेष्टते। परचित्तरक्षणोपायविशेषे तु तस्यारणासमाधेरुत्पत्तिमात्रसामर्थ्यादेव परेषां क्लेशो नोत्पद्यत इत्यर्थो गृह्यते। **रणयतीति।** क्लेशयतीत्यर्थः। सुखप्रतिपदामग्रत्वाच्च चतुर्थध्यानस्य तद्भूमिकैवारणा, नान्यभूमिका।

**परिहर्तुं न शक्नोतीति।** परिहाणिसम्भवात्।

**अनुत्पन्नकामाप्तसवस्तुक्लेशगोचराः ॥ ३६ ॥**

अनागताः कामावचराः सवस्तुकाः क्लेशाः अस्या आलम्बनम्; नापरेषां क्लेश उदपादीत्येवं प्रवृत्तत्वात् । अवस्तुकास्तु क्लेशा न शक्याः परिहर्तुम्; सर्वत्रगाणां सकलस्वभूम्यालम्बनत्वात् ॥ ३६ ॥

यथा चारणोक्ता,

**तथैव प्रणिधिज्ञानम्,**

तदपि हि संवृतिज्ञानं ध्यानेऽन्त्येऽकोप्यधर्मणः, मनुष्याश्रयं च ।

**सर्वालम्बं तु तत्,**

सर्वधर्मालम्बनं तु प्रणिधिज्ञानमित्येव विशेषः । आरूप्यास्तु न साक्षात् प्रणिधिज्ञानेन ज्ञायन्ते । किं तर्हि ? निष्यन्दचरितविशेषात्[1] । कार्षकनिदर्शनं[2] चात्रेति **वैभाषिकाः** । प्रणिधिपूर्वकं ज्ञानं प्रणिधिज्ञानम् । यद्धि

---

**सवस्तुकाः क्लेशाः** । के ? रागादयो भावनाप्रहातव्या । **अवस्तुकाः क्लेशाः** । दर्शनप्रहातव्याः । **सर्वत्रगाः** । सकलस्वभूम्यालम्बनत्वात् परसन्तत्यालम्बना अपि भवन्तीति परिहर्तुमशक्याः सर्वत्रगाः ॥ ३६ ॥

"**सर्वालम्बनं तु तत्**" इति । सर्वमालम्बत इति सर्वालम्बनम् । सर्वो वाऽस्यालम्बन इति सर्वालम्बनम् । नारणत्वात् क्लेशमात्रालम्बनम्, किं तर्हि ? रूपाद्यालम्बनपीत्यर्थः । **आरूप्यास्तु न साक्षात् प्रणिधिज्ञानेन ज्ञायन्ते** । किं कारणम् ? यस्मात् प्रणिधिज्ञानं चतुर्थध्यानभूमिकम् । वक्ष्यति च—"स्वाधोभूमिविषया लभ्या[3]" (अभि० को० ७.४४) इति ।

प्रणिधिज्ञानं चाभिज्ञात्वाद् भवतीति । **निष्यन्दचरितविशेषादिति** । तत्र निष्यन्दः=मन्दमन्दता ।
कार्येणास्यानुमानम्, कारणेन च कार्यस्येति परिदीपितम् । ततः प्रच्युतानां तत्समापत्तिलाभिनां च तदुभयं प्रत्यक्षम् । **कार्षकनिदर्शनं चात्रेति** । यथा कार्षकः फलेन बीजं प्रतिपद्यते, बीजेन वा फलमिति । यथा वा कार्षको

---

१. ०निष्पन्न०—का० ।

२. कर्षक०—का० ।

३. स्वाधो भूमिविषयाभिज्ञा—जा० ।

प्रणिधाय प्रान्तकोटिकं चतुर्थं ध्यानं समापद्यते। इदं जानीयामिति तद्यथाभूतं जानाति यावांस्तत्समाधिविषयः[1]।

**तथा।**

**धर्मार्थयोर्निरुक्तौ च प्रतिभाने च संविदः ॥ ३७ ॥**

चतस्रो हि प्रतिसंविदः—धर्मप्रतिसंवित्, अर्थप्रतिसंवित्, निरुक्तिप्रतिसंवित्, प्रतिभानप्रतिसंविच्च। ता अपि धर्मार्थनिरुक्तिप्रतिभानप्रतिसंविदस्तथैव, यथा अरणा। किमासां तथैव ? अकोप्यधर्ममनुष्याश्रयत्वम्। आलम्बनभूमिस्वभावविशेषस्त्वासां पृथगुच्यते ॥ ३७ ॥

**तिस्रो नामार्थवाग्ज्ञानमविवर्त्यं यथाक्रमम्।**

नामपदव्यञ्जनकायेष्वर्थवाचिता, अविवर्त्यज्ञानम्, धर्मार्थनिरुक्तिप्रतिसंविदो यथाक्रमम्।

**चतुर्थीयुक्तमुक्ताभिलापमार्गवशित्वयोः ॥ ३८ ॥**

---

जानीते—ईदृशे क्षेत्रे ईदृशफलं धान्यं भविष्यतीति, धान्यं वा दृष्ट्वा क्षेत्रमनुमिनोति—ईदृशमस्य क्षेत्रमिति। एवं शान्तमूर्ति सत्त्वं दृष्ट्वा अनुमिनोति—आरूप्ये च्युतोऽयम्, आरूप्येषु चोत्पत्स्यते इति। **वैभाषिका** इति वचनं परेषामस्त्यनेनारूप्यज्ञानमिति सूचयति। न हि बुद्धानामस्त्यविषय इति अभिप्रायः। **प्रणिधिपूर्वकमिति** आभोगपूर्वकम्। **प्रणिधाय** आभुज्येत्यर्थः। **यावाँस्तत्समाधिविषय** इति। यावान् श्रावकस्य विषयः तावान् जानाति। प्रत्येकबुद्धस्य च, यावत्, स्वविषय इत्यादि।

**धर्मप्रतिसंविदिति**। इह देशना धर्मः। अनेकार्थो हि धर्मशब्दः। तद्यथा—"धर्मं वा भिक्षवो देशयिष्यामि, आदौ कल्याणं मध्ये कल्याणं पर्यवसाने कल्याणम् स्वर्थं सुव्यञ्जनं केवलं परिपूर्णं परिशुद्धं ब्रह्मचर्यं सम्प्रकाशयिष्यामि" (  ) इत्यत्र देशनाधर्मः। "धर्मः कतमः ? आर्याष्टाङ्गमार्गः" (  ) इत्यत्र प्रतिपत्तिधर्मः। तथा "धर्मं शरणं गच्छामि" (  ) इत्यत्र फलधर्मो निर्वाणमित्यादि। **अविवर्त्यमिति**। अशक्यं विवर्तयितुम्। **अकोप्यधर्म-मनुष्याश्रयत्वमिति**। तथा-शब्देनेदमेवार्थद्वयं सम्बध्यते; आलम्बनादीनां पृथग्वचनात् ॥ ३७ ॥

---

१. सर्वंस्तत्०—का०।

'अविवर्त्यं ज्ञानम्' इति वर्तते । युक्तमुक्ताभिलापिताया समाधिवशि-सम्प्रख्यानम्[1], तत्र चाविवर्त्यं ज्ञानं प्रतिभानप्रतिसंवित्[2] ।। ३८ ।।

**वाङ्मार्गालम्बना चासौ,**

वाक्च मार्गश्च तस्याः आलम्बनम् ।

**नव ज्ञानानि,**

नवज्ञानस्वभावा प्रतिभानप्रतिसंविद्; अन्यत्र निरोधज्ञानात् ।

**सर्वभूः ।**

सर्वभूमिका चासौ कामधातौ यावत् भवाग्रे; वाङ्मार्गयोरन्यतरा-लम्बनात् ।

**दश षड् वाऽर्थसंवित्,**

अर्थप्रतिभानसंवित् सर्वधर्माश्चेदर्थ.[3], दश ज्ञानानि । निर्वाणं चेदर्थः, षड् ज्ञानानि

**युक्तमुक्ताभिलापितायामिति** । युक्तमर्थसम्बन्धम्, मुक्तमशक्तम्, युक्तमुक्तमभिलपनीनि युक्तमुक्ताभिलापी. तद्भावः, तस्याम् युक्तमुक्ताभिलापितायाम् । समाधौ वशी समाधिवशी, समाधिवशिनः सम्प्रख्यानम् = असम्मोषः **समाधिवशिसम्प्रख्यानम्, तत्र चाविवर्तव्यं ज्ञानं प्रतिभानप्रतिसंविदिति** विशेष ।। ३८ ।।

कथं **नवज्ञानस्वभावा प्रतिभानप्रतिसंवित्** । या वागालम्बना सा दुःखसमुदयधर्मान्वयक्षयानुत्पादसंवृतिज्ञानस्वभावा, या मार्गालम्बना सा मार्गधर्मान्वयक्षयानुत्पादपरचित्तसंवृतिज्ञानस्वभावा—इत्यभिसमस्य नवज्ञान-स्वभावा; **अन्यत्र निरोधज्ञानात् ।**

**सर्वधर्माश्चेदर्थो दश ज्ञानानीति** । न हि सोऽस्ति धर्म', यो दशानां ज्ञानानां यथासम्भवं नालम्बनीभवति । **निर्वाणं चेदर्थः, षट् ज्ञानानीति** । निरोधज्ञानस्य धर्मज्ञानादिपञ्चस्वभावत्वात् ।

---

१ ०प्रख्याने --का० ।

२. प्रतिभानसंवित्--का० ।

३. ०दर्था—का० ।

**सा सर्वत्र,**

सा पुनरेषाऽर्थप्रतिसंवित् सर्वभूमिका ।

**अन्ये तु सांवृतम् ॥ ३९ ॥**

अन्ये तु द्वे धर्मानिरुक्तिप्रतिसंविदौ संवृतिज्ञानस्वभावे; नामकायादिवागालम्बनस्वभावत्वात् ॥ ३९ ॥

**कामध्यानेषु धर्मे वित्,**

धर्मप्रतिसंवित् पञ्चभूमिका
नामकायाभावात् ।

**वाचि प्रथमकामयोः ।**

वाङ्निरुक्तिरित्येकोऽर्थः । निरुक्तिप्रतिसंवित्कामधातुप्रथमध्यानभूमिका; ऊर्ध्वं वितर्काभावात् ।

**प्रज्ञप्तौ** तु प्रतिसंविदामेव निर्देशः । "पदव्यञ्जने तस्यैवार्थे तस्यैकद्विबहुस्त्रीपुरुषाद्यधिवचने तस्यासक्ततायामविवर्त्यज्ञानं धर्मादिप्रतिसंविद"

**नामकायादिवागालम्बनत्वादिति ।** न हि दुःखादिज्ञानमनास्रवं दुःखैकदेशं समुदयैकदेशं वा स्वलक्षणाकारेणालम्बते, किं तर्हि ? पञ्चोपादानस्कन्धान् सामान्यलक्षणाकारैः । **अतस्ते संवृतिज्ञानस्वभावे** इति ॥ ३९ ॥

**ऊर्ध्वं नामकायाभावादिति ।** आरूप्यधातौ धर्मप्रतिसंविन्नास्तीति । यत्र च नामकायाः तत्रैव पदव्यञ्जनकाया इति तुल्यवार्त्ता । नामकायाभाववचनेन पदव्यञ्जनकायाभावसिद्धिः ।

**ऊर्ध्वं वितर्काभावादिति ।** द्वितीयध्यानादिषु । वितर्क्य विचार्य वाचं भाषते" इति सूत्रम् । नामाद्यालम्बनत्वं पुनरासां प्रतिसंविदां समापन्नस्यापि । व्युत्थितस्यापि
भाषणं पुनस्तत्पृष्टेनैव ।

**स्त्रीपुरुषाद्यधिवचन इति ।** आदिशब्देन कालकारकादिसंग्रहः । अधिवचनं पुनः पर्यायः । तदधिकृत्य वा वचनं तदधिवचनम् । **तस्यासक्त-**

इति। अत एवासां क्रमसिद्धिः। निर्वचनम्=निरुक्तिः। यथा—रूप्यते तस्माद्रूपमित्येवमादि। उत्तरोत्तरप्रतिभा प्रतिभानमित्यपरे।

आसां च किल प्रतिसंविदां गणितं बुद्धवचनं शब्दविद्या हेतुवि'' च पूर्वप्रयोगो यथाक्रमम्। नाप्येतेष्वकृतकौशलस्ता उत्पादयितुं शक्नोति।

बुद्धवचनमेव तु सर्वासां प्रयोगं वर्णयन्ति। यस्य चैका तस्याव' चतस्रः प्रतिसंविदो भवन्ति।

**विकलाभिर्न तल्लाभी,**

नहि विकलाभिस्ताभिः प्रतिसंविल्लाभी भवति।

ये चैत उपदिष्टा अरणादयो गुणाः,

**षडेते प्रान्तकोटिकाः ॥ ४० ॥**

प्रान्तकोटिकध्यानबलेनैषां लाभः ॥ ४० ॥

**तत्षड्विधम्,**

तदपि प्रान्तकोटिकं चतुर्थं ध्यानं षडात्मकम्। अरणाप्रणिधिज्ञानं तिस्रः प्रतिसंविदः। तदेव प्रान्तकोटिकम्। निरुक्तिप्रतिसंविदस्तद्बलेन लाभः, न तु सा चतु[illegible]।

---

**तायामिति।** तस्याधिवचनस्य, तस्य पदव्यञ्जनस्य वा। **अत एवासां क्रमसिद्धिरिति।** यथा [illegible]. तस्यैकद्वि बहुस्त्री-पुरुषाद्यधिवचनम्, तस्यासक्तता—इत्यतः क्रमसिद्धिरिति।

**तस्माद् रूपमित्येवमादि।** आदिशब्देन विजानातीति विज्ञानम्, चिनोतीति चित्तम्—इत्येवमादिसंग्रहतः। **उत्तरोत्तरप्रतिभा प्रतिभानमिति** वादन्यायेन।

**यथाक्रममिति।** धर्मप्रतिसंविदो गणितं पूर्वप्रयोगः। अर्थप्रति-संविदो बुद्धवचनम्। निरुक्तिप्रतिसंविदः शब्दविद्या। प्रतिभानप्रति-संविदो हेतुविद्येति। बुद्धवचनमेवेति **वैभाषिकाः** ॥ ४० ॥

**"तत्षड्विधम्"** इति। किञ्चित् चतुर्थं ध्यानम**रणात्मकम्,** किञ्चित् **प्रणिधिज्ञानात्मकम्।** किञ्चित् **त्रिप्रतिसंविदात्मकम्।** किञ्चित् तद्व्याकृतं केवलं **प्रान्तकोटिकम्** इति। **तिस्रः प्रतिसंविद** इति। निरुक्तिप्रतिसंविदं मुक्त्वा तत्र वितर्काभावात्। सवितर्कविचारेण तदुत्थापनम्।

कथं तर्ह्यविशेषेणैतदुक्तम्—'षडेते प्रान्तकोटिकाः' (अभि० को० ७.४०) इति? एते उच्यन्ते **निरुक्तिप्रतिसंविदः तद्बलेन लाभो न तु सा**

किं पुनरिदं प्रान्तकोटिकं नाम ?

**ध्यानमन्त्यम्,**

चतुर्थं ध्यानम् ।

**सर्वभूम्यनुलोमितम् ।**

**वृद्धिकाष्ठगतं तच्च,**

कथं सर्वभूम्यनुलोमितम् ? कामावचराच्चित्तात् प्रथमं ध्यानं समापद्यते, ततो द्वितीयम्, एवं क्रमेण यावन्नैवसंज्ञानासंज्ञायतनम् ।

प्रतिलोमं पुनर्यावत् कामावचरं चित्तम् । ततः पुनरनुलोमं यावच्चतुर्थध्यानम् । एवं सर्वभूम्यनुलोमितम् ।

कथं वृद्धिकाष्ठागतम् ? [illegible] मध्यम्, मध्यादधिमात्रं समापद्यते । वृद्धिप्रकर्षो हि वृद्धिकाष्ठा । इदमीदृशं प्रान्तकोटिकम्, प्रगताऽन्ता[1] कोटिरस्येति कृत्वा । कोटिः पुनरत्र वृद्धिः, प्रकारो वा । चतुष्कोटिकवत् ।

एते पुनः बुद्धगुणाः —

**बुद्धान्यस्य प्रयोगजाः ॥ ४१ ॥**

बुद्धादन्यस्य प्रायोगिकाः, न वैराग्यलाभिकाः । बुद्धस्य नास्ति किञ्चित् प्रायोगिकम् । तस्य सर्वधर्मेश्वरत्वादिच्छामात्रप्रतिबद्धः भावः । इमे [illegible] अभिज्ञादयः

केयभिज्ञा नाम ?

**ऋद्धि-श्रोत्र-मनः-पूर्वजन्म-च्युत्युदय-क्षये ।**
**ज्ञानसाक्षीक्रियाभिज्ञा षड्विधा**

---

**चतुर्थध्यानभूमिका ।** कि तर्हि ? [illegible] ।

**"सर्वभूम्यनुलोमितम्"** इति । सर्वभूम्यनुकूलितमित्यर्थः । **प्रगता अन्ता कोटिरस्येति ।** प्रगता अन्तं प्रान्ता । प्रान्ता कोटिरस्येति प्रान्तकोटिका, **चतुष्कोटिकवदिति ।** यथा चतुष्कोटिकः चतुःप्रकारप्रश्नस्तद्वत् ॥ ४१ ॥

**ऋद्धिविषयेति** विस्तरः । **षडभिज्ञाः । ऋद्धिविषयज्ञानसाक्षात्क्रिया-**

---

१. अन्त०—का० ।

ऋद्धिविषया[1] ज्ञानसाक्षात्क्रिया अभिज्ञा। दिव्यश्रोत्र-चेतःपर्याय-निवासानुस्मृति-च्युत्युपपादास्रवक्षयज्ञानसाक्षात्क्रिया[2] अभिज्ञाः। एताः

---

दिव्यचेतःपर्यायपूर्वनिवासच्युत्युपपादास्रवक्षयज्ञानसाक्षात्क्रियाभिज्ञा इति। सूत्रं चात्र—

"इह भिक्षुरनेकविधम् ऋद्धिविषयं प्रत्यनुभवति। एको भूत्वा वहुधा भवति, वहुधा भूत्वा एको भवति" इति विस्तरग्रन्थे ऋद्धिपादा इत्यत्र लिखितो द्रष्टव्यः। यावत्, "इयमुच्यते—ऋद्धिविषयज्ञानसाक्षात्क्रियाभिज्ञेति। इह भिक्षुर्दिव्येन श्रोत्रेण विशुद्धेनातिक्रान्तमानुष्यकेन उभयान् शब्दान् शृणोति—मानुषान् अमानुषानपि, ये वा दूरे ये वा अन्तिके इति इयमुच्यते—दिव्यश्रोत्रज्ञानसाक्षात्क्रियाभिज्ञा। इह भिक्षुर्दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेन सत्त्वान् पश्यति" इति वहुः सूत्रवद् ग्रन्थः। यावद् "इयमुच्यते दिव्यचक्षुर्ज्ञानसाक्षात्क्रियाभिज्ञा। इह भिक्षुरनेकविधं पूर्वनिवासमनुस्मरति" इति सूत्रवद् ग्रन्थः। "इयमुच्यते—पूर्वनिवासानुस्मृतिज्ञानसाक्षात्क्रियाभिज्ञा। इह भिक्षुः परसत्त्वानां परपुद्गलानां वितर्कितं विचारितं[3] मनसा मानसं यथाभूतं प्रजानाति। सरागचित्तं 'सरागं चित्तम्' इति यथाभूतं प्रजानाति, विगतरागं 'विगतरागम्' इति यथाभूतं प्रजानाति, सद्वेषम्, विगतद्वेषम्, समोहम्, विगतमोहम्, विक्षिप्तम्, संक्षिप्तम्, लीनम्, प्रगृहीतम्, उद्धतम्, अनुद्धतम्, अव्युपशान्तम्, व्युपशान्तम्, समाहितम्, असमाहितम्, अभावितम्, भावितम्, अविमुक्तं चित्तम् 'अविमुक्तं चित्तम्' इति यथाभूतं प्रजानाति। विमुक्तं चित्तं 'विमुक्तं चित्तम्' इति यथाभूतं प्रजानाति, इयमुच्यते—प्रत्ययज्ञानसाक्षात्क्रियाभिज्ञा। इह भिक्षुः 'इदं दुःखमार्यसत्यम्' इति यथाभूतं प्रजानाति, 'अयं दुःखसमुदयः', 'अयं दुःखनिरोधः', 'इयं दुःखनिरोधगामिनी प्रतिपद् आर्यसत्यम्' इति यथाभूतं प्रजानाति, तस्यैवं जानत एवं पश्यतः कामास्रवाच्चित्तं विमुच्यते, भवास्रवाच्चित्तं विमुच्यते, अविद्यास्रवाच्चित्तं विमुच्यते, विमुक्तस्य 'विमुक्तोऽस्मि' इति ज्ञानदर्शनं भवति—'क्षीणा मे जातिः, यावत्, नायमस्मात् भवं प्रजानामि' इति। इयमुच्यते—आस्रवक्षयज्ञानसाक्षात्क्रियाभिज्ञा।"

ऋद्धिः=समाधिः। ऋद्धिविषयो निर्माणं गमनं च ऋद्धिविषये ज्ञानम्, तस्य साक्षात्क्रिया = सम्मुखीभावः—

दिव्यं श्रोत्रम्, तत्र ज्ञानम्, तस्य साक्षात्क्रिया—दिव्यश्रोत्रज्ञानसाक्षात्क्रिया।

---

१. ०विषये—का०। २. ०पूर्वनिवासा०त्युत्पादा०—का०।

३. विचरितं—जा०।

षडभिज्ञाः । आसां पञ्च पृथग्जनैः साधारणाः ।

सर्वास्त्वेताः—

**मुक्तिमार्गधीः ॥ ४२ ॥**

विमुक्तिमार्गप्रज्ञास्वभावाः श्रामण्यफलवत् ॥ ४२ ॥

**चतस्रः संवृतिज्ञानम्,**

चेतःपर्यायास्रवक्षयज्ञानाभिज्ञे हित्वा ।

**चेतसि ज्ञानपञ्चकम् ।**

चेतःपर्यायाभिज्ञा पञ्च धर्मान्वयमार्गसंवृतिपरचित्तज्ञानानि ।

**क्षयाभिज्ञा बलं यद्वत्,**

यथास्रवक्षयज्ञानबलमुक्तं तथा वेदितव्या । षड् दश ज्ञानानीति ।

---

पर्यायो विशेषः । रक्तं द्विष्टं मूढमिति वा क्रमो वा पर्यायः । कदाचित् रक्तम्, कदाचिद् द्विष्टम् मूढं चेति, तत्र ज्ञानम्, तस्य साक्षात्क्रिया । पूर्वे निवासः, 'स्कन्धेगः' इवालुक्, तस्यानुस्मृतिः, तत्र ज्ञानम्, तस्य साक्षात्क्रियेति । च्युतिश्चोपपादश्च च्युत्युपपादौ, तयोर्ज्ञानम्, तस्य साक्षात्क्रिया । आस्रवाणां क्षयः, तत्र ज्ञानम्, तस्य साक्षात्क्रियाभिज्ञेति प्रत्येकमभिसम्बन्धः ।

**श्रामण्यफलव**दिति । यथा संस्कृतं श्रामण्यफलं विमुक्तिमार्गस्वभावम्, तद्वत् ॥ ४२ ॥

"**चेतसि ज्ञानपञ्चकम्**" इति । चेतसि चेतःपर्यायैर्याभिज्ञा, सा **ज्ञानपञ्चकस्वभावे**त्यर्थः । अनास्रवस्य परचित्तज्ञानस्य **धर्मान्वयमार्ग**परचित्त-ज्ञानत्वसम्भवात् । सास्रवस्य च **संवृतिपरचित्तज्ञान**सम्भवात् ।

"**बलं यद्वत्**" इति । यथा आस्रवक्षयज्ञानबलम् । आस्रवक्षयज्ञानमास्रव-क्षयालम्बनमिति चेत् ? षट् ज्ञानानि । निरोधज्ञानस्य धर्मान्वयक्षयानुत्पाद-ज्ञानसंज्ञितत्वात् । संवृतिज्ञानस्य च निरोधालम्बनत्वसम्भवात् । आस्रवक्षये सति यज्ज्ञानं क्षीणास्रवसन्ताने दशज्ञानसद्भावात् । एवमास्रवक्षये आलम्बन-भूते याऽभिज्ञा सा चेदास्रवक्षयज्ञानसाक्षात्क्रियाभिज्ञा. **षड् ज्ञानानि** । **तद्वत्** । आस्रवक्षये सति याऽभिज्ञा **सा चेत्, दश ज्ञानानि तद्व**दिति ।

सर्वभूमिकाऽप्येषा तथैव ज्ञातव्या ।

शेषास्तु

**पञ्च ध्यानचतुष्टये ॥ ४३ ॥**

पञ्चाभिज्ञाः चतुर्थध्यानभूमिकाः ।

कस्मादारूप्यभूमिका न सन्ति ? तिसृस्तावन्न सन्ति; रूपालम्बनत्वात् । चेतःपर्यायाभिज्ञापि नास्ति; रूपतीर्थाभिनिष्पाद्यत्वात्[1] । पूर्वेनिवासस्मृतिरप्यनुपूर्वावस्थान्तरस्मरणाभिनिष्पत्तेः । स्थानगोत्राद्यालम्बनत्वाच्च ।

---

**सर्वभूमिकाप्येषेति** । 'वलं यद्वद्' इत्यनेनैव वचनेनायमर्थो लभ्यते । यस्माच्च 'पञ्चैव ध्यानचतुष्टये' इत्यवधार्यते, तस्मादपीयं षष्ठ्यभिज्ञा सर्वभूमिकेति गम्यते ।

**तिस्रास्तावन्न सन्तीति** । ऋद्धि-दिव्यश्रोत्र-दिव्यचक्षुरभिज्ञाः । कस्मात् ? **रूपालम्बनत्वात्** । नह्यारूप्याणां रूपमालम्बनम्; विभूतरूपसंज्ञात्वात् । **रूपतीर्थाभिनिष्पाद्यत्वादिति** । रूपत्वद्वारनिष्पाद्यत्वात् । रूपालम्बनमार्गनिष्पाद्यत्वादित्यर्थः । ईदृशे रूपे इदृशं भवतीति । न चारूप्याणां रूपमालम्बनम् । **पूर्वनिवासानुस्मृतिरपि नास्ति; अनुपूर्वावस्थान्तरस्मरणाभिनिष्पत्तेः** । यस्मादनुपूर्वमात्मनाऽवस्थान्तराणि स्मरन्तो निष्पीडयन्ति, न चारूप्याणा कामावचरा धर्मा आलम्बनम् । वक्ष्यति हि—"न मौलाः कुशलारूप्याः सास्रवाधरगोचराः" (अभि० को० ८.२१) इति ।

तानि चावस्थान्तराणि आत्मनः कामावचराण्यभिनिष्पीडनकाले तस्यालम्बनमिति एतस्मात् कारणात् तद्भूमिका नास्तीति । **स्थानगोत्राद्यालम्बनत्वाच्च** । तस्मादपि च्युतोऽमुत्रोपपन्नः । तथा हि—**सूत्र** उक्तम्—"अमी नाम ते सत्त्वाः, यत्राहमभूवम् एवन्नामा, एवंजाति; एवमाहारः, एवंसुखदुःखप्रतिसंवेदी, एवंदीर्घायुः, एवंचिरस्थितिकः, एवमायुःपर्यन्तः । योऽहं तस्मात् च्युतोऽमुत्रोपपन्नः, तस्मादपि च्युतोऽमुत्रोपपन्नः, तस्माच्च्युत इहोपपन्नः—इति साकारं सउद्देशमनेकविधं पूर्वनिवासमनुस्मरति । न चारूप्याः स्थानगोत्राद्यालम्बनाः, अधोभूम्यालम्बनाश्च" इति—एतस्मादपि कारणान्नारूप्यभूमिकाः ।

कथं परचित्तज्ञानं रूपतीर्थाभिनिष्पाद्यमिति ? अत आह—

---

१ ०तिर्थ्या०—का० ।

परचित्तं हि ज्ञातुकाम आत्मनः कायचित्तयोर्निमित्तमुद्गृह्णाति—कीदृशेऽपि मे काये कीदृशं चित्तं भवति। एवं परेषामप्याभुजतश्चित्तज्ञानादभिष्पन्ना भवति। अभिनिष्पन्नायामभिज्ञायां रूपनिरपेक्षो जानाति। पूर्वनिवासं समनुस्मर्तुकामः समनन्तरनिरुद्धमनोविज्ञानो निमित्तमुद्गृह्य प्रातिलोम्येन[1] अवस्थान्तराणि मनसिकरोति। यावत् सन्धिचित्तम्। ततोऽन्तराभवस्यैकक्षणं मरणेऽपि निष्पन्नो भवति। एवं परस्यापि स्मरति अभिनिष्पन्नायां विलङ्घ्यापि स्मरणम्। अनुभूतपूर्वस्यैव स्मरणम्।

शुद्धावासानां कथं स्मरणम्? श्रवणेनानुभूतत्वात्। आरूप्यच्युतस्येहोपपन्नस्य परसन्तत्यधिष्ठानेनोत्पादनम्। अन्येषां स्वसन्तत्यधिष्ठानेन।

ऋद्ध्यादीनां तु लघुत्वशब्दालोकमनसिकरणं प्रयोगः॥ ४३॥

ताः पुनरेताः पञ्चाभिज्ञाः—

**स्वाधोभूविषयाः,**

यद्भूमिका ऋद्ध्यभिज्ञा भवति तां भूमिं तया गच्छति। निर्मिणोति

---

**परचित्तं हि ज्ञातुकाम** इति विस्तरः। **आभुजत** इति। आभोगं कुर्वतः। **निमित्तमुद्गृह्येति**। चित्तप्रकारं परिच्छिद्येत्यर्थः। **तत्प्रातिलोम्येनेति**। तस्यैव चित्तस्य प्रतीपं **समनन्तरनिरुद्धानि अवस्थान्तराणि मनसि करोति विलङ्घ्यापि स्मरणमिति**। एकं जन्म द्वे वा विलङ्घ्यापि व्यतिक्रम्यापि स्मरणम्।

**शुद्धावासानां कथं स्मरणमिति**। यद्यनुभूतपूर्वस्यैव स्मरणम्, न हि शुद्धावासानामिहागमनमस्ति; अनागामित्वात् तेन नैषामिहानुभूतिः। नापि तत्र, पृथग्जनानां तत्रानुपपत्तेः? **श्रवणेनानुभूतत्वादिति**। श्रुतं हि तेन भवति—शुद्धावासा नाम देवा एवम्भूता इति। द्विविधो ह्यनुभवः—दर्शनानुभवः, स्मरणानुभवश्च। **परसन्तत्यधिष्ठानेनोत्पादनमिति**। ध्यानसंगृहीतं पूर्वनिवासानुस्मृतिज्ञानम्, तेन चारूप्यावचरं चित्तं न गृह्णाति। कथं च पुनः परसन्तत्यधिष्ठानेनोत्पादनम्? समनन्तरनिरुद्धान्मनोविज्ञानात् परकीयं निमित्तमुद्गृह्येति विस्तरः। **अन्येषामिति**। ये आरूप्येभ्यो न प्रच्युताः, तेषां **स्वसन्तत्यधिष्ठानेनैवोत्पादनम्**; पूर्वनिवासानुस्मृतिज्ञानस्य सुकरत्वात्।

**ऋद्ध्यादीनामिति**। ऋद्धि-दिव्यश्रोत्र-दिव्यचक्षुरभिज्ञानां तिसृणां यथाक्रमं **लघुत्वमनसिकरणम् ऋद्धेः प्रयोगः**। शब्दमनसिकरणं दिव्यश्रोत्रस्य। आलोकमनसिकरणं दिव्यचक्षुषः॥ ४३॥

---

१. तत्समनन्तरप्राति०—का०।

वा अधराम्, नोत्तराम्। एवं दिव्यश्रोत्राभिज्ञया स्वभूमिकमेव शब्दं शृणोति अधरभूमिकं वा, नोर्ध्वभूमिकम्। चेतःपर्यायाभिज्ञया नोर्ध्वभूमिकं चित्तं जानाति। पूर्वनिवासानुस्मृत्या न स्मरति। च्युतोपपादाभिज्ञया न पश्यति।

अत एवारूप्यभूमिकं चित्तं चेतःपर्यायपूर्वनिवासाभिज्ञाभ्यां न गृह्णाति; ऊर्ध्वभूमिकत्वात्।

कथमेता लभ्यन्ते ? अनुचिताः प्रयोगतः

**लभ्याः, उचितास्तु विरागतः।**

जन्मान्तराभ्यस्ता अभिज्ञा वैराग्यतो लभ्यन्ते, वैशेषिक्यः प्रयोगतः। सर्वासां तु प्रयोगेणोत्पादनम्।

**तृतीया त्रीण्युपस्थानानि,**

चेतःपर्यायाभिज्ञा त्रीणि वेदनाचित्तधर्मस्मृत्युपस्थानानि; चित्तचैत्तालम्बनत्वात्।

**आद्यं श्रोत्रर्द्धिचक्षुषि ॥ ४४ ॥**

'अभिज्ञा' इति वर्तते। ऋद्धिदिव्यश्रोत्रदिव्यचक्षुरभिज्ञाः स्मृत्युपस्थानमित्यर्थः। रूपालम्बनत्वात्। ऋद्धिश्चतुर्बाह्यायतनालम्बना, अन्यत्र शब्दात्*। दिव्यश्रोत्रचक्षुरभिज्ञे शब्दरूपायतनालम्बने।

कथं तर्हि "च्युत्युपपादज्ञानेनैव[1] अमी[2] बत[3] भवन्तः सत्त्वाः काय-

---

**कथमेता लभ्यन्त** इति। प्राप्तिमधिकृत्य प्रश्नः। सम्मुखीभावस्तु चित्तानाम्। अनुचितानां च प्रयोगत एव। **अनुचिताः प्रयोगत** इति। **वैशेषिक्यो** या अनुत्पादपूर्वाः। **सर्वासां तु प्रयोगेणोत्पादनमिति**। याश्च वैराग्याल्लभ्यन्ते, याश्च प्रयोगतः, तासां सर्वासाम्।

**अन्यत्र शब्दादिति**। उच्छेदित्वात् शब्दो न निर्मीयते। वक्ष्यति हि—"कामाप्तं निर्मितं बाह्यं चतुरायतनम्" (अभि० को० ७.४९) इति।

**कथं तर्हीति** विस्तरः। यदि चक्षुरभिज्ञा रूपायतनालम्बना, **कथं**

---

१. च्युतोपपाद०—का०। २. जानाति अमी—का०।

३. का० पुस्तके नास्ति।

* अभि० को० ४ : ६

दुश्चरितेन समन्वागताः" इत्येवमादि ? न तत्तेन जानाति । अभिज्ञापरिवारज्ञानं तु तदन्यदार्याणामुत्पद्यते येनैवं जानन्ति । अनिर्धारणाच्छेषे चतुःस्मृत्युपस्थानस्वभावे इति सिद्धम् ॥ ४४ ॥

## अव्याकृते श्रोत्रचक्षुरभिज्ञे इतराः शुभाः ।

दिव्यचक्षुःश्रोत्राभिज्ञे अव्याकृते । ते पुनश्चक्षुःश्रोत्रविज्ञानसम्प्रयुक्तप्रज्ञे ।

कथं तर्हि ते चतुर्ध्यानभूमिके सिद्ध्यतः ? आश्रयवशेन तद्भूमिनिर्देशात् । तदाश्रये हि चक्षुःश्रोत्र चतुर्ध्यानभूमिके । आनन्तर्यमार्गवशेन वा । अन्याश्चतस्रः कुशलाः । यत्तर्हि प्रकरणेषूक्तम्—"अभिज्ञा कतमा ? कुशला प्रज्ञा" ( ) इति ? प्राधानिक एष निर्देशः, बाहुलिको वा ।

---

तर्हि च्युत्युपपादज्ञानेन अमी बत भवन्तः सत्त्वाः कायदुश्चरितेन समन्वागता इत्येवमादि । न वाङ्मनस्कर्मसमन्वागमाश्चक्षुर्विज्ञानेन गृह्यन्ते । आदिशब्देन मिथ्यादृष्टिग्रहणम् । न तदिति । तद् वाङ्मनस्कर्मसमन्वागमादि तेन चक्षुर्ज्ञानेन न जानाति । केन तर्हि ? इत्याह— अभिज्ञापरिवारज्ञानं तु तदिति । मानसं तदित्यर्थः । शेषे इति । पूर्वेनिवासानुस्मृति-आस्रवक्षयाभिज्ञे । ते चतुःस्मृत्युपस्थानस्वभावे । कथम् ? आस्रवक्षयाभिज्ञा चतुःस्मृत्युपस्थानस्वभावा; दशज्ञानस्वभावत्वात् । षट्ज्ञानस्वभावत्वेऽपि कायवेदनाचित्तस्मृत्युपस्थानान्यपि अन्यगतानि भाव्यन्ते ॥ ४४ ॥

कथं तर्हि ते चतुर्ध्यानभूमिके सिद्ध्यतः ? न हि द्वितीयादिध्यानभूमिकं चक्षुर्ज्ञानं श्रोत्रज्ञानं वास्ति; चक्षुःश्रोत्रविज्ञानसम्प्रयुक्तत्वात् । तयोश्च द्वितीयादिषु ध्यानेषु अभावात् । वक्ष्यति हि—

"कायाक्षिश्रोत्रविज्ञानं विज्ञप्त्युत्थापकं च यत् ।

द्वितीयादौ तदाद्याप्तम्" ( अभि० को० ८.१३ ) इति ।

आश्रयवशेनेति विस्तरः । चक्षुःश्रोत्राशयवशेन तज्ज्ञानयोरपि चतुर्ध्यानभूमिकत्वम् । चक्षुःश्रोत्रे चतुर्ध्यानभूमिके व्यवस्थाप्येते । प्राधानिक एष निर्देशो बाहुलिको वेति । प्रधाने भवः प्राधानिकः । एवं बाहुलिकः । कुशला अभिज्ञा प्रधानभूता । अतस्तदपेक्ष्यनिर्देशः क्रियते—कुशला प्रज्ञा अभिज्ञेति । अथवा—बाहुल्येनाभिज्ञाः कुशलाः । अत एवं निर्देश इति । मुद्गादिभावेऽपि माषराशिव्यपदेशवत् ॥

आसां चाभिज्ञानाम्—

**तिस्रो विद्याः,**

पूर्वनिवासच्युत्युपपादास्रवक्षयज्ञानसाक्षात्क्रियास्तिस्रः अशैक्ष्यो विद्या उच्यन्ते ।

कस्मादेता एव नान्याः ?

**अविद्यायाः पूर्वान्तादौ निवर्त्तनात् ॥ ४५ ॥**

एता हि पूर्वापरान्तमध्यसम्मोहं व्यावर्तयन्ति यथाक्रमम् ॥ ४५ ॥

---

"**पूर्वान्तादौ निवर्तनात्**" । यावद् **यथाक्रममिति** ।

भगवद्विशेषादयस्तावदाहुः—**पूर्वान्तसम्मोहं** पूर्वेनिवासानुस्मृत्या **निवर्तयति** । च्युत्युपपादाभिज्ञया **मध्यसम्मोहम्** । आस्रवक्षयाभिज्ञया **अपरान्तसम्मोहम्** । नापरमस्माद् भवं प्रजानातीति तेषां व्याख्यानकाराणामभिप्रायः । अतीतः, प्रत्युत्पन्नः, अनागतोऽध्वेति अध्वानुक्रमः । तस्मादेवमर्थगतिरिति ।

**आचार्यसङ्घभद्रस्तु** व्याचष्टे—पूर्वान्तादौ निवर्तनात् । पूर्वेनिवासाभिज्ञा हि पूर्वान्तसम्मोहं व्यावर्तयति । अपरान्तसम्मोहं च्युत्युपपादाभिज्ञा । मध्यसम्मोहमास्रवक्षयाभिज्ञेति । **अतश्च तिसृणामेव विद्यात्वम्** । **पूर्वयात्म**परविपद्दर्शनात् संवेगोत्पत्तेः, परया परेषामेव । तथा सविग्नस्य भूतार्थावगमात् तृतीयेति ।

किमत्र प्रतिपत्तव्यम् ? **आचार्यसङ्घभद्रव्याख्यानमेव** युक्तरूपं पश्यामः ।

**आचार्यस्यापि तथैवाभिप्रायो** लक्ष्यते । तथाहि—'पूर्वेनिवासच्युत्युपपाद-आस्रवक्षयज्ञानसाक्षात्क्रियास्तिस्रः' इत्युक्त्वाऽऽह—'एता हि पूर्वान्तापरान्तमध्यसम्मोहं व्यावर्तयन्ति यथाक्रमम्' इति । कथं पुनर्गम्येतेति ? **तिस्र एवाभिज्ञास्तिस्रो विद्या** इति । यस्मादेवमाह—"अशैक्षी पूर्वेनिवासानुस्मृतिज्ञानसाक्षात्क्रिया विद्या, अशैक्षी च्युत्युपपादज्ञानसाक्षात्क्रिया विद्या, अशैक्षी आस्रवक्षयज्ञानसाक्षात्क्रिया विदया" इति विद्यात्रयव्यवस्थापनानुसूत्रादेव । एवं ह्याह—त्रिपटो[1] भवति त्रिविद्य इति ॥ ४५ ॥

---

१. त्रिपिटो—जा० । त्रिपिटको—इति तूचितः पाठः प्रतिभाति ।

आसां परमार्थेन

**अशैक्ष्यन्त्या,**

आस्रवक्षयज्ञानसाक्षात्क्रियैवाशैक्षी विद्या ।

**तदाख्ये द्वे तत्सन्तानसमुद्भवात् ।**

अन्ये द्वे अशैक्ष्यसन्तानसम्भूतत्वादशैक्ष्यावुच्येते । नैव तु ते शैक्ष्यौ नाशैक्ष्यौ ।

किं पुनरेते अभिज्ञे शैक्ष्यस्य नोच्येते ? यतः शैक्ष्यौ विद्ये नोच्येते ।

**इष्टे शैक्षस्य नोक्ते तु विद्ये साविद्यसन्ततेः ॥ ४६ ॥**

न हि साविद्यसन्ताने विद्याव्यवस्थानं युज्यते; पुनरप्यविद्याभिभवात् ॥ ४६ ॥

आसां चाभिज्ञानाम्

**आद्या तृतीया षष्ठी च प्रातिहार्याणि,**

ऋद्धिचेतःपर्यायास्रवक्षयाभिज्ञास्त्रीणि प्रातिहार्याणि यथाक्रमम् ऋद्धयादेशनानुशासन-प्रातिहार्याणि । विनेयमनसामादितोऽत्यर्थं हरणात् प्रातिहार्याणि; प्रातिशब्दयोरादिकर्मभृशार्थत्वात् । प्रतिहतमध्यस्थानां मनांस्येभिः प्रतिहरन्तीति प्रातिहार्याणि वा ।

---

**अशैक्षी विद्ये**ति । अनास्रवत्वादित्यभिप्रायः । **नैव तु[1] ते[1]** पूर्वेनिवासच्युत्युपपादाभिज्ञे न **शैक्ष्यौ नाशैक्ष्यौ**, सास्रवत्वात् ॥ ४६ ॥

**त्रीणि प्रातिहार्याणि यथाक्रममि**ति । ऋद्धिविषयाभिज्ञा **ऋद्धिप्रातिहार्यम्** । चेतःपर्यायाभिज्ञा **आदेशनाप्रतिहार्यम्** । ईदृशं ते चित्तमिति । आस्रवक्षयाभिज्ञा **अनुशासनप्रातिहार्यम्** । यथाभूतोपदेश इत्यर्थः । **प्रातिशब्दयोरादिकर्मभृशार्थत्वादि**ति । प्र-शब्दः आदिकर्मार्थः । इदमनेन कर्म प्रारब्धमिति । अति-शब्दश्च भृशार्थः, अतिगत इति । तदिदमुक्तं भवति— **विनेयमनसाम् आदितः** आदौ **अतिभृशं हरन्त्येभि**रिति प्रातिहार्यम् । **प्रतिहतमध्यस्थाना**मिति । नैरुक्तं[2] विधिमाश्रित्योक्तम् । "वर्णागमो वर्णविपर्ययश्च" इति योज्यम् ।

---

१—१. नैवर्तते—जा० । २. वैयाकरणमित्यर्थः ।

एषां पुनः

**शासनम् ।**

**अग्र्यम्,**

अनुशासनं प्रातिहार्यमग्र्यम् ।

**अव्यभिचारित्वाद्धितेष्टफलयोजनात् ।। ४७ ।।**

ऋद्धयादेशने हि विद्यया विक्रियेते । अस्ति हि च गान्धारी नाम विद्या ययाकाशेन गच्छति । ईक्षणिका च नाम विद्या यया परचित्तं जानाति । न तु यथाभूतानुशासनमन्यथा शक्यं कर्तुम्; अव्यभिचारित्वात् । प्रधानमावर्जनमात्रं च ताभ्यामनुशासनप्रातिहार्येण तु हितेन इष्टेन फलेन योगो भवति, उपायोपदेशादित्येवावश्यम् ऋद्धिरित्युच्यते ।। ४७ ।।

केयमृद्धिः ? **वैभाषिकन्यायेन**

**ऋद्धिः समाधिः,**

ऋध्यत्यनेनेति कृत्वा योजयितव्यम्

किं तेन समृध्यति ?

**गमनं निर्माणं च,**

ततस्तत्र

**गतिस्त्रिधा ।**

शरीरवाहिनी आधिमोक्षिकी, मनोजवा च तत्र गतिः ।

**शास्तुर्मनोजवा,**

मनस इवास्या जव इति मनोजवा गतिर्बुद्धस्यैव, नान्यस्य; सुदूरमपि देशं चित्तोत्पादकालेन गमनात् । अतएव "अचिन्त्यो बुद्धानां बुद्धविषयः" इत्युक्तं भगवता । इतरे तु गती बुद्धस्यानुक्तसिद्धे ।

**अन्येषां वाहिन्यप्याधिमोक्षिकी ।। ४८ ।।**

श्रावक-प्रत्येकबुद्धानां शरीरवाहिनी च गतिः । पक्षिवत् क्रमेण शरीरवाहनात् । आधिमोक्षिकी च; दूरस्यासन्नाधिमोक्षेणाश्वागमनात्[1] ।

---

"**अव्यभिचारित्वात्**" इति । क्लेशक्षयनान्तरीयत्वादिति ।। ४७ ।।
**ऋद्धयतीति** । सम्पद्यत इत्यर्थः । **दूरस्यासन्नाधिमोक्षेणेति** ।

---

१. ०णाशुगमनात्—का० ।

निर्माणं पुनर्द्विविधम्—कामावचरम्, रूपावचरं च ।। ४८ ।।

तत्र तावत्

**कामाप्तं निर्मितं बाह्यं चतुरायतनम्,**

कामावचरं निर्माणं रूपरसगन्धस्प्रष्टव्यायतनस्वभावम् ।

तत् पुनः

**द्विधा ।**

स्वपरशरीरसम्बद्धम ।

**रूपाप्तं द्वे तु,**

रूपावचरनिर्माणं द्वे—रूप-स्प्रष्टव्यायतने; तत्र गन्धरसाभावात् । तदपि द्विविधं तथैव । कामधाताविदं चतुर्विधं निर्माणम्, एवं रूपधातौ—इत्यष्टविधं समासतो निर्माणम् ।

कथं रूपधातूपपन्नस्य कामावचरनिर्माणे गन्धरसाभ्यां न समन्वागमो भवति ? वस्त्राभरणवन्न समन्वागमः ।

द्व्यायतनं[1] निर्मिणोतीत्यपरे ।

---

अधिमोक्षेण निर्वृत्ता आधिमोक्षिकी । यद् दूरं तदासन्नमधिमुच्य तेनाश्वागमनात् **आधिमोक्षिकीत्युच्यते** ।। ४८ ।।

**"बाह्यं चतुरायतनम्"** इति । नाध्यात्मिकं निर्मीयते । तन्निर्माणे सत्यपूर्वसत्त्वप्रादुर्भावप्रसङ्गात् । **स्वपरशरीरसम्बद्धमिति ।** यत् स्वात्मा सिंहायते, नागायते वा, तत् स्वशरीरसम्बद्धम् । यत् स्वात्मनो वहिर्निर्मीयते-सिंहो नागो वा, तत् परशरीरसम्बद्धम् ।

**द्विविधं तथैवेति ।** स्वपरशरीरसम्बद्धम् । **एवं रूपधाताविति ।** यथा कामधातूपपन्नो द्विविधं निर्माणं निर्मिणोति—कामावचरम्, रूपावचरं च । तदपि द्विविधं स्वपरशरीरसम्बद्धमिति चतुर्विधम् । एवं रूपधातूपपन्नोऽपि चतुर्विधं निर्मिणोति । **इत्यष्टविधं समासतो निर्माणम् ।**

**वस्त्राभरणवन्न समन्वागम** इति । यथा च वस्त्राभरणैः स्वशरीरसम्बद्धैरप्यसत्त्वसंख्यातत्वात् इन्द्रियाधिष्ठानासम्बद्धत्वाद् वा न समन्वागमः, तद्वत् ।

---

१. द्व्यायातनं—का० ।

किं खल्वभिज्ञयैव निर्माणं निर्मीयते ? नेत्युच्यते। किं तर्हि ? अभिज्ञाफलैः।

**निर्माणचित्तैस्तानि चतुर्दश ॥ ४९ ॥**

तानि पुनश्चतुर्दश निर्माणचित्तानि ॥ ४९ ॥

**यथाक्रमं ध्यानफलं द्वे यावत् पञ्च,**

प्रथमध्यानफलं द्वे कामधातुप्रथमध्यानभूमिके निर्माणचित्ते। द्वितीयध्यानफलं त्रीणि कामधातुप्रथमद्वितीयध्यानभूमिकानि। एवं तृतीयचतुर्थध्यानभूमिकानि चत्वारि पञ्च च योज्यानि।

स्वभूमिकाधरभूमिकं निर्माणचित्तं ध्यानफलं वेदितव्यम्।

**नोर्ध्वजम्।**

नोर्ध्वभूमिकं निर्माणचित्तमधरध्यानफलमस्ति। द्वितीयादिध्यानफलं कामावचरं निर्माणं प्रथमध्यानभमिकाद् गतितो विशिष्यते।

**तल्लाभो ध्यानवत्,**

तेषां च निर्माणचित्तानां ध्यानवल्लाभः।

---

**द्वयायतनमिति।** रूप-स्प्रष्टव्यायतनम्, न गन्धरसायतनम्; समन्वागमाभावादित्यभिप्रायः। न शब्दायतनम्, उच्छिद्यत्वात्। अभिघातजत्वादित्यपरे। आगन्तुकत्वादित्यभिप्रायः ॥ ४९ ॥

**द्वितीयध्यानफलं त्रीणीति।** अधरभूमिके च द्वे, स्वभूमिकं चेति। **चत्वारि पञ्च च योज्यानीति।** तृतीयध्यानभूमिकानि चत्वारि। अधरभूमिकानि त्रीणि, स्वभूमिकं चेति। चतुर्थध्यानभूमिकानि पञ्च, अधरभूमिकानि च चत्वारि, स्वभूमिकं चेति।

**द्वितीयादिध्यानफलनिति** विस्तरः। द्वितीयध्यानफलं निर्माणं यन्निर्मात्रा निर्मितम्। **प्रथमध्यानभूमिकात् निर्माणफलात्** प्रथमध्यानफलाद् **गतितो विशिष्यते।** तद् द्वितीयध्यानफलं निर्माणं द्वितीयां ध्यानभूमिं गच्छति। प्रथमध्यानफलं तु तां न गच्छति, किं तर्हि ? प्रथमध्यानभूमिमेवेति गमनविशेषाद् विशिष्यते।

एवं तृतीयादिध्यानफलं योज्यम्।

किं खलु निर्माणचित्तादेव स्यात् व्युत्थानम् ? नास्त्येतत् । यस्मादुत्पद्यते—

**शुद्धात् तत् स्वतश्च,**

शुद्धकाद्ध्यानादन्तरं निर्माणचित्तमुत्पद्यते निर्माणचित्ताद्वा, नान्यतः ।

**ततोऽपि ते ॥ ५० ॥**

निर्माणचित्तादपि शुद्धकं ध्यानं निर्माणचित्तं चोत्पद्यते, नान्यत् । न हि समाधिफलस्थितस्याप्रविश्य पुनः समाधिं तस्माद् व्युत्थानमस्ति ।।५०।।

सर्वस्य च निर्मितस्य

**स्वभूमिकेन निर्माणम्,**

नान्यभूमिकेन निर्माणचित्तेनान्यभूमिकं निर्माणं निर्मीयते ।

**भाषणं स्वधरेण च ।**

स्वभूमिकेन चेति च-शब्दः । कामधातुप्रथमध्यानभूमिको हि निर्मितः स्वभूमिकेनैव चित्तेन भाष्यते । ऊर्ध्वभूमिकस्तु प्रथमध्यानभूमिकेन; ऊर्ध्वं विज्ञप्तिसमुत्थापकाभावात् ।

बहूनां निर्मितानां भाषणं

**निर्मात्रैव सहाशास्तुः,**

---

**ध्यानवल्लाभ**[1] इति । मौलध्यानानामिव वैराग्यतो निर्माणचित्तानां लाभः ।

**शुद्धकाद् ध्यानाद् अनन्तरं निर्माणचित्तमिति ।** निर्माणचित्तसम्मुखीभावे यदाद्यं तत् शुद्धकादुत्पद्यते । **निर्माणचित्ताद्वेति** । द्वितीयादिप्रवाहे ।

**निर्माणचित्तादपि शुद्धकमिति** । निर्माणचित्ताद् व्युत्थाने निर्माणचित्तं च प्रवाहे । समाधिफलस्थितस्येति । समाधिनिर्माणचित्तस्थितस्य ।। ५० ।।

**ऊर्ध्वभूमिकस्त्विति** । द्वितीयादिध्यानभूमिकः । **प्रथमध्यानभूमिकेन भाष्यते । ऊर्ध्वं** द्वितीयादिषु **विज्ञप्तिसमुत्थापकस्य** सवितर्कस्य सविचारस्य **चित्तस्याभावात् ।**

---

१. ध्यानवान् लाभ—जा० ।

बुद्धादन्यस्य निर्माणं निर्मात्रा सह भाषते। यदा च बहवो निर्मिता भवन्ति तदा युगपद् भाषन्ते।

एकस्य भाषमाणस्य भाषन्ते सह निर्मिताः।
एकस्य तूष्णीभूतस्य सर्वे तूष्णीम्भवन्ति ते"॥ (       )

इति **गाथा**।

बुद्धस्य पूर्वं पश्चाद्वा यथेच्छं निर्मिता भाषन्ते।

यदा भाषणचित्तं तदा निर्माणचित्ताभावः, निर्माणचित्ताभावान्निर्मिताभाव इति कथमेनं भाषयन्ति ?

**अधिष्ठायान्यवर्त्तनात्॥ ५१॥**

निर्माणमधिष्ठायावस्थानकामतया अन्येन चित्तेन[1] वाचं प्रवर्तयन्ति॥ ५१॥

किं जीवित एवाधिष्ठानमनुवर्तते, अथ मृतस्यापि ?

**मृतस्याप्यस्त्यधिष्ठानम्,**

**आर्यमहाकश्यपा**धिष्ठानेन तदस्थिशङ्कलावस्थानात्। तत्तु—

**नास्थिरस्य,**

---

**निर्माणचित्ताभावान्निर्मिताभाव** इति। निमित्ताभावे नैमित्तिकस्याप्यभाव इत्प्रसन्तं **कथमेनं** निर्मितं **भाषयन्ती**त्यभिप्रायः।

**"अधिष्ठायान्यवर्तनात्"** इति। निर्माणचित्तेन निर्मितं निर्माय ततश्चाधिष्ठायावस्थानकामतया तिष्ठत्वेतदिति। **ततः** उत्तरकाल**मन्येन** विज्ञप्तिसमुत्थापकेन सवितर्कसविचारकेण **चित्तेन वाचं प्रवर्तयन्ति** निर्मातारः। पूर्वाभिप्रायं हि सन्ततिरनुवर्तते। पूर्वं हि तेन चेतसि व्यवस्थापितम्—निर्माणं निर्मास्यामि, तदधिष्ठास्यामि, तद् वाचयिष्यामीति॥ ५१॥

**अवस्थाद्वयेऽधिष्ठानसम्भवात्** पृच्छति—**किं जीवित एवाधिष्ठान**मित्यादि।

**आर्यमहाकाश्यपाधिष्ठाने**नेति। आर्यमहाकश्यपाधिमोक्षेणेत्यर्थः॥ ५२॥

---

१. मनसा—का०।

अस्थिरस्य तु भावस्य नास्त्यधिष्ठानम्; **आर्यकाश्यपेन** मांसादीनामधिष्ठानात्।

**अपरे तु न।**

**अपरे** पुनराहुः—नास्ति मृतस्याधिष्ठानम्। अस्थिशङ्कलावस्थानं तु देवतानुभावादिति।

किमेकेन चित्तेनैकमेव निर्मितं निर्मिणोति ?

**आदावेकमनेकेन जितायां तु विपर्ययात् ॥ ५२ ॥**

आदित एकं निर्मितमनेकेन निर्माणचित्तेन निर्मिणोति। जितायां त्वभिज्ञायामेकेन चित्तेनानेकं निर्मिणोति यावन्निर्मातुमिष्टं भवति ॥ ५२ ॥

अथ किं सर्वनिर्माणचित्तमव्याकृतं भवति ?

**अव्याकृतं भावनाजम्,**

यद्भावनाफलं तदवश्यमव्याकृतं भवति।

**त्रिविधं तूपपत्तिजम्।**

उपपत्तिप्रतिलम्भिकं तु निर्माणचित्तं कुशलाकुशलमव्याकृतं भवति देवनागपिशाचादीनाम्। तत्कृतं च स्वपरसम्बद्धं[1] निर्माणं[1] नवायतनिकं भवति; अस्वभावरूप्यायतनत्वात्, इन्द्रियाविनिर्भूतत्वात्[2]। न त्विन्द्रियं निर्मीयते।

किमेषैव द्विविधर्द्धिः भावनामयी चोपपत्तिलाभिका च ?

---

"**त्रिविधं तूपपत्तिजम्**" इति। कदाचिद्धि देवादयः परानुग्रहार्थं परान् निर्मिण्वन्ति, कदाचिद् विहेठनार्थमित्यादि। **तत्कृतं चेति** विस्तरः। देवादिकृतं च। **स्वपरसम्बद्धं निर्माणं नवायतनिकम्।** कुतः ? **अस्वभावरूप्यायतनत्वात्।** यस्मादशब्दानि चक्षुरायतनरूपायतनादीनि तत्र सन्तीति शब्दः सन्तानाभावान्न निर्मीयते। अचित्तकत्वाच्च न मनोधर्मायतनम्। अचित्तको निर्मिता इति कथं गम्यते ? शास्त्रात्। एवं हि आह— "तन्निर्मितश्चातुर्महाभूमि को वक्तव्यः ? न चातुर्महाभूमिको वक्तव्यः। आह—चातुर्महाभूमिको वक्तव्यः उपादायरूपिकः, नोपादायरूपिको वक्तव्यः। आह—उपादायरूपिको वक्तव्यः, अचित्तको वक्तव्यः। कस्य

---

१—१. स्वपरशरीरनिर्माणं—का०।

२. अशब्दरूप्या —का०।

एषा च द्विविधा

**ऋद्धिर्मन्त्रौषधाभ्यां च कर्मजा चेति पञ्चधा ॥ ५३ ॥**

समासतः पञ्चविधामृद्धिं वर्णयन्ति—भावनाफलम्, उपपत्तिलाभिकम्, मन्त्रजाम्, औषधजाम्, कर्मजां च। यथा **मान्धातुः**, अन्तराभविकानां च ॥ ५३ ॥

यदिदं दिव्यश्रोत्रमुक्तं चक्षुश्च, किमेते दिव्ये एव ? आहोस्वित् दिव्ये इव दिव्ये, यथा बोधिसत्त्वचक्रवर्तिगृहपतिरत्नानाम ?

**दिव्यश्रोत्राक्षिणी,**

यस्मात् ते

**रूपप्रसादौ ध्यानभूमिकौ ।**

ध्यानसमापन्नस्य शब्दालोकाभोगप्रयोगेण ध्यानभूमिकानि भूतान्युपादायरूपप्रसादौ निर्वर्तेते चक्षुःश्रोत्रसामन्तके रूपशब्दयोर्दर्शनश्रवणहेतू इति ध्यानभूमिकत्वात् दिव्ये एव ते चक्षुःश्रोत्रे ।

ते च पुनः—

**सभागाविकले नित्यं दूरसूक्ष्मादिगोचरे ॥ ५४ ॥**

---

चित्तवशेन वर्तन्त इति वक्तव्यम् ? आह—निर्मातुः चित्तवशेन वर्तन्ते इति । यदि तर्हि नवायतनिकं निर्मीयते, इन्द्रियनिर्माणात् कथं नापूर्वसत्त्वप्रादुर्भावो भवति ? सत्त्वसङ्ख्यातानि हीन्द्रियाणि" इति । अत आह—**इन्द्रियाविनिर्भक्तत्वादिति** । यस्माच्चक्षुरादिभिरिन्द्रियैः पञ्चभिः स्वपरशरीरसम्बद्धं निर्माणं रूप-रस-स्प्रष्टव्यस्वभावविनिर्भागेनावस्थितं भवत् नवायतनिकमित्युच्यते । न त्विन्द्रियं निर्मीयते—इत्येष सिद्धान्तः । यत् पुनस्तदेव स्वपरशरीरासम्बद्धं निर्मिणोति, तच्चतुरायतनिकमेव भवति ॥

**यथा मान्धातुरन्तराभविकानां चेति** । कर्मजाया ऋद्धेरेतदुदाहरणमुच्यते ॥ ५३ ॥

**किमेते दिव्ये एवेति** । किमयं दिव्यशब्दो मुख्यवृत्तिः, आहोस्वित् औपचारिक इत्यभिप्रायः । यदि हि 'एते दिवि भवे दिव्ये' इत्यर्थो गृह्यते, मुख्यवृत्तिरयं शब्दो भवति; अथ तु **दिव्ये इवेति दिव्ये** इति, औपचारिकः । **यथा बोधिसत्त्व-चक्रवर्ति-गृहपतिरत्नानामिति** औपचारिके दृष्टान्तं दर्शयति ।

नास्ति दिव्यं चक्षुः श्रोत्रं च तत्सभागं नित्यं विज्ञानसहितत्वात्, नापि विकलम्; काणविभ्रान्ताभावात्, रूपावचरसत्त्ववत्। दूरसूक्ष्मवृतान्यपि रूपाणि शब्दाश्च तयोर्विषयः। आह चात्र—

दूरस्थमावृतं सूक्ष्मं सर्वतश्च न पश्यति।
मांसचक्षुर्यतो रूपमतो दिव्यं दृगिष्यते॥

कियद् दूरं पुनर्दिव्येन चक्षुषा पश्यति? यस्य यादृशं चक्षुर्भवति। श्रावक-प्रत्येकबुद्ध-बुद्धास्त्वनभिसंस्कारेण साहस्र-द्विसाहस्र-त्रिसाहस्रकान् लोकधातून् यथासंख्यं पश्यन्ति। ५४॥

अभिसंस्कारेण तु

**द्वित्रिसाहस्रकासंख्यदृशोऽर्हत्खड्गदैशिकाः।**

सर्वाभिसंस्कारेण सह श्रावकोऽपि द्विसाहस्रं लोकधातुं दिव्येन चक्षुषा पश्यति। त्रिसाहस्रं खड्गविषाणकल्पः। बुद्धस्तु भगवानसंख्येयान् लोकधातून् पश्यति यावदेवेच्छति।

किमृद्धिरेवोपपत्तिलाभिका भवति, अथान्यदपि?

**अन्यदप्युपपत्त्याप्तम्,**

दिव्यश्रोत्रादिकमपि चतुष्टयमुपपत्तिप्रतिलब्धमस्ति[1]। न तूपपत्त्याप्तं किञ्चिदभिज्ञाख्यां लभते।

यत्तूपपत्तिप्रतिलम्भिकं दिव्यं चक्षुः,

---

**विज्ञानसहितत्वादिति।** रूपदर्शनमुखेनाभिनिर्हृतत्वान्नित्यं विज्ञानसहितमिति सभागमेव। **काणविभ्रान्ताभावादिति।** काणम्=आभ्यन्तरविकलम्। विभ्रान्तम्=केकरम्, सर्वतश्च न पश्यतीति। अर्थादुक्तं भवति—दिव्यं चक्षुः पृष्ठतोऽपि पश्यति, पार्श्वतोऽपि पश्यति; न त्वेवमदिव्यं चक्षुरिति॥ ५४॥

**दिव्यश्रोत्रादिकमपि चतुष्टयमिति।** आदि-शब्देन दिव्यं चक्षुः, पूर्वनिवासानुस्मृतिः, परचित्तज्ञानं च। एतदपि दिव्यश्रोत्रादिकं चतुष्टयम्। **उपपत्तिप्रतिलब्धमस्ति।** दिव्यं चक्षुः केषामुपपत्तिप्रतिलम्भिकम्? कामावचराणां देवानाम्, अनागामिनां च रूपावचराणाम्, नारूप्यावचराणाम्। तत्र रूपाभावाद् दृष्टिः गमनं निर्माणं च नास्ति। नापि दिव्यं श्रोत्रं

---

१ ॰प्रतिलम्य॰—का॰।

**तद् दृश्यो नान्तराभवः[1] ॥ ५५ ॥**

अभिज्ञाचक्षुषैव ह्यन्तराभवो दृश्यते, नोपपत्तिप्रतिलब्धेन ॥ ५५ ॥

**चेतोज्ञानं तु तत् त्रेधा,**

'उपपत्त्याप्तम्' इति वर्तते। परचित्तज्ञानं तूपपत्तिप्रतिलब्धं त्रिविधं वेदितव्यं कुशलाकुशलाव्याकृतम्।

**तर्कविद्याकृतं च यत्।**

यच्चापि तार्किकं परचित्तज्ञानम्, नैमित्तिकानां यच्च विद्याकृतम्—तदपि त्रिविधं वेदितव्यम्। न यथा भावनाफलं कुशलमेव। उपपत्तिप्रतिलम्भिकाभ्यां तु परचित्तज्ञानपूर्वेनिवासानुस्मृतिभ्याम्।

**जानते नारका आदौ,**

यावन्न दुःखवेदनाभ्याहता भवन्ति। अन्यगतिस्था नित्यं जानते।

**नृणां नोत्पत्तिलाभिकम् ॥ ५६ ॥**

मानुष्याणामेतद् यथोक्तमृद्ध्यादिकं नास्त्युपपत्तिलाभिकम्[2]।

यर्त्तहि प्रकृतिजातिस्मरा भवन्ति ? कर्मविशेषजाऽसौ तेषाम्।

---

चक्षुश्चास्ति। परचित्तज्ञानमपि नास्ति; स्वपरसन्तानपरिच्छेदाभावात्। पूर्वेनिवासानुस्मृतिरपि नास्ति; कामरूपावचरसत्त्ववत् तादृशस्यात्मभावस्य असमुद्गमात्। अथवा सर्वा अपि अभिज्ञा न सन्ति; कामरूपावचरसत्त्ववत् तादृशस्यात्मभावस्यासमुद्गमात् ॥ ५५ ॥

**न यथा भावनाफलं कुशलमेवेति।** विपरीतदृष्टान्तः।

**अन्यगतिस्था नित्यं जानत इति।** ताभ्यां परचित्तपूर्वेनिवासानुस्मृतिभ्यां देवादिगतिस्था नित्यं जानते; दुःखवेदनानव्याहतत्वात्।

**"नृणां नोत्पत्तिलाभिकम्"** इति। **मानुष्याणामेतद् यथोक्तम् ऋद्ध्यादिकं** वैराग्यलाभिकं तर्कविद्यौषधकर्मकृतं[3] चास्ति। **न तूपपत्तिकलाभिकमस्ति।**

**यर्त्तहि प्रकृतिजातिस्मरा** इति। प्रकृतिजातिस्मरत्वं पूर्वेनिवासा-

---

१. नान्तरीभवः—का०। २. उपपत्तिप्रतिलम्भिकम्—का०।

३ ०विद्यौषधकर्म०—जा०।

त्रिविधा हि पूर्वनिवासानुस्मृतिः—भावनाफलम्, उपपत्तिप्रतिलब्धा[1], कर्मजा चेति ॥ ५६ ॥

अभिधर्मकोशभाष्ये ज्ञाननिर्देशो नाम

सप्तमं कोशस्थानम्[2]

---

नुस्मृत्या, सा चोपपत्तौ भवतीति। कथम्? असावुत्पत्तिलाभिका न भवतीत्यभिप्रायः। आह—**कर्मविशेषजासौ तेषामिति**। तेषां बोधिसत्त्वानां कर्मविशेषनिर्वृत्ताः। उपपत्तिलाभिकं हि नाम यदुपपत्तिकाले एव सर्वेषां निसर्गो लभ्यते, न तु यत् कस्यचिदेवोपपत्तिकालादूर्ध्वम्। यथा—पक्षिणामाकाशगमनम्। तस्मात् कर्मविशेषजासौ तेषाम्।

कथमिति? आह— **त्रिविधा हीति** विस्तरः। **भावनाफलं** यथोक्तम्। **उपपत्तिप्रतिलब्धा** देवादीनाम्। **कर्मजा** यथा तेषां बोधिसत्त्वानामिति ॥ ५६ ॥

आचार्ययशोमित्रकृतायामभिधर्मकोशव्याख्यायां

सप्तमं कोशस्थानं समाप्तम्

---

१. उपपत्तिलब्धा—का०।

२. ०स्थविरश्रीलामावाकस्य यदत्र पुण्यम्।

❀ ॐ नमो बुद्धाय ❀

# अष्टमं कोशस्थानम्

## ( समापत्तिनिर्देशः )

ज्ञानाधिकारेण[1] ज्ञानमयाना गुणाना कृतो निर्देशः । अन्यस्वभावानां[2] तु कर्तव्य इत्यादित एव ध्यानान्यारभ्यन्ते; सर्वगुणाश्रयत्वात् ।

**द्विधा ध्यानानि,**

समासतो द्विविधानि ध्यानानि, उपपत्ति-समापत्तिध्यानभेदात् ।

तानि पुनः—

**चत्वारि,**

प्रथमं ध्यानं यावच्चतुर्थम् ।

तत्र ध्यानोपपत्तय पुनर्न वक्तव्याः । **लोकनिर्देशकोशस्थाने**[3] हि

**प्रोक्तास्तदुपपत्तयः ।**

कथं प्रोक्ताः ?

"पृथक् पृथक् ।

ध्यानं त्रिभूमिकं तत्र चतुर्थं त्वष्टभूमिकम् ॥" ( अभि० को० ३.२ ) इति ।

---

**अष्टमं कोशस्थानम्**

सप्तमादनन्तरमष्टमस्य कोशस्थानस्योपन्यासे सम्बन्धं दर्शयन् आह—**ज्ञानाधिकारेणे**ति विस्तरः । ज्ञानाधिकारेण दशानां ज्ञानानामधिकारेण **ज्ञानमयानां** ज्ञानस्वभावानां प्रणिधिज्ञानाभिज्ञादीनां **कृतो निर्देशः । अन्यस्वभावानां** तु समाध्यादीनां **कर्तव्यः । सर्वज्ञाश्रयत्वादिति** । कामम् आरूप्या अपि गुणाश्रया भवन्ति, न सर्वगुणाश्रयाः । ध्यानानि तु सर्वगुणाश्रया इति ।

"**द्विधा ध्यानानि**" इति । **कार्यध्यानानि, कारणध्यानानि चेत्यर्थः** ।

---

१ श्री०—का० । २. अस्य स्व०—का० ३. तृतीये कोशस्थान इत्यर्थः ।

समापत्तिध्यानं तु वक्तव्यम् । अत उच्यते—

**समापत्तिः शुभैकाग्र्यम्,**

अभेदेन कुशलचित्तैकाग्रता ध्यानम्; समाधिस्वभावत्वात् ।

**पञ्चस्कन्धास्तु सानुगम् ॥ १ ॥**

सपरिवारं तु पञ्चस्कन्धस्वभावं वेदितव्यम् ।

केयमेकाग्रता नाम ? एकालम्बनता ।

एवं तर्हि चित्तान्येवैकालम्बनानि समाधिः, न चैतसिकं धर्मान्तरमिति प्राप्नोति ? न चित्तान्येव समाधिः । येन तु तान्येकाग्राणि वर्तन्ते स धर्मः समाधिः । सैव चित्तैकाग्रता ।

ननु च क्षणिकत्वात् सर्वं चित्तमेकाग्रम्, द्वितीयस्य तस्मादविक्षेप इति

---

**"शुभैकाग्र्यम्"** इति । शुभानां चित्तानामैकाग्र्यम् । **अभेदेनेति** । सर्वेषामपि लक्षणानाम् एतल्लक्षणम् । अत आह—**समाधिस्वभावत्वादिति** । ध्यानानामिति वाक्यशेषः ।

अथवा अभेदेनेति समाधिमात्रग्रहणम् ।

भेदेन **"पञ्चस्कन्धास्तु सानुगम्"** इति । अविज्ञप्तिरूपमात्र-रूपस्कन्धः ।

**एकालम्बनता** एकालम्बनत्वं चित्तानाम् । किं पुनः कारणं चैत्ताना-मप्येकालम्बनत्वे एकालम्बनत्वं चित्तानामित्युच्यते, न पुनरेकालम्बनता चित्तचैत्तानामित्युच्यते ? प्राधान्यात् **चित्तान्येवैकालम्बनानि समाधिरिति** । अवस्थाविशेषत्वाच्चित्तगुणभाववत्[1] । **वैभाषिक** आह—**न चित्तान्येव समाधिः । येन तु तान्येकाग्राणि वर्तन्ते** समाहितानि **स धर्मः समाधिः** । यथा **वैशेषिक**-नये शुक्लगुणयोगाच्छुक्लेन पटः, स एव गुणोऽस्य शौक्लमित्युच्यते, तद्वत् ।

**ननु च क्षणिकत्वात् सर्वं चित्तमेकाग्रम्** । किमिदमुच्यते—येन तु तानि एकाग्राणि वर्तन्ते स धर्मः समाधिरिति । **द्वितीयस्य तस्माद् अविक्षेप इति चेत्** । यद्येतत् स्याद्—द्वितीयस्य चित्तस्य तस्मात् समाधेरविक्षेपः । कस्मिन्ना-

---

१. गुर्वावत्—का० ।

चेत् ? सम्प्रयुक्ते समाधिवैयर्थ्यम् । यत एव च कारणात् समाधिः, स्तत एव कारणात्[1] चित्तानामेकालम्बनत्वं किं नेष्यते, महाभूमिकत्वाच्च समाधेः सर्वचित्तानामेकाग्रताप्रसङ्गः ? न; दुर्बलत्वात्समाधेः ।

चित्तान्येवैकाग्राणि समाधिः । तथा ह्यधिचित्तं शिक्षा चित्तपरिशुद्धि-प्रधानं च सूत्रे चत्वारि ध्यानान्युक्तानीत्यपरे ।

ध्यानमिति कोऽर्थः ? ध्यायन्त्यनेनेति । प्रजानन्तीत्यर्थः । समाहित-चित्तस्य यथाभूतप्रज्ञानात् । चिन्तनार्थो ह्येष धातुः । चिन्तनं च प्रज्ञेति

---

लम्बने न विक्षेपः ? अस्मिन्नालम्बने न विक्षेप इति । **सम्प्रयुक्ते समाधि-वैयर्थ्यम् ।** यत् प्रथमं चित्तं समाधिसम्प्रयुक्तम्, तस्मिन् सम्प्रयुक्ते समाधि-वैयर्थ्यम् । तत्र कारित्रं समाधिर्न करोति, द्वितीये करोतीति कृत्वा । किञ्च **यत एव च कारणात् समाधिरेकाग्रतालक्षणोऽभिप्रेतः । तत एव च कारणात् चित्तानामेकालम्बनत्वं किं नेष्यते ।** किं समाधिना अर्थान्तरभूतेनेति अभिप्रायः ।

**न; दुर्बलत्वात् समाधेः** । न; महाभूमिकत्वात् समाधेः सद्भावात् सर्वस्य चित्तस्यैकाग्रताप्रसङ्गः[2] । यच्चित्तं दुर्बलेन समाधिना सम्प्रयुज्यते, न तदेकाग्रं भवति । यत् पुनर्बलवता, तच्चित्तमेकाग्रमिति सत्यपि महा-भूमिकत्वे समाधेर्न सर्वचित्तानामेकाग्रताप्रसङ्गः ।

**चित्तान्येवेति** विस्तरः । **चित्तान्येवैकाग्राणि समाधिः ।** नार्थान्तरभूत इति । **तथा हि अधिचित्तं शिक्षेति** । "अधिचित्तं शिक्षा कतमा ? चत्वारि ध्यानानि" इति सर्वम् । तथा **चित्तपरिशुद्धिप्रधानं चत्वार्येव ध्यानानि इत्यु-क्तानि** । लिखितमिदं सूत्रम्—"ऋद्धिपादा समाधयः" (अभि० को० ६.६९) इत्यत्र । यथा हि अधिशीलं शिक्षा शीलमेव, न तस्मादन्या । अधिप्रज्ञं च शिक्षा प्रज्ञैव, न तस्या अन्या । एवमधिचित्तं शिक्षा चित्तमेव, न तस्मादन्या । न चित्तव्यतिरिक्तसमाधिरस्तीत्यर्थः । अधिचित्तं हि शिक्षा समाधिरिष्यते । यथा चास्मिन्नेव सूत्रे शीलपरिशुद्धिप्रधानं विमुक्तिपरिशुद्धिप्रधानमित्युक्ते न शीलपरिशुद्धिः शीलादन्या । एवं दृष्टिपरिशुद्धिः, विमुक्तिपरिशुद्धिश्च । तथैव चित्तपरिशुद्धिरपि न चित्तादन्या । चित्तपरिशुद्धिर्हि चतुर्ध्यानलक्षण-समाधिरिति ।

---

१. का० पुस्तके नास्ति । २. ०काग्र्यता०—जा० ।

सिद्धान्त । एवं तर्हि सर्वसमाधिध्यानप्रसङ्ग ? न, प्रकर्षयुक्ते तन्नामविधानाद्, भास्करवत् । कश्च प्रकर्षयुक्तः ? योऽङ्गसमायुक्तः समाधि । स हि शमथविपश्यनाभ्या युगनद्धवाहित्वाद् दृष्टधर्मसुखविहार उक्त, सुखा च प्रतिपदिति । सुतरा तेन ध्यायन्ति ।

क्लिष्टस्य कथं ध्यानत्वम् ? मिथ्योपनिध्यानात् । अतिप्रसङ्गः ? न; तत्प्रतिरूप एव तत्संज्ञाविनिवेशात् पूतिबीजवत् । उक्तानि चाकुशलान्यपि[1] ध्यानानि[1] भगवता ।। १ ।।

---

**एवं तर्हीति** । यदि समाधिस्वभावानि ध्यानानि । **सर्वसमाधिध्यानप्रसङ्गः** । कुशलक्लिष्टाव्याकृतानामपि समाधीनां ध्यानप्रसङ्गः; समाधेर्महाभूमिकत्वात् । **न; प्रकर्षयुक्त** इति विस्तरः । नैतदेवम्; प्रकर्षयुक्ते समाधौ **ध्यान-नामविधानात् भास्करवत्** । तद्यथा य एव प्रकर्षेण **भासं करोति** स एव **भास्कर**:, न खद्योतकादिः । तद्वत् । **स हीति** विस्तरः । **स ह्यङ्गसमायुक्तः समाधिः शमथविपश्यनाभ्यां** युगनद्धाभ्यामिवाश्वाभ्यां रथो वहतीति **युगनद्धवाही**, तद्भावात् **दृष्टधर्मसुखविहार उक्तः** सूत्रे । **सुखा च प्रतिपदिति** । अङ्गसमायुक्त एव समाधिः । सुखा च प्रतिपदित्युक्त—इति वर्तते । **सुतरां तेन ध्यायन्ति** सुखवत् ।

**क्लिष्टस्य कथं** ध्यानत्वमिति । यदि कुशलाङ्गसमायुक्तः समाधिर्ध्यानम्, क्लिष्टस्यास्वादनासम्प्रयुक्तस्य कथं ध्यानत्वम् ? युक्तमिति वाक्यशेषः । "आस्वादनासम्प्रयुक्तं शुद्धकमनास्रवम्" (अभि० को० ८.६) इति वचनात् ।

**मिथ्योपनिध्यानादिति** । मिथ्यानितीरणादित्यर्थः । **अतिप्रसङ्ग इति** । कामरागपर्यवस्थितेनापि चेतसा मिथ्योपनिध्यानात् तत्प्रसङ्गः । **न; तत्प्रतिरूप एवेति** विस्तरः । नैतदेव**मतिप्रसङ्ग** इति । **तत्प्रतिरूप एव** हि नातिबहुविलक्षणे क्लिष्टे ध्यानमिति **संज्ञासन्निवेशः** । **पूतिबीजवत्** । यथा किञ्चिदबीजं पाषाणादि अत्यन्ततज्जातिविलक्षणं न पूतिबीजमित्युच्यते, किं तर्हि ? बीजजातीयमेवोपहतं यद् भवति तस्मिन्नेव संज्ञासन्निवेशः—'पूतिबीजम्' इति । **उक्तानि चाकुशलान्यपि ध्यानानीति** । स कामरागपर्यवस्थितः कामरागपर्यवस्थानमन्तरीकृत्वा ध्यायति प्रध्यायतीति विस्तरः ।। १ ।।

---

१—१. चाकुशलानि ध्यानान्यपि—का० ।

कीदृशं पुन कुशलमैकाग्र्यं प्रथमं ध्यानम्. कीदृशं यावच्चतुर्थम् ?

प्रथमं तावत्—

**विचारप्रीतिसुखवत्,**

विचारप्रीतिसुखसंयुक्तं कुशलमैकाग्र्यं तत् प्रथमं ध्यानम् । विचार-वचनाद् वितर्कोऽप्युक्तो भवति; साहचर्याद् धूमाग्निवत् । न हि प्रीतिसुखवान् विचारो विना वितर्केणास्ति ।

शेषं पुनर्ध्यानत्रयम्

**पूर्वपूर्वाङ्गवर्जितम् ।**

'शुभैकाग्र्यम्' वर्तते । विचारविवर्जित प्रीतिसुखवत् द्वितीयम्, विचारप्रीतिवर्जितं तृतीयम्, विचारप्रीतिसुखवर्जितं चतुर्थमिति ।

---

अनेन कामरागादिपर्यवस्थानस्यापि ध्यानत्वे सति न दोष इति दर्शयति--**धूमाग्निवदिति** । यथा 'धूमोऽत्र' इति धूमवचनेनाग्निरप्युक्तो भवति; **साहचर्यात्** । न विनाग्निना धूमो भवतीति । अनेनैव चाविना-भावित्वेन धूमस्याभ्यर्हितत्वम्—यत्र हि धूमस्तत्राग्नि·, न तु यत्राग्निस्तत्र धूमः । तथा हि—अयोगुडाङ्गारादिष्वग्निरेव गृह्यते, न धूमः । अस्माच्चाभ्य हितत्वाद् धूमस्य पूर्वनिपात , वासुदेवार्जुनवत् । अन्यथा हि "द्वन्द्वे घि[1]" (पा० सू० २.२.३२) इत्यग्निशब्दस्य पूर्वनिपात स्यात् । कथं पुन. साहचर्येण हि प्रीतिसुखवान् विचारो विना वितर्केण नास्ति । यथा ध्यानान्तरविचार. । न **प्रीतिसुखवानिति अवितर्क·, नैवमयं विचार.** । विशेषितो ह्ययं विचार प्रीति सुखसहपठितः "विचारप्रीतिसुखवत्" ( अभि० को० ८.२ ) इति वक्ष्यति । वितर्कवर्जितं द्वितीयं ध्यानमिति ध्यानान्तरमपि द्वितीय ध्यानं प्राप्नोति । किं च चत्वार्यङ्गानि प्रथमध्याननिर्देशावसानेऽनेनानुक्रमेणोक्तानि—'सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसम्पद्य विहरति' इति । तत विचारप्रीतिसुखसमाधयः प्रथमे ध्याने भवन्ति । एभिश्चतुर्भिरङ्गैर्वितर्केण च सर्वप्रथमोक्तेन पञ्चाङ्गमुच्यते । द्वितीयं पुनरुच्यते—'अवितर्कमविचारं समा-धिज प्रीतिसुखं द्वितीयं ध्यानमुपसम्पद्य विहरति' इति । चतुर्णामेषां पूर्वाङ्गेन विचारलक्षणेन वर्जितमिति । तृतीयमप्येवमुच्यते—'स प्रीतेर्विरागात् उपेक्षको विहरति विस्तरेण, यावत् सुखविहारीति तृतीयं ध्यानमुपसम्पद्य विहरति'

---

१. द्वन्द्वेऽपि—जा० ।

यथा ध्यानानि

**तथारूप्याः,**

केन प्रकारेण ? एतेऽपि हि द्विधा—उपपत्ति-समापत्तितः । चत्वारश्च चोपपत्तय उक्ता. । समापन्त्यारूप्यास्त्वभेदेन कुशलैकाग्रतास्वभावा इति ।

अनेन प्रकारेण सपरिवारा·

**चतुःस्कन्धाः,**

अनुपरिवर्तकरूपाभावात्[1] ।

**अधोभूमिविवेकजाः ॥ २ ॥**

चतुर्थध्यानविवेकजं ह्याकाशानन्त्यायतनम्, तद्विवेकजं विज्ञानानन्त्यायतनम्, तद्विवेकजमाकिञ्चन्यायतनम्, तद्विवेकजं नैवसंज्ञानासंज्ञायतनम्—इत्येवं चत्वार आरूप्या ।

कोऽयं विवेको नाम ? येन मार्गेणाधस्ताद् विमुच्यते; वैराग्यगमनात् ।। २ ।।

---

इति । प्रीतिलक्षणेनापरेणाङ्गेन वर्जितमिति । चतुर्थ पुनरेवमुच्यते—'स सुखस्य च प्रहाणाद्, विस्तरेण यावत्, अदुःखामुखमुपेक्षास्मृतिपरिशुद्धि चतुर्थं ध्यानमुपसम्पद्य विहरति' इति । सुखेनाप्यङ्गेन वर्जितं समाधिरेवात्र केवलमवशिष्यते इति । अत एव सूत्र कृतम्—'विचारप्रीतिसुखवत्'' (अभि० को० ८.२) इति ।।

**एषामपि चोपपत्तय उक्ता** इति । **"आरूप्यधातुरस्थान उपपत्त्या चतुर्विधः"** (अभि० को० ३.३) इति वचनात् ।

**अनुपरिवर्तकरूपाभावादिति** । ध्यानानास्रवसंवराभावादित्यर्थः ।

**विवेक** इति । विविच्यतेऽनेनेति विवेकः । **येन मार्गेणेति** । आनन्तर्यमार्गेण, विमुक्तिमार्गेणापि वा; तदेककार्यत्वात् । **वैराग्यगमनादिति** । तद्वैमुख्यगमनादित्यर्थः ।। २ ।।

---

१. अनुपरिवर्ति०—जा· ।

त एव चारूप्याः

**विभूतरूपसंज्ञाख्याः सह सामन्तकैस्त्रिभिः ।**

आकाशानन्त्यायतनसामन्तकं चतुर्थध्यानालम्बनत्वाद् विभूतरूपसंज्ञाख्यां न लभते । न हि तत्र रूपसंज्ञा विभूता, न विगतेत्यर्थः । यदुक्तं "चतुःस्कन्धा" ( अभि० को० ८ २ ) इति ।

साध्य तावदेतद्—आरूप्येषु रूपं नास्तीति । **यदि हि स्यात्,** कथमारूप्या उच्येरन् ? ईषद्रूपत्वाद्, आपिङ्गलवत् । कीदृशं तावदीषद्रूपं तत्रेष्यते ? यदि [illegible] कथं तदभावे तत्संवरौ भविष्यतः । न चासति भूते भौतिकं युज्यते । अनास्रवसंवरवच्चेत्? सास्रवभूतसद्भावात् ।

समापत्तावपि तत्प्रतिषेध उक्तः ।

अथ कायोऽप्यस्तीन्द्रियाण्यपि रूपीणि । कथं तदीषद्रूपा इष्यन्ते ? परिमाणाल्पत्वाच्चेत्, उदकजन्तुकेष्वप्यदृश्यारूपेषु प्रसङ्गः ? अच्छत्वाच्चेत्,

---

"विभूतरूपसंज्ञाख्याः" इति । विभूता रूपसंज्ञा अस्येति विभूतरूपसंज्ञः, विभूतरूपसंज्ञा इत्याख्या येषामिति विभूतरूपसंज्ञाख्याः ।

**साध्यं तावदेतदिति । निकायान्तरीयाः । यदि हि स्यादिति । वैभाषिकाः । आपिङ्गलवदिति ।** यथा ईषत् पिङ्गल आपिङ्गलः, एवम् ईषद् रूपा आरूप्या इति । **कथ तदभावे तत्संवरौ** कायवाक्संवरौ **भविष्यतः । न चासति भूते** आरूप्यावचरे **संवरभौतिकं** आरूप्यावचरं **युज्यते । अनास्रवसंवरवच्चेत्** । तत्रैतत् स्यात् । यथा न सन्ति अनास्रवाणि भूतानि । अस्ति चानास्रवसंवरो भौतिकं रूपम् । एवमिहापि नारूप्यावचराणि भूतानि स्युः । अथवा आरूप्यावचरसंवरः स्याद् भौतिकं रूपमिति । **तच्च न । सास्रवभूतसद्भावात्** । सास्रवाणि भूतानि सन्ति । तान्यारूप्येषु भवेयुः । अनास्रवाणि तु भूतानि न सन्ति । **अतोऽनास्रवसंवरो यत्र जातः** तत्रत्यानि सास्रवाण्युपादाय भवतीत्यकल्पनेयम्; असाम्यात् । **समापत्तावपि तत्प्रतिषेधः उक्त** इति । अनेनैवोपपत्तिरूपप्रतिषेधेन समापत्तावपि रूपप्रतिषेध उक्तो भवति । नात्र यत्नान्तरमनुष्ठेयम् । **कथम्? यदि** कायवाक्संवर-मात्रम्, कथं तदभावे तत्संवरो भविष्यति ? **न चासति भूते भौतिकं युज्यते** अनास्रवसंवरवच्चेत् ? न, सास्रवभूतसद्भावादिति ।

**"सर्वशो रूपसंज्ञानां समतिक्रमत्वात्"** इति वचनात् । समापत्तावपि तत्प्रतिषेध उक्त इत्यपरे । तदेव नारूप्यसमापत्तिषु रूपमस्तीति दर्शयन्ति ।

**परिमाणाल्पत्वाच्चेत्** । अथ मतम्—परिमाणमात्रं रूपमस्ति, अतः

अन्तराभवरूपावचरेष्वपि प्रसङ्गः ? यतो नाच्छतरं चेत्, भवाग्रमेवारूप्यं स्यात्; समापत्तिवत्तदुपपत्तिविशेषात् । ध्यानोपपत्तिरूपस्यापि चाधरभूमिकेन्द्रियाग्रहणात् कस्तत्र विशेषः ।

द्वयोर्धात्वोरन्वर्था संज्ञा, नारूप्यधातोरिति चेत् । काऽत्र युक्तिः ? "आयुरूष्मणोः संसृष्टवचनान्नडकलापीद्वयवन्नामरूपयोरन्यनिश्रितवचनात् विज्ञानप्रत्ययं नामरूपम्" (        ) इति वचनात् ।

---

ईषद्रूपा इष्यन्ते । उदकजन्तुकेष्वपि अणुत्वाददृश्यारूपेषु प्रसङ्गः । आरूप्यप्रसङ्ग इत्यर्थः । अच्छत्वाच्चेत्[1] । तत्रैतत् स्यात्—रूपस्याच्छत्वादारूप्या इति । अन्तराभवरूपावचरेष्वपि प्रसङ्ग. । अन्तराभवरूपावचरा हि वज्रमयेष्वपि पर्वतेष्वच्छत्वादसज्जमाना गच्छन्ति । तेष्वारूप्यप्रसङ्गः । समापत्तिवत् तदुपपत्तिविशेषाविति । यथैव हि आकाशानन्त्यादिसमापत्तयो विशिष्टतमाः, एवमुपपत्तिविशेषोऽपि तासामभ्युपगन्तव्यः—अच्छाच्छतरतम इति । अथ समापत्तिवदुपपत्तिविशेषोऽच्छाच्छतरतम इति तदेवारूप्यं स्यात् । यदि चारूप्योपपत्तिरूपस्याधरभूमिकेनेन्द्रियेणाच्छतरत्वादग्रहणमित्यारूप्या उच्यन्ते । ध्यानोपपत्तिरूपस्यापि चेति विस्तरः । एष सम्भवो ध्यानोपपत्तिरूपस्यापि चाधरभूमिकेनेन्द्रियेणाग्रहणम् । कथम् ? प्रथमध्यानभूमिकेनेन्द्रियेण द्वितीयभूमिकस्याग्रहणम् । एवं; यावत्, तृतीयध्यानभूमिकेनेन्द्रियेण चतुर्थध्यानभूमिकस्य रूपस्याग्रहणम्, ऊर्ध्वभूमिकस्याच्छतरतमत्वात् । तदेवं ध्यानोपपत्तिरूपस्य चाधरभूमिकेनेन्द्रियेणाग्रहणात् । कस्तत्र विशेषः । आरूप्यधातौ यदच्छतरतमाभ्याम्, सामान्येऽपि त एवारूप्या इष्यन्ते, न रूपावचराः । तस्मान्न तत्र रूपम् ।

अथ मतम्—द्वयोर्धात्वोरन्वर्था संज्ञा । कामगुणप्रभावित. कामधातुः, रूपप्रभावितो रूपधातुरिति । नारूप्यधातोरन्वर्था संज्ञा । किं तर्हि ? यादृच्छिकीति । काऽत्र युक्तिः । द्वयोर्धात्वोरन्वर्था संज्ञा, नारूप्यधातोरिति युक्त्या प्रतिषिद्ध्य 'नारूप्यधातौ रूपमस्ति' इति आगमं परिगृह्याशङ्कित वार्यते । तत्र रूपप्रसिद्ध्यर्थ आयुरूष्मणोरिति विस्तरः । आरूप्येषु रूपास्तित्वसिद्धिरिति चेत् इति । एतत् पदं प्रत्येकं योज्यम् । कथम् ? आयुरूष्मणोः संसृष्टवचनात् रूपास्तित्वसिद्धिरिति चेत्, तत्रैतत् स्यात् सूत्र उक्तम—"यच्चायुष्मन् कौष्ठिल! आयुः, यच्चोष्मकम्, संसृष्टाविमौ धर्मौ न विसृष्टौ" (    ) इति विस्तरः । अतः तत्रायुषि सत्यूष्मणा भवितव्यम् । ऊष्मा च रूपमिति सिद्ध्यति । नडकलापीद्वयवत् नामरूपयोरन्योन्यनिश्रितवचनात् ।

1. अच्छत्वाच्चेत्—जा० ।

अन्यत्र रूपाद् यावत् संस्कारेभ्यो विज्ञानस्यागतिगतिप्रतिषेधाच्चारूप्येषु रूपास्तित्वसिद्धिरिति चेत्? न; सम्प्रधार्य तावदेतत्—यदिदमायुरूष्मणोः संसृष्टत्वमुक्तम्, किमिदं कामावचरमायुः सन्धायोक्तम्, आहोस्वित् सर्वमिति?

यच्च नामरूपयोरन्योन्याश्रितत्वमुक्तं किमिदं कामरूपावचरं नाम सन्धायोक्तम्, आहोस्वित् सर्वमिति? यच्च विज्ञानप्रत्ययं नामरूपमुक्तम्,

---

आरूप्येषु रूपास्तित्वसिद्धिरिति चेत्? सूत्रे उक्तम्—"तद्यथा आयुष्मन् सारिपुत्र! द्वे नडकलाप्यावाकाशे उच्छ्रिते स्याताम्। ते अन्योन्यनिश्रिते, अन्योन्यं निश्रित्य तिष्ठेयाताम्। तत्र कश्चिदेकमपनयेत्, द्वितीया निपतेत्। द्वितीयामपनयेत्, एका निपतेत्। एवमायुष्मन् सारिपुत्र! नामं च रूपं चान्योन्यनिश्रितम्, अन्योन्यं निश्रित्य तिष्ठति" इति विस्तरः।

**विज्ञानप्रत्ययं नामरूपमिति वचनात्।** तस्मादारूप्येषु रूपास्तित्वसिद्धिरिति चेत्? प्रतीत्यसमुत्पादसूत्रे उक्तम्—"आरूप्यप्रसिद्धिक्षणे विज्ञानप्रत्ययं नामरूपम्" इति वचनात्। तस्मात् आरूप्येषु रूपमस्तीति सिद्धयति।

**अन्यत्र रूपादिति** विस्तरः। सूत्र उक्तम्—"रूपोपगं भिक्षवो विज्ञानं तिष्ठति। इति रूपालम्बनरूपप्रतिष्ठितम्। यः कश्चित् भिक्षव एवं वदेत्—अहमन्यत्र **रूपाद्** वेदनायाः संज्ञायाः **संस्कारेभ्यो विज्ञानस्यागतिं गतिं** वा वदामीति, तस्य तद् वाग्वस्त्वेव स्यात्" इति। अस्मामपि चागमात् **आरूप्येषु रूपमस्तीति सिद्धयति एवं चेत्**; तन्न; **सम्प्रधार्यत्वात्**।

**आहोस्वित् सर्वमिति**। कामरूपारूप्यावचरम्। अयमत्राभिप्रायार्थः—कामरूपावचरमेवायुः सन्धायैवमुक्तम्। तथा ह्युक्तम्—

"आयुरूष्मा च विज्ञानं यदा कायं जहत्यमी।
अपविद्धस्तदा शेते यथा काष्ठमचेतनः॥" (          ) इति।

न चारूप्यधातौ कायोऽस्ति, कुत एव कायनिदानम्! रूपधातौ तु यद्यपि कायोऽस्ति, न तु कायनिदानं प्रज्ञायत इति।

**यच्च नामरूपयोरन्योन्याश्रितत्वमुक्तम्,** तदपि कामरूपावचरमेव सन्धायोक्तम्—इति लक्ष्यते। द्वयसम्भवे हि अन्योन्याश्रितत्वं सम्भवति। **यच्च विज्ञानप्रत्ययं नामरूपमिति**। विज्ञानं प्रत्ययोऽस्येति विज्ञानप्रत्ययम

किमत्र सर्वविज्ञानं[1] नामरूपस्य प्रत्ययमुक्तम्, आहोस्वित् सर्वं नामरूपं विज्ञान-प्रत्ययमिति ? यच्चान्यत्र रूपादिभ्यो विज्ञानस्यागतिगतिप्रतिषेधः ।

किमत्र सर्वैरेतैर्विना[2] तत्प्रतिषेधः, आहोस्वित् एकेनापीति ? अविशेष-वचनान्न सम्प्रधार्यमिति चेत्, अतिप्रसङ्गः । बाह्यस्यापि ह्यूष्मण आयुषा विनाभावो न प्राप्नोति । बाह्यस्यापि च रूपस्य विज्ञानाश्रितत्वम्[3];

---

नामरूपमित्येव [illegible] । **किमत्र सर्वविज्ञानं** कामावचर-संस्कारप्रत्ययं, यावत्, आरूप्यसंस्कारप्रत्ययं **नामरूपस्य प्रत्ययः । आहोस्वित् सर्वं नामरूप विज्ञानप्रत्ययमिति** । वयं ब्रूमः—विज्ञानप्रत्ययं नामरूपमित्येवं सर्वस्य नामरूपस्य विज्ञानं प्रत्यय इत्यवधार्यते । न तु सर्वं विज्ञानं नाम-रूपस्य प्रत्यय इत्यवधार्यते । किञ्चिद् विज्ञानं नाम्न एव प्रत्ययो यदा-रूप्यावचरसंस्कारप्रत्ययम् । तदिदमुक्तं भवति—प्रत्यय एव विज्ञानमस्य नामरूपस्य, न त्वस्यैव समुदितस्य नामरूपस्य प्रत्यय इति । सम्भवं प्रत्येवमुच्यते । तथा हि—उपपादुकानां विज्ञानप्रत्ययं षडायतनमेव भवति, न नामरूपम् । अनिष्पन्नषडायतनावस्था हि पञ्चस्कन्धाः 'नामरूपम्' इत्याख्या-यन्ते । सूत्रं च एतमेवार्थं द्योतयति—"विज्ञानं चेदानन्द, मातुः कुक्षिं नावक्रमेत् अपि तु तन्नामरूपं कललत्वाय सम्मूर्छेत् ? न भदन्त । विज्ञानं चेदानन्दावक्राम्य क्षिप्रमेवापक्रामेद्, अपि तु तन्नामरूपमित्थत्वाय प्रज्ञायेत ? नो भदन्त । विज्ञानं चेदानन्द, दहरस्य कुमारस्य कुमारिकाया वा उच्छि-द्येत, विनश्येत्, न भवेद्, अपि तु तन्नामरूपं वृद्धिं विपुलतामापद्येत ? नो भदन्त । तदनेनापि पर्यायेण वेदितव्यम् यद् विज्ञानस्य प्रत्ययं नामरूपम् नामरूपप्रत्ययं च विज्ञानम्" (       ) इति विस्तरः ।

**किमत्र सर्वैरेतै** रूपादिभि**र्विना तत्प्रतिषेध आगतिगतिप्रतिषेधः** । तत्र पूर्वस्माल्लोकात् अन्तराभवसन्तत्या इहोपपत्तिः=आगतिः । अन्तरा-भवसन्तत्या पुनरस्माल्लोकात् परलोक उपपत्तिः=गतिः । **आहोस्विदेकेनापि** रूपादीनाम् अन्यतममेव । वयं ब्रूमः—सर्वैर्विना तत्प्रतिषेध इति । **अविशेष-वचनान्न सम्प्रधार्यमिति चेत्** । स्यादेषा बुद्धिः—अविशेषेणेदं **सूत्रवचनम्**—"यच्चायुष्मन् महाकौष्ठिल; आयुरिति विस्तरेण, यावत् रूपोपगं विज्ञानं तिष्ठति" इति । अनेन सूत्रवचनेन विशेषितं कामावचरं रूपावचरं वा आयुः सन्धायोक्तम्, यावत् सर्वैरेव तैर्विना रूपादिभिस्तत् प्रतिषेध इति ? अत्रोच्यते—**अतिप्रसङ्गः; बाह्यस्यापि हि ऊष्मणः आयुषा विनाभावो न**

---

१. सर्व विज्ञानम्—का० । २ सर्वैरेव तै०—का० । ३. नानाश्रितत्वम्—का० ।

अविशेषवचनात् ।
धात्वोरपि कवडीकाराहारप्रसङ्गः ।

"अतिक्रम्य देवान् कवडीकराहारभक्षान्" इति वचनात्, प्रीत्याहारवचनाच्चाप्रसङ्ग इति चेत् ?

आरूप्येष्वपि रूपस्याप्रसङ्गः । "रूपाणां निःसरणमारूप्याः", "ये ते शान्ता विमोक्षा अतिक्रम्य रूपाण्यारूप्याः", "अरूपिणः सन्ति सत्त्वाः", "सर्वशो रूपसंज्ञाना समतिक्रमात्" ( ) इति वचनात् । सति हि रूपे स्वं

---

प्राप्नोतीत्यविशेषवचनात् । न हि एवं विशेषितम्—'यच्चायुष्मन् कौष्ठिल, आयुः, यच्च ऊष्मा आध्यात्मिकः' इत्यादि । बाह्यस्यापि रूपस्य काष्ठकुड्यादेरसत्त्वसंख्यातस्य विज्ञानाश्रितत्वं प्राप्नोति; अविशेषवचनात् । चतुर्विज्ञानस्थितिवचनाच्चेति विस्तरः । यथा चतसृणां विज्ञानस्थितीनामविशेषवचनात् आरूप्यधातौ तव रूपास्तित्वम्, एवं तव आहारचतुष्कवचनाद् रूपारूप्यधात्वोः कवडीकाराहारप्रसङ्गः । एवं हि सूत्रं पठ्यते—"चत्वार आहारा भूतानां सत्त्वानां स्थितये सम्भवैषिणां चानुग्रहाय । कतमे चत्वारः ? कवलीकाराहार औदारिकः सूक्ष्मः, स्पर्शो द्वितीयः, मनःसञ्चेतना तृतीयः, विज्ञानमाहारश्चतुर्थः" ( ) इति । एवमाहारचतुष्कवचनात् सत्त्वानां स्थित्यर्थमविशेषेण । नामरूपधात्वोरविशेषितत्वात् तव रूपारूप्यधात्वोरपि कवडीकाराहारप्रसङ्गः । अतिक्रम्येति विस्तरः । तत्र निकायान्तरीयस्यैतत् स्यात्—अस्त्यस्योत्सर्गस्यापवादः । अतिक्रम्य देवान् कवडीकाराहारभक्षानिति वचनात् । उदायिसूत्रादिषु "भेदाच्च कायस्यातिक्रम्य देवान् कवडीकाराहारभक्षान् अन्यतमस्मिं दिव्ये मनोमयकाये उपपद्यते" इति । प्रीत्याहारवचनाच्चेति । "भवति भिक्षवः स समयो यदयं लोकः संवर्तते, संवर्तमाने लोके यद्भूयसा सत्त्वा आभास्वरे देवनिकाये उत्पद्यन्ते । तत्र भवन्ति रूपिणो मनोमया अविकला अहीनेन्द्रियाः सर्वाङ्गप्रत्यङ्गोपेताः शुभा वर्णस्थानीयाः स्वयम्प्रभाः विहायसङ्गमाः प्रीतिभक्षाः प्रीत्याहारा दीर्घायुषो दीर्घमध्वानं तिष्ठन्ति" ( ) इत्येवमादिषु सूत्रेषु वचनात् । अप्रसङ्गः कवडीकाराहारस्य ।

यद्येवम्, आरूप्येष्वपि रूपस्याप्रसङ्गः । कि कारणम् ? अपवादात् । कथम् ? रूपाणां निःसरणमारूप्या इत्येकं सूत्रमपवादः । ये ते शान्ता विमोक्षा अतिक्रम्य रूपाणि आरूप्या इति द्वितीयम् । अरूपिणः सन्ति सत्त्वा इति तृतीयम् । सर्वशो रूपसंज्ञानां समतिक्रमात् इति चतुर्थं । सति हि रूप इति । यद्यारूप्यसमापत्त्युपपत्तिषु रूपं स्यात् । सति हि रूपे

रूपमवश्यं सञ्जानीरन्निति। औदारिकमधोभूमिकं रूपमभिसन्धायोक्तमिति चेत् ? कवडीकाराहारेऽपि तुल्यम्। ध्यानानामपि चाधोभूमिनिःसरणत्वादारूप्यत्वप्रसङ्गः[1]।

**वेदनादिनिःसरणं च किं नोक्तम्**[2] ? अधोभूमिकवेदनानिःसरणात्। रूपजातिं तु **कृत्स्नामतिक्रान्ताः**, न वेदनादिजातिम्। अतो रूपाणां निःसरणमुक्तम्[3], न[4] **वेदनादिनिःसरणम्**[4]।

---

**स्वं रूपमवश्यं सञ्जानीरन्निति**। 'सर्वशो रूपसंज्ञानां समतिक्रमत्वाद्' इति वचनं नोक्तं स्यात्। उक्तं तु, अतोऽपि न तत्र रूपमस्ति। **औदारिकमिति** विस्तरः। तत्रैतत् स्यात्—**औदारिकमधोभूमिकं रूपमभिसन्धायोक्तम्**—ये ते शान्ता विमोक्षा इति विस्तरेण। अत्र ब्रूमः—**कवडीकाराहारेऽपि तुल्यम्**। कथम् ? 'अतिक्रम्य देवान् कवडीकाराहारभक्षान्' इति औदारिकमधोभूमिकं कवडीकाराहारमभिसन्धायोक्तम्, न रूपावचरं कवडीकाराहारं सूक्ष्ममिति। यदि च अधोभूम्यौदारिकरूपनिःसरणादारूप्या इत्युच्यन्ते, **ध्यानानामपि चाधोभूमिनिःसरणत्वादारूप्यत्वप्रसङ्गः**। कथम् ? कामावचरौदारिकरूपनिःसरणं प्रथमं ध्यानम्। एवमुत्तरोत्तरौदारिकरूपनिःसरणम्, यावत्, चतुर्थध्यानमित्यारूप्यत्वप्रसङ्गः।

**वेदनादिनिःसरणं च किं नोक्तम्**। यदि अधोभूमिकौदारिकनिःसरणात् सत्यपि स्वभूमिकरूपे आरूप्या इत्युच्यन्ते, वेदनादिनिःसरणात् आरूप्या अवेदनाः—इति किं नोच्यन्ते सत्यामपि स्वभूमिवेदनायाम्। आदिशब्देन, यावद्, अविज्ञानाः—इति किं नोच्यन्ते सत्यपि स्वभूमिविज्ञाने इति। किं कारणम् ? **अधोभूमिकवेदनादिनिःसरणात्**। अधोभूम्यौदारिकवेदनादिनिःसरणादित्यर्थः। **रूपजातिं तु कृत्स्नामतिक्रान्ता**। या काचिद् रूपजातिः औदारिकी वा सूक्ष्मा वा, आध्यात्मिकी वा बाह्या वा, तां सर्वामतिक्रान्ता आरूप्याः समापत्त्युपपत्तौ। **न वेदनादिजातिम्**। न वेदना सर्वामतिक्रान्ता आरूप्याः समापत्त्युपपत्तौ; अदुःखासुखवेदनास्तित्वात्। आदि-शब्देन, यावद् विज्ञानं वक्तव्यम्। **अतो रूपाणां निःसरणमुक्तम्, न वेदनादिनिःसरणम्**। तस्मादेवंवादिनामस्माकं न भवत्ययं प्रसङ्गः—अधोभूमिकवेदनादिनिःसरणात् वेदनादिनिःसरणं च किं नोक्तमिति।

---

१. ०दारूप्यप्र०—का०। २ नोक्ता—का०।

३. ०मुक्ताः—का०। ४-४. का० नास्तके नास्ति।

भवेन भवस्यानि सरणवचनं तु तेनैव तस्यानिःसरणाद्, आस्रवानत्यन्तनिःसरणाच्च[1]। ध्यानेषु चोक्तं भगवता—"यत्तत्र भवति रूपगतं वा यावद्विज्ञानगतं वा" इति। आरूप्येषु तूक्तम्—"यत्तत्र भवति वेदनागतं वा यावद्विज्ञानगतं वा" ( ) इति। सत्यां तेषु रूपजानौ कस्माद्रूपगतं वेति नावक्ष्यत्। तस्मात्

**नारूप्ये रूपसद्भावः,**

कथमिदानीमनल्पकल्पोच्छिन्नाद् रूपात् पुनरपि रूपोत्पत्तिस्ततः प्रच्युतानाम् ?

**रूपोत्पत्तिस्तु चित्ततः ॥ ३ ॥**

रूपस्य चित्तादेवोत्पत्तिस्तद्विपाकहेतुपरिभाविताल्लब्धवृत्तितः। कथमनाश्रित्य रूपं चित्तं वर्तते ? कस्मान्न वर्तितव्यम् ? इहैवमदर्शनात्। कवडीकारान्तरेणाऽपि विना रूपधातौ न वर्तितव्यम्। किं कारणम् ? इहैवमदर्शनात्। उक्तं[2] यथा वर्तते ॥ ३ ॥

गतमेतत् ॥

इदं वक्तव्यम्—किमेषामाकाशानन्त्यायतनादीनामाकाशादय एवालम्बनं यत एवं समाख्यायते ? न हि। कथं तर्हि ? त्रयस्तावत्

---

आह यदि रूपाणां निःसरणमारूप्याः, यत्तर्ह्युक्तं सूत्रे—"नाहं भवेन भवस्य निःसरणं वदामि" इति, तत् कथं रूपभवस्यारूप्यभवेन निःसरणम् ? **भवेन भवस्यानिःसरणवचनं तु तेनैव तस्यानिःसरणात्।** तेनैव भवेन तस्यैव भवस्यानिःसरणादेवमुक्तम्। **आस्रवानत्यन्तनिःसरणाच्च।** आस्रवनिःसरणम्। न हि रूपभवेन कामभवस्य निःसरणमिति। आरूप्यभवस्यापि तेन निःसरणं भवति। न चात्यन्तनिःसरणं कामभवात् तेन भवति; पुनरागमनात्। तथा आरूप्यभवेन रूपभवस्य निःसरणम्, न कामभवस्य। न चात्यन्तनिःसरणं रूपभवानामारूप्यभवेन।

**उक्तं यथा वर्तत** इति। "निकायं जीवितं चात्र निश्रिता चित्त सन्ततिः" ( अभि० को० ३.३ ) इत्यादि ॥ ३ ॥

त्रय इति पुल्लिङ्गनिर्देशः। 'आरूप्याः' इत्यभिसम्बन्धनात्।

---

१. असर्वान०—का०। २. उक्तं च पूर्वं—का०।

**आकाशानन्त्यविज्ञानानन्त्याकिञ्चन्यसंज्ञकाः ।**

**तथाप्रयोगात्,**

**अनन्तमाकाशम्, अनन्तं** विज्ञानम्, नास्ति किञ्चिदित्येव मनसिकुर्वाणास्तेषु प्रयुज्यन्ते यथासंख्यम् । अत एषामेताः संज्ञा इति ।

**मान्द्यात्तु नसंज्ञानाप्यसंज्ञकः ।। ४ ।।**

मृदुत्वात्तु संज्ञाया नैवसंज्ञानासंज्ञायतनमुक्तम् । न हि सा पट्वी संज्ञा, न च पुनर्नैव संज्ञेति ।

"यद्यपि तत्राप्येवं प्रयुज्यन्ते संज्ञारोगः संज्ञागण्डः संज्ञाशल्यः असंज्ञकः[1] सम्मोहम् एतच्छान्तमेतत् प्रणीतं यदुत नैवसंज्ञानासंज्ञायतनम्" इति । कस्मात्तु तैस्तदेवं गृह्यत इत्यवश्यमिदं वक्तव्यं जायते । मृदुत्वात् संज्ञानामित्येतदेवोक्तम् ।। ४ ।।

---

"**तथाप्रयोगात्**" इति । प्रयोगकाले आकाशादीन्यालम्बनानि भवन्ति । अन्यदा तु अन्येऽपि धर्मा यथासम्भवमालम्बनानीति दर्शयति ।

"**मान्द्यात्तु नसंज्ञा-नाप्यसंज्ञकः**" इति । चतुर्थ आरूप्यः कस्मान्न संज्ञीत्युच्यते, नाप्यसंज्ञ इति ? **मान्द्यात्** । तु-शब्देन तस्याकारोऽन्तर्नीतरूपो वेदितव्यः । येन हि कारणेन स चतुर्थ आरूप्यो **नैवसंज्ञानासंज्ञायतनमित्युच्यते,** तदेव 'कारणम्' इत्युच्यते । मान्द्यादिति । प्रयोगस्तु **अस्यैवं** सूचितो भवति; अन्वर्थसंज्ञाकरणात् ।

अत एवाह—**यद्यपि तत्राप्येवं प्रयुज्यत** इत्यादि । **संज्ञागन्धः** गन्धवत् गन्धः । **एवं यावच्छल्यः । असंज्ञकः सम्मोह**मिति । संज्ञाया अभावो हि सम्मोहकारणम् इत्यर्थः । शीयते इति संज्ञासमुच्छेदादित्यभिप्रायः । **एतच्छान्तमेतत् प्रणीतम्** । किं तत् ? इत्याह—**यदुत नैवसंज्ञानासंज्ञायतन**मिति । संज्ञामान्द्यमभिप्रीयते । अत्र प्रश्नयितव्यम्—**कस्मात् तु तैरेवं गृह्यत** इति । तैरिति तत्समापत्तिभिः, तदिति नैवसंज्ञानासंज्ञायतनम्, एवं गृह्यत इति नैवसंज्ञानासंज्ञायतनेति गृह्यत इत्यर्थः । तदेवं परिप्रश्ने निगृहीतस्या**वश्यमिदं**[2] **वक्तव्यं जायते—मृदुत्वात् संज्ञानां** नैवसंज्ञानासंज्ञायतनम्-गने **इति । एतदेवोक्तम्** ।। ४ ।।

---

१—१. आसंज्ञिकसम्मोहः—का० ।

२. विगृहीत०—जा० ।

**इति मौलं समापत्तिद्रव्यमष्टविधम्,**

इत्येतान्यष्टौ मौलानि समापत्तिद्रव्याणि यदुत चत्वारि ध्यानानि, चत्वार आरूप्या इति ।

तेषां पुनः

**त्रिधा ।**

**सप्त,**

भवाग्रादन्यानि सप्त त्रिविधानि ।

**आस्वादनवच्छुद्धानास्रवाणि,**

शुद्धकान्यनास्रवाणि च ।

**अष्टमं द्विधा ॥ ५ ॥**

अनास्रवं नास्ति ॥ ५ ॥

तत्र पुनः

**आस्वादनासम्प्रयुक्तं सतृष्णम्,**

तृष्णा ह्यास्वादना ।

**लौकिकं शुभम् ।**

**शुद्धकम्,**

लौकिकं कुशलं समापत्तिद्रव्यं शुद्धकमुच्यतेऽलोभादि शुद्धधर्मयोगात् ।
किं पुनस्तेनास्वादनासम्प्रयुक्तेनास्वाद्यते ?

**तत् तदास्वाद्यम्,**

तच्छुद्धकं समापत्तिद्रव्यं तेनास्वाद्यते समनन्तरातीतम् । यदास्वादयति तस्माद् व्युत्थितो येनास्वादयति तत्समापन्नः ।

---

समापत्तिद्रव्याणि मौलानीति । शाखास्तेषां नोपन्यस्यन्त इत्यभिप्रायः ।

कथं सप्त त्रिविधानीति ? आह—"आस्वादनवत् शुद्धानास्रवाणि" इति ।

अनास्रवं नास्तीति । संज्ञामान्द्यात् ॥ ५ ॥

**लोकोत्तरमनास्रवम् ॥ ६ ॥**

यल्लोकोत्तरं समापत्तिद्रव्यं तदनास्रवम् । एषां च समापत्तिद्रव्याणां ध्यानान्येव भवन्ति, नारूप्याः ॥ ६ ॥

तत्र

**पञ्चाद्ये,**

प्रथमे भागे पञ्चाङ्गानि ।

**तर्कचारौ च प्रीतिसौख्यसमाधयः ।**

वितर्कः, विचारः, प्रीतिः, सुखम्, चित्तैकाग्रता च—इत्येतानि पञ्चाङ्गानि । समाधिः किलाङ्गं ध्यानं च । शेषाण्यङ्गानीति । यथा तु चतुरङ्गसेना[1], एवं पञ्चाङ्गध्यानम्[2] ।

**प्रीत्यादयः प्रसादश्च द्वितीयेऽङ्गचतुष्टयम् ॥ ७ ॥**

द्वितीये ध्याने चत्वार्यङ्गानि—अध्यात्मसम्प्रसादः, प्रीतिः, सुखम्, चित्तैकाग्रता च ॥ ७ ॥

**तृतीये पञ्च तूपेक्षा स्मृतिः प्रज्ञा सुखं स्थितिः ।**

तृतीये तु ध्याने पञ्चाङ्गानि—उपेक्षा, स्मृतिः, सम्प्रज्ञानम्, सुखम्,

---

**यदास्वादयति तस्माद् व्युत्थित** इति । शुद्धकात् । **येनास्वादयति तत्समापन्न** इति । आस्वादनासम्प्रयुक्तम् ॥ ६ ॥

**यथा तु**[3] **चतुरङ्गसेना** । नाङ्गेभ्योऽर्थान्तरभूता । **एवं पञ्चाङ्गध्यानं** नार्थान्तरमिति स्वमतं दर्शयति । **प्रीत्यादय** इति । पूर्वोक्ताः प्रीति-सुख-चित्तैकाग्रता· ।

**अध्यात्मसम्प्रसादश्चेति** । चतुरङ्गं द्वितीयम् ॥ ७ ॥

"**तृतीये पञ्च तूपेक्षा**" इति । संस्कारोपेक्षात्र गृह्यते । या प्रीतिरनाभोगलक्षणा । **स्मृतिः** उपेक्षानिमित्तस्यासम्प्रमोषः । स्मृत्यसम्प्रमोषे

---

१. चतुरङ्गा सेना—का० । २. पञ्चाङ्ग ध्यानम्—का० ।

३. यथान्त—जा० ।

समाधिश्च। समाधिपर्यायो हि स्थितिः। "सम्यक्समाधिः कतमः? या चित्तस्य स्थितिः" इति सूत्रे वचनात्।

**चत्वार्यन्तेऽसुखादुःखोपेक्षास्मृतिसमाधयः ॥ ८ ॥**

चतुर्थं ध्यानमन्त्यम्। तत्र चत्वार्यङ्गानि—अदुःखासुखा वेदना, उपेक्षापरिशुद्धिः, स्मृतिपरिशुद्धिः, समाधिश्च।

तान्येतान्यष्टादश ध्यानाङ्गानि भवन्ति; प्रथमतृतीययोः पञ्चाङ्गत्वात्, द्वितीयचतुर्थयोश्चतुरङ्गत्वात्॥ ८॥

नामत एवम्,

**द्रव्यतो दश चैकं च,**

द्रव्यत एतान्येकादश भवन्ति। प्रथमध्यानिकानि[1] पञ्च। द्वितीयेऽध्यात्मसम्प्रसादो वर्धते। तृतीये उपेक्षास्मृतिसम्प्रज्ञानसुखानि। चतुर्थेऽदुःखासुखा वेदनेति। अत एवोच्यते—यान्यङ्गानि प्रथमे ध्याने द्वितीयेऽपि तानीति। चतुष्कोटिकम्। प्रथमा कोटिर्वितर्कविचारौ। द्वितीया अध्यात्मसम्प्रसादः। तृतीया प्रीतिः सुखं चित्तैकाग्रता च। चतुर्थी धर्मा इति। एवं सर्वाणि ध्यानाङ्गानि परस्परं योज्यानि।

सम्प्रज्ञानता सम्प्रज्ञानम्। चतुर्थे उपेक्षापरिशुद्धिः। उपेक्षायाः परिशुद्धिः उपेक्षापरिशुद्धिः; । अष्टावपक्षाला अपक्षीयन्ते। एवं स्मृतिपरिशुद्धिः ॥ ८ ॥

**प्रथमध्यानिकानीति**। प्रथमध्याने भवन्ति। **अत एवोच्यत** इति। यस्माद् द्वितीयादिषु **अध्यात्मसम्प्रसादादयो वर्धन्ते**। कथम्? **चतुष्कोटिकम्**। स्यात् प्रथमे ध्याने न द्वितीये। स्याद् द्वितीये न प्रथमे। स्यादुभयोः। स्यान्नोभयोः। **एवं सर्वाणि ध्यानाङ्गानि परस्पर योज्यानि**। कथम्? यान्यङ्गानि प्रथमे ध्याने, तृतीयेऽपि तानि। चतुष्कोटिकम्। प्रथमा कोटिः—वितर्कविचारप्रीतिसुखानि। द्वितीया—उपेक्षास्मृतिसम्प्रज्ञानसुखानि। तृतीया समाधिः। चतुर्थी कोटिः—उक्तनिर्मुक्ता धर्माः। यान्यङ्गानि प्रथमे ध्याने, चतुर्थेऽपि तानि। चतुष्कोटिकम्। प्रथमा कोटिः—वितर्कविचारप्रीतिसुखानि। द्वितीया—अदुःखासुखा वेदना। तृतीया—समाधिः।

१. प्राथम०—का०।

कस्मात् तृतीये ध्याने सुखं द्रव्यान्तरमुच्यते ? यस्मात्तद् वेदनासुखम् । ध्यानयोस्तु

**प्रस्रब्धिसुखमाद्ययोः ।**

प्रथमद्वितीययोस्तु ध्यानयोः प्रस्रब्धिसुखमित्युक्तम् ।

इह प्रस्रब्धिसुखं तत्र वेदनासुखमिति कुत एतत् ? द्वयोर्ध्यानसमापत्त्योः **सुखेन्द्रियायोगात्** । न हि तत्तयोः कायिकं युज्यते; समापन्नस्य विज्ञानकायाभावात् । नापि चैतसिकम्; प्रीतिवचनात् । प्रीतिर्हि सौमनस्यम् । न सुखसौमनस्ययौगपद्यमस्ति । न चापि तयोः पर्यायेण ध्याने वृत्तिर्युक्ता; पञ्चाङ्गवचनादिति ।

---

चतुर्थी—उक्तनिर्मुक्ता धर्माः । यान्यङ्गानि द्वितीये ध्याने, तृतीयेऽपि तानि । चतुष्कोटिकम् । प्रथमा कोटिः— अध्यात्मसम्प्रसाद-प्रीति-सुखानि । द्वितीया—उपेक्षा-स्मृति-सम्प्रज्ञानसुखानि । तृतीया —समाधिः । चतुर्थी उक्तनिर्मुक्ता धर्माः । यान्यङ्गानि द्वितीये ध्याने, चतुर्थेऽपि वा तानि । चतुष्कोटिकम् । प्रथमा कोटिः—अध्यात्मसम्प्रसादप्रीतिसुखानि । द्वितीया—तदङ्गानि, समाधिं हित्वा । तृतीया—समाधिः । चतुर्थी—उक्तनिर्मुक्ता धर्माः । यान्यङ्गानि तृतीये ध्याने, चतुर्थेऽपि तानि । चतुष्कोटिकम् । प्रथमा कोटिः—समाधिवर्ज्यानि तदङ्गानि । द्वितीयापि—एवम् । तृतीया-समाधिः । चतुर्थी—उक्तनिर्मुक्ता धर्माः । एतच्च तदेकावचरं नाम ।

**कस्मात् तृतीये ध्याने सुखं द्रव्यान्तरमुच्यते** इति । कथमुच्यते—तान्येतानि अष्टादशध्यानाङ्गानि भवन्तीति विस्तरेणोक्त्वा पुनराह—नामत एवम् । "द्रव्यतो दश चैकं च" (अभि० को० ८.९) द्रव्यत एतान्येकादश भवन्ति । प्रथमध्यानिकानि पञ्च, द्वितीयेऽध्यात्मसम्प्रसादो वर्धते, तृतीये उपेक्षास्मृतिसम्प्रज्ञानसुखानीति वचनात् ।

**सुखेन्द्रियायोगादिति** ।। सुखेन्द्रियासम्भवात् । नास्त्येव चैतसिकं सुखेन्द्रियं त्रिष्वपि हि ध्यानेषु, किं तर्हि ? कायिकमेव मुखमङ्गव्यवस्थापितम्; समाहितावस्थान्तरालसमुदाचारात् । दार्ष्टान्तिकानां किलैष पक्षः । तेषां हि न द्विभूमिकमेव सुखेन्द्रियं [illegible] किं तर्हि ? चतुर्भूमिकमपि सुखेन्द्रियं भवति । कामावचरम्, यावत्, तृतीयध्यानभूमिकमिति । अत एव च **विभाषायां** भदन्तेन **सौत्रान्तिकेनोक्तम्**—

'आभिधार्मिकाणाम् अरघट्टेनेव चक्षुर्विज्ञानादिकमधस्तादूर्ध्वं कृष्यते'

**अपरे** पुनराहुः—नास्त्येव चैतसिकं सुखेन्द्रियं त्रिष्वपि हि ध्यानेषु । किं[1] तर्हि[1] ? कायिकमेव सुखमङ्ग[2] व्यवस्थापितमिति ।

यत्तर्हि सूत्र उक्तम्—"सुखेन्द्रियं कतमम् ? यत् सुखवेदनीयेन स्पर्शेन स्पृष्टस्योत्पद्यते कायिकं चैतसिकं सातं वेदितं वेदनागतम्—इदमुच्यते सुखेन्द्रियम्" इति ? केनापि अध्यारोपित एष पाठः । सर्वनिकायान्तरेषु कायिकमित्येव पाठात् । "सुखं च कायेन प्रतिसंवेदयते" इति स्वशब्देन वचनाच्च ।

मनःकायेनेति[3] चेत्, एवमुक्त्वा को गुणः ? चतुर्थे ध्याने प्रस्रब्धिभूयस्त्वेऽपि सुखावचनाच्च । सुखवेदनानुकूला प्रस्रब्धिः सुखमिति चेत्, तृतीये प्रस्रब्धिसुखावचनं कस्मात् ! उपेक्षोपहतत्वादिति चेत् ? न;

---

इति । तदेवमस्येष्टं भवति—चक्षुर्विज्ञानादिकद्वितीयादिध्यानभूमिकमपि भवतीति ।

**अध्यारोपित एष पाठ** इति । योऽयं चैतसिक इति पाठः । **सुखं च कायेन प्रतिसंवेदयत इति स्व-शब्देन वचनाच्चेति** । तृतीयध्याननिर्देश एवमुक्तम्—'स प्रीतेर्विरागाद् उपेक्षको विहरति स्मृतिमान् सम्प्रजानमानः, सुखं च कायेन प्रतिसंवेदयते । यत्तदार्या आचक्षते—उपेक्षकः स्मृतिमान् सुखविहारी तृतीयं ध्यानमुपसम्पद्य विहरति' इति । यदि हि तच्चैतसिकं स्यात्, कथं तत् कायेन प्रतिसंवेदयते । **मनःकायेनेति** । मनःसमुदायेनैवमुक्त्वा । **को गुण इति** । सुखं च मनसा प्रतिसंवेदयति. सुखं च कायेन प्रतिसंवेदयते—इत्येवं वा वक्तव्यं स्यादित्यभिप्रायः । **चतुर्थे ध्याने प्रश्रब्धिभूयस्त्वेऽपि सुखावचनाच्चेति** । **चतुर्थे ध्याने** प्रश्रब्धिसुखं भूयो भवति, वहुतरं भवति । ध्यानान्तरेभ्यश्च चतुर्थस्य प्रश्रब्धतरत्वात् । तद्भूयस्त्वेऽपि सुखस्यावचनम् । चतुर्थे ध्याने सुखं नोच्यते; तस्य सुखस्यावचनात् । वेदनासुखमेव तत् तृतीये ध्याने गम्यते, न चतुर्थे सुखा वेदनास्तीति तत्र नोच्यत इत्यभिप्रायः । **सुखवेदनानुकूला प्रश्रब्धिः सुखमिति चेत्** । स्यान्मतम्—प्रथमद्वितीययोर्ध्यानयोः सुखवेदनानुकूला प्रश्रब्धिः, तद्द्वयोः सुखमित्युक्त्वा, चतुर्थे ध्याने प्रश्रब्धिः सुखवेदनानुकूला न भवतीति नोक्ता । यद्येवं **तृतीये प्रश्रब्धिसुखावचनं कस्मात्** । तृतीयध्यानप्रश्रब्धिरपि सुखवेदनानुकूला भवति । तत्र प्रश्रब्धिसुखं कस्मान्नोक्तम् । वेदनासुखमेव

---

१-१ का० पुस्तके नास्ति ।　२. ०मङ्ग-का० ।　३. मनस्का०-का० ।

अभि० को० ४ : ८

उपेक्षयैव तद्वृद्धेः[1]। पूर्विकाभ्यां तद्विशेषात्। "यस्मिन् समये आर्यश्रावकः प्रविवेकजां प्रीतिं कायेन साक्षात्कृत्योपसम्पद्य विहरति" (        ) इत्यत्र सूत्रे प्रश्रब्धिसुखयोः पृथग्वचनान्न प्रश्रब्धिरेव सुखम्।

समापन्नस्य कथं कायविज्ञानमिति चेत्? समाधिविशेषजेन प्रश्रब्धिनाम्ना[2] सुखवेदनीयेन वायुना कायस्फरणात्। बहिर्विक्षेपात् समाधिभ्रंश इति चेत्? न; समाधिजस्यान्तःकायसम्भूतस्य कायसुखस्य समाध्यनुकूलत्वात्। कायविज्ञानकाले व्युत्थितः स्यादिति चेत्? न; अतएव।

हि तत्र भवद्भिर्व्यवस्थापितम्। न प्रश्रब्धिसुखम्; द्विसुखापाठात्। उपेक्षोपहतत्वादिति चेत्। स्यान्मतम् तृतीये ध्याने उपेक्षा मध्यतालक्षणा भवति. तयोपहता प्रश्रब्धिरिति नोच्यत इति? न: उपेक्षयैव तद्वृद्धेः। नैतदेवम्. उपेक्षयैव तु तत्र तृतीये ध्याने प्रश्रब्धिसुखवृद्धेः। न ह्युपघातहेतुनैव वृद्धिर्युज्यत इति। कथमुपेक्षयैव तद्वृद्धिः? अतो ब्रवीति--पूर्विकाभ्यां तद्विशेषादिति। पूर्विकाभ्यामिति प्रथमद्वितीयध्यानप्रश्रब्धिभ्याम्। तृतीयध्यानप्रश्रब्धिर्विशिष्टा; पूर्वकाभ्यां[3] ध्यानाभ्यां तृतीयस्य विशिष्टत्वात्। यस्मिन् समये इति विस्तरः। यस्मिन् समये आर्यश्रावकः प्रविवेकजां प्रीतिं कायेन साक्षात्कृत्वोपसम्पद्य विहरति. पञ्चास्य धर्मा तस्मिन् समये प्रहीयन्ते। पञ्च धर्मा भावनापरिपूरिं गच्छन्ति—अध्यात्मसम्प्रसादः, प्रीतिः, प्रश्रब्धिः, सुखम्, समाधिश्चेति। प्रश्रब्धिसुखयोरनन्यत्वे कथमेषां पञ्चत्वं स्यात्! अर्थान्तरत्वे च सति कायिकमेव सुखं त्रिष्वपि ध्यानेषु इति सिद्धं भवति।

समापन्नस्य कथं कायविज्ञानमिति? अत्रोच्यते—समाधिविशेषजेन प्रश्रब्धिनाम्ना सुखवेदनीयेन सुखवेदनानुकूलेन वायुना कायस्फरणात् कायध्मापनात्। किम्? कायविज्ञानं भवत्येवेति। बहिर्विक्षेपात् समाधिभ्रंश इति चेत्। यदि मन्येत—कायविज्ञानोत्पत्त्या बहिर्विक्षेपात् बाह्यविषयविक्षेपात् समाधिभ्रंश इति? न: समाधिजस्येति। नैतदेवं भविष्यति। कस्मात्? समाधिजस्यान्तःकायसम्भूतस्य अबहिर्जभूतस्येत्यर्थः। कायसुखस्य कायविज्ञानसम्प्रयुक्तस्य वदितसुखस्य समाध्यनुकूलत्वान्नास्मात् समाधिभ्रंश इत्यर्थः। न; अतएवेति। न कायविज्ञानकाले व्युत्थितः स्यात्। अत एव। कारणात्। समाध्यनुकूलत्वादित्यर्थः। तत्सम्मुखी-

१. तद्वृद्धिः—का०। २. संज्ञकेन—का०।

३. पूर्विकाभ्यां—जा०।

कामावचरेण कायविज्ञानेन[1] रूपावचरस्प्रष्टव्यविज्ञानानुत्पत्तिरिति चेत् ? न; प्रस्रब्धिविज्ञानस्योत्पत्तेः ।

अनास्रवे अपि स्प्रष्टव्यकायविज्ञाने स्याताम् । मा भूत् किञ्चिदङ्गं सास्रवं किञ्चिदनास्रवमिति चेत् ? कायिकप्रस्रब्धिसम्बोध्यङ्गवचनात्[2] । इष्टे बोध्यङ्गानुकूलत्वादिति चेत् ? अनास्रवत्वमप्येवम् ।

"सास्रवा धर्मा कतमे ? चक्षुर्यावदेव स्प्रष्टव्यम्" इत्यस्य **सूत्रस्य** विरोधादिति चेत् ? न; अन्यस्प्रष्टव्यकायविज्ञानाभिसन्धिवचनात् । न

---

भावान्तरं हि पुनरुपतिष्ठते समाधिः—इत्यभिप्रायः । कामावचरेण कायविज्ञानेन रूपावचरस्य स्प्रष्टव्यस्याग्रहणात् रूपावचरमेतत् कायविज्ञानम्, न कामावचरम् । अत एव तत्सम्प्रयोगि सुखं ध्यानाङ्गं न सिद्ध्यति । **प्रश्रब्धिज्ञानस्योत्पत्तेरिति** । रूपावचरस्य कामावचरेण कायविज्ञानेन कायेन्द्रियेण समाधिबलाधानात् । तद्धि कायेन्द्रियं समाहितस्य तामवस्थां गतम ऊर्ध्वभूमिकस्य कायविज्ञानस्याश्रयो भवतीति ।

**अनास्रवे अपीति** । स्प्रष्टव्यं च प्रश्रब्धिलक्षणं तदालम्बनं च कायविज्ञानं **स्प्रष्टव्यकायविज्ञाने अनास्रवे अपि स्याताम्** । किं कारणम् ? इत्याह- **मा भूत् किञ्चिदङ्गं सास्रवं किञ्चिदनास्रवमिति चेत्** । यद्येवं मन्येत । **कायिकप्रश्रब्धिसम्बोध्यङ्गवचनादिष्टेः** । 'यापि कायप्रश्रब्धिः तदपि प्रश्रब्धिसम्बोध्यङ्गमभिज्ञायै सम्बोधये निर्वाणाय संवर्तते । यापि चित्तप्रश्रब्धिः, यावदेव स्प्रष्टव्यानि सम्बोध्यङ्गमभिज्ञायै सम्बोधये निर्वाणाय संवर्तते'—इति वचनात् । बोध्यङ्गवचनादिष्टे स्प्रष्टव्यकायविज्ञाने अनास्रवे इति । **बोध्यङ्गानुकूलत्वादिति चेत्** । **अथैवं परिकल्प्येत** - यस्मात् कायिकी प्रश्रब्धिर्बोध्यङ्गानुकूला, तस्माद् **बोध्यङ्गमित्युपचर्यते**, न तु बोध्यङ्गमिति । **अनास्रवत्वमप्येवम्** । अनास्रवत्वानुकूलत्वात् ते स्प्रष्टव्य-कायविज्ञाने अनास्रवे इत्युपचर्येते । न त्वनास्रवे एवेति । एवमनयोरनास्रवत्वम् ।

**सास्रवा धर्मा** इति विस्तरः । "सास्रवा धर्माः कतमे ? यावदेव चक्षुः, यावन्त्येव रूपाणि, यावदेव चक्षुर्विज्ञानम्, यावत् यावानेव कायः, यावन्त्येव स्प्रष्टव्यानि, यावदेव कायविज्ञानम्" ( ) इति । **अस्य सूत्रस्य विरोध इति एवं चेत् मन्येत । तन्न; अन्यस्प्रष्टव्यकायविज्ञानाभि-**

---

१. कायेन्द्रियेण—का० ।

२. ०बोध्यङ्ग०—का० ।

चानास्रवे किञ्चिदङ्गं सास्रवं किञ्चिदनास्रवं स्यादिति चेत् ? अयौगपद्यात् को दोषः ? सुखप्रीत्यसमवधानान्न पञ्चाङ्गं स्यादिति चेत्, न; सम्भवं प्रत्युपदेशाद् वितर्कविचारवत् । साध्यमिति चेत् ? सिद्धम्, वितर्कविचारयोर्विरोधात्,[1] दोषावचनाच्च ।

तस्माद्यान्येव प्रथमध्याने पञ्चाङ्गानि, तेषां द्वित्रिचतुरङ्गापकर्षेण द्वितीयादिध्यानव्यवस्थानम् । अत एव च प्रथमे ध्याने पञ्चानामङ्गत्वमुक्तम्; तदपकर्षेणोत्तरध्यानव्यवस्थापनात् । न तु संज्ञादीनामङ्गत्वमुक्तम् ।

---

**सन्धिवचनात्** । तत् प्रश्रब्धिव्यतिरिक्तानां कायविज्ञानव्यतिरिक्तानां च कायविज्ञानामभिसन्धिवचनात् । **न चानास्रव इति** विस्तरः । नन्वनास्रवेऽनास्रवव्यवस्थाने **किञ्चिदङ्गं सास्रवं किञ्चिदनास्रवं स्यादिति** । यद्येष दोष इति मन्येत, तत्स्प्रष्टव्यकायविज्ञानस्य सास्रवत्वात्, तदितरस्यानास्रवत्वात् । अत्रोच्यते—**अयौगपद्यात् को दोष** इति । यदा सास्रवमङ्गं समुदाचरति, न तदानास्रवं समुदाचरति; यदानास्रवमङ्गम्, न तदा सास्रवमित्यदोषः । **सुखप्रीत्यसमवधानात्** । सुखस्य कायिकस्य प्रीतेश्च मानस्याः असमवधानात् अयौगपद्यात् । **न पञ्चाङ्गं** प्रथमं ध्यानं **चेत्** । यद्येवं मन्येत, **न स** दोषः । कस्मात् ? **सम्भवं प्रत्युपदेशात् वितर्कविचारवत्** । यथा सवितर्कं सविचारं प्रथमं ध्यानमिति पर्यायेण वितर्कविचारौ भवतः, एवं सुखप्रीती अपि सम्भवं प्रति उपदेशात् अदोष एष इति । **साध्यमिति चेत्** । वितर्कविचारौ पर्यायेण भवत इति साध्यमिति । आह—**सिद्धम्** । कथम् ? इत्याह—**वितर्कविचारयोर्विरोधादिति** । यद्यौदारिकता चित्तस्य, सूक्ष्मता नास्ति; यदि सूक्ष्मता, औदारिकता नास्तीति विरोधात् वितर्कविचारयोरयौगपद्यम् । **दोषावचनाच्चेति** । आपेक्षिकी च औदारिकसूक्ष्मता, भूमिप्रकारभेदादिति आभवाग्राद् वितर्कविचारौ स्यातामित्यादि । केषाञ्चित् पाठो भवति—**दोषवचनाच्चेति** । असमवधानेन च न कश्चिद् दोष उच्यत इत्यर्थः ।

**द्वि-त्रि-चतुरङ्गापकर्षेणेति** । द्व्यङ्गापकर्षेण **द्वितीयध्यानव्यवस्थानम्** । तत्र वितर्कविचारयोरभावात् । त्र्यङ्गापकर्षेण तृतीयध्यानव्यवस्थानम् । तत्र प्रीतिरपि नास्तीति । चतुरङ्गापकर्षेण चतुर्थध्यानव्यवस्थानम् । तत्र सुखमपि नास्तीति । **न तु संज्ञादीनामङ्गत्वमुक्तमिति** । न हि संज्ञादीनां ध्यानान्तरेष्वपकर्षोऽस्तीति ।

---

१. चित्तस्यौदारिकसूक्ष्मतयो०–का० ।

किमर्थं[1] पञ्चानामेवाङ्गत्वमुक्तम् । उपकारत्वादिति[2] चेत् ? न; वितर्कविचाराभ्यां स्मृतिप्रज्ञयोरुपकारकतरत्वात् । अस्त्येष एकेषां वादः । नैव तु **पूर्वाचार्या** एवं निर्दिशन्ति स्म यावन्तः प्रज्ञान्तम् ।

तस्माद्विचार्यमेतत्—अध्यात्मसम्प्रसादो नाम क एष धर्मः ? वितर्कविचारक्षोभविरहात् प्रशान्तवाहिता सन्ततेरध्यात्मसम्प्रसादः । सोर्मिकेव हि नदी वितर्कविचारक्षोभिता सन्ततिरप्रसन्ना वर्तते इति । न तर्हि स द्रव्यान्तरमिति कथं द्रव्यत एकादशाङ्गानि भवन्ति ?

---

**किमर्थं पञ्चानामेवाङ्गत्वमिति** । यद्ययमर्थो नाभिप्रेत इति । **यद्युपकारत्वात्** पञ्चानामेवाङ्गत्वम्, तन्न; **वितर्कविचाराभ्यां स्मृतिप्रज्ञयोरुपकारत्वात्** । न हि तथा वितर्कविचारावुपकारौ यथा स्मृतिप्रज्ञे इष्टे । सूपस्थितस्मृतेर्यथाभूतं प्रजानतौ लयौद्धत्याद्यभावतः ।

**तस्माद विचार्यमेतदिति** । **योगाचारभूमिदर्शनेन** विचार्यमेतदिति । तत्र कौतूहलं पातयत्याचार्यः । अयं चात्रार्थसंक्षेपो द्रष्टव्यः । किं पुनरधिकृत्य वितर्कादय एवाङ्गत्वेन व्यवस्थापिताः षट्त्स्वन्येषु धर्मेषु ? तावद्भिः प्रतिपक्षानुशंसतदुभयाङ्गपरिसमाप्तेः । आरूप्येष्वङ्गव्यवस्थानं नास्ति; शमथैकरसत्वानुपादानात् । तदुक्तम्—प्रतिपक्षाङ्गमुपादाय, अनुशंसाङ्गमुपादाय, तदुभयसन्निश्रयाङ्गं चोपादाय । प्रथमे तावद् ध्याने वितर्को विचारश्च प्रतिपक्षाङ्गम्; ताभ्यां कामव्यापादविहिंसावितर्कप्रहाणात् । प्रीतिः सुखं चानुशंसाङ्गम्; वितर्कविचाराभ्यां प्रतिपक्षिते विपक्षे तद्विवेकजप्रीतिसुखलाभात् । चित्तैकाग्रता तदुभयसन्निश्रयाङ्गम्; सन्निश्रयवलेन वितर्कादिप्रवृत्तेरिति । तथा द्वितीये ध्यानेऽध्यात्मसम्प्रसादः प्रतिपक्षाङ्गम्; तेन वितर्कविचारप्रतिपक्षणात् । प्रीति-सुखे चित्तैकाग्रता च शेषे अङ्गे पूर्ववत् । तृतीये ध्याने उपेक्षास्मृतिसम्प्रजन्यं च प्रतिपक्षाङ्गः; तैः प्रीतिप्रतिपक्षणात् । सुखं चित्तैकाग्रता च शेषे अङ्गे यथाक्रमं पूर्ववत् । चतुर्थे ध्याने उपेक्षापरिशुद्धिः स्मृतिपरिशुद्धिश्च प्रतिपक्षाङ्गम् । ताभ्यां ध्यानेषु सुखप्रतिपक्षणात् । अदुःखासुखा वेदना अनुशंसाङ्गम्, चित्तैकाग्रता तदुभयसन्निश्रयाङ्गमिति ।

---

१. किमर्थं वा—का० ।

२. उपकरणत्वात्—का० ।

तस्मात् तर्हि

**श्रद्धाप्रसादः**

तस्य हि द्वितीयध्यानलाभात् समाहितभूमिनिःसरणे सम्प्रत्यय उत्पद्यते। सोऽत्राध्यात्मसम्प्रसाद इति। नैव हि वितर्कविचारसमाधयो नाप्यध्यात्मसम्प्रसादो द्रव्यान्तराणीत्यपरे।

कथमसति द्रव्यान्तरत्वे चैतसिकत्वं सिध्यति? अवस्थाविशेषोऽपि हि नाम चेतसश्चैतसिको भवति। न त्वेष शास्त्रसिद्धान्तः। यदुक्तम्—"प्रीतिर्हि सौमनस्यम्" इति।

कथमिदं गम्यते? किमन्यत् भवतु? यथेच्छन्ति निकायान्तरीयाः—धर्मान्तरमेव चैतसिकं प्रीतिः, सौमनस्यं तु त्रिष्वपि ध्यानेषु सुखमिति? न वै सुखं ध्यानेषु सौमनस्यं युज्यते।

**प्रीतिस्तु सौमनस्यं द्विधागमात् ॥ ९ ॥**

उक्तं हि भगवता अविपरीतकसूत्रे तृतीयं ध्यानमुक्त्वा "यत्रास्योत्पन्नं सौमनस्येन्द्रियमपरिशेषं निरुध्यते" इति। "चतुर्थे च ध्याने सुखेन्द्रियं निरुध्यते" इत्युक्तम्। पुनश्चोक्तम्—"सुखस्य च प्रहाणात् दुःखस्य च प्रहाणात् पूर्वमेव च सौमनस्यदौर्मनस्ययोरस्तङ्गमात्" इति। अतोऽपि न तृतीये

"श्रद्धाप्रसादः" इति। श्रद्धैव प्रसादः श्रद्धाप्रसादः।

**कथमसति द्रव्यान्तरत्वे चैतसिकत्वमिति।** वितर्कादीनाम्। **अवस्थाविशेषोऽपि**[1] **हि नाम चेतसश्चैतसिको भवति।** चेतसि भवत्वात्। पर्येषकमनोजल्पावस्था = वितर्कः। प्रत्यवेक्षकमनोजल्पावस्था = विचारः। वाक्समुत्थापिकावस्था चित्तस्य वितर्कः, तदन्यावस्था विचार इति भगवद्विशेषः। अविक्षिप्तावस्था समाधिः। प्रशान्तवाहितावस्था चित्तस्याध्यात्मसम्प्रसादः।

**न वै सुखं ध्यानेषु सौमनस्यं युज्यते** इति। तुल्यसुखवेदनास्वाभाव्ये मानसत्वेऽपि सति। कस्मात् सौमनस्यं सुखमिति नोच्यते? अस्ति कारणम्। इयं हि प्रीतिरनुपशान्ता, तया हि तत् समाहितमपि चित्तं क्षिप्यत इव उन्नम्यत इव सामोदं सहासं विप्लुतमिव व्यवस्थाप्यते। तद्

१. ०विशेषो–का०।

ध्याने सौमनस्येन्द्रियमस्ति । तस्मात् प्रीतिरेव सौमनस्यं न सुखम् ।। ९ ।।

किं पुनः क्लिष्टेष्वपि ध्यानेषु यथाविहितान्यङ्गानि भवन्ति ? न हि । किं तेषु न विद्यते ?

**क्लिष्टेष्वसत्प्रीतिसुखं प्रसादः सम्प्रधीः स्मृतिः ।**

**उपेक्षास्मृतिशुद्धिश्च,**

प्रथमे ध्याने विवेकजं प्रीतिसुखं नास्ति; क्लेशाविविक्तत्वात् । द्वितीये ध्यानेऽध्यात्मसम्प्रसादो नास्ति, क्लेशाविलत्वात् । तृतीये स्मृतिसम्प्रजन्यं नास्ति; क्लिष्टसुखसम्भ्रमितत्वात् । चतुर्थे उपेक्षास्मृतिपरिशुद्धिर्नास्ति; क्लेशमलिनत्वात् । एवं तावत् **केचिदाहुः** ।

**केचित् प्रस्रब्ध्युपेक्षणे ।। १० ।।**

**केचित्** पुनः—प्रथमद्वितीययोः क्लिष्टयोः प्रस्रब्धिर्नास्ति । तृतीय-चतुर्थयोरुपेक्षा नास्ति; कुशलमहाभूमिकत्वादनयोरिति । त्रीणि च ध्यानानि

---

यदोपशान्तं भवति, तदा भूम्यन्तरप्राप्ता तज्जातीयैव वेदना सुख-मित्युच्यते ।। ९ ।।

**क्लेशाविविक्तत्वादिति** । तद्भूमिकैः क्लेशैरविविक्तत्वादित्यर्थः । **क्लेशाविलत्वादिति** । क्लेशैरप्रसन्नत्वादित्यर्थः । **क्लिष्टसुखसम्भ्रमितत्वा-दिति** । क्लिष्टेन सुखेन सम्भ्रमितत्वात् स्मृतिः सम्प्रजन्यं च भवतः। **क्लेशमलिनत्वादिति** । तद्भूमिकैः क्लेशैर्मलिनत्वात् । **उपेक्षायाः स्मृतेश्च परिशुद्धिर्नास्ति** ।

**कुशलमहाभूमिकत्वादनयोरिति** । प्रश्रब्ध्युपेक्षे कुशलमहाभूमिके पठिते ।

श्रद्धाऽप्रमादः प्रश्रब्धिरुपेक्षा ह्रीरपत्रपा ।
मूलद्वयमहिंसा च वीर्यं च कुशले सदा ।। ( अभि० २.२५ )

इति वचनात् ।

किं पुनरेते पूर्वस्मिन् पक्षे क्लिष्टेष्वपि ध्यानेषु भवतः ? न च भवत इत्याह । कस्मादेतन्नोक्तम् ? अनुक्तसिद्धत्वात् ।

सेञ्जितानि उक्तानि भगवता; सापक्षालत्वात् ॥ १० ॥

**अष्टापक्षालमुक्तत्वादानिञ्जं तु चतुर्थकम् ।**

के पुनस्तेऽपक्षालाः ?

**वितर्कचारौ श्वासौ च सुखादि च चतुष्टयम् ॥ ११ ॥**

वितर्कविचारौ सुखदुःखे सौमनस्यदौर्मनस्ये श्वासप्रश्वासाश्च—एषामष्टानामेकोऽप्यपक्षालश्चतुर्थे नास्ति, अतस्तदानेञ्ज्यमुक्तम् ।

वितर्कविचारप्रीतिसुखैरकम्पनीयत्वादानेञ्ज्यं चतुर्थं ध्यानम्; **सूत्रे निवातप्रदीपनिदर्शनादित्यपरे**[1] ।। ११ ।।

द्वयोर्ध्यानयोः सौमनस्यमुक्तम्; प्रीतिवचनात् । तृतीये सुखम्, चतुर्थे उपेक्षा । तत् किं या ध्यानसमापत्तिषु वेदनास्ता एव ध्यानोपपत्तिषु ? नेत्याह । किं तर्हि ?

**सौमनस्यसुखोपेक्षा उपेक्षासुमनस्कते ।**
**सुखोपेक्षे उपेक्षा प्रविदो ध्यानोपपत्तिषु ॥ १२ ॥**

प्रथमध्यानोत्पत्तौ तिस्रो वेदनाः—सुखं त्रिविज्ञानकायिकम्, सौमनस्यं मनोभूमिकम्, उपेक्षा चतुर्विज्ञानकायिकी । द्वितीयध्यानोपपत्तौ द्वे वेदने—सौमनस्योपेक्षे मनोभूमिके । सुखं नास्ति; अस्य विज्ञानकायाभावात् । तृतीयध्यानोपपत्तौ द्वे वेदने—सुखोपेक्षे मनोभूमिके । चतुर्थध्यानोपपत्तावुपेक्षैव ।। १२ ।।

---

कुशलमहाभूमिकयोः प्रश्रब्ध्युपेक्षयोरपरिग्रहाद् भवत एव ते **इत्यपरे** ।। १० ।।

**"श्वासौ"** इति । आश्वासप्रश्वासौ । द्वित्वप्रदर्शनार्थं चात्र द्विवचननिर्देशः । **वितर्कविचारप्रीतिसुखैरकम्पनीयत्वा**दिति । यथा पूर्वकानि त्रीणि ध्यानानि वितर्कादिभिः कम्प्यन्ते[2]; प्रथमं ध्यानं वितर्कविचाराभ्यां कम्प्यते, द्वितीयं प्रीत्या, तृतीयं सुखेन; नैवमेभिश्चतुर्थं कम्प्यते ।

**यथा निवाते दीपो न कम्प्यते वायुना तद्वदित्युक्तं सूत्रे इत्यपर आहुः** । अष्टापक्षालमुक्तत्वात् ।। ११ ।।

---

१. निर्वात—का० । २. कम्प्यते—जा० ।

यदि द्वितीयादिषु ध्यानेषु त्रयो विज्ञानकाया न संविद्यन्ते वितर्कविचारौ च, कथं ते पश्यन्ति ? यावत् स्पृशन्ति । कथं चाविज्ञप्ति समुत्थापयन्ति ? न वै तेषूपपन्नानां चक्षुर्विज्ञानादयो न सन्ति । न तु स्वभूमिकाः । किं तर्हि ?

**कायाक्षिश्रोत्रविज्ञानं विज्ञप्त्युत्थापकं च यत् ।**

**द्वितीयादौ तदाद्याप्तम्,**

प्रथमध्यानभूमिकं चक्षुःश्रोत्रकायविज्ञानं विज्ञप्तिसमुत्थापकं च द्वितीयादिषु च ध्यानेषु सम्मुखीकुर्वन्ति । निर्माणचित्तवद् येन ते पश्यन्ति यावद्विज्ञप्ति समुत्थापयन्ति ।

**अक्लिष्टाव्याकृतं च तत् ॥ १३ ॥**

अनिवृताव्याकृतं च तत् प्रथमध्यानभूमिकं विज्ञानं वेदितव्यं यत्ते सम्मुखीकुर्वन्ति । न क्लिष्टं वीतरागत्वात्, न कुशलं हीनत्वादिति ॥ १३ ॥

अवसितं ध्यानकार्यम् ॥

अथ शुद्धकादीनां ध्यानारूप्याणां कथं लाभः ?

**अतद्वान् लभते शुद्धं वैराग्येणोपपत्तितः ।**

असमन्वागतस्तेन शुद्धकं ध्यानमारूप्यं वा प्रतिलभते; अधोभूमि-

---

**"आद्याप्तम्"** इति । आद्यध्यानसंगृहीतम् ।

**निर्माणचित्तवदिति** । यथाधरभूमिकं निर्माणचित्तं तद्भूमिकं निर्माणं निर्मातुकामा निर्मातारः सम्मुखीकुर्वन्ति, तद्वत् ।

**न कुशलं हीनत्वादिति** । तद्धि प्रथमध्यानभूमिकं कुशलं द्वितीयध्यानभूमिकान् निहीनं निकृष्टम्, अतो न सम्मुखीकुर्वन्ति । प्रयोजनेन हि ते प्रथमध्यानभूमिकं सम्मुखी[कुर्]वन्ति, न बहुमानेन । सविपाकं तत् कुशलम् । न च तद्विपाकेन तेऽर्थिन इति कुशलचित्तसम्मुखीकरणे यत्नं न कुर्वन्ति ॥ १२-१३ ॥

**"वैराग्येणोपपत्तितः"** इति । वैराग्येणोपपत्तितो वेति वाशब्दो लुप्तनिर्देशः । **अधोभूमिवैराग्याद् वा** । असमन्वागतस्तेन शुद्धकं वा प्रतिलभते

वैराग्याद्वा । अधोभूम्युपपत्तितो वा; अन्यत्र भवाग्रात् । न हि तस्योपपत्तितो लाभः ।

अतद्वानिति किमर्थं समन्वागतः ? शुद्धकेन प्रयोगतो[1] निर्वेधभागीयं शुद्धकं प्रतिलभते । परिहाणितोऽपि[2] हानभागीयम् ।

अत एवोच्यते—"स्याच्छुद्धकं ध्यानं वैराग्येण प्रतिलभेत, वैराग्येण विजह्यात् । एवं परिहाण्या चोपपत्त्या च ।

आह[3]—स्याद्धानभागीयं प्रथमं ध्यानम् । तद्धि कामवैराग्येण लभ्यते । ब्रह्मलोकवैराग्येण त्यज्यते । ब्रह्मलोकवैराग्यपरिहाण्या लभते[4] । कामधातुवैराग्यप्रहाण्या[5] त्यज्यते । उपरिष्टाद् ब्रह्मलोक उपपद्यमानो[6] लभते ।

---

ध्यानम्, आरूप्य वा । कामवैराग्यात् प्रथमं शुद्धकं प्रतिलभते त्रिप्रकारम्, अन्यत्र निर्वेधभागीयात् । एवं यावत् आकिञ्चन्यायतनवैराग्याद् भवाग्रं प्रतिलभते । **अधोभूम्युपपत्तितो वेति** । उपरिष्टात् अधरायां भूमौ उपपद्यमानस्तल्लभते । **अन्यत्र भवाग्रादिति** । तस्याधोभूमिवैराग्यादेव लाभः ।

**प्रयोगतो निर्वेधभागीयमिति** । तस्य वैराग्योपपत्तिकृतः स लाभो न भवति । **परिहाणितोऽपि हानभागीयमिति** । स्थितिभागीयात् परिहीयमाणो हानभागीयं लभते ।

**अत एवोच्यत** इति । यस्मात् परिहीणोऽपि हानभागीयं लभते । **एवं परिहाण्या चोपपत्त्यापि** योज्यम् । कथम् ? स्याच्छुद्धकं परिहाण्या लभेत, परिहाण्या विजह्यात् । स्याच्छुद्धकं ध्यानमुपपत्त्या लभेत, उपपत्त्या विजह्यादिति । **आह—स्यात्** । कथम् ? इत्याह—**हानभागीयं प्रथमं ध्यानमिति** । ब्रह्मलोकः प्रथमं ध्यानं त्रिभूमिकम्; 'विशेषेण ब्रह्मलोके उपपद्यमानत्वाद्' इति वचनात् । **ब्रह्मलोकवैराग्येण त्यज्यत** इति । यस्मात् प्रथमध्यानवैराग्येण हानभागीयं ध्यानं क्लेशानुगुण्यात् तद्भूमिकक्लेशमिव त्यजति, अतो ब्रह्मलोकवैराग्येण त्यज्यते—इत्युच्यते । एवं प्रथमस्य प्रश्नस्य विवर्जनम् ।

**ब्रह्मलोकवैराग्यपरिहाण्या लभते ।** यदि ब्रह्मलोकवैराग्यपरिहाण्या परिहीयते, पुनस्तद्धानभागीयं प्रतिलभते; तद्भूमिकक्लेशवत् । **कामधातु-**

---

१ प्रयोगतोऽपि—का० । २. परिहाणितो वा—का० ।
३. का० पुस्तके नास्ति । ४. लभ्यते—का० ।
५. कामवैराग्य०—का० । ६. उत्पद्य०—का० ।

तस्मात्[1] कामधातावुपपद्यमानो विजहाति" इति ।

**अनास्रवं तु वैराग्यात्,**

'अतद्वान् लभते' इति वर्तते । तद्वांस्तु क्षयज्ञानतोऽप्यशैक्षं लभते । इन्द्रियसञ्चारतोऽपि शैक्षाशैक्षम् । ननु च नियमावक्रान्तितोऽप्यनास्रवं प्रथमतो लभते ? नावश्यम्; आनुपूर्विकेणालाभात् । यथा त्ववश्यं लभते तथोक्तम् ।

**क्लिष्टं हान्युपपत्तितः ॥ १४ ॥**

'अतद्वान् लभते' इत्येवानुवर्तते । परिहाणितो यदि तद्वैराग्यात् परिहीयते । उपपत्तितो यद्युपरिभूमेरन्यस्यामुपपद्यते ॥ १४ ॥

कतमस्मात् समापत्तिद्रव्यादनन्तरं कत्युपपद्यन्ते ? अनास्रवप्रथमध्यानान्तरं षडुत्पद्यन्ते—स्वभूमिके शुद्धकानास्रवे[2] द्वितीयतृतीयध्यानभूमिके च । आकिञ्चन्यायतनानन्तरं सप्त स्वभूमिके शुद्धकानास्रवे, विज्ञानाकाशानन्त्यायतनभूमिके च । भवाग्रं शुद्धकमेव, अनास्रवाभावात् । द्वितीयध्यानान्तर-

---

**वैराग्यपरिहाण्या त्यज्यते ।** यदा कामधातुवैराग्यात परिहीयते, तदा शुद्धकं त्यज्यते । **उपरिष्टाद् ब्रह्मलोक उपपद्यमानो लभत** इति । द्वितीयादिभ्यो ब्रह्मलोक उपपद्यमानो हानभागीयं तद्भूमिकक्लेशवदेव लभते । **तस्मात् [का]मधातावुपपद्यमानो विजहातीति** । तस्माद् ब्रह्मलोकात् कामधातावुप[प]द्यमानो विजहाति ।

**इन्द्रियसञ्चारतोऽपि शैक्षाशैक्षमिति** । श्रद्धाविमुक्तो दृष्टिप्राप्तायां शैक्षं लभते । समयविमुक्तोऽप्यकोप्यप्रतिवेधे अशैक्षं लभते ।

**नावश्यम्, आनुपूर्विकेणालाभादिति**[3] । यद्यानुपूर्विकोऽनागम्यमनिश्रयेण नियाममवक्रामति, न लभते ॥ १४ ॥

**स्वभूमिके शुद्धानास्रवे** इति । व्युत्थानकाले. प्रवाहे च । **द्वितीयतृतीयध्यानभूमिके** चेति । मिश्रकामिश्रकानुलोमसमापत्तौ व्युत्क्रान्तकासमापत्तौ च । **सप्त स्वभूमिके शुद्धकानास्रवे** इति । पूर्ववत् **विज्ञानाकाशानन्त्यायतनभूमिके** च । तथैव प्रतिलोमसमापत्तौ । **भवाग्रं शुद्धकमेव, अनास्रवाभावादिति** । स्वभ्यादनास्रव नास्तीत्युक्तम् । अनुलोमसमापत्तौ तु

---

१. तस्मात् पुन.—का० । २. शुद्धका०—का० ।

३. ०केनालाभा० —जा० ।

मष्टौ—स्वभूमिके शुद्धकानास्रवे तृतीयचतुर्थप्रथमध्यानभूमिके च। विज्ञानानन्त्यायतनान्तरं नव—स्वभूमिके द्वे, आकाशानन्त्यायतनचतुर्थध्यानभूमिकानि चत्वारि, आकिञ्चन्यायतनभवाग्रभूमिकानि त्रीणीति।

एवमन्यध्यानारूप्यादनन्तरं[1] दश द्रव्याणि योज्यानि।

एष तु संक्षेपः—

**तृतीयाद् यावदूर्ध्वाधोऽनास्रवानन्तरं शुभम्।**

**उत्पद्यते,**

शुभग्रहणेन शुद्धमनास्रवं च गृह्यते कुशलत्वात्। अनास्रवस्य समापत्तिद्रव्यस्यानन्तरं स्वभूमिके च शुद्धानास्रवे उत्पद्येते। ऊर्ध्वाधोभूमिके च तृतीयाद् यावत्। व्युत्क्रान्तकसमापत्तारो हि तृतीयात् परेण लङ्घयितुं नोत्सहन्ते। अन्वयज्ञानान्तरं चारूप्यान् समापद्यन्ते, न धर्मज्ञानानन्तरम्; तस्याधराश्रयालम्बनत्वादिति।

---

व्युत्थानकाले तद् भवति। **तृतीयचतुर्थप्रथमध्यानभूमिके चेति**। अमिश्रकमिश्रकानुलोमप्रतिलोमव्युत्क्रान्तसमापत्तिकालेषु।

**आकाशानन्त्यायनचतुर्थध्यानभूमिकानि चत्वारीति**। तेष्वेव कालेषु। **त्रीणीति**। अनास्रवाभावात्। **एवमन्यध्यानारूप्यादनन्तरं दश द्रव्याणि योज्यानीति**। तदयथा तृतीयध्यानादनन्तरं दश—स्वभूमिके द्वे शुद्धकानास्रवे, चतुर्थध्यानाकाशान्त्यायतनभूमिकानि चत्वारि, तथैव च प्रथमद्वितीयध्यानभूमिकानि चत्वारीति। चतुर्थध्यानादनन्तरं दश—स्वभूमिके द्वे शुद्धकानास्रवे, आकाशविज्ञाननन्त्यायतनभूमिकानि चत्वारि, द्वितीयतृतीयध्यानभूमिकानि चत्वारीति। आकाशानन्त्यायतनादनन्तरं दश—स्वभूमिके द्वे, विज्ञानाकिञ्चन्यायतनभूमिकानि चत्वारि, तृतीयचतुर्थध्यानभूमिकानि चत्वार्युत्पदयन्ते—इत्येवं दश भवन्ति।

**अन्वयज्ञानानन्तरं चेति** विस्तरः। इदं व्युत्पाद्यते, ऊर्ध्वाधरभूम्यालम्बनत्वाद्ध्यानानामस्ति प्रसङ्ग इति कृत्वा। **तस्याधराश्रयालम्बनत्वादिति**। यस्मात् तद्धर्मज्ञानम् अधराश्रयकामधात्वाश्रयमधरालम्बनं कामदुःखादया-

---

१. ०रूप्यानन्तरं—का०।

यथा चानास्रवादनन्तरमुक्तं वेदितव्यम्,

**तथा शुद्धात् क्लिष्टं चापि स्वभूमिकम् ॥ १५ ॥**

स्वभूमिकं क्लिष्टमधिकं शुद्धकादनन्तरमुत्पद्यते । शेषं यथैवानास्रवात् । अनास्रवस्य हि समनन्तरं क्लिष्टोत्पत्तिर्नास्तीति ॥ १५ ॥

**क्लिष्टात् स्वं शुद्धकं क्लिष्टम्,**

क्लिष्टात् समापत्तिद्रव्यादनन्तरं स्वभूमिके शुद्धकक्लिष्टे उत्पद्येते ।

**एवं चाधरशुद्धकम् ।**

क्लेशोत्पीडितो ह्यधरमपि समापत्तिं शुद्धकं बहु मन्यते । यदि क्लिष्टं परिच्छिद्याधः सञ्चरति । कुशलात् सञ्चरितो भवति न क्लिष्टात् । अथापरिच्छिद्य कथं सञ्चरति ? पूर्वाविधात् । पूर्वं हि स एवंकामो भवति—वरमधस्तात् शुद्धकं नोपरिष्टात् क्लिष्टमिति । पूर्वाभिप्रायं च सन्ततिरनुवर्तते सत्त्वानाम्, प्रणिधाय सुप्तस्याभिप्रेतकालप्रबोधवत् । अनास्रवं तु क्लिष्टादनन्तरं सर्वथा नोत्पद्यते । समापत्तिकालं प्रत्येतदुक्तम् । शुद्धकात् क्लिष्टाच्च समनन्तरं स्वभूमिकमेव क्लिष्टमुत्पद्यते, नान्यभूमिकमिति ।

**च्युतौ तु शुद्धकात् क्लिष्टं सर्वम्,**

---

लम्बन ॰। तस्याधराश्रयत्वालम्बनत्वान्न धर्मज्ञानानन्तरमारूप्यान् समापद्यन्ते ।

**शेषं**[1] **यथैवानास्रवादिति**। स्वभूमिके च शुद्धानास्रवे उत्पद्येते; ऊर्ध्वादधोभूमिके च, यावत् तृतीयादिति ॥ १५ ॥

**प्रणिधायेति** विस्तरः । यदि **कश्चिदेवं** बुद्धिमुत्पाद्य 'अर्धरात्रे चन्द्रोदये चन्द्रास्तमये वा मया प्रबोद्धव्यम्' इति **स्वपेद्** स पूर्वाभिप्रायानुवर्तनात् सन्ततेः, तस्मिन्नेव काले प्रबुद्ध्यते । यथाऽस्यैवं प्रणिधाय सुप्तस्य **तस्याभिप्रेते काले प्रबोधो भवति**। तद्वदेतत् । **सर्वथा नोत्पद्यत** इति । नापि स्वभूमिकम्, नाप्यधरभूमिकमुत्पद्यते-इत्यर्थः । **समापत्तिकालं प्रत्येतदित्युक्तमिति**। **शुद्धकात् क्लिष्टाच्च समनन्तरं स्वभूमिकमेव क्लिष्टमुत्पद्यते**, **नान्यभूमिकमिति**। कथम् ? तथा शुद्धात् क्लिष्टं वापि स्वभूमिकम्, क्लिष्टात् स्वं शुद्धं क्लिष्टमित्येवम् ।

---

१. शेषान्—जा० ।

च्युतिकाले तु उपपत्तिलाभिकाच्छुद्धकादनन्तरं सर्वभूमिकं क्लिष्ट-मुत्पद्यते ।

**क्लिष्टात्तु नोत्तरम् ॥ १६ ॥**

क्लिष्टात्तु ध्यानारूप्यादनन्तरं च्युतिकाले स्वाधरभूमिकं क्लिष्ट-मुत्पद्यते । नोर्ध्वभूमिकम् ॥ १६ ॥

न च सर्वस्माच्छुद्धकादनास्रवं

**चतुर्धा शुद्धकं हानभागीयादि,**

हानभागीयम्, विशेषभागीयम् स्थितिभागीयम्, निर्वेधभागीयमिति चतुर्विधं शुद्धकम् । भवाग्रं तु त्रिविधम्; अन्यत्र विशेषभागीयात् ।

किमस्य लक्षणम् ?

**यथाक्रमम् ।**

**क्लेशोत्पत्तिस्वभूम्यूर्ध्वानास्रवानुगुणं हि तत् ॥ १७ ॥**

क्लेशोत्पत्त्यनुगुणं [illegible] स्वभूम्यनुगुणं स्थितिभागीयम्, ऊर्ध्व-भूम्यनुगुणं विशेषभागीयम्, अनास्रवानुगुणं निर्वेधभागीयम् । तस्मादनास्रव-मुत्पद्यते ॥ १७ ॥

---

**च्युतिकाले तु** । मरणभवे । **उपपत्तिलाभिकाच्छुद्धादिति** विस्तरः । उपपत्तिध्यानेषु यदुपपत्तिलाभिकं कुशलं समाहितम्, तदपि शुद्धकं ध्यानमित्युच्यते । अत इदमुच्यते—च्युतिकाले त्विति विस्तरेण । किं कारणम् ? असमाहितत्वान्मरणभवस्य । न हि तदानीं शुद्धकं समापत्ति-ध्यानमस्तीति ।

अथ **सर्वभूमिकं क्लिष्टमुत्पद्यत** इति । स्वभूमिकाधरोर्ध्वभूमिकं प्रतिसन्धिचित्तं क्लिष्टमसमाहितमुत्पद्यते—इत्यर्थः ।

**नोर्ध्वभूमिकमिति** । क्लिष्टसद्भावे सति तत्रोपपत्त्यसम्भवात् ॥ १६ ॥

**अन्यत्र विशेषभागीयादिति** । इत ऊर्ध्वभूम्यभावात् ।

**तस्मादनास्रवमुत्पद्यत** इति । निर्वेधभागीयात् ॥ १७ ॥

अथैषां चतुर्णां कति कस्मादनन्तरमुत्पद्यन्ते ?

**द्वे त्रीणि त्रीणि चैकं च हानभागाद्यनन्तरम् ।**

हानभागीयं हानभाक् । तस्मादनन्तरं द्वे उत्पद्येते—हानि-स्थिति-भागीये । स्थितिभागीयादनन्तरं त्रीणि, अन्यत्र निर्वेधभागीयात् । विशेष-भागीयादनन्तरं त्रीणि, अन्यत्र हानभागीयात् । निर्वेधभागीयादनन्तरं तदेवैकमिति ।

कथं व्युत्क्रान्तकसमापत्तिरुत्पद्यते ?

**गत्वागम्य द्विधा भूमीरष्टाकृष्टैकलङ्घिताः ॥ १८ ॥**

**व्युत्क्रान्तकसमापत्तिर्विसभागतृतीयगा ।**

गत्वेति । अनुलोमं समापद्य । आगम्येति । प्रतिलोमं समापद्य । द्विधेति । सास्रवानास्रवा भूमीः । अष्टाविति । ध्यानारूप्यसमापत्तीः । आकृष्टा[1] इति । अनुक्रमेण । एकलङ्घिता इति । एकामेकामुत्क्रम्य । सास्रवा अष्टौ भूमीर[illegible] निर्जित्य अनास्रवाश्च सप्त । पश्चात सास्रवात् प्रथमाद्ध्यानात् सास्रवं तृतीयं समापद्यते, तस्मा-दाकाशानन्त्यायतनम्, तस्मादाकिञ्चन्यायतनम् । एवं पुनः प्रतिलोमं निर्जित्य अनास्रवा अप्येकलङ्घिता अनुलोमप्रतिलोमं च समापद्यन्ते । अथ प्रयोगो व्युत्क्रान्तकसमापत्तेः ।

यदा तु प्रथमात् सास्रवात् तृतीयमनास्रवं ध्यानं समापद्यते, तस्मात् सास्रवमाकाशानन्त्यायतनम्, तस्मादनास्रवमाकिञ्चन्यायतनम् । एवं पुनः प्रतिलोमम् । तदा विसभागतृतीयद्रव्यगमनादभिनिष्पन्ना भवति । अति-विप्रकृष्टत्वान्न चतुर्थी समापद्यते । तां च त्रिषु द्वीपेषु असमयविमुक्त

---

**हानस्थितिभागीये** इति । हानभागीयं प्रवाहकाले, स्थितिभागीयं विशेषगमनकाले । **अन्यत्र हानभागीयादिति** । विशेषभागीयाद्धीयमानस्य स्थितिभागीयापरित्यागे तस्यैवोत्पत्तियोगात् । **तदेवैकमिति** । तदेव निर्वेध-भागीयं प्रवाहयोगेन ।

**आकृष्टा इत्यनुक्रमेणेति** । अनुलोमानुक्रमेण, प्रतिलोमानुक्रमेण च ।

---

१. श्लिष्टा—का० ।

एवार्हन्नुत्पादयति; निःक्लेशत्वात्, समाधिवशित्वाच्च। दृष्टिप्राप्तस्य यद्यपि तीक्ष्णेन्द्रियत्वात् समाधौ वशित्वम्, न तु निःक्लेशः। समयविमुक्तो यद्यपि निःक्लेशः, न त्वस्य समाधौ वशित्वमिति।

केनाश्रयेण कति ध्यानारूप्याः सम्मुखीक्रियन्ते ?

**स्वाधोभूम्याश्रया एव,**

ध्यानाश्रया एव।

**ध्यानारूप्याः,**

भवाग्रं भवाग्रे च सम्मुखीक्रियते, अधश्च यावत् कामधातौ। शेषाणि स्वस्यां भूमावधश्चेति।

किं कारणमूर्ध्वोपपन्नो नाधरां समापत्तिं सम्मुखीकरोति ? यस्मात्तस्य

**वृथाऽधरम् ॥ १९ ॥**

नहि तस्याधरेण समापत्तिद्रव्येण किञ्चित् प्रयोजनं विधीयते; निहीनत्वात् ॥ १९ ॥

उत्सर्गं कृत्वाऽपवादं करोति—

**आर्याकिञ्चन्यसाम्मुख्यात् भवाग्रे त्वास्रवक्षयः।**

भवाग्रे तूपपन्नस्यानास्रवाकिञ्चन्यायतनसम्मुखीभावादास्रवक्षयो भवति।

कथं तत्रोपपन्नस्य तत्सम्मुखीभावः ? स्वस्याभावात्, तस्य चाभ्यासात्।

---

**विधीयत** इति। क्रियत इत्यर्थः। स्थाप्यत इति वा। किं कारणम् ? **निहीनत्वात्** ॥ १८-१९ ॥

"**आर्याकिञ्चन्यसाम्मुख्यात्**" इति। आर्यम् अनास्रवम्। अनास्रवस्य आकिञ्चन्यायतनस्य साम्मुख्यात् सम्मुखीभावात्।

**भवाग्रे** जातस्यास्रवप्रहाणं भवति। तु-शब्दोऽपवादार्थं द्योतयति।

**स्वस्याभावादिति**। भावाग्रिकस्यानास्रवस्य मार्गस्याभावादित्यर्थः। **तस्य चाभ्यासादिति**। तस्य आकिञ्चन्यायतनस्य अनास्रवस्याभ्यासात्, सन्निकृष्टत्वात्।

अथैषां ध्यानारूप्याणां किमालम्बनम् ?

**सतृष्णाः स्वभवालम्बाः,**

आस्वादनासम्प्रयुक्ताः स्वभूमिकं भवमालम्बन्ते। भवग्रहणेन सास्रवं वस्तु गृह्यते। नावरमालम्बन्ते; वीतरागत्वात्। नोत्तरम्; तृष्णापरिच्छिन्नत्वात् भूमीनाम्। नानास्रवम्; कुशलत्वप्रसङ्गादिति।

**ध्यानं सद्विषयं शुभम् ॥ २० ॥**

कुशलं ध्यानं शुभकमनास्रवं च। तत् सर्वालम्बनं यत्किञ्चिदस्ति संस्कृतमसंस्कृतं वा ॥ २० ॥

**न मौलाः कुशलारूप्याः सास्रवाधरगोचराः।**

मौलानां कुशलारूप्याणामधोभूमिकं सास्रवं वस्तु नालम्बनम्, स्वोर्ध्वभूम्यालम्बनत्वात्। अनास्रवं त्वालम्बनम्। सर्वान्वयज्ञानपक्षो[1] न धर्म-

---

**तृष्णापरिच्छिन्नत्वाद् भूमीनामिति।** या यस्यां भूमौ, तस्यामेव भूमावनुशयनात्, तया सा भूमिः परिच्छिन्ना भवति। अन्यथा हि तस्योत्तरत्वमेव न सिद्ध्येत्, एकभूमिस्थानान्तरत्वात्। अथ एवौत्तराधर्येऽपि स्थानान्तराणां त्रयाणां त्रयाणाम्, अष्टानां चैकभूमिता सिद्ध्यति; तृष्णाव्यतिहारयोगात्। **नानास्रवं कुशलत्वप्रसङ्गादिति।** तत्प्रार्थना हि कुशलो धर्मच्छन्द इति ॥ २० ॥

**"न मौलाः कुशलारूप्याः सास्रवाधरगोचराः"** इति। मौलग्रहणं सामन्तकनिरासार्थम्। आरूप्यसामन्तकानि ह्यधरां सास्रवां भूमिमालम्बन्ते[2]। कुशलग्रहणम् आस्वादनासम्प्रयुक्तनिरासार्थम्। उभयकुशलग्रहणार्थं च। यदि हि 'आरूप्या' इत्येवोच्येत, आस्वादनासम्प्रयुक्ता मौला आरूप्या न सास्रवाधरगोचरा इति सम्भाव्येरन्। अनास्रवा एवारूप्या एवमिति गृह्येरन्। आरूप्यग्रहणं ध्याननिरासार्थम्। ध्यानानि हि मौलान्यपि सास्रवाधरवस्त्वालम्बनानि भवन्ति; समन्तालोचनत्वाद् ध्यानानाम्।

सास्रवग्रहणं अनास्रवनिवृत्त्यर्थम्। अनास्रवा हि अधरा धर्मा मौलानां कुशलानामारूप्याणामालम्बनानि सम्भवन्ति। अधरग्रहणमूर्ध्वविशेषणार्थम्। ऊर्ध्वभूमिकसास्रवालम्बनसम्भवात्। अनास्रवं त्वालम्बन-

१. ०पक्ष्यो—का०।　　२. ०मालम्बते—जा०।

अभि० को० ४ : ९

ज्ञानपक्षः, नाधोभूमिनिरोधः। सामन्तकानन्तर्यमार्गाणां त्वधरा भूमिरालम्बनम्।

एषां च पुनस्त्रिविधानां ध्यानानां रूप्यारूप्याणाम्

**अनास्रवेण हीयन्ते क्लेशाः,**

न शुद्धकेन। कुत एव क्लिष्टेन! वीतरागत्वान्नाधः। तस्यैव तदप्रतिपक्षत्वान्न स्वभूमौ। विशिष्टतरत्वान्नोर्ध्वमिति।

**सामन्तकेन च ॥ २१ ॥**

ध्यानारूप्यसामन्तकेन च क्लेशाः प्रहीयन्ते। शुद्धकेनापि; अधो-

---

मित्युद्ग्राह्य दर्शयति—**सर्वान्वयज्ञानपक्ष** इति। सर्व इति नवभूमिक इन्द्रियगोत्रादिभेदभिन्नोऽपि गृह्यते। अन्वयज्ञानपक्ष इति पक्षग्रहणेन दुःखाद्यन्वयज्ञानक्षान्तय तत्सहभुवश्च गृह्यन्ते। न **धर्मज्ञानपक्ष** इति। कामदुःखाद्यालम्बत्वेन विप्रकृष्टत्वात्। **नाधोभूमिनिरोधः**। अधोभूमिग्रहणप्रसङ्गादिति। व्याख्यातमेतत् पुरस्तात् ॥

"**अनास्रवेण हीयन्ते क्लेशाः**" इति। ध्यानारूप्याणां योऽनास्रवः सम्भवति, तेन यथासम्भवं क्लेशाः प्रहीयन्ते। कतमेनानास्रवेण? मौलेन। वक्ष्यति हि—**सामन्तकेन चेति**। (अभि० को० ८.२१)। अपवादकरूपेण सामन्तकरूपेण शुद्धकेन क्लेशाः प्रहीयन्ते—इत्यधिकृतम्। **कुत एव क्लिष्टेनेति**। क्लिष्टेन क्लेशग्रहणं नैव सम्भवतीत्यभिप्रायः। किं कारणं शुद्धकेन क्लेशाः न प्रहीयन्ते इति? आह—**वीतरागत्वान्नाध इति विस्तरः**। अधरभूमिवीतरागत्वान्न शुद्धकेनाधरभूमिकाः प्रहीयन्ते, कुत एव क्लिष्टेन! **तस्यैव तदप्रतिपक्षत्वान्न स्वभूमौ**। तस्यैव प्रथमध्यानस्य, यावत्, नैवसंज्ञानासंज्ञायतनस्य। तदप्रतिपक्षत्वात्—तस्याप्रतिपक्षः तदप्रतिपक्षः, तदभावस्तस्मात् तदप्रतिप्रक्षत्वान्न स्वभूमौ क्लेशाः प्रहीयन्ते। न हि भवेन भवस्य निःसरणमस्ति। **विशिष्टतरत्वान्नोर्ध्वमिति**। नोर्ध्वभूमिका क्लेशाः अधरभूमिकेन शुद्धकेन प्रहीयन्ते; विशिष्टतरत्वात् क्लेशानाम्। न च न्यूनमाश्रित्य विशिष्टानां प्रहाणं युज्यते इति अनेन शुद्धकेनापि क्लेशा न प्रहीयन्ते कुत एव क्लिष्टेनेति सिद्धमेतत्। **शुद्धकेनापीति**। अपिशब्दात् अनास्रवेणापीति। सम्भवतस्त्वेतदुक्तम्। अत एवोच्यते—**अधोभूमिप्रतिपक्षत्वादिति**। कामावचरा हि क्लेशाः प्रथमध्यानसामन्तकेन

भूमिप्रतिपक्षत्वात् ।। २१ ।।

कति पुनः सामन्तकानि ?

**अष्टौ सामन्तकान्येषाम्,**

एकैकस्यैकैकं येन तत्प्रवेशः ।

किं तान्यपि त्रिविधानि, तथैव च तेषु वेदना ? नेत्युच्यते ।

**शुद्धादुःखासुखानि हि ।**

शुद्धकानि च तान्युपेक्षेन्द्रियसम्प्रयुक्तानि च यत्नवाह्यत्वाद्, अधोभूम्युद्वेगानपगमात्, वैराग्यपथत्वाच्च नास्वादनासम्प्रयुक्तानि ।

**आर्यं चाद्यम्,**

आद्यं सामन्तकमनागम्यं तच्छुद्धकं चानास्रवं च । यद्यपि सामन्तकचित्तेन

---

प्रहीयन्ते । प्रथमध्यानभूमिका द्वितीयध्यानसामन्तकेन । एवं यावत आकिञ्चन्यायतनभूमिका नैवसंज्ञानासंज्ञायतनसामन्तकेनेति ।। २१ ।।

**येन तत्प्रवेश** इति । येन सामन्तकेन तेषां मौलानां ध्यानारूप्याणां प्रवेशः । **किं तान्यपि त्रिविधानी**ति । आस्वादनासम्प्रयुक्तादिभेदात् । **तथैव च तेषु वेदने**ति । प्रथमयोर्ध्यानयो. प्रातिः, तृतीये सुखम्, चतुर्थे उपेक्षेत्युक्तम्, किमेवं सामन्तकेषु ।

**उपेक्षेन्द्रियसम्प्रयुक्तानि च यत्नबाह्यत्वा**दिति । अनभिसंस्कारवाही मार्गः प्रीतिसुखाभ्यां सम्प्रयुज्यते । तानि च सामन्तकानि यत्नवाह्यानि साभिसंस्कारवाह्यानीति अत उपेक्षेन्द्रियसम्प्रयुक्तानि । पुन**रधोभूम्युद्वेगानपगमात्** प्रीतिसुखयोरयोग इति । अतोऽपि उपेक्षेन्द्रियसम्प्रयुक्तानि । **नास्वादनासम्प्रयुक्तानी**ति । यदि ह्यास्वादनासम्प्रयुक्तानि स्युः, वैराग्यमार्गो न स्यात् । न हि तृष्णासम्प्रयुक्तो मार्गः क्लेशप्रहाणाय भवति ।

अथवा अयमभिसम्बन्धः—उपेक्षेन्द्रियसम्प्रयुक्तानि च यत्नबाह्यत्वात् । अधोभूम्युद्वेगानपगमाद् वैराग्यपथत्वाच्चेति द्वाभ्यां कारणाभ्यां नास्वादनासम्प्रयुक्तानीति । पूर्ववत् वक्तव्यं शेषम् ।

**यद्यपि सामन्तकचित्तेन सन्धिबन्ध** नि । अष्टास्वपि ध्याना-

सन्धिलब्धः[1] क्लिष्टो भवति। समाहितस्य तु क्लिष्टत्वं प्रतिषिध्यते।

**त्रिधा केचित्,**

**केचित्** पुनरिच्छन्ति—आस्वादनासम्प्रयुक्तमप्यनागम्यं सामन्तकं चोच्यते, ध्यानान्तरं च।

किमिदमेकार्थम्, आहोस्विन्नानार्थम्? सामन्तकं हि वैराग्यमार्गः।

**अतर्कं ध्यानमन्तरम्** ॥ २२ ॥

ध्यानमेव हि वितर्कासम्प्रयुक्तं ध्यानान्तरम्; ध्यानविशेषत्वात्। अत एव द्वितीयादिषु ध्यानेषु न व्यवस्थाप्यते; विशेषाभावादिति ॥ २२ ॥

तत् पुनर्ध्यानान्तरम्

**त्रिधा,**

आस्वादनासम्प्रयुक्तम्, शुद्धकम्, अनास्रवं च।

**अदुःखासुखं तच्च,**

नात्र सुखं दुःखमित्यदुःखासुखम्। उपेक्षेन्द्रियसम्प्रयुक्तमित्यर्थः। न

---

रूप्येषु यस्य यत् सामन्तके, तस्य तेन सामन्तकचित्तेन क्लिष्टेनासमाहितेन सन्धिबन्ध इत्येष सिद्धान्त इति। अत इदमुच्यते—यद्यपि सामन्तकचित्तेनेति विस्तरः।

**आस्वादनासम्प्रयुक्तमप्यनागम्यमिति**। अनागम्यस्य पटुत्वात्। यथा हि तदनास्रवमपि सम्भवति, तथास्वादनासम्प्रयुक्तमपीत्यभिप्रायः।

मौलप्रतिस्पर्धित्वादास्वादनासमुत्पत्तिसद्भावादिति **आचार्यसङ्घभद्रः**।

**ध्यानविशेषत्वादिति**। तदेवं मौलं प्रथमं ध्यानं वितर्कापगमाद् विशिष्टं ध्यानान्तरमुच्यते—इत्यर्थः। **विशेषाभावादिति**। यथा प्रथमे ध्याने विशेषो भवति—क्वचिद् वितर्कविचारौ क्वचिद् विचार एवेति, न तथा द्वितीयादिष्विति। अतो ध्यानेषु न व्यवस्थाप्यते ध्यानान्तरम् ॥ २२ ॥

---

१. प्रतिसन्धिबन्धः—का०।

प्रीतिसम्प्रयुक्तम्; साभिसंस्कारवाहित्वात्। अत एव दुःखा प्रतिपत्।

तस्य तर्हि ध्यानान्तरस्य कः फलविशेषः ? तद्धि

**महाब्रह्मफलं च तत्।**

तां हि ध्यानान्तरिकां भावयित्वा महाब्रह्मा भवति। पुनः सर्वसमाधीन् सङ्कलय्य त्रयः समाधयः उक्ताः सूत्रे—१. सवितर्कः सविचारः समाधिः, २. अवितर्को विचारमात्रः, ३. अवितर्कोऽविचार इति।

तत्र ध्यानान्तरं तावदवितर्को विचारमात्रः समाधिरिति ज्ञापितम्; वितर्कमात्रप्रतिषेधात्। ततः—

**सवितर्कविचारोऽधःसमाधिः,**

तस्माद् ध्यानान्तरादधःसमाधिः सवितर्कः सविचारः। प्रथमं ध्यानमनागम्यं च।

**परतोऽद्वयः॥ २३॥**

नात्र द्वयमस्तीत्यद्वयः। परेण तु ध्यानान्तरात् समाधिरवितर्कोऽविचारः। द्वितीयध्यानसामन्तकाद् यावद् भवाग्रम्॥ २३॥

पुनस्त्रयः समाधय उक्ताः—शून्यतासमाधिः, अप्रणिहितः, आनिमित्तश्च। तत्र

**आनिमित्तः समाकारैः,**

निरोधसत्याकारैः सम्प्रयुक्तः समाधिरानिमित्तश्चतुराकारः। निर्वाणं हि दशनिमित्तापगतत्वादनिमित्तम्। तदालम्बनः समाधिरानिमित्तः। पञ्चविषयस्त्रीपुरुषत्रिसंस्कृतलक्षणनिमित्तानि दश।

**शून्यतानात्मशून्यतः।**

**प्रवर्तते,**

अनात्मशून्यताकाराभ्यां सम्प्रयुक्तः शून्यतासमाधिर्द्व्याकारः।

**अप्रणिहितः सत्याकारैरतः परैः॥ २४॥**

---

**अत एव दुःखा प्रतिपदिति।** अत एवं हि संस्कारवाहित्वा

**वितर्कमात्रप्रतिषेधादिति।** "अतर्कं ध्यानमन्तरम्" ( अभि० को० ८.२२ ) इति वचनात्॥ २३॥

**तदालम्बनः समाधिरानिमित्त इति।** अनिमित्ते भव आनिमित्तः।

परैः शेषैः सत्याकारैः समाधिरप्रणिहितो दशाकारः। अनित्य-दुःखतद्धेतुभ्य उद्वेगात् मार्गस्य च कोलोपमतयाऽवश्यत्याज्यत्वात् तदाकारः समाधिरप्रणिहितः; तदतिक्रमाभिमुखत्वात्।

शून्यतानात्मताभ्यां तु नोद्वेग; निर्वाणसामान्यात्।। २४।।

त एते त्रयः समाधयो द्विविधाः—

**शुद्धामलाः,**

शुद्धकाश्च, अनास्रवाश्च; लौकिकलोकोत्तरत्वात्। लौकिका एकादशसु भूमिषु। लोकोत्तरा यत्र मार्गः।

---

**दशाकार** इति। अनित्यदुःखाकारौ द्वौ, समुदायाकाराश्चत्वारः, मार्गाकाराश्चत्वारः—इत्येते दश आकाराः। **अनित्यदुःखतद्धेतुभ्य उद्वेगा**दिति। अनित्याद् दुःखात्, तद्धेतोश्च। तस्य दुःखस्य हेतोश्च समुदयादुद्वेगात्। किम्? **अप्रणिहितः**। अकृतसंस्कार इत्यर्थः। **मार्गस्य कोलोपमतयाऽवश्यत्याज्यत्वात्**। कोल उच्यते उडुपः। स उपमा अस्येति कोलोपमः मार्गः, तद्भावस्तया। कोलोपमतया मार्गस्यावश्यत्याज्यत्वम्, तस्मात्। अप्रणिहित इत्यधिकृतः। यथा हि कोलमाश्रित्य नदीमुत्तरन् न कोलनिष्ठो भवति, तस्यावश्यत्याज्यत्वात्; एवं मार्गमाश्रित्य न मार्गनिष्ठो भवति, तस्यावश्यत्याज्यत्वात्। **तदाकार** इति। तद्दशाकारो यथोक्तः। **तदतिक्रमाभिमुखत्वा**दिति। तस्य मार्गस्यातिक्रमेऽभिमुखत्वात्। अनेनावश्यत्याज्यत्वमस्य दर्शयति। अनित्यदुःखतद्धेत्वतिक्रमाभिमुख इत्यनुक्तमप्येतद् गम्यत एव। **शून्यतानात्मताभ्यां तु नोद्वेग** इति। शून्यानात्माकाराभ्यां तु नोद्वेगो योगिनो भवति। यद्यपि हि दुःखसत्यं शून्यानात्माकाराभ्यामाकार्यते, न तु ताभ्यां तस्माद् दुःखादुद्वेगः। कस्मात्? **निर्वाणसामान्यात्**। निर्वाणमपि शून्यानात्मलक्षणम्। शून्यताऽनात्मता हि सर्वधर्माणां लक्षणमिति। न च ताभ्यां तस्मान् निर्वाणाद् उद्वेगः। तस्मान्न तदाकारोऽप्रणिहितसमाधिरिति।। २४।।

**लौकिका एकादशस्विति**। कामधातावनागम्ये ध्यानान्तरे, ध्यानारूप्येषु चेति। **यत्र मार्ग इति**। कामधातुभवाग्रद्वितीयादिसामन्तकवर्जितासु भूमिषु।

**निर्मलास्तु ते विमोक्षमुखत्रयम् ।**

अनास्रवास्त्वेते त्रयः समाधयस्त्रीणि विमोक्षमुखान्युच्यन्ते । शून्यता विमोक्षमुखम्, अप्रणिहितम्, आनिमित्तं विमोक्षमुखमिति; मोक्षद्वारत्वात् । पुनश्चोच्यन्ते—

**शून्यताशून्यताद्याख्यास्त्रयोऽपरसमाधयः ॥ २५ ॥**

शून्यताशून्यता, अप्रणिहिताप्रणिहितः, आनिमित्तानिमित्तश्च । शून्यताद्यालम्बनत्वात्तन्नाम ॥ २५ ॥

तेषां पुनः—

**आलम्बेते अशैक्षं द्वौ शून्यता[1] चाप्यनित्यतः[1] ।**

अशैक्षं समाधिं द्वावपरसमाधी आलम्बेते । शून्यताशून्यता अशैक्षं शून्यतासमाधिमालम्बते शून्यताकारेण । अप्रणिहिताप्रणिहितोऽप्यशैक्षम-

---

**मोक्षद्वारत्वादिति** । द्वारार्थो मुखार्थ इति दर्शयति ॥

**शून्यताद्यालम्बनत्वात्तन्नामेति** । शून्यताप्रणिहितानिमित्तालम्बनत्वात् ।

**शून्यताशून्यतेति** नाम । **अप्रणिहिताप्रणिहितेति अनिमित्तानिमित्तेति** च ॥ २५ ॥

"**शून्यता चाप्यनित्यतः**" इति । यथासङ्ख्येन । **शून्यताशून्यता हि शून्यताकारेणाशैक्षं शून्यतासमाधिमालम्बते** । नायमात्मीयमिति । नात्माकारेण ।

आह—किमत्र कारणं यच्छून्यताशून्यतासमाधिः शून्यताकार एव, न पुनरनात्माकारोऽपि शून्यतावदिति ? अत्रोच्यते—शून्यताकारप्रवृत्तशून्यतापृष्ठोत्पाद्यत्वात् । आह—किमर्थं पुनः शून्यताकारप्रवृत्तशून्यतापृष्ठेनोत्पत्तिः, न पुनरनात्माकारप्रवृत्तशून्यतापृष्ठेनेति ? अत्रोच्यते—तदुत्पत्त्यानुकूल्यात् । स एव हि शून्यताकारप्रवृत्तशून्यतासमाधिस्तस्य शून्यताशून्यतासमाधेरुत्पत्तौ आनुकूल्येनावतिष्ठते, नानात्माकारः । न ह्येवम् अनात्मदर्शनमुद्वेजयति, यथा शून्यतादर्शनम् । दृष्टेष्वपि हि अनात्मतो

---

१-१. शून्यतश्चाप्यनित्यतः—का० ।

...नित्याकारेण । न दुःखतो न हेत्वादितोऽनास्रवस्यातल्लक्षणत्वान्न मार्गाकारैः दूषणीयत्वात् ।

**आनिमित्तानिमित्तस्तु शान्ततोऽसंख्यया क्षयम्**[1] ॥ २६ ॥

आनिमित्तानिमित्तस्तु समाधिरशैक्षस्यानिमित्तस्याप्रतिसंख्यानिरोधमालम्बते । शान्ताकारेण; अनास्रवस्य प्रतिसंख्यानिरोधाभावात् ।

---

भवेष्वभिरतिरस्तिः संसारे शून्यतादर्शनाभावात् । तद्यथा अध्वगस्यासम्बन्धाद् अध्वगदर्शनादपि प्रीतिः । एकाकिनस्तु तच्छून्यत्वादप्रीतिरिति, तद्वत् ।

**अनित्याकारेणे**ति । दशानामाकाराणाम् । न दुःखत इति विस्तरः । न दुःखत आकारयन्ति । **अनास्रवस्यातल्लक्षणत्वात्** । आर्यप्रतिकूलतया हि दुःखमिष्यते, न हेतुसमुदयप्रभव-प्रत्ययाकारैरनास्रवस्यातल्लक्षणत्वादेव, अनास्रवस्यासमुदयादिलक्षणत्वादित्यर्थः । न **मार्गाकारैर्दूषणीयत्वा**दिति । सोऽशैक्षः समाधिर्दूषयितव्यः, न च मार्गाकारा दूषणरूपा इति । अतो न मार्गाकारैस्तं समाधिमालम्बते । निरोधाकारैस्तु नैव सम्बन्ध इति । न तैश्चिन्त्यते । पारिशेष्यादनित्याकारेणैव ।

**असंख्यया क्षयमि**ति । अप्रतिसंख्यानिरोधमित्यर्थः । **अशैक्षस्यानिमित्तस्य** [illegible]**धमालम्बते** । **शान्ततः** । शान्तोऽयमिति । कथं तस्याप्रतिसंख्यानिरोधः ? अशैक्षादनिमित्तात् समाधेर्व्युत्थितस्य तदनन्तरं ये सास्रवाः क्षणा अतिक्रामन्ति, अन्ये चानास्रवाः । यदि ते नोत्पन्नाः स्युः, अशैक्षा अनिमित्तक्षणा उत्पन्नाः स्युः । तेषां सास्रवाणाम्, अन्यानास्रवाणां चोत्पत्तिकाले तेषामशैक्षाणामानिमित्तक्षणानाम् अप्रतिसंख्यानिरोधो लभ्यते; प्रत्ययवैकल्यात् । तमप्रतिसंख्यानिरोधमालम्बते शान्ताकारेण; अनास्रवस्य प्रतिसंख्यानिरोधाभावात् । न प्रतिसंख्यानिरोधमालम्बते । कस्मात् पुनरनास्रवस्य प्रतिसंख्यानिरोधो नास्ति ? अप्रतिकूलत्वात् । यद्धि प्रतिकूलमार्याणाम्, तत्संयोगस्य विसंयोगाय यतस्ते यतन्ते । विसंयोगश्च प्रतिसंख्यानिरोधः । अतोऽनास्रवस्य न प्रतिसंख्यानिरोधः । किञ्च—अशैक्षस्यानिमित्तस्य समाधेः प्रतिसंख्यानिरोधाभावात्, अप्रतिसंख्यानिरोधस्य च तत्प्रत्यर्थिकभूतत्वात्, तत्प्रोत्साहनेनैव तद्विदूषणमभिलषन् तदप्रतिसंख्यानिरोधमेवालम्बते । शत्रुपग्रहेण हि लोके मार्गोपघातः क्रियमाणो दृश्यत इति । न **निरोधप्रणीतनिःसरणाकारै**रिति ।

---

१. ०संख्येया क्षयम्—जा० ।

न निरोधप्रणीतनिःसरणाकारैः; अनित्यतानिरोधसाधारणत्वाद्, अव्याकृतत्वाद्, अविसंयोगाच्च ॥ २६ ॥

एकान्तेन चैते परसमाधयः—

**सास्रवाः,**

आर्यमार्गद्वेषित्वात्। नह्येवमनास्रवा इति।

कुत्रोत्पद्यन्ते ?

**नृषु,**

मनुष्येष्वेव, न देवेषु।

कस्योत्पद्यन्ते ?

**अकोप्यस्य,**

नान्यस्यार्हतः।

कतिभूमिकाः ?

---

निरोधः साधारणः, न निरोध इति तद्भावः, तस्मात्। **अनित्यतानिरोधसाधारणत्वाद्**। अयमप्रतिसंख्यानिरोधः, न निरोधाकारेणाकार्यते। अन्यथा हि शान्ताकारेण तद्विशिष्टेन नालम्बितः स्यात्। निरोधाकारेण हि अनित्यतानिरोधेनैव दूषित एवासौ अप्रतिसंख्यानिरोधः स्यात्। तद्दूषणेन नाशैक्ष आनिमित्तसमाधिदूषितः स्यादित्यभिप्रायः। न प्रणीताकारेण; **अव्याकृतत्वाद्** अप्रतिसंख्यानिरोधस्य। कुशलं हि प्रणीतम्, नाव्याकृतम्। अतो न प्रणीताकारेणालम्बते। **अविसंयोगाच्च**। अप्रतिसंख्यानिरोधस्य। न निःसरणाकारेण तमालम्बते। संक्लेशवियोगो हि संक्लेशनिःसरणमिष्यते। यस्मान्नाप्रतिसंख्यानिरोधेन संसारनिःसरणं भवति। तथा हि सत्यपि अप्रतिसंख्यानिरोधे केषाञ्चित् कुशलाकुशलानां धर्माणां तैः सम्प्रयुक्त एव, तत्प्राप्त्यविच्छेदात् ॥ २६ ॥

**आर्यमार्गद्वेषित्वादिति**। कथं द्विषति ? शून्यतादिभिराकारैस्तद्वैमुख्यात्।

"**अकोप्यस्य**" इति। अकोप्यधर्मणः। तस्य तीक्ष्णेन्द्रियत्वात् तदुत्पादने **सामर्थ्यमस्ति, नान्यस्यार्हतः**। तेभ्यो दृष्टधर्मसुखविहारत्वात्

**सप्तसामन्तवर्जिताः ।**

सप्त सामन्तकानि हित्वान्यास्वेकादशसु भूमिषु । कामधात्वनागम्यध्यानान्तरध्यानारूप्येषु ।

पुनश्चतस्रः समाधिभावना उच्यन्ते । "अस्ति समाधिभावना आसेविता भाविता बहुलीकृता दृष्टधर्मसुखविहाराय संवर्तते" इति विस्तरः । तत्र—

**समाधिभावना ध्यानं शुभमाद्यं सुखाय हि ॥ २७ ॥**

कुशलं प्रथमं शुद्धकमनास्रवं दृष्टधर्मसुखविहाराय समाधिभावना । तदादिकत्वादन्यान्यपि[1] ज्ञेयानि । नावश्यं सम्परायसुखविहाराय; अपरि-

---

आसङ्गास्पदभूतेभ्योऽशैक्षेभ्यः शून्यतादिसमाधिभ्यो वैमुख्यार्थमपरसमाधीन् समापद्यन्ते ।

**विस्तर** इति । "अस्ति समाधिभावना आसेविता भाविता बहुलीकृता दिव्यचक्षुरभिज्ञाज्ञानदर्शनाय संवर्तते । अस्ति समाधिभावना आसेविता भाविता बहुलीकृता प्रज्ञाप्रभेदाय संवर्तते । अस्ति समाधिभावना आसेविता भाविता बहुलीकृता आस्रवक्षयाय संवर्तते" (     ) इति **सूत्रम्** । तत्रासेविता निषेवणभावनया, भाविता विपक्षप्रहाणतया, बहुलीकृता विपक्षदूरीकरणतया ।

आह— दिव्यचक्षुरभिज्ञाज्ञानदर्शनाय संवर्तते' इति उक्तम्, न च दिव्यचक्षुरभिज्ञासमाधिभावना ? अत्रोच्यते—अयं फले हेतूपचारः । यस्य हेतोः समाधिभावनाया दिव्यचक्षुरभिज्ञाफलम्, तत्र फले हेतूपचारः । ज्ञानदर्शनाय समाधिभावनेति ।

येषां पुनरयं पक्षः—"षड्विधा मुक्तिमार्गधीः" (अभि० को० ७.४२) इति, ध्यानसंगृहीत एव मानसो[2] विमुक्तिमार्गः षडभिज्ञा इति । तेषामचोद्यमेवैतत्; तेषां विमुक्तिमार्गाणां समाहितत्वात् । पूर्वक एव तु पक्षः **अभिधर्मकोशचिन्तकानामित्यवगन्तव्यम्** । दिव्यचक्षुःश्रोत्रविज्ञानयोः अभिज्ञात्वेनाभीष्टत्वात्, तदादिकत्वात् ।

**अन्योऽन्यान्यपीति** । उदाहरणत्वरूपोक्तत्वात् । **नावश्यं सम्परायसुखविहारायेति** । सम्परायः=अनागतं जन्म, तत्र सुखविहारः । तस्मै नावश्यमेतद् भवति । कस्माद् ? इत्याह—परिहीणानां प्रथमध्यानात् ।

१. अन्योऽन्योऽपि—जा० । २. मानसा—जा० ।

हीणोर्ध्वोपपन्नपरिनिवृतानां च[1] तदभावात् ।। २७ ।।

**दर्शनायाक्ष्यभिज्ञेष्टा,**

दिव्यचक्षुरभिज्ञा ज्ञानदर्शनाय समाधिभावना ।

**धीभेदाय प्रयोगजाः ।**

प्रयोगजाः सर्वे गुणास्त्रैधातुका अनास्रवाः प्रज्ञाप्रभेदाय समाधिभावना ।

**वज्रोपमोऽन्त्ये यो ध्याने सास्रवक्षमभावना ।। २८ ।।**

यश्चतुर्थध्याने वज्रोपमः समाधिः स आस्रवक्षयाय समाधिभावना । आत्मोपनायिका[2] किलैषा भगवतो धर्मोपदेशना[3] । **अतश्चतुर्थं**[4] एवाह ।। २८ ।।

कृतः समाधीनां कालगतो निर्देशः ।।

---

**ऊर्ध्वोपपन्नानां** द्वितीयादिषु । **परिनिर्वृत्तानां च** सम्परायसुखविहारस्याभावात् ।। २७ ।।

**ज्ञानदर्शनायेति** । ज्ञानाय, दर्शनाय चेति समासः । तत्र ज्ञानं मनोविज्ञानसम्प्रयुक्ता प्रज्ञा । "अमी भवन्तः सत्त्वाः कायदुश्चरितेन समन्वागताः" इत्येवमादि विकल्पाद् । दर्शनं चक्षुर्विज्ञानसम्प्रयुक्ता प्रज्ञा अविकल्पिका ।

**त्रैधातुका अनास्रवा इति** । त्रैधातुका अशुभानापानस्मृत्यरणाप्रणिधिज्ञानप्रतिसंविदभिज्ञाविमोक्षाभिभ्वायतनादयः । अनास्रवा विमोक्षसुखव्युत्क्रान्तकसमापत्त्यास्रवक्षयाभिज्ञादयः । अत्र तु समाधिसम्प्रयोगात् प्रायोगिकानां गुणानां समाधिभावनेत्युपचारः । **प्रज्ञाप्रभेदायेति** । प्रज्ञाविशेषकर्षाय । **आत्मोपनायिका किलैषा भगवतो धर्मोपदेशनेति** । आत्मन उपनायिका, आत्मनो देशिकेत्यर्थः । बोधिसत्त्वो हि कर्मान्तिप्रत्यवेक्षणाय चक्षुषा सत्त्वान् च्युत्युपपत्तिसङ्कटस्थान् अभिवीक्ष्य तत्परित्राणाय मध्यमे यामे ध्यानविमोक्षसमापत्तीः सम्मुखीकृतवान् । तेऽस्य प्रायोगिका गुणाः प्रज्ञाप्रभेदाय जायन्ते । ततः तृतीये यामे चतुर्थं ध्यानं निःसृत्य नियाममवक्रम्य यावद् वज्रोपमेन समाधिना सर्वसंयोजनप्रहाणं कृतवानिति ।

---

१. का० पुस्तके नास्ति । ३. धर्मदेशना—का० ।
२. ०पनायिकी—का० । ४. ०श्चतुर्थं—का० ।

इदानीं समाधिसन्निश्रितानां गुणानां निर्देशकाल इति व्याख्यायन्ते—

**अप्रमाणानि चत्वारि,**

मैत्री, करुणा, मुदिता, उपेक्षा च; अप्रमाणसत्त्वालम्बनत्वात् ।

किमर्थं चत्वार्येव ?

**व्यापादादिविपक्षतः ।**

व्यापदविहिंसाऽरतिकामरागव्यापादबहुलानां तत्प्रहाणाय चत्वारि यथासंख्यम् ।

अशुभोपेक्षयोः कामरागप्रतिपक्षत्वे को विशेषः ? वर्णरागस्याशुभा मैथुनरागस्योपेक्षेति **वैभाषिकाः** ।

एवं तु युज्यते—मैथुनरागस्याशुभा, मातापितृपुत्रज्ञातिरागस्योपेक्षेति । तत्र

**मैत्र्यद्वेषः,**

अद्वेषस्वभावा मैत्री ।

**अपि करुणा,**

करुणाप्येवम् ।

**मुदिता सुमनस्कता ॥ २९ ॥**

सौमनस्यस्वभावा मुदिता ॥ २९ ॥

---

यस्माच्चैवमात्मोपनायिका धर्मदेशना, **अतश्चतुर्थ** एव । "**वज्रोपमोऽन्त्ये यो ध्याने**" इति ॥ २८ ॥

**अप्रमाणसत्त्वालम्बनादिति** । अप्रमाणसंज्ञाकरणे कारणमेतत् ।

**यथासंख्यमिति** । व्यापादबहुलानां तत्प्रहाणाय मैत्री । **विहिंसा-बहुलानां** तत्प्रहाणाय करुणा । **अरतिबहुलानां** तत्प्रहाणाय मुदिता । **कामरागव्यापादबहुलानां** तत्प्रहाणायोपेक्षेति । **कामरागप्रतिपक्षत्वे को विशेष** इति । कामरागबहुलान्[1] प्रति चिन्ता । **मातापितृपुत्रज्ञातिराग-स्योपेक्षेति** । यथैवासम्बद्धाः पुरुषाः, एवमेवैते इत्युपेक्षेत्यभिप्रायः ॥ २९ ॥

---

१. ०बहुलात्—जा० ।

**उपेक्षाऽलोभः,**

अलोभात्मिकोपेक्षा ।

कथं व्यापादप्रतिपक्षः ? तस्य लोभाकृष्टत्वात् । उभयस्वभावा त्वसौ युज्यते ।

एषां तु मैत्र्यादीनाम्

**आकारः सुखिता दुःखिता बत ।**

**मोदन्तामिति सत्त्वाश्च,**

'सुखिता बत सत्त्वाः' इति मनसिकुर्वन् मैत्रीं समापद्यते । 'दुःखिता बत सत्त्वाः' इति करुणाम्, 'मोदन्तां बत सत्त्वाः' इति मुदिताम्, 'सत्त्वाः' इत्येव मनसि कुर्वन्नुपेक्षां समापद्यते; माध्यस्थ्यात् ।

अतद्वतां[1] सुखाधिमोक्षत्वात् कथं न विपरीतत्वं भवति ? सन्त्वित्य-

---

**तस्य लोभाकृष्टत्वादिति** । यस्माल्लोभाकृष्टो व्यापादस्तस्माल्लोभ-प्रतिपक्षतां भजते इत्यभिप्रायः । **उभयस्वभावा[2] तु असौ युज्यते** इति । अलोभस्वभावा च, अद्वेषस्वभावा च युज्यते इत्यर्थः । किं कारणम् ? रागद्वेषयोः प्रतिपक्षत्वात् । अतस्तु नैको धर्मः उभयस्वभाव इति ग्रहीतव्यम् । किं तर्हि ? अलोभाद्वेषयोरुपेक्षाशब्दो वर्तते इति ।

**सुखिता बत सत्त्वा** इति । सन्तु इत्यभिप्रायः । **दुःखिता बत सत्त्वा** इति । दुःखिता दुःखाद् विमुच्यन्ताम्—इत्यभिप्रायः । तथा हि व्याख्या-स्यते—व्यापादादयः क्लेशोपक्लेशाः दूरीक्रियन्ते, अतस्तत्प्रतिपक्षत्वमुक्तम् । कथमिति ? दर्शयति—कामधातुभूमिकानि अनागम्यभूमिकानि च मैत्र्या-दीनि त्रीणि मौलाप्रमाणसदृशानि विद्यन्ते । प्रयोगालम्बनाकारस्वभाव-सादृश्यात् मौलैः सदृशानि भवन्ति । तैरप्रमाणैस्त्रिभिस्तान् क्लेशान् विष्कम्भ्य प्रहाणमार्गः । मैत्री विहिंसाबहुलानां तत्प्रहाणाय । **माध्य-स्थ्यादिति** । अपक्षपातित्वेनापि अनुनीतः, नापि प्रथित इत्यर्थः ।

**अतद्वतामिति** विस्तरः । **असुखवतां सुखमस्तीत्यधिमोक्षात् कथं न विपरीतत्वं भवति** । **सन्तु—इत्यभिप्रायादिति** । सुखिताः सन्त्वित्यभिप्रायात् ।

---

१. अश्रद्धतां—जा० । २. ०स्वभावात्—जा० ।

भिप्रायात् । आशयस्याविपरीतत्वाद् वा ; अधिमुक्तिसंज्ञानात् ।

अथ वा क एवं विपरीतत्वे दोषः ? अकुशलत्वमिति चेत्, न; कुशलमूलत्वात्, व्यापादादिप्रतिपक्षत्वाच्च ।

उक्त एषामाकारः ॥

**कामसत्त्वास्तु गोचरः ॥ ३० ॥**

कामावचराः सत्त्वा एषामालम्बनम्; तदालम्बनानां व्यापादादीनां प्रतिपक्षत्वात् ।

यत्तूक्तम्—एकां दिशमधिमुच्येतेति ? तद्भाजनेन भाजनगतं दर्शितम् ॥ ३० ॥

कतिभूमिकान्येतानि ?

**ध्यानयोर्मुदिता,**

प्रथमद्वितीयध्यानयोर्मुदिता; सौमनस्यत्वात् ।

**अन्यानि षट्सु,**

---

न विपरीतत्वमित्यभिप्रायः । **आशयस्याविपरीतत्वाद्वेति** । अस्य कुशला धर्माः सुखिता बत सत्त्वा इत्येते चित्तचैत्ताः सपरिवाराः । अस्याशयस्याविपरीतत्वान्न विपरीतत्वं भवति ।

कथं पुनरस्याशयस्याविपरीतत्वादिति ? आह ? **अधिमुक्तिसंज्ञानादिति** । अधिमुक्तेः सज्ञानम् अधिमुक्तिसंज्ञानं तस्मात् । यस्मात् तामधिमुक्तिं तथैव सञ्जानीते । आधिमोक्षकोऽयं मनस्कार इति परिच्छिनत्ति । **अकुशलत्वमिति** । विपरीतग्रहणतः । न; **कुशलत्वात्** । नैतदेवम्; कस्मात् ? कुशलमूलत्वात् । कथं पुनः कुशलमूलम् ? इत्याह—**व्यापादादिप्रतिपक्षत्वादिति** । अद्वेषस्वभावत्वात् मैत्री व्यापादप्रतिपक्षः । दुःखापनयनाकारत्वाच्च करुणा दुःखोपसंहाराकाराया विहिंसायाः प्रतिपक्षो भवति । मुदिता च अरतेः प्रतिपक्षः; सौमनस्यरूपत्वात् । उपेक्षा च माध्यस्थ्यात् कामरागव्यापादयोः प्रतिपक्ष इति ।

**तदालम्बनानामिति** । कामावचरसत्त्वालम्बनानामित्यर्थः ।

**तद्भाजनेन भाजनगतं दर्शितमिति** । स्थानेन स्थानीयसत्त्वलोको । दर्शित इत्यर्थः ॥ ३० ॥

अन्यानि त्रीणि अप्रमाणानि षट्सु भूमिषु, अनागम्ये ध्यानान्तरे ध्यानेषु च; सप्रयोगमौलग्रहणात्।

**केचित् तु पञ्चसु ।**

**केचित्** पुनः अनागम्यं हित्वा पञ्चस्वेतानीच्छन्ति ।

दशस्वित्यपरे । कामधातुं सामन्तकानि च प्रक्षिप्य समाहितासमाहित-मौलप्रयोगग्रहणात् ।

यदुक्तम् - "व्यापादादिविपक्षतः"
किमप्रमाणैरपि क्लेशप्रहाणं भवति ?

**न तैः प्रहाणम् ,**

मौलध्यानभूमिकत्वात्, अधिमुक्तिमनस्कारत्वात्, सत्त्वालम्बनत्वाच्च ।

तत्प्रयोगेण तु व्यापादादिविष्कम्भणात् तत्प्रतिपक्षत्वमुक्तम् । प्रहीण-दूरीकरणाच्च[1] । कामधात्वनागम्यभूमिकानि हि मैत्र्यादीनि मौलाप्रमाण-

---

**समाहितासमाहितमौलप्रयोगग्रहणादिति** । षट्-पञ्च-दशभूमिकत्वात् त्रयाणामपि कारणमुच्यते सम्भवतः । तत्रासमाहितः कामधातुः । प्रयोगाः सामन्तकानीति सम्भवतो योज्यम् । षड्भूमिकव्यवस्थाने अनागम्यसामन्त-कमपीष्यते । सामन्तकान्यपि प्रयोगभूतानि गृह्यन्ते । किमङ्ग मौलानीति ।

**मौलध्यानभूमिकत्वादिति** । मौल-शुद्धक-ध्यानभूमिकत्वादित्यर्थः । न हि शुद्धकैर्मौलध्यानैः क्लेशाः प्रहीयन्ते—इत्युक्तं प्राक् । **अधिमुक्ति-मनस्कारत्वान्न** तैः क्लेशाः प्रहीयन्ते । तत्त्वमनस्कारेण हि क्लेशप्रहाणम् । **सत्त्वालम्बनत्वाच्च** न तैः प्रहाणम् । धर्मसामान्यलक्षणमनस्कारेण हि क्लेशप्रहाणमिति सिद्धान्तः ।

कथं तर्हि ? इत्याह—**तत्प्रयोगेण त्विति** विस्तरः । मैत्र्यादिप्रयोगेण **व्यापादादिविष्कम्भनात् तत्प्रतिपक्षत्वमुक्तमिति** । व्यापादादिप्रतिपक्षत्व-मुक्तम् । विष्कम्भणप्रहाणानि तानीत्यर्थः । **प्रहीणदूरीकरणाच्चेति** । यस्मादानन्तर्यमार्गैर्लौकिकैः लोकोत्तरैर्वा मार्गैः व्यापादादयः क्लेशोपक्लेशाः दूरीक्रियन्ते, अतस्तत्प्रतिपक्षत्वमुक्तम् । कथम् ? इति दर्शयति—**कामधातु-भूमिकानि अनागम्यभूमिकानि च मैत्र्यादीनि** त्रीणि **मौलाप्रमाणसदृशानि**

---

१. प्रहाण०—का० ।

सदृशानि संविद्यन्ते। तैस्तान् विष्कम्भ्य प्रहाणमार्गैः प्रजहाति। ततो वीतरागावस्थायां मौलाप्रमाणलाभात्। बलवत्प्रत्ययलाभेऽपि तैरनाधृष्यो भवति।

कथं पुनरादिकर्मिको मैत्र्यां प्रयुज्यते? यथा सुखितमात्मानं मन्यते परान् वा शृणोति बुद्धबोधिसत्त्वार्यश्रावकांस्तथा सत्त्वानां तत्सुखमधिमुच्यते एवं सुखिता वत सन्तु इति। न चेच्छक्नोति क्लेशस्योद्भूतवृत्तित्वात् स मित्रपक्षं त्रिधा भित्त्वाऽधिमात्रे तत्सुखमधिमुच्यते। ततो मध्ये मृदौ च। तेषु चेत् समां मैत्रीं लभते तत उदासीनपक्षे। ततः शत्रुपक्षं त्रिधा भित्त्वा मृदौ तत् सुखमधिमुच्यते। ततो मध्येऽधिमात्रे च। ततश्चेदधिमात्र इव मित्रपक्षे सुखाधिमोक्षो न व्यावर्तते। ततः क्रमेण ग्रामराष्ट्रसुखाधिमोक्षो यावदेकां दिशं यावत् सर्वं लोकं मैत्र्या स्फरति। यस्तु सर्वगुणग्राही स मैत्रीं क्षिप्रमुत्पादयति। शक्यं हि समुच्छिन्नकुशलमूलेऽपि गुणग्राहिणा भवितुम्, प्रत्येकबुद्धे च दोषग्राहिणा; पूर्वपुण्यापुण्यफलसंदर्शनात्[1]।

एवं करुणायां मुदितायां च प्रयुज्यते। अमी सत्त्वा बहुविधव्यसनौघनिमग्ना अप्येव दुःखाद्विमुच्येरन्, अप्येवाभिप्रमोदेरन्[2] इत्यधिमुच्यमान उपेक्षां तूदासीनपक्षादारभते।

एतानि चाप्रमाणानि

**नृष्वेव जन्यन्ते,**

---

**संविद्यन्ते**; प्रयोगालम्बनाकारस्वभावसादृश्यात् मौलैः सदृशानि भवन्ति। **तैर**प्रमाणैः त्रिभिस्तान् क्लेशान् **विष्कम्भ्य प्रहाणमार्गैः** आनन्तर्यमार्गैः **प्रजहाति। बलवत्प्रत्ययलाभेऽपी**ति। व्यापादादिप्रत्ययलाभेऽपि बलवति सति तैः क्लेशै**रनाधृष्यो भवति**। सम्मुखीभावातः।

**अधिमात्र** इति। मित्रपक्षे। परममित्रे हि सुकरा मैत्री। **स्फरती**ति। व्याप्नोति। **पूर्वपुण्यापुण्यफलसन्दर्शना**दिति। पूर्वपुण्यफलसन्दर्शनात् समुच्छिन्नकुशलमूलेऽपि पुद्गले शक्यं गुणग्रहणेनानेन भवितुं 'पुण्यमनेन कृतमासीद् येनास्य रूपादिसम्पद्' इति। प्रत्येकबुद्धे च दोषग्राहिणा 'नूनमनेन अपुण्यं कृतमासीद् येनास्यैवं रूपादिवैकल्यम्' इति।

**अप्येव दुःखाद् विमुच्येरन्** इत्यधिमुच्यमानः करुणायां प्रयुज्यते। **अप्येवाभिप्रमोदेरन्नि**ति अधिमुच्यमानो मुदितायां प्रयुज्यते।

---

१. पूर्वं—का०। २. ०वातिप्रमो०—का०।

मनुष्येषूत्पाद्यन्ते, नान्यत्र ।

किं पुनर्यं एकेनाप्रमाणेन समन्वागतः सोऽवश्यं सर्वैः ? किन्तु

**त्र्यन्वितो ध्रुवम् ॥ ३१ ॥**

तृतीयचतुर्थध्यानोपपन्नो मुदितया न समन्वागतो भवति । त्रिभिस्त्वप्रमाणलाभी नित्यं समन्वागतो भवति ॥ ३१ ॥

**अष्टौ विमोक्षाः,**

'रूपी रूपाणि पश्यति' इति प्रथमो विमोक्षः । 'अध्यात्मरूपसंज्ञी बहिर्धा रूपाणि पश्यति' इति द्वितीयः । 'शुभं विमोक्षं कायेन साक्षात्कृत्वोपसम्पद्य विहरति' इति तृतीयः । चत्वार आरूप्याः । संज्ञावेदितनिरोधश्चाष्टमः ।

तेषाम्

**प्रथमावशुभा,**

---

**मुदितया न समन्वागत** इति । तृतीयचतुर्थयोः सौमनस्याभावात् ॥ ३१ ॥

**"अष्टौ विमोक्षाः"** इति । यथासूत्रम् । "अष्टौ विमोक्षाः । कतमेऽष्टौ ? 'रूपी रूपाणि पश्यति' इत्ययं प्रथमो विमोक्षः । 'अध्यात्ममरूपसंज्ञी बहिर्धा रूपाणि पश्यति' इत्ययं द्वितीयो विमोक्षः । 'शुभं विमोक्षं कायेन साक्षात् कृत्वोपसम्पदय विहरति' इत्ययं तृतीयो विमोक्षः । 'सर्वशो रूपसंज्ञानां समतिक्रमात्, प्रतिघसंज्ञानामस्तङ्गमात्, नानात्वसंज्ञानाममनसिकारात् 'अनन्तमाकाशम्, अनन्तमाकाशम्' इत्याकाशानन्त्यायतनमुपसम्पदय विहरति, तद्यथा—देवा आकाशानन्त्यायतनोपगाः—अयं चतुर्थो विमोक्षः । पुनरपरं सर्वश आकाशानन्त्यायतनं समतिक्रम्य 'अनन्तं विज्ञानम्, अनन्तं विज्ञानम्' इति विज्ञानानन्त्यायतनमुपसम्पद्य विहरति, तद्यथा—देवा विज्ञानानन्त्यायतनोपगाः—अयं पञ्चमो विमोक्षः । पुनरपरं सर्वशो विज्ञानानन्त्यायतनं समतिक्रम्य 'नास्ति किञ्चिद्' इत्याकिञ्चन्यायतनमुपसम्पदय विहरति, तद्यथा—देवा आकिञ्चन्यायतनोपगाः—अयं षष्ठो विमोक्षः । पुनरपरं सर्वश आकिञ्चन्यायतनं समतिक्रम्य नैवसंज्ञानासंज्ञायतनमुपसम्पदय विहरति, तद्यथा—देवा नैवसंज्ञानासंज्ञायतनोपगाः—अयं सप्तमो विमोक्षः । पुनरपरं सर्वशो नैवसंज्ञानासंज्ञायतनं समतिक्रम्य संज्ञावेदितनिरोधकायेन साक्षात्कृत्वोपसम्पदय विहरति—अयमष्टमो विमोक्षः" (     ) इति ।

**रूपी रूपाणीति ।** स्वात्मनि रूपाणि विभाव्य बहिरपि रूपाणि

**अभि० को० ४ : १०**

प्रथमौ द्वौ विमोक्षावशुभास्वभावौ; विनीलकाद्यालम्बनत्वात्[1]। अत एतयोरशुभावन्नयो वेदितव्यः। एतौ च

**ध्यानयोर्द्वयोः।**

प्रथमद्वितीययोर्ध्यानयोः, नान्यस्यां भूमौ। कामावचरप्रथमध्यानभूमिकयोर्वर्णरागयोः प्रतिपक्षेण यथासंख्यम्।

**तृतीयोऽन्त्ये,**

शुभो विमोक्षश्चतुर्थध्याने।

**स चालोभः,**

सोऽप्यलोभस्वभावो न त्वशुभास्वभावः; शुभाकारत्वात्। सपरिवारास्त्वेते पञ्चस्कन्धस्वभावाः। आरूप्यविमोक्षास्तु

**शुभारूप्याः समाहिताः ॥ ३२ ॥**

कुशलाः समाहिता एव चारूप्यविमोक्षाख्यां लभन्ते, न क्लिष्टा नाप्यसमाहिताः; तद्यथा मरणभवे।

---

पश्यति; विनीलकाद्यालम्बनत्वात्। **अशुभावन्नयो वेदितव्य** इति। अधिरागस्य वर्णरागादिप्रतिपक्षमारभ्य सम्भवतो विस्तरेण योज्यम्।

"अलोभा दशभूः कामदृश्यालम्बा नृजा शुभा" (अभि० को० ५.१२) इति।

**यथासंख्यमिति।** **कामावचरस्य वर्णरागस्य प्रतिपक्षेण** प्रथमध्यानभूमिको विमोक्षः। **प्रथमध्यानभूमिकस्यापि वर्णरागप्रतिपक्षेण** द्वितीयध्यानभूमिको विमोक्षः। एतौ च द्वौ पुनर्दूरीभावप्रतिपक्षौ वेदितव्यौ।

आह—द्वितीयादिध्यानेषु वर्णरागो नास्तीति कथं गम्यते? चक्षुर्विज्ञानाभावात्। यो हि यस्माद् विषयाद् विरक्तः, नियतमसौ तद्ग्राहकादपि विज्ञानाद् विरक्तः, द्वितीयादिषु च ध्यानेषु चक्षुर्विज्ञानादि नास्ति, इत्यतो वर्णवीतरागास्ते—इति सिद्धम्।

"शुभारूप्याः" इति। शुद्धकानास्रवाः।

---

१. ०द्याकारत्वात्—का०।

अन्यदाप्यसमाहिताः सन्तीत्यपरे। सामन्तकविमुक्तिमार्गा[1] अपि विमोक्षाख्यां लभन्ते, नानन्तर्यमार्गाः; अधरालम्बनत्वात्। वैमुख्यार्थो हि विमोक्षार्थ इति ॥ ३२ ॥

**निरोधस्तु समापत्तिः,**

संज्ञावेदितनिरोधस्तु अष्टमो विमोक्षो निरोधसमापत्तिः। सा च पूर्वं निर्दिष्टा। संज्ञावेदितवैमुख्यात्, सर्वसंस्कृताद्वा।

समापत्त्यावरणविमोक्षणाद्विमोक्ष इत्यपरे।

तां तु समापद्यन्ते

**सूक्ष्मसूक्ष्मादनन्तरम्।**

भवाग्रं हि संज्ञा सूक्ष्मं तत् पुनः सूक्ष्मतरं कृत्वा निरोधं समापद्यन्ते।

समापन्नानां तु

**स्वशुद्धकाधरार्येण व्युत्थानं चेतसा ततः ॥ ३३ ॥**

भावाग्रिकेण वा शुद्धकेन चेतसा ततो व्युत्थानं भवत्याकिञ्चन्यायतन-भूमिकेन वा सास्रवेण। तदेवं तस्याः सास्रवं समापत्तिचित्तं भवति, सास्रवानान्तर्यं तु व्युत्थानचित्तमिति ॥ ३३ ॥

---

**अन्यदाप्यसमाहिताः सन्तीति।** आरूप्येषु विपाकजान् चित्तचैत्तान् अभिसन्धायोच्यते। पूर्वस्मिंस्तु पक्षे मरणभवावस्थायामेवासमाहिता आरूप्या इति दर्शयति। **सामन्तकविमुक्तिमार्गा अपि विमोक्षाख्यां लभन्त** इति। किमङ्ग मौला इत्यपि-शब्दार्थः। **नानन्तर्यमार्गा** इति विस्तरः। यस्माद् **अधरभूमिवैमुख्याद् विमोक्षा** इत्युच्यन्ते, तस्माद् आनन्तर्यमार्गा न विमोक्षाख्यां लभन्ते; अधरालम्बनत्वात्। विमुक्तिमार्गास्तु लभन्ते; ऊर्ध्वालम्बनत्वात् ॥ ३२ ॥

**"निरोधस्तु समापत्तिः"।** अष्टम इति वाक्यशेषः। **संज्ञावेदित-वैमुख्यादिति।** संज्ञावैमुख्यात्, वेदितवैमुख्याच्च विमोक्षः। **सर्वसंस्कृताद्वा।** वैमुख्याद् विमोक्षः।

**समापत्त्यावरणविमोक्षणाद् विमोक्ष** इति। समापत्त्यावरणविमोक्ष-वैमुख्यात् विमोक्ष इति। तत्र समापत्त्यावरणम्—यस्मिन्नावरणे चित्ताकर्मण्यता त्रिधातुकवीतरागा अपि सन्तः प्रथममपि मौलं ध्यानं नोत्पादयन्ति ॥ ३३ ॥

---

१. ०विमुक्त०—जा०।

एषां च विमोक्षाणाम्—

**कामाप्तदृश्यविषयाः प्रथमाः,**

कामावचरमेषां रूपायतनमालम्बनममनोज्ञं मनोज्ञं च यथायोगम् ।

**ये त्वरूपिणः ।**

**तेऽन्वयज्ञानपक्षोर्ध्वस्वभूदुःखादिगोचराः ॥ ३४ ॥**

आरूप्यविमोक्षाणां स्वभूमिकोर्ध्वभूमिकं दुःखं तद्धेतुनिरोधौ चालम्बनं सर्वश्चान्वयज्ञानपक्षो मार्गः । अप्रतिसंख्यानिरोधश्चेति वक्तव्यमाकाशं चैकस्येति । कस्मान्न तृतीये ध्याने विमोक्षः । द्वितीयध्यानभूमिकवर्णरागाभावात्, सुखमण्डेञ्जितत्वाच्च ।

---

**यथायोगमिति** । द्वयोर्विनीलकाद्यमनोज्ञं रूपमालम्बनम् । तृतीयस्य **मनोज्ञमालम्बनमिति** ।

**तद्धेतुनिरोधौ चेति** । तस्य दुःखस्य समुदय-निरोधौ । **सर्वश्चान्वयज्ञानपक्ष इति** । ऊर्ध्वाधः स्वभूमिक इत्यर्थः । **अप्रतिसंख्यानिरोधश्चेति** । अप्रतिसंख्यानिरोधश्चारूप्यविमोक्षाणामालम्बनमिति वक्तव्यम् ।

"ये त्वरूपिणः ।

तेऽन्वयज्ञानपक्षोर्ध्वस्वभूदुःखादिगोचराः" ।। इति अत्र वचनात् ।

आह—कतमः पुनरप्रतिसंख्यानिरोधस्तेषामालम्बनम् ? अत्रोच्यते—अशैक्षस्यानिमित्तस्य समाधेरप्रतिसंख्यानिरोधमालम्बते । एते हि आरूप्या विमोक्षा अनिमित्तानिमित्तसमाधिस्वभावाः सम्भवन्ति । ते च सप्त सामन्तकानि हित्वा अन्यास्वेकादशसु भूमिषु कामाधातावनागम्ये ध्यानान्तरेषु ध्यानारूप्येषु चाष्टास्विति । सोपसंख्यानं शास्त्रमिति शास्त्रलक्षणं दर्शितं भवति । **आकाशं चैकस्येति** । वक्तव्यम्—आकाशानन्त्यायतनविमोक्षस्यालम्बनम् । **द्वितीयध्यानभूमिक-वर्णरागाभावादिति** । द्वितीयध्यानभूमिकस्य वर्णरागप्रतिपक्षयितव्यस्याभावादित्यर्थः । तदभावः कायिकविज्ञानाभावात् । **सुखमण्डेञ्जितत्वाच्च** । **सुखस्य मण्डः** । सर्वसुखस्योपरिस्थसुखमित्यर्थः । तेनेञ्जितत्वात् कम्पितत्वात् । न तृतीये ध्याने विमोक्षो व्यवस्थाप्यते ।

कस्माच्छुभं[1] विमोक्षमुत्पादयति ? **अशुभया लीनां सन्तातिं प्रमोदयितुं** जिज्ञासनार्थं वा। कच्चिदशुभाविमोक्षौ निष्पन्नाविति।

एवं च पुनस्तौ निष्पन्नौ भवतो यदि शुभतोऽपि मनसि कुर्वतः क्लेशो नोत्पद्यत इति। द्वाभ्यां हि कारणाभ्यां योगिनो विमोक्षादीनुत्पादयन्ति—क्लेशदूरीकरणार्थम्, समापत्तिवशित्वार्थं च। अरणादिगुणाभिनिर्हाराय आर्यायाश्च ऋद्धेः। सा पुनर्यया वस्तुपरिणामाधिष्ठानायुरुत्सर्गादीनि क्रियन्ते।

कस्मात् तृतीयाष्टमयोरेव साक्षात्करणमुक्तम्, नान्येषाम् ? प्रधानत्वाद्, धातुभूमिपर्यन्तावस्थितत्वाच्च ॥ ३४ ॥

---

यदि तृतीयध्यानभूमिको वर्णरागो नास्ति, **कस्मात् शुभं विमोक्षमुत्पादयतीति**। अत आह—**अशुभया लीनां सन्ततिं प्रमोदयितुं जिज्ञासनार्थं वेति**। **विमोक्षादीनामिति**। आदि-शब्देनाभिभ्वायतनाद्युपग्रहः। **क्लेशदूरीकरणार्थम्**। विमोक्षादीनां दूरीभावप्रतिपक्षत्वात्। **समापत्तिवशित्वार्थं च**। तच्च समापत्तिवशित्वम**रणादिगुणाभिनिर्हाराय** भवति। **आर्यायाश्च ऋद्धेः**। किम् ? अभिनिर्हारायेति प्रकृतम्। **सा पुनर्यया वस्तुपरिणामाधिष्ठान-आयुरुत्सर्गादीनीति**। तत्र वस्तुपरिणामम्—यद्वस्तु यथाधिमुच्यते तथैव तद्भवति, यथा—सुवर्णस्य मृत्करणम्। तथाधिमोमोक्षादधिष्ठानम्—स्थिरस्य वस्तुनः। इमं तु कालमवतिष्ठामीति, तथा आयुषा उत्सर्गः। आदिशब्देन सुमेरोः परमाणौ प्रवेश इत्येवमन्यच्च सूत्रे द्रष्टव्यम्।

**कस्मात् तृतीयाष्टमयोरेव साक्षात्करणमुक्तम्, नान्येषामिति**। कस्मात् तृतीयस्य साक्षात्करणमुक्तम्—शुभं विमोक्षं कायेन साक्षात्कृत्वोपसम्पद्य विहरतीति। अष्टमस्यापि संज्ञावेदितनिरोधं कायेन साक्षात्कृत्वोपसम्पद्य विहरतीति। अत्र साक्षात्कृत्वेति, प्रत्यक्षीकृत्येत्यर्थः। उपसम्पद्य विहरतीति, तां समापद्य समापत्तिं विहरतीत्यर्थः।

अत्रोच्यते—प्रथमद्वितीयाभ्यां विमोक्षाभ्यां तृतीयस्य विमोक्षस्य **प्राधान्यात्**। रूपिविमोक्षावरणसाकल्यप्रहाणादाश्रयपरिवृत्तितस्तृतीयस्य साक्षात्करणमुक्तम्। एवं अष्टमस्यापि प्राधान्यात्। आरूप्यविमोक्षावरणसाकल्यप्रहाणादाश्रयपरिवृत्तितः साक्षात्करणमुक्तम्। **धातुभूमिपर्यन्तावस्थितत्वाच्चेति**। चतुर्थं ध्यानं रूपधातुभूमिपर्यन्तावस्थितम्। भवाग्रमपि आरूप्यधातुभूमिपर्यन्तावस्थितम् ॥ ३४ ॥

---

१. तस्मा०—का०।

**अभिभ्वायतनान्यष्टौ,**

अध्यात्मं रूपसंज्ञी बहिर्धा रूपाणि पश्यति परीत्तानि सुवर्णानि दुर्वर्णानि, तानि खलु रूपाण्यभिभूय जानात्यभिभूय पश्यतीत्येवंसंज्ञी भवति—इदं प्रथममभिभ्वायतनम् । एवमधिमात्राणि । अध्यात्ममरूपसंज्ञ्येवमेव । इत्येतानि चत्वारि ।

अध्यात्ममरूपसंज्ञ्येव पुनर्नीलपीतलोहितावदातानि पश्यतीत्यष्टौ भवन्ति ।

तेषाम्

---

**एवमधिमात्राणीति** । "अध्यात्मं रूपसंज्ञी बहिर्धा रूपाणि पश्यति अधिमात्राणि सुवर्णदुर्वर्णानि"—इति विस्तरः । यावत्, "इदं द्वितीयमभिभ्वायतनम्" । **अध्यात्ममरूपसंज्ञी एवमेवेति** । कथम् ? "अध्यात्ममरूपसंज्ञी बहिर्धा रूपाणि पश्यति परित्तानि सुवर्णदुर्वर्णानि" इति पूर्ववत्, यावत्, "इदं द्वितीयमभिभ्वायतनम्" । तथा "अध्यात्ममरूपसंज्ञी बहिर्धा रूपाणि पश्यति अधिमात्राणि सुवर्णदुर्वणानि" इति पूर्ववत्, यावत्, "इदं तृतीयमभिभ्वायतनम्" । तथा अध्यात्ममरूपसंज्ञी बहिर्धा रूपाणि पश्यति अधिमात्राणि सुवर्णदुर्वर्णानि" इति पूर्ववत्, यावत् "इदं चतुर्थमभिभ्वायतनम्" । **इत्येतानि चत्वारीति** । **अरूपसंज्ञी एव पुनर्नील-पीत-लोहितावदातानि पश्यतीति** । कथम् ? "अध्यात्ममरूपसंज्ञी बहिर्धा रूपाणि पश्यति नीलानि नीलवर्णानि नीलनिदर्शनानि नीलनिर्भासानि । तद्यथा—उमकापुष्पं सम्पन्नं वाराणसेयं वा वस्त्रं नीलं नीलवर्णं नीलनिदर्शनं नीलनिर्भासं तानि खलु रूपाण्यभिभूय जानाति, अभिभूय पश्यति, एवंसंज्ञी च भवति—इदं पञ्चममभिभ्वायतनम् । अध्यात्ममरूपसंज्ञी बहिर्धा रूपाणि पश्यति पीतानि पीतवर्णानि, पीतनिदर्शनानि पीतनिर्भासानि । तद्यथा—कर्णिकार-पुष्पं सम्पन्नं वाराणसेयं वा वस्त्रं पीतमिति विस्तरः—इदं षष्ठमभिभ्वायतनम् । अध्यात्ममरूपसंज्ञी बहिर्धा रूपाणि पश्यति लोहितानि लोहितवर्णानि लोहितनिदर्शनानि लोहितनिर्भासानि, तद्यथा बन्धूक-पुष्पं सम्पन्नं वा वाराणसेयं वस्त्रं लोहितमिति विस्तरः—इदं सप्तममभिभ्वायतनम् । अध्यात्ममरूपसंज्ञी बहिर्धा रूपाणि पश्यति अवदातानि अवदातवर्णानि अवदातनिदर्शनानि अवदातनिर्भासानि, तद्यथा—उशनस्तारकासम्पन्नं वा वाराणसेयं वस्त्रमवदातमिति विस्तरः—इदमष्टममभिभ्वायतनमिति । मूर्धकानि चत्वारि, इमानि चत्वारीत्यष्टौ भवन्ति ।

**द्वयमाद्यविमोक्षवत् ।**

यथा प्रथमो विमोक्षः, एवं द्वे अभिभ्वायतने प्रथमद्वितीये ।

**द्वे द्वितीयवत्,**

यथा द्वितीयो विमोक्ष एवं द्वे अभिभ्वायतने तृतीयचतुर्थे ।

**अन्यानि पुनः शुभविमोक्षवत् ॥ ३५ ॥**

यथा शुभो विमोक्ष एवमन्यानि चत्वारि ।

अयं तु विशेषः—तैर्विमोक्षमात्रम्[1], एभिस्त्वालम्बनाभिभवनम्;

---

"**द्वयमाद्यविमोक्षवत्**" इति । यथा रूपी रूपाणि पश्यतीति प्रथमो विमोक्षः, आत्मगतं रूपं पश्यन् बहिर्गतं रूपं पश्यति—एवमाद्ये अभिभ्वायतने । तयोर्ह्येकमात्मगतं रूपं पश्यन् बहिर्गतं पश्यति । तथा ह्येतत् पठ्यते—"अध्यात्मं रूपसंज्ञी बहिर्धा रूपाणि पश्यति परित्तानि" इति विस्तरः । द्वितीयमपि तथैव । अयं तु विशेषः—बहिर्धा रूपाणि पश्यति अधिमात्राणि । किञ्च—यथा प्रथमो विमोक्षः प्रथमध्यानभूमिकः कामावचरवर्णरागप्रतिपक्षः कामावचररूपायतनालम्बनश्च, तथेमे प्रथमे अभिभ्वायतने वेदितव्ये ।

"**द्वे द्वितीयवत्**" इति । यथा अध्यात्ममरूपसंज्ञी बहिर्धा रूपाणि पश्यतीत्येवंलक्षणो द्वितीयो विमोक्षः । एवंलक्षणे तृतीयचतुर्थे[2] अभिभ्वायतने । ते अपि ह्येवं पठ्येते—"अध्यात्ममरूपसंज्ञी बहिर्धा रूपाणि पश्यति परित्तानि" इति तृतीयः पठ्यते । 'अध्यात्ममरूपसंज्ञी बहिर्धा रूपाणि पश्यत्यधिमात्राणि" इति चतुर्थः पठ्यते । किञ्च—यथा द्वितीयो विमोक्षो द्वितीयध्यानभूमिकः प्रथमध्यानभूमिकवर्णरागप्रतिपक्षः कामावचररूपालम्बनश्च, तथा तृतीयं चतुर्थं चाभिभ्वायतनम् ।

"**अन्यानि पुनः शुभविमोक्षवत्**" इति । यथा शुभो विमोक्षः चतुर्थध्यानभूमिकः कामावचरमनोज्ञरूपायतनालम्बनश्च, तथा नीलपीतलोहितावदाताभिभ्वायतनानि । केवलं त्विह वर्णचतुष्टयं विभज्य गृह्यते । शुभस्य च विमोक्षस्यालोभः स्वभावः । एवमेषामपि । यथायं शुभो विमोक्षः सपरिवारग्रहणात् पञ्चस्कन्धस्वभावः, तथैव तान्यपीति अव-

---

१. तैर्वैमुख्य०—का० ।　　२. एवं तृतीय०—जा० ।

यथेष्टमधिमोक्षात्[1], क्लेशानुत्पादाच्च ॥ ३५ ॥

**दश कृत्स्नानि,**

दश कृत्स्नायतनानि निरन्तरकृत्स्नस्फरणात्। पृथिव्यप्तेजोवायुनीलपीतलोहितावदातकृत्स्नानि। आकाशविज्ञानानन्त्यायतनकृत्स्ने च।

तेषाम्

**अलोभोऽष्टौ[2],**

प्रथमान्यष्टावलोभस्वभावानि।

**ध्यानेऽन्त्ये,**

चतुर्थ एव ध्याने।

**गोचरः पुनः।**

**कामाः,**

कामावचररूपायतनमेषामालम्बनम्।

---

गन्तव्यम्। तैर्विमोक्षमात्रमिति। नालम्बनाभिभवनम्। कथं चाभिभ्वायतनैरालम्बनाभिभ्वायतनमिति? अत आह—**यथेष्टमधिमोक्षादिति।** यथेष्टं तैर्नीलपीताद्यधिमोक्षात् क्षणेन नीलम्, क्षणेन पीतमित्यादि। अमनोज्ञस्य वा विनीलकादेर्मनोज्ञाधिमोक्षात्। **क्लेशानुत्पादाच्चेति।** शुभतोऽपि च सांक्लेशिकं वस्त्वाकारयतः क्लेशानुत्पत्तेस्तैरभिभ्वायतनैरालम्बनाभिभवनं भवति ॥ ३५ ॥

**निरन्तर कृत्स्नस्फरणादिति।** निरन्तरं कृत्स्नानां पृथिव्यादीनां स्फरणाद् व्यापनात्। तस्मात् कृत्स्नायतनानीत्युच्यन्ते **कामावचरं रूपायतनमिति।**

"पृथिवी वर्णसंस्थानमुच्यते लोकसंज्ञया।
आपस्तेजश्च वायुश्च धातुरेव तथापि च॥" (अभि० को० १.१३)

इति वचनात्।

---

१. यथेच्छ०—का०।

२. अलोभऽष्टौ—का०।

वायौ[1] स्प्रष्टव्यायतनमित्येके ।

**द्वे शुद्धकारूप्ये,**

द्वे पश्चिमे कृत्स्ने शुद्धकारूप्यस्वभावे ।

**स्वचतुःस्कन्धगोचरे ॥ ३६ ॥**

स्वभूमिकाश्चत्वारः स्कन्धा अनयोरालम्बनम् । विमोक्षप्रावेशिकान्यभिभ्वायतनानि, अभिभ्वायतनप्रावेशिकानि कृत्स्नायतनानि; उत्तरोत्तरविशिष्टत्वात् । सर्वाणि चैतानि विमोक्षादीनि पृथग्जनार्यसान्तानिकानि, स्थापयित्वा निरोधविमोक्षम् ॥ ३६ ॥

**निरोध उक्तः,**

निरोधविमोक्षः पूर्वमेवोक्तः सर्वैः प्रकारैः ।

**वैराग्यप्रयोगाप्तं तु शेषितम् ।**

निरोधादन्यानि विमोक्षादीनि वैराग्यलाभिकानि प्रायोगिकाणि च; उचितानुचितत्वात् ।

**त्रिधात्वाश्रयसारूप्यसंज्ञं शेषं मनुष्यजम् ॥ ३७ ॥**

---

**वायौ स्प्रष्टव्यायतनमित्येक** इति । ये वायौ रूपायतनं नेच्छन्ति, ते आहुः—वायौ स्प्रष्टव्यायतनमालम्बनमिति ।

**विमोक्षप्रावेशिकानीति** । प्रवेशा एव प्रावेशिकानि—इति स्वार्थवृद्धिविधानात् । प्रवेशे भवानि वा । **उत्तरोत्तरविशिष्टत्वादिति** । यस्माद् विमोक्षेभ्य उत्तराणि अभिभ्वायतनानि विशिष्टानि, अभिभ्वायतनेभ्य उत्तराणि कृत्स्नायतनानि विशिष्टानीति, तदुक्तं भवति—विमोक्षान् उत्पाद्य अभिभ्वायतनानि उत्पादयति । अभिभ्वायतनान्युत्पाद्य कृत्स्नायतनान्युत्पादयतीति । **स्थापयित्वा निरोधविमोक्षमिति** । तस्यैकान्तेनार्यसान्तानिकत्वात् ॥ ३६ ॥

**उचितानुचितत्वादिति** । उचितानि वैराग्यलाभिकानि । अनुचितानि प्रायोगिकाणि । **शेषमिति** विस्तरः । किं पुनः शेषम् ? प्रथमास्त्रयो

---

१. वायोः—का० ।

आरूप्यविमोक्षा आरूप्यकृत्स्ने च त्रैधातुकाश्रयाणि। शेषं मनुष्याश्रयमेव; उपदेशसामर्थ्येनोत्पादनात् ।। ३७ ।।

कथं रूपारूप्यधात्वोरारूप्यध्यानविशेषोत्पादनम् ? त्रिभिः कारणैर्ध्यानारूप्यसमापत्तीनामुपपत्तिः, हेतुकर्मधर्मताबलैः । तत्र—

**हेतुकर्मबलाद्धात्वोरारूप्योत्पादनं द्वयोः ।**

द्वयोः रूपारूप्यधात्वोरारूप्यसमापत्त्युत्पादनम् । हेतुबलाच्च, आसन्नाभीक्ष्णाभ्यासात्[1], कर्मबलाच्च ऊर्ध्वभूमिकस्यापरपर्यायवेदनीयस्य कर्मणः प्रत्युपस्थितविपाकत्वात् । न ह्यधस्तादवीतरागेणोर्ध्वं शक्यमुपपत्तुमिति[2] ।

---

विमोक्षा अभिभ्वायतनान्यष्टौ । कृत्स्नायतनान्यष्टौ । **एतन्मनुष्याश्रयमेव ।** किं कारणम् ? **उपदेशसामर्थ्येनोत्पादनात्** । अन्यत्र देवादिषूपदेशाभावात् ।। ३७ ।।

**कथं रूपारूप्यधात्वोरारूप्यध्यानविशेषोत्पादनमिति** । आरूप्यधातौ रूपधातौ वा यस्यां भूमावुपपन्नः, तदूर्ध्वं यदारूप्यं ध्यानं च, तत् ततो विशिष्येत इत्यारूप्यध्यानविशेषः । तस्यारूप्यध्यानविशेषस्य कथमुपदेशमन्तरेण भवतीति ? यतः शेषं मनुष्याश्रयमेव । उपदेशसामर्थ्येनोत्पादनादित्युक्तम्, अतोऽनेन सम्बन्धेन पृष्टम्—कथं रूपारूप्यधात्वोरिति विस्तरः । **हेतुबलाच्च आसन्नाभीक्ष्णाभ्यासाच्च** । आसन्नाभ्यासाद्, अभीक्ष्णाभ्यासाच्च । कथं कृत्वा ? कश्चिद् आरूप्यसमापत्तिं समापद्य ततश्च परिहायनान्तरमेव रूपधातावुपपद्यते । आरूप्यसमापत्तिलक्षणस्य सभागहेतोर्बलीयस्त्वात् तस्य रूपधातौ आरूप्यसमापत्तिरुत्पत्स्यते । अभीक्ष्णाभ्यासादपि । यदि कश्चिद् आरूप्यसमापत्तिमभीक्ष्णं समापद्य, ततश्च परिहाय रूपधातौ उपपद्यते, तस्यारूप्यसमापत्तिलक्षणस्य सभागहेतोर्बलीयस्त्वाद् रूपधातौ आरूप्यसम्पत्तिरुत्पद्यते । एवं विज्ञानानन्त्यायतनसमापत्तेरपि परिहीणस्याकाशानन्त्यायतनोपपन्नस्य तथैव तत्समापत्तीनामुत्पादनम् । एवं तदूर्ध्वोपपन्नस्य ।

**कर्मबलाच्चेति** । रूपधातावुपपन्नस्य **अपरपर्यायवेदनीयस्य कर्मणः प्रत्युपस्थितविपाकत्वात्** । तद्वैराग्यानुकूला सन्ततिरवतिष्ठते । **न ह्यधस्ताद् अवीतरागेणोर्ध्वमारूप्यधातावशक्यमुपपत्तुमिति** । एवमारूप्येषु आकाशा-

---

१. हेतुबलाद—का० । २. ०मुत्पत्तु०—का० ।

**ध्यानानां रूपधातौ तु ताभ्यां धर्मतयापि च ॥ ३८ ॥**

रूपधातौ ध्यानोत्पादनमेताभ्यां च[1] हेतुकर्मबलाभ्यां धर्मतयापि[2] च संवर्तनीकाले। तदानीं हि सर्वसत्त्वा एवाधरभूमिकास्तद्ध्यानमुत्पादयन्ति; कुशलानां[3] धर्माणामुद्भूतवृत्तित्वात् ॥ ३८ ॥

कियच्चिरं पुनरयं सद्धर्मः स्थास्यति? यत्रेमे ईदृशा[4] धर्माणां प्रकाराः प्रज्ञायन्ते?

---

नन्त्यायतनोपपन्नस्य कर्मबलात्। ऊर्ध्वभूमिकस्य विज्ञानानन्त्यायतनभूमिकस्यापरपर्यायवेदनीयस्य कर्मणः प्रत्युपस्थितविपाकत्वात्। तद्वैराग्यानुकूला सन्ततिरवतिष्ठते। न ह्यधस्तादवीतरागेणोर्ध्वं शक्यमुपपत्तुमिति। **एताभ्यां च** हेतुकर्मबलाभ्याम्।

कथं प्रथमादिषु ध्यानेषु द्वितीयादिध्यानोत्पादनम्? हेतुबलाच्च आसन्नाभीक्ष्णाभ्यासात्। कर्मबलाच्चोर्ध्वभूमिकस्येति विस्तरेण योज्यम्।

**"धर्मतयापि च"** इति। कथं धर्मता नाम? केचित् तावत् **सौत्रान्तिका** आहुः—एषामेव धर्माणामुद्भूतवृत्तीनां पूर्वध्यानवासनाधिपत्यात् तदुत्पत्तौ उपदेशमन्तरेण ध्यानोत्पत्तावानुगुण्यं धर्मता, प्रकृतिः। स्वभावतेत्यर्थः।

**वैभाषिका** अपि केचिदाहुः—पूर्वजान्मनिकात् सभागहेतोः निष्यन्दफलं ध्यानोत्पादनम्, तदुपदेशमन्तरेण अन्यतो धर्मतेति।

**कुशलानां धर्माणामुद्भूतवृत्तित्वादिति**। तत्र संवर्तनीकाले कुशलानां **कर्मपथानामित्यर्थः**। वृत्तिस्तेषामेव धर्माणां यत् कारित्रम्। उद्भूता उत्कृष्टा वृत्तिरेषामित्युद्भूतवृत्तयः, तद्भावः, तस्मात्। एतदुक्तं भवति—तेषां कुशलानां प्रकर्षेणात्मलाभात् तदुत्पत्त्यानुगुण्येन आत्मलाभात् तदुपदेशमन्तरेणान्यतः पूर्वध्यानवासनायां सत्यां ध्यानोत्पत्तिरिति ॥ ३८ ॥

**इम ईदृशा धर्माणां प्रकारा** इति। सास्रवानास्रवाणां धर्माणां धातुभूम्यालम्बनाकारादिप्रकारा यथायोगमित्यर्थः।

---

१. का० पुस्तके नास्ति। २. धर्मतया—का०।

३. कृत्स्नानां—का०।

४. ईदृशानां—का०।

**सद्धर्मो द्विविधः शास्तुरागमाधिगमात्मकः।**

तत्रागमः सूत्रविनयाभिधर्माः, अधिगमो बोधिपक्ष्याः—इत्येष द्विविधः सद्धर्मः।

**धातारस्तस्य वक्तारः प्रतिपत्तार एव च ॥ ३९ ॥**

आगमस्य हि धारयितारो वक्तारः। अधिगमस्य प्रतिपत्तारः। अतो यावदेते स्थास्यन्ति तावत् सद्धर्म इति वेदितव्यम्।

तेषां तु वर्षसहस्रमवस्थानमाहुः।

अधिगमस्यैवम्। आगमस्य तु भूयांसं कालमित्यपरे॥ ३८ ॥

योऽयमिह शास्त्रेऽभिधर्म उक्तः किमेष एव शास्त्राऽभिधर्मो देशितः ?

**काश्मीरवैभाषिकनीतिसिद्धः,**
**प्रायो मयाऽयं कथितोऽभिधर्मः।**

---

"**धातारस्तस्य वक्तारः प्रतिपत्तार एव च**" इति। तस्य आगमाधिगमात्मकस्य सद्धर्मस्य यथासंख्यं आगमस्य ये वक्तारः तेऽस्य धातारः, अधिगमस्य च ये प्रतिपत्तारः तेऽस्य धातार इति।

**अधिगमस्यैवमिति। वर्षसहस्रमवस्थानमिति। आगमस्य तु भूयांसं कालमिति।** वर्षसहस्राद्ध्वमपीत्यर्थः। एष एव पक्षो युक्त इति पश्यामः॥ ३९ ॥

**योऽयमिति।** योऽयमिह **अभिधर्मकोशलक्षणे अभिधर्म उक्तः। किमेष एव शास्त्राऽभि**[1]**धर्मो** ज्ञानप्रस्थानादिलक्षणो **देशितः। अत इदमुच्यते**—

"**काश्मीरवैभाषिकनीतिसिद्धः**" इति विस्तरः। **कश्मीरे भवाः** काश्मीराः। विभाषया दीव्यन्ति वैभाषिकाः इति व्याख्यातमेतत्। **सन्ति** काश्मीरा न वैभाषिकाः, ये विनयविदादयः सौत्रान्तिकाः **भदन्तादयः।** सन्ति वैभाषिका न काश्मीराः, ये **बहिर्देशका वैभाषिकाः—इत्युभय-** विशेषणम्। **तेषां नीत्या यः सिद्धोऽभिधर्मः,** स **प्रायेणेह मया** देशितः। अर्थादुक्तं भवति—अन्यनीतिसिद्धोऽपि देशित इति।

---

१. शास्त्रो०—जा०।

**यद् दुर्गृहीतं तदिहास्मदागः,**
**सद्धर्मनीतौ मुनयः प्रमाणम् ॥ ४० ॥**

प्रायेण हि **काश्मीरवैभाषिकाणां** [1]नीत्या सिद्ध एषोऽस्माभिरभिधर्म आख्यातः। यदत्रास्माभिर्दुर्गृहीतं सोऽस्माकमपराधः। सद्धर्मनीतौ तु पुनर्बुद्धा एव प्रमाणम्, बुद्धपुत्राश्च ॥ ४० ॥

**निमीलिते शास्तरि लोकचक्षुषि**
**क्षयं गते साक्षिजने च भूयसा।**
**अदृष्टतत्त्वैर्निरवग्रहैः कृतं**
**कुतार्किकैः शासनमेतदाकुलम् ॥ ४१ ॥**

**गते हि[2] शान्तिं परमां स्वयम्भुवि**
**स्वयम्भुवः शासनधूर्धरेषु च।**

---

**यद् दुर्गृहीतमिति।** काश्मीरवैभाषिकनयेन, अन्यनयेन वा। **तदिह** वचने **अस्मदागः** अस्मदपराधः। किं कारणम्? इत्याह—**सद्धर्मनीतौ मुनयः प्रमाणमिति।** सद्धर्मस्य आगमाधिगमलक्षणस्य नीतौ वर्णने मुनयो **बुद्धा भगवन्तो** बुद्धपुत्राश्च **आर्यशारद्वतीपुत्रादयः प्रमाणम्।** सर्वाकारसर्वधर्मावबोधे आप्ता इत्यर्थः ॥ ४० ॥

**"निमीलिते शास्तरि लोकचक्षुषि"** इति। परिनिर्वृते भगवति लोकस्य चक्षुर्भूते मार्गामार्गसन्दर्शके। अनेनान्धभूततां लोकस्य दर्शयति।

**"क्षयं गते साक्षिजने च भूयसा"** इति। साक्षाद् दृष्टरि। साक्षी मार्गामार्गज्ञो भगवान् इति योऽधिगततत्त्वो भगवतः साक्षिजन सहायभूतः, तस्मिन् परिनिर्वाणे क्षीणे।

अविद्यान्धेन **अदृष्टतत्त्वैर्निरवग्रहैः** निरङ्कुशैः कुतर्कापन्नैर्भवद्भिर्भगवतः **शासनं** ग्रन्थतश्चार्थतश्च **आकुलं कृतम्** ॥ ४१ ॥

**"गते हि शान्तिं परमां स्वयम्भुवि"** इत्यादि। पूर्वश्लोकोक्तस्यार्थस्य हेतुरूपोऽयं द्वितीयः श्लोक उपन्यस्यते। बुद्ध-बुद्धपुत्रेषु हि **परिनिर्वृतेषु अनाथे**

---

१. नीत्यादि—का०। २. गतेऽथ—का०।

**जगत्यनाथे गणघातिभिर्मलैः,**
**निरङ्कुशं[1] स्वैरमिहाद्य चर्यते ॥ ४२ ॥**

**एवं[2] कण्ठगतप्राणं विदित्वा शासनं मुनेः ।**
**बलकालं मलानां च न प्रमाद्यं मुमुक्षुभिः ॥ ४३ ॥**

इति अभिधर्मकोशभाष्ये
समापत्तिनिर्देशो नामाष्टमकोशस्थानम्

---

**जगति** शासनान्तर्धानहेतुभिः । दृष्ट्यादिभिर्**मलैः** दोषैर्**निरंकुशं स्वैरं** यथेच्छमिह लोके **अद्य** सम्प्रति **चर्यते** । भावसाधनमेतत् ॥ ४२ ॥

ततश्च **एवं कण्ठगतं प्राणम्** । कण्ठगतप्राणमिवेत्यर्थः । तद् **विदित्वा । बलकालं च मलानां** दोषाणां विदित्वा **न प्रमाद्यं मुमुक्षुभिरिति** । भावसाधनमिति ॥ ४३ ॥

स्फुटार्थायां नामाभिधर्मकोशव्याख्यायां
समापत्तिनिर्देशो नामाष्टमं कोशस्थानम्

---

१. निङ्कुशैः—का० ।
२. इति—का० ।

❀ ॐ नमो बुद्धाय ❀

# पुद्गलविनिश्चयः

किं खल्वतोऽन्यत्र मोक्षो नास्ति ? नास्ति। किं कारणम् ? वितथात्मदृष्टिनिविष्टत्वात्। नहि ते स्कन्धसन्तान एवात्मप्रज्ञप्तिं व्यवस्यन्ति। किं तर्हि ? द्रव्यान्तरमेवात्मानं परिकल्पयन्ति, आत्मग्राहप्रभवाश्च क्लेशा' इति।

कथं पुनरिदं गम्यते—स्कन्धसन्तान एवेदमात्माभिधानं वर्तते, नान्यस्मिन्नभिधेये इति ?

---

## पुद्गलविनिश्चयः

**किं खल्वतोऽन्यत्र मोक्षो नास्तीति**। 'न प्रमाद्यं मुमुक्षुभिः' ( अभि० ८.४३ ) इति वचनात् अयमेव मोक्षोपायः, नास्त्यतोऽन्यो मोक्षोपायः। तदत्र मोक्तुकामैः प्रमादो न कर्तव्य इत्यर्थादुक्तमाचार्येण। चोदकः पृच्छति—**किं खल्वत** इति विस्तरः। अत्रोच्यते—**नास्तीति**। किं कारणम् ? इत्याह—**वितथात्मदृष्टिनिविष्टत्वादिति**। वितथायामात्मदृष्टौ निविष्टाः कुतीर्थ्याः वितथात्मदृष्टिनिविष्टाः, तद्भावः, तस्मात्। नास्त्यन्यत्र मोक्ष इति।

**स्तोत्रकारेणाप्येषोऽर्थ** उक्तः—

"साहङ्कारे मनसि न शमं याति जन्मप्रबन्धो<br>नाहङ्कारश्चलति हृदयादात्मदृष्टौ च सत्याम्।<br>अन्यः शास्ता जगति च यतो नास्ति नैरात्म्यवादी<br>नान्यस्तस्मादुपशमविधेस्त्वन्मतादस्ति मार्गः" ॥ इति।

साधनं चात्र—"नास्ति कपिलोलूकादीनां मोक्षः, वितथात्मदृष्टिनिविष्टत्वात्, अदृष्टतत्त्वपुरुषवत्।" **आत्मग्राहप्रभवाश्च क्लेशा इति** यथोक्तम्। यानि वा पुनरिहैकत्यानां श्रमणब्राह्मणानां पृथग्लोके दृष्टिगतानि सत्कायदृष्टिमूलकानि तानीति विस्तरः। आत्मदृष्टौ च सत्यामात्मस्नेहादयः क्लेशाः प्रवर्तन्ते। **स्कन्धसन्तान एवेदमात्माभिधानमिति**। आत्मेत्यभिधानम्। आत्मप्रज्ञप्तिरित्यर्थः। **नान्यस्मिन्नभिधेय इति**। स्कन्ध-

**प्रत्यक्षानुमानाभावात् ।**

**ये हि धर्माः सन्ति तेषां प्रत्यक्षमुपलब्धिर्भवत्यसत्यन्तराये । तद्यथा—षण्णां विषयाणां मनसश्च ।**

**अनुमानं च । तद्यथा पञ्चानामिन्द्रियाणाम् । तत्रेदमनुमानम्—सति कारणे कारणान्तरस्याभावे कार्यस्याभावो दृष्टो भावे च पुनर्भवः, तद्यथा—अङ्कुरस्य । सत्येव वाभासप्राप्ते[2] विषये मनस्कारे च कारणे विषयग्रहणस्याभावो दृष्टः पुनश्च भावः, अन्धवधिरादीनामनन्धावधिरादीनां च ।**

सन्तानव्यतिरिक्ते कल्पित इत्यर्थः । कस्मादेवम् ? इत्याह—**प्रत्यक्षानुमानाभावादिति** । प्रत्यक्षस्यानुमानस्य चाभावान्न तस्यास्तित्वमित्यभिप्रायः । आगमस्यानुमानान्तर्भावात् अपृथग्वचनम् ।

**तेषां प्रत्यक्षमुपलब्धिरिति** । प्रत्यक्षमित्युपलब्धिविशेषणम् । प्रत्यक्षं तदुपलब्धिः, प्रत्यक्षत उपलब्धिरित्यर्थः । अथवा प्रत्यक्षं प्रमाणमुपलब्धिः, उपलभ्यतेऽनयेत्युपलब्धिः । **असत्यन्तराय** इति । असत्युपलब्धिविघ्नेऽतिसन्निकर्षातिविप्रकर्षादिके । तेषाम् । **षण्णां विषयाणामिति** । रूप-शब्द-गन्ध-रस-स्प्रष्टव्यायतनानां धर्मायतनस्य च वेदनादिलक्षणस्य योगिविषयस्य चागमविकल्पातीतस्येति । **मनसश्च** । किम् ? प्रत्यक्षम् उपलब्धिः । समनन्तरनिरुद्धं हि मनोऽनन्तरोपपन्नेन मनोविज्ञानेन विज्ञायते । रक्तं वा द्विष्टं वा सुखसम्प्रयुक्तं वा दुःखसम्प्रयुक्तं वा—इत्येवमादि स्वसंवेद्यतयेत्य**परे** । तदेतद् द्विविधं प्रत्यक्षम्—१. ग्राह्यगतम्, २. ग्राहकगतं चेति ।

**अनुमानं चेति** विस्तरः । यत्र प्रत्यक्षस्याप्रवृत्तिः तत्रानुमानतस्तदुपलब्धिः । **तद्यथा पञ्चानामिन्द्रियाणामिति** । चक्षुरिन्द्रियादीनाम् । **सति कारणे** क्षेत्रोदकादिके । **कारणान्तरस्य** बीजलक्षणस्या**भावे कार्यस्या**ङ्कुराख्यस्या**भावो दृष्टः** । **भावे च** तस्य बीजस्य **पुनर्भवो**ऽङ्कुरस्य **दृष्टः । तद्यथाऽङ्कुरस्येति** दृष्टान्तोपन्यासः । एवं दृष्टान्तमुपन्यस्य दार्ष्टान्तिकमुपदर्शयन्नाह—**सत्येव वाभासप्राप्त** इति विस्तरः । विद्यमान एव सम्मुखीप्राप्ते **विषये** रूपादिके **मनस्कारे च** तज्जे **कारणे** । **विषयग्रहणस्य** चक्षुरादिविज्ञानस्या**भावो दृष्टः, पुनश्च भावः** । केषामिति ? यथासङ्ख्यं दर्शयति—**अन्धवधिरादीनामभावः । अनन्धावधिरादीनां च भाव** इति । आदि-शब्देनोपहतानुपहतघ्राणेन्द्रिया-

१. सर्वक्लेशाः—का० ।

२. चा०—का० ।

**अतस्तत्रापि कारणान्तरस्याभावो भावश्च निश्चीयते । यच्च तत्कारणान्तरं तदिन्द्रियमित्येतदनुमानम् । न चैवमात्मतोऽस्तीति[1] नास्त्यात्मा ।**

**यत्तर्हि वात्सीपुत्रीयाः पुद्गलं सन्तमिच्छन्ति ।**

**विचार्यं तावदेतत्—किं ते द्रव्यत इच्छन्ति, आहोस्वित् प्रज्ञप्तितः ?**

---

दीनां ग्रहणम् । **अतस्तत्रापि कारणान्तरस्य** कस्यापि अनिर्भिन्नरूपस्याभावो **भावश्च** यथासङ्ख्यमेव **निश्चीयते** । किं पुनस्तद् ? इत्याह—**यच्च तत्कारणान्तरमपेक्ष्यते तदिन्द्रियम्** । चक्षुरादिकमित्यभिप्रायः । साधनं चात्र—"कारणान्तरसहितः स्वकार्यजनकः पञ्चविज्ञानकायजनकसम्मतो विषयमनस्कारलक्षणो भावः; कदाचिदेव स्वकार्यनिर्वर्तकत्वात् । कदाचिदेव स्वकार्यनिर्वर्तकं तत् कारणान्तरसहितस्वकार्यजनकम्, तद्यथा—अङ्कुरजनकं क्षेत्रोदकम् । बीजलक्षणकारणान्तरसहितस्वकार्यान्तरजनकं हि क्षेत्रोदकं कदाचिदेव स्वकार्यनिर्वर्तकम्, बीजसद्भावावस्थायामङ्कुरनिर्वर्तकत्वात् । बीजासद्भावावस्थायां च स्वस्वकार्याजनकत्वात् । तथा च स विषयमनस्कारलक्षणो भावः । स हि अनन्धावधिराद्यवस्थायां तस्य पञ्चविज्ञानकायलक्षणस्य स्वकार्यस्य जनको भवति, अन्धवधिराद्यवस्थायां चाजनकः । तस्मादसौ कारणान्तरसहितः स्वकार्यजनकः" इति । **तदिन्द्रियमिति** । कथं तदिन्द्रियमिति परिच्छिद्यते; कारणान्तरमस्तीत्येतावदेव हि परिच्छिद्यते, न तु तदिन्द्रियमिति ? सिद्धमेवैतत् । महर्षिप्रणिधिज्ञानपरिच्छिन्नत्वादस्त्येव चक्षुरिन्द्रियमिन्द्रियं चक्षुर्विज्ञानादिकारणमिति । सर्वेषामविवादाच्च । **न चैवमात्मतोऽस्तीति नास्त्यात्मेति** निगमयति । उक्तं ह्येवमर्थतः साधनम्—'नास्त्यात्मा, प्रमाणेनानुपलभ्यमानत्वात्, अत्यन्ताभाववद्' इति । अस्त्यनुमानम्, अतोऽसिद्धो हेतुरिति चेत् ? न; यदि हि तदस्ति, तदुच्यताम् ! न वाङ्मात्रेण असिद्धो हेतुः—इति प्रत्यवस्थातव्यमिति ।

**यत्तर्हि वात्सीपुत्रीया** इति विस्तरः । वात्सीपुत्रीया **आर्यसाम्मतीयाः** । अनेन वितथात्मदृष्टिनिविष्टलक्षणो हेतुरनैकान्तिक इति दर्शयति । न हि वात्सीपुत्रीयाणां मोक्षो नेष्यते, बौद्धत्वात् । अथ वा परपक्षविरोधसापक्षालोऽयं पक्षो नास्त्यात्मेत्यनेन दर्शयति । स्वपक्षो वात्सीपुत्रीयो निकाय इति ।

**विचार्यं तावदेतदिति** । तन्निकाये प्रज्ञप्तिसत्पुद्गल इत्यदोष एष इत्यभिप्रायः ।

---

१. आत्मनो०—का० ।

किं वेदं[1] द्रव्यत इति ? किं वा प्रज्ञप्तितः ? रूपादिवत् भावान्तरं चेत्, द्रव्यतः । क्षीरादिवत् समुदायश्चेत्, प्रज्ञप्तितः ।

किं चातः ? यदि तावत् द्रव्यतः ? भिन्नस्वभावत्वात्[2] स्कन्धेभ्योऽन्यो वक्तव्यः, इतरेतरस्कन्धवत् । कारणं चास्य वक्तव्यम् । असंस्कृतो वा । अतस्तीर्थिकदृष्टिप्रसङ्गो निष्प्रयोजनत्वं च । अथ प्रज्ञप्तितः ? वयमप्येवं ब्रूमः ।

नैव हि द्रव्यतोऽस्ति, नापि प्रज्ञप्तितः । किं तर्हि ? आध्यात्मिकानुपात्तान् वर्त्तमानान् स्कन्धानुपादाय पुद्गलः प्रज्ञप्यते । तदिदमन्धवचनमनुन्मीलितार्थं न बुध्यामहे ।

---

**किं वेदं द्रव्यत** इति **किं वा प्रज्ञप्तित** इति चोदित **आचार्य** आह—**रूपादिवद् भावान्तरं चेद् द्रव्यतः ।** यदि यथा रूपादिः शब्दादेर्भावान्तरमभिप्रोयते, द्रव्यतः पुद्गल इत्युपगतो भवति । भिन्नलक्षणं रूपं शब्दात् इत्यादि । **क्षीरादिवत् समुदायश्चेत् प्रज्ञप्तितः ।** यथा क्षीर-गृह-सेनादिकम् रूपरसगन्धस्प्रष्टव्येभ्यः, तृणकाष्ठेषिकादिभ्यः, हस्त्यश्वरथादिभ्यश्च न भावान्तरमिष्यते, किं तर्हि ? तेषामेव समुदायमात्रमित्येवं चेत्; प्रज्ञप्तितः पुद्गल इत्येवमुपगतो भवति । न हि रूपादिभ्यः, तृणादिभ्यः, हस्त्यश्वादिभ्यो वा क्षीर-गृह-सेनेति वा कश्चिद् भावोऽस्ति ।

**किं चातः ।** कश्चातो दोष इत्यभिप्रायः ।

**यदि तावद् द्रव्यत** इति पक्ष आश्रीयते, स पुद्गलो **भिन्नस्वभावत्वात्** भिन्नस्वलक्षणत्वात् **स्कन्धेभ्योऽन्यो वक्तव्यः ।** न स्कन्धसमुदायमात्रः । **इतरेतरस्कन्धवत् ।** यथा रूपादिस्कन्धात् वेदनादिस्कन्धोऽन्यो भिन्नलक्षणत्वात्; एवं स्कन्धेभ्यः पुद्गल स्यात्; अरूपस्कन्धादिलक्षणत्वात् पुद्गलस्य । **कारणं चास्य वक्तव्यम्** । यदि संस्कृत इत्यभिप्रायः । **असंस्कृतो वा । अतस्तीर्थिकदृष्टिप्रसङ्गः** । अतोऽसंस्कृतत्वात् वात्सीपुत्रीयाणां तीर्थिकदृष्टिः प्रसज्यते । **निष्प्रयोजनत्वं चेति ।**

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् ।
चर्मोपमश्चेत् सोऽनित्यः, खतुल्यश्चेदसत् फलम् ।।

इत्यर्थः ।

**इदमन्धवचनमनुन्मीलितार्थमिति ।** अन्धमिवान्धम् । कस्मात् ?

---

१. वेदं—का० । २. संभिन्न०—का० ।

किमिदमुपादायेति ? यद्ययमर्थः—स्कन्धानालम्ब्येति[1]; तेष्वेव पुद्गलप्रज्ञप्तिः प्राप्नोति। यथा रूपादीनालम्ब्य तेष्वेव क्षीरप्रज्ञप्तिः। अथायमर्थः—स्कन्धान् प्रतीत्येति; स्कन्धानां पुद्गलप्रज्ञप्तिकारणत्वात् ? स एव दोषः; न स एवं प्रज्ञप्यते। कथं तर्हि ? यथेन्धनमुपादायाग्निः।

कथं चेन्धनमुपादायाग्निः प्रज्ञप्यते ? न हि विनेन्धनेनाग्निः प्रज्ञप्यते, न चान्य इन्धनादग्निः शक्यते प्रज्ञपयितुम्, नाप्यनन्यः। यदि ह्यन्यः स्याद्, अनुष्णमिन्धनं स्यात्। अथानन्यः स्यात्, दाह्यमेव दाहकं स्यात्।

एवं न च विना स्कन्धैः पुद्गलः प्रज्ञप्यते। न चान्यः स्कन्धेभ्यः शक्यते प्रतिज्ञातुम्; शाश्वतप्रसङ्गात्। नाप्यनन्यः; उच्छेदप्रसङ्गादिति।

अङ्ग तावद् ब्रूहि—किमिन्धनम्, कोऽग्निरिति ? ततो ज्ञास्यामः—कथमिन्धनमुपादायाग्निः प्रज्ञप्यत इति। किमत्र वक्तव्यम्! दाह्यमिन्धनम्, दाहकोऽग्निः। एतदेवात्र वक्तव्यम्—किं दाह्यम् ? को दाहक इति ? लोके हि तावदप्रदीप्तं काष्ठादिकमिन्धनमुच्यते, दाह्यं च। प्रदीप्तमग्निर्दाहकश्च। यच्च भास्वरं चोष्णं च, भृशं च, तेन हि तदिध्यते दह्यते च। सन्ततिविकारा-

यस्मादनुन्मीलितार्थम्। अव्यञ्जितार्थमित्यर्थः। **स्कन्धानालम्ब्येति**। गृहीत्वेत्यर्थः। **यथा रूपादीन् गृहीत्वा** अपेक्ष्य **क्षीरप्रज्ञप्तिः**। न रूपादिव्यतिरिक्तं क्षीरमस्तीति। **यदि तथा**। पुद्गल इति प्रज्ञप्तिः, असत्पुद्गल प्राप्नोतीत्यर्थः। **स्कन्धान् प्रतीत्येति**। यदि स्कन्धान् प्रतीत्य प्राप्य इति। **स एव दोषः**। तेष्वेव स्कन्धादिषु पुद्गलप्रज्ञप्तिः प्राप्नोतीत्यर्थः। अथ वा—पुद्गलप्रज्ञप्तेः स्कन्धाः प्रत्ययो न पुद्गलः। पुद्गलस्तु तथैव प्रज्ञप्तिसन्निति स एव दोषः।

**यथेन्धनमुपादायाग्निः**। प्रज्ञप्यत इति। द्रव्यसन् पुद्गलः। **नान्यो नानन्य** इति। स्वमुपादानमुपादाय प्रज्ञप्यमानत्वात्। यो हि भावो नान्यो नानन्य इति स्वमुपादाय प्रज्ञप्यमानः, स द्रव्यसन्; तद्यथा—अग्निः। इति **वात्सीपुत्रीयाभिप्रायः**। अत एव चाह—**यदि ह्यन्यः स्यादिति** विस्तरेण। लोकविरोधं स्वसिद्धान्तविरोधं वा दर्शयति।

**शाश्वतप्रसङ्गादिति**। असंस्कृतत्वात्। **उच्छेदप्रसङ्गादिति**। स्कन्धवत्।

**अप्रदीप्तं काष्ठादिकमिन्धनमिति** विस्तरः। अनेनासिद्धतां दृष्टान्तस्य दर्शयति। अन्यत्वमेव हि अग्नीन्धनयोरिष्यते। **तेन हि तदिध्यते दह्यते चेति**। तेन अग्निना। तदिन्धनम्। इध्यते दीप्यत इत्यर्थः। दह्यते

१. स्कन्धानां लक्ष्यते—का०।

पादानात्। तच्चोभयमष्टद्रव्यकं तच्चेन्धनं प्रतीत्याग्निरुत्पद्यते। यथा क्षीरं प्रतीत्य दधि, मधु प्रतीत्य शुक्तम्। तस्मादिन्धनमुपादायेत्युच्यते। अन्यश्च सः; तस्माद्भिन्नकालत्वात्।

यदि चैवं पुद्गलः स्कन्धान् प्रतीत्योत्पद्यते, स तेभ्योऽन्यश्चानित्यश्च प्राप्नोति। अथ पुनस्तत्रैव काष्ठादौ प्रदीप्ते यदौष्ण्यं तदग्निः, तत्सहजातानि त्रीणि भूतानीन्धनमिष्यन्ते। तयोरपि सिद्धमन्यत्वम्; लक्षणभेदात्।

उपादायार्थस्तु वक्तव्यः—कथं तदिन्धनमुपादाय सोऽग्निः प्रज्ञप्तः इति ? न हि तत्तस्य कारणम्, नापि तत् प्रज्ञप्तेः। अग्निरेव हि तत्प्रज्ञप्तेः कारणम्। यद्याश्रयार्थः; उपादायार्थः सहभावोऽर्थो[1] वा। स्कन्धा अप्येवं पुद्गलस्याश्रयसहभूताः प्राप्नुवन्तीति स्कन्धतः स्पष्टमन्यत्वं[2] प्रतिज्ञायते। तदभावे च पुद्गलाभावः प्राप्नोति। इन्धनाभाव इवाग्न्यभावः।

---

भस्मीक्रियते। **सन्ततिविकारापादानात्**। भस्मतापादानादित्यर्थः। इध्यते दह्यते चेति पर्यायावित्यपरे। **तच्चोभयमष्टद्रव्यकमिति**। इन्धनं चाग्निश्चैतदुभयमप्यष्टद्रव्यकम्—चत्वारि महाभूतानि चत्वारि चोपादायरूपाणि रूपम् यावत् स्प्रष्टव्यमिति; "कामेऽष्टद्रव्यकोऽशब्दः" (अभि० को० २.२३) इति सिद्धान्तात्।

**भिन्नकालत्वादिति**। पूर्वमिन्धनम्, पश्चादग्निः। भिन्नकालयोश्चान्यत्वं दृष्टं बीजाङ्कुरयोः। **अनित्यश्च प्राप्नोतीति**। उत्पत्तिमतो रूपादेरनित्यत्वदर्शनात्। **तत्रैव काष्ठादौ प्रदीप्त** इति। तदुभयलक्षणे समुदये। **तयोरपि सिद्धमन्यत्वम्, लक्षणभेदादिति**। तयोरपि अग्नीन्धनयोरेवंलक्षणयोः सिद्धमन्यत्वम्; लक्षणभेदात्। पृथिवीधात्वादीनां लक्षणान्यत्वात्। भिन्नलक्षणानां ह्यन्यत्वं दृष्टं रूप-वेदनादीनाम्।

**उपादायार्थस्तु वक्तव्य** इति। अनन्यत्वादित्यभिप्रायः। **न हि तत् तस्य कारणमिति**। न हि तदिन्धनं भूतत्रयलक्षणं तस्योष्णलक्षणस्याग्नेः कारणं युज्यते; सहजातत्वात्। सव्येतरगोविषाणवत्। **नापि तत्प्रज्ञप्तेरिति**। अग्नि-तत्प्रज्ञप्तेः। **यद्याश्रयार्थ इति**। इन्धनमुपादाय=इन्धनमाश्रित्येत्यर्थः। **सहभावोऽर्थो वेति**। सहोत्पादार्थः। इन्धनं सहभूत्वेनागृह्येत्यर्थः। **आश्रयसहभूताः प्राप्नुवन्तीति**। आश्रयभूताः, सहभूताश्च प्राप्नुवन्तीत्यर्थः। **स्कन्धतः स्पष्टमन्यत्वं प्रतिज्ञायते वात्सीपुत्रीयैः**। **तदभाव** इति। स्कन्धाभावे।

---

१. सहभावार्थो—का०। २. विस्पष्टम०—का०।

यत्तु तदुक्तम्—यदीन्धनादन्योऽग्निः स्याद्, अनुष्णमिन्धनं स्यादिति ! किमिदमुष्णं नाम ? यदि तावदौष्ण्यम्, अनुष्णमेवेन्धनम्; अन्यभूतस्वभावत्वात् । अथ यदौष्ण्यवत्, अन्यदपि तदुष्णस्वभावादग्नेरुष्णं सिध्यति; औष्ण्ययोगादिति । नास्त्यन्यत्वे दोषः । अथ पुनः सर्वमेव तत् प्रदीप्तं काष्ठादिकमिन्धनं चाग्निश्चेष्यते ।

तदुपादायार्थश्च वक्तव्यः । स्कन्धा एव च पुद्गला इत्यनन्यत्वमनिवार्यं प्राप्नोति । तस्मान्न सिध्यत्येतत्—यथेन्धनमुपादायाग्निः प्रज्ञप्यते एवं स्कन्धानुपादाय पुद्गल इति । यदि चायमन्यः स्कन्धेभ्यो न वक्तव्यः, "पञ्चविधं ज्ञेयमतीतानागतं प्रत्युपन्नमसंस्कृतमवक्तव्यम्" ( ) इति न वक्तव्यं प्राप्नोति । नैव हि तदतीतादिभ्यः पञ्चमं नापञ्चमं वक्तव्यम् ।

यदा च पुद्गलः प्रज्ञप्यते, किं तावत् स्कन्धानुपलभ्य प्रज्ञप्यते ? आहोस्वित् पुद्गलम् ? यदि तावत् स्कन्धान्, तेष्वेव पुद्गलप्रज्ञप्तिः प्राप्नोति; पुद्गलस्यानुपलम्भात् । अथ पुद्गलम् ? कथमस्य स्कन्धानुपादाय प्रज्ञप्तिर्भवति । पुद्गल एव हि तस्या उपादानं प्राप्नोति ।

अथ मतम्—सत्सु स्कन्धेषु पुद्गल उपलभ्यते, ततः स्कन्धानुपादायास्य प्रज्ञप्तिरुच्यत इति ? तदेवं रूपस्यापि चक्षुर्मनस्कारालोकेषु सत्सूपलम्भात् तान्युपादाय प्रज्ञप्तिर्वक्तव्या । रूपवच्च पुद्गलस्यान्यत्वं स्पष्टम् ।

इदं तावद् वक्तव्यम्—षण्णां विज्ञानानां कतमेन पुद्गलो विज्ञेयः ? षड्भिरपीत्युच्यते । कथं कृत्वा ? चक्षुर्विज्ञेयानि चेद्रूपाणि प्रतीत्य पुद्गलं

---

**अन्यभूतस्वभावत्वादिति** । पृथ्वीधात्वादिस्वभावत्वात् । **अन्यदपीति** । न केवलमौष्ण्यमुष्णम्, अन्यदपि तत्प्रदीप्ताग्निसम्बन्धं भूम्यादिकमुष्णं सिद्धयति । अतो यथा **तस्यान्यत्वे न दोषः**, तथास्यापीति । ततश्चावक्तव्य इति । तत्पक्षलोपः स्यात् । **काष्ठादिकमिति** । काष्ठतृणगोमयादिकम् ।

**अवक्तव्यमिति** । पुद्गलः । अनिर्भिन्नत्वान्नपुंसकलिङ्गता । 'किं ते जातम्' इति यथा । **न वक्तव्यं प्राप्नोतीति** । **पञ्चविधं ज्ञेयमिति** । कथं तर्हि वक्तव्यम् ? इत्याह—**नैव हि तदतीतादिभ्यः पञ्चमं नापञ्चमं वक्तव्यमिति** ।

**रूपस्यापीति** । विस्तरः । रूपस्यापि प्रज्ञप्तिर्वक्तव्या । **चक्षुरादिषु सत्सु तस्योपलम्भात् तानि** चक्षुरादीन्**युपादाय रूपं प्रज्ञप्यत** इति ।

**प्रतिविभावयतीति** । उपलक्षयति । तदुपादानत्वात् । **न तु वक्तव्यो**

प्रतिविभावयति[1], चक्षुर्विज्ञेयः पुद्गलो वक्तव्यः, नो तु वक्तव्यः—रूपाणि वा नो वा। एवं यावत्, मनोविज्ञेयान् चेद्धर्मान् प्रतीत्य पुद्गलं प्रतिविभावयति, मनोविज्ञेयः पुद्गलो वक्तव्यः, नो तु वक्तव्यः—धर्मा वा नो वा।

एवं तर्हि क्षीरादिभिः समानः प्राप्नोति। चक्षुर्विज्ञेयानि चेद्रूपाणि प्रतीत्य क्षीरं प्रतिविभावयत्युदकं[2] च[3], चक्षुर्विज्ञेयं क्षीरमुदकं चेति वक्तव्यम्, नो तु वक्तव्यम्—रूपाणि वा नो वा। एवं घ्राणजिह्वाकायविज्ञेयं वक्तव्यम्, नो तु वक्तव्यम्—स्प्रष्टव्यानि वा नो वा। मा भूत् क्षीरोदकयोश्चतुष्ट्वप्रसङ्ग इति?

अतो यथा रूपादीन्येव क्षीरमुदकं वा प्रज्ञप्यते समस्तानि, एवं स्कन्धाः पुद्गल इति सिद्धम्।

यच्चोच्यते—चक्षुर्विज्ञेयानि रूपाणि प्रतीत्य पुद्गलं प्रतिविभावयतीति, कोऽस्य वाक्यस्यार्थः? किं तावद्रूपाणि पुद्गलोपलब्धेः कारणं भवतीति? आहोस्विद् रूपाण्युपलभमानः पुद्गलमुपलभत इति? यदि रूपाणि

---

**रूपाणि वा नो वेति।** अतल्लक्षणत्वात्, अवक्तव्यत्वाच्च। **एवं यावद् धर्मो वा नो वेति।**

**क्षीरं प्रतिविभावयत्युदकं चेति।** उदाहरणद्वयम्। तदेवं वक्तव्यम्—चक्षुर्विज्ञेयानि चेद् रूपाणि प्रतीत्य क्षीरं प्रतिभावयति, चक्षुर्विज्ञेयं क्षीरं वक्तव्यम्। नो तु वक्तव्यम्—रूपाणि वा नो वेति सर्वम्। तथैतदपि वक्तव्यम्—चक्षुर्विज्ञेयानि चेद् रूपाणि प्रतीत्योदकं प्रतिविभावयति, चक्षुर्विज्ञेयमुदकं वक्तव्यम्। नो तु वक्तव्यम्—रूपाणि वा नो वेति सर्वम्। **मा भूत् क्षीरोदकयोः चतुष्ट्वप्रसङ्ग इति।** रूपाणीति यद्युच्येत, चतुःप्रकारं क्षीरम्, उदकं वा प्राप्नोतीत्यर्थः। शब्द आगन्तुकत्वान्नात्राधिकृतः। **अतो यथा रूपादीन्येव समस्तानि** समुदितानि **क्षीरमिति उदकमिति वा प्रज्ञप्यते तथा स्कन्धा एव समस्ताः पुद्गल** इति प्रज्ञप्यन्त इति सिद्धम्।

**रूपाणि पुद्गलोपलब्धेः कारणमिति। रूपाण्युपलभमानः पुद्गलमुपलभत** इति। कोऽनयोः पक्षयोर्विशेषः? पूर्वस्मिन् पक्षे रूपाणां कारणत्वमधिक्रियते; द्वितीये न तु कारणत्वम्, किं तर्हि? रूपाण्युपादाय पुद्गलोपलब्धिरिति। **तत्र रूपाणां यदि कारणत्वमिष्यते, स च** पुद्गलः **तेभ्यो**

---

१. प्रतिभावयति—का०। २. विभावयत्यु०—का०। ३. वा—का०।

पुद्गलोपलब्धेः कारणं भवन्ति स च तेभ्योऽन्यो न वक्तव्यः। इदं तर्हि रूपमप्यालोकचक्षुर्मनस्कारेभ्योऽन्यन्न वक्तव्यम्; तेषां तदुपलब्धिकारणत्वात्।

अथ रूपाण्युपलभमानः पुद्गलमुपलभते, किं तयैवोपलब्ध्योपलभते ? ...ोस्विदन्यया ? यदि तयैव, रूपादभिन्नस्वभावः पुद्गलः प्राप्नोति, रूप एव वा तत्प्रज्ञप्तिः। इदं च रूपमयं पुद्गल इति[1] कथमिदं परिच्छिद्यते[2] ! —ैवं न परिच्छिद्यते, कथमिदं प्रतिज्ञायते—रूपमप्यस्ति पुद्गलोऽप्यस्तीति ! उपलब्धिवशेन हि तस्यास्तित्वं परिज्ञायते[3]। एवं यावद्धर्मेभ्यो वक्तव्यम्।

अथान्यया ? भिन्नकालोपलम्भादन्यो रूपात् प्राप्नोति। नीलादिव

---

रूपेभ्योऽन्यो न वक्तव्य इति। इदं तर्हि वः प्रसज्यते रूपमपीति विस्तरः। यथा रूपाणि पुद्लोपब्धेः कारणं भवन्ति स च तेभ्योऽन्यो न वक्तव्यः। **आलोकचक्षुर्मनसिकारा** अपि रूपोपलब्धेः कारणं भवन्ति, **तदपि रूपं तेभ्य** आलोकादिभ्यो **ऽन्यन्न वक्तव्यं** भवद्भिः; **तेषां तदुपलब्धिकारणत्वात्।** तेषामालोकादीनां रूपोपलब्धिकारणत्वात्। **रूपादभिन्नस्वभावः पुद्गलः प्राप्नोति**; तयैवैकयोपलब्ध्योपलभ्यमानत्वात्, रूपान्तरवत्।

**रूप एव वा तत्प्रज्ञप्तिः।** पुद्गलप्रज्ञप्तिः प्राप्नोतीति वर्तते। कुतः ? तत एव हेतोः। **इदं च रूपमिति** विस्तरः। उपलब्धेरेकत्वे रूपपुद्गलयोः परिच्छेदो न प्राप्नोतीति। **अथैवं न परिच्छिद्यते** 'इदं रूपम्' 'अयं पुद्गलः' इति। **कथमुभयं प्रतिज्ञायते**। रूपमेव हि प्रतिज्ञातव्यं स्यात्, तदुपलब्धिसद्भावात्। **एवं यावद् धर्मेभ्यो वक्तव्यमिति**। कथम् ? यच्चोच्यते—श्रोत्रविज्ञेयान् शब्दान् प्रतीत्य पुद्गलं प्रतिविभावयतीति, कोऽस्य वाक्यस्यार्थः ? किं तावच्छब्दाः पुद्गलोपलब्धेः कारणं भवन्ति, आहोस्विच्छब्दानुपलभमानः पुद्गलमुपलभते इति ? यदि तावच्छब्दाः पुद्गलोपलब्धेः कारणं भवन्ति, स च तेभ्योऽन्यो न वक्तव्यः। एवं तर्हि शब्दोऽप्यालोकश्रोत्रमनस्कारेभ्योऽन्यो न वक्तव्यः; तेषां तदुपलब्धिकारणत्वात्। अथ शब्दानुपलभमानः पुद्गलमुपलभते, किं तयैवोपलब्ध्योपलभते, आहोस्विदन्यया ? यदि तयैव, शब्दादभिन्नस्वभावः पुद्गलः प्राप्नोति। शब्दा एव वा तत्प्रज्ञप्तिः। 'अयं च शब्दः', 'अयं च पुद्गलः' इति कथमिदं परिच्छिद्यते ! अथैवं न परिच्छिद्यते. कथमिदं परिज्ञायते—शब्दोऽप्यस्ति, पुद्गलोऽप्यस्ति। उपलब्धिवशेन हि तस्यास्तित्वं परिज्ञायते। अनया दिशा यावद् धर्मेभ्यो योजयितव्यम्।

---

१. का० पुस्तके नास्ति।　　२. गम्यते—का०।

३. प्रतिज्ञायते—का०।

पीतम्, क्षणादिव च क्षणान्तरम् । एवं यावद्धर्मेभ्यो वक्तव्यम् ।

अथ रूपपुद्गलवत् तदुपलब्ध्योरप्यन्यानन्यत्वमवक्तव्यम् । तेन तर्हि संस्कृतमप्यवक्तव्यं[1] भवतीति सिद्धान्तभेदः ।

यदि चायमस्ति—नो तु वक्तव्यो रूपाणि वा नो वा, किं तर्हि एतद्[2] भगवतोक्तम्—"रूपमनात्मा इति[3]. यावद्विज्ञानमनात्मा" इति !

येन चायं चक्षुर्विज्ञानेन पुद्गल उपलभ्यते, किं तद्रूपाणि प्रतीत्योत्पद्यते ? आहोस्वित् पुद्गलम् ? उभयं वा ?

यदि रूपाणि प्रतीत्योत्पद्यते ? नोत्सहिष्यते पुद्गलं विज्ञातुं शब्दादि-

---

**नीलादिव पीत**मिति । यदा परिच्छेदेन नीलमुपलभ्यते, न तदा पीतमुपलभ्यते, पश्चात्तूपलभ्यत इति । अन्ययोपलब्ध्योपलभ्यते । तच्च 'नीलात् पीतमन्यत्' इति प्रतीतम् । तथा च पुद्गलोऽन्ययोपलब्ध्योपलभ्यत इति । रूपादन्यः प्राप्नोति । **एवं क्षणादपि क्षणान्तर**मन्यदित्युदाहार्यम् । **एवं यावद् धर्मेभ्यो वक्तव्यम्** इति । कथम् ? अथान्यया भिन्नकालोपलम्भात् अन्यः शब्दः प्राप्नोति, यथा भेरीशब्दान्मृदङ्गशब्दः । क्षणादिव च क्षणान्तरम् । यथा पूर्वमुक्तम्—नीलादिव पीतम्, क्षणादिव क्षणान्तरम् इति । भिन्नलक्षणे विषये अभिन्नलक्षणे च भिन्नकालोपलब्ध्या अन्यत्वं दर्शितमेव । अथान्ययेति विस्तरेण यावद् धर्मेभ्यो योज्यम् ।

**अथ रूपपुद्गलवदिति**[4] विस्तरः । यथा रूपपुद्गलयोरन्यानन्यत्वमवक्तव्यम्, **एवं तदुपलब्ध्योरपि अन्यानन्यत्वमवक्तव्य**मित्येवं यदि ब्रूयात् **तेन तर्हि संस्कृतमप्यवक्तव्यं भवति** । तदुपलब्धिलक्षणं संस्कृतमप्येतदवक्तव्यमिति । **सिद्धान्तभेदः** । योऽयं सिद्धान्तः—'पुद्गल एवावक्तव्यः' इति, अयं भिद्यते । संस्कृतमप्यवक्तव्यमिति कृत्वा ।

**यदि चायमिति विस्तरः** । यद्येवं रूपाणि नो वेति **न वक्तव्यः, किं तर्हि एतद् भगवतोक्तम्—रूपमनात्मेति । यावद् विज्ञानमनात्मे**ति । एवं हि ब्रुवतो वक्तव्य एव पुद्गलः, नावक्तव्य इति दर्शितं भवति ।

**शब्दादिवदिति** । न रूपविज्ञानेनोपलभ्यते पुद्गलः; तदनालम्बन-

---

१. संस्कृतेऽप्य०—का० ।

२. ३. का० पुस्तके नास्ति ।

४. रूपपुद्गलयोरिति—जा० ।

वत्। यमेव हि विषयं चक्षुर्विज्ञानेषु प्रतीत्योत्पद्यते विज्ञानं स एव तस्यालम्बनप्रत्ययः।

अथ पुद्गलं प्रतीत्योत्पद्यते? उभयं वा? इदमुत्सूत्रम्। **सूत्रे** हि निर्धारितम्—द्वयं प्रतीत्य विज्ञानस्योत्पादो भवतीति। "तथा चक्षुर्भिक्षो हेतू रूपाणि प्रत्ययश्चक्षुर्विज्ञानस्योत्पादाय। तत् कस्य हेतोः? यत्किञ्चित् भिक्षो चक्षुर्विज्ञानं सर्वं तच्चक्षुः प्रतीत्य रूपाणि च" इति। अनित्यश्च पुद्गल एवं प्राप्नोति; "ये हि हेतवो ये प्रत्यया विज्ञानस्योत्पादाय, तेऽप्यनित्याः" इति **सूत्रे** वचनात्।

अथ पुद्गलो न तस्यालम्बनम्, न तर्हि तेन विज्ञेयः।

यदि च पुद्गलः षड्विज्ञानविज्ञेयः प्रतिज्ञायते, स श्रोत्रविज्ञानविज्ञेयत्वाद् रूपादन्यः प्राप्नोति, शब्दवत्। चक्षुर्विज्ञानविज्ञेयत्वाच्छब्दादन्यः प्राप्नोति रूपवत्। एवमन्येभ्योऽपि योज्यम्। इदं च **सूत्रपदं** बाधितं भवति—"यानीमानि ब्राह्मण पञ्चेन्द्रियाणि नानागोचराणि नानाविषयाणि स्वकं[1] स्वकं[1] गोचरविषयं प्रत्यनुभवन्ति। नान्यदन्यस्य गोचरविषयं प्रत्यनुभवति। तद्यथा चक्षुरिन्द्रियं श्रोत्रेन्द्रियं घ्राणेन्द्रियं जिह्वेन्द्रियं कायेन्द्रियम्। मन एषां पञ्चानामिन्द्रियाणां गोचरविषयं प्रत्यनुभवति,

---

प्रत्ययभूतत्वात्, शब्दादिवत्। आदिशब्देन गन्धवत्, रसवत्—इत्यादि योज्यम्। एवं श्रोत्रादिविज्ञानानुपलभ्यमानत्वमस्य वक्तव्यम्। एषा हि दिक्। अनेन चोपन्यासेन धर्मिविशेषविपर्ययप्रतिज्ञादोष उद्भाव्यत इत्यवगन्तव्यम्।

**द्वयं प्रतीत्येति**। द्वयं प्रतीत्य, न तु त्रयं प्रतीत्येति। **अत इदमुत्सूत्रमिति**।

**चक्षुर्भिक्षो हेतुरिति** विस्तरः। हेतुः आसन्नः प्रत्ययः। विप्रकृष्टस्तु प्रत्यय एव। 'जनको हेतुः, प्रत्ययस्त्वालम्बनमात्रम्' इत्यपरे। 'पर्यायावेतौ' इत्यपरे।

रूपादन्यः पुद्गलः इति पक्षप्रसङ्गः। **श्रोत्रविज्ञानविज्ञेयत्वाच्छब्दवत्**। तथा शब्दादन्यः पुद्गल इति पक्षप्रसङ्गः; **चक्षुर्विज्ञानविज्ञेयत्वात् रूपवत्। इत्येवमन्येभ्योऽपि योज्यमिति**। रूपशब्दाभ्यामन्यः पुद्गल इति पक्षप्रसङ्गः; घ्राणविज्ञेयत्वात्, गन्धवत्—इत्येषा दिग् योजनं प्रतीति। **स्वकं स्वकं गोचरविषयं प्रत्यनुभवन्तीति** वचनात् पुद्गलेन प्रत्यनु-

---

१-१. स्वं स्वं—का०।

मनश्चैषां प्रतिशरणम्" इति ।

न वा पुद्गलो विषयः । न चेद् विषयो न तर्हि विज्ञेयः । यद्येवम्, मनइन्द्रियस्याप्यव्यभिचारः प्राप्नोति । "षडिमानीन्द्रियाणि नानागोचराणि नानाविषयाणि स्वकं स्वकं गोचरविषयमाकाङ्क्षन्ते" इत्युक्तं **षट्प्राणकोपमे ?**

न तत्रेन्द्रियमेवेन्द्रियं कृत्वोक्तम् । पञ्चानां दर्शनाद्याकाङ्क्षणासम्भवात्, तद्विज्ञानानां च । अतस्तदाधिपत्याध्याहृतं[1] तु[1] मनोविज्ञानमिन्द्रियम्[2]

---

भवन्तीति उक्तं भवति । **मनश्चैषां प्रतिशरणमिति** । अनुषङ्गेनेदमुक्तम्, नेदमुदाहरणम् । तथापि तु मनश्चैषामिन्द्रियाणां प्रतिशरणमिति तदपेक्षाणीन्द्रियाणि विज्ञानोत्पत्तौ कारणं भवन्तीत्यर्थः ।

**न वा पुद्गलो विषय** इति । यदि सूत्रं प्रमाणीक्रियते । ततः किम् ? इत्याह—**न चेद् विषय** इति । यदि न कस्यचिद् विज्ञानस्य विषयः । न तर्हि विज्ञेयः । ततश्च 'पञ्चविधं ज्ञेयम्' इति स्वसिद्धान्तो बाध्यते ।

**यद्येवम्** । सूत्रे वचनात् नान्यदन्यस्य गोचरविषयं प्रत्यनुभवतीति पञ्चानां चक्षुरादीनां प्रमाणीक्रियते स्वविषयाव्यभिचारः । स्वविषयाव्यभिचारे च न चक्षुर्विज्ञानादिभिर्विज्ञेयः पुद्गलः । तदेवं सति **मनइन्द्रियस्याप्यव्यभिचारः प्राप्नोति । षडिमानीन्द्रियाणि नानागोचराणीति** विस्तरेण सूत्रे वचनात् । कुक्कुर-पक्षि-शृगाल-शिशुमार-सर्प-मर्कटाः षट् प्राणकाः केनचिद् बद्धा मध्ये ग्रन्थिं कृत्वोत्सृष्टाः । ते **स्वकं स्वकं गोचरविषयमाकाङ्क्षन्ते** । ग्रामाकाश-श्मशानोदकान्त-बल्मीक-वनाकाङ्क्षणात् । एवमेव षडिमानीन्द्रियाणि स्वकं स्वकं गोचरविषयमाकाङ्क्षन्ते । इत्येवमुपमात्र क्रियते । अथ सत्यपि सूत्रवचने मनइन्द्रियस्य व्यभिचारः, एवं चक्षुरादीनामपीन्द्रियाणां व्यभिचारः, व्यभिचारे च चक्षुर्विज्ञानादिभिर्विज्ञेयः पुद्गलो भविष्यतीति ।

अत्र ब्रूमः— **न तत्रेति** विस्तरः । तत्र षट्प्राणकोपमे सूत्रे **नेन्द्रियमेव** चक्षुरादिकम् **इन्द्रियं कृत्वोक्तम्** । किं कारणम् ? चक्षुरादीनां **पञ्चानाम्** इन्द्रियाणां **दर्शनाद्याकाङ्क्षणासम्भवात्** । यस्मादेषां दर्शनश्रवणाद्याकाङ्क्षणं न सम्भवति; रूपस्वभावत्वात् । **तद्विज्ञानानां च** । चक्षुरादिविज्ञानानां च दर्शनादद्याकाङ्क्षाऽसम्भवात् । कस्मादेषां दर्शनश्रवणादद्या-

---

१—१. ०त्याध्याकृतमत्र—का० ।

२. ०विज्ञानेन्द्रि०—का० ।

इत्युक्तम्[1] । यच्च तत्केवलं मनआधिपत्याध्याकृतं मनोविज्ञानम्, नैव तदन्येषां विषयमाकाङ्क्षति । अतो नास्त्येष दोषः ।

उक्तं च भगवता—"सर्वाभिज्ञेयं वो भिक्षवो धर्मपर्यायं देशयिष्यामि" इत्युक्त्वा "चक्षुरभिज्ञेयं रूपाणि चक्षुर्विज्ञानं चक्षुःसंस्पर्शो यदपि तच्चक्षुःसंस्पर्शप्रत्ययमध्यात्ममुत्पद्यते वेदितं सुखं दुःखं वा अदुःखासुखं वा, यावत् मनःसंस्पर्शप्रत्ययम् । अयमुच्यते—सर्वाभिज्ञेयपरिज्ञेयो धर्मपर्यायः" इति ।

अत एतावदेवाभिज्ञेयं प्रतिज्ञेयं चेत्यवधार्यते, न पुद्गलः । तस्माद् विज्ञेयोऽप्यसौ न भवति; प्रज्ञाविज्ञानयोः समानविषयत्वात् ।

चक्षुषा च पुद्गलं पश्याम इति पश्यन्तः पौद्गलिकाः—'अनात्मना आत्मानं पश्यामः' इति दृष्टिस्थानमापन्ना भवन्ति ।

सूत्रे च भगवता नीतमेतत् । "स्कन्धेष्वेव पुद्गलाख्या" इति मानुष्यकसूत्रम् । "चक्षुःप्रतीत्य रूपाणि चोत्पद्यते चक्षुर्विज्ञानं त्रयाणां

---

काङ्क्षणं न सम्भवति ? अविकल्पकत्वात् । तदाधिपत्याध्याहृतं तु मनोविज्ञानमिन्द्रियमित्युक्तम् । इन्द्रियमिवेति कृत्वा । कथं ज्ञायते—तदाधिपत्याध्याहृतं तदिति ? यदि हि चक्षुरादिद्वारेण चक्षुर्विज्ञानादि नोत्पन्नं स्यात्, कथमन्यथा विकल्पं मनोविज्ञानमुत्पन्नं स्यात् ! इत्यतो ज्ञायते—तदाधिपत्याध्याहृतमिति । तत् मनोविज्ञानं चक्षुरादीन्द्रियभूतं स्वकं स्वकं गोचरविषयं रूपादिकमाकाङ्क्षतीति । यच्च तत् केवलमिति विस्तरः । नैव तदन्येषां चक्षुरादीनां विषयमाकाङ्क्षति यन्मनआधिपत्याध्याहृतम् । किं तर्हि ? स्वविषयमेव धर्मायतनमेवालम्बत इति । अतो नास्त्येष दोषः । 'यद्येवम्, मनइन्द्रियस्याप्यव्यभिचारः प्राप्नोति' इति यदुक्तमिति ।

न पुद्गलः । किम् ? अभिज्ञेयः, परिज्ञेयश्चेति । तस्माद् विज्ञेयोऽप्यसौ पुद्गलो न भवति । ननु चासावर्थादभिज्ञेयः परिज्ञेयश्च न भवतीति उक्तः । न त्वर्थो विज्ञेय इति ? अत आह—प्रज्ञाविज्ञानयोः समानविषयत्वादिति । विज्ञेयमपि हि चक्षुरादिकं भवति, न केवलमभिज्ञेयं परिज्ञेयं चेति ।

अनात्मनेति । चक्षुषा । चक्षुर्विज्ञानेनेत्यर्थः ।

---

१. कृत्वोक्तम्—का० ।

सन्निपातः स्पर्शः स्पर्शसहजाता वेदना संज्ञा चेतना इतीमे चत्वारो रूपिणः स्कन्धाश्चक्षुरिन्द्रियं च रूपम्—एतावन्मनुष्यत्वमुच्यते। अत्रेयं संज्ञा—सत्त्वो नरो मनुष्यो मानवश्च पोषः पुरुषः पुद्गलो जीवो जन्तुरिति। अत्रेयं प्रतिज्ञा—अहं चक्षुषा रूपाणि पश्यामीति। अत्रायं व्यवहारः—इत्यपि स आयुष्मानेवंनामा एवंजन्य[1] एवंगोत्र एवमाहार एवसुखदुःखप्रतिसंवेदी एवंदीर्घायुरेवंचिरस्थितिक एवमायुःपर्यन्त इति। इति हि भिक्षवः संज्ञामात्रकमेवतद्, व्यवहारमात्रकमेवैतत। सर्वे इमे धर्मा अनित्याः संस्कृताश्चेतिताः प्रतीत्यसमुत्पन्नाः" इति।

नीतार्थं च सूत्रं प्रतिशरणमुक्तं भगवता। तस्मान्न पुनः परीक्ष्यते।

तथा चोक्तम्—"सर्वमस्तीति ब्राह्मण यावदेव द्वादशायतनानि" इति। यदि चायं पुद्गलो नायतनम्, न सोऽस्तीति सिद्धम्। अथायतनम्, न तर्ह्यवक्तव्यः। तेषामपि चैवं पश्यतः "यावता भिक्षो चक्षुर्यावता रूपाणि, विस्तरेण, एतावता भिक्षो तथागतः सर्वं च प्रज्ञापयति च" इति। **बिम्बिसारसूत्रे** चोक्तम्—"आत्मा आत्मेति भिक्षवो बालोऽश्रुतवान् पृथग्जनः प्रज्ञप्तिमनुपतितः। न त्वत्रात्मा वा आत्मीयं वा दुःखमिदमुत्पद्यमानमुत्पद्यते" इति विस्तरः।

**शैलयाप्यर्हन्त्या** मारमारभ्योक्तम्—

"मन्यसे किं नु सत्त्वेति मारदृष्टिगतं हि ते।
शून्यः संस्कारपुञ्जोऽयं नहि सत्त्वोऽत्र विद्यते॥
यथैव ह्यङ्गसम्भारात् संज्ञा रथ इति स्मृता।
एवं स्कन्धानुपादाय संवृत्या सत्त्व उच्यते"॥ इति।

**क्षुद्रकेऽपि चागमे दरिद्रब्राह्मणम**धिकृत्योक्तम्—

"शृणु त्वं स्वादरे धर्मं सर्वग्रन्थिप्रमोचनम्।
यथा संक्लिश्यते चित्तं यथा चित्तं विशुध्यति॥

---

**नीतार्थं च सूत्रं प्रतिशरणमुक्त**मिति। "चत्वारीमानि भिक्षवः प्रतिशरणानि। कतमानि चत्वारि? १. धर्मः प्रतिशरणम्, न पुद्गलः। २. अर्थः प्रतिशरणम्, न पुद्गलः। ३ नीतार्थसूत्रं प्रतिशरणम्, न नेयार्थम्। ४. ज्ञानं प्रतिशरणम्, न विज्ञानम्" (   ) इति।

**प्रज्ञप्तिमनुपतित**[2] इति। यत्रैव प्रज्ञप्तिः कृता--आत्मेति व्यवहारार्थम् तामेव। आत्मेत्यभिनिविष्ट इत्यर्थः।

---

१. एवंजात्य—का०। २. ०मनूपपतित—जा०।

आत्मैव ह्यात्मनो नास्ति विपरीतेन कल्प्यते ।
नास्तीह सत्त्व आत्मा च[1] धर्मास्त्वेते सहेतुकाः ॥
द्वादशैव भवाङ्गानि स्कन्धायतनधातवः ।
विचिन्त्य सर्वाण्येतानि पुद्गलो नोपलभ्यते ॥
शून्यमध्यात्मकं पश्य शून्यं पश्य बहिर्गतम् ।
न विद्यते[2] सोऽपि कश्चिद् यो भावयति शून्यताम्" ॥ इति ।

तथोक्तम्—"पञ्चादीनवा आत्मोपलम्भे—१. आत्मदृष्टिर्भवति यावज्जीवदृष्टिः[3], २. निर्विशेषो भवति तीर्थिकैः सार्धम्, ३. उन्मार्गप्रतिपन्नो भवति, ४. शून्यतायामस्य चित्तं न प्रस्कन्दति न प्रसीदति न सन्तिष्ठते नाधिमुच्यते[4], ५. आर्यधर्मा अस्य न व्यवदायन्ते" इति ।

न वैत एवं ग्रन्थं प्रमाणं कुर्वन्ति । किं कारणम् ? 'नास्माकमयं निकाये पठ्यते' इति । किं पुनस्तेषां निकाय एव प्रमाणम् ? आहोस्विद् बुद्धवचनम् ? यदि निकाय एव प्रमाणम्, न तर्हि तेषां बुद्धः शास्ता । न च ते शाक्यपुत्रीया भवन्ति । अथ बुद्धवचनं प्रमाणम्, अयं ग्रन्थः कस्मान्न प्रमाणम् ? नहि किलैतद् बुद्धवचनमिति । किं कारणम् ? 'नास्माकं निकाये पठ्यते' इति । अयमन्यायो वर्तते । कोऽत्रान्यायः ? यो

---

**नास्तीह सत्त्व आत्मा चेति** । इदमिहोदाहरणम् ।

**पुद्गलो नोपलभ्यत** इति । एतच्च ।

**न विद्यते सोऽपि कश्चिदिति** । इदं वाप्युदाहरणम् । **योऽप्यपि नास्ति यः शून्यतामभ्यस्यतीति** ।

**आत्मदृष्टिर्भवति, यावज्जीवदृष्टिरिति** प्रथम आदीनवो **निर्विशेषो भवति** । **तीर्थिकैरिति** द्वितीयः । **उन्मार्गप्रतिपन्नो भवतीति** तृतीयः । **शून्यतायामस्य चित्तं न प्रस्कन्दति** यावत् **नाधिमुच्यत** इति चतुर्थः । **आर्यधर्मा अस्य न व्यवदायन्त** इति पञ्चमः ।

**न तर्हि तेषां बुद्धः शास्तेति** । बुद्धवचनमेषां न प्रमाणमित्यभिप्रायात् ।

**न किलैतद् बुद्धवचनमिति** । केनाप्यध्यारोपितान्येतानि सूत्रा-

---

१. वा—का० । २. लभ्यते—का० ।
३. सत्त्वदृष्टिः—का० । ४. न विमुच्यते—का० ।

हि ग्रन्थः सर्वेषु निकायान्तरेष्वाम्नायते, न च सूत्रं धर्मतां वा बाधते, सोऽस्माभिरपाठान्न बुद्धवचनमिति वचनं केवलं साहसमात्रम् ।

किञ्च—इदमपि तेषां सूत्रं नास्ति "सर्वधर्मा अनात्मानः" इति !

स्यात् मतम्—नैव हि पुद्गलो धर्म उच्यते, नाप्यन्यो धर्मादिति । एवं तर्हि न मनोविज्ञेयः सिध्यति । 'द्वयं प्रतीत्य विज्ञानस्योत्पादः' इत्यवधारणात् । इह चैवं विकल्प्यते "अनात्मन्यात्मेति विपर्यासः, न त्वात्मनि । किं च पुनः ? "नात्मा स्कन्धायतनधातवः" । यत्तावदुक्तं प्राक्—"नो तु वक्तव्यं रूपाणि वा नो वा" इति, तत्तावदपोढम्[1] ।

उक्तं च सूत्रान्तरे—"ये केचिद् भिक्षवः श्रमणा वा ब्राह्मणा वा आत्मेति समनुपश्यन्तः समनुपश्यन्ति, सर्वे त इमानेव पञ्चोपादानस्कन्धान्" इति । तस्मात् सर्व एवानात्मन्यात्मग्राहः । तथोक्तम्—"ये केचिदनेकविधं पूर्वनिवासं समनुस्मरन्तः समनुस्मार्षुः, समनुस्मरन्ति, समनुस्मरिष्यन्ति वा, पुनः सर्वे त इमानेव पञ्चोपादानस्कन्धान्" इति ।

यद्येवमिदम्, कस्मादाह—"रूपवानहमभूवमतीते[2] अध्वनि" इति ।

---

णीत्यभिप्रायः । **सर्वनिकायान्तरेष्विति** । ताम्रपर्णीयनिकायादिषु । **न च सूत्रं बाधते** । न च सूत्रान्तरं बाधते । न च सूत्रान्तरं विरोधयति । **न धर्मतां बाधते** इति । प्रतीत्यसमुत्पादधर्मताम् ।

**सर्वधर्मा अनात्मान** इति । न चैत आत्मस्वभावाः । न चैतेषु आत्मा विद्यत इति अनात्मानः सर्वधर्माः ।

**द्वयं प्रतीत्येति** । चक्षु रूपाणि यावन् मनोधर्मानिति । न पुद्गलो न धर्म इति ।

**नात्मा स्कन्धायतनधातव** इति वचने यत् कश्चित् पूर्वं नो तु वक्तव्यं रूपाणि वा नो वेत्युक्तम्, **अपोढम्** अपास्तं तद् भवति; आत्मनोऽन्यत्वात् ।

**तस्मात् सर्व एवानात्मन्यात्मग्राह** इति । नातोऽन्योऽस्तीति दर्शयति ।

**यद्येवमिति** विस्तरः । यदीमानेव पञ्चोपादानस्कन्धान्

---

१. ०दपोचम्—का० ।

२. बभूवातीते—आ० ।

एवमनेकविधं ये समनुस्मरन्तीति प्रदर्शयति। यदि तु रूपवन्तं पुद्गलं **पश्येत्, सत्कायदृष्टिप्रसङ्गः** स्यात्। अपाठ एव चात्र[1] शरणं स्यात्।

तस्मात् प्रज्ञप्तिसत्पुद्गलो राशिधारादिवत्[2]।

यद्येवम्, तर्हि न बुद्धः सर्वज्ञः प्राप्नोति, न हि किञ्चिच्चित्तमस्ति चैत्ता वा यत् सर्वं जानीयाद्; क्षणिकत्वात्। पुद्गलस्तु जानीयात्? एवं तर्हि चित्तविनाशे पुद्गलस्याविनाशाभ्युपगमात् नित्यत्वमस्याभ्युपेतं भवति? नैव च वयं सर्वत्र ज्ञानसम्मुखीभावाद् बुद्धं सर्वज्ञमाचक्ष्महे। किं तर्हि? सामर्थ्यात्। याह्यसौ बुद्धाख्या सन्ततिस्तस्या इदमस्ति सामर्थ्यं यदाभोगमात्रेणाविपरीतं ज्ञानमुत्पद्यते यत्रेष्टम्। आह चात्र—

"सन्तानेन समर्थत्वाद् यथाग्निः सर्वभुङ्मतः।
तथा सर्वविदेष्टव्योऽसकृत्सर्वस्य वेदनात्"॥

कथमिदं गम्यते? अतीतादिवचनात्।

"ये चाभ्यतीताः सम्बुद्धा ये च बुद्धा अनागताः।
यश्च एतर्हि सम्बुद्धो बहूनां शोकनाशनः"॥ इति॥

---

समनुस्मरन्तः समन्वस्मार्षुः, समनुस्मरन्ति, समनुस्मरिष्यन्ति वा न पुद्गलम्। **कस्मादाह रूपवानहं बभूवातीतेऽध्वनीति**। अहमिति वचनात् पुद्गल उच्यत इति दर्शयति। एवमनेकविधं ये समनुस्मरन्ति त एवं समनुस्मरन्तीति वाक्याध्याहारः। **अपाठ एव चात्र शरणं स्यादिति**। अहमिति पाठे हि सति सत्कायदृष्टिपरिग्रहप्रसङ्गः स्यादित्यर्थः। विंशतिकोटिका हि सत्कायदृष्टिः पठ्यते—१. रूपमात्मेति समनुपश्यति, २. रूपवन्तमात्मानम्, ३. आत्मीयं रूपम्, ४. रूपे आत्मेति। एवं यावद् विज्ञानं वक्तव्यम्।

**राशिधारादिवच्च**। राशिवत्, धारावच्च। आदिशब्देन पानकादिग्रहणम्। एकस्मिन् क्षणे बहूनां **राशिः**। बहुषु क्षणेषु समवहितानां **धारा**। राशिदृष्टान्तेन बहुषु धर्मेषु पुद्गलप्रज्ञप्तिं दर्शयति। धारादृष्टान्तेन बहुत्वे सति रूपवेदनादीनां स्कन्धानां प्रवाहे पुद्गलप्रज्ञप्तिं दर्शयति।

**कथमिद गम्यत** इति। बुद्धाख्यायाः सन्ततेरिदं सामर्थ्यम् यद् आभोगमात्रेणाविपरीतं ज्ञानमुत्पद्यते यत्रेष्टम्, न पुनः पुद्गलस्येति। उच्यते—**अतीतादिवचनात्। ये चाभ्यतीता** इति। विस्तरेणोक्त उपसंहारः। तस्मात् स्कन्धसन्तान एव बुद्धाख्या, न पुद्गल इति।

---

१. त्वत्र—का०।　　२. ०धारावत्—का०।

स्कन्धा एव च त्रैयध्विका इष्यन्ते न पुद्गला युष्माभिः। यदि स्कन्धा एव पुद्गलाः, कस्मादिदमाह—"भारं च वो भिक्षवो देशयिष्यामि, भारादानं च, भारनिक्षेपणं च, भारहारं च" (   ) इति? कस्मादिदं न वक्तव्यं स्यात्? न हि भार एव भारहारो युक्तः। किं कारणम्? नह्येवं दृश्यत इति। अवक्तव्योऽपि न युक्तः। किं कारणम्? न ह्येवं दृश्यते। भारादानस्यापि स्कन्धासंग्रहप्रसङ्गाच्च। इत्यर्थमेव च[1] भारहारं निर्दिदेश भगवान्। "योऽसावायुष्मानेवन्नामा यावदेवंचिरस्थितिक एवमायुःपर्यन्तः" स एष यथा विज्ञायेत। मान्यथा विज्ञायि—नित्यो वा, अवक्तव्यो वेति। स्कन्धा एव च स्कन्धानामुपघाताय संवर्तन्ते पूर्वका उत्तरेषामिति भारं च

---

**भारं च वो भिक्षवो देशयिष्यामीति** विस्तरः। "भारं च वो भिक्षवो देशयिष्यामि भारादानं च भारनिक्षेपणं च भारहारं च। तच्छृणुत, साधु च सुष्ठु च मनसिकुरुत, भाषिष्ये। भारः कतमः? पञ्चोपादानस्कन्धाः। भारादानं कतमत्? तृष्णा पौनर्भविकी, नन्दी-रागसहगता तत्रतत्राभिनन्दिनी। भारनिक्षेपणं कतमत्? यदस्या एव तृष्णायाः पौनर्भविक्या नन्दी-रागसहगताया तत्रतत्राभिनन्दिन्याः अशेषप्रहाणम्, प्रतिनिःसर्गः, व्यन्तीभावः, क्षयः, विरागः, निरोधः, व्युपशमः, अस्तङ्गमः। भारहारः कतमः? पुद्गल इति स्याद् वचनीयम्। योऽसावायुष्मान् एवंनामा एवंजन्य एवंगोत्रः एवमाहार एवंसुखदुःखप्रतिसंवेदी एवंदीर्घायुः एवंचिरस्थितिकः एवमायुःपर्यन्तः" (   ) इति। भारं हरतीति भारहारः पुद्गल इत्यभिप्रायः। अत्रेदमुदाहरणम्[2]। अत एवाह—**नहि भार एव भारहार इति**।

**भारादानस्यापि** यथोक्तलक्षणस्य **स्कन्धासंग्रहप्रसंगाच्च**। पुद्गलवत् अस्कन्धसंग्रहप्रसङ्गः। न चैवमिष्यते। तस्माद् भारादानवान् न स्कन्धेभ्योऽर्थान्तरभूतः पुद्गलः। **इत्यर्थमेव चेति** विस्तरेण सर्वमुक्त्वा वक्तव्यं **मान्यथेति**। यदि द्रव्यसन् स्यात् पुद्गलः, "भारहारः कतमः? पुद्गल इति स्याद् वचनीयम्" इत्येतावदेवोक्तं स्यात् तत्र सूत्रे। परेण स न विभक्तव्यः स्यात्—'योऽसावायुष्मान्' इति विस्तरेण यावत् 'आयुःपर्यन्तः' इति। प्रज्ञप्तिसत्पुद्गलप्रतिपत्त्यर्थं ह्येतत् परेण विशेषणमित्यभिप्रायः। स एव तु प्रज्ञप्तिसन् कुतो विज्ञायते! **माऽन्यथा विज्ञायि नित्यो वाऽवक्तव्यो वा द्रव्यसत्पुद्गल** इति। **स्कन्धानामिति** विस्तरः। तत्र **ये उपघाताय संवर्तन्ते** दुःखहेतवः स्कन्धाः **ते भार**[3] **इति कृत्वोक्ताः**।

---

१. का० पुस्तके नास्ति। २. छेदमुदाहरणम्—जा०। ३. माव—जा०।

भारहारं च कृत्वोक्ताः । उपघातार्थो हि भार इति ।

अस्त्येव पुद्गलः; यस्मादुक्तम् —"नास्ति सत्त्व उपपादुक इति मिथ्यादृष्टिः" । कश्चैवमाह—नास्ति सत्त्व उपपादुक इति । सत्त्वस्तु यथाऽस्ति तथा विभक्तो भगवतेति ब्रूमो मानुष्यकसूत्रे । यस्माद् यः परत्रोपगामुकमन्तराख्यस्कन्धसन्तानापवादं करोति, तस्यैषा मिथ्यादृष्टिः—'नास्ति सत्त्व उपपादुकः' इति; स्कन्धानामुपपादुकत्वात् ।

अथैषा मिथ्यादृष्टिः पुद्गलापवादिका सती किम्प्रहातव्या भवेत् ? नह्येषा दर्शनभावनाप्रहातव्या युज्यते; पुद्गलस्य सत्येष्वन्तर्भावात्[1] । "एकः पुद्गलो लोक उत्पद्यमान उत्पद्यते" इति वचनात् न स्कन्धा इति चेत् ? न; समुदायेऽप्येकोपचारादेकतिलैकतण्डुलवत्, एकराश्येकवचनवच्च ।

संस्कृत इति वा पुद्गलो वक्तव्यः, उत्पत्तिमत्त्वाभ्युपगमात् । न स एवमुत्पद्यते यथा स्कन्धाः, अपूर्वप्रादुर्भावात् । किं तर्हि ? स्कन्धान्तरोपा-

---

उत्तरे ये पीड्यन्ते ते भारहार इति कृत्वोक्ता इति ।

**उपपादुकत्वादिति** । उपपादने साधुकारित्वादित्यर्थः । **पुद्गलस्य सत्येष्वनन्तर्भावादिति** । यस्माद् यथापरिकल्पितस्य पुद्गलस्य सत्येषु दुःखादिषु नान्तर्भावः[2] । नहि पुद्गलो दुःखम्, यावत् मार्ग इति । अतो न सत्यदर्शनप्रहातव्यैषा **पुद्गलापवादिका** मिथ्यादृष्टिः । या हि दृष्टिः यस्मिन् सत्ये विप्रतिपन्ना, तत्सत्यदर्शनात् तस्याः प्रहाणं भवेत् । तथा दुःख-समुदयसत्ययोः पुद्गलस्यानन्तर्भावात् **नापि भावनाप्रहातव्या** । भावनाप्रहातव्यो हि क्लेशो भावनाप्रहातव्यमेव वस्तु दुःखं समुदयं वाऽऽलम्बते—इत्येवं तस्याः भावनाप्रहातव्यत्वं युज्यते । न च पुद्गलस्तयोरन्तर्भूत इत्यतो भावनाप्रहातव्या सा न भवति । अथ वा न कदाचिदपि दृष्टिर्भावना प्रहातव्येति नासौ भावनाप्रहातव्या ।

**एकतिलैकतण्डुलवद् एकराश्येकवचनवच्चेति** । यथा अष्टद्रव्यकत्वेऽपि एकतिल एकतण्डुल इति चोच्यते, तथा एको राशिरेकवचनमिति । तावद् एकः पुद्गल इति ।

**उत्पत्तिमत्त्वाभ्युपगमादिति** । उत्पद्यत इति वचनात् उपत्तिमत्त्वमस्याभ्युपगतं भवति । ततश्च संस्कृत इति वक्तव्यो भवद्भिः ।

**स्कन्धान्तरोपादानादिति** । नास्य संस्कृतत्वमापद्यत इत्यभिप्रायः ।

---

१. सत्त्वेष्वन्त०—का० । २. नानन्तर्भावः—जा० ।

दानात् । यथा हि याज्ञिको जातः, वैयाकरणो जात इत्युच्यते; विद्योपादानात् । भिक्षुर्जातः, परिव्राजको जात इति; लिङ्गोपादानात् । वृद्धो जातः, व्याधितो जात इति; अवस्थान्तरोपादानादिति ? न; प्रतिक्षेपात् ।

**सूत्र एव हि प्रतिक्षिप्तं भगवता परमार्थशून्यतायाम्**—"इति हि भिक्षवोऽस्ति कर्म, अस्ति विपाकः, कारकस्तु नोपलभ्यते । य इमांश्च स्कन्धान्निक्षिपति, अन्यांश्च स्कन्धान् प्रतिसन्दधात्यन्यत्र धर्मसंकेतात्" (      ) इति ।

**फल्गुसूत्रे** चोक्तम्—"उपादत्त इति फल्गुना[1] न वदामि" इति । तस्मान्नास्ति स्कन्धानां कश्चिदुपादाता, नापि निक्षिप्ता ।

कं च तावद्भवान् याज्ञिकं यावद्व्याधितमधिमुच्यते दृष्टान्तं करोति ? पुद्गलं यदि ? सोऽसिद्धः । अथ चित्तचैत्ता. ? न; तेषां प्रतिक्षणमपूर्वोत्पत्तिरेव । अथ शरीरम् ? तस्यापि तथा ।

शरीरविद्यालिङ्गवच्च स्कन्धपुद्गलयोरन्यत्वमापद्यते । जीर्णं शरीरान्तरमेव व्याधितं च । प्रतिषिद्धो हि **सांख्येयः**[2] परिणामवादः । तस्मादपदृष्टान्ता[3] एते ।

---

**यथा हि याज्ञिको जात इति विद्योपादानादुच्यते** । न चासौ भूतार्थेन जातः । तद्वदिति सर्वं योज्यम् ।

**कारकस्तु नोपलभ्यत** इति विस्तरः । कर्मणः कारको नोपलभ्यते । कीदृशोऽसाविति ? आह—**य इमांश्च ऐहिकान् स्कन्धान् निक्षिपति** त्यजति । **अन्यांश्च पारत्रिकान् स्कन्धान् प्रतिसन्दधाति** उपसंगृह्णाति द्रव्यसन्नवस्थित इति । **अन्यत्र धर्मसंकेतादिति** । प्रतीत्यसमुत्पादलक्षणान्तेनाह—यदुत अस्मिन् सतीति ।

**उपादत्त इति फल्गुना न वदामीति** । अहं चेदेवं वदेयम्—उपादत्त इति, अत्र ते कल्पः स्यात् वचनाय—'को नु, भदन्त, उपादानमुपादत्ते' इति । तस्मान्नास्ति स्कन्धानां कश्चित् उपादाता, नापि निक्षिप्तेति ।

**तस्यापि तथेति** । प्रतिक्षणमपूर्वोत्पत्तिरेवेत्यर्थः । **यदि पुद्गलः सोऽसिद्ध** इत्येवमादिनोपन्यासेनासिद्धतां दृष्टान्तस्य दर्शयति ।

**शरीरविद्यालिङ्गवच्चेति** । विद्या च लिङ्गं च विद्यालिङ्गम्, शरीरं च विद्यालिङ्गं च शरीरविद्यालिङ्गम्, तयोरिव शरीरविद्यालिङ्गवत् ।

---

१ फल्गु—का० । २. सांख्यीयः—का० । ३. तस्माददृष्टान्ता—का० ।

यदि च स्कन्धानामपूर्वोत्पादो न पुद्गलस्येष्यते सोऽन्यश्च तेभ्यो नित्यश्च स्फुटं दीपितो भवति। पञ्च स्कन्धा एकः पुद्गल इति ब्रुवता कथमन्यत्वं नोच्यते। कथं तावद् भूतानि चत्वारि रूपं चैकं[1], न च भूतेभ्योऽन्यद्रूपम्? पाक्षिक एष दोषः। कतमस्मिन् पक्षे? भूतमात्रिकपक्षे। तथापि तु यथा भूतमात्रं रूपम्, एवं स्कन्धमात्रं पुद्गल इत्यभ्युपेतं भवति।

यदि स्कन्धमात्रं पुद्गलः, कस्माद् भगवता—'स जीवस्तच्छरीरमन्यो वा' इति न व्याकृतम्? प्रष्टुराशयापेक्षया। स हि जीवद्रव्यमेकमन्तर्व्यापार-पुरुषमधिकृत्य पृष्टवान्। स च कस्मिंश्चिन्नास्तीति कथमस्यान्यत्वमनन्यत्वं वा व्याक्रियताम्। कौर्मस्येव रोम्णोऽन्तः खरता मृदुता वा।

एष च ग्रन्थः पूर्वकैरेव निर्मोचितः। स्थविरो हि नागसेनः कलिङ्गेन

---

**स्कन्धपुद्गलयोरन्यत्वमापद्यते**। यथोपादेयाया विद्यया लिङ्गाच्च शरीरस्यान्यत्वम्, एवमुपादेयात् स्कन्धात् पुद्गलस्यान्यत्वम्, उपादातृत्वा दित्यभिप्रायः। जीर्णं तं शरीरान्तरमेव, व्याधितं चेति प्रतिक्षणमन्यत्व-मवस्थानादित्यभिप्रायात्। तत्र यदुक्तम्—जीर्णो जातः, व्याधितो जात इत्यसिद्धो दृष्टान्त इति दर्शयति। अथापि स्यात्—अवस्थितस्य शरीरस्या-वस्थान्तरनिवृत्ताववस्थान्तरप्रादुर्भाव इति? तच्च नाप्रतिषिद्धो हि **साङ्ख्येयः** परिणामवादः पूर्वस्मिन् कोशस्थाने। कथम्? स एव धर्मी न संविद्यते, यस्यावस्थितस्य धर्मान्तरविकल्पः परिकल्प्येत। तदेव चेदं तथेत्य-पूर्विका वाचो युक्तिरिति।

**भूतानि चत्वारि, रूपं चैकमिति**। "रूपं कतमत्? चत्वारि महाभूतानि" ( ) इत्यादि।

**पाक्षिक एष दोष** इति। एकस्मिं पक्षे अयं दोषवाद इत्यर्थः। **भूतमात्रिकपक्ष** इति। **स्थविरबुद्धदेवपक्षे**, नास्मत्पक्ष इत्यर्थः। **तथापि त्विति**। भूतमात्रिकपक्षेऽपि **भूतेभ्यो रूपं नान्यत्**। भूतमात्रिकपक्षेऽपि भूतेभ्यो रूपवत् **स्कन्धेभ्यो नान्यः पुद्गल** इत्युपगतं भवतीति स्वसिद्धान्तस्य परित्यागः[2] स्यादित्यभिप्रायः।

**कस्माद् भगवता स जीवः तच्छरीरम्, अन्यो वेति न व्याकृतमिति**। अयमेषामभिप्रायः—यदि स्कन्धेषु पुद्गलोपचारः, कस्माच्छरीरमेव जीव इति नोक्तमिति।

**पूर्वकैरेवेति**। स्थविरनागसेनादिभिः। **बहुबोल्लका इति**। बहुप्रलापा इति।

---

१. त्वेकं—का०। २. ०सिद्धान्तः०—जा०।

राज्ञोपसंक्रम्योक्तः—"पृच्छेयमहं भदन्तम्, बहुबोल्लकाश्च श्रमणा भवन्ति, यदि यदेव पृच्छेयं तदेव व्याकुर्याः" इति। पृच्छेत्युक्तः पृष्टवान्—"किं नु स जीवस्तच्छरीरम्, अन्यो जीवोऽन्यच्छरीरम्" इति? "अव्याकृतमेतत्" इत्यवोचत् स्थविरः। स आह—"ननु भदन्तः पूर्वमेव प्रतिज्ञां कारितः—नान्यद्व्याकर्तव्यमिति! किमिदमन्यदेवोक्तम्—अव्याकृतमेतदिति"। स्थविर आह—"अहमपि महाराजं पृच्छेयम्, बहुबोल्लकाश्च राजानो भवन्ति, यदि यदेव पृच्छेयं तदेव व्याकुर्याः" इति। पृच्छेत्युक्तः पृष्टवान्—"यस्तेऽन्तःपुरे आम्रवृक्षस्तस्य किमम्लानि फलानि, आहोस्वित् मधुराणि इति? 'नैव ममान्तःपुरे कश्चिदाम्रवृक्षोऽस्ति" इत्याह। "ननु मया पूर्वमेव महाराजः प्रतिज्ञां कारितः—नान्यद्व्याकर्तव्यमिति! किमिदमन्यदेवोक्तम्—आम्र एव नास्ति" इति? स आह—"कथमसतो वृक्षस्य फलानामम्लतां मधुरतां वा व्याकरोमि" इति। "एवमेव महाराज, स एव जीवो नास्ति, कुतोऽस्य शरीरादन्यतामनन्यतां वा व्याकरोमि" ( ) इति।

कस्मात् भगवताऽपि नोक्तम्—नास्त्येवेति? प्रष्टुराशयापेक्षया। स हि यस्यापि स्कन्धसन्तानस्य जीव इत्याख्या, तस्याप्यभावं प्रतीयादिति मिथ्यादृष्टि पातितः स्यात्; प्रतीत्यसमुत्पादस्याज्ञानात्। स च तद्देशनाया अक्षमः।

इतश्चैतदेवं निश्चीयते। यत् भगवतोक्तम्—"अस्त्यात्मेत्यानन्द! वत्ससगोत्राय परिव्राजकाय प्रश्नं पृष्टो व्याकुर्यां नन्वकल्पं स्याद्वचनाय—सर्वधर्मा अनात्मान इति। नास्त्यात्मेत्यानन्द वत्ससगोत्राय परिव्राजकाय प्रश्नं पृष्टो व्याकुर्याम्, ननु वत्ससगोत्रः परिव्राजकः पूर्वमेव संमूढो भूयस्या मात्रया सम्मोहमापद्येत—अभूत् मे आत्मा, स मे एतर्हि नास्तीति। अस्त्यात्मेत्यानन्द शाश्वताय परैति। नास्त्यात्मेत्यानन्दोच्छेदाय परैति" इति विस्तरः।

---

इतर आह[1]—यदि पुद्गलो नावक्तव्यः, कस्मान्नोक्तो नास्त्येवेति।

स च तद्देशनाया अक्षम इति। नैरात्म्यदेशनाया अयोग्य इत्यर्थः। पूर्वमेव सम्मूढा इति। सत्कायदृष्टिसहगतेन मोहेन। भूयस्या मात्रया सम्मोहमापद्येतेति। उच्छेददृष्टिसहगतं दृष्ट्यन्तरमुत्पादयेदित्यभिप्रायः। अत एवाह—अभून्मे आत्मा, स एतर्हि नास्तीति। आह चात्रेति। भदन्तकुमारलातः[2]—

1. इतराह—जा०। २. ०कुमारलाभ इत्यपि पाठः।

आह चात्र—

"दृष्टिदंष्ट्रावभेदं च भ्रंशं चापेक्ष्य कर्मणाम्।
देशयन्ति जिना धर्मं व्याघ्रीपोतापहारवत्॥
आत्मास्तित्वं ह्युपगतो भिन्नः स्याद् दृष्टिदंष्ट्रया।
भ्रंशं कुशलपोतस्य कुर्यादप्राप्य संवृतिम्"॥ ( ) इति।

पुनराह—

"असत्त्वाद्भगवान् जीवं तत्त्वान्यत्वेन नावदत्।
नास्तीत्यपि च नावोचन्मा भूत् प्राज्ञप्तिकोऽप्यसन्॥
यत्र हि स्कन्धसन्ताने शुभाशुभफलास्तिता।
जीवाख्या तत्र सा न स्यात् जीवनास्तित्वदेशनात्॥
प्रज्ञप्तिमात्रं स्कन्धेषु जीव इत्यपि नावदत्।
अभव्यः शून्यतां बोद्धुं तदानीं तादृशो जनः॥
तथा ह्यात्मास्ति नास्तीति पृष्टो वास्त्येव नावदत्।
आशयापेक्षाया प्रष्टुः सति त्वस्तीति नाह किम्"॥ ( )

---

**दृष्टिदंष्ट्रावभेदं चेति** विस्तरः। दृष्टिरेव दंष्ट्रा, तयावभेदम्। **अपेक्ष्य देशयन्ति** बुद्धा भगवन्तो **धर्मं** नैरात्म्यं तत्प्रतिपक्षेण। **भ्रंशं च कर्मणाम् अपेक्ष्य** कृतविपरिणाशमपेक्ष्य पुद्गलास्तित्वमिव दर्शयन्तोऽन्यथा देशयन्ति। **व्याघ्रीपोतापहारवत्** इति। यथा व्याघ्री नातिनिष्ठुरेण दन्तग्रहणेन स्वपोतमपहरति नयति—'मास्य दंष्ट्रया शरीरं क्षतं भूत्' इति। नाप्यतिशिथिलेन दन्तग्रहणेन तमपहरति—'मास्य भ्रंशपातोऽस्मिन् विषये भूत्' इति। युक्तेनैव ग्रहणेनापहरतीत्यर्थः। अपहरतीत्यपरे पठन्ति, स्थानान्तराद् अपहरति अपनयतीत्यर्थः।

तथाऽर्थदर्शने कारणं दर्शयन्नाह—**आत्मास्तित्वमिति** विस्तरः। आत्मास्तित्वं प्रतिपन्नश्चेत् कश्चित् **दृष्टिदंष्ट्रया** सत्कायदृष्टिलक्षणया **भिन्नः स** विनेयजनः **स्यात्**। **अप्राप्य संवृतिगतिम्**। धर्मसंकेतमजानानः **कुशलपोतस्य** कुशलकर्मणः व्याघ्रीपोतभूतस्य **भ्रंशं कुर्यात्**—'नास्ति कर्मणः फलम्' इति।

**प्राज्ञप्तिक** इति प्रज्ञप्तौ भवः प्राज्ञप्तिकः। संवृतिसन्नपि पुद्गलो नास्तीति कश्चिद् गृह्णीयादित्यतो **नास्तीति नावोचत्**।

**सति त्वस्तीति नाह किम्** इति। यदि भूतार्थेन पुद्गलोऽस्ति,

शाश्वतलोकादीनामप्यव्याकरणं प्रष्टुराशयापेक्षया। यदि हि तावदात्मा लोक इष्टः स्यात्, तस्याभावादयुक्तं चतुर्धा व्याकरणम्। अथ सर्व एव संसारो लोकः, तस्याप्ययुक्तम्। शाश्वते लोके न कस्यचित् परिनिर्वाणं प्राप्नुयात्। अशाश्वते सर्वेषामुच्छेदः प्राप्नुयात्। उभयथात्वे नियमत एकेषां परिनिर्वाणं प्राप्नुयात्, एकेषां न। अनुभयथात्वे नैव परिनिर्वाणं नापरिनिर्वाणं प्राप्नुयात्। अतो मार्गाधीनत्वात्, परिनिर्वाणस्य चतुर्धापि नियमो न व्याक्रियते निर्ग्रन्थश्रावकचटकवत्।

अत एवान्तवान् लोक इति चतुष्काव्याकरणम्। तुल्यार्थो ह्येष चतुष्कः। तथाहि **मुक्तिकः** परिव्राजक एवं चतुष्कं पृष्ट्वा पुनः पृष्टवान्—"किं नु सर्वो लोकोऽनेन मार्गेण निर्यास्यति[1], आहोस्विदेकदेशो लोकस्य" इति ? **स्थविर आनन्द** आह—"यमेव त्वं **मुक्तिक** तत्प्रथमतो भगवन्तं प्रश्नं पृष्टवान्, त्वमेवैतत्[2] पृच्छस्यनेन पर्यायेण" (      ) इति सर्वम्।

---

किमिति कृत्वा भगवान् 'अस्ति पुद्गलः' इति न ब्रवीति। नहि 'रूपमस्ति' इति वचनेन दोषो भवति; तस्यास्तित्वात्।

**निर्ग्रन्थश्रावकचाटकवदिति**। निर्ग्रन्थश्रावकेण चटकं जीवन्तं गृहीत्वा भगवान् पृष्टः—किमयं चटको जीवति न वेति। तस्यायमभिप्रायः—यदि श्रमणो गौतम आदिशेत्—'जीवति' इति, स तं निपीडनेन मारयित्वा दर्शयेत्। यदि पुनर्भगवान् एवमादिशेत्—'मृतः' इति, स तं जीवन्तमेव दर्शयेत्—'कथं नामायमज्ञः' इति लोको जानीयात् इति तस्याभिप्रायः। भगवता तु तस्याशयं विदित्वा न व्याकृतम्। त्वच्चित्तप्रतिबद्धमेवैतत्—'जीवति वा न वेति च' इत्येवाभिहितम्, तद्वदेतन्न व्याकृतमिति।

**तुल्यार्थो ह्येष चतुष्क** इति। 'शाश्वतो लोकः, अशाश्वतो लोकः' इत्यनेन चतुष्केन 'अन्तवान् लोकः अनन्तवान् लोकः' इत्ययं चतुष्कस्तुल्यार्थः। यद्येवम्, कथं चतुर्दशाव्याकृतवस्तूनि भवन्ति ? 'शाश्वतो लोकः' इत्येकचतुष्कः। 'अन्तवान्' इति द्वितीयश्चतुष्कः। 'भवति तथागतः' इति तृतीयश्चतुष्कः। 'स जीवस्तच्छरीरम्, अन्यो जीवोऽन्यत् शरीरम्' इति द्विकः। त्रयश्चतुष्काः, एकश्च द्विक इति चतुर्दशाव्याकृतवस्तूनि। पर्यायरूपत्वव्यस्थानेऽपि चतुर्दशत्वं भवतीत्यदोषः। **त्वमेवैतत् पृच्छसीति**।

---

१. निर्याति—का०।

२. तमेवै०—का०।

'भवति तथागतः परं मरणात्' इत्यपि चतुष्कः प्रष्टुराशयापेक्षया न व्याकृतः। स हि मुक्त्वात्मानं तथागतं कृत्वा पृष्टवान्।

पौद्गलिकस्तु पर्यनुयोज्यः—किं कारणं भगवान् जीवन्तं पुद्गलम् अस्तीति व्याकरोति, परं मरणान्न व्याकरोतीति? शाश्वतदोषप्रसङ्गः।

इदं तर्हि कस्माद्व्याकरोति—"भविष्यसि त्वं मैत्रेयानागतेऽध्वनि तथागतोऽर्हन् सम्यक्सम्बुद्धः" इति? कस्माच्च श्रावकमभ्यतीतं कालगतमुपपत्तौ व्याकरोति—अमुकोऽमुत्रोपपन्न इति? एवमपि हि शाश्वतत्वप्रसङ्गः।

यदि च भगवान् पूर्वं पुद्गलं दृष्ट्वा परिनिर्वृतं पुनः न पश्यति, अज्ञानान्न व्याकरोतीति, सार्वज्ञ्यं[1] शास्तुरुत्पादितं भवति, न वा सोऽस्तीत्यभ्युपगन्तव्यम्।

अथ पश्यति, अनुच्यमानोऽप्यसावस्ति शाश्वतश्चेति सिद्धं भवति।

अथैतदपि न वक्तव्यम्—पश्यति वा नवेति। एवं तर्हि इदमपि शनैः शनैरवक्तव्यं क्रियताम्—सर्वज्ञो वा न वा भगवान्न वेति।

अस्त्येव पुद्गलो यस्मात् सत्यतः स्थितितो नास्ति मे आत्मेति दृष्टिस्थानमुक्तम्? अस्तीत्यपि दृष्टिस्थानमुक्तम्। तस्मादज्ञापकमेतत्।

---

'अन्तवान्' इति यं पृष्टवान्। कथम्? किं नु सर्वो लोकोऽनेन मार्गेण निर्यास्यति? इति 'अन्तवान्' इति 'अशाश्वतः' इति च पृष्टं भवति। आहोस्वित् 'एकदेशो लोकस्य' इत्यनेन 'अन्तवांश्च, अनन्तवांश्च' इति 'शाश्वतश्च, अशाश्वतश्च' इति पृष्टं भवति।

**जीवन्तं पुद्गलमस्तीति व्याकरोतीति**। तत्त्वान्यत्वेनावक्तव्यं सन्तमेवं पुदगलं व्याकरोतीत्यभिप्रायः।

**शाश्वतदोषप्रसङ्गादिति**। वात्सीपुत्रीयवचनम्। **इदं तर्हि कस्माद् व्याकरोतीति** विस्तरेण आचार्यवचनम्। **सार्वज्ञमिति**। अङ् भावप्रत्ययः, यौवनमिति यथा। **न वक्तव्यं पश्यति वा न वेति**। पश्यति, न पश्यतीति न वक्तव्यम् इत्यर्थः। **शनैः शनैरवक्तव्यं क्रियतामिति**। **सर्वज्ञो वा भगवान्, न वेति**। न वक्तव्यमिति। शनैः शनैर्ग्रहणं समानशाक्यपुत्रीयप्रकोपपरिहारार्थम्। **सत्यतः स्थितित इति**। स्थितिरूपेणेत्यर्थः। **दृष्टिस्थानमुक्तमिति**। मिथ्यादृष्टिस्थानमुक्तमित्यभिप्रायः।

---

१. सर्वज्ञत्वं—का०।

उभयमपि त्वेतदन्तग्राहदृष्टिशाश्वतोच्छेददृष्टिसंगृहीतमित्याभिधार्मिकाः। तथैव च युक्तम्। "अस्त्यात्मेत्यानन्द शाश्वताय परैति नास्त्यात्मेत्यानन्दोच्छेदाय परैति" ( ) इति वात्स्यसूत्रे वचनात्।

यदि तर्हि पुद्गलो नास्ति, क एष संसरति? नहि संसार एष संसरतीति युक्तम्। उक्तं च भगवता—"अविद्यानिवरणानां सत्त्वानां सन्धावतां संसरताम्" ( ) इति। अथ पुद्गलः, कथं संसरति? स्कन्धान्तरत्यागोपादानात्? उक्तोत्तर एष पक्षः। यथा तु क्षणिकोऽग्निः सन्तत्या सञ्चरतीत्युच्यते[1], तथा सत्त्वाख्यः स्कन्धसमुदायस्तृष्णोपादानः संसरतीत्युच्यते।

यदि स्कन्धमात्रमिदम्, कस्मादाह भगवान्—"अहमेव स तेन कालेन तेन समयेन सुनेत्रो नाम शास्ताऽभूवम्" इति? कस्मान्न वक्तव्यं स्यात्? अन्यत्वात् स्कन्धानाम्। अथ किं पुद्गलः? स एवासौ। शाश्वतो हि स्यात्! तस्मादहमेव स इत्येकसन्तानतां दर्शयति। यथा स एवाग्निर्दहन्नागत इति।

यदि चात्मा भवेत्, तथागता एव सुव्यक्तं पश्येयुः। पश्यतां चात्मग्राहो

---

आचार्य आह—अस्तीत्यपि दृष्टिस्थानमुक्तमिति। सत्कायदृष्टिस्थानमुक्तमित्यर्थः।

उक्तोत्तर एष पक्ष इति। कथं च न? प्रतिक्षेपात्। सूत्र एव हि प्रतिक्षिप्तं भगवतेति विस्तरेण यावद् 'अपदृष्टान्ता एते' इति। किमिदमुपादायेति आरभ्य। एतदपरेषां व्याख्यानम्। स्वमतेन तु यथा संसरति तथा दर्शयन्नाह—यथा तु क्षणिकोऽग्निरिति विस्तरः। क्षणिकोऽग्निः प्रसिद्धः। स च देशान्तरोत्पत्तिसन्तत्या सञ्चरतीत्युच्यते। तथा सत्त्वाख्यस्कन्धसमुदायस्तृ तृष्णा उपादानमस्येति तृष्णोपादानः। क्षणिकोऽपि सन्तत्या संसरतीति।

सुनेत्रो नाम शास्तेति। सप्तसूर्योदयसूत्रेऽयमेव भगवान् ऋषिः सुनेत्रो नाम बभूवेति।

अन्यत्वात् स्कन्धानामिति। क्षणिकत्वे सत्यन्यत्वादित्यभिप्रायः। एकसन्तानतां दर्शयतीति। यस्मात् सुनेत्रो बुद्धसन्तान एवासीत्।

---

१. संसरती०—का०।

दृढतरः स्यादात्मस्नेहश्च । "आत्मनि च सत्यात्मीयं भवति" इति **सूत्रे** वचनादात्मग्राहोऽप्येषां स्कन्धेष्वधिकं प्रवर्तेत । सैषां[1] स्यात् सत्कायदृष्टिः । आत्मीयदृष्टौ च सत्यामात्मीयस्नेहः । एवमेषां दृढतरात्मात्मीयस्नेहपरिगाहितबन्धनानां[2] मोक्षो दूरीभवेत्[3] ।

अथ मतम्—नैवात्मनि प्रवर्तते स्नेह इति । तत् क इदानीमेष योगो यदनात्मन्यात्माधिमोक्षात् स्नेह उत्पद्यते, आत्मन्येव तु नोत्पद्यते ! तस्मात् दृष्टचवुं दमेतस्मिन् शासने उत्पन्नम्—य एष **एकेषां** पुद्गलग्राहः, **एकेषां** सर्वनास्तिताग्राहः ।

येऽपि च द्रव्यान्तरमेवात्मानं मन्यन्ते **तीर्थकराः**, तेषामेव मोक्षाभावदोषो निष्कम्पः ।

यदि तर्हि सर्वथापि नास्त्यात्मा, कथं क्षणिकेषु चित्तेषु चिरानुभूतस्यार्थस्य स्मरणं भवति, प्रत्यभिज्ञानं वा ? स्मृतिविषयसंज्ञान्वयाच्चित्तविशेषात् । कीदृशाच्चित्तविशेषात् यतोऽनन्तरं स्मृतिर्भवति ? तदाभोग-

---

अथ 'स एवाहम्' इत्यभेदोपचारः । **यथा स एवाग्निर्यः** पूर्वं दृष्टो **दहन्नागत** इति । सन्तानवृत्त्या स एवेत्युच्यते, तद्वत् । **सैषां स्यात् सत्कायदृष्टिरिति** । सैषां तथागतानामात्मात्मीयाकारा सत्कायदृष्टिः स्यात् । **दृढतरात्मात्मीयस्नेहपरिगाहितबन्धनानामिति** । आत्मदृष्टौ आत्मीयदृष्टौ च सत्याम् आत्मस्नेह आत्मीयस्नेहश्च भवति । इत्यतो रागो बन्धनमिति कृत्वा दृढीकृतबन्धनानां सतां **मोक्षो दूरीभवेत्** । नैव भवेदित्यभिप्रायः ।

**य एकेषां पुद्गलग्राह** इति । वात्सीपुत्रीयाणाम् । **एकेषां सर्वनास्तिग्राह** इति । मध्यमकचित्तानामित्यभिप्रायः । **स्मृतिविषयसंज्ञान्वयाच्चित्तविशेषादिति** । स्मृतेर्विषयः = अनुभूतोऽर्थः, तत्र संज्ञा=सान्वयो हेतुरस्येति स्मृतिविषयसंज्ञान्वयश्चित्तविशेषः । किञ्चिदेव चित्तम्, न सर्वमित्यर्थः । **तस्मात् स्मरणं भवति, प्रत्यभिज्ञानं वा** ।

एवमुभयविशेषणे कृते पृच्छति—**कीदृशाच्चित्तविशेषादिति** ।

आह—**तदाभोग** इति विस्तरः । तस्मिन् स्मर्तव्य आभोगः= तदाभोगः । यत्र तेन सदृशाः सम्बन्धिनश्च संज्ञादयो ये ते विद्यन्तेऽस्येति

---

१. सैषा—का० । २. परिसादित०—का० ।

३. दूरतरीभवेत्—का० ।

सदृशसम्बन्धिसंज्ञादिमतोऽनुपहतप्रभावाद् आश्रयविशेषशोकव्याक्षेपादिभिः। तादृशोऽपि ह्यतदन्वयश्चित्तविशेषो न समर्थस्तां स्मृतिं भावयितुम्, तदन्वयोऽपि चान्यादृशो न समर्थस्तां स्मृतिं भावयितुम्। उभयथा तु समर्थ इत्येवं स्मृतिर्भवति; अन्यस्य[1] सामर्थ्यादर्शनात्।

कथमिदानीमन्येन चेतसा दृष्टमन्यत् स्मरति, एवं हि देवदत्तचेतसा दृष्टं यज्ञदत्तचेतः स्मरेत्? न; असम्बन्धात्। न हि तयोः सम्बन्धोऽस्ति;

---

तदाभोगसदृशसम्बन्धिसंज्ञादिमान् चित्तविशेषः। आदिग्रहणेन प्रणिधाननिबन्धाभ्यासादिग्रहणम्। आश्रयविशेषश्च शोकतश्च व्याक्षेपतश्च आदिरेषामिति **आश्रयविशेषशोकव्याक्षेपादीनि**, तैः **अनुपहतप्रभावश्चित्तविशेषः**। स एवमनेन दर्शितो भवति। तस्माद् ईदृशाच्चित्तविशेषात् स्मृतिर्भवति। तदिदमुक्तं भवति—तदाभोगवतः यदि तत्राभोगः क्रियते सदृशसंज्ञादिमतः यत्र सादृश्यात् स्मृतिर्भवति। सम्बन्धिसंज्ञादिमतः यत्रान्तरेणापि सादृश्यं धूमादिदर्शनात् स्मृतिर्भवति। प्रणिधाननिबन्धाभ्यासादिमतश्च यत्र प्रणिधानम्—अत्र काले स्मर्तव्यम्, अभ्यासो वाऽस्य तत्स्मरणे[2]. **आश्रयविशेषादिभिरनुपहतप्रभावत्वादिति**। व्याधिलक्षणेनाश्रयविशेषेण शोकेन व्याक्षेपेणान्यत्र कार्ये[3]। आदिशब्दगृहीतैश्च कर्मविद्यादिभिः। **तादृशोऽपीति** विस्तरः। तदाभोग-यावत्-संज्ञादिमान् अनुपहतप्रभावोऽपीत्यर्थः। **अतदन्वय** इति। अस्मृतिविषयसंज्ञान्वय इत्यर्थः। **भावयितुम्** उत्पादयितुम्। **अन्यादृश** इति। अतदाभोग-यावत्-संज्ञादिमान् अनुपहतप्रभावो वा। **अन्यस्य** चित्तविशेषादन्यस्य।

**न, असम्बन्धादिति**। देवदत्तयज्ञदत्तचेतसोरकार्यकारणभावेनासम्बन्धादित्यर्थः। यथैकसान्तानिकयोश्चेतसोः कार्यकारणभावात् सम्बन्धः, **नैवं देवदत्तयज्ञदत्तचेतसोः सम्बन्धः**। इत्यनेन दृष्टान्त-दार्ष्टान्तिकयोरसाम्यं दर्शयति। तत्र यदि परेणैवं साधनमभिधीयते—'न देवदत्तानुभवचित्तानुभूतमर्थं तत्स्मरणचित्तं स्मरति; अन्यत्वात्, यज्ञदत्तचित्तवत्' इति। तदसाधनम्; हेतोः स्वयमनिश्चितत्वात्, प्रत्यक्षविरोधेन च पूर्वपक्षसापक्षालत्वात्। अथ देवदत्तानुभवचित्तानुस्मरणचित्तयोरन्यत्वंप्रतिज्ञायामिदं दूषणमुद्ग्राह्येत? तददूषणम्; दृष्टबाधायां दूषणानुपपत्तेः। भवत्सिद्धान्तेऽपि हि देवदत्तानुभवचित्तानुभूतमर्थं तत्स्मरणचित्तं स्मरति।

---

१. अन्यस्यां—का०। २. तत्स्मर्तव्यादि—जा०।
३. कार्ये—जा०।

अकार्यकारणभावाद, यथैकसंतानिकयोः। न च ब्रूमः-अन्येन चेतसा दृष्टमन्यत् स्मरतीति ! अपि तु दर्शनचित्तात् स्मृतिचित्तमन्यदेवोत्पद्यते[1]। सन्तति-परिणत्या यथोक्तमित्ति क एवं सति दोषः ! स्मरणादेव च प्रत्यभिज्ञानं भवति।

असत्यात्मनि क एष स्मरति ? स्मरतीति कोऽर्थः ? स्मृत्या विषयं गृह्णाति। किं तद्ग्रहणमन्यत् स्मरणात् ! स्मृतिं तर्हि कः करोति ? उक्तः स यस्तां करोति स्मृतिहेतुचित्तविशेषः।

यत्तर्हि चैत्रः स्मरतीत्युच्यते। ततो हि चैत्राख्यात् सन्तानात्[2] भाव-दृष्टयोच्यते[2]—चैत्रः स्मरतीति। असत्यात्मनि कस्येयं स्मृतिः। किमर्थैषा षष्ठी ? स्वाम्यर्था। यथा कस्य कः स्वामी। यथा गोश्चैत्रः। कथमसौ तस्याः स्वामी ? तदधीनो हि तस्या वाहदोहादिषु विनियोगः। क्व च पुनः स्मृतिर्विनियोक्तव्या, य एवं तस्याः स्वामी मृग्यते ? स्मर्तव्येऽर्थे। किमर्थं विनियोक्तव्या ? स्मरणार्थम्।

अहो सूक्तानि सुखैधितानाम् ! सैव हि नाम तदर्थं विनियोक्तव्येति। कथं च विनियोक्तव्या ? उत्पादनतः, आहोस्वित् सम्प्रेषणतः ? स्मृतिगत्य-योगादुत्पादनतः। हेतुरेव तर्हि स्वामी प्राप्नोति फलमेव च स्वम्। यस्माद्धेतोराधिपत्यं फले फलेन च तद्वान् हेतुरिति। यो ह्येव हेतुः स्मृतेस्तस्यैवासौ। यश्चापि स चैत्राभिधानः संस्कारसमूहसन्तान एकतो गृहीत्वा गवाख्यस्वामीत्युच्यते, स चापि तस्य देशान्तरविकारोत्पत्तौ कारणभावं चेतसि कृत्वा। न तु खलु कश्चिदेकश्चैत्रो नामास्ति, न चापि

---

न च ब्रूमः—अन्येन चेतसा दृष्टमन्यत् स्मरतीति। न यत् किञ्चिदन्यत् स्मरतीत्यभिप्रायः। **दर्शनचित्तात् स्मृतिचित्तमन्यदेवोत्पद्यत** इति। विद्य-मानकारणत्वात्, विद्यमानबीजाङ्कुरवदित्यर्थः। **स्मरणादेव च प्रत्यभिज्ञा-नमिति**। 'तदेवेदं यन्मया दृष्टम्' इति स्मरणात्।

**यत् तर्हीति**। यदि चित्तविशेष एव स्मृतिः। यत् तर्हि चैत्रः **स्मरतीति**। तत् कथमिति वाक्याध्याहारः।

**स चापि तस्येति** विस्तरः। स चापि चैत्राभिधानः संस्कारसमूह-**सन्तानस्तस्य गवाख्यस्य देशान्तरविकारोत्पत्तौ** देशान्तरोत्पत्तौ विकारोत्पत्तौ च **कारणभावं चेतसिकृत्वा**। किम् ? स्वामीत्युच्यते। न तु पुद्गलम्। **कार्यकारणभावापेक्षोऽयं** व्यवहारः, न पुद्गलापेक्ष इत्यभिप्रायः। अत

---

१. अन्यदुत्पद्यते—का०। २-२. संतानात्तां भवन्तीं दृष्ट्वो०—का०।

गौः । तस्मात् तत्रापि न हेतुभावं व्यतीत्यास्ति स्वामिभावः ।

एवं को विजानाति, कस्य विज्ञानम्—इत्येवमादिषु वक्तव्यम्। तस्य हेतुरिन्द्रियार्थमनस्कारो यथायोगमित्येष विशेषः ।

योऽप्याह—भावस्य भवित्रपेक्षत्वात् सर्वो हि भावो भवितारमपेक्षते । यथा देवदत्तो गच्छतीत्यत्र गतिर्भावो गन्तारं देवदत्तमपेक्षते । तथा विज्ञानं भावः । तस्माद् यो विजानाति तेन भवितव्यमिति । स वक्तव्यः—कोऽयं देवदत्त इति ? यद्यात्मा ? स एव साध्यः । अथ व्यवहारपुरुषः ? सोऽपि न कश्चिदेकः । संस्कारा हि त एवन्नामानः । तत्र यथा देवदत्तो गच्छति यथा विजानाति ।

कथं च देवदत्तो गच्छति ? क्षणिका हि संस्कारा अभिन्नसन्ताना देवदत्त इति बालैरेकसत्त्वपिण्डग्राहेणाधिमुक्ताः स्वस्य सन्तानस्य देशान्तरे

---

एवाह—न तु कश्चिदिति विस्तरः ।

**एवं को विजानातीति** । असत्यात्मनि क एवं विजानाति । विजानातीति कोऽर्थः ? विज्ञानेन विषयं गृह्णाति । किं तद् ग्रहणम् अन्यद् विज्ञानात् । विज्ञानं तर्हि किं करोति ? उक्तः सः, यस्तत् करोति । **विज्ञानहेतुरिन्द्रियार्थमनस्कारः** । चित्तविशेष इति तन्न वक्तव्यम् । इन्द्रियादिहेत्वन्तरयोगात् । अत एव चोच्यते **यथायोगमित्येष विशेष** इति । यत् तर्हि चैत्रो विजानातीत्युच्यते । ततो हि चैत्राख्याद् सन्तानाद् भावदृष्टयोच्यते । असत्यात्मनि कस्येदं विज्ञानम् ? किमर्थैषा षष्ठी ? स्वाम्यर्था । यथा कस्य कः स्वामीति विस्तरेण यावत् क्व च पुनः विज्ञानं विनियोक्तव्यम् ? यत एतस्य स्वामी मृग्यते । विज्ञातव्येऽर्थे । किमर्थं विनियोक्तव्यम् ? विज्ञानार्थम् । अहो सूक्तानि सुखैधितानाम् ! तदेव हि नाम तदर्थं विनियोक्तव्यमिति । कथं च विनियोक्तव्यम् ? उत्पादनतः, आहोस्वित् सम्प्रेषणतः ? विज्ञानगत्ययोगादुत्पादनतः । हेतुरेव तर्हि स्वामीति विस्तरेण यावद् यो हि एव हेतुर्विज्ञानस्य, तस्यैवासौ । यश्चापि स चैत्राभिधान इति विस्तरेण यावन्न तत्रापि हेतुभावं व्यतीत्यास्ति स्वाभिभाव इति । आदि-शब्देन 'को वेदयते', 'कस्य वेदना' 'कः सञ्जानीते' 'कस्य संज्ञा' इत्येवमादि । एषा दिगिति ।

**योऽप्याह—भावस्य भवित्रपेक्षादिति** । वैयाकरणः । **तेन भवितव्यमिति** । विज्ञात्रा भवितव्यं पुद्गलेनेत्यभिप्रायः ।

कारणं भवन्त उच्यन्ते—गच्छति देवदत्त इति। सा च देशान्तरोत्पत्तिर्गतिरिति। ज्वालाशब्दसंतानयोर्गच्छतिगमनाभिधानवत्। त एव च पुनर्विज्ञानस्य कारणं भवन्त उच्यन्ते—विजानाति[1] देवदत्त इति। आर्यैरपि तेषां संज्ञया तथोच्यन्ते व्यवहारार्थम्।

यर्त्ताह "विज्ञानं विजानाति" इति सूत्र उक्तम्, किं तत्र विज्ञानं करोति? न किञ्चित् करोति। यथा तु कार्यं कारणमनुविधीयत इत्युच्यते, सादृश्येनात्मलाभादकुर्वदपि किञ्चित्। एवं विज्ञानमपि विजानातीत्युच्यते, सादृश्येनात्मलाभादकुर्वदपि किञ्चित्। किं पुनरस्य सादृश्यम्? तदाकारता। अत एव तदिन्द्रियादप्युत्पन्नं विषयं विजानातीत्युच्यते, नेन्द्रियम्।

अथवा तथाऽत्रापि विज्ञानसन्तानस्य विज्ञाने कारणभावाद् विज्ञानं विजानातीति वचनान्निर्दोषम्, कारणे कर्तृशब्दनिर्देशात्। घण्टा रौतीति यद्वत्।

अपि खलु यथा प्रदीपो गच्छति, तथा विज्ञानं विजानातीति। कथं च प्रदीपो गच्छति? प्रदीप इत्यर्चिषां सन्तान उपचर्यते, स देशान्तरेषूत्पद्यमानस्तं देशं गच्छतीत्युच्यते। एवं विज्ञानमपि चित्तानां सन्तान

---

**गच्छति-गमनाभिधानवदिति।** यथा **ज्वाला गच्छति, शब्दो गच्छतीति** गच्छति-शब्दाभिधानम्। यथा ज्वालायाः शब्दस्य वा गमनम्। अनेन दृष्टान्तेन **विजानाति देवदत्त** इति सिद्ध्यति।

**सादृश्येनात्मलाभादिति।** कारणसादृश्येन कार्यात्मलाभात्। **अकुर्वदपि कश्चिदिति।** परिस्पन्दनमकुर्वदपीत्यर्थः।

**तदाकारतेति।** नीलादिविषयाकारतेत्यर्थः। **विज्ञाने कारणभावात्** इति विज्ञानं विज्ञानान्तरस्य कारणम्, अतो विज्ञानान्तरं उत्पादाद् विजानातीति उच्यते। **कारणे कर्तृशब्दनिवेशादिति।** कारणं कर्तृभूतमिति कृत्वा **तद्यथा** नादस्य कारणं घण्टेति **घण्टा रौतीत्युच्यते, तद्वत्।**

**प्रदीप इति।** अर्चिषां सन्ताने प्रदीप इत्युपचर्यते। एक इवेति कृत्वा **स देशान्तरेषूत्पद्यमानः** सन्तानरूपः प्रदीपदेशान्तरेषूत्पद्यमानः। **तं तं देशं गच्छतीत्युच्यते। एवं चित्तानां सन्ताने विज्ञानमित्युपचर्यते।** एकमिवेति कृत्वा। **तत् सन्तानरूपं विज्ञानं विषयान्तरेषूत्पद्यमानं तं तं विषयं**

---

१. जानाति—का०।

उपचर्यते । तद्विषयान्तरेषूत्पद्यमानं तं विषयं विजानातीत्युच्यते । यथा चाभिजायते तिष्ठति रूपमित्यत्र भवितुर्भावादनर्थान्तरत्वम्, एवं विज्ञानेऽपि स्यात् ।

यदि विज्ञानाद् विज्ञानमुत्पद्यते नात्मनः, कस्मान्न नित्यं तादृशमेवोत्पद्यते, न च क्रमनियमेनाङ्कुरकाण्डपत्रादिवत् ? स्थित्यन्यथात्वस्य संस्कृतलक्षणत्वात् । एष हि संस्कृतस्य स्वभावो यदवश्यं प्रबन्धस्यान्यथात्वं भवति । अन्यथा हि निकामध्यानसमाहितानां सदृशकायचित्तोत्पत्तौ प्रथमक्षणनिर्विशेषत्वात् पश्चादपि न स्यात् स्वयं व्युत्थानम् ।

क्रमोऽपि हि चित्तानां नियत एव । यतो नूत्पत्तव्यम्; तत एव तस्योत्पादात् । तुल्याकारमपि हि किञ्चिदुत्पादने समर्थं भवति; गोत्रविशेषात् । तद्यथा स्त्रीचित्तादनन्तरं यदि तत्कायविदूषणाचित्तमुत्पन्नं

---

**विजनातीत्युच्यते** । सन्तानेन विज्ञानोत्पत्त्या विजानातीत्यभिप्रायः । **यथा वा रूपं भवतीति** विस्तरः । यथा भवितू रूपस्य भावात्, जनितुर्जातिः, स्यात्; स्थितेरनर्थान्तरत्वम्, **एवं विज्ञानेऽपि स्यात्** विज्ञातुर्विज्ञानस्य भावादनर्थान्तरत्वम्; व्यतिरिक्तस्य भावस्यानुपलब्धेः । वैशेषिकसूत्रानुसाराद् वा ।

**नात्मन** इति । यदि नात्मनो विज्ञानमुत्पद्यते विज्ञानलक्षणस्याविशेषात् । तादृशमेव विज्ञानमुत्पद्येत । यदि त्वात्मतः तस्याभिप्रायविशेषाद् विशिष्टं ज्ञानमुत्पद्यत इत्यभिप्रायः । **न च क्रमनियमेनेति** । कस्माच्च न क्रमनियमेनोत्पद्यते । अनियमेनापि हि उत्पद्यते, गोबुद्धेरनन्तरं स्त्रीबुद्धिः । स्त्रीबुद्धेर्महिषबुद्धिः । कस्माद् गोबुद्धेरनन्तरं नोत्पद्यते ? **अङ्कुर-काण्डपत्रादिवदिति** । अङ्कुरात् काण्ड एवोत्पद्यते, न पत्रादि । काण्डात् पत्रमेवोत्पद्यते, न पुष्पादि, अङ्कुरादि वा, तद्वत् ।

**निकामध्यानसमाहितानामिति** । निकामेन=पर्याप्तेन, समाप्तेन ध्यानेन समाहितानाम् । **सदृशकायचित्तोत्पत्तौ** । सदृशस्य कायस्य चित्तस्य चोत्पत्तौ । **स्वयं व्युत्थानमिति** । न परोपक्रमेणेत्यभिप्रायः । एवमनेन कस्मात् न नित्यं सदृशमेवोत्पद्यत इति यत् पृष्टं तद्विसर्जनम् । यत्तु पृष्टम्—न च क्रमनियमेनेति, तद् दर्शयन्नाह—**क्रमोऽपि हि चित्तानां नित्यमेवेति** । अभीष्टमेवैतत् । **गोत्रविशेषादिति** । भावनाविशेषात् । **स्त्रीचित्तादिति** विस्तरः । स्त्रीचित्तात् स्त्र्यालम्बनाच्चित्तात् **अनन्तरं तस्याः** स्त्रियाः **कायः** तत्कायः । **तत्कायस्य विदूषणायै** यदि परिव्राजकस्यान्यस्य वा साधोश्चित्त-

भवति तत्पतिपुत्रादिचित्तं वा पुनश्च पश्चात् सन्ततिपरिणामेन स्त्रीचित्तमुत्पद्यते, तत् समर्थं भवति तत्पतिपुत्रादिचित्तोत्पादने वा; तद्गोत्रत्वात्। अन्यथा न समर्थम्।

अथ पुनः पर्यायेण स्त्रीचित्ताद् बहुविधं चित्तमुत्पन्नं बहुतरमासन्नतरं वा तदेवोत्पद्यते; तद्भावनाया बलीयस्त्वात्। अन्यत्र तात्कालिकात् कायबाह्यप्रत्ययविशेषात्। सैव बलीयसी भावना कस्मान्नित्यं न फलति? स्थित्यन्यथात्वस्य संस्कृतलक्षणत्वात्। तस्य चान्यथात्वस्यान्यभावना-

---

मुत्पन्नं भवति। **तत्पतिपुत्रादिचित्तं** वा। तस्याः पतिपुत्रादयः। आदिशब्देन दुहित्रादयो गृह्यन्ते। तदालम्बनं चित्त तत्पतिपुत्रादिचित्तम्। तद् वान्यतरद् यदिदं तस्मात् स्त्रीचित्ताद् अनन्तरमुत्पन्न भवति। **पुनश्च** कालान्तरेण **सन्ततिपरिणामेन स्त्रीचित्तमुत्पद्यते**। तत् पश्चादुत्पन्नं स्त्री**चित्तं समर्थ भवति तत्कायविदूषणाचित्तोत्पादने**। तत्कायविदूषणाचित्तोत्पादने, तत्पतिपुत्रादिचित्तोत्पादने वा समर्थम्। कस्माद्? इत्याह—**तद्गोत्रत्वा-दिति**। तत्कायविदूषणाचित्तं तत्पतिपुत्रादिचित्त वा गोत्र बीजमस्येति तद्गोत्रं। चित्तम्, तस्य भावः, तस्मात्। तज्जातीयत्वादित्यभिप्रायः। **अन्यथे**ति। अतद्गोत्रम्।

**अथ पुनः पर्यायेणे**ति विस्तरः। पर्यायेण=अयुगपत्। स्त्रीचित्तात् तत्कायविदूषणाचित्तम्, ततश्च तत्पतिचित्तम्, ततश्च तत्पुत्रचित्तम्, तत एव च तद्दुहितृचित्तम्, तत एव च तदुपकरणादिचित्तमुत्पन्न **भवति। ततः** स्त्रीचित्ताद् अनन्तरोत्पन्नेभ्यश्चि**त्तेभ्यो यद् बहुतरं** प्रवाहतः **पटुतरं** शक्तितः **आसन्नतरं** वास्योत्पाद्यस्य चित्तस्य, **तदेव चित्तमुत्पद्यते; तद्भावनाया बलीयस्त्वात्**। तस्य बहुतरस्य पटुतरस्यासन्नतरस्य वा भावनाया बलवत्तरत्वात्। **अन्यत्रे**ति विस्तरः। तत्कालप्रत्युपस्थितः तात्कालिकः **कायप्रत्ययविशेषो बाह्यप्रत्ययविशेषश्च, तस्मादन्यत्र**। तस्मादृत इत्यर्थः। तदेव ह्युत्पद्यते, यस्य कायो बाह्यो वा प्रत्ययविषय उपतिष्ठते।

**सैव बलीयसी**ति। या बहुतरस्य पटुतरस्य आसन्नतरस्य वा अभिहिता, सैव बलीयसी **भावना कस्मान्नित्यं न फलति**। नहि तच्चित्तं निवर्तते।

वर्तते इतीतरेण चोदित आह—**स्थित्यन्यथात्वलक्षणत्वात्**। स्थितेरन्यथात्वं लक्षणमस्येति स्थित्यन्यथात्वलक्षणत्वात्, तद्भावात्। तस्य **चान्यथात्वस्य संस्कृतलक्षणस्य। अन्यभावनाफलोत्पत्तौ** अन्यभावनाफलस्य

फलोत्पत्तावानुगुण्यात् ।

एतद्धि सर्वचित्तप्रकारेषु दिङ्मात्रम् ।

निरन्तरकारणज्ञाने तु बुद्धानां प्रभुत्वम् ।

एवं ह्याहुः—

"सर्वाकारं कारणमेकस्य मयूरचन्द्रकस्यापि ।
नासर्वज्ञैर्ज्ञेयं सर्वज्ञबलं हि तज्ज्ञानम्" ।। इति

प्रागेवारूपिणां चित्तभेदानाम् ।।

य एव त्वयमेकीयस्तीर्थिक आत्मप्रभवां चित्तोत्पत्तिं मन्यते, तस्यैवेदं स्फुटं चोद्यमापद्यते—कस्मान्न नित्यं तादृशमेवोत्पद्यते न च क्रमनियमेन, अङ्कुरकाण्डपत्रादिवदिति । मनःसंयोगविशेषापेक्षत्वादिति चेत् ? न; अन्यसंयोगासिद्धेः । संयोगिनोश्च[1] परिच्छिन्नत्वादप्राप्तिपूर्विका प्राप्तिः

---

चित्तान्तरस्योत्पत्तौ **आनुगुण्यान्नित्यं न फलति** तदेवेत्यर्थसम्बन्धः ।

**एवं ह्याहुरिति** । स्थविरराहुलः ।

**सर्वाकारमिति** । सर्वप्रकारम् । यावन्तो **मयूरचन्द्रकस्य** वर्णसंनिवेशादिप्रकाराः, तेषां **कारणम्** । इदमस्य कारणम्, येनैवं वर्णाः, एवं सन्निवेशः, एवं स्निग्धतेत्येवमादिभिराकारैर्न **ज्ञेयम्** । न ज्ञातुं शक्यम् । कैः ? **असर्वज्ञैः** । श्रावकप्रत्येकबुद्धादिभिः । **सर्वज्ञबलं हि तज्ज्ञानम्** । सर्वविद्बलं हि तद् ज्ञानम्, येन तत्कारणं ज्ञायत इत्यभिप्रायः ।

**प्रागेवारूपिणां चित्तभेदानामिति** । रूपकारणमपि सर्वथा ज्ञातुमशक्यम्, किमरूपिणामित्यर्थः ।

**एकीयस्तीर्थिक**[2] इति । वैशेषिकः । **मनःसंयोगविशेषापेक्षत्वादिति चेत्** । स्यान्मतम्—तुल्येऽप्यात्मप्रभावत्वे चित्तोत्पत्तेरात्मा कदाचित् कर्हिचित् मनःसंयोगविशेषमपेक्षते, इत्यतो न नित्यं तादृशमेव चित्तमुत्पद्यते । न च क्रमनियमेनाङ्कुरकाण्डपत्रादिवदिति । **न, अन्यसंयोगासिद्धेः** । नैतदेवम् । कस्मात् ? ताभ्याम् आत्ममनोभ्याम् अन्यस्य संयोगस्यासिद्धेः । नहि संयोगो नाम भावः कश्चिद् अस्माकं सिद्धोऽस्ति । **संयोगिनोश्चेति** विस्तरः । अभ्युपगतेऽपि संयोगे, संयोगिनोश्चेति विस्तरः । लोकप्रसिद्धयोः

---

१. ०स्तु—का० । २. एकीयास्तीर्थिका—जा० ।

संयोग इति लक्षणव्याख्यानाच्चात्मनः परिच्छेदप्रसङ्गः। ततो मन.संचारा-दात्मनः सञ्चारप्रसङ्गात्[1], विनाशस्य[2] वा।

प्रदेशसंयोग इति चेत्? न; तस्यैव तत्प्रदेशत्वायोगात्।

अस्तु वा संयोगः, तथापि नित्यमविशिष्टे मनसि कथं संयोगविशेषः? बुद्धिविशेषापेक्षत्वादिति[3] चेत्? स एवोपरि[4] चोद्यते[4]—कथं बुद्धिविशेष

काष्ठयोरन्ययोर्वा कयोश्चित्। **परिच्छिन्नत्वात्।** परिच्छिन्नदेशदृष्टत्वादित्यर्थः। **लक्षणव्याख्यानाच्चेति।** वैशेषिकतन्त्रे संयोगलक्षणनिर्देशात्। ततः किम्? **आत्मनः परिच्छेदप्रसङ्गः।** परिच्छिन्नदेशत्वप्रसङ्गः। यत्रात्मा न तत्र मनः, यत्र मनः न तत्रात्मेति। अनेनानुमानागमापतितो धर्मिविशेषविपर्ययोऽस्य पक्षस्य सन्दृष्टो भवति। मनसा संयोग आत्मनेति आत्मा धर्मी, तस्य विशेषः सर्वगतत्वम्। तद्विपर्ययोऽसर्वगतत्वमिति। **ततो मनःसञ्चारादात्मनः सञ्चारप्रसङ्गादिति।** ततो लक्षणाद् अप्राप्तिपूर्विका प्राप्तिः संयोग इति मनःसञ्चारात् यं यं शरीरप्रदेशं मनः सञ्चरति ततस्तत आत्मा सञ्चरति=अपैतीति प्रसज्यते। तद्यथा—यं यं पृथिवीप्रदेशं पुरुषः सञ्चरति, ततस्तत आतपोऽपसरति। तथा च सति निष्क्रियत्वमस्य बाधितं भवतीति स एव प्रतिज्ञादोषः। **विनाशस्य वा।** प्रसङ्ग इति वर्तते। आत्मन इति च। यत्र यत्र मनः सञ्चरति तत्र तत्र आत्मा विनश्यतीति स एव चात्र प्रतिज्ञादोषः आत्मनो नित्यत्वनिवृत्तेः। **प्रदेशसयोग इति चेत्।** स्यान्मतम्—आत्मना प्रदेशेन संयोगो मनसः, आत्मनो वा प्रदेशेन मनसा सह सयोगः। यस्मिन् शरीरप्रदेशे मनोऽवस्थितं भवति, तद्गतेनात्मप्रदेशेन मनो न संयुज्यते, प्रदेशान्तरेणान्यपार्श्वतः संयुज्यते। तस्मादप्राप्तिपूर्वकत्वेऽपि संयोगस्याप्राप्तेनैवात्मप्रदेशेन मनः संयुज्यत इति। **तन्न; तस्यैव तत्प्रदेशत्वायोगात्।** न ह्यात्मनोऽन्यप्रदेशा विद्यन्ते। न चैवात्मैवात्मनः प्रदेशो युज्यते। **अस्तु वा संयोग** इति विस्तरः। अभ्युपेत्यापि संयोगम्, **तथापि** निर्विकारत्वाद् **अविशिष्टे मनसि कथ संयोगविशेषः!** कथं विशिष्टः संयोगो भवति। यत एवमुक्तम्—मनःसंयोगविशेषापेक्षत्वादिति। **बुद्धिविशेषापेक्षत्वादिति चेत्। स एवोपरि चोद्यते—कथं बुद्धिविशेष** इति। कस्मान्न नित्यमीदृशमेवोत्पद्यते चित्तमविशिष्ट आत्मनीति। कारणविशेषाद्धि कार्यविशेष इष्यते, शङ्खपटहादिशब्दवत्। **संस्कारविशेषापेक्षा-**

१. ०प्रसङ्गो-का०।
२. विरागस्य-का०।
३. ०पेक्ष इति-का०।
४-४ एव परिचोद्यते-का०।

इति । संस्कारविशेषापेक्षादात्ममनःसंयोगादिति चेत् ? चित्तादेवास्तु संस्कारविशेषापेक्षात्[१] । नहि किञ्चिदात्मनः उपलभ्यते सामर्थ्यम्, औषधकार्यसिद्धाविव कुहकवैद्यफूःस्वाहानाम् । सत्यात्मनि तयोः सम्भव[२] इति चेत् ? वाङ्मात्रम् । आश्रयः स इति चेत् ? यथा कः कस्याश्रयः ? न हि तौ चित्रबदरादिवदाधार्यौ । नापि स कुड्यकुण्डादिवदाधारो युक्तः ।

---

**दात्ममनःसंयोगादिति चेत्** : स्यान्मतम्—नित्यमविशिष्टेऽप्यात्मनि मनसि च संस्कारविशेषापेक्षात् आत्ममनसोः संयोगाद् **बुद्धिविशेष** इति । तदुक्तं भवति—संस्कारविशेषाद् भावनाविशेषलक्षणात् आत्ममनःसंयोगविशेषः तद्विशेषाद् बुद्धिविशेष इति । अत्र ब्रूमः—**चित्तादेवास्तु** इति विस्तरः । अयमिहाचार्यस्याभिप्रायः—सान्तर्भवश्चित्तमस्तीत्यविवादः । मम तवं च चित्तमस्तीत्यविवादः । संस्कारविशेषोऽप्यस्ति । भावनाविशेषलक्षणो योऽसौ वासना बीजं वा अस्माभिर्व्यवस्थाप्यते । भावनान्तरं न वेति तु विशेषः । तस्माच्चित्तादेव संस्कारविशेषापेक्षाद् **बुद्धिविशेषोऽस्तु**, किमात्मना तत्संयोगेन वा कल्पितेनेति । **नहि किञ्चिदिति** विस्तरः । कुहकेनैकतरेण वैद्येन कस्मैश्चिद्[३] ग्लानीयौषधं ददानेन चिन्तितम्—'इदमौषधं सुलभम्, विदितं चास्य सपरिजनस्य ग्लानस्य, एतेन चौषधेनास्य ग्लानस्य ग्लानोपशमो भवेत् । तदेवं मामवधूयान्येऽपि करिष्यन्ति, ततश्च ममार्थलाभो न भविष्यति' । इति चिन्तयित्वा तदभिमन्त्र्य 'फूः स्वाहा, फूः स्वाहा' इति जनस्य दर्शितम्—'अनेन मन्त्रेणेदमौषधं सिद्ध्यति' इति । **तत्र यथा कुहकवैद्यफूःस्वाहानाम् औषधकार्यसिद्धौ सामर्थ्यं** नास्ति, औषधस्यैव तु सामर्थ्यम्; एवमात्मनो बुद्धिविशेषोत्पत्तौ नास्ति सामर्थ्यम्, चित्तस्यैव सामर्थ्यमिति । **सत्यात्मनि तयोः सम्भव इति चेत्** । स्यान्मतम्—सत्यात्मनि तयोः संस्कारचित्तयोः सम्भवः—इत्यतोऽस्त्यात्मेति ? अत्र ब्रूमः—**वाङ्मात्रम्** । नात्र काचिद् युक्तिरस्ति । **आश्रयः स इति चेत्** । स्यान्मतम्—आत्माश्रयस्तयोरिति । **यथा कः कस्याश्रय** इति । आश्रयरूपेणोदाहरणं मृग्यते । तमस्याश्रयार्थमयुक्तं दर्शयन्नाह—**न हि ते** इति विस्तरः । ते=संस्कारचित्ते । **चित्रबदरादिवत्** । यथा कुड्ये चित्रम् आधार्यम्, बदरं च कुण्डे । आदि-शब्देन भाजने भोजनमित्यादि । नैव ते संस्कारचित्ते तत्रात्मन्याधेये आधार्ये । **नापि स कुड्यकुण्डादिवदाधारो युक्तः** । नापि स आत्मा कुड्यादिवत् कुण्डादिवच्च आधारो युक्तः । आदिशब्देन भाजनादिग्रहणम् । किं

---

१. ०पेक्षत्वात्—का० । २. संयोग—का० । ३. कस्मिंश्चित्—जा० ।

प्रतिघातियुतत्वदोषात्[1] नैव स एवमाश्रयः ।

कथं तर्हि ? यथा गन्धादीनां पृथिवीति चेत् ? अतिपरितोषिताः स्मः ! इदमेव हि नः प्रत्याय्यकम्—नास्त्यात्मेति । यथा न गन्धादिभ्योऽन्या पृथिवीति । को हि सत्पुरिसो[2] गन्धादिभ्योऽन्यां पृथिवीं निर्धारयति । व्यपदेशस्तु पृथिव्या गन्धादय इति विशेषणार्थम् । ते ह्येवं तदाख्या गन्धादयो यथा विज्ञायेरन्नान्य[3] इति । काष्ठप्रतिमायाः शरीरव्यपदेशवत् ।

सत्यपि च संस्कारविशेषापेक्षत्वे कस्मान्न युगपत् सर्वज्ञानोत्पत्तिः ?

---

कारणम् ? इत्याह—प्रतिघातियुतत्वदोषादिति । प्रतिघातित्वदोषात्, युतत्वदोषाच्च । सप्रतिघत्वप्रसङ्गात्, पृथग्देशत्वप्रसङ्गाच्चेत्यर्थः । यथा चित्रबदरयोः, कुड्यकुण्डयोश्च आधाराधारभावे प्रतिघातित्वं युतत्वं च दृष्टं, एवमेतेषामपि स्यात् । अनिष्टं चैतत् । अतोऽनात्माश्रयः ।

यथा न गन्धादिभ्योऽन्या पृथिवी । तथा बुद्ध्यादिभ्योऽन्यो न आत्मेति । को हि सत्पुरुषो गन्धादिभ्योऽन्यां पृथिवीं निर्धारयति । नहि पृथिवी कतमा ?—इत्युक्ते रूप-गन्ध-रस-स्पर्शेभ्योऽन्या दर्शयितुं शक्यते, यथा रूपं गन्धादिभ्योऽन्यदिति ।

यदि न गन्धादिभ्योऽन्या पृथिवी, कथमयं व्यपदेशः—पृथिव्या गन्धादय इति । अन्येन ह्यन्यस्य व्यपदेशो दृष्टः—चैत्रस्य कम्बल इति । अत उच्यते—व्यपदेश स्त्विति विस्तरः ।

विशेषणार्थमिति । अबादिभ्यो विशेषणार्थमित्यर्थः । कथम् ? इति प्रतिपादयति—ते ह्येवेति विस्तरः । ते ह्येवेति एवकारस्तद्व्यतिरिक्तपृथिवीद्रव्यनिवृत्त्यर्थः । त एव गन्धादयः । तदाख्याः पृथिव्याख्याः । यथा विज्ञायेरन्, तथा विशेषणार्थं व्यपदेश इत्यभिसम्बन्धः । नान्य इति । नाबाद्याख्याः । पृथिव्याख्येभ्योऽन्ये विज्ञायेरन्नित्यर्थः । काष्ठप्रतिमायाः शरीरव्यपदेशवदिति । यथा काष्ठप्रतिमायाः 'शरीरम्' इति व्यपदिश्यते । अन्येभ्यो मृण्मयादिविशेषणार्थम् । न च काष्ठप्रतिमायाः शरीरमन्यत् । एवमिहापि व्यपदेशः स्यात्—न च गन्धादिभ्योऽन्या पृथिवीति ।

संस्कारविशेषापेक्षत्व इति । आत्ममनःसंयोगस्य ।

---

१. ०युतदोषात्—का० ।

२. स—का० ।

३. प्रतीयेरन्—का० ।

यो हि बलिष्ठस्तेनान्येषां प्रतिबन्धः। स एव बलिष्ठः कस्मान्नित्यं न फलति ? योऽस्य न्याय, सोऽस्तु भावनायाः। आत्मा तु निरर्थकः कल्प्यते।

अवश्यमात्माऽभ्युपगन्तव्यः। स्मृत्यादीनां गुणपदार्थत्वात् तस्य च गुण-पदार्थस्यावश्यं द्रव्याश्रितत्वात तेषा चान्याश्रयायोगादिति चेत् ? न; न ह्येषां गुणपदार्थत्वं सिद्धम्। सर्वमेव नो विद्यमानं द्रव्यम्; "षट् द्रव्याणि श्रामण्यफलानि" इति वचनात्। नाप्येषां द्रव्याश्रितत्वं सिद्धम्। परीक्षितौ ह्याश्रयार्थः। तस्माद्यत्किञ्चिदेव तत्।

आत्मन्यसति किमर्थः कर्मारम्भः—अहं सुखी स्याम्, अहं दुःखी न स्यामित्येवमर्थः ? कोऽसावहं नाम यद्विषयोऽयमहङ्कारः ? स्कन्धविषयः। कथं ज्ञायते ? तेषु स्नेहात्। गौरादिबुद्धिभिः सामानाधिकरण्यात्तु गौरोऽहम्, अहं श्यामः, स्थूलोऽहम्, अहं कृशः, जीर्णोऽहम्, अहं युवेति गौरादिबुद्धिभिः समानाधिकरणोऽयमहङ्कारो दृश्यते। न चात्मन एते प्रकारा दृश्यन्ते। तस्मादपि स्कन्धेष्वयमिति गम्यते। आत्मन उपकारकेऽपि

---

**यो हि बलिष्ठ** इति। संस्कारविशेषः। **तेनान्येषां** संस्कारविशेषाणा **प्रतिबन्धः**।

**स एव बलिष्ठः कस्मान्नित्यं न फलतीति**। आचार्यवचनम्। स एव पुनराह—**योऽस्य न्यायो** यः संस्कारस्य न्यायो विनाशः, प्रतिबन्धो वा। **सोऽस्तु भावनाया** बीजान्तिकायाः। **आत्मा तु निरर्थको** निष्प्रयोजनः **कल्प्यते**। संस्कारार्था हि तत्कल्पना स्यात्। तस्य च संस्कारस्य यत् कार्यम्, तत् भावनयैव क्रियत इति।

**स्मृत्यादीनामिति** विस्तरः। स्यान्मतम्—स्मृतिसंस्कारेच्छाद्वेषादीनां **गुणपदार्थत्वात् तस्य च गुणपदार्थस्य अवश्यद्रव्याश्रितत्वात्** द्रव्याश्रयश्च गुणवानित्येवं लक्षणोपदेशात्। **न चैषामन्य आश्रयः** पृथिव्यादिको युज्यते अपरप्रत्यक्षत्वादिभिः कारणैः। **अतो य** [illegible] **श्रयः स आत्मा**। तस्मा-दस्त्यात्मेति ?

**न; असिद्धेः**। नैतदेवम्। कस्मात् ? **स्मृत्यादीनां गुणपदार्थत्वा-सिद्धेः**। **विद्यमानं द्रव्यमिति**। यत् स्वलक्षणतो विद्यमानम्, तद् द्रव्यम्। **षट् द्रव्याणि श्रामण्यफलानीति**। रूपस्कन्धादीनि पञ्च स्कन्धानि श्रामण्य-फलानि असंस्कृतं च षष्ठमिति षट् द्रव्याणि भवन्ति। **नाप्येषामिति**। स्मृत्यादीनाम्। **परीक्षितो ह्याश्रयार्थ** इति। "यथा कः कस्याश्रयः, न हि ते चित्रबदरादिवद् आधार्ये" इति विस्तरेण।

शरीर आत्मोपचारो यथा य एवायं स एवाहम्, स एवायं मे भृत्य इति भवत्युपकारकेऽपि आत्मोपचारो न त्वहंकारः। सति शरीरालम्बनत्वे परशरीरालम्बनोऽपि कस्मान्न भवति? असम्बन्धात्। येनैव हि सहास्य सम्बन्धः कायेन चित्तेन वा तत्रैवायमहंकार उत्पद्यते, नान्यत्र; अनादौ संसार एवमभ्यासात्। कश्च सम्बन्धः? कार्यकारणभावः।

यद्यात्मा नास्ति, कस्यायमहंकारः? इदं पुनस्तदेवायातम्—'किमर्थैषा षष्ठीति? यावद्य एवास्य हेतुस्तस्यैवायम्' इति। कश्चान्यो हेतुः? पूर्वाहङ्कारपरिभावितं स्वसन्ततिविषयं सावद्यं चित्तम्।

असत्यात्मनि क एष सुखितो दुःखितो वा? यस्मिन्नाश्रये सुखमुत्पन्नं दुःखं वा। यथा पुष्पितो वृक्षः, फलितं वनमिति। कः पुनरनयोराश्रयः? षडायतनम्। यथा कृत्वा तथोक्तम्।

---

**एते प्रकारा** इति। गौरादिप्रकाराः। **स्कन्धेष्वयमिति**। अहङ्कारः। **न त्वहङ्कार** इति। न तु 'अहम्' इत्येवमाकारः प्रत्यय इत्यर्थः।

**इदं पुनस्तदेवायातम्** इति। किमर्थैषा षष्ठी? स्वाम्यर्था। यथा कः कस्य[1] स्वामी। यथा गोश्चैत्रः, कथमसौ तस्याः स्वामी। तदधीनो हि तस्यावाहदोहादिषु विनियोगः। क्व च पुनरहङ्कारो विनियोक्तव्यो यत एतस्य स्वामी मृग्यते? अहङ्कर्तव्येऽर्थे। किमर्थं विनियोक्तव्यः? अहङ्कारार्थम्। अहो सूक्तानि सुखैधितानाम्! स एव हि नाम तदर्थं विनियोक्तव्य इति। कथं च विनियोक्तव्यः? उत्पादनतः, आहोस्वित् सम्प्रेषणतः। अहङ्कारगत्ययोगात् उत्पादनतः। हेतुरेव तर्हि स्वामी प्राप्नोति, फलमेव च स्वम्; यस्माद्धेतोराधिपत्यं फले। फलेन च तद्वान् हेतुरिति।

**य एवास्य हेतुरहङ्कारस्य तस्यैवायमिति**। **पुष्पितो वृक्ष** इति दृष्टान्तः। यत्र सिद्धान्ते वृक्षावयवी नेष्यते, विजातीयचतुर्महाभूतकायारम्मणमोष्टे। यत्र तु वृक्षावयवी अस्ति, तत्र द्वितीयो दृष्टान्तः—**फलितं वनमिति**। न हि वनं नाम किञ्चिदस्ति। यथा यस्मिन् वने फलमुत्पन्नम्, तत् फलितमित्युच्यते। यथा यस्मिन्नाश्रये षडायतनलक्षणे सुखमुत्पन्नं दुःखं वा, स सुखितो दुःखितो वा। **तथोक्तमिति**। यथा आश्रयः षडायतनं तथोक्तम्।

---

१. कस्यो—जा०।

असत्यात्मनि क एषां कर्मणां कर्ता, कश्च फलानां भोक्ता भवति ? कर्तेति । क एष वाक्यार्थः ? करोतीति कर्ता । भुङ्क्त इति भोक्ता । पर्याय उच्यते, नार्थः । "स्वतन्त्रः कर्ता" (पा० १.४.५४) इति कर्तृलक्षणमाचक्षते लाक्षणिकाः । अस्ति पुनः क्वचिदेव कार्ये कस्यचित् स्वातन्त्र्यम् । लोके दृष्टं देवदत्तस्य स्नानासनगमनादौ । कः पुनर्भवान् देवदत्तमुदाहरति ? यद्यात्मानम् ? स एव साध्यः । अथ पञ्चस्कन्धकम् ? स एव कर्ता । त्रिविधं चेदं कर्म कायवाङ्मनस्कर्म । तत्र कायकर्मणि तावत् कायस्य चित्तपरतन्त्रा वृत्तिः । चित्तस्यापि काये स्वकारणपरतन्त्रा वृत्तिः, तस्याप्येवमिति नास्ति कस्यचिदपि[1] स्वातन्त्र्यम् । प्रत्ययपरतन्त्रा हि सर्वे भावाः प्रवर्तन्ते । आत्मनोऽपि च निरपेक्षस्याकारणत्वाभ्युपगमान्न स्वातन्त्र्यं सिध्यति । तस्मान्नैवंलक्षण उपलभ्यते कश्चित् कर्ता ।

यत्तु यस्य प्रधानकारणं[2] तत्तस्य कर्तेत्युच्यते । न च आत्मनः

---

"तद्विकारविकारित्वादाश्रयाश्चक्षुरादयः" ( अभि० को० १.४४ ) इति ।

**अथ पञ्चस्कन्धकम् ।** भवानुदाहरतीत्यधिकृतम् । **स एव कर्तेति ।** स एव पञ्चस्कन्धलक्षणः कर्ता, नात्मा इति सिद्धो नः पक्षः । तत्रापि स्वातन्त्र्यं नास्तीति दर्शयन्नाह—**त्रिविधं चेदं कर्मेति** विस्तरः । **कायस्य चित्तपरतन्त्रा वृत्तिः** चित्तप्रवर्तितत्वात् कायकर्मणः । **चित्तस्यापि काये वृत्तिः स्वकारणपरतन्त्रा;** मनोधर्ममनस्कारादिपरतन्त्रत्वात् **तस्याप्येवं** तस्य चित्तकारणस्य स्वकारणपरतन्त्रा वृत्तिरिति **नास्ति कस्यचिदपि स्वातन्त्र्यं** कायस्य, चित्तस्य, चित्तकारणस्यान्यस्य वा । **प्रत्ययपरतन्त्रा हि सर्वे भावाः ।**

"चतुर्भिश्चित्तचैत्ता हि समापत्तिद्वयं त्रिभिः ।

द्वाभ्यामन्ये तु जायन्ते" ( अभि० को० २.६५ ) इति वचनात् ।

आत्मनोऽपि च निरपेक्षस्य बुद्धिविशेषाद्युत्पत्तावकारणत्वाभ्युपगमान्न **स्वातन्त्र्यं सिद्ध्यति । तस्मान्नैवंलक्षण** इति । स्वतन्त्रः कर्तेति ।

एवं तर्हि कः[3] कर्तेत्याह—**यत्तु यस्य प्रधानकारणं तत् तस्य कर्ते-**

---

१. कस्यचित्—का० । २. प्रधानं कारणं—का० ।

३. जा० पुस्तके नास्ति ।

क्वचिदपि कारणत्वं दृश्यते। तस्मात् स एवमपि न कर्ता युज्यते। स्मृतितो[1] हि च्छन्दः, च्छन्दाद्[2] वितर्कः, वितर्कात् प्रयत्नः, प्रयत्नाद्वायुः, ततः कर्मेति किमत्रात्मा कुरुते !

फलस्यापि च क उपभोगो यमयमात्मा कुर्वन्नुपभोक्ता कल्प्यते ? उपलब्धिरिति चेत् ? नात्मनः उपलब्धौ सामर्थ्यम् ; विज्ञाने प्रतिषेधात् ।

असत्यात्मनि कस्मादसत्त्वाधिष्ठानः पापपुण्योपचयो न भवति; वेदनाद्यनाश्रयत्वात् । तदाश्रयश्च षडायतनम्, नात्मा यथा तथोक्तम् ।

कथमसत्यात्मनि विनष्टात् कर्मण आयत्यां फलोत्पत्तिः ? आत्मन्यपि सति कथं विनष्टात् कर्मण आयत्यां फलोत्पत्तिः ? तदाश्रिताद्धर्माधर्मात् । यथा कः किमाश्रित इत्युक्तोत्तरैषा वाचोयुक्तिः । तस्मादनाश्रितादेव धर्माधर्मात् भवतु । नैव तु वयं विनष्टात् कर्मण आयत्यां फलोत्पत्तिं ब्रूमः । किं तर्हि ? तत्सन्ततिपरिणामविशेषाद्, बीजफलवत् ।

यथा बीजात् फलमुत्पद्यत इत्युच्यते । न च तद्विनष्टाद् बीजादुत्पद्यते । नाप्यनन्तरमेव । किं तर्हि ? तत्सन्ततिप[illegible]ङ्कुरकाण्डपत्रादि-

---

त्युच्यते । प्राधान्ये तत्प्रतीत्योत्पत्तेः । स एवमपि कर्ता न युज्यते । प्रधानकारणभावेनापि न युज्यत इत्यर्थः ।

तस्याकारणत्वमुपदर्शयन्नाह—स्मृतितो हि च्छन्द इति विस्तरः । पूर्वस्मर्तव्येऽर्थे स्मृतिरुत्पद्यते । स्मृतेश्छन्दः, कर्तुकामता । छन्दाद् वितर्कः चेतनाविशेषोऽभिसंस्कारलक्षणः, प्रज्ञाविशेषो वा योगाचारनयेन । वैभाषिकनयेन तु अभिरूपणाविकल्पलक्षणः । वितर्कात् प्रयत्नः । वीर्यम् । प्रयत्नाद् वायुः । ततो वायोः कर्म देशान्तरोत्पत्तिलक्षणमिति । किमत्रात्मा कुरुते !

विज्ञाने प्रतिषेधादिति । यैवोपलब्धिः तदेव विज्ञानम् । विज्ञाने च आत्मनः सामर्थ्यं प्रतिषिद्धम् । चित्ताद् एवास्तु संस्कारविशेषापेक्षात् । न हि किञ्चिदात्मन उपलभ्यते सामर्थ्यम् । औषधकार्यसिद्धाविव कुहकवैद्यफूःस्वाहानामिति ।

यथा तथोक्तमिति ।

“तद्विकारविकारित्वादाश्रयाश्चक्षुरादयः ।” ( अभि० को० १.४४ )

तदाश्रितादिति । आत्माश्रितात् । उक्तोत्तरैषा वाचोयुक्तिरिति । यथा कः कस्याश्रयः । न हि ते चित्रबदरादिवद् आधार्ये । नापि स कुड्यकुण्डादिवदाधारो युक्तः । प्रतिघातित्वयुतत्वादिदोषान्न वै स एवमाश्रयः ।

---

१. स्मृतिजो—का० ।　　२. छन्दजो—का० ।

क्रमनिष्पन्नात् पुष्पावसानात्। तत् पुनः पुष्पान्निष्पन्नं कस्मात्तस्य बीजस्य फलमित्युच्यते। तदाहितं हि तत् परयापुष्पे सामर्थ्यम्। यदि हि तत्-पूर्वकान्नाभविष्यत्, तत्तादृशस्य फलस्योत्पत्तौ न समर्थमभविष्यत्। एवं कर्मणः फलमुत्पद्यत इत्युच्यते। न च तद्विनष्टात् कर्मण उत्पद्यते, नाप्य-नन्तरमेव। किं तर्हि? तत्सन्ततिपरिणामविशेषात्।

का पुनः सन्ततिः, कः परिणामः, को विशेषः? यः कर्मपूर्व उत्त-रोत्तरचित्तप्रसव· सा सन्ततिः। तस्या अन्यथोत्पत्तिः परिणामः। स पुनर्योऽनन्तरं फलोत्पादनसमर्थः सोऽन्त्यपरिणामविशिष्टत्वात् परिणाम-विशेषः। तद्यथा सोपादानं मरणचित्तं पुनर्भवस्य। त्रिविधकर्मपूर्वकत्वेऽपि यत्कर्म गुरु वा भवत्यासन्नमभ्यस्तं वा तत्कृतं सामर्थ्यं द्योत्यते, न त्वन्यस्य। यथोक्तम्[1]—

"यद् गुरु यच्चासन्नं यच्चाभ्यस्तं कृतं च यत् पूर्वम्[2]।
पूर्वं पूर्वं पूर्वं विपच्यते कर्मसंसारे"॥

तत्र विपाकहेत्वाहितं तु विपाकफलदानसामर्थ्यं विपाकं दत्त्वा विनि-वर्तते। सभागहेत्वाहितं तु निष्यन्दफलदानसामर्थ्यं क्लिष्टानां प्रतिपक्षोदयाद् विनिवर्तते। अक्लिष्टानां चित्तसन्तानात्यन्तविनिवृत्तेर्यदा परिनिर्वाति।

अथ कस्माद्विपाकाद् विपाकान्तरं नोपद्यते? बीजफलादिव फलान्तरम्। न तावत् दृष्टान्तेन सर्वं समानं भवति। तत्रापि तु न फलादेव पुनः फलान्तरमुत्पद्यते। किं तर्हि? विक्लित्तिविशेषजाद् विकारविशेषात्। यो

---

कथं तर्हीति विस्तरः। **तदाहितं हि तदिति**। तेन बीजेन आहितं तत्सामर्थ्य-मित्यर्थः। **यथोक्तमिति**। स्थविरराहुलेन।

**यद् गुरु यच्चासन्नमिति** विस्तरः। एकस्मिन् सन्ताने चत्वारि कर्माणि—गुरु, आसन्नम्, अभ्यस्तम्, पूर्वकृतं च। एषां चतुर्णां गुरुकर्म पूर्वकमिति त्रिभ्यस्तत् पूर्वं विपच्यते। आसन्नाभ्यस्तपूर्वकृतानामपि आसन्नं पूर्वम्, तत् पूर्वं द्वाभ्यां विपच्यते। अभ्यस्तपूर्वकृतयोश्च अभ्यस्तं पूर्वम् इति एकस्मात् पूर्वं विपच्यते। असत्स्वेतेषु पूर्वजन्मकृतं विपच्यते अपर-पर्यायवेदनीयम्।

**अक्लिष्टानामिति**। कुशलानाम्, अनिवृताव्याकृतानां च। **विक्लित्ति-विशेषजादिति**। भूम्युदकसम्बन्धात् फलस्य सूक्ष्मो विकारो विक्लित्तिः।

---

१. आह च—का०। २. का० पुस्तके नास्ति।

हि तत्र भूतप्रकाराङ्कुरं निर्वर्तयति स तस्य बीजम्, नान्यः। भाविन्या तु संज्ञया सादृश्याद्वा पूर्वकोऽपि सन्तानो बीजमित्याख्यायते। एवमिहापि तस्माद् विपाकाद् यदि सदसद्धर्मश्रवणादिप्रत्ययविशेषजः कुशलसास्रवोऽकुशलो वा चित्तविकार उत्पद्यते, तस्मात् पुनर्विकारान्तरमुत्पद्यते, नान्यथेति समानमेतत्।

अथवा पुनरेतदेवं विज्ञातव्यम्—यथा लाक्षारसरञ्जितात् मातुलुङ्ग-पुष्पात् संततिपरिणामविशेषजः फले रक्तः केशर उपजायते, न च तस्मात् पुनरन्यः। एवं कर्मजाद्विपाकात्, न पुनर्विपाकान्तरमिति।

यथास्थूलमिदमस्मद्बुद्धिगम्यं दर्शितम्। नानाविधशक्तिभिन्नैस्तु कर्मभिरधिवासिताः सन्ततय एतामवस्थां गता ईदृशं फलमभिनिर्वर्तयन्तीति बुद्धानामेव विषयः।

आह खल्वपि—

---

तस्य विशेषः स एवातिविप्रकृष्टः। तस्माज्जातो विकारविशेषः। तस्मात्। फलान्तरमुत्पद्यते। कीदृशाद्विकारविशेषात्? इति दर्शयन्नाह—**यो हि तत्र भूतप्रकाराङ्कुरं निवर्तयति स तस्य बीजम्**। नान्यो भूतप्रकारः। न पूर्व-बीजावस्थो भूतप्रकार इत्यर्थः। **भाविन्या**[1] **तु संज्ञयेति**। 'ओदनं पचति' 'सक्तुं पिनष्टि' इति यथा भाविन्या संज्ञया व्यपदेशः, एवं **पूर्वकोऽपि सन्तानः** अविक्लिन्नबीजावस्थः **बीजमित्याख्यायते** भाविन्यान्यया संज्ञयेति। **सादृश्याद्वेति**। विक्लिन्नविशेषजेन भूतविकारविशेषेण सदृशः। स पूर्वकः सन्तान इति कृत्वा 'बीजम्' इत्याख्यायते। **एवमिहापीति** विस्तरः। यदि **सद्धर्मश्रवणयोनिशोमनस्कारप्रत्ययविशेषाज्जातः कुशलसास्रवश्चित्तविकार उत्पद्यते**। **असद्धर्मश्रवणयोनिशोमनस्कारप्रत्ययविशेषाज्जातः अकुशलो वा** चित्तविकारं उत्पद्यते। **तस्मात् तद्विपाकान्तरमुत्पद्यते**। **नान्यथेति समानमेतत्**। यथा न फलादेव फलान्तरमुत्पद्यते, किं तर्हि? विकारविशेषात्; एवं न विपाकादेव विपाकान्तरमुत्पद्यते, किं तर्हि? चित्तविकारविशेषात् उत्पद्यते इति तुल्यमेतत्।

**फले रक्तः केशर** इति। फलाभ्यन्तरे केशरः। यत्र बीजपूरकरस अम्लोऽवतिष्ठते। **न च स तस्मात् पुनरन्य** इति। न रसरक्तः **केशरस्तस्मा-**द्रक्तात् केशरात् पुनरुपजायते। किं तर्हि? प्राकृत एवारक्तः केशर उपजायत इत्यर्थः। इदमत्रोदाहरणम्। **यथा लाक्षारसरक्तमातुलुङ्गपुष्पफलाद्** रक्त-केशरान्न रक्तं केशरान्तरं पुनर्भवति। **एवं कर्मजाद्विपाकान्न पुनर्विपाकान्तर-मिति**। आह चात्र—

---

१. भावनया—जा०।

"कर्म तद्भावना तस्या वृत्तिलाभं ततः फलम् ।
नियमेन प्रजानाति बुद्धादन्यो न सर्वथा ।।

इत्येतां सुविहितहेतुमार्गशुद्धां
बुद्धानां प्रवचनधर्मतां निशम्य ।
अन्धानां विविधकुदृष्टिचेष्टितानां
तीर्थ्यानां मतपविध्य यान्त्यनन्धाः ।।

---

"चित्तं ह्येतदनन्तबीजसहितं सन्तानतो वर्तते,
बत्तद् बीजमुपैति पुष्टिमुदिते स्वे प्रत्यये चेतसि ।
तत् पुष्टं द्रुमलाभवृत्ति फलदं कालेन सम्पद्यते,
रङ्गस्यैव हि मातुलुङ्गकुसुमेऽन्यस्तस्य तत्केसरे" ।।

पुनराह—

"कर्पासबीजे पुष्पे च मातुलुङ्गस्य रञ्जिते ।
लाक्षया जायते रक्तं यथा कर्पासकेसरम् ।।
तस्मिन्नस्तमिते रङ्गे सन्तानाद् भावितक्रमात् ।
कर्मण्यस्तमिते चैव भावनातः फलोदयः" ।। इति ।

**कर्मेति** सर्वम् । **तद्भावनाम्** कर्मभावनाम् । **तस्याः** भावनायाः । **वृत्तिलाभम्** । तद्वृत्तं लाभम् । ततः तद्वृत्तिलाभात् । **फलम्** इत्येतच्चतुष्टयम् **नियमेन** यदृच्छया **बुद्धादन्यः** श्रावकादिः **सर्वथा सर्वाकारं न प्रजानाति** । **अर्थादुक्तं** भवति—बुद्ध एव तत्सर्वं सर्वथा प्रजानातीति ।

**इत्येतामिति** विस्तरः । **इति-करणः** समाप्त्यर्थः । प्रदर्शनार्थो वा । **एतां बुद्धानां प्रवचनधर्मतां सुविहितेव** हेतोः मार्गेण **हेतुमार्गेण शुद्धां** निरवद्यां **निशम्य** दृष्ट्वा । **अन्धाः** तीर्थ्याः यथाभूतदर्शनवैकल्यात् । **कुत्सिता** दृष्टिः कुदृष्टिः, तस्याः चेष्टितानि कुदृष्टिचेष्टितानि, विविधानि कुदृष्टिचेष्टितानि एषामिति **विविधकुदृष्टिचेष्टिताः** स्वर्गापवर्गहेत्वप्रतिपन्ना मिथ्याप्रतिपन्नाश्चेत्यर्थः । तेषामेवंविधानां **तीर्थ्यानां** कपिलोलूकादीनाम्, **मतं** दर्शनम् **अपविध्य** त्यक्त्वा यान्ति संसारान्निर्वाणमिति वाक्याध्याहारः । **के ते सत्त्वाः?** प्रज्ञाचक्षुष्मन्त आर्यश्रावकाः ।

**अथ** वा तमेव प्रवचनधर्मतां यान्ति प्रतिपद्यन्त इत्यर्थः । प्रवचनधर्मता पुनरत्र नैरात्म्यम्, बुद्धानुशासनी वा ।

इमां हि निर्वाणपुरैकवर्तिनीं तथागतादित्यवचोंऽशुभास्वतीम् ।
निरात्मतामार्यसहस्रवाहितां न मन्दचक्षुर्विवृतामपीक्षते ॥
इति दिङ्मात्रमेवेदमुपदिष्टं सुमेधसाम् ।
व्रणदेशो विषस्येव स्वसामर्थ्यविसर्पिणः[२] ॥ इति ।

---

अन्य आहुः—प्रवचनं सूत्रादिद्वादशाङ्गवचोगतम् । तस्य धर्मता स्वाख्याततता, युक्त्युपेतत्वात् । निर्वाणधर्मता च निर्वाणद्योतनात् । यथोक्तम्—"सर्व इमे धर्माः निर्वाणप्रवणाः, निर्वाणप्राग्भाराः निर्वाणमेवाभिवदन्तोऽभिवदन्ति । अनात्मसंज्ञिनश्च निर्वाणे शान्तसंज्ञिनः सन्तिष्ठन्ते; आत्मोच्छेदशङ्कापगमात्" इति । तदेवमनन्धा एव यान्ति, नान्धाः । अन्धास्तु भ्रमन्त्येव संसारार्णवे नैरात्म्यमपश्यन्तः । तद्दर्शयन्नाह—इमां हीति विस्तरः । इयं निरात्मता । निर्वाणमेव पुरं निर्वाणपुरम् । तस्यैका वर्तिनीति निर्वाणपुरैकमार्गः । नान्यो मार्ग इत्यर्थः । तथागत एवादित्यो गम्भीरधर्माभिप्रकाशकत्वाद् आदित्यभूतस्तथागतः, तस्य वचांसि तान्येवांशवः, तैर्भास्वती आलोकवती तथागतादित्यवचोंशु[illegible] । आर्याणां सहस्रैर्वाहितेति आर्यसहस्रवाहिता । विवृतामपीति । तामिमां निर्वाणपुरैकवर्तिनीं तथागतादित्यवचोंऽशुभास्वतीं विवृतामपि निरात्मताम् । प्रज्ञाचक्षुषो विशदस्याभावादविद्याकोशपटलपर्यवनद्धनेत्रत्वाद्वा मन्दचक्षुः तीर्थिको वात्सीपुत्रीयो वापि नेक्षते । त्रयश्चेह मार्गगुणाः वर्ण्यन्ते । तद्यथा—१. एकायनता, अभिप्रेतदेशप्रयाणात् । २. सालोकता, यतो निःशङ्को गच्छति । ३. यातानुयातता च, परिमर्दितस्थाणुकण्टकादित्वात् येन सुखं गच्छति । तत्साधर्म्येणेयं निरात्मतावर्तिनी द्रष्टव्या । चतुर्भिश्च कारणैर्मार्गो न विद्यते—१. सत्त्वानुतमस्कतया, २. प्रकाशितोऽप्यादित्येनावाहिततया, ३. बहुपुरुषवाहितोऽप्यावृततया, ४. विवृतोऽपि द्रष्टुः मन्दचक्षुष्कतयेति ।

तेषामिहैकमेव कारणमस्य मार्गस्यादर्शन उक्तम्; यतो द्रष्टुः दोषेणैवायं मार्गो न दृश्यते । मार्गदोषेणेति । अत एव मन्दचक्षुः एतां न पश्यन्तीति अवगन्तव्यम् ।

इति दिङ्मात्रमेवेदमिति । सर्वमिति यथोक्तम् । दिगेव दिङ्मात्रम् । एवकारार्थो मात्रशब्दः । दिक् प्रमाणमस्येति दिङ्मात्रमिति वा । महतोऽभिधर्मशास्त्रादल्पमिदमुपदिष्टम् । मयेति वाक्यशेषः । केषाम् ?

---

२. ०विसर्पणः—का० ।

पुद्गलकोशमभिधर्मकोशभाष्यं समाप्तमिति ।
**कृतिरियमाचार्यवसुबन्धुपादानामिति**[1]

---

**सुमेधसाम् ।** मतिमतामित्यर्थः । तादर्थ्ये षष्ठी । किंवद् ? इत्याह— **व्रणदेशो विषस्येव स्वसामर्थ्यविसर्पिणः** इति । यथा विषं स्वसामर्थ्याद् व्रणदेशं प्राप्य सर्वेष्वङ्गप्रत्यङ्गेष्वत्यन्तं विसर्पतीति मत्वा केनचित् तस्य व्रणदेशः कृतः—कथं नामेदं विसर्पतीति । एवं सुमेधसः स्वसामर्थ्यविसर्पित्वाद् विषस्थानीयः—इत्यतस्तेषां सुमेधसाम् उद्घटितज्ञानां प्राज्ञानामिदमुपदिष्टं मया । कथम् ? अल्पेन ग्रन्थेन ... अभिधर्मशास्त्रम् काश्मीरवैभाषिकनीतिसिद्धमर्थतः प्रतिपद्येरन्निति ।

अपरे पुनर्व्याचक्षते—**इति दिङ्मात्रमेवेदं**भनि । इदमेव नैरात्म्यप्रति**वेधमधिकृत्योक्तमिति**; "काश्मीरवैभाषिकनीतिसिद्धः प्रायो मयायं कथितोऽभिधर्मः" इत्यनेनैवार्थस्याभिहितत्वादिति ।

समाप्तश्चाष्टमकोशस्थानसम्बद्ध एव
पुद्गलविनिश्चयः

नानाभिधर्मार्थकरण्डभूत-
मेतद् विव्............ रः ......... ।
प्रगृत तृष्णायमृतमद्भन... ।
व्याख्यापदार्ककिरणैः स्फुटितं मदीयैः
शास्त्राम्बुजं बुधजनभ्रमरा भजन्ताम् ॥

योऽधीत्य सर्वशास्त्राणि विद्वद्यशाः यशोमित्रः ।
स इमां कृतवान् व्याख्यां व्याख्यास्वन्धास्त्रसन्नुष्टः ॥

तेन श्रीभारतीभर्त्रा परमार्थागमा व्याख्या ।
इयं देवरूपस्य देवकल्पस्य कल्पिता ॥

आचार्ययशोमित्त्रकृतायां स्फुटार्थायाम्
अभिधर्मकोशव्याख्यायाम्
अष्टमं कोशस्थानं समाप्तमिति[2]
शुभम्

---

१. देवधर्मोऽयं प्रवरमहायानसकलतथागतशासनमूर्द्धरस्य उत्तरापथिकपण्डितस्थविरश्रीलामावाकस्य यदत्र पुण्यमित्यादि—का० ।

२ ग्रन्थकारसख्या २५०००—जा० ।